कर्म्मकाण्डप्रधानाचार्य्यः

**पं० श्रीमुकुन्दझा बखशी**

राजपं० पटिआला



मिथिलामहीमण्डन–भूसुरवर–नन्दलालशर्म्मतनुजन्मा
कर्म्मकाण्डभूषण–करमहाकुलकमलदिवाकरः
दरभङ्गामण्डलान्तर्गत(ढङ्गा)हरिपुरग्राम-
निवासी मैथिलः।

# THE NIRUKTAM

OF

# YÂSKA MUNI



(In the form of Nighantu Bhashya of Kashyapa Prajâpati)

WITH

THE NIRUKTAVIVRITI COMMENTARY AND EXAUSTIVE NOTES

OF

PANDIT MUKUND JHÂ BAKSHI,

[illegible] Patiala.




CRITICALLY EDITED

BY

Pt. MUKUND JHA BAKSHI.

First Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

Proprietor of the "Nirnaya-sagar" Press.

BOMBAY.

1930.

*Price 6 Rupees.*

कर्म्मकाण्डप्रधानाचार्य्यः

पं० श्रीमुकुन्दझा बख्शी

राजपं० पटिआला



मिथिलामहीमण्डन--भूसुरवर--नन्दलालशर्म्मतनुजन्मा

कर्म्मकाण्डभूषण--करमहाकुलकमलदिवाकरः

दरभङ्गामण्डलान्तर्गत(डखरा)हरिपुरग्राम-

निवासी मैथिलः ।

THE

# NIRUKTAM



OF

## YÂSKA MUNI

(In the form of Nighantu Bhâshya of Kashyapa Prajâpati)

WITH

THE NIRUKTAVIVṚITI COMMENTARY AND EXAUSTIVE NOTES

OF

PAṆDIT MUKUND JHÂ BAKSHI,

RAJPANDIT PATIALA.

CRITICALLY EDITED

BY

Pt. MUKUND JHÂ BAKSHI.

First Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS.

BOMBAY.

1930.

*Price 6 Rupees.*




श्रीः

श्रीमद्यास्कमुनिप्रणीतम्

( कश्यपप्रजापतिकृतनिघण्टु—भाष्यरूपम् )

# निरुक्तम् ।





श्रीमद्भगवद्दुर्गाचार्यकृत—ऋज्वर्थाख्यव्याख्यानुसारिण्या

अधिमिथिलं-दरभङ्गामण्डलान्तर्गत-हाटीतप्पान्तर्गत(ढङ्गा)हरिपुरग्रामवासिकर्महार-कुलालङ्कार-नन्दलालशर्मतनुजन्मनोपाध्यायोपनामकेन बखूशी-

पण्डित श्रीमुकुन्दशर्मणा

पङ्कालय-( पटिआला-) राजपण्डितेन

कृतया निरुक्तविवृत्या समुपेतं, तेनैव च टिप्पन्यादिभिः परिष्कृत्य संशोधितं च ।

---

तदेतद्

मुम्बय्याम्

पाण्डुरङ्ग जावजी श्रेष्ठिना

स्वीये निर्णयसागरमुद्रणयन्त्रालये मुद्रापयित्वा प्रकाशितम् ।

---

सम्वत् १९८६, शके १८५२, सन १९३०.

---

मूल्यं ६ रूप्यकाः ।



श्रीशः शरणम्

# प्रस्तावना—

विदितमेवैतत्त्रयीतत्त्वविदां भूदेवानां यदयं निरुक्तग्रन्थो वेदव्यासादिभिरुपश्लोकितो भगवान्यास्कमुनिः कश्यपमुनिना त्रयीशब्दान्दुरवगमान्नामतोऽर्थनिर्देशतश्च सङ्गृहीता मन्त्रब्राह्मणोभयात्मकवेदेभ्यः समाहृत्य समाहृत्य समाम्नातस्य निघण्टपरनामधेयस्य निगमस्य काण्डत्रयविभागेन व्याख्यामस्माकं दुर्मेधसां विज्ञानाय कृतवान्यत्र तत्तच्छब्दानामतिपरोक्षवृत्तीनामपि परोक्षवृत्तिना तेषामपि प्रत्यक्षवृत्तिना शब्दसन्दर्भेण निर्वचनानि कृतवान् । तदेतदज्वर्थीख्यायां श्रीमद्भगवद्दुर्गाचार्यकृतव्याख्यायामुपोद्धतं दिदृक्षूणां सौलभ्यायासकृन्मुद्रापितं च लोकोपकृतिकृतक्षणैर्विचक्षणैर्विचारितं क्षेमराजादिभिर्धन्यमान्यैः । यदेतत्सुलभमस्ति ।

साम्प्रतं च तत्तत्प्रान्तीयविद्याविभागाध्यक्षैः सम्राट्प्रतिनिधिनियोजितैर्निर्धारितायामुपाधिपरीक्षायामस्य सन्निवेशमाकलय्य दुरवबोधदुर्गविवृतेरेव सुखबोधायाधुनिकानामल्पमेधसां व्युत्पित्सूनां परीक्षार्थिनां विद्यार्थिनां कृते सायणादिकृतभाष्यसाहाय्येन मन्त्रार्थान्दुर्गप्रदर्शिताध्वना चावशेषग्रन्थार्थान् विशदीकर्तुमयमस्माकं सन्दर्भमात्रं भवेल्लोकोपकृतयेऽलमिति मन्यमानैरन्तेवसद्भिर्विज्ञापितैरस्माभिरलभ्यवकाशोऽत्र महतां कर्तव्ये महीयसि कार्ये क्षोदीयोभिरपि—तदेतत्साहसं सहसानां महीयसां पुरः—

सर्वोऽप्यर्थो बुधैः स्पृष्टो नास्पृष्टो विद्यते क्वचित् । तत्सन्दर्भांशवितता ममता केन वार्यते ॥ १ ॥

इति प्राक्तनकथां स्मारयति । अत्र विषयानुक्रमणी दुर्गाचार्यैरेव कृता समुद्ध्रियते-शिक्षादिभिः पञ्चाङ्गैरुक्ताध्ययनविधेरुक्तच्छन्दःप्रविभागस्योक्तविनियोगस्योपलक्षितकर्माङ्गभूतकालस्योपदर्शितलक्षणस्य वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते । प्रधानं चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात् । अर्थो हि प्रधानं तद्गुणः शब्दः । स चेतरेषु व्याकरणादिषु चिन्त्यते । न च निरुक्तादतेऽन्यदङ्गमन्यद्वा शास्त्रमस्ति यदशेषाञ्छब्दान्निर्ब्रूयात् । मन्त्रब्राह्मणार्थपरिज्ञानबद्धश्चाध्यात्माधिदैवताधिभूतपरिज्ञानद्वारेण धर्मार्थकाममोक्षाख्योऽखिलपुरुषार्थः । "नानिरुक्तविद्याकुर्या"दिति च निगमगीः । तस्मादर्थपरिज्ञानाभिनिवेशादिदमेव प्रधानमङ्गान्तरेभ्य इत्युपपन्नम् ।

## अथास्यैवमखिलपुरुषार्थोपकारवृत्तिसमर्थस्यार्थसङ्ग्रहः—

यथा—नामाख्यातोपसर्गनिपातलक्षणम् १, भावविकारलक्षणम् २, नामान्याख्यातजानि, न सर्वाणि च यथोपन्यस्य पक्षप्रतिपक्षतो विचार्यावधारणम् ३, सर्वाण्याख्यातजानि कानिचिदेवानेकधातुजान्यपीति मन्त्राणामर्थवत्त्वानर्थकत्वं विचार्य शास्त्रारम्भप्रयोजनद्वारेणार्थवत्ताऽवधारणम् ४, पदविभागपरिज्ञानप्रतिज्ञा ५, तदवबोधावलम्बिलदर्शनाय आदिमध्यान्तानेकदैवतलिङ्गसङ्कटेषु मन्त्रेषु याज्ञिकपरिज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा ६, अर्थज्ञप्रशंसा ७, अनर्थज्ञाऽवधीरणम् ८, वेदवेदाङ्गव्यूहः ९, सप्रयोजननिघण्टुसमाम्नायविरचनम् १०, प्रकरणत्रयविभागेन नैघण्टुकप्रधानदेवताभिधानप्रविभागलक्षणम् ११, निर्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेशोऽर्थप्राधान्यात् १२, लोपोपधाविकारवर्णलोपविपर्ययापदेशेन सामर्थ्योपप्रदर्शनायादिमध्यान्तलोपोपधाविकारवर्णलोपविपर्ययायन्तवर्णव्यापत्ति-वर्णोपजनोदाहरणचिन्ता १३, अन्तस्थान्तर्धातुनिमित्तेन सम्प्रसार्यासम्प्रसार्योभयप्रकृतिधातुनिर्वचनोपदेशः १४, भाषिकप्रायोवृत्तिभ्यो नैगमशब्दार्थप्रसिद्धिः १५, नैगमप्रायोवृत्तिभ्यो भाषिकशब्दार्थप्रसिद्धिः १६, देशव्यवस्थया शब्दरूढ्युपदेशः १७, तद्धितसमासनामनिर्वचनलक्षणम् १८, शिष्यलक्षणम् १९, त्रिशेषेण व्याख्यया तत्त्वपर्यायमेदसंख्यासन्दिग्धोदाहरणनिर्वचनव्यवस्थया नामाख्यातोपसर्गनिपातानां विभागेन नैघण्टुकप्रकरणानुक्रमणम् २०, अनेकार्थानवगतसंस्कारानुक्रमणम् २१, परोक्षकृतप्रत्यक्षकृताध्यात्मिकमन्त्रलक्षणम् २२, खुल्याशीःशपथाऽभिशापाभिख्यापरिदेवनानिन्दाप्रशंसादिभिर्मन्त्राभिव्यक्तिहेतूपदेशः २३, निदानपरिज्ञानव्याख्यापनायानादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम् २४, इतरेतरजन्मत्वम् २५, स्थानत्रयमेदतस्तिसृणामेकैकस्या महाभाग्यकृतोऽनेकनामप्रतिलम्भः २६, पृथगभिधानस्तुतिसम्बन्धाद्वा २७, देवतानामाकारचिन्तनम् २८, भक्तिसाहचर्यसंस्तवकर्मसूक्तभाक्त्व—हविर्भाक्त्व—व्यञ्जनभाक्त्वानि २९—३३, पृथिव्यन्तरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरणम् ३४, तन्निर्वचनविचारोपपत्त्यवधारणानुक्रमेण व्याख्याय दैवतप्रकरणनिर्णयः ३५, विद्यापरिप्राप्त्युपायोपदेशः ३६, मन्त्रार्थनिर्वचनद्वारेण देवताभिधाननिर्वचनफलं देवताताद्भाव्यम् ३७, इत्येष समासतो निरुक्तशास्त्रचिन्ताविषयः ॥

तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसङ्ग्रहः । सा च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुजिघृक्षया वाच्यार्थसामर्थ्यादभिधेयानुनीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता । सैषा छन्दोवयवभूता छन्दोधर्मिण्येव । यथा यूथापत्रस्ता गौर्गोधर्मा एवेति ॥

इति निगदति

मिथिलाभिजनो दरभङ्गामण्डलान्तर्गत—हाटीतप्रान्तर्गत—हरिपुरग्रामनिवासी
कर्महारकुलभूषणः कर्मकाण्डप्रधानाचार्यः कर्मकाण्डभूषणश्च
श्रीमुकुन्दझा बख्शी ।



# समर्पणम्

समुपजोषमेष ग्रन्थो "निरुक्तविवृति" समाख्यो भगवद्यास्कमुनिप्रणीतनिरुक्तद्वादशाध्यायी-व्याख्याभूतोऽस्माभिर्दुर्गाचार्यभगवद्व्याख्यातः समुद्धृत्य सर्वतन्त्रस्वतन्त्र–सायणाचार्यभाष्यतो मन्त्रार्थान्विशदी-कृत्य महता परिश्रमेण सङ्कलितस्तत्तत्स्थानेषूपयुक्तटिप्पन्यादिभिर्ऋजुमतीनां सुखबोधतामापाद्य सादरं महो-दारेभ्यो मुम्बापुरवासिभ्यो निर्णयसागरयन्त्रालयाध्यक्षेभ्यो मुद्रापयित्वा प्रकाशयितुं समर्पितः । सोऽद्य भगवत्कृपया तैः संमुद्र्य लोकोपकृतिसक्षणतामापादित इति तेषां महोपकृतिं मुहुः स्मरामः ।

आशास्महे यदत्रास्मादृशाल्पज्ञजनसुलभेन मतिदोषेण शीशकाक्षरयोजकदोषेण वोपनता अशुद्धीः संशोध्य पाठयिष्यन्ति पठिष्यन्ति च गुणैकपक्षपातिनो दूषणवाचंयमाः सुधियो यतः—

यत्नेन गच्छतो मार्गे स्खलनं चेन्महीयसाम् ।
हसन्त्यसाधवस्तत्र समादधति सज्जनाः ॥ १ ॥

इत्यलमत्यर्थकदर्थनया सकलशास्त्रावलोकनकृतक्षणेषु विचक्षणेषु इति शम्

विदुषां विधेयस्य

झोपाह्व-बख्शी-मुकुन्दशर्मणः ।



## अथ

# यास्कीयनिरुक्तानुक्रमणी तत्रतावदुपोद्घातस्थविषयानुक्रमणी ।


| विषयः | पृष्ठाङ्काः |
|---|---|
| मङ्गलाचरणप्रतिज्ञे ... ... ... ... ... | १ |
| निघण्टुसमाख्याधिकरणम् ... ... ... ... | २ |
| अथपदचतुष्टयोद्देशकथनम् ... ... ... ... | ३ |
| नामाख्यातलक्षणाधिकरणम् ... ... ... ... | ४ |
| भाववाचकप्रदर्शनम् ... ... ... ... ... | ५ |
| सत्त्वोपदेशनिरूपणम् ... ... ... ... ... | ६ |
| भावोपदेशनिरूपणम् ... ... ... ... ... | ,, |
| शब्दानित्यत्वाक्षेपः ... ... ... ... ... | ,, |
| शब्दनित्यत्वस्थापनम् ... ... ... ... ... | ७ |
| शब्दप्रयोगस्यावश्यकतानि० ... ... ... ... | ८ |
| कर्म्मणि वेदमन्त्रस्यैवावश्यकतानि० ... ... ... | ९ |
| भावविकारप्रदर्शनम् ... ... ... ... ... | ,, |
| उपसर्गनिरूपणम्... ... ... ... ... ... | ११ |
| निपातलक्षणकथनम् ... ... ... ... ... | १३ |
| नाम्नामाख्यातजत्वविचारः ... ... ... ... | ३२ |
| अथशास्त्रारम्भप्रयोजनाधिकारः ... ... ... | ३७ |
| मन्त्राणामनर्थकत्वाक्षेपः... ... ... ... ... | ३८ |
| मन्त्राणामर्थवत्त्वसाधनम् ... ... ... ... | ४१ |
| अथद्वितीयंशास्त्रारम्भप्रयोजनम् ... ... ... | ४४ |
| पदविभागायार्थवत्त्वंमन्त्राणाम्... ... ... ... | ,, |
| अथ तृतीयंशास्त्राऽरम्भप्रयोजनम् ... ... ... | ४६ |
| देवताज्ञानायार्थवत्त्वं मन्त्राणाम् ... ... ... | ,, |
| अथ चतुर्थंशास्त्रारम्भप्रयोजनम् ... ... ... | ४७ |
| अर्थज्ञानप्रशंसा ... ... ... ... ... ... | ४८ |
| वेदवेदाङ्गाम्नानम् ... ... ... ... ... | ५२ |
| अथनिर्वचनरीत्युपदेशः ... ... ... ... | ५३ |
| देशप्रसिद्ध्या शब्दरूढिः ... ... ... ... | ६० |
| अथतद्धितसमासनिर्वचनप्रकारः ... ... ... | ६१ |
| अथाधिकारिनिरूपणम्... ... ... ... ... | ६७ |


इति ॥



# निरुक्तविवृतिः ।

## ( उपोद्धातः )

## प्रथमोऽध्यायः ।

श्रीमदाद्यापदाम्भोजद्वन्द्वं वन्देऽर्थसिद्धये ।
निरुक्तविवृतिं लघ्वीं ब्रुवे दुर्गमतं यथा ॥ १ ॥
श्रीमदाचार्यदुर्गोक्तिर्दुर्गमा विदुषामपि ।
इति व्युत्पित्समानानां प्रवृत्त्यै यतवानहम् ॥ २ ॥
दृष्ट्वैनां दुर्गवक्रोक्तिः स्फुटं विज्ञास्यते यथा ।
इति क्वचिद्विस्तरं मे क्षंस्यन्ति गुणगृध्नवः ॥ ३ ॥

अथ तत्रभवान्भगवान्यास्कमुनिरल्पायुषोऽल्पमेधसो जनाञ्जनिष्यमाणानक्षीणेन तपोविज्ञानेनावेक्ष्य तदनुजिघृक्षया साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिर्[2]वाच्यार्थसामर्थ्यादभिधेयानुनीय मन्त्रार्थपरिज्ञानाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातं पञ्चाध्यायी[3]शास्त्रसंग्रहभावेनैकस्मिन्नाम्नाये ग्रन्थीकृतं गवादिदेवपत्न्यन्तं वैदिकशब्दसमुदायं निघण्टुपरनामकं काण्डत्रैय[4]विभागेन व्याचिख्यासुः प्रतिजानीते **समाम्नायः** समाम्नातः स व्याख्यातव्य[1] इति। अथास्य व्याख्यानम्[2] ॥

१. कुतोऽप्यप्रतिहतेन अनागतार्थदर्शिनेति यावत् ।

२. ऋपिशब्दार्थो वक्ष्यते ऋषिर्दर्शनादिति (नि० नै० २–३–२) तदर्थोपि वक्ष्यते (नि० नै० १–६–५) तत्र ये साक्षात्कृतधर्माणस्तेभ्य उपदेशेन श्रुत्वा पश्चाधे ऋषयो वभूवुस्ते ऋपिभ्यः श्रुतधर्मत्वाच्छ्रुतर्षय इत्युच्यन्ते ।

३. अथैतां पञ्चाध्यायीमभिप्रेत्य–"सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथाऽयथापन्नास्ता गौर्गोधर्मा इति" दुर्गवृत्त्या निघण्टोश्छन्दस्त्वमव्याहतमुक्तं भवति । यथा ( च ) अयथापन्ना अप्रकृतविपन्ना परं समान्यविपन्ना अस्ता यूथपरिभ्रष्टा गौर्गोधर्मा एव नहि तस्या यूथपरिभ्रष्टत्वेन गोत्वं नष्टम् । तथैव छन्दोभ्यः समाहृता एषा पञ्चाध्यायी छन्दएव । नह्यस्याः समाहरणत एव छन्दस्त्वं तिरोबभूवेति हि तद्भावः ॥

४. नैघण्टुकं, नैगमं, दैवतमित्येवम् । एतेषां लक्षणादिकमग्रे ( नि० नै० १-६-५-६ ) स्फुटीभविष्यति । उक्तं चोपक्रमणिकाभाष्यकृद्भिः–

"आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा ।
तृतीयं दैवतं चेति समाम्नायस्त्रिधा स्मृतः ॥
गौराद्यपारपर्यन्तमाद्यं नैघण्टुकं मतम् ।
जहाद्युल्बमृबीसान्तं नैगमं संप्रचक्षते ।
अग्न्यादिदेवपत्न्यन्तं दैवतं काण्डमुच्यते[1] ॥" इति ॥

1. तत्राप्युक्तम्–"अग्न्यादिदेवीऊर्जाहुत्यन्तः क्षितिगतो गणः । वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः ॥ सूर्यादिदेवपत्न्यन्ता द्युस्थानदेवता इति । गवादिदेवपत्न्यन्तं समाम्नायमधीयते" इति ॥

ननु सर्वत्र ग्रन्थादौ मङ्गलाचरणं शिष्टाचारानुमितिश्रुतिसंमतं तदत्र यास्कमुनिः किमिति नानुष्ठितवानिति चेन्न ।

"आशीर्वादनमस्कारवस्तुनिर्देशभेदतः ।
मङ्गलं त्रिविधं प्रोक्तं ग्रन्थादौ तत्सुखावहम्[1]"

इत्यभियुक्तोक्तरीत्या त्रिविधस्य तस्यैकतमरूपेणात्रापि सत्त्वान्नह्याशीर्वादनमस्काराभ्यामेव मङ्गलं भवतीति नियमः । येन हि ग्रन्थफलबीजभूतं वस्तु निर्दिश्यते तदपि मङ्गलम् । यथा महाकाव्येषु । प्रकृते च तदेव तृतीयविधमनुसंधेयं धीधनैरित्यलमत्यक्षरक्षरणेन ॥

१. अत्रेदमवधेयम्–शास्त्रारम्भे विषय–प्रयोजन–संवन्धा–ऽधिकारिणो निर्वाचनं प्रेक्षावत्प्रवृत्तिप्रयोजकं, प्रवृत्तौ हि तेषां बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानं जनक "मिदं मदिष्टसाधन" मिति 'तथा कृतिसाध्यताज्ञानमपि "इदं मत्कृतिसाध्य"मिति। तयोश्च विषयविधयेदमिति विषयज्ञानं, इष्टमिति प्रयोजनज्ञानं, साधनं साध्यमित्येवं संबन्धज्ञानं, मदिति चाधिकारिज्ञानं जनकमिति जनकजनकत्वात्प्रयोजकमित्युच्यते । एतच्चतुष्टयानुगतरूपं तु ग्रन्था[2]ध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमिदमेव च ग्रन्थारम्भेऽनुबध्यमानरूपत्वादनुबन्धत्वम् । एतन्निर्वाचनमन्तरा शास्त्रमारभ्यमाणं न प्रेक्षावद्भिराद्रियेत[3] इति । तदेतदत्र व्याख्यातव्यनिघण्टुपदव्युत्पादनमुखेन प्रथमाध्यायचतुर्थपादान्तेन ग्रन्थसन्दर्भेण विषयलक्षणमुच्यते। "अथापीदमन्तरेणे" (नि० १–५–१) त्यादिना तु शास्त्रारम्भप्रयोजनकथनमारप्स्यते । अधिकारिलक्षणं तु "नावैयाकरणाये" ( नि० २–१–६ )–त्यादिना वक्ष्यते । अनयोः ( प्रयोजनाधिकारिलक्षणयोः ) मध्ये यत्किञ्चिद्वक्ष्यते तत्प्रयोजनाङ्गतयैवावस्थास्यते। संबन्धस्तु शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः । विषयप्रयोजनयोश्च साध्यसाधनभाव इत्येवमनुक्तोऽप्यभ्यूहितुं शक्यत इति स इह मुखतो नोक्त इति ॥

२. व्याख्यानं च—

"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजनम् ।
आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम् ॥"

इत्युक्तलक्षणं षट्प्रकारकम् ॥

1. तच्छुभावहमित्यपि पाठः क्वचित् ॥

2. ग्रन्थः शास्त्रं तदेकदेशो वा प्रकरणाख्यापकः । अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमुदायो हि ग्रन्थः ॥

3. तथाचोक्तम् "विना विषयसंबन्धौ तथैवार्थाधिकारिणौ ।
अव्याख्येयो भवेद्ग्रन्थः स्याद्ग्रन्थे तच्चतुष्टयम् ॥ १ ॥" इति ॥
अत्रोपपत्तिमाह–"सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते ।

तत्र तावत्प्रथमखण्डसूत्रे—

**समाम्नायः समाम्नातः ॥**

इत्यादिमं वाक्यम् ॥ **अस्यायमर्थः** । सं—सम्यक्+आ—मर्यादया+म्नायतेऽभ्यस्यतेऽयमित्यर्थे समाङ्पूर्वान्म्नातेरभ्यासार्थात्कर्मणि "अकर्तरि च कारके" ( पा. ३-३-१९ ) इति घञ्प्रत्ययः । "आतो युक्चिण्"-( पा. ७-३- ३३ ) ति युक् । गवादिर्देवपत्न्यन्तो वैदिकशब्दसमुदायः **समाम्नाय** इत्युच्यते । स च समाम्नातः । ऋषिभिः प्राग्भवैर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः । पञ्चाध्यायीशास्त्रसंग्रहभावेनैकस्मिन्नाम्नाये निघण्ट्वपरनामके ग्रन्थीकृत इति ॥

तस्य किमित्यपेक्षायामाह—

**स व्याख्यातव्यः ॥**

**सः** योऽसमाम्नातश्छन्दस्येवावस्थितोऽगवादिरन्यैर्वा नैरुक्तैर्यः समाम्नातः स एष उभयलक्षणोऽपि **व्याख्यातव्यः** वि—विभज्य+इमान्यत्र नामानि, इमान्याख्यातानि, इमे उपसर्गाः, इमे निपाताः, इदं सामान्यलक्षणं, इदं विशेषलक्षणम्, इमान्येकार्थानि, इमान्यनेकार्थानि, इमान्यवगतसंस्काराणि, इमान्यनवगतसंस्काराणि, इदमभिधानं, इदमभिधेयवचनम्, इदमभिधानस्य निर्वचनमित्येवंविधया आ—मर्यादया=परिपाट्या यथा समाम्नातम् आख्यातव्यो निर्वक्तव्य इत्यर्थः ॥

**तमिमं समाम्नायं निघण्टव इत्याचक्षते ॥**

**तं**—पूर्वोक्तरूपम् **इमं**—निरुच्यमानलक्षणं च **समाम्नायं** समाम्नायपदप्रतिपाद्यं **निघण्टव इति**—निघण्टुपदप्रतिपाद्य**माचक्षते**—कथयन्ति । अन्येऽप्याचार्या इति शेषः । निपातेनेतिना कर्मण उक्तत्वान्न द्वितीया । विधेयत्वाच्चासमानवचनता न दोषायेति बोध्यम् ॥

**( अथ निघण्टुसमाख्याधिकरणम् )**

निघण्टुशब्दव्युत्पिपादयिषया पृच्छति—

**निघण्टवः कस्मात् ? ॥**

इति ।

निर्विवक्षयोत्तरयति—

**निगमा इमे भवन्ति ॥**

इति । नि—निश्चयेनाधिकं वा निगूढार्था वा ( एते परिज्ञाताः सन्तो ) मन्त्रार्थान्गमयन्ति—बोधयन्तीति **निगमा**—निगमसंज्ञकाः सन्तो निघण्टव एव **इमे** गवादयो **भवन्ति** ॥

कुतः ? यत एते—

**छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः ॥**

**छन्दांसि** मन्त्रास्तेभ्य ( उपलक्षितसामर्थ्याः ) **समाहृत्य समाहृत्या**भीक्ष्णमेकीकृत्य **समाम्नाता**—उक्ताः ग्रन्थीकृता इति यावत् । अत इति शेषः ॥

**ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः ॥**

१. वाक्यं च "सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" इत्युक्तलक्षणम् । अत्र सुप्तिङन्तचय इति सुबन्तचयः तिङन्तचयः सुप्तिङन्तचय इत्यर्थः । तदेतत्त्रिविधमप्यत्र निर्दिष्टमस्ति क्रमेण । इदं च सुबन्तचयात्मकमनन्तरमपि (द्वितीयं) तदेव ॥

२. अतएवास्य समाम्नायत्वम् । नह्यस्मद्युगीयैः कृतस्य ग्रन्थस्य समाम्नायत्वमुपपद्यते । वक्ष्यते चाप्यस्यैवं समाम्नायत्वम् "अवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषु"रिति ॥ अस्य ग्रन्थीकृत इत्यनेनान्वयः ।

३. अत्र दुर्ग आह—कथमेतद् गम्यते असमाम्नातव्याख्यानमप्यभिप्रेतमिति ? समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति ? उच्यते—निर्वचनलक्षणोपदेशात् । निर्वचनप्रसक्तानां च मृगकर्णदक्षिणालक्ष्मीनिघण्टुभद्राधःशब्दप्रभृतीनामेवमाद्यानां निर्वचनोपदेशाद् ज्ञायतेऽसमाम्नातव्याख्यानमप्यत्राभिमतमिति । यत्पुनरेतदुक्तं समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति । अत्र ब्रूमः—नहि समाम्नानार्हाणामन्तोऽस्ति । तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात् । अतश्चाध्ययनश्रवणज्ञानशक्तिहानदोषः प्रसज्येत । शक्यश्च तावल्लक्षणोद्देशोदाहरणभूतनिघण्टुशब्दसमवायेनाधीतवेदेन भाविना तपस्विना लक्षणविनियोगार्षच्छन्दोदैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोऽभ्यूहितुमित्येतावानेव निघण्टुषु शब्दसमुदायः समाम्नातः । तस्मादुपपन्नमसमाम्नातव्याख्यानमपि अत्राभिमतमिति । असमाम्नानं च सर्वेषां शास्त्रातिगौरवभयादिति ॥

शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः ॥ २ ॥
सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यताम् ॥ ३ ॥
अनिर्दिष्टफलं सर्वं न प्रेक्षापूर्वकारिभिः ।
शास्त्रमाद्रियते तेन वाच्यमग्रे प्रयोजनम् ॥ ४ ॥
शास्त्रस्य च फले ज्ञाते तत्प्राप्त्याशावशीकृताः ।
प्रेक्षावन्तः प्रवर्तन्ते तेन वाच्यं प्रयोजनम् ॥ ५ ॥
यावत्प्रयोजनेनास्य संबन्धो नाभिधीयते ।
असंबद्धप्रलापित्वाद्भवेत्तावदसङ्गतिः ॥ ६ ॥
तस्माद्व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः ।
शास्त्रावतारसंबन्धो वाच्यो नान्योऽस्ति निष्फलः॥७॥"इति॥

अत्र हेतुप्रयोजनयोर्युगपदाम्नानं हेतुशब्दस्य कारणवचनत्वात्पूर्वं हि कारणं वाच्यं । तदेव हि फलभावेन विपरिणमिष्यते । यथात्र "अथापीदमन्तरेणे" त्यादिनोक्तं, इदं त्ववान्तरप्रयोजनं, परमप्रयोजनं तु कैवल्यप्राप्तिर्निष्कामकृतयथावत्कर्मद्वारेति वक्ष्यतेऽत्र ( १–६ ) तृतीयखण्डान्ते ॥

१. यद्वा तं पूर्वैः समाम्नातमिममत्र ( गवादिदेवपत्न्यन्तशब्दसमुदाये ) समाम्नातं च ॥

२. "या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः । प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥" इति वचनव्यवस्थितौ प्रायःपदोपादानात् ॥

ये पूर्वमुपदर्शितास्ते उभये अपि **निगमनान्मन्त्रार्थनिगमयितृत्वाद्धेतोर्निगन्तवो** निगमयितारः ( निश्चयेनार्थावगतिकराः ) **एव एते** संपन्ना वर्णविपर्ययवर्णव्यापत्त्यादिनिरुक्ति-( निर्वचन- ) लक्षणेनातिपरोक्षतामापादिताः **सन्तो निघण्टव उच्यन्त, इति औपमन्यव** आचार्यो मन्यते इति शेषः । त्रिविधा हि शब्दा भवन्ति प्रत्यक्षवृत्तयः परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्च । तत्रोक्तक्रियाः प्रत्यक्षवृत्तयः । अन्तर्लीनक्रियाः परोक्षवृत्तयः । अविज्ञातक्रिया अतिपरोक्षवृत्तयः ॥ तेष्वेव विशिष्य निर्वचनाभ्युपायस्तस्मात्परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः-तद्यथा "निघण्टव" इत्यतिपरोक्षवृत्तिः, "निगन्तव" इति परोक्षवृत्तिः, "निगमयितार" इति प्रत्यक्षवृत्तिः । यस्मान्निगमयितार एते निगन्तव इति निघण्टव इत्युच्यन्ते । एवमन्यत्राप्यूह्यम् ॥

तमेव निघण्टुशब्दमन्यथा निर्वक्ति—

## अपि वाऽऽहननादेव स्युः समाहता भवन्ति ॥

वाशब्दोऽत्र चार्थे, **अपिचाऽऽहननादेव** निघण्टवः **स्युर्न** तु निगमनात् । कुतः ? यत इमेऽत्र ( एतस्मिन्पञ्चाध्यायीशास्त्रसङ्ग्रहे ) **समाहताः** सं-सम्यक् आ-मर्यादया हताः-पाठिता **भवन्ति** । तस्मात्समाहननक्रियायोगात्समाहन्तव एव एते संपन्ना उपसर्गव्यत्ययोपसर्गाध्याहारवर्णव्यापत्तिभिरतिपरोक्षवृत्तितामापादिताः सन्तो निघण्टव इत्युच्यन्ते । प्रसिद्धश्च पाठार्थे हन्तेः प्रयोगः । ब्राह्मणे इदमाहतं, सूत्रे इदमाहतमित्यादिषु ॥ तथा चाहननादेवेत्यस्य मर्यादयापाठादेवेत्यर्थः ॥

प्रकारान्तरेण निर्वक्ति—

## यद्वा समाहृता भवन्ति ॥

**यद्वि**त्यव्ययं यस्मादित्यर्थकम् । यस्माद्वा **एते समाहृता**

१. अन्यैः समाम्नाता अगवादयः । अत्र ( गवादिदेवपत्न्यन्ते शब्दसमुदाये ) वा समाम्नाताः ॥

२. तथाचोक्तम्—

"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥१॥"इति ॥

प्रकृते च नि-पूर्वाद्गमेरौणादिकस्तुन्प्रत्ययः । गकारस्थाने घकारस्तकारस्थाने च टकारः पृषोदरादित्वात् (पा. ६-३-१०९) ॥

३. उपरतमन्युरुपमन्युस्तस्यापत्यमौपमन्यवः अपत्यार्थेऽण् "ओर्गुणः" (पा. ६-४-१४६) ॥ कीर्तिप्रथनार्थमौपमन्यवग्रहणम् ॥

४. विद्यमानमपि निगमनमविवक्षितमस्मिन्पक्षे, अनेकक्रियायोगेऽपि हि सति कांचिदेव क्रियामादाय नामधेयप्रतिलम्भो भवति ॥

५. अर्थस्य प्राधान्यादर्थनिर्वचनवशेन शब्दविपरिणामोऽयं दर्शितः । उत्तरत्राप्ययमेव क्रमो द्रष्टव्यः ।

६. समः स्थाने नीत्येष नियुक्तः दर्शयिष्यति चैत—( मुपसर्गव्यत्यय- )-त्रिरित्येव समित्यस्य स्थाने इति । आङ्विद्यमान एवाध्याहृतो मर्यादार्थप्रकाशनाय । हन्तेः पाठार्थे वर्तमानस्यानेकार्थत्वाद्धातूनां, वर्णव्यापत्त्या हकारस्थाने घकारः ।

**भवन्ति** छन्दोभ्यस्तस्मात्समाहरणक्रियायोगात्समाहर्तव एव एते संपन्नाः पूर्ववदेवोपसर्गव्यत्ययादिक्रमेणातिपरोक्षवृत्तितामापादिताः सन्तो निघण्टव इत्युच्यन्ते । एवमेष निघण्टुशब्दो गमेर्वैकोपसर्गाद्धन्तिहरतिभ्यां वाद्युपसर्गाभ्यां निरुक्तः । एवमन्यत्रापि रूढशब्दोऽनेकक्रियाभिर्निर्वक्तव्यः । यथोक्तं वार्तिककृता—

"यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चाप्यभिधेयस्थस्तावद्भिर्गुणविग्रहः ॥" इति ॥

### ( इति निघण्टुपदनिर्वचनम् )

### ( अथ पदचतुष्टयोद्देशकथनम् )

एतावता ग्रन्थसंदर्भेण समाम्नायो निघण्टव इति समाम्नायशब्दपर्यायप्रसक्तस्य निघण्टुशब्दस्य व्युत्पत्तिरुक्ता नतु निघण्टुशब्दस्यार्थतत्त्वमवधारितं तदवधारणाय वाक्यमारचयति—

## तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति ॥

**तत्** निघण्टुशब्दार्थतत्त्वम् अवधार्यत इति शेषः । किंपुनस्तत् **यान्येतानि चत्वारि पदजातानि** या एताश्चतस्रः पदजातयः । पदसामान्यानि ( पदगणाः ) 'जातिर्जातं च सामान्यमि'त्यमरः । लोके वेदे चेति शेषः । तद्भेदानाह— **नामाख्याते चोपसर्गनिपाताश्चेति, तानीमानि** निघण्टुसंज्ञकानि **भवन्ति** । इमानि चत्वार्येव पदजातानि सन्त्यस्मिञ्छास्त्रे इत्यर्थः ।

तत्र नामाख्यातयोर्निपातोपसर्गनिरपेक्षयोरपि अर्थाभिधायकत्वाद्वाच्यार्थेनार्थवत्त्वाच्च प्राधान्यात्पूर्वमभिधानम् । निपातोपसर्गयोश्च नामाख्यातनिरपेक्षयोरर्थाभावाद्द्योत्यार्थेनैवार्थवत्त्वाच्चाप्राधान्यात्पश्चादभिधानम् । "नामाख्याते" इति समासेनाभिधानमितरेतराकाङ्क्षित्वप्रदर्शनाय । नाम्नः पूर्वनिपातोऽल्पाच्-

१. नाम जातिः स्त्रीपुंनपुंसकप्रविभागेन नानासुबन्तपदव्यक्तिगता, एवमाख्यातजातिः कर्तृवचन, भाववचन, कर्मवचन,-प्रविभागेन नानातिङन्तपदव्यक्तिगता । उपसर्गजातिराङादिः । निपातजातिश्चेवादिः । इति व्यक्ततरमुपपादयिष्यते ।

२. उद्देशेनैव चतुर्णामवगतौ कण्ठतश्चत्वारीत्युक्तिः परिसंचष्टे चत्वार्येवेति । यथा—

"पञ्च पञ्चनखा भक्ष्याः पञ्च पञ्चनखेतराः ।
शशकः शल्लकी गोधा कूर्मः खड्गी च पञ्चमः ॥ १ ॥"

इत्यादौ पञ्चेत्युक्तिः पञ्चैवेत्यर्थेन पञ्चातिरिक्तानां पञ्चनखानामभक्ष्यत्वमवगमयति । सेयं परिसंख्याविधिरत्रापचेव मांसभक्षणप्रसक्तौ द्रष्टव्या, तथैव प्रक्रमात् ॥

३. अजाद्यदन्तस्यापि उपसर्गस्य परप्रयोगोऽयमाख्यातेन यथासंख्यान्वयमनुरुध्य कृतः । दृष्टंच पूर्वनिपातप्रकरणस्यानित्यत्वं "समुद्राभ्राद्घः" ( पा. ४-४-११८ ) इत्यादिषु ।

४. सति सामर्थ्ये समास इति तेन ( सामर्थ्येन ) समानकार्यत्वं पूर्वोत्तरपदार्थयोरवगम्यते ॥

न्तरत्वात् नामपदवाच्यार्थाश्रयक्रियोपलक्ष्यत्वाच्चाख्यातस्य पश्चान्निपातः । उपसर्गनिपातानामुभयेषामपि नामाख्यातयोरर्थविशेषद्योतकत्वरूपसमानकार्यकारित्वात्सामर्थ्यमिति समासः । उपसर्गाणामाख्यातसहयोगित्वादनन्तरमभिधानम् । परिशेषाणां निपातानां पश्चात् । अपरिमिताश्च निपाता इति ।

## ( अथ नामाख्यातलक्षणाधिकरणम् )

## तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति ॥

**तत्र**—तस्मिन् लोकवेदप्रसिद्धे पदचतुष्टये ( निघण्टुशब्दसमानसंज्ञोपलक्षिते ) ये तावन्नामाख्याते तयोस्तावदेतल्लक्षणं **प्रदिशन्ति** प्र–प्रकर्षेण ( इदं नाम्नां लक्षणमिदमाख्यातस्येत्येवं विभज्य– ) दिशन्ति उपदिशन्ति । आचार्या इति शेषः । तल्लक्षणं च समाम्नातासमाम्नातोभयसङ्ग्रहायैव । यथोक्तम्—

"ऋषयो ह्युपदेशेन नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ १ ॥" इति ।

तल्लक्षणस्वरूपमाह—

## भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि ॥

**भावो** भावना उत्पादना सा च असत्त्वभूतो धात्वर्थोऽत्र गृह्यते । इयमेव च साध्यत्वेनाभिधीयमाना क्रियेत्युच्यते । यथोक्तं हरिणा—

"धात्वर्थो भावना सैवोत्पादना सैव च क्रिया ।" इति ।
"असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।" इति च ॥
"यावत्सिद्धमसिद्धं च साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥" इति च ॥

स ( भावः ) **प्रधानं** यत्र ( गुणभूतानि चान्यानि कारकाणि ) तदिदं भावप्रधानम् । किंपुनस्तत्? **आख्यातम्** आख्यायन्ते क्रियागुणभावेन वर्तमानानि स्त्रीपुंनपुंसकानि अनेनेत्याख्यातम् ( तिङन्तम् ) आङ्पूर्वकाद्व्यक्तवागर्थकाच्चक्षिङो बाहुलकात्करणे क्तः । "चक्षिङः ख्याञ्" ( पा. २–४–५४ ) सामान्ये नपुंसकम् । तत्पुनरेतच्चतुर्विधं भवति । कर्तरि भावे कर्मणि कर्मकर्तरि चेति । तत्र पचति देवदत्त इति कर्तरि । भूयते देवदत्तेनेति भावे । पच्यते ओदनो देवदत्तेनेति कर्मणि । पच्यते ओदनः स्वयमेवेति कर्मकर्तरि । चतुर्ष्वप्यवयवार्था

१. सत्त्वशब्दार्थोऽनुपदं वक्ष्यते । समूतस्तत्त्वं ( सत्त्वत्वं ) प्राप्तः सत्त्वभूतः । भूप्राप्तावात्मनेपदी ( चु० ) तस्मा "गत्यर्थाकर्मके–" ( पा. ३–४–७२ )–त्यादिना कर्तरि क्तः ॥ सत्त्वशब्दोऽत्र भावप्रधानो निर्दिष्टः "द्व्येकयोर्द्विवचनैकवचने" ( पा. २–४–५४ ) इत्यत्र द्व्येकयोरितिवत् । तद्भिन्नोऽसत्त्वभूतः । तत्त्वं च लिङ्गाद्यनन्वितत्वम् । यथाचोक्तम्—

"क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते ॥
त्रीनत्र पुरुषान्विद्यात्कालतस्तु विशिष्यते ॥" इति ।

अत्र आद्यादित्वात्सार्वविभक्तिकस्तसिल् तृतीयान्ताभ्यां लिङ्गकालशब्दाभ्यां स्वरेण स्वरतः वर्णेन वर्णत इत्यादिवत् । लिङ्गमिति संख्याया अप्युपलक्षणम् । तिङर्थकर्त्रादिगता हि संख्या क्रियां न विशिनष्टि किंतु काल एव । तथाचोक्तं हरिणा—

"क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ।" इति ।

क्रियाभेदाय क्रियां भेत्तुं विशेषयितुं ( स्वेन रूपेण रूपणीयं कर्तुं ) कालस्तु–काल एव न संख्यादिः । सर्वस्येति क्रियाभिन्नस्य नामार्थस्येत्यर्थः । कालस्त्विति तुना तद्भेदनस्य[1] व्यावर्तनात् ॥

२. साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदको धर्मः । तद्रूपवत्त्वमेवासत्त्वभूतत्वम् । लिङ्गाद्यनन्वितत्वं तु व्युत्पत्तिनिमित्तमात्रम् । अन्यदेव हि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । आद्यं यथा गोर्गमनकर्तृत्वम् गच्छतीति गौरितिव्युत्पत्तेः । गमेर्डोस् । द्वितीयं यथा तस्यैव शृङ्गसास्नादिमत्त्वम् । "सास्ना तु गलकम्बलः" इत्यमरः ॥ पचतीत्युक्ते हि क्रियान्तराकाङ्क्षा नोत्तिष्ठति । सैव च पाक इत्युक्ते उत्तिष्ठत्येव, भवति अभूदिति । स कृदन्तनामप्रतिपाद्यो भावः सत्त्वप्रधान इति प्रोच्यते ।

१. आचार्यदुर्गस्तु नामपदवाच्यार्थाश्रयक्रियाव्यङ्ग्यो भावः पाकरागत्यागादिः स यत्र प्रधानं गुणभूता च क्रिया तदिदं भावप्रधानम् । किं पुनस्तदिति ? आख्यातम् आख्यायतेऽनेन गुणभावेन वर्तमाना अनेककारकप्रविभक्ता स्फुरमाणेव प्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता क्रिया । तस्याश्च प्राधान्येन प्रवर्तमानो भावः स्वात्मलाभप्रधान इत्याख्यात इत्यादिस्वमतं सोपपत्तिकमुक्तवाँस्तत्त एव स्ववधेयम् ॥

२. क्रिया चैषामुपरि प्राधान्येन वर्तते । यत एतानि तन्मुखप्रेक्षकाणि तां विना व्यर्थप्रयत्नानीव प्रतिभान्ति । नहि देवदत्तस्य गौर्ग्रामंक्षणाय गेहाद्गङ्गायां हस्तेन मयेत्येतत्कारकचक्रप्रयोगेणापि कञ्चिदर्थं प्रतियन्त्यन्तरेण दीयते इति क्रियाम् । तथाचोक्तम्–'सर्वं वाक्यं क्रियया परिसमाप्यते' इति । परिसमाप्यत इत्यस्य शान्ताकाङ्क्षं भवतीत्यर्थः ॥

३. "कृत्यल्युटो बहुलम्" ( पा. ३–३–११३ ) इत्यत्र बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थं तेन कर्तर्यपि विहितः "ण्वुल्तृचौ" ( पा. ३–१–१३३ ) इति ण्वुल् पादाभ्यां ह्रियत इति पादहारक इत्यत्र कर्मणि भवति, यथा वा भावकर्मणोर्विहितोऽपि "तव्यत्तव्यानीयरः" ( पा. ३–१–९६ ) इत्यनीयर् स्नानीयं चूर्णं दानीयो विप्र इत्यत्र करणे संप्रदाने च क्रमेण भवति ।

४. यद्यपि पाको नाम विक्लित्तिरवयवशैथिल्यादि स च न ओदनस्य क्रियते किंतु तण्डुलस्यैव तथापि सूत्रशाटकवद्भाविसंज्ञया[1] निर्देशः पाकेन निष्पाद्यत इत्यर्थः ॥

1. संख्याकृतक्रियाभेदनस्य ।

1. यथास्य सूत्रस्य शाटकं वयेत्युक्ते यदा वातव्यस्तदा न शाटको यदा शाटकस्तदा न वातव्य इति मन्ये स वातव्यः यस्योतस्य शाटक इत्येषा संज्ञा भविष्यति । एवमिह स पक्तव्यो यस्य पक्वस्यौदन इत्येषा संज्ञा भविष्यति ॥

द्रव्याणि अप्रधानानि क्रियैव प्रधानम् ॥ इत्थं नाम्नामाख्यातजत्वात्प्रतिज्ञाक्रमं भित्त्वा पूर्वमाख्यातलक्षणमुक्तम् ।

इदानीं नाम्नां लक्षणमुच्यते **सत्त्वप्रधानानीति**। सीदति गच्छति ( अन्वेति ) लिङ्गसंख्यादिकमस्मिन्निति सत्त्वं (द्रव्यम्) षद्लृ विशरणगत्यवसादनेष्वित्यस्मादधिकरणे औणादिकस्त्वन्प्रत्ययः । तदेषु प्रधानं गुणभूता च क्रिया तानीमानि सत्त्वप्रधानानि । कानि पुनस्तानि ? । **नामानि** । नमन्त्याख्यातशब्दे गुणभावेन नम(य-)न्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि । 'णम् प्रह्वत्वे' इत्यस्य शुद्धस्यान्तर्भावितण्यर्थस्य वा "नामन्सीमन्नि"—त्यादिनौणादिको निपातः । सामान्ये नपुंसकम् । यथैव ह्याख्याते विद्यमानमपि द्रव्यमविवक्षितमेवमिहापि विद्यमानापि क्रिया अविवक्षिता, द्रव्यपरत्वात्सत्त्वशब्दस्य तद्विक्रियाजनितमुत्तरकालं क्रियाशेषभूतमभिधाय धात्वर्थोऽसौ व्यावर्तते । स्त्रीपुंनपुंसकभेदं-निपातोपसर्गाणामपि वा क्वचिन्नामत्वमपेक्ष्य वहुवचननिर्देशो नामानीति । एकेत्वाहुः । भाव-काल-कारक-संख्याश्चत्वारोऽर्था आख्यातस्य । तेषां मध्ये भावस्य प्रधानता भवति । अतो भावप्रधानमाख्यातमित्युक्तम् । नाम्नोऽपि सत्त्वं-द्रव्य-संख्या-लिङ्गमित्येते चत्वारोऽर्थास्तेषां मध्ये सत्त्वं प्रधानमित्यतः सत्त्वप्रधानानि नामानीत्युक्तमिति ।

एवं तावदनयोर्नामाख्यातयोः परस्पराविनाभूतयोः स्वपदार्थोक्तावेकस्य भावप्राधान्यमपरस्य च सत्त्वप्राधान्यमिति स्थितम् । अथानयोर्गुणप्रधानभावविषये शङ्कासमाधी युगपदेकवाक्येनाचष्टे—

## तद्यत्रोभे, भावप्रधाने, भवतः ॥

**तत्**-अथ पुनः यत्र-यस्मिन्वाक्ये एते ( नामाख्याते ) **उभे । भवतः** ( इत्युभयोः शेषः ) तत्र कस्य प्रधानमर्थः कस्य च गुणभूत इत्याशङ्कायां समाधिमाह-**भावप्रधाने भवतः** । भावः प्रधानं ययोस्ते भावप्रधाने । अयमर्थः । वाक्ये ह्याख्यातं प्रधानं तस्य चिकीर्षितत्वात् । तदर्थत्वाच्च गुणभूतं नामेतीदमाख्यातमेव वाक्ये प्रधानमिति ॥

### ( भाववाचकप्रदर्शनम् )

अथ पुनः कथमभिनिर्वर्त्यमानो भाव आख्यातेनोच्यते किंवा तदाख्यातमित्यपेक्षायां शब्दार्थसंवन्धस्य लोकप्रसिद्धत्वाल्लोकप्रसिद्ध्यैवोदाहरति—

## पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् ॥

अपूर्वमनपरं सन्तमेकत्वात्**पूर्वापरीभूतं** पूर्वापरमिव पौर्वापर्येणावस्थितम् । "अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्वि" ( पा. ५-४-५० ) रिति च्विः । "अस्य च्वौ"-( पा. ७-४-३२ ) विति ईत्वम् । एकमनेकासु क्रियासु ( उपानदधिनहन-पूर्वोत्तरपदविहरण-पथिभोजन-शयनाऽऽसनोदकपानाद्यासु) आश्रितं तदभिनिर्वृत्तिवशेनाभिनिर्वर्तमानं **भावं** किं करोतीति पृच्छते कस्मैचिदन्य **आचष्टे व्रजतीत्याख्यातेन** । एवं **पचतीत्यत्रापि** बोध्यम् ॥ **उपक्रमप्रभृतीति** । उपक्रमः आरम्भः, तत्प्रभृति तदादि, तस्मात्तदारभ्या**पवर्गपर्यन्तम**न्तिमक्रियावसानमित्यर्थः। एतच्च भावविशेषणमेतदर्थश्लोकं एव। एवमनेकक्रियाभिर्निर्वर्त्यमानो भाव आख्यातेनोच्यत इति सिद्धम् ॥ तथाचोक्तम्—

क्रियासु वह्वीष्वभिसंश्रितो यः पूर्वापरीभूत इवैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः ॥ १ ॥

इति ॥

तथाचोक्तं हरिणापि—

"गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" ॥ १ ॥ इति ॥

---

१. तथाचोक्तम्-"शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते ।
तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ १ ॥" इति ॥
अन्यच्च-"अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ॥
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ १ ॥
निर्देशः कर्मकरणं प्रदानमपकर्षणम् ।
स्वाम्यर्थश्चाधिकरणं विभक्त्यर्थाः प्रकीर्तिताः ॥ २ ॥" इति ॥
अत्र चकारः संबन्धान्तरं कर्तृकर्मणी च समुच्चिनोति । सर्वेषामेषां षष्ठ्यर्थत्वात् ॥

२. अतएव-"कृत्तद्धितसमासाश्चे" ति ( पा. १-२-४६ ) सूत्रे चेति सार्थकम् । अनर्थका अपि निपाता भवन्तीति ॥

३. सत्त्वं सत्तेत्यनर्थान्तरम् । तदिह स्वार्थे इत्यप्युच्यते । स च प्रवृत्तिनिमित्तम् । यदर्थज्ञानाच्छब्दप्रवृत्तिस्तत्प्रवृत्तिनिमित्तम् । यथा सास्नादिमत्त्वं गोः, तदेव च गवि गोत्वम् । वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तत्वमिति नव्याः । तदाश्रयो द्रव्यम् ॥

४. अवरोहणक्रमेणोत्तरस्य पूर्वमभिधानमत्र ॥

५. अव्ययानां नानार्थत्वात्तदित्यव्ययमथ पुनरित्येतस्मिन्नर्थे वर्तते ॥

१. यथा "अष्टन आ विभक्तौ" (पा. ७-२-८४) "रायो हलि-" (पा. ७-२-८५) इत्यत्र हलीत्युभयोः शेष इत्युक्तं महाभाष्यादौ ।

२. भावः साध्यावस्थापन्नो धात्वर्थः आख्यातवाच्यः । वाच्यवाचकयोश्चाभेदारोपादाख्यातशब्देनात्र सर्वत्र भाव एवोच्यते इति ध्येयम् । व्यक्तीभविष्यति चैतदुपरिष्टात् ।

३. तदर्थस्य भावनिष्पत्तावङ्गत्वात् ॥

४. किमिति प्रश्ने । भावसामान्यस्वरूपविषयकोऽयं प्रश्नः ॥

५. अधिश्रयणाद्यधःश्रयणपर्यन्तः क्रियाकलापः पचतिना विक्लित्त्यनुकूलत्वेनैकरूपेणैवोच्यते । अत्राविभक्तकर्तृकं ( भावाश्रयाभिन्नकर्तृकं कर्तृस्थभावकमिति यावत् ) प्रथममुदाहरणं, विभक्तकर्तृकं ( भावाश्रयभिन्नकर्तृकं कर्मस्थभावकमिति यावत् ) द्वितीयमुदाहरणमित्युदाहरणद्वयमत्र भावद्वयोपदर्शनायेति बोध्यम् ॥

६. उपानदधिहननेत्यादिना ॥

अत्र समूहव्यवहारो बौद्धः ( बुद्धिकल्पितः ) एव न व्याख्यानिक इति सूचयितुमेवेवशब्दः प्रयुक्तः ॥

इत्थं भावसामान्यस्वरूपमभिधाय भावविशेषस्वरूपं निर्विवक्षन्पूर्वोक्तभावलक्षणस्य पुंयोगमपेक्ष्य क्वचिदपवादमाह—

## मूर्तं सत्त्वभूतं सत्त्वनामभिः ॥

कदाचित्तु तमेव भावं तथैवोपक्रमप्रभृत्यपवर्गपर्यन्तमभिनिर्वर्तमानं **मूर्तं** किमपि रूपान्तरतामापन्नं **सत्त्वभूतं** सत्त्वरूपिणं **सत्त्वनामभि**र्लिङ्गसंख्यायुक्तैः शब्दैराचष्टे इत्यनुवर्तमानमत्रापि द्रष्टव्यम् । कथमिति ? तदुदाहरणमाह—

## व्रज्यापक्तिरिति ॥

तथाचोक्तमभियुक्तैर्महाभाष्यकृदादिभिः "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति ॥

अन्यत्रापि—

"क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात् ।
संख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्यः ॥ १ ॥"
इति ॥

व्ययो विकारः । तत्कृतो भेद इति यावत् । तेन लिङ्गेन युक्त इति समुदितार्थः । एतच्च शब्दशक्तिस्वाभाव्यादित्यवगन्तव्यम् ॥ तथा चोक्तं हरिणा—

"सत्त्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते ।
असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ॥" इति ॥

### ( सत्त्वोपदेशनिरूपणम् )

इत्थं ( सत्त्वभूत– ) भावविशेषस्वरूपं सोदाहरणमभिधाय सत्त्वसामान्यस्वरूपमुदाहरणेनैवोपदिशति—

## अद इति सत्त्वानामुपदेशः ॥ १ ॥

सामान्यत इति शेषः । सामान्यतः ( सामान्येन रूपेण ) **सत्त्वानां** द्रव्याणामुपदेशो**ऽद इति** । उपलक्षणमेतदन्येषामपि लिङ्गसामान्यवचनानामिति व्याख्यातमादिमं **खण्डसूत्रम्** ॥ १ ॥

तदेवं सत्त्वसामान्यस्वरूपमुपदिश्य तद्विशेषस्वरूपमुपदिशति—

## गौरश्वः पुरुषो हस्तीति ॥

सत्त्वानामिति पूर्वस्मात्खण्डसूत्रान्तवाक्यादनुवर्तते । विशेषोपदेश इति शेषः । सोपाधिकनिरुपाधिकोपप्रदर्शनार्थमनेकोदाहरणम् । इतिशब्द आद्यर्थः । "ज्वलितिकसन्तेभ्यः" ( पा. ३–१–१४० ) इत्यत्र यथा ॥

### ( भावोपदेशनिरूपणम् )

इत्थं सत्त्वसामान्यविशेषस्वरूपे उदाहरणमुखेनाभिधाय भावसामान्यमुपदिशति—

## भवतीति भावस्य ॥

सामान्येनोपदेश इति शेषः । अनेनैव हि सर्वक्रियाप्रसवबीजभूतमस्तित्वमात्रमेव अनुपसृष्टेनोच्यत इति उपपन्नं भवति सामान्यवाचित्वमस्य भवतिशब्दस्य ॥

भावविशेषस्वरूपमुपदिशति—

## आस्ते शेते व्रजति तिष्ठतीति ॥

सकर्मकाकर्मकोपप्रदर्शनार्थमुभयेषामुदाहरणम् । इतिशब्दोऽत्राप्याद्यर्थ एव ॥

एवं तावन्नामाख्यातोपसर्गनिपातभेदेन पदचतुष्टयं भाववचनता द्रव्यवचनता गुणभावः प्रधानभावः पूर्वापरीभावः सामान्यवाचित्वं विशेषवाचित्वमित्युक्तं तदेव स्थूणानिखनन्न्यायेन दृढीकर्तुमाक्षिपति—

### ( शब्दानित्यत्ववादिन आक्षेपः )

## इन्द्रियनित्यं वचनमौदुम्बरायणः ॥ (१)

उच्यतेऽनेनेति **वचनं** वाक्यं नामाख्यातोपसर्गनिपातात्मकं **तदिन्द्रिये** इन्द्रस्यात्मनो लिङ्गे ( अनुमापके ) वाग्रूपे **नित्यं** नियतं, यावद्वाक् तावद्वचनं, न ततः परमाशुविनाशित्वादित्यौ**दुम्बरायण** आचार्यो मन्यते इति शेषः । उदुम्बरस्य गोत्रापत्यमौदुम्बरिः । "अत इञ्" ( पा. ४–१–९५ ) इत्यपत्ये गोत्ररूपे इञ् । आदिवृद्धिः । औदुम्बरेरनन्तरापत्यमुदुम्बरस्य युवापत्यमौदुम्बरायणः "यञिञोश्च" ( पा. ४–१–१०१ ) ति यूनि ( युवापत्ये ) फक् ॥ ततश्च—तत्र चतुष्ट्वं नोपपद्यते ॥ सहभावाभावात् । अयमर्थः । यावदेव वक्तुर्वागिन्द्रिये वचनं तावदेव तदस्तीति शक्यते वक्तुं, प्रच्युतं च नास्त्येवोच्चरितप्रध्वंसित्वाद्वर्णानामिति नास्ति पदभावोऽपि । प्रागेव वाक्य-

---

१. सत्त्वमिति भावप्रधाननिर्देशेन सत्त्व–(द्रव्य–) त्वं प्राप्तमित्यर्थः । अस्य साधनमुक्तं प्राक् ( ५ पृ० ) ॥

२. सर्वनाम्नाम् । "सर्वनाम च सामान्यवाचि" इति महाभाष्योक्तेः । एवं च सर्वनामसंज्ञकेनोपलक्ष्यमाणत्वमेव द्रव्यात्वम् । तथाचोक्तं हरिणा—

"वस्तूपलक्षणं यत्र सर्वमान प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थोऽभेद्यत्वेन विवक्षितः ॥" इति ॥

३. इदं खण्डसूत्रं वृत्तिकृतो दुर्गस्येत्याद्दृतम् । भाष्यीयं तु कोष्ठाङ्कित–( १ )–मग्रे द्रष्टव्यम् ॥

१. सामान्यवृत्त्या विशेषवृत्त्या चोभयथा शब्दः प्रवर्तत इत्युभयमुपदर्शितम् ॥

२. अत्रहि सर्वेषां सत्तावाचिनामध्ययने प्राप्ते भवतिरेवैक उदाहरणार्थः परिगृहीतः । विद्यमानत्वमेवानुभवन्तः सर्वे भवतिशब्दवाच्या अन्याभिर्विशेषक्रियाभिरभिसंबध्यन्त इति ॥

३. उच्चार्यप्रवृत्तिनिवृत्ती बोध्येते अनेनेति करणे ल्युट् ।

४. तथाच पाणिनिसूत्रम् 'इन्द्रियमिन्द्रलिङ्गम्' ( पा० ५–२–९३ ) इति । अचेतनं चेतनाधिष्ठितं सत् कार्यं करोतीति वास्यादौ गृहीतव्याप्तेः "रूपादिज्ञानं सकरणकं क्रियात्वाच्छिदावत्" इत्यनुमित्या देहेन्द्रियादिव्यतिरिक्तस्यात्मनोऽस्तित्वावगमो भवति ॥

भावः । नहि विनष्टाविनष्टयोर्वर्णयोः पदयोर्वा सह परिसंख्यानं संभवति, तस्माद्वचनानित्यत्वात्पदचतुष्ट्वानुपपत्तिरिति ॥ किंच—

## अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः ॥

**नोपपद्यत** इत्यनुवर्तते । वाशब्दः समुच्चयार्थे वक्ष्यते ( नि. १-२-३ ) एवं चैतेषाम**युगपदुत्पन्नानां** शब्दानां योऽयम**ितरेतरोपदेशः** परस्परगुणप्रधानभावेन ( नाम्न आख्यातं प्रति गुणभावेन, आख्यातस्य च नाम प्रति प्रधानभावेन ) उपदेशः । अयं च नोपपद्यते । किं कारणम्? नहि विनष्टं नाम गुणभावमियादाख्याते, नापि च विनष्टमाख्यातं प्रधानभावमियान्नाम्नि, नहि विनष्टाविनष्टयोः परस्परं गुणप्रधानभावोऽस्ति । किंच—

## शास्त्रकृतो योगश्च ॥

अत्रापि **नोपपद्यत** इत्यनुवर्तते । यश्चायं **शास्त्रकृतः** शास्त्रदृष्टः **योगः** शब्दस्य शब्दान्तरेण संबन्धः । तद्यथोपसर्गस्य धातुना, धातोः प्रत्ययेन, प्रत्ययस्य च लोपागमवर्णविकारैः । सोऽपि वचनानित्यत्वान्नोपपद्यते । नहि विनष्टाविनष्टयोर्योगोऽस्ति । तस्माद्य एव नामाख्यातयोरितरेतरगुणप्रधानभावः उपसर्गनिपातानां नामाख्याताभ्यां योगे । यच्च पदचतुष्टयमुक्तं सर्वमेतदसम्यगिति ॥

१. वाक्यावयवभूतानाम् ॥ अत्रेदं बोध्यम्—उपपद्यते—युगपदुत्पन्नानामित्येव पठितयोर्वाक्ययोः सति पूर्वरूपेऽभ्युपगते अयुगपदिति शक्यते भेत्तुम् । अनभ्युपगते तु तस्मिन्यथास्थितमेव युगपदित्यादि वाक्यम् । तत्राद्यपक्षमपेक्ष्य व्याख्यामार्गोऽयं सुखेयत्वादुपदर्शितः । एतच्च नैयायिकमतोत्थानबीजम् । वैयाकरणास्त्वपरं पक्षं कक्षीकृत्येदं व्याचक्षते—यदाह भगवान्दुर्गः । अथ मतम् "अविचालिन एवैते कूटस्था अविनाशिनः शब्दास्ते तु कल्पान्ते" तस्माद्व्याप्तिरूपाद्विशीर्णेष्वभिधेयेष्वभिधातृषु कारणभावमापद्यमानेषु आश्रयाभावादेवावस्थातुमशक्नुवन्तः अभिधेयाभिधातृसहिता एव कारणात्मभावमधिकमनुभूयाभिसंस्तवकाले कल्पादावन्यकल्पविशिष्टकर्मनिर्जितकार्यकारणसर्वभूतसाधारणात्मभूते हिरण्यगर्भे विवर्तमाने तद्बुद्धिमाश्रयं प्राप्य तेनैव सह युगपदेवाभिव्यज्यन्ते विशेषात्मलाभाय शब्दा इति । अत्र ब्रूमः । एवमप्येतेषां युगपदुत्पन्नानां युगपदुत्पत्तावपि सत्यां यद्यपि पदचतुष्टयं प्राप्नोत्येव सहावस्थितानां, तथापि इतरेतरोपदेश इतरेतरगुणप्रधानभावश्च न प्राप्नोति । नहि युगपदुत्पन्नयोर्गोविषाणयोरितरेतरगुणप्रधानभावोऽस्ति । किंचान्यत् । कूटस्थेषु चाविचालिषु नित्येषु शब्देषु य एष शास्त्रकृतो योगः स एष नोपपद्यते । किं कारणम्? अयुक्तो हि युज्यते । नित्यं युक्ता हि धातव उपसर्गैः प्रत्ययैश्च, प्रत्ययाश्च लोपागमवर्णविकारैरिति । तस्मान्नित्यपक्षेऽपि वचनस्य तदेतदुपवर्णितं गुणप्रधानभावादि पदचतुष्टयमधिकृत्य, सर्वमेतदसम्यगिति ॥

### ( शब्दनित्यत्ववादिनः समाधानम् )

प्रतिक्षिपति—

## व्याप्तिमत्त्वात्तु शब्दस्य ॥

सर्वमेतदुपपद्यत इति शेषः । तुर्भेदार्थं उत्तरपक्षतां ध्वनयति । व्यापनं व्याप्तिः । "स्त्रियां क्तिन्" (पा. ३-३-९४) ति भावे क्तिन् । सा यस्मिन्नस्ति सोऽयं व्याप्तिमान् शब्दः । तद्भावो व्याप्तिमत्त्वं "तस्य भावस्त्वतलौ" ( पा. ५-१-११९ ) ति भावे त्वः । तस्माद्**व्याप्तिमत्त्वाच्छब्दस्य** सर्वमेतदुपपद्यते । **अयमभिसन्धिः** । शरीरे हृदयान्तर्गताकाशप्रतिष्ठिता बुद्धिरेवाभिधानाभिधेयोभयस्वरूपा, तयो–( रभिधानाभिधेयरूपयोर्बुद्ध्यो- )र्मध्येऽभिधानरूपया बुद्ध्याऽभिमतप्रयोजनविजिज्ञापयिषया पुरुषेण तदभिव्यक्तिसमर्थेन स्वगुणभूतप्रयत्नेनोदीर्यमाणः शब्द उरःकण्ठादिवर्णस्थानेषु निष्पद्यमानस्तया पुरुषार्थाभिधानसमर्थवर्णादिभावमापद्यमानः पुरुषप्रयत्नेन बहिर्निःक्षिप्तो विना-

१. समाधत्ते ॥

२. एतत्पदचतुष्टादि । तद्यथा । विनाशपक्षे पुरुषप्रयत्नोपजनिताद्वक्त्रोद्धातात्परस्यार्थप्रत्ययमाधाय शब्दव्यक्तय एव ध्वंसन्ते नतु शब्दाकृतयः । तास्तु तयाऽभिधानशक्त्या बुद्धिद्वारेणावस्थिताः स्वानर्थान्प्रत्याययन्त्यः ( प्रकाशयन्त्यः ) स्थिता एव भवन्ति तासु साक्षात्पदपरिसंख्यानं वर्तमानमितरासु विनाशिनीषु व्यक्तिषु लक्षणयोपचर्यते इति । व्याप्तिमत्त्वादित्यनेनैव इतरेतरोपदेशः प्रत्युक्तः । शास्त्रकृतो योगश्च नामाख्यातरूपबुद्धितत्त्वे सत्त्वक्रियाविषये गुणप्रधानभावेनातिष्ठेत् । तयोर्गुणप्रधानभावे सति तच्छब्दे लक्षणयोपचर्यते । तथाच धातुरूपा बुद्धिस्तदर्थरूपया बुद्ध्या संयुज्यते । बुद्धिरेव हि धात्वादिरूपेण विपरिणममाना शास्त्रेण संक्रियते । तस्यां च संक्रियमाणायां शब्दे संस्कारोपचारः क्रियते । तदभिधायकत्वाच्छब्दस्य ॥ नित्यत्वपक्षेऽपि—युगपदुत्पन्नानां गुणप्रधानभावो गोविषाणवन्नास्तीति यदुक्तपूर्वं तदप्यनैकान्तिकं दृष्टान्तभूतम् । दृष्टो हि एकस्मिन्नेव काले गुणप्रधानभावो युगपदुत्पन्नयो राजपुत्रामात्यपुत्रयोरिति ॥ एतत्तत्त्वमनुपदं स्फुटयति—अयमित्यादिना ॥

३. अभिसन्धिर्गूढोऽभिप्रायः ॥

४. तथाच पाणिनिशिक्षायाम्—

"आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ १ ॥" इति ॥
"सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते"-इति च ॥

आत्मा अन्तःकरणम् संस्काररूपेण स्वगतानर्थान्बुद्ध्या समेत्य एकबुद्धिविषयान्कृत्वा तद्बोधनेच्छया मनः युङ्क्ते युक्तं करोति । तदिच्छावन्मनः कायाग्निं जाठरमग्निमभिहन्ति । स कायाग्निः । सोदीर्णः स मारुत उदीर्ण ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः ॥

५. अर्थः प्रयोजनम् । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ॥

1. इच्छाऽप्यन्तःकरणवृत्तिविशेष एव । अन्तःकरणपरिणामविशेषो मनःकर्मात्र ॥

शिनि व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याग्यास्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोतीत्येवं व्याप्तिमाञ्छब्दः । नह्यसंव्याप्य पुरुषस्य बुद्ध्यवस्थमर्थमर्थप्रत्ययमादधीत, न चानवस्थितो व्याप्नुयात्ततश्च स शब्दः स्वमर्थमभिदधत्स्वक्रियाप्रवेशोपजनितेनाभिधानेनाख्यातमित्येवमादिना स्वात्मानमभिसंबध्य तिरोभवितुमुपक्रमते विनाशं चोपैति । तस्य स्वदेशोपजनितैराख्यातादिभिः स्वप्रदेशविशेषानुस्मृतिपूर्वकं परिसंख्यानमुपपद्यत एवेति ॥ तथाच व्याप्तिमत्त्वाच्छब्दस्य लोकवेदव्यवहारार्थं पदचतुष्टमुपादीयते ऐवमन्यत् ॥

अथैवमपि व्यवहारार्थं पदचतुष्टं नोपादेयम् । अभिनयैरेव पाणिविहाराक्षिनिकोचादिभिर्व्याप्तिमद्भिर्व्यवहारसिद्धेस्तथाचायमतिमहान्वेदसमुद्रः क्लेशेन पठितव्योऽपि न भविष्यति । नापि चाध्ययैनदोषैः संभक्ष्यामहे इत्यपरमनुकूलमित्याशङ्कां प्रतिसमादधाति—

१. एतत्तत्त्वमनुपदोक्तं द्रष्टव्यम् । केचित्तु इन्द्रियनित्यत्वात्पदचतुष्टानुपपत्तिस्तदाश्रयस्य सर्वस्येत्येवमाक्षिप्ते परिहारपक्षेणेदमुभयपक्षसाधारण्येनेत्थं व्याचक्षते—युगपदुत्पन्नानां वेत्यादि । अत्र पक्षे समञ्जस एव वाशब्दः । युगपदुत्पन्नानां वा अयुगपदुत्पन्नानां वाऽनित्यानां वा नित्यानां वा इतरेतरोपदेशः । इतरस्येत्याख्यातस्य क्रियावचने शब्देऽभिधानत्वेनोपदेशः; इतरस्य च नामशब्दस्य सत्त्ववचने शब्देऽभिधानत्वेनोपदेशः । शास्त्रकृतो योगश्च । लक्षणशास्त्रेण चैते क्रियासत्त्वे आख्यातनामशब्दाभ्यां युज्येते । तस्मादुपपद्यते पदचतुष्टमिति । अत्र हेतुमप्याह व्याप्तिमत्त्वात्तुशब्दस्येति । उक्तएवार्थः ॥

२. तथाच पाणिनिशिक्षा—

मन्त्रो[1] हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ १ ॥
इति ॥

स्वरेण स्वरतः वर्णेन वर्णतः । आद्यादिभ्यस्तसेरुपसंख्यानमिति सार्वविभक्तिकस्तसिः । मिथ्याप्रयुक्तः यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन् अभिमतमर्थं नाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं[2] हिंसितवानित्यर्थः । अयं भावः । इन्द्रस्याभिचारो विश्वकर्मणाऽऽरब्धः । एवं हि तैत्तिरीये श्रूयते—विश्वरूपवधात्कुपितेन त्वष्ट्राऽऽरब्धे वीन्द्रे सोमेऽनुपहूतेनेन्द्रेण पीतस्य सोमस्यावशेषं क्रुद्धस्त्वष्टाऽऽहवनीयमुपप्रावर्तयत् "स्वाहेन्द्रशत्रुर्वर्धस्वे"ति । ततो वृत्र उदभूदिति । तत्रोहिते ( स्वाहेन्द्रशत्रुर्वर्धस्वेति ) मन्त्रे इन्द्रस्य शत्रुः

1. मन्त्रशब्दोऽत्र बोधकशब्दसामान्यपरः । हीनो दुष्टः अतएव महाभाष्ये मन्त्रो हीन इति प्रसिद्धमपि शिक्षापाठं हित्वा दुष्टः शब्द इत्येव पठितम् । तमेव पाठमनुसृत्यानुपदं तथैव मूले पठिष्यते ॥

2. यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिरेवं तत्कृतापशब्दप्रयोगात्तस्मिन्प्रत्यवाय इत्याशयः ॥

( शब्दप्रयोगस्यैव व्यवहारार्थमावश्यकतानिरूपणम् )

## अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके ॥

**संज्ञाकरण**मवबोधनं तच्च **शब्देन** 'सुखं भवति नियतं चेति' शेषः । कुतः **अणीयस्त्वात्** शब्दानामित्यादिरर्थवशात् । अतिशयेनाणुरणीयान् । "द्विवचनविभज्योपपदेतरबीयसुनौ" ( पा. ५–३–५७ ) इति द्वयो- ( रभिनयशब्दयो- ) रेकस्यातिशयेऽर्थे ईयसुन् । "टेः" ( पा. ६–४–१५५ ) इति टिलोपः । तस्य भावोऽणीयस्त्वं तस्मादल्पत्वान्नियतत्वाच्चेति सार्थकश्चकारः । **अयमर्थः** । अभिनयानां व्याप्तिमत्त्वेऽपि अनणीयस्त्वा-( द्बहुत्वा- ) त्सन्दिग्धत्वात्प्रतीतशब्दार्थसंबन्धविषयत्वाच्च न तैर्व्यवहारोपपत्तिः सुखं भवति । शब्दस्त्वपरिमितमर्थमल्पीयसैव यत्नेनोच्चारितो व्याप्नोतीत्यणीयस्त्वाच्छब्देनैव **संज्ञाकरणं लोके व्यवहारार्थ**मिति । यच्चाप्युक्तमध्ययनक्लेशादि । तत्रेदं बोध्यम् । अभ्युदयार्थो हि[1] शास्त्रारम्भे यत्नः स चाध्ययनानुरूप एव भवति । तथाचानुश्रूयते "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग्भवती"ति ॥

एवं तावन्नामादिभेदेन चतुर्धाभक्तेन शब्देन मनुष्याणां मनुष्येष्ववबोधकरणमुक्तमथ तेषां ( मनुष्याणां ) वेदेषु हविः-

( शमयिता शातयिता[1] वा भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो नतु रूढिशब्दः । तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाभेदः तत्रेन्द्रमित्रत्वे सिद्धे सतीन्द्रस्य शत्रु)-र्भवेत्यर्थे प्रतिपाद्ये "समासस्ये"–( पा० ६–१–२२३ )-त्यन्तोदात्ते प्रयोक्तव्ये आद्युदात्त ऋत्विजा प्रयुक्तः । तथाच इन्द्रः शत्रुर्यस्येति बहुव्रीह्याश्रयणादर्थान्तराभिधानादिन्द्र एव वृत्रस्य शमयिता संपन्नः । इन्द्रशत्रुत्वस्य च विधेयत्वात्संबोधनविभक्तेरनुवाद्यविषयत्वादिहाभावः । यथा राजा भव युध्यस्वेति । ऊह्यमानस्य चामन्त्रत्वा "यज्ञकर्मण्यजपन्यूंखसामस्वि"–( पा. १–२–३४ ) ति जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयमानेह न भवति । इत्ययं स्वरदोषे दृष्टान्तः । वर्णदोषास्तु कलादयो महाभाष्ये ( १–१–१ ) अन्यत्र च द्रष्टव्याः ॥

१. यथायथाऽऽयासं सहते तथातथा धर्माधिक्येन युज्यते ॥

२. सुप्रयोगो यथास्वं स्वरवर्णोच्चारणात् । सम्यग्ज्ञानं चार्थतः शास्त्रान्वयाच्च । तत्राधिकशास्त्रान्वयेऽधिकफलावाप्तिर्भवति । तथोक्तं महाभाष्ये "नाकपृष्ठं सुखं यान्ति येऽचीकमतभापिणः । ते च पत्काषिणो यान्ति ये चाक्रमतभाषिणः ॥ १ ॥" इति ॥

1. शदेर्ण्यन्तादौणादिको "रुशातिभ्यां क्रुन्निति" ( उ. ४। १०३ ) कर्तरि क्रुन् । प्रज्ञादिगणे निपातनाद्ध्रस्वत्वम् । शमेर्वा तत्त्वम् । क्रुँश्चौणादिक एव । इत्थमुभयथैतत्सिद्धिः ॥

2. "बहुव्रीहौ प्रकृत्या पूर्वपदमि"–( पा. ६–२–१ ) तीन्द्रशब्दोऽन्तोदात्त एवावतिष्ठते । शत्रुशब्दो "ञ्नित्यादिर्नित्यमि"–( पा. ६–१–१९ ) त्याद्युदात्त एव ॥

संप्रदानाशीःप्रार्थनादिव्यवहारः केनेत्यत आह—

## तेषां मनुष्यवद्देवताभिधानम् ॥

मनुष्येण तुल्यं **मनुष्यवत्** । "तेन तुल्यं क्रिया चेद्वतिः" ( पा. ५-१-११५ ) इति वतिप्रत्ययः । **तेषां** शब्दानां ( नामाख्यातोपसर्गनिपातानां ) कर्तरि षष्ठी । **देवतानामभिधान**मिति कर्मषष्ठ्या समासः । शब्दानुशासनमितिवत् 'शक्य'मिति शेषः । मनुष्यवद्देवानप्यभिधातुं शब्दानां शक्तिरपरिहीनेत्यर्थः । यद्वा देवताभिधानमिति कर्तृषष्ठ्या समासः । देवताकर्तृकमभिधानं केषामित्यपेक्षायां तेषामिति कर्मषष्ठ्यन्तमभिसंबध्यते । यथैव हि मनुष्याः सत्सु प्रयोजनेषु शब्दान् ( शब्दैरर्थम् ) अभिदधति । एवमेव देवा अपि । तेऽपि हि मनुष्यवदङ्गादियुक्ताः पौरुषविधिकैरङ्गैः कर्मभिश्च संस्तूयन्ते इति वक्ष्यते ॥

### ( कर्मणि वेदमन्त्रस्यैवावश्यकतानिरूपणम् )

यद्येवं तर्हि किमर्थं वेदे मन्त्रः समाम्नातोऽन्तरेणापि मन्त्रं लोकवद्वेदेऽपि व्यवहारोपपत्तेरित्याशङ्कां निराचष्टे—

## पुरुषविद्याऽनित्यत्वात्कर्मसंपत्तिर्मन्त्रो वेदे ॥

**पुरुषेषु** मनुष्येषु **विद्याया** विज्ञानस्या**नित्यत्वा**दनियतत्वाद्धेतोः **कर्मणः संपत्तिः** संपादनं फलवत्करणम्( फलेन संपादन- ) मविगुणकर्मसंपत्तिरिति यावत् । सा यथा स्यादित्येवमर्थं **वेदे मन्त्रः** 'समाम्नात' इति शेषः । **अयमर्थः** । मनुष्याणामशिक्षितत्वाद्विस्मरणशीलत्वाद्वा अयथावत्प्रयुक्ताः शब्दा यथास्थितमर्थं नाभिदध्युः । ततश्च सर्वार्थप्रत्यक्षदृशो देवाः स्वल्पमप्ययथावदभिधानममर्षयन्तः कर्मणि न समीयुः । ततश्च देवताविहीनं कर्मा फलं संपद्येत । न केवलं फलासंपत्तिरेवाऽपि तु दुरिष्टहेतुको दोषोऽपि स्यात् । तथाचोक्तम् ।

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥१॥
इति ॥

तस्मादेतएव नामाख्यातोपसर्गनिपाताः प्रयोगानुगतपरिपाटी[१]विनियमार्थं मन्त्रत्वेन वेदे समाम्नाताः । नहि नामाख्यातोपसर्गनिपातान्परित्यज्य मन्त्राः सन्ति । तदेव हि चतुर्विधं पदजातं प्रयोगानुगतपरिपाट्या कयाचिदवस्थितं मन्त्रा इत्युच्यन्त इति ॥ तदित्थं भावविशेषस्वरूपनिर्देशोपक्रमे पदचतुष्टयमौदुम्बरायणमतेनाक्षिप्य पक्षप्रतिपक्षशो विचार्यावधारितम् । विषयै[२]श्चाक्षेपप्रसङ्गेनैवास्य परिक्लृप्ताः देवमनुष्यव्यवहारार्थमेतदिति । तदेतच्चोदकवशेन प्रसक्तानुप्रसक्तमुक्तम् । भावविकारविचार एव प्रकृत इति तच्छेषोऽधुनोच्यते । सच पुनरुभयात्मा भावः । कार्यात्मा कारणात्मा च । तयोर्यः कार्यात्मा तमधिकृत्योक्तम् "क्रियानिर्वर्त्यो योऽर्थः ( फललक्षणः ) स क्रियैव वा भाव" इति ॥ २ ॥

### ( भावविकारनिरूपणम् )

इदानीं कारणात्मा भावो निरूप्यते । तद्विकारा एव हि द्रव्यगुणकर्मभावेनावस्थिताः सन्तो नामाख्यातोपसर्गनिपातैरभिधीयन्त इति । तत्र विस्तरेणायं विधीयते तृतीयेन खण्डसूत्रेण—

## षड् भावविकारा भवन्तीति वार्ष्यायणिः ॥

अपिच लक्षणविदो विगृह्णन्ति भावशब्दं भवतेः स्वपदार्थे भवनं भाव इति । पठन्ति च "सन्मात्रं भावलिङ्गं स्यात्" इति । तस्य विकारा **भावविकाराः षड् भवन्तीति** सामान्यादात्मनः प्रस्कन्दा इव सन्ततत्वेन वैशेषिकेण भावविकारात्मलाभाय भवन्ति । इति परः प्रयुज्यमानः शब्दपदार्थकः । प्रसिद्धं हीतिशब्दस्य शब्दपदार्थकत्वं गवित्ययमाहेत्यादौ । इति ह **वार्ष्यायणि**राचार्य आह स्मेति वक्ष्यमाणेन ( च. खं. सूत्रे ) अभिसंबन्धः । वृषस्य गोत्रापत्यमित्यर्थे "तिकादिभ्यः फिञ्" ( पा. ४-१-१५४ ) इति गोत्रे फिञ् । आदिवृद्धिः । अत्र "कौशल्यकार्मार्याभ्यांचे"-(पा. ३-१-१५५) ति सूत्रे पठितेन "छागवृषयोरपि" इति वार्तिकेन प्रत्ययसन्नियोगेन प्रकृतिरूपं निपात्यते ॥ निर्देशत उपलब्धानां षडिति वचनं स्ववधारणार्थम् । अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्ति नतु ते पृथगेभ्यः सन्तीति । तदेतदनुपदं स्वयमेव स्फुटीकरिष्यति ॥ तद्धेदानाह—

## जायते,ऽस्ति, विपरिणमते, वर्धते,ऽपक्षीयते, विनश्यतीति ॥

इतिपरः प्रयुज्यमानः शब्दपदार्थकः ॥ तदेतेषां जन्मादीनां भावविकारशब्दानां मध्ये कः कस्यां विकारावस्थायामवस्थितं भावमाचष्टे कं वा विद्यमानमपि नाचष्टे कं वा न प्रतिषेधतीत्युच्यते—

---

१. परिपाटी अनुक्रमः । आनुपूर्वी चोच्यते ॥

२. विषिण्वन्ति विषयिणमनुबध्नन्तीति विषया अनुबन्धाः । यमुद्दिश्य हि प्रवर्तते स विषयः । व्यवहारार्थमेव हि पदचतुष्टयप्रयोगे प्रवृत्तिरिति ॥

१. क्रियते हि या सा क्रिया स्त्रियामित्यधिकृत्य "कृञः श च"–( पा. ३-३-१०० ) इति कर्मणि शः । "रिङ्शयग्लिङ्क्षु"–( पा. ७-४-२८ )ति रिङ् । "भावकर्मणोरि"–( पा. २-३-१३ )ति यक् टाप् ॥ यदि तु क्रियतेऽनयेति करणसाधनः क्रियाशब्दस्तदावतारयतीदानीमित्यादि ॥

२. अत्र दुर्गः–उक्तो द्विविधो भावः कारणरूपः कार्यरूपश्च । तत्र कारणोऽविकृतत्वादभिन्न एवेत्यवगतम् । इदानीं कार्यरूपस्यानेकविकृतरूपत्वादविज्ञेयत्वेन निर्वक्तुमाह "षड्० यणिः" भाव उक्तलक्षणो नित्यं विकृतिकारणं तैर्विकारैर्विशिष्टः षट्प्रकारोऽभिधीयते उपचारतः । यतोऽयं विद्यमानतामेव भावनाशब्देनाभिधत्ते । तेन यो विद्यमानमात्रभवनात्मकः स एव भिन्नोऽभिधीयते । इति ॥

**जायत इति पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति ॥**

**जायत** इत्ययंशब्दः ( तदन्तर्वर्ती जनधातुः पूर्वोक्तानां जन्यादिभावानां मध्ये ) **पूर्वभावस्य** प्रादुर्भावस्य[२]**आदि**मुपक्रमप्रभृत्यपवर्गपर्यन्त**माचष्टे**[३] ब्रवीति । अतएव हि पूर्वापरीभूतो भावशब्दवाच्यस्तावदेव हि जायत इत्युच्यते यावन्निष्ठान्तशब्दवाच्यो भवति जात इति । तस्यां चावस्थायां नासज्जायत इति न्यायेन विद्यमानमपि **अपरं भावम्**-( स्तिशब्दवाच्यम्- ) स्तित्वं **नाचष्टे**, तस्यापरिपूर्णत्वात् । अनवधृतरूपं हि तस्यामवस्थायां तद्भवत्यनुमानगम्यं किमपि जायत इति । **नापि प्रतिषेधति** अस्तित्वस्य प्रतिषेधं न करोतीत्यर्थः । यतो ह्यस्तित्वं प्रतिषेधघ्ननात्मक एव स्यात् कमात्मभ्य जायेत । तदवधारणकालस्योपस्थितत्वाच्च । एवमेवोत्तरत्रापि प्रपञ्चो द्रष्टव्यः । समासतस्तु वक्ष्यते ॥

**अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् ॥**

**अस्तीत्येष** शब्द **उत्पन्नस्य सत्त्वस्यावधारणं** तन्मात्रं ब्रवीति । न विपरिणाममाचष्टे, अपूर्णत्वात् । न तं प्रतिषेधति, उपस्थितत्वात् ॥

**विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् ॥**

**विपरिणमत** इत्येष शब्दोऽ**प्रच्यवमानस्य** तत्त्वादपभ्रश्यमानस्य **तत्त्वात्**तद्भावादस्तित्वात्पुरुषत्वाद्वा **विकारं** विक्रियामात्रं ब्रवीति । न वृद्धिमाचष्टे, अपूर्णत्वान्न च तां प्रतिषेधति, उपस्थितत्वात् ॥

**वर्धत इति स्वाङ्गाभ्युचयं सांयौगिकानां वार्थानाम् ॥**

**वर्धत** इत्येष शब्दः **स्वेषामङ्गानां** शिरोग्रीवाबाहूदरादीनामभ्युच्चयमभ्युचिततां ( संचयं ) ब्रवीति । **सांयौगिकानां** संयोगजनितानां वा **अर्थानां** हिरण्यधान्यादीनामभ्युच्चयं ब्रवीतीति पूर्वेणाभिसंबध्यतेऽर्थवशात् । तत्प्रयोगमाह[४]-

**वर्धते विजयेनेति वा वर्धते शरीरेणेति वा ॥**

अत्राद्यमवरोहणक्रमेण सांयौगिकेषूदाहरणं द्वितीयं स्वाङ्गाभ्युच्चये । अत्र वर्धत इति ब्रुवाणो नापक्षयमाचष्टेऽपूर्णत्वात् । नापि तं प्रतिषेधति उपस्थितत्वात् ॥

**अपक्षीयत इत्यनेनैव व्याख्यातः प्रतिलोमम् ॥**

यथैव हि स्वाङ्गैः सांयोगिकैर्वा द्रव्यैरुपचीयते तथैवापक्षीयते । इत्येवमुपचयप्रयोगः पूर्वनिर्दिष्टः स **अपक्षीयत इत्यनेनैव प्रतिलोमं** विपरीतं **व्याख्यातः** । भवति हि वृद्धेः प्रतिलोममपक्षयः । प्रतिगतं लोम प्रतिलोमम् । "अच्प्रत्यन्ववपूर्वात्सामलोम्नः" ( पा० ५-४-७५ ) इति समासान्तोऽच्प्रत्ययो "नस्तद्धिते" ( ६-४-१४४ ) इति टिलोपः ॥ तत्रापि नाचष्टे अपरभावं, न वा प्रतिषेधति ॥

**विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति ॥ ३ ॥ (२)**

विनाश एवात्रापरभावस्तस्यादिमुपक्रमप्रभृत्यपवर्गपर्यन्त**माचष्टे विनश्यतीति**[१] । तस्यां चावस्थायां विद्यमानमपि **पूर्वभावम**पक्षीयतेरर्थं **नाचष्टे न प्रतिषेधतीति** सर्वं निरवद्यम् ॥ ३ ॥ ( २ )

**अथ** इम एव भावविकाराः सन्ति किं वान्येऽपीत्यपेक्षायां चतुर्थं खण्डमारचयति—

**अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीतिह स्माह ॥**

**अतः** भावविकारषट्कात्**ऽन्ये**ऽन्यत्वेनाभिमता भावविकारा 'लक्ष्यन्त' इति शेषः । ते ( पृथक् पृथगत्यन्तभिन्ना अपि सन्तः ) **एतेषामेव विकारा भवन्ति** । तद्यथा जनिशब्दवाच्यो भावविकारोऽनेकप्रभेदभिन्नोऽनेकपर्यायशब्दवचनो; निष्पद्यतेऽभिव्यज्यते उत्तिष्ठतीत्येवमादि १ तथा अस्तिशब्दवाच्योऽनेकप्रभेदभिन्नोऽनेकपर्यायवचनश्च, अस्ति विद्यते भवतीत्येवमादि २ तथा विपरिणमतिशब्दवाच्यो विपरिणमते जीर्यति भावान्तरमापद्यते इत्येवमादि ३ तथा वर्धतेशब्दवाच्यो वर्धते पुष्यति उपचीयते इत्येवमादि ४ तथाऽपक्षीयतिशब्दवाच्यो ध्वस्यति भ्रश्यतीत्येवमादि ५ तथा विनश्यतिशब्दवाच्यो विनश्यति म्रियते विलीयत इत्येवमादि ६ **इतिह आहस्म** आचार्यो वार्ष्यायणिरिति पूर्वोक्तमभिसंबध्यते, "इतिह" इत्ययं निपातसमुदायः पुरातीतवृत्ताख्याने । "हशश्वतोर्लङ्च"-( पा० ३-२-११६ ) ति चाह्लिट् ॥

**ते यथावचनमभ्यूहितव्याः ॥**

**त** एते जन्यादिशब्दवाच्या विकारा वचनमनतिक्रम्य **यथावचनं**, ये यस्मिन्वचनेऽवस्थिताः सन्ति ते प्रकरणोपपत्तिभ्यां मन्त्रार्थावधारणंप्रति **अभ्यूहितव्या** अभितो वितर्क्याः 'प्रयुज्यमाना' इति वाक्यशेषः । तदेते सर्वे एव धातवो भाव-

---

१. पौर्वापर्यं हि देशकृतं कालकृतं च भवति । प्रकृते च कालकृतं, जनिशब्दवाच्यो भावविकारः पूर्वः । तस्मात्परकालोऽस्तिशब्दवाच्यः ॥

२. आदिमित्येतदुपलक्षणविधयाऽत्र व्याख्यायते ॥

३. आचष्ट इत्यनुवर्तते तदर्थनिर्देशश्चायमेवमुत्तरत्रापि बोध्यम् ॥

४. उपचयप्रयोगमाहेत्यर्थः ॥

१. स एव हि पूर्वापरीभूतो विनाशशब्दवाच्यः । तावदेव हि विनश्यतीत्युच्यते यावन्निष्ठान्तशब्दवाच्यो भवति विनष्ट इति ॥

२. नह्यनपक्षीयमाणो विनश्येदिति ॥

वचनात्तेषां सर्वेषामिहाध्ययने प्राप्ते शास्त्रातिगौरवभयादेतल्लक्षण-मुत्सृष्टम् ॥

## (अथोपसर्गनिरूपणम्)

तदेवं सानुषङ्गं नामाख्यातयोर्लक्षणमुक्तं, संप्रति प्रतिज्ञाप्रसक्त-मुपसर्गलक्षणमुच्यते । अत्र तावत्कश्चिच्छङ्कते–वक्ष्यति भवानु-पसर्गलक्षणमिदमेव तावदुच्यतां किमिम उपसर्गा नामाख्यातव-त्पदचतुष्टयान्निकृष्य (पृथक्कृत्य) बद्धाः सन्तोऽर्थानाहुरुतान्य-थेति । तत्रोत्तरमाह—

**न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः ॥**

उप–उपगृह्य (आख्यातं तस्यैवार्थविशेषं) सृजन्तीत्युप-सर्गाः प्रादयः । निर्–निष्कृष्य (नामाख्यातमध्यात्) बद्धाः पदवाक्यरूपेण रचिताः सन्तोऽर्थान्–निर्–निश्चयेन न आ-हुरिति शाकटायन 'आचार्यो मन्यते' इति वाक्यशेषः । शकटस्य गोत्रापत्यमित्यर्थे "नडादिभ्यः फक्" (पा० ४–१–९९) इति फक् फस्यायन् । कथं तर्हि तेषामर्थवत्तेत्युच्यते—

**नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भ-वन्ति ॥**

तुशब्दोऽवधारणार्थः । नामाख्यातयोरेव योऽर्थः कर्म क्रिया तत्रैव विशेषं कंचिदुपसंयुज्य तेनोपसंयोगेन तद्बलेनेति यावत् द्योतय–(न्ति व्यञ्जय–)न्तीत्युपसंयोगद्योतका भ-वन्ति न तु स्वातन्त्र्येण कमप्यर्थं वाच्यवृत्त्याऽभिदधति, तस्मादनर्थकाः पृथगवस्थिता उपसर्गा इति सिद्धम् ॥

अथ प्रकारान्तरेणानेकार्थत्वमेषामुपपादयति—

**उच्चावचाः पदार्था भवन्तीति गार्ग्यः ॥**

उच्चाश्चावचाश्चोच्चावचा नैकभेदा बहुप्रकारा इतियावत् । पदानामुपसर्गपदानामर्था भवन्ति वियुक्तानामपि नामा-ख्याताभ्यामिति गार्ग्य 'आचार्यो मन्यते' इति वाक्यशेषः । गर्गस्य गोत्रापत्यमित्यर्थे "गर्गादिभ्यो यञ्" (पा० ४–१–

---

१. इयमत्र शास्त्रे व्याख्याशैली द्रष्टव्या–उद्देशो–निर्देशः–प्रतिनिर्देश इति । तत्रोद्देशः सूत्रस्थानीयः । तद्यथा षड्भाव-विकारा इति । निर्देशो वृत्तिस्थानीयः । तद्यथा जायते अस्ति विपरिणमत इति । प्रतिनिर्देशो वार्तिकस्थानीयः । तद्यथा जायत इति पूर्वभावस्यादिमाचष्ट इति । एवं सर्वत्र यथासंभवं योज-नीयम् ॥

२. नाम्नस्तु—किंचिदवशिष्यते तदवसरप्राप्तमपि पदचतुष्ट-लक्षणप्रतिज्ञाव्याघातभयादत्र नोक्तम् । पदचतुष्टलक्षणानन्तरं चतुर्थेन पादेन "तत्र नामान्याख्यातजानीति शाकटायन" इत्यादिना तद्वक्ष्यते ॥

३. तथाचाहुर्नव्याः—जन्यबोधविषयीभूतक्रियाविशेषविषयक-तात्पर्यग्राहकत्वेसति प्रान्यतमत्वमुपसर्गत्वमिति । अत्र जन्ये-त्यादिपरिष्कृतौ मूलं तु-"उपसर्गाः क्रियये–" (पा० १–४–५९) ति वक्तव्ये योगग्रहणम् । इत्थं च "यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे"ति नियमः स निरूपकोपसर्गलक्षणफलभूत एव नान्यः ॥ अत्रोपोपसृष्टात्सृजतेः "पुंसि संज्ञायां घः प्रायेणे"ति (पा० ३–३–११८) कर्तरि घः । "चजो–" (पा० ७–३–५२) रिति कुत्वम् ॥

४. पदादपगतानां वर्णानामिव पृथग्विरचितानामेषां साक्षा-दर्थाभिधाने शक्तिर्नास्त्येव किंतु तद्युक्तानामेव । कथं तर्ह्येषां प्रातिपदिकत्वात्पदत्वादिकमिति चेत् । "कृत्तद्धितसमासाश्चे"–(पा० १–२–४६) ति चकारेणेति संगृहाण ॥

१. अत्र नामेति संपातायातमविवक्षितं नहि नाम्नोऽर्थः क्रिया । नापि च तद्युक्ताः (नामयुक्ताः) प्रादय उपसर्गा इत्यु-च्यन्ते । "उपसर्गाः क्रियायोग" इति पाणिनिसरणात् । उपसर्गा हि क्रियाङ्गत्वेन नामान्यास्कन्दन्तीति केचिदाहुस्तदपरे न क्षमन्ते । सन्त्येव हि क्रिया धातुजनामसु सिद्धावस्थापन्ना इति ॥

२. तदाश्रयमेव । यथा प्रदीपसंयोगे द्रव्यस्य गुणविशेषोऽभि-व्यज्यमानो द्रव्याश्रय एव भवति न प्रदीपाश्रयः । एवमिहापि बोध्यम् ॥

३. अत्रोपसंपूर्वाद्युज्यतेर्भावे घञ् । "चजो"–(पा० ७–३–५२) रिति कुत्वम् ॥

४. यद्यपि उदक् च अवाक् चोच्चावचमिति मयूरव्यंसकादि-त्वान्निपात्य नपुंसकनिर्देशेन व्याख्यातं सिद्धान्तकौमुद्यादौ । तथा-प्यर्थतस्तौल्यादुर्गाचार्येणेत्थमेव विगृहीतत्वादस्माभ्ध (विवृतेः) तदनुसारित्वात्तथैवात्र व्याख्यातम् । पुंस्त्वं तु विशेष्यनिघ्नत्वात्, तथाच "उच्चावचं नैकभेद" मिति विशेष्यनिघ्नवर्गे अमरः ॥

५. अयमर्थः । एषां (प्रादीनां) मध्ये एकैकोऽप्यनेकार्थः । यथा प्रः शक्तिवृत्तिशुध्यादिकृतीच्छासु पूजायामित्यादि । यच्चोक्तं वर्णवत्पृथगनर्थका उपसर्गा इति । तदयुक्तम् । यथाहि मृदोऽवयवेषु मृन्मयभाण्डारम्भशक्तिरस्त्येवैवं वर्णेष्वपि सामान्याभिधानशक्ति-रस्त्येव । सा तु पदत्वेन समुदितानामर्थविशेषेऽवतिष्ठते । यथा मृदोऽवयवानां घटे घटारम्भशक्तिरभिव्यज्यते । अन्यथा वर्णैरन-र्थकैरारभ्यमाणं पदमप्यनर्थकमेव स्यात् पदैश्च वाक्यं वाक्यैः शास्त्रमित्यर्थवन्तो वर्णाः ॥ यत्पुनरेतदुक्तं प्रदीपवदनर्थका उपसर्गा इति । अत्रोच्यते । प्रदीपोऽपि स्वेनार्थेन प्रकाशाख्येनार्थवानेव । सत्यपि चार्थवत्त्वे प्रकाश्यमर्थमाधारभूतं घटादिं प्रत्याययन्स्वां प्रकाशनशक्तिमभिव्यनक्ति । एवमुपसर्गा अर्थवन्तोऽपि सन्तः स्वार्थाभिधानशक्तिमनेकप्रकारां विद्यमानामपि स्वार्थाभिधान-शक्त्याधारभूते नामाख्याते प्रत्याय्याभिव्यञ्जयेयुः । नचैवं वाच्यं नामाख्यातयोरेवासावर्थ उपसर्गसंयोगे सत्युपजायत इति । नहि लोके यो यत्र समर्थो भवति स तत्रान्यमपेक्षते । नामाख्याते चार्थविशेषं प्रत्युपसर्गसंयोगमपेक्षेते । तस्मादुपपन्नमुपसर्गस्य क्रिया विशेषोऽर्थः । क्रियासामान्यमात्रं चाख्यातस्येति ॥

१०५ ) इति गोत्रे यञ् आदिवृद्धिः ॥

यदुक्तमनर्थकाः पृथगवस्थिता उपसर्गा इति तत्खण्डयति—

## तद्य एषु पदार्थः प्राहुरिमे तम् ॥

**तद्**ति प्रसिद्धार्थकमव्ययं **य एषु** उपसर्गेषु ( वाचकतासंबन्धेन ) विद्यमानः **पदार्थः** ( स्वकीयोऽनेकप्रकारकोऽर्थः ) **तमिमे** उपसर्गाः पृथगपि सन्तः **प्राहुर**भिदधत्येवेत्येतत्प्रसिद्धम् ॥

तं–कम्—

## नामाख्यातयोरर्थविकरणम् ॥ ४ ॥

**अर्थविकरणं**मर्थविक्रियामर्थभेदमिति यावत् । तस्मादर्थवन्त एव ते पृथगवस्थिता अपीति सिद्धम् ॥ ४ ॥

ननूच्यतां तर्हि क एषां मध्ये कस्मिन्नर्थविशेषे वर्तत इति तत्राह—

## आ इत्यर्वागर्थे ॥

तद्यथा आपर्वतादिति । अर्वा-( क्प्रा- ) गिति मैर्यादेह गम्यते । अत्रेदमवधेयम् । अनेकार्थत्वेऽपि सति उपसर्गाणामेकैकोऽर्थ उदाहरणत्वेनोच्यतेऽर्थवत्त्वप्रकाशनायेति ॥

## प्रपरेत्येतस्य प्रातिलोम्यम् ॥

**प्रपरे**त्ये**तौ** उपसर्गौ **एतस्यै**वाऽऽर्थस्यार्वागित्यस्य **प्रातिलोम्यं** विपरीतमर्थमाहतुः ॥ तद्यथा प्रगतः । परागतः । इति । उल्लङ्घ्य गत इत्यर्थः ॥

## अभीत्याभिमुख्यम् ॥

आह । तद्यथा अभिगत इति । आभिमुख्येन गत इत्यर्थः ॥

## प्रतीत्येतस्य प्रातिलोम्यम् ॥

**प्रति** इत्ययं **एतस्यै**वाभेः **प्रातिलोम्यं** विपरीतमर्थमाह । तद्यथा प्रतिगत इति । परावृत्य गत इत्यर्थः ॥

## अति सु इत्यभिपूजितार्थे ॥

वर्तेते ॥ तद्यथा अतिधनः सुब्राह्मण इति । अभिपूजितः प्रशस्तः ॥

## निर्दुरित्येतयोः प्रातिलोम्यम् ॥

तद्यथा निर्धनो दुर्ब्राह्मणः । इति ॥

## न्यवेति विनिग्रहार्थीयौ ॥

विनीति द्वन्द्वो विश्च निश्चेति, ततो ग्रहशब्देन षष्ठीतत्पुरुषे विनिग्रहौ तावर्थौ ययोस्तौ विनिग्रहार्थौ तावेव **विनिग्रहार्थीयौ** "गहादित्वात्" ( पा. ४।२।१३८ ) स्वार्थे छः । ग्रहशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमभिसंबन्धः । "द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसंबध्यते" इति न्यायात् । तथाच विग्रहार्थीयो निग्रहार्थीयश्चेति तदर्थः । तद्यथा निगृह्णातीति । अवगृह्णातीति । अत्रावरोहणक्रमेणार्थयोरुदाहरणम् । द्वयोः पदयोर्बहूनां वा पदानां विच्छेदेन ग्रहणमुच्चारणं विग्रहः । तयोरेवार्थविभागोपदर्शनार्थमवच्छेदेन ग्रहणमवग्रहः । तथाच विग्रहोऽवग्रह इत्यनर्थान्तरम् ॥

## उदित्येतयोः प्रातिलोम्यम् ॥

**उत्–इति** अयमेक एव शब्द **एतयोः** समीपतरवर्तिनोर्न्यवयोः **प्रातिलोम्य**माह । तद्यथा उद्गृह्णातीति ॥

## समित्येकीभावम् ॥

अनेकस्यैकभवनमे**कीभावः** । "अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः"– ( ५–४–५० ) रिति च्विः । "अस्य च्वौ"–( पा० ७–४–३२ ) वितीत्वम् । **तमाह** । तद्यथा संगृह्णाति इति ॥

## व्यपेत्येतस्य प्रातिलोम्यम् ॥

**वि–अप–**इत्येतौ **एतस्य** समित्यस्य **प्रातिलोम्यं** विग्रह–( मर्थ– ) माहतुः । तद्यथा–विगृह्णाति । अपगृह्णातीति ॥

## अन्विति सादृश्यापरभावम् ॥

**अनु–**इत्ययं **सादृश्यमपरभावं** पश्चाद्भवनं चाह । क्रमेण यथा अनुरूपमस्येदम् । अनुगच्छति । इति ॥

## अपीति संसर्गम् ॥

आह । संसर्गः संबन्धः । स च संबन्धिभेदाद्भिन्नो यथायोग्यमूह्यः । तद्यथा सर्पिषोऽपि स्यान्मधुनोऽपि स्यादिति । अत्र बिन्दुरित्यध्याहार्योऽपिशब्दबलात् । सर्पिषोऽपीत्युक्ते सर्पिषोऽवयवो बिन्दुरपि स्यादिति गम्यते । अतएव षष्ठी तद्योगे सर्पिष इति । अत्र संभावनायां लिङ् । तस्या एव विषयभू-

---

१. सावधारणं हि सर्वं वाक्यमामनन्ति, अब्भक्षो वायुभक्ष इत्युक्ते अप एव भक्षयति वायुमेव भक्षयतीति गम्यते ॥

२. अत्र निरनुबन्ध आङुदाहरणस्वरूपानुरूपो निर्दिष्टः । अर्थवत्त्वं हि लोकेऽर्थबोधजनकत्वं तन्निरनुबन्धस्यैवेति ॥

३. "मर्यादा धारणा स्थिति"रित्यमरः । "तेन विना मर्यादा तेन सहेत्यभिविधि"रिति प्राचामुक्तौ तेनेत्यवधिनिर्देशः ॥

४. प्रतिलोममेव प्रातिलोम्यं स्वार्थे ष्यञ् चतुर्वर्णादेराकृतिगणत्वात् ॥ तथाच वार्तिकं "चतुर्वर्णादीनां स्वार्थे उपसंख्यान" ( पा० ७–३–३१० ) मिति ॥

५. एतच्चोपसंहारवाक्यस्थेन विपरिणतवचनेन प्राहुरित्यनेनान्वयवशाद्बोध्यमेवमेवोत्तरत्रापि यथास्वमूह्यम् ॥

१. यथाचोक्तम्–

"इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् ॥

अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥" इति ॥

२. अतएवाविद्यमानप्रदार्थद्योतकस्यापि "रपिः पदार्थे–" ( पा० १–४–९६ ) त्यादिना कर्मप्रवचनीयत्वम् ॥

३. अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावे संबन्धे ॥

तेऽस्त्यर्थे भवने विन्दोः स्वकर्तृकदौर्लभ्यप्रयुक्तदौर्लभ्यवत्त्वं संबन्धोऽपिशब्दार्थः । तद्बोधकत्वादेवापेः "अपिः पदार्थे"–(पा० १-४-९६) त्यादिना कर्मप्रवचनीयसंज्ञा । अतएव षो–"पसर्गप्रादुर्भ्यामस्तिर्यच्पर" (पा० ८-३-८७) इति सस्य षो नेति बोध्यम् ॥

### उपेत्युपजनम् ॥

आह । तद्यथा–उपजायत इति । समुत्पद्यत इति तदर्थः ॥

### परीति सर्वतोभावम् ॥

आह । तद्यथा–परिधावति । सर्वतो धावतीत्यर्थः ॥

### अधीत्युपरिभावमैश्वर्यं वा ॥

आह । तद्यथा–"अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः" । लोकस्योपरि तिष्ठतीत्यर्थः । अत्र"धिशीङ्स्थासां कर्म–"(पा० १-४-४६) ति लोकस्य कर्मत्वम् ॥ ऐश्वर्यं स्वस्वामिभावसंबन्धः । तत्र यथा । अधिभुवि रामः । अधिरामे भूः । इति । अत्र"धिरीश्वर–" (पा० १-४-९७) इत्यधेः कर्मप्रवचनीयत्वे तद्योगे "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" (पा० २-३-९) इति स्वस्वामिभ्यां पर्यायेण सप्तमी । भुव ईश्वरो राम इत्यर्थः ॥

उपसंहरति–

### एवमुच्चावचानर्थान्प्राहुस्त उपेक्षितव्याः ५ (३)

इति श्रीमद्यास्कमुनिप्रणीतनि० शा० नैघ० का० प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥

१. कर्मप्रवचनीयानां हि क्रियानुयोगिकसंबन्धाभिधायित्वेनैव तत्त्वम् । कर्मक्रियां (तदनुयोगिकसंबन्धं) प्रोक्तवन्त इति कर्मप्रवचनीयाः । बाहुलकात्कर्तरिभूतेऽनीयर् ॥

२. कर्मप्रवचनीयत्वादेव । "आकडारादेका संज्ञे–" (पा० १-४-१) ति नियमेहि "या पराऽनवकाशा च"–त्युक्तेरत्र परया कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञायां बाधात् ॥

३. "कृत्तद्धितसमासैः संबन्धाभिधानं भावप्रत्ययेने"ति व्याकृतिविदां नियमात् "स्वेशभासे–" (पा० ३-२-१७५) ति वरजन्तादीश्वरशब्दाद्भावार्थकेन ष्यञेश्वरस्य स्वामिनः स्वेनसह संबन्धोऽर्थः प्रतीयते । सच प्रतियोगिवृत्तिधर्म एवेति प्राञ्चो न्यायविद आहुः । अनुयोगिवृत्तिधर्म एवेति नव्याः । वैयाकरणास्तु उभयमप्युररीकृत्य ब्रुवते 'स्वस्वामिभाव' इति । स्वस्वामिनोर्भाव इति द्वन्द्वान्ते श्रूयमाणस्य भावपदस्य प्रत्येकमभिसंबन्धात्स्वभावः (स्वत्वं) स्वामिभावः (स्वामित्वं) चेति तदर्थः ॥

४. सूत्रे यस्येति षष्ठ्या विनिगमनाविरहेण निरूपितत्वमाधेयत्वं वार्थः । यन्निरूपितं यन्निष्ठं वा ईश्वरवचनमैश्वर्यवचनम् । ईश्वरशब्दोऽत्र भावप्रधानः । संज्ञासूत्रेऽपि तथैव । तथाच वृत्तिकृत् 'स्वस्वामिभावसंबन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यादि'ति ॥

1. अन्यतरपक्षस्थापिका युक्तिर्विनिगमना । तस्या विरहोऽभावस्तेन ॥

एवममुना प्रकारेणोच्चावचाननेकविधानर्थानाहुस्त उपेक्षितव्याः उपेत्योपगम्यानुप्रवेश्य वा बुद्धिमीक्षितव्याः कः कस्मिन्नर्थे वर्तेत इत्येवं द्रष्टव्याः परीक्षया इत्यर्थः ॥ ५ ॥ (३)

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघण्टुककाण्डे प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥ * ॥

## अथ प्रथमाध्यायस्य द्वितीयः पादः ।

### (निपातलक्षणनिरूपणम्)

पूर्वं "नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ती–त्युपसर्गा" इत्युपसर्गलक्षणं सामान्यतो विशेषतश्च "आ इत्यर्वागर्थे" इत्यादिनोक्त्वाऽधुना सामान्यलक्षणानुषक्तं प्रतिज्ञाप्रसक्तमेव निपातलक्षणं वर्णयितुमुपक्रमते–

### अथ निपाताः ॥

निपातसामान्यलक्षणानुक्रमेऽयमथशब्दः ॥ मङ्गलप्रयोजनकश्चायमुपक्षिप्तोऽत्र द्वितीयपादादौ ॥ निपातशब्दं निर्ब्रवीति–

### उच्चावचेष्वर्थेषु निपतन्ति ॥

उच्चावचेष्वनेकप्रकारकेष्वर्थेषु निपतन्तीति निपाताः । ज्वलादित्वा"ज्ज्वलितिकसन्तेभ्यो ण" (पा० ३-१-१४०) इति कर्तरि णः । कतमे पुनस्त इत्याह–

### अप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः ॥

उपमैवार्थ उपमार्थस्तस्मिन्नेवमुत्तरत्रापि तत्स्वरूपमग्रे वक्ष्यति (तृ. खं. सूत्रे) कर्मशब्दो हि प्रायेणार्थपर्यायवचन एतस्मिञ्छास्त्रे "गतिकर्माण उत्तरे धातवः" (नि० ३-२-३) गत्यर्था इति गम्यते, तथा चार्थोपसंग्रहार्थः । पदमेव पूरयितव्यमर्थो येषां ते पदपूरणाः । इति त्रिधा ते अर्थभेदाद्भवन्ति । अपिरेको वाक्यालङ्कारे–

### तेषामेते चत्वार उपमार्थे भवन्ति ॥

तेषां सर्वेषां मध्ये एतएव चत्वारः "इव, न, चित्, नु" प्रायेणोपमार्थे भवन्ति ॥ तत्र तावत्–

### इवेति भाषायां चान्वध्यायं च ॥

उपमार्थे भवतीति विपरिणतवचनमनुवर्तते अर्थवशात् ।

१. "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभा"–विलभियुक्तोक्तेः माङ्गलिकौ मङ्गलप्रयोजनकावित्यर्थः । मृदङ्गादिध्वनिवदस्योच्चारणमात्रेण मङ्गलं नत्वयं मङ्गलार्थक एव । कोशेऽपि "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथे"त्युक्तौ मङ्गलार्थो विषयविधयैव निर्दिष्टः । अर्थतस्तु आरम्भानन्तरादिकमेव विषिणोत्ययमिति भावः ।

२. कस्मिंश्चिदेवार्थे यः प्रसिद्धो गुणस्तदन्यस्मिन्नप्रसिद्धस्तद्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य मीयते तद्गुणप्रकाशनं क्रियते सोपमा ॥

भाषायां लोके अन्वध्यायं छन्दसि च । उपगम्यातथा- गुणैर्मीयत इत्युपमा । "आतश्चोपसर्गे—" ( पा० ३-३-१०६ ) इति कर्मण्यङ् । अत्रोदाहरणमाह—

**अग्निरिवेन्द्र इवेति ॥**

अत्राद्या **अग्निरिवेति** त्रिष्टुप् तपसः पुत्रेण मन्युना दृष्टा श्येनादिषु निष्कैवल्ये शस्यते ( ऋ० सं० ८-३-१९-२ ) द्वितीया इन्द्र इवेति अनुष्टुप् । अनया च ध्रुव आङ्गिरसो राजानमभिषिषेचेति तेनेयं दृष्टा ( ऋ० सं० ८-८-३१-२ उदाहरणान्तरं ( लौकिकं ) लोके विदितमेवेति नाभिहितम् ॥ अग्निरिव तीक्ष्णः । इन्द्रइव विक्रान्तः । इत्यादि ॥

**नेति प्रतिषेधार्थीयो भाषायाम् ॥**

प्रसिद्धः । प्रतिषेधो निषेध इत्यनर्थान्तरं । सोऽर्थो यस्य स प्रति- षेधार्थः स एव प्रतिषेधार्थीयः "गहादित्वात्" ( पा० ४-२- १३८ ) स्वार्थे छस्येयादेशः । एवमग्रेऽप्यूह्यम् । यथा घटो नास्ति पटो नास्तीति । नशब्दोऽत्रास्तित्वं ( सत्तां+विद्यमानतां ) प्रतिषेधति ।

**उभयमन्वध्यायम् ॥**

प्रतिषेधार्थीय उपमार्थीयश्चेत्युभयमन्वध्यायं छन्दसि प्रसिद्धम् । आद्योदाहरणम्—

**"नेन्द्रं देवममंसते"ति ॥**

( ऋ० सं० ८-४-१-१ )

**इन्द्रं देवम्**आत्मनो दीपयितारं **नामंसत** नामन्यन्त आदित्यरश्मयः ॥

अथ किंलक्षणः प्रतिषेधार्थीयः किंलक्षणश्चोपमार्थीय इत्या- वेदयितुमाद्यस्य लक्षणमाह—

**प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत्प्रति- षेधति ॥**

यो हि **प्रतिषेधार्थीयो** भवति **तस्य पुरस्तात्**प्रथममु- **पचारः** प्रयोगो भवति कस्मात् **यत्प्रतिषेधति** तस्मादि- त्यर्थः ॥ द्वितीयोदाहरणमाह—

**"दुर्मदासो न सुरायामि"ति ॥**

( ऋ० सं० ५-७-१९-२ )

**"हृत्सु पीतासो युध्यन्ते"** इत्यादिरस्य । **"ऊधर्न नग्ना जरन्ते"** इत्यन्तः ॥ काण्वोमेधातिथिराङ्गिरसश्च प्रियमेध ऐन्द्रं सूक्तं ददृशाते । तत्रैषा गायत्री । अनुक्तविनियोगत्वाद्वाचःस्तोमे विनियुज्यते । अस्यार्थः । सोमा इत्यर्थवशात्कर्तृपदमाक्षिप्यते ।

ते **'पीतासः'** पीताः सन्तः "आज्जसेरसुक्" पा० ७- १-५० ) इत्यसुगागमः । **'हृत्सु'** हृदयेषु (अवस्थिताः सन्तो) **'युध्यन्ते'** संप्रहारमिव कुर्वन्ति । युध संप्रहारे ( दि० आ०) तङ् । तत्पानवशेन सोमपायिनोऽहमहमिकया ( अहं विशिष्ट २ इत्येवं ) स्पर्धमाना भवन्ति । क इव **'सुरायां'** ( पीतायां ) **'दुर्मदासो न'** कुत्सितमदा इव । अत्रापि पूर्ववदसुगागमः । किंच । ( आत्मलाभपरितुष्टाः सन्तस्तमेव यजमानं ) **'जरन्ते'**

---

१. कश्चिच्छन्दस्येव भवति, कश्चिद्भाषायामेव, कश्चिचोभय- त्रेति विभागेन प्रदर्श्यते । अधीयन्तेऽस्मिन्नित्यध्यायो वेदः । "अध्यायन्याये"त्यादिना ( पा. ४-३-१२२ ) घमन्तो निपा- त्यते ॥ मन्त्राः खल्वस्मिन्नधीयन्ते । तस्मिन्नितीत्यन्वध्यायं, विभ- क्त्यर्थेऽव्ययीभावः । चकार एको वाक्यालङ्कारे ॥

२. तथाच मन्युरेवास्या ऋषिरितीयं मान्यवी । ऋषयो मन्त्र- द्रष्टारो भवन्तीति वक्ष्यते ( नै० २-३-२ ) । यद्वा मन्युरिन्द्रो देवता अस्या इति मान्यवी । अथ ऋक् । **"अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि । हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व"** ॥ इति ॥ १ ॥ अस्या अर्थः—हे मन्यो इन्द्र ! । अन्यो वा कश्चन । हे सहुरे सहनशील ! ( एतस्मिन्प्रत्युपस्थिते शत्रूणामभिभवनकाले अस्माभिः ) हूतः आहूतः सन् नः अस्माकं सेनानीः सेनाप्रणेता एधि भव । ( ततश्च ) अग्निरिव त्विषितः दीप्तः (तेजसा ज्वलितः) सहस्व अभिभव तानस्मच्छत्रून् । किंच शत्रून् हत्वाय हत्वा "क्त्वो यगि" (पा. ७-१-४७) ति यगागमः । ( यत्तेषाम- स्मच्छत्रूणां ) वेदः धनम् ( तत् त्वमादाय ) विभजस्व प्रयच्छ । किंच ओजोमिमानोऽस्माकं बलं कुर्वन् मृधः संग्रामकारिणः शत्रून् विनुदस्व घातयेति ॥

३. अथ ऋक् । **"इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥"** इति ॥ २ ॥ अस्या अर्थः । हे राजन्, इहास्मिन्नेव राज्ये एधि स्वामित्वेन सर्वदा वर्तमानो भव । माचातस्त्वमपच्योष्ठा अपच्यु- तोभूर्मापगमः । पर्वतइव । यथा पर्वतो नैश्चल्येनावतिष्ठते एवम् । अविचाचलिः । चलनरहितो भव । इन्द्रइव । यथा स्वर्गे इन्द्र एवमिह लोके त्वं ध्रुवः शाश्वतस्तिष्ठ स्थितो भव । राष्ट्रमु राष्ट्रं चेह लोके धारय स्वेस्वे कर्मण्यवस्थापयेति ॥

१. अयमर्थो दुर्गोक्तिमनुसृत्य व्याख्यातः सायणभाष्ये त्वन्यथा व्याख्यानमस्य । तत्र तावदियमृक् ॥ **"वि हि सोतोर- सृक्षत नेन्द्रं देवममंसत । यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः"** ॥ १ ॥ इति ॥ इयमिन्द्र- वागितीन्द्रोऽस्या ऋषिः ॥ इन्द्रो वदति । सोतोः सोमाभिषवं कर्तुं तुमुन्नर्थेऽत्र तोसुन् ( पा. ३-४-१६ ) बाहुलकात् । व्यसृक्षत यागंप्रति मया विसृष्टा अनुज्ञाताः स्तोतारो वृषाकपेर्यष्टारः । हीति पूरणः । तत्र देवं द्योतमानमिन्द्रं मां नामंसत । मया प्रेरिताः सन्तोऽपि ते स्तोतारो न स्तुतवन्तः किंतु मम पुत्रं वृषाकपिमेव स्तुतवन्तः । तत्र येषु पुष्टेषु सोमेन प्रवृद्धेषु यागेषु अर्यः स्वामी वृषाकपिर्मम पुत्रो मत्सखा मम सखिभूतः सन् अमदत् सोमपानेन हृष्टोऽभूत् । यद्यप्येवं तथापीन्द्रोऽहं विश्वस्मात्सर्वस्माज्जगत उत्तर उत्कृष्टतर इति ॥

२. तथाचाह भगवान्दुर्गः । येषामपि विनियोगः क्वचिदन्यत्र नास्ति तेऽपि वाचःस्तोमे विनियुज्यन्ते ॥ इति ।

स्तुवन्ति। नै० धातुः । कथम् । 'नम्नाः' ( भूत्वा स्त्रियं संप्रयोक्ष्यामह इत्येवमभिप्रायाः ) 'ऊधर्न' ऊध इव रात्रिं यथा ॥ सायणस्तु हे इन्द्र, त्वया पीताः सोमास्त्वां मादयितुं हृत्सु त्वदीयेषु युध्यन्ते परस्परं संप्रहारं कुर्वते । अत्र दृष्टान्तः "दुर्म० याम्" सुरायां पीतायां जायमाना दुष्टमदा यथा पातारं मादयन्ति तद्वत् । अपि च नम्राः स्तोतारस्ते च ऊधर्न पयसा पूर्णं गवादेरूध इव सोमपूर्णं त्वां जरन्ते स्तुवन्तीत्येवं व्याख्यत् ॥

द्वितीयस्य लक्षणमाह—

**उपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते ॥ १ ॥**

येनार्थेन उपमेयमर्थमुपमिमीते स उपमार्थ एव **उपमार्थीयस्तस्य । उपरिष्टादुपरि** । शेषं पूर्ववदूह्यम् ॥ १ ॥

**चिदित्येषोऽनेककर्मा ॥**

कर्मशब्दोऽर्थपर्यायवचनः । अनेकार्थोऽपि सन्नुपमार्थीयसंयोगादत्रोदाहृतः । कथमनेकार्थं ? इति तमेवार्थविशेषमुदाहरणद्वारा दर्शयति—

**आचार्यश्चिदिदं ब्रूयादिति पूजायाम् ॥**

आचार्य एवं ब्रूयात्कोऽन्य एवं वक्ष्यति । उदाहरणप्रसक्तमाचार्यपदं निर्वक्ति—

**आचार्य आचारं ग्राहयति—आचिनोत्यर्थान् आचिनोति बुद्धिमिति वा ॥**

आङ्पूर्वाच्चरतेरन्तर्भावितण्यर्थाद्बाहुलकात्कर्तरि "ऋहलोर्ण्यदि"—( पा० ३-१-१२४ )ति ण्यत् । उपधावृद्धिराद्यकल्पे । कल्पान्तरे त्वौणादिको ण्यद्वृद्धिर्धातोरन्त्यस्यात्वमुगागमश्चेति साधनप्रक्रियोह्या ॥

**दधिचिदित्युपमार्थे ॥**

अत्रौदन इति वाक्यशेषः । दधितुल्यस्तद्रूप इत्यर्थः ॥

**कुल्माषाँश्चिदाहरेत्यवकुत्सिते ॥**

**अवकुत्सिते** भृशं कुत्सिते । **कुल्माषानपि तावदाहरेति** किं वाऽन्यदाहरिष्यसि ॥ कुल्माषपदं निर्ब्रवीति—

**कुल्माषाः कुलेषु सीदन्ति ॥**

**कुलेषु** सजातीयान्नसङ्घेषु **सीदन्ति** भ्रष्टा भवन्ति । "पृषोदरादित्वा"—( पा० ६—३—१९१ ) त्साधुरयम् ॥

**नु इत्येषोऽनेककर्मा ॥**

**अनेककर्मा** अनेकार्थः । तद्यथा—

**इदं नु करिष्यतीति हेत्वपदेशे ॥**

**हेत्वपदेशे** हेतुव्यवहारे ॥ हेतुर्द्विविधः कारको ज्ञापकश्च तत्रान्त्योऽत्र, यत इदं करिष्यतीत्यर्थः ॥

**कथं नु करिष्यतीत्यनुपृष्टे ॥**

**अनुपृष्टे**—कथं करिष्यतीति पृष्ट्वा करिष्यतीत्युक्ते यत्पुनरनुपृच्छति तत्र । अत्रैवोदाहरणान्तरमाह—

**न न्वेतदकार्षीदिति च ॥**

अयं नु एतन्नाकार्षीत् ? ( त्वमुक्तवानसि अयमेतत्कृतवान्स्यादिति ? )

**अथाप्युपमार्थे भवति ॥**

तद्यथा—( उत्तरेण ) ॥ २ ॥

**"वृक्षस्य नु ते पुरुहूत वयाः" ॥**

( ऋ० सं० ४-६-१७-३ )

"व्यू३ तयो रुरुहुरिन्द्रपूर्वीः" । इत्यर्धर्चं त्रिष्टुभः । अनेन हि भारद्वाजो बार्हस्पत्य इन्द्रं तुष्टाव । तेनेयं दृष्टा । हे **'पुरुहूत !'** बहुभिराहूत ! **'इन्द्र !' 'ते'** त्वदीयाः **'पूर्वीः'** पूर्वकालभवाः पूर्वैः कृता वा **'ऊतयो'**ऽवनानि रक्षाः "अव् रक्षणे" ( भ्वा० प० ) अवतेः क्तिनि "ज्वरत्वरे"—( पा० ३-४-२० )...

---

१. तथाच मनुः । "उपनीय तु यः शिष्यं वेदमध्यापयेद्गुरुः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इति । अन्यत्रापि । "आम्नायतत्त्वविज्ञानाच्चराचरसमानतः । यमादियोगसिद्धत्वादाचार्य इति कथ्यते" इत्येवंलक्षणलक्षितो मतप्रस्थापकोऽप्याचार्यः । सहि जनानां बुद्धिमाचिनोत्यनुकृष्यैकत्र लगयतीति आचार्य इत्युच्यते ॥

२. कोलन्ति इति कुलानि "कुल संस्त्याने बन्धुषु चे"ति भौवादिकात्कुल्धातोर्मूलविभुजादित्वात्कः । तेषु सजातीयान्नसंघेषु मष्यन्ते हता भवन्ती—( तिज्वलादित्वाण्णः ) ( पा.३।१।१४० )—त्यर्थतो निर्वक्ति सीदन्तीति । अर्धस्विन्ना हि यवचणकादयः कुल्माषाः । तथाचोक्तम् "अर्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः । कुल्माषा इति कथ्यन्त" इति । "सहि कुल्माषान्खादन्तं भिक्षत" इति निन्दार्थवादश्रुतिरपि । अतः कुल्माषा निकृष्टतमा अन्नेषु प्रोच्यन्ते ॥

१. तथाचामरः "नु पृच्छायां विकल्पे चे"—ति । पृच्छा—पृष्टं प्रश्न इत्यनर्थान्तरम् ॥

२. "नन्वोर्विभाषे"—(पा.३—२—१२१) ति वा लुङ् । नायं ननुशब्दस्तथा सति "ननौ पृष्टप्रतिवचन" (पा.३—२—२०) इति लडेव स्यात् ।

३. पुरुशब्दोऽयं बहुनामसु निघण्टौ ( ३ अ० १ खण्ड० ) पठितः । लोकेऽपि "पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि चे"—त्यमरः ॥

४. पूर्वस्मिन्काले भवाः पूर्वीः "भवे छन्दसी"—( पा. ४—४—११० ) ति यत् । यद्वा "पूर्वैः कृतमिनयौ चे"—(पा.४—४—१३३) ति यः । पिप्पल्यादेराकृतिगणत्वान्ङीष् "यस्येति चे"—( पा.६—४—१४८ ) त्यल्लोपे "हलस्तद्धितस्ये"—(पा. ६—४—१५०) ति यलोपः । "दीर्घाज्जसि च" "वाच्छन्दसी"—( पा. ६—१—१०६ ) ति पूर्वसवर्णदीर्घः ॥

६-४-२० )त्युपधावकारयोरूठ् । 'विरुरुहुः' । विशेषेण रोहन्तिस । तत्र दृष्टान्तः "वृक्ष० याः" अस्यार्थमाह—

**वृक्षस्येव ते पुरुहूत शाखाः ॥**

यथा वृक्षस्य शाखा विरोहन्ति तद्वत् ॥

**वयाः शाखाः ॥**

इति पर्यायवचनः । निगमप्रसक्तवयाशब्दं निर्वक्ति—

**वेतेर्वातायना भवन्ति ॥**

वेतेः वीगतादिव्याप्त्यादिकाद्वीधातोः कर्तरि "नन्दिग्रहिपचादिभ्य" (पा० ३-१-१३४) इत्यच्प्रत्ययः । वियन्ति चलन्तीति वयाः । वातेन हि ताः समन्ततोऽयन्त इति वातायनाः । अयते"र्नन्द्यादित्वाल्ल्युः" (पा० ३।१।१३४)॥ पर्यायप्रसक्तं शाखाशब्दं निर्वक्ति—

**शाखा खशयाः ॥**

खे आकाशे शेरत इति खशयाः । "पृषोदरादित्वा–" (पा० ६।३।१९१) त्साधुः । प्रकारान्तरेण निर्वक्ति—

**शक्नोतेर्वा ॥**

औणादिको णः कर्तरि । कस्य खः ॥ इति व्याख्याता उपमार्थीयाः ॥ * ॥

अथ प्रतिज्ञाप्रसक्तानर्थोपसंग्रहार्थानाह—

**अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते नत्वौदेशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहः ॥**

**यस्या**श्रूयमाणस्यैव निपातस्या**गमा**द्ध्याहारा-( त् सरूपविरूपैकशेषा-) **द**र्थतो वा **पृथक्त्वमह** पृथक्त्वमेव **विज्ञायते** । तद्यथा देवदत्तयज्ञदत्तौ । देवदत्त यज्ञदत्तश्चेति गम्यते । द्वावप्यत्र देवदत्तयज्ञदत्तौ श्रूयेते **नतु** तयो**रौद्दे**शि**क**मुद्देशकृत**मिव** ( पृथक्त्वं ) यथा—गाम् अश्वं पुरुषं पशुमिति प्रत्येकमुद्दिश्यमानानां, कुतः **विग्रहेण पृथक्त्वात्** द्वयोर्बहूनां वार्थानां विविच्य ( विभिद्य नानाकृत्वा वा ) ग्रहणं ज्ञानं विग्रहस्तेन पृथक्त्वात्पृथग्भावात् । इत्थं च यस्मात्स द्वावर्थौ बहून्वा गृहीत्वा एकस्मिन्समसनकर्मणि उपसंगृह्णात्युपसमावेष्यति तस्मादयं **कर्मोपसंग्रह** इत्युच्यते । गृह्णातेरत्र पचाद्यजन्तस्य कर्मशब्देन "सप्तमी" ( पा० २।१।४० ) ति योगविभागाच्छौ-ण्डादेराकृतिगणत्वाद्वा समासः । अथवा बृहस्पतिश्चेत्युक्ते प्रजापतिरनुक्तोऽपि द्वितीयो गम्यते प्रजापतिरपीति ॥

कतमः पुनरसावित्यपेक्षायामाह—

**चेति समुच्चयार्थ उभाभ्यां संप्रयुज्यते ॥**

च इत्ययमेव कदाचित्समुच्चयार्थः सन् उभाभ्यामर्थाभ्यां विगृहीताभ्यामेव सं-संयुक्तः प्रयुज्यते । तद्यथा—

**"अहं च त्वं च वृत्रहन्" इति ॥**

( ऋ० सं० ६-४-२३-११ )

**एतस्मिन्नेवार्थे "देवेभ्यश्च पितृभ्य आ" इत्याकारः ॥**

अथाकार **एतस्मिन्नेव** समुच्चयार्थे वर्तते । तद्यथा—**देवेभ्यश्च पितृभ्यआ**–इति । (ऋ० सं० ७-६-२२-१)

**वेति विचारणार्थे ॥**

**वेत्ययं विचारणार्थे** वर्तते । तद्यथा—

**"हन्ताहं पृथिवीमिमां निदधानी हवे हवा"–इति ॥**

( ऋ० सं० ८-६-२७-३ )

ऐन्द्रो लवस्तस्येयमार्षम् गायत्री । "कुविस्सोमस्यापामिति"

---

१. अर्थेन पृथक्त्वमिति "कर्तृकरणे कृता बहुलमि"–( पा. २-१-३२ ) ति बाहुलकात्समासः । आद्यादित्वात्सार्वविभक्तिकस्तसिः ॥ अस्योदाहरणं व्याख्यान्तेऽथवेत्यादिनात्रैव द्रष्टव्यम् ॥

२. देवदत्तयज्ञदत्ताविति समासे ।

३. उद्देशो नाम्नैव वस्तुकीर्तनम् । तेन कृतमित्यर्थे ठञ्विहितोऽपि उद्दिश्यतेऽस्मिन्निति उद्देश इत्यधिकरणसाधनस्योद्देशशब्दस्य कालवचनत्वाभिधाना "त्कालाट्ठञ्" ( पा. ४-३-५ ) इति भवार्थे यद्वा कालादित्यधिकृत्य "तेन निर्वृत्त"–( पा. ६-१-७९ ) मिति ठञ् । निर्वृत्तं कृतं संपादितमित्यनर्थान्तरम् ॥

१. "अहं च त्वं च वृत्रहन्त्संयुज्याव सनिभ्य आ । अरातीवाचिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः" ॥१॥ घोरपुत्रः प्रगाथोऽनया ऐन्द्र्या पङ्क्त्या इन्द्रस्य सख्यार्थीसन्नब्रवीत् । हेवृत्रहन् इन्द्र! अहं च त्वं च संयुज्याव संगतौ भवाव । कियदवधि इत्युच्यते । सनिभ्य आ! आप्राप्तेः । सनिशब्दोऽयं "सनिस्त्वध्येषणे"–त्यमरेण गुर्वादेः क्वचिदर्थे प्रार्थनया नियोजनरूपायामध्येषणायामुक्तोऽपीह ( वेदे ) दाने प्रयुज्यते । तद्यथा वाजोऽन्नं स सनिर्दानमस्येति वाजसनिरिति ॥ दानेन च तत्पूर्विका प्राप्तिर्लक्ष्यते । यावता कालेन धनानि लभ्यन्ते तावत्कालम् । हे अद्रिवः वज्रवन्निन्द्र! हे शूर! नौ सङ्गतयोश्चावयोर्दाने अरातीवा चित् अदानशीलोऽपि जनः (दानशीलतामुपेत्य) अनुमंसते अनुमतिं करिष्यत्येव, भद्रा भन्दनीयाः सुखप्रदाः कल्याणप्रदा वा इन्द्रस्य रातयः दानानि 'इति मन्यमान' इति शेषः । "भदि कल्याणे सुखे च" (भ्वा० आ०) तस्मादौणादिको रक् नलोपश्च ॥

२. "योऽग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः । प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्युआ" ॥ १ ॥ अनुष्टुप् । आग्नी । पितृयज्ञे विनियुक्ता । योऽग्निः कव्यस्य पित्र्यस्य हविषो वोढा प्रापकः । यस्यायमधिकारः कव्यानि वोढव्यानीति स ( इहास्माकं पितृयज्ञे होतृत्वेन स्थितः) ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वृधः वर्धयितॄन् पितॄन्यक्षत् पूजयतु । यजेर्लेटि सिपि अडागमः । "लेटोऽडाटा"–(पा.३-४-९४ ) विति । किंच हव्यानि प्रवोचति प्रब्रवीतु ( एतान्यस्मत्प्रदत्तानि ) इदू पादपूरणौ ॥ केभ्यः ? देवेभ्यश्च पितृभ्यश्चेति मन्त्रार्थः । वोचती ति लोडर्थे लेट् ( पा. ३-४-८ )

  

त्यस्यास्तृतीयः पादः । अर्थश्च । '**हन्ते**'ति हर्षे । "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो"रित्यमरः । इदानीमेवा-'**हमिमां**' पृथिवी'**मिह वा**' अन्तरिक्षलोके '**इह वा**' द्युलोके । अथवा इह दक्षिणे स्कन्धे इह वा सव्ये स्कन्धे '**निदधानि**' अवस्थापयानि इति हस्तेन निर्दिशति । दधातेर्लोटि उत्तमपुरुषैकवचने मेर्निः । अत्र हेतुं वदति-'**कुविदि**'त्यादि । '**इति**'शब्दो हेतौ । यस्मात् '**कुविद्ध**'हुवारं '**सोमस्य**' सोम'**मपां**' पीतवानस्मि । अस्य मे सोमपानस्यानुरूपमेव वीर्यमस्तीत्यभिप्रायः । अत्र "क्रियया यमभिप्रैति स संप्रदानमि-( वा० )"ति सोमस्य संप्रदानसंज्ञायां "चतुर्थ्यर्थे बहुलं छन्दसी"-( पा० २-३-६२ ) ति षष्ठी । अपामिति "पा पाने" लुङि "गातिस्थे"-(पा० २-४-७७) ति सिचो लुक् ॥

## अथापि समुच्चयार्थे भवति ॥ (४)

वेतीत्यनुवर्तते । उदाहरणम्—

### "वायुर्वा त्वामनुर्वा त्वा"-इति ॥

( य० सं० ९-७ ) ॥ ३ ॥

अनुष्टुबेषा वाजपेये अश्वयोजने विनियुक्ता । "**गन्धर्वाः सप्तविंशतिः** । ते अग्रे अश्वमयुञ्जँस्तेऽस्मिन्जवमादधुः" ॥ इत्यस्याः शेषः । वाशब्दश्चार्थे । हे अश्व ! '**वायु**'श्च '**त्वा**' त्वां'**मनु**'श्च '**त्वा**'-त्वां एते '**सप्तविंशतिः**' '**गन्धर्वा**'श्च त्वा'**मस्मि**'न्नथे युञ्जन्ति । ते हि विदुर्यथा त्वं योक्तव्यः '**त**' एव च '**अग्रे**'पूर्वम् '**ऽश्वम्**' '**अयुञ्जन्**' युक्तवन्तो देवानामृषीणां च '**त**' एव च '**अस्मिञ्जवमादधुः**' आहितवन्तो यस्मादतो ब्रवीमि ममापि चाश्वे ! तमिममश्वं त एव युञ्जन्तु जवं चास्मिन्नादधत्विति भगवान्दुर्गो व्याख्यातवानिमाम् ॥ ३ ॥

## अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते ॥

**अह इति ह इति च** द्वावप्येतौ **विनिग्रहार्थीयौ** । विनिग्रहो नाम विभागेनावस्थितयोर्देवदत्तयोरेकस्मिन्देवदत्तेऽमिमतरसगोपायनस्य नियमेन ग्रहणं तदर्थौ विनिग्रहार्थः । विनिग्रहार्थं एव विनिग्रहार्थीयः । स्वार्थे छ इति दुर्गः । तयोः पुनरेतत्प्रयोगस्वाभाव्यं यद्द्वयोरर्थयोर्युगपत्प्रकृतयोर्मध्ये **पूर्वेण** पूर्ववाक्यगतेनार्थेन **सं**-संयुक्तौ **प्रयुज्येते** ।

१. सायणस्तु हन्तेति संभावनायामनुज्ञायां वा संभावयाम्येतदनुजानामि वा । किं तत् अहमिमामित्येवं व्याचख्यौ ॥

२. माध्यन्दिनीये तु । "वातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः । ते अग्रे अश्वमयुञ्जँस्ते अस्मिञ्जवमादधुः" ॥ ७ ॥ इत्युष्णिक्पठ्यतेऽश्वदैवत्या ॥ तदर्थश्च-वातो वायुश्च मन इन्द्रियं च सप्तविंशतिर्नक्षत्राणि गन्धर्वा गोर्भूमेर्धर्तारः । ते वातादयोऽग्रे पूर्वमश्वमयुञ्जन्नथे योजितवन्तः । तेच वातादयोऽस्मिन्नश्वे जवं वेगमादधुः स्थापितवन्तः । इति ॥

३. स अर्थो यस्येति बहुव्रीहिरत्र ॥

४. युगपदित्येककालेऽव्ययम् ॥



तद्यथा—

### अयमहेदं करोत्वयमिदम् ॥

अयमह देवदत्तो गाः पाययतु । अयं यज्ञदत्तो भुङ्क्तामिति ॥

अथ-हकारस्योदाहरणम्—

### इदं ह करिष्यति, इदं न करिष्यतीति ॥

यज्ञदत्त इदं ह इदमेव करिष्यति सामग्रीसंवननम् । इदं न करिष्यति ओदनं न पक्ष्यतीति ॥

## अथाप्युकार एतस्मिन्नेवार्थ उत्तरेण ॥

**एतस्मिन्** विनिग्रहार्थे **एव** भवति । स पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संप्रयुज्यत इति पूर्वतनवाक्यात्परिणतवचनमनुवर्तते । अर्थः प्राग्वत् । तद्यथा—

### मृषेमे वदन्ति सत्यमु ते वदन्ति । इति ॥

इमे वृषलाः मृषा मिथ्या वदन्ति । ते ब्राह्मणाः सत्यमु सत्यमेव वदन्ति । इति ॥

## अथापि पदपूरणः ॥

अथाप्युकारः **पदपूरणः** । पदं चरणमेव पूरयितव्यमस्येति पदपूरणः । "पूरी आप्यायने" ( चु० प० ) नन्द्यादित्वात् ( पा० ३-१-१३४ ) ल्युः ।

### इदमु+तदु ॥

१. अयं देवदत्त एव गाः पाययत्वित्यर्थः ॥

२. "इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् । नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ १ ॥" अस्या अर्थः । इदमु पुरतो दृश्यमानमिदम् । (उकारः पदपूरणः) त्यत्तत् अस्माभिः स्तुतं सर्वप्रसिद्धं ज्योतिस्तेजः पुरुतममत्यन्तप्रभूतम् । कुतो यतो वयुनावत् ज्ञानवत् । वयुनशब्दः प्रज्ञानामसु निघण्टौ (३-९) निर्दिष्टः । ततो मतुपि "मतौ बह्वचोऽनजिरादीनामि"-(पा. ६-३-११९) ति दीर्घः । तमसस्तमोऽभिभूय "ल्यब्लोपे कर्मणीति" (वा०) पञ्चमी । पुरस्तात्प्राच्यां दिशि अस्थात् उदतिष्ठत् । एवं सति नूनं निश्चयेनैता उषसो दिवोऽन्तरिक्षदेवताया आदित्यस्य दुहितरो विभातीर्विशेषेण भानं कुर्वतीः "दीर्घाज्जसिच-वाछन्दसी"-(पा. ६-१-१०६) ति पूर्वसवर्णदीर्घः । जनाय जनानां "चतुर्थ्यर्थे बहुलं छन्दसी"-( पा. २-३-६२ ) ति बहुलग्रहणात्षष्ठ्यर्थे चतुर्थी । गातुं गमनम् । "गाङ् गतौ" (भ्वा० आ०) "कमि-मनि-जनि-गा-भा-याहिभ्यश्च" (उ० १-७०) इति भावे तुन् । ( गमनादिव्यापारसामर्थ्यं ) कृणवन्नकुर्वन् । इत्येकस्या एवादरार्थे बहुवचनम् ॥

३. "तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः । उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्यः १ चतस्रः ॥ १ ॥" अस्या अर्थः । दस्मस्य दर्शनीयस्यास्येन्द्रस्य तत्कर्म ( उः पादपूरणः ) प्रयक्षतमं प्रकर्षेण पूज्यतमम् । "यक्ष पूजायां"

1. गुणगतं बहुत्वं तस्यामारोप्य बहुवचनम् । अतएव एकस्मिन्नपि गुरवः समागता इत्यादयः प्रयोगाः सङ्गच्छन्ते ॥

द्वे अपीमे ऋचौ क्रमेण ( ऋ० सं० ३-८-१-१ )। ( १-५-२-१ ) पठ्येते । त्रिष्टुभौ । अनयोराद्यया वामदेवो गौतम उषसं तुष्टाव । अन्यया तु गौतमो नोधाश्चेन्द्रमस्तौत् ॥

## हीत्येषोऽनेककर्मा ॥

अनेककर्मा अनेकार्थः । तद्यथा—

## इदं हि करिष्यतीति हेत्वपदेशे ॥

हेतोः कारकस्य ज्ञापकस्य वा अपदेशो व्यवहारस्तस्मिन् । हि यत इदं करिष्यति अत इति वाक्यार्थः । तथा चामरोऽपि "हि हेतावधारणे" इति ।

## कथं हि करिष्यतीत्यनुपृष्टे ॥

अनुपृष्टं व्याख्यातपूर्वम् ( पृ० १५ ) ॥

## कथं हि व्याकरिष्यतीत्यसूयायाम् ॥

अमर्षादसाक्षाच्छब्दपूर्वकोऽभिप्रायः परिवादो वाऽत्रासूया ॥ कथमयमकृतप्रयत्नः व्याकरिष्यति नास्य सामर्थ्यमित्यभिप्रायः ॥

## किलेति विद्याप्रकर्षे एवं किलेति ॥

**विद्याया** विज्ञानस्य **प्रकर्षे** अतिशये । अन्यतो विद्यामुपश्रुत्यातिशयेनावधार्य अन्यस्मै कस्मैचिदाचष्टे **एवं किलै**तदासीद्युद्धमित्येवम् । अत्र प्रवक्तुर्विज्ञानातिशयो गम्यते ॥

(भ्वा० प०) कर्मणि घञ् "हलश्च"—(३-३-१२१) ति । यक्ष्यते पूज्यते इति यक्षः पूज्योऽतिशयेन यक्षो यक्षतमस्ततः प्रादिसमासः । "दसि दर्शन-दंशनयोः" (चु० आ०) दंस्यते कर्तव्यतया दृश्यत इति दंसः कर्तव्यं कर्म (निघ० २-१) चारुतममतिशयेन शोभनमस्ति । किं तत् । यदयमिन्द्र उपह्वरे उपह्वर्तव्ये (गन्तव्ये) पृथिव्याः संबन्धिनि समीपदेशे । "रहोऽन्तिकमुपह्वरे" इत्यमरः । उपरा दिशः (नि० १-६) अपिन्वत् । "पिवि सेचने" (भ्वा० प०) लङ् । यद्वा उपरा उस्रा मेघपूरिता वेति दुर्गः । मधु मधुरम् अर्णः जलं यासु ता मध्वर्णसो मधुरोदकाश्चतस्रो नद्यः प्रधानभूता गङ्गादिनदीः अपिन्वत् अपातयत् अक्षारयत् वर्षद्वारेण च यज्ञादि प्रावर्तयदिति दुर्गः । तदेतत्कर्मान्येन कर्तुमशक्यत्वात्पूज्यतममिति ॥

१. अन्यत्र तु गुणेष्वपि दोषारोपोऽसूया । तथाचामरः "असूया तु दोषारोपो गुणेष्वपी" ति ॥ परिवादो विद्यमानदोषकथनम् । अविद्यमानदोषकथनं तु निन्देति निन्दापरीवादयोर्भेदो "गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यत" इति वदता मनुना दर्शितः । परीवाद इति "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ( पा. ६-३-१२२ ) वा दीर्घः ॥

1. यद्वा उपह्वरन्ति गच्छन्त्यस्मिन्निति इत्युपह्वरो भूप्रदेशः "पुंसि संज्ञायां घः प्रायेण"-(पा० ३।३।११८) लधिकरणे घः गुणः । दुर्गस्तु—उपह्वानमर्हन्ति यस्मिन्देशेऽवस्थिताः सहायाः स उपह्वरो देशः । जनैरनाकीर्णो वा यस्मिन्नेकाकीति व्याचख्यौ ॥

## अथापि न नन्विति एताभ्यां संप्रयुज्यतेऽनुपृष्टे ॥

किलेतीति संबध्यते । **संयुक्तः प्रयुज्यते** संप्रयुज्यते । अन्यस्मात्कंचिदर्थं नायमेवमित्येवमुपश्रुत्य तमेवार्थमन्यमनुपृच्छति । अथेतरमश्रद्दधत्पूर्वस्य—

## न किलैवं ननु किलैवम् ॥

इति ॥

## मेति प्रतिषेधे ॥

मेत्ययं प्रतिषेधेऽर्थे वर्तते । तद्यथा—

## माकार्षीर्माहार्षीरिति च ॥

अत्र "न माङ्योग" ( पा० ६-४-७४ ) इत्यडभावः । विध्यर्थे ( आज्ञायां ) लुङ् । "माङि लुङ्" (पा० ३-३-१७५) इति हि सर्वलकारापवादः ॥

## खल्विति च ॥

प्रतिषेधार्थीय एव । तद्यथा—

## खलु कृत्वा खलु कृतम् ॥

**खलु कृत्वा**—अकृत्वा—न कर्तव्यमिति वार्थः । **खलु कृतं**—न कृतमित्यर्थः ।

## अथापि पदपूरणः ॥

**अथापि** खल्वित्ययं **पदपूरणः** पादपूरणेऽर्थे वर्तते । तद्यथा—

## एवं खलु तद्बभूव इति ॥

वेदे, लोकेऽपि 'निर्धारितेऽर्थे लेख्येन खलु कृत्वा खलु वाचिकमि'ति । लेख्येन लेखितव्येन पत्रेणार्थे निर्धारिते निर्धार्य बोधिते वाचिकं संदेशवाचमुक्त्वा खलु, न वक्तव्यमित्यर्थः । अत्रैकः खलुशब्दः प्रतिषेधार्थीयोऽपरः पादपूरणः ॥

## शश्वदिति विचिकित्सार्थीयो भाषायाम् ॥

विचिकित्सा नाम विवेकपूर्वकः प्रश्नस्तत्पूर्वकमवधारणं वाऽऽत्मप्रश्ने इति केचित् । विपूर्वकात् "कित निवासे" ( भ्वा०प० ) "गुप्तिज्किद्भ्यः सन्" –( पा० ३-१-५ ) ति सन् । सच "कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये चे" ति (वा०) संशयेऽर्थे भवति । सन्नन्तात् "अप्रत्ययादि"-(पा० ३-३-१०२) तिस्त्रियामप्रत्ययष्टाप् ॥ तथाचामरोऽपि "विचिकित्सा तु संशय" इति । विचिकित्साऽर्थो यस्य स विचिकित्सार्थः स एव **विचिकित्सार्थीयः** । स्वार्थे छः (पा. ४-२-१३८) । स **भाषायां** लोके भवति । छन्दसि पुनरन्येष्वर्थेषु भवतीत्याह—

१. यथाहुर्नाट्यप्रदीपकाराः—"श्लोकपादः पदं केचित्सुप्तिङन्तमथापरे । परेवान्तरवाक्यैकस्वरूपं पदमूचिरे" इति ॥

२. तथाच मेदिनी—"शश्वत्स्यादात्मप्रश्ने च मङ्गले । पुराकल्पे सदार्थे च पुनरर्थे च दृश्यत" इति ॥

( इयमत्रास्यार्थवशास्स्थितिशैली द्रष्टव्या यदस्य शश्वच्छब्दस्य ) एवंशब्दस्य पुरस्तात्प्रयोगो भवत्युपरिष्टाद्वा । तद्यथा— )

**शश्वदेवमित्यनुपृष्टे । एवं शश्वदित्यस्वयं पृष्टे ॥**

'अर्थे वर्तते' इति वाक्यशेषः । **अस्वयं पृष्टे** स्वयमात्मनाऽपृष्टे ॥

**नूनमिति विचिकित्सार्थीयो भाषायाम् ॥**

स्पष्टम्—

**उभयमन्वध्यायम् ॥**

अन्वध्यायं छन्दसि पुनरयमुभयमाह । उभयार्थं इति यावत् । तमेवार्थद्वयमाह—

**विचिकित्सार्थीयश्च पदपूरणश्च ॥**

**इति ।**

अत्रोदाहरणमुत्तरखण्डसूत्रेण तृतीयपादादिगतेन निर्विवक्षुर्निदानं तस्य तावदाह—

**अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्रदित्सांचकार स इन्द्र एत्य परिदेवयांचक्रे ॥४॥(५)**

इति० या० मु० प्र० नि० शा० नैघ० का० प्र० ध्या० द्वि० पादः ॥ १ ॥ २ ॥ * ॥

अगः कुम्भस्तत्र स्त्यानः संहत इत्यगस्त्यः कुम्भसंभवो मुनिः । "अगस्त्यः कुम्भसंभव" इत्यमरः । स इन्द्रायेन्द्रदेवतायै हविर्हवनीयं घृतादि निरुप्य समुद्यम्य मरुद्भ्यस्तन्नामिकाभ्यो देवताभ्यः संप्रदित्सां संप्रदातुमिच्छां चकार कृतवान् स इन्द्र एत्यागत्य परिदेवयांचक्रे मन्युपूर्वकं विलापं कृतवान् ॥ ४ ॥ * ॥ **इति श्रीमद्यास्कमुनिप्रणीतनि० विवृतौ नैघ० काण्डे प्र० द्वि० पादः ॥ १ ॥ २ ॥ * ॥**

---

## अथ प्रथमाध्यायस्य तृतीयः पादः ।

**"न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।**
**अन्यस्य चित्तमभिसंचरेण्यमुताधीतं विनश्यति ॥"**

( ऋ० सं० २-४-१० )

परिदेवनप्रकारं प्रतिपादयन्नुक्तश्रुतिमर्थतो व्याचष्टे—

**न नूनमस्त्यद्यतनम् । नो एव श्वस्तनम् ॥**

इन्द्रो वदति विचार्यमेतन्ममैतत्तावत् यदद्यतनं हविर्मम नास्तीति । प्रतिषेधेसति प्रतिषेध्येनावश्यंभाव्यमित्यद्यतनशब्दोऽध्याहृत आचार्येण । उत्तरवाक्ये श्व इति दर्शनात् । अथापि स्यात् श्वस्तनं भविष्यतीति ? नो श्वः उशब्दोऽवधारणार्थः ( न उ श्वः ) श्वःशब्दो वृत्तिविषये श्वोभवं श्वस्तनमाह । "अमानोनाः प्रतिषेध" इति स्मृतेर्नशब्दोऽत्र नोशब्देन व्याख्यातः पर्यायवचनत्वात्तथाचायमर्थो नोएव श्वस्तनं श्वस्तनमपि नैवास्तीति । अत्र हेतुं चतुर्थपादेनाह–उतेति । उत, अपि, अथे, तिशब्दा वेदे समानार्थाः । ( मया ममेदमिति ) आधीतमाध्यातमभिप्रेतं यद्वाऽधीतमस्मदर्थं निरूपितं भृशमुद्धृष्टं वा विनश्यति अन्यसात्करणेनादर्शनमुपैति । तर्हि श्वस्तनमस्माकं भविष्यतीति कुत एतदिति समस्तार्थः । ( पादद्वयार्थं मूल एव वक्ष्यति ) ॥

अथैकपदनिरुक्तम् ।—

**अद्यासिन्द्यवि ॥ द्युरित्यह्नो नामधेयम् । द्योतत इति सतः ॥**

**द्योतते** रविकिरणसंबन्धादित्यर्थे "द्युत दीप्तौ" (भ्वा० आ० ) अस्मा"द्रुमेर्डो"–( उ० २-६४ ) इति बाहुलकात्कर्तरि डोप्रत्ययः । डित्वाट्टिलोपः । स चायं कर्तरि विहित इत्याह— **सत** इति । कर्तृकारकैकस्येत्यर्थः । अत्रास्तेः शतरि षष्ठ्येकवचने "श्नसो–" ( पा. ६-४-१११ )रित्यल्लोपे सत्शब्दः सिध्यति । इत्थं च द्योशब्दो दिनपर्यायवचनो यस्य सप्तम्येकवचने द्यवीत्युक्तमधस्तात् । **अस्मिन्द्यवि** ( अह्नि ) इत्यर्थे "सद्यःपरुत्परारि"–( पा० ५-३-२२ ) त्यादिना अद्यशब्दो निपातितः । **द्युरित्यह्नो नामधेयमिति** तु द्योशब्दपर्याय विवक्षयाभिहितम् । "द्यु अभिगमने" ( अ० प० ) "द्युगमिभ्यां डोरि"ति भोजोक्तेर्डोप्रत्यये द्योशब्दः । अस्मादेव ( द्यु धातोः ) डिद्वेत्यधिकारे "द्युद्रुभ्यां चेति" भोजसूत्रेण उप्रत्यये द्युशब्दः । अभिगच्छन्त्यस्मिन्स्वंस्वमभिमतप्रदेशं प्राणिन इति द्यौर्द्युर्वा । द्युतेरेव वा "अश्वादयश्च" ( उ० ५-३० ) इति डुन्प्रत्ययान्तो निपातितो द्रष्टव्यः । अस्मिन्पक्षे द्योतत इति सत इति द्युशब्दस्यैव व्युत्पादनम् । सच उक्तविधया द्योशब्दसमानार्थतया निर्दिष्टः । अतएवाहर्नामसु (नि० १-९) द्यौःशब्दसाधने केचिद्द्युरिति पठन्तीति देवराजयज्वनिर्वचनं संगच्छते ॥ निगमश्च "द्युभिरक्तुभिः परिपातमस्मान्" ( ऋ० सं० १-७-३७-५ ) इत्यादिः ॥

**श्व उपाशंसनीयः कालः ॥**

---

१. निदानं त्वादिकारणम् । तस्य—उदाहरिष्यमाणमन्त्रस्य । तावदादौ ॥ अयमर्थः । निदानवतां मन्त्राणां निदानमेव पूर्वं वक्तव्यम् । तेनोच्यमानोऽर्थोऽतितरां प्रकाशते । ततः पदानि । ततोऽर्थः । ततः प्रत्येकं विग्रहेण निर्वचनमेव हि व्याख्याक्रमोऽत्र शास्त्र इति ॥

२. परिदेवनं नाम मन्युपूर्वको विलापः । तथाचामरः "विलापः परिदेवनमि"ति ॥

१. एते च मन्त्रैकदेशा एव सन्तोऽध्याहार्या भवन्ति । पदातिरेकादध्ययनकाले नाधीयन्ते । ते त्वर्थनिर्वचनकाले प्रकाशयितव्याः ॥

२. अन्यसै प्रदानेन । "विभाषा साति कार्त्स्न्ये" इत्यनुवृत्तौ "तदधीनवचने" ( पा. ५-४-५४ ) इति सातिप्रत्ययः ।

३. "भाववचनानामिति" ( पा. २-३-५४ ) वत्प्रकृतार्थोऽत्र सच्छब्देऽविवक्षितः । तथाच दुर्गः । द्योतत इति कर्तृकारकं सदिति यत्र ब्रूयात्तत्रोच्चारित एव कारकनियमो द्रष्टव्योऽन्यत्र यथेष्टं योज्यमिति ॥

उपगम्य अभिप्रायविषयीकृत्य सचेतसा ( प्राणिना ) **आशंसनीय** आशंस्त्वयो भवत्यनागतत्वादित्युपाशंसनीयः **कालः श्व** इत्युच्यते ॥

**ह्यो हीनः कालः ॥**

अतिक्रान्तो हि स भवति । अयं च श्वःसंबन्धादुक्तोऽप्यत्र निरुक्तोऽर्थवशात् ॥

इदानीमुपक्रान्तमन्त्रस्य द्वितीयपादमनूद्य व्याचष्टे—

**"कस्तद्वेद यदद्भुतं—" कस्तद्वेद यदभूतम् ॥**

**को** हि नाम **तद्वेद** जानाति **यदभूत**मनुत्पन्नं कस्य भविष्यति मम वाऽन्यस्य वेति । भूधातुरत्रोत्पत्तावभिहितो 'यागात्स्वर्गो भवती'त्यत्र यथा । शब्दसारूप्यप्रसङ्गेन निर्वक्ति—

**इदमपीतरदद्भुतमभूतमिव ॥**

लोके **इदमपि इतर**द्यत्किंचिच्छोणितवर्षादि **तदभूतमिव** कादाचित्कत्वात् ॥

उक्तस्यैव तृतीयपादमनूद्य व्याचष्टे—

**"अन्यस्य चित्तमभिसंचरेण्यम्" अभिसंचारि॥**

कस्मात्पुनर्न ज्ञायते मम नैव भविष्यतीत्याह—**अन्यस्येति।** अवरोहणक्रमेणोपस्थितमभिसंचरेण्यपदं निर्ब्रवीति—**अभिसंचारि** अभितः संचरणशीलम् । अभिसंपूर्वाच्चरतेर्गत्यर्थात्ताच्छील्ये कर्तरि एण्यप्रत्ययः । अन्यशब्दं निर्वक्ति—

**अन्यो नानेयः ॥**

नाना( नानात्वेन व्यवस्थितस्यासत्कुलजस्या ) पत्यं नानेयः । अव्ययस्याबन्तप्रतिरूपकत्वा–( दावन्तसमानानुपूर्वीकत्वा– )दावन्तत्वनिबन्धनं "स्त्रीभ्यो ढगि–" ( पा. ४–१–१२० )ति ढक् भवति । क्लायामित्यत्र याज्ञ्यथा । यद्वा न सतामानेयो नानेयः ॥ चित्तपदं निर्ब्रूते—

**चित्तं चेततेः ॥**

चेतत्यनेनार्थानिति **चित्तम्** । "चिती संज्ञाने" ( भ्वा० प० ) "अञ्जिघृसिभ्यः" ( उ० ३–८६ ) इति बाहुलकात् क्तः । आधीतशब्दनिर्विवक्षया तुरीयं पादमनुब्रूते—

**"उताधीतं विनश्यती"ति । आध्यातमभिप्रेतम् ॥**

**आध्यात**मित्याधीतशब्दार्थः । "ध्यायतेः संप्रसारणं च" ( वा० ) इति क्विपि विहितं संप्रसारणमिह क्तेऽपि भवति बाहुलका"द्बहुलं छन्दसी"ति । अत्र"संयोगादेरातोधातो–"(पा. ८–२–४३) रिति विहितं नत्वं "नध्याख्ये" (पा. ८–२–५७)ति निषेधान्न भवति ॥ **अभिप्रेत**मिति पर्यायवचनम् । आङ्पूर्वको ध्यायतिरुत्कण्ठापूर्वकस्मृतौ वर्तते । स्मृतिश्चिन्तनम् । "चिति स्मृत्याम्" ( चु० प० ) । उताप्यर्थे ॥

**अथापि पदपूरणः ॥ १ ॥ (६)**

**अथा**प्ययमस्मिन्मन्त्रे **पदपूरणः** । पदं पादएव पूरयितव्योऽस्य भवतीत्ययं पदपूरणः "ल्युः" (पा. ३–१–१३४) ॥१॥

तद्यथा—

**"नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ॥ शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ ६ ॥"**

( ऋ. सं. २–६–६ ) गृत्समदस्येदमार्षं त्रिष्टुप् । अत्र नूनमिति पादपूरण एवेति सेत्यारभ्य व्याचष्टेऽर्थतः—

**सा ते प्रतिदुग्धां वरं जरित्रे ॥**

हे **'इन्द्र', 'सा ते'** तव **'दक्षिणा'** ( या पुत्रभावके कर्मणि ऋत्विग्भ्यो देया ) **'मघोनी'** मघवती हिरण्यधान्यादिधनेन संयुक्ता ( तद्वती ) सती **'जरित्रे'** स्तुवते यजमानाय **'वरं'** श्रेष्ठमभिमतमर्थं **'प्रतिदुहीयत्'** प्रतिदुग्धाम् "छन्दसि परेऽपि" "व्यवहिताश्च" ( पा० १–४–८२ ) ति प्रतेर्व्यवहितस्यापि प्रयोगः । किंच **'स्तोतृभ्यो'**ऽस्मभ्यं "कामान्" इति शेषः । **'शिक्षा'** प्रयच्छ । "शिक्षतिर्दानकर्मा पठित" इति स्कन्दस्वामिभाष्यम् । लोट् प्रार्थनायाम् । आ इत्ययं प्र इत्यस्यार्थे । निपातानां नानार्थत्वात् । प्रदेहि । किंच **'मातिधक्'** मास्मानतिहाया ( तीत्या– ) न्येभ्यो देहि ( अस्मानतिक्रम्यान्येभ्यो मा दाः ) प्रथममस्मभ्यं दत्वा ततोऽन्येभ्योऽपि दीयताम् । दहेर्दानार्थस्य लुङि "मन्त्रे घसे–" ( पा० २–४–८० ) ति च्लेर्लुक् । किंच **'भगो'** धनं **'नो'**ऽस्माक"मस्तु" इति शेषः । येन **'विदथे'** यज्ञे ( स्वेगृहे ) **'बृह'**न्महदूर्जितं **'वदेम'** ब्रवाम दीयतां भुज्यतामिति । किंच ( तवानुग्रहात् ) **'सुवीराः'**

---

१. अयं–नूनमित्येष शब्दः ।

१. प्रतिपूरयतु ददात्विति यावत् । दक्षिणागुणकाङ्क्षि कर्मणः फलप्राप्तिरिति दक्षिणायामेव फलदातृत्वमुपचर्यते । सायणस्तु प्रतिदुहीयत्संपादयति तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्षा प्रयच्छ । किंच भगो भजनीयस्त्वं मातिधक् । यद्वा नोऽस्माकं कामान्माधाक्षीः । अपेक्षितफलदानेन पूरयेत्यर्थः । सुवीराः शोभनपुत्रपौत्राः सन्तो वयं विदथेऽस्मिन्यज्ञे बृहत्प्रभूतं स्तोत्रं वदेम त्वामुद्दिश्य ब्रवाम इत्येवं व्याख्यत् । शेषं समानम् ॥

२. "ते प्राग्धातोः" (पा. १–४–८०) इति हि लौकिको नियमः । ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्या इति हि तदर्थः ॥

३. भस्मीकरणार्थस्यापि धातूनामर्थनिर्देशस्योपलक्षणत्वादत्र दाने वृत्तिः । एवमुत्तरत्रापि बोध्यम् ॥

४. विदथशब्दो यज्ञवचनश्छन्दसि । "विद ज्ञाने" (अ० प०) "विद विचारणे" ( रु० आ० ) "विदॢ लाभे" (तु० उ०) "विद् सत्तायाम्" ( दि० आ० ) "रुदिविदिभ्यां ङित्" ( उ० ३–११३ ) इति अथप्रत्ययः सच ङित् ङित्वाद्गुणाभावः । ज्ञायते हि यज्ञः । लभते हि दक्षिणादिरत्र । विचार्यते हि विद्वद्भिः । भावयत्यनेन फलम् ॥

५. यदा स्वे गृहे यज्ञः करिष्यते तदा तत्र ।

वीरवन्तः ( पुत्रवन्तः ) यद्यपुत्राः । मत्वर्थीयः सुः पुरस्तात्प्रयुक्तश्छान्दसः । अथ पुत्रवन्तस्तदा शोभनवीराः सुपुत्रा 'भवेम' इतिशेषः ॥ वीरशब्दश्छन्दसि पुत्रपर्यायवचन इह निरुक्तः ॥ ६ ॥

अथैकपदनिरुक्तम्—

**वरो वरयितव्यो भवति ॥**

व्रियते ह्यसाविति **वरः** । "वृञ् वरणे" ( क्र्या. उ. ) "ऋदोरप्" ( पा० ३-३-५७ ) इत्यप् प्रत्ययः कर्मणि कृत्यार्थे बाहुलकात् । तदाह **वरयितव्यो भवतीति** ।

जरितृशब्दं निर्वक्ति—

**जरिता गरिता ॥**

स्तुत्यर्थस्य जॄधातोः ( भ्वा. प. ) तृचि रूपम् । **गरितेति** पर्यायवचनः । गृणातिरर्चतिकर्मा ( निघ. ३-१४ ) अर्चापि स्तुत्यादिरूपैव ॥

मघोनीशब्दं निर्ब्रूते—

**दक्षिणा मघोनी मघवती ॥**

अत्र **दक्षिणा मघोनी**ति प्रतीकम् । **मघवतीति** मघोनीत्यस्य पर्यायः ।

तदर्थं व्युत्पादयति—

**मघमिति धननामधेयम् ॥**

तदस्यामस्तीति विग्रहे "तदस्यास्त्यस्मिन्निति" ( पा० ५-२-९४ ) ति मतुप् "मादुपधायाः" ( पा० ८-२-९ ) इति मस्य वः ॥

मघशब्दं निर्वक्ति—

**मंहतेर्दानकर्मणः ॥**

मंहतिर्दानकर्मा ( निघ. ३-२०-१० ) "घञर्थे कविधानम्" ( पा० ३-३-५८ वा० ) इत्यत्र परिगणनस्य प्रायिकलात्कर्मणि कप्रत्यये पृषोदरादित्वान्नलोपो हस्य घश्च भवति ॥ मह्यते दीयते इति मघं धनम् ॥ अथ सिंहावलोकितकेन प्रतीकोपात्तं दक्षिणाशब्दं निर्ब्रवीति—

**दक्षिणा दक्षतेः समर्धयति कर्मणः व्यृद्धं समर्धयतीति ॥**

समर्धयत्यर्थकस्य दक्षतेः "दक्ष वृद्धौ शीघ्रार्थे च" ( भ्वा. आ. ) ति धातोरौणादिक इनन् ( २५१ ) । एतदेव विवृणोति—**व्यृद्धं समर्धयतीति** । यज्ञे हि यत्किंचिद्विगतर्द्धिकं ( न्यूनं ) भवति तदियं ( दक्षिणा ) समर्धयति विवर्ध्य पूरयति विशिष्टं यज्ञस्य साधनमेतद्दितीयं दक्षिणेत्युच्यते ॥ प्रकारान्तरेण निर्वक्ति—

**अपि वा प्रदक्षिणागमनात् ॥**

दक्षिणाशब्दोऽत्र "दक्षिणादाच्" ( पा. ५-३-३६ ) इत्याजन्तोऽव्ययम् । प्रत्ययविधानकाले प्रेत्युपसर्गस्य पृथक्कृतिरार्षविज्ञानबलात् । अर्थकाले तूपसृजत्येव । तथाच गृहीतदक्षिणस्यर्त्विजोऽदूरेणाग्निं प्रदक्षिणेन गमनादियं दक्षिणा । अपीत्यथेत्यस्यार्थे ॥

अथवा दक्षिणाम्—

**दिशमभिप्रेत्य ॥**

सा हि दक्षिणस्यां वेदिश्रोणौ—अग्रेण गार्हपत्यम्, जघनेन सदः, दक्षिणेनाग्नीध्रीयं गत्वा अन्तर्वेदि स्थित्वा अन्तरेण चात्वालोत्करौ, तमाग्नीध्रं चोत्सृज्यमाना—गच्छतीति—

१. सं—सम्यक् अर्धयति वर्धयति, "ऋधु वृद्धौ" ( भ्वा० प० ) इत्थंच वृद्ध्यर्थस्य समर्धयत्यर्थकत्वं युज्यत एव ॥

२. "उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभागि"ति विधेयप्राधान्यात्स्त्रीलिङ्गनिर्देशो न कृतः ॥

१. यतो ह्ययमुपसर्गः । निरुक्तमेतत् ( उपसर्गपदम् ) अधस्तात् ॥ ( ११ पृ. ६ पं. )

२. "एनबन्यतरस्यामदूरेऽपञ्चम्याः" ( पा. ५-३-३५ ) इत्यतोऽदूरेऽपञ्चम्या इत्यनुवर्त्य विहितो ह्याच् पञ्चमीं विहाय यथासंभवं तृतीयासप्तम्याद्यन्ताद्दक्षिणशब्दाद्भवतीत्येवं विगृहीतमत्र ॥ अग्निमित्यत्र "एनपा द्वितीये" ( पा. २-३-३१ )ति द्वितीया॰। अग्नेरिति तदर्थः ॥

३. सेत्येतस्या गतिक्रियायाः कर्तृपदम् । ऋत्विग्द्वारकमेव हि तस्यागमनमुपपद्यत इति गच्छन्तीति पाठो मुद्रितपुस्तकेषु दुर्गभाष्ये । स च प्रामादिकस्तत्कर्तृऋत्विजोऽनुपादानादुपात्तस्य सेति कर्तृपदस्य क्रियाकाङ्क्षाऽनिवृत्तेश्च, अयं च दुर्गभाष्यानुवादः । अस्यायमर्थः । हि यतः सा दक्षिणोत्सृज्यमाना यजमानेनोत्सृष्टा सती दक्षिणस्यां दिशि वेद्याः श्रोणौ गच्छतीति दक्षिणेत्युच्यते । कथं ( केन प्रदेशेन ) गच्छतीत्याह—अग्रेणेत्यादि । गृहपतिर्यजमानस्तेन संयुक्तो गार्हपत्योऽग्निः "गृहपतिना संयुक्ते ञ्यः" ( पा. ४-४-९० ) इति ञ्यः प्रत्ययः । "तमग्रेण गत्वा ( पूज्यपूजकयोर्मध्ये प्राचीति व्यपदेशात्प्रत्यङ्मुखस्याग्नेः संमुखीनस्य प्राङ्मुखस्य यजमानस्य च मध्येनोत्तरपूर्वक्रमेणर्त्विग्गच्छतीति ) सदः सदस्यस्थानं तद् जघनेन मध्यप्रदेशेन, अवच्छेदकत्वं तृतीयार्थः । "प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् । अवच्छेदकताबुद्धिप्रकारत्वादिशंसती"'ति हर्युक्तेः । अग्निमिन्धे दीपयतीत्यग्नीत् ब्रह्मा "ञिइन्धी दीप्तौ" ( रु० आ० ) क्विप् । तस्य स्थानमाग्नीध्रम् । "अग्नीधः शरणे रण् भं च" ( वा० ) इति रण् णित्वादादिवृद्धिः । भत्वाज्जश्त्वाभावः । आग्नीध्रमेवाग्नीध्रीयम् स्वार्थे छः । तद्दक्षिणेनादूरे तस्य दक्षिणस्यां दिशि "एनबन्यतरस्यामदूरेऽपञ्चम्याः" ( पा० ५-३-३५ ) इति एनप् । "एनपा द्वितीये" ( पा. २-३-३१ ) ति द्वितीया । अन्तर्वेदि वेद्या मध्ये स्थित्वा । अन्तरेणेत्येतद्विनार्थकम् । चत्वालो गर्तविशेषः । उत्करो

1. तथाच तस्याग्रेण सदसो मध्येनेति फलितोऽर्थः । अग्रावच्छेदेन गार्हपत्यं, मध्यावच्छेदेन सद इत्यक्षरार्थः । उपपदविभक्तीनां सम्बन्धोऽर्थः । षष्ठ्यपवादत्वात् । "उत्सर्गसमानदेशा ह्यपवादा भवन्ती"ति महाभाष्यकृतः प्राहुः ॥

**दिक् ॥**

पुनर्दक्षिणा । अत्र निदानमाह—

**हस्तप्रकृतिः ॥**

हस्तः प्रकृतिः कारणं नामनिदानं यस्याः सा । तथाच "प्राङ्मुखस्य प्रजापतेर्दक्षिणो हस्तो बभूव सा दक्षिणा दिगभवद्" त्याम्नायते । अथ—

**दक्षिणो हस्तः ॥**

कस्मात्पुनर्दक्षिणः ? इत्यनुयुक्तः प्राह—

**दक्षतेरुत्साहकर्मणः ॥**

उत्साहार्थस्य दक्षधातोरुक्तदिशा सिद्धिः । स यथोत्साहवान्भवति कर्मसु न तथा सव्यः ॥

**दाशतेर्वा स्याद्दानकर्मणः ॥**

दानकर्मणः दानार्थस्य । "दाश्ट दाने" ( भ्वा. उ. ) दाश्यतेऽनेनेति दक्षिणः । पृषोदरादिः ॥ तेनैव हि प्रायेण दीयते ॥ हस्तशब्दं निर्वचनप्रसक्तं निर्ब्रवीति—

**हस्तो हन्तेः ॥**

हन्त्यनेनेति हस्तः । पृषोदरादिः । तेन हि हन्यते । यद्यप्यन्येनापि हन्यते पादादिना, तथापि यो हन्तव्यो भवति तस्य—

**प्राशुर्हनने ॥**

हननेऽयमेव प्राशुः शीघ्रः झटिति समुद्यच्छमानो भवति ॥ तदेतन्निगमस्थं दक्षिणा मघोनीति प्रतीकमुपादाय व्याख्यातमिदानीं "शिक्षास्तोतृभ्य" इति तदुत्तरं वाक्यं व्याचष्टे—

**देहि स्तोतृभ्यः कामान् ॥**

इति । एवमुत्तरोत्तरम् । मातिधगिति व्याचष्टे—

**मास्मानति दंहीः ॥**

अस्मानतिहायातिक्रम्य ( अन्येभ्यो ) मा दंहीर्मा देहि । दहिरत्र दानार्थ इति विवरीतुमाह—

**मास्मानतिहाय दाः ॥**

अस्मानतिहायातिक्रम्य मा दाः मा देहि । "माङि लुङ्" ( पा० ३–३–१०५ ) सर्वलकारापवाद इति लोडर्थेऽत्र । "न माङ्योगे" ( पा० ६–४–९७ ) इत्यडभावः ॥

रक्षादिकूटः । "उत्करः कूटमस्त्रिया-" मित्यमरः । तावन्तरेण तौ विना ( तौ परिहृत्य ) "अन्तरान्तरेण युक्ते" ( पा० २–३–४ ) इति द्वितीया । "पृथग्विनान्तरेणर्ते" इत्यमरः । तमाग्नीध्रं चेति पृथग्वाक्यम्, तमाग्नीध्रं ब्रह्माणं (तात्स्थ्यात्ताच्छब्द्यमिति न्यायात्) च गच्छतीति दक्षिणेत्यपि द्रष्टव्यम् ॥

१. अनुयुक्तः पृष्टः । "प्रश्नोऽनुयोगः पृच्छा चे"त्यमरः ॥

२. शीघ्रार्थे ह्ययं पठितः । यो ह्युत्सहते स एव शीघ्रं कर्म कर्तुं प्रभवति । इति शीघ्रार्थस्याप्यत्रोत्साहार्थे वृत्तिः ॥

**भगो नो अस्तु बृहद्वदेम ॥**

इत्येतन्निगदव्याख्यातम् ( पृ० २० ) । विदथे इति निगमस्थपदमर्थतोऽनुवदति—

**स्वे वेदने ॥**

स्वे–स्वीये ( आत्मीये ) वेदने विन्दते लभते सुखमस्मिन्निति वेदनं गृहम् । "विद्लृ लाभे" ( तु. उ. ) "करणाधिकरणयोश्च" ( पा० ३–३–११७ ) इति ल्युट् ॥

सिंहावलोकितकेन निगमप्रसक्तं भगपदं निर्ब्रवीति—

**भगो भजतेः ॥**

भगशब्दः पुल्लिङ्गो धनवचनः । भज्यते सेव्यते भोगार्थिभिः । यद्वा भज्यते सेव्यतेऽनेन हेतुना तद्वान् ( धनवान् ) "भज सेवायाम्" ( भ्वा. उ. ) "पुंसि संज्ञाया–" ( पा० ३–३–११८ ) मिति घः । "चजो" ( पा० ७–३–५२ ) रिति जस्य गः ।

बृहत्पदं व्याचष्टे—

**बृहदिति महतो नामधेयम् ॥**

नामधेयं नामैव भवति । "वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च–" ( उ. २–७७ ) ति निपातावेतौ ॥ "भागरूपनामभ्यो धेयः" (वा० ) इति स्वार्थे धेयप्रत्ययः ॥

कुत एतत् ? इति महतो नामधेयत्वे निदानप्रश्ने आह—

**परिवृढं भवति ॥**

परितः सर्वतो वृढं व्याप्तम् । यद्वा परिवृढं व्याप्तं । यद्धि महद्भवति तत्सर्वं व्याप्नोति । तथाच वक्ष्यति "ब्रह्म परिवृढं सर्वत" ( निरु. १–३–३ ) इति ।

इदानीं निगमान्तस्थं सुवीरा इत्येतद्वाक्यमर्थतो द्विधा व्याचष्टे—

**वीरवन्तः कल्याणवीरा वा ॥**

पुरस्तात्स्थितेन मत्वर्थंसुना योऽर्थो लभ्यते सहि वीरवन्त इत्यनेनोच्यते । तत्रानतिप्रसिद्धत्वमाशङ्क्य प्रसिद्धेन शोभनार्थेन बहुव्रीहिणा योऽर्थो लभ्यते तमर्थमाह कल्याणवीरा वेति । कल्याणशब्दार्थो वक्ष्यते मूले ( नि. २–१–६ ) ।

इदानीं निगमान्तस्थं वीरपदमनेकधा निर्वक्ति—

**वीरो वीरयत्यमित्रान् ॥**

१. बृहन्महच्छब्दौ ॥

२. विषयत्वं सप्तम्यर्थः ॥

३. परिवृढत्वम् इति मूलपुस्तके पाठः ॥ यद्यपि पाणिनिना प्रभावेव परिवृढ ( ७–२–२१ ) इति निपातितस्तथापि अर्थसाम्यादिह महतो नामधेयनिदाने निरुक्तः । प्रभुरपि महत्तया सर्वं पोष्यवर्गं व्याप्नोत्येतावतैव परिवृढ इत्युच्यते ॥

४. मत्वर्थसोः पुरस्तात्प्रयोगस्य लोके सर्वथाऽभावो वेदेऽपि क्वाचित्कत्वमेवेति ।

अमित्रान् शत्रून्वीरयति विविधप्रकारमीरयति । क्षिपति । कम्पयति । मारयति वेति **वीरः** । "ईर क्षेपे" ( चु. प. ) स्वार्थणिजन्तात्पचाद्यच् णिलोपः । यद्वा "ईर गतौ कम्पने च" ( अ. आ. ) अन्तर्भावितण्यर्थात्पचाद्यच् । अमित्र-शब्दः पुंसि । तथाच ( पा. लि. ) सूत्रम् "भृत्रा-ऽमित्र-छात्र-पुत्र-मन्त्र-वृत्र-मेढ्रो-ष्ट्राः पुंसि"ति ।

प्रकारान्तरेण वीरशब्दं साधयति—

**वेतेर्वा स्याद्गतिकर्मणः ॥**

**गतिकर्मणो** गत्यर्थे वर्तमानस्य **वेतेर्वा**धातोः ( अ. प. ) औणादिको रक् ॥ गच्छत्येवासावभिमुखं शत्रून् ॥

**वीरयतेर्वा ॥**

विक्रान्त्यर्थकस्य वीरधातोः ( चु. आ. ) पचाद्यच् ( पा. ३–१–१३४ ) णिलोपः ( पा. ६–४–५१ ) विक्रान्तो विक्रम–( पराक्रम– ) वानसौ भवति ॥

**सीमिति परिग्रहार्थीयो वा पदपूरणो वा ॥**

परि सर्वतो ग्रहणं ज्ञानं परिग्रहः स अर्थो यस्य स परिग्र-हार्थः स एव **परिग्रहार्थीयः** स्वार्थे छः ( पा. ४।२।१३८ ) सर्वत इत्यर्थकः । तद्यथा—

**प्रसीमादित्यो ऽअसृजत् ॥** (ऋ. सं. २–७–९–४)[1]

१. "प्रसीमादित्योऽअसृजद्विधर्ता ऋतं सिन्धवो वरुणस्य यन्ति । न श्राम्यन्ति न विमुञ्चन्त्येते वयो न पप्तू रघुया परिज्मन् ॥ ४ ॥" विधर्ता विविधिप्रकारेण रसानां रश्मीनां वा स्वरश्मिजालान्तर्गतस्य सर्वस्य जगतो वा, धर्ता धारयिता । "अणोऽप्रगृह्यस्य" ( पा. ७–४–५७ ) त्यनुनासिकः । आदित्य अदितेरपत्यं पुमान् विवस्वान्[1] । प्रासृजत्प्रकर्षेण सृष्टवान्सर्वतो रश्मीन् इति शेषः । ( ते च सूर्यरश्मयः ) सिन्धवः स्यन्दमाना ( आदित्यमण्डलात्प्राञ्चो[2] वर्तमाना ) ऋतमुदकम् ( आदाय पृथिवी-लोकादन्तरिक्षलोकाच्च ) वरुणस्य सूर्यस्य ( मण्डलं ) यन्ति गच्छन्ति । ( तदेवमुत्सर्गादानलक्षणं स्वस्वकर्म कुर्वाणा अपि ) न श्राम्यन्ति न ( वा श्रान्ता अपि सन्तो विरागादप्येतत्कर्म ) विमुञ्चन्ति । एते

1. सायणस्तु विधर्ता सेतुरिव जलस्य धारयिता आदित्यः अदितेः पुत्रो वरुण ऋतं विधारणहेतुभूतं सत्यं यद्वा नदीनामुपा-दानभूतमुदकं सीं सर्वतः प्रासृजत्प्रकर्षेण सृष्टवान् । तेन वरुणस्यर्तेन सिन्धवः स्यन्दनशीला नद्यो यन्ति गच्छन्ति प्रवहन्ति । एते सिन्धवः न श्राम्यन्ति न श्रमं प्राप्नुवन्ति न विमुञ्चन्ति नोपरता भवन्ति । अनलसाः सर्वदैकरूपेण प्रवहन्तीत्यर्थः । एतदेवोच्यते । वयो न वयः पक्षिण इव रघुयाः लघुवर्गाः शीघ्रगामिनः परि-ज्मन्परिज्मनि भूम्यां पप्तुः पतन्ति गच्छन्ति ॥ इत्येवं व्याख्यत् ॥ अत्र सुपां सुलुगिति ङेर्लुक् ॥

2. ते हि वर्षाकाले मेघद्वारा स्यन्दन्ते । त एव च सूर्येण प्रसृष्टाः सार्वलौकिकमुदकमादाय पुनः सूर्यमण्डलं प्रविशन्ति ॥

गृत्समदस्येदमार्षं त्रिष्टुप् सौरी[1] । अस्यामेव ऋचि तावेदु-भयमपि प्रदर्शयति—

**प्रासृजदिति वा प्रासृजत्सर्वत इति वा ॥**

इति तत्राद्यस्य **प्रासृजत्सूर्यो** रश्मीनित्यर्थः । सीमिति पदपूरण एव ॥ कुतोऽपीत्यविवक्षितमेवैतत्पक्षे । द्वितीयोदाहरणे सीमित्यस्यार्थः **सर्वत** इति ॥

परिग्रहार्थीये उदाहरणान्तरमप्याह—

**विसीमतः सुरुचो वेन आवः ॥ इति च ॥**[3]

( य. वा. सं. १३–३ )

( कथं पुनः पतन्तो न श्राम्यन्ति ? किं शनकैः ? न ) वयो न वयः पक्षिण इव ( शीघ्रं ) पप्तुः[1] पतन्तः रघुया लघुया[2] ( लघ्व्या ) शीघ्रकया गत्या परिज्मन् परिजमन्तः परिगच्छन्तः सर्वमप्येत-ज्जगत् इत्यर्थः ॥

१. सूर्यो ह्यस्यां वरुणनाम्ना स्तूयते सोऽप्यदितेः पुत्र इत्या-दित्य एव ॥

२. प्रथमम् । ततः परिग्रहार्थीयत्वे द्वितीयमुदाहरणमनुपदं वक्ष्यति ॥

३. "ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ३ ॥" ब्रह्म बृहत् रुक्मरूपमादित्याख्यं प्रथममादौ पुरस्तात् ( प्राच्यां दिशि[3] ) जज्ञानं जायमानं दृश्यमानमिति यावत् । जनेः शानचि शपः श्लौ द्वित्वम् । "गमहने"–( पा.६–४–९८ ) त्युपधालोपः । किंच वेनः कमनीयो मेधावी वा स आदित्यः । सुरुचः प्रशस्तरोचनात् रश्मीन् सीमतः सर्वतः वि आवः व्यवृणोत् विवृतानकरोत् । "छन्दसि परेऽपि" "व्यवहिताश्चे"ति ( पा. १–४–८२ ) विशब्दस्य पुरस्तात् प्रयोगो व्यवहितस्य । सचार्थकाले आवरितिक्रियापदेन संबध्यते उपसर्गत्वात् । "उपसर्गाः क्रियायोगे" ( पा. १–४–५९ ) इति पाणिनिसरणात् किंच उपमा उप समीपे मान्ति भूतानि यासु ताः सावकाशा अतएवास्य जगतो विष्ठाः विविधं तिष्ठन्ति यासु ता विविधस्थानभूता "अम्बा-म्बगोभूमी" ( पा० ८–३–९७ ) त्यादिना षत्वम् । एवंभूता बुध्न्या बुध्नमन्तरिक्षं तत्र भवा दिशः विवः व्यवृणोत् । किंच सतोऽभिव्यक्तस्य स्थूलस्यासतोऽनभिव्यक्तस्य सूक्ष्मस्य च मूर्तस्य घटपटादेरमूर्तस्य वाय्वादेश्चेति वा योनिं प्रभवं विवः व्यवृणोत् । वृणोतेर्लङि शपि लुप्ते गुणे च व इति रूपमडभाव आर्षः । "बहुलं छन्दस्यमाङ्योगेऽपीति" ( पा. ६–४–७५ ) वचनात् ॥

1. लडर्थे लिटि उसि "तनिपत्योश्छन्दसी" ( पा० ६–४–९९ ) त्युपधालोपः ॥

2. "सुपां सुलुगि"–( पा० ७–१–३९ )ति टास्थाने या । सायणमते जसः स्थाने ॥

3. तदुद्भवोपलक्षितमेव प्राच्याः प्राचीत्वम् ॥

वामदेवपुत्रो नकुलोऽनया त्रिष्टुभाऽऽदित्यं तुष्टाव ॥ तदेतत्प्रदर्शयत्यर्थतः—

**व्यवृणोत्सर्वत आदित्यः ॥**

**व्यवृणोदिति**-वि आवरित्यस्यार्थः । सीमत इत्यस्य **सर्वत** इति ॥

किं व्यवृणोदित्यपेक्षितमर्थतो निर्दिशति—

**सुरुच आदित्यरश्मयः ॥**

**आदित्याख्यस्य** ब्रह्मणो **रश्मयः** किरणाः । "किरणप्रग्रहौ रश्मी" इत्यमरः । त एव **सुरुचस्**तानित्यर्थः । कुतस्ते सुरुच इति सुरुच्शब्दं निर्ब्रवीति—

**सुरोचनात् ॥**

तथाच सुरुचः प्रशस्तरोचनान्रश्मीनित्यर्थतो गम्यते । "रुच दीप्तौ" ( भ्वा. आ. ) क्विप् । वेनो मेधावी ॥

अथ परिग्रहार्थीयस्य सीमिति मान्तस्य कथं सीमत इत्यकारान्तमुपादाय तसिना सीमत इति साधितमित्याशङ्कायामुक्त उत्तरमाह—

**अपिवा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्यादातः ॥**

अत्र **अपिवेति** भिन्नक्रमः सीम्न इत्यतः प्रागद्रष्टव्यः । **सीम्** अ इत्येतदनर्थकमुपबन्धं संज्ञाकरणम् ( अकारम् ) **आददीत** अर्थकाले । पञ्चम्याः कर्म कार्यं "पञ्चम्यास्तसिल्" ( पा० ५-३-७ ) इति तसिल्प्रत्ययरूपं यस्मात्पुरस्तथाभूतम् । तथाच सीमित्ययं सर्वशब्दसमानार्थ एव पर्यवसन्नो भवतीति व्याख्यातं सीमतः सर्वत इति ॥

इदानीं शब्दसारूप्यप्रसंक्तं निर्ब्रवीति **'सीम्नः सीमत'** इति । **'अपिवा'**-अथवा ग्रामादेर्मर्यादार्थस्य नान्तस्य सीमन्शब्दस्यापि पूर्ववत्तसिलन्तस्य "स्वादिष्व" (पा० १-४-१७ ) ति पदत्वान्नलोपे सीमत इति संभवतीत्याह—**'सीमातो मर्यादात'** इति । अत्र द्वितीयान्तात्सार्वविभक्तिकस्तसिरिति महीधरस्वरसः ॥

इदानीं निर्वचनप्रसक्तं सीमाशब्दार्थं निर्ब्रवीति—

**सीमा मर्यादा विषीव्यति देशाविति ॥**

सीमन्शब्दो मर्यादार्थः । कुतः ? **'देशौ'** पूर्वापरौ **'विषीव्यति'** विगतसन्तानावविच्छिन्नौ ( विभक्तौ ) करोतीति हेतो**'र्मर्यादा सीमे'**त्युच्यते । तथाच "सीमसीमे स्त्रियामुभे" इत्यमरव्याख्यायां महेश्वरः द्वे ग्रामादेर्मर्यादायामित्याह "सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रिया" मिति मेदिनी च । स्थितिरत्र मर्यादा "मर्यादा धारणा स्थिति" रित्यमरः । अयं चार्थतो निर्वचनक्रमः । सीमेति तु "षिञ् बन्धने" ( स्वा. उ. ) इत्यस्य "नामन्सीमन्नि" ( उ० ४-१४० ) त्यादिना मनिनन्तो निपातः । सिनोति बध्नाति देशावेतावानेवायमित्येवं सा सीमा ॥

**त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम् ॥**

निपातत्वेनैतदपि संदिह्यते । वक्ष्यते हि "निपात इत्येके" ( नि. १-३-३ ) इति ॥ अतस्त्व **इति** ह्येवं निपातकाण्ड उदाह्रियते । संशयपरिशोधनाय **त्व** इत्येतद्विनिग्रहार्थीयमिति व्याख्यातम् ( पृ. १२ ) । स्वरविप्रतिपत्तिं निराकरोति—**अनुदात्तमिति** । "त्वत्वसमसिमेत्यनुच्चानीति" ( फि. ४-७८ ) सर्वानुदात्त इत्यर्थः ॥

**अर्धनामेत्येके ॥ २ ॥ ( ७ )**

**अर्धस्यैवैतन्नाम** त्व इत्येव**मेके** आचार्या मन्यन्ते इति शेषः । वक्ष्यति चायमपि । त्वो नेम इत्यर्धस्य (निरु. ३।४।१) इति । तदेतत्प्रकरणोपपदाभ्यामध्यवसेयं, क्वार्धनाम, क्व सर्वनामेति ॥ २ ख. सू. ॥ ( ७ )

यथात्र सर्वनाम तथेयमुदाहियते—

**"ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥ ६ ॥"**

( ऋ. सं. ८-२-२४ )

आङ्गिरसस्य बृहस्पतेरार्षम् । त्रिष्टुप् । अनया हि बृहस्पतिर्वैदितवेदार्थज्ञानं तुष्टाव ॥ अथास्यामृच्येकशब्दसमानार्थं त्वशब्दं दिदर्शयिषुरनया कर्तव्यं तावदाह—

**इत्यृत्विक्कर्मणां विनियोगमाचष्टे ॥**

अयमर्थः । होत्रादयः षोडशर्त्विजो भवन्ति । ससदस्याः सप्तदश । तेषु चत्वारो महर्त्विजः । होता, उद्गाता, ब्रह्मा, अध्वर्युश्चेति । तेषां होत्रादीनां चतुर्णामृत्विजां यानि कर्माणि

---

१. उपक्रान्तं सीमित्यस्य परिग्रहार्थीयत्वम् ।

२. अनुबन्धमिवोच्चारणकाले प्रयोजनवशादुपबध्यमानम् । संज्ञाकरणं संज्ञात्वप्रयोजकम् । संज्ञाक्रियतेऽनेनेति ल्युट् ( पा. ३ ३।११७ ) ॥ योरनः ।

३. अवधिविशिष्टो हि सर्वार्थः सीमशब्देन विवक्षितस्ततस्तसिनाऽवध्यर्थेऽभिहिते सर्वार्थ एवावशिष्यते । विशिष्टवाचकपदानां सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति नियमात् । अत्र पदं शक्तं ननु "सुप्तिङन्तं पद" ( पा० १-४-१४ )मिति परिभाषितम् ॥

४. मन्त्रार्थकरणकाले दुर्गोक्तिमूलोक्तिं चानुसृत्यैतद्व्याख्यानम् । महीधरमते तु मर्यादार्थस्यैवेदमुदाहरणं सीमतः सीमानं मर्यादां भूगोलमध्यभागमारभ्येति तदर्थं स आह । एतदेवात्र द्वितीयोदाहरणदानस्यास्वरसमूलमपिवेत्यनेन सूचितं पूर्वोदाहरणस्यैवोभयार्थविषयत्वमिति राद्धान्तः ॥

१. निपातत्वे हि "निपाता आद्युदात्ताः" ( फि० ४-८० ) इत्याद्युदात्तत्वं प्रसज्येत ॥

ऋक्शंसनादीनि तेषां **विनियोगं** विविच्य नियोगं नियोजनम् (कर्तृपुरुषेष्वासञ्जनम्) इति—अनयर्चाऽऽ**चष्टे** ब्रवीति ॥

कथम्-इति प्रथमं पादं विवृणोति—

## ऋचामेकः पोषमास्ते पुपुष्वान्होतर्गचनी ॥

य एते चत्वारो महर्त्विजस्तेषां मध्ये **'एको होता'** यज्ञकाले स्वकीयवेदगतानाम् **'ऋचां पोषं'** यथाविधिकर्मणि प्रयोगं **'पुपुष्वान्'** (एको धातुरनुवादार्थः) बह्वीर्ऋचः पुष्यन् शंसन् **'आस्ते'**। इतीय**'मृक् अर्चनी'**। अर्च्यते स्तूयतेऽनयेति करणे ल्युट् (पा० ३-३-११७) टिड्ढाण्ङीप् "ऋच् स्तुतौ" (भ्वा. प.) तदेतदृक्शंसनकर्म होतरि विनियुक्तम्। उक्तंच "यदृचैव हौत्रं क्रियत" (ऐ० ब्रा ५-५-८) इति ॥

अथ द्वितीयं पादं विवृणोति—

## गायत्रमेको गायति शक्वरीषूद्गाता ॥

**'एक'** उक्तादन्य **'उद्गाता'** एष लब्धार्थः। **'गायत्रं'** गायत्रशब्दाभिधेयं स्तोत्रं साम, **'शक्वरीषु'** शक्वरीशब्दाभिधेयासु ऋक्षु **'गायति'** इत्येतत्सामगानकर्मोद्गातरि नियुक्तम्। उक्तंच "साम्नोद्गीथ"मिति (ऐ. ब्रा. ५-५-८) ॥

अथ मन्त्रार्थं पादयोऽग्रे निर्विवक्षुरुक्तार्थंचे एकपदनिरुक्तं तावदाह—

## गायत्रं गायतेः स्तुतिकर्मणः ॥

स्तुत्यर्थस्य गैधातोः (निघ. ३-१४) (भ्वा. प.) करणे पत्रन्। गायत्यनेनेति **गायत्रम्** ॥

## शक्वर्य ऋचः शक्नोतेः ॥

"शक्लृ शक्तौ" (स्वा. प.) अस्माद्बाहुलकात्करणे वनिपि "वनोर च" (पा० ४-१-७) इति ङीब्रादेशश्च। शक्नोत्यामिरिति **'शक्वर्यः'**।

अथैतस्मिन्नर्थे निगमं प्रमाणयञ्छक्वरीशब्दे वृत्तिं दर्शयति—

## तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते ॥

यद्यस्मादाभिरभिष्टुत इन्द्रो **वृत्रमसुरं हन्तुमशकत्** तत्तस्माच्छक्वरीणामृचां **शक्वरीत्वमित्येवमैन्द्रब्राह्मणेऽपि** (५-२-२) शक्नोतेरेव शक्वर्य इति **विज्ञायते**। लिङ्गतोऽपि हि दर्शितं भवति "आख्यातजानि नामानी"ति ॥

अथ तृतीयमुक्तमन्त्रपादमर्थतो व्याचष्टे—

## ब्रह्मैको जातेजाते विद्यां वदति ॥

**'एको'**ऽपरो **'ब्रह्मा'** नाम ऋत्विक्। जातविद्यामिति वीप्सागर्भं सप्तमीतत्पुरुषमार्षविज्ञानवलान्मत्वा व्याचष्टे-**'जाते-जाते'**[3] भूयःसमुत्पन्ने प्रायश्चित्तादौ कर्तव्ये कर्मणि। विदन्त्यनयेति **'विद्या'** "विद् ज्ञाने" (दि० आ०) "संज्ञायां समजे"-(पा० ३-३-९९) ति करणे क्यप्। वेदयित्रीं वाचमिति सायणः। विद्यात्रयहेतुत्वादात्मनो विज्ञानमिति दुर्गः। **'वदति'** एभ्य ऋत्विग्भ्य "इदमत्र कुरुते"-ति ॥ तत्रापि ह्येतत्कर्म विनियुक्तम् ॥

अथ ब्रह्मैव कुतो विद्यां वदतीत्यनुयुक्तस्तस्य विद्याप्रकर्षात्सर्ववेत्तृत्वमाह—

---

१. विनिग्रहार्थीयस्य सर्वनाम्नस्त्वशब्दस्यार्थनिर्देशोऽयम् ॥ प्रथम इत्यर्थः। तथा चोक्तम्—"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते" इति ॥

२. पुनः पुनर्भृशं वा देवतायाथात्म्यानुचिन्तनसन्तानमर्मस्थानकरणाभुप्रदानवतीर्यथाकालमृचोऽधीयान इति दुर्गः ॥

३. अयमर्थः सायणेनोक्तस्तथाच पुपुष्वानिति क्वस्वन्तः। "धातुसंबन्धे प्रत्ययाः" (पा. ३-४-१) इति वर्तमाने लिट्। "लिटः कानज्वा" "+क्वसुश्च" (पा. ३-२-१०७) इति क्वसुः। "लिटि धातो"-(पा. ६-१-८) रिति द्वित्वम्। "पुष पुष्टौ" (दि० प०) पोषमिति णमुलन्तम्। "स्वे पुष" (पा. ३-४-४०। इति णमुल् बाहुलकादनुपपदेऽपि। अतएव कषादिषु यथाविध्यनुप्रयोग इति पुषेरेवानुप्रयोगः। शंसन् स्तुवन् "शंसु स्तुतौ" (भ्वा० प०) लटः शतरि रूपम् ॥ धातूनामनेकार्थत्वाद्दैवादिकस्य पुष्ट्यर्थस्य पुषेरत्र शंसत्यर्थे वृत्तिः। ऋग्भाष्यभूमिकायां सायणस्तु पोषमास्ते पुपुष्वानित्यस्य पुष्टिं कुर्वन्नास्त इत्यर्थमाह। भिन्नप्रदेशेष्वाम्नातानामृचां संघमेकत्र संपाद्यैतावदिदं शस्त्रमिति कॢप्तिं करोति सेयं पुष्टिरिति च व्याचष्टे। ऋक्शब्दोऽपि तेनैव तत्र व्युदपादत "अर्च्यते प्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वेत्यृक्" इत्येवम् ॥

४. एतत्तादृगध्ययनकर्म तस्मिन्होतरि विनियुक्तम् ॥

१. अथवात्र यत्तच्छब्दाभ्यां धात्वर्थः शक्तिरुच्यते। इन्द्रगता हि सा शक्वरीद्वारेति तासां करणत्वोपपत्तिः। यत्तासामभिष्टुतिद्वारा शक्तिजनकत्वं तदेव शक्वरीत्वमिति पर्यवसितोऽर्थः। शक्तिजनकत्वं शक्तिजनकस्य भावः सच प्रकृतिजन्यबोधे प्रकारीभूतो भवति। तथा च शक्तिजनक इत्यस्मिन्नर्थे शक्तिरेव प्रकार इति ॥

२. शब्दसामर्थ्यं हि लिङ्गं मीमांसायां प्रसिद्धम् ॥

३. ऋग्भाष्यभूमिकायां सायणस्तु जातेजाते तदातदोत्पन्ने प्रस्तुते प्रणयनादिकर्मणि विद्यामनुज्ञां वदति 'ब्रह्मन्नपः प्रणेष्यामी-' त्येवं संबोधितः सन् 'ओंप्रणये'त्यनुजानाति। स च ब्रह्मा वेदत्रयोक्तसर्वकर्माभिज्ञः। तस्माद्योग्यतां दृष्ट्वा तत्तदनुज्ञातुं सति प्रमादे समाधातुं च समर्थ इति। तच्च सामर्थ्यं छन्दोगा आमनन्ति "एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गातान्यतरामिति कृत्स्नो यज्ञः प्रमादराहित्याय मनसा सम्यगनुसन्धेयः वाचा च वेदत्रयोक्तमन्त्राः पठनीयास्तत्र होत्रादयस्त्रयो मिलित्वा वाग्रूपं यज्ञमार्गं संस्कुर्वन्ति ब्रह्मा त्वेक एव मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति तस्मादस्यास्ति सामर्थ्य"मिति ॥

## ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ॥

नह्यसर्ववित्तमधिकारं निर्वर्तयितुं शक्नुयाद्यतो ह्ययं **सर्व-विद्यः**। सर्वां ( त्रयीं ) विद्यां वेदेति "तद्धितार्थे-" ( पा० २-१-५१ ) ति समासः। "तदधीते तद्वेद-" ( पा० ४-२-५९ ) ति हि वेदार्थे "विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्" ( वा० ४-२-६० ) इति ठक्। तस्य "सर्वादेः सादेश्च लुग्वक्तव्यः" ( वा. ) इति लुक्। तथाविधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ **सर्वमेव वेदितुमर्हति** अतोऽयं **ब्रह्मा** भवति। उक्तंच "अथ केन ब्रह्मत्वं क्रियते इति? त्रय्या विद्यया" ( ऐ० ब्रा० ५-५-८ ) इति ॥

## ब्रह्मा परिवृढः श्रुततः ॥

श्रूयत एव ( न परं केनचित्क्रियते-) इति श्रुतो वेदः। कर्मणि क्तः। तस्मादिति "पञ्चम्यास्तसिल्" ( पा. ५-३-७ )। **परिवृढः** प्रभुस्तेषां मध्ये नेता ( नायकः ) "प्रभौ परिवृढः" ( पा. ७-२-२१ ) इति निपातः। "प्रभुः परिवृढोऽधिप" इत्यमरश्च। स हि त्रयीविद्यां वेद। अन्ये त्वेकैकामित्यस्य विद्याप्रकर्षोऽन्यतः ॥

अधुना शब्दसारूप्यप्रसक्तमुच्यते—

## ब्रह्म परिवृढं सर्वतः ॥

**सर्वतः** सर्वासु दिक्षु। "आद्यादिभ्यस्तसेरुपसंख्यानमि" ( पा० ५।४।४४ वा० )ति सार्वविभक्तिकस्तसिः। **ब्रह्म** वेदान्त-प्रतिपाद्यमृगादि वोभयमपि एतत्**परिवृढं** व्याप्तम् ॥

अथ तुरीयपादं तस्या अर्थतो व्याचष्टे—

## यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युः ॥

**'एकोऽध्वर्युश्च यज्ञस्य मात्रां'** मीयतेऽनेनेति मात्रा[1] तां यां कांचिदितिकर्तव्यतामभिषवग्रहणादिरूपां ( यज्ञशरीरं ) **'विमिमीते'** अत्यर्थं ( नानाप्रकारं ) निर्मिमीते ( करोति )। उ इत्यवधारणार्थो मन्त्रे। स्वस्वकर्तव्यमेव सर्वोऽनुतिष्ठति नान्य-कर्तव्यमित्यवधारणा। यद्वा वितर्कार्थः। सच सुगम इति कृत्वा व्याख्याकाले उपेक्षितः॥ यज्ञस्वरूपनिष्पादकत्वं चाध्वर्योर्नाम-निर्वचनादेवावगम्यत इत्यध्वरशब्दमनेकधा निर्ब्रवीति—

## अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताऽध्वरं कामयत इति वा ॥

अध्वरशब्दे पृषोदरादित्वादन्त्यलोपेऽध्वरयुरेवाध्वर्युरित्यु-च्यते। कथं सोऽध्वरयुरिति तत्साधयत्यवयवार्थनिर्वचनेन। **अध्वरं** यज्ञं **युनक्ति** सर्वाङ्गसंवननेन संयोजयतीत्यध्वरयुः। "युजिर् योगे" ( रु. प. ) डुप्रत्यय औणादिकः। टिलोपः। यतः सोऽध्वरस्य **नेताऽन्तं** प्रापयितेति, अध्वर्युशब्दस्यैव तात्पर्यार्थोऽयमिति सायणः। एतदेवाभिप्रेत्याध्वर्युवेदस्य (यजुषः) यागनिष्पादकत्वद्योतकं निर्वचनं यास्को दर्शयिष्यति "मन्त्रा मननात्। छन्दांसि छादनात्। स्तोमः स्तवनात्। यजुर्यजते"-( नि० ७-१३ ) रिति, अथवा **अध्वरं कामयते** कर्तुमि-त्ययमध्वर्युः। एतस्मिन्निर्वचने युरित्ययं कामनार्थः। वसुकामा वसुयव इति यथा ॥

## अपिवाऽधीयाने युरुपबन्धः ॥

अथवा अध्वर-( न्तत्प्रतिपादकं शास्त्र-) मधीयानो लक्षण-याऽध्वर इत्युच्यते। मञ्चाः क्रोशन्तीति वत्।[1] तस्मिन्नध्वरेऽधीयाने ब्राह्मणे युरित्ययमुपबन्धो नामकरणम्। अध्वरमधीते यस्तस्य नामाध्वर्युरिति ॥ अकारलोपः पृषोदरादित्वादत्रापि ॥

अथ विग्रहप्रसक्तस्याध्वरशब्दस्य तत्त्वमाचष्टे—

## अध्वर इति यज्ञनाम ॥

कथम्—?[2]

## ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः ॥

**हिंसाकर्मा** हिंसार्थकः ( निघ० २-१९ ) ध्वरधातुः। तस्मा"द्धवर्थे कविधानमि"ति ( वा. ३।३।५८ ) अधिकरणे कः। ध्वर्यन्ते वध्यन्तेऽस्मिन्निति ध्वरस्तत्प्रतिषेधो (न ध्वरो)ऽध्वर[3] इति। अहिंस्रो हि यज्ञः। यत्किंचित्पशुबीजादिकमत्र हिंस्यते साऽभ्युदयहेतुत्वात्तेषां हिंसा न भवति। द्वेषपूर्वको हि प्राणिवधो हिंसा। न तथात्रेति भवति सोऽध्वरः। तथाच श्रुतिः "न वा उ एतस्मिन्म्रियसे" ( य० वा० सं० २३-१६ ) इति। स्मृतिश्च "कुशलमिच्छन्ति तृणानि राजन्" इति ॥

## निपात इत्येके ॥

अयं लशब्दो **निपात इत्येके** आचार्या मन्यन्ते[4] ॥

एवंसति पूर्वाभ्युपगतेऽनुदात्तत्वे ( नि. १-३-२ ) शङ्कते—

## तत्कथमनुदात्तप्रकृति नाम स्यात् ॥

**तदेतत्त्वे**तिशब्दस्वरूपं **अनुदात्तप्रकृति** अनुदात्तस्वभावं **सत्कथं नाम स्यात्**? ( यद्भवतोक्तं सर्वनामानुदात्तमिति ) उत्तरमाह—

## दृष्टव्ययं तु भवति ॥

---

१. मीयते इति मानं कर्म तन्मात्रेत्युच्यत इति दुर्गः ॥

१. मञ्चस्थेषु पुरुषेषु क्रोशत्सु मञ्चाः क्रोशन्तीति यथोच्यते तथात्राध्वरमधीयानोऽध्वर्युनाम्ना व्यपदिश्यते ॥

२. किमयं रूढ एव घटपदादिवदुत योगार्थोऽप्यत्र कश्चिद्घटत इति प्रश्नः ॥

३. यद्वा ध्वरणं न ध्वरो यस्मिन्सोऽध्वरः। तत्प्रतिषेध इत्यस्य तस्य प्रतिषेधोऽस्मिन्निति बहुव्रीहिः ॥

४. निपातत्वं त्वेकेषां केषांचिन्मतं तत्तु विभक्तिदर्शनादेवा-पातरमणीयं वाङ्मात्रमिति कृत्वा नावधारितं, निपातत्वेनैतदपि सन्दिह्यत इति कृत्वा निपातकाण्डे उदाहृतः। इत्युक्तमभस्तात् ॥

दृष्टानुविधिश्छन्दसि भवतीति दृष्टव्ययत्वान्नामेति तद्भवति। तुशब्दोऽत्र भेदार्थं उत्तरपक्षतां ध्वनयितुम्॥ यद्वा हेतुसमुच्चयार्थं एव तुशब्दः। अयं भावः। यद्यपि "फिषोऽन्त उदात्तः" (फि. सू. १-१) इति फिट्सूत्रं फिषः प्रातिपदिकस्यान्तोदात्तत्वं विदधाति, "निपाता आद्युदात्ताः" (फि० सू० ४-८०) इति-चाद्युदात्तत्वं, तथापि "त्वत्वसमसिमेत्यनुचानी" (फि. सू. ४-९) ति फिट्सूत्रं तदपवदति। तथा चापवादस्मरणाद्व्ययदर्शनाच्च अनुदात्तमपि सदेतन्नामैव भवतीति॥ वस्तुतस्तु। "निपाता अप्याद्युदात्ता भवन्तीति" (फि० सू० ४-११) कृतापवादत्वाद्दृष्टव्ययत्वाच्च नामैवैतदित्युपपन्नमिति दुर्गः॥

क पुनरस्य व्ययो दृष्ट इत्यपेक्षायामाह—

**उत त्वं सख्ये स्थिरपीतमाहुरिति द्वितीयायाम्॥**

एकवचने व्ययो दृष्टः। त्वमित्ययमत्रोदात्तः स च निपातस्वरेणैव भवितुमर्हति। एवम्—

**उतो त्वस्मै तन्वं विसस्र इति चतुर्थ्याम्॥**

सर्वनामत्वा "ङेः स्मै" (पा. ७-१-१४)॥ मन्त्रार्थस्तु (नि. १-६-पा.) उपरिष्टाद्व्याख्यास्यते॥

**अथापि प्रथमाबहुवचने॥ ३॥ ८॥**

व्ययो दृष्टः। स यथा—॥ ३॥ ८॥

**"अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः॥ आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे॥"**

(ऋ. सं. ८-२-२४)

आङ्गिरसस्य बृहस्पतेरार्षं विद्यासूक्तं त्रिष्टुप्। **'अक्षण्वन्त'** इत्यस्यार्थं निर्विवक्षुराद्यपादमस्या अर्थतो व्याचष्टे—

**अक्षिमन्तः कर्णवन्तः सखायः॥**

अक्षि विद्यते येषामित्यर्थे "तदस्यास्त्यस्मिन्निति" (पा० ५-२-९४) मतुपि "छन्दस्यपि दृश्यते" (पा० ७-१-७६) इति अक्षिशब्दस्यानङि "अनो नुट्" (पा० ८-२-१६) इति मतुपो नुडागमे अक्षण्वन्तः। लोके पुन**'रक्षिमन्तः'** अक्षिसंयुक्ताः। एवं **'कर्णवन्तः'** कर्णबिललक्षणाकाशवन्तः। उपलक्षणमेतदन्येषामप्यङ्गानाम्। तथाच समानेन्द्रियाः समानोदरपृष्ठपाणिपादाः। अतएव **'सखायः'** समानं ख्यानं (ज्ञानं) येषां ते। वाह्येन्द्रियेषु समानज्ञाना इत्यर्थः॥

अथात्रैकपदनिरुक्तम्—

**अक्षि चष्टेः॥**

चष्टेः पश्यत्यर्थस्य चक्षिङ्धातोः (अ. आ.) क्सिरौणादिकः। "स्कोः" (पा०. ८-२-२९) रिति कलोपः। षस्य कत्वं सस्य षत्वं बाहुलकाच्चक्षिङः ख्याञ् (पा० २-४-५४) इति ख्याञादेशाभाव इडभावश्च। चकारलोपश्च पृषोदरादित्वात्। ख्यायते (दृश्यते) ह्यनेन सर्वमित्यक्षि॥

**अनक्तेरित्याग्रायणः॥**

व्यक्त्यर्थस्याञ्जधातोः (रु. प.) औणादिकः क्सि "रनिदितामि"-(पा० ६-४-२४) ति नलोपः। "चोः कुः" (पा० ८-२-३०) रिति कुत्वं चर्त्वं सस्य षत्वं च। अनक्ति व्यक्तं भवतीत्यक्षि। इति अग्रस्यापत्यमाग्रायणः "नडादित्वात्" (पा० ४-१-९९) फक्। फस्यायन् (पा० ७-१-२)। **आग्रायण** आचार्यो मन्यते इति वाक्यशेषः॥ यद्यप्यङ्गान्तरमपि व्यक्तमेव भवति तथापीदं तैजसत्वादन्येभ्योऽङ्गेभ्यो व्यक्ततरं भवति॥ अत्रार्थे श्रुतिं प्रमाणयति—

**"तस्मादेते व्यक्ततरे इव भवत" इति ह विज्ञायते॥**

यस्मादेते तेजोवयवभूयिष्ठे **तस्मा**त्कारणादित्येवं तच्छब्दबलाद्यच्छब्दमध्याहृत्य व्याख्याक्रमो निरुक्तशास्त्रकृच्छैलीपरिशीलितोऽन्यत्रापि यथावसरमूह्या। **एते** अक्षिणी इतरेभ्योऽङ्गेभ्यो **व्यक्ततरे** स्पष्टतरे (प्रकाशतरे) **इव भवतः**। अन्धकारेऽपि ह्येते प्रकाशेते एव नक्तंचरादीनां, न तथेतराण्यङ्गानि। एवं ब्राह्मणेऽपि अनक्तेरेवाक्षिणी **इति ह** विचार्यमाणे **ज्ञायते**॥

**कर्णः कृन्ततेर्निकृत्तद्वारो भवति॥**

कृती च्छेदने धातोः (रु. प.) औणादिकोऽन्प्रत्ययः। गुणः। पृषोदरादित्वात्तस्य नः णत्वम्॥ यद्वानिष्ठान्त एव पृषोदरादिः। उभयथापि **निकृत्त** (छिन्न-)**द्वार** इति **कर्णो भवति**। गर्भावस्थायामेव केनापि (दैवेन) निर्मितबिल इत्यर्थः॥

---

१. दृष्टमनु यथा प्रयोगदर्शनं विधिर्विधानं छन्दसि भवतीति वाहुलकबलेन महाभाष्यकारः पतञ्जलिरप्याह। अतएव दृष्टव्ययत्वं छन्दसः। व्ययो व्यत्ययो यथास्थितसामान्यनियमपरिवर्तनमिति यावद्। तथाचोक्तम् "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेने"ति॥ उपग्रहः परस्मैपदात्मनेपदे। नरः पुरुषः प्रथमादिः। स्वर उदात्तादिः। कर्तृशब्दः कारकमात्रपरः। तथाच तद्वाचकानां कृत्तद्धितानां व्यत्ययः। यङिति प्रत्याहारः। यङो यशब्दादारभ्य "लिङ्याशिष्यङिति" (पा. ३।१।८६) ङकारेण॥

२. सर्वनामत्वेऽप्युदात्तत्वं छान्दसत्वाद्व्यत्ययं दर्शयति। यद्यपि तत्र "स्वाङ्गशिटामदन्ताना" (फि० सू० २ पा.)मिति शिटः सर्वनाम्न आद्युदात्तत्वं विहितं तथापि तदौत्सर्गिकम्। "त्वत्वसमसिमेत्यनुचानी" (फि० सू० ४ पा.)ति विशिष्यानुदात्तत्वविधानात्। विशेषविधिश्चौत्सर्गिकस्यापवाद एवेति सूपपादितं प्राक्॥

३. उत त्वम् उतो त्वस्मै इत्येतद्वाक्य-(पाद-) घटितमन्त्रयोरर्थस्त्वित्यर्थः॥

१. अनेकार्थत्वाद्धातूनां व्यक्तवागर्थकस्यापि पश्यत्यर्थकत्वम्॥

## ऋच्छतेरित्याग्रायणः ॥

गत्यर्थस्य ऋधातोः ( भ्वा. प. ) औणादिकः कर्मणि नन्। धातोः कुटागमश्च। गुणो णत्वं च ॥ ऋच्छन्ति ( गच्छन्ति ) शब्दा एताविति कर्णावित्येवमाग्रायणो मन्यते ॥

ब्राह्मणमप्येतस्मिन्निर्वचने प्रमाणयति—

## "ऋच्छन्तीव खे उदगन्तामि"ति ह विज्ञायते ॥

ऋच्छन्ती-( गच्छन्ती- ) वैतौ खे आकाशेऽभिव्यक्ताः ( सन्तः ) शब्दाः। एतावपि च उदगन्तां प्रत्युदृच्छत इव ग्रहणाय। इति ह विचार्यमाणे ज्ञायते खे[2] कर्णाविति ॥

द्वितीयपादमर्थतो व्याचष्टे—

## मनसां प्रजवेष्वसमा बभूवुः ॥

एवंभूता अप्येते 'मनसां' सुखाद्युपलब्धिसाधनेन्द्रियाणा- ( मन्तरिन्द्रियाणां ) प्रजूयन्ते गम्यन्ते इति प्रजवा गम्यप्रदेशाः प्रज्ञाद्याः। जु इति सौत्रो धातुर्गतौ वेगे च तस्मात्कर्मणि "ऋदोरप्" (पा० ३-३-५७) इत्यप्प्रत्ययः गुणः। तेषु 'प्रजवेषु' (मनोगम्येषु) असमा अतुल्या बभूवुः भवन्ति। छान्दसो लिट् ॥ केचिदूहापोहनधारणाप्रवक्तृत्वसमर्थाः। केचित्ततोऽनैल्पाः। केचिदल्पमेधसोऽपरे त्वमेधस एव ॥

कथमसामान्यमिति तृतीयपादमर्थतोऽव्याख्यन्-दृष्टान्तेन प्रतिपादयति—

## आस्यदघ्ना अपर उपकक्षदघ्ना अपरे ॥

आस्यं प्रमाणं येषां ते 'आस्यदघ्नाः' "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" ( पा० ५-२-३६ ) इति ऊर्ध्वमाने दघ्नच्प्रत्ययः। आस्यदघ्ना एव आदघ्नाः। पृषोदरादित्वादास्यशब्दस्याकारादेशः स्यशब्दलोपो वा। आदघ्ना एव आदघ्नासः। "आज्जसेरसुक्"-( पा० ७-१-५० )ति जसोऽसुगागमश्छान्दसः। ह्रदा इवेति तुरीयपादस्थमत्रानुसन्धीयतेऽर्थवशादुपमानलाभाय। तथाचास्यप्रमाणोदका ह्रदा इवेति मध्यमप्रज्ञानाह। 'अपरे' इति त्वे इत्यस्यार्थौ। सर्वनामत्वात् "जसः शी-" ( पा० ७-१-१७ ) भावः। अथ ततोऽल्पप्रज्ञानाह 'उपकक्षदघ्ना अपर' इति। कक्षस्य समीपमुपकक्षं तत्प्रमाणं येषां ते उपकक्षदघ्नाः। पूर्ववदत्रापि साधनप्रक्रियोह्या। कक्षो बाहुमूलम् "बाहुमूले उभे कक्षा"- वित्यमरः। कक्षसमीपप्रमाणोदका ( अल्पोदका ) ह्रदा इवेति। उः पादपूरण एव ॥ तथाचात्र आदघ्नास इत्यतिपरोक्षवृत्तिं तमिमं परोक्षवृत्तितामास्यदघ्ना इत्यनेन संपाद्यास्यप्रमाणोदका इत्येवं प्रत्यक्षवृत्तितामापादितवान्। इति ध्येयम् ॥

अथात्रैकपदनिरुक्तम्—

## आस्यमस्यतेः।

क्षेपार्थस्यासुधातोः ( दि. प. ) "ऋहलोर्ण्यत्" ( पा० ३-१ १२४ )दिति ण्यत्। अस्यते क्षिप्यते ह्येतदाभिमुख्येनान्नमित्यास्यम् ॥

## आस्यन्दत एनदन्नमिति वा ॥

अथवा आङ्पूर्वस्य स्रवणार्थस्य स्यन्दतेः ( भ्वा० आ० ) "अन्येष्वपि दृश्यते" ( पा० ३-२-१०१ ) इति डः। कर्तृ। एनदिति कर्म। "अन्वादेशे नपुंसके एनद्वक्तव्य" ( वा. २-४-३४ ) इति एनदादेशो द्वितीयैकवचने। एनदास्यमास्यन्दते द्रवीकरोत्यन्नम्। यद्वा एनदिति कर्तृ वाहुलकात्प्रथमैकवचनेऽप्येनत्। अन्नं ( शुष्कमपि ) प्राप्यासमन्तात्स्रवत्येव श्लेष्माणं येन तदार्द्रीकृतं ग्रसितुं शक्यते इतीदमास्यमित्युच्यते ॥

अथ दघ्नशब्दं परिमाणार्थकं नाम मत्वा निर्वक्ति—

## दघ्नं दध्यतेः स्रवतिकर्मणः ॥

स्रवत्यर्थस्य दघ्धातोः ( नि० घं० २-१४ ) कर्मणि बाहुलकादौणादिको नन् इडभावश्चेति दघ्नम्। स्रुततरमिव तद्भवत्युत्तरात्परिमाणात् ॥ यद्यप्ययं स्वादौ घातने पालने च पठितो न दिवादौ तथापि यास्कवचनाद्दिवादित्वं स्रवत्यर्थकत्वं च कल्प्यते। उक्तं च। दिवादिस्तु भ्वादिवदाकृतिगणस्तेन क्षीयते मृग्यतीत्यादिसिद्धिरितीति ( सि. कि. ) ॥ एतच्च शब्दसारूप्यादन्यथापि निरुक्तं, प्रकृते तु दघ्नच्प्रत्यय एव प्रमाणार्थं इति व्यक्तमुक्तमधस्तात् ॥

## दस्यतेर्वा स्याद्विदस्ततरं भवति ॥

उपक्षयार्थस्य दसुधातोः ( दि. प. ) औणादिको नन्सस्य घो बाहुलकादिडभावश्च। दस्यतेर्वा दघ्नः स्यात्। इत्येवमपरथा व्युत्पाद्यार्थतो निर्ब्रवीति-विदस्ततरमुपक्षीणतरं तद्भवत्युत्तरस्मात्परिमाणादिति ॥

अथ तुरीयं पादमर्थतो व्याचष्टे—

## प्रस्नेया ह्रदा इवैके प्रस्नेया दद्दशिरे स्नानार्हाः ॥

स्नाला इत्यस्यार्थतो निर्वचनं प्रस्नेया इति। तत्रहि स्नातेः ( अ. प. ) कृत्यार्थे ( पा० २-४-१४ ) त्वन् प्रत्ययः। स च "अर्हे कृत्यतृचश्च" ( पा० ३-३-१६९ ) इत्यर्हार्थे भवति।

---

१. "पाघ्राध्मेति" ( पा. ७-३-७८- ) ऋच्छादेशः शिति ( शपि ) परे विग्रहवाक्ये दर्शितः। एवमन्यत्राप्यूह्यम् ॥

२. शरीरस्य शिरसो वा ऊर्ध्वं गते ( उच्चैः स्थिते ) स्थाने आकाशलक्षणे ॥

३. पुरुषभेदाद्बहुवचनम्। मनो हि प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं चेति न्यायविदो वदन्ति ॥

४. ईषदल्पाः। नञोऽत्राल्पार्थे वृत्तिः। अनुदरा कन्येत्यत्र यथा। पठन्ति च "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इति ॥ अब्राह्मणः। अपापम्। अनश्वः। अपशवो वाऽन्येगोऽश्वेभ्यः। अधर्म इति शिष्टमुदाहरन्ति ॥

५. "प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम" इति हि नियमस्तथा चात्र ( सूत्रे ) प्रमाणपदमूर्ध्वमानपरमेतद्विषये ॥

अत्रापि प्रकर्षेण स्नातुं योग्या इत्यर्थे स्नातेः "अचो यत्" ( पा० ३-१-९७ ) इति यत्। "ईद्यती"-( पा० ६-४-६५ )तीत्वे गुणे प्रस्नेया इति स्नानार्हा अक्षोभ्योदका इति तदर्थः। एवंभूता ह्रदा इव एके प्रधानभूता महान्तः प्रज्ञया प्रस्नेया अगाधाः ( अगाधप्रज्ञाः ) ददृशिरे दृश्यन्ते। छान्दसो लिट् वर्तमान इह भवति। अत्र त्वेइत्यस्यार्थं एके इति। ददृशे इत्यस्य च ददृशिरे इति। मन्त्रे उः पादपूरण एव॥ "इरयोरे" ( पा० ६-४-७६ ) इति रेभावः॥

अथात्रैकपदनिरुक्तम्—

**ह्रदो ह्रादतेः शब्दकर्मणः॥**

( अव्यक्त ) शब्दार्थस्य ह्राद्धातोः ( भ्वा. आ. ) पचाद्यच्। बाहुलकाद्ध्रस्वः। ह्रादते अव्यक्तशब्दं ह्यसावभिहन्यमानः करोतीति ह्रदः॥

प्रकारान्तरेण निर्वक्ति—

**ह्रादतेर्वा स्याच्छीतीभावकर्मणः॥**

**शीतीभावार्थस्य** ह्रादी सुखे चेति धातो-( भ्वा. अ. ) रुक्तवत्सिद्धिः। लस्य रत्वं पृषोदरादित्वात्। ग्रीष्मेऽप्यसौ शीतल एव भवञ्जनान् सुखयतीति ह्रद इत्युच्यते॥

**अथापि समुच्चयार्थे भवति॥**

**अथापि** अयमपरो निपातः **समुच्चयार्थे भवत्येकतमः।** त्वत् इति॥ ४॥

अथास्योदाहरणम्—

**पर्याया इव त्वदाश्विनम्॥**

( ऋ. ग्रा. १२-१० )

इत्याह। किमुक्तं भवति—

**आश्विनं च पर्यायाश्चेति॥**

इत्येवम्। त्वदिति समुच्चयार्थे भवति॥

**अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति॥ (९)॥**

पदपूरणसामान्यात्तुक्रमेऽयमथशब्दः। पूर्वं हि व्याख्याताः केऽपि सङ्ग्रहार्थाद्याश्चादयः। ( नि. १-२-३ ) तत्प्रसङ्गेन हीत्येवमादयोऽनर्थका अप्युक्ताः। ( नि. १-२-४ ) प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान्वक्ष्यति। तत्सामान्यलक्षणं तावदुपक्रम्यतेऽनेन। ये प्रवृत्ते-परिसमाप्तेऽर्थे अन्यैरेव वाक्यगतैः पदैरिति शेषः। **अमिताक्षरेषु ग्रन्थेषु** गद्यग्रन्थेषु वाक्यपूरणा आगच्छन्ति **त एव** मिताक्षरेषु छन्दोबद्धेषु ( पद्येषु ) **पदपूरणा** भवन्ति। उभयत्रापि तु **अनर्थकाः** अर्थान्तरावाचकाः॥ कतमे पुनस्ते-इत्याह **"कम् ईम् इत् उ"** इति॥ एते हि प्रायेण पदपूरणा एव। अन्ये पुनः "इव-न-चित्-नु"-दयोऽर्थवन्तोऽपि अर्थासंभवे पदपूरणा भवन्ति। लक्षणं हि तानपि व्याप्नोति। एते पुनः प्रायेणानर्थका एवेति विशेषतो निर्दिश्यन्ते। अथवा ते प्रायेणार्थवन्तः कदाचिदनर्थका इत्यतो विशेषतो निर्दिश्यन्ते॥ (९)॥

अधुनोक्तान्कमीमिदूंन्समासतः प्रत्येकमुदाहरणैर्दर्शयति—

**"निष्टृक्वासश्चिदिन्नरो भूरितोका वृकादिव॥ बिभ्यस्यन्तो ववाशिरे शिशिरञ्जीवनायकम्॥"**

---

१. अशीतस्य शीतभवनं "शीतीभावः। अभूततद्भावे 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्वि"-( पा. ७-४-५० ) रिति च्विः। 'अस्य च्वा'-( पा. ७-४-३२ ) वितीत्वम्।

१. प्रकृतादर्थान्न किञ्चिदर्थान्तरं द्योतयन्ति। पदमेव वाक्यमेव वा पूरयितव्यमेषामित्ययमेव हि तेषामर्थो नान्यदर्थान्तरमस्ति। उक्तंच—

"क्रियावाचकमाख्यातमुपसर्गो विशेषवत्।
सत्वाभिधायकं नाम निपातः पादपूरणः॥ १॥" इति॥

२. उपलक्षणमेतदुक्तानां खलु-नून-मिलादीनामनुक्तानां च घादीनां, तद्यथा—

"आ-घा-ता-गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामिम्।
उपबर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे! पतिम्मत्॥ १॥"

( ऋ० सं० ७-६-७-१० )

भ्रातृभगिन्योः संवादोऽयम्॥ काचिद्भ्रातरं पतिं कामयतेस्म बाल्याद्बालिश्याद्वा। तदा विज्ञानसम्पन्नो भ्राता तां बोधयति। हे सुभगे आ-गच्छान्-आगमिष्यन्ति ता-तानि उत्तरा उत्तराणि युगानि-कालविशेषाः यत्र जामयो भगिन्यः अजामिं-भ्रातरं पतिं कृणवन्-करिष्यन्ति। यस्मादेवं तस्मात्त्वमिदानीं मत्-मत्तोऽन्यं पतिं भर्तारमिच्छस्व कामयस्व। तदनन्तरं वृषभाय तव योनौ रेतःसेक्त्रे पुरुषायास्मीयं बाहुमुपबर्बृहि शयनकाले उपबर्हणं कुरु। इतिहि मन्त्रार्थः। अत्र "घा" इत्यनर्थकः पदपूरणः॥

३. इति तेष्वतिव्याप्तिवारणाय स्वरूपतोऽप्येषां निर्देश उक्तः॥

४. इदं त्वत्रावधेयम् पूर्वोक्तस्य विनिग्रहार्थीयस्यायमपवाद इति विज्ञायेतेति॥

५. संक्षेपतः॥

६. एतद्वचनं कल्पमिति न दृढं प्रतीमः। दुर्गेण तु केचिदेवं क्रतशेपमधीयत इत्युक्तम्। ऋचि तु-मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्॥ ( ऋ. सं. ८-८-१९-१ ) इति पठ्यते। अत्र सायणः। हे यक्ष्माभिभूत! हविषाऽनेन चरुणा साधनेन त्वा त्वामज्ञातयक्ष्मादयमेतत्संज्ञ इत्यप्रज्ञातः शरीरगतो रोगोऽज्ञातयक्ष्मस्तादृग्याद्युत राजयक्ष्माद्रोगात् मुञ्चामि मोचयामि (अन्तर्भावितण्यर्थः) विश्लेषयामि। किमर्थं? जीवनाय कम्। जीवनार्थम्। इहलोके चिरकालावसानायेत्यर्थः। कमितिपदपूरक एवेति॥ यक्ष्मशब्दोऽत्राकारान्तो राजदन्तादिषु पठितः॥ ( पा. २-२-३१ )

'**चिदिवरः**' केचिन्मनुष्याः '**निष्ट्रकासः**' निर्वसनाः। अपिच। '**भूरितोकाः**' बहुपत्याः ( दरिद्राः ) '**वृका**'न्मार्गरोधकात्स्तेना-( निघ० ३-२४ ) च्छृगाला '**दिव**' वा बालघातकाद्धिमादिति शेषः । '**बिभ्यस्यन्तः**' पुनःपुनर्भृशं वा बिभ्यतः सन्तः हेमन्ते '**ववाशिरे**' पुनः पुनर्भृशं वा वाशन्ते कुत्सितं शब्दं कुर्वन्ति । वाशृ शब्दकुत्सायाम् ( भ्वा. आ. ) किम्—

## शिशिरं जीवनाय ॥

**शिशिरमस्माकं जीवनाय** "आगच्छतीति" शेषः । अल्पतरशीतं हि शिशिरं सुखं तत्र जीविष्याम इत्यभिप्रायः॥ अत्र मन्त्रे कमित्यनर्थकः पादपूरण एवेति स नोक्तः॥

अथ निगमप्रसक्तं शिशिरशब्दं द्विधा निर्ब्रवीति—

## शिशिरं शृणातेः शम्नातेर्वा ॥

हिंसार्थकस्य शॄधातोः ( क्र्या. उ. ) "अजिरशिशिरे"त्यादिना ( उ. १-५३ ) निपातः। शृणाति हिनस्तीति **शिशिरम्**। अर्धर्चादिः ( २-४-३१ ) । अथवा **शम्नाते**र्हिंसार्थस्यैव। नार्थकृतो विशेषः। किंतु-साधनकृतः । हिनस्ति तस्मिन्कालेऽप्रतिबध्यमानो दवाग्निरतिशयेन शुष्कानोषधिवनस्पतीन् इति।

अथ ईमित्यस्योदाहरणम्—

## "एमेनं सृजतासुते ॥"

( ऋ. सं. १-१-१७-२ )

इति। एषैन्द्री गायत्री मधुच्छन्दस आर्षम्॥

अत्र ईमिति पदपूरण इति बोधयितुं पादार्थमाह—

## आसृजतैनं सुते ॥

"मन्दिमिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये ॥ २ ॥" इत्यस्य शेषः । हे अध्वर्यवः! '**सुते**'ऽभिषुते चमसस्थे सोमे '**एनं**' सोम'**मिन्द्राये**'न्द्रार्थ'**मासृजत**' आभिमुख्येन सृजत। पुनरभ्युन्नयतेति सायणः । कीदृशमेनं '**मन्दिं**' हर्षहेतुं चक्रिं साधुकरणशीलं कीदृशायेन्द्राय '**मन्दिने**' हर्षयुक्ताय। '**विश्वानि**' सर्वाणि कर्माणि '**चक्रये**' कृतवते । सर्वकर्मनिष्पादनशीलायेत्यर्थः "आदृगमहने" ति ( पा. ३-२-१७१ ) किलिङ्वद्भावाद्वित्वादिः ॥ २ ॥

अथेदित्यस्योदाहरणम्—

## "तमिद्वर्धन्तु नो गिरः ॥"

( ऋ. सं. ७-१-२०-४ )

इति। गायत्र्येषा सौमी। अमहीयोराङ्गिरसस्येयमार्षम्॥

अत्रेदिति पादपूरण इति बोधयितुं पादार्थमाह—

## तं वर्धयन्तु नो गिरः स्तुतयः ॥

"वत्सं संशिश्वरीरिव। य इन्द्रस्य हृदंसनिः ॥ ४ ॥" इत्यस्याः शेषः॥ अर्थश्च—'**नो**'ऽस्माकमेता '**गिरो**' ग्रावस्तुतौ विनियुक्ता वाचः स्तुतिरूपा'**स्तं**' सोमं '**वर्धन्तु**' वर्धयन्तु ( अन्तर्भावितण्यर्थः ) । '**यः**' सोमः '**इन्द्रस्य**' '**हृदंसनि**'-हृदयस्य संभक्ता। तत्र दृष्टान्तः । '**वत्सं**' बालं '**शिश्वरीरिव**' यथा शिश्वर्यो बहुपयस्का मातरो **वत्सं** वर्धयन्ति तद्वदिति ॥ १४ ॥

अथ निगमप्रसक्तं "गिर"-इत्येतन्निर्वक्ति—

## गिरो गृणातेः ॥

गॄशब्दे ( क्र्या. प. ) इति धातोः क्विप्। "ॠत इद्धातोः" ( पा० ६-१-११० ) इतीत्वं रपरत्वम्।

अथोकारस्योदाहरणम्—

## "अयमु ते समतसि ॥"

( ऋ. सं. १-२-२८-४ )

इति। शुनःशेफो ( हरिश्चन्द्रमखे वधाय ) नियुक्त आत्मानं मोचयितुमिच्छन्नेतया गायत्र्येन्द्रं तुष्टाव।

अत्रोकारः पदपूरण इति व्याचष्टे—

## अयं ते समतसि ॥

"कपोत इव गर्भधिम्। वचस्तच्चिन्न ओहसे ॥ ४ ॥" इत्यस्याः शेषः। हे इन्द्र! '**अयं ते**' त्वदर्थः सोमः ( यं त्वं नित्यमेव ) '**समतसि**' संपतसि तासु तासु क्रियास्वाऽऽहूय-

१. अत्र किंशब्दोऽनुक्तोऽप्यर्थवशादध्याहृतः। इदिति पदपूरण एवेति वयमुत्पश्यामः॥

२. वश्यन्त इति दुर्गः। वश कान्तौ (अ. प.) व्यत्ययेन श्यन्नात्मनेपदे। कान्तिरिच्छा। भृशमिच्छन्तीत्यर्थः॥ छान्दसो लिट् लडर्थे॥

३. शीतार्तस्य दन्ताभिघातपूर्वकः शब्दो दारिद्र्यमूलकः कुत्सित एव भवतीति भावः॥

४. अन्ये त्वाहुः । तत्रहि प्रायेण प्रचुराणि शरद्धान्यानि भवन्तीति शिशिरं जीवनार्थं तेषाम्॥ इति॥

५. अयं क्र्यादावपठितोऽपि वैदिकत्वाच्चत्रोध्यः । तथाच "बहुलमेतन्निदर्शन"मिति धातुपाठपठितगणवार्तिकमुपादायोक्तम्-( सि. कौ. ) अन्येतु दशगणीपाठो बहुलमित्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्या इति॥ तेनायं चुरादिरपीह क्र्यादिः॥

१. शुक्रामन्थिचमसगणे पुनरभ्युन्नयनमापस्तम्बेनोक्तम् । तथाचाग्निष्टोमप्रकरणे आ० सूत्रम् "होत्रकारणं चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिती"ति॥

२. अन्ये व्याचक्षते-वत्सं संशिश्वरीः एकशिशुका बहवो गाव इव। यथा मृतवत्साः पर्यायेणैकं वत्सं स्वैः स्वैः पयोभिर्वर्धनादिसमर्थं कुर्युः। एवमस्माभिष्टुतं सोमं वर्धयन्तु प्रजातवीर्यं कुर्वन्तु देवतर्पणायेत्येवम्॥

३. अत सातत्यगमने (भ्वा० प०) सातत्येनाविच्छेदेन (नैरन्तर्येण) गमनं सातत्यगमनं तत्फलितमर्थमाह नित्यमेव सम्पतसीति। पततिर्गत्यर्थ एव (भ्वा० प०) इति॥

मान इति वाक्यशेषोऽर्थवशाद्बोध्यः । अत्र दृष्टान्तः **'कपोत इव गर्भधिम् ।'** "कबेरोतच्पश्चे" ( उ. सू. १–६२ ) ति साधुरव्युत्पन्नो वा कपोतः कम्पतनः कुत्सितपतनो वेति दुर्गः । स यथा गर्भधिं[1] गर्भधारिणीं कपोतीं अण्डाश्रयं वा नीडं प्रति पुनः पुनः पतति तद्वत् । सोऽयमृत्विग्भिस्त्वदर्थमभिषुतः सोमः । अथ किमस्माभिः करिष्यसि ? मोचयास्मान् । किं वा **'वचश्चित्'** वचनमेव तदेतन्नः स्तुतिलक्षणं **'न ऊहसे'** न वितर्कयसि रोरूयमाणानाम् ? केनाप्यभिप्रायेण वयमेतद्ब्रूमः । कैर्वा युष्मद्गुणैर्नं संयुक्तोऽयं सोमो यदिमं परिगृह्यास्मानतो यूपान्न मोचयसि । किं वा वच ऐवैतच्छ्रुत्वाऽवबुध्यार्थमवधार्यैतंतामस्माकं कारुण्यान्मोचयास्मान्किंतेऽस्माभिरयमेतेऽस्मत्तः प्रतिविशिष्टतरः सोमोऽभिषुत इति तात्पर्यार्थः ॥ ४ ॥

## इवोऽपि दृश्यते ॥ ५ ॥ ख. सू. ॥

कदाचिदनर्थकः पदपूरण एवेति वाक्यशेषः ॥

किमुदाहरणम्—

## सुविदुरिव, सुविज्ञायेते इव ॥

इत्येते उदाहरणे । तत्र सुष्ठु विदुर्यज्ञं ब्राह्मणा इत्याद्यस्यार्थः । अत्रेवोऽनर्थक एव वाक्यपूरणः । सुष्ठु विज्ञायेते यज्ञो नक्षत्रं च ब्राह्मणैरिति द्वितीयस्यार्थः । अत्रापीवोऽनर्थक एव वाक्यपूरणः ॥

इत्येवं पदपूरणान्व्याख्याय निपातसमुदायं दर्शयति—

## अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये ॥ (१०)

निपातसमुदायाधिकारार्थोऽयमथशब्दः । इतिः संभावने । अथायमेवेदिति केवलः प्रयुज्यमानः पदपूरणो भवति । अपि चैष एव न इत्येतेन संयुक्तः प्रयुज्यते परि सर्वतो भये अर्थे इति शेषः । तद्यथा—

"हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ॥
शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम[2] ॥"

नारदेन किल वञ्चयितुं विप्रलभ्यमाना असुरपत्न्यो भर्तॄन्प्रति, तमनेन मन्त्रेण प्रत्यूचुः । **'एके'** तावत् **'इतो'** भूलोकात् **'हविर्भिः'** पुरोडाशादिभिनिमित्तभूतैः **'स्वः'** स्वर्गलोकं **'सचन्ते'** गच्छन्ति स्म ॥ अथ **'एके सवनेषु'** यज्ञेषु **'सोमान्सुन्वन्तः'** अभिषुण्वन्तः । तेन कर्मणेत्यर्थः । अन्ये

१. गर्भोऽस्यां धीयत इति "कर्मण्यधिकरणे चे"ति ( पा० ३–३–९३ ) किप्रत्ययः । "आतो लोपः" ( पा० ६–४–६४ ) ॥

२. अयमपि क्रत्य इति न दृढं प्रतीमः । दुर्गेणापि "नेज्जिह्मायन्त्यो नरकं पतामे–"ति वाक्यमुक्त्वा "मृग्यः शेष" इत्यभिधाय केचित्त्वेवं कृतशेषमत्राधीयत इति हविर्भिरित्यादिश्लोकमभिदधौ ॥

**'शचीः'** शच्या वाचा स्तुतिभिः । सुव्यत्ययश्छान्दसः । **'मदन्तः'** मादयन्तः ( अन्तर्भावितण्यर्थः ) देवांस्तर्पयन्तः । **'उत'** अपिच **'दक्षिणाभिः'** स्वः सचन्ते इत्येतदेवानुषज्यते । ( तत्रैवंसंति[1] । वयमेतेषां स्वःश्रेयसोपायानामसत्वाद्भर्तॄन्परिचरेम[2] ) **'नेदि'**तिपरिभयोक्तिः । वयमेतेषामप्युप[3] **'जिह्मायन्त्यो'** जिह्म-(कपट-) माचरन्त्यो ( भगवन् ! ) **'नरकं पताम'** । नह्यन्यो भर्तृपरिचर्यातः स्त्रियाः कश्चन धर्मोऽस्तीति भावः ॥१॥

नरकशब्दं निर्ब्रवीति—

## नरकं न्यरकं नीचैर्गमनम् ॥

**नीचैरस्मिन्नर्यते गम्यत इति नरकम्** । निपूर्वाद्गत्यर्थादृधातोः ( भ्वा. प. ) अधिकरणे वुन् गुणः नीत्ययं नीचैरित्यर्थकस्तस्य नादेशः पृषोदरादित्वात् । ततश्च शकन्ध्वादेराकृतिगणत्वात्पररूपम् । यद्वा इकारलोप एव पृषोदरादित्वादित्याह— **न्यरकमिति** ॥

## नास्मिन्रमणकं स्थानमल्पमप्यस्तीति वा ॥

**वा**-अथवा **नास्त्यस्मिन् रमणकं** रतिजनकं **स्थानमल्पमपीति** नरकम् । न रतिकरम् । न रमणकमितिवाऽर्थः । पृषोदरादित्वाद्वर्णलोपेन वर्णविपर्ययेण वा साधुः ॥

## अथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपृष्टे ॥

अथाप्ययमपरो निपातसमाहारो **न चेति** । **एष इदित्येतेन संयुक्तः प्रयुज्यते** केनचिदनुपृष्टे[4] ( सति प्रतिवचनं भवति ) तद्यथा—

## न चेत्सुरां पिबन्तीति ॥

कश्चित्कंचित्पृच्छति "तिष्ठन्ति गृहे वृषलाः ?" इति । स प्रत्याचष्टे तिष्ठन्तीति । ततो यदि तिष्ठन्ति किमिति[5] नागच्छन्तीति पुनरनुपृष्टे प्रतिवक्ति **न चेदिति** । यदि **सुरां न पिबन्ति** इत्यर्थः ॥

अथ सुरापदं निर्ब्रवीति—

## सुरा सुनोतेः ॥

सा ह्यभिषूयतेऽनेकैर्द्रव्यैः पिष्टादिभिरिति[6] **सुरेत्युच्यते** ।

१. प्राणिषु तेन तेनाभ्युपायेन स्वःश्रेयसं प्रत्यभ्युद्यतेषु सत्सु ॥

२. अस्माभिरशक्यानुष्ठानत्वादिति तात्पर्यम् ॥

३. स्वभर्तॄणां पुरस्तात् ( अग्रे ) सतीधर्ममपहाय कपटमाचरन्त्यो नरकं पतामेति सम्भावयामः ॥

४. पुनः पृष्टे । प्रश्नानन्तरमुत्तरे दत्ते पुनः प्रश्ने सतीति यावत् ॥

५. तर्हि किमर्थम् ॥

६. पैष्टी, गौडी, माध्वीत्यादिसुराभेदाः ॥

षुञ् अभिषवे ( स्वा. उ. ) अस्मादौणादिको रक्प्रत्ययः कर्मणि । किलात्तुणाभावः ॥

अथोपक्रान्तं निपातलक्षणमुपसंहरति—

**एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः ॥ ६ ख. सू. ॥ (११)**

इति या. मु. प्र. नि. शा. नैघ. का. प्र. ध्या. तृ. पादः ॥ १ ॥ ३ ॥ * ॥

**एवमनेन** प्रकारेण **उच्चावचेषु** बहुप्रकारेषु **अर्थेषु निपतन्ति** प्रयुज्यन्तेऽन्येऽपि समाहृता द्विता अपि असमाहृताश्चापि कियन्तस्ते लक्षणैर्शास्त्रमेतच्चार्थनिर्वचनशास्त्रमुपेत्योपगम्यानुप्रविश्य**उपेक्षितव्या** द्रष्टव्याः कः कस्मिन्नर्थे वर्तत इत्येवम् परीक्ष्या इत्यर्थः ॥ (११)

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघण्टुककाण्डे प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥ * ॥**

---

## अथ प्रथमाध्यायस्य चतुर्थः पादः ।

**इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च ॥**

इतीत्ययमधिकारसमाप्त्यर्थः । **इमानि** अनुपदोक्तानि **चत्वारि पदजातानि** चतस्रः पदजातयः पदसामान्यानि "जातिर्जातं च सामान्य"मित्यमरः । **अनुक्रान्तानि** पूर्वमाख्यातानि, ततो **नामानि**, तत **उपसर्गाः**, ततो **निपाता** इत्येवमानुपूर्व्येण **क्रान्तानि** वर्णितानि, व्याख्येयेति वाक्यशेषः। कतमानि पुनस्तानि? नामाख्याते चोपसर्गनिपाताश्चेति । अयं च प्रतिज्ञाभ्यासो निगमनार्थः। प्रतिज्ञाभ्यासो हि निगम इत्युच्यते ।

**( अथ नाम्नामाख्यातजत्वविचारः )**

**तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ॥**

**तत्र** तस्मिन्नेव पदचतुष्टये यानि **नामानि** तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येवं शकटस्य गोत्रापत्यं "नडादिभ्यः फक्" (पा० ४-१-९९) इति फक्। फस्यायन् (पा० ७-१-२) आदिवृद्धिः। **शाकटायन** आचार्यो ब्रवीतीति वाक्यशेषः। तथाच पतञ्जलिरपि-"सर्वन्नाम-धातुजमाह शकटस्य च तोकम्"इति महाभाष्य आह । **नैरुक्तानां** निरुक्तशास्त्रविदां "तदधीते तद्वेद" (पा० ४-२-५९) इत्यण् आदिवृद्धिः। (पूर्वेषां सर्वेषामविशेषेण गार्ग्यवर्ज्यं) **चैष समयः** सिद्धान्तः। "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः ॥

तदत्र मतान्तरमाह—

**न सर्वाणीति गार्ग्यः ॥**

**न सर्वाणि** नामान्याख्यातजान्यपितु कानिचिदेवेति वक्ष्यमाणेन तद्यत्रेत्यादिना संबन्धः। **इति** गर्गस्य गोत्रापत्यम् "गर्गादिभ्यो यञ्" (पा० ४-१-१०५) आदिवृद्धिः। **गार्ग्य** आचार्यो ब्रवीतीति वाक्यशेषः ॥

न केवलं गार्ग्य एवापितु—

**वैयाकरणानां चैके ॥**

व्याकरणं व्याक्रियन्ते धात्वादिप्रविभागेण व्युत्पाद्यन्ते शब्दा अनेनेति करणेऽर्थे व्याङ्पूर्वात्करोतेः "करणाधिकरणयोश्च-" (पा० ३-३-११७) इति ल्युट्। तद्विदन्तीति **वैयाकरणाः।** वेदितर्यण् तद्धितः (पा० ४-२-५९) आदिवृद्ध्यपवाद ऐजागमः (पा० ७-३-३) **तेषां** मध्ये **चैके** पाणिनिप्रभृतयो न सर्वाणीत्युक्तमर्थं ब्रुवते ॥ अतएव 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति तेषां समयः ॥

**तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि ॥**

**तदेतत्**प्रपञ्च्यते गार्ग्यपक्षेणेति पर्युपयुक्तस्तच्छब्दः। इह हि त्रिधा व्यवस्था नाम्नाम् । प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि च नामानि भवन्ति। तत्र-**यत्र** येषु नामसु **स्वर** उदात्तादिः। **संस्कारः** प्रकृतिप्रत्ययादिः। **तौ समर्थौ** सङ्गतार्थौ **प्रादेशिकेन** व्याकरणलक्षणानुगतेन **गुणेन**

---

१. अभिषवोऽत्र सुरासन्धानं (सुरोत्पादनप्रकारः) नतु स्नपनादि ॥

२. व्याकरणम् ॥

३. व्याख्यालक्षणमुक्तमधस्तात् ( २ पृ. २१ ) । तत्राक्षेपसमाधाने नामविषये अवशिष्येतेऽन्यत्सर्वं लक्षणोदाहरणमुखेन दर्शितमिति व्याख्यया वर्णितानीत्यस्य तात्पर्यम् ॥

४. नाम्नस्तु किंचिदवशिष्यत इति यदुपप्रेक्षितमधस्तात्प्रतिज्ञातं च "तत्पदचतुष्कलक्षणानन्तरं चतुर्थपादेन वक्ष्यत" इति । तदत्र यथावसरं विशेषचिन्तापक्षमनुसृत्याक्षेपसमाधानरूपव्याख्याधर्मेणोच्यते ॥

१. अयत्यम् । "अपत्यं तोकं तयोः सम–" इत्यमरः ॥

२. सिद्धान्तः । "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः । तेषां पाणिनीयानाम् अव्युत्पन्नानीत्यस्योद्देश्यत्वेन विधेयत्वेन वा पाणिनितात्पर्यविषयाणीत्यर्थः। अन्यथाहि वदतो व्याघातः। उणादय इत्यस्यहि उणादिप्रत्ययान्तानीत्येवार्थः। नहि तान्यव्युत्पन्नानि भवितुमर्हन्ति । अथाव्युत्पन्नानि, नहि तर्हि उणादिप्रत्ययान्तानि । उद्देश्यत्वेनेत्याद्युक्त्या निमित्तत्वेन पाणिनितात्पर्यविषयताभ्युपगमस्तेन "अयामन्ताल्वाय्येत्विष्णुषु" (पा. ६-४-५५) इति सूत्रं संगच्छते । तदेतच्छब्देन्दुशेखरे सुव्यक्तं द्रष्टव्यम् ॥

३. समर्थतानामोपपत्तिरुच्यते ॥

४. यथैव हि लक्षणाविप्रतिपत्त्या स्वरोऽवस्थित एवं संस्कारोऽपि यत्रेत्यर्थः ॥

१ प्रीक्षा ।

धातुनाऽन्वितावनुगतौ स्यातां भवेतां तानि सं-सममैकमत्येनाख्यातजानीत्येवं विज्ञातानि। न तत्र विप्रतिपत्तिः। यथा कारकहारकादीनि। प्रत्यक्षक्रियाणि ह्येतानि॥ अत उत्तरं नपुंनैरिति वाक्यशेषो द्रष्टव्यः—

**यथा गौरश्वः पुरुषो हस्तीति॥**

इत्येवमादीनि पुनर्न संविज्ञातानि (प्रत्यक्षक्रियाणि) अपितु-प्रकल्प्यक्रियाणि। एतेषु हि प्रकल्प्यन्ते क्रिया न साक्षादुपलभ्यन्ते। अविद्यमानक्रियाणि तु डित्थो डवित्थोऽरविन्दोऽर्वाङित्येवमादीनि॥

अथ शाकटायनमतमाक्षिपति—

**अथ चेत्सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च(न) तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाचक्षीरन्॥**

कश्च(न) कश्चित्। (अविशेषेण प्राणिमात्रम्) तत्कर्म एकाकारकमनेकः कुर्यात्सर्वं तत्सत्त्वं प्राणिजातं तथा एकनाम्नैव ते शाकटायनादय आचक्षीरन् कथयेयुर्जना इति शेषः॥ तद्यथा—

**यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्यात् यत्किंचित्तृन्द्यात् तृणं तत्॥**

यः कश्चिदनश्वोऽप्यध्वानमश्नुवीत व्याप्नुयात्। अशू व्याप्तौ (स्वा. आ.) विधौ लिङ्। अश्वइत्येवं स वचनीयः स्यात्। कस्माद्वाश्वोऽप्यनश्नुवंश्च इत्युच्येत तैः। अथ चेदनश्नुवन्नप्यश्वस्तदान्योऽप्यनश्नुवंश्च इत्युच्यताम्। तस्मादश्वोऽपि नैवाशनक्रियायोगाभिप्रायेणाश्व इत्युच्यते किं तर्हि? शब्दव्यवहार एवायमर्थप्रत्यायनार्थं ईदृशः क्रियानिरपेक्षः। एवमेव यत्किंचित्तृन्द्याच्छिन्द्यात्। उतृदिर् हिंसानादरयोः (रु. प.) विधौ लिङ्। अविशेषेण तत्सर्वं तर्दनक्रियायोगात्तृणमित्येवमाचक्षीरन्न चाचक्षते जनाः। तस्मान्न सर्वाण्याख्यातजानि नामानि॥

**अथापि चेत्सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात्॥**

क्रियाहेतुके हि नामधेयप्रतिलम्भे सति यावद्भिर्भावैर्यावतीभिः क्रियाभिरेकं द्रव्यं संयुक्तं प्रयुज्येत तावद्भ्यो भावेभ्यः क्रियाभ्यो नामधेयप्रतिलम्भः स्यान्नहि तत्र कासांचिद्व्यावर्तको विशेषहेतुरस्ति अन्यासां वा नियामकः॥ अपिरत्र शङ्कायां संभावनायां वा। एवमुत्तरत्रापि। "गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपी" त्यमरः॥

**तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात्॥**

तत्रैवं सति स्थूणा एकैव सती दरे[2] (श्वभ्रे गर्ते) शेत इति दरशया इत्युच्येत न चोच्यते। एवं सज्यतेऽस्यां वंश इति सञ्जनीत्युच्येत। न चोच्यते। एवमनेकानि सत्त्वानि एकक्रियायोगादेकनामानि स्युः। एकं वाऽनेकक्रियायोगादनेकनाम। उभयथापि च व्यवहाराप्रसिद्धिः। तस्मान्न सर्वाण्याख्यातजानि नामानि स्युः॥ १२॥ १॥

**अथापि य एषां न्यायवान्कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्॥**

एषां पुरुषादिनाम्नां यः न्यायवान् लक्षणन्यायेन युक्तः कार्मनामिकः कर्मकृते नाम्नि (पाचकलावकादौ) भवः संस्कारः। यथा चापि यथैव च। प्रतीतार्थानि प्रतीतक्रियाणि स्युर्भवेयुस्तथा आचक्षीरन् कथयेयुर्जना इति शेषः॥

कथं पुनर्न्यायवत्संस्कारोपेतानि कथं वा प्रतीतक्रियाणि स्युस्तत्राह—

**पुरुषं पुरिशय इत्याचक्षीरन्॥**

---

१. या हि तस्मिन्द्रव्येऽवस्थिता यद्धेतुकश्च तस्य नामधेयप्रतिलम्भोऽभिप्रेतः सा प्रदेशाख्या क्रियेत्युच्यते। सा च प्रधानतया पदेऽवतिष्ठते। तद्वाचकश्च धातुः प्रादेशिको गुण इत्युच्यते। गुणः शेषोऽङ्गमित्यनर्थान्तरम्। तथाच प्रदिश्यते नाम्ना निर्दिश्यते द्रव्यमनयेति प्रदेशः क्रिया नामधेयप्रतिलम्भहेतुभूता तामभिधत्त इति प्रादेशिको धातुरित्येके मन्यन्ते। अपरे पुनरन्यथैतद्व्याचक्षते तदुर्गभाष्यादौ द्रष्टव्यम्।

२. वस्तुतस्तु अत्र संविज्ञातानीतिपदे तत्राद्वृत्त्यादिन्याय आश्रीयते। एकस्य पूर्वेणापरस्य च परेणाभिसम्बन्धः। तत्र संविज्ञातपदमिति रूढिशब्दस्य संज्ञात्र करिष्यते (दै. का.७-३-१०)। तथाच संविज्ञातानि संविज्ञातपदानि तानि यथा गौरश्वः पुरुषोऽहस्तीत्येवमादीनि। नह्येषां गवादीनामष्टाध्याय्यां व्युत्पत्तिलक्षणमस्ति। तथाचोक्तमुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति। तस्माद्रूढिशब्दा एवैते भवन्ति इति॥ पाचकादयस्तु न्यायवत्कार्मनामिकसंस्कारेणानुगता यौगिकशब्दा इत्येवमन्ये व्याचक्षते॥

३. "सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः। पिशाचादावात्मभावे बले प्राणेषु जन्तुषु" इति हेमचन्द्रः। "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिण" इति त्वमरः॥

१. उत्तरसूत्रेऽपि। वस्तुतस्तु अथशब्दस्तत्र प्रश्ने। अपिशब्दः सम्भावनायाम्। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः॥

२. "दरोऽस्त्रियां भये श्वभ्रे" इत्यमरः॥

पुरुषं तावत् पुरिशय इत्याचक्षीरन्। इतिना निपातेन कर्मण उक्तत्वान्न द्वितीया। पुरि ह्यसौ शेत इति "अधिकरणे शेते" (पा० ३–२–१५) रिति खश्। इत्येवं न्यायवता कार्मनामिकसंस्कारयुक्तेन पुरिशय इति शब्देनोक्तः स्यात्। एवं चैष प्रतीतक्रियः शब्दो भवति॥ एवमेव—

**अष्टेत्यश्वं तर्दनमिति तृणम्॥**

आचक्षीरन्नित्यनुषज्यते। अश्नोति ह्यसावित्यष्टा इत्येवमश्वमाचक्षीरन्। तृद्यते यत्तत्तर्दनमित्येवं तृणमाचक्षीरन्। न चैवमाचक्षते। किं कारणम्? न चासति कारणे विद्यमाना क्रिया परोक्षीकर्तुं न्याय्या। तस्मान्नाख्यातजानि नामानीति॥

**अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति॥**

अथापीदमपरमप्राप्तं कुर्वन्ति ते शाकटायनाः। यन्निष्पन्ने सिद्धे अभिव्याहारे नाम्नि अभि आभिमुख्येन (तस्य नाम्नः) स्थित्वा विचारयन्ति कतमस्य धातोरत्र रूपमिति॥ ततश्च—

**प्रथनात्पृथिवीत्याहुः, क एनामप्रथयिष्यत्किमाधारश्चेति॥**

प्रथनात्पृथुलात्पृथिवीत्याहुस्ते शाकटायनाः। तत्र पृच्छामः। यदीयं स्वभावतएव पृथिवीनाम नाभविष्यत् तदा क एनामप्रथयिष्यत्कोऽस्याः प्रथनमकरिष्यत्। अथापि कथंचिदस्या अपृथिव्याः सत्याः कश्चित्प्रथनकर्ताऽभ्युपगम्येत। ततोऽपि च वयमिदमपरं पृच्छामः **किमाधारश्चेति?** चशब्दः समुच्चयार्थः। सर्वस्य हि प्राणिजातस्येयमेवाधारः। अथ पुनर्यदेयमप्रथिताऽऽसीत् तदा योऽस्याः प्रथनकर्ता स किमाधार आसीत्। न ह्यनाधारेण शक्येयं प्रथितुम्। आधाराभावे च प्रथनक्रियाभावः। प्रथनक्रियाभावे च सति क्रियाजान्येव नामानीत्येतदयुक्तम्॥ तस्मान्न सर्वाण्याख्यातजानि नामानि॥

**अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान्संचस्कार शाकटायनः॥**

अथापीदमपरमप्राप्तं कृतवान् **शाकटायनः**। यदनन्वितेऽननुगते शब्देनार्थे–यत्र संस्कार्यमाणोऽपि शब्दोऽर्थमनुगन्तुं न शक्नोति तादृशे, अथ चाप्रादेशिके विकारे यया हि क्रियया तद्द्रव्यं प्रदिश्यते (नाम्नोच्यते) तदभिधायको धातुः प्रादेशिकः स तदभिधानं विगृह्यमाणं विकर्तुं न शक्नोति तादृशे हीयमानप्रतिज्ञः (शाकटायनः) सर्वाण्याख्यातजानि नामान्युपपादयिष्यन् असम्भवे सति कुशकाशावलम्बनमिव कुर्वन् पदेभ्य आख्यातपदेभ्यः समस्तेभ्योऽवयवानुपादाय पदेतरार्धाननन्यानन्यांश्चेतरेतराख्यान् पदावयवैरन्यैश्चान्यैश्चान्यदर्थमात्रः संचस्कार संस्कृतवान्। सन्तमर्थमाययति गमयतीति सत्यमित्येवम्। अत्र—

१. अभिमुखं व्याह्रियते उच्यतेऽसाविति कर्मणि "हलश्च"ति घञ् वृद्धिः॥

१ योगसम्बन्धि विकाराभावे

**एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च[1]॥**

**एतेः** इण्गताविसस्य धातोः (अ. प.) **कारितं** ण्यन्तं रूपं कृत्वा तदर्थस्या–(न्तर्भावितण्यर्थस्या–) च्चि 'इणो यणि' (पा. ६–४–८१) ति यणि सत्यशब्दस्य यकारादिमन्तकरणमन्त्यार्थं यमितिशब्दं सञ्चस्कारेत्यनुषज्यते। अस्तेरस्धातोः (अ. प.) **शुद्धमनन्तर्भावितण्यर्थं सकारादिं** सदिति शब्दम्। शतरि 'श्नसो'–(पा. ६–४–१११) रित्यल्लोपे सञ्चस्कार। तदेतदकृतपूर्वमन्यैर्विद्वद्भिः कृतवान्पाण्डित्याभिमानी शाकटायनो यदमिनत्पदानि[2]॥ १॥

पूर्वाचार्यमतम्

**अथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यते॥ २ ख. सू.॥ (१३)**

अथाप्ययमपरो दोषः प्रसज्येत यत्**सत्त्वपूर्वो भाव इत्याहुर**भियुक्तास्तद्विदः। सत्त्वं (द्रव्यं) पूर्वमस्मात्सोऽयं सत्त्वपूर्वः। सत्त्वाश्रय एव ह्यसौ भावः (क्रिया)। तत्रैवं सति **अपरस्माद्भावाद**परकालिकेन भावेन (क्रियया) **पूर्वस्य** पूर्वोत्पन्नस्य प्रदेशनं **प्रदेशः** संज्ञाप्रतिलम्भो **नोपपद्यते**। किंकारणम्? उत्पत्तिसहभूता हि सा, स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसंबद्धमेव द्रव्यमुत्पद्यते नित्यसंबद्धौ हि शब्दार्थौ इति **तदेतत्**सर्वथा सर्वाण्याख्यातजानि नामानीति शाकटायनमतं **नोपपद्यते**। तदनुपपत्तावस्मत्पक्षसिद्धिः कानिचिदाख्यातजानि नामानि कानिचिदनाख्यातजानीति[3]॥ (परिसमाप्तोऽयं गार्ग्यपक्षः)॥ २॥ (१३)

१. अत्र कारितं च यकारादिं च शुद्धं च सकारादिं चेति इतरस्य चेतरं चार्धमिति समुच्चयार्थाश्चकारा इति दुर्गः॥

२. अत्रायमप्यर्थः स्वरसतः प्रतीयते यथासौ शाकटायनः प्रवृत्तो न पदेषु स्थास्यति अपिचासौ वर्णानपि भेत्स्यति अनेकार्थांश्च कल्पयिष्यति। यो हि पदानभिनत्तस्य वर्णभेदने विशेषहेतुः को भविष्यति। तस्मादतिप्रसङ्गदोषापत्त्या नानेकधातुजानि नामानि नापि सर्वाण्याख्यातजानि नामानीति॥

३. नाख्यातजानि किंतु रूढान्येव तेषु तेष्वर्थेष्विति॥ कानिचिदित्युक्त्याऽन्यान्यपि सन्तीति सूच्यते। तथाच आख्यातजानीत्यनेन यौगिकानि अनयोरेव परस्परभेदाद्योगरूढानि यौगिकरूढानि चेति चतुर्विधानि नामानि। यत्रावयवार्थ एव बुध्यते तानि यौगिकानि यथा पाचकादीनि। यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेणार्थो बुध्यते तानि रूढानि यथा गोपदमण्डलादिपदानि। यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति तानि योगरूढानि यथा पङ्कजादिपदानि॥ तथाहि पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं

३ सन्तमर्थमाययति इति सत्यम्।

अथ शाकटायनपक्षेण समाधत्ते—

**यथो हि नु वा एतत् ॥**

यथेति वाक्योपादाने। यथा येन प्रकारेण। उकारोऽवधारणार्थः हीत्यसूयायाम् नुइत्येष हेत्वपदेशे वै इत्ययं यथोक्तपूर्वपक्षोपदेशार्थः। तथाचायमर्थः। येनैव प्रकारेणासूयिता ( असमर्था ) हेतवो गार्ग्यीयैरुक्तास्तेनैव प्रकारेण एतत् प्रत्यनुभाष्यप्रवक्तृधर्मेण समीकरिष्याम इति भावः. शाकटायनानाम् ॥ इत्येवं प्रतिज्ञाय गार्ग्यमतमनूद्य खण्डयति—

**तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम् । ***

**सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति ॥**

यथैतदुक्तं—यत्रेत्यादि तदेतत्प्रत्युच्यते—सर्वमित्यादिनेति पर्युपयुक्तस्तच्छब्दः। सर्वमेव प्रादेशिकं क्रियाजं नाम। किंततः? इत्येवं सत्यनुपालम्भ एष भवति। अयमाशयः। प्रदेशवाचिन आख्यातानुत्प्रेक्ष्य तदाश्रयौ स्वरसंस्कारौ यावद्भूम्यमनुविधेयौ। विभ्वीहि लक्षणगतिर्नैष शब्दापराधो नाप्यस्माकं किंतु भवत एव, मन्दशिक्षितत्वात्। यथाचाहुः। न चैष स्थाणोरपराधो यदेनमन्धो न पश्यतीति। येन त्वं प्रदेशवाचिनि धातौ विद्यमानावपि स्वरसंस्कारौ नानुविधातुं शक्नोषि स त्वं तावत्पुनः पुनः शिक्षस्वान्व्याकरणं यावच्छक्तिस्तवानुविधातुमिति ॥

**यथो एतद्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथा चक्षीरन्निति । ***

**पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषाम् ।**

यथा तक्षा परिव्राजको जीवनो भूमिज इति ॥

यथो एतत् यत्पुनरेतदुक्तं—यः कश्चेत्यादि ( अनेकेषामेकक्रियायोगादेकनामता प्रसज्येतेति तदर्थः ) तदेतत्प्रत्युच्यते—पश्याम इत्यादिना। त्वमपि पश्यसि वयमपि च, पश्यामः समानकर्मणां तुल्यकर्मणामपि सतां(कर्मकर्तॄणां)मध्ये नामधेयप्रतिलम्भस्तत्कर्मकृतसंज्ञाप्राप्तिरेकेषामेव केषांचिदेव नियमतस्तत्कर्म कुर्वन्ति इति। नैकेषां न सर्वेषां तत्कर्मकर्तॄणां, तद्यथा तक्षन्कश्चित् ( वर्धकिः ) तक्षेत्युच्यते अन्यस्तक्षन्नपि न तक्षेत्युच्यते। नात्राहमुपलब्धव्यो लोकनियम एवायम्। एवं परिव्रजतीति परिव्राजकः सन्न्यासी एव, न पुनः सर्वोऽपि कार्यवशात्प्रयान्गृहादिभ्यः। एवं जीवन इक्षुरसः शाकजातिर्वा। भूमिजोऽङ्गारकः (कुज-) एवेत्येवमन्यत्राप्यूह्यम्। उदाहरणस्य दिङ्मात्रप्रदर्शकत्वात्तदेतदाह—इतीति। इतिशब्दः आद्यर्थः ॥

**एतेनैवोत्तरः प्रत्युक्तः ॥**

उत्तरः यावद्भिर्भावैः संप्रयुज्यते तावद्भ्यो नामधेयप्रतिलम्भः स्यादित्येषः। स प्रत्युक्तः खण्डितः। अयं भावः। पश्यामोऽनेकक्रियायुक्तानामपि एकक्रियाकारितो नामधेयप्रतिलम्भो भवति। तद्यथा तक्षादिः। तक्षादिर्ह्यन्यान्यपि कर्माणि करोत्येव न पुनस्तस्य तत्कृतो नामधेयप्रतिलम्भोऽस्ति। तस्मादेकस्यानेकक्रियायोगेऽपि, अनेकस्यैकक्रियायोगेऽपि वा व्यवस्थित एवं शब्दनियमः स्वभावत इव लोके इति न व्यवहाराप्रसिद्धिदोषः शङ्कनीय इति ॥

**यथो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति । ***

**सन्त्यल्पप्रयोगाः कृतोप्यैकपदिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति ।**

---

बोधयति एवमन्यत्र। यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तानि यौगिकरूढानि यथोद्भिदादिपदानि। तत्रहि ऊर्ध्वभेदनकर्ता तरुगुल्मादिरपि बुध्यते, यागविशेषोऽपीत्येवमन्यत्राप्यूह्यम् ॥

१. गर्गगोत्रापत्यछात्रैस्तन्मतानुयायिभिरित्यर्थः। अत्र गर्गाणां छात्रा इत्यर्थे "यञिञोश्च" (पा० २–४–६४) ति प्राप्तं यञोलुकं "गोत्रेऽलुगची—" ( पा० ४–१–८९ ) ति "वृद्धाच्छ" ( पा० ४–२–११४ ) इति छे विवक्षिते बाधते। "आपत्यस्य चे—" ( पा० ६–४–१५१ ) ति यलोपः।

२. अयंच पूर्वपक्षसमीकरणाभिनयः। पूर्वपक्षस्वरूपानुवादो वा तथार्थकस्यैवोत्तरत्राप्यभिसंबन्धात् तथात्वे च प्रत्युच्यत इति क्रियाध्याहार्या योत्तरत्राप्युपयोक्ष्यते ॥

३. प्रवक्तृत्वेन प्रकृष्टवक्तृत्वेन प्रवचनकर्तृत्वेन वा ॥

४. महाभाष्ये पतञ्जलिचरणैरुपन्यस्तोऽयं लोकानामाभाणकः। अत्रापि स्फुटीभविष्यत्युपरिष्टान्मूले। ( निरु. १–५–२ ) ॥

५. मन्दशिक्षितत्वेन ॥

६. "निपात एकाजि"–( पा० १–१–१४ ) ति प्रगृह्यत्वात्प्रकृतिभावेन ( पा० ६–१–१२५ ) असन्धिः ॥

१. त्वं च वयं चेति वयं "त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यत" इत्यस्मदः शेषः ॥

२. निपातेनामुना कर्मण उक्तत्वान्न द्वितीया नामधेयप्रतिलम्भात्।

३. एकशब्दोऽत्र साधारणवचनः। पूर्वत्र तु प्रधानवचनः। यथाहुः 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यत' इति ॥

* गार्ग्यमतानुवादसूचकमेतत् ॥ एवमुत्तरत्रापि बोध्यं सूत्रेष्वनुपदम् ॥

४. परित्यज्य सर्वं रुदन्तं पुत्रादिकं व्रजति गच्छत्येवेति ण्वुल् ( पा० ३–१–१३३ ) ॥

५. प्रयाणं ( प्रस्थानं ) कुर्वन् ॥

६. जले तु क्लीबम्। "जीवनं भुवनं वनमि"त्यमरः ॥

७. "ज्वलितिकसन्तेभ्य" ( पा० ३–१–१४० ) इत्यत्र यथा ॥

**यथो एतद्यत्पुनरेतदुक्तं यथा–चापीत्यादि** । अत्र ब्रूमः[१] । **सन्त्येवाल्पे प्रयोगाः** प्रतीतार्थकाः केचित् **कृतः** कृत्प्रत्ययान्ताः शब्दा **अप्यैकपदिका** एकपदप्रकरणोक्ताः । तद्यथा । **व्रततिर्वृणोतेस्तनोतेश्च** ( स्वा० त० उ० ) क्तिच् । "अनुदात्तोपदेशे"–( पा० ६–४–३७ ) त्यनुनासिकलोपः । वृणोतेरगागमश्च बाहुलकात् । तथाच व्रततिर्वरणाच्च तननाच्चेति ( नैग० का० ६–५–६ ) वल्ली । "वल्ली तु व्रततिर्लते"त्यमरः । **दमूना** दममना दानमना वा दान्तमना वापिवा दम इति गृहनाम ( निघ० ३–४ ) तन्मनाः स्यादिति ( नैग० का० ४–१–४ ) । दाम्यतीति दमूनाः । दमु उपशमे ( दि. प० ) अन्तर्भावितण्यर्थात्[२] "दमेरुनसिः" ( उ. ४–२३५ ) पृषोदरादित्वाद्दीर्घः । "दमूना दमुनाः प्राचीनवर्हिशुचिवर्हिषौ" इति नामनिधानम् । दम इति घञन्तः "नोदात्तोपदेशस्ये" ( पा० ७–३–३४ ) ति वृद्धिनिषेधः । दाम्यते शाम्यतेऽनेन शीतादिरिति । ददातेर्भावे ल्युटि दानम् । तत्र ( दमे दाने वा ) मनो यस्य । यद्वा दमेर्निष्ठायां "वा दान्ते–"( पा० ७–२–२७ )त्यादिना निपातितेन दान्तशब्देन बहुव्रीहिर्दान्तं मनो यस्य असौ । अत्र दम–दानदान्तानां दभावो मनस उपधाया ऊकारश्च पृषोदरादित्वात् ॥ अग्निरतिथिर्वा दमूनाः । "सप्तार्चिर्दमुनाः[३] शुक्रश्चित्रभानुर्विभावसु"–रित्यमरः । निगमश्च "दमूना अतिथिर्दुरोणे ( ऋ० सं० ३–८–१८–५ ) । **जाट्यो** जटावाञ्जटसंघाते ( भ्वा. प. ) बाहुलकात्कर्तरि "ऋहलोर्ण्यत्" ( पा० ३–१–१२४ ) । **आट्णारोऽ**टनशीलः । अट गतौ ( भ्वा. प. ) औणादिकोयूणारञ् बाहुलकात्ताच्छील्यविशिष्टे-कर्तरि "लोपो व्योर्वली"ति ( पा० ६–१–६६ ) यलोपः । ञित्युपधावृद्धिः । भृशमत्यर्थमटतीति सः । सततकरणं हि ताच्छील्यम् ॥ एवं **जागरूको** जागरणशीलः । "आक्वेस्तच्छीले"त्यधिकारे "जागर्तेरूकः" ( पा. ३–२–१६५ ) इति कर्तर्यूके गुणः । **दार्विहोमी** दर्व्यां जुहोतीति । हु दानादनयोः ( जु. प. ) मिनिर्बाहुलकादौणादिकः । इत्येवंप्रतीतार्थां अन्येऽपीति ॥

**यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति । ***

**भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः ॥**

**यथो एतत्** यत्पुनरेतदुक्तं–**निष्पन्न** इत्यादि । अत्रापि ब्रूमः । युक्तं ते कुर्वन्ति । **भवति हि** ( निश्चयेन ) **निष्पन्ने** सिद्धेऽभिव्याहारे नाम्नि योगस्य अवयवार्थस्य परीष्टिः परीक्षणम् । कथंचानुत्पन्नः सन्नभिधानयोगः परीक्ष्येत ॥

तत्र यदुक्तम्—

**प्रथनात्पृथिवीत्याहुः क एनामप्रथयिष्यत्किमाधारश्चेति । ***

**अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः ॥**

**३ खं. ॥**

अत्र तावद्ब्रूमः । **प्रथना**दिति प्रथितेयं केनचिदतः **पृथिवी**त्युच्यते । कथमप्रथिता सतीयं पृथिवीत्वमापेति । यदि

---

१. प्रथमतस्तुशब्दस्वाभाव्यमेतद्यत्तथा सर्वाण्याख्यायन्ते यथा यथा प्रतीर्थानि भवन्ति । न तत्राहमपराध्ये भवतो नापि च शास्त्रम् । यथावस्थितानां शब्दानामन्वाख्यानमेव क्रियते । नाहं शब्दानां कर्ता । य एषां प्रयोक्तारस्तानेवोपालभस्व निराकुरु वा यदि शक्नोषि । अथ कस्मात्पुनः कानिञ्चिदेवाख्यायन्ते लोके ? तदप्यभिधानस्वाभाव्यमेव । कानिञ्चित्प्रतीतार्थानि कानिञ्चिदप्रतीतार्थानि । तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्तव्यानि । एतदेव हि शास्त्रस्य शास्त्रत्वं यदप्रतीतार्थान्यपि यथा प्रकृत्यादिना प्रतीतार्थानि स्युस्तथैतान्याचक्षीरन्निति । आख्यायन्त एव कानिञ्चित् । कानिञ्चित् शास्त्रेण प्रतीतार्थानि क्रियन्ते । रूढ्यनुविधायित्वाल्लक्षणस्य गुणतस्तेषु लक्षणम्–अपिच–( इति दुर्गः ) ॥

२. अतएवोक्तं सि. कौ. उपशमे इति ण्यन्तस्य तेन सकर्मकोऽयं नतु शमिवदकर्मक इति ॥

३. अयंच दीर्घमध्योऽपीत्युक्तमुपरि द्विरूपं नामनिधानम् ॥

४. केञ्चित्तु मत्वर्थे ण्यदिति व्याचख्युः[1] । यद्यपि "तद्धिता" ( पा. ४–४–७६ ) इत्यधिकारसूत्रे बहुवचननिर्देशेनाविहिता अपि केचनेन् टिकन्नादयो भवन्ति तेनाल्पः शकटः शकटिः । अल्पो ग्रामो ग्रामटिका[1] इत्येवं सत्त्वाल्पत्व[2]विवक्षया स्त्रीत्वाट्टापि सिध्यति । एवमिहापि कथंञ्चित्सिद्धिरुद्भाविता स्यात्तथापि कृतोऽप्यल्पप्रयोगाः कृतोऽप्यैकपदिका इति मूलविरोधादुपेक्ष्यं तत् ॥ तुष्यन्तु "अभिधानलक्षणाः कृत्तद्धितसमासा" इति पतञ्जल्युक्त्या कथञ्चित् ॥

१. अस्य सन्तीतिपूर्वोक्तेनाभिसंबन्धः । अत्रापिना–येऽप्यप्रतीतार्थास्तेऽपि शास्त्रेण प्रतीतार्था एव कर्तव्याः । एतदेव हि शास्त्रस्य शास्त्रत्वं यदप्रतीतार्था अपि प्रकृत्यादिप्रदर्शनेन यथा प्रतीतार्थाः स्युस्तथैनानाचक्षीरन्निति–सूचितम् ॥

---

1. जाट्यो जटावानिति सायणभाष्यमुपादायैतत्केषांञ्चिद्व्याख्यानम् ॥

1. तथाच ह० नाटकम्—

"न्येक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ १ ॥"

इति ॥

2. तथाच "एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्व"मिति महाभाष्यं पातञ्जलमुपादायाचेतनखट्वावृक्षादिसाधारणं सत्त्वादीनां त्रिगुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यं लिङ्गमभ्युपेतमभियुक्तैः । तच्चार्थनिष्ठं केवलान्वयीति नागेशः । शब्दनिष्ठं तदित्यन्ये ॥

नैवमभ्युपैषि तदापि प्रतिब्रूमः। **अथेति** पक्षान्तरे अथवेत्यर्थकम्। **वै** निश्चयार्थः। **चेदिति** यद्यर्थः। यद्यप्यन्यैरप्रथिता तथापि पृथुदर्शनयोगात्तथोच्यत इति ॥ ३ ॥

**अथाप्येवं सर्वे एव दृष्टप्रवादा उपालभ्यन्ते ॥**

**अपि**चैवं सति **सर्व एव** दृष्ट्वा प्रवदन्तीति **दृष्टप्रवादाः** "कर्मण्यण्" (पा० ३–२–१) **उपालभ्यन्ते** उपालब्धा (निन्दिता) भवन्ति न केवलमहमेव। योऽयं दृष्ट्वा ब्रवीति स दोष एव ॥

**यथो एतत्पदेभ्यः पदेतरार्धान्त्संचस्कारेति।* योऽनन्विते ऽर्थे संचस्कार स तेन गर्ह्यः। सैषा पुरुषगर्हा ॥**

यत्पुनरेतदुक्तं–**पदेभ्य** इत्यादि। अत्र ब्रूमः। **योऽनन्विते** शब्देनाभिधेये**ऽर्थे संचस्कार** अर्थात् अननुगतमसंबद्धं, **स तेना**संबद्धेन संस्कारेण **गर्ह्यो** गर्हणीयः "ऋहलोर्ण्यत्" (पा० ३–१–१२४) न पुनराचार्योऽननुगतधातुभिरनेकैरेकाभिधानगतानर्थांस्ततः संचस्कार विद्याप्राकर्ष्येण न मौर्ख्येन। **सैषा** तदभिप्रायापरिज्ञानात्**पुरुषगर्हा** भवति। पुरुषो हि कश्चिदशिक्षितत्वादेकधातुजमपि नाम न जानाति किं पुनर्बहुधातुजम्। अपिच सन्ति लोके तादृशाः पुमांसो ये कारकहारकादीन्यपि प्रकटक्रियाणि सन्ति कतमेभ्यो धातुभ्य एतान्यभिनिष्पाद्यन्त इति न जानते। एष पुरुषदोषो न शास्त्रदोषो यदनुगमयितुं शब्दैरर्थो न शक्यते इति ॥

**यथो एतदपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति।***

१. तुष्यतु दुर्जन इति न्यायेनेदमुच्यते। अयमर्थोऽप्रथिताचेदप्रीति पदकदम्बस्वारस्यात्प्रतीयते ॥

२. एतच्चार्धनिर्वचनं, व्युत्पत्तिस्तु दृष्टं प्रवदन्तीति ॥

३. कस्यांञ्चिद्व्यक्तौ क्रोधपूर्वकं दोषप्रतिपादनमुपालम्भः।

४. एतेन यदुक्तमननुगत पदार्थे संचस्कार शाकटायनः "सन्तमेव ह्यर्थमाययति गमयतीति सत्यमित्येव"मिति तत्सत्यमेव शाकटायनमतम्। अपिच रूढिशब्दव्युत्पत्तिर्मन्त्रेष्वपि दृश्यते। यथाच लक्षणं तथैव लक्ष्यं प्रवर्तितुमर्हति। इतरथा हि कस्य तल्लक्षणं स्यात्। तथाहि यदसर्पत्तत्सर्पिरिति मन्त्रः'। यन्नवनीतमभवदिति मन्त्रः। अपिच ब्राह्मणेनापि अनेकधातुजान्येव कृत्वा निरुच्यन्ते। तत्र मन्त्राभिधानानि यत्परिज्ञाने च फलमुपपद्यते। आह (श० ब्रा० १४–८–४–१) "तदेतत्त्र्यक्षर ँ हृदयमिति, हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद। द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद। यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद" इति ॥ एवं हरतेर्ददातेरेतेर्हृदयशब्दः तदर्थफलोपदर्शनार्थं ब्राह्मणेनैवं निरुक्तः। तच्च नः परं प्रमाणं, तस्माच्छाकटायनस्तदनुदृश्य सम्यगेव कृतवान्यदनेकैर्धातुभिरेकमभिधानं निरुक्तवान् इति शाकटायनाभिप्रायमाह दुर्गः ॥

**पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषाम्। यथा बिल्वादो लम्बचूड इति ॥**

यत्पुनरेतदुक्तम**परस्मा**दित्यादि। अत्र ब्रूमः। **पश्या० केषाम्**। सष्टोऽर्थः ॥

उदाहरति—**यथेति**। पश्चात्कालिकयापि चूडालम्बनक्रियया, भविष्यता योगेन बिल्वादनक्रियया च, पूर्वोत्पन्नस्य सत्त्वस्य (पदार्थस्य) नामधेयप्रतिलम्भ उपपद्यमानो दृष्टः ॥ बिल्वं निर्वक्ति—

**बिल्वं भरणाद्वा भेदनाद्वा ॥(१४) ४ ख. सू. ॥**

इति या. मु. प्र. निरु. शा. नैघं. का. प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥ * ॥

**बिल्वं** कस्मात्? **भरणात्**। भृतं हि तद्भवति बीजानां, बिभर्ति वा दुर्भिक्षादौ भक्षयितारमिति भरणा**द्भेदनाद्वा**। भक्षणकाले हि तदवश्यं भेद्यते। ततः प्राक् भविष्यत्क्रियया नामोपलम्भः कथमिति युक्तः शास्त्रार्थः ॥ ४ ॥ (१४)

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघण्टुककाण्डे प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥ * ॥**

---

## अथ प्रथमाध्यायस्य पञ्चमः पादः।

### (अथ शास्त्रारम्भप्रयोजनाधिकारः)

एवं नामाख्यातोपसर्गनिपातानां प्रविभागेनावस्थितानां लक्षणं सपरिकरं सोदाहरणमुक्त्वा शास्त्रारम्भप्रयोजनं प्रतिजानीते—

**अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते ॥**

शास्त्रप्रयोजनारम्भेऽय**मथ**शब्दः द्वितीयं शास्त्रारम्भप्रयोजनमधिकरोतीति। **अपीति** संभावने। अपिपदेषु विभागेनावस्थितेषु लोके वेदे वा, अपि**मन्त्रेषु** वाक्यभावेनावस्थितेषु यः समस्तोऽ**र्थ**स्तस्मिन् (तद्विषयकः) **प्रत्ययो** विशेषावधारणमिदं निरुक्तशास्त्र**मन्तरेण** विना, "अन्तराऽन्तरेण युक्ते"–(पा० २–३–४) इति द्वितीया ॥ **न विद्यते** न भवति ॥

**अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः ॥**

**अप्रतियतो**ऽप्रतिपद्यमानस्यानवधृतार्थस्येति यावत्। **नात्यन्तं**–नैकान्तिकेन एकान्तं नाम निश्चयः स एवैकान्तिकं विनयादित्वात्स्वार्थे (पा. ५–४–३४) ठक्। नैकान्तिकेनानिश्चयेन **स्वरसंस्कारयोरुद्देशः** स्ववधारणं नास्तीति शेषः। किं कारणम्? ह्यनवधृतार्थः स्वरसंस्कारावबधारयितुं शक्नुयात्। अर्थवशेन हि स्वरसंस्कारावबतिष्ठेते ॥

**तदिदं विद्यास्थानं, व्याकरणस्य कार्त्स्न्यम् ॥**

तदिदमुपक्रान्तं निरुक्तशास्त्रं **विद्यास्थानं** स्वातन्त्र्येण-त्यादिः। विद्याया ब्रह्मविद्याया वेदार्थज्ञानस्येति यावत्। स्थानम-

साधारण उपायः । अर्थपरिज्ञानस्यैतदधीनत्वात् अर्थवशगत्वाच्च स्वरसंस्कारयोरिदं **व्याकरणस्य कार्त्स्न्यं** साहाय्येन कृत्स्नभावं पूर्णतां 'करोतीति' शेषः । व्याकरणेन हि स्वरसंस्कारौ चिन्त्येते । तस्मादपरिसमाप्तमेव तावत् व्याकरणं यावन्निरुक्तशास्त्रं नाधिगतमिति । नह्यनैरुक्तोऽर्थमवधारयितुमलं भवति । नानवधृतार्थः स्वरसंस्कारतत्त्वं जानीयादिति ॥

ननु व्याकरणस्य कार्त्स्न्यमेतत्करोतीत्युक्ते तच्छेषमेवैतद्गुणादिवदिति–गुणशास्त्रत्वमस्योक्तं भवति । ततश्च स्वातन्त्र्येण विद्यास्थानत्वमस्योक्तं विरुध्येतेति गुणशास्त्रत्वं निराचष्टे—

**स्वार्थसाधकं च ॥**

यथा कश्चिल्लोके स्वार्थमपरिहाय परानुग्रहं करोति **स्वार्थं** च **साधयत्येवमिदं** स्वार्थाजहद्वृत्त्याऽऽनुपङ्गतो व्याकरणस्य कृत्स्नतां करोति । उणादयस्तु "उणादयो बहुलम्" ( पा० ३–३–१ ) इत्युक्तेस्तन्त्रान्तर्भूता एवेति तस्य गुणशास्त्रत्वं युक्तमेव । तस्मात्स्वतन्त्रमेवेदं विद्यास्थानमर्थनिर्वचनात्मकं निरुक्तशास्त्रम् । व्याकरणं तु लक्षणप्रधानम् इति विशेषः ॥

**( मन्त्राणामनर्थकत्वम् )**

**यदि मन्त्रार्थप्रत्ययाय अनर्थकं भवतीति कौत्सः ॥**

**यदि मन्त्रार्थस्य प्रत्ययाय** ज्ञानायेदं शास्त्रमारभ्यते तर्हि ( एतदर्थमारभ्यमाणमिदं निरुक्तशास्त्रम् ) **अनर्थकं भवति** नास्त्यर्थः प्रयोजनमस्येति **कौत्स** 'आचार्यो मन्यते' इति शेषः ॥ कुतः ?

**अनर्थका हि मन्त्राः ॥**

**हि** यतो **मन्त्रा अनर्थका**स्तस्मान्नारब्धव्यमिदमित्येवं कौत्सो मन्यत इति पूर्ववाक्यस्यैव शेषः ॥

**तदेतेनोपेक्षितव्यम् ॥**

**तत्**कौत्सोक्त**मेतेन** नैरुक्तेन उपगम्य मन्त्राणामर्थवत्त्व**मीक्षितव्य**मालोचितव्यम् । यद्वा वेदं शास्त्रं चोपगम्येक्षितव्यमयं सत्यं वदति नवेति ॥

स आह—

**नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति ॥**

मन्त्रा इत्यनुवर्ततेऽर्थवशात् । **नियता** निरूढा सर्वदैवैकरूपा **वाचोयुक्तिः** शब्दयोजना येषु ते । "वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु"–( पा. ६–३–२१ वा० )ति षष्ठ्या अलुक् । तदेव विवृणोति–**नियतानुपूर्व्या इति । नियतं** निश्चितमानुपूर्व्यं पदप्रयोगपरिपाटी येषां ते तथाभूता मन्त्रा **भवन्ति।** "अग्न आयाहि वीतये" ( सा. वे. सं. १–१–१–१ ) इति मन्त्रेण विभावसो आगच्छ संपातायेत्येवमर्थ उच्यते । अत्र नियता आनुपूर्वी पदप्रयोगस्य । तथा अग्न आयाहीत्येवोच्यते न पुनरायाह्यग्ने इति, विभावसो आगच्छेति वा । इहहि लोकेऽर्थवतां शब्दानामनियमेन पर्यायवचनता पौर्वापर्यं च दृष्टं, तद्यथा गामभ्याज भ्याजगां, गोणीमभ्याज अभ्याज गोणीमित्यादि । नच तथा मन्त्रेषु । तथाचार्थवत्प्रयोगवैधर्म्यात्पश्यामोऽनर्थका मन्त्रा इति । तथाचानुमितिप्रयोगः । मन्त्रा अनर्थकाः नियतानुपूर्वीकत्वात् यन्न नियतानुपूर्वीकं तन्नानर्थकं ( किंत्वर्थवत् ) यथा लोके–आहर पात्रं पात्रमाहरेत्यादि ॥ इति ( कौत्समतम् ) ॥

हेत्वन्तरमाह—

**अथापि ब्राह्मणेन रूपसंपन्ना विधीयन्ते ॥**

**अथ**–अयमपरो हेतुरानर्थक्ये मन्त्राणाम् । यदिमे **रूपसंपन्ना** रूपेण स्वेन लिङ्गेनैव संपन्नाः स्वमात्मानं बोधयितुं समर्था **अपि** सन्तो **ब्राह्मणेन** शतपथादिना **विधीयन्ते** तेषु तेषु कर्मसु । यदीमेऽर्थवन्तोऽभविष्यंस्तदा न ब्राह्मणेन तेषु तेषु कर्मसु व्यधास्यन्त । विहिताश्च । तद्यथा—

"उरुप्रथस्वेति प्रथयति । प्रोहाणीति प्रोहति" ॥ ( श. ब्रा. १–१–६–८ )

**उरुप्रथस्वेति** प्रथनलिङ्गो मन्त्रो विहितः प्रथनकर्मणि । तथा **प्रोहाणी**ति ब्राह्मणं द्रोणकलशप्रोहणविधौ "इदमहमात्मानं प्रोहामि" प्रोहामि–प्राञ्चं प्रेरयामीति प्रोहणलिङ्गो मन्त्रो विहितः ॥ तस्माल्लिङ्गसंपन्नविधानादनर्थका मन्त्रा इति युक्तमुत्पश्यामः ॥ ननु ब्राह्मणस्यैव किमिति नानर्थक्यमुरीक्रियते गुणत्वाद्गुणे त्वन्याय्यकल्पनेति न्यायान्मन्त्रास्तु मुख्यतयाऽवस्थिता इति कथं तेषामानर्थक्यम् ? इति चेन्न । ब्राह्मणस्यानर्थक्ये ह्यभ्युपगम्यमाने देशकालकर्तृदक्षिणादि–कर्माङ्गभूतं कुत उपलभ्येत । अपिचास्यानर्थक्येऽभ्युपगम्यमाने वेदैकदेशस्य मन्त्रस्यात्यन्तमेवानर्थकत्वमभ्युपगतं स्यान्नहि ब्राह्मणस्य विधिस्तुत्यर्थाद्दतेऽर्थवत्तास्ति । मन्त्राणां पुनर्वाच्यवाचकत्वेनानर्थकानामपि सतां विनियोगमात्रेणार्थवत्ता स्यात् । विधेयत्वाच्चानर्थका मन्त्राः । विधायकत्वाच्च ब्राह्मणमर्थवत् । एतेन मुख्यत्वं मन्त्राणां, ब्राह्मणस्य तु गुणत्वमित्यपि निरस्तं वेदितव्यम् ॥

हेत्वन्तरमाह—

---

१. "उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्" ( य. वा. सं. १–२२ ) यजुरिदं पुरोडाशं प्रत्युच्यते । हे पुरोडाश ! त्वं स्वभावत एव उरु विस्तीर्णं यथा स्यात्तथा प्रथते प्रसरतीत्युरुप्रथा विस्तीर्णप्रथनस्वभाव इतीदानीमपि उरु अधिकं प्रथस्व विस्तारयथाः स्वात्मानम् । किंचायं ते यज्ञपतिर्यजमानः प्रजापशुहिरण्यादिभिरुरुप्रथतामधिकं विस्तीर्यताम् ॥ "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् । वड्रोरुविपुल"–मित्यमरः ॥

२. पुरोडाशप्रथनविधौ ॥

३. तथाहि—मन्त्रब्राह्मणयोर्वेदनामधेयम् । ( आश्व० गृह्यम् ) इति सूत्रे मन्त्राणामभ्यर्हितत्वेन पुरस्तात् प्रयोगो मुख्यतां व्यञ्जयतीति वादिनोऽभिमतम् । तथाच वार्तिकम् "अभ्यर्हितं च"–(पा.२–२–३४) ति अल्पाच्तरत्वात्पूर्वप्रयोगो मन्त्रस्येति प्रतिवादिनः । तथाच सूत्रम् "अल्पाच्तरम्" ( पा० २–२–३४ ) इति ॥

## अथाप्यनुपपन्नार्था भवन्ति ॥

अथ अयमपरो हेतुरानर्थक्ये मन्त्राणां यदिमे **अनुपपन्ना अर्था** येषां ते तथाभूता **भवन्ति** । य एष्वर्था उपलभ्यन्ते न त उपपद्यन्ते । तद्यथा—

**"ओषधे त्रायस्वैनम् । स्वधिते मैनं हिंसीरि"त्याह हिंसन् ॥**

**'हे ओषधे त्रायस्व एन'**–(य. वा. सं. ४–१) मित्याह । प्रजापतेरिदमार्षम् कुशतरुणो देवता स एवौषधे इत्यनेन संबोध्यते । क्षुरेण छेत्स्यन्तृणेन ( कुशेन ) शिखाम् ( जूटिकाम् ) अन्तर्दधाति तत्रायं मन्त्रो नियुक्तः । हे **'ओषधे'** कुशतरुण ! **'त्वमेनं'** यजमानं **'त्रायस्व'** क्षुराद्रक्षेति तदर्थः । नचौषधय आत्मानमपि त्रातुं समर्थाः किंपुनर्यजमानम् । एवं "स्वधिते मैनं हिंसी"–( य. वा. सं.४–१ ) रित्याह । इदमपि प्रजापतेरार्षं क्षुरो देवता स एव स्वधिते[1] इत्यनेन संबोध्यते । हे **'स्वधिते'** क्षुर ! **'एनं'** कुशतरुणं यजमानं वा **'मा हिंसी'**रिति तदर्थः । को ह्येवं वदेदात्मनैव हिंसन्[2] । उक्त्वा वा स्वयमेव हिंस्यात् । हिनस्ति च । लोके यान्येवंविधानि वाक्यानि तान्युन्मत्तप्रभृतीनामिति कृत्वाऽनर्थकान्येव भवन्तीतीहापीमान्यनर्थकान्येवेत्युपपद्यते ॥ तस्मादनर्थका मन्त्राः ॥

हेत्वन्तरमाह—

## अथापि विप्रतिषिद्धार्था भवन्ति ॥

इति[3] । अन्यस्यान्येन विरुद्धार्थेन प्रतिषेधो वारणं **विप्रतिषेधः** परस्परव्याघातस्तद्विशिष्टा विप्रतिषिद्धास्ते अर्था येषां ते **विप्रतिषिद्धार्थाः** परस्परविरुद्धार्था **भवन्ति** । तद्यथा—

**"एक एव रुद्रोऽवतस्थे न द्वितीयः" । "असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्" । "अशत्रुरिन्द्र जज्ञिषे" । "शतं सेना अजयत्साकमिन्द्रः ॥ इति ॥**

एक एवेत्यस्य "रणे निघ्नन्पृतनासु शत्रून् । संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ्जनान्संचुकोचान्तकाले" ( य. वा. सं० ) इति शेषः । रुद्रस्तुतिरेषा । **'अवतस्थे'** स्थितवान् । **'रणे'** रणाय रणार्थं । "निमित्तात्कर्मयोगे" ( पा. २–३–३६ वा० ) इति सप्तमी । **'ना'**न्यो **'द्वितीयः'** कश्चिदस्तीति रुद्रबहुत्वप्रतिषेधः । कथमवतस्थे **'पृतनासु'** सेनासु "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमू"रित्यमरः । **'शत्रून्'** शातयितव्याँल्लोकानामरातीन् **'नि'**-निश्चयेन **'घ्नन्'** हिंसन् ॥ किंच स एक एव स्रष्टा पालयिता संहर्ता चेत्याह–**'संसृज्येति'** । **'विश्वा'** विश्वानि ( सर्वाणि ) **'भुवनानि'** "सुपां सुलुगि"–( पा. ७–१–३९ ) ति जसः स्थाने डा । **'संसृज्य'** सम्यक्सृष्ट्वा **'गोप्ता'** रक्षिता सृष्टिकाला[1]नन्तरमेव पालयिता च स्थितिकाले । **'अन्तकाले'** प्रलयकाले **'जनान्'** लोकान् **'प्रत्यङ्'** सृष्टिप्रातिलोम्येन **'संचुकोच'** संकोचयति । वर्तमाने लिट् छान्दसः ॥ अथैतद्विप्रतिषिद्धं ( विपरीतं ) प्रब्रवीति **'असंख्याता० भूम्याम्'** अस्य–"तेषां सहस्रयोजनेऽव धन्वानि तन्मसि" ( य. वा. सं. १६–५४ ) इति शेषः । शतरुद्रियेऽनुष्टुप् । प्रजापतेरार्षम्[2] । **'असंख्याता'** असंख्यातानि' **'सहस्राणि'** अमिता[3] **'ये रुद्रा भूम्यामधि'** भूमेरुपरि स्थिताः । **'तेषां'** रुद्राणां **'धन्वानि'** धनूंषि "छन्दस्यपि दृश्यत" ( पा. ७–१–७६ ) इति दृशिग्रहणाद्[4]न्येषामप्यन्यत्राप्यनङ् । **'सहस्रयोजने'** सहस्रं योजनानि यस्मिंस्तादृशे सहस्रयोजनव्यवहिते पथि मार्गे वय**'मवतन्मसि'** अवतनुमोऽवतारयामः । अपगतज्यानि कृत्वाऽस्मत्तो दूरं क्षिपाम इति तदर्थः ॥

---

१. यद्यपि कोशे "द्वयोः कुठारः स्वधितिः परशुश्च परश्वध" इति कुठारस्य संज्ञामाह स्वधितिरिति । तथापीह छेदनसाधनत्वसाम्याच्छुरे प्रयुज्यतेऽजहत्स्वार्थलक्षणया । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदमजहत्स्वार्थलक्षणया दध्युपघातके श्वादावपि वर्तते । ये केचन दध्युपघातकास्तेभ्यो दधि रक्ष्यतामित्येव वक्तुस्तात्पर्यात् ॥

२. छिन्दन् । छेदनं च कुशतरुणस्यैव निषिध्यते, विधीयते च शिखायाः । तथा च कात्यायनः "यूपवत्कुशतरुणं क्षुरेण चाभिनिधाय छित्वे–"। ८।२।११ ति ॥ पश्वर्थयूपस्य यथा छेदे मन्त्र एवमत्रापि तृणान्तर्धानं क्षुरस्थापनं च मन्त्रद्वयेन कर्तव्यमिति सूत्रार्थः तथाचैनमिति यजमानाभिधानं कुशतरुणसम्बन्धात् । शिखाद्वारको हि तस्य सः ( सम्बन्धः ) शिखां छिन्दन् कुशतरुणं यजमानं वा मा हिंसीरिति स्फुटोऽर्थः ॥

३. इतिशब्दोऽयं हेत्वर्थः । 'इतिहेतुप्रकरणप्रकाशादिसमाप्तिष्वि'त्यमरः । तथाचायं प्रयोगः । मन्त्रा अनर्थकाः परस्परविरुद्धार्थत्वात् । यद्यत्परस्परविरुद्धार्थं तत्तदनर्थकं यथा लोके ॥ तदेतदुपपादयति—अन्यस्येत्यादिना— ॥

---

१. "समानकर्तृकयोः पूर्वकाले" ( पा० ३–४–२१ ) इति हि क्त्वाऽव्यवहितपूर्वकाल एव विधीयतेऽसतिबाधके ॥

२. रुद्रस्तुतिरेवैषा तावदेतानभिष्टुमो यावत्ततानि तानि धनूंषीति स्तोतुरनुध्यानम् । अनेनार्पेण चाग्निचयनेऽर्कपर्णेनाजाक्षीरमिश्रा गवेधुकाः ( मुन्यन्नविशेषाः ) सप्तकृत्व उत्तरस्यां श्रोणावन्त्यायामिष्टकायां हूयन्ते ॥

३. नास्ति संख्यातं संख्यानं परिगणनं येषां ते, इति सहस्राणीति च बहुत्वोक्त्याऽपरिमितत्वमनन्तत्वमुक्तं भवति । तथाहि "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययो"रित्यभिधानबलेन सहस्रमित्येव भवितुमर्हति "सहस्रं शाखा ह्यर्थतो वेद शबर" इत्यत्र यथा । ततश्च सहस्रं च ३ इत्येवमेकशेषे सहस्राणीति संभवतीति ॥

४. "अस्थिदधी"त्यादिसूत्रानन्तरमस्य विधिः । तद्धि टादावच्येव लोके विधीयते । वेदे पुनरस्थ्यादिभिन्नानां टादिभिन्नेऽप्यच्यनङ् भवतीति भावः ॥

एवम् अशत्रुरिन्द्र जज्ञिषे-अस्य "त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम्" इत्यादिः । "विश्वं पुष्यसि वार्यं तं त्वा परिष्वजामहे नभन्तामन्यकेषां ज्याका अधिधन्वसु"-( ऋ. सं. ८-७-२१-२ ) इति शेषः । एतयाऽतिच्छन्दसा इन्द्रं तुष्टाव सुदाः पैजवनः । षोडशिनि शस्त्रे विनियुक्ता । हे **'इन्द्र !'** त्वं **'सिन्धून्'** स्यन्दनशीलान् जलपूरा**'नधराचः'** अधरमधोमुखमञ्चतो गन्दन् मेघा **'नवासृजो'** निरगमयः । यतस्त्वम**हिमन्तरिक्षे** गतं मेघ**'महन्'** अभिहतवानसि । यद्वा **'अहिम्'** आगत्य हन्तारं सर्वस्य जगत आवरकम् । अह व्याप्तौ ( स्वा. प. ) अह्नोति व्याप्नोति आकाशं दिगन्तराणि वेत्यहिः "सर्वधातुभ्य इन्" ( उ. ४. ११४ ) इतीन्प्रत्ययः । **'वृत्र'**मसुरम् । "अहिर्वृत्रासुरे सर्पे" इति मेदिन्यपि । **'अहन्'** हतवानसि अतस्त्वं**'मशत्रुः'** शत्रुरहितो **'जज्ञिषे'** जायसे । तथा **'विश्वं'** सर्वं **'वार्यं'** वरणीयं संभजनीयं धनं**'पुष्यसि'** वर्धयसि । वृङ् संभक्तौ "ऋहलोर्ण्यत्" ( पा० ३-१-१२४ ) **'तं'** तादृशं त्वा त्वां **'परिष्वजामहे'** हविर्भिः स्तुतिभिश्चालिङ्गनं कुर्मः । वशीकुर्म इतियावत् । ष्वञ्ज परिष्वङ्गे ( भ्वा. आ. ) "दंशसंजस्वञ्जां शपि"-( पा० ६-४-२५ ) इत्युनासिकलोपः ॥ **'अन्यकेषां'** कुत्सितानामन्येषां सर्वेषां शत्रूणां "कुत्सिते" ( पा० ५-३-७४ ) इत्यधिकृत्य "अव्ययसर्वनाम्नामकच्प्राक्टेः"-( पा० ५-३-७१ ) रित्यकच् । **'ज्याकाः'** कुत्सिता ज्या मौर्व्यः । कुत्सिते "प्रागिवात्क" ( पा० ५-३-७०१ ) इति कः । **'अधिधन्वसु'** धनुष्षु ( आरोपिताः ) **'नभन्तां'** माभूवन् । णभ तुभ हिंसायाम् ( भ्वा. दि. क्र्या. आ. ) अत्राचोऽभावेऽपि । इति सि. कौ. ॥ यद्वा **'नभन्तां'** हिंसन्तां नश्यन्तां नश्यन्तु इति सायणः ॥ २ ॥ अथैतद्विप्रतिषिद्ध-( विपरीत-) मुच्यते-**'शतं सेनेति'** । अस्य-"आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनां । संक्रन्दनोऽनिमिष एकवीर" ( ऋ० सं० ८-५-२२-१ ) इत्यादिः ॥ अप्रतिरथस्यैन्द्रपुत्रस्यार्षं त्रिष्टुप् । तेन हि अग्निप्रणयने विनियुक्तेयमिन्द्रस्तुतिः । अस्या अर्थः । अय**'मिन्द्रः शतं सेनाः'** शतसंख्याकाः अनन्ता इत्यर्थः । निरुपपदाः शतसहस्रशब्दा असंख्यातमर्थमाहुः । शतं मनुष्याः सहस्रशीर्षा पुरुष इत्यादौ यथा । **'साकं'** सहैव एकप्रयत्नेनैवा**'जयत्'** जयति । वर्तमाने लङ् छान्दसः । कीदृश इन्द्रः । **'आशुः'** । अश्नुते व्याप्नोतीति "कृवापे" ( उ. १-१ ) इत्यादिना उण् उपधावृद्धिः । अशू व्याप्तौ ( स्वा. प. ) शीघ्रगामी व्यापको वा । **'शिशानः'** । श्यति वज्रं तीक्ष्णीकरोतीति । शो तनूकरणे ( दि. प. ) "बहुलं छन्दसी"ति ( पा. २-४-१६ ) जुहोत्यादित्वाच्छानचि श्लौ द्वित्वम् । "भृञामित्"-( पा० ७-४-७६ ) इत्यत्र बहुवचननिर्देशादाद्यर्थावगतेर्वाहुलकबलेन श्यतेरभ्यासस्येत्वम् । **'वृषभो न'** वृषभ इव विभेत्यस्मादिति **'भीमः'** "भीमादयोऽपादाने" ( पा० ३-४-७४ ) इति निपातः । **'घनाघन'** घातकः । हन्तेः पचाद्यचि । "हन्तेर्घत्वं च" ( पा. ३-१-१३४ वा. ) इति द्वित्वमभ्यासस्याकागमो घत्वं च । उत्तरस्य तु "अभ्यासाच्च" ( पा० ७-३-५५ ) इति कुत्वम् । हनहनेति वक्ता वा वृष्टिकर्तृमेघरूपो वा "वर्षुकाब्दो घनाघन" इत्यभिधानादिति महीधरः । **'चर्षणीनां'** चर्षणयो द्रष्टारो मनुष्यास्तेषां, द्वेष्याणामिति सायणः । प्रत्यनीकावस्थितानामसुरादीनामिति दुर्गः । कृष विलेखने ( भ्वा. प. ) इत्यस्मात् "कृषेरादेश्च चः" ( उ० २-९७ ) इत्यनिप्रत्यये ककारस्य चकारो गुणश्च धातोरुपधायाः । **'क्षोभणः'** क्षोभयतीति क्षोभणः नन्द्यादित्वाल्ल्युः । ( पा० ३-१-१३४ ) क्षुभ संचलने ( भ्वा. आ. ) क्षोभहेतुर्भयजनक इत्यर्थः । **'संक्रन्दनः'** सम्यक्क्रन्दयिता समाह्वाता शत्रूणाम् । सम्यक्क्रन्दयिता रोदयिता प्राणिनामाकर्षणेन रोधनेन वेति सायणः । सम्यक्क्रन्दनं परभयहेतुर्ध्वनिर्यस्येति महीधरः । समाहूय च **'अनिमिषः'** न निमिषतीति "इगुपधज्ञे" ( पा० ३-१-१३५ )ति कः । निमेषरहितः अनलसः आदरवान् जयं प्रतीति दुर्गः । **'एकवीरः'** । वीरयति विविधं क्षिपत्यमित्रानिति वीरः । एकश्चासौ वीरश्चेति कर्मधारयः । अन्यनिरपेक्षं शत्रून्संग्रामे जेतुं समर्थः । अप्रतिद्वन्द्व इति यावत् । य एवंभूत इन्द्रस्तं वयं स्तुम इतीन्द्रस्तुतिरेषा ॥१॥ एवमितरेतरप्रतिषिद्धान्येतानि मन्त्रवाक्यानि । यथैको रुद्रः नासंख्यातानि सहस्राणि । अथासंख्यातानि, नैकः । यद्यशत्रुः कथं शतं सेना अजयत् ? । अथ शतं सेना अजयत् कथमशत्रुः ? । लोके हि यान्येतल्लक्षणानि वाक्यानि तान्युन्मत्तादीनामेव भवन्तीत्यनर्थकान्येवैतानीति ॥

हेत्वन्तरमाह—

## अथापि जानन्तं संप्रेष्यत्यग्नये समिध्यमानायानुब्रूहीति ॥

१. वारि अवं श्रीह्यादिकमिति दुर्गः ।

२. किमुतान्ये केचनास्मसुद्यमाना एतेऽसद्विषोऽवततज्यधनुषो हतसर्वोद्यमाः सन्त्विलतस्त्वां परिष्वजामह इत्यभिप्राय इति दुर्गः ॥

१. निमेषोऽक्षिपक्ष्मनिकोचः । 'अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तित'इत्यभिधानात् । नास्ति निमेषो यस्य सः देवत्वात् । यद्वा कदाचिदपि निमेषं न करोति अत्यन्तसावधान इति चर्षणीनां ( विनाशच्छिद्रं पश्यतां ) प्रतिभटत्वमनेन युक्तं भवतीति महीधरस्वरसः ॥

२. अत्र यद्यपि "पूर्वकालैके" ( पा० २-१-४९ )ति बाधित्वा परत्वा "त्पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्चेति" ( पा० २-१-५८ ) समासे वीरशब्दस्यैव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् ( पा० १-२-४३ ) "उपसर्जनं पूर्वम्" ( पा० २-२-३० ) इति पूर्वनिपाते वीरैक इति प्राप्नोति । तथापि बहुलग्रहणाद्भविष्यति । "कर्तृकरणे कृता बहुलम्" ( पा० २-१-३२ ) इति ॥ अत्र बहुलग्रहणं योगविभागेन सर्वोपाधिव्यभिचारार्थमित्युक्तम् ॥

जानन्तं विधिज्ञं संप्रेष्यति संप्रेषणं (प्रेरणं) करोति। इष् गतौ (दि. प.) कः कम्? अध्वर्युर्होतारम्। कथमित्याहाग्नये इति "तदुहैक आहुरग्नये समिध्यमानाय होतरनुब्रूहीति" (श. ब्रा. १-३-२-३) होता हि विधिज्ञ एव भवति। नह्यविद्वान् विहितोऽस्तीति स विजानात्येवामुष्मिन्नवधाविदं मयानुष्ठातव्यमिति। तदेतद्विज्ञातार्थस्य सतः संप्रेषणमनर्थकमेव भवति। यथैतदनर्थकम् एवमन्येऽपि मन्त्रा इति॥

**अथाप्याहादितिः सर्वमिति॥**

अथापि अयमपरो हेतुर्मन्त्राणामानर्थक्ये यदाह मन्त्रनिगम इति शेषः। किम्? अदितिः सर्वमिति। नह्येकः सर्वं माता पिता चेत्येवमादि भवितुमर्हति॥

अत्रोदाहरणम्—

**"अदितिर्द्यौरदितिरन्तरिक्षमि"ति॥**

(ऋ. सं. १-६-१६-५)

**तदुपरिष्टाद्व्याख्यास्यामः॥**

तत्-एतदुदाहरणम् उपरिष्टात् उपरि अग्रे (निरु. ४-४-२) व्याख्यास्यामः विविच्य अदितिरदीना देवमातेत्यादिना आख्यास्यामो निर्वक्ष्यामः शब्दतोऽर्थतश्चेत्यर्थः॥ इह त्वेवमर्थमियमृगुदाहृता-कथं यैव द्यौः सैवान्तरिक्षम्। यैव माता स एव पुत्रः स एव पितेत्येवमादि परस्परविरुद्धं किमपि बहुत्रासंबद्धमुच्यते? तदर्थवत्त्वे सत्युपपादयितुमशक्यम्। तस्मादनर्थका मन्त्रा इति॥

हेत्वन्तरमाह—

**अथाप्यविस्पष्टार्था भवन्ति॥**

नास्ति विस्पष्टः प्रकटं प्रतीयमानोऽर्थो येषां ते तथाभूता अपिहि केचिन्मन्त्रा भवन्ति॥

तद्यथा—

**अम्यग्-याद्दश्मिन्-जारयायि-काणुकेति॥(१५)**

इत्येवमादयः। नह्येषां विसष्टार्थता मन्त्रेषु शक्यते परिज्ञातुम्। नच केचिदर्थवन्तः केचिदनर्थका इति न्याय्यमभ्युपगन्तुम्। अर्धवैशसं हि स्यात्। तस्मात्सर्व एवानर्थका मन्त्रा इति॥ इतिशब्दः पूर्वपक्षसमाप्त्यर्थ आद्यर्थो वा॥ *(१५)

१. अर्धजरतीयं स्यादित्यर्थः। यथैका स्त्री अर्धं युवती अर्धं च जरतीति परस्परविरुद्धं न भवति तथेति तदर्थः।

२. "इति हेतुप्रकरणप्रकाशादिसमाप्तिषु" त्यमरः॥ आद्यर्थस्तु "ज्वलितिकसन्तेभ्यो णः" (पा० ३-१-१४०) इत्यत्रापि दृष्ट इत्यसकृदुक्तमधस्तात्।

1. विशसनं विशसः हिंसा, शसु हिंसायां (भ्वा. प.) ततः "पुंसि संज्ञायां" (पा० ३-३-११८) मिति घः। स एव वैशसम् स्वार्थेऽण्। अर्धर्चादिः अर्धं वैशसस्येत्यर्धवैशसमर्धहिंसनमित्यक्षरार्थः॥



अथोत्तरम्—

**अर्थवन्तः शब्दसामान्यात्॥**

मन्त्राः अर्थवन्तः इति प्रतिज्ञा शब्दसामान्यात् शब्दत्वात् इति हेतुः गवादिवदिति प्रसिद्धमुदाहरणमिति कृत्वा नोक्तम्। त्रितयमेवानुमितौ प्रदर्शनीयं भवत्यवयवभूतम्।

यथाहुः अवयवपञ्चकमुपादाय,—

"तच्च पञ्चतयं केचिद्द्वयमन्ये वयं त्रयम्।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम्॥ १॥" इति॥

एवं लौकिकहेतुमुक्त्वा वैदिकमुपपादयिष्यन्त्राह्मणमप्यर्थवत्त्वे प्रमाणयति—

**"एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदती"ति च ब्राह्मणम्॥**

एतदेव हि यज्ञकर्मणः समृद्धं यद्रूपसमृद्धं मन्त्रलिङ्गैरभिधीयते। तदेव हि समस्तवृद्ध्या युक्तं भवति नेतरत्। एतदेव स्पष्टयति—यत्कर्मेति। तस्मादर्थवत्त्वे हेतुद्वयम्। चशब्देनैतदाह अनर्थका हि सन्तः कथं कर्माभिवदेयुः। कथं वाऽनभिवदन्तः समर्धयेयुरिति यदेव भवतां मुख्यं प्रमाणं तदेव तथाविधमसदर्थं वाच्यवृत्त्या स्थापयतीति सर्वमवदातम्॥ १॥ खं. सूत्रम्॥

समृद्धरूपत्वं मन्त्राणामुदाहरति—

**"क्रीळन्तौ पुत्रैर्नप्तृभिरि"ति॥**

"इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम्। क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे" (ऋ. सं. ८-३-२८-२) सवितृसुतायाः सूर्याया आर्षमनुष्टुप्। विवाहे विनियुक्ता। हे वधूवरौ! युवाम् इहास्मिन्नेव लोके स्तं भवतं स्वे गृहे मोदमानौ हर्षमाणौ सन्तौ मा वियौष्टम् वियुक्तौ मा भवतम् "माङि लुङ्" (पा० ३-३-१७५) लोडर्थे सर्वलकारापवादलात्। "न माङ्योगे" (पा० ६-४-७४) इत्यडभावः। पुत्रैर्नप्तृभिः पौत्रैः सह क्रीळन्तौ विहरन्तौ विश्वं सर्वमायुर्व्यश्नुतं व्याप्नुतमायुर्व्याप्य स्थितौ भवतं, प्राप्नुतमिति सायणः॥ २॥

इत्येवं मन्त्राणामर्थवत्त्वं संस्थाप्य परोक्तदूषणान्यनूद्य सद्धेतुभिर्निराकरोति—

**यथो एतन्नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति * लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति॥**

१. अवयवत्रयं प्रतिज्ञा-हेतू-दाहरणरूपम्।

२. प्रदर्शयितुमावश्यकम्॥

३. शास्त्रदीपिकायां तर्कपादे मैथिलमहामहोपाध्यायश्रीपार्थसारथिमिश्रचरणाः।

**यथो एतत्** यत्पुनरेतदुक्तं **नियतेत्यादि**। अत्र ब्रूमः। **लौकिकेष्वपि** ह्यर्थवत्पदेषु **एतन्नियतवाचोयुक्तित्वं**-नियतानुपूर्वीकत्वं दृष्टमेव। **यथेन्द्राग्नी, पितापुत्राविति** च। नहि भवति अग्नीन्द्रौ पुत्रपितराविति। तथाच प्रयोगनियमादनर्थका मन्त्रा इति यत्साधितं स एष हेतुरनैकान्तिक उक्तप्रयोगे लोकेऽपि व्यभिचरित इति नोक्तार्थसाधकोऽसद्धेतुत्वात् तस्मादर्थवन्त एव ते॥

## यथो एतद्ब्राह्मणेन रूपसम्पन्ना विधीयन्त इति * उदितानुवादः स भवति॥

यत्पुनरेतदुक्तं **ब्राह्मणेनेत्यादि**। अत्र ब्रूमः। **उदितानुवादः स भवतीति**। उदितस्योक्तस्यैवानुवादोऽनुविधिरुदितानुवादः। अयमर्थः। आत्मानमात्मना विधातुं मन्त्रो न समर्थ इति ब्राह्मणेन मन्त्रोक्त एवार्थो विस्तरेण प्रकृतार्थसन्तुष्ट्यपयाऽनूद्य विधीयते। नह्युक्तं स्तोतुं शक्यते सोऽयमुक्तानुवाद एव। अपिचानेकेऽपि समानलिङ्गाः प्रकरणे मन्त्रा भवन्ति। ते ह्यहंपूर्विकयैकं प्रयोगं प्रति खलेकपोतवत् संपतन्ति। तेषां समुच्चये विकल्पे च प्राप्ते सति अभिमत एको नियमार्थं ब्राह्मणेन विधीयते। एवमुभयोर्मन्त्रब्राह्मणयोरर्थवत्त्वं साधितम्॥ तथाच यत्पूर्वमुक्तम् रूपसंपन्नविधानान्मन्त्रानर्थक्यम्, मन्त्रार्थवत्त्वे वा ब्राह्मणानर्थक्यमिति तदयुक्तम्। तस्मादुभयमप्यर्थवन्मन्त्राश्च ब्राह्मणाश्चेति॥

## यथो एतदनुपपन्नार्था भवन्तीति * आम्नायवचनादहिंसा प्रतीयेत॥

यत्पुनरेतदुक्तम्—"ओषधे त्रायस्वैनं, स्वधिते मैनꣳहिꣳसी"रित्यादयो मन्त्रा **अनुपपन्नार्था भवन्तीति**। अत्र ब्रूमः। ओषध्यधिदेवता ह्यत्रोच्यते। **हे ओषधे! एनं** स्वाधिष्ठितमोषधिरूपं कुशं **त्रायस्व**। स्वत्पूर्वको ह्येष कुशश्छिद्यमानः सम्यक्छिन्नो भविष्यति ततश्च यज्ञे विनियुक्तः प्रतिविशिष्टमुत्कर्षमेतस्याः स्थावरजातेः प्राप्स्यत इत्येतन्त्राणमभिप्रेत्योक्तमोषधे! त्रायस्वैनम् इति। तस्मादुपपन्नार्थं एवायम्। यदपि चोक्तं स्वधिते मैनꣳहिꣳसीरित्याह हिंसन्निति। अत्रोच्यते **आम्नायवचनादिति**। अत्रेति शेषः। अत्रास्मिन्ननुपदमुपक्रान्ते स्वधिते इत्यादिद्वितीयवाक्ये। अयंभावः। इयं हिंसा, इयमहिंसेत्येतदाम्नायादेवावसीयते। आम्नायश्चायं वैदिक आगमः कृत्स्नस्य जगतः प्रतिविशिष्टाय श्रेयसेऽभ्युद्यतः सन्कर्तारं हिंसायां विनियोजयतीत्यहिंसैवैषेति **प्रतीयेत**। तद्वचनात् इति॥

## यथो एतद्विप्रतिषिद्धार्था भवन्तीति *। लौकिकेष्वप्येतद्यथाऽसपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति॥

यत्पुनरेतदुक्तम् "एक एव रुद्रोऽवतस्थे, असंख्याताः सहस्राणि ये रुद्रा" इत्यादयो **विप्रतिषिद्धार्था भवन्तीति**। अत्र ब्रूमः। नैष विप्रतिषिद्धोऽर्थः। देवता हि महाभाग्ययोगादेकाऽपि सत्यनेकधा भवति, अनेकाऽपि चैकधेति वक्ष्यते "महाभाग्याद्देवतायाः" ( दै. का. ७-१-४ ) इति। यत्पुनरेतदुक्तम् "अशत्रुरिन्द्र जज्ञिषे", "शतं सेना अजयत्साकमिन्द्र" इति। अत्र तावदुच्यते **लौकिकेष्व**प्यर्थवत्सु पदेषु **एतदेव**मेवोच्यमानं दृष्टम्। **तद्यथाऽसपत्न** इति। नहि कश्चिदसपत्नोऽस्ति लोके। यथाहुः—

"मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः॥ १॥" इति॥

तथापि स्वल्पसपत्नं दृष्ट्वाऽल्पार्थे नञं प्रयुञ्जानो**ऽसपत्नोऽयं ब्राह्मणः। अनमित्रोऽयं राजेति** लोको ब्रवीति। अल्पत्वादसत्त्वं वोपचर्यते यथा लोकेऽनुदरा कन्येति। एवम् कस्मिँश्चिदतिप्रवृद्धे मेघे वृत्रे वा भृशं पातितेऽन्येषामसत्त्वमभिप्रेत्ये-

---

१. अत्र हि "ध्यन्तादजाद्यदन्तं विप्रतिषेधेने"ति नियमाद्घ्यन्तस्याग्निशब्दस्यैव पूर्वप्रयोगः "द्वन्द्वे घी"-( पा० २-२-३२ ) ति प्राप्तोऽपि न भवति॥

२. अत्र हि अभ्यर्हितत्वात्पितुरेव पूर्वप्रयोगो भवति "अभ्यर्हितं च" ( २-२-३४ वा० ) इति नियमात् पितापुत्राविलेव भवति। अत्र यद्यपि "आनङ् ऋतो द्वन्द्वे" ( पा. ६-३-२५ ) इति, ऋदन्तानामेव ( पदानां ) द्वन्द्व आनङं पूर्वपदस्य विदधाति। इति स इह न प्राप्नोति। तथापि "पुत्रेऽन्यतरस्यामि"-( पा० ६-३-२२ )त्यतो मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेस्तस्मिन् परेऽपि भवति इति बोध्यम्॥

३. अहंपूर्वमहंपूर्वमहमग्रेऽहमग्रे भवामीत्याग्रहपुरस्सरं युद्धमहंपूर्विका "सह्सुपे" ( पा० २।१।४ ) ति समासे स्वार्थे कन्। स्त्रियां टाप्। "अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियामि"त्यमरः॥

४. प्रथमवाक्ये। फलपाकान्ता व्रीहियवादयो धान्यभेदास्तृणवीरुधश्च ओषधय इत्यभिधीयन्ते। "ओषध्यः फलपाकान्ताः स्यु"-रित्यमरः। तात्स्थ्याताच्छब्द्यं यथा गृहा दारा इत्येवं तदधिष्ठातृदेवता ओषधिरित्युच्यतेऽत्र ओषध्य इति "कृदिकारादि"-( ४-१-४५ वा० )ति ङीप् वा भवतीति। ओषधिः ओषधी। रात्रिः रात्रीतिवत्॥

१. यज्ञे हि विधानतः सकृच्छिद्यमानोऽयं न पुनश्छेदनं प्रतिपत्स्यतेऽल्पमपि कदापीत्यभिप्रायः॥

२. सर्वेषामितरेषामागमानां प्रभवोयं सर्वतः प्रतिविशिष्टः पुरुषार्थसाधनं न न्यञ्चि कर्मणि पुरुषं प्रवर्तयेद्धिंसारूपे। वस्तुतस्तु द्वेषपूर्वकः प्राणिवध एव हिंसा, नहि कश्चित्पशुं द्विषन्यज्ञे हिनस्ति, नापि तृणवीरुदादिम्। तदेतन्मीमांसितम् ( जै-सू-१-१-२ सूत्रमुपादाय ) श्लोकवार्तिके॥

३. तथाच दुर्गः। अपिचैतदोषधिवनस्पतिपशुमृगपक्षिसरीसृपाः सम्यगुपयुक्ताः सन्तो यज्ञे, परमुत्कर्षं प्राप्नुवन्ति। सोऽयमभ्युदय एव सम्पद्यते। न हिंसा। नह्यसौ हिनस्ति किंतर्हि? अनुगृह्णाति यज्ञः, विनियोगार्थं विधानतश्छिन्दन्। तस्मादुपपन्नार्थो मन्त्र इति॥

दमुक्तं स्याद् "अग्नन्नुरिन्द्र जज्ञिषे" यस्त्वमेतमेवमतिप्रवृद्ध"महन्महिम्" इति । यत्पुनरेतदुक्तं "शतं सेना अजयदि"ति । अत्र ब्रूमः । देवा हि विभवो वशिनोऽधिकरणधर्माः परेण महिम्ना युक्ताश्च भवन्तीति । नहि देवानां जेतव्याः शत्रवः सन्ति । कुतो हि सेना या इन्द्रो जेष्यति । कथं तर्हि शतं सेना अजयदित्युच्यते ? रूपकल्पनयैवैषा युद्धप्रवादात्स्तुतिः । वक्ष्यति च "अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते । तत्रोपमार्थेन युद्धवर्णा भवन्ति" ( नै० का० २-५-२ ) इति । तदेतद्भवता न सम्यग्दृश्यते । सम्यगनुशिष्यतां देवतातत्त्वं नैरुक्तेभ्यः । ततो मन्त्रार्थानविरोधेन सम्यगवभोत्स्यते । नैवमवाक्यतत्त्वज्ञेन मन्त्रार्थो विगाहितुं शक्यः । गम्भीरपदार्थो हि वेदस्तस्माद्यदुक्तं विप्रतिषिद्धार्था भवन्तीति, तदयुक्तम् ॥ इत्थं चार्थवन्त एव मन्त्रा इति साधितम् ॥

## यथो एतज्जानन्तं संप्रेष्यतीति * जानन्तमभिवादयते । जानते मधुपर्कं प्राह ॥

यत्पुनरेतदुक्तम् जानन्तं संप्रेष्यतीति । अत्र ब्रूमः लौकिकेष्वप्यर्थवत्सु पदेष्वेतदेव स्वाभाव्यं दृष्टम् । यत् जानन्तं गुरुं शिष्योऽभिवादयते स्वगोत्रमभिवदन् । "अयमहं भोः शाण्डिल्यः प्रियव्रतो गुरुमभिवादये" इत्येवम् । तथा च ( गो० गृ० सू० २-३-१३ ) "अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते" इति । तथा च जानते मधुपर्कं प्राह त्रिर्मधुपर्को मधुपर्को मधुपर्क इति ॥ तदेतदर्थवत्स्वपि शब्देषु विहितार्थख्यापनार्थशब्दसामान्यादर्थवन्तो मन्त्रा इति ॥

## यथो एतददितिः सर्वमिति * लौकिकेष्वप्येतद्यथा सर्वरसा अनुप्राप्ताः पानीयमिति ॥

यत्पुनरेतदुक्तम्—अदितिः सर्वमिति । अत्र ब्रूमः । भक्तिरेषा । द्विविधा हि शब्दप्रवृत्तिः मुख्यार्था गौणी च । तदेवंसति यत्र मुख्याऽसंभवस्तत्र गौणी आश्रीयते स एष भक्तिवादोऽदितिः सर्वमिति । यथा कश्चित्कंचिदनेकोपकारिणं ब्रूयात्त्वमेव मे माता, त्वं मे पितेत्येवमेतदपि द्रष्टव्यम् । लौकिकेष्वपि चार्थवत्सु शब्देषु एतदुच्यमानं दृष्टं यथा सर्वरसा अनुप्राप्ताः पानीयमिति । ततो हि तेषां प्रभव इत्यनया गुणवृत्त्यैवमुच्यते । एवमिहापि गुणवृत्त्या कयाचिददितेः सर्वत्वमुच्यते । तथा च यदुक्तमित्येवमादिपरस्परविरुद्धं किमपि बह्वत्रासंबद्धमुच्यत इति एतदयुक्तम् । सर्वमेवैतदुपपद्यते एव गुणवृत्त्या । तस्मादर्थवन्त एव मन्त्रा इति ॥

## यथो एतदविस्पष्टार्था भवन्तीति * नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति ॥

यत्पुनरेतदुक्तम् अविस्पष्टार्था भवन्तीति । अत्र ब्रूमः । नैष स्थाणोरपराध इति । नह्यत्र स्थाणुरपराध्यति यदेनं स्थाणुमन्धो न पश्यति यदत्रासावभिहन्यते । किंतर्हि ? पुरुषापराधः स भवति । पुरुष एवापराधी तत्र यदसावचक्षुष्मान् । एवमिहापि नैव मन्त्राणामपराधो नवा मम, यदशिक्षितेन भवता न विज्ञायन्ते । भवत एवापराधोऽस्ति । भो भवान् सर्वमात्मीयमपराधं मन्त्रेष्वस्मासु वा संयोजयितुमिच्छति न तव प्रज्ञास्ति किंचित् ॥

## यथा जानपदीषु विद्यातः पुरुषो भवति ॥

यथा जानपदीषु जनपदभवासु कासुचित्प्रवृत्तिषु ( इतिकर्तव्यतासु ) विद्यातः कौशलशिक्षा( कृ )तः पुरुषः पुरुषाणां विशेषो भवति । एवमिहापि मन्त्रार्थशिक्षाकौशलकृतः पुरुषाणां विशेषो भवत्येव । तत्रैवं सति केचित्पुरुषा विस्पष्टार्थानपि मन्त्रान्न शक्नुवन्ति निर्वक्तुमपरे पुनरविस्पष्टार्थानपि शक्नुवन्ति विस्पष्टीकर्तुम् ॥ तदुक्तम् "उत त्वः" ( ऋ. सं. ८-२-२३-४ ) । ( नि० १-६-३ ) इत्यत्र ॥

तत्रैवंसति—

## पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति ॥ ( २ ख. १६ )

इति या० मु. प्र. निरु. शा० नैघं. का० प्र. ध्या. पञ्चमः पादः ॥ ५ ॥ * ॥

परांश्चावरांश्च विदन्तीति पारोवर्यविदस्तेषु । "तद्धितार्थे"ति ( पा० २-१-५१ ) समासे "चतुर्वर्णादे"- ( पा० ५-१-१२४ वा. ) राकृतिगणत्वात्स्वार्थे ष्यञ् । "परोवरपरम्परे" ( पा० ५-१-१० )ति परावरशब्दस्य परोवरादेशो बाहुलकात्स्वप्रत्ययं विनापि भवति । आचार्यपरम्परया विद्वत्सु

१. यथात्मानं समुद्रं ध्यायेदिति ध्यानार्थं रूपकल्पना । तथाचाहुर्मीमांसकाः "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्" ( जै० ९-१-६ ) इति सूत्रे शास्त्रदीपिकायाम् । ( एतच्च पूर्वपक्षसूत्रमित्यपि तत्रैव सुव्यक्तम् ) ॥

१. जनाः पद्यन्ते गच्छन्त्यस्मिन्निति जनपदो देशः । "पुंसि संज्ञायामि"-( पा० ३-३-११८ )ति घः । ततो भवार्थे ( पा० ४-३-५३ ) अण् ङीप् । देशप्रसिद्धासु सर्वजनसाधारणीषु । लोकोक्तिषु—इति केचित् । इत्युच्यते इति तत्र ( मते ) शेषः ॥

२. यथा पुरुषाय कन्या देयेत्युक्ते पुरुषविशेषाय सद्गुणवत इति प्रतीयते । यन्मूलिका हि मैथिलमहामहोपाध्यायविद्यापतिठकुराणां "पुरुषपरीक्षा" ग्रन्थप्रवृत्तिः ॥

३. ते हि आचार्यपरम्परया मन्त्रार्थं मर्म तत्त्वं च विदन्ति न पुनस्ते साक्षात्कृतधर्माणस्ते तु पुनरृषय एव भवन्ति । यथाच वक्ष्यते ( निरु० १-६-५ ) ॥

1. एवं व्याख्यायते पारावारनामा भूपतिर्मन्त्रिणं सुबुद्धिनामानं मुनिं पप्रच्छ । "कस्मै मयेयं पद्मावती कन्या देये"ति । स प्रत्याह "पुरुषाये"ति । "नह्यपुरुषाय कन्या प्रदीयत इति किमेवमुच्यते" इति भूपतिना पुनरनुयुक्तः स "विद्यातः पुरुषो भवती" त्याहेति ॥

**वेदितृषु** ब्राह्मणेषु "यतश्च निर्धारणम्" (पा० ४-३-४१) इति गुणतो निर्धारणे सप्तमी। तेषां मध्ये भूयोविद्यो बहुश्रुतो यो मन्त्रार्थपरिज्ञानकुशलः स एव **प्रशस्यः** प्रशंसार्हो **भवति** नेतरः। नहि तेषामविस्पष्टार्थाः केचन सन्ति मन्त्राः। तान्श्चो-परिष्टात्स्पष्टीकृत्य व्याख्यास्यामहे। तस्मादर्थवन्त एव मन्त्रा इति सिद्धम्॥ तस्माच्चैतदपि शास्त्रं मन्त्रार्थपरिज्ञानायारभ्य-माणमर्थवदेव भवतीति सिद्धः शास्त्रारम्भः॥ १६॥ *॥

**इति श्रीमद्यास्कमु० प्र० नि० ल० तौ० नै० का० प्रथमाध्यायस्य पञ्चमः पादः॥ १॥ ५॥ *॥**

---

## अथ प्रथमाध्यायस्य षष्ठः पादः।

### (अथ द्वितीयं शा० र० प्रयोजनम्)

### अथापीदमन्तरेण पदविभागो न विद्यते॥

शास्त्रारम्भप्रयोजनान्तरारम्भेऽयमथशब्दः। **अपीति** संभावने। **इदं** निरुक्तशास्त्र**मन्तरेण** विना **पदविभागो** न **विद्यते**। एवं पदानि वक्तव्यानीत्येतद्विभागपरिज्ञानं नास्ती-त्यर्थः। किं कारणम्? अर्थवशेन हि पदान्यवतिष्ठन्ते, न चेद-मन्तरेणार्थपरिज्ञानमस्ति॥

एवं प्रतिज्ञाय समानसंहितेषु मन्त्रेष्वर्थहेतुकौ पदाविभाग-विभागावुदाहरणद्वारा दर्शयति—तत्राद्योदाहरणम्—

### "अवसायं पद्वते रुद्र मृळे"ति॥

(ऋ. सं. ८-८-२७-१)

पदङ्ग्रिरस्यास्तीति पद्वत्तस्मै **पद्वते** पादयुक्ताया **ऽवसाय** पथ्यदनाय गोरूपाय हे **रुद्र!** त्वं **मृळ** सुखयेति प्रार्थना॥

---

१. जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं तस्मिन्॥

२. अविस्पष्टार्थत्वेन तवाभिमतान् मन्त्रान्॥

३. एतेन "यदि मन्त्रार्थपरिज्ञानायानर्थकं भवती"त्येवं (पादा-रम्भे १ सू. ५ वाक्यत आरभ्योक्तं) कौत्समतं निराकृत्य प्रति-ज्ञातं शास्त्रारम्भप्रयोजनं समर्थितं वेदितव्यम्॥

४. "मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिश-न्ताम्। पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र! मृळ॥१॥" कक्षीवद्धोत्रस्य शबरस्यार्षं गोदैवत्यं त्रिष्टुप्। घासाय वनं प्रतिष्ठमानानां गवामनुमन्त्रणे विनियुक्ता। मय इति सुखनाम-धेयं (निघ. ३-६) मिनोति हिनस्ति दुःखमिति मयः। मिञ्

---

1. तथाचानुक्रान्तम्-मयोभूः शबरः कक्षीवतो गव्यमिति। सूत्रितंच-गाः प्रतिष्ठमाना अनुमन्त्रयेत "मयोभूर्वातोअभिवातूस्रा" इति। दुर्गस्तु सुचरो नाम गौतमः स मयोभूरित्यस्याखिष्टुभः पूर्वैस्त्रिभिः पादैर्गवामाशिषमाशास्योत्तमेन तासामेव रुद्रात्सुखमया-चत। गवामुपस्थाने विनियुक्तेत्याह॥

### (पदविभागार्थवत्त्वम्)

### पद्वत्। अवसं-गावः पथ्यदनम्॥

**पद्वत्** पादयुक्तम्। **अवसं** भृशं गन्तृ सत्त्वभूतं, लिङ्गसा-मान्यनपुंसकमेतज्जात्येकवचनम्। गोजातिमभिप्रेत्य तस्या एवोपक्रान्तत्वादित्यवसपदेन गाव एवोच्यन्त इत्याह **गाव** इति। **पथ्यदन**मित्यवसमित्यस्यैव निगमप्रसक्तस्य पर्याय-वचनम्। पथि अत्तीति। "नन्द्यादिभ्यो ल्युः" (पा० ३-१-१३४) "युवोरनाकौ" (पा० ७-१-१) इति योरनादेशे साधुः॥

### अवतेर्गत्यर्थस्यासौ नामकरणस्तस्मान्नाव-गृह्णन्ति॥

**गत्यर्थस्य अवतेरव्**धातोः (भ्वा० प०) **असौ** समित्येष नाम क्रियतेऽनेनेति **नामकरणः** करणे ल्युट् (पा० ३-२-११७) संज्ञाप्रयोजकः प्रत्ययः सन्। शिखात्सार्वधातुकत्वे (पा० ३-४-११३) "कर्तरि शबि" (पा० ३-१-६८) ति शप्। वस्तुतस्तु-अवद्रुच्छदश्चातीत्यवसं "पृषोदरादित्वात्" (पा० ६-३-१०९) शस्य सः। **तस्मादसमासत्वादस्य, नावगृह्णन्ति**। एतत् पदकारा इति शेषः। इत्येतत्पदावि-भागोदाहरणम्। अथ पदविभागोदाहरणम्—

### "अवसायाश्वानि"ति॥ (ऋ. सं. १-७-१८-१)

अस्मिन्वाक्ये पूर्वेण सरूपमेवावसायेतिपदमर्थकृताद्विशेषा-दवगृह्यते—

---

हिंसायाम् (स्वा. उ.) असुन् औणादिकः। मयः सुखं भाव-यतीति मयोभूः सुखस्य भावयिता (पुरो) वातः। एता उस्राः गाः "माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी" त्यमरः। अभि—आभिमुख्येन वातु वहतु। किंच (तेन सुखभावयित्राऽनु-द्वेजनीयेन पुरोवातेन स्पृश्यमाना एता गावः) ऊर्जस्वतीः प्रभू-तरसाः ओषधीस्तृणानि आ अभितः रिशन्तां स्वादयन्तु। (आस्वाद्य आस्वाद्य च सलवणस्वादमात्माभिप्रेते काले) पीवस्वतीः प्रवृद्धा जीवधन्या जीवानां प्राणयित्रीरपश्च पिबन्तु। हे रुद्र! ज्वरादिरोगस्य प्रेक्षणेन संहर्तः! देव! त्वमसै पद्वते पादसंयु-क्ताय गोलक्षणायावसाय पथ्यदनाय सत्त्वाय मृळ सुखय। मैनां हिंसीस्त्वमासामीश्वर इत्यभिप्रायः॥ १॥

१. अवग्रहलक्षणमुक्तमधस्तात् (पृ. १२ पं. १२)

२. "योनिष्ट इन्द्र निषदे अकारि तमानिषीद स्वानो-नार्वा। विमुच्यावयोऽवसायाश्वान्दोषावस्तोर्वहीयसः प्रपित्वे॥ १॥" एतया त्रिष्टुभा कुत्स आङ्गिरस इन्द्रं तुष्टाव। हे इन्द्र! मया ते—तव निषदे निषदनायोपवेशनाय योनिः वेद्याख्यं स्थानम् स्वास्तीर्णं बर्हिर्वा अकारि कृतम्। तं योनिं (तत्स्थानम्) आ निषीद एत्य निश्चयेन सीद शीघ्रमागत्य तत्रोपविश। अत्र दृष्टान्तो स्वानोनार्वेति यथा स्वानः स्वन्यमानः (हेषाशब्दं कुर्वन्) अर्वा अश्वः स्वे स्थाने (मन्दुरायां) निषीदति तद्वत्। किंकृत्वा? वयः अश्वबन्धनार्थान् रश्मीन्। विरिति रश्मिनाम (नि० ४।१।३) विभक्तिव्यत्ययं आर्षः। विमुच्य रथाद्विश्लिष्य तथा अश्वान्

## स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति ॥

**स्यतिः** "षोऽन्तकर्मणि" ( दि० प० ) इत्येष धातुरुप-**सृष्ट** उपसर्गेणावेत्यनेन संयुक्तः सन् **विमोचनेऽर्थे** वर्तते अवसात्वेत्यवसायावमुच्येत्यर्थः । **तस्माद्**व्रतिसमासरूपत्वादस्य **अवगृह्णन्ति** एतत्पदकारा इति पूर्ववत् शेषोऽत्रापि बोध्यः ॥

यान्यपि खल्वनवगृह्याणि पदानि समानसंहितानि तेषामप्य-र्थकृतमेव विभागवैशेष्यं भवति । तद्यथा—

## "दू॒तो निर्ऋ॑त्या इ॒दमा॒ज॒गामे॑"ति ॥

( ऋ. सं. ८–८–२३–१ )

**निर्ऋत्याः** पापदेवतायाः **दूतः** कपोतः **इदमस्मद्गृह-माजगामेति** वाक्यार्थः ॥ अस्मिन्वाक्ये निर्ऋत्या इत्येत-स्मिन्पदे सन्दिग्धे—

रथे योजितान् अवसाय वियोज्य लब्धोदकयवसान्कृत्वा। कीदृशान-श्वान्? प्रपित्वे यागकालें प्राप्ते ( नि० ३।२१ ) दोषा रात्रौ वस्तो-रहनि च वहीयस आदरातिशयेन वोढून् इत्यर्थः ॥ १ ॥

१. द्वयोः पदयोर्वहूनां वा पदविच्छेदेनोच्चारणं सः ( समासः ) समसनं ( संक्षेपणमविस्तरकरणं ) समास इति निर्वचनात् । भावेऽत्र घञ् । स च समर्थानां ( संश्लिष्टार्थानामेव ) भवतीति "समर्थः पदविधि"–( पा० २–१–१ ) रिति शास्त्रमनुशास्ति ।

२. "दे॒वाः क॒पोत॑ इषि॒तो यदि॒च्छन् दू॒तो निर्ऋ॑त्या इ॒द-मा॒ज॒गाम॑ । तस्मा॑ अर्चाम कृ॒णवा॑म॒ निष्कृ॑तिं॒ शं नो॑ अस्तु द्वि॒पदे॒ शं चतु॑ष्पदे ॥ १ ॥" आङ्गिरसस्य प्रचेतस आर्षं वैश्व-देवं त्रिष्टुप् । कपोतनिलयनशान्त्यै तेनेयं कपोतसूक्ते दृष्टा । तत्रै-वास्या विनियोगः । सूत्रितं च कपोतश्चेदगारमुपहन्यादनुपतेद्वा "देवाः कपोत" इति प्रत्यृचं जुहुयाज्जपेद्वेति ॥ मन्त्रार्थस्तु। हे देवाः ! निर्ऋत्याः पापदेवतायाः सकाशात् इषितः प्राप्तः कपोतः यद्धनादि इच्छन्नभिलषन् इदमस्मदीयं गृहमाजगाम । ( यस्य जन्मान्तरकृत-कर्मणो विपाकलिङ्गमेतत्कपोतगृहनिलयनं कुड्यादिपु तत्पददर्शनं च ) तस्मै पाप्मने तन्निवृत्त्यर्थं युष्मानेवार्चाम हविषा पूजयाम ( ततश्चानेन हविर्दानेन तस्य कपोतप्रवेशजन्यस्य दोषस्य ) निष्कृतिं परिहृतिं ( निर्णेजनं शान्तिं ) कृणवाम करवाम । अतो नोऽस्माकं द्विपदे पुत्राय शं सुखमस्तु । चतुष्पदे गवाश्वप्रभृतये च शं सुखमस्त्विति ॥ १ ॥

1. तथाच सायणः . । कपोतो यदि गृहं प्रविशेत्तदाऽनेन सूक्तेन होतव्यमित्येतत्सूत्रार्थमाह । तन्मते च निर्ऋतिपुत्रस्य कपो-तस्यार्षं त्रैष्टुभं वैश्वदेवम् । तथाचानुक्रान्तं "देवा नैर्ऋतः कपोतः कपोतोपहतौ प्रायश्चित्तमिदं वैश्वदेव"मिति हि स आह ॥ शान्ति-रपि प्रायश्चित्तमेवेत्यत एवावसीयते । पापशोधकत्वात् । "प्रायः पापमिति प्रोक्तं चित्तं तस्य विशोधन"मिति तन्निर्वचनात् ॥

2. हरिणेभ्यो वागुरा, मशकाय धूम, इतिवत्तादर्थ्यचतुर्थ्या-स्तन्निवृत्त्यर्थकत्वमत्र । तस्मै बाधनाय तद्बाधननिवृत्त्यर्थमित्यर्थं सायण आह ॥

## पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वाऽऽःका-रान्तम् ॥

प्रेक्षा दर्शनम् । **पञ्चम्यर्थदर्शनं वा षष्ठ्यर्थदर्शनं** वेत्यर्थः । उभयमप्यत्र दृश्यते संभवि च यत एतत् **आःका-रान्तं** पदं निर्ऋत्याः इति ॥ आः इत्यनुकरणस्यानितिपरकस्य ( पा० १–४–६२ ) निपातत्वेन निपाताच्चकारप्रत्ययस्य "उच्चैस्तरां वा वषट्कार" ( पा० १–२–३५ ) इत्यादौ दर्शनेनेह तथा प्रयोगः । तद्दर्शनेन निपातानां वर्णत्वातिदेशेन "वर्णात्कार" ( पा० ३–३–१०८ वा. ) इति कारप्रत्ययो भवतीति तत्त्वम् ॥ एवमन्यत्राप्यूह्यम् ॥

## "पु॒रो निर्ऋ॑त्या॒ आच॑क्ष्वे"ति ॥

( ऋ. सं. ८–८–२२–१ )

**'परः'** परस्ताद्वर्तमानायै **'निर्ऋत्यै'** पापदेवतायै **'आचक्ष्व'** वयं न बाधनीया इति प्रब्रूहि । इति वाक्यार्थः । अत्र वाक्ये तस्मिन्नेव निर्ऋत्या इत्येतस्मिन्पदे—

## चतुर्थ्यर्थप्रेक्षा-ऐकारान्तम् ॥

**चतुर्थ्यर्थप्रेक्षा** चतुर्थ्यर्थदर्शनमत एतत्पदं निर्ऋत्या **इत्यैकारान्तम्** । संहितायां "एचोऽयवायाव" ( पा० ६–१–७८ ) इत्यायादेशे "लोपः शाकल्यस्ये–" ( पा० ८–३–१९ ) ति यलोपः । "पूर्वत्रासिद्धमि" ( पा० ८–२–१ ) ति यलोपस्यासिद्धत्वान्न स्वरसन्धि "राद्गुण" ( पा० ६–१–८७ ) इति ॥ एवं समानसंहितानामपि पदानामर्थभेदकृतं विभाग-वैलक्षण्यं, स चार्थं इदं निरुक्तशास्त्रमन्तरेण न विज्ञायते अत इदमुक्तम् "अथापीदमन्तरेण पदविभागो न विद्यत" इति ॥

एवं प्रतिज्ञातं समर्थ्याधुना पदविभागप्रसक्तं संहिता-लक्षणमाह—

## परः सन्निकर्षः संहिता ॥ ( पा० १–४–१०९ )

**परः** प्रकृष्टो यः **सन्निकर्षः** संश्लेषः स्वराणां स्वराधि-

१. "अपे॑हि मनसस्पतेऽप॑ क्राम प॒रश्च॑र । पु॒रो निर्ऋ॑त्या॒ आच॑क्ष्व बहु॒धा जीव॑तो॒ मनः॑ ॥ १ ॥" आङ्गिरस्य प्रचेतस आर्षमनुष्टुप् । दुःस्वप्ननाशने विनियुक्ता ॥ हे मनसस्पते ! स्वभा-वस्थस्य मनसः स्वामिन् दुःस्वप्नाधिदेव ! अपेहि अपगच्छास्मत्तो निद्रावस्थावतः । अपगत्य चापक्राम, देशान्तरं गन्तुं पादौ विक्षिप। क्रमु पादविक्षेपे ( भ्वा० प० ) लोट् । दूरदेशं गच्छेत्यर्थः । अप-क्रम्य च परः परस्तादस्मत्तो विप्रकृष्टदेशे चर यथेच्छं विहर। अपिच निर्ऋत्यै पापदेवतायै परः परस्ताद्वर्तमानायै आचक्ष्व वयं न बाधनीया इति प्रब्रूहि। जीवतो मम मनो बहुधा भोक्तव्येषु विषयेषु बहुप्रकारं भवति ( उत्सुकं सद्वर्तते ) तस्मात्तद्विनाशकं दुःस्वप्न-दर्शनं नश्यत्वित्यभिप्रायः ॥ १ ॥

२. अथापीदमन्तरेण पदविभागो नोपपद्यत इत्येतत् ॥

1. बहुप्रकारविषयसुखविघातकमित्यर्थः ।

रुद्धानां व्यञ्जनानां च परस्परं स्वारसिकार्धमात्राधिककालव्यवायेनानुच्चारणं सा संहितेत्युच्यते । साच पुनरियम्—

**पदप्रकृतिः संहिता ॥** ( ऋ० प्रा० १-२ )

**पदानां** संधीयमानानां **प्रकृतिः संहिता**, विकृतिस्तु-पदानीत्यर्थः । अपरे तु पदान्येव प्रकृतिर्यस्याः सा, विकृतिः= संहितेत्यर्थमाहुः ॥ एवं च कृत्वा—

**पदप्रकृतीनि सर्वचरणानां पार्षदानि ॥**

सर्वेषां शाखान्तराणां **पार्षदानि**=प्रातिशाख्यानि **पदप्रकृतीनि** पदानि ( संहितायाः ) प्रकृतिर्येषु तानि तथाभूतानि भवन्ति ॥

**( अथ तृतीयं शा० र० प्रयोजनम् )**

**अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति ॥**

शास्त्रारम्भप्रयोजनविशेषाधिकारार्थोऽयमथशब्दः । अपीति संभावने । अपीदं वक्ष्यमाणमपीत्येवम् । किम्? **याज्ञे** यज्ञविहिते कर्मणि **दैवतेन** लिङ्गेन । उपलक्षणे तृतीया (पा० २-३-२१) उपलक्षिता इति तदर्थः । **बहवः प्रदेशा** विधिषु देशा **भवन्ति** । तद्यथा ज्योतिष्टोमे श्रूयते-"आग्नेय्याऽऽग्नीध्रमुपतिष्ठते, ऐन्द्या सदः, वैष्णव्या हविर्धानमि" त्येवमादि । याज्ञिकाः खल्वपि न्यायविदो ( मीमांसकाः ) लिङ्गतो मन्त्राणां शेषभावमधिकृत्य पठन्ति "लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाख्यानम्" ( जै. सू. ३-२-१९ ) इति "अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वादि" ( जै. सू. ३-२-२० ) ति च एवमादि—

**तदेतेनोपेक्षितव्यम् ॥**

**तदेत**न्न्यायविदुक्तमे**तेन** नैरुक्ते**नोप** ( प्रवेश्य बुद्धिम् ) **ईक्षितव्य**मालोचितव्यं किमिमे वदन्तीति-॥

**ते चेद्ब्रूयुर्लिङ्गज्ञा अत्र स्म इति ॥**

**ते** न्यायविदश्चेयदि **ब्रूयुर्**वयमत्रैतस्मिन्नाम्नाये **लिङ्गज्ञा** लिङ्गज्ञातारः **स्मो** भवामः । लिङ्गतो वयमत्र यद्यस्मिन्देवतारूपं तत्तत्र विजानीमः । विज्ञाय च तं मन्त्रं तद्दैवत एव कर्मणि विनियोक्ष्यामहे । एवं च सति न नो निरुक्तशास्त्रेण प्रयोजनमस्ति लिङ्गमेवास्माकं ज्ञापकं देवतानामिति—त एवं ब्रुवन्तः प्रतिवक्तव्या यदि यूयं लिङ्गतो मन्त्रदेवतां विजानीध्वे—तदा—

**( देवताज्ञानायार्थवत्त्वम् )**

**"इन्द्रं न त्वा शवसा देवता वायुं पृणन्ती"ति ॥** ( ऋ. सं. ४-५-६-२ )

इत्यत्र—

**वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे ॥**

अत्र तावदाग्नेये मन्त्रे इन्द्रवायू अपि श्रूयेते । तदेतद्दुष्परिज्ञानं लिङ्गमात्रेण कतमदत्र प्रधानं देवताभिधानं कतमदत्र नैघ-

---

१. वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालव्यवायो नान्तरीयकः । यमन्तरोच्चारणमेव न संभवतीति ॥

२. "या विशेष्येषु दृश्यन्ते लिङ्गसंख्या विभक्तयः । प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥ १ ॥" इति नियमे प्रायःपदोपादानेनोद्देश्यविधेयस्थले वेदाः प्रमाणमितिवल्लिङ्गवचनव्यत्यय इष्यते ॥

३. चरणान्यत्र शाखास्तेषां सर्वशब्देन "पूर्वकालैकसर्व"— (पा० २-४-४९) त्यादिना कर्मधारये समासे फलितमर्थमाह—सर्वेषामित्यादि ॥

४. स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पदावग्रहप्रगृह्यक्रमसंहितास्वरलक्षणमुच्यते तानीमानि प्रातिशाख्यानि । शाखेव शाख्यः "शाखादिभ्यो यः" (पा० ५-३-१०३) इतीवार्थे यः । वृक्षादीनां शाखा इवास्य वेदकल्पवृक्षस्यावयवाः शाखा इत्युच्यन्ते शाख्यं शाख्यं प्रतीति प्रतिशाख्यं वीप्सायाम् "अव्ययं विभक्ती"— ( पा० २-१-६ ) त्यादिनाऽव्ययीभावः । तदधिकृत्य कृतं प्रातिशाख्यम् "अधिकृत्यकृते ग्रन्थे" ( पा० ४-३-८७ ) इत्यर्थे शैषिकोऽण् ॥

५. तान्येव हि तत्र प्रकृतित्वेन चिन्त्यन्ते । तेषामेव च सन्धानं संहिता । "दधातेर्हिः" ( पा० ६-४-४२ ) रिति हिः तावौ किति । अत्र हि संपूर्वाद्धाते "र्गत्यर्थाकर्मके" ( पा० ३-४-७२ ) त्यादिना कर्तरि क्तः ॥

६. नन्वत्रोपक्रान्ते व्याख्यानद्वयेऽपरस्यैवानेन ज्यायस्त्वमुक्तं भवति नचैतद्युज्यते यतो हि मन्त्रद्रष्ट्र ऋषेः सकाशादभिव्यज्यमानो मन्त्रः पूर्वं संहितयैवाभिव्यज्यते न पदैः । अतश्च संहितामेव पूर्वमध्यापयन्त्यनूचाना ब्राह्मणा अधीयते चाध्येतार इति चेत्सत्यम् । एतदभिप्रेत्यैवापरे त्वित्येवमयं पक्षः केषांचित्प्रातिशाख्यीयानां, व्याख्यामेदेनोपन्यस्त इत्यवेहि ॥

1. पर्यन्तपरिषन्मण्डलमित्यनर्थान्तरम् । 1 कारणम् ।

---

१. प्रदेशपदेन सर्वत्र शास्त्रे विशेषतो व्याकरणे निरुक्ते च विधिदेश उच्यते । तद्देशीयत्वमेव हि तस्य प्रकर्षः । विधिर्हि विधायकं वाक्यं सर्वतः प्रधानं तदङ्गभूताश्चान्य इति ॥

२. शिष्यते विशेषणीक्रियतेऽसौ शेषोऽङ्गं तद्भावस्तत्त्वमङ्गत्वं कर्मसु विनियोगकाले ।

३. इदं च सूत्रद्वयं शाबरभाष्ये सपरिकरं पूर्वपक्षे स्थापितम् । सिद्धान्तसूत्रं तु तत्रैव तृतीयम् ( २१ ) "तदाख्यो वा प्रकरणोपपत्तिभ्याम्" इति ।

४. "सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयत" इति मीमांसापरिभाषा । यस्य शब्दस्य यदर्थप्रकाशनसामर्थ्यं तदेव तस्य लिङ्गमिति सोदाहरणं "श्रुतिलिङ्गवाक्ये"—त्यादिसूत्र-( जै० ३-३-१४ ) व्याख्याने शास्त्रदीपिकादौ द्रष्टव्यम् ॥

५. अथाग्नेयत्वं कथमस्येति चेच्छृणु "त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने ! । इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः" ॥ २ ॥ इति ॥ अयं

ण्टुकम् ? इति । तस्मात्परिज्ञेयं निरुक्तम् । तेन हि एकमन्त्रगतानां देवताभिधानानां गुणप्रधानभावः शक्यते विज्ञातुम् ॥

उदाहरणान्तरमाह—

**"अग्निरिव मन्यो त्विषितः सहस्वे"ति ॥**

**( ऋ. सं. ८-३-१९-२ )**

हि मन्त्रः । अस्यार्थः । भारद्वाजस्यार्षं त्रिष्टुप् आग्नेयी । प्रातरनुवाकाश्विनशस्त्रयोर्विनियुक्ता । हे अग्ने ! त्वामेव मन्द्रतमं मृदुतमं स्तुत्यतमं वा अर्कशोकैरर्कैरर्चनीयैः शोकैर्दीप्तिभिर्ब्रह्मचर्यजनितवीर्येर्युक्तम् । "इत्थंभूतलक्षण"–( पा० २–३–२१ ) इति उपलक्षणे तृतीया । वव्महे वृणीमहे संभजामहे "वृङ् संभक्तौ" ( क्र्या० आ० ) हि यतोऽतस्त्वं नोऽस्माकं महि महत् स्तोत्रं ( तैरेव मन्त्रैर्युष्मद्गुणानुस्मृतिसन्तानगर्भैरुपग्रथितं ) श्रोषि शृणु । किंच एवं त्वं महती देवता येन त्वामेवैकं सर्वा अपि देवता इन्द्रं न इन्द्रमिव वायुमिव च शवसा बलेन युक्तं, यद्वा बलेन वायुं गन्तारं, वा गतिगन्धनयोः ( अ० प० ) उण् "आतो युगि" ( पा० ३–३–१२८ ) ति युक् । पृणन्ति अभ्यर्चन्ति । अथ च ये नृतमा नृषु बलधनश्रुतैः श्रेष्ठाः । स्तुतीनां वा नेतृतमा ऋत्विजस्ते उभयेऽपि राधसा हविर्लक्षणेन धनेन । राधःशब्दो धनवचनः ( निघ० २–१० ) राध्नोतेरसुन्नन्तः । राध्नोति साध्नोति धर्मादीन् पुरुषार्थानिति राधः । पृणन्ति प्रीणयन्ति तर्पयन्ति । यद्वा एते नृतमा देवता–देवतां देवतात्मानं त्वां पृणन्तीति "सुपां सुलुगि" ( पा० ७–१–३९ ) लादिनाऽमो लुक् । पृण प्रीणने ( तु० प० ) प्रीणनं तर्पणमिति ॥ २ ॥

एवमयमाग्नेयो मन्त्रः । स एष लिङ्गमात्रदर्शनेनाविज्ञातप्रधानदैवतो विनियुज्यमान ऐन्द्रे वायव्ये वा कर्मणि कर्तुरभिप्रेतफलसिद्ध्यै नालं स्यात् । कर्मवैगुण्याच्च कर्तुरपध्वंसाय स्यात् । तस्माद्विज्ञेयं मन्त्रदेवतानिश्चयज्ञानाय निरुक्तमिदमिति समुदितोऽर्थः ॥

१. लिङ्गतो देवताविनियोगे दोषभूतं द्वितीयमुदाहरणमाहेत्यर्थः॥

२. "अग्निरिव मन्यो ! त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि । हत्वाय शत्रून्विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥ २ ॥" इयं त्रिष्टुप् तपसः पुत्रेण मन्युना दृष्टा । तस्यैवेदमार्षं मन्युदैवत्यम् । अजिरनाड्यभिचारे विनियुक्ता । हे मन्यो ! अग्निरिव त्विषितो ज्वलितः सहस्व अभिभव नः शत्रून् । हे सहुरे सहनशील ! नोऽस्माकं संग्रामे हूत आहूतः सन् सेनानीः सेनाध्यक्ष एधि भव । किंच हत्वाय हत्वा "क्त्वो यगि"–( पा० ७–१–४७ )ति यगागमः । शत्रून् विभजस्व प्रयच्छास्माकं वेदो धनं शत्रुसंबन्धि । किंच ओजो मिमानः अस्माकं बलं कुर्वन्मृधः संग्रामात् शत्रून् विनुदस्व क्षिप दूरीभूतान्कुरु । यद्वा मृधः शत्रून् विनुदस्व घातयेत्यर्थः ॥ २ ॥

इत्यत्र—

**तथाग्निर्मान्यवे मन्त्रे ॥**

यथा पूर्वस्मिन्नाग्नेये मन्त्रे वायुलिङ्गमिन्द्रलिङ्गं च **तथा** एतस्मिन्नपि **मान्यवे** मन्युदेवताके **मन्त्रे अग्निः** अग्निलिङ्गं नैघण्टुकम् । एवमनेकदेवतालिङ्गसङ्कटेषु दुरवधारं देवतातत्त्वमनैरुक्तेनाप्रसिद्धमन्त्रव्याख्यानसमयेन । तस्माद्यदुक्तं तैर्लिङ्गैरत एव मन्त्रान्कर्मसु विनियोक्ष्यामहे न नो निरुक्तशास्त्रेण प्रयोजनमस्तीति तदयुक्तम् ॥

अथ मन्त्रस्थं त्विषित इत्येतत्पदमर्थतो व्याचष्टे निर्ब्रवीति च—

**त्विषितो ज्वलितः । त्विषिरित्यप्यस्य दीप्तिर्नाम भवति ॥**

**अस्य** नैरुक्तस्य नैघण्टुककाण्डेऽपठितमपि दीप्तिनामसु **त्विषिरित्ये**तद्धातुस्वरूपं **दीप्तिरित्येतन्नाम प्रसिद्धं भवति**। लोकेऽपि त्विष दीप्तौ ( भ्वा. उ. ) क्विप् । त्विट् संजाताऽस्येति त्विषितः । "तदस्य संजातं तारकादिभ्य इतच्" ( पा. ५–२–३६ ) एवमन्यान्यपि धातुरूपाणि नैघण्टुकप्रकरणेऽपठितान्यपि लोकवेदप्रसिद्धान्युपादाय व्याख्येयानीति भावः ॥

**( अथ चतु० शा० र० प्रयोजनम् )**

**अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ॥ ( १७ ) १ खं० सू० ॥**

अथापीदमपरमारम्भप्रयोजनमस्य–यदत्र लोके शास्त्रे च **ज्ञानं प्रशस्यते, अज्ञानं च निन्द्यते** । तत्रैवंसति वयमनिन्द्याः स्याम प्रशस्याश्चेति ज्ञेयं निरुक्तम् । अतो हि अध्यात्माधिदैवताधियज्ञाभिधायिनां मन्त्राणामर्थाः परिज्ञायन्ते । ते च परिज्ञाताः सन्तः पुरुषस्योत्तमाय श्रेयसे भवन्ति । तदेवमखिलपुरुषार्थोपकारसमर्थंशास्त्रमिति न्याय्यमारब्धुम् ॥ १ ॥ ( १६ )

अथ क्व पुनर्ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यत इत्यपेक्षायां लोके तावत्प्रसिद्धमेव । शास्त्रेऽपि—

**"स्थाणुरयं भारहारः किलाभूत् ॥"**

१. तावदित्ययं साकल्ये वर्तते । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारण" इत्यमरात् । तथाच लोके सर्वत्रैतत्प्रसिद्धं प्रत्यक्षमेव यत्रः कश्चिद्विद्वान्भवति स पुण्यफलैर्विभिर्जनैः पूज्यते इति ॥

1. "सावधारणं हि सर्वं वाक्यमब्भक्षो वायुभक्ष इति । अप एव भक्षयति वायुमेव भक्षयतीति गम्यत" इति महाभाष्योक्तदिशाऽत्रावधारणपरतया व्याख्यातम् ॥

2. सुखाराध्यतममिति यावत् । त्वं हि देवेषु मृदुतमहृदयो यतोऽतस्त्वामेव संभजामह इत्यन्वयः ॥

1. यद्यपि मृधशब्दः संग्रामवचनः ( निघ० २–१७ ) पठितः । मृधिर्हिंसार्थ इति स्कन्दस्वामिभाष्यम् । ततः क्विप् । तथापि तात्स्थ्यात्ताच्छब्द्यं यथा गृहा दारा इतिवदत्र तत्स्था रिपवोऽपि मृध इत्युच्यन्ते ॥

स्थाणुर्वृक्षः। स यथा पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव संबध्यते न तज्जनितैर्गन्धरसरूपस्पर्शोपभोगसुखैस्तथाऽयमपि। अभूत्किलेति संभावने ॥ कः? —

"अधीत्य वेदं न विजानाति योऽर्थम् ॥"

वेदाध्ययनस्य भारमात्रमेव ह्यसौ बिभर्ति ॥ अथ–

(अर्थज्ञानप्रशंसा)

"योऽर्थज्ञ इत्सकलं भद्रमश्नुते ॥"

इदित्ययमेवकारार्थे भिन्नक्रमश्च। य एवार्थज्ञो भवति (न ग्रन्थमात्राध्येता) स एव सकलमनवखण्डितं भद्रमर्थपरिज्ञानफल–(मिहलोके शिष्टानां पूज्यतादिक–) मश्नुते प्राप्नोति। इतो लोकादन्तकाले च—

"नाकमेति ॥"

कमिति सुखनाम। तथा चोक्तं "कमित्युदकसुखयो"रिति। तत्प्रतिषिद्ध(मकं दुःख)म्प्रतिषिध्यते "नवा अमुं लोकं जग्मुषे किंचनाकम्" नवा अमुं लोकं गतवते किंचनासुखम्। "पुण्यकृतो ह्येव तत्र गच्छन्ती"ति (नैग० का० २–४–२)॥ न अकं यस्मिंस्तन्नाकम्। "न भ्राडि–" (पा० ६–३–७५) इत्यादिना नलोपाभावो निपातनात्। तन्निरतिशयं स्थानमेति स्वर्गाख्यम्। नहि यत्र किमप्याध्यात्मिकमाधिदैविकमाधिभौतिकं वा दुःखमस्ति ॥ अत्र हेतुं विशेषणमुखेनाह—

"ज्ञानविधूतपाप्मा ॥"

यतो ह्यसौ ज्ञानेन विधूताखिरस्कृताः (नाकगमनप्रतिबन्धिनः) पाप्मानः पापानि यस्य स तथाभूतोऽतोऽसौ नाकमेति। तथाचोक्तं भगवता गीतायाम्–"नहि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति। पवित्रं पावनं पापनाशकमिति यावत्। तथाच "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन!" इति भगवद्वाक्यम् ॥

एवं तावदस्मिन्पद्ये ज्ञानं प्रशस्तमथैतस्मिन्नज्ञानं निन्द्यते—

"यद्गृहीतमविज्ञातम् ॥"

यद्गृहीतं श्रुतं गुरुमुखाच्छब्दतोऽर्थतश्चाविज्ञातं। किंच—

"निगदेनैव शब्द्यते ॥"

निगदेन पाठमात्रेणैव नित्यं शब्द्यते उच्चार्यते न पुनरर्थतो विचार्यते ॥ तस्य किमित्यपेक्षायामाह—

"अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ २ ॥"

यथा शुष्कमेधः काष्ठमनग्नावग्निरहितप्रदेशे न ज्वलति न दीप्यते। ज्वल दीप्तौ (भ्वा० प०) एवमर्थानभिज्ञेऽध्येतरि तदधीतमपि निष्फलं भवति। परिज्ञातं तु तदेव श्रेयसाभ्युदयेन च युनक्तीति सर्वथा तत्परिज्ञानाय निरुक्तशास्त्रमिदमारम्भणीयमिति भावः ॥

स्थाणुशब्दमर्थशब्दं च निगमप्रसक्तौ निर्वक्ति—

स्थाणुस्तिष्ठतेरर्थोऽर्तेः। अरणस्थो वा ॥

ख. सू. (१५)

तिष्ठतेर्गतिनिवृत्त्यर्थात्स्थाधातो–(भ्वा. प.)–र्णुप्रत्ययः (उ० ३–३७)॥ नित्यकालमेवासौ तिष्ठति स्थितो भवति न कदाचिद्प्यास्ते इति स्थाणुः। अर्थः अर्तेर्गत्यर्थात् ऋधातोः (जु० प०) "उषिकुषी" (उ० २–४)ति कर्मणि थन्। गुणः। अर्यते ह्यसावर्थिभिः। यद्वाऽरणस्थोऽर्थः। अरणं गमनम्। "ल्युट् चे" (पा० ३–३–१) ति ल्युट्। योरनादेशः। तत्र तिष्ठतीत्यरणस्थः। पृषोदरादिः। यदास्य स्वामी गच्छत्यस्माल्लोकाल्लोकान्तरं तदायमिहैव (लोके) तिष्ठति न तेन सहामुं लोकं गच्छतीति हिरण्यादिरर्थः। तत्सामान्यादितरोऽपि शब्दाऽर्थोऽर्थ इत्युच्यते ॥ २ ॥ (१५)

एवं तावच्छिष्टानुगमस्मृतौ ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यत इति दर्शितम्। इदानीं न केवलं स्मृतावेव (ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यते) अपितु श्रुतावपीति प्रदर्श्यते खण्डसूत्राभ्याम् ॥

तत्राद्ये–यथा—

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं१ विसस्रे जायेव पत्य उशती सुवासाः ॥"

(ऋ. सं. ८–२–२३)

वाक्सूक्तमियमृग्बृहस्पतिना दृष्टा। एवमपरापि त्रिष्टुप् ॥ अत्रोतशब्दोऽप्यर्थे। उशब्दो वितर्के। स चात्र पूर्वोक्तानभिज्ञवै-

१. यद्वा स्थाणुर्गर्दभः। स यथा चन्दनभारं वहन्नपि तद्गन्धाद्युपभोगैर्न सम्बध्यते। एवं किलासौ यो ग्रन्थमात्राध्येता नार्थज्ञ इति भावः ॥

२. तथाचामरः "वार्तासंभाव्ययोः किले"ति ॥

३. तथाच (निघं. १–१२–३–६) मेदिनी च "कं शिरःसुखवारिषु" इति ॥

४. तत् लोकवेदप्रसिद्धम्।

५. आध्यात्मिकं वातपित्तश्लेष्मणां वैषम्यनिबन्धनम्। आधिदैविकं यक्षराक्षसपिशाचग्रहाद्यावेशनिबन्धनम्। आधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिबन्धनमित्येतद्दुःखत्रयमुच्यते।

६. तथाचामरः "अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मष"–मिति ॥

१. इदं शाखान्तरगतं मन्त्रवचनद्वयमिति ऋग्भाष्यभूमिकायां सायणः ॥

२. अनुपदं (४ खं. सूत्रे) वक्ष्यमाणा "उत त्वं सख्ये" इत्यादिकापि ॥

लक्षण्याय प्रयुक्तः निपातानामनेकार्थत्वात् ॥ त्व इत्येकवाची। तदाह—

**अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनाम् ॥**

अयमर्थः। बहूनामपि समानोदरपृष्ठपाणिपादानां समानमेवाध्ययनमधीयानाना'मेकः' कश्चित् पुरुषः पाठमात्रपर्यवसितः **'पश्यन्नपि'** मनसा पर्यालोचयन्नपि **'वाचं'** वेदरूपां **'न पश्यति'**। अर्थविज्ञानरूपदर्शनफलाभावात् मूले ददर्शेति छान्दसो लिट् लडर्थे (पा० ५-३-४६) ॥ एवमेकः **'शृण्वन्नपि एनां'** वाचं **'न शृणोति'** श्रवणफलाभावात्। येनैव हि वाचोऽर्थोऽवबुध्यते तेनैव सा श्रुता भवति नेतरेणाविदुषा। तदाह—

**इत्यविद्वांसमाहार्धम् ॥**

इत्यर्धमनेनार्धर्चेनाविद्वन्निन्दनमाह मन्त्रदृगित्यर्थः ॥

अथ तृतीयपादेन विदितवेदितार्थमर्थज्ञं प्रशंसंस्तदर्थमाह—

**अप्येकस्मै तन्वं विसस्र इति ॥**

**'अथैकस्मै'** कस्मैचिदर्थज्ञाय **'तन्वं'** तनुं "वा छन्दसि अमिपूर्वः" (पा० ६-१-११७) इति पूर्वरूपाभावपक्षे यण्। **'विसस्रे'** विस्रंसयति विवृणोतीति तदर्थस्तदाह—

**स्वमात्मानं विवृणुते ज्ञानम् ॥**

इति। ज्ञानमित्यनेनार्थो लक्ष्यते। तद्विषया हि वागुच्यते। अर्थो हि वाचः शरीरम् **'स्व'**मुच्यते। तं **'विवृणुते आत्मानं'** दर्शयति प्रकाशयतीत्यर्थस्तदाह—

**प्रकाशनमर्थस्याहानया वाचा ॥**

**अनया वाचा** अनेन तृतीयेन पादेनेत्यर्थः ॥ कथं तर्हि विवृणुते तन्वमित्यतः—

**उपमोत्तमया वाचा ॥**

**उत्तमया वाचा** उत्तमेन (अन्तिमेन) पादेन "जायेव पत्य उशती सुवासा" इत्यनेन तृतीयपादस्योपमा "उच्यत" इति शेषः ॥ तदर्थमाह—

**जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु ॥**

यथा **'जाया'** जायतेऽस्यामित्यधिकरणे घञ् बाहुलकाज्जादेशे "आतो युक्" (पा० ७-३-३३)। तथाच निगमः "तज्जाया जाया भवति यदस्यां जायते पुन"रिति। **'पत्ये'** इष्टाय भर्त्रे। उशतीत्यस्यार्थमाह **'कामयमाना'** इच्छन्ती। वश कान्तावित्यादादिकस्य शतरि ङिति संप्रसारणे "उगितश्च" (पा० ४-१-६) ति ङीप्। संभोगार्थमत्यर्थं प्रार्थयमानेतियावत्। कदेत्यपेक्षायामाह **'ऋतुकालेषु'**। "षोडशर्तुर्निशाः स्त्रीणा"मिति मनूक्ते रजोनिर्गमदिवसादारभ्य षोडशाहोरात्राणि ऋतुस्तदुपलक्षिताः काला ऋतुकालास्तेषु। तत्रापि न सर्वदा किंतु यदा **'सुवासा'**स्तदर्थमाह—

**सुवासाः कल्याणवासाः ॥**

बहुव्रीहिणा निर्णिक्तवसना नीरजस्का "भवति तदे"ति शेषः। तथाभूता च चतुर्थ्यादिषु रात्रिषु भवतीति व्यक्तमन्यत् ॥

---

१. एतच्च महाभाष्यकृद्व्याख्यानानुसारेणोक्तम्। सायणस्तु—पश्यन्नपि न सम्यक्पश्यति। एकवचनबहुवचनादिविवेकाभावे पाठशुद्धेरपि कर्तुमशक्यत्वात्। 'वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' (तै. सं. २-१-१) 'आदित्यानेव स्वेन भागधेयेनोपधावति त एवैनं भूतिं गमयन्ति' (तै. सं. २-३-१) इत्यादावव्युत्पन्नः कथं पाठं निश्चिनुयात्। अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसाराहित्यादेनां वेदरूपां वाचं न सम्यक् शृणोति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाँश्चतुष्कपालान्निर्वपेदि-(तै. सं. २-३-१२)ति। अत्र व्याकरणमात्रेण प्रतिगृहीतुरिष्टिः प्रतीयते। मीमांसायां तु न्यायेन दातुरिति निर्णीतम्। तस्मादुभयमप्यविद्वांसं प्रत्येवमाहेति व्याख्यत् ॥

२. अर्थज्ञानपूर्विका प्रवृत्तिनिवृत्ती एव श्रवणफलं तदभावे तच्छ्रवणमप्यश्रवणप्रायमिति भावः ॥

३. नहि मन्त्रः कंचिदर्थमाह किंतु तेन तद्वक्ता। अयं च न्यायवैशेषिकसंमतोऽध्वा। मीमांसका-(जैमिनीया)-स्तु वेदमपौरुषेयं मन्वाना मन्त्रस्यैव स्वातन्त्र्येण प्रवर्तकत्वं निवर्तकत्वं चाहुः ॥

४. तृतीयपादार्थम्—सायणस्तु—यः पुमान्व्याकरणाद्यङ्गैः स्वशब्दार्थं मीमांसया तात्पर्यं च शोधयितुं प्रवृत्तस्तस्मा एकस्मै वेदः स्वकीयां तनुं विसस्रे। स्वमित्यादिकं पदव्याख्यानम्। ज्ञानमित्यादिकं तात्पर्यव्याख्यानम्। वेदार्थप्रकाशनक्षमं सम्यग्ज्ञानमनया तृतीयपादरूपया वाचा मन्त्र आहेत्येवं व्याचख्यौ ॥

५. अपिशब्दोऽत्र उतशब्दस्य मन्त्रोक्तस्य पर्यायः। सचाथशब्दसमानार्थोऽत्र (निरुक्ते) बहुत्र व्याख्यातः ॥



१. तुरीयपादार्थम् ॥

२. शतुर्ङित्त्वं "सार्वधातुकमपित्"-(पा. १-२-४)ति। संप्रसारणं च "ग्रहि ज्येति" (पा. ६-१-१६) ॥

३. अस्यार्थमाह रक्तेत्यादिना ॥

४. शोभनं वासो वस्त्रं यस्या इत्येवम् ॥

५. रजोदिवसादित्यादिः। आद्यासु हि तिसृषु रजोनिर्गमावश्यंभावान्न सा नीरजस्का भवति। अतएव याज्ञवल्क्यः। "स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शये"दित्यादि। स्त्रीधर्मो रजः सोऽस्त्यस्या इति स्त्रीधर्मिणी पुष्पवती। तथाचामरोऽपि "स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपी"-ति ॥ तथा चतुर्थेदिने स्नानमुक्त्वा स एव "सुस्नाता भर्तृवदनमीक्षेतान्यस्य कस्यचि-"दित्याह। अन्ये त्वाहुः सुवासाः शोभनवस्त्रा। वास इत्युपलक्षणं भूषादेरपि। तथाच कृतप्रसाधनेति तदर्थः। ऋतुष्वित्युक्त्यैव षोडशरात्रिलाभे कालेष्वित्युक्त्वा च विहितकालेषु। "तासामाद्याश्चतस्रस्तु निन्दितैकादशी च ये-"त्यादिना मनुना निषिद्धतत्कालभिन्नेष्वित्यर्थः। इति ॥

६. सायणस्तु—यद्यप्यह्नि गृहकृत्यवेलायां मलिनवासास्तथापि

## कामयमाना ऋतुकालेषु ॥

अयं च प्रतिज्ञाभ्यासो निगमलक्षणम् । तथाचोक्तं "प्रतिज्ञाभ्यासो निगम" इति । तदाहि साऽतितरां संभोगार्थं पुरुषं प्रार्थयतेऽत एतयावस्थयोपमीयते । इत्थंच । यथा जाया पत्नी विवृतसर्वाङ्गावयवा भूत्वाऽत्यर्थं कामयमाना सती पत्ये इष्टाय भर्त्रे ऋतुकालेषु संभोगार्थं प्रेम्णोपतिष्ठते स्वात्मानं विवृणुते । एवं वागप्यर्थज्ञायेति—दृष्टान्तं सम्यगभिधाय प्रकृतमुपसंहरति—

## यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा ॥

तथा, एवेति शेषः । **यथा स** पुरुषस्तामेनां स्त्रियं यथावत्पश्यति नेतरामेवं स ( अर्थज्ञ ) एवैतां वाचं यथावच्छृणोति नेतरः । **इति** इयमस्यामृच्यर्थज्ञप्रशंसोक्ता ॥

## तस्योत्तरा भूयसे निर्वचनाय ॥

( खं० सू० ) ॥ ( १९ )

**तस्यैव** प्रकृतस्यार्थस्य ज्ञानप्रशंसाख्यस्योत्तरा पूर्वोक्ता उत त्व इत्यस्या ऋचः परभूताऽनुपदमुपक्रमिष्यमाणोतत्वमित्यादिका ( फलाभिधानद्वारा ) **भूयसे** बहुतराय निर्विविच्य अमुना फलेनाभिसंबन्धात्प्रतिविशिष्टं ज्ञानमित्येवं निर्धार्य—वचनं निर्वचनं तस्मै **निर्वचनाय** भवति । तादर्थ्ये चतुर्थी ॥ ( पा० २-३-१३ वा० )

तद्यथा—

## "उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।

## अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥"

( ऋ. सं. ८-२-२३ )

अत्राप्युत-त्व-शब्दावप्ये-कार्थौ ॥ तदाह—

## अप्येकं वाक्सख्ये स्थिरपीतमाहुः ॥

विदुषां संसदि या सत्कथा भवति सा सखिकर्मत्वात्सख्यमित्युच्यते । सा च वाचा क्रियतेऽतो वाक्संबन्धा '**वाक्सख्ये स्थिरपीतं**' पीतं मधु यस्य हृदये स्थिरं भवति स स्थिरपीतः । बहुव्रीहौ सुखादित्वात्स्थिरशब्दस्य, निष्ठान्तस्य पीतशब्दस्य परप्रयोगस्तथाच वार्तिकम् । "जातिकालसुखादिभ्यः परा निष्ठा वाच्ये" ( पा० २-२-३६ वा० ) ति । यद्वा स्थिरप्राप्तिं '**माहु**'-र्ऋषयः ॥ प्रकारान्तरेणैतदर्थमाह—

## रममाणं विपीतार्थं देवसख्ये-रमणीये स्थान इति वा ॥

अत्र सख्ये इत्यस्यार्थमाह **देवसख्य** इति । समानख्याततायां देवसायुज्य इति तदर्थः । वक्ष्यति हि "यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति" ( प० का० १३-१३ ) इति ॥ अथवा **देवसख्ये** देवानां सख्यं यत्र तस्मिन्**रमणीये स्थाने** देवलोके इत्यर्थः । स्थिरपीतमित्यस्यार्थमाह **रममाणं विपीतार्थ**मिति । स्थिरमविचालि-

---

संभोगकाले्षु कल्याणवासा भवति । अत्र हेतुः कामयमाना ऋतुकालेष्विति । इत्येवमवतारयामास ॥ "षोडशर्तुर्निशा"इति मनुना षोडशनिशानामृतुसंज्ञाकरणादेवमुच्यते ॥

१. आद्यार्धर्चेन प्रस्तुतम् ॥

२. साकल्येनादरयुक्तः पश्यति । किंच तयोक्तमर्थं हितबुध्या शृणोति । तथायं चतुर्दशविद्यास्थानपरिशीलनोपेतः पुरुषो वेदार्थरहस्यं सम्यक्पश्यति वेदोक्तं च धर्मब्रह्मरूपमर्थं हितबुध्या स्वीकरोति सेयमुक्ता वेदार्थाभिज्ञस्य प्रशंसेति सायणः ॥

३. याज्ञानल्पावृतसर्वगात्रा भवतीति दुर्गः ॥

४. यः पदशोऽवच्छिद्यैतां विगृह्यार्थमस्याः पश्यति समन्ततः । इति दुर्गः ॥

५. प्रक्रान्तार्थको ह्यत्र तच्छब्दोऽत एव च न यच्छब्दापेक्षापि । "प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यच्छब्दोपादानं नापेक्षत—" इति मम्मटोक्तेः । सावधारणोक्तिस्तु वाक्यधर्मत्वादब्भक्षवदित्युक्तमसकृदधस्तात् ॥

६. तस्मै इदं तदर्थं तस्य भावस्तादर्थ्यं तत्संबन्ध उपकार्योपकारकभावरूपस्तस्मिन् । कृत्तद्धितसमासैः संबन्धाभिधानं भावप्रत्ययेनेति नियमो व्याकृतिविदाम् ॥

७. सायणस्त्विमं मन्त्रमित्थं व्याख्यत् । अपिचैकं चतुर्दशविद्यास्थान-कुशलं पुरुषं वेदरूपाया वाचः सख्ये स्थित्वा स्थैर्येण वेदोक्तार्थामृतपानयुक्तमाहुः । अभिज्ञाः कथयन्ति, "सखिविदं सखायम्" ( ऋ. सं. ८-२-२४ ) इति मन्त्रे वेदस्य सखित्वमुदाहृतम् । यद्वा स्वर्गलोके वेदानां सख्ये स्थित्वाऽतिशयेन पीतामृतमाहुः । वाचामिना ईश्वराः । सभासु प्रगल्भा वा वाजिनास्तेषु तेषां मध्येऽप्येनं वेदार्थकुशलं चोदयितुं न हिन्वन्ति न केऽपि प्राप्नुवन्ति । तेन सह विवदितुमसमर्थत्वात् । यस्त्वन्यः पाठमात्रपरः पुष्पफलरहितां वाचं शुश्रुवान्भवति । पूर्वकाण्डोक्तस्य धर्मस्य ज्ञानं पुष्पम् । उत्तरकाण्डोक्तस्य ब्रह्मणो ज्ञानं फलम् । यथा लोके पुष्पं फलस्योत्पादकं, तथा वेदानुवचनादिधर्मज्ञानमनुष्ठानद्वारा फलात्मकब्रह्मज्ञानेच्छां जनयति । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" ति श्रुतेः । यथाच फलं तृप्तिहेतुस्तथा ब्रह्मज्ञानं कृतकृत्यत्वहेतुः । "यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवती"ति श्रुतेः । तादृशपुष्पफलरहितवेदपाठकः स एष पुमानधेन्वा मायया सह चरति । नवप्रसूतिका क्षीरस्य दोग्ध्री गौः प्रीतिहेतुत्वाद्धिनोतीति व्युत्पत्त्या धेनुरित्युच्यते । पाठमात्रपरं प्रति वेदरूपा वाक् धर्म-ब्रह्म-ज्ञानरूपं क्षीरं न दोग्धीत्यधेनुः । अतएवासौ माया कपटरूपा ऐन्द्रजालिकनिर्मितगोसदृशगोरूपत्वात् । तया मायया सह चरन्नयं परमपुरुषार्थं न लभत इति ॥ १ ॥

१. तदेतदुपदर्शयन्प्रथमपादार्थमाहेत्यर्थः ॥

नमप्रच्यवमानधर्माणं तत्रैव रममाणमिति यावत्। विपीतार्थ-मापीतार्थं गृहीतार्थमिति यावत्। लोकेऽपि हि ज्ञातार्थं पुरुषं पीतार्थमिति वदन्ति ॥

एकं कमित्यपेक्षायां द्वितीयपादार्थमाह—

**विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वपि ॥**

यमेनं स्थिरपीतं **विज्ञातार्थं** पुरुषं वाजिनेषु वाक्ष इना ईश्वरा येषां ते वाजिना अर्थास्तेषु वाच आयत्ताः खल्वर्था इत्याह **वाग्ज्ञेयेषु** अर्थेषु **बलवत्सु** दुर्विज्ञेयेषु नापि ह्निन्वन्ति। अपिशब्दोऽन्वर्थे। केचिदपि नाप्नुगन्तुं शक्नुवन्ति। प्रीणना-र्थोऽपि हिवि-(भ्वा० प०)रिहानेकार्थत्वादुक्तार्थकः। एवंता-वदर्थज्ञः प्रशस्तः।

अथेदानीं केवलपाठकोऽनर्थज्ञः (अविद्वान्) उत्तरेणार्धर्चेन निन्द्यते। तदर्थमाह—

**अधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया ॥**

**एषोऽ**विज्ञातार्थः। **अधेन्वा** धेनुत्ववर्जितया कामाना-मदोग्ध्या **वाक्प्रतिरूपया मायया हि** निश्चयेन **चरति** ॥ कुतः ?। यतः—

**नास्मै कामान्दुग्धे वाग्दोह्यान् देवमनुष्य-स्थानेषु ॥**

**वाक्**-कर्त्री। देवाश्च मनुष्याश्च देवमनुष्यास्तेषां स्थानानि तेषु **देवतास्थानेषु मनुष्यस्थानेषु** च **दोह्यान्**दोग्धव्यान् **कामान**भिलषणीयान् **अस्मै** अविज्ञातार्थाय **न दुग्धे** न प्रपूरयति ॥ क एवंविधः—

**यो वाचं श्रुतवानभवत्यफलामपुष्पामिति ॥**

**इति**-एवं पाठमात्रेण **यः अफलामपुष्पां वाचं** शुश्रुवान् **श्रुतवान्** भवति। एभ्यः सकाशात् श्रुत्वा च दृढग्राहेण गृहीत्वाऽवस्थितो भवति 'अध्ययनादृते नान्यदस्ति किंचिद्वाचि मृग्यमि'ति। तस्मै किमित्यपेक्षायामाह—

**अफलास्मा अपुष्पा वाग्भवतीति वा ॥**

यथैव ह्यसौ पश्यति **अफले**यमपुष्पा चेति तथैवास्मै **अफलैव अपुष्पैव** च **वाग्भवतीति** भावः॥ वाशब्दोऽत्र एवकारार्थे प्रयुक्तः॥

**किंचित्पुष्पफलेति वा ॥**

**वा** अथवा। अयमर्थः। नञल्पार्थेऽप्यस्ति। अनुदरा कन्येति यथा। तथाच अफलामपुष्पामित्यस्याल्पफलामल्पपुष्पा-मित्यर्थोऽपि भवितुमर्हति। नहि सर्वथाऽध्ययनमनर्थकं भवितुमर्हति अध्यापनविधिना शिष्टत्वादध्ययनविधेश्चेति भाष्यकाराभिप्रायः॥

---

१. ईश्वरा ईशयित्री प्रभुरिति यावत्। तथाचामरः "इनः सूर्ये प्रभौ" इत्यादिः॥ ईश ऐश्वर्ये (अ. आ.) वरच् टाप्।

२. दुरवघट्टनीयेषु समुद्रपिहितरत्नसन्निभेषु देवतापरिज्ञानादिषु व्याकर्तव्येषु। स एव हि तान् व्याकर्तुं शक्नोति नेतरे मन्दमतयो बहवोऽपि समागताः शक्नुवन्ति तानर्थान्व्याकर्तुं यानसौ व्याकरोति इति दुर्गः॥ यद्वा वाजिनेषु सारभूतेषु निरूपणी-येष्वर्थेषु एनं न ह्निन्वन्ति न बहिष्कुर्वन्ति एनं पुरस्कृत्यैव सर्वे वेदार्थं विचारयन्तीत्यर्थः। वाजिनो वुस्यानदेवतास्तदुद्देश्यकत्वा-द्वाजिनानि। शृतोष्णे क्षीरे दधियोगे घनीभूतांशादन्यानि द्रवीभूतानि दुग्धदध्युभयसारभूतानि जलानि। घनीभूतांश-स्त्वामिक्षा। तथाच श्रुतिः "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिन"मिति। अमरोऽपि "आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगत" इति। वैश्वदेवी विश्वदेवदेवताकत्वात्॥

३. तृतीयपादार्थमाहेत्यर्थः॥

४. वाक्तुल्यया यतो हि नेयं वास्तविकी वाक्। या हि कामदोग्ध्री सैव सा। प्रतिरूपशब्दः सदृशवचनोऽस्ति यथोपसर्ग-विभक्तिस्वरप्रतिरूपकाश्चेति। माययेति। यथा वन्ध्या पीना गौः किं द्रोणमात्रमियं क्षीरं दोग्धीति? मायां भ्रान्तिमुत्पादयन्ती चरति, यथावा वन्ध्यो वृक्षोऽकाले पल्लवादियुक्तः सन्पुष्प्यति फलतीति भ्रान्तिमुत्पादयंस्तिष्ठति तथाऽर्थवर्जितां कर्मादिविषयज्ञा-नवर्जितां वा वाचं श्रुतवान्केवलं पाठमात्रं प्रब्रुवाणश्चरतीत्यर्थ इति समुदितार्थः॥

---

1. एतच्च परिज्ञात्रपेक्षयोच्यते। सत्यपि वाचकतयाऽर्थे, विषयतया च ज्ञाने, स्वविषयकज्ञानवत्त्वया समवायेन चापरि-ज्ञातरि पाठमात्रेणाधीयाने फलाभावान्नास्त्येवेति सती अपि अर्थज्ञाने न स्त एवेति भावः। स्वम् अर्थः॥

१. शृणोतेश्छान्दसो लिटः क्वसुस्तदर्थमाह—श्रुतवानिति। शुश्रुवानिति निगमोक्तानुवादः॥

२. पाठमात्रेणाफलामपुष्पां वाचं श्रुतवच्च आत्मवदनात्मविच्च॥

३. तथाचोक्तम् (वै० भू० का०) "तत्त्वाद्व्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकी-र्तिताः॥ १॥" इति॥

४. "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते"त्यध्यापनवि-धिनाध्ययनस्यापि शिष्टत्वादुपदिष्टत्वाद्वेदबोधितत्वादिति यावत्। नहि विधि[1]बोधितं किंचिदफलं भवति॥

५. तथाच ब्राह्मणं "स्वाध्यायोऽध्येतव्यः, स्वाध्यायमधीयीते"-ति च॥ सु—समीचीनं यथावदामर्यादयापरिपाट्याऽध्यायोऽध्ययनं यस्य स वेदः साङ्गः सफलोऽध्येतव्य इति तदक्षरार्थः॥

६. भाष्यकारस्यास्य यास्कमुनेरभिप्राय आशयः। "छन्दो-ऽभिप्राय आशय" इत्यमरः॥

---

1. विधिना वेदवाक्येन। बोधितं विहितम्। किंचिद्बहुफलं किंचिदल्पफलमिति त्वन्यत्सर्वथा फलरहितं तु न किमपि। तथाच शश्वच्छ्रूयते "प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायम-धीयानो दिवसकृतं पापं नाशयती"त्येवम्॥

2. अङ्गैः षड्भिः शिक्षादिभिः। फलेनाध्यात्म-(ब्रह्म)ज्ञानेन च सहितस्तावत्पर्यन्तं यावदात्मज्ञानं न संबध्यत इति भावः॥

किं पुनर्वाचः पुष्पफलं ? उच्यते—

**अर्थं वाचः पुष्पफलमाह ॥**

एतस्मिन्मन्त्रे मन्त्रदृक् ॥

कः पुनरसावर्थः ? इति ( याज्ञदैवतमध्यात्ममित्येष वाचः समासतोऽर्थः । स एव रूपकल्पनया ) पुष्पफलविभागेन द्विधा प्रविभज्यते—

**याज्ञदैवते पुष्पफले देवताध्यात्मे वा ॥**
**४ खं. सू. ॥**

यज्ञे भवं ज्ञानं **याज्ञं** देवतासु भवं **दैवतम्** । आत्मन्यधि[3] यद्वर्तते तद् **ध्यात्मम्** ॥ यज्ञपरिज्ञानं देवतापरिज्ञानमात्मपरिज्ञानं च । एतदेव मन्त्रब्राह्मणात्मकसमस्तवेदप्रतिपाद्यम् । तत्र यद्यभ्युदयलक्षणो धर्मोऽभिप्रेयते तदा दैवतार्थत्वाद्याज्ञं पुष्पं दैवतं फलम् । फलार्थं हि पुष्पं भवति पूर्वम् । यदि पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते तदोभे याज्ञदैवते पुष्पमेव विभूतः । दैवते हि तदर्थत्वाद्याज्ञमन्तर्भूतमेवेति **दैवतं** पुष्पमध्यात्मं फलम् । अत्रेदमवधेयम् ॥ यथा पुष्पं निजं पुष्पभावमुच्छिद्य सरूपविरूपपरिणामाभ्यां फलभावाय प्रभवति, तथा निष्कामकृते आद्ये आत्मज्ञानं संपाद्य निःश्रेयसफलाय भवत इति ॥ ४ ॥

एवं तावच्छास्त्रारम्भमुपसमाधायास्याङ्गान्तरात्प्राधान्यमुच्यते—

**साक्षात्कृतधर्माण ऋषयो बभूवुः ॥**

यैः प्रतिविशिष्टेन तपसा साक्षात्कृतः प्रत्यक्षतो दृष्टो धर्मस्ते **साक्षात्कृतधर्माणः** । "धर्मादनिच् केवलात्" ( पा० ५–४–१२४ ) ति समासान्तोऽनिच्प्रत्ययः । **ऋषयः** ऋषन्त्यवगच्छन्त्यमुष्मात्कर्मण एवमर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैवंलक्षणं फलं ( विपरिणामो ) भवतीत्यृषयो मन्त्रद्रष्टारो मन्त्रकाले **बभूवुः** । वक्ष्यति च "ऋषिर्दर्शनात्" ( नै० २–३–२ ) इति ॥ तदेतत्कर्मणः फलविपरिणामदर्शनं धर्म उपचर्यते । नहि धर्मस्य दर्शनमस्त्यत्यन्तापूर्वो हि धर्मोऽत एवादृष्टमिति तस्य नामधेयं भवति ॥

**तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः ॥**

**ते**–ये साक्षात्कृतधर्माणः । **अवरेभ्यो**ऽवरकालिकेभ्यः विज्ञानशक्तिहीनेभ्यो**ऽसाक्षात्कृतधर्मभ्यः** शाखाप्रवक्तृभ्यः श्रुतर्षिभ्य **उपदेशेन** शिष्योपाधिकया वृत्त्या **मन्त्रान्** शब्दतोऽर्थतश्च **संप्रादुः** सम्यक् प्रदत्तवन्तस्तेऽपि चोपदेशेनैव जगृहुरित्यर्थः ॥

अथ तेऽपि—

**उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च ॥**

**अवरे** निघण्टु–ब्राह्मण-वेदाङ्ग–कारा **उपदेशाय** उपदेशार्थं **ग्लायन्तः** कथमिमेऽल्पायुषोऽल्पग्रहणशक्तिकाश्चैता-

१. पुष्पं च फलं चेति द्वन्द्वे "[1]जातिरप्राणिना"– ( पा. २–४–६ ) मित्येकवद्भावः ॥

२. क एवमाहेत्यपेक्षायामिदमुक्तम् ॥

३. एतच्चार्थमपेक्ष्योक्तम् । विग्रहस्तु नित्यसमासत्वादात्मनि–इतीत्येव । अविग्रहो नित्यसमासः अस्वपदविग्रहो वेति नियमात् । अस्वपदविग्रह इति स्वभिन्नेन ( शब्दतः ) स्वसदृशेन ( अर्थतः ) पदेन विग्रहो वृत्त्यर्थावबोधकं वाक्यं यत्रेत्यर्थः । [2]नञ्समासादयमर्थो लभ्यते ॥

४. निश्चितं श्रेयो निःश्रेयसम् "अचतुर–" ( पा. ५–४–७७ )त्यादिनाच्समासान्तः । मोक्षः "मुक्तिः कैवल्यानिर्वाणश्रेयोनिःश्रेयसामृतम् । मोक्षोऽपवर्गः" इत्यमरः ॥

१. आरोप्यते । उपचार आरोपः ॥

२. तेषां हि ततः पश्चादृषित्वमुपजायते, न यथा पूर्वेषां साक्षात्कृतधर्मणां श्रवणमन्तरेणैवेति ते श्रुतर्षय उच्यन्ते । एतेनेदं भाष्यवचनं प्राचीनमेव यास्केनेहानूक्तमिति प्रतिभाति ॥

1. आकृतिग्रहणा हि वैयाकरणनये जातिः । आकृत्याऽवयवसंस्थानेन ग्रहणं ज्ञानं यस्या इति तदर्थः । तथाचोक्तम् "आकृतिग्रहणा जाति" ( पा. ४–१–६३ वा. ) रित्यादि ॥

2. अस्व इति नञ्समासे नञ्योगा "नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगति"रिति परिभाषणात् । नञ्युक्तमिव युक्तं च यद्दृश्यते तत्र तद्भिन्ने तत्सदृशेऽधिकरणे द्रव्ये ( वस्तुनि ) कार्यं विज्ञायते । हि यतस्तथैवार्थस्य गतिर्ज्ञानं भवति नेतरथा । अतएव च वैयाकरणैः सादृश्यलक्षणं भेदघटितं नोरीक्रियते "तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्व" मित्येवम् , किंतु तद्गतभूयोधर्मवत्त्वमित्येव । तेन स्वभिन्नापि स्वसादृश्यमक्षतमिति समानः पतिर्यस्याः सा सपत्नीति सिध्यति । नहि द्वयोरेकः पतिः समानो भवति तन्मतेन ( नैयायिकमतेन ) कष्टकल्पनयौपचारिकमेदमादाय तत्त्वोपगमे सूक्ष्ममेव वरम् ॥

1. नहि स्वयमेव दुरूहं शब्दं प्रयुज्य तद्व्याख्यानाय च यतितुं प्रवर्तते कश्चित् । स्वपदवर्णनमेव भाष्यलक्षणम् । यथाहुः "सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ १ ॥" इति । निरुक्तस्य च निघण्टुभाष्यत्वं सर्वसंमतमिति स्वपदव्याख्यानमपीह न दोषायेत्यपि वक्तुं न युज्यते । यदत्र बिल्मशब्दस्य भिल्ममिति प्रतिशब्दमुक्त्वापि अर्थान्तरं वदति भासनमिति वेति । संशयमपि ध्वनयति । अतश्च ज्ञायते नेदं स्वपदवर्णनमिति । नहि स्वपदव्याख्याने स्वज्ञानवैकल्पिकत्वप्रकटनमुपयुज्यते क्वचिदपीति । पुराकल्पश्रुतवचनमिदं यास्केनानूक्तमिति निरुक्तालोचनकारा आहुः । एतत्तत्त्वमस्या भूमिकायां द्रष्टव्यम् ॥

वन्तं शब्दतोऽर्थतश्च समुपदिश्यमानमर्थजातं ग्रहीतुं शक्नुयुरिति खिद्यमानास्तेष्वनुकम्पया **बिल्मग्रहणाय** भेदज्ञानार्थम् **इमं ग्रन्थं** गवादिदेवपत्न्यन्तं निघण्ट्वपरनामकम् **समाम्नासिषुः** समाम्नातवन्तः ॥ इममेव न, किंतु **वेदं** ब्राह्मणं च **वेदाङ्गानि** चेतराणि[1] ॥

बिल्मपदं भाष्यवाक्यप्रसक्तं स्वयं निर्वक्ति—

## बिल्मं भिल्मं भासनमिति वा ॥

यदेतद्बिल्ममित्युक्तमेतद्भिल्मं वेदानां भेदनम् । भेदोऽत्र व्यासः[2] । शाखाप्रशाखादिना नानाकरणम् । **वा**—अथवा **भासनं** प्रकाशनमित्येव बिल्मशब्देनोच्यते । वेदाङ्गविज्ञानेन हि वेदार्थः प्रकाशते । एवं भिदेर्भासतेर्वा मप्रत्यये पृषोदरादित्वाद्वर्णव्यत्ययेन बिल्मशब्दः साधितः । एवमग्रेऽपि यथायथं द्रष्टव्यम् ॥

एवमिदं साक्षात्कृतधर्मभ्य ऋषिभ्य उपदेशपरम्परया सनिघण्टुकं निरुक्तशास्त्रमागतमितराणि चाङ्गानीति परिशोधित आगमपन्थाः ॥

अथेदानीं निघण्टुसमाम्नायनिर्वचनाय तदीयविरचनाप्रकारः प्रदर्शनीयः प्रकरणत्रयविभागेन सुखव्याख्यानार्थमस्य शास्त्रस्य । सोऽयमुच्यते—तत्र तावन्नाम्नो धातुमूलत्वादादौ धातुप्रविभागप्रकारं दर्शयति—

## एतावन्तः समानकर्माणो धातवः ॥

एतावत्पदेनात्र या चैषु धातुषु व्याख्यातव्येषु प्रतिनियता संख्यास्ति साभिप्रेयते । तद्यथा कान्तिकर्माण उत्तरे धातवोऽष्टादश । गतिकर्माण उत्तरे धातवो द्वाविंशं शतम् (नैघ० ३–२–३) इत्येवमादि ॥ अथ धातुं निराचष्टे—

## धातुर्दधातेः ॥

डुधाञ् धारणपोषणयोः (जु० उ०) इत्यस्मात्तुनि धातुशब्दो निष्पद्यते ॥

## एतावन्त्यस्य सत्वस्य नामधेयानि ॥

अत्राप्येतावत्पदेन या नामसु प्रतिनियता संख्यास्ति साभिप्रेयते । तद्यथा इमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि (नैघ० २–२–३) हिरण्यनामान्युत्तराणि पञ्चदश (नैघ० ३–३–१) इत्येवमादि । यत्रैतावर्थौ प्रायेण चिन्त्येते प्रसङ्गतोऽन्यद्यत्किंचित् एवंलक्षणं नैघण्टुकं नाम प्रकरणम् । गवादि–प्राक्जहा–(नैग० ४–१–१) शब्दात् ॥

अथ पुनर्यत्र—

## एतावतामर्थानामिदमभिधानम् ॥

इत्यर्थः प्रायेण चिन्त्यते । तद्यथा आदित्योऽप्यकूपारः । समुद्रोऽप्यकूपारः । कच्छपोऽप्यकूपारः (नैग० ४–३–२) इत्येवमादि । अनवगतसंस्काराश्च[3] निगमाः[4] (निगमशब्दाः) जहादयः प्रायेण चिन्त्यन्ते प्रसङ्गतोऽन्यद्यत्किंचित् एवंलक्षणमैकपदिकं[5] नाम प्रकरणं जहादि–प्राक् अग्नि (दै० का० ७–३–६) शब्दात् ॥

अथ पुनर्यत्र—

## नैघण्टुकमिदं देवतानाम्, प्राधान्येनेदमिति ॥

---

१. अत्र पञ्चेति पदप्रयोगो भ्रान्तिमूलक एव केषांचिद्व्याख्यातॄणामित्यवगन्तव्यम् ॥ अतः पूर्वमपि निरुक्तान्तरसद्भावस्यानेनै—(यास्केनै-)व नैरुक्तसमयश्चेत्येव (नि. १–४–१) मुक्त्या बोधनात् ॥ इममित्युक्त्या च निघण्टोरेव ग्रहणमिष्टम् । नतु निरुक्तस्यास्य । प्रणीयमाने हि निरुक्ते "समाम्नासिषु"रिति परोक्षातीतप्रयोगानुपपत्तेः । अपरं च निरुक्तमासीत् शाकपूण्यादिप्रोक्तं तदभिलक्ष्यैव तथा क्रिया प्रयुक्तेत्यपीह वक्तुं न युज्यते । अनुपदमेव "एतावन्तः समानकर्माणो धातव" इत्याद्युक्त्या निघण्टुपरिचयस्यैवोपलब्धेः ॥

२. व्यसनं व्यासः । विपूर्वादसुक्षेपण इत्यस्माद्घञ् । यत्समाख्यया बादरायणः पाराशर्योऽपि व्यासः वेदव्यास इति चोच्यते । तत्र व्यस्यतीति व्यासः । ज्वलादित्वादाद्ये णो द्वितीये तु कर्मण्यण् । (पा० ३–२–१) अयमर्थः । वेदं तावदेकमतिमहत्त्वाद्दुरध्येयं सन्तं तेषामल्पायुषामल्पग्रहणशक्तिकानां सुखग्रहणाय व्यासेनानेकशाखाभेदेन समाम्नातवन्तः । तद्यथा—एकविंशतिधा बाह्वृच्यम्[1] । एकशतधाऽऽध्वर्यवम् । सहस्रधा सामवेदम् । नवधाऽऽथर्वणम् एवं वेदाङ्गान्यपि । तद्यथा व्याकरणमष्टधा[2] निरुक्तं चतुर्दशधेत्येवमादि ॥

१. नामप्रविभागात्पूर्वम् ॥

२. एतत्सर्वमर्थवशादध्याहृतं[1] वेदितव्यम् । यद्यपि निघण्टुसामान्यलक्षणोपलक्षितः प्रकरणत्रयविभागेनावस्थितो गवादिदेवपत्न्यन्तः सर्वोऽप्ययं पञ्चाध्यायीशास्त्रसंग्रहः । तथापि तदेकदेशेऽत्र (प्रकरणे) नैघण्टुकमित्येतया निरूढसंज्ञया व्यवहारः शास्त्रकृतो वेदितव्यः । एवमुत्तरत्रापि यथायथमूह्यम् ॥

३. एतच्चानुक्तमप्यत्र, वक्ष्यमाणतत्काण्डारम्भप्रतिज्ञावाक्यादत्रानुसंहितमिति बोध्यम् ॥

४. अतएवास्य नैगममिति संज्ञात्रैव खण्डसत्रान्ते प्रतिज्ञास्यते ॥

५. व्यक्तीभविष्यति चैतत् (नै० ग० का० १–४–१) एकं पदमनेके चार्था इत्येतत्प्रकृत्य कृतत्वादिदमैकपदिकमित्युच्यते ॥

---

1. बह्व्य ऋचोऽधीयते इति बह्वृचाः । "ऋक्पूरब्धूःपथामानक्षे" (पा० ५–४–७४) इत्यप्रत्ययान्तः "अनृचबह्वृचावध्येतर्येवे"ति निपातः । बह्वृचानामाम्नायो बाह्वृच्यम् । "छान्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" (पा० ४–३–१२९) इति ञ्य आदिवृद्धिः । एवमध्वर्यूणामयमाम्नाय आध्वर्यवम् । शैषिकोऽण् ॥

2. तथाचाहुः । "इन्द्रश्चन्द्रः काशकृत्स्नाऽऽपिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिका" इति ॥

1. यत्रैतावर्थौ चिन्त्येते इत्यादि प्रकरणान्तरम् ।

इदमभिधानमनुपदमुदाहरिष्यमाणमश्वादि-**नैघण्टुकं-दे-वतानाम,** ( अप्राधान्येन ) **इदमन्यदुक्तवदस्यादि** च, **प्राधान्येनात्र** मन्त्रे वर्तत इत्ययं विभागः प्रायेण चिन्त्यते ॥ तत्र किमित्यपेक्षायामुत्तरं वक्ष्यति तथानि नामानीत्यादि ( १–६–६ खं० ) अनुपदमत्रैव । संप्रति पञ्चाध्यायीशास्त्रसंग्रहे प्रवृत्तं निघण्टुपदं तद्धितवृत्त्या तदेकदेशे गवादिजहाशब्दान्ते प्रकरणे प्रवृत्तं कथं पुनरस्मिन्-( प्राधान्येन देवताभिधानेऽ ) श्वादिशब्देऽनुपदमुदाहरिष्यमाणे प्रवृत्तमिति किमिदमुक्तं भवतीत्याह—

**तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत् ॥ ५ खं. सू. ॥**

यदिदमुक्तं नैघण्टुकमिदं देवतानाम प्राधान्येनेदमिति यत्र न ज्ञायते किमिदमुक्तं भवतीति तदेतल्लक्षणत उपदिश्यत इति पर्युपयुक्तस्तच्छब्दः । **यत्** अभिधानम**न्यदैवते** अन्यद्दैवतम् ( अन्या प्रधानदेवता ) यस्मिन्सोयमन्यदैवतस्तस्मिन् **मन्त्रे** मंत्रवाक्ये **निपतत्यर्थ** निगमयत्यन्यस्यां प्रधानायां मन्त्रदेवतायां, स्वयं चाभिप्रयुज्यमानमङ्गभावं गच्छति **तद्गुणभूतं नैघण्टुकम्** । संज्ञा हि तस्येयमस्मिञ्छास्त्रे ॥

तद्यथा—

**"अश्वं॒ न त्वा॒ वार॑वन्तम्" ॥**

( ऋ. सं. १–२–२२–१ )

अस्यामृचि अश्वो नैघण्टुकः । अग्निः प्रधानम् । इति तद्दैवत्यं शुनःशेपस्यार्षं गायत्री । वारवन्तीयानुशंसने विनियुक्ता ॥ अस्य "वन्दध्या॑ अ॒ग्निं नमो॑भिः । स॒म्राज॑न्तमध्व॒राणा॑मिति" शेषः ॥

अत्र नेतीवार्थे । वारशब्दः कपिलादिरतो लत्वविकल्प इत्याह—

**अश्वमिव त्वा बालवन्तम् ॥**

अयमर्थः । हे अग्ने, **'अध्वराणां'** यज्ञानां **'सम्राजन्तं'** सम्राट्स्वरूपम् । संपूर्वाद्राजतेः शतरि रूपम् । ( स्वामिनम् ) **'अग्निं'** ( हूयमानहविषः ) देवानामग्रे नेतारं त्वां **'नमोभिः'** स्तुतिभि**'र्वन्दध्यै'** ( अभिप्रेतार्थसंसिद्धये ) वन्दितुं प्रवृत्ता वयमिति शेषः । वदि अभिवादनस्तुत्योः ( भ्वा० आ० ) "इदितो नुम्" ( पा० ७–१–५८ ) ति नुम् । "तुमर्थे सेसेनि"-( पा० ३–४–९ ) ति तुमुनोऽर्थे अध्यैप्रत्ययः । अत्र दृष्टान्तोऽयम् । **'वारवन्तं'** वालवन्तम् ( वृषाश्वं स हि अतितरां बालवान्भवति वन्द्यते परिचर्यते च ) **'अश्वं न'** अश्वमिव । अश्वो यथा वालैर्बाधकान्मशकमक्षिकादीन्परिहरति तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीति ॥

बालशब्दं निगमप्रसक्तं निर्ब्रवीति—

**बाला दंशनिवारणार्था भवन्ति ॥**

तर्हि दंशादयो निवार्यन्ते । अथ प्रसक्तानुप्रसक्तं दंशशब्दं निर्वक्ति—

**दंशो दंशतेः ॥**

दंश दशने ( भ्वा० प० ) पचाद्यच् । दंशतीति **दंशः** । वनमक्षिका । स ह्यतितरां **दशति** ॥ द्वितीयमुदाहरणम्—

**"मृ॒गो न भी॒मः कु॑च॒रो गि॑रि॒ष्ठाः" ॥**

( ऋ. सं. ८–८–३८–२ )

इयमृग्गयनाम्नेन्द्रपुत्रेण दृष्टा त्रिष्टुप् । वैमृधस्य हविषो याज्या ( आ० सू० २–१० ) अस्यां मृगो नैघण्टुक इन्द्रः प्रधानमिति तद्दैवत्या । अत्रापि नेतीवार्थे तदाह—

**मृग इव भीमः कुचरो गिरिष्ठाः ॥**

अस्य "प॒रा॒वत॒ आ ज॑गन्था॒ पर॑स्याः । सृ॒कं सं॒शाय॑ प॒विमि॑न्द्र ति॒ग्मं वि शत्रू॑न्ताळ्हि॒ वि मृधो॑ नुदस्वे"ति शेषः ॥ अयमर्थः । हे **'इन्द्र !'** त्वं **'कुचरः'** कुत्सितचरणः ( कुत्सितगमनः हिंस्रत्वात् ) **'गिरिष्ठाः'** पर्वताश्रयः ( पर्वतनिवासी ) **'मृगोन'** सिंह इव व्याघ्र इव वा **'भीमः'** भयङ्क-

---

१. अनुपदं तत्रैवोदाहरिष्यमाणम् ॥

२. यत्पूर्वमुपक्रान्तं अथ पुनर्यत्र नैघण्टुकमिदमित्यादि—प्रायेण चिन्त्यते इत्यन्तम् ॥

३. सद्यि अग्निमिति द्वितीयया विभक्तिश्रुत्या साक्षाद्विनियोजको देवतारूपस्य । अश्वस्तु शब्दसामर्थ्यरूपलिङ्गेन श्रुतिकल्पनाद्वारा देवतात्वेन विनियुक्तः सन्नङ्गभावं भजिष्यतीति, श्रुतितो लिङ्गदौर्बल्यस्य "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि-"ति- ( जै० सू० ३–३–१४ ) जैमिनिनाऽनुशिष्टत्वादिहाग्नेः प्राधान्यतो देवतात्वमेवमुत्तरत्रापि बोध्यम् ॥

४. साम्नश्च वारवन्तीयस्यैषा योनिरिति भगवद्दुर्गः ॥

१. यद्वा दीप्यमानम् । राजृ दीप्तौ ( भ्वा० उ० ) शता ॥ अध्वराणां मध्ये उत्तरवेद्यादिषु धिष्ण्येष्ववस्थितम् ॥ इति शेषः ॥

२. मेदविवक्षाया अनुकरणशब्दादत्र विभक्तिः ॥

३. पृषोदरादित्वादत्रानुनासिकलोपः ॥

४. अत्र "दंशसञ्जस्वञ्जां शपि" ( पा० ६–४–२५ )ति नलोपः । मूले तु धातुनिर्देशे श्तिप् । "इक्श्तिपौ धातुनिर्देश" ( पा० ३–३–१०८ वा० ) इति । नात्र शपरत्वमिति नलोपो न ॥ यद्वा दशि दंशने ( चु० आ० ) इदित्वाण्णिजभावे दंशतीति । आकुस्मादात्मनेपदं णिच् सन्नियोगेनैवेति व्याख्यातारः । नलोपेणिच्साहचर्याच्चुरादेरेव ग्रहणमिति नेह भवति ॥ छान्दसोऽत्र विकरणव्यत्ययः । "छन्दोवद्धि सूत्राणि भवन्ति ।

५. प्राणिवधजीवनत्वात् ।

६. मृगशब्दश्चतुष्पाज्जातिमात्रे मृगशीर्षे मार्गणायां च वर्तते न केवलं हरिण एव । तथाचामरः "पशवोऽपि मृगा वेगः प्रवाहजवयोरपी"ति । अत्रापि शब्दादुक्तमर्थद्वयं ग्राह्यम् ॥

रोऽसि । स त्वं **'परस्याः'** दिवः संबन्धिनः **'परावतः'** परस्मात्स्थानाद्द्युलोका **'दाजगन्था'** आजगन्थ आगच्छ । आङ्पूर्वाद्गमेश्छान्दसे लिटि क्रादिनियमप्राप्तस्येट "उपदेशेऽत्वतः" ( पा० ७–२–६२ ) इति प्रतिषेधः छान्दसो दीर्घः ( पा० ६–३–१३८ ) । ( आगत्य च ) **सृकं** सरणशीलं शत्रुवधकार्येषु सर्तुं शक्तं वा **'तिग्मं'** तीक्ष्णं **'पविं'** वज्रं **'संशाय'** सम्यक् तनूकृत्य ( तीक्ष्णीकृत्य तेन ) **'शत्रून्'**-स्मदीयान्वैरिणो **'विताढ्ळि'** विशेषेण ताडय विनाशय तड आघाते ( चु० प० ) ण्यन्तादस्माल्लोटि रूपमेतत् । "छन्दसि परेऽपि" ( पा० १–४–८१ ) उपसर्गाः प्रयुज्यन्ते । तथा **'मृधो'** हिंसकान्संग्रामोत्सुकान्युयुत्सून्वाऽन्यानपि **'विनुदस्व'** विशेषेण तिरस्कुर्विति ॥

मृगशब्दं निगमप्रसक्तं निर्वक्ति—

**मृगो मार्ष्टेर्गतिकर्मणः ॥**

धातूनामनेकार्थत्वाच्छुद्ध्यर्थे पठितोऽपि मृजूधातुः ( अ० प० ) अत्र गत्यर्थे प्रयुक्तः । ( पा० ७–३–११४ ) तस्मात्कर्तरि "पुंसि संज्ञायामि" ( पा० ३–३–११८ ) ति घः । बाहुलकान्मृजेर्वृद्धिरिति वृद्ध्यभावः । "चजो" ( पा० ७–३–५२ )रिति कुत्वम् । नित्यं ह्यसौ **मार्ष्टि** गच्छतीति **मृगः** ॥

**भीमो बिभ्यत्यस्मात् ॥**

"भीमादयोऽपादाने"-( पा० ३–४–६४ ) इति बिभ्यते-( जु० प० )रपादाने मक् । क्ङित्वाद् गुणाभावः । सर्वे एव **ह्यस्माद्बिभ्यति** प्राणिन इत्ययं **भीमः** ॥

भीमशब्दसारूप्यप्रसक्तं निराह—

**भीष्मोऽप्येतस्मादेव ॥**

उक्तवत्सिद्धिः । धातोः षुगागमोऽत्र विशेषः ॥

**कुचर इति चरति कर्म कुत्सितम् ॥**

**कुत्सितं कर्म** नित्यं प्राणिवधाख्यं **चरतीति कुचरः** । मूलविभुजादित्वात्कः ( पा० ३–२–५ ) ॥

तदेवं निगमप्रसक्तान्कांश्चिन्मृगादीन्निरुच्य कुचरशब्दनिर्वचनप्रसङ्गेन पूर्वोपक्रान्तमर्थं सिंहावलोकितकेनाह—

**अथ चेद्देवताभिधानम् ॥**

एतत् कुचर इति तदा—

**क्वायं न चरतीति ॥**

देवताभिधानत्वे **क्वायं न चरति** सर्वत्र चरतीति नेदमेपि देवताभिधानं कुचर इति ॥

**गिरिष्ठा गिरिस्थायी ॥**

इति च ॥

इन्द्रोऽपि हि मेघवाहनत्वाद्गिरिष्ठाः । सिंहोऽपि पर्वताश्रयत्वात्तथा चेदं श्लिष्टं विशेषणमुभयोरित्याह—

**गिरिः पर्वतः ॥**

इति । एतच्च पर्यायाभिधानं व्युत्पत्तिसाधर्म्यप्रदर्शनार्थेत्युपरिष्टाद्व्यक्तीभविष्यति । तदेव साधर्म्यं व्युत्पत्तिमुखेन तावदाह—

**समुद्गीर्णो भवति ॥**

इति । **सं**-समस्त **उद्गीर्णः** । वान्त इव भूमौ **भवति** । समुद्गिरणं चात्र भूम्या एव ॥

पर्वतशब्दं पर्यायाख्यानप्रसक्तं निराह—

**पर्ववान्पर्वतः ॥**

शिलाशिखरसंधिभिरसौ **पर्ववान्भवति** । पर्वाणि सन्ति यत्रासौ **पर्वतः** । "तप्पर्वमरुद्भ्या"-(पा० ५–२–१२१ वा०)-मिति मत्वर्थीयस्तप्प्रत्ययः ॥

पर्वशब्दं विग्रहप्रसक्तं निराह—

**पर्व पुनः पृणातेः ॥**

पूरणार्थस्य पृधातोः ( क्र्या० प० ) "स्नामदिपद्यर्तिपृशकिभ्यो वनिप्" ( उ० ४–१०९ ) इति वनिपि साधुः । **पृणन्ति** पूरयन्ति हि ते शिलाशिखरसन्धयोऽखिलं **पर्वत**मिति तानि **पर्वाणि** ।

**प्रीणातेर्वा ॥**

तर्पणार्थस्य प्रीधातोः ( क्र्या० उ० ) बाहुलकात् ( पा० ३–३–१ ) वनिपि ईकारस्याकारः स च पकारात्परः । प्रीणयन्ति स्वाश्रयमिति पर्वाणि ॥

तत्पुनरेतत्—

**अर्धमास-पर्व ॥**

---

१. यद्वा नानाप्रकारेण प्रेरयस्व दूरमपुनरागमाय । नुद प्रेरणे ( तु० प० ) पदव्यत्ययश्छान्दसः । "व्यवहिताश्च"–( पा० १–४–८२ )ति विशब्दस्यात्रापि संबन्धः ॥

२. अनेन निगमोक्तकुचरपदे कुपदं "गोत्रा कुः पृथिवी पृथ्वी" त्यमराभिधानबलाद्भूमिवाचीति निरुक्तकृदभ्युपगच्छति । तदपि विभुत्वाद्देवानां न विरुध्यते । सायणादयस्तु यथाहुस्तथाऽस्माभिरप्यत्र ( निगमव्याख्याकाले ) उक्तम् ॥

१. तथाचामरः "तुराषाण्मेघवाहन" इति ॥

२. गिरिष्ठा इत्येतदसुबन्तं श्लेषबलेनेन्द्रस्य सिंहस्य च विशेषणमिति भावः ॥ असुंश्चात्र ताच्छील्यविशिष्टे कर्तरि बोध्यः ।

३. कर्तृपदमेतत् । भूमिकर्तृकं पर्वतस्य समुद्गिरणमिव लक्ष्यत इत्यर्थः ॥

४. विधेयप्राधान्यान्नपुंसकनिर्देशः । तत्पदेन हि शिलासन्धयः प्रवोच्यन्ते । उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाग्भवतीत्यसकृदवोचाम । पर्व तु नपुंसकमेव । "सन्धिर्ना पर्वपरुषी" इति कोशे रूपभेदान्नपुंसकत्वोक्तेः ॥

अमावास्या वा पूर्णिमा वा । दर्शपूर्णमासेष्ट्योः श्रुतौ श्रवणेन तयोरेवात्र प्रसक्तेः ॥

कुतः—

**देवानस्मिन्प्रीणन्तीति ॥**

हविर्भिरिति शेषः ॥

**तत्प्रकृतीतरत्सन्धिसामान्यात् ॥**

तदुभयं शिलासन्धिकालसन्ध्यात्मकं **सन्धिसामान्या**त्सन्धित्वात्पर्वेत्युच्यते । **प्रकृतीतर**त्स्वरूपतो भिन्नम् । सन्धित्वसाम्यात्पर्वेति यावत् । तथाचामराभिधानम् । "स पर्व सन्धिः प्रतिपत्पञ्चदश्योर्यदन्तर"मिति । प्रतिपत्पञ्चदश्योर्यदन्तरं स सन्धिः पर्वेत्यन्वयः । यदाह रुद्रः "दर्शप्रतिपदोः सन्धौ ग्रन्थिप्रस्तावयोरपि । पर्व क्लीबे विजानीयाद्विषुवत्प्रभृतिष्वपी"ति ॥

देवताभिधानपक्षे—

**मेघस्थायी ॥**

गिरिष्ठा इत्यस्यार्थः ।

**मेघोऽपि गिरिरेतस्मादेव ॥**

असावप्यन्तरिक्षलोके समुद्गीर्णो भवतीति एतस्मात् समुद्गिरणसामान्याद्गिरिः पर्वतो मेघश्चेति ॥

दैवतलक्षणं वदन्पूर्वोपक्रान्तमुपसंहरति—

**तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते तदुपरिष्टाद्व्याख्यास्यामो नैघण्टुकानि नैगमानीहेह ॥ ६ खं० सू० ॥ (२०)**

इति यास्कमुनि प्र० नि० शास्त्रे प्र० ध्या० नैघ० का० षष्ठः पादोऽध्यायश्च समाप्तः ॥ १ ॥ ६ ॥ * ॥

---

**तत्**—तत्र **यानि नामानि** अग्न्यादीनि देवपत्न्यन्तानि **प्राधान्येन स्तूयन्त** इति प्रधानस्तुतयः । कर्मणि क्तिन् । **देवतास्तासां, तत्** तानि सर्वाणि समुदितानि सन्ति एतयैकया देवतामधिकृत्य कृतत्वाद्**दैवतमित्ये**तया सामान्यया प्रकरणसमाख्यया संज्ञया **आचक्षते** आचार्या इति शेषः ॥ **तत्**—**पुनरेतद्दैवतं** प्रकरण**मुपरिष्टात्** ( दै० का० ७-४-१ ) अस्य शास्त्रस्य **व्याख्यास्यामः** । गुणपदेषु हि व्याख्यातेषु प्रधानदेवतापदानि सुखं व्याख्यास्यन्त इति ॥ यानि पुन**र्नैघण्टुकानि** गवादीनि, **नैगमानि** जहादीनि तानि **इह** प्रकरणद्वये ( नैघण्टुकैकपदिके च ) व्याख्यास्याम इत्यनुवर्तते[1] ॥ अध्यायपरिसमाप्तिलक्षणार्थः परितोषार्थो वेहेहेति द्विरभ्यासः ॥ ६ ॥ (२०)

[ समाम्नायस्तत्र० • विंशतिः ]

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ नैघण्टुककाण्डे प्रथमाध्यायस्य षष्ठः पादोऽध्यायश्च समाप्तः ॥ १ ॥ ६ ॥ * ॥**

---

## अथ द्वितीयाध्यायस्य प्रथमः पादः ।

अथ निर्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेशाय द्वितीयाध्यायस्य प्रथमखण्डसूत्रमारचयति—

**अथ निर्वचनम् ॥**

---

१. स्मृतौ तु "चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव चे"त्युक्तं विष्णुपुराणेऽपीदमेव ॥

२. नैघण्टुकमिदं देवतानामेत्यादि ९ वाक्ये ॥

३. नैघण्टुकाश्वादिघटिते "अश्वं न त्वा वारवन्त" मित्यादिमन्त्रवाक्ये ॥

४. निरुढा ह्ययमेतस्मिन्नैघण्टुक-( निघण्टुप्रोक्त- )-शब्दसमुदाये संज्ञेति भावः ।

५. समाख्या यौगिकः शब्दः ॥

* "अथ निर्वचनमि"ति-सूत्रस्य व्याख्यानं सायणोक्तं यथा—तत्-तत्र निर्वचनीयपदसमूहमध्ये येषु अग्न्यादिपदेषु पूर्वोक्तरित्या **स्वरसंस्कारौ समर्थौ** व्याकरणसिद्धौ स्यातां, स्वर उदात्तादिः संस्कारो निप्रत्ययादिः । किंच-तौ स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां, शब्दस्यैकदेशः पूर्वोक्तोऽभिधातुः प्रदेशः । तत्र भवो गुणोऽभिधातुरूपोऽर्थः । तेनान्वितौ तान्यग्न्यादिपदानि **तथा** व्याकरणानुसारेण—निर्ब्रूयात् तच्च निर्वचनमस्माभिः प्रदर्शितम् । अथ पूर्वोक्तवैलक्षण्येन कश्चित्स्वेन विवक्षितोऽर्थो **नान्वितस्तस्मिन्** शब्देऽनुगतो न भवेत् तस्यैव व्याख्यानमप्रादेशिके विकारे इति । अग्रनयनादिरूपः क्रियाविशेषो विकारः स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयत इत्यप्रदेशिकः । एवंसति यः पुमानर्थनित्यः—स्वविवक्षितेऽर्थे नियतो निर्बन्धवान् ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा सनिर्बन्धः । तदानीं स पुमान् **केनचिद्वृत्तिसामान्येन** स्वविवक्षितमर्थं **परीक्षेत** तस्मिञ्छन्दे योजयेत् । वृत्तिः क्रिया तद्रूपेण सामान्यं सादृश्यम् अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसाम्यमुपजीव्याग्रणीत्वाद्यर्थो योजितस्तदिदं यास्काभिमतं निर्वचनम् । स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति अक्नोपनशब्दस्यादौ निषेधार्थमकाररूपमक्षरं विद्यते । अग्निशब्दस्याप्यादावकारोऽस्ति । तदिदमक्षरसाम्यं, शाकपूणिस्तु—वर्णसाम्यान्निर्ब्रूते—दग्धशब्दाग्निशब्दयोर्गकारेण वर्णेन साम्यम् । सर्वथापि निर्वचनं न त्याज्यमिति ॥

१. तान्येतानि त्रीणि प्रकरणानि, नैघण्टुकम्, ऐकपदिकं ( नैगमं ), दैवतमिति । अनेन प्रकरणत्रयविभागप्रपञ्चेनेदमवस्थितं निरुक्तशास्त्रमिति ॥

अथेत्ययं हेतौ, यतो ह्येते समुपक्रान्ते (नैघण्टुकनैगमे) प्रकरणे निर्वचनलक्षणमनुक्त्वा व्याख्यातुमशक्ये अथ एतस्मात्कारणान्निर्वचनं लक्षणतो व्याख्यास्याम इति शेषः। अपिहितस्यार्थस्य परोक्षवृत्तावपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम्। स एष निर्वचनाभ्युपाय उच्यते॥

इह तावच्छब्दा द्विविधाः समर्थस्वरसंस्काराः, असमर्थस्वरसंस्काराश्च। तत्राद्यानधिकृत्योच्यते—

**तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात्॥**

**तत्** तत्रैवं सति **येषु** (तावत्) **पदेषु स्वरसंस्कारौ, समर्थौ** अर्थमवगमयितुं शक्तौ तदेवाह—**प्रादेशिकेन** प्रदेशाभिधायिनाऽर्थमवगमयता **गुणेन** धातुरूपेणा**न्वितौ** संबद्धौ (अनुगताभिधेयस्थे धातुरूपे स्थितौ) **स्यातां** भवेतां **तानि** (तावत्) **तथा** (एव यथालक्षणं) **निर्ब्रूयात्** नैरुक्त इति शेषः। लक्षणप्रधानं हि व्याकरणमाद्यभूमाववतिष्ठते॥

द्वितीयानधिकृत्य वदति—

**अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन॥**

**अथ** पुनरर्थे**ऽनन्विते** न्याय्यस्वरसंस्कारयुक्तेन शब्देनासंबद्धे। तदेवाह—**विकारे** संस्कारे **अप्रादेशिके** प्रदेशानभिधायिन्यर्थमनवगमयति सति **अर्थनित्यो**ऽर्थप्रधानो भूत्वा, अर्थस्य प्राधान्येन स्वरसंस्कारावनादृत्य शब्दसामान्यादर्थसामान्यं बलीय इति न्यायेन **केनचिद्वृत्तिसामान्येन** क्रियागुणसामान्येन कथमस्य धातोरर्थसामान्यमत्रास्तीति **परीक्षेत**। ततस्तर्कयित्वार्थसामान्यं तेन निर्ब्रूयात्॥

अथ पुनर्यत्रार्थसामान्यमपि नास्ति तत्र कथं निर्ब्रूयादित्यपेक्षायामाह—

**अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव न निर्ब्रूयान्न संस्कारमाद्रियेत॥**

**अक्षरं** स्वरः। **वर्णो** व्यञ्जनम्। अमुष्मिन्धातावयमक्षरो वर्णो वा मया दृष्टः स एवास्मिन्नभिधानेऽपि वर्तत इत्येवमुत्प्रेक्ष्यार्थ**सामान्येऽविद्यमानेऽपि अक्षरवर्णसामान्य**मात्रेणापि **निर्ब्रूयात्**तत्तद्बलादर्थं प्रकाशयेदेव। **नत्वेव न निर्ब्रूयात्**तथासत्यनर्थकमेवैतन्निरुक्तशास्त्रं स्यात्तन्माभूदित्यत इदमुच्यते। लक्षणपराङ्मुखेषु शब्देषु **न संस्कारमाद्रियेतेति**॥

अत्र हेतुमाह—

**विशयवत्यो हि वृत्तयो भवन्ति॥**

अत्र हिशब्दो हेत्वर्थे "हि हेताववधारणे" इत्यमरः। यस्माद्वि**शयवत्यो** बहुसंशयवत्यः शब्दानामर्थेषु **वृत्तयो** भवन्ति॥

---

१. यत्र निपुणतरमन्विष्यमाणोऽपि शब्दार्थोऽयमित्थमित्यवकल्पयितुं न शक्यते, अन्यथैवार्थोऽवतिष्ठते अन्यथैव च शब्दस्तत्र॥

२. यथा मुद्गनित्यमेवास्य भोजनमित्युक्ते मुद्गप्रधानमिति गम्यते एवमिहापि बोध्यम्॥

३. अर्थो हि प्रधानं गुणभूतश्च शब्द इति॥

४. वृत्तिरन्यार्थः। यथा प्रवीणोदारनिस्त्रिंशशब्दा उत्सृष्टस्वार्थाभिधेयसंबन्धाः सन्तः क्रियागुणं सामान्यं हेतुमात्रमाश्रित्यान्येष्वेवार्थान्तरेषु वर्तन्ते। तद्यथा प्रकृष्टो वीणायां, प्रवीणो गान्धर्वे। अत्र ह्यस्य मुख्यावृत्तिः। स एव स्वमर्थ-(मभिधेय-)ज्ञान्धर्वमुत्सृज्याभ्यासपाटवमात्रसामान्यमाश्रित्य सर्वत्रैवाभिप्रवृत्तः। यो हि यस्मिन्कृतयत्न उत्पन्नकौशलो भवति स तत्र प्रवीण इत्युच्यते। तथाचामराभिधानम् "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इति॥ यथा प्रवीणो व्याकरणे प्रवीणो निरुक्त इति॥ एवं प्रागारैसन्निपातादाकूतेनैव सारथेर्योऽश्वोऽनड्वान्वा वहति स उद्गतारत्वादुदारः। तत्र समञ्जसा वृत्तिरस्य शब्दस्य। स एव उत्सृज्यैव स्वमर्थमाकूतानुविधायित्वमात्रमेव सामान्यमाश्रित्य प्रवृत्तो यो हि कश्चित्कस्यैचिदाकूतं लक्षयित्वा प्रार्थनात्प्रागेव ददाति स उदार इत्युच्यते॥ एवं त्रिभिः प्रदेशैर्द्वाभ्यां धाराभ्यामग्रेण च निशितः श्यतीति निस्त्रिंशः खड्गः (तथाचामरः "खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः" इति) मुख्यग्रहणात्तत्र ह्यस्य शब्दस्य समञ्जसा वृत्तिः स एव छेदनसमानरूपं क्रौर्यसामान्यमाश्रित्य सर्वत्रैव प्रवृत्तः। यो हि लोके क्रूरो भवति स लोके निस्त्रिंश इत्युच्यते। एवमेते क्रियागुणसामान्येन वर्तन्ते। एवमन्येऽप्यभ्यूहितव्या अभ्यूह्य चैवमर्थसामान्येन निर्वक्तव्याः॥

१. अर्धर्चादिः। अतएव वा पुंसि। तथाच पाणिनिसूत्रम् "अर्धर्चाः पुंसि च"—(पा० २–४–३१) ति॥

२. यथा सर्वेष्वेव नैगमेषु जहादिषु॥

३. तदर्थमेव हि निरुक्तशास्त्रारम्भः। अयमर्थः। नहि निरुक्ते कारकहारकलावकादिशब्दा व्युत्पाद्यन्ते। सुबोधैव हि तेषां वृत्तिः प्रसिद्धैव च व्याकरणे। य एव दुर्बोधाः परोक्षातिपरोक्षवृत्तयः विस्मकृदरोदारनैतसपर्वशब्दादयस्त एव ह्यत्र व्युत्पाद्य निरुच्यन्ते। तेषु हि विशेषेणार्थवत्ता निरुक्तशास्त्रस्यात एवेदमुत्तमकोटाववतिष्ठत इति तान्येवार्थसामान्येन वा शब्दसामान्येन वा निर्ब्रूयान्न तेषु संस्कारमाद्रियेत अमुष्माद्धातोरयं प्रत्यय इत्ययमेवार्थो भवितुमर्हतीति॥

४. विशयाः सन्त्यस्मिन्नित्यर्थे भूम्नि मतुप्। तथा चोक्तम् "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति॥ नानाभावेनार्थेषु शब्दानामवस्थिता वृत्तिरिति—एवं स्यात् नैवं स्यादिति विचारयन्तः सन्तः प्रतिपत्तिसंमोहाच्छेरत इवास्मिन्निति विशयः संशयः "एरच्" (पा० ३–३–५६) इत्यधिकरणेऽच्। तथाचोक्तमन्यत्रापि—

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
सिद्धान्तश्चेति पञ्चैते शास्त्रेऽधिकरणं स्मृतम्॥१॥" इति॥

---

1. आरः कशा "चाबुक" इति भाषायां प्रसिद्धः॥

अथ केचिच्छब्दाः क्वचिदर्थेऽर्थसामान्येन वर्तन्ते केचित् स्वर-सामान्येन केचिद्वर्णसामान्येनेत्यतः—

**यथार्थं विभक्तीः सन्नमयेत् ॥**

विभक्तीरपि **यथार्थम्** अर्थमनतिक्रम्यैव **सन्नमयेत्** पूर्वोत्तरप्रकरणाविरोधेन विपरिणमयेत्। यतस्तासामपि व्यत्ययो भवत्येव। यथाच दर्शयिष्यते। हृत्सु शोको हृदयानि शोकैः ( नै० का० ९–३–१२ ) इत्येवमादि ॥

अथ यदुक्तं विशयवत्यो हि वृत्तयो भवन्तीति, तदर्थवशेन व्याकरणेऽपि शब्दविपरिणामो भवतीत्येवं दर्शयति—

**प्रत्तमवत्तमिति धात्वादी एव शिष्येते ॥ १ ॥ खं. सू. ॥**

इत्येवमादि ॥ प्रोपसृष्टाद्दाञः कर्मणि भावे वा क्ते "दोद-द्घो"रित्यनुवर्तमाने "अच उपसर्गात्तः"-( पा० ७–४–४७ ) ति घोरचस्तस्तस्य "झरो झरि" ( पा० ८–४–६५ ) ति लोपे दस्य "खरिचे"-( पा० ८–४–५५ ) ति चर्त्वम्। ततश्च धातुप्रत्य-यतकारयोः संयोगे प्रादिसमासः **प्रत्तमिति**। एवमवोपसृष्टस्य "दोऽवखण्डन"-( दि० प० ) इत्यस्य "आदेच उपदेशे"-( पा० ६–१–४५ ) इत्यात्वेऽवत्तमिति पूर्ववदूह्यम् ॥ एवमनयो-र्धात्वोरादी एव **शिष्येते**। एवमन्येषामपि दृष्ट्वा यथा-संभवमनुविधातव्यम् ॥ १ ॥

तदेवाह—

**अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति ॥**

निवृत्तिरत्र गुणवृद्ध्योरभिमता, तस्याः **स्थानेषु** तथाच क्ङित्प्रसङ्गेषु "श्नसोरल्लोप" ( पा० ६–४–१११ ) इत्यस्धातो-**रादिलोपो भवति**। अत्र धात्वन्त एव शिष्यते ॥

**अथाप्यन्तलोपो भवति गत्वा गतमिति ॥**

निवृत्तिस्थानेष्विति वर्तते। अत्र गमेः क्त्वाप्रत्यये क्ते च क्ङितीत्यधिकृत्य "अनुदात्तोपदेशे" ( पा० ६–४–३७ )त्यादिना अनुनासिकलोपो भवति ॥

**अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति ॥**

अत्र गमे "रलोऽन्त्यात्पूर्व उपधे"-( पा० १–१–६५ )त्युप-धासंज्ञकस्याकारस्य "गमहने" ( पा० ६–४–९८ ) त्यादिना लोपो भवति ॥

**अथाप्युपधाविकारो भवति राजा दण्डीति ॥**

राजन् शब्दात्सौ-"नोपधाया" इत्यनुवर्तमाने "सर्वनाम-स्थाने चासंबुद्धावि"-( पा० ६–४–८ )त्युपधादीर्घत्वम्। एवं दण्डिन्शब्दात्सौ "इन्हन्पूषार्यम्णां शौ–सौचे"-( पा० ६–४–१३ )त्युपधादीर्घत्वम्। "हल्ङ्याब्भ्यो"–( पा० ६–१–६८ )ति सुलोपे "प्रत्ययलोपे प्रत्ययलक्षणमि"-( पा० १–१–६२ )ति पदत्वात् "नलोपः प्रातिपदिकान्तस्ये" ( पा० ८–२–७ )-त्युभयोरपि नकारलोपो भवति ॥ एवमुपधाविकारो भवति ॥

**अथापि वर्णलोपो भवति, तत्त्वा यामीति ॥**
( ऋ. सं. १–२–५१ )

अत्र याचामीत्यर्थे यामीति चाशब्दलोपश्छान्दसो भवति। अत एवचात्मनेपदव्यत्ययोऽपि।

**अथापि द्विवर्णलोपस्तृच इति ॥**

अत्र तिसृणामृचां समाहार इत्यर्थे "ऋक्पूरि"–( पा० ५–४–७४ ) त्यादिनाऽकारः समासान्तः। "ऋचि त्रेरुत्तरपदादि-लोपश्च छन्दसी"ति ( पा० ६।१।३४ ) वार्तिकेन ऋक्शब्दे परे त्रेः संप्रसारणमुत्तरपदादेर्ऋकारस्य लोपश्च "संप्रसारणा-च्चेति" ( पा० ६–१–१०८ ) पूर्वरूपम्। इत्थं वर्णद्वयलोपो भवति ॥

**अथाप्यादिविपर्ययो भवति ज्योतिर्घनो बि-न्दुर्वाट्य इति ॥**

"द्युत दीप्तौ" ( भ्वा० आ० ) तस्माद्द्युतेरिसिन्नादेश्च ज ( उ० २–१११ ) इति इसिन्नुपधागुणो दस्य ज इत्यादिव्यापत्त्या ज्योतिरेवं "हन हिंसागत्योः" ( अ० प० ) अस्मात्पचाद्यचि हस्य

१. विकारो हि भावरूपो लोपस्त्वभावरूप इति पृथगुक्तः। व्या० म० भाष्येऽपि लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् पालयिष्यतीत्युक्तौ लोपाद्वर्णविकारः पृथगुक्तः ॥

२. तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ १ ॥ अनया त्रिष्टुभा शुनःशेपो वरुणं तुष्टाव हरिश्चन्द्रमखे उपाकृतः सन्। हे वरुण! मुमूर्षुरहं त्वा त्वां तत् आयुः यामि याचामि ( याचे )। कीदृशः? ब्रह्मणा वेदेन वन्दमानोऽभिष्टुवानः। प्रौढेन स्तोत्रेण स्तुवन्वा। अयं यजमा-नोऽपि तदायुरेव हविर्भिः संस्कृतैश्चरुपुरोडाशादिभिराशास्तेऽ-भिकाङ्क्षति ( प्रार्थयते ) तावावां भवन्तमेकमेवार्थं याचावहे स्तुति-भिर्हविर्भिश्च। त्वं चेह कर्मणि समाहूतः। अहेडमानोऽनाद-रमकुर्वन्[1] बोधि असदपेक्षितं बुध्यस्व। हे उरुशंस! बहुभिः स्तुत! नोऽस्मदीयमायुर्मा प्रमोषीः मुषितं मा कुरु "माङि लुङि"–( पा० ३–३–१७५ ) ति लोडर्थे लुङ्। "न माङ्योगे"–( पा० ६–४–७४ ) इत्यडभावः ॥ १ ॥

३. अतएव याच्ञाकर्मसु ईमहे यामीत्यादिशब्दाः ( निघ० ३–१९ ) पठिताः ॥

४. छान्दसत्वादेव। पदव्यत्यय उपग्रहव्यत्यये सप्रमाणो बाहुलकबलेन उक्तोऽधस्तात् ॥ ( ४८ पृ. ३२ पं. ) ॥

1. अत्यादृतः सन्। नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्। अनादरे हि हेडृधातुः ( भ्वा० आ० ) पठितः। तस्मादत्र शानच् शप्। "आने मुक्" ( पा० ७–२–८२ ) इति मुगागमः शबन्तस्य ॥

घो व्यत्ययेनेति घनः । एवं "भिदिर् विदारणे" ( रु० उ० ) "भ्रस्त्रलिहि० मनिभ्यश्चे"ति ( उ० १-११ ) चाद्धिदेरपि उः । भस्य वो व्यत्ययेनेति विन्दुः । "भट भृतौ" (भ्वा० प०) तस्मात् ण्यति भस्य वो व्यत्ययेनेति वाव्यो भर्तव्यः । अयं सर्वोऽपि व्यत्ययो बाहुलक (पा० ३-३-१) बलेन समाधेयः ॥

## अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्क्विति ॥

"श्चुतिर् क्षरणे" ( भ्वा० प० ) तस्य पृषोदरादित्वादाद्यन्तविपर्ययेण **स्तोकाः** । "सृज विसर्गे" (दि० आ० × तु० प०) तस्मा"त्सृजेरसुग्चे" ( उ० १-१६ ) ति उः । धातोरसुगागम आदिसकारस्य लोपश्च स्कन्देः सलोपश्चे ( उ० १-१५ ) त्यतः सलोपश्चेत्यनुवर्तनात् । यण् । सस्य जस्त्वम् **रज्जुः** । "कस विकसने" ( भ्वा० प० ) इतजायन्तविपर्ययश्चौणादिकः **सिकताः** । "कृती छेदने" (तु० प०) तस्मा-"त्कृतेराद्यन्तविपर्ययश्चे"-( उ० १-१७ )त्युः । आदौ तकारोऽन्ते च ककारः । इत्येवं **तर्कुः** सूत्रादेः कर्तनसाधनम् ॥ २ ॥

## अथाप्यन्तव्यापत्तिर्भवति ॥

व्यापत्तिर्विपर्यय इत्यनर्थान्तरम् ॥ २ ॥ ( १ )

तद्यथा—

## ओघोमेघोनाधोगाधोवधूर्मध्विति ॥

"वह प्रापणे" ( भ्वा० उ० ) तस्यान्तव्यापत्त्यौघः । "वहः कप्घश्चौ"णादिकः । कित्वात्संप्रसारणं चाद्गुणो हस्य घः । उह्यतेऽसावोघः । "मिह सेचने" (भ्वा० प०) अस्य **मेघः** । पचाद्यच् ( पा० ३-१-१३४ ) न्यङ्क्वादित्वात्कुत्वम् । मेहति सिञ्चति वर्षणेन भूमिमिति मेघः ॥ "णह बन्धने" (दि० उ०) तस्माद्धञि हस्यान्तव्यापत्तिर्धः **नाधः** । "गाहू विलोडने" (भ्वा० आ०) कर्मणि घञ् गाह्यतेऽवगाह्यतेऽसौ **गाधः** । हस्योक्तवद्धः । "वह प्रापणे" (भ्वा० उ०) "वहो धश्च" (उ० १-८०)इत्यूप्रत्ययः । ऊह्यते प्राप्यतेऽसौ वधूः । हस्यः धः । "मद तृप्तौ" (दि० प०) तस्माद्बाहुलका ( पा० ३-४-१ ) दुप्रत्ययो धान्तादेशश्च **मधु** । माद्यन्ति हि तेन पीतेन प्राणिनः । इदं तु स्कन्दस्वामिनो निर्वचनम् । वैयाकरणास्तु "मन ज्ञाने" ( दि० आ० ) इत्यस्मा"न्निदि"ति ( उ० १-९ ) वर्तमाने "फलिपाटिनभिमनिजनां गुक्पटिनाकिधतश्चे"-( उ० १-१८ ) त्युप्रत्ययो धोऽन्तादेशश्च मन्यतेऽतिशयेन जनैरिति **मधु** ॥ मननीयं मध्विति भट्टभास्करमिश्रः ॥

## अथापि वर्णोपजन आस्थद्वारो भरूजेति ॥

**उपजन** आगमः । तद्यथा **आस्थत्** अत्रा"सु क्षेपणे" ( दि० प० ) इत्यस्माल्लुङि तिपि आडागमे "अस्यतिवक्ती" ( पा० ३-१-५२ ) त्यङि "अस्यतेस्थुक्" (पा० ७-४-१७) इति धातोस्थुगागमः ॥ **वारो** वरणं "वृङ् संभक्तौ" ( क्र्या० आ० ) घञ्"अचोञ्णिती"-( पा० ७-२-११५ ) ति वृद्धिराकारः सच"उरण्रपरः" ( पा० १-१-५२ ) इति रपरः सन्नेव प्रवर्तत इति रेफोऽनागम एव । अवयवतया विहित एव ह्यागमो व्यपदिश्यते । यल्लक्षणमवयवत्वावच्छिन्नविधेयताश्रयत्वं नव्या व्याकृतिविदो वदन्ति ॥ **भरूजेति** "भ्रस्ज पाके" (तु० उ०) इत्यस्य, "भिदादित्वा" ( पा० ३-३-१०४ ) दङि बाहुलकत्वा-( पा० ३-३-११३ ) द्रेफस्योपधायाश्च स्थाने रूमागमः । अत्र सर्वत्र इतिशब्द आद्यर्थः । तेनान्यत्राप्येवमादिमध्यान्तलोप आदिमध्यान्तविकारो वर्णलोपो द्विवर्णलोप आदिविपर्यय आद्यन्तविपर्ययोऽन्तव्यापत्तिर्वर्णोपजनश्च छन्दसि भाषायां च यथासंभवं द्रष्टव्याः । दृष्ट्वा च यथासंभवमन्ततो बाहुलकबलेनानुविधेयाः । बहुलं छन्दसि । "उणादयो बहुल" (पा० ३-३-१) मिति । तत्रहि—"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥ कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ १ ॥" इत्युक्तम् ॥ छन्दस्यप्युक्तमधस्ताद्व्यत्ययस्थानम् ॥ ( २८ पृ. २८ पं. )

(एवमर्थवशेन लक्षणप्रधाने व्याकरणेऽपि शब्दविपरिणामो दृष्टः । किमुत निरुक्ते यदर्थप्रधानमेव । तस्मात्साधूक्तं "विशयैवत्यो हि वृत्तयो भवन्तीत्यनन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेते")त्येवमादि ॥

अथ ( अतः परं ) संप्रसारणचिन्ता वर्तिष्यते तदर्थमिदमारभ्यते—

## तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद्द्विप्रकृतीनां स्थानमिति प्रदिशन्ति ॥

त्रिविधा हि धातवः । संप्रसार्यप्रकृतयोऽसंप्रसार्यप्रकृतय उभयप्रकृतयश्च । तत्रैवं सत्युभयप्रकृतिषु शास्त्रविषयगतं यद्वक्तव्यं **तत्**-इदमुच्यत इति पर्युपयुक्तस्तच्छब्दः । तत्र तावदुभयप्रकृतिलक्षणमाह—**यत्रेत्यादिना** । **यत्र**-यस्मिन्धातौ **स्वरादकारादेरनन्तरा** अव्यवहिता **अन्तस्था** यैरलवस-

१. पचादिगणे निपातनात् ॥

१. "कृत्यल्युटो बहुलमि"(पा० ३-३-११३) ति सूत्रे बहुलग्रहणं योगविभागेन कृत्प्रत्ययमात्रविषये सर्वं बहुलमिति विदधाति ॥

२. अथ यदुक्तमित्यादिना यत्प्राक् ( १०४ पृ० ) प्रदर्शयितुमुपक्रान्तं तदुपसंहरति—एवमित्यादिना ॥

३. लोपागमवर्णविकाररूपः । यत्परिज्ञानफलमुक्तं व्या. म. भाष्ये "लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्पालयिष्यतीति रक्षार्थं वेदानामध्येयं व्याकरण"मिति ॥

४. अयं चान्वयवशाद्यथाऽर्थो लभ्यते तथाभूतस्यानुवादः । आदिना विभक्तीरपि यथार्थं सन्नमयेदिति ॥

५. व्यवधानं च विजातीयैरेव भवतीति व्यञ्जनान्तरिताः पराः पूर्वा वा ॥

६. तदन्यतमः । अन्तस्थाशब्द आबन्तोऽपि । संपूर्वकात्तिष्ठतेः "स्थः कचे" ( पा० ३-२-७७ ) ति कप्टाप् । स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः । अतएवान्तस्थाभिश्च संयुतम् । ईषत्स्पृष्टमन्तस्थानामित्यादि सङ्गच्छते ॥

रूपा **अन्तर्धातु**-धातुमध्ये **भवति तत्**-एवंलक्षणं धातुरूपं **द्विप्रकृतीनां** द्विस्वभावानां शब्दानां **स्थानमाश्रय इति एवम् प्रदिशन्ति** कथयन्ति आचार्या इति शेषः । तद्यथा-"यज-देवपूजादौ" (भ्वा० उ०) अत्र द्वेशब्दप्रकृती भवतः। संप्रसारणपक्षे तावदिष्ट्वा-इष्टः इष्टवान् । एताः शब्दप्रकृतयो भवन्ति । असंप्रसारणपक्षे तु यष्टा-यष्टुं यष्टव्यम् इत्येताः ॥

## तत्र सिद्धामनुपपद्यमानायामितरयोपपिपादयिषेत् ॥

तत्रैवंसति एकया रीत्या **सिद्धामर्थंसिद्धावनुपपद्यमानायामितरया** रीत्या ( तल्लक्षणशास्त्रविहितेनार्थसाधनोपायेन ) **उपपिपादयिषेदु**पपादयितुमिच्छेत् । अर्थो हि प्रधानं स यथैवोपपद्येत तथा यत्नं कुर्यात् ॥

## तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति ॥

**तत्रा**प्येतस्मिन्नपि संप्रसारणलक्षणे सति । **एके** धातवः **अल्पनिष्पत्तयो भवन्ति** अल्पेषु शब्दरूपेषु संप्रसारणप्रकृतिरभिनिष्पद्यते-तदेतदुपेक्षितव्यम्-

## तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमिति ॥

**तत् यथा एतदु**दाहरणजातम्-अवन**मूतिः**। "अव रक्षणादौ" (भ्वा० प०) तस्मात् "स्त्रियां क्तिन्" (पा० ३-३-९४) इति क्तिनि रूपम् । छ्वोःशूडित्यनुवर्तमाने "ज्वरत्वर" (पा० ६-४-२०) त्यादिना ऊडिति वकारस्योकारोऽभिसंपद्यते । एवं "म्रद मर्दने" (भ्वा० आ०) तस्मात् "प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च"-( उ०-२९ )ति उः । अत्र रेफः संप्रसार्यमाण-ऋकारः **मृदुः** । एवमेव "प्रथ प्रथने" (भ्वा० आ०) इत्यस्य **पृथुः** । "पृष दाहे" (भ्वा० प०) इत्यस्य "पृषिरञ्जिभ्यां किदि". (उ० ३-१११) तिअतच् । सच किदिति संप्रसारणं पूर्वरूपं च ॥ "क्वण शब्दे" (भ्वा० प०) इत्यस्य **कुणारुम्** । बाहुलकात्कारुप्रत्ययः कित्वाद्गुणाभावः संप्रसारणं च ॥ इतिशब्द आद्यर्थः । एवमादयोऽन्येऽपि बहवः समूह्याः ॥

१. अत्र सिद्धायामिति पाठो मुद्रितपुस्तके धृतोऽप्यनादृतोऽसामिरर्थासंगतेः ॥

२. द्वयोः संप्रसारणासंप्रसारणप्रक्रययोर्यथैवोपपद्यतेऽर्थस्तथैवोपपादयेत् । अथवोभयथाप्यनुपपद्यमानेऽर्थे स्वयमुत्पाद्य ( निर्धार्य ) यथायथोपपद्येतार्थस्तथातथोपपादयेदित्यर्थः ॥

३. उपगम्य तथाभूतेषु शब्देषु ईक्षितव्यमालोचितव्यं नैरुक्तैरिति शेषः । दिग्दर्शनार्थमुदाह्रियते च । अयमेव व्याख्यामार्गोऽन्यत्रापि ( अग्रे अथापीत्येतच्छब्दघटिते ) द्रष्टव्यः ॥

४. यद्यपि मुद्रितपुस्तकेषु "पृषिरञ्जिभ्यां किदि"ति पाठ उपलभ्यते तथापि दुर्गसंमतोऽयं पाठः । संवदति चामुमर्थं "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषस्त्रियामि"ति अमरोऽपि । अत्र हि प्रुषेः क्विबन्तस्य पर्यायवचनतयोपन्यासस्तथा गमयति ॥

५. कित्त्वसामर्थ्याद्यजादित्वकल्पना । एवमन्यत्रापि ॥

तामेनां कृत्सु संप्रसारणचिन्तां वर्तयित्वाऽन्यमपि विशेषद्रष्टव्यमागमशब्दनिर्वचनोपायं वक्तुमुपक्रमते—

## अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते ॥

**अथेति** प्रकारान्तरोपक्रमे । **अपीति** वाक्यालङ्कारे । अथापीदमपरमुपेक्षितव्यमनेनागमशब्दान्निर्ब्रुवता । यत्-**भाषिकेभ्यः** भाषायां प्रायेण प्रसिद्धप्रयोगेभ्यो **धातुभ्यो नैगमा**श्छन्दोविषयाः **कृतः** कृत्प्रत्ययान्ताः शब्दा **भाष्यन्ते** विव्रियन्ते निरुच्यन्त इत्यर्थः ॥

तद्यथा—

## दमूनाः क्षेत्रसाधा इति ॥

"दम उपशमे" (दि० प०) तस्य भाषायां दाम्यति अनड्वान् दमयत्यनड्वाहम् (नम्रोतं करोतीत्यर्थस्तथा च) दान्तोऽनड्वान् । इत्येवमादयः प्रयोगा भवन्ति । छन्दसि पुनर्दमूना अग्निरुच्यते । स भाषासामान्येन केनचिन्निर्वक्तव्यो दममना इत्येवमादिना । एवमेव साघ्नोतेर्भाषाप्रायो वृत्तेः "सर्वधातुभ्योऽसुन्" ( उ० १-८८ ) इत्यसुनि साधा इति । "मित्रं न क्षेत्रसाधसम्" ( ऋ० ६-२-४ ) इत्येवमादयो मित्रमिव क्षेत्रसाधसमित्येवमादिना प्रकारेण निर्वक्तव्याः ॥

## अथापि नैगमेभ्यो भाषिकाः ॥

निगमे छन्दसि ये प्रायो वृत्त्या प्रसिद्धास्ते **नैगमास्तेभ्यः** सामान्यं गृहीत्वा **भाषिकाः** कृतो भाष्यन्त इत्यनुवर्तते । तद्यथा—

## उष्णं घृतमिति ॥

"उष दाहे" ( भ्वा० प० ) एष प्रायेण छन्दसि प्रसिद्धः । "प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः" (य. सं. १-७) इत्येवमादौ । भाषायां पुनरुष्णमिति श्रूयते । स एष नैगमशब्दसामान्येन निर्वक्तव्यः । एवं भाषाविषयेभ्यश्छन्दोविषयाश्छन्दोविषयेभ्यो भाषाविषयाः ॥

### ( अथ देशप्रसिद्ध्या शब्दरूढिनिर्णयः )

## अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु ॥ ३ ॥ खं० सू० ॥

**एकेषु** प्रदेशेषु **प्रकृतय एव** धातुशब्दानां **भाष्यन्ते विकृतय एकेषु** । धातोराख्यातपदभावेन यः प्रयोगः सा प्रकृतिः । नामीभूतस्य तस्यैव यः प्रयोगः सा विकृतिः ॥ ३ ॥

अथ क्व प्रकृतय एव भाष्यन्ते क्व वा विकृतय इत्येतदुपदर्शयितुं चतुर्थं खण्डसूत्रमारचयति—

१. तथाच विशेषाधिकारार्थोऽयमथशब्द इति भावः ॥

२. अत्र निर्वचनप्रकार उक्तः ( ३६ पृ. २० पं. ) स एवात्राप्यनुसन्धेयः ॥

## शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते ॥

**शवतिः** शवधातुः (भ्वा० प०) "इक्श्तिपौ धातुनिर्देशे" ( पा० ३-३-१०८ वा. ) स **गतिकर्मा** गत्यर्थः । **कम्बोजेषु** तन्नामकेषु देशविशेषेषु ( तद्देशभवेषु म्लेच्छेषु ) **एव** प्रकृत्या **भाष्यते** आख्यातपदभावेन प्रयुज्यते शवतीति, गच्छतीत्यर्थः ॥

उदाहरणविशेषप्रसक्तः कम्बोजशब्दो निरुच्यते ॥

## कम्बोजाः कम्बलभोजाः ॥

"पृषोदरादिः" (पा० ६-३-१०९) ते हि प्रायेण कम्बलमुपभुञ्जते, हिमप्रधानत्वात्तस्य देशस्य ॥

## कमनीयभोजा वा ॥

**कमनीयानि** प्रार्थनीयानि द्रव्याणि **उपभुञ्जते** इति कर्मण्यण् (पा० ३-२-१) ॥ प्रचुररत्नो हि स देशः ॥ कम्बलशब्दं विग्रहप्रसक्तं निर्ब्रवीति—

## कम्बलः कमनीयो भवति ॥

**कमनीयः** प्रार्थनीयो हि स **भवति** शीतार्तैरिति शेषः । "कल" इत्यनुवर्तमाने "कमेर्बुक्" (उ० १-१०७) इति कलप्रत्ययो धातोर्बुक् च । कम्यतेऽभीप्स्यते इति **कम्बलः** ॥

## विकारमस्यार्येषु भाषन्ते शव इति ॥

( शवति विकारं गच्छतीति ) **आर्येषु** जनपदेषु ( आर्यावर्तेषु ) **अस्यैव** शवतेर्**विकारं** मृतकनामधेयभूतं **शव** इत्येवं **भाषन्ते** प्रयुञ्जते । एवमेकेष्वाख्यातस्य एव प्रयुज्यते, नामीभूत एकेषु । इत्येतत्प्रकृतित्वं विकारत्वं च । अथवा चेतने गमनक्रियावति द्रव्ये एकेषु प्रयुज्यते । एकेषु पुनश्चेतनारहित एव । इत्येतत्प्रकृतित्वं विकारत्वं च ॥

द्वितीयमुदाहरणम्—

## दातिर्लवनार्थे प्राच्येषु ॥

**दातिर्**दाधातु-( अ. प. ) राख्यातस्थो **लवनार्थे** छेदनार्थे **प्राच्येषु** जनपदेषु प्रयुज्यते । तद्यथा व्रीहीन् दाति यवान् दाति छिनत्तीत्यर्थः । अयमेव नामीभूतः—

## दात्रमुदीच्येषु ॥

**उदीच्येषु** जनपदेषु **दात्र**मिति प्रयुज्यते । दीयते लूयतेऽनेनेति दात्रम् "दाम्नी-" ( पा० ३-२-१८२ ) त्यादिना करणे ष्ट्रन् । यद्वा त्रनित्यनुवर्तमाने-"दादिभ्यश्छन्दसी" ( उ० ४-१६९ ) ति करणे त्रन् ॥

## एवमेकपदानि निर्ब्रूयात् ॥

**एव**मनेन प्रकारेण **एकपदानि** उक्तान्यनुक्तानि च **निर्ब्रूयात्** ( भाषा-निगमव्यवस्थया, देशभाषाप्रसिद्धिविभागेन च ) निर्धार्य ब्रूयात् ॥

### ( अथ तद्धितसमासनिर्वचनम् )

एवमतद्धितसमासयोः पदानां निर्वचनोपायमुक्त्वा तयोरपि तद्वक्तुमुपक्रमते—

## अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् ॥

**अथ**शब्दो विशेषाधिकारार्थः "तद्धिताः" ( पा० ४-१-७६ ) इत्यधिकृत्य ये प्रत्यया विहितास्ते तद्धिताः । "समर्थः पदविधिः" ( पा० २-१-१ ) इत्यधिकृत्य ये विहितास्ते समासास्तेषूभयेष्वपि **तद्धितसमासेषु** । अविशेषेणै**कपर्वसु**

१. कम्बोजशब्दात्तद्राजप्रत्ययस्याञः "कम्बोजाल्लुक्" ( पा० ४-१-१७५ ) इति लुकि कम्बोजदेशराजानोऽपि कम्बोजाः । 'क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्' (पा० ४-१-१६८ वा० ) इति सूत्रान्विहितेः । तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञा हि "जनपदशब्दात्क्षत्रियादञ्" ( पा० ४-१-१६८ ) इत्येतदपत्ये विहितानामञादीनां "ते तद्राजाः" ( पा० ४-१-१७४ ) इत्यनेन विहिता । तथाच कम्बोजानां राज्ञामपत्यानि कम्बोजा मनुष्या देशाश्च । देशशब्दा हि नियतबहुवचनान्ता एव प्रयुज्यन्ते । यथा अङ्गा वङ्गाः कलिङ्गा इत्येवमादयः ॥

२. आर्यावर्तलक्षणन्तु मनुनोक्तम्-( अ० २ श्लो० २२ ) "आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधा" इति ॥ तयोः हिमवद्विन्ध्ययोः । तथा चामरः "आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयो"रिति ॥

1. अत्र मानमाह तद्राजेत्यादिना । हि यतः ॥

2. हिमप्रधानोऽगः पर्वतो हिमागः । शाकपार्थिवादित्वात् ( पा० २-१-६० वा० ) उत्तरपदलोपः । हिमालयोरिति पाठे हिमेनाल्यते भूष्यते इति कर्मणि घञ् 'अल भूषणादौ' ( भ्वा० प० ) वर्तते ॥

१. पूर्वोदाहरणे प्रकृतिविकृतिभावयोर्द्वेधा सम्भवमुपपाद्य, प्रकृतिविकृत्योर्यथाप्रतिज्ञात- ( ६० पृ० ३३ पं० ) मर्थमेव मुख्यं मत्वेदमुच्यते ॥

२. शरावत्या अवधेः प्राक्सहितो दक्षिणो देशः प्राच्यः । एवं पश्चिमसहित उत्तरो देश उदीच्य इति देशविभागोऽमरेणोक्तः । "शरावत्यास्तु योऽवधेः । देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तर" इति ॥ शरावतीनाम नदीविशेषः । यामधिकृत्योक्त"मेङ्प्राचां देश"-( पा० १-१-७५ ) इति सूत्रे वृत्तिकृता, "प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा । विदुषां शब्दसिध्यर्थं सा नः पातु शरावती"ति ॥

३. तद्धिते पदेषु समासे पदेषु च । तत्र तद्धितपदं प्रत्ययग्रहणपरिभाषया तद्धितान्तपरं यद्वा तद्धितयुक्तपरमेवं समासपदं तद्युक्तपरं तदसिन्वाक्यार्थे पूर्वं तद्धितं तदप्यर्थपरमेवं समासपदमपि ।

४. पर्वात्र पदं तदपि शक्तं न तु सुप्तिङन्तरूपम् । तदेतदग्रे स्फुटीभविष्यति ॥

एकपदेषु **अनेकपर्वसु** अनेकपदेषु **च** ( एकश्चो वाक्यालंकारे ) **पूर्वं** तद्धितार्थं समासार्थं च **पूर्वमेव** ( पदार्थात् ) **अपरं** पदार्थमपरं पश्चादेव ( क्रमेण-पदार्थात्-समासार्थाच्च ) **प्रविभज्य** विगृह्य **निर्ब्रूयात्** ॥

तत्रैकपदतद्धितोदाहरणम्—

## दण्ड्यः पुरुषः ॥

इति । अत्र **दण्ड्य** इति पुरुषविशेषणम् । तत्र तावत्तद्धितार्थं निर्वक्ति—

## दण्डमर्हतीति वा दण्डेन संपद्यत इति वा ॥

कस्मिंश्चिदपराधे **दण्डमर्हतीति** दण्ड्यः । तदर्हतीत्यधिकारे "दण्डादिभ्यो यत्" ( पा० ५-१-६६ ) इति द्वितीयान्ताद्यत् । **दण्डेन वा** कार्षापणादिना यः **संपद्यते** निष्पद्यते ( संयुज्यते ) स दण्ड्यः ।" "तेन यथाकथा च हस्ताभ्यां णयतौ" ( पा० ५-१-९८ ) इत्यतस्तेन यदित्यनुवर्त्य "संपादिनि" ( पा० ५-१-९९ ) इत्यनेन संपन्नार्थे यदिति यास्कोऽमिप्रैति । पाणिनीयास्तु तेनेत्येवानुवर्तयन्ति प्रत्ययस्तु "प्राग्वतेष्ठञ्" ( पा० ५-१-१८ ) इति "तेन तुल्यमि-" ( पा० ५-१-११५ ) ति वतिं यावट्ठञेवासति विशेषेऽनुवर्तत इत्याहुः ॥

अथात्र पदार्थनिर्वचनम्—

## दण्डो ददतेर्धारयतिकर्मणः ॥

धारणार्थस्य दद्धातोः ( भ्वा. आ. ) कर्मण्यौणादिके अनि धातोर्णुमागमे ष्टुत्वे च **दण्डः** । धार्यते ह्येषोऽपराधेषु राजभिः ॥ अत्र लोकदर्शनं तावत् प्रमाणयति—

## अक्रूरो ददते मणिमित्यभिभाषन्ते ॥

**अक्रूरो** नाम राजा वृष्ण्यन्धकाधिपतिः स **मणिं** स्यमन्तकनामानं भक्तितुष्टेन भगवता भास्करेण प्रदत्तं ददते शिरसा धारयति **इति**-एवं लोकेऽपि ददतिं धारणार्थे**ऽभिभाषन्ते** शिष्टाः ॥

अत्रैव मतान्तररीत्या साधनान्तरमुपवर्णयति—

## दमनादित्यौपमन्यवः ॥

**दमनाद्दण्ड इत्यौपमन्यव** आचार्यो मन्यत इति शेषः । तेन हि अदान्तो दम्यते राजभिः । दाम्यत्युपशाम्यत्यनेनेति दण्डः । "दम उपशमे" ( दि. प. ) "अमन्ताड्डः" ( उ० १-११३ ) इति करणे डः ॥ अतएवादान्तान्दमयेद्दण्डेनेत्युक्तं दण्डनीत्याम् । लोकेऽपि हि प्रसिद्धो यः कश्चिददान्तो भवति तमधिकृत्य वक्तारो वदन्ति—

## दण्डमस्याकर्षतेति गर्हायाम् ॥

हे सभासदः ! **यूयमस्य दण्डमाकर्षत** दण्डमस्मै प्रयच्छत । तेन दण्डेन सम्पद्यतामयं ततो दान्तो भविष्यतीत्येवं

---

१. यद्यपि "दद दाने" "दध धारणे" इत्युदात्तावनुदात्तेतावात्मनेपदिनौ भ्वादौ पठ्येते तथापीह दधतिसाहचर्याद्ददतिरपि धारणार्थे प्रयुक्तश्छान्दसत्वाद्धातूनामनेकार्थत्वाच्च ॥

२. अत्र ददतेर्धारणेऽर्थे वृत्तौ तावत्प्रथमम् । लोकस्यैव व्यवहारे प्राथम्यमिति तमेवादौ प्रमाणयति । यत्र त्वविसंवादं धारणार्थे वृत्तिः स वेदस्तु नेह प्रमाणितः प्रचुरप्रयोगतया सुगमत्वाच्चात्र ह्यर्थे लोक एव प्रमाणं तत्र किमिति वेदानुधावनम्-तत्र यथा दिङ्मात्रमुदाह्रियते—

"उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि जातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त ॥ ( ऋ० सं० ५-३-२४-१ )-" इयं त्रिष्टुप् मित्रावरुणयोरुर्वशीमप्सरसं दृष्ट्वा जले पतितवीर्यात्तसो वसिष्ठोत्पत्तिमभिनन्दतीति वसिष्ठस्तुतिरियम् । तथाचादित्यैर्मित्रावरुणौ जज्ञाते इति प्रकृत्य ( स्मृतौ ) पठ्यते—"तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् । रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे ॥ १ ॥ तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ । अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ॥ २ ॥ बहुधा पतितं रेतः कलशे च जले स्थले । स्थले वसिष्ठस्तु मुनिः संभूत ऋषिसत्तमः ॥ ३ ॥ कुम्भे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः । उदियाय ततोऽगस्त्यः शम्यापात्रो महातपाः ॥ ४ ॥ मानेन संमितो यस्मात्तस्मान्मान्य इहोच्यते । यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि मीयते ॥ ५ ॥ कुम्भ इत्यभिधानं च परिमाणं च लक्ष्यते । ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ॥ सर्वतः पुष्करे तं हि विश्वेदेवा अधारयन् ॥ ६ ॥" इति ॥

मन्त्रार्थस्तु । उतापिच हे वसिष्ठ ! त्वं मैत्रावरुणोऽसि मित्रावरुणयोः पुत्रोसि । हे ब्रह्मन् वसिष्ठ ! उर्वश्या अप्सरसो-मनसो ममायं पुत्रः स्यादितीदृशात्संकल्पात् द्रप्सं द्रवीभूतं घनीभूतं रेतो मित्रावरुणयोरुर्वशीदर्शनात्स्कन्नमासीत् । तस्मादधिजातोऽसि । ताथ च वक्ष्यते । सत्रे ह॑ जा॒ताविषि॒ता नमो॑भिः कु॒म्भे रेतः॑ सिषिचतुः समा॒नम् । ततो॑ ह॒ मान॒ उदि॑याय॒ मध्या॒त्ततो॑ जा॒तमृषि॑माहु॒र्वसि॑ष्ठम् ॥ ( ऋ० सं० ५-३-२४-१३ ) एवं जातं त्वां दैव्येन देवसंबन्धिना ब्रह्मणा वेदराशिना अहंयुवा युक्तं विश्वेदेवाः सर्वे देवाः पुष्करे पद्मकोशे अददन्त अधारयन्त । इति ॥

१. एष प्रसङ्गः श्रीमद्भागवते ( द० स्क० अ० ५६ ) द्रष्टव्यः ॥

२. अस्याकर्षतेति क्रियायाऽभिप्रेतस्यापि संबन्धमात्रविवक्षायां शेषेषष्ठी सतांगतमितिवत् । सद्भिर्गतमिति हि तदर्थः ।

1. सत्रे बहुकर्तृके यागे जातौ दीक्षितौ जातौ मित्रावरुणौ इषिताऽध्येषितौ स्वयमन्यैर्जनैर्नमोभिः स्तुतिभिः, कुम्भे वासतीवरे कलशे समानमेकदैव रेतः सिषिचतुः असिञ्चताम् । ततो वासतीवरात्कुम्भान्मध्यान्मध्यभागान्मानः शमीप्रमाणोऽगस्त्यो मुनिरुदियाय प्रादुर्बभूव । तत एव कुम्भाद्वसिष्ठमप्यृषिं जातमाहुः । ह इति पदपूरणः ॥ १३ ॥ इति सायणः ॥

1. इयमेतन्मन्त्रार्थव्याख्याने सायणेन धृता ॥

गर्हायां दृष्टः ॥ एवं दमनाद्दण्ड इत्यौपमन्यवो मन्यते इति संपुटितो वाक्यार्थः ॥ ४ ॥

अथैकपदतद्धितस्यैव द्वितीयमुदाहरणमाह—

## कक्ष्या रज्जुरश्वस्य ॥

कक्ष्या इत्येष तद्धितः ( तद्धितान्तम् ) योऽयमश्वस्य रज्जुः सन्नहनसाधनं "तङ्ग" इति भाषायां प्रसिद्धः स कक्ष्येत्युच्यते ॥ एवं कक्ष्याशब्दस्य तत्त्वमुक्त्वाऽधुना तद्धितार्थं ब्रवीति—

## कक्षं सेवते ॥

कक्षो वाहुमूलप्रदेशः "वाहुमूले उभे कक्षावि"त्यमरः। तं सेवते तत्र भवा वा । "तत्र भवः" ( पा० ४-३-५३ ) इत्यधिकारे "शरीरावयवाच्च-" (पा० ४-३-५५) ति यत् ॥

अधुना पदार्थं निर्वक्ति—

## कक्षो गाहतेः ॥

विलोडनार्थस्य गाहधातोः ( भ्वा० आ० ) अयं कक्ष इति निपात्यते पृषोदरादित्वात् ॥ गाहते विलोडयति द्रष्टव्यमर्थमस्मिन्निति कक्षः ॥

अत्र साधनप्रक्रियामाह—

## क्स इति नामकरणः ॥

क्स इत्ययं नाम ( संज्ञाशब्दः ) क्रियते निष्पाद्यतेऽनेनेति संज्ञाकरणः संज्ञा(त्व-) प्रयोजकः प्रत्ययभूतः शब्दः धातोश्च कादेशः । प्रत्ययावयवस्य च सस्य षत्व "आदेशप्रत्यययोः-" ( पा० ८-३-५९ ) इति, एवं सर्वमन्यदाद्यन्तविपर्ययादि यथासंभवमन्यत्रापि योज्यम् ॥

## ख्यातेर्वाऽनर्थकोऽभ्यासः ॥

प्रकथनार्थस्य ख्याधातोः ( आ. प. ) अनर्थकोऽभ्यासो द्विर्भावः ककारः । कख्यः सन् कक्ष इत्युच्यते । अत्र ख्याधातो "रातश्चोपसर्गे-" ( पा० ३-३-१०६ ) इत्यत्रात इति योगविभागात्कमभिप्रैति यास्कः । "आतो लोप इटि चे-" ( पा० ६-४-६४ ) त्याकारलोपः ॥ ख्यातीवायमिति कक्षः ॥

यद्वाऽर्थवानेव ककार इत्याह—

## किमस्मिन्ख्यानमिति ॥

एवं किमस्मिन्ख्यानं ख्यापनीयमस्ति ? । न किंचिदपि, अदर्शनीयत्वात् । गूहनीयोऽयमित्यर्थः । स एष एवं कृत्वा किंख्यः सन् कक्ष इत्युच्यते ॥

## कषतेर्वा ॥

हिंसार्थकस्य कषधातोः ( भ्वा. प. ) "वृतॄवदिहनिकमिकषिभ्यः सः" ( उ० ३-५९ ) इति सः । षस्य कत्वं ( पा० ८-२-४१ ) सस्य षत्वम् ( पा० ८-३-५९ ) नित्यकालं ह्यसौ खेदशीलत्वात्कण्डूं ददाति । ततो नखैः कष्यते इति कषणक्रियायोगात्कक्षः ॥ एवं स्त्रीकक्षं व्युत्पाद्य पुंकक्षं व्याचष्टे—

## तत्सामान्यान्मनुष्यकक्षः ॥

तस्य स्त्रीकक्षस्य सामान्यात्समानधर्मवत्त्वान्मनुष्यकक्षः पुरुषकक्षोऽपि कक्ष इत्युच्यते ।

## वाहुमूलसामान्यादश्वस्य ॥

अश्वस्यापि यो वाहुमूल इव प्रदेशः स कक्ष इत्युच्यते । तं सेवत इति कक्ष्या ॥ इत्येवमेकपदतद्धितोदाहरणं दिग्दर्शनार्थं द्विधा दर्शितं दुर्वेयं, सुखवेद्यं तु ऋजुमतिभिरप्यूहितुं शक्यमिति नो दर्शितम् । एतेनानेकपदतद्धितोदाहरणादिकमपि सुखवेद्यतयैवोपेक्षितं तदस्माभिर्ऋजुमतीनामर्वाग्दशामुपयोगाय किंचित्प्रदर्श्यते—तत्र तावदनेकपदतद्धितोदाहरणम्—गार्ग्यायण

---

१. यथोपदर्शितम् ।

२. पाणिनीयास्त्वस्य ( ख्यातेः ) सार्वधातुकमात्रविषयत्वं मन्वते । चक्षिङः ख्याञादेशस्य ख्शादित्वप्रयोजनान्वाख्याने "सस्थानत्वं नमःख्यात्रे" इति वार्तिककृदुक्तस्य प्रयोजनस्य सस्थानो जिह्वामूलीयः स नेह भवति । ख्शाञः सस्य यो वेत्यस्यासिद्धकाण्डे पाठेनासिद्धत्वात्कुप्वोः परत्वाभावादिति पतञ्जलिना समर्थनात् । सति ह्यस्यार्धधातुकविषयत्वेऽस्यैव तृचा तत्सिद्धेरिति तेषां भावः ॥ योगविभागोऽपि भाष्यानुक्तो न संगृह्यते तैर्लक्षणैकचक्षुष्कैः । अयन्तु ( यास्कः ) लक्ष्यैकदृगिति नोपेक्षणीयमेतद्व्याख्यानमभियुक्तैः । पाणिनिस्त्वस्मादर्वाचीन इत्यपि वैहवः ॥

१. दुर्गस्तु वार्ष्यायणिरित्युदाजहार विजग्राह च वृषस्यापत्यं वार्ष्यः वार्ष्यस्यापत्यं वार्ष्यायणः । तस्यापि वार्ष्यायणिरिति । तदेतदसमञ्जसम् । तद्यथा "कौशल्यकार्मार्याभ्यां चे" (पा० ४-१-१५५) ति सूत्रे "छागवृषयोरपी"ति वार्तिकं पठ्यते । अपत्ये हि तेन फिञ् विधीयते सच "परमप्रकृतेरेवायमिष्यत"इति वृषशब्दादेव भवति । प्रत्ययसन्नियोगेन प्रकृतिरूपं निपात्यते। तथा च वृषस्यापत्यं वार्ष्यायणिरित्येव विग्रहो न्याय्य इति ॥ गार्ग्यायणशब्दात्तु "अत इञ्" ( पा० ४-१-७६ ) ति इञ् न भवति सहि अपत्ये विधीयमानो न यूनि, "गोत्राद्यून्यस्त्रियामि" ( पा० ४-१-९४ ) ति गोत्रप्रत्ययान्तादेव तद्विधानं । नापि गोत्रे "एको गोत्र-" ( पा० ४-१-९३ ) इति नियमनात् । अपत्यसामान्ये ( अनन्तरापत्ये ) तु नैव स्यात्तस्या"ऽपत्यं पौत्रप्रभृतिगोत्रमि"-(पा० ४।१।१६२) ति गोत्रसंज्ञावश्यंभावात् ॥ तत्र चैकस्य पूर्वं विधानेनापरस्य पुनर्विधातुमशक्यत्वात् ॥

1. तेषामयं भावः । शाकटायनगार्ग्यवार्ष्यायणादीनां व्याकृतिविदां मतं यथात्रानेनानूद्यते न तथा पाणिनेः नामनिर्देशमनुवद- नमिहास्तीति ॥ पुराणप्रसिद्धः पाणिनिरिति तु गुरवः । तदेतद् ब्रह्मवैवर्ते प्रकृतिखण्डे चतुर्थाध्याये "शेषः पाणिनये प्रादादि" त्यादि सरस्वतीमन्त्रप्रसंगे द्रष्टव्यम् । शेषोऽत्रानन्तः । यदंशः पतञ्जलिः । एवं गणेशखण्डेऽपि ( अ० २३-श्लो० १४ ) "और्वः कात्यायनश्चैव कणादः पाणिनिस्तथे"तिपठ्यते ॥ एवं देवीभागवतेऽपि द्रष्टव्यम् ॥ अतएवात्र निरुक्ते ( १-४-१ ) वैयाकरणानांचैक इत्युक्त्या पाणिनिमेव लक्षयति । एके प्रधानाः । "एकोऽन्यार्थे प्रधाने चेति" कोशः । पाणिनिना संक्षिप्य "पृषोदरादीनि यथोपदिष्टम्" इत्येवमुक्तमेवार्थं यास्को वितस्तार । तदेतत्सूत्रभाष्यादौ द्रष्टव्यम् ॥

इति । अनेकानि ह्येषं पदानि स्वात्मन्यन्तर्णाय प्रवर्तते । तद्यथा गर्गस्य गोत्रापत्यं गार्ग्यः "गर्गादिभ्यो यञ्"–( पा० ४–१–१०५ ) ति गोत्रे यञ् । आदिवृद्धिः । गार्ग्यस्यानन्तरापत्यं गर्गस्य युवापत्यं गार्ग्यायणः "यञिञोश्च"–(पा० ४–१–१०१) ति यून्यपत्ये फक् ॥ अत्र "समासेष्वप्येकपदेषु चैवं निर्ब्रूयात् यथावक्ष्यामः । एकशेषः एकपदसमासः । तथाच पाणिनिसूत्रम् "सरूपाणामेकशेष एकविभक्तौ"–( पा० १–२–६४ ) इति । तद्यथा पुरुषश्च पुरुषश्च पुरुषौ पुरुषश्च पुरुषश्च पुरुषश्चेति पुरुषा इत्येव"मिति दुर्गो बभ्रामं ॥ एकपदसमासस्तु नैव भवतीति स्फुटमनुपदम् ॥ एवं तद्धितनिर्वचनलक्षणं सोदाहरणमुक्त्वा समासोदाहरणमुच्यते ।

१. एष गार्ग्यायणशब्दः । अनेकानि पदानि गर्ग–यञ्–फक् इत्येतानि । अन्तर्णीयान्तः प्रवेश्य ॥ पदं च शक्तमित्युक्तमधस्तात् ।

२. "समर्थः पदविधि"–( पा० २–१–१ )रित्यधिकृत्य ये विधीयन्ते ते समासा इति प्रतिज्ञाविरोधात् । वस्तुतस्तु समर्थः पदविधिरित्येष नाधिकारः किंतु परिभाषापदोद्देश्यकविधित्वमेवास्य प्रवृत्तिबीजम् । तच्च कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपपञ्चवृत्तिषु साक्षात्परम्परया वास्तीति सर्वेषां समर्थविषयत्वम् । तत्रैकशेषस्य द्वन्द्वापवादभूतस्य तद्देशतया सह विवक्षाविषयत्वं तत्सहचरिततया पदविधित्वं चेत्यस्ति समर्थपरिभाषाविषयत्वम् । तत्र पदविधिसहचरितोऽपि पदविधिशब्दे न गृह्यत इति हि भाष्यकृदादिस्वरसः । अतएव चास्य समासमध्ये परिगणनं कथंचित्तस्य ( दुर्गस्य ) उपपद्यत इति बाढं प्रतीमः । यास्कस्त्वेतमर्थं नाभ्युपैतीति स्पष्टमनुपदोक्त्या ॥

३. द्विपदस्यैव समासोदाहरणस्य मूलकृताप्रदर्शनात् समासपदार्थनिर्विवक्षया "राज्ञ इत्युक्ते सर्वं स्वं गम्यते षष्ठीसामर्थ्यात्, तथा पुरुष इत्युक्ते सर्वः स्वामी गम्यते निर्देशसामर्थ्यात् । अथेदानीं राजपुरुष इत्युक्ते राजा पुरुषमन्येभ्यः स्वामिभ्यो विनिवर्त्य त्वात्मना संयुनक्ति । तावुभावप्यन्योन्यविमिश्रपदार्थकौ मिथः संसृष्टपदार्थौ समस्येते । अथेदानीं राजपुरुषमानयेत्युक्ते न राजानमानयन्ति नापि पुरुषमात्रम् । किंतु राजस्वामिकं पुरुषमानयन्ति । इति स एव समासार्थ" इति तेनैव ( दुर्गेण ) व्याख्यानाच्च ॥

1. केपुचित्"कर्मण्यणि"–( पा० ३–२–१ ) त्यादिषु साक्षात्केषुचित्तत्सहचरितेषु पदोद्देश्यकविधिघटितप्रघट्टकघकत्वादिरूपपरम्परया । तेनैकशेषस्यापि पदविध्यपवादत्वात्परम्परया पदविधित्वोक्तिर्न विरुध्यते ॥ अतएव च माता गच्छति पिता मुङ्क्ते इत्येवंस्थले "पितामात्रे"–( पा० १–२–७० ) त्येकशेषेण पितरौ, मातापितरौ, मातरपितराविल्येवं न भवति इति तत्त्वम् ॥

2. स्वत्वं हि षष्ठ्यर्थः । तत्र राजा निरूपितत्वेन, तच्चाश्रयत्वेन पुरुषेऽन्वेतीति राजनिरूपितस्वत्ववान्पुरुष इति नव्यमते वाक्यार्थः । प्राञ्चस्तु स्वामित्वं षष्ठ्यर्थस्तत्राधेयतया राजा विशेषणं, तत्तु निरूपकतया पुरुषे । तथाच राजनिष्ठस्वामितानिरूपकः पुरुष इति वाक्यार्थमाहुः ॥

## राज्ञः पुरुषो राजपुरुषः ॥

**राजस्वामिकः पुरुषविशेषः** समासार्थो न राजा नापि पुरुषमात्रम् । प्रधानोपसर्जने हि सहभूते विवक्षितमेकं कमप्यर्थं ब्रूतः । पुरुषोऽत्रं प्रधानं राजा चोपसर्जनमतएव ततः "षष्ठी शेषे" ( पा० २–३–५० ) भवति । उपसर्जनादेव हि तेन सा विधीयते । यथाहुः—

"भेद्यभेदकयोश्चैव संबन्धोऽन्योन्यमिष्यते ।
द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥१॥"इति ॥

भेदकं व्यावर्तकं विशेषणमुपसर्जनमित्यनर्थान्तरम् ॥

एवमनेकपदसमासार्थमुक्त्वा पदार्थमाह—

## राजा राजतेः ॥

१. वाक्ये ।

२. "षष्ठी शेष" इति सूत्रेण । सा–षष्ठी ॥

३. भिनत्ति ( भेदयति ) व्यावर्तयतीतरेभ्य आत्मना स्वविशेष्यमिति भेदकम् । एवं व्यावर्तयति भेदयतीति व्यावर्तकं, विशिनष्टि विशेषयति (व्यावर्तयति) इति विशेषणं "नन्द्यादित्वा" ( पा० ३–१–१३४ ) ल्युः । उपसृज्यतेऽन्यत्रासावित्युपसर्जनं कर्मणि ल्युट् ( पा० ३–३–११३ )

४. अनेकपदसमासाः षट् । तथाच संग्रहः—

"द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥ १ ॥" इति ॥

तत्र "संख्यापूर्वो द्विगुः" ( पा० २–१–५२ ) पञ्चमूली पञ्चरथीत्येवमादिः । पञ्चानां मूलानां समाहार इत्यर्थे "तद्धितार्थोत्तरपदसमाहारे च–" ( पा० २–१–५१ ) ति समासः । "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट" ( पा० २–४–१७ ) इति स्त्रीत्वा–"द्विगो–" ( पा० ४–१–२१ ) रिति ङीप् । एवमन्यत्राप्यूह्यम् ॥ १ ॥ "चार्थे द्वन्द्वः" ( पा० २–१–२९ ) स पुनर्विभाषैकवद्भवति । द्विपदो बहुपदश्चेति । तद्यथा प्लक्षन्यग्रोधौ । अहिनकुलम् । भीमार्जुनवासुदेवा इत्येवमादि ॥ २ ॥ उपसर्गनिपातादिपूर्वकोऽव्ययीभावः । तद्यथा उपमणिकम् । अनुसमुद्रम् । व्यभ्रमित्येवमादि ॥ ३ ॥ तुल्यविभक्तिलिङ्गयोरुभयोः पदयोः समानाधिकरणः कर्मधारयः ( पा० १–२–४२ ) । तद्यथा कृष्णमृगः । रक्ताश्वः । श्वेतपताका । इत्येवमादि ॥ ४ ॥ अनेकप्रथमान्तस्यान्यपदार्थे बहुव्रीहिः । तथाच सूत्रम् "शेषो बहुव्रीहिः" । "अनेकमन्यपदार्थे" ( पा० २–२–२४ ) इति । शेष इत्यस्य प्रथमान्त इत्यर्थः । अनेकोक्तेर्बहूनामप्ययं भवति—तद्यथा प्राप्तोदको[1] ग्राम–ऊढरथोऽनड्वान्–चित्राजरतीगुरित्ये-

1. अत्र प्राप्तमुदकं यमिति उदकप्रधानो वाक्यार्थः । यत्कर्मकप्राप्तिकर्तृदकमिति । समासार्थस्तूदककर्तृकप्राप्तिकर्मग्राम इति विशेष्यविशेषणभावव्यत्ययेऽपि तुल्यार्थतया वृत्तिविग्रहयोः समानार्थत्वमित्युपपादनीयम् । एवमुत्तरत्रापीति बोध्यम् ॥

दीप्त्यर्थस्य राजृधातोः ( भ्वा० उ० ) "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव" ( उ० १-१५६ ) इति कनिन् ॥ नान्तलक्षण उपधादीर्घः ( पा० ६-४-८ ) दीप्यते ह्यसावष्टानां लोकपालानां वपुषा । तथाच स्मृतिः "अष्टाभिर्लोकपालानां मात्राभिर्जायते नृपः" इति । मात्रा अंशाः ॥

## पुरुषः पुरिषादः ॥

पूः शरीरं बुद्धिर्वा तयोरसौ विषयोपलब्ध्यर्थं सीदतीति पुरि सीदनात्पुरिषादः । स एवातिपरोक्षवृत्तितामापादितः पुरुषः ॥ यद्वा—

## पुरिशयः ॥

तयोरसौ शेते विशेषेणास्त इति पुरिशयः सन्पुरुष इत्युच्यते ।

## पूरयतेर्वा ॥

पूरयत्य ( पूरणा- )र्थकस्य पॄ धातोः ( जु० प० ) "पुरः कुषन्" ( उ० ४-७४ ) इति कुषन् प्रत्यये "उदोष्ठ्यपूर्वस्य"-( पा० ७-१-१०२ ) त्युत्वमृकारस्य तस्य ( उकारस्य ) च रपरत्वं "उरण्रपरः" ( पा० १-१-५१ ) इति ॥ पूर्णमनेन पुरुषेण सर्वगतत्वाज्जगदिदमिति पुरुषः ॥

तदेतदर्थतोऽनुवदति—

## पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य ॥

अन्तरित्येवमन्तरपुरुषस्य ब्रह्मणोऽभिप्रायेण प्रासङ्गिकमुच्यते ॥

अत्र ( वाक्यद्वयेनोक्तेऽर्थे ) निगमं प्रमाणयति—

"यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति किंचित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ १ ॥"

## इत्यपि निगमो भवति ॥

अस्यार्थः । यस्मात्पुरुषात्परं परस्तादपरमधस्ताद्वा न किंचिदस्ति । यस्माच्च न किंचिदणीयोऽतिशयेनाणु "द्विवचनविभज्योपपदे तरबीयसुनौ" ( पा० ५-३-५७ ) इति विभक्तव्ये उपपदे ईयसुनि "टे"-( पा० ६-४-१५५ ) रिति टिलोपः । नापि ज्यायोऽतिप्रशस्यं महद्वान्यदस्ति । अत्र "प्रशस्यस्य श्रः । ज्य च" ( पा० ५-३-६१ ) ति ज्यादेशे "ज्यादादीयसः" ( पा० ६-४-१६० ) इत्यात्वम् ( स एव सर्वमित्यभिप्रायः ) यश्च वृक्षइव स्तब्धो नित्यसङ्कोचविकासधर्मा दिवि द्योतनावति स्वात्मनि सर्वविभागेन तिष्ठति तेन पुरुषेणेदं सर्वं जगत्पूर्णमिति ॥ ५ ॥

समासस्यैव द्वितीयमुदाहरणमाह—

## विश्वकद्राकर्षः ॥

विश्वकद्रमाकर्षतीति विश्वकद्राकर्षः ॥

अत्रावयवार्थानिर्विवक्षन्श्वन्शब्दस्य प्रसिद्धार्थत्वाद्वि-पदं कद्र-पदं च व्याख्यन्भाष्यान्तरधृतं चकद्रपदव्याख्यानपरं भाष्यमनुभाषते—

## वीति चकद्र इति श्वगतौ भाष्यते ॥

वि-इति-चकद्र-इति-च शब्दद्वयं श्वभिः साकं गतिर्यस्य तस्मिन्मनुष्ये भाष्यते उच्यते । समासघटकतयेत्याशयः । कथम्—

## द्रातीति गतिकुत्सना ॥

अत्र पुनर्द्राति इति-अनेन गतिकुत्सना कुत्सिता गतिरुच्यते इति शेषः । "द्रा कुत्सायां गतौ" ( अ० प० ) । इदं हि तस्य कुत्सितगतित्वं यदस्य श्वभिः सह गतिः ॥

## कद्रातीति द्रातिकुत्सना ॥

इदानीं कद्रातीति द्रातिकुत्सना कुत्सितगतिकुत्सना उक्तवदर्थः । कत्पूर्वकेन द्राधातुना कुत्सितगतेरपि कुत्सना

---

वमादि ॥ ५ ॥ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषः । अयं तु प्रायेणे द्विपद एवेऽति स एव प्रसिद्धो राजपुरुष इत्यत्र दर्शितः ॥ ६ ॥

१. तयोरित्येतत्पुरीत्येकयोक्त्यात्र सूत्रे निर्दिश्यते । उभयं व्याप्य तिष्ठतीति ॥

1. तत्पुरुषभेदावेव द्विगुकर्मधारयाविति चतुर्धैव समास इति संख्याविदः ॥ एषां लक्षणानि भेदा-( अवान्तरविशेषा- ) श्चान्यत्र द्रष्टव्याः । दिङ्मात्रमत्रोच्यते । प्रायेणान्यपदार्थप्रधानो बहुव्रीहिः । प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावः । प्रायेण चोभयपदार्थप्रधानो द्वन्द्व इति ॥ तथाचाहुः । "षोढा समासाः संक्षेपादष्टाविंशतिधा पुनः । नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥ तत्राष्टधा तत्पुरुषः सप्तधा कर्मधारयः । सप्तधा च बहुव्रीहिर्द्विगुरामापितो द्विधा ॥ द्वन्द्वोपि द्विविधो ज्ञेयोऽव्ययीभावो द्विधा मतः । तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधं"मिति ॥

2. कश्चित् द्वे अहनी जातस्य ( यस्य-स ) द्व्यहजात इति त्रिपदस्तत्पुरुषस्त्वौपसंख्यानिको न सूत्रकृदुक्तः । तथा च वार्तिकम् । "उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यान-" ( पा० २-२-५ ) मिति ॥

१. इदं हि निघण्टुभाष्यं शाकपूण्यादिषु यास्कपूर्वतनेषु निरुक्तकारेष्वन्यतमेन केनचित्कृतं यदनुवादोऽत्र यास्केन कृतः । एतेन हि (चकद्रशब्देन) कद्रशब्दोऽपि तेन व्याख्यात एवेति कृत्वा कचिद्विश्वचकद्राकर्ष इत्येवमपि संहितादिषु पाठः स्यात्मभिप्रेत्य भाष्यान्तरीयाणां तथा व्याख्यानाम्युक्तम् इत्यप्यनेन प्रतिभाति ॥

२. गतिनिष्ठायां कुत्सायां, कचित्कुत्सायामित्येव पाठो धात्वर्थनिर्देशे । गतिस्तु क्रियासामान्यमिति कृत्वा धात्वर्थमात्रशिष्टत्वात्तत्र विशिष्य न निर्दिष्टा स्यादिति बाढं प्रतीमः ॥ कुत्सा कुत्सनेत्युभयमनर्थान्तरं भाववचनम् ।

उच्यत इति ॥ अत्र "रथवद्योश्व" ( पा० ६-३-१०२ ) ति चकाराद्द्रातावपि कोः कदादेशः ॥ इदमपरं कुत्सिततरं यद्द्रा श्वभिः सह निहन्ति तस्मात्कद्राततीति कुत्सितगतिकुत्सनेत्युपपद्यते ॥

## चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासः ॥

अथेदानीं च इत्येष कद्रातीत्येवमेव सतः शब्दस्वरूपस्यानर्थक एवाभ्यासः । यदेवोक्तं भवति कद्रातीति—तदेव चकद्रातीति ॥

## तदस्मिन्नस्तीति विश्वकद्रः ॥

तदस्मिन्द्वितयमप्यस्ति । कुगतित्वं कुत्सिततरगतित्वं च । तथाच कद्राणं कद्रा मिदादित्वात् ( पा० ३-३-१०४ ) अङ् । टाप् ॥ श्वभिः सह कद्रा श्वकद्रा विविधाः श्वकद्रा यस्य स विश्वकद्रः श्वजीवनः पुरुषः । यद्वा श्वैव विश्वकद्रः । शुनां हि कद्राः श्वकद्राः विविधाः श्वकद्रा यस्येत्येवम् । यावद्विधाः शुनां कुत्सिततरा गतयस्ताः सर्वा अप्यस्य सन्तीति भवति श्वैव विश्वकद्रः । तं कस्मिंश्चिदपराधे वर्तमानं श्वजीवनं, पादादिविकलं मृगयानुगतं श्वानं वा यः कश्चनाकर्षति स विश्वकद्राकर्ष इत्युच्यते ॥ लोकेतु "विश्वकद्रस्त्रिषु खले ध्वानाखेटशुनोः पुमानि"तिमेदिन्याम् "श्वाविश्वकद्रुर्मृगया कुशल"इत्यमरे च श्वपर्याये खलादौ च विश्वकद्रशब्दः पठ्यते, व्युत्पाद्यते च विश्वकन्द्रवतीति विश्वं कन्दतीति वेति । "द्रु गता"वित्यस्य कन्दतेर्वाऽऽह्वानार्थस्य मितद्रादित्वात् ( उ० ३-२-१९० ) जत्वादित्वाद्वा ( उ० ४-१०२ ) साधनेन ॥

अधुना रूपसमासं दर्शयति—

## कल्याणवर्णरूपः । कल्याणवर्णस्येवास्य रूपम् ॥

कल्याणवर्णं सुवर्णं तस्येव रूपं यस्यासौ कल्याणवर्णरूपः । अग्निरन्यो वा कश्चित् ॥

कल्याणादिशब्दान्विग्रहप्रसक्तान्निर्ब्रवीति—

## कल्याणं कमनीयं भवति ॥

१. रूपशब्दघटितेष्वेवंविधवाक्येषु समासप्रकारं दर्शयतीत्यर्थः। अयं भावः। "कल्याणवर्णरूप" इत्यादिषु वर्णरूपयोः समानार्थयोः सहोपादाने कल्याणशब्दो न सुवर्णवचनः किन्तु कमनीयमात्रवचनस्तथाच कल्याणः कमनीयो वर्णोऽस्येति कल्याणवर्णं सुवर्णम् । तस्येव रूपं यस्येति बहुव्रीहौ इवपदलोपो वाचनिको वार्तिककृदुक्तः "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च ( २-२-२४ वा. )" इति । महाभाष्यकृद्भिस्तत्र ( इवार्थगर्भबहुव्रीहौ ) पूर्वपदं स्वसम्बन्ध्युत्तरपदार्थसदृशे लाक्षणिकमिति कृत्वा बहुव्रीहिर्दर्शितः । उष्ट्रः मुखं यस्येत्येवम् । तथेहापि कल्याणवर्णः रूपमस्येत्येव विग्रहः । अर्थस्तु कल्याणवर्णशब्दस्य कल्याणवर्णसम्बन्धिरूपसदृशमिति—लक्षणाबलात् ॥ इयमेव दिगन्यत्रापीति ॥

सर्वैः कमनीयं प्रार्थनीयं भवतीति कल्याणं, कामयतेः कर्मणि ल्यट् "आयादय" ( पा० ३-१-३१ ) इति णिङभावे "सार्वधातुके यगि"-( पा० ३-१-६७ ) तियक् आगमशास्त्रमनित्य ( प० पा० ९४ ) मिति "आने मुगि" (पा० ७-२-८२) ति मुम । मकारस्य लत्वं नस्य णत्वं च पृषोदरादित्वात् ॥

## वर्णो वृणोतेः ॥

आवृणोत्याश्रयमिति वर्णः । आङ्पूर्वाद्वृधातोः ( स्वा० उ० ) बाहुलका-( पा० ३-३-१ )दौणादिको नन् गुणो रपरत्वम् ॥ बाहुलकादेवोपसर्गलोपोऽपि ॥

## रूपं रोचतेः ॥

तद्धि रोचते दीप्यते इति रूपम् । "रुच दीप्ता"-( भ्वा० आ० )-वित्यस्य बाहुलकादौणादिके कर्मणि पनि चस्योत्वं पृषोदरादित्वात् ॥ अथोपसंहरति—

## एवं तद्धितसमासान्निर्ब्रूयात् ॥

एवमनेन प्रकारेण तद्धितांश्च समासांश्चैकपदिकाननेकपदिकांश्च निर्धार्य व्याकरणादिलक्षणैरर्थं चापि समीक्ष्य ब्रूयान्निर्वचनलक्षणेन नैरुक्त इति वाक्यशेषः ॥

तदेवं तद्धितसमास-नाम-निर्वचनलक्षणमुक्त्वा निर्वक्त्र्यार्थे संप्रदायपरिरक्षणायाभ्युदयार्थं च कंचिद्विशेषमाह—

## नैकपदानि निर्ब्रूयात् ॥

यान्येकपदानि जहादीनि नैगमकाण्डे वक्ष्यमाणानि तत्सदृक्षाण्यन्यानि वा प्रकरणोपपदविरहितानि सन्ति, तानि केवलान्येव परेणाभिद्रोहबुद्ध्या पृच्छ्यमानानि प्रकरणादिकमनभिज्ञायैव न निर्ब्रूयान्न निर्वक्तव्यानि । तेषां ह्यनवगतसंस्काराणामेकपदानां प्रकरणादर्थावधारणमुपपदाद्वा भवति नान्यथा ।

१. पदान्तरासमभिव्याहृतानि ॥

२. विद्याप्रकर्षजिज्ञासया । नतु स्वबोधाय ।

३. सहसा । आत्मनो विद्याप्रकर्षविख्यापयिषया ॥

४. यथाच वक्ष्यते ( नैग० का० ४-१-१ ) तत्र जहा इत्यादिकं यत् ( नैघ० का० १-१ ) उक्तम् । तस्य निर्वचनाभ्युपायश्चिन्त्यतेऽनवगतसंस्कारे हि तस्मिन् ( जहादौ ) न ज्ञायते प्रकरणोपपदमन्तरा कतमस्य धातोरयं, किं हन्तेः ( अ० प० ) उत-"ओहाक् त्यागे" (जु० प०) इत्यस्य धातोः स्यात् ? इति। यथाच निगमः । "को नु मर्या अमिथितः सखा सखायमब्रवीत् । जहा को अस्मदीषते ॥ ( ऋ० सं० ६-३-४९-२ )" त्रिशोकस्य काण्वस्येयमार्षं गायत्री । अस्यामृचि जहेत्यस्य शब्दस्य पूर्वोत्तरपदाविरोधप्रकरणशब्दसारूप्यार्थोपस्थितिभिः संस्कारानवगमेपि सति हन्तेरेवाविशेषेणार्थोऽवतिष्ठते न जहातेः प्रकरणोपपदबलात् । तथाच निगमः । "मा नु एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर भूरिषु ॥ ( ऋ० सं० ६-३-४८-४ )" हे शूर इन्द्र ! नोऽस्मानेक-

1. जहाशब्दः ॥

अन्यथा तु ब्रुवाणः प्रत्यवाये न योक्ष्यते । तथाच श्रूयते—'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्रवामीयते पापीयान्भवति यातयामान्यस्य छन्दांसि भवन्ति' इति । तदेवं निर्वचनलक्षणान्तममिदधता मुनिना ( यास्केन ) सपरिकरं विषयप्रयोजने प्रतिपादिते । संप्रति यस्मै निर्वक्तव्योऽयमुक्तनिर्वचनलक्षणः समाम्नायस्तमधिकारिणमनुबन्धेष्ववशिष्टं लक्षयति—

**नावैयाकरणाय नानुपसन्नाय नानिदंविदे वा॥**

निर्ब्रूयादित्यनुवर्तते ॥ वैयाकरणो हि लक्षणज्ञो भवति । यः पुनरलक्षणज्ञस्तस्मै **अवैयाकरणाय न** निर्ब्रूयाद्यतो ह्यसौ व्युत्पाद्य निरुच्यमानमेतन्नावबुध्येत ॥ ततश्च व्यर्थं एव श्रमः स्यात् । तथा चैतन्निषेधति मनुः । "विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना । आपद्यपि च घोरायां न त्वेनामिरिणे वपेत्" इति ॥

"इरिणं शून्यमूषर"मित्यमरः । यथा तत्रोप्तं बीजं नोत्पद्यत इति नोप्यते तथैतस्मिन्ननधिकारिणि विद्यापि नो देयेतीति तद्भावः ॥ तस्मा **अप्यनुपसन्नाय** परां शिष्यवृत्तिमनास्थिताय न किंत्वास्थितायैवेत्येवं व्यतिरेकमुखेनाधिकारिलक्षणकथनं नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वेन तन्नियमनाय । एवं हि धर्मो न हीयते ॥ तथाभूतायाप्य**निदंविदे**—इदं निरुक्तशास्त्रं वेत्तीति (वेदितुं शक्नोती)ति–इदंवित् स न भवतीत्यनिदंवित्तस्मै इदं वेदितुमसमर्थायैव निर्ब्रूयादित्यर्थः ॥ अत्र हेतुमाह—

सिन्नागस्यपराधे । "आगोऽपराधो मन्तुस्त्व"त्यमरः । मा वधीर्माहिंसीः । द्वयोरागसोरपि मा वधीरुतापि च त्रिष्वागस्स्वपि मावधीर्भूरिष्वसंख्यातेष्वप्यागस्सु मावधीः ॥ एतस्मिन्प्रकरणे ब्रवीति– कोन्विति–हे मर्त्या मनुष्याः ! युष्मानेव तावत्पृच्छामि । को नु कः खलु अमिथितोऽनाकुष्टः परुषमपि वा कंचिदनुक्तः सखा समानख्यानः सखायं समानख्यानमेव सन्तम् ( यथा भवतामहं यद्वेऽत्र समानख्यानः । एवं सन्तम् अब्रवीत् ) ब्रूयाद्यथा यूयमनाहताः सन्तो मां ब्रूत मा वधीरिति । "जहाकोऽसदीषते" अत्र यास्कः "मेथतिराक्रोशकर्मा–पापकं जघान कमहं जातु,–कोऽसन्भीतः पलायत" इत्याह व्याख्यन् । अत्रापापकशब्द उपपदभूतो ( जहाशब्दात्प्राग )ध्याहृतो भाष्यकारेण ( यास्केन ) जहाशब्दस्यार्थद्योतनार्थोऽर्थसंगत्यर्थश्च कमहं जात्विति च । तथाच–अपापकमनपकारिणं सन्तं कमहं जातु कदाचिदपि जहा–'जघान ( प्रमादतो विक्षिप्तचित्तोऽपि सन् ) इति इन्द्रस्तान् ( मावधीरिति वदतः ) प्राह । न कदाचिदपि कश्चिदपापको मया हतपूर्वः । पापकं ( पापकारिणं ) तु हन्मीत्यभिप्रायः । ते यूयमपापका एवाजस्रं भूयास्थ न वो हनिष्यामि । यत्पुनरेतदुक्तं भवद्भिर्भूरिष्वप्यागस्सु मासान्वधीरिति । कथमागस्कारी न हन्येत् । एवं सति सर्वमसमञ्जसं स्यात् । किमेष श्वा पुरोडाशमवलिहल्लगुडेन न हन्येत ॥ अथ चेदेवं ब्रूथ–मनुष्यानपापानपि हंस्येव त्वमिति । अत्र ब्रूमः "कोऽसदीषते" इति । कोऽपापकारी असत् असस्तः ( भीतः सन् ) ईषते पलायते । न कश्चिदप्यपापकारी मत्त उद्विजमानः पलायते । सहि शुद्धेन चेतसाऽभिमुख एव मामभ्येति । य एव तु पापकारी भवति स एवात्मापराधशङ्कितया बुध्याऽसत्तो भीतः सन्पलायते इत्यभिप्रायः ॥ अत्रासदिति पञ्चमीबलादीषते ( स्वा० आ० )र्गतिसामान्यवाचिनोऽपि पलायनेऽवस्थानम् । यो हि यस्माद्बिभेति स तस्मा पलायते इति भीतशब्दोऽध्याहृतो भाष्यकारेण । न ह्यभीतः पलायते । इत्येष समस्तप्रकरणस्यार्थः ॥

१. न विदितानि आर्षेयच्छन्दोदैवतब्राह्मणानि यस्य तथाभूतेन मन्त्रेणेत्येवमर्थकेनानेन निगमवचनेनार्थज्ञानापेक्षदेवतादिज्ञानस्यैव याजनाद्युपयोगेन पुरुषार्थसाधनत्वमुच्यते । अज्ञानस्य तु प्रत्यवायसाधनत्वम् ॥

1 निराकाङ्क्षीकरणार्थं जहाशब्दस्याधस्ताच्चोपरिष्टाच्च "अपापकं" "कम्" अहं "जातु" इति सर्वमेतत्पदचतुष्टयमध्याहृतं भाष्यकारेणेत्यर्थः ॥

2. अतएवोत्तमपुरुषे लिडुपपद्यतेऽन्यथा स्वक्रियायां पारोक्ष्यं दुरुपपादम् । तथाचोक्तं ( सि० कौ० ) "उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्" इति । "सुप्तोऽहं किल विललापे"ति । "बहु जगद पुरस्तात्तस्य मत्ता किलाह"मि"ति चोदाहृतम् ॥

१. विषयप्रयोजनसंबन्धाधिकारिलक्षणाश्चतुर्विधा अनुबन्धा ये पूर्वमुपक्रान्तास्तेषु यथाप्रतिज्ञातं तुरीयांसमनुवन्धनम् ॥ एतल्लक्षणादिकमुक्तमधस्तात् ॥ ( १ पृ. १० पं. )

२. व्याक्रियन्ते धातुप्रत्ययादिप्रविभागेण व्युत्पाद्यन्ते–शब्दा अनेनेति व्याकरणं व्याङ्पूर्वात्करोतेः "करणाधिकरणयोश्च" ( पा० ३–३–११७ ) ति ल्युट् । व्याकरणं वेदेति वैयाकरणः । "तदधीते तद्वेदे"–( पा० ४–२–५९ )ति वेदित्रर्थेऽण् । "नय्वाभ्यामि"–( पा० ७–३–३ ) ति यात्पूर्वमैजागमः ॥ स हि लक्षणानि पाणिन्यष्टकादीनि जानातीति लक्षणज्ञः ॥

३. "आकेस्तच्छील–" ( पा० ३–२–१३४ )इत्युक्ते "स्न्येभ्योऽपि दृश्यते" ( पा० ३–२–७५ ) इति ताच्छील्ये क्विप् ॥ शक्तिविशिष्टे कर्तरि लटमाह ( वेदितुं शक्नोतीति ) ॥

४. अथवा इदमित्यनेन यत्किंचिच्छास्त्रं निर्दिश्यते । येन ह्यन्यत्किमपि शास्त्रं नाधिगतं तस्मा अनिदंविदेऽनास्फालितहृदयकुड्मलायेदं निरुक्तशास्त्रं न निर्ब्रूयात् । इदंविदे तु निर्ब्रूयात् । यो हि शास्त्रान्तरविद्भवति स विज्ञातसमुपसत्तिको विज्ञदान्तःकरणः सुखं ग्राहयितुं शक्त इति तस्मै निर्ब्रूयादिति पर्यवसितोऽर्थः । अथवा इदमित्यात्मपर्यायोऽपि संभवति–सन्निकृष्टत्वात्सर्वस्य ह्यात्मा सन्निकृष्ट एव भवति । इदमश्च सन्निकृष्टे शक्तिरितीदंविद आत्मविदे योगिने । स ह्यात्मज्ञानविधूतकल्मषोऽल्पेनैव यत्नेन बोद्धुं सूक्ष्मानर्थाञ्छक्त इति तस्मा इदं निर्ब्रूयादित्यप्यर्थः संभवति ॥

1. यद्यपि सततकरणं ताच्छील्यं तथापि शक्तिमन्तरा सततकरणं नोपपद्यत इति शक्तिरत्राभिहिता ॥

2. यथाहुः—

"इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् ।

अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥ १ ॥" इति ॥

**नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया ॥**

यो हि न विजानाति ( नावबुध्यते ) तस्याविज्ञातुर्विज्ञाने नित्यं ( नित्यकालमेव ) नियमेनासूया गुणेषु दोषाविष्करणमुपजायते ॥ स हि अनवबुध्यमान आत्मीयं दोषमाचार्ये एवावसर्जति स्वयमेव तावदयं न बुध्यते किमस्मान्बोधयिष्यतीति ॥ एतस्मात्कारणादश्रुतपूर्वान्यशास्त्रायाखिन्नमनसे नेदं निर्ब्रूयादिति पुष्कलम् ॥

एवमधिकारिपरिज्ञानायानधिकारिणमुक्त्वा संप्रत्यधिकारिणमाह—

**उपसन्नाय तु निर्ब्रूयाद्यो वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा ॥ ६ खं. ॥**

जन्मान्तरानुभावितप्रज्ञावान्मेधावी ग्रहणधारणपटुस्तपस्वी प्रशस्ततपाः । प्रशंसाया—"मस्मायामेधास्रजो विनि–" ( पा० ५–२–१२१ ) रिति विनिर्मत्वर्थे । तस्मै । यो वाऽन्यः कश्चिदिदं विज्ञातुमलं पर्याप्तस्तस्मै दृढग्राहिणे ( स्थिरबुद्धये ) अवैयाकरणायापि निर्ब्रूयादेवं परमुपसन्नाय । अनुपसन्नाय तु तपस्विनेऽपि मेधाविनेऽपि दृढग्राहिणेऽपि वा नैव निर्ब्रूयात् । उक्तं च मनुना "यश्चान्यायेन निर्ब्रूयाद्यश्चान्यायेन पृच्छति । तयोरन्यतरो मृत्युं विद्वेषं वाधिगच्छति ॥" इति ॥ ६ ॥

अथाप्येतमर्थमधिकृत्योदाहरन्ति—

**विद्या ह वै ब्राह्मणमाजगाम ॥**

१. आरोपयति ॥

२. तत्र हि—

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ १ ॥" इत्युक्तम् ॥

प्रशस्ततपसा मेधाविना वा स्वयमपि वेदार्थोऽभ्यूहितुं शक्यते किमुतोच्यमानोऽवबोद्धुम् ॥

३. अतएव पूर्वस्माद्वेदार्थकस्तुशब्द उपन्यस्तो मुनिना ॥

४. यद्यपि समुपलभ्यमानमनुस्मृतिपुस्तकेऽन्यथापाठ उपलभ्यते—यथा—

"अन्यायेन च यः प्राह यश्चान्यायेन पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ १ ॥" इति ।

तथाप्यर्थतस्तौल्याद्दुर्गेण यथानिर्दिष्टमिहोपनिबद्धं तदनुसारित्वादस्या लघुविवृतेः ॥

* सायणस्तु विद्यासूक्तमनुमित्थं व्याख्यत् ।

१ विद्याभिमानिनीदेवता ब्राह्मणमुपदेष्टारमाचार्यमागत्यैवं प्रार्थयामास, हे ब्राह्मण ! मामनधिकारिणेऽनुपदिश्य पालय । तवाहं निधिवत्पुरुषार्थहेतुरस्मि । तादृश्यां मयि–मदुपदेष्टरि त्वयि च योऽसूयां करोति, यश्चार्जवेन विद्यां नाभ्यस्यति, योऽपि स्नानाचमनाद्याचारनियतो न भवति तादृशेभ्यः शिष्याभासेभ्यो मां न ब्रूयाः । तथासति त्वद्धृदये स्थित्वा फलप्रदा भवेयम् ॥

२ पूर्वस्मिन्मन्त्रे आचार्यस्य नियममभिधायास्मिन्मन्त्रे शिष्यस्य

विद्या वागधिष्ठात्री देवता । ह इति पुरातीते पादपूरणे वा । वै इति निश्चये । सा किल कामरूपिणी भूत्वा ब्राह्मणं संयतात्मानं विदितवेदाङ्गवेदार्थं कंचनोपाध्यायं विप्रंप्रति आजगाम । आगत्य च प्रह्वीभूतोवाच—

**गोपाय माम् ॥**

मां गोपाय रक्ष । "गुपू रक्षणे" ( भ्वा० प० ) "गुपूधूपविच्छिपणिपनिभ्य आय" ( पा० ३–१–२८ ) इत्यायन्तस्य "सनाद्यन्ता" ( पा० ३–१–३२ ) इति धातुत्वाल्लोट् । का त्वमसीति पृष्टे वाह—

**शेवधिष्टेऽहमस्मि ॥**

ते तवाहं शेवधिर्निधिरस्मि । "निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधे"रित्यमरः । यथा निधिर्धनिना चिरादपि यथारुचि गृह्यमाणो नापक्षीयते किंत्वविरतं परिपूर्णरूप एव प्रस्फुरति ।

नियमोऽभिधीयते वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यं तद्विपरीतं सत्यं वेदवाक्यमवितथम् । तादृशेन वाक्येन य आचार्यः शिष्यस्य कर्णावातृणत्ति सर्वतस्तर्दनं पूरणं करोति, उपसर्गवशादौचित्याच तृणत्ति धातोरर्थान्तरे वृत्तिः, सर्वदा वेदं यः श्रावयतीत्यर्थः । किं कुर्वन् । अदुःखं कुर्वन् मन्दप्रज्ञस्य माणवकस्यादावर्धर्चमृचं वा ग्रहीतुमशक्तस्य यथा दुःखं न भवति तथा पादं पादैकदेशं वा ग्राहयन् । किंच अमृतं संप्रयच्छन् अमृतत्वस्य देवत्वजन्मनो मोक्षस्य वा प्रापकत्वात् अमृतं वेदार्थस्तस्य दानं कुर्वन् तं तादृशमाचार्यं सच्छिष्यो मुख्यं मातापितृरूपं मन्येत पूर्वसिद्धौ तु मातापितरौ अधमस्य मनुष्य शरीरस्य प्रदानादमुख्यौ । तस्मै मुख्यमातापितृरूपायाचार्यायैकमपि द्रोहं न कुर्यात् ॥

३ ये त्वधमा विप्रा गुरुणाऽध्यापिताः सन्तो विनयोक्त्या तदीयहितचिन्तनेन शुश्रूषया वा गुरुं नाद्रियन्ते आदररहितास्ते शिष्याभासा गुरोर्न भोजनीया अनुभवयोग्या न भवन्ति । नहि तेषु गुरुः कृपां करोति । यथैव ते गुरुणा न पालनीयास्तथैव तानधमान् शिष्यान् तच्छ्रुतं गुरूपदिष्टं वेदवाक्यं न पलायति फलप्रदं न भवतीत्यर्थः ॥

४ हे आचार्य ! यमेव मुख्यशिष्यं शुचित्वादिगुणोपेतं जानीयाः । किंच यो मुख्यशिष्यस्तुभ्यं कदाचिदपि न द्रुह्येत्तस्मै तु मुख्यशिष्याय त्वदीयनिधिपालकाय हे ब्रह्मन् ! वेदरूपां विद्यां ब्रूयाः । इत्थं विद्यादेवतया प्रार्थितत्वादाचार्येण मुख्यशिष्याय वेदविद्योपदेष्टव्या इति ऋग्भाष्यभूमिकायाम् ॥

१. तथाभूतायैव हि गोपनोपदेशः फलिष्यतीति । तथाभूत एव ब्राह्मणाद्ब्राह्मण्यामुत्पादितः कृतसंस्कारः प्रशस्ततरो मुख्यो ब्राह्मणपदार्थः । अन्यस्तु जात्यैव ब्राह्मणः न कर्मणा नापि श्रुतेन । तथाचोक्तं महाभाष्ये पतञ्जलिना—"तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारणम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥" इति ॥ ( अ० २ पा० २ आ० १ सू० ६ ) ब्राह्मणकारणं मुख्यब्राह्मणत्वव्यपदेशकारणम् ॥

२. विनीतासती वरार्थिनीवेति भावः ॥

एवमहं विदुषा शश्वत्प्रदत्ताऽपि नापक्षतिमायामि किंतु वर्द्धयीम्ये-वेति वाग्देवी अहमस्मीति निगूढाभिसंधिरेवमाह ॥

कुतः पुनस्त्वां रक्षामीति पृष्टे वाह—

**असूयकायानृजवेऽयताय न मा ब्रूयाः ॥**

त्वम् **असूयकाय** गुणेषु दोषाविष्कारिणे परापवादशीलाय वा **अनृजवे** कुटिलवृत्तये ( शठाय ) यस्य वा मनोवाग्देहेष्व-समाः प्रवृत्तयस्तस्मै । **अयताय**ासंयतेन्द्रियाय ( विप्रकीर्णेन्द्रि-याय ) यत्किंचन कायाद्युचये वा **मा**-मां **न ब्रूयाः** मा वद ॥

किं तथा कृते भविष्यति ?

**वीर्यवती तथा स्याम् ॥**

तथासत्यहं ते **वीर्यवती**-निग्रहानुग्रहसामर्थ्यभूता **स्यां** भवेयम् ॥ यस्मै त्वमनुग्रहीष्यसि तस्मै प्रभविष्यामि, यस्य वा निग्रहीष्यसि तं पराभविष्यामि । ततः पराग्भविष्यामि वा ॥

अधुना शिष्यमुपदिशति—

**य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ।**

**तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कत-मच्च नाह ॥**

**यो** गुरुर्भवतः **कर्णा**वपिहिताविव सन्तावा**तृणत्ति** आभिन-त्ति ( विवृणोति ) "उतृदिर् हिंसानादरयोः" (रु० उ०) "रुधा-दिभ्यः श्नम्" ( पा० ३-१-७८ ) । केन ? **अवितथेन** सत्येन ब्रह्मणा वाचा । कथं पुनरातृणत्ति-**अदुःखं** दुःखाभावं **कुर्वन्** । अन्यो हि यः कश्चन कर्णावन्यद्वाऽऽतृणत्ति स दुःखय-ति । अयं तु न तथा । किंत्व**मृतम**मृतत्व-( मोक्ष-) प्राप्तिहेतुं ज्ञानं **संप्रयच्छन्** ददत् । हेतावत्रोभयत्र शता । **तं मन्येत पितरं मातरं च** नेतरौ मातापितरौ स्तः ( तथा समुद्धर्तुं भवन्तं प्रभवतः ) । उक्तं च—

उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता ।

ब्रह्मजन्म च विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ १ ॥ ( म० सं० २-१-४६ )

इति । अतस्**तस्मै** मातापितृभूताय गुरवे **कतमच्चनाह** कदाचिदपि ( कष्टायामप्यापदि ) अहेति खेदे । **न द्रुह्येत्** नापकुर्यात् । "क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रति कोपः" ( पा० १-४-३७ ) इति चतुर्थी ॥

अधुनेतरान्दुष्टशिष्यानभिशपन्तीदमाह—( विद्या )

**अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।**

**यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥**

**ये विप्रा** मेधाविनो द्विजन्मानोऽ**ध्यापिताः** सन्तो गृहीत-विद्या **वाचा** प्रियवचनेन **मनसा** शुभानुध्यायेन **कर्मणा** परिच-रणेन **गुरुं** गुप्तं वेदरहस्यं रुवन्तमुपदेष्टारं निजमध्यापकं **नाद्रि-यन्ते** गुरुंप्रति नादरं कुर्वन्ति । किं तेषामित्युच्यते —**यथैव ते** शिष्यास्तस्य गुरोर्न **भोजनीया** न भोजनार्हाः । न भोग-दायिनः । **तथैव तान्** शिष्यान् **तत्** गुरूपदिष्टं **श्रुतं** वेदशा-स्त्रादिकमपि **न भुनक्ति** न पालयति । श्रुतफलेन न संयुन-क्तीत्यर्थः ॥ "भुज पालनाऽभ्यवहारयोः" (रु. प.) लट् ॥

अधुना यस्मै वक्तव्या तस्य लक्षणमाह—

**यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नाम् ।**

**यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥ इति ॥**

हे **ब्रह्मन् यमेव शुचिं** सदाचारसंपन्नम**प्रमत्त**मवहितं यमनियमेषु । **मेधाविनं** मेधावन्तं ( ग्रहणधारणसमर्थं ) **ब्रह्मचर्येणोपपन्नं विद्याः** जानीयाः । किंच **यस्ते** तुभ्यं **कतमच्चनाह** कदाचिदपि ( सर्वास्वप्यापत्सु ) **न द्रुह्येत्** न द्रोहमुपगच्छेत् **तस्मै निधिपाय** निधिवद्गोप्त्रे **मा** मां त्वं **ब्रूयाः** वदेः । विधौ लिङ् ॥ इतिशब्द उक्तिसमाप्त्यर्थः । उक्ति-स्वरूपपरामर्शार्थको वा ॥

निधिशब्दार्थमाह—

**निधिः शेवधिरिति ॥**

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे द्वितीयाध्यायस्य प्रथमः पादः ॥ * ॥

अयमितिशब्द उपोद्घातप्रकरणसमाप्त्यर्थः ॥

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ नैघण्टुककाण्डे द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥**

---

१. दुर्गस्तु "गोपाय मा" रक्ष माम् ततस्तेऽहं गुप्ता सती ते शेवधिः सुखनिधानं भविष्यामीत्यर्थमाह । अत्रास्मीति वर्तमान-सामीप्ये लडुक्तिः सद्यो भविष्यामीत्येतमर्थमवगमयतीति तद्भावः "कुप्वोःxकxपौ च" "युष्मत्तत्ततक्षुःष्वन्तःपादम्" ( पा० ८-३-१०३ ) इति षत्वे ष्टुत्वम् ।

२. "निकृतस्त्वनृजुः शठः" इत्यमरः ॥

३. दुःखप्रतिघातकमिहामुत्र सुखं वा ।

१. अत्र "निधिपाय ब्रह्मन्निति" त्वसाम्यासो लिखितपुस्तके दृष्टः ॥

२. यमाश्च पतञ्जलिना योगसूत्रे उक्ताः । "अहिंसासत्यास्ते-यापरिग्रहा यमाः" इति । नियमाश्च "शौचसंतोषतपःस्वाध्यायेश्वर-प्रणिधानानि नियमाः" इति । एषां लक्षणानि तत्रैव द्रष्टव्यानि ॥

३. "धीर्धारणावती मेधा" इत्यमरः ॥

## अथ द्वितीयाध्यायस्य द्वितीयः पादः ।

### (अथ विशेषव्याख्यया तत्त्वपर्यायभेदसंख्यासन्दिग्धोदाहरणतन्निर्वचनव्यवस्था)

### अथातोऽनुक्रमिष्यामः ॥

अथ तत्रभवता "समाम्नायः समाम्नातः स व्याख्यातव्यः" इति प्रतिज्ञातम् । सा पुनरियं व्याख्या सामान्या वैशेषिकी चेति द्वेधा । तत्र सामान्या—सर्वेषां नाम्नामिदं सामान्यलक्षणम् । इदमाख्यातानाम् । इदमुपसर्गाणाम् । इदं निपातानामिति ॥ सोऽयमनयैवंप्रकारया व्याख्यया कृत्स्नः समाम्नायो व्याख्यातः । तदनुषक्तान्येव च शास्त्रारम्भप्रयोजनान्युक्तानि । आगमश्च परिशोधितः । वेदो वेदाङ्गव्यूहश्च सप्रयोजन उक्तः । निघण्टुसमाम्नायविरचना चोपदिष्टा, प्रकरणत्रयविभागेन । निर्वचनलक्षणं चानेकप्रपञ्चमुक्तम् ॥

अथेदानीं विशेषव्याख्यया प्रतिपदमयं समाम्नायो व्याख्यातव्यः । तदधिकारार्थोऽयमथशब्दः । अतःशब्दः क्रमे, सामान्यव्याख्यानादनन्तरं विशेषव्याख्यानमेवावसरप्राप्तमित्येवंरूपे । अथवा हेतौ—यस्मात् सामान्यतः समाम्नायो व्याख्यातः अत इदानीं विशेषतः आनुपूर्व्येण वर्णयिष्यामः । "व्याख्येयेति" शेषः ॥

अथ किंलक्षणाऽसौ व्याख्यात्र नैघण्टुके प्रकरणे—? अत्र ब्रूमः । तत्त्व—पर्याय—भेद—संख्या—सन्दिग्ध—सन्दिग्धोदाहरण—तन्निर्वचन—विभागेन यदाख्यानं सा व्याख्येति । तद्यथा— तत्त्वं तावत्—"गौरिति पृथिव्या नामधेयम्" ॥ इत्येवमादि । पर्यायवचनम्—प्रसिद्धेनाभिधानेनाप्रसिद्धस्यार्थस्य ख्यापनं, तद्यथा— "पृथिव्या नामधेयं गौरिति" । भेदो व्युत्पत्तिरित्यनर्थान्तरम्, तद्यथा—"यद्दूरं गता भवति" इत्येवमादि । संख्या—यथा—पृथिवीनामधेयान्येकविंशति"रित्यादि । सन्दिग्धं यथा "तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरया पृथिव्या सन्दिह्यते" इत्येवमादि । सन्दिग्धोदाहरणम्—"य ईं चकार" इत्येवमादि । तन्निर्वचनं यथा—"बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः" इत्येवमादि । एवंप्रकारया व्याख्यया इदं नैघण्टुकप्रकरणं व्याख्यास्यते ॥

### (अथ पृथिवीनामसु गोशब्दनिर्वचनम्)

### गौरिति पृथिव्या नामधेयम् ॥

"भागरूपनामभ्यो धेय" (पा० ५-४-२५ वा०) इति स्वार्थे धेयप्रत्ययेन नामैव **नामधेयम्** । तत्कथं **पृथिव्या** इति प्रश्ने गोशब्दस्य पृथिव्यां सन्निवेशे कारणमाह—

### यद्दूरं गता भवति । यच्चास्यां भूतानि गच्छन्ति ।

यद् यस्मात् इयं दूरमध्वानं प्रति गता भवति । न ह्यस्या अन्त उपलभ्यते यद् यस्माच्च **अस्यामाधारभूतायां भूतानि** प्राणिनो **गच्छन्ति** । इत्येवं कर्तर्यधिकरणे वा गमेर्डोप्रत्ययः । (उ० २-६९) डित्वाट्टिलोपः । (पा० ६-४-११३)

### गातेर्वौकारो नामकरणः ॥

अथवा **गाते** "गाङ् गतौ" विख्यस्य धातोः (भ्वा० आ०) **ओकारो नामकरणः** नामार्थः प्रत्ययः । स एष उत्सृष्टानुबन्ध इहोपन्यस्त अर्थनिर्विवक्षयास्य प्रवृत्तेस्तथा च डोप्रत्यय एव बाहुलकत्वाद्बोध्यः ॥ साधनं तु पूर्ववत्कर्तर्यधिकरणे वा ॥

### अथापि पशुनामेह भवति एतस्मादेव ॥

अथवा गौरित्येतत्पशुनाम भवति **इहास्मिन्नेव** कारकद्वये **एतस्मादेव** धातुद्वयाद्गमेर्गातेर्वा डोप्रत्ययेनैव गच्छति ह्यसावभिमतदेशे संचरणाय, गच्छन्ति चास्यां रसभावाय यवसादय इति वा ॥ तथा च केशवः "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु" इति ॥

### अथाप्यस्यान्ताद्धितेन कृत्स्नवन्निगमा भवन्ति ॥

अथवा **अस्यामेव** पशुगवि **ताद्धितेन** तद्धितप्रत्ययकृतेन विशेषेण **कृत्स्नायामपि** सत्यामेकदेशेऽपि गो (पयआदौ विकारे) **कृत्स्नवत्**समष्टिभावेन **निगमाः** वेदे प्रयोगा भवन्ति । तथाच "गोपयसोर्यद्"—(पा. ४-३-१६०) ति विकारार्थे विहितस्य तद्धितप्रत्ययस्य यतो लुक् पृषोदरादित्वादत्र बोध्यः । तद्यथा—

### "गोभिः श्रीणीत मत्सरमि"ति पयसः ॥

**इति** अत्र निगमवाक्ये गोरेकदेशस्य (विकारभूतस्य) **पयसः** कृत्स्नवत्प्रयोगो गोभिरिति[2] । पयोभिरिति हि तदर्थः । तथाच मन्त्रः—

> आधावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना ।
> गोभिः श्रीणीत मत्सरम् ॥ ४ ॥"
>
> (ऋ० सं० ७-१-३)

**आधावतेति** । इमां गायत्रीमयास्य आङ्गिरसोऽपश्यत् ।

---

१. प्रवृत्तिनिमित्तमित्यभिमानः । वस्तुतस्तु व्युत्पत्तिनिमित्तमेवैतत् । प्रवृत्तिनिमित्तं त्वसाधारणो धर्म उच्यते । यथा गोः शृङ्ग-सास्नादिमत्त्वम् । पृथिव्याश्च गन्धवत्त्वम् । प्रकृते च महत्त्वस्थापनाय व्युत्पत्तिनिमित्तमेवास्य दिदर्शयिषितमेवमग्रेऽपि बोध्यम् ॥

१. नाम क्रियत अनेनेति न, किन्तु करोतीति करणो नाम्नः करणो नामकरणः । ल्युरत्र करोतेर्नन्द्यादित्वादिति (पा० ३-१ १३४) पुंलिङ्गत्वोपपत्तिः । नामकरण इत्यस्य संज्ञासम्प्रत्ययार्थ इत्यर्थः ॥ कर्तरि च प्रत्यय इति ॥ योऽधानः (पा० ७-१-१)

२. तदेतच्छिष्यबुद्धिव्युत्पादनार्थमनेकप्रकारं, शब्दवृत्तिविषयोपप्रदर्शितं क्रियते । कथं नामोपप्रदर्शितंशब्दवृत्तिविषयोऽसम्मुग्ध मन्त्रार्थान्निर्ब्रूयादिति दुर्गः ॥

ग्रावस्तुतौ विनियुक्ता । हे सुहस्त्यः शोभनहस्ता ऋत्विजः । एभिर्ग्राविभिः संस्कृत एष सोम इति यूयम् आधावत अधावत सपद्यागच्छत । संहितायां दीर्घः ( पा० ६-३-१३७ ) गृभ्णीत गृह्णीत "हृग्रहोर्भश्छन्दसि" (पा० ३-१-५४) इति हस्य भः । एतौ शुक्रा शुक्रौ मन्थिना मन्थिनौ ग्रहौ । अनतिक्रान्तकालम् ॥ किञ्च गोभिः गोविकारैः पयोभिः मत्सरं मदयितारं सोमं मैत्रावरुणग्रहाणामुपगतं श्रीणीत संस्कुरुत श्रपयतेति वा ॥ "श्वतशीतेन तृतीयसवने वा पूतभृत्याशिरेण ततोऽनतिक्रान्तकालं जुहुत" एवं मन्त्रविधानादशक्यत्वाच्च गोभिः श्रपणस्य गव्येन पयसेत्यर्थो गम्यते ॥ ४ ॥

अथ निगमप्रसक्तं निराचष्टे—

## मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः ॥

तृप्यन्ति ह्यनेन देवता इति तृप्तिकर्मणस्तृप्त्यर्थस्य मन्दतेः मदिधातोः ( भ्वा० आ० ) मत्सरः सोमः ॥ "कृधूमदिभ्यः कित्" ( उ० ३-७३ ) इति सरप्रत्ययः ॥ बाहुलकात् । "तितुत्र" ( पा० ७-२-९ ) ति नेट् ॥

अथ प्रसक्तानुप्रसक्तमुच्यते—

## मत्सर इति लोभनाम । अभि मत्त एनेन धनं भवति ॥

एनेन लोभाख्येन मत्सरेण आविष्टः पुमान् धनमभि धनाभिमुख्ये मत्तो भवति ॥ तथाच मेदिनी "मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । प्रसद्यपरसम्पत्तौ कृपणे चाभिधेयवत्" इति ॥

अथ पर्यायाख्यानप्रसक्तं निरुच्यते—

## पयः पिबतेर्वा प्यायतेर्वा ॥

पानार्थस्य पिबतेः पाधातोः ( भ्वा० प० ) असुन् । (उ० ४।१८९ ) बाहुलकादाकारस्यायादेशे पयः । पीयते हि तत् । अथवा प्यायतेर्वृद्ध्यर्थस्य ( भ्वा० आ० ) असुनि प्यायः पयादेशो बाहुलकात् । तेन हि पीतेन वर्धन्ते प्राणिनः ॥ लोके तु "पीङ् पाने" ( दि. आ. ) "पय गतौ" ( भ्वा. आ. ) इत्यस्माद्वाऽसुनि पय इति व्याचक्षते ॥

अथ प्रसक्तानुप्रसक्तं निर्ब्रवीति—

## क्षीरं क्षरतेर्घसेर्वेरो नामकरण उशीरमिति यथा ॥

च्योतनार्थस्य क्षरतेः "पचाद्यच्" ( पा० ३-१-१३४ ) उपधाया ईकारश्च पृषोदरादित्वात् ( पा० ६-३-१०९ ) इति क्षीरम् । अथवा घसे "घस्लृ अदने" ( भ्वा० प० ) इत्यस्मात् "घसेः किच्चे"ति ( उ० ४-३४ ) ईरन्प्रत्ययः । "गमहने" ( पा० ६-४-९५ ) त्युपधालोपः । "खरिच"-( पा०-८-४-५५ ) इति चर्त्वम् । "शासिवसि" ( पा० ५-३-६० ) इति षत्वम् । "क्षीरं पानीयदुग्धयोः" इति हैमः । अत्र ईरो नामकरणः नैरुक्तसमयेन । संज्ञाख्यापकः । एतेन कर्तृसाधनतामस्य निराचष्टे । अत्र दृष्टान्तमाह—उशीरमित्यत्र यथा । "वश कान्तौ" ( अ० प० ) "वशेः कित्" ( उ. ४-३१ ) इतीरन्प्रत्ययः । "ग्रहिज्या०" ( पा० ६-१-१६ ) इति संप्रसारणम् । तद्धि सौगन्ध्याकान्तं तृणविशेषस्य वीरणाख्यस्य मूलम् । "स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रिया"मित्यमरः ॥

## "अंशुं दुहन्तोऽध्यासते गवी"त्यभिषवणचर्मणः ॥

इति अत्र निगमवाक्ये गोशब्दः अभिषवणचर्मणः सोमाभिषवणार्थमुपस्तृतस्य चर्मणो गोरवयवभूतस्य कृत्स्नवदभिधायकः ॥

तथाच निगमः—

"ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि । तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते ॥"
( ऋ० सं० ८-४-३०४ )

त इति । एषा । जगती । अर्बुदो नाम काद्रवेय ऋषिस्तस्यार्षम् । ग्रावस्तुतौ विनियुक्ता । ते एते प्रकृताः ग्रावाणः सोमादः सोमभक्षयितारः ( तत्र हि सोमोऽभिषूयते इति स चर्व्यमाण इव भवति ) । यदाऽभिषवणकर्मणि प्रवर्तन्ते तदा इन्द्रस्य हरी अश्वौ कर्मभूतौ निंसते चुम्बन्ति । 'णिसि चुम्बने' ( अ० आ० ) तदैव ऋत्विजोऽपि त्वरमाणा इन्द्रोपस्थानकालमभ्यर्णं मन्वाना अंशुं सोमांशम् अभिषुत्य दुहन्तः प्रपूरयन्तो ग्रहं ( पात्रविशेषं ) गवि गव्ये अभिषवणचर्मणि अध्यासते अधितिष्ठन्ति । अत्र "अधिशीङ्स्थासां कर्म" ( पा० १-४-४६ ) इति कर्मत्वस्याविवक्षा बोध्या ॥ दुर्गस्तु "गवि अधि गोरुपरि गोरवयवेऽभिषवणचर्मणि एतत्कर्मकुर्वाणा इदं प्रतीक्षमाणा आसते" इति

१. सुवर्णेनालङ्कृतहस्ता अध्वर्यव इति दुर्गः । अत्र मत्वर्थे (पा. ५-२-१२२ वा०) ई प्रत्ययः । "कृष्णसर्पवान्वल्मीक" इतिवत् ॥

२. पात्रविशेषौ ससोमौ । अत्र "सुपां सुलुक्०" (पा० ७।१। ३९) इत्यादिना औङ आत् । अत्र मन्थिना सह शुक्रं चेति सायणः ।

३. एतदाद्योऽर्थनिर्वचनं दुर्गकृतमत्रोद्धृतम् ॥

१. यज्ञागमनार्थमेतेषां ( ग्राव्णाम् ) अभिषवकालिकमुच्चैः शब्दमुपश्रुत्य संस्कृतं सोमं मन्वानौ रथे योगमन्विच्छन्तौ आत्मना ऋजीषं ( सोमकल्कं ) भक्षयिष्यन्तौ इन्द्रं च सोमं पाययिष्यन्तौ स्वयमेव नीचैर्नामैतौ ऐन्द्रे रथे आत्मानं युयुक्षतः । सपदि च सहेन्द्रेण यज्ञायतनमुपतिष्ठेते । उपस्थाय च रथादवमुच्यमानौ तदृजीषं समाजिघ्रत इति तत्काले ग्रावाणस्तौ निंसते चुम्बन्तीति भवति सामञ्जस्यं । प्राप्नुवन्तीत्यर्थ इति सायणः । उच्चैरभिषवशब्दद्वारा स्वर्गादागच्छन्तौ तौ ग्रावाणश्चुम्बन्तीव प्राप्नुवन्तीति तदाशयः । ऋजीषशब्दो लोके पिष्टपचनपात्र-( तवा- )वचनस्तथापि याज्ञिकानां सोमकल्के प्रयोगः ॥

व्याचख्यौ ॥ अथ स इन्द्र एत्य **तेभिः** तैः "बहुलं छन्दसि ( पा० ७–१–१० ) इति ऐसभावः । **दुग्धं सोम्यं** सोममयं "मये च" ( पा० ४–४–१३८ ) इति मयडर्थेऽत्र यप्रत्ययः । **मधु** अमृतं[1] तदेतदृत्विग्भिः प्रचारितं **पपिवान्** पीतवान् **वर्धते** वीर्येण । **प्रथते** विस्तीर्णशरीरश्च भवति । ततश्च **वृषायते** वृषेवाचरति । भूतेऽत्र लिटः क्वसुः (पा० ३–२–१०७) द्विलादिः । क्यङ् ( पा० ३–१–११ ) वर्षं प्रवर्तयतीत्यर्थः । तदिदं सर्वमपि वर्षादि जगदनुग्राहकमैन्द्रं कर्माभिषवद्वारेण भवति । सोमाभिषवश्च ग्रावाधीन इत्येवं ग्रावस्तुतिरनेन क्रियते ॥ केचित्तु वृषायते वृष इव द्वन्द्वयुद्धाय सन्नद्धो भवतीत्यर्थमाहुः ॥

निगमप्रसक्तं निरुच्यते—

## अंशुः शमष्टमात्रो भवति । अननाय शंभवतीति वा ॥

"अशू व्याप्तौ" (स्वा० आ०) ततो "गत्यर्थाकर्मक०" (पा० ३–४–७२ ) इति कर्तरि क्ते **अष्टो** व्याप्तस्तन्मात्रो हि यजमानेन, ( यजमानेन सोमरसेऽभिषवद्वारा निष्पादिते सति स सोमरसः ) तस्यैव **शं** सुखमयं **भवति** यजमानस्तेनातितरां सुखी भवति । ( इष्टसोमो ह्यनृणोऽहमिति विगतमनोदुःखो भवति ) इत्ययं सोमांशोंऽशुरित्युच्यते । तथाच विश्वः "अंशुर्लेशे रवौ रश्मा–"विति । "अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितावि"ति च ॥ "अंश विभाजने" ( चु० उ० ) "मृगय्वादि"त्वात् (उ० १–३७) कुप्रत्ययो लोके, इह तु अश्धातोः शमित्यव्ययस्य च योगेंऽशुः साधितः । स चैव पृषोदरादित्वात्साधुर्द्रष्टव्यः ॥ अथ वा **अननाय** जीवनाय । "अन प्राणने" ( अ० प० ) ततो ल्युर्नन्द्यादित्वात् ( पा० ३–१–१३४ ) **शं** सुखमयं **भवति** सर्वेषां प्राणिनाम् । यज्ञो हि वर्षे प्रवृत्तिहेतुस्ततश्च सर्वभूतानि सुखं जीवन्ति ॥ यज्ञहेतुश्चायं सोमांशः ॥

व्याख्यानप्रसक्तं निरुच्यते—

## चर्म चरतेर्वा, उच्चृत्तं भवतीति वा ॥

**चरतेः** । "चर गतौ" ( भ्वा० प० ) ततो मनिन् ( उ० ४–१४५ ) कर्तरि । सर्वस्मिन् शरीरे गतं संलग्नं भवतीति **चर्म** । अथ वा चर्यते शरीरान्निष्काश्यते पश्वादेरिति चर्म । तदेतदाह **उच्चृत्तं** उत्कर्तितं शरीराद्भवतीति ॥

## अथापि चर्म च श्लेष्मा च ॥

गोशब्देनोच्यत इति शेषः । तथाच गवावयवे चर्मणि विकारे चास्य श्लेष्मणि[2] गोशब्दस्य कृत्स्नवन्निगमः । यथा—

## "गोभिः सन्नद्धो असि वीळयस्वे"ति रथस्तुतौ ॥

"वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥ १ ॥" (ऋ० सं० ४–७–३५–१, य. वा. सं. २९–५२, अ. सं. ६–१२५ ) इत्यत्र **रथस्य स्तुतौ** । स हि चर्मणावनद्धो भवति । श्लेष्मणा च तस्या–रादयः[1] श्लेषिता भवन्ति ॥ एतन्मन्त्रार्थस्तु मूल एवाग्रे ( निरु. ९–२–१२ ) स्फुटीभविष्यति ॥

## अथापि स्नाव च श्लेष्मा च ॥

गोशब्देनोच्यत इति शेषः ॥ स्नावन्शब्दोऽत्र नान्तो नैरुक्तैरेव प्रयुक्तः स्नायुवचनः । अकारान्ततया च शब्दकल्पद्रुमे मतान्तरपरतयोट्टङ्कितः । मन्त्रो यथा—

## "गोभिः सन्नद्धा पतति प्रसूते"तीषुस्तुतौ ॥

"सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता । यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ १ ॥" ( ऋ० सं० ५–१–२१, य. वा. सं. २९–४८ ) इत्यत्र **इषोर्बाणस्य**[2] **स्तुतौ** । सा हि स्नाना वेष्टिता भवति । श्लेष्मणा च संश्लेषिता[3] ॥ एष अग्रे ( नि. ९–२–१९ ) व्याख्यास्यते ॥

## ज्यापि गौरुच्यते ॥

## गव्या चेत्ताद्धित-मथ चेन्न गव्या गमयतीषूनिति ॥ १ ॥ (५) ॥

अथ **ज्या**–( धनुर्गुणः ) "मौर्वी ज्या सिञ्जिनी गुण" इत्यमरः । **अपि गौरित्युच्यते** । ( मन्त्रेऽनुपदं व्याख्यास्यमाने ) सा पुनश्चेत् यदि **गव्या** गोविकारभूता तन्त्याख्या तदा **ताद्धितं** तद्धितप्रत्ययलोपकृतमभिधानं द्रष्टव्यम् । **अथ** पुनः **न चेत् गव्या** तदा **गमयतीषूनिति** गोरन्यद्रव्यमपि मौर्व्यादि[4] अत्र ( मन्त्रे ) गोपदेन ग्राह्यम् ॥ अत्रार्थे गमधातुरन्तर्भावितण्यर्थो द्रष्टव्यः । प्रत्ययस्तु पूर्ववद्डोरेव ॥ १ ॥ ( ५ )

## "वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्रपतान्पूरुषादः ॥"

---

१. यद्यपि मधुशब्दः कोशेषु अमृतार्थो न दृष्टस्तथापि तत्पर्यायवचनत्वाद्वेदेऽमृतार्थे प्रयुज्यते । तथाच विश्वः "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे, मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे ॥" इति । "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलं । पयः कीलालममृतं जीवनं भुवनं वनम्" इति चामरः ॥

२. वपाऽत्र श्लेष्मशब्देनोच्यते । तया हि श्लिष्यन्त अरादयः ॥

१. अरं रथनाभौ निक्षिप्तं दण्डाकारं काष्ठम् । तथाच शाश्वतः "अरमङ्गे रथाङ्गस्य शीघ्रशीघ्रगयोरपी"ति ॥ अरा इत्यपि निगमे दृश्यते "विवर्तन्ते रथनाभाविवाराः" इति ॥

२. तथाचामरः "पृषत्कबाणविशिखा अजिह्मगखगाशुगाः । कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः" इति ॥

३. आस्वन्तःप्रवेशाय ॥

४. मूर्वा नाम तृणभेदः 'मुहार' इति नाम्ना ख्यातस्तस्य विकारो मौर्वी धनुर्गुणः । सा पीषूनगमयतीति गौः ॥

अस्य—"अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥२॥" (ऋ० सं० ७-७-१९) इति मन्त्रशेषः। वसुक्रऐन्द्रपुत्रस्येदमार्षं त्रिष्टुबैन्द्री महाव्रते मरुत्वतीये शस्यते ॥ इन्द्रो भगवानैश्वर्ययोगात्संग्रामेष्वनेकबाहुर्भूत्वाऽनेकानि धनूंष्यादत्ते। तानि मन्त्रदृग्दृष्ट्वैवमाह—**वृक्षे वृक्षे** इति। सर्वस्मिन्वृक्षमये धनुषि ( यावन्तीन्द्रेण गृहीतानि धनूंषि तेषु सर्वेषु प्रत्येकं ) **नियता** निबद्धा **गौः** गोसम्बन्धिनी स्नायुमती मौर्वी, गमयित्री वा शराणाम्। इन्द्रबाह्वाकृष्टा सती **मीमयत्** मीमयति शब्दं करोति। जात्यभिप्रायेणैकवचनम्। **ततः** तस्माद्धनुषः शब्दकरणानन्तरं वा **वयः** पक्षिसदृशा गन्तारो वा बाणाः **पुरुषादः** ये पुरुषाञ्जनानदन्ति भक्षन्ति ते तथाभूताः सन्तः ( हेतुविडन्तमेतत्। तथाच पुरुषानत्तुं ) **प्रपतान्** शत्रून्प्रति प्रपतन्ति। **अथ** अयमेवंप्रभाव इन्द्र इति हेतोः। सायणस्तु अथ इदानीमित्यर्थमाह। **इदम्** ईदृशं **विश्वं** समस्तं **भुवनं** भूतजातम् **इन्द्राय** इन्द्रार्थं **सुन्वत्** सोमयागं कुर्वत् **ऋषये** कर्मणां द्रष्ट्रे ऋत्विजे च **शिक्षत्** संपूर्णान्दक्षिणान्ददति **भयात्** इन्द्राद्बिभेति। अविकृतं कर्माणि कुर्वदपि इन्द्रोन्मुखमादरवदास्ते। अतः सर्वमन्यत्परिहाय य एवंप्रभाव इन्द्रस्तं वयमभिप्रेतार्थसिद्धये स्तुम इत्यर्थः ॥ अत्र मीमयादित्यादिलेडन्तम् ॥२॥

अत्र मन्त्रे गौरिति ज्यार्थकमनुरुध्य व्याचष्टे—

## वृक्षे वृक्षे—धनुषि धनुषि ॥

अत्र "नित्यवीप्सयोः" (पा० ८-१-४) इति पदद्वित्वम् ॥

अथ निगमप्रसक्तं निरुच्यते—

## वृक्षो व्रश्चनात् ॥

इति। स हि वृश्च्यते छिद्यते इन्धनार्थम्। "ओव्रश्चू छेदने" ( तु० प० ) सक् ( उ० ३-६६ ) अथ मीमयतेरर्थनिर्देशार्थं मन्त्रावयवमुपादाय व्याचष्टे—

## नियता मीमयद्गौः। शब्दं करोति। मीमयतिः शब्दकर्मा ॥

**शब्दकर्मा**—शब्दार्थकः नैरुक्तः ॥ द्वितीयपादं व्याचष्टे—

## ततो वयः प्रपतन्ति। पुरुषानदनाय ॥

तथाच प्रपतानिति लेडन्तम्। पुरुषाद इति "कृञो हेतुताच्छील्यानुलोम्येष्वि—" ( पा० ३-२-२० ) त्यधिकारे "अदोऽनन्ने" ( पा० ३-२-६८ ) इति विट् प्रत्ययः कर्तरि ॥ तथाच यतः पुरुषादोऽतः प्रकर्षेण प्रपतन्ति पुरुषान् इत्यर्थः ॥

विशब्दार्थमाह—

## विरिति शकुनिनाम। वेतेर्गतिकर्मणः ॥

**गतिकर्मणो** गत्यर्थाद्**वेतेः** "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्वि"ति ( अ० प० ) धातोः "वेतेर्डिच्—" ( उ० ४-१३४ ) इतीण्प्रत्ययः। डित्वाट्टिलोपे **विरिति** ॥

## अथापीषुनामेह भवति। एतस्मादेव ॥

**इह** अस्मिन्मन्त्रे। **एतस्मादेवो**क्तनिर्वचनादर्थसादेश्यादित्यर्थः ॥

एवं तावदेकदेशे कृत्स्नवदभिधानं भवतीति प्रदर्शितम्। अथेदानीमन्येष्वर्थान्तरेषु गोशब्दोऽभिप्रसृतो बहुष्वित्येतत्प्रसङ्गतो दर्शयति। एतच्चैकपदिके वक्तव्यमिह तु गोशब्दप्रसक्तमुच्यते—

## आदित्योऽपि गौरुच्यते ॥

तद्यथा—

## उतादः परुषे गवि ॥

एतस्य—"सूरश्चक्रं हिरण्ययम्। न्यैरयद्रथीतमः ॥३॥" ( ऋ० सं० ४-८-२२ ) इति मन्त्रशेषः। भरद्वाजस्येयमार्षं, गायत्री पौष्णी ॥ पूषा पुनरादित्यो नैरुक्तानां दृष्ट्या। अन्यत्रेयं वै पूषेति भूमिरुच्यते। उत-अपि-अथ-शब्दा वेदे समानार्थास्तथाच **उत** अपिच **सूरः** प्रेरकः **रथीतमः** अतिशयेन रथी नेतृतमो वा पूषा **परुषे** परुष्मति पर्ववति भास्वति वा **गवि** गच्छतीति गौरादित्यस्तस्मिन् निमित्तेऽत्र सप्तमी। "निमित्तात्कर्मयोगे"(पा० २-३-३६ वा० ) तेन तदर्थमित्यर्थः। **हिरण्ययं** हिरण्मयं "दाण्डिनायने" (पा० ६-४-१७४) त्यादिना निपातः। सुवर्णनिर्मितम्। **अदः** तद्रथस्य **चक्रं न्यैरयत्**। नितरां ( मुहूर्त-

१. पक्ष्यवयवपत्रसंबन्धात् ॥

२. एतत्तत्त्वमनुपदं स्फुटीभविष्यति ( व्याख्यायाम् ॥ )

३. तथाचात्राथशब्दो हेत्वर्थः। नानार्थत्वादव्ययानाम् ॥

१. अत्र "वाते"रिति पाठो नैरुक्तैः सम्मतः ॥

२. अत्र दुर्गः। अपि स्वकमीदपः। अपि रसानादत्ते। अपि तमांस्यपहन्ति। तथाभूतेऽदोऽमुष्मिन्नादित्यमण्डले परुषि पर्ववति भास्वति वा अहोरात्रादि पर्व तद्वतीत्यौपमन्यवः। गवि गमनशीले ( मुहूर्तमप्यनवस्थायिनि ) सूरः सूर्यः अवस्थितः पूषा आदित्यमण्डलान्तःपुरुषस्तदेव पर्ववद्भास्वद्वा चक्रं चकनं क्रमणं वा गमनशीलं मण्डलं हिरण्ययं तेजोमयं चक्राकृति न्यैरयत् नियतगमनवृत्तिना मार्गेण नित्यकालमीरयति। उदयास्तमनमध्यन्दिनकालोपलक्षणार्थमित्येवं व्याख्यत् ॥

३. मत्वर्थेऽत्र ईप्रत्ययः।

४. अत्र वर्णव्यत्ययेनेकारस्यैकारः मतुब्लोपश्च छान्दस इत्यनेनोक्तं भवति। परुरिति सन्धिनाम "सन्धिर्ना पर्वपरुषी" इत्यमरः। मानामेति औपमन्यवस्तेन भास्वतीत्यपि ॥

५. सर्वभूत(मनो)हारि। सर्वभूतविनाशस्थितिहेतुमितिकेचित् ॥

६. लवक्षणनिमेषत्रुटिमुहूर्ताहोरात्रार्धमासमासर्त्वयनसंवत्सरलक्षणकालचक्रम्।

७. नित्यमीरयतीति दुर्गः। अत्र वर्तमान एव भूतप्रयोग आर्षः। तथाचोक्तम्—( पतं. )

"सुप्तिङुपग्रहलिङ्ग—नराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥"

मप्यनवस्थितः सन् ) प्रेरयति स । य एवंगुणयुक्तः पूषा तं वयमभिप्रेतार्थसिद्धये स्तुम इत्यर्थः ॥ ३ ॥

अथात्र परुषे इत्यस्यार्थमाह—

**पर्ववति, भास्वतीत्यौपमन्यवः ॥**

अथ चन्द्रोऽपि गौरुच्यते । तदेतत्सनिदानमाह—

**अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते । तदेतेनोपेक्षितव्यम् ॥**

**आदित्यतोऽस्य दीप्तिर्भवतीति ॥**

**एको रश्मिरस्य** आदित्यस्य सुषुम्णो नाम । स एव **चन्द्रमसं** प्रत्यवस्थितो **दीप्यते** । **तदेतेन** मन्त्रार्थविदा **उप**-मन्त्रानुपेत्य **ईक्षितव्यं** द्रष्टव्यम् । सेयम् **अस्य** चन्द्रमसो **दीप्तिर्ज्योत्स्ना आदित्यतः** । आदित्यानुग्रहादेव **भवतीति** ॥ चन्द्रमा हि दर्पणप्रायो रवेर्दीप्तिमासाद्य सर्वा दिशः प्रकाशयतीति ज्यौतिषे निर्णीतम् ॥

यथा चैतदेवं, तथा—

**"सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व" इत्यपि निगमो भवति ॥**

राष्ट्रभृत्सु । तथाच मन्त्रः । "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा" ( य० १८–४० ) अप्ययम् अन्येऽपि बहव इत्यपिशब्दार्थः ॥ मन्त्रार्थस्तु–**सुषुम्णः** सुष्ठु सुखः ( सर्वाणि भूतानि नितरामसौ सुखयतीति ) **सूर्यरश्मिः** सूर्यान्निःसृत्य चन्द्रमसं प्रतिगतः । इत्यसौ **चन्द्रमाः गन्धर्व** इत्युच्यते । गां धरतीति नैरुक्तनिर्वचनात् । तथाच सति सुषुम्णगमने गन्धर्वशब्दवाच्यता । सुषुम्णो हि गौरुच्ये । एवं चैकदेशे कृत्स्नवन्निगमाच्चन्द्रमसोऽपि गोशब्दवाच्यता ॥

तथाच भाष्यम्—

**सोऽपि गौरुच्यते ॥**

**स** एष सुषुम्णाख्यः सूर्यरश्मिरपि **गौरित्युच्यते** । तत्सम्बन्धात्स चन्द्रोऽपीत्यपिशब्दार्थः । तथाचात्रैकदेशे कृत्स्नवत्कृत्स्ने चैकदेशवन्निगमो द्रष्टव्यः ॥ एवं गन्धर्वस्य सत **'तस्य'** चन्द्रमसः । स्त्रीत्वेन भोग्या अप्सरसो युज्यन्त इति रूपकेण ता आह **'नक्षत्राणि अप्सरसः भेकुरयो नाम'** । भां कुर्वन्तीति । पृषोदरादित्वात्साधुः । "चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति । भाकुरयो ह नामैते भा*ं*हि नक्षत्राणि कुर्वन्ति" ( शत० ब्रा० ९–४–१–९ ) इति श्रुतेः । **'ताभ्यो'** नक्षत्राप्सरोभ्यः **'स्वाहा'** । योऽयं चन्द्रमा गन्धर्वः **'स नो'**ऽस्माकमिदं **'ब्रह्म'** ब्राह्मणजातिमिदं **'क्षत्रं'** क्षत्रियजातिं च **'पातु'** । **'तस्मै'** ( चन्द्रमसे गन्धर्वाय ) **'स्वाहावाट्'** वाडिति वषडर्थः । वषट्कारेण सुहुतमस्त्वित्यर्थः । अत्र पुंसः पूर्वं स्त्रीभ्यः परं चेति निगमसमयः ॥४०॥

**"अत्राह गोरमन्वते"ति ॥**

( ऋ० सं० १–६–७–५ )

यथा सौषुम्णः चन्द्रमा वा गौस्तथेदमुदाहरणम् । अस्य "नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे" इति मन्त्रशेषः । अस्यार्थस्तु–बहुवक्तव्यत्वादिह नोक्त इत्याह—

**तदुपरिष्टाद्व्याख्यास्यामः ॥**

**तत्** पुनरेतत् **उपरिष्टात्** ऐकपदिके काण्डे ( नैग० ४–२५ ) **व्याख्यास्यामः** विशेषत आख्यास्यामो निर्वक्ष्याम इत्यर्थः । सामान्यतस्तूच्यते । **अत्र अह** अस्मिन्नेव **गोर्गन्तुश्चन्द्रमसो गृहे** मण्डले त्वष्टुर्दीप्तस्य सम्बन्धि **अपीच्यम्** रात्रावन्तर्हितं स्वकीयं यन्नाम तेजस्तदादित्यरश्मयः । **इत्था** इत्थमनेन प्रकारेण **अमन्वत** अजानन् उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्तमाना लभन्त इत्यर्थः । यद्वा अत्रैव चन्द्रमण्डले गोः सुषुम्णस्यैकस्य सूर्यरश्मेः अपीच्यमन्तर्हितं नाम नमनम् इतरे त्वष्टुः सूर्यस्य स्वभूता रश्मयः अमन्वत, अमन्यन्त समनुज्ञातवन्त इत्यर्थ इति ॥ ५ ॥

अथ सुषुम्ण एवैक आदित्यरश्मिषु गौरित्युच्यत इति प्राप्ते तत्प्रतिषेधति—

**सर्वेऽपि रश्मयो गाव उच्यन्ते ॥ २ ॥ (६) ॥**

---

इति । अत्र यञामिति यञो यशब्दादारभ्य "लिङ्याशिष्यङ्"ति ङकारेण प्रत्याहारस्तेनान्येऽपि व्यतीयन्ते ॥

१. यथाचाहुर्भास्कराचार्याः ॥

"तरणिकिरणसङ्गादेष पीयूषपिण्डो
दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति ।
तदितरदिशि बालाकुन्तलश्यामलश्री-
र्घट इव निजमूर्तिच्छाययैवातपस्थः ॥ १ ॥" इति ॥

२. तथाच हैमः "गन्धर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे । अन्तराभवदेहे च" इति ॥ नभश्चरे चन्द्रे । गायने इति पृथगुपादानात् ॥

१. गौरादित्यस्तदेकदेशस्तदन्तर्वर्तिर्गन्धर्वाख्यो रश्मिरपि गौरिति प्रथमः । तद्वति चन्द्रे च ( तदनुगमनिबन्धनः ) गोशब्दप्रयोग इति द्वितीयः ॥

२. अप्सरसां पतयो गन्धर्वा इति हि पौराणिकाः प्राहुः । निगमोऽप्ययं तदनुजानाति ॥

३. तथाच श्रुतिः "पुं*ं*से पूर्वस्मै जुहोत्यथ स्त्रीभ्यः पुमा*ं*सं तद्वीर्येणादधात्येकस्मा इव पुं*ं*से जुहोति बह्वीभ्य इव स्त्रीभ्यः पुमा*ं*समेव तद्वीर्येणादधाति" ( शत० ब्रा० ९।४।१।६ ) इति ॥

४. इत्येष सायणाचार्यानुमतोऽर्थो दिग्दर्शनेनेहोपात्तः ॥

तथाच विश्व-मेदिन्यौ-"गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च" इति ॥

अथैतदेवं, तथेयमनुपदं वक्ष्यमाणा ऋगुदाहरणम् ॥२॥ (६)

"ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥ ६ ॥"

( ऋ० सं० २-२-२४ )

**ता वामिति** । दीर्घतमस आर्षं त्रिष्टुब्वैष्णवी । यूपावधाने विनियुक्ता । सोमातिरेकशस्त्रे च । वामिति दम्पती अभिप्रेत्य द्विवचनम् । हे पत्नीयजमानौ ! । **वां** युष्मदर्थं **ता** तानि गन्तव्यत्वेन प्रसिद्धानि **वास्तूनि** सुखनिवासयोग्यानि स्थानानि **गमध्यै** गन्तुं ( युवयोर्गमनाय ) "तुमर्थे०" ( पा० ३-४-९ ) शध्यैप्रत्ययः । **उश्मसि** उश्मः कामयामहे । "वश कान्तौ" (अ० प०) लट् । "इदन्तो मसि" ( पा० ७-१-४६ ) इति मस इगागमः ॥ तदर्थं विष्णुं प्रार्थयाम इत्यर्थः । **यत्र** येषु स्थानेषु **गावः** रश्मयः **भूरिशृङ्गाः** बहुशृङ्गाः ( बहुदीप्तयः ) **अयासः** अयनाः भृशंगन्त्र्यः ( मुहूर्तमप्यनवस्थायिनः ) **अत्राह** अत्र खलु वास्त्वाधारभूते द्युलोके **उरुगायस्य** बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य **वृष्णः** कामानां वर्षितुर्विष्णोर्महागतेः । **तत्** तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं **परमं** निरतिशयं **पदं** स्थानं ( आदित्यमण्डलम् ) **भूरि** अतिप्रभूतम् **अवभाति** स्वमहिम्ना स्फुरति ॥ ६ ॥

अथास्य भाष्यम्—

**तानि वां वास्तूनि कामयामहे गमनाय । यत्र गावो बहुशृङ्गाः ॥**

निगदव्याख्यातमेतत् । अथैकपदनिरुक्तम्—

**भूरीति बहुनो नामधेयम् । प्रभवतीति सतः ॥**

**भूरीति** एतद् **बहुनः** प्रभूतस्य **नामधेयम्** नाम । **प्रभवति** हि तत् बहुधाऽपि दीयमानम् ॥

**शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा ॥**

**श्रयतेः** "श्रिञ्सेवायाम्" (भ्वा० उ०) इत्यस्य । पृषोदरादित्वाद्गन्तो निपातः । **शृङ्गम्** अथ वा **शृणातेः** हिंसार्थस्य ( क्र्या० प० ) "शृणातेर्ह्रस्वश्च" ( उ० १-१२५ ) इति गन्नुङ्ह्रस्वाः । तेन हि हिनस्ति । तथाच मेदिनी "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके । स्त्रीविषायां स्वर्णमीनभेदयोर्ऋषभौषधौ" इति ॥

**अथ वा शम्नातेः** । "शमु हिंसायाम्" ( क्र्या० प० ) अस्माद्गः । अकारस्य ऋकारः । व्यत्ययेन ( पा० ३-१-८५ ) पूर्ववदर्थः ॥ एकोऽत्र वाशब्दो वाक्यालङ्कारे ॥

अथवा द्विधातुजं रूपमिदमित्याह—

**शरणायोद्गतमिति वा । शिरसो निर्गतमिति वा ॥**

अथ वा **शरणाय** हिंसायै मस्तकादुदूर्ध्वं **गतमिति** शृङ्गम् । अथवा शरणं रक्षणं तदर्थमुद्गतं, रक्षति तत् प्राणिनोऽन्यस्माद्बाधापादकात्तम् ॥ अथ वा **शिरसः** मस्तकात् आदित्याद्वा **निर्गतम्** "असावादित्यः शिरः प्रजानाम्" इति श्रवणात् ( शत० ब्रा० ७-४-१-२० ) तथाच शिरःशब्दान्निर्गमेश्च शृङ्गम् । शिर उपपदे गमेर्डे शिरसः शृभावे मकारे चोपजनेरूपम् । पृषोदरादित्वात्सर्वत्र रूपसिद्धिः ॥ शृङ्गं तेजः शृङ्गाणि तेजांसि । इति देवराजः ॥

**अयासोऽयनास्तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि ॥**

**अयना** इत्ययमयतेर्गत्यर्थस्य (भ्वा० आ०) कर्तृल्युन्तो "नन्द्यादित्वात्" ( पा० ३-१-१३४ ) तत्पर्यायोऽयास इति पचाद्यजन्तस्य (पा० ३-१-१३४) असुकि (पा० ७-१-५०) रूपम् । **विष्णोरिति** "विष्लृ व्याप्तौ" ( जु० उ० ) इत्यस्य । "विषेः किच्च" ( उ० ३-३९ ) इति नुः । तथाच यो वेवेष्टि व्याप्नोति भुवनत्रयं पदक्रमणेन स विष्णुरिति **महागतिः** । **परममित्यस्यार्थः परार्ध्यस्थम्** इति परमेऽर्धे स्थितमितितदर्थः । "परावराधमोत्तमपूर्वाच्च" ( पा० ४-३-५ ) इति अर्द्धाद्यत्प्रत्ययः शैषिकः । यद्वा परमर्द्धौ युक्ते स्थाने स्थितं **पदं** स्थानमादित्यमण्डलम् ॥

अथ पदशब्दं निर्विवक्षुस्तन्निदानभूतं पादशब्दं तावन्निर्ब्रवीति—

**पादः पद्यतेः ॥**

**पद्यतेः** "पद गतौ" ( दि० प० ) इति धातोः "हलश्च" ( पा० ३-३-१२१ ) इति करणे घञ् । पद्यते ( गम्यते ) हि तेनेति **पादः** ॥

**तन्निधानात्पदम् ॥**

यद्युत्पद्यते ( स्थानादि ) तत्स्वरूपमेव पांसावन्यत्र वा, तत्पदमित्युच्यते पशोर्मनुष्यस्य वा ॥ तदाह—

**पशुपादप्रकृतिः ॥**

पशूनां पादः **प्रकृतिर्निदानं** यस्य सः । अन्येषामपि पादः पदमित्युच्यत इति बोध्यम् ॥

---

१. इतिशब्दो हेत्वर्थे । सत इति कर्तृकारकाभिधानम् । यतः प्रभवत्यतो भूरीत्युच्यते ॥

२. अत्र "ख्यातेर्वा" इति निर्वचनस्य पाठः श्रीनिवासीये व्याख्याने दृष्टः ॥

१. प्रथमः ॥

२. शृङ्गवन्तम् ॥

३. एतदग्रिमवाक्येन स्फुटीभविष्यति ॥

चतुर्भागसामान्यात्—

**प्रभागपादः ॥**

दीनारादिपादः ॥

**प्रभागपादसामान्यादितराणि पदानि ॥**

**इतराणि** ग्रन्थपदानि क्षेत्रपदानि वा । विभागो हि तेष्वपि समान एव ॥

एतच्च प्रसक्तानुप्रसक्तमुक्तमधुनोपसंहरति—

**एवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते ॥**

न केवलं गोशब्दे पदशब्दे वा । तेषु त्वेतदौत्सर्गिकं निर्वचनलक्षं द्रष्टव्यम् ॥

**तानि चेत्समानकर्माणि, समाननिर्वचनानि ॥ नानाकर्माणि चेन्नानानिर्वचनानीति ॥**

**तानि चे**द्यदि **समानकर्माणि** समानक्रियया युक्तानि ततः **समाननिर्वचना**न्येव कर्तव्यानि ॥ **चेत्** अथ पुनः **नानाकर्माणि** ततो **नानानिर्वचनानि** । कर्मभेदान्निर्वचनभेद इत्यर्थः ॥ इतिर्हेतौ ॥

एवम्—

**यथार्थं निर्वक्तव्यानि ॥**

**यथार्थ**मर्थमनतिक्रम्य ( अर्थानुसारेण ) **निरुच्य वक्तव्यानी**त्यर्थः ॥

**इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि ॥**

**इति** एवमिमानि गौरित्यादीनि **पृथिवीनामधेयानि** पृथिव्या नामानि । नामन्शब्दात्स्वार्थे "भागरूपनामभ्यो धेयः" ( पा० ५-४-२५ वा० ) इति धेयप्रत्ययः । नामान्येव नामधेयानि "नामधेयं च नाम चे-"त्यमरः । **अनुक्रान्तानि** अनुक्रम्य क्रान्तानि अनुक्रमेण पठितानीत्यर्थः । लोके हीदं सर्वं भूतजातमन्तर्भूतं यदभिधानानि (यदाश्रयक्रियावचनाश्च शब्दाः) निघण्टव उच्यन्ते । तेषां च पृथिवी प्रथमा, तस्मात्तत एवारम्भः । **एकविंशति**रिति संख्याविप्रतिपत्तिनिराकरणम् । एकश्च विंशतिश्चेति । एकाधिका विंशतिरित्युत्तरपदलोपो वा । एवमग्रेऽपि यथायथमूह्यम् ॥ एकविंशतिरिति दिग्दर्शनमात्रं, न परिसंख्या, तेनैभ्योऽन्यान्यपि यानि कानिचित्स्युस्तान्युपलभ्य निर्वक्तव्यानि । तयथा "कु" इत्येतदसमाम्नातं पृथिव्या नामधेयम् । उक्तं हि—

"नाग्निचिन्नरकं याति न सत्पुत्रो न कुप्रदः" इति ।

**तत्र निर्ऋतिर्निरमणात् ॥**

१. दीनारः सांव्यवहारिको द्रव्यभेदो रूप्यकमिति सुबोधिनी-( अमरटीका- ) कारः । सुवर्णकर्षः । "अशर्फी" पदप्रतिपाद्य इति बहवः ॥

**तत्र** एतस्मिन्नेकविंशतिके गणे **निर्ऋति**रित्येतदभिधानं **निरमणात्** । नि-विष्ठानि रमन्तेऽस्यां भूतानीति निर्ऋतिः पृथिवी । निरुपसृष्टात्क्रीडार्थात् रमधतोः ( भ्वा० आ० ) अधिकरणे क्तिन् । रमेर्ऋभावः पृषोदरादित्वात् । ( पा० ६-३-१०९ ) ॥

**ऋच्छतेः कृच्छ्रापत्तिरितरा ॥**

**ऋच्छतेः** "ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु" (तु० प०) इति धातोः । **इतरा** उक्तार्थविपरीतार्था **कृच्छ्रापत्ति**लक्षणा नारकीयदुःखसंज्ञिका निर्ऋतिः पाप्मा । अत्रपक्षे ऋच्छतेरेव ऋभावो नेरुगागमश्च । नि-र्यता ऋतिर्घृणा यस्याः सा "ऋतिर्गतौ घृणायां च स्पर्धायां च शुभेऽपि चे"ति रभसः ॥ निर्गताऋतेः शुभादिति वा । तथाच नरकमुपक्रम्यामरोऽपि "स्यादलक्ष्मीस्तु निर्ऋति"रिति ॥

**सा पृथिव्या सन्दिह्यते । तयोर्विभागः ॥**

**सा**-पुनरियं समाननामधेयत्वात् ( समानश्रुतित्वात् ) **पृथिव्या सन्दिह्यते** । **तयोः** समाननामधेयत्वेऽपि सति । एष कर्मकृतो **विभागः** । एका हि निविष्टानां भूतानां रमयित्री, अपरा पुनः कृच्छ्रमापादयित्रीत्येवं नानाकर्माण्यभिधानानि निर्वक्तव्यानि ॥

**तस्या एषा भवति ॥ ३ ॥ (७)**

**तस्याः** कृच्छ्रापत्तेः पृथिव्या अपि **एषा** निर्वाचिका ऋग् **भवति** ॥ ३ ॥ ( ७ )

**"य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ॥ स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमाविवेश ॥ १ ॥"**

( ऋ० सं० २-३-२० )

**य ईमिति** । दीर्घतमस आर्षम् । त्रिष्टुप् । विश्वेदेवदैवत्या महाव्रते वैश्वदेवे शस्त्रे शस्यते । "अयं स शिङ्क्ते" इतीयमपि तथैव समानार्षविनियोगा । जगती । द्वे अप्येते अस्यवामीये ॥ अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहारायात्मा ज्ञातव्य इत्यर्थः प्रतिपाद्यते-**यः** पुमान् कामार्तः पुत्रार्थी वा **ईं** एतं गर्भं **चकार** करोति । लडर्थे लिट् (पा० ३-४-६) । विक्षिपति वा "कॄ विक्षेपे" (तु० प०) तत्कारणभूतस्य रेतसो विक्षेप-

१. अत्र प्रलयो मूर्च्छा विनाशो वा, मूर्तिभावः काठिन्यमिति बोध्यम् ॥

२. "स्यात्कष्टं कृच्छ्रमाभील"मित्यमरः ॥

३. "मतौ च्छः सूक्तसाम्नोः" ( पा० ५।२।५९ ) इति मत्वर्थीयोऽत्र छः । अस्यवामशब्दोऽस्मिन्नस्तीति ॥ तत्र सूक्तविशेषे ॥ अत्र ( सूक्ते ) एवमादिना ( य ईं चकारेत्यादिना ) ज्ञानप्रशंसा प्रतिपाद्यते ॥

द्वारेण, **स** पुमान् **अस्य** गर्भस्य "तत्त्वमि"ति शेषः। **न वेद** । कर्मणि षष्ठी वा। एतं गर्भं न जानाति । कथमयं भूतः केन वा प्रयोजनेनान्तर्निहित इत्येवम् सर्वात्मना न जानातीत्यर्थः ॥ **यश्च ईम्** एतं **हिरुक्** अन्तर्हितमेतस्मिञ्जठरे । एतस्मिन् वा शरीरे । हिरुगित्यन्तर्हितनाम (निघं० ३-२५) **ददर्श** तत्त्वतः पश्यति ॥ पूर्ववच्छिद् **तस्मात्** तस्य । व्यत्ययश्छान्दसः । एष गर्भो **नु इत्** निश्चित एव । यद्वा तस्यैवायं निश्चित इत्यर्थः । नु इत्येष निश्चये इदित्येवार्थे ॥ **स** एष गर्भभूतः **मातुः** जनन्याः **योना** योनौ गर्भाशयस्थाने "सुपां सुलुगि" ( पा० ७-१-३९ ) त्यादिना डेरादादेशः ॥ **अन्तः** उदरे । पुष्यतीति शेषः । स हि मातुरशितपीतलीढभक्षितेन चतुर्विधाहारपरिणामेन, पुष्टो भवति । ततश्च **परिवीतः** उल्वजरायुभ्यां परिवेष्टितो यथाकाले जायमानो **बहुप्रजाः** बहुजन्मभाक् । अथवा उत्पन्नः सन्स्वयमप्यपत्योत्पादनेन बहुप्रजाः बहुशः प्रजायमानः स गर्भकर्त्ता, गर्भतत्त्वमजानानः **निर्ऋतिं** निर्ऋत्यभिधानं प्रकृष्टं दुःखम् **आविवेश** आविशति । अनुभवति यावत्स्वरूपभूतात्मज्ञानं, तस्मात्तत्परिहाराय (गर्भभूत) आत्मा ज्ञातव्य इत्युक्तं भवति ॥१॥

इत्येष आत्मविदामभिप्रेतोऽर्थ इत्याह—

**बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः ॥**

कश्चित् **बहुप्रजाः** बहपत्यो दरिद्रः पुरुषः स दुष्पोष्यत्वादपत्यानां, व्यापन्नत्वाच्च बहुशः **कृच्छ्रं** निर्ऋतिं दुःखम् **आपद्यते** । अनात्मज्ञतया भृशमुपतपति । **इति एवं परिव्राजकाः** । संन्यासिनः प्राहुरिति शेषः ॥ एवं परिव्राजकानां ( संन्यासिनामात्मज्ञानवतां ) संज्ञेयोऽर्थोऽस्यामृचि समभिहित इत्यर्थः ॥

१. सायणस्तु—यश्च मातुरुदरस्थं ददर्श । उदरवृद्ध्यन्यथानुपपत्त्याऽनुमानेन वा दर्शयति स तस्माद्दृष्टुः सकाशात् स हिरुगिन्नु हिरुगित्यन्तर्हितनाम । इच्छब्द एवकारार्थः । नु निश्चये । अत्यन्तमन्तर्हित एव खलु । यद्वा यः संसारावस्थायाम् ईम् एनं कृषिवाणिज्यवेदाध्ययनादिकं चकार सोऽस्य एतन्न वेद लोकान्तरे जन्मान्तरे वा । तथा य ईम् एनं ददर्श गिरि—नदी-समुद्र-बन्ध्वादिकं ददर्श जीवसमये तस्माद्दृष्टाद्धिरुक् इन्नु पृथगेव । अत्रानुभूतं सर्वं न जन्मान्तरे लोकान्तरे वाऽनुभवतीत्यर्थ इत्येवं व्याख्यत् ॥

२. एवं गर्भतत्त्वापरिज्ञानाद्यो गर्भं करोति स दुःखमापद्यते । यस्तु अध्यात्मदृष्ट्या गर्भतत्त्वं वेद स गर्भकर्मणो निवर्तते, स निर्ऋतिं नापद्यते । एवमेतस्यामृचि निर्ऋतिर्वेदनेत्येष परिव्राजकार्थः ॥ अन्ये तु ब्रुवते—यः करोति गर्भं स गर्भभूतो जन्मान्तरेषु बहुषु प्रजायमानो जन्ममरणसन्तानानु(भव)व(वि-)द्धां निर्ऋतिमाविशति, यो रेतः सिञ्चति, तद्भूयोभूयो जन्मान्तरेषु बहुशः प्रजायमानो जन्ममरणसन्तानाननुभवतीति ॥

३. यद्यपि "नित्यमसिच्प्रजामेधयोः" ( पा० ५-४-१२२ ) इति बहुव्रीहिसमासान्तोऽसिच् "नन्दुःसुभ्य" एवेति महाभाष्यं तथापीह यास्कभाष्यप्रामाण्यात्क्वचिदन्यतोऽपि स दर्शितः ॥

**वर्षकर्मेति नैरुक्ताः ॥**

**वर्षकर्म**—एव अनेन मन्त्रेणोच्यते । निर्ऋतिश्चात्र भूमिरुच्यते । **इति** एवं **नैरुक्ता** निरुक्तविदो मन्यन्ते । तन्मते **यः** मध्यमो मध्यस्थानो वायुर्मेघो वा **ईमेतद्वृष्ट्युदकं चकार** करोति किरति वा **स हि** वर्षणस्य कर्ता विक्षेप्ता वा ( वातमेघाभ्यां हि वर्षं प्रवर्तते ) **अस्य** वर्षणस्य "तत्त्वमि"तिशेषः । अथवा एतत्कर्म ( कर्मणि षष्ठी ) **न वेद** न जानाति तयोरचेतनत्वादिति भावः । **यस्तु** ( आत्मवित् ) इन्द्रः **ईम्** एतत् । **हिरुक्** अन्तर्हितम् अनभिव्यक्तत्वादित्यस्य रश्म्यन्तर्गतं वर्षम् **ददर्श** पश्यति **स इत्** स एव मध्यमः ( मध्यस्थः परमार्थकुशलः ) **तस्मात्** तस्यास्य ( षष्ठ्यर्थे पञ्चमी ) तत्त्वमिति शेषः । **नु** निश्चयेन **वेद** जानाति । **स** वृष्टिलक्षणः पुत्रो **मातु**(र्निर्मातु)रन्तरिक्षलोकस्य **योनौ** योनिवदुत्पत्त्याधारभूतेऽन्तरिक्षे उदकाभिव्यक्त्याशयस्थान इति दुर्गः । **परिवीतः** परिवेष्टितः सौर्येण रश्मिजालेन वायुना च **अन्तः** मेघोदरान्तर्गतः प्रावृट्काले वर्षभावेनाभिव्यक्तः । **बहुप्रजाः** बहुशः प्रजायमानः । यद्वा बहुप्रजातान्नः बहुप्राण्युपकारी । अथवा जनिरत्रान्तर्भावितण्यर्थः । बहूनां धाराणां, सस्यनिष्पादनद्वारेण प्राणिनां वा, प्रजनयिता सन् । अत्र कर्तरि प्रोपसृष्टाज्जनेर्डसुन्प्रत्यय औणादिको बाहुलकात् ॥ **निर्ऋतिं** निरमणसाधनभूतां भूमि**माविवेश** आविशति प्राप्नोतीत्यर्थः ॥ १ ॥

तदेतदनुपदं व्याख्यास्यमानोऽन्तरा एकपदनिरुक्तमाह—

**य ईं चकारेति करोतिकिरती सन्दिग्धौ वर्षकर्मणा ॥**

**सन्दिग्धौ** धातू **करोतिकिरतीतीमौ वर्षकर्मणा** सम्बध्येते । उभयथा ह्युपपद्यते-यः करोति यो वा विक्षिपति ॥

**न सो अस्य वेद मध्यमः, स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम् ॥**

तथाचोक्तम्—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥१॥" इति ॥

अत्र **न सो अस्ये**ति सन्ध्यभावः "प्रकृत्यान्तःपादमव्यपरे" ( पा. ६-१-११५ ) इति प्रकृतिभावाद्बोध्यः ॥

**स मातुर्योनौ, मातान्तरिक्षं, निर्मीयन्तेऽस्मिन्भूतानि ॥**

१. सायणस्तु—तस्मादपि हिरुगन्तर्हितः प्राणिकर्मवशेन काले वर्षिता परमेश्वर आदित्यात्मनि गूढ इत्यर्थः । इत्येवं व्याख्यत् ॥

२. मिमातुर्निमातुरित्यपि व्याख्याभेदो निमीयन्ते मिमीयन्ते इत्येवमग्रेतनभाष्ये पाठभेदाद्द्रष्टव्यः ॥

३. आकाशस्यैव कस्मिंश्चित्प्रदेशविशेषे । उभयोरप्यन्तरिक्षनामत्वाविशेषात्सामान्यविशेषभावो द्रष्टव्यः ॥

**अस्मिन्हि भूतानि निर्मीयन्ते ।** एतद्ध्यवकाशदानेन विशिष्टमुपकारं करोति भूतानां जायमानानाम् ॥

**योनिरन्तरिक्षं महानवयवः परिवीतो वायुना ॥**

आकाशस्यैव प्रदेशविशेषः कश्चित्स वायुसंयुतः सन्नुदकयोनिभावं पुष्णाति । तदेतद्वायुना, तस्य संव्यवनं दृष्ट्वोक्तं **परिवीतो** भवतीति ॥

अथ शब्दसारूप्यप्रसक्तमुच्यते—

**अयमपीतरः स्त्रीयोनिरेतस्मादेव परियुतो भवति ॥**

**एतस्मादेव,** यतोऽसावपि **परियुत** एव **भवति** स्नाना मांसेन च ॥

अथ नैरुक्तमतेनोपसंहरति—

**बहुप्रजा भूमिमापद्यते वर्षकर्मणा ॥**

एवमेतस्मिन्मन्त्रे नैरुक्तानां निर्ऋतिशब्देन भूमिरुच्यते । परिव्राजकानां कृच्छ्रापत्तिः । तदेवं मन्त्रेषु शब्दगतिविपुलादुभयमप्युपपद्यत एव । तत्रैवंसति लक्षणोद्देशमात्रमेवैतस्मिञ्छास्त्रे निर्वचनमेकैकस्य क्रियते । क्वचिचाध्यात्माधिदैवाधियज्ञोपदर्शनार्थः । तस्मादेतेषु यावन्तोऽर्था उपपद्येरन् आधिदैवाध्यात्माधियज्ञाश्रयाः सर्वे एव ते योज्या नात्रापराधोऽस्ति ॥

एवमेव सन्देहाधिकारमुपजीवन्नाख्यायिकामाह—

**शाकपूणिः सङ्कल्पयांचक्रे सर्वा देवता जानामीति ॥**

शाकानि यः पूणयति संहन्ति । "पूण संघाते" (चु० प०) स शाकपूणस्तस्यापत्यं **शाकपूणिः** । "अत इञ्" (पा० ४-१-९५) इत्यपत्ये इञ्प्रत्ययः । आचार्यः । **स संकल्पयांचक्रे** संकल्पं कृतवान् । किं ? **सर्वा देवता** अहं **जानामीति** ॥

**तस्मै देवतोभयलिङ्गा प्रादुर्बभूव । तां न यज्ञे । तां पप्रच्छ विविदिषाणि त्वेति ॥**

**तस्मै**—सङ्कल्पमेवं कृतवते । **उभयलिङ्गा**—स्त्रीपुलिङ्गा । अथवा मध्यस्थानलिङ्गा द्युस्थानलिङ्गा च । **तां** पुरतोऽवस्थितां सतीं **न जज्ञे** न ज्ञातवान् किमियं स्त्री स्यादथवा पुरुष इति ? । अथवा किमियं मध्यस्थानोत द्युस्थानेति ? । **तामेतामजानन्पप्रच्छ** पृष्टवान् किं ? **विविदिषाणि त्वेति** । त्वामहं वेदितुमिच्छामि । किमसि पुरुषः उत स्त्री इति । अथवा किमस्यन्तरिक्षस्थानोत द्युस्थानेति ॥

**सा तस्मा एतामृचमादिदेशैषा मद्देवतेति ॥ ४ ॥ (८)**

**सा**—एवं पृष्टा सती **तस्मै** शाकपूणये **एतामृचमादिदेश** आदिष्टवती । किमिति ? **एषा मद्देवतेति** । अस्यामृचि अहं देवतेति । त्वं च नैरुक्तः मामेतस्या ऋचः सकाशादर्थावगत्यावधारयेति ॥ ४ ॥ (८)

**"अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥४॥"**

(ऋ० सं० २-३-१९)

अस्या ऋच्यादिकमुक्तमधस्तात् (पूर्वमन्त्रे) अत्रैकस्मिन्पक्षे लिङ्गव्यत्ययेनोभयलिङ्गा देवतोपपाद्या । **अयं स** इयं सा माध्यमिकाया वाचोऽधिष्ठात्री देवता **शिङ्क्ते** अव्यक्तध्वनिं करोति "शिजि अव्यक्ते शब्दे" (अ० आ०) अव्यक्ते-अस्फुटे अपशब्दे चेत्यर्थः । **येन** यया **गौर्**माध्यमिका वाक् **अभीवृता** अभिप्रवृत्ता अभितोव्याप्ता अधिष्ठितेत्यर्थः । अथवा अयं स शिङ्क्ते इति नैव माध्यमिका वाक् निर्दिश्यतेऽपि तु मेघः । तस्यां वाचि शिञ्जानायां स एव शिङ्क्ते इत्युपचर्यते । मञ्चाः क्रोशन्तीतिवत् । अयं स मेघः शब्दं करोति येन माध्यमिका वागभिव्याप्ता । शब्दने प्रकार एवोच्यते—**मिमाति मायुम्** । स्तनितलक्षणं शब्दं करोति । "मायुः काकुत्" इत्येवं वाङ्नामसु (निघं० १-११) पठितः । स्तनितमेव हि तस्य वाक् । अथवेयं छुत्तोपमा । मिनोति स्वतेजः सर्वत्र प्रक्षिपतीति मायुरादित्यः । सर्वभूतनिर्माता वा स एव । अत्र मिनोतेर्मातेर्वा औणादिक उण् । आये वृद्धिरन्त्ये युक् (पा० ७-३-३३) तमिव अतिदीप्तिं करोति । अथवा सामर्थ्यादात्मानमादित्यसदृशं निर्मिमीते । कुत्र स्थिता ? **ध्वसनावधिश्रिता** ध्वसने उदकध्वंसने मेघे अधिश्रिता । अत्र वर्णव्यत्यय आर्षः । एवंतावदर्धर्चो मेघान्तर्वर्तिन्या वाचोव्यक्तविद्युद्रूपाया अभिधायकः । मेघरूपत्वात्पुरुषत्वाभिप्रायः । अथवाऽयमुत्तरत्र स्त्रीत्वाभिप्रायः । यैवं लक्षणा वाक् कर्मस्वरूपा मेघशरीरा वा **सा हि चित्तिभिः** (कर्मनामैतत्) स्वकर्मभिर्वृष्टिरूपैश्चटचटाशब्दैर्वा **मर्त्यं** मरणधर्माणं

१. "अयं स येने"ति पुलिङ्गवाचिना शब्दत्रयेण मेघः प्रतीयते । अधिश्रिता सेत्यादिना स्त्रीलिङ्गवाचकेन माध्यमिका वाक् । अत उभयलिङ्गत्वम् ॥

२. मध्यस्थानाया (दिविष्ठाया) ननु "परा-पश्यन्ती-मध्यमा-वैखरी-"चेति चतुर्विधासु तार्तीयिकाया यस्या अधिष्ठानं हृदयमाहुः । "परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता । हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगे"ति ॥ मूलचक्रं मूलाधिष्ठानं नाभिगुदयोरन्तराले चतुर्दलम् । तत्र परा बिसतन्तुनिभा सार्धत्रिवलया काचन जीवशक्तिर्वाग्व्यपदेश्याऽस्तीत्यागमविदः प्राहुः ॥

३. निर्मिमीते-निर्वर्तयति (करोति) "माङ् माने" (जु०आ०) अस्य पदव्यत्ययोऽत्र छान्दसः । मानं चेह निर्माणम् ॥

४. सायणस्तु-चित्तिभिर्द्योतनलक्षणैः कर्मभिर्विद्युति विद्योतमानायां भीत्या सर्वे शिरांसि नतानि कुर्वन्तीत्येवमाह ॥

स्थावरजङ्गमात्मकं कृत्स्नं जगत् **विद्युद्भवन्ती** विद्युदात्मना रूयाख्येनामिनिर्वर्तमाना **निचकार** नीचैः करोति । निरित्येष नीचैरर्थकः । मनुष्यान्भयात्प्रणतान्करोति । ओषध्यादिकं वृष्टिफलेनावनतं करोति । सैवमात्मानमाविष्कृत्य विद्युद्रूपेण, विक्षिप्य सर्वासु दिक्ष्वात्मानं वर्षेण प्रच्छाद्य पृथिवीं ततो वर्षव्युपरमे ( घर्मकाले ) आत्मनो **वव्रि** रूपं ( निघं० ३–७ )। स्वीयमुदकलक्षणं तद्रसभूतं **प्रति औहत** प्रत्युपसंहरति । ऊहतिरत्र सामर्थ्यादुपसंहारवाची । पुनरादत्ते रश्मिद्वारा वृष्टमुदकमादित्यात्मना जलाशयेभ्यः । एकस्यैव ज्योतिषस्त्रेधाकरणाद्विद्युतः सूर्यरश्मिभाव उपपद्यते "तमू अकृण्वन् त्रेधा भुवे कमिति" ( ऋ० सं० ८–४–११–१० ) वक्ष्यमाणत्वात् । स्तनितस्य विद्युद्भावो मेघविद्युत्स्तनितानाममेदाभिप्रायेण । अत एवं दैवतैक्यम् ॥ **अयमभिसन्धिः** ॥

यस्मिंस्तु पक्षे मध्यस्थानलिङ्गा द्युस्थानलिङ्गा चेति, तस्मिन्पक्षे मेघरूपत्वमविवक्षितम् । मेघवाचो विद्युद्रूपत्वं च । किन्त्वेतावद्विवक्षितम् । मेघाश्रया शब्दवती भूत्वा माध्यमिका वाक् विद्युदात्मना स्थित्वा वर्षेण प्रच्छाद्य पृथिवीं तद्वर्षमुदकरूपभूतं जलाशयेभ्यश्चादित्यात्मना स्थित्वा पुनरादत्ते इति ॥ वक्ष्यति हि—

"त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवि (नि०दै०१२–२–८) इति ॥

१. अत्र सायणः–'शाकपूणिर्नाम निरुक्ताचार्यः सकलमन्त्रदेवता जानामी'त्यभिमानितवान् । दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ जानाति किलैनं व्यामोहयामीति मनसि कृत्वा सन्दिग्धोभयलिङ्गा देवता प्रादुरासीत् (मनसि) अथ तस्य पुरतः । स च तां न बुबुधे । बुभुत्सया च तां स्वस्वरूपं प्रदर्शयेति पप्रच्छ । साच "अयं स शिङ्क्ते" इत्येषा मद्देवता तत्र प्रतीयमानं मत्स्वरूपमित्युपदिदेश । कथमत्रोभयलिङ्गत्वम् । वस्तुत उभयलिङ्गत्वे च कथं दैवतैक्यमिति ? उच्यते–अत्रोभयलिङ्गत्वमुभयथा संभवति स्त्रीपुल्लिङ्गद्वयेन, मध्यमोत्तमलिङ्गद्वयेन च, तत्कथं ? अयं स येनेति पुंलिङ्गवाचिना शब्दत्रयेण मेघः प्रतीयते । अधिश्रितासेत्यादिना स्त्रीलिङ्गवाचकेन च माध्यमिका वाक् अत उभयलिङ्गत्वम् । तथा विद्युद्भवन्तीत्यन्तं मध्यमलिङ्गं तत्र मेघस्तनितयोर्माध्यमिकयोः प्रतीतेः । तथासति वव्रिमौहत इत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्या रसं प्रत्यादत्ते इत्ययमर्थो विवक्षितः स च आदित्यव्यापार इत्युत्तमलिङ्गत्वं, तर्हि वस्तुत उभयलिङ्गत्वप्रतीतेः, उभे अपि देवते । "यल्लिङ्गं सा देवते"–ति न्यायात् । अतः कथमेकदेवतासिद्धिरिति ? अयं स येनेत्येतेषां व्यत्ययाश्रयणेन सर्वदेवतानामधिष्ठानात्मिकायाः एकत्वश्रवणेन वा, सर्वफलं दात्रात्मन एकत्वाश्रयणेन वा, देवतैक्योपपत्तेः । अनेन मध्यमोत्तमभेदेनोभयलिङ्गत्वपक्षेऽपि देवतैक्यमुक्तं भवति । अत एकैव वा महानात्मा देवतेत्युक्तत्वाद्बहुस्तुतो देवतैक्यम् अधिष्ठात्रधिष्ठानभेदेन भेदश्च न विरुध्यते ॥ इति ॥

२. गूढोऽभिप्रायोऽभिसन्धिरित्युच्यते ॥

सेयमेकैव देवता मध्यस्थाना विद्युद्रूपा, द्युस्थाना वाऽदित्यरूपा, इत्ययमेवंलक्षणो देवतात्सन्देह उपेक्षितव्यो मन्त्रार्थदर्शनाच्च निर्वक्तव्य इत्ययं मन्त्रसंक्षेपार्थः ॥ ४ ॥

मन्त्रार्थमाह भाष्यकृत्—

**अयं स शब्दायते । येन गौरभिप्रवृत्ता । मिमाति मायुं शब्दं करोति । मायुमिवादित्यमिति वा । वागेषा माध्यमिका । ध्वसने मेघेऽधिश्रिता । सा चित्तिभिर्निकरोति मर्त्यं विद्युद्भवन्ती प्रत्यूहते वव्रिम् । वव्रिरिति रूपनाम । वृणोतीति सतः । वर्षेण प्रच्छाद्य पृथिवीं तत्पुनरादत्ते ॥ ५ ॥ (९)**

इति श्रीयास्कमुनि प्र० नि० शास्त्रे नैघ० का० द्वि० ध्यायस्य द्वि० पादः ॥ २ ॥ * ॥

**वव्रिरिति** । वृञ् वरणे ( स्वा० उ० ) "आदृगमहनजनः किकिनौ लिट् च" ( पा० ३–२–१७५ ) इति किर्द्विर्वचनम् । किलात्त्वुणाभावः । यणादेशः । तद्धि स्वाश्रयमावृणोति । व्रियते वा सर्वैः । अन्यत्सर्वं निगमव्याख्यानं मन्त्रे ॥

**इदमत्र बोध्यम्** । सा पृथिव्या सन्दिह्यत इत्यनेन सन्देहसामान्येनोदाहृतमिदमत्र मतं शाकपूणेरित्येवमादि ॥ अनुक्रमणं लघिकृतम् तस्मिन्गोशब्द एवैको निरुक्तः । निर्वचनप्रकारोपप्रदर्शनार्थम् । इतराण्यभ्यूह्य निर्वक्तव्यानि । तद्यथा—**ग्मा** गमनात् । अस्यां गच्छन्ति भूतानि । गमेः "कनिन्युवृषितक्षि" ( उ० १–१५४ ) इत्यादिना कनिन्प्रत्ययो बाहुलकात् "गमहने" ( पा० ६–४–९८ ) रित्युपधालोपष्टाप् । एवं **ज्मा** जमनात् । जमन्ति गच्छन्ति भूतान्यस्यामिति । जमतेर्गतिकर्मणः ( निघं० २–१० ) निपातः "श्वन्नुक्षन्" ( उ० १–१५५ ) ति कनिन्नन्तः । बाहुलकात्परीत्युपसर्गमन्तरापि भवति एवमादि ॥

तथाचोक्तम्—

नैघण्टुकांस्तु याञ्छब्दान्प्रत्यर्थगणसंस्थितान् ।
छन्दोभ्योऽन्विष्य तत्त्वार्थान्निर्ब्रूयाद्योगतस्तु तान् ॥ १ ॥

इति ॥ ५ ॥ (९)

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघण्टुककाण्डे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥ * ॥**

१. उपेत्य निगमवाक्यानीक्षितव्य आलोचयितव्य इत्यर्थः ॥

२. प्रत्यर्थं गणशः स्थितान् इति पाठान्तरम् ।

## अथ द्वितीयाध्यायस्य तृतीयः पादः ।

( अथ हिरण्यवाचकशब्दनिर्वचनम् )

### हिरण्यनामान्युत्तराणि पञ्चदश ॥

**हिरण्यस्य नामानि, उत्तराणि** प्रकृतेभ्यः पृथिवीनामभ्यः । पृथिव्यामेव हि हिरण्यमुत्पद्यतेऽतः पृथिव्यभिधानानन्तरं हिरण्यनामानि समाम्नातानि । कियन्ति पुनस्तानि ? **पञ्चदश** पञ्च च दश च पञ्चाधिका दश इति वा, यान्येतानि समाम्नातानि, हेम–चन्द्रं–रुक्मम् इत्येवमादीनि । असमाम्नातान्यपि–हाटक–सुवर्ण–चामीकर–शातकुम्भादीनि सन्ति, तानि अभ्यूह्यागमं लोकं च निर्वक्तव्यानि ॥ हितं ममेदमिति सर्वं एवैतन्मन्यते तस्माद्धेम, चन्द्रं चन्दतेः कान्तिकर्मणः । ( निरु० ११–५ ) सर्वं एव ह्येतत्कामयते । रुक्मं रोचतेर्ज्वलनार्थस्य । तद्धि रोचिष्णु भवतीति । एवमूहितव्यं सर्वत्र निर्वचनम् ॥

अथ हिरण्यशब्दनिर्विवक्षया पृच्छति—

### हिरण्यं कस्मात् ? ॥

उच्यते—

### ह्रियते आयम्यमानमिति वा ॥

तद्धायम्यमानं कटक–रुचक–स्वस्तिकादिभावेन विस्तीर्यमाणं ह्रियत एव शिल्पिभिः पर्य्यतोहरैः । तथाचात्र वाकार एवार्थे द्रष्टव्यः ।

### ह्रियते जनाज्जनमिति वा ॥

अथ वा जनादेकस्माज्जनमपरं प्रत्ययं ह्रियते नीयते संव्यवहारार्थम् । द्रव्यस्वभावत्वात् । नैकत्रावस्थायित्वं तस्य । तथाच "हृञ्हरणे" (भ्वा० उ०) इत्यस्मा "हर्यतेः कन्यन् हिरच्" ( उ० ५–४५ ) इति विधीयमानः कन्यन्प्रत्ययो हिरादेशश्च बाहुलकाद्भवतः । तथाच अन्यन्नित्यधिकृत्य "हृञ्च" इति भोजसूत्रम् ॥

अथवा द्विधातुजं रूपमिदमित्याह—

### हितं रमणं भवतीति वा ॥

अथवा हिनोतेः रमतेश्च धातुद्वयात्समुदितात्कन्यन् प्रत्ययो बाहुलकाद्रूपसिद्धिश्च । **हितंच** तदापदि दुर्भिक्षादौ, **रमयति** च सर्वदा सर्वम् । तेन गृहीतेन मूषिकोऽपि रमते, किमुत मनुष्यः ॥

### हर्यतेर्वा स्यात्प्रेप्साकर्मणः ॥

**प्रेप्साकर्मणः** कान्त्यर्थस्य "हर्यं गतिकान्त्योः" (भ्वा० प०) अस्मात्कन्यनि ( उ० ५–४५ ) यथाप्राप्तं रूपम् । सर्वैर्हि सर्वदातत्प्राप्तुमिष्यते । हर्यति स्वप्रभया दीप्यत इति सुबोधिनीकारः । कान्तिरिच्छा ॥

( अथान्तरिक्षवाचकशब्दनिर्वचनम् )

### अन्तरिक्षनामान्युत्तराणि षोडश ॥

षट् च दश च षडधिका दश इति वा । कतमानि पुनस्तानि ? "अम्बरं–वियत्–व्योम" इत्येवमादीनि । तत्राम्बरमम्बुमद्भवति । नानाभावेन सर्वतोऽपि विततमिति वियत् । विविधप्रकारमेतैदवनिभूतानीति व्योम इत्येवमाद्यमभ्यूहितव्यम् ॥

आह—

### अन्तरिक्षं कस्मात् ? ॥

अन्तरिक्षमेवतावत्कस्मात् ? उच्यते—

### अन्तरा क्षान्तं भवति । अन्तरेमे ( क्षियति ) इति वा ॥

**अन्तरा**हीदं द्यावापृथिव्योरवस्थितं, **क्षान्तं** क्षमां प्रा-

---

१. तथाचायं "पृषोदरादि"त्वात्साधुः । लोके तु–"हि गतौ वृद्धौ च" ( स्वा० प० ) त्यस्मात् "नामन्सीमन्नि" ( उ० ४–१५० ) त्यादिना मनिन्नन्तो निपातः । हिनोति गच्छत्यनेन सुखं, वर्धते वा वाणिज्यादिनानेनेति ॥

२. आह्लादनार्थाद्वा "स्फायि–तञ्चि"( उ० २–१२ )त्यादिना रक् । चन्दयत्याह्लादयतीति ॥

३. "रुच दीप्तौ" ( भ्वा० आ० ) "युजिरुच्तिजां कुश्च" ( उ० १–१४३ ) इति मक्प्रत्ययः कुत्वं च रोचते तदतिशयेन । दीप्यते तेन तदिति च रुक्मम् ॥

४. स्वर्णकारैः ।

१. यतच्च दुर्गव्याख्यानं, तथाच अम्बु राति ददातीत्यर्थे कः ( पा० ३–२–३ ) पृषोदरादित्वात् ( पा० ६–३–१०९ ) उकारस्याकारादेशेऽम्बरो मेघोऽपि ( अन्तरिक्षमेव वा वर्षासु प्राणिभ्य उदकं ददातीत्यम्बरं तत् ) ॥

२. नानाभावेनेति वील्पस्यार्थः । तत्पर्यायः सर्वतोऽपीति । विततमिति हि यमतेरर्थः । "यम उपरमे" (भ्वा० प०) इत्यस्मादौणादिके क्विपि "गमः क्वौ" ( पा० ६–४–४० ) अत्र गमादीनामितिवक्तव्यमित्युक्तेरनुनासिकलोपः । "ह्रस्वस्य"( पा० ६–१–७१ ) ति तुक् । विततं ह्यवधिमासाद्योपरतं भवतीति । यद्वा विगतं यमनमुपरमणमस्मादिति वियत् । अन्तरिक्षं हि सर्वत्र व्याप्तत्वान्न कुतश्चिदप्युपरतम् । वियच्छति न विरमतीति क्षीरस्वामी । यद्वा विपूर्वाद्यततेः ( भ्वा० आ० ) क्विप् विविधं यतन्तेऽस्मिन्प्राणिनः । आकाशे हि सर्वे व्याप्रियन्ते ॥

३. विपूर्वादवतेर्व्याप्त्यर्थात् ( भ्वा० प० ) औणादिके "सर्वधातुभ्यो मनिन्" ( उ० ४–१४४ ) इति मनिनि "ज्वरत्वरे" ( पा. ६–४–२० ) त्यूठि गुणः । व्यमति व्याप्नोति सर्वं जगदिति व्योम ॥

४. मध्ये ॥

५. अत्र "पृथिव्यन्तमित्यर्थः" इति दुर्गः ॥

पितश्च भवति सर्वसहत्वात् ॥ स्कन्दस्वामिनस्तु—अन्तरा मध्ये सर्वभूतानां क्षान्तं शान्तं निष्क्रियं वा, शान्तमव्यूहं विष्कम्भस्थानात्मकत्वादित्येवमाहुः ॥ अन्तर् ऋक्षा( णि नक्षत्रा )-ण्यस्येति परे । सर्वत्र "पृषोदरादि"त्वात्साधुत्वम् । दीर्घमध्यं तु द्यावापृथिव्योरन्तरीक्ष्यत इति "ईक्ष दर्शने" ( भ्वा० आ० ) कर्मणि घञ् ( पा० ३–३–१९ ) वेदे लत्वार्थे छान्दसं ह्रस्वत्वम् ॥ अथ वा अन्तरा इमे द्यावापृथिव्यौ क्षियति निवसति इत्यन्तरिक्षम् ॥ पृषोदरादित्वात्साधु ॥ एवमग्रेऽपि ॥

**शरीरेष्वन्तरक्षयमिति वा ॥**

अथ वा शरीरेषु एतदेव ( आकाशात्मकम् ) अन्तर् मध्येऽवस्थितम् अक्षयम् । इतराणि हि पृथिव्यादीनि भूतानि क्षीयन्ते । तस्मादक्षयत्वादन्तरिक्षम् ॥

**तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दिह्यते ॥**

तत्र तस्मिन्षोडशके अन्तरिक्षनामसमुदाये समुद्र इत्येतत् अभिधानम् उभयाभिधानं, ततश्च पार्थिवेन समुद्रेण जलाशयेन सन्दिह्यते इत्येतदत्र सन्देहपदम् । आह—

**समुद्रः कस्मात् ? ॥**

इति । उच्यते—

**समुद्द्रवन्त्यस्मादापः ॥**

वीचि–तरङ्ग–शीकरादिभावेन सं-सङ्गता उत्-ऊर्ध्वं द्रवन्ति गच्छन्ति अस्मादापो रश्मिभिराकृष्यमाणा आदित्यमण्डलम् । तथाच समुत्पूर्वाद्द्रवतेर्गत्यर्थात् "अन्येष्वपि दृश्यते" ( पा. ३–२–१०१ ) इत्यपादाने डप्रत्यये टिलोपे च रूपम् ॥

**समभिद्रवन्त्येनमापः ॥**

सर्वा एव ह्यापो भौमरसलक्षणा वायुना प्रेर्यमाणा, आदित्यमण्डलाद्वा वर्षाकाले रश्मिभिः प्रवर्तमानाः निम्नानुसारित्वात्संहताः सत्य एनं समुद्रमेवोदाभिमुख्येन द्रवन्ति । स हि निम्नतमो भवति सर्वस्माज्जलाशयात् ॥ अत्र उदित्येष उपसर्गोऽभीत्यस्यार्थे वर्तते । कर्मणि डप्रत्यय इति विशेषः ॥

**संमोदन्तेऽस्मिन्भूतानि ॥**

संमोदन्ते संहृष्यन्ति अस्मिन्समुद्रे भूतानि सत्त्वानि जलचराणि, बहूदकत्वात् । अन्तरिक्षचारीणि वा ॥ तथाच संपूर्वात् "मुद हर्षे" ( भ्वा० आ० ) इत्यस्मात् "स्फायितञ्चिवञ्चि" ( उ. २–१२ ) इत्यादिनाऽधिकरणे रक्प्रत्यये पृषोदरादित्वात् समो मलोपे च रूपम् ॥

**समुदको भवति ॥**

उद्र इत्युदकनाम तत्तस्मिन्संहतमिति स समुद्रः । तथाच–समित्येकीभावे उदकादुच्छब्दः रो मत्वर्थीयः । एकीभूतमुदकमस्मिन् विद्यते वर्षाखिति । उदकशब्दस्योद्भावः संज्ञायां छान्दसः ॥

**समुनत्तीति वा ॥**

सङ्क्लेदयतीत्यर्थः । "उन्दी क्लेदने" ( रु० प० ) संपूर्वः । पूर्वेण ( उ. २–१२ ) रक् कर्तरि । कित्त्वान्नलोपे च समुद्रः ॥ अतो हि प्रसृतैरम्भोभिः सर्वमिदं संक्लिद्यते । समुनत्ति वर्षेण भुवनमिति वा ॥

**तयोर्विभागः ॥**

तयोरेतयोः समाननामधेयत्वेऽपि सति एष कर्मकृतो विभागः । उक्तपूर्वः । स यस्मिन्नुदाहरणे लक्ष्यते—

**तत्रेतिहासमाचक्षते ॥**

"आचार्या" इति शेषः । निदानभूतम् । इति हैवमासीदिति यत्रोच्यते स इतिहासः । पुरावृत्तख्यापकः समाचारः ॥

कतमः पुनरसावित्याचष्टे—

**देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः ॥**

शन्तनुश्चेत्यार्ष्टिषेणत्वं समुच्चिनोति । कौरव्यौ कुरुवंशभवौ "कुर्वादिभ्यो ण्यः" ( पा० ४–१–१७२ ) इति ण्यप्रत्यये "ओर्गुणः" ( पा० ६–४–१४६ ) । तयोरेकः—

**शन्तनुः कनीयानभिषेचयाञ्चक्रे ॥**

शन्तनुर्नाम कनीयान् कनिष्ठः । स आत्मानम् अभिषेचयाञ्चक्रे अभिषेचितवान् । सोऽभिषिक्तः सन्राजा बभूव । इतरः पुनर्ज्येष्ठः—

**देवापिस्तपः प्रतिपेदे ॥**

देवापिः । स किल तीव्रेण तपसा ब्राह्मण्यं प्रतिपेदे प्राप ॥ विश्वामित्रवत् । तथाचात्र तप इति तत्साध्यं ब्राह्मण्यमुपलक्षयति ।

**ततश्शन्तनो राज्ये द्वादशवर्षाणि देवो न ववर्ष ॥**

१. विष्कम्भस्थानं हि तद्ग्रहनक्षत्रादीनाम् ॥

२. अन्तरायोगे द्वितीया ( पा० २–३–४ ) ॥

३. "क्षि निवासे" ( तु० प० ) ॥

१. 'इति ह' इति पारम्पर्योपदेशेऽव्ययम् । तदास्तेऽस्मिन्नितीतिहासः । "आस उपवेशने" ( अ. आ. ) "हलश्च" ( पा० ३–३–१२१ ) इति घञधिकरणे ॥ तथा चामरः "पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम्" इति ॥

२. एतस्य निर्वचनमतस्तृतीयसूत्रे ॥ एवं देवापेरपि ॥

३. ब्राह्मणावश्यकर्तव्यतया श्रुतादिसम्पत्त्या तत्तुल्यत्वं नतु ब्राह्मणजातिः "तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥ त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च । एतच्छिवे ! विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् ॥ इति भगवत्पतञ्जल्युक्तलक्षणस्य योनिरूपस्याभावात् ॥

ततस्तेनापचारेण ज्येष्ठातिक्रमजेन । राज्ये राष्ट्रे । देवः मेघः ॥ अवर्षति देवे—

**तमूचुर्ब्राह्मणा "अधर्मस्त्वयाऽऽचरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षती"ति ॥**

तं शन्तनुम् । ऊचुः उक्तवन्तः । **अन्तरित्य** अतिक्रम्य । **अभिषेचितम्** अभिषेक आत्मनः कारितो यतस्त्वया **तस्मात्** तेन मर्यादातिक्रमेण **ते** तव राज्ये । इतः प्राप्तकालं प्रतिपद्यस्व ॥

**स शन्तनुर्देवापिं शिशिक्ष राज्येन ॥**

**स** एवं ब्राह्मणैरुक्तः **शन्तनुः** । **शिशिक्ष** पुनः पुनः शशास । अभिगमितवानित्यर्थः[1] । कथं ? **राज्येन** अभ्युदयेन । गृहाणात्मनः पदमिति । एवं कनीयसाऽऽत्यर्थमर्थ्यमानोऽपि—

**तमुवाच देवापिः पुरोहितस्ते असानि याजयानि च त्वेति ॥**

तं शन्तनुम् **देवापिरुवाच** काममहं **पुरोहितस्ते असानि** भवानि । **त्वा** त्वाम् । **याजयानि** । वार्षिकेण[2] कर्मणा, नच राजा भविष्यामि ब्राह्मण्यासादनात् भवानेवास्तु कामं राजेति भावः ॥

**तस्यैतद्वर्षकामसूक्तम् ॥**

तस्य देवापेः । आविरभूदिति[3] शेषः । तत्र—

**तस्यैषा भवति ॥ १ ॥ (१०) ॥**

**तस्य** समुद्राऽभिधानसन्दिग्धस्य प्रविभागोपदर्शनाय **एषा**ऽनुपदं प्रदर्शयिष्यमाणा ऋग् निर्वाचिका **भवति** ॥१॥ (१०)

**"आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान् ॥ स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥ ५ ॥"**

**( ऋ० सं० ८–५–१२ )**

**आर्ष्टिषेण** इति । एतच्च वर्षकामसूक्तम् । देवापिरार्ष्टिषेण ऋषिर्देवा देवतास्त्रिष्टुप् छन्दः । **आर्ष्टिषेणः** ऋष्टिषेणस्य पुत्रः । इषितसेनस्य वा । "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ( पा० ४–१–११४ ) त्यणपत्ये । अन्यकल्पान्तरीणो **देवापिः ऋषिः** अन्यकल्पान्तरीणस्यैव शन्तनोर्वर्षार्थीये कर्मणि होतृत्वेन वृतः **होत्रं** होतृकर्म हवनं "हुयामाश्रुभसिभ्यस्त्रन्" ( उ० ४–१६८ ) इति त्रन्भावे ॥ तत् कर्तुं **निषीदन्** उपविष्टवान् । ततो देवापिः **देवसुमतिं** देवानां कल्याणीं मतिमुदकसम्प्रदानाभिमुखीं कर्तुं **चिकित्वान्** चेतनावान् जानानः ( स हि तथाऽऽसीद्यथा देवानामुदकसम्प्रदानाभिमुखीमतिरभूत् ) ततः परितुष्टेषु देवेषु **स** देवापिरेव **उत्तरस्मात्** उपरिवर्तमानात् अन्तरिक्षात्समुद्रात्[1] **अधरम्** अधोवर्तमानं **समुद्रं** पार्थिवंप्रति ( एष विभागः समुद्रयोः ) **दिव्याः** दिवि भवाः, प्रशस्ताः सस्यसम्पत्करीर्वा **वर्ष्याः** वर्षभवाः, वर्षभूता वा **अपः** **अभि** सर्वभूतानामुपरि **असृजत्** अक्षारयत् ॥ स देवाप्यधिकारे वर्तमान एवमकरोत् । अन्यस्मिन्कल्पेऽपि देवैर्[3]देवापिर्मेमाप्येत-देवास्त्वित्येवं वर्तमानेनाभिसम्बध्यत इति समस्तार्थः ॥ ५ ॥

अथैकपदनिरुक्तम्—

**आर्ष्टिषेण ऋष्टिषेणस्य पुत्र इषितसेनस्य वा ॥**

ऋष्टिरायुधविशेषस्तद्बहुला सेना यस्य सोऽयमृष्टिषेणः । इषितसेनो वा । नित्यमेव प्रेषितसेनः शत्रून्प्रति । तत्रेषितस्य " एति संज्ञायामगात् " ( पा० ८–३–९९ ) इति षत्वम् । ऋष्ट्यादेशः पृषोदरादित्वात् ॥

**सेना सेश्वरा समानगतिर्वा ॥**

इन इतीश्वरनाम "इनः सूर्ये प्रभौ" इत्यमरः । तेन हि सा नित्यमेव संयुक्ता भवति । तथाच सह इनेनेति **सेना** । समानमेकार्थं जयाख्यमुद्दिश्यैतीति सेना । समानस्य सभाव एतेर्गत्यर्थान्नक् औणादिकः कर्तरि । समाना गतिर्यस्या इति विग्रहार्थः ॥

**पुत्रः पुरु त्रायते ॥**

**पुरु** इति बहुनाम "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहं पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च"–त्यमरः । बह्वपि यत् पित्रा पापं कृतं भवति ततोऽयं **त्रायते** तमिति **पुत्रः** । रुशब्दलोपः पृषोदरादित्वात् । त्रायतेश्च ( भ्वा० आ० ) "आतोऽनुपसर्गे कः" ( पा० ३–२–३ ) इति कप्रत्यय आलम् ( पा० ६–१–४५ ) आतो लोपश्च ॥ ( पा० ६–४–६४ ) ॥

**निपरणाद्वा ॥**

अथवा नितरामसौ निश्चित्य वा ( शास्त्रतः श्रद्धापूतेन मनसा ) पृणाति अर्पयति ( ददाति ) पिण्डान् पितृभ्य इति

---

१. अभिगमः स्वीकारः । ण्यन्तोऽत्र गमिः । "नोदात्तोपदेशस्ये"ति ( पा. ७–३–३४ ) वृद्धिनिषेधः ॥

२. वर्षार्थिना ( वर्षकामनावता ) कर्मणा । एतच्च कल्पान्तरपरतया नेयमित्युपरिष्टाद्व्यक्तीभविष्यति । कल्पान्तरे स एव देवापिरार्ष्टिषेणः सन् शन्तनुमेव ( तन्नामकमेव ) एवं सुप्रमर्थितो वर्षार्थेन कर्मणाऽन्वध्यायद्वृष्टिस्ते राष्ट्रे भवेदिति ॥

३. प्रकटीबभूव ॥ "प्राकाश्ये प्रादुराविःस्यादि"त्यमरः ॥

१. उत्तराधराविति परस्परापेक्षौ । "अवध्यवधिमतोश्च साजात्य"मिति न्यायेनाधरसजातीयतोत्तरस्य युज्यत इति समुद्रादिति तद्विशेष्यमध्याहृत्य व्याख्यातम् ॥ उत्तरमुपरिष्टादवसानादिति वक्ष्यतेऽनुपदम् ॥

२. सायणस्तु समुद्रमपि असृजत्सृजत्वित्यर्थमाह ॥

३. एष च व्याख्यामार्गो दुर्गदर्शित एव उद्धृतस्ततः ॥

निपरणः। ल्युः (पा० ३-१-१३४) स एव पुत्रः। अत्रोपसर्गलोपः पृणातेः (क्र्या० प०) त्रक्। धातोश्च पुः पृषोदरादित्वात्॥ तथाच नि-(तरां)परणादर्पणात्तर्पणाद्वा पुत्र इति नामनिदानकथनम्॥ विग्रहस्तूक्तपूर्व एव॥

**पुन्नरकं ततस्त्रायते इति वा।**

अथ वा पुदित्येतन्नरक(नरकस्थान)मुच्यते। ततोऽसौ त्रायते पितॄनिति पुत्रः॥

अथ ऋषिशब्दं निर्ब्रवीति—

**होत्रमृषिर्निषीदद्दृषिर्दर्शनात्॥**

दर्शनादृषिः। "ऋषी गतौ" (तु० प०) "इगुपधात्कित्" (उ० ४-१२०) इतीन्। "ये गत्यर्थास्ते ज्ञानार्थाः" इति न्यायेनात्र दर्शनम् (ज्ञानम्) अर्थः। पश्यति ह्यसौ सूक्ष्मानर्थान्॥

**स्तोमान्ददर्शेत्यौपमन्यवः॥**

मन्त्राः स्तोमास्तानसौ (ऋषिः) तारकेण ज्ञानेन **ददर्श** पश्यतीति **औपमन्यव** उपमन्योरपत्यभूत आचार्यो मन्यते। तथाच मेदिनी "ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयमि"ति॥

ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति—

**"तद्यदेनांस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते॥"**

तत् एतदुच्यते यत्कृतमृषीणामृषित्वम्। यत् यस्मात् **एनान्** ऋषीन् **तपस्यमानान्** तपस्तप्यमानान्। **ब्रह्म**-ऋग्यजुःसामाख्यं, **स्वयंभु**-अकृतकम् **अभ्यानर्षत्** अभ्यागच्छत्। अनधीतमेव तत्त्वतो ददृशुस्तपोविशेषेण। **ते** खलु **ऋषयः अभवन्**। तदृषीणामृषित्वमित्येवं ब्राह्मणेऽपि 'वि' विचार्यमाणं सत् ज्ञायते॥

**देवापिः देवानामाप्त्या स्तुत्या च प्रदानेन च॥**

स हि स्तुतिभिर्देवानाप। हविःसंप्रदानेन च॥

**देवसुमतिं देवानां कल्याणीं मतिम्।**

**चिकित्वांश्चेतनावान्। स उत्तरस्मादधरं समुद्रम्। उत्तर उद्धततरो भवति। अधरोऽधोरः॥**

**उद्धततर** उद्धततरः (हन्तिरत्र गमने) भवति। उपरिष्टादवस्थानात्। **अधरश्च अधोरः**। अध इयर्ति(गच्छति) इति। ऋधातोः (जु० प०) पचाद्यच् (पा० ३-१-१३४)॥

अथाधःशब्दं निर्ब्रवीति—

**अधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा॥**

**अधः** पुनर्न धावतीति सतः। नञ्पूर्वाद्गत्यर्थाद्धावधातोः (भ्वा० उ०) डैसुन्नौणादिकः। तस्य ह्यधोगतित्वादेव **ऊर्ध्वगतिः प्रतिषिद्धा** भवति।

**तस्योत्तराभूयसे निर्वचनाय॥ २॥(११)॥**

**तस्यै**वार्थस्य प्रकृतस्य यथोत्तरस्मात्समुद्राद्वृष्टिमयाचत देवेभ्यो देवापिः॥ यथाच पौरोहित्यमकरोत्। यथा वाऽयजच्छन्तनुर्येन कर्मणा वर्षार्थी सन्। तथैषा **उत्तरा ऋक् भूयसे** बहुतराय **निर्वचनाय** निगमनाय भवतीत्यर्थः॥२॥ (११)

**"यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्॥**
**देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्॥ १॥"**

(ऋ० सं० ८-५-१३)

**यदिति**॥ इयं भुरिक् त्रिष्टुप्। ऋष्यादिकं पूर्ववन्नमेव। इदमपि वर्षकामसूक्तम्॥ **यत्** यदा **देवापिः** आर्ष्टिषेणः **शन्तनवे** राज्ञे स्वभ्रात्रे कौरव्याय। तादर्थ्ये चतुर्थी। **पुरोहितः** अग्निकर्मणि व्याप्रियमाणः **होत्राय** होतृकर्मणे वर्षार्थीये कर्मणि **वृतः** सन् **कृपयन्** कृपायमाणः राज्ञः **अदीधेत्** अन्वध्यायत् वृष्टिमेवेदिति॥ **देवश्रुतं** देवा एनं शृण्वन्तीति देवश्रुत् तमेनं देवापिं **वृष्टिवनिं** वृष्टियाचिनं **रराणः** ददत्। "रा दाने" (अ० प०) व्यत्ययेन लिटः कानच्। **बृहस्पतिर्दे**वोऽस्मिन्नेव कर्मणि ब्रह्मत्वेऽवस्थितः अस्मै देवापये **वाचं** वृष्टिसाधिकाम् **अयच्छत्** अदादित्यर्थः॥ तया वाचा तदनुगृहीतया देवांस्तुत्वा तेभ्यो वर्षमलभतेति समस्तार्थः॥ १॥

अथैकपदनिरुक्तम्—

**शन्तनुः शं तनोऽस्त्विति वा, शमस्मै तन्वा अस्त्विति वा॥**

**शन्तनुः** कस्मात्? इत्युच्यते-स हि यं कञ्चिद्रोगार्तं दृष्ट्वा स्पृशन्नब्रवीत्तस्य **तनोः शं तवास्त्विति** ततोऽसावगदो भवति। अथवा एवमसावाशास्ते **शमस्मै तन्वा अस्तु इति**। शमितिसुखनाम तन्वास्तनोरिति शरीरस्येत्यर्थकम्। तनोरस्त्वित्येवं वक्तव्ये सन्धिरत्रार्षः॥ अथ पुरोहितं निर्वक्ति—

**पुरोहितः पुर एनं दधति॥**

राजानो हि शान्तिक-पौष्टिका-भिचारिकेषु कर्मसु **पुर**

---

१. पुरोहितो ऽग्न्याग्निकर्मणि व्याप्रियते॥

२. सायणस्तु—होत्राय वृतो देवापिः कृपयन् देवश्रुतं देवलोकं प्रसिद्धं वृष्टिवनिं वृष्टियाचिनं बृहस्पतिम् अदीधेत् अन्वध्यायत् सं च रराणो रममाणो बृहस्पतिर्देवोऽस्मै देवापये वाचमयच्छदित्येवं व्याख्यत्॥ अनुध्यानंनाम शुभाशंसनम्॥

३. देवलोकेऽपि प्रख्यातनामानम्॥

४. रममाण इति सायणः।

५. व्यत्ययः आत्मनेपद-वर्तमानकालकृतः।

६. तनोऽस्त्विति॥

**पुरोऽग्रे दधति** धारयन्ति पुरस्कुर्वन्तीति **पुरोहितः**। पुरतो निधानात्। पुरस्करणाद्वा॥ "दधातेर्हिः" (पा० ७-४-४२) क्तप्रत्ययोऽत्र कर्मणि (पा० ३-२-१०२)॥

**होत्राय वृतः- कृपायमाणोऽन्वध्यायद्देवश्रुतं देवा एनं शृण्वन्ति॥**

**देवश्रुतं**-देवा हि **एनं** स्तुतीरुच्चारयन्तं **शृण्वन्तीति** देवश्रुत्, तं देवश्रुतम्॥ कृपायमाणोऽन्वध्यायदिति कृपयन्नदीधेदिति पदयोरर्थः॥ अत्र कृपां कुर्वाण इत्यर्थे क्यङार्षः॥

**वृष्टिवनिं वृष्टियाचिनं, रराणो रातिरभ्यस्तः। बृहस्पतिर्ब्रह्मासीत्सोऽसौ वाचमयच्छत्॥**

**वृष्टिवनिमिति।** वृष्टिकर्मोपपदाद्वनतेर्याचनार्थात् (त० प०) "छन्दसि वनसनरक्षिमथामि"-(पा० ३-२-२७) ति इन्प्रत्ययः कर्तरि। **रराण** इति रातेर्दानार्थात् (अ० प०) लटश्चानश् (पा० ३-२-१२९) व्यत्ययेन श्लुः द्विलम् (पा० ६-१-१०) **बृहस्पतिर्महतां** पतिः। "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति (पा० ६-१-१५७ वा०) साधुः॥

अत्र बृहच्छब्दार्थं उक्तपूर्व इत्याह—

**बृहदुपव्याख्यातम्॥ ३॥ १२॥**

इति श्रीमद्यास्कमुनिप्रणीतनि. शा. नैघं. का. द्वितीयाध्यायस्य तृतीयः पादः॥ २॥ ३॥ *॥

**बृहदिति।** उपगम्यागमं **व्याख्यातम्** "बृहदिति महतो नामधेयं परिवृढं भवती"ति। (नि० अ० १-३-२) मन्त्रनिदानद्वारेण धर्मोऽयमत्र दर्शितः। ज्येष्ठे तिष्ठति कनीयसो राज्यप्राप्तिर्धर्मातिक्रमः। धर्मातिक्रमे च देवो न वर्षतीति। निरुक्तपक्षे-ऋष्टिषेणो मध्यमः, तदपत्यमयमग्निः पार्थिव आर्ष्टिषेणो देवापिः स शन्तनवे सर्वस्मै शुभार्थिने यजमानायेत्येवं योज्यम्। बृहस्पतिरिति मध्यमः। स्तनयित्नुलक्षणां वाचमित्यर्थः॥३॥१८

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघं० काण्डे द्वितीयाध्यायस्य तृतीयः पादः॥ २॥ ३॥ *॥**

---

## अथ द्वितीयाध्यायस्य चतुर्थः पादः॥

### (अथ साधारणानां षण्णां नाम्नां निर्वचनम्)

लोकाभिधानाधिकारेणेदमुच्यते—

**साधारणान्युत्तराणि षट् दिवश्चादित्यस्य च॥**

समानं ध्रियन्त इति **साधारणानि**, नामानीत्यनुषज्यते। उत्तराणि प्रकृतेभ्योऽन्तरिक्षनामभ्यः। **षट्** "स्वः पृश्निः नाक" इत्येवमादीनि कयोः पुनः साधारणानि **दिवोऽन्तरिक्षस्य आदित्यस्य** परमपुरुषाधिष्ठानस्य व्योममणेश्च। **च** एको वाक्यालङ्कारे॥

**यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्यामः॥**

**यानि तु अस्यादित्यस्य प्राधान्येन** वर्तन्ते (प्रधानस्तुतिभाञ्जि) नामानि "सविता भगः सूर्यः पूषा" इत्येवमादीनि। **तान्युपरिष्टात्** (नि० दै० का० १२-१२-१६) **व्याख्यास्यामः** विभज्य आख्यास्यामो निर्वक्ष्यामः। इमानि तु नैघण्टुकानि, संसृष्टरूपाणि च द्युनामभिः साकमित्यत इह नैघण्टुकप्रकरणे निरुच्यन्ते॥

आह—

**आदित्यः कस्मात्?**

इति। उच्यते—

**आदत्ते रसानादत्ते भासं ज्योतिषाम्॥**

**आदत्ते** ह्यसौ **रसान्** रश्मिभिरित्यादित्यः। यद्वा **ज्योतिषां** ग्रहनक्षत्रादीनां **भासमादत्त** इत्यादित्यः। आङ् पूर्वाद्दातेर्डित्यजौणादिकः। डित्त्वाट्टिलोपः। तदुदये हि चन्द्रादीनां प्रभानाशो भवत्येव। ग्रहापेक्षमेतत्॥

**आदीप्तो भासेति वा।**

अथवा सर्वतो ह्येष **भासा आदीप्त** आवृतो भवति। पृषोदरादिः॥

**अदितेः पुत्र इति वा॥**

अथवा **अदितेर्दे**वमातुः कश्यपस्य पत्न्याः पुत्रः, सोऽयमादितेयः सन् आदित्य इत्युच्यते "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" (पा० ४-१-८५) इति अपत्ये ण्यः। "यस्येति च"-(पा० ६-४-१४८) तीकारस्य लोप आदिवृद्धिश्च। (पा० ७-२-११७)॥

**अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक्॥**

**अस्या**दित्यस्य **एतद्**ादितेयोऽदितेः पुत्र इत्यर्थकमभिधानं **तु** तदभिधानमेवाल्प**प्रयोग**मल्पविषयमितराणि तु सवितृभगपूषादीनि बहुप्रयोगविषयाणि। क्वाल्पप्रयोगविषयम्? **आर्चाभ्याम्नाये**-ऋचो यस्मिन्नभित उपर्युपर्याम्नाताः सोऽयमार्चाभ्या-

---

१. अत्र "सविशेषणे हि विधिनिषेधौ सति विशेष्येऽन्वयबाधे विशेषणमुपसंक्रामतः" इति न्यायेन स्तुतिमेवैतस्य शृण्वन्ति देवा इत्यर्थः। यथा "निध्वनतपाञ्चजन्यः श्रुतः" इत्यत्र नहि पाञ्चजन्यः श्रोतुं शक्यो द्रव्यत्वात्किन्तु तस्य निध्वान एव श्रुतः एवम्॥

१. तथाच वाजसनेय आम्नायते (अ० ४०) "योसावादित्ये पुरुषः सोऽसावहमि"ति॥

२. तुरत्रैवार्थे॥ इतराणि व्यवच्छिनत्ति सवित्रादीन्यभिधानानि॥

३. तथाचार्चमिति, ऋचां समूह इत्यर्थकम्। आर्चमभ्या-

म्नायोदासतयस्तस्मिन् । केवलमेतत्सूक्तभाक् न हविर्भाक् न ह्यादितेय इत्यनेन नाम्ना हविराम्नायेवे चोदितपूर्वमस्ति । यथा त्वेतत्सूक्तमेव नैघण्टुकवृत्त्या भजते तथोदाहरति—

**"सूर्यमादितेयम्"** ( ऋ० सं० ८-४-१२-१ )

अस्यामृचि अत्रादितेयमित्यस्य—

**अदितेः पुत्रम् ॥**

इत्यर्थः ॥ तदेतदुपरिष्टाद्व्याख्यास्यते ( नि० ७-२९ )

अथादित्यशब्दप्रसक्तमाह—

**एवमन्यासामपि देवतानामादित्यप्रवादाः स्तुतयो भवन्ति ॥**

एवम्—इति । देवताभेदमपेक्ष्येदमुच्यते **देवताना**-मिति । तिस्र एव हि देवता नैरुक्तानामभिवाग्वादित्या इति हि वक्ष्यते ( नि० दै० कां० ७-५ ) तत्पक्षे तु नैतत्संभवति । **आदित्यप्रवादा** आदित्याभिधानाः ॥

**तद्यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येति ॥**

**एतत्** उदाहरणजातम् ।

"इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ १ ॥" ( ऋ० सं० २-७-६ )

**इमा इति** । अस्यामृचि सर्व एवादित्यप्रवादाः । स्तुत्या स्तूयन्ते । तद्यथा—

**आदित्येभ्योऽदितेः** पुत्रेभ्यो **राजभ्यो** राजमानेभ्य ईश्वरेभ्यो वा मित्रादिभ्यः । **घृतस्नूः** घृतस्राविणीः ( घृतं क्षरन्तीः ) **इमा गिरः** स्तुतिलक्षणा वाचः **सनात्** सर्वदा **जुह्वा** वागिन्द्रियेण **जुहोमि** प्रयच्छामि करोमीति यावत् ॥ ता गिरो **नः** अस्माकं प्रत्येकमिमे **शृणोतु** । **तुविजातः** तुविति बहुनाम, बहुषु प्रदेशेष्वनुग्रहार्थं जातः प्रादुर्भूत इत्यर्थः ॥ १ ॥

पूर्ववाक्ये इतिशब्द आद्यर्थ इत्याह—

**अथापि मित्रावरुणयोः ॥**

आदित्यप्रवादाः स्तुतयो भवन्ति । तद्यथा—

**"आदित्या दानुनस्पती" ॥ दानपती ॥**

अस्य—"ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम् ॥ १ ॥" ( ऋ० सं० २-८-८ ) इति स्वरूपम् । गायत्रीयं गृत्समदेन दृष्टा । अभिप्लवस्य षडहस्य द्वितीयेऽह्नि प्रउगं नाम शस्त्रम् । तत्र "अयं वां मित्रावरुणासुतः सोम ऋतावृधा ममेदिह श्रुतं हवम्" ( ऋ० सं० २-८-७ ) इत्येष तृचः शस्यते । तस्योत्तमा एषा । **ता सम्राजा** तौ सैन्वीप्तौ **घृतासुती** तौ हि घृतमुदकमासुवाते वर्षकर्मणा जनयतः । **आदित्या** आदित्यौ अदितेः पुत्रौ । औङ आत् ( पा० ७-१-३९ ) **दानुनस्पती** दानैपती **दानानाम**मीशाते । तौ यजमानैः सम्यक् स्तुतिभिर्हविर्भिश्च संसेवितौ **अनवह्वरम्** अकुटिलं यजमानं **सचेते** प्रतिसंसेवेते अभिमतैर्दानैः । न कृतघ्नौ शक्तौ च दातुमित्येवमत्र मित्रावरुणावादित्यपदेन स्तूयेते ॥ "षच सेचने सेवने च" ( भ्वा० आ० ) लट् ॥ १ ॥

**अथापि मित्रस्यैकस्य ॥**

आदित्यप्रवादा स्तुतिर्भवति । तद्यथा—

**"प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन ॥"**

**इत्यपि निगमो भवति ॥**

अयमितरोपीत्यपिशब्दार्थः । अस्य—"न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्" ॥ २ ॥ ( ऋ० सं० ३-४-५ ) इत्युत्तरार्धर्चम् । इयं विश्वामित्रेण दृष्टा त्रिष्टुप् मैत्रस्य चरोः पुरोऽनुवाक्या । हे मित्र ! आदित्य ! अदितेः पुत्र ! **स मर्तः** मनुष्यः **प्रयस्वान्** अन्नवान् प्रय इत्यन्ननाम ( निघं० २-७ ) प्र प्रकर्षेण **अस्तु** भवतु **यः व्रतेन** कर्मणा ( निघं० २-१ ) निर्वपणप्रोक्षणादिना संस्कृत्येदं हविर्लक्षणं **ते** तुभ्यं **शिक्षति** ददाति । ( निघ० ३-२० ) व्यत्ययेन परस्मैपदम् । स एवंप्रभावस्त्वमसि—**त्वोतः** त्वया उतो रक्षितः सन् केनापि प्रत्यनीकभूतेनातिबलेन **न हन्यते** न वध्यते, **न जीयते** नाभिभूयते "जि अभिभवे" (भ्वा० प०) कर्मणि लटि यक् दीर्घः । (पा० ७-४-५५) न केवलं शत्रूणा-

---

म्नायतेऽत्रेत्यधिकरणे घञ् । "म्ना अभ्यासे" ( भ्वा० प० ) "आतो युक् चिण्कृतोः" ( पा० ७-३-३३ ) इति युगागमोऽत्र द्रष्टव्यः ॥

१. याज्ञिकपक्षे तु—"अपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति" ( नि० ७-५ ) इति महाभाग्यात्कर्मपृथक्त्वाद्वा—एकैकस्या बहुनामतेति सम्भवति देवताभेदपक्षत्रयोऽप्यत्र ( निरुक्तशास्त्रे ) पक्षाः । तत्र तावदात्मवित्पक्षः प्रथमः । नैरुक्तपक्षो द्वितीयो याज्ञिकपक्षस्तृतीयस्तत्राद्यमते—एक एवात्मा देवतेत्येवं तत्रैव ( नि० ७-६ ) व्यक्तीभविष्यति ॥

१. तिसृणामृचां समाहारः । अप्रत्ययः समासान्तः ( पा० ५-४-७४ ) "अर्धर्चादि"त्वात् ( पा० २-४-३१ ) पुंस्त्वम् ॥

२. अत्र सायणः—सम्राजौ आज्ञयैव सर्वेषां शासितारौ घृतासुती घृतान्नौ इत्यर्थमाह ॥

३. अत्र दानुशब्दो दानवचनो नपुंसकः श्रुयते । क्वचिच्च दातृवचनो. दानववचनो वा पुल्लिङ्ग "सप्तदानून्प्रसाक्षते" ( ऋ० सं० ८-७-२-१ ) ( नि० ११-२१ ) इत्यत्र यथा । तथा चार्धर्चादिरयम् ( पा० २-४-३१ ) तदाह दानपती इति । सायणस्तु "दानुनो दानस्य देवस्य वा धनस्य पती स्वामिनौ" इत्याह ॥

मनाग्घृष्योऽसौ किन्तु **अंहः** पाप्माऽपि **एनम् अन्तितः** अन्तिकात् समीपात् (यस्त्वच्छरीरादेव वाङ्मनश्चेष्टानिबन्धनमुत्पद्यते पापं तदुत्पत्तिसमकालमेव त्वदनुग्रहादपध्वस्यते ततस्त्वेनं न व्याप्नोति) यदपि **दूरात्** पुत्रभ्रातृजायादिद्वारेणैवमास्कन्दति तदपि **न अश्नोति** व्याप्नोति "अशू व्याप्तौ" (स्वा० आ०) लट् । व्यत्ययेन परस्मैपदम् ॥ एवं महानुभावस्त्वमतस्त्वां स्तुम इत्यभिप्रायः ॥ २ ॥

## अथापि वरुणस्यैकस्य ॥

आदित्यप्रवादा स्तुतिर्भवति । तथथा—

### "अथा वयमादित्य व्रते तव ॥"

इति । अस्य—

"उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम" ॥५॥
(ऋ० सं०–१–२–१५)

इति स्वरूपम् ॥ अनया त्रिष्टुभोपाकृतः[1] शुनःशेपो वरुणं तुष्टावात्मानं पशुबन्धान्मोचयिष्यन् हे **वरुण! आदित्य!** अदितेः पुत्र! (वयं त्रिषु स्थानेषु अधो मध्ये उपरिष्टाच्चाबद्धाः त्वैः पाशैरतो नूनमःस्तुत्या हविषा चोपस्थितस्त्वमस्माभिरतस्तावत्) **उत्तमम्** उपरिष्टादवस्थितपाशम् **अस्मत्** अस्मत्तः **उत्** ऊर्ध्वं **श्रथाय** श्लथय। "श्रथ दौर्बल्ये" (चु० उ०) छान्दसो दीर्घः ॥ उच्छ्लथ्य च विमुञ्चास्मानपीडयन् । योऽपि चायमधमः[2]स्तमपि **अव** श्रथय अवमुञ्च । यश्चापि **मध्यमः**स्तमपि '**वि**' श्रथय विमुञ्च **अथा** अथ अनन्तरं "निपातस्य च" (पा० ६–३–१३६) इति दीर्घः ॥ त्वया वयं विमुक्तसर्वपाशाः **अनागसः** अनपराधाः (संशुद्धसर्वकिल्बिषाः । एतदेव हि यौष्माकीणं पाशत्रयमागस्तेनावमुक्ताः) सन्तः **तव** एव **व्रते** परिचरणकर्मणि **अदितये** चात्मनोऽदीनत्वाय (अनुपक्षयायादरवन्तः) तथाच "अदितिरदीने" (नि० ४–२२)ति । **स्याम** भवेमेत्याशीः ॥ ५ ॥

अथ निगमप्रसक्तमुच्यते—

## व्रतमिति कर्मनाम वृणोतीति सतः ॥

**वृणोतीत्येवं** कर्तरि कारके सतो वृणोते (स्वा० उ०) **व्रतमिति** "पृषिरञ्जिभ्यां कित्" (उ० ३–१०८) इति विधीयमानोऽत्चप्रत्ययो बाहुलकाद्वृणोतेरपि भवति । कित्वाद्गुणाभावे यण् । **कर्मनाम** (निघं० २–१) तद्धि शुभाशुभात्मकं कृतं सदाऽऽवृणोति कर्तारम् ॥

१. उपाकृतः हननायामन्त्रितः ॥ "उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हत" इत्यमरः । हत इति आदिकर्मणि क्तः (पा० ३–४–७१) हन्तुमारब्ध इत्यर्थः ॥

२. उत्तमाधममध्यमभावेनेति मन्त्राशयः ॥

३. "अवद्यावमाधमार्वरेफाः कुत्सिते" (उ० ५–५४) इति अवतेरमच् तस्य धादेशोऽधमशब्दोऽधोवस्थिते कुत्सितेऽर्थे वर्तते ॥

## इदमपीतरद्व्रतमेतस्मादेव । निवृत्तिकर्म । वारयतीति सतः ॥

**एतस्मादेव**—कर्मनामकात् । किं तत्कर्म? **निवृत्तिकर्म**–यमनियमाख्यम् । बहिर्वैदिकं, मान्तर्वैदिकं वा, यदग्निसन्निधावुपेयते[1] । तत् पुनः **वारयतीति** एवं **सतः** कर्तृकारकस्य रूपम् । तत्किं करोति? तद्विषयेषु स्त्र्यादिषु प्रवर्तमानं पुरुषं वारयति । तदनुरुध्य स पुरुषो निवर्तते तस्मादवकीर्णीभविष्यामीत्येतस्माद्भयात् ॥

## अन्नमपि व्रतमुच्यते । यदावृणोति शरीरम् ॥ १ ॥ (१३)

**यत्** अन्नम् रस–शोणित–मांस–मेदो–मज्जा–ऽस्थि–भावेन विपरिणममानं सत् **शरीरमावृणोतीति** तदपि व्रतमुच्यते ॥ तथाच महाभाष्यम् "व्रतं च नाम तद्भवति यदभ्यवहारार्थमुपादीयत" इत्यादि । कात्यायनोऽपि "व्रताद्भोजनतन्निवृत्त्योः" (पा० ३–१–२१ वा०) इत्याह ॥ इत्येतदादित्यशब्दप्रसक्तानुप्रसक्तमुक्तम् ॥ १ ॥ (१३)

अधुना प्रकृतमेवोच्यते—

## स्वरादित्यो भवति । सु अरणः । सुईरणः ॥

**सु**–सुखेन **अरणो** गन्ता अर्तेः कर्तरि "नन्द्यादित्वाल्ल्युः" (पा० ३–१–१३४) योरनः । (पा० ७–१–१) एष चार्थनिर्देशस्तेन सूपपदादर्तेः कर्तरि विच् (पा० ३–२–७५) **स्वर् आदित्यो भवति** ॥ अथवा **सुईरणः** सुष्ठु तमांसि ईरयति क्षिपति (विनाशयतीत्यर्थः) अत्रेकारस्याकारो व्यत्ययेन (पा०३–१–८५) ॥ अथवा विशेषणविशेष्यभावेनेते वाक्ये स्याताम् । किमुक्तं भवति? सुईरण एव स्वरणः सैन्स्वरित्युच्यते । इति ॥

## स्वृतो रसान्स्वृतो भासं ज्योतिषाम् ॥

**सु**–सुष्ठु **रसान्**भौमानान्तरिक्षांश्च आदातुम् **ऋतो** गतः । कर्तरि "गत्यर्थाकर्मके"–(पा० ३–४–७२) ति क्तस्तेनात्रापि विजेव कर्तरि बोध्यः ॥ अथवा **ज्योतिषां** ग्रहनक्षत्रादीनां भासमादातुं **सु**–सुष्ठु **ऋतो** गत इति पूर्ववत्साधनम् ॥

१. पूर्वं ह्येष एव क्रमः साग्निकानां, निरग्नीनां तु सूर्याभिमुखं व्रतस्वीकरणम् ॥

२. यस्य त्यागोऽभ्युपेतस्तेषु ॥

३. "अवकीर्णी क्षतव्रत" इत्यमरः ॥

४. "अन्येभ्योऽपि दृश्यन्ते" (पा० ३–२–७५) इति सूत्रे दृशिग्रहणस्य प्रयोगानुसरणार्थत्वात् अकर्तर्यपि भवतीति शोभनगमनं सुखाय हिताय वा लोकानां यस्येति बहुव्रीहिं मन्यन्ते देवराजयज्वानः ॥

५. अतिपरोक्षवृत्तेः परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तित्वोपपादनं नैरुक्तानाम् ॥

**स्पृतो भासेति वा ॥**

अथवा भासा दीप्त्या स्पृ-स्पृष्ट ऋतः परि( सर्वतो )गतो व्याप्त इति खद् ॥

**एतेन द्यौर्व्याख्याता ॥**

उक्तं हि "तानि चेत्समानकर्माणि समाननिर्वचनानी"-( ७६ पृ० ११ पं० ) ति । सापि हि ( द्यौः ) स्पृ अरणा शोभनगमना भवति । शोभनं वाऽऽस्यामर्यते ( गम्यते ) खेचरैः । इत्येवमादि यथा सम्भवं योज्यम् ॥ एवम्—

**पृश्निरादित्यो भवति ॥**

आह कस्मात्? इति । उच्यते—

**प्राश्नुत एनं वर्ण इति नैरुक्ताः ॥**

वर्णः प्रोज्ज्वल एनमादित्यं प्राश्नुते प्रकर्षेण व्याप्नोति इति नैरुक्ताः निरुक्तविदो मन्यन्ते । तथाच प्रपूर्वादश्नोतेः "घृणिपृश्नि" ( उ० ४-५२ ) इत्यादिना कर्तरि निप्रत्ययः प्राशेः पृशृभावः ॥ स्पृशेरपीत्येके । तथाच—

**संस्प्रष्टा रसान् ॥**

स हि नित्यकालमेव रसान्-रसानां संस्प्रष्टा (आदानेन) भवति । वक्ष्यति च तस्य तदेव कर्म "अथास्य कर्म रसाऽऽदानम्" ( नि० दै० का० ७-३-४ ) इति । अत्र "न लोके"-( पा० २-३-६९ ) ति षष्ठीनिषेधस्तृन्नन्ततां गमयति ॥ स हि तृन् (पा० ३-२-१३५) "आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" ( पा० ३-२-३४ ) इत्यधिकृत्य विहितः ॥ एवमग्रेऽपि ॥

**संस्प्रष्टा भासं ज्योतिषाम् ॥**

स्पर्शोऽत्र विनाशः । तथाचामरः "स्पर्शः स्प्रष्टोपतप्तरि" इति । धातुरपि "स्पृश बाधनस्पर्शनयोः" ( चु० आ० ) आदित्यसंसर्गादेव ग्रहनक्षत्रचन्द्रमसां भासो नश्यन्ति ॥

**संस्पृष्टो भासेति वा ॥**

अथवा भासा दीप्त्या ह्येष सं-सर्वतः स्पृष्टो भवतीति पृश्निः अत्र कर्मणि निप्रत्ययः । शेषं पूर्ववत् ॥

आह—

**अथ द्यौः ।**

कस्मात्? पृश्निरिति । उच्यते—सापि हि—

**संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ॥**

ततोऽसौ पृश्निः ॥ अथ क्रमप्राप्तस्य नाकशब्दस्यार्थमाह—

**नाक आदित्यो भवति ॥**

आह—कस्मात्? इति । उच्यते—

**नेता रसानां, नेता भासां, ज्योतिषां प्रणयः ॥**

रसानां भौमानामान्तरिक्षाणां च जलानां नेता सर्वतआदत्ता रश्मिद्वारेण, प्रापकश्च वृष्टिद्वारेण । आदित्यादेव वृष्टिरिति समामनन्ति । भासां चात्मीयानां सर्वतो नेता प्रापकः ॥ ज्योतिषां च प्रणयः प्रणायकः । तस्यैव हि भगवतो रश्मिजालप्रान्तोपलग्नं ज्योतिश्चक्रं भ्रमतीति ॥ ततश्च "पिनाकादयश्च" ( उ० ४-१५ ) ति विहित आकप्रत्ययो बाहुलकान्नयते ( भ्वा० प० ) रपि । टिलोपश्च निपातनात् ॥

आह—

**अथ द्यौः ।**

कस्मात्? नाक इति । उच्यते—

**कमिति सुखनाम, तत्प्रतिषिद्धं प्रतिषिध्यते ॥**

कमिति सुखनामसु पठितम् ( निघं० ३-६ ) तत्प्रतिषिद्धं सत्पुनरपि प्रतिषिध्यते ॥ तद्धि ( कं ) प्रतिषिध्यमानमकं दुःखं भवति । तदपि प्रतिषिध्यते चेद् नाकं भवति न विद्यतेऽकं दुःखमस्मिन्निति । दुःखलेशशून्यमिति हि तदर्थः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । अत्र नञ्समासे "नभ्राण्नपान्न"-( पा० ६-३-७५ ) ति नलोपाभावः ॥

ब्राह्मणमपि चैतस्मिन्नर्थे भवति—

**"न॒वा अ॒मुं लो॒कं ज॑ग्मु॒षे॒ किञ्च॒नाक॑म् ॥"**

इति । अस्यार्थः—

**न वा अमुं लोकं गतवते किञ्चनासुखम् ॥**

अमुमेव लोकं द्युलोकं गतवते किञ्चन किञ्चिदपि असुखं दुःखं न भवति । वै इति निश्चयेन ॥

कुतः?—

**"पुण्यकृतो ह्येव तत्र गच्छन्ति ॥"**

इति । य एव हि पुण्यकृतो भवन्ति त एव हि तत्र गच्छन्ति नेतरे । न च पुण्यकृतां दुःखेन भवितुं न्याय्यम् ॥

अथ क्रमप्राप्तो—

**गौरादित्यो भवति ॥**

आह कस्मात्? इति । उच्यते—

**गमयति रसान् गच्छत्यन्तरिक्षे ॥**

गमयति ह्यसौ रसानात्मानं प्रति । उपक्षयं वा गम-

---

१. एष पाठोऽमरटीकायां सुबोधिनीकारसम्मतो दुर्गेणैव दृष्टः । स्पष्टेतिपाठमभिप्रेत्य सपव (सु० कृत्) "पदरुजे"ति ( पा० ३-३-१६ ) सूत्रे "स्पृश उपताप" इति ( वार्ति० )

१. सर्वासु दिक्षु ॥

२. अत्र 'जग्मुषे' इत्येव पाठो मुद्रितपुस्तकेषु केषुचित् । तत्र गच्छतेर्लिटः क्वसुः ( पा० ३-२-१०७ ) ङित्वे "वसोः सम्प्रसारणम्" ( पा० ६-४-१३१ ) मतम् ॥

यति । किंच गच्छत्यन्तरिक्षे स एवात्मा ( आदित्यः ) आह—

**अथ द्यौः**

कस्माद् गौः ? इति । उच्यते—

**यत्पृथिव्या अधि दूरं गता भवति ।**

यद् यस्मादियं गौः पृथिव्या अधि उपरि दूरम् अध्वानं गता भवति । किञ्च—

**यच्चास्यां ज्योतींषि गच्छन्ति ॥**

यद् यस्माच्च अस्यां द्यवि ज्योतींषि ग्रहनक्षत्रतारकादीनि गच्छन्ति तस्माद्द्यौः । अधिकरणेऽत्र गमेर्डोः ( उ० १–२२५ ) ॥

अथ क्रमप्राप्तो—

**विष्टबादित्यो भवति ॥**

आह—कस्मात् ? इति । उच्यते—

**आविष्टो रसान् । आविष्टो भासं ज्योतिषाम् ॥**

आभिमुख्येन रसान् भौमानान्तरिक्षांश्च विष्टः प्रविष्टो रश्मिभिरादातुम् । किञ्च–ज्योतिषां ग्रहादीनां भासं दीप्तिमाभिमुख्येन विष्ट आविष्टः । तथाच "ष्टभि प्रतिबन्धे" ( क्र्या० सौ० प० ) विपूर्वादस्मात्कर्तरि क्विपि भकारस्य पकारो व्यत्ययेन । ( पा० ३–१–८५ ) विष्टभिराविशतेरर्थे वर्तते । यद्वा विशेरेव बाहुलकाद्रूपसिद्धिः ॥

**आविष्टो भासेति वा ॥**

अथवा–अयमेवाभिमुख्येन विष्टः प्रविष्टः भासा दीप्त्या । कर्मणि क्तः । तथाच क्विबपि कर्मण्येव व्यत्ययवशादत्र बोध्यः ( पा० ३–३–११३ ) ॥

आह—

**अथ द्यौः ।**

कस्मात् विष्टब् ? इति । उच्यते—

**आविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ॥**

इयमपि हि ज्योतिर्भिर्ग्रहनक्षत्रादिभिः । ये चान्ये पुण्यकृतस्तैश्चाविष्टा । तस्माद्विष्टबुच्यते ॥ अथ क्रमप्राप्तो—

**नभ आदित्यो भवति ।**

आह कस्मात् ? इति । उच्यते—

**नेता रसानाम् । नेता भासाम् । ज्योतिषां प्रणयः ॥**

नेता आदत्ता ह्येष रसानाम् । भौमानामान्तरिक्षाणां च जलानां भासां च नेता प्रापकः सर्वासु दिक्षु । ज्योतिषां च प्रणयः । व्याख्यातमेतत् ॥ तथाच नयतेरसुनि गुणे नय इति स्थिते बाहुलकाद्यस्य भः ॥

**अपि वा भन एव स्याद्विपरीतः ॥**

अथवा । भासनः सन् भनस्ततश्च नभ इत्युक्तो विपर्ययेण । तथा च भासनशब्दस्य ह्रस्वत्वं सकाराकारलोपः । भकारनकारयोश्च स्थानविपर्ययः सिंह इतिवत् ॥

**न न भातीति वा ॥**

अथवा न भातीति न अपितु भात्येवेति नभः । अत्र भातेरसुनि टिलोपश्च नकारस्यैकस्य लोपः ।

**एतेन द्यौर्व्याख्याता ॥ २ ॥ ( १४ )**

इति श्रीयास्कमुनिप्रणीतनिरुक्तशास्त्रे नैघ० काण्डे द्वितीयाध्यायस्य चतुर्थः पादः ॥ * ॥

सापि ह्यादित्यवन्नेत्री भासामिति नभ इत्यादि योज्यम् ॥ २ ॥ ( १४ )

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ नैघण्टुककाण्डे द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥ * ॥**

## अथ द्वितीयाध्यायस्य पञ्चमः पादः ।

### ( अथ रश्मिनामनिर्वचनम् )

आदित्यसम्बन्धेनैवाह—

**रश्मिनामान्युत्तराणि पञ्चदश ॥**

उत्तराणि–साधारणनामभ्यः स्वरादिभ्यः षड्भ्यः । रश्मिनामानि–रश्मेः किरणस्य प्रग्रहस्य वा, "किरणप्रग्रहौ रश्मी" इत्यमरः ॥ नामानि ( १५ ) अथ रश्मिशब्दं निर्ब्रवीति—

**रश्मिर्यमनात् ॥**

यमनात् संयमनादादानादिति यावत् । तद्वेतदुदकस्याश्वानां

१. एवं च "आयं गौः पृश्निरक्रमीत्" ( ऋ० सं० ८–४७–१ ) इति मन्त्रेऽपि गौरादित्यस्तद्विशेषणं पृश्निरिति । एवं चायमितिलिङ्गव्यत्ययोऽपि न कल्पनीयः । तथाच सायणः । गौर्गमनशीलः पृश्निः प्रासवर्णः प्रासतेजा अयं सूर्यः । अक्रमीत् आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः । आक्रम्य च पुरः पुरस्तात् पूर्वस्यां दिशि, मातरं सर्वस्य भूतजातस्य निर्मात्रीं पृथिवीमसदत् आसीदति प्राप्नोति । सदेश्छान्दसो लुङ् लृदित्वाच्च्लेरङादेशः । ततः पितरं पालकं द्युलोकं चशब्दादन्तरिक्षं च ( तथाच द्यौर्मे पितेति मन्त्रे मातृपितृशब्दयोर्द्यावापृथिवीवाचकत्वस्य दृष्टत्वात् ) प्रयन्प्रकर्षेण शीघ्रं गच्छन्स्वः सुभरणः शोभमानो भवति । यद्वा पितरं स्वर्गलोकं प्रयन्वर्तते इति ॥

वा ॥ रशिर्यमनार्थो धातुः ( सौ० ) "नियो मि" ( उ० ४-४३ ) इति विधीयमानो मिप्रत्ययो बाहुलकादस्मादपि भवति बध्नन्त्युदक,मथवा बध्यते तैरुदकमश्वो वा । यद्वा "अशू व्याप्तौ" ( स्वा० आ० ) "अशेरश् च" ( उ० ४-४६ ) इति मिप्रत्ययो रशादेशश्च । अश्नुवते सर्वं जगत् अश्वग्रीवादि वेति रश्मयः ॥

## तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः ॥

तेषां मध्ये यान्यादितः पञ्च "खेदयः, किरणाः, गावः, रश्मयः, अभीशव"श्चेति तानि **अश्वरश्मिभिः साधारणानि** । तथाच पूर्वमादित्यरश्मिनामानन्तरमश्वरश्मिनाम्नां निर्वचनमित्यर्थः । 'खेदय' इति । अत्र "दयतिर्गत्यर्थः" ( भ्वा० आ० ) खे आकाशे दयन्ते गच्छन्तीत्येवम् ॥

## दिङ्नामान्युत्तराण्यष्टौ ॥

आदित्योपलक्षणा ह्येते दिश इत्यादित्यनामभ्य **उत्तराणि दिङ्नामानि अष्टौ** । "आताः, शाताः, उपराः" इत्येवमादीनि । 'आता' आगता ह्येतास्तं तमर्थम्प्रति भवन्तीति । 'शाताः' अभ्यश्नुवते ह्येताः सर्वमेव भुवनम् । 'उपराः' पूर्वमेव ह्येता उपरम्य रता भवन्तीति ॥ आह—

## दिशः कस्मात् ? ॥

इति । उच्यते—

## दिशतेः । आसदनात् ॥

**दिशतेः** दिश्धातोरतिसर्जनार्थात् ( तु० उ० ) बाहुलकादधिकरणे क्विप् । दिश्यन्ते अतिसृज्यन्ते ह्यासु हविरादीनि देवतानाम् । **अथवा[4]-आसदनात्** । तं तमर्थं प्रत्येता आसन्ना भवन्ति ॥ तथाचाङ्पूर्वात्सीदतेर्दिश इति वर्णव्यत्ययोपसर्गलोपाभ्यां प्रयोगः ॥

## अपिवाऽभ्यशनात् ॥

अथवा अभ्यशनादेव दिशः । अभ्यश्नुवते ( व्याप्नुवन्ति ) ह्येतास्तं तमर्थमिति ॥

## तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति ॥

नामेति शेषः । तद्यथा—

## काष्ठा दिशो भवन्ति ।

"काशृ दीप्तौ" ( भ्वा० आ० ) "हनि-कुषि-नी-रमि-काशिभ्यः क्थन्" ( उ० २-२ ) इति क्थन् प्रत्ययः । "तितुत्रे"-( पा० ७-२-९ ) ति इडभावः । काशन्ते दीप्यन्त इत्यर्थः । "दिशस्तु ककुभः काष्ठा" इत्यमरः ॥ एतच्च वैयाकरणमतेन । नैरुक्तमतेन त्वग्रेतनं द्रष्टव्यम् ॥ अत्र हेतुमाह—

## क्रान्त्वा स्थिता भवन्ति ॥

क्रान्त्वा गत्वा तं तमर्थं प्रति स्थिता ह्येता भवन्तीति काष्ठा उच्यन्ते । न हि तदस्ति यत्रेमा न सन्ति । तथाच क्रान्त्वाशब्दात्पूर्वार्धं स्थिताशब्दाच्चोत्तरार्धमादाय निरुक्तमत्र भाष्यकृद्भिः । पृषोदरादिः । एवमेव—

## काष्ठा उपदिशो भवन्ति ।

उपदिशो विदिशोऽपि काष्ठा भवन्ति । कुतः ? यत इमाः—

## इतरेतरं क्रान्त्वा स्थिता भवन्ति ॥

ता अपिहीतरेतरं परस्परं क्रान्त्वाऽभिगम्य स्थिता भवन्ति दिग्भिःसाकमिति ॥

## आदित्योपि काष्ठोच्यते ॥ क्रान्त्वा स्थितो भवति ॥

असावपि रश्मिभिर्भुवनं क्रान्त्वा आक्रम्य स्वस्थाने स्थितोभवत्यहरहरिति काष्ठोच्यते ॥

## आज्यन्तोऽपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति ॥

आजिरजतेर्गत्यर्थस्येणन्तः "इणजादिभ्यः" ( पा० ३-३-१०८ वा० ) इति ॥ सङ्ग्रामार्थकः । "समित्याजिसमिद्युध" इत्यमरः । तदन्तोऽपि काष्ठा उच्यते । शरपथान्तत्वात् । असावपि हि स्वप्रदेशं क्रान्त्वा स्थितो भवति ॥

---

१. रशना, रश्मिरित्यादि कतिपयप्रयोगविषय एवायं रशिः । भरत्यादिवत् । न सर्वत्र, बन्धनप्रतीतेः ॥

२. किरणाः विक्षिप्ता भवन्ति । इत्येवं शब्दार्थः । अत्र प्रथमं दयतेर्दिगभावश्छान्दसः । विड्गुणाभावौ च । रश्मयश्चाश्वादीन्खेदयन्ति, तत्र "खिद दैन्ये" दिवादी रुधादिश्चात्मनेपदी । "खिद परिघाते" तुदादिर्मुचादिश्च परस्मैपदी । "इन्सर्वधातुभ्यः" ( उ० ४-११६ ) इतीन्प्रत्यये गुणः । किरणाश्च "कॄ विक्षेपे" ( तु० प० ) इत्यस्मात् "कॄपॄवृजि०" ( उ० २-७६ ) इत्यादिना क्युप्रत्यये योरनि च साधवः । प्रग्रहे तु "कॄ हिंसायाम्" ( क्र्या० प० ) यद्वोभयत्र स एव । कृण्वन्ति हिंसन्ति तमः । हिंस्यन्ते प्रतिबध्यन्ते चैभिरश्वाः ॥

३. अत्रार्थे गकारस्य लोपश्छान्दसः । वैयाकरणास्तु—आङ्पूर्वादततेर्गतिकर्मणः ( भ्वा० प० ) "अकर्तरिचकारक" ( पा० ३-३-१९ ) इति घञ् । आभिमुख्येन गम्यन्ते प्राणिभिस्तं तं कार्यं प्रतीति । यद्वा आतता एवाताः । आङ्पूर्वात्तनोतेः "उपसर्गे च संज्ञायाम्" ( पा० ३-२-९९ ) इति जनेर्विधीयमानो डो बाहुलकाद् भवति ॥

४. एतच्चोत्तरवाक्यस्थमपि वेतिपदमावर्त्य व्याख्येयम् ॥

१. अत्र स्कन्दस्वामिनः क्रान्त्वा सर्वमतीत्य स्थिता आकाशवद्व्यतिरेकपक्षे । अव्यतिरेकेऽपि त एव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति । उपदिशोऽप्येवमेव । व्यतिरेकेऽपीतरेतरापेक्षया परत्वापरत्ववत्सर्वत्र व्यवहारोऽस्तित्वमिति ॥

**आपोऽपि काष्ठा उच्यन्ते । क्रान्त्वा स्थिता भवन्ति ॥**

**इति स्थावराणाम् १ ॥ ( १५ ) ॥**

आपः पुनर्द्वेध्यः । स्थावराश्चास्थावराश्च । तत्र **क्रान्त्वा** जलाशयमेताः **स्थिता भवन्तीति** स्थावराणां काष्ठात्वं तडागादिस्थानामपाम् । याः पुनर्नद्याद्यापस्ताः क्रामन्त्यभितोऽमतश्च न क्वचनावतिष्ठन्त इति काष्ठा मेध्या आपः ॥ १ ॥ ( १५ )

मन्त्रोऽपि चैतस्मिन्नेवार्थे भवति—

**"अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ॥**

**वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥ ५ ॥"**

( ऋ० स० १-२-३७ )

**अतिष्ठन्तीनामिति** । हिरण्यस्तूपस्येयमार्षम् । दासपत्नीति च । त्रिष्टुभावेतौ ॥ अग्निष्टोमे निष्कैवल्ये शस्यते ॥ एष मन्त्र ऐतिहासिकैरित्थं व्याख्यायते । **वृत्रस्य** असुरविशेषस्य त्वष्टुः पुत्रस्य **शरीरमापो विचरन्ति** । विशेषेणोपर्याक्रम्य प्रवहन्ति । कीदृशं शरीरं **निण्यं** निर्नामधेयम् अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम न केनापि ज्ञायते इदानीमयमत्र क्रीडतीति । एतदेव स्पष्टीक्रियते—**काष्ठानामपां मध्ये निहितं** निक्षिप्तम् । कीदृशानां काष्ठानाम् ? **अतिष्ठन्तीनां** स्थितिरहितानाम् । **अनिवेशनानामु**पवेशनरहितानाम् । प्रवहणस्वभावत्वादेतासां मनुष्यवन्न क्वापि एकत्र स्थितिः संभवति । **इन्द्रशत्रुर्वृ**त्रः जलमध्ये शरीरे प्रक्षिप्ते सति **दीर्घं तमो** दीर्घनिद्रात्मकं मरणं यथा भवति तथा **आशयत्** आशेते स्म सर्वतः पतितवान् । इति ॥ नैरुक्ताः पुनरित्थं व्याचक्षते—**अतिष्ठन्तीनां** स्थितिस्वभावरहितानां मेघोदरान्तर्गतानामत एव **अनिवेशनानाम्** अनिविशमानानाम्. न हि ताः क्वचिदपि निविशन्ते यावज्जलाशयं नाप्नुवन्ति । तासामेवं विधानां **काष्ठानामपां मध्ये** अवस्थितानां बाह्यतो मेघाख्यं **शरीरं निहितं** अवस्थापितं धात्रेतिशेषः । ताः पुनः **आपः** तस्य **वृत्रस्य** मेघस्य **निण्यं** निर्णामं येनासौ नीचैर्नमति तं प्रदेशं वि विजानन्ति इव । उपसर्गबलेन योग्यक्रियाध्याहारो भाष्यकृतैव कृतः । यतस्तेन प्रदेशेन **चरन्ति** प्रचरन्ति निम्नानुसारिण्यो हि ता भवन्ति । असावपि **इन्द्रशत्रुः** वृत्रः मेघः ( निघं० १-१० ) तासु प्रचरन्तीषु ( अप्सु ) तत्प्रचरणनिरोधं चिकीर्षुः स्वशरीरविवृद्ध्या **दीर्घं तमः आ** आवृत्त्य । ( यावन्तं प्रदेशं मेघस्य निम्नमनुसरन्त्यस्ता आपः निपित्सन्ति ततो बहुतरं प्रदेशमसौ वर्धते तदवरुरुत्सयेति ) **अशयत्** सर्वतः पतितवान् ॥ ५ ॥

अथ भाष्यकृदस्थावराणामपां काष्ठानामाभिप्रेत्य मन्त्रं व्याचष्टे—

**अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानाम् मध्ये निहितं शरीरं मेघः ॥**

तदेतन्मेघपरत्वेन वृत्रशब्दस्य व्याख्यानम् ॥ अथात्रैकपदनिरुक्तम्—

**शरीरं शृणातेः शम्नातेर्वा ॥**

**शृणातेः** हिंसार्थस्य ( निघं० २-१९ ) पाणिनिरपि "शॄहिंसायाम्" ( क्र्या० प० ) "कॄगॄपॄकटि" ( उ० ४-३० ) इत्यादिनेरन् प्रत्ययः । **शम्नातेरि**ति "शमु उपशमे" ( दि० प० ) इत्यस्य व्यत्ययेन श्ना । उपशमोऽत्र विनाशः । हिंस्यते हि तत् ।

अथ पुनर्भाष्यम्—

**वृत्रस्य निण्यं निर्णीतं वि-जानन्त्याप इति ॥**

निगदव्याख्यातमेत(दधस्ता)त् ॥ अथपुनरेकपदनिरुक्तम्—

**दीर्घं द्राघतेः ॥**

वृद्ध्यर्थस्य ( भ्वा० आ० ) वृद्धं हि तद्भवति । पृषोदरादित्वात्साधुः ।

**तमस्तनोतेः ।**

विस्तारार्थस्य ( त० उ० ) असुनि ( उ० ४-१८८ ) नस्य मः पृषोदरादित्वात् । तेन हि सर्वमेव ततं ( व्याप्तं ) भवति ।

**आशयदाशेतेः ॥**

**आशयत्**—आ अशयत् । **आशेतेः** आङ्पूर्वस्य शीङ्धातोः स्वप्नार्थस्य ( अ० आ० ) लङि । पदव्यत्यय आर्षः ।

अथेन्द्रशत्रुपदं निर्ब्रवीति—

**इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा, शातयिता वा, तस्मादिन्द्रशत्रुः ॥**

आद्यो वाशब्दो वाक्यालङ्कारे । **शमयिता**—हन्ता ।

१. सायणाचार्यैः ॥

२. विश्वरूपवधात्कुपितेन त्वष्ट्राऽऽभिचारिके कर्मणि मन्त्रबलेन वैतानिकाग्नेः सृष्टस्य ॥

३. जलक्रीडाप्रसक्तो वृत्र इन्द्रेण छलेन मैत्रं विधाय सहक्रीडन्नत्रेणापां फेनमयेन हत इति हि भागवतादौ व्यक्तम् ॥

४. आवृत्त्यापस्तासामेव गुप्तये ॥

१. स हि स्वत एव तमः धूमादिप्रभवत्वात् । तथाचोक्तं कालिदासेन "धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघ" इति ॥

२. निपतितुमिच्छन्ति ॥

३. तदवरोद्धुमिच्छया ॥

४. "द्राघृ आयामे" इति पा० धा० ठः । आयामो दैर्घ्यम् ॥ वृद्ध्यैव हि दैर्घ्यमापन्नं भवति ॥

तथाच शमयतीति शत्रुः "जन्वादयश्च" (उ० ४-१०२) इति निपातितः। इन्द्रः शत्रुर्यस्य सः। अथवा नायं शमयतेरपितु शातयतेरेव हिंसार्थस्यैव। शातयतीति शत्रुरिति। तथाच "रुशातिभ्यां क्रुन्" (उ० ४ । १०४) इति क्रुन् "बहुलमन्यत्रापी"ति णिलुक्। "निमित्तापाये नैमित्तिकस्याप्यपाय" इति। "अकृतव्यूहाः पाणिनीया" इति वा वृद्ध्यभावः॥ उभयत्र पूर्वपदप्रकृतिस्वरत्वाद्बहुव्रीहिरेव॥

स एषमेघस्याथ च वृत्रस्यासुरस्यवेति सन्देहपूर्वकं मतभेदेन निराचष्टे—

**तत्को वृत्रो ? मेघ इति नैरुक्ताः। त्वाष्ट्रोऽसुर इत्यैतिहासिकाः॥**

इह मन्त्रे वृत्र इत्येतच्छ्रुतं तदेतन्नैगमानुप्रसक्तं विचार्यते इत्युपयुक्तस्तच्छब्दः। आह को वृत्रः? इति। उच्यते—मेघः इत्येवं नैरुक्ता निरुक्तविदः। वेदत्यर्थेऽण् (पा० ४-२-...)। ऐतिहासिका इतिहासविदः। "आख्यानाख्यायिकेतिहासपुराणेभ्यश्च" इति (पा० ४-२-६० वा०) वेदित्रर्थे ठक्। "ठस्येकः" (पा० ७-३-५०) आदिवृद्धिः (पा० ७-२-११७)॥

अथ यदि मेघो वृत्रस्तदा य एष सङ्ग्रामे श्रूयते (मन्त्रवर्णे) तत्र का गतिः? अत्राह—

**अपां च ज्योतिषां च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति॥**

**अपां च** मेघोदरान्तर्गतानाम्। **ज्योतिषां च** वैद्युतानाम्। तेन हि वैद्युतेन ज्योतिषा मरुदावेष्टितेन इन्द्राख्येनोपताड्यमाना आपः प्रस्यन्दन्ते। (वर्षभावाय प्रकल्प्यन्ते) **तत्र**–एवंसति उदकतेजसोरितरेतरप्रतिद्वन्द्विभूतयोः **उपमार्थेन** रूपकल्पनया **युद्धवर्णाः** युद्धेन रूपकाणि **भवन्ति**॥ न ह्यत्र यथाभूतं युद्धमस्ति। नहीन्द्रस्य शत्रवः केचन भवन्ति। तथाच मन्त्रवर्णो भवति–"अशत्रुरिन्द्र! जज्ञिष" इति।
(ऋ० सं० २-७-२१-२)

अथ किं वृत्रेवदेव रूपकाणि भवन्ति। अपि तु अन्यवदपि? तत्राह—

**अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च॥**

**तु**रत्र समुच्चयार्थे। तथाच वृत्रवच्चाहिवच्चेति। अहिर्मेघः (निघं० १-१०) उदकं (निघं० १-१२) मध्यस्थानदेवता च (निघं० ५-४) **मन्त्रवर्णा** मन्त्रलिङ्गानि। **ब्राह्मणवादाश्च** शाखान्ते भवन्ति। तदुपेक्षितव्यम्। स हि वृत्रोऽसुरः—

**विवृध्या शरीरस्य स्रोतांसि निवारयाञ्चकार।**

इन्द्रेण सह जलक्रीडावसरे। ततश्च-इन्द्रेण—

**तस्मिन् हते प्रसस्यन्दिर आपः।**
**तदभिवादिन्येषर्ग्भवति॥ २॥ (१६)॥**

**तस्यैतस्यार्थस्याभिवादिनी** आभिमुख्येन नियतं बोधयन्ती **एषा** अनुपदं वक्ष्यमाणा **ऋग् भवति**॥ २॥ (१६)

तद्यथा—

**"दासपत्नीरहिंगोपा अतिष्ठन् निरुद्धा आपः पणिनेव गावः।**
**अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥ १॥"**
(ऋ० सं० १-२-३८)

**दासपत्नीरि**ति। पूर्वमयं नैरुक्तमतेन व्याख्यायते-**यत्** यदा **अपां बिलं** निर्गमद्वारं **अपिहितमासीत्** तेन मेघेन। **तत्** तदा इन्द्रस्तं **वृत्रं** मेघं **जघन्वान्** निजघ्निवान् अहत। हत्वा च। **अपववार** अपावृतवान्द्वारमथ तदा तस्मिन्द्वारे निहते अपावृते च सति। **अहिगोपाः** अहिना मेघेन गुप्ताः **दासपत्नीः** दासाधिपत्न्य आपः। **पणिना** वणिजा **निरुद्धाः** एकत्र रात्राववस्थानाय स्थापिता **गावइव** प्रस्यन्दिरे वर्षभावेनेति समस्तार्थः॥ अथ ऐतिहासिकमतेनायं व्याख्यायते–दासो विश्वोपक्षयहेतुर्वृत्रः। "दसु उपक्षये" (दि० प०) पचाद्यच् णिजन्तात्। पतिः स्वामी यासामपां ताः **दासपत्नीः** दासपत्न्यः विभक्तिव्यत्यय आर्षः। अतएवा**हिगोपाः** अहिर्वृत्रासुरो गोपो रक्षको यासां ताः। गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनमेतदेव स्पष्टीक्रियते–**आपो निरुद्धा अतिष्ठन्** इति। तत्र दृष्टान्तः **पणिनेव गावः**। पणिनामकोऽसुरः गा अपहृत्य बिले स्थापयित्वा तद्बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तद्वदित्यर्थः। **अपां यद्बिलं** प्रवहणद्वारमपिहितं वृत्रेण निरुद्ध**मासीत्** तद्बिलं प्रवहणद्वारं, **वृत्रं जघन्वान्**हतवानिन्द्रः **अपववार** अपावृतमकरोत्। वृत्रकृतमपां निरोधं परिहृतवान् इति॥ १॥

अथैकपदनिरुक्तम्—

**दासपत्नीर्दासाधिपत्न्यः॥**

दासः कर्मकरस्तं हि ता अभिप्राय पान्ति रक्षन्तीति। ता

---

१. मरुतो वायवो देवाश्च। "मरुतौ पवनामरौ" इत्यमरः। मध्यस्थानदेवतेन्द्र इति नैरुक्ताः॥

२. अत्र वृत्राहिशब्दावसुरमेवार्थौ। तथाचामरः: "अहिर्वृत्रेऽपी"ति। अपिरत्रार्थान्तरं समुच्चिनोति। तथाच विश्वः "अहिर्वृत्रासुरे सर्पे मेघे ध्वान्ते बलेऽपि चे"ति। मेदिन्यपि "वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे" इति॥

१. उपगम्य मन्त्रांस्तदर्थाश्चेक्षितव्यमालोचितव्यमित्यर्थः॥

२. अस्यार्थोऽनुपदं स्फुटीभविष्यति भाष्ये॥

आपः । स हि ( दासः ) कर्मणा श्रान्तः, तासु पीतासु विश्रान्त आप्यायितो भवति ॥

अथ विग्रहप्रसक्तं निरुच्यते—

**दासो दस्यतेः । उपदासयति कर्माणि ॥**

दस्यतेरुपक्षयार्थस्य ( दि० प० ) । स हि **उपदासयति** उपक्षाययति । **कर्माणि** कृष्यादीनि समापयतीत्यर्थः ॥

**अहिगोपा अतिष्ठन् । अहिना गुप्ताः ॥**

**अहिना** मेघेन गुप्ता निरुद्धाः । अथाहिशब्दं मेघार्थे निराह—

**अहिरयनात् । एत्यन्तरिक्षे ॥**

अथाहिः कस्मात् ?-इति । उच्यते-**अयनात्** । **एति** हि असौ **अन्तरिक्षे** ॥ तथाच "अहि गतौ" "सर्वधातुभ्य इन्" ( उ० ४-११६ ) इतीन्प्रत्यये नलोपो बाहुलकात् । यद्वा एतेरेव गत्यर्थस्य ( अं० प० ) इनि गुणे यस्य हः पृषोदरादित्वात् ॥

अथ शब्दसामान्यान्निरुच्यते—

**अयमपीतरोऽहिः । एतस्मादेव ।**

**इतर** उक्तान्मेघादन्योऽहिः सर्पः **एतस्मा**दयनादूमनादेव । अयमपि हि एति सर्पति सर्वतः ॥ अत्रापरितुष्यन्नाह—

**निर्ह्रसितोपसर्ग आहन्तीति ॥**

अथवायं **निर्ह्रसितोपसर्गः** । निर्ह्रसितो ह्रस्वीभूत उपसर्ग आकारो यस्मिन् स हन्तेरेव स्यात् । कथम् ? **आहन्ती**त्यहिः । तथाच-"हन् हिंसागत्योः" ( अ० प० ) "आङि श्रिहनिभ्यां ह्रस्वश्च" ( उ० ४-१३८ ) इतीण् डित् आङो ह्रस्वश्चेति साधुः ॥

**निरुद्धा आपः पणिनेव गावः ।**

एतत्पर्यायकथनाय प्रतीकोपादानम् । सुगममन्यत् ॥

**पणिर्वणिग्भवति ॥**

इति पर्यायेण तत्त्ववचनम् । अथ निर्ब्रवीति—

**पणिः पणनात् ॥**

व्यवहरणात् । पणायति व्यवहरति ह्यसाविति **पणिः** । "पण व्यवहारे" ( भ्वा० प० ) "सर्वधातुभ्य इन्" ( उ० ४-११६ ) इतीन्प्रत्ययः । आय् तु आर्धधातुके वा भवति ( पा० ३-१-३१ ) । अथ पर्यायप्रसक्तं निरुच्यते—

**वणिक् पण्यं नेनेक्ति ॥**

वणिजो यद्विक्रेयं द्रव्यं तत्पण्यमुच्यते । तदसौ नित्यं **नेनेक्ति** शुचीकरोति मूल्यार्हं स्यादिति । तथाच "णिजिर् शौचपोषणयोः" ( जु० प० ) इत्यस्मात्क्विप् पण्योपपदे । ण्यस्य लोपः पस्य च वः पृषोदरादित्वात् ॥ लोके तु "पणतेरिज्यादेश्च वः" ( उ० २-७० ) इति पणतेरेवेजन्तस्य पस्य वः ॥

अथ बिलं निर्विवक्षन्मन्त्रतृतीयपादं प्रतीकयति—

**अपां बिलमपिहितं यदासीत् ॥**

**बिलं भरं भवति बिभर्तेः ॥**

**बिभर्तेः** "डुभृञ् धारणपोषणयोरि"ति धातोः ( जु० प० ) कर्मणि घे ( पा० ३-३-११८ ) गुणे बाहुलका"द्बभ्रआमित्" (पा० ७-४-७६) इतीत्वं, भस्य वो रस्य लश्च । भृतं हि तदुदकादिभिर्भवतीति **बिलमुच्यते** । लोके तु "बिल् भेदने" ( तु० प० ) इगुपधलक्षणः कः ( पा० ३-१-१३५ ) कर्तरि । बिलतीति बिलम् । "बिलं रन्ध्रे गुहायांचे"ति शाश्वतः ॥

अथ वृत्रं निर्विवक्षुर्मन्त्रतुरीयपादमर्थतोऽनुवदति—

**वृत्रं जघ्निवानपववार तत् । वृत्रो वृणोतेर्वा, वर्ततेर्वा, वर्धतेर्वा ॥**

**वृणोते**"र्वृञ्वरणे" इति धातोः ( स्वा० उ० ) **वर्ततेर्वा** "वृतु वर्तने" इति धातोः ( भ्वा० आ० ) । **वर्धतेर्वा**-"वृधु वृद्धावि"त्यस्माद्वा ( भ्वा० आ० ) इत्येतेषा धातूनामन्यतमात् कर्मणि क्रो बाहुलकात् । अत्र द्वितीये"झरो झरीति" ( पा० ८-४-६५ ) तलोपोऽन्त्ये च जस्त्वचर्त्वे अपि ॥ "वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे" इति मेदिनी ॥

ब्राह्मणमपि चैतस्मिन्नर्थे भवतीत्याह—

**"यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते, यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते, यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते" ॥ ३ ॥ ( १७ ॥ )**

इति श्रीमद्यास्कमुनिप्रणीत नि० शा० नैघ० काण्डे द्वितीयाध्यायस्य पञ्चमः पादः ॥ २ ॥ ५ ॥ * ॥

**यत्**-**अवृणोत्**-अन्तरिक्षमुदकं वा महत्त्वात् **तद्वृत्रस्य वृत्रत्वमिति** । एवं ब्राह्मणेऽपि **विज्ञायते** विचार्यमाणे ज्ञायते ॥ अथवा-**यदवर्तत**-इन्द्रेण हतो वृत्रो मेघः अपां बिले अपावृते अपः वृष्टिभावेन अवर्तयत् ( प्रावर्तयत् ) **तद्वृत्रस्य वृत्रत्वम्** ॥ अथवा-**यत् अवर्धत** असावतिमात्रप्रमाणम् **तद्वृत्रस्य वृत्रत्वं** स्यादिति ॥ ३ ॥ १७ ॥

**इति श्रीमद्यास्क० नि० ल० विवृतौ नैघ० काण्डे द्वितीयाध्यायस्य पञ्चमः पादः ॥ २ ॥ ५ ॥ * ॥**

---

१. "पुंसि संज्ञायां घः प्रायेणे"ति सूत्रे प्रायेणेति पुंसीत्यनेनाप्यभिसम्बध्यते । तेनात्र नपुंसकेऽपि घः सिद्धः ॥

२. अपिशब्दात्तलोपः पूर्ववत् । जश्त्वं "झलां जश् झशि"ति (पा० ८-४-५३) । चर्त्वं च "खरिचे"ति (पा० ८-४-५५)॥

३. मेघो ह्यतिमात्रं वर्धत इति हि प्रसिद्धम् । असुरोऽपि (वृत्रः) तथाच देवीभागवते ( ६ स्कन्धे २ अ० ) इन्द्रवधार्थं त्वष्ट्रा कृते

## अथ द्वितीयध्यायस्य षष्ठः पादः।

### ( अथ रात्रिनामनिर्वचनम् )

अथ "काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति" ( नि० २–१५ ) इत्यत आरभ्य दिङ्नामप्रसक्तानुप्रसक्तमुक्तम्। प्रकृतमिदानीमुच्यते—

**रात्रिनामान्युत्तराणि त्रयोविंशतिः ॥**

रात्रेर्नामानि **रात्रिनामानि । उत्तराणि** प्रकृतेभ्यो दिङ्नामभ्यः। तमः सतत्त्वा हि रात्रिस्तस्य च तमसो दिक्ष्वेवाप्तलाभो भवतीति दिङ्नामभ्य उत्तराणि रात्रिनामानि, कियन्ति पुनस्तानि? त्रयोविंशतिः। त्रीणि च विंशतिश्च त्र्यधिका विंशतिरितिवा । एवमग्रेऽपि यथायोग्यमूह्यम् ॥ "श्यावी, क्षपा, शर्वरी" इत्येवमादीनि ॥ श्याववर्णा हि रात्रिरिति श्यावी ॥ १ ॥ खैः खैः कर्मभिरहनि क्षीणान्प्राणिनः स्वापेनेयं पातीति क्षपा, अस्यां हि सुप्ताः प्राणिनः पुनर्नवा इव प्रातरुत्तिष्ठन्ति ॥ २ ॥ शारणमस्यां स्वापार्थं क्रियत इति शर्वरी ॥ ३ ॥ इत्येवमादि सर्वत्र योज्यम् ॥

अथाह—

**रात्रिः कस्मात्? ॥**

इति। उच्यते—

**प्ररमयति भूतानि नक्तञ्चराण्युपरमयतीतराणि ध्रुवीकरोति ॥**

इयं ह्यागच्छन्ती **नक्तञ्चराणि** रात्रिञ्चराणि **भूतानि** पिशाचादीनि **प्र**कर्षेण **रमयति** । तानि हि विगतेऽहनि रात्र्यामुपस्थितायां प्राप्तोऽयं विहारसमयोऽस्माकमिति प्रकर्षेण रमन्ते । **इतराणि** अपि दिवाचारीणि सैवो**परमयति**। तस्यां ह्युपस्थितायां मनुष्यादीनि भूतानि इतिकर्तव्यताभ्य उपरमन्ते । उपरम्य च स्थिरीभवन्ति निवासायेति सा तानि **ध्रुवीकरोति** ॥

**रातेर्वा स्याद्दानकर्मणः ॥**

**दानकर्मणः** दानार्थस्य **रातेः** राधातोः ( अ० प० ) 'राशदिभ्यां त्रिप्' ( उ० ४–६७ ) इति त्रिप् प्रत्ययोऽधिकरणे ॥ "कृदिकारादि"ति ( पा० ४–१–१५ ग० ) ङीषि रात्रीत्यपि ॥

आह—किमस्यां प्रदीयते? इति। उच्यते—

**प्रदीयन्तेऽस्यामवश्यायाः ॥**

अवश्यमायन्तीत्यवश्यायास्तुषारास्ते ह्यस्यां **प्रदीयन्ते**। रात्रौ ते निपतन्तीति ॥ "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिममि"त्यमरः ॥

### ( अथ उषोनामनिर्वचनम् )

**उषोनामान्युत्तराणि षोडश ॥**

उषसो नामान्युषोनामानि। रात्रेरेव ह्यपरः काल उष आख्यो भवति पञ्चपञ्चाशद्घटीरूपः "पञ्च पञ्च उषःकाल" इति स्मृतेः। अतो रात्रिनामभ्य उत्तराण्युषोनामानि ( १६ ) "विभावरी, सूनरी" इत्येवमादीनि। विविधां भियं भासं वा वृणोतीति विभावरी। शोभनं नराणामस्यामुत्थानं भवतीति सूनरी इत्येवमादि निर्वचनं योज्यम् ॥

आह—

**उषाः कस्मात्? ॥**

इति। उच्यते—

**उच्छतीतिसत्याः ॥**

"उच्छी विवासे" ( भ्वा० प० ) इति धातोरसुनि छस्य षः पृषोदरादित्वात्। विवासः समाप्तिर्नाश इति यावत्। विवा-

---

वीप्रे सोमेऽग्नेर्वृत्र उदभूदित्याख्यायते । "कृते होमेऽष्टरात्रं तु सन्दीप्ताच्च विभावसोः। प्रादुर्बभूव तरसा पुरुषः पावकोपमः ॥ तं दृष्ट्वाऽग्रे सुतं त्वष्टा तेजोबलसमन्वितम्। वेगात्प्रकटितं वह्नेर्दीप्यमानमिवानलम् ॥ उवाच वचनं त्वष्टा सुतं वीक्ष्य पुरः स्थितम्। इन्द्रशत्रो विवर्धस्व प्रतापात्तपसो मम ॥ इत्युक्ते वचने त्वष्ट्रा क्रोधप्रज्वलितेन च । सोऽवर्धत दिवं स्तब्ध्वा वैश्वानरसमद्युतिः ॥ जातः स पर्वताकारः कालमृत्युसमः स्वराट्। किं करोमीति तं प्राह पितरं परमातुरम् ॥ कुरु मे नामकं नाथ! कार्यं कथय सुव्रत!" ॥ इत्यादि ॥ इत्याकर्ण्य वचस्तस्य त्वष्टा पुत्रस्य पेशलम् । प्रत्युवाचातिमुदितस्तं सुतं पर्वतोपमम् ॥ वृजिनात्त्रातुमधुना यस्माच्छक्तोऽसि पुत्रक ॥ तस्माद्वृत्र इति ख्यातं तव नाम भविष्यतीति ॥ तथाच वृजिनात्त्रायत इति वृत्रः पृषोदरादित्वाज्जिनशब्दस्य तकारादेशः । इति वैयासकं निर्वचनम् ॥ पेशलम्—मृदुलम् ( कोमलम् ) ॥

१. तमःसहभाविनी ॥

२. "श्यैङ् गतौ" ( भ्वा० आ० ) "इणशीभ्यां वन्" ( उ० १–१५० ) इति विधीयमानो वन्बाहुलकाच्छ्यायतेरपि । श्यायते गच्छति स्वाश्रयमस्यामिति ॥ श्यावो धूसरारुणो वर्णः। "अन्यतो ङीष्" ( पा० ४–१–४० ) इति ङीष्। क्षपा, पृषोदरादिः। क्षप्यते प्रेर्यते सूर्यचारेणेति क्षपेति क्षीरस्वामी ॥

३. "शरणं गृहरक्षित्रोः" इत्यमरः। लोके तु शृणातेर्वनिपि "वनो र च" ( पा० ४–१–७ ) ति ङीप्। शृणाति चेष्टामिति शर्वरी "शॄ हिंसायाम्" ( क्र्या० प० ) गुणः ॥

१. तथाच रमे ( ण्यन्तस्य ) रादेशः पृषोदरादित्वात् ततस्त्रिप् ( उ० ४–६७ ) कर्तरि ॥

२. घट्यारूप्यतेऽसौ। तत एव तदारम्भात् ॥

३. उषाशब्द आवन्तोऽपि "उषा रात्रेरवसाने" इत्यमरेणोक्तः। तत्र "उष दाहे" ( भ्वा० प० ) इत्यस्मादौणादिकः का प्रत्ययः। "उषा स्याद्रजनी शेषे उष इत्यपि दृश्यत" इति रभसः। तत्र उषस इति प्रभातीभावेऽव्ययम् ॥ अत्र तु सान्तं स्त्रीलिङ्गमुषस्शब्दः ॥

सयति हीयं तमांसीत्येवमस्याभास एतस्मिन्कर्मणि **सत्याः** कर्तरि कारके उषा इत्येतदभिधानं भवति ॥

आह—का पुनरियमुषाः ? इति । उच्यते—

**रात्रेरपरः कालः ॥**

स उषा इत्युच्यते ॥ उक्तमर्थं प्रमाणयति—

**तस्या एषा भवति ॥ १ ॥ ( १८ ) ॥**

**तस्या** उषसः रात्र्यपरकालरूपत्वे **एषा**ऽनुपदं प्रदर्शयिष्यमाणा ऋक् निर्वाचिका **भवति** ॥ १ ॥ (१८)

**"इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।**

**यथाप्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥ १ ॥"**

( ऋ० सं० १-८-१ )

**इदमिति** । आङ्गिरसस्य कुत्सस्येयमार्षम् । उत्तरा च । उभे अपि त्रिष्टुभौ । प्रातरनुवाकाश्विनयोः शस्येते । **ज्योतिषाम्** ग्रहनक्षत्रादीनां द्योतमानानां मध्ये ( निर्धारणे षष्ठी ) **इद**मुषआख्यं **ज्योतिः श्रेष्ठम्** प्रशस्यतमम् । नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति नान्यत् । चन्द्रस्त्वविस्पष्टप्रकाशः । औषसं तु ज्योतिर्युगपदेव सर्वस्य जगतोऽन्धकारनिराकरणेन विशेषेण प्रकाशकमित्यतः प्रशस्यतममित्यर्थः ॥ तादृशं ज्योतिः । **आगात्** आगमत् पूर्वस्यां दिशि आगच्छतीत्यर्थः । लडर्थे लुङ् ( पा० ३-४-६ ) **चित्रः** चायनीयः पूजनीयो वा **प्रकेतः** अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकस्तदीयो रश्मिः **विभ्वा** विभुः । सोर्डा ( पा० ७-१-३९ ) व्यापकः सन् **अजनिष्ट** प्रादुरभूत् । किञ्च–यथा **रात्री** रात्रिः स्वयं **सवितुः** सूर्यस्य सकाशात् प्रसूता उत्पन्ना भवति । सूर्योत्तेऽस्ते देशे । **एवा** एवमसौ **उषसे** उषसः । षष्ठ्यर्थे चतुर्थी ( पा० २-३-६२ वा० ) **सवाय** प्रसवाय उत्पत्तये ( तदर्थम् ) **योनिं** स्थानं स्वकीयापरभागलक्षणमवकाशम् **आरैक्** अरिचत् आरेचितवती ( कल्पितवतीत्यर्थः ) यद्वा **प्रसूता** रात्रेः सकाशादुत्पन्ना **उषाः सवितुः** सूर्यस्य **सवाय** प्रसवाय ( जन्मने ) यथा भवति । एवं रात्रिरपि **उषसे** आत्मलाभाय योनिं स्वापरभागलक्षणं स्थान**मारैक्** दत्तवती । तथाच–यथोषा आदित्यस्य जन्मनोहेतुस्तदनन्तरजन्मत्वात् । एवं रात्रिरुषसो जन्मनो हेतुरित्येवमस्यामृचि रात्रेरेवापरभागलक्षणः काल उषःसंज्ञित इति गम्यते । **एवेति** पृषोदरादित्वान्मलोपे "निपातस्य च"-( पा० ६-१-१३६ )ति संहितायां दीर्घः ॥ १ ॥

अथास्या भाष्यम्—

**इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् ।**

**चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमम् यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्य, एवं रात्र्युषसे योनिमरिचत् स्थानम् ॥**

अत्र यद्यपि प्रकेतशब्दः "कित ज्ञाने" ( भ्वा० प० ) इत्यस्मादन्तर्भावितण्यर्थात् कर्मणि घञा "थाथादि" (पा० ६-२-१४४ ) स्वरेणोत्तरपदान्तोदात्तो मन्त्रे प्रथमान्तो निर्दिष्टः । "घञजपाश्च पुंसि भवन्ती" ( लिं० सू० ) ति नियमस्तथापि भाष्यकृता जनेरेवान्तर्भावितण्यर्थतामनुसन्धाय सकर्मकत्वात्प्रकेतशब्दस्य भावघञन्तत्वमप्यनुसंहितमिति कर्मसंज्ञापि । मन्त्रे विभ्वेति विपूर्वाद् भवतेरौणादिको ड्वन् नित्वादाद्युदात्तः ( पा० ६-१-१९७ ) अमः "सुपां सुलुगि" ( पा० ७-१-३९ ) त्यादिना" डादेशः । तथाचेतराणि परिच्छिन्नतराणि ज्योतींषि अपेक्ष्येदमतिमहत्त्वाद्विभूततमं विस्तीर्णतममित्येवं भाष्यकारो व्याख्यत् । तथाचोषा आगत्य प्रकाशं जनितवतीत्यर्थः ॥

अत्र स्थानमेव योनिशब्देनोच्यते । योनिरिति हि यौतेर्मिश्रणार्थात् ( अ० प० ) "वह्निश्रियुद्रु०" ( उ० ४-५१ ) इत्यादिना निप्रत्ययेन साधुः । यद्धि यस्मिन् विधीयते तत्तेन साकं युतं ( मिश्रीभूतं ) भवतीति स्थानमपि योनिरित्युच्यते । इयमपीतरा—

**स्त्रीयोनिः ।**

एतस्मादेव । किं कारणम् ?

**अभियुत एनां गर्भः ।**

गर्भो ह्येना**मभि**गत्य **युत** आमिश्रीभूतो भवतीत्यर्थः ॥

---

१. अत्र दुर्गः । आदित्यो हि तापकः प्रकाशकः । अथ–चन्द्रमा-स्तिशीतः प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकंचेत्येवमादित्यादीनां ( मध्ये ) इदमेव श्रेष्ठमित्येवं व्याख्यत् ॥

२. अत्र सायणः । सूर्योऽस्तं गच्छन्रात्रिं जनयति । तस्मिन्ननस्तमिते रात्रेरुत्पत्त्यभावात् इत्याह ॥

३. 'दत्तवती आरेचयति ददातीत्यर्थं' इति दुर्गः ॥

४. निमित्तेऽत्र सप्तमी ॥ ( पा० २-३-३६ वा० )

५. उषसो यज्जन्म तदर्थमिति सायणः ॥

१. प्रकेतनमित्युक्त्या प्रज्ञाततममित्युक्त्या च कर्मघञन्तत्वमपीत्यपिशब्दार्थः सूर्यः ॥

२. भाष्यमते चेदमिति न पूर्वोक्तव्याख्यातो विरोधः । सा हि सायणोक्ता ॥

३. प्रभां सूर्य वा ॥

४. पूर्वत्र "अयमपीतरो योनिरेतस्मादेव० परियुतो भवति" इति यवनक्रियासामान्येन निरुक्तो योनिशब्दः । इह पुन"रभियुत एनां गर्भ" इति मिश्रीभावसामान्येनोभयलिङ्गत्वं चास्योपदर्शितम् ( इह स्त्रीलिङ्गं तत्र पुंलिङ्गमिति ) तथाचामरः "भगं योनिर्द्वयो"रिति । "मिथुने तु द्वयोरिति" इति च तत्परिभाषा । तथाच मेदिनी "योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिर"इति ॥

**तस्या एषाऽपरा भवति ॥ २ ॥ ( १९ )**

**तस्या** उषसः **एषा अपरा** ऋगनुपदं वक्ष्यमाणा **भवति**। निर्वाचिकेति शेषः ॥ ( अस्यैवार्थस्य दृढतायै रात्रेर- परकाल उषा उच्यत इति ) ॥ २ ॥ (१९)

**"रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ॥**

**समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥"**

( ऋ० सं० १-८-१ )

**रुशदिति** । अस्या ऋष्यादिकमुक्तमनुपदं ( पूर्वमन्त्रे ) **श्वेत्येत्युषसो** नाम । ( निघं० १-८ ) श्वेतवर्णा **रुशती** दीप्ता "रुच दीप्तौ" ( भ्वा० आ० ) "संश्चत्तृम्पद्वेहत्" ( उ० २-७९ ) इत्यतिप्रत्ययो गुणाभावश्च चकारस्य शकारश्च बाहुल- कात् ॥ तथाच रोचते रुशद्वर्णविशेषो ज्वलनाविर्भूतप्रकाश- रूपोऽभिधीयत इति देवराजयज्वानः । यद्वा रुशेर्हिंसार्थात्तुदादे रोचत्यर्थे वर्तमानाल्लटः शतरि ङीप् ॥ **रुशद्वत्सा** रुशन्दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता । यथा मातुः समीपे वत्सः संचरति एवमुषसः समीपे सूर्यस्य नित्यमवस्थानात्तद्वत्सत्त्वम्। अथवा यथा वत्सो मातुः स्तन्यं रसं पिबन्हरति एवमुषसोऽव- श्यायाख्यं रसं रश्मिभिः पिबन्स वत्स इत्युच्यते । तादृशीसती **आगात्** आगतवती । आगतायाश्चास्याः ( उषसः ) **कृष्णा** कृष्णवर्णा रात्रिः **सदनानि** स्थानानि स्वकीयान्याधेयामलक्ष- णानि **आरैक्** आरेचितवती । कल्पितवती–दत्तवतीत्यर्थः। उ–इत्येतत्पदपूरणम्। अपिचैते रात्र्युषसौ **समानबन्धू** समान एकः सूर्याख्यो बन्धुर्ययोस्ते । यद्वा सूर्येण सह सम्बद्धे ( यथो- षोदेष्यता सूर्येण सम्बद्धा एवं रात्रिरप्यस्तं यता सूर्येण सम्बद्धा) **अमृते** नास्ति मृतं मरणमनयोरिति बहुव्रीहौ नञो नस्य लोपः ( पा० ६-३-७३ ) मरणरहिते, कालात्मकतया नित्य- त्वात्। **अनूची** अन्वञ्चन्त्यौ । अनुपूर्वादञ्चतेः क्विनि ( पा० ३-२-५९ ) नलोपे ( पा०.६-४-२४ ) उगित्त्वान्ङीप् ( पा० ४-१-६ ) "अचः" ( पा० ६-४-१३८ ) इत्यकारलोपे "चौ" ( पा० ६-३-१३८ ) इति दीर्घः। "सुपां सुलुगि०" ( पा० ७-१-३९ ) ति औङो लुक् ॥ एवंभूते **वर्णं** सर्वेषां प्राणिनां रूपम् **आमिनाने** जरयन्त्यौ । यद्वा स्वकीयं रूपं हिंसन्त्यौ "मीङ् हिंसायाम्" ( क्र्या० आ० ) लटः शानचि "मीनातेर्निगमे" ( पा० ७-३-८१ ) इति ह्रस्वत्वं टाप्। ( उषसा हि नैशं तमो निवर्त्यते । प्रकाशात्मकमुषसो रूपं च रात्र्या, एवंविधे सत्यौ ) **द्यावा** द्यावौ द्योतमाने । **चरतः** प्रतिदिवसमावर्तेते । यद्वा द्यावा नभसाऽन्तरिक्षमार्गेण चरतः प्रतिदिवसं गच्छतः । अत्राद्ये द्यावेति प्रथमाद्विवचनस्य "सुपां सुलुगि०" ( पा० ७-१-३९ ) त्यादिनाऽऽकारादेशः ॥ २ ॥

अथास्य भाष्यम्—

**रुशद्वत्सा सूर्यवत्सा । रुशदिति वर्णनाम । रोचतेर्ज्वलतिकर्मणः । सूर्यमस्या वत्समाह साह- चर्याद्रसहरणाद्वा ॥**

**रुशद्वत्सा** रोचिष्णुवत्सा । सूर्यो हि रोचिष्णुः। तं **सूर्य० माह** मन्त्रदृक् । **साहचर्यात्** मातृसहचरो हि वत्सो भवति । अयमपि चानयोषसा सह चरतीत्येतस्मात्सामान्याद् वत्स इत्युच्यते। **रसहरणाद्वा** । यथा मातुरूधसः क्षीराख्यस्य रसस्याहर्ता भवति वत्सः, एवमेषोऽपि औषसिकानामवश्या- याख्यानां रसानामाहर्ता भवति रश्मिभिरित्येतस्मात्सामान्या- द्वत्सत्वम् ॥

**रुशती श्वेत्यागात् ॥ श्वेत्या श्वेततेः ॥**

**रुशती** रोचनशीला आत्मनि । **श्वेततेः** "श्विता वर्णे" ( भ्वा० आ० ) इति धातोः । श्वेतो वर्णः एतस्याम् । श्वेत- वर्णेत्यर्थः । तथाचायं पृषोदरादिः । अन्ये तु व्याचक्षते ण्यन्तादस्मात् "अचो यत्" ( पा० ३-१-९७ ) इति बाहुल- काद्भावे यत्। णिलोपः । "अर्शआदित्वात्" ( पा० ५-२- १२७ ) मत्वर्थीयोऽच्प्रत्ययः स्त्रीत्वाट्टाप् (पा० ४-१-४) **इति** ॥ एवमियं श्वेत्या उषा **आगात्** आगच्छति वर्तमाने लुङ् ( पा० ३-४-६ )

अथागतायाश्च तस्याः—

**अरिचत् कृष्णा सदनान्यस्याः । कृष्णवर्णा रात्रिः ॥**

**अरिचदि**त्यारैगित्यस्यार्थः । आरेचयतीति तदर्थः । वर्त- माने लुङ् ( पा० ३-४-६ ) आरेचनमर्पणम् । **"कृष्णा० न्यस्याः"** इति प्रतीकम् । तत्र कृष्णाशब्दार्थमाह **कृष्णवर्णा रात्रिरिति** ॥ किमारेचयति ? **सदनानि** स्थानानि । **अस्याः** उषसः । येष्वियमुषाः स्थानेषु आगता सती आसीदति तान्यारे- चयति रात्रिः ॥

अथ निगमप्रसक्तं कृष्णपदं निर्वक्ति—

**कृष्णं कृष्यतेर्निकृष्टो वर्णः ॥**

**कृष्यतेः** "कृश् तनूकरणे" ( दि० प० ) इति धातोर्वर्ण- व्यत्ययेन "कृषेर्वर्णे" ( उ० ३-४ ) इति नक्प्रत्ययः। "कृष्णः

---

१. पूर्वं रात्रिः पश्चादुषा इत्यनेन प्रकारेण गच्छन्त्यौ । यद्वा सूर्यगत्यनुसारेण गच्छन्त्यौ ॥

२. तदेतत्सायणमतेन व्याख्यातं दुर्गोक्तदिशात्वग्रे व्याख्यास्यते।

१. तथाच "व्यत्ययो बहुलम्" ( पा० ३-१-८५ ) इति सूत्रे भाष्यम्—"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति । तत्र यङिति प्रत्याहार आश्रितो यङो यशब्दादारभ्य "लिङ्याशिष्यङ्" ( पा० ३-१-८६ ) ति ङकारेण । उपग्रहः परस्मैपदात्मनेपदे ॥

काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ । कृष्णा तु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि । कृष्णं तु मरिचे लोहे" इति हैमः ॥ एवं तावदर्धर्चेन राज्युषसोर्विभक्तस्तुतिः ॥

**अथैने संस्तौति । समानबन्धू समानबन्धने । अमृते–अमरणधर्माणौ । अनूची–इतीतरेतरमभिप्रेत्य । द्यावा वर्णं चरतः । ते एव द्यावौ । द्योतनात् । अपि वा द्यावा चरतस्तया चरत इति स्यात् । आमिनाने–अन्योन्यस्याध्यात्मं कुर्वाणे ॥**

अथ अनेनोत्तरार्धर्चेन । **एने** रात्र्युषसौ । **संस्तौति** सम्यक्स्तुते करोति । परिचिनोति[1] परिचाययति वा । **समानबन्धू** एते रात्र्युषसौ । **समानबन्धने** समानमनयोर्बन्धनमित्युक्तमर्थस्तात् । **अमरणधर्माणौ** । न हि रात्र्युषसौ म्रियेते प्रतिपक्षं पुनराविर्भावदर्शनात् । **इतरेतरमभिप्रेत्य**–अन्योन्यमेते श्लिष्टे भवतः । **"द्यावावर्णं चरतः"** इति प्रतीकम् । **ते** रात्र्युषसौ **एव द्यावौ** । कुतः ? **द्योतनात्** । उषा हि स्वेन प्रकाशेन द्योतते, रात्रिरपि स्वेन तमोवीर्येण नक्षत्रगणेन वा स्वमधिकारं प्रति द्योतते । एवं हि द्यावेति द्विवचनम् । **अपि वा**–अथवा तृतीयान्तम् । एकवचनमेतत्**स्यात्**–द्यौः, **तया** द्यावा "सहयुक्ते" (पा० २–३–१९) तृतीया । तया सह स्पर्धमाने **चरतः** गच्छत **इति** । कथं पुनश्चरतः । **आमिनाने** । आङ्ध्यर्थे "तोदस्येव शरण आमहस्य" "तुदस्येव शरणेऽधिमहतः" इति यथा । (नैग० का० ५–२–५) उषा अपि रात्रेरधि आत्मानं निर्मिमीते, रात्रिरप्युषसः । इतरेतरसंश्लिष्टे हीमे रात्र्युषसौ भवतः । तस्मादेवमुच्यते । **"अन्योन्यस्याध्यात्मं कुर्वाणे"** इति ॥

## (अथाहर्नामनिर्वचनम्)

एवं तावदुषःशब्दतत्त्वावधारणार्थं प्रसक्तावेतौ मन्त्रौ उपवर्णितौ । प्रकृतमिदानीमुच्यते—

**अहर्नामान्युत्तराणि द्वादश ॥**

अह्नो नामान्य**हर्नामानि** । **उत्तराणि** प्रकृतेभ्य उषोनामभ्यः । उषस एवानन्तरमहर्भवतीति ॥ तानि च १२ "वस्तोः, द्युः, भानुः" इत्येवमादीनि ॥ वस्ते आच्छादयति ज्योतिरेतदिति वस्तोरित्युच्यते । यथैव हि श्रुतं मन्त्रे तथैवेह समाम्नातम् । द्युः द्योतते द्योतज्ज्योतिषा । भानुः भाति, भासते द्योतज्ज्योतिषेत्येवमादि योज्यम् ॥

आह—

**अहः कस्मात् ?**

इति । उच्यते—

**उपाहरन्त्यस्मिन्कर्माणि ॥**

**उपाहरन्ति**–कुर्वन्ति । नहि तथा रात्रावनुतिष्ठन्ति कर्माणि कर्मकरा यथाहनीति ॥ तथाचोपाङ्पूर्वाद्धरतेरधिकरणे विचि गुणे उपस्यलोप आङो ह्रस्वत्वं रस्य नकारादेशश्च पृषोदरादित्वात् । लोके तु "नञिजहातेः" (उ० १–१५८) इति कनिन् । आतो लोपः (पा० ६–४–६४) "रोः सुपी"ति (पा० ८–२–६९) रः ॥

**तस्यैष निपातो भवति । वैश्वानरीयायामृचि ॥ ३ । २० ॥**

**तस्य** अह्नः वाचकः **एष** अहःशब्दः **निपातो**ऽपि भवति । नैघण्टुकवृत्त्या । **वैश्वानरीयायाम्** वैश्वानरदेवतायामृचि । अनुपदं वक्ष्यमाणायाम् ॥ ३ ॥ २० ॥

**"अह॑श्च कृ॒ष्णमह॒रर्जु॑नं च॒ वि व॑र्तेते॒ रज॑सी वे॒द्याभिः॑ ॥**

**वै॒श्वा॒न॒रो जाय॑मानो॒ न रा॒जाव॑ति॒रज्योति॑षा॒ग्निस्तमां॑सि ॥ १ ॥"**

(ऋ० सं० ४–५–११)

**अहश्चेति** । भारद्वाजस्येयमार्षं त्रिष्टुप् । पृष्ठस्य षष्ठेऽहन्याभिमारुते शस्त्रे शस्यते । अत्राहःशब्दो रात्रिमहश्चाभिधत्ते, अतः सन्देहपदम्, तस्यैष विभागोऽस्यामृचि उपपदविशेषात्प्रदर्श्यते । **अहश्च कृष्णमिति** । आहरति पुरुषोऽस्मिन्कर्माणीत्यहः **कृष्णं** कृष्णवर्णम् । एतत्सामानाधिकरण्यादहःशब्दो रात्रिवचनः । तमसा कृष्णवर्णा रात्रिः, **अर्जुनं च** सौरेण तेजसा शुक्लवर्णमहो दिवसश्च । **रजसी** स्वस्वभासा सर्वं जगद्र-

१. "संस्तवः स्यात्परिचय" इति कोशा"दवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" ति न्यायाच्च संपूर्वकस्तु धातुः परिचय एव वर्तत इतीत्थं व्याख्यातम् । अन्तर्भावितण्यर्थतायां च परिचाययतीत्यपि । स्वयं परिचिन्वन्मन्त्रद्रष्टान्यान्परिचाययतीति तदर्थः ॥

२. मन्त्रव्याख्यायाम् ॥

३. अधीत्ययमुपरीत्यर्थेऽव्ययम् ॥

१. अत्र स्कन्दस्वामिनः "वस्तोरितीदृशमेवेदं नाम, न विभक्त्यन्तरम्" इति । "वस आच्छादने" (आ० प्रा०) व्यत्ययेन कर्तरि तोसुन् (पा० ३–४–१३) "कुह॑स्विद्दो॒षा कुह॒ वस्तो॑र॒श्विना॑" (ऋ० सं० ७–८–१८–२) इति हि निगमः । अत्र कुह केति सप्तमीसामानाधिकरण्याद्दोषा वस्तोरित्यपि सप्तम्या एवाव्ययलुगध्यवसितः ॥ द्युरिति द्योततेः (भ्वा० आ०) "अश्वादयश्च" (उ० ५–२९) इतिडुन्प्रत्ययान्तो निपातः । "द्युभि॑र॒क्तुभिः॒ परि॑पातम॒स्मान्" (ऋ० सं० १–७–३७–५) इति निगमः । द्यौरितिपाठे बाहुलकाड्डोप्रत्ययो बोध्यः । भानुरिति–"भा दीप्तौ" (अ० प०) "भादाभ्यां नुः" (उ० ३–३१) इति नुः । रश्मिर्भानुरिति माधवोक्तमह्नमेवितुमर्हति ॥

जयन्ती। **वेद्याभिः** वेदितव्याभिः (अनुकूलतया ज्ञातव्याभिः) स्वप्रवृत्तिभिः। **विवर्तते** विपर्ययेण वर्तते। विविधं वा पर्यावर्तते। **यद्वा** रजसी द्यावापृथिव्यौ उपलक्षणमेतल्लोकत्रयं प्रत्यावर्तते। एतच्च वैश्वानराग्नेराज्ञयेति शेषः। स हि देवतात्वेनात्र प्रतिपाद्यः। सच **वैश्वानरोऽग्निः जायमानः** प्रादुर्भवन् (प्रवर्धमानः) **ज्योतिषा** स्वेन तेजसा, **राजा न** आदित्य इव **तमांसि अवातिरत्** अवाहन् अवहन्ति। अवतिरतिर्वधकर्मा (निघं० २-१९) वर्तमाने लुङ् (पा० ३-४-६) यथाहि सर्वेषां ज्योतिषां भूतानां वा राजाऽदित्य उद्यन्नेव तमांस्यपहन्ति दिवा। एवम् अग्निरपि रात्रावपहन्तीत्यग्निरादित्येन तम उपघातं प्रत्युपमीयते ॥ १ ॥

**(अथ मेघनामनिर्वचनम्)**

## मेघनामान्युत्तराणि त्रिंशत् ॥

**मेघनामानि**। मेघानां नामानि। तान्युत्तराणि प्रकृतेभ्योऽहर्नामभ्यः। मेघा ह्यहनि रात्रौ चाविशेषेण भवन्त्यतो रात्र्यहर्नामभ्य उत्तराणि मेघनामानि (३०) "अद्रिः ग्रावा गोत्रः" इत्येवमादीनि। अद्रिः आदरयितव्यो भवति ह्यसावुदकार्थमित्यद्रिरुच्यते। ग्रावा गृणातेर्वा गृह्णातेर्वा, गृणात्यसौ शब्दं करोति। गृहीतं चोदकमनेनेति वा। गोत्रः गौर्वागत्रेति एवमाद्यभ्यूहितव्यम्। पर्वतनामत्वेऽपि यथासम्भवं योज्यम् ॥

आह—

## मेघः कस्मात्?

इति। उच्यते—

## मेहतीति सतः ॥

"मिह सेचने" (भ्वा० प०) पचाद्यच् (पा० ३-१-१३४) न्यङ्क्वादित्वात् (पा० ७-३-५३) कुत्वं, सिञ्चत्यसौ। एवं कर्तरि कारके **सतः** अस्यैतदभिधानं भवति। तेषां मेघनाम्नाम्—

## आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः ।

**आ** इत्यर्वागर्थे। **उपर उपल इत्येताभ्यां** प्राक् यानि नामानि, तानि **साधारणानि**, समानख्यानानि **पर्वतनामभिः**। पर्वतनामानि मेघनामानि च। तदेतेषां प्रकरणोपपदाभ्यां विशेषोऽवधार्यः। उपरशब्दादारभ्य तु मेघनामान्येव न पर्वतनामानीत्येतदनेनोक्तं भवति। अत्रोपरादिति वक्तव्ये उभयोरुपादानं रलयोरविशेषत्वप्रदर्शनार्थम् ॥

अथैतयोरेकनिर्वचनत्वप्रदर्शनार्थमेकयोगपक्षत्वं चाङ्गीकृत्याह—

## उपर उपलो मेघो भवति ॥

वक्ष्यमाणनिगमापेक्षया, उपलशब्दस्य च पाषाणे प्रसिद्धत्वात् "तेषामुपरः स्थविष्ठो मध्यमः" इति तत्संघातशब्दे पर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहणं कृतम्। मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गम्। उत्तराणि मेघस्यैवेति। यदा च पर्वतस्तदा—

## उपरमन्तेऽस्मिन्नभ्राणि ।

उपेत्य-रमन्ते ह्यस्मिन् अभ्राणि मेघा इत्युपरः (पर्वतः) मेघपक्षे—

## उपरता आप इति वा ॥

अत्रास्मिन्निति योज्यम्। **उपगम्य रता आपोऽस्मिन्म**वन्ति। इत्युपरः। तथाच जनेर्विधीयमानो डप्रत्ययः (पा० ३-२-९७) बाहुलकाद्रमेर्भवति (पा० ३-३-१) "उपरो जलवापनादिति" माधवः ॥ तथाचैतन्मते वपेः "कृदादित्वात्" (उ० ५-४२) अरन् संप्रसारणं च बाहुलकात् इति बोध्यम् ॥

अथ कथं ज्ञायते उपरशब्देन मेघ एवोच्यते न पर्वत इति? तत्रोच्यते—

## तेषामेषा भवति ॥ ४ ॥ (२१) ॥

**तेषां** मेघानाम् उपरशब्दवाच्यत्वे विशेषलिङ्गवाचिका **एषा** अनुपदं वक्ष्यमाणा ऋग्**भवति** ॥ ४ ॥ २१ ॥

## दे॒वानां॒ माने॑ प्रथ॒मा अ॑तिष्ठन् कृ॒न्तत्रा॑दे॒षा॒मुप॑रा॒ उदा॑यन् । त्रय॑स्तपन्ति पृथि॒वीम॑नू॒पा द्वा बृबू॑कं वहत॒ः पुरी॑षम् ॥ ३ ॥

(ऋ० सं० ७-७-१९)

**देवानामिति**। वसुक्रऐन्द्रपुत्रस्येयमार्षम् त्रिष्टुप्। महाव्रते मरुत्वतीये शस्यते। **देवानां** दानादिगुणयुक्तानां **माने** विमाने निर्माणे सृष्टिकाल इत्यर्थः। जगत्स्थितिहेतुभूतरसानुप्रदानकर्मणि स्रष्टव्यत्वेन **प्रथमाः** प्रकृष्टतमाः (मुख्याः) एते माध्य-

---

१. न हि तासां प्रवृत्तीनामन्तोऽस्ति। अनन्तत्वात् कालपरिवृत्तेः। अतस्ता वेदितव्या एव भवन्ति। बहुत्वात् ॥ तथाच वेद्येति अर्हार्थे कृत्यप्रत्ययो (पा० ३-३-१६९) भवति "ऋहलोर्ण्यद्" (पा० ३-१-१२४) ति ण्यत् ॥

२. रात्रिरतीताऽहरायातम्। अहरतीतं रात्रिरायातेत्येवम् ॥

३. आङ्पूर्वात् "दॄ विदारणे" (क्र्या० प०) इत्यस्माद्बाहुलकाद्रिन् टिलोपश्च। "विजुर्षा ययथुः सान्वद्रेः" (ऋ० सं० १-८-१६-१) इति मेघस्य निगमः। "नान्तरिक्षं नाद्रयः सोमो अक्षाः" (ऋ० सं० ८-४-१५-२) इति पर्वतस्य ॥ एवमन्यत्रापि निगमो द्रष्टव्यः। ग्रावेति-"अन्येभ्योऽपि दृश्यन्ते" (पा० ३-२-७५) इति क्वनिप् दृशिग्रहणादाडागमः। धातोर्वा आदेशः। गोत्र इति समस्तं पदम् ॥

१. तथाच मर्यादायामयमाङ् नत्वभिविधौ। तेन विना मर्यादा, तेन सहेत्यभिविधिः ॥

२. 'आ उपरात्' इति च्छेदः ॥

मिका देवगणाः मेघा **अतिष्ठन्** स्थितवन्तः। मेघाभावे हि सर्वमेवेदं जगद्वर्षाभावान्न स्यात्। **एषाम्** एवंभूतानां मेघानाम् **कृन्तत्रात्** उत्कृत्तात्प्रदेशात् **उपराः** मेघाः। तत्रस्था आपः **उदायन्** उद्गताः (उत्पन्नाः) वृष्टिभावेन भूमौ निपतिता इत्यर्थः। पतितास्वप्सु इन्द्रस्याज्ञया **त्रयः** देवाः पर्जन्यो वायुरादित्य इत्येते शीतोष्णवर्षैः **पृथिवीं** भूमिं तत्रस्था ओषधीः **तपन्ति** सन्तापयन्ति पाचयन्तीत्यर्थः। अन्तर्भावितण्यर्थोऽयम्। कथम्भूतास्ते? **अनूपाः** अनुवप्तारः (व्याप्तारः प्रभावयितारः) प्रक्षेप्तार इत्यर्थः। तेषु **द्वा** द्वौ वाय्वादित्यौ औङ आकारः (पा० ७-१-३९) पाचितास्वोषधीषु स्थितं **पुरीषं** सर्वस्य पालयितृ प्रीणयितृ वा "पॄ पालनपूरणयोः" (जु० प०) "शॄपॄभ्यां किच्च" (उ० ४-२७) इतीषन्प्रत्ययः। "उदोष्ठ्यपूर्वस्य" (पा० ७-१-१०२) इति उत्वपरत्वम्। प्रीणातेर्वा (क्र्या० उ०) बाहुलकात्कीषन्प्रत्ययः। ईकारस्योकारादेशः स च पकारात्परो द्रष्टव्यः। **बृबूकम्** उदकम् (निघं० १-१२) इतः पृथिवीलोकात् आदित्यमण्डलं प्रति **वहतः** आक्षिपतः। वायुः शोषयन् आदित्यो रश्मिभिराददान इत्यर्थः॥ ३॥

अथास्य भाष्यम्—

**देवानां निर्माणे प्रथमा अतिष्ठन् माध्यमिका देवगणाः। प्रथम इति मुख्यनाम, प्रतमो भवति। विकर्तनेन मेघानामुदकं जायते।**

**त्रयस्तपन्ति पृथिवीमनूपाः।**

**पर्जन्यो वायुरादित्यः। शीतोष्णवर्षैरोषधीः पाचयन्ति। अनूपा अनुवपन्ति लोकान् स्वेन स्वेन कर्मणा॥**

अत्र प्रथमशब्दं निर्ब्रवीति-**प्रतमो भवतीति**। तथाच प्रकृष्टतमः प्रथमः। तस्य थः पृषोदरादित्वात्। **विकर्तनेन**-छेदनेन। **त्रयस्तपन्ती**त्यादिप्रतीकम्। तत्र तपःशब्दार्थमाह **पर्जन्य** इत्यादि। तपन्तीत्यस्य **पाचयन्तीति**। अथाऽनूपशब्दं निर्ब्रवीति-**अनुवपन्त्य**नुगृह्णन्ति, एतदनुवपनं लोकानां, यद्वर्षादिभिः पर्जन्यादयो यथार्थमोषधीः पाचयन्ति। तथाच-अनुपूर्वाद्वपतेर्बीजसन्तानार्थात् (भ्वा० प०) कन्नौणादिकः। सम्प्रसारणं च (पा० ६-१-१५)॥

**अयमपीतरोऽनूप एतस्मादेवानूप्यत उदकेन॥**

**इतरः** नद्यनूपः समुद्रानूपो वा। तथाच मेदिनी "अनूपो महिषे नाऽम्बुप्रायदेशे तु वाच्यवत्" इति। अमरोऽपि "जलप्रायमनूपं स्यादि"ति। तत्रानुगता आपो यस्मिन्निति विग्रहे "ऋक्पूर०" (पा० ५-४-७४) इत्यः। "ऊदनोर्देशे" (पा० ६-३-९८) इत्यप ऊत्वम् इति वैयाकरणाः। नैरुक्तसमयेन तावदाह **एतस्मादेवेति**। वपतेरेव धातोः। असावपि हि **अनूप्यते** अनुप्रकीर्यते नित्यमु**दकेनेति**। अस्य साधनमुक्तमनुपदमुपरिष्टात्॥

**अपि वा ऽन्वाबिति स्याद्यथा प्रागिति। तस्यानूप इति स्यात् यथा प्राचीनमिति॥**

**अथवा इति**-एवमन्यथा **स्यात्** अनुपूर्वात् आप्नोतेः अन्वाप्यतेऽसावुदकेनेति **अन्वाप्**। **यथा**-पुरस्तादञ्चतीति **प्राक् इति**। **तस्य** अन्वाबित्येतस्य सतः **अनूप** इत्येष शब्दः **स्यात् यथा-प्राचीनमिति**। प्रागित्येवं सतः प्राचीनम्। अत्र "विभाषाञ्चेरदिक् स्त्रियां" (पा० ५-४-८) इति स्वार्थे खः। खस्येनः (पा० ७-१-२) इह तु आप्नोतेराकारस्योत्वं स्वार्थे चाकारः पृषोदरादित्वात्। वस्तुतस्तु बहुव्रीहिणा साधनं वैयाकरणमतेनोक्तमधस्तात्॥ अथ तुरीयपादं भाष्यकृद्व्याचष्टे-

**द्वा बृबूकं वहतः पुरीषम्।**

**वाय्वादित्या उदकम्। बृबूकमित्युदकनाम। ब्रवीतेर्वा शब्दकर्मणो भ्रंसतेर्वा। पुरीषं पृणातेः पूरयतेर्वा॥५॥(२२)॥**

इति श्रीमद्यास्कमुनि प्र० नि० शास्त्रे नैघ० काण्डे द्वितीयाध्यायस्य षष्ठः पादः॥ २॥ ६॥ *॥

अत्र **द्वा इति** औकारस्याकारेण (पा० ७-१-३९) तदर्थमाह **वाय्वादित्यौ** इति॥ पर्यायवचनेन तत्त्वाभिधानं **बृबूकमित्यादि**। **शब्दकर्मणः**। शब्दार्थस्य (अ० उ०) शब्दकारि हि तद्भवति। अत्र "उल्कादयश्च"ति (उ० ४-४०) ऊकप्रत्यये धातोर्बृभावो निपातनात्। एवं **भ्रंसते**रपि (भ्वा० आ०) भ्रस्यति हि तन्मेघात्॥ ५॥ (२२)

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघण्टुककाण्डे द्वितीयाध्यायस्य षष्ठः पादः॥ २॥ ६॥ *॥**

---

१. अत्र सायणः। इन्द्रादेशादेते पूर्वं स्थिताः। क एते? मेघाः। कुत एतदवगम्यते? परस्मिन्पादे तेषामनुकथनात्। उक्तं हि-"मेघा एव माध्यमिका देवगणा" इति॥

२. इन्द्रेण छिन्नात्। तथाच भाष्यं "विकर्तनेनैव हि मेघानामुदकं जायत" इति॥ अत्र "अमिनक्षियजिवधिपतिभ्योऽत्रन्" (उ०३-१०५) इति विधीयमानोऽत्रन्प्रत्ययो बाहुलकात्कृन्ततेरपि बोध्यम् "छन्दस्युभयथा" (पा० ३-४-११७) इति सार्वधातुकत्वाच्छम्॥

३. उपचारात्। तात्स्थ्यात्ताच्छब्द्यं मञ्चाः क्रोशन्तीतिवत्॥

४. अनुवपन्ति लोकान्स्वेन स्वेन कर्मणेति भाष्यम्॥

१. तदेतदपिवेत्यादिना पश्चाद्वक्ष्यति (मतान्तरपरतया)। तत्रान्वाप्यतेऽसावुदकेनेत्येवं व्याख्यानं दुर्गोक्तानुसारेण। तदेतद्वस्तुतस्त्वित्यादिना वक्ष्यते॥

## अथ द्वितीयाध्यायस्य सप्तमः पादः ॥

### ( अथ वाङ्नामनिर्वचनम् )

मेघनामप्रसक्तौ "देवानां माने" इत्येष मन्त्रो व्याख्यातः प्रकृतमिदानीमुच्यते—

**वाङ्नामान्युत्तराणि सप्तपञ्चाशत् ॥**

**वाङ्नामानीति** । वाचो नामानि वाङ्नामानि, **उत्तराणि** प्रकृतेभ्यो मेघनामभ्यः । मेघेष्वेव हि भूयसी वाग्भवतीति । तानि पुनः (५७) "श्लोकः, धारा, इळा" इत्येवमादीनि । श्रूयत इति श्लोकः । ध्रियते तं तमर्थमवधारयितुमिति धारा । ईट्टे गच्छति तं तमर्थं प्रतीति इळा ॥ इत्येवमाद्यभ्यूहितव्यम् । आह—

**वाक् कस्मात् ?**

इति । उच्यते—

**वचेः । तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति ।**

तत्र तस्मिन्सप्तपञ्चाशत्के वाङ्नामगणे **सरस्वतीत्येतस्य** नाम्नः । **नदी० वन्ति** । नद्यर्थयुक्ताश्च देवतार्थयुक्ताश्चेत्यर्थः ।

**तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतन्नदीवत् ॥ १ ॥ ( २३ ) ॥**

**तत्**-तत्रैवं सति **यत्**-अभिधानं **देवतावत्** । **तत्**-अधिकृत्य **उपरिष्टात्** ( दै० का० ११-२६ ) ( पावका नः सरस्वतीत्येतस्मिन्मन्त्रे नि० ११-२६ ) **व्याख्यास्यामः** । **अथ** पुनर्यदेतत् **नदीवत्** "तद्व्याख्यायते" इति शेषः ॥१॥ (२३)

**"इ॒यं शुष्मे॑भिर्बिस॒खा इ॑वारुजत्सानु॑ गि॒रीणां॑ तवि॒षेभि॑रू॒र्मिभिः॑ । पा॒रा॒व॒त॒घ्नीमव॑से सुवृ॒क्तिभिः॑ सर॑स्वती॒मा वि॑वासेम धी॒तिभिः॑ ॥२॥**

( ऋ० सं० ४-८-३० )

**इयमिति** । भारद्वाजस्येयमार्षम् । जगती । सरस्वती देवतारूपेण, नदीरूपेण च वर्तते । तत्र देवतारूपा स्तुता ( पूर्वमन्त्रेण ) अधुनाऽनया नदीरूपां सरस्वतीं स्तौति । **इयं** नदीरूपा सरस्वती **शुष्मेभिः** शुष्मैः शोषणैरात्मीयैर्बलैः ( निघं० २-९ ) । **तविषेभिः** महद्भिः "तवेर्णिद्वा" ( उ० १-४८ ) इति टिषच्प्रत्ययः । तु-इति सौत्रो धातुः । ( निघं० ३-३ ) "अतो भिस ऐस्" "बहुलं छन्दसि" ( पा० ७-१-९-१० ) इत्यैसभावे एत्वम् ( पा० ७-३-१०३ ) **ऊर्मिभिः** तरङ्गैः **गिरीणां** पर्वतानां तीरसम्बद्धानां **सानु** सानूनि । शेर्लोपः ( पा० ६-१-७० ) **बिसखा इव** बिसं मृणालमब्जादि "मृणालं बिसमब्जादी" त्यमरः । तद्यः खनति स बिसखाः ( बिसखानकः ) "खनु अवदारणे" (भ्वा० उ०) इत्यस्मा "जनसनखनक्रमगमो विट्" ( पा० ३-२-६७ ) इति कर्तरि विटि "विड्वनो" (पा० ६-४-४१) रित्यात्वम् । स इव **अरुजत्** अभनक् । स यथा बिसार्थमनायासेनैव पङ्कं रुजति ( भनक्ति-खनति ) तद्वत् । **पारावतघ्नीं** पारावारघातिनीं, सा हि ऊर्मिभिः पारं चावारं च उभे अपि हन्ति ॥ अत्र पारावारशब्दे उपपदे हन्तेष्टक् ( पा० ३-२-५३ ) पारावारशब्दस्य पारावतादेशः पृषोदरादित्वात् । उपधालोपे कुत्वे च ङीप् ॥ तामेतां सरस्वतीं **सुवृक्तिभिः** सुप्रवृत्ताभिः स्वरसौष्ठवादियुक्ताभिः । **धीतिभिः** कर्मभिः स्तुतिलक्षणाभिरनेकप्रकाराभिः । अत्र "धीङ् धारणे" ( दि० आ० ) इत्यस्माद्धातोर्वा क्तिनि (पा० ३-३-१७४) ईत्वे (पा० ६-४-६६) रूपम् ॥ कर्मनामत्वं भाष्यकृद्वचनात् । तत्करत्वादेवाङ्गुल्यो धीतियो निघण्टौ (२-५) पठ्यन्ते ॥ वयम् **अवसे** अवनाय रक्षणाय । अवतेरसुन् (उ०४-१८८) भावेऽत्र बाहुलकात् । **आविवासेम** परिचरेम ॥ विवासतिर्नैरुक्तधातुः विपूर्वाद्वसेर्णिच् । "छन्दस्युभयथे" ( पा० ३-४-११७ ) ति शपि आर्धधातुकत्वाण्णिलोपः । इति भट्टभास्करमिश्राः प्राहुः ॥

अथैकपदनिरुक्तम्—

**शुष्ममिति बलनाम । शोषयतीति सतः ।**

---

१. अत्र स्कन्दस्वामिनः । उच्यत इति वागिन्द्रियं तत्कार्यः शब्दोऽप्युच्यत इति वाक् ( उच्यतेऽनयाऽर्थ इति ) तदधिष्ठात्र्यपि देवता वागिष्यते । सर्वतश्चास्या मेघहेतुत्वात् मेघनामभ्य उत्तराणीति । स च वाक्शब्दः "वच परिभाषणे" (अ० प०) इत्यस्माद्धातोः । "क्विब्वचि०" (उ० २-५४) (पा० ३-२-१७८ वा०) इत्यादिना क्विपि दीर्घत्वे सम्प्रसारणाभावे च व्युत्पन्नः ॥

२. "श्रु श्रवणे" (भ्वा० प०) "इणभीका०" (उ० ३-४१) इत्यादिना विहितः कन्प्रत्ययो बाहुलकादस्मादपि भवति । गुणः कपिलादित्वाल्लत्वम् । धारेति "धृञ् धारणे" (भ्वा० उ०) कर्मणि भिदाद्यङ् ( पा० ३-३-१०४ ) टाप् । इडा ( ळा ) इला, इरा, इति त्रीणि नामानि तत्र "गोभूवाचस्त्विडा( ळा ) इलाः" "इरा भूवाक्सुराप्सु स्यादिति" चामरः । अत्राद्ययोः बह्वृचानां ळत्वमुक्तमिति ळलयोः साम्यम् । तथाच "इल क्षेपे" (तु० प०) "इगुपधज्ञा०" ( पा० ३-१-१३५ ) कः कर्तरि । केचित्तु कर्मणि । तथाच इल्यते क्षिप्यते ( प्रेर्यते ) उच्चारणकाले प्राणेनेति इला । इह तु "इड स्तुतौ" विति (अ० आ०) धातोः बाहुलकात्कः (पा० ३-३-१) ह्रस्वश्च पृषोदरादित्वात् इत्येवं दुर्गोक्तमनुसृत्य व्युत्पादितम् ॥

१. शोषकैरिति सायणः । तथाचात्र कर्तरि ल्युर्नन्द्यादित्वात् (पा० ३-१-१३४) ॥

२. "रुजो भङ्गे" (तु० प०) लङ् ॥

३. "पारावारे परार्वाची तीरे" इत्यमरात्तयोर्घातिनीम् । सायणस्तु परावति दूरदेशे विद्यमानस्यापि वृक्षादेर्हन्त्रीमिलाह ॥

**सत** इति कर्तृकारकावधारणम् । तद्धि शोषयतीति शुष्ममुच्यते । "शुष शोषणे" ( दि० प० ) "अविसिविसिशुषिभ्यः कित्" ( उ० १–१४१ ) इति मन्प्रत्ययः किलाद्गुणाभावः । अन्तर्भावितण्यर्थतायामिदम् । शुद्धस्य तु शुष्यत्यनेनारिरिति शुष्म ॥ स्कन्दस्वामिनस्तु–तत्र शोषयतेर्मनिन् "बहुलमन्यत्रापि संज्ञाछन्दसो"रिति इनो लुक् ॥ "परस्परसांयोगिकमपि बलं विशोषयति उपमेयतीत्यर्थः" इति हि तद्व्याख्यानम् । शुषिः प्रीणनार्थ इति माधवः ॥

## विसं विस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा ॥

**भेदनकर्मणो** भेदनार्थस्य **विस्यतेर्विसधातोः** (दि० प०) प्रेरणार्थस्यापि धातूनामनेकार्थत्वाद्भेदनेऽत्र वृत्तिः । बाहुलकात् कर्मणि "इगुपध०" (पा० ३–१–१३६) लक्षणे के **विसम्** "मृडाले तु विसं विश"मिति द्विरूपकोशः ॥ तथाच धातावेव वकारमेदेनापि पाठान्तरम् । एवञ्च बिसमित्यपि पाठो सु० मुद्रितपुस्तके लभ्यते । अनेकार्थत्वादेव धातोर्**वृद्धिकर्मणो वेति** । वर्धते हि तदहर्निशम् । अत्र कर्तैव क उक्तलक्षणलक्षितः ॥

## सानु समुच्छ्रितं भवति । समुच्छुन्नमिति वा ॥

समस्तं हि तत् **समुच्छ्रितं** सम्यक् उच्छ्रितमुन्नतं **भवति** । **अथवा सं** सम्यक् **उदूर्ध्वं नुन्नं** प्रेरितं भवति । अत्र "षणु दाने" ( त० उ० ) "दृसनिजनि०" ( उ० १–३ ) इत्यादिना ञुण् । उपधावृद्धिः ( पा० ७–२–११६ ) धातूनामनेकार्थत्वमभिप्रयन्भाष्यकारोऽत्र समुच्छ्राये समुन्नयने चादः प्रायुङ्क्त ॥

## महद्भिरूर्मिभिः । पारावतघ्नीं पारावारघातिनीं ।

एतत्साधनमुक्तमधस्तात् ( मन्त्रव्याख्यायाम् )

## पारं परं भवति । अवारमवरमवनाय ॥

## सुप्रवृत्ताभिः स्तुतिभिः सरस्वतीनदीं कर्मभिः परिचरेम ॥

**परं भवति** अवरस्मात्कूलात् तदेव **पारम्** स्वार्थिकः "प्रज्ञादिभ्यण्" ( पा० ५–४–३८ ) आदिवृद्धिः ( पा० ७–२–११७ ) **अवरं**–परस्मात्कूलात् ॥ अवरशब्दं निर्ब्रवीत्य**वनायेति** । यदवनाय रक्षणाय भवति तदवरं परं पारं हि दुर्गमत्वादवनाय न भवति । तथाच–अवधातोः ( भ्वा० प० ) रक्षणार्थादरन्वाचोपधावृद्धिर्बाहुलकात् ॥ अन्यत्सर्वं गतार्थम् ॥

१. अत्र दुर्गः विपर्ययेणापि ह्यभिधानानामर्थो भवतीत्येवंमन्यमानो भाष्यकारो बलनामसु पठितमपि सदेतदभिधानमेवमाह शुष्ममिति बलनामेति ॥

२. अत्राक्षेपप्रतिक्षेपौ दुर्गव्याख्यायां सविशेषमुपपादितौ द्रष्टव्यौ ॥

## ( अथोदकनामनिर्वचनम् )

## उदकनामान्युत्तराण्येकशतम् ॥

**उदकस्य नामान्युदकनामानि । उत्तराणि** प्रकृतेभ्यो वाङ्नामभ्यः । मेघाश्रया हि वाक् मेघोत्थं चोदकम् स्तनयित्नुशब्दपूर्वकं चेति वाङ्नामभ्य उत्तराणि उदकनामानि **एकशतम्** । एकाधिकं शतम् । (१०१) "अर्णः क्षोदः, क्षद्म" इत्यादीनि ॥ अरणशीलमर्णः । क्षिप्रमुनत्तीति क्षोदः । क्षीरिणमन्नं करोतीति क्षद्म । इत्येवमाद्यभ्यूहितव्यम् ॥

आह—

## उदकं कस्मात् ? ॥

इति । उच्यते—

## उनत्तीति सतः ॥

तद्धि यत्र गच्छति **तदुनत्ति** क्लेदयति । उन्दी क्लेदने ( रु० प० ) ( उ० २–३९ ) निपातनात्साधुः ॥ **सत** इति कर्तृकारकावधारणमित्यसकृदुक्तपूर्वम् ॥

## नदीनामान्युत्तराणि सप्तत्रिंशत् ॥

**नदीनां नामानि, उत्तराणि** प्रकृतेभ्य उदकनामभ्यः (३७) "अवनयः, यह्व्यः, खाः, सीराः," इत्येवमादीनि ॥ ( निघं० १–१३ ) अवनतेन निम्नेन प्रदेशेन यान्तीत्यवनयः । ह्वयन्त्यो यान्तीति यह्व्यः । ख्यातव्या भवन्तीति खाः । सरन्तीति सीराः । इत्येवमादि योज्यम् ॥

आह—

## नद्यः कस्मात् ?

१. "ऋ गतौ" ( भ्वा० प० ) "उदके नुट् च" ( उ० ४–१९२ ) इत्यर्तेरसुन्प्रत्ययः । क्षोद इति तु "क्षुदिर् संपेषणे" ( भ्वा० उ० ) ततोऽसुन् ( उ० ४–१८४ ) क्षुद्यत इति सतः । क्षुण्णं हि जलं भवति पर्वतादिभ्यः शिलादिष्वधःपातात् ॥ क्षिप्रमुनत्तीति दुर्गोक्तार्थे पृषोदरादित्वं शरणम् । एवं क्षद्मेत्यपि । स्कन्दस्वामिनस्तु–क्षद स्थैर्ये ( सौ० ) "अन्येभ्योऽपि दृश्यते" ( पा० ३–२–७५ ) इति मनिन् । जलाशये व्याप्य स्थिरं भवतीति प्राहुः ॥

२. पृषोदरादित्वाच्चलोपः । यातेश्चाकारलोपः । विच्छान्दसः । अवन्ति जगत्स्वोदकेनेत्यर्थे तु "अर्तिसृधृ" (उ० २–९५) इत्यादिनावतेरनिप्रत्ययो बोध्यः ॥ यह्व इति द्विधातुजरूपं, यातेर्ह्वेञश्च पृषोदरादिः ( पा० ६–३–१०९ ) व्यत्ययोऽपि धात्वोः । केचित्तु याताश्च प्राणिभिर्हूताश्च यह्वेष्विति व्याचख्युः । खा अपि तथैव ( पृषोदरादिः ) खनतेर्वावदारणार्थात् ( भ्वा० उ० ) "अन्येष्वपि दृश्यते" ( पा० ३–२–१०१ ) इत्यत्र "अपिशब्दः सर्वोपाधिव्यभिचारार्थः" इति भाष्यान्निरुपपदादपि जनिव्यतिरिक्तादपि डप्रत्ययः । वृत्रहननादिन्द्रेण खाताः । "इन्द्रो अस्मानरदद्वज्रबाहुः" ( ऋ० सं० ३–२–१३–१ ) इति श्रुतौ नदीवाक्यम् ॥

इति उच्यते—

**नदना भवन्ति शब्दवत्यः ॥**

नदन्तीति **नदनाः शब्दवत्यः** शब्दसंयुक्ता ह्येता **भवन्ति**। तथाच "णद् अव्यक्ते शब्दे" ( भ्वा० प० ) इति धातोर्नन्द्यादित्वात् (पा० ३-१-१३४) ल्युप्रत्यये योरनि (पा० ७-१-१) च कृते सति नदना भवन्ति। तत्रैव च पचाद्यचि तत्सन्नियोगेन टित्वस्यापि निपातनान्ङीपि ( पा० ४-१-१५ ) नद्यो भवन्ति ॥ तथाचोक्तं "नदट् चोरट् देवट् इत्यादयष्टितो नदीचोरीदेवी" इति ( सि० कौ० ) ॥

किञ्च—

**बहुलमासां नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन ॥**

**आसां** नदीनाम् अन्यदैवतेषु मन्त्रेषु **नैघण्टुकं वृत्तम्** अप्रधानम् **आश्चर्यमिव प्राधान्येन**–क्वचिदेव नदीदेवतो-मन्त्रः स्यात् ॥

**तत्रेतिहासमाचक्षते ॥**

यस्मिन्सूक्ते प्रधाना नद्य एव **तत्र इममितिहासं** पुरावृत्तं निदानभूत**माचक्षते** आचार्याः कथयन्ति ॥

तथाहि—

**विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव ॥**

**विश्वामित्रो** नाम गाधिराजतनयस्तपोऽतिरेकेण ब्रह्मवर्च-समासाद्य **ऋषिः** सन् **सुदासः पैजवनस्य** राज्ञः **पुरोहितो बभूव** ॥ स किमित्यग्रे वक्ष्यते। सम्प्रति प्रसक्तं विश्वामित्रपदं निर्वक्ति—

**विश्वामित्रः सर्वमित्रः ॥**

**सर्वस्यैव** हि स **मित्रम्**। तथाच "मित्रे चर्षौ" ( पा० ६-३-१३० ) इति पूर्वपदस्य दीर्घः। सर्वमेव वा तस्य मित्रमिति विश्वामित्रः। सर्वविश्वशब्दौ पर्यायौ ॥

अथ सर्वमिति किमुक्तं भवतीत्याह—

**सर्वं संसृतम् ॥**

यद्धि **संसृतं** सङ्गतमेकस्मिन्भवति तत्सर्वमित्याचक्षते ॥

अथ सुदास इति पदं निर्वक्ति—

**सुदाः कल्याणदानः ॥**

तस्य हि नित्यमेव प्रशस्तं दानमभवदिति स **सुदा** इत्युच्यते स्म। तथाच सु इत्यभिपूजितार्थे उपपदे "दास दाने" ( भ्वा० उ० ) इति धातोः क्विप्। तस्य षष्ठ्येकवचने सुदास इति ॥

**पैजवनः पिजवनस्य पुत्रः ।**

**पिजवनः पुनः स्पर्धनीयजवः ॥**

"जु" इति सौत्रो धातुर्गतौ वेगे च पठ्यते। ततो भावे ल्युटि ( पा० ३-३-९७ ) योरनः ( पा० ७-१-१ ) जव इति च "ऋदोरप्" ( पा० ३-३-५७ ) भाव एवेति समानार्थावेतौ। अपिश्चात्र स्पर्धायां तत्र भागुरिमतेऽल्लोपे स्पर्धार्हं जवनं वेगो यस्य स **पिजवनस्त**स्यापत्यं पुमान्**पैजवनः** "तस्यापत्यम्" ( पा० ४-१-९१ ) इत्यपत्यार्थेऽणादिवृद्धिः। ( पा० ७-२-११७ ) तदाह–**स्पर्धनीयजव इति**। पुनरिति वाक्यालङ्कारे ॥

**वाऽमिश्रीभावगतिर्वा ॥**

अथ **वा अमिश्रीभावगतिः**। न तस्य मिश्रीभूतपूर्वंगतिरन्यैर्वेगवद्भिः। अतिशैघ्र्यात्। तथाचात्रापिरमिश्रीभावे जुश्च गतावेव न, वेगे ॥ वाशब्द एको वाक्यालङ्कारेऽव्ययानां नानार्थत्वात्। एवमग्रेऽपि बहु ॥

**स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययावनुययुरितरे। स विश्वामित्रो नदीस्तुष्टाव गाधा भवतेति ॥**

**स** विश्वामित्रः **वित्तं** पौरोहित्योपार्जितं धनं **गृहीत्वा विपाट्छुतुद्र्योः** नद्योः **सम्भेदं** सङ्गमम् यत्र ते इतराभिः सिन्ध्वादिभिर्नदीभिः सम्भिन्ने ( एकीभूते ) तमित्यर्थः। **आययौ** आगतवान्। **तमितरे** तदनुयायिनस्तस्करा वा **अनुययुः** अनुजग्मुः। **स** ता नदीस्तितीर्षुस्**तुष्टाव**। यूयं **गाधाः** स्वल्पोदका **भवत इति** एतमर्थं पुरस्कृत्य ॥

कथं पुनस्तुष्टाव—

**अपि द्विवत् अपि बहुवत् ।**

**द्विवत्** द्विवचनसंयुक्तैर्मन्त्रैः। **बहुवत्** बहुवचनसंयुक्तैर्मन्त्रैः। अत्र अपिः कामचारक्रियायाम्। तथाच विश्वः 'अपि सम्भावनाप्रश्नगर्हाशङ्कासमुच्चये। तथा युक्तपदार्थे च कामचारक्रियासु च" इति ॥

१. मन्त्रद्रष्टृत्वमृषित्वम्। तथाचोक्तं"ऋषिर्दर्शनादि"–ति तच्च तपोबलेन क्षत्रियेष्वपि भवत्येव। तथाचोक्तम् "अनृष्यानन्तर्ये" ( पा० ४-१-१०४ ) इतिसूत्रे महाभाष्ये विश्वामित्रस्तपस्तेपे नानृषिः स्याम् इति। तत्रभवानृषिः संपन्नः। स पुनस्तपस्तेपे नानृषेः पुत्रः स्याम् इति तत्रभवान्गाधिरपि ऋषिः सम्पन्नः। स पुनस्तपस्तेपे 'नोऽनृषेः पौत्रः स्याम्' इति तत्रभवान्कुशिकोऽपि ऋषिः सम्पन्न इति। अत एव केषुचिदन्येष्वपि क्षत्रियेषु 'राजर्षि' पदं पुराणेषु श्रूयते ॥

२. न हि जगद्गुरुस्तपसातिमात्रेणापि ब्रह्मवर्चसं सम्भवतीति नञर्थस्य भ्रमं निराचष्टे।

३. मित्रशब्दो नपुंसकोऽपि वृत्तिविषये पुंल्लिङ्गोऽपि भवति। यथा "सातामित्रौ मित्रेचे"ति माघे ॥

**तद्यद्द्विवदुपरिष्टात्तद्व्याख्यास्यामोऽथैतद्बहुवत् ॥ २ ॥ ( २४ ) ॥**

तत्—तत्र । एवंसति यत् द्विवत् द्विवचनवत् तत्—उपरिष्टात् ( नि० ९-३९ ) "प्रपर्वतानाम्" ( ऋ० सं० ३-२-१२-१ ) इत्येतस्यामृचि व्याख्यास्यामः । अथ पुनः एतद्बहुवत् व्याख्यायतेऽनन्तरेण मन्त्रेण ॥ २ ॥ (२४)

**"रम॑ध्वं मे॒ वच॑से सो॒म्याय॒ ऋता॑वरी॒रुप॑ मु॒हूर्त॒मेवैः॑ । प्र सिन्धु॒मच्छा॑ बृह॒ती म॑नी॒षाव॒स्युर॑ह्वे कुशि॒कस्य॑ सू॒नुः ॥ ५ ॥"**

( ऋ० सं० ३-२-१२ )

रमध्वमिति । त्रिष्टुभ एताः । विश्वामित्रो नदीः प्रति ब्रूते—ऋतावरीः ऋतमुदकं तद्वत्यः हे नद्यः ! यूयं मे मम विश्वामित्रस्य सोम्याय सोमसम्पादिने ( उत्तीर्याहं सोमं सम्पादयिष्यामीत्येवं ) वचसे तदर्थम् । एवैः अयनैः । एभिरतिप्रवृद्धैरुदकैः । अवनैर्वा कामैरेतैरस्मत्प्रार्थनाविशेषैः ( उत्तरेम, गृहान्गच्छेम, वित्तं प्रापयेम, इत्येवमादिभिर्निमित्तैः ) प्रार्थ्यमाना अस्माभिर्मुहूर्तं मुहूर्तमात्रमुपरमध्वम् । उपपूर्वो रमिरुपसंहारे वर्तते, क्षणमात्रं शीघ्रगमनादुपरता भवत यावदुत्तरेयमहम् । "कालाध्वनोरत्यन्तसंयोगे" (पा० २-३-५) द्वितीया । यदैवमविशेषेणोच्यमानास्ताः सर्वा न शुश्रुवुः । तदैकां ( समीहितं प्रयोजनमकुर्वतीं पुरोवर्तिनीं ) शुतुद्रीं प्रति ब्रूते—कुशिकस्य राजर्षेः सूनुर्विश्वामित्रोऽहं बृहती बृहत्या ( महत्या ) मनीषा मनीषया ( मनस ईषया मनःपूर्विकया ) स्तुत्या प्रज्ञया वा अवस्युः आत्मनोऽवनं रक्षणं गमनं वा इच्छन् । अत्रावनमवस्तमिच्छुरित्यर्थे क्यचि ( पा० ३-१-८ ) सुगागमे ( पा० ७-१-५१ ) "क्याच्छन्दसि" ( पा० ३-२-१७० ) इत्युप्रत्ययः । सिन्धुं शुतुद्रिं त्वाम् अच्छाभिमुख्येन "अच्छो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययमि"ति हैमः । प्राह्वे प्रकर्षेणाह्वयामि । अह्वे इति ह्वयतेर्वर्तमाने लुङि ( पा० ३-४-६ ) च्लेः "आत्मनेपदेष्वन्यतरस्याम्" ( पा० ३-१-५४ ) इत्यङ्यातो लोपे इटि गुणः ॥ अत्र "छन्दसि परेऽपि" "व्यवहिताश्च" ( पा० १-४-८१+८२ ) ति उपसर्गयोर्व्यवहितप्रयोगः । ऋतावरीरिति "छन्दसीवनिपौ चे" ( पा० ५-२-१२२ वा ) ति मत्वर्थे ऋतशब्दाद्वनिप् "वनोरचे" ( पा०४-१-७ ) ति ङीप् रेफश्चान्तादेशः । "वाच्छन्दसी"-( पा० ६-१-१०६ ) ति पूर्वसवर्णदीर्घः । "शरादीनां चे" ( पा० ६-३-१२० ) ति पूर्वस्य दीर्घः । एवैरिति "इण् गतौ" ( अ० प० ) "इणशीभ्यां वन्" ( उ० १-१५० ) इति भावे वनि गुणः । बृहती-मनीषेत्युभयत्र तृतीयायाः पूर्वसवर्णदीर्घः (पा० ७-१-३९) ॥ ५॥

अथास्य भाष्यम्—

**उपरमध्वं मे वचसे सोम्याय सोमसम्पादिन ऋतावरीर्ऋतवत्यः ॥**

अवगतार्थमेतत् । अथैकपदनिरुक्तम्—

**ऋतमित्युदकनाम । प्रत्यृतं भवति ।**

तद्धि देशं देशम्प्रति ऋतं गतं भवति । ततश्च "ऋ गतावि"-( भ्वा० प० )-त्यस्मात् "गत्यर्थाकर्मके" ( पा० ३-४-७२ ) ति कर्तरि क्तप्रत्यये ऋतमुदकनाम भवति ॥

**मुहूर्तमेवैरयनैरवनैर्वा ॥**

अयनैरित्येतेर्भावे ल्युट् ( पा० ३-३-११५ ) योरनः ( पा० ७-१-१ ) गुणादेशोऽय् ॥ अवनैरित्यवतेः कान्त्यर्थस्य भावे रूपम् ।

**मुहूर्तो मुहुर्ऋतुः ॥**

एवं विगृह्य ऋतुशब्दं तावन्निर्ब्रवीति—

**ऋतुरर्तेर्गतिकर्मणः ॥**

गतिकर्मणः गत्यर्थे वर्तमानस्य अर्तेः "ऋधातोः" ( भ्वा० प० ) "अर्तेश्च" ( उ० १-७२ ) ति तुश्चाकित्त्वम् तेन गुणाभावः । "ऋतुर्मासि वसन्तादौ धीरे स्त्रीकुसुमेऽपि च" इति धरणिः । स हि गच्छत्येव ॥

अधुना मुहुःशब्दं निर्ब्रवीति—

**मुहुर्मूढ इव कालः ॥**

यः कालो मूढ इव अव्यक्तः सन् झटिति गच्छति, स मुहुःशब्देनोच्यते ॥

---

१. अनुक्रमेणोक्तास्तिस्रोऽपि ऋचः ॥

२. सोमा हि अनेनासद्वचसा देवतानामन्नभूता बहवः संपादिताः । ता यूयमस्मै प्रति विशिष्टाय वचसे । सत्यतार्थम् कथं नाम सत्यमिदं स्यादित्येवमर्थम् । इति दुर्गो व्याख्यत् ॥

३. गमनैः । सायणस्तु—पञ्चम्यर्थे तृतीयां मत्वा शीघ्रगमनेभ्य इति व्याख्यत् । युक्तं चैतत् । उपरमणे ह्यवधिरपेक्षिता । मूले तु भाष्यकार-( यास्क० )-वचनं यथाक्षरं दुर्गोक्तदिशा व्याख्यात तत्रापि फलतः पञ्चम्यां पर्यवसानं बोध्यम् । अवनैरिति व्याख्याने तु कान्त्यर्थस्य गत्यर्थस्य वाऽवतेरेव रूपमेवैरिति । तथाच करणतृतीयापि कथञ्चिदुपपद्यत एव ॥

४. मन्दवेगा गाधाश्च भवतेत्यर्थः ।

५. पितुर्गौरवान्ममापि गौरवमेताः कुर्युरित्यभिप्रायः ॥

६. "शतद्रुस्तु शुतुद्रिः स्यादि"त्यमरः । "सर्वतोऽक्तिन्नर्थादिति" ङीपि शुतुद्रीत्यपि । अतएव मन्त्रे "इमं मे गङ्गे यमुने सरस्वति शुतुद्री"ति ह्रस्वघटितः पाठ उपपद्यते ॥

७. भाष्ये तु—आभिह्वयामीत्येवं व्याख्यातमर्थतस्तदेवात्रापि ॥

१. कालसामान्यलक्षण ऋतुः । यद्यपि कोशे "द्वौ द्वौ मार्गादिमासौ स्यादृतु"रिति मासयुगस्यैवर्तुसंज्ञा कालविशेषप्रक्रम उक्ता तथापि "विशेषपरस्यापि क्वचित्सामान्ये लक्षणा" भवति ।

किञ्च—

**यावदभीक्ष्णं चेति ॥**

**यावदेव चाभीक्ष्णं** तावन्मुहुरिति । **समानार्थावेताविति भावः** । तथाचामरः "मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः" इति । एवं च मुहुर्न्न्ध्रुवमुहूर्त इति पृषोदरादित्वात्साधुः ॥ इतिशब्द आद्यर्थः । पुनरादिकमवगमयति ॥ तथाच पर्यायाभिधानार्थं इति फलति ॥ तथाच स्मर्यते "मुहूर्तं घटिकाद्वयम्" इति ॥

सारूप्यप्रसक्तं निरुच्यते—

**अभीक्ष्णमभिक्षणं भवति ॥**

तद्धि क्षणमाभिमुख्येन स्थितं **भवतीत्य**भीक्ष्णमुच्यते ॥ पृषोदरादित्वात्साधुः ॥

**क्षणः क्षणोतेः । प्रक्ष्णुतः कालः ॥**

**क्षणोते**-हिंसार्थस्य "क्षणुधातोः" (त० उ०) अच् (पा० ३-१-१३४) स हि **प्रक्ष्णुतः** प्रकर्षेण हिंसितः (हीनः) **कालः** । अल्पत्वात् । यद्यपि "क्ष्णु" धातुस्तेजने (अ० प०)वर्तते तथापीह हिंसार्थे प्रयुक्तोऽनेकार्थत्वाद्धातूनाम् ॥

**कालः कालयतेर्गतिकर्मणः ॥**

**गतिकर्मणो** गत्यर्थस्य **कालयतेर्ण्यन्ता**"कल गतौ संख्याने च" (चु० उ०) इति धातोः "पचाद्यच्" (पा० ३-१-१३४) **काल** इति भवति "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति मेदिनी । स हि ( कालः ) । सर्वाण्येव भूतानि कालयति क्षयं नयतीत्यर्थः ॥

**प्राभिह्वयामि सिन्धुम् । बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वाऽवनाय कुशिकस्य सूनुः ॥**

अवगतार्थमेतत् ॥

**कुशिको राजा बभूव ॥**

एतच्च तत्त्ववचनम् । अथ कुशिकशब्दं निर्ब्रवीति—

**क्रोशतेः शब्दकर्मणः । क्रंशतेर्वा स्यात्प्रकाशयतिकर्मणः ॥**

**शब्दकर्मणः** शब्दार्थस्य **क्रोशतेः** "क्रुश आह्वाने०" (भ्वा० प०) इति धातोरिकक्कर्तरि रलोपश्च पृषोदरादित्वात् । स हि साध्वेव क्रियतामिति नित्यमेव क्रोशतिस्म ॥ अथ वा— **प्रकाशयतिकर्मणः** प्रकाशार्थस्य **क्रंशतेर्नैरुक्तस्य** क्रमित्वस्य कुभावः शेषं पूर्ववत् । स हि प्रकाशयिता, साधूनां धर्माणामात्मनैव प्रकाशकः ॥

**साधुविक्रोशयिताऽर्थानामिति वा ॥**

अथवा-**साधुषु** ब्राह्मणेषु **अर्थानां विक्रोशयिता** दाताऽतः कुशिकः । अत्रापि क्रोशतेरेव दानार्थत्वं विशेषोऽन्यत्साधनं पूर्ववत् ॥

एवमुक्तवन्तं तं ( विश्वामित्रं )—

**नद्यः प्रत्यूचुः ॥ ३ ॥ ( २५ ) ॥**

प्रत्युत्तरं दत्तवत्यः ( उत्तरेण ) ॥ ३ ॥ (२५)

**"इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑हन् वृ॒त्रं प॑रि॒धिं न॒दीना॑म् । दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥ १ ॥"**

**इन्द्र** इति । हे विश्वामित्र ! **वज्रबाहुः** वज्रयुक्तो बाहुर्यस्यासौ वज्रबाहुस्तादृशो बलवान् **इन्द्रः अस्मान्** नदीः **अरदत्** अखनत् । कथं पुनरखनत्? उच्यते-**नदीनां** शब्दकारिणीनामपां **परिधिं** परितो निहितमुदकमन्तः कृत्वा परितो वर्तमानमित्यर्थः । तादृशं **वृत्रम्** वृणोत्याकाशमिति वृत्रो मेघस्तम् **अपाहन्** अप जघान । तस्मिन्हते आपः पतिताः ताभिर्गच्छन्तीभिर्वयं खाता एवं मेघहननद्वारेणाखनत् । न केवलमखनत्-किं तर्हि ? **सविता** सर्वस्य जगतः प्रेरकः । सर्वार्थप्रसविता वा । **सुपाणिः** शोभनहस्तः । उत्पत्तिस्थितिकर्तृत्वात् । तादृशो **देवो** द्योतमान **इन्द्रः** । अस्मान् **अनयत्** मेघभेदनं कृत्वा वर्षद्वारेण समुद्रमगमयत् । यत एवं सोऽस्माकं खनिता नेता चातस्तस्य तादृशसामर्थ्योपेतस्येन्द्रस्य **प्रसवे** अभ्यनुज्ञायाम् ( आदेशे ) वर्तमाना **वयम् उर्वीः** ऊर्णुवत्यः । सम्भजमाना वा तानि तानि देशान्तराण्यम्भोभिः । **यामो** गच्छामः । सोऽस्माकमीश्वरः स एवास्मानाज्ञापयितुमर्हति न त्वमिति न तव वचनादुपरमामहे ॥ उर्वीरिति-उरुशब्दा"द्वोतो गुणवचनात्"-( पा० ४-१-४४ )ति ङीष् ॥ ऐतिहासिकपक्षेतु नद्या वेगमवरुध्य स्थितो वृत्रो जले क्रीडन् अपां फेनेन विष्णोरादेशाद्वज्रीभूतेनेन्द्रेण हतस्ततो नद्या अवरोधे मुक्ते बहुजलं प्रावहदित्यनेका नदीस्तज्जलेन प्रावर्तन्तेतीन्द्रेणैव ताः खानिता इव इति व्य-

१. लोके तु-"हुर्च्छा कौटिल्ये" (भ्वा० प०) बाहुलकात् "अच्चिघृसि०" (उ० ३-८९) इत्यादिना क्तो मुडागमश्च भवति । "राल्लोप"-(पा० ६-४-२१) इति छलोपः "हलि चे"ति (पा० ८-२-७७) दीर्घश्च ॥

२. प्रापणमिह गतिः ।

१. अत्र सायणः । उर्वीः । उदकैः प्रभूता वयमिति व्याचख्यौ यास्कस्तु-ऊर्णोतेर्वृणातेर्वा कुरुशब्दं साधितवान् पृषोदरादित्वमस्य शरणम् । "ऊर्णुञ् आच्छादने" (अ० उ०) "वृङ् सम्भक्तौ" (क्र्या० आ०) संभक्तिः संश्लेषणम् ॥

२. गुणवचनत्वं चात्र "समस्तकृत्तद्धिताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तशब्दत्वमिति" नागेशः । तथाचोक्तं हरिणा "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुण"इति ॥

क्तोऽर्थः । अत्रार्थे नदीनां परिधिः परिधिवद्वेष्टको निरोधक इत्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**इन्द्रोऽअसानरदद्वज्रबाहू-रदतिः खनतिकर्मा-ऽपाहन्वृत्रं परिधिं नदीनामिति व्याख्यातम् । देवोऽनयत्सविता सुपाणिः । कल्याणपाणिः ॥**

**खनतिकर्मा** नैरुक्तः । पाणिनीये तु विलेखने पठितः ( भ्वा० प० ) विलेखनं च भेदनमेवेत्यर्थतस्तौल्यमेव ॥ **व्याख्यातमिति** । व्याख्यातप्रायं सुगममित्यर्थः । यद्वापूर्वैर्नैरुक्तैः शाकपूण्यादिभिरिति शेषः ॥ सुशब्दः कल्याणगुणवचन इत्याह-**कल्याणपाणिरिति** । प्रशस्तपाणिरित्यर्थः ॥

अथ पाणिशब्दं निर्ब्रवीति—

**पाणिः पणायतेः पूजाकर्मणः ।**

**प्रगृह्य पाणी देवान्पूजयन्ति ॥**

**पूजाकर्मणः** पूजार्थस्य । पूजात्र स्तुतिः । तथाच "पण व्यवहारे-स्तुतौ च" (भ्वा० प०) इति पाणिनिः । ततो बाहुलकात् करणे इण् ( पा० ३-३-१०८ वा० ) उपधावृद्धिः । आयस्तु विकल्पित आर्द्धधातुके (पा०३-१-३१) ॥ कथं ज्ञायते-**प्रगृह्य पाणी**संयतौ कृत्वा, ततः **देवान्पूजयन्तीति** ॥

**तस्य वयं प्रसवे याम उर्वीः ।**

**उर्व्य ऊर्णोतेर्वृणातेरित्यौर्णवाभः ॥**

**अत्र** वृणोतेरित्यपपाठः । स्वादौ "वृञ् वरणे" इत्यस्यैव पाठात् । इह तु सम्भक्त्यर्थतया दुर्गेण व्याख्यात इति "वृङ् सम्भक्तौ"-विति क्र्यादेरेव ग्रहणमित्युत्पश्यामः । **और्णवाभः** कश्चनाचार्यः प्राह । इत्थम्—

**प्रत्याख्यायान्तत आशुश्रुवुः ॥ ४ ॥ २६ ॥**

पूर्वमेवं तमृषिं **प्रत्याख्याय** निराकृत्य ( न तवाज्ञां करिष्यामीति प्रतिषिध्य ) **अन्ततः** अन्ते ( पश्चात् ) तत्सूक्तस्य । **आशुश्रुवुः** । आश्रुतवत्यः ( प्रतिज्ञातवत्यः ) ता नद्योऽनयर्चाऽनुपदं वक्ष्यमाणया 'तस्मा' इति शेषः ॥ ४ ॥ (२६)

**"आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन । नि ते नसै पीप्यानेव योषा मर्यायेव कन्या शश्वचैते ॥ ५ ॥"**

( ऋ० सं० ३-२-१३ )

**अत** इति । हे **कारो !** स्तुतिकर्तः (हे विश्वामित्र !) करोतेरुण् (उ० १-१) वृद्धिः ॥ **ते** तव **वचांसि** इमानि उक्तपूर्वाणि वाक्यानि वयम् **आशृणवाम** । आभिमुख्येन कार्त्स्न्येन वा शृणवाम, तव समीहितं करवाम । **अनसा** शकटेन सह **रथेन** च **ययाथ** याहि । लोडर्थे लिट् (पा० ३-४-६) । यतः **दूरात्** आगतोऽसि परिश्रान्तः । ( तस्मात्कारुण्यं नस्त्वयि अत आदरवत्यो ब्रूमोऽनसा रथेन च याहीति ) वयं च **ते** त्वदर्थं **निनंसै** नीचैर्नमाम ( प्रत्येकविवक्षया चैकवचनं निनंसै इति ) सुखं गन्तुं गाधोदका भवामेत्यर्थः । अत्र दृष्टान्तः **पीप्यानेव योषा** यथा योषा स्त्री ( माता ) पीप्याना पाययमाना ( पुत्रं स्तनं पाययन्ती ) निनमेत् ( प्रह्वीभवेत् ) एवम् । एवमुक्त्वा-पुत्रोपमया कदाचिदयं क्रोधमियादिति मन्वानाः सत्यः (नद्यः) पितृकन्यासम्बद्धामन्यामुपमामुपादिरे-**मर्यायेव कन्या शश्वचैते** इति । यथा कन्या-कुमारी ( शिशुः ) मर्याय मनुष्याय (निघं० २-३) पित्रे भ्रात्रे वा शश्वचै परिष्वजनाय नम्रा भवति तद्वत्ते त्वदर्थम् प्रह्वीभवामः । ते इति पुनरुक्तिरादरार्था ॥ निनंसै इति "णमु प्रह्वत्वे" ( भ्वा० प० ) इत्यस्य लेट्युत्तमैकवचने "सिब्बहुलम्" (पा० ३-१-३४ ) ति सिप् । "वैतोऽन्यत्रे"-ति ( पा० ३-४-९६ ) ऐकारादेशः । पीप्यानेति "पीङ् पान" इत्यस्यान्तर्भावितण्यर्थस्य लिटि कानचि रूपम् । शश्वचै इति "ष्वञ्ज परिष्वङ्ग" इत्यस्मात् (भ्वा० आ०) सम्पदादिलक्षणो भावे क्विप् पृषोदरादित्वादिष्टरूपसिद्धिः ॥ ५ ॥

अथास्य भाष्यम्—

**आशृणवाम ते कारो ! वचनानि । याहि दूरादनसा च रथेन च । निनमाम ते पाययमानेव योषा पुत्रं, मर्यायेव कन्या परिष्वजनाय । निनमा इति वा ॥**

---

१. संप्रत्याङ्पूर्वकः श्रुधातुः प्रतिज्ञायां वर्तते । तथाचामरः "संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः । अङ्गीकाराभ्युपगमप्रतिश्रवसमाधय" इति । अतएव तस्मा इति चतुर्थ्यपि तद्योगे । तथाच सूत्रम् "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता" (पा० १-३-५९ ) इति । अत्र न केवलं प्रतिज्ञैव धात्वर्थः किन्तु प्रवर्तनपूर्विका सा । अतएव पूर्वस्य प्रवर्तनरूपव्यापारस्य कर्ता मुनिः सम्प्रदानमिति तस्माच्चतुर्थी । यथा विप्राय गामाशृणोतीति, विप्रेण मह्यं देहीति प्रवर्तितस्तं प्रतिजानीत इत्यर्थः ।

१. स्तोत्रं कुर्वाण ! इति सायणः । स्तोमानां कर्तः ! इति दुर्गः । अर्थतस्तु तौल्यमेव स्तुतिविशेष एव स्तोम उच्यते ॥

२. तदा श्रुतं भवति । यदा तद्वचः क्रियते, श्रूयमाणमपि हि तन्नैव श्रुतं भवति यन्न क्रियत इति । वस्तुतस्तु ते तव वचांसि वयमाशृणवाम प्रतिजानीमः । करिष्यामीत्येवमित्यर्थः ॥ तथा चैतद्यथा सायणवचनं व्याख्यातम् ।

३. अत्र "गम्यमानापि क्रिया कारकविभक्तीनां निमित्तमि"ति ( पा० १-४-३१ वा० ) पञ्चमी ॥ तत एव गत इति क्रियाध्याहारोऽपि ॥ यथा कस्मात्त्वं ? नद्याः । इति । महाभाष्ये तु "प्रश्नाख्यानयोश्चे"( पा० २-३-२८ वा० )ति वार्तिकमेतदर्थं वर्तते ॥

४. कथं नाम परिष्वजेत मामयमित्यभिप्रायेण यथा सा निनमेदेवं वयं तव ( त्वदर्थं ) निनमामेत्यर्थः ॥

निनंसै इति पदस्य **निनमाम** इत्येवं परिणामः । अथवा **निनमै** इति । निगदव्याख्यमन्यत् ॥

**( अथाश्वनामनिर्वचनम् )**

## अश्वनामान्युत्तराणि षड्विंशतिः ॥

अश्वस्य नामानि **अश्वनामानि** । **उत्तराणि** प्रकृतेभ्यो नदीनामभ्यः । अब्जा एव ह्यश्वाः ॥ एवं ह्युक्तम्—"अप्सु जाता अश्वाः स्वादेवैनान्योनेर्जनयन्ति" इति । तस्मान्नदीनामभ्य उत्तराण्यश्वनामानि (२६) "अत्यः, हयः, अर्वा" इत्येवमादीनि ॥ अतति गच्छतीत्यत्यः । हेयति गच्छति, हन्ति वाध्वानमिति वा हयः । ईरणवानर्वा, गमनवानित्यर्थः ॥ एवमादि योज्यम् ॥

## तेषामष्टा उत्तराणि बहुवत् ॥

**तेषाम्** अश्वानाम् । **अष्टौ** यानि **उत्तराणि** नामानि अव्यथय इत्येवमादीनि तानि **बहुवत्** । बहुवचनसंयुक्तानि भवन्तीत्यर्थः । ( नित्यबहुवचनान्तानीति यावत् ) आह—

## अश्वः कस्मात् ?

इति । उच्यते—

## अश्नुतेऽध्वानम् । महाशनो भवतीति वा ॥

**अश्नुते**-व्याप्नोति । "अशू व्याप्तौ" ( स्वा० आ० ) "अशूप्रुषिलटि०" (उ० १-१५१) इति क्वन् । अथवा-**महाशनो** बहुभोजी **भवतीति** अश्व उच्यते । तथाच"अश भोजन" ( क्र्या० प० ) इत्यस्मादेवाश्नातीत्यश्वः । बहुलमर्थतः । सर्व एव ह्यश्नातीति तेन नामाभिधानमतिशयार्थं गमयति । यथा हि मत्वर्थप्रक्रमे धनवानित्युक्तेऽधिकधनत्वमुक्तं भवति ॥

## तत्र दधिक्रा इत्येतत् दधत्क्रामतीति वा । दधत्क्रन्दतीति वा । दधदाकारी भवतीति वा ॥

**तत्र** तस्मिन् षड्विंशे अश्वाभिधानगणे **दधिक्रा** इत्येतत्पदं सन्दिग्धम् । तत्पुनरेतत्-**दधत्** धारयन्स्वारोहिणं, **क्राम-तीति** दधिक्राः ? अथवा-**दधत्०** **क्रन्दति** हेषारवं करोति **इति** दधिक्राः ? अथवा-**दधत्०** **आकारी** आकारवान्

१. उच्चैःश्रवआदीनां तथैवोत्पत्तेः श्रवणात् ॥

२. "अत सातत्यगमने" ( भ्वा० प० ) ततः "कृत्यल्युटो बहुलमि"ति ( पा० ३-३-११३ ) कर्तरि करणे वा यत् । अथवा "अघ्न्यादयश्चे"ति ( उ० ४-११० ) यत्प्रत्ययो द्रष्टव्यः ॥ "हय-गतिविक्रमणे" ( भ्वा० प० ) इति वृत्तिः । अश्वादीनां गतिविशेषो विक्रमणमिति च । "पचाद्यच्" ( पा० ३-१-१३४ ) हिनोतेर्वा ॥ हन्तेस्तु यत् "पृषोदरादि"त्वान्नलोपोऽपि । अवेररणवानिति ( नि० १०-३१ ) भाष्यव्याख्यानमर्थप्राप्तवचनं तदेवानुवदति-ईरणवावेंति । तथाचार्तेरेव गतिप्रापणयोर्वर्तमानात् ( भ्वा० प० ) "स्नामदी"त्यादिना ( उ० ४-१०९ ) वनिप् । ईरपि गत्यर्थ एव ( अ० आ० )

भवति **इति** दधिक्राः ? स हि अधिरूढे अश्वारोहे आकुञ्चितग्रीव ईषदवनतमध्यभाग उद्धतकन्धरः कुञ्चितघोणः स्तिमितचक्षुः विपुष्पितसर्वगात्रः कर्णशुक्तिकाकारी भवति इति ॥ तथाच सर्वत्र दधच्छब्दः पूर्वपदं तस्य "पृषोदरादि"त्वात्तकारलोप इकारान्तादेशश्च । क्रामतेः क्रन्दतेराङ्पूर्वात्करोतेर्वोत्तरपदं, तत्र-"क्रमतेः" ( भ्वा० प० ) "जनसनखनक्रमगमो विट्" ( पा० ३-२-६७ ) इति विट्प्रत्ययः "विड्वनोरनुनासिकस्यात्" (पा० ६-४-४१) इत्यात्वम् । क्रन्देर्वा (भ्वा० प०) "अन्येभ्योऽपि दृश्यन्ते" (पा० ३-२-७५) इति विच् । व्यत्ययेनानुनासिकस्यात्वम् । दकारलोपश्च "पृषोदरादि"त्वात् । करोतेश्च क्विप् आङ् च धातोः परो यणादेशश्च । दधत् इति तु "नाभ्यस्ताच्छतुः" ( पा० ७-१-७८ ) इति नुमभावेन ॥

## तस्याश्ववद्देवतावच्च निगमा भवन्ति ॥

तस्यास्य दधिक्राशब्दस्य **अश्ववत्** अश्वसंयुक्ता **देवता-वत्** देवतासंयुक्ताश्च **निगमा भवन्ति** ॥

## तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतदश्ववत् ॥ ५ ॥ २८ ॥

**तत्** "एतदुच्यते" इति शेषः । **यद्देवतावत्** अस्य दधिक्राशब्दस्य **तत् उपरिष्टात्** ( नि० १०-३१ ) "आर्द-धिक्राः शवसा" ( ऋ० सं० १०-६-१६-१ ) इत्यस्यामृचि । **व्याख्यास्यामः** । **अथ**-पुनर्यत् **अश्ववत्** अस्य, तत् **एतत्** "व्याख्यायत" इति शेषः ॥ ५ ॥ २८ ॥

**"उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि ॥ क्रतुं दधिक्रा अनु सन्तवीत्वत् पथामङ्कांस्यन्वा पनीफणत् ॥४॥"**

( ऋ० सं० ३-७-१४ )

**उतस्येति** । गोतमपुत्रस्य वामदेवस्येयमार्षं जगती । वाजपेये वाजियुक्तं रथमधिरुह्य यजमानोऽनुवाकं जपति तत्रैषा । **उत**-अपिच **स्यः** स **वाजी** वेजनवान् ( भयवान् चलनवान्वा) अश्वरूपो देवः, विसर्गलोपश्छान्दसः ( पा०६-१-१३३ ) **ग्रीवायां** (नि) गरणसाधनायां कण्ठे उरसि वा बन्धेण **बद्धो अपि** अथ **कक्षे** कक्ष्यया, अथ **आसनि** मुखे खलीनेन, च बद्धः

१. परेभ्यो भयदाता । परेषां हि तं दृष्ट्वा भयमुत्पद्यते । अथवा स नित्यं चलनशील इति वाजीत्युच्यते । "ओविजी भयचलनयोः" ( रु० प० ) इत्यस्माण्णिनिस्ताच्छील्ये "बहुलमाभीक्ष्ण्ये" ( पा० ३-२-८१ ) इति । बहुलवचनादनुपपदेऽपि । इकारस्याकारश्च ॥

२. अत्रास्य शब्दस्य "पद्दन-" (पा० ६-१-६३) इत्यादिनाऽसन्नादेशः । एवमनेकेषु स्थानेषु बद्धः तथापि तुरण्यत्येव । अन्यो ह्येकस्मिन्नपि प्रदेशे बद्धश्चलितुमपि न शक्नोति किमुत त्वरितुम् । अत्र सायणः । "बद्धपल्यङ्कस्योक्तेषु स्थानेषु पाशबन्धाः सम्भवन्ति" इति व्याख्यन्नश्वस्य तथा ( पल्यङ्किका- ) बन्धमत्राचख्यौ ॥

( एवमनेकेषु स्थानेषु बद्धः ) अपि सन् **क्षिपणि** क्षेपणम् कशाघातम् **अनु** तत्समनन्तरमेव **तुरण्यति** तूर्णमश्नुतेऽध्वानम् । "तुरण त्वरायाम्" "कण्ड्वादिलात्" ( पा० ३-१-२७ ) यक् ॥ किंचायं **दधिक्रा** देवः ( अश्वः ) **क्रतुम्** कर्म ( आत्मीयं गमनं ) ( निघं० २-१ ) प्रज्ञां वा ( निघं० ३-९ ) अश्वारोहस्य, **अनु** अनुसृत्य **सन्तवीत्वत्** सन्तनोति, काममभिप्रेतार्थेन, शीघ्रगामित्वात् । किंच यान्यपि च कानिचित् **पथां** मार्गाणाम् **अङ्कांसि** अङ्कितानि कुटिलानि स्थलानि सन्ति, तान्यपि **अनु** अनुलोमानीव कुर्वन् आशुगामित्वात् । **आ** आभिमुख्येन, **पनीफणत्** पुनःपुनर्भृशं वा फणति गच्छतीत्यर्थः ॥ ४ ॥

अथास्य भाष्यम्—

**अपि स वाजी वेजनवान् क्षेपणमनु तूर्णमश्नुतेऽध्वानम् । ग्रीवायां बद्धः ॥**

निगदव्याख्यातमेतत् ॥

अथैकपदनिरुक्तम्—

**ग्रीवा गिरतेर्वा, गृणातेर्वा, गृह्णातेर्वा,**

**गिरतेः** "गॄ निगरणे" ( तु० प० ) इत्यस्य गिलनार्थस्य । तया हि गिलत्यन्नम् । अथवा **गृणातेः** शब्दार्थस्य ( क्र्या० प० ) तया हि शब्दो गीर्यते ( उच्चार्यते ) **गृह्णातेर्वा** ( क्र्या० उ० ) तया क्षुदकादि गृह्यते । सर्वत्र "शेवयह्वजिह्वाग्रीवा" ( उ० १-१५४ ) इत्यादिना निपातनात्साधुत्वम् । एकोवा शब्दोवाक्यालङ्कारे ॥

**अपि कक्ष आसनीति व्याख्यातम् ।**
**क्रतुं दधिक्राः । कर्म वा प्रज्ञां वा ॥**

सुगममेतत् । व्याख्यातं चाधस्तात् ( मन्त्रव्याख्यायाम् ) ॥

अथ पुनरेकपदनिरुक्तम्—

**अनुसन्तवीत्वत् । तनोतेः पूर्वया प्रकृत्या निगमः ॥**

**तनोते**-विस्तारार्थस्य ( त० उ० ) **पूर्वयेति** । षड्विधो हि धातुः । तथाचोक्तम्—"प्रकृत्यन्तः सनन्तश्च यङन्तो यङ्लुगेव च । ण्यन्तो ण्यन्तसनन्तश्च षड्विधो धातुरुच्यते" इति । आसां षण्णां धातुप्रकृतीनां या पूर्वा प्रकृतिस्तयैव निगमः, न सन्प्रकृतीत्यादीनामन्यतमया । सर्वथा चैष निपातशब्दो नैगमस्तवीत्वदिति ॥ अनुसमावुपसर्गौ ॥

---

१. त्वरयति गन्तुमिति सायणः । "तुरण त्वरायां" (क० प०) यक् ( पा० ३-१-२७ ) अत्र दुर्गः । अपि कशाप्रहारमनु तुरण्यति । अभ्यनाहत एवेत्यपिशब्दः ॥

२. भाष्यकारेणेत्थमेव व्याख्यातम् । अत्र सायणः प्रवृद्धबलवान्सन् इति व्याचख्यौ । एतन्निर्वचनं मूल एव स्फुटम् ॥

**पथामङ्कांसि, पथां कुटिलानि ।**
**पन्थाः पततेर्वा पद्यतेर्वा पन्थतेर्वा ॥**

त्रयोऽपि ह्येते गत्यर्थाः एषामन्यतमस्य पतति पद्यते पन्थति वाऽनेनेति पन्थाः । आद्ययोः "पतस्थ चे"-ति ( उ० ४-११ ) इति स्थोऽन्तादेशश्च । अन्ते "पथिमथिभ्यामिनिः" ( उ० ४-१० ) इतीनिः । यद्यपि "पथि गतौ" इत्येष ( चु० प० ) नित्यण्यन्तस्तथापि "अनित्यण्यन्ताश्चुरादयः" इति णिजभावे रूपम् । अत्रेदित्वमेवानित्यत्वे गमकम् ॥

**अङ्कोऽञ्चतेः ॥**

गत्यर्थस्य ( भ्वा० प० ) "सर्वधातुभ्योऽसुन्" ( उ० ४-१८८ ) इत्यसुन् चस्य कुत्वं च बाहुलकात् । वस्तुतोऽत्र "अङ्कतेः" इति पाठो युक्तः । "अकि कुटिलायां गतौ" ( भ्वा० प० ) इत्यस्येत्यर्थः । यदि तु अकेत्येव तत्र पाठस्तदा "अकि लक्षण"इत्यस्य ( भ्वा० आ० ) बोध्यः ॥

**आपनीफणदिति फणतेश्चर्करीतवृत्तम् ।**

**फणतेः** गत्यर्थस्य ( भ्वा प० ) **चर्करीत**मिति यङ्लुगन्तस्य नाम तेन **वृत्तं** निष्पन्नमित्यर्थः । तथाच पा० सूत्रं "दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्०" ( ७-४-६५ ) इत्यादि ॥

**( अथादिष्टोपयोजननिर्वचनम् )**

**दशोत्तरण्यादिष्टोपयोजनानीत्याचक्षते ॥**
**साहचर्यज्ञानाय ॥**

**दश** यानि **उत्तराणि** नामानि "हरी इन्द्रस्य" "रोहितोऽग्नेः" इत्येवमादीनि । तान्या**दिष्टोपयोजनानि** आदिष्टमुपदिष्टमुपयोजनमुपयोगो येषां तथाभूतानी**त्याचक्षते** आचार्याः । कुतः **साहचर्यज्ञानाय** । अयमर्थः । अश्वनामसाहचर्येण "इन्द्रस्य हरी" इत्युक्ते हरितवर्णावश्वावेव हरीपदेन गृह्येते । तथाच विश्वः "हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः" इति ॥ एवमग्नेर्लोहितवर्णावित्येवम् ॥ अत्र स्कन्दस्वामिनः । "हरी इन्द्रस्य" सोमपानक्रियायाः साधनत्वात् इति । तथाच हरत्याभ्यामिति हरी । "हृञ् हरणे" ( भ्वा० उ० ) "हृ पिषि रुहि०" ( उ० ४-११५ ) इत्यादिनेन्प्रत्ययः । अत्र ताण्ड्यब्राह्मणम् "पूर्वपक्षपरपक्षौ वा इन्द्रस्य हरी ताभ्यां हीदं सर्वं हरती"ति । ( ६-१-१ ) "ऋक्सामे वा इन्द्रस्य हरी" इत्यैतरेयब्राह्मणम् ( २-३-६ ) "ऋक्सामेवै हरी" इति यजुर्ब्राह्मणम् ( ४-४-३६ ) परमेतावश्वावेव रूपितौ । तथाच निगमः "इन्द्रो हरी युयुजे अश्विनारथम्" (ऋ० सं० २-३-५-१) ॥ एवं रोहितोऽग्नेः । "हृसृरुहियुषिभ्य इतिः" ( उ० १-९४ )

---

१. पतञ्च मुकुटेनोक्तम् । बाहुलकत्वमेवास्य गतिः पाणिनीयानाम् ॥

२. एष च पाठो नैरुक्तसंमतः । कुटिलानीति निर्वचनात् ॥

इति इतिप्रत्ययः । रोहन्ति आरोहन्ति रथं वहन्त्यादिवमिति रोहितः । "रोहिदश्व शुचिव्रत" ( ऋ० स० ६-३-३२-१ ) इति निगमात् ॥

( अथ ज्वलतिकर्मधातुनिर्वचनम् )

**ज्वलतिकर्माण उत्तरे धातव एकादश ॥**

य एव ह्यश्ववन्तो ( महाधना ) भवन्ति त एव ज्वलन्तीव तेजसाऽतोऽश्वनामभ्य उत्तरे ज्वलत्यर्था धातवः (११) "भ्राजते, भ्राशते, भ्राश्यती"त्येवमादयः ॥

**तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि ॥ ६ ॥ २८ ॥**

इति श्रीमद्यास्कमु० प्र० निरुक्ते शास्त्रे नैघं० काण्डे द्वि० ध्यायस्य सप्तमः पादः ॥ २ ॥ ७ ॥

**तावन्त्येकादशैव** । "जमत्, कल्मलीकिनम्, जञ्जणाभवन् मल्मलाभवन्" इत्येवमादीनि ॥ **ज्वलतो** देदीप्यमानस्य यस्य कस्यचन **नामधेयानि** नामानि । स्वार्थे धेयप्रत्ययः ( पा० ५-४-२५ वा० ) जमति गच्छतीति जमत् । जमतिर्गत्यर्थश्छान्दसः । ततोलटः शतरि रूपम् । कमहं मलिनं शोधयामीति कल्मलीकिनम् । कल्मलीकं भवेदिति माधवः । पृषोदरादिः । एवमुत्तरे अपि । जनं भावयतीति जञ्जणाभवन् । "मल्मला भवन्तीत्यासादयामी"ति निगमः । एवम् "नमस्या कल्मलीकिनं नमोभिः" ( ऋ० सं० २-७-१७-३ ) "अर्चिषा जञ्जणाभवन्" ( ऋ० सं० ६-३-३०-४ ) इत्यपि निगमौ भवतः ॥ नामधेयानीति द्विरभ्यासोऽध्यायसमाप्त्यर्थः ॥ ६ ॥ (२८)

**इति श्रीमद्यास्कमुनिप्रणीतनि० ल० वि० नैघ० काण्डे द्वितीयाध्यायस्य सप्तमः पादः अध्यायश्च समाप्तः ॥ ॥ २ ॥ ७ ॥**

---

## अथ तृतीयाध्यायस्य प्रथमः पादः ।

( अथ कर्मनामनिर्वचनम् )

अथ पूर्वाध्यायान्ते जमदादिशब्दान्निघण्टूक्तानभिसन्धाय तावन्त्येवोत्तराणि ज्वलतो नामधेयानीत्युक्तम् तदेतज्ज्वलनकर्मसम्बन्धादाह—

**कर्मनामान्युत्तराणि षड्विंशतिः ॥**

इति । क्रियत इति कर्म, कर्मणो नामानि **कर्मनामानि** । सति साधारण्येऽनाश्रितविशेषाणां कर्मणां नामधेयानि । असाधारणानि च वाक्यार्थवशान्निर्णेतव्यानि । ज्वलतीवासौ कर्माणि मया क्रियन्त इति । **उत्तराणि** च **प्रकृतेभ्यो** ज्वलन्नामभ्यः । कियन्ति पुनस्तानि ? **षड्विंशतिरिति** । षडधिका विंशतिरिति मध्यमपदलोपी समासः । षट् च विंशतिश्चेति वा । तानि चापः, अप्नः, दंसः, इत्येवमादीनि ॥ आप्यते पुरुषेणेत्येवमेषां साधनानि निघण्टुभाष्ये पृथगेवाभिहितानीति तत एव द्रष्टव्यानि । एवमग्रेऽपि ॥

अथ कर्मपदं निर्ब्रवीति—

**कर्म कस्मात् ? क्रियत इति सतः ॥**

इति । **सत** इति कर्मकारकाभिधानं, कर्मणि ह्यत्र मनिन्नौणादिकः ( उ० ४-१४५ ) गुणः ॥

( अथापत्यनामनिर्वचनम् )

**अपत्यनामान्युत्तराणि पञ्चदश ॥**

**अपत्यस्य पुत्रस्य नामानि** । **उत्तराणि प्रकृतेभ्यः** कर्मनामभ्यः । सर्वकर्मणामपत्योत्पादनकर्मैव प्रधानं पितॄणामपाकरणद्वारेणेति कर्मनामभ्य **उत्तराणि** अपत्यनामान्यभिहितानि । कियन्ति पुनस्तानि—**पञ्चदश** । पूर्ववत्समासः । तानि च तुक् तोकं तनय इत्यादीनि निघण्टूक्तानि ॥

---

१. एष च देवराजयज्वधृतः ॥

१. तथाच—आप्यते पुरुषेणैतदाप्नोति वा पुरुषमेतदिति अपः अप्न इत्येवमादि योज्यमिति दुर्गः । अत्र फलरूपेणेति योज्यम् । निघण्टुभाष्ये तु—आप्नुवन्ति हि तत्कर्तारम् । आप्नोति वा तान्फलरूपेणेत्युक्तम् । साधितं च "आप्लृ व्याप्तौ" ( स्वा० प० ) "आपः कर्माख्यायां ह्रस्वो नुट् च वा" ( उ० ४-२०२ ) इत्यसुन् विकल्पेन नुडागमश्चेति ॥ दंस इति तु—अनेकधा साधितं "दसि दंसनदर्शनयोः" ( चु० आ० ) असुन् ( उ० ४-१८४ ) दर्शयति हि तत्तत्कारणेन । दृश्यते दृष्टिभिरिति वेत्येवमादि । तत्रैव द्रष्टव्यम् । अत्र "दर्शनदंशनयोः" इत्येवं धातुपाठे साम्प्रतं पठ्यते ॥

२. अत्र—तुक् तकतेर्धातोस्तुज्यतेर्वा, तोकं तुचतेः । तनयस्तनोतेरिति वक्ष्यतीति दुर्गः । तत्र तकतिर्हसनार्थः (भ्वा० प०) ततः करणे क्विप् उपधाया उत्वं च बाहुलकात् । तकति (हसति) अनेन ( जातेन ) इति तुक् । तुज्यतेस्तुचतेरिति दैवादिकत्वमनयोरभिमत्य । वस्तुतस्तु—"तुज हिंसायां" ( भ्वा० प० ) क्विप् । तोजति हिनस्ति (क्लेशयति) मातापितरौ गर्भवासादिना । तथाच मन्त्रः "यदा पिपेष मातरं पितरं पुत्रः" इत्यादि । तुजिर्गत्यर्थः प्रेरणार्थश्चेति माधवः । क्विप् । गच्छत्यनेन पितृलोकं पिता । गच्छत्यनेनानृण्यं पितृस्य इति वा । प्रेर्यते प्रसवकाले वायुनाऽपिवेत्येवमादि ( निघं० भा० ) द्रष्टव्यम् । तोकं तु "तुद् व्यथने" ( तु० प० ) "पुंसि संज्ञायां घः" ( पा० ३-३-११ ) इति घप्रत्ययः । पृषोदरादित्वाद्दस्य कः । तुद्यतेऽनेन माता, गर्भवासकाल इति तोकः । तनयश्च "तनु विस्तारे" ( त० पु० ) "बलिमलितनिभ्यः कयन्" ( उ० ४-९७ ) इति कयन्प्रत्ययः । तनोति विस्तारयति कुलमिति तनय इत्येवं ( निघं० भा० ) द्रष्टव्यम् ॥

अपत्यपदं निर्ब्रवीति—

**अपत्यं कस्मात्? अपततं भवति, नानेन पततीति वा ॥**

अपगत्य पितुः सकाशात् ( पृथगिव ) ततं विस्तृतं भवतीत्यपत्यम् । अथवा–अनेन जातेन पित्रादिर्न पतति नरक इतीदमपत्यम् अपपूर्वान्ननुपूर्वाद्वा तनोतेः पततेश्च "अघ्न्यादयश्च"–( उ० ४–११० ) ति यक्प्रत्ययान्तो निपातः । तनोतेष्टिलोपश्च ॥

अथात्र पुनर्विप्रतिपद्यन्ते–द्वयोः क्षेत्रि–बीजिनोः सन्निपाते कतरस्यापत्यं भवतीति ?—

**तद्यथा जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः ॥ १ ॥**

तत् एतद् "उच्यते" इति शेषः । यथा येन प्रकारेण ( यया चोपपत्त्या ) जनयितुः बीजिन एव प्रजा अपत्यं "भवती"–ति शेषः । एवमर्थीये एवमर्थे "गहादिभ्यश्च" ( पा० ४–२–१३८ ) स्वार्थे छः । छस्येयः ( पा० ७–१–२ ) ऋचौ अग्रेतन्यौ ( द्वितीय-तृतीयसूत्रोक्ते ) अत्रावादेशे वलोपः । उदाहरिष्यामः । यथा—

**"परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम । नशेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो विदुक्षः ॥ २ ॥"**

( ऋ० सं० ५–२–६ )

परिषद्यमिति । इयमपरा–( नहि ग्रभायेत्यनन्तरीया ) च एते त्रिष्टुभौ वासिष्ठ्यौ[2] । हे अग्ने! अरणस्य अपगतार्णस्य[3] ( अपगतोदकसम्बन्धस्य ) रेक्णः धनमपत्याख्यं परिषद्यं परिहर्तव्यं ( परित्याज्यं न पुत्रत्वेन कल्पयितव्यम् ) । हि निश्चयेन । अतो वयं नित्यस्य मुख्यस्यात्मीयस्य ( स्वयमुत्पादितस्य ) रायः धनस्यापत्यरूपस्य पतयः पालयितारः ( प्रभवः ) स्याम भवेम । न परकीयस्य । यतः अन्यजातम् अन्येन जनितं शेषः अपत्यं न अस्ति न भवति । य एव जनयति तस्यैव तद्भवति नेतरस्य । अस्ति चेत् अचेतानस्य अचेतयमानस्य ( अचेतनस्याविदुषः प्रमत्तस्य वा ) अतो नोऽस्मान् पथः मार्गात् पितृ–पितामह–प्रपितामहाद्युसन्तताद् मा विदुक्षः मा विदूदुषः । विदूषितान् ( भ्रष्टान् ) मा कुरु । देहि नः पुत्रमौरसमिति भावः ॥ २ ॥

मन्त्रार्थं व्याचष्टे भाष्यकृत्—

**परिहर्तव्यं हि नोपसर्तव्यम् । अरणस्य रेक्णः । अरणोऽपार्णो भवति ॥**

अत्र परिषद्यमित्यस्यार्थः परिहर्तव्यमिति । फलितार्थमाह नेति । अत्रापगतार्णोऽपार्णः स एवारणः । ( अपगतोदकसम्बन्धः ) इत्येवं प्रत्यक्षवृत्तिना परोक्षं तेनातिपरोक्षं च व्याख्येयं, त्रिविधा हि नैरुक्ताः शब्दाः प्रत्यक्षवृत्तयः परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्चेत्युक्तमधस्तादादावेव । अत्रापगतमृणमुदकं यस्येति विग्रहे "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप" ( पा० २–२–२३ वा० ) इति समासो बहुव्रीहिः । पृषोदरादित्वात्पलोपोऽकारस्य रेफात्परं विपर्ययश्च ॥

**रेक्ण इति धननाम, रिच्यते प्रयतः ॥**

प्रयतः प्रकर्षेण यतो गच्छत इतो लोकादमुं लोकं म्रियमाणस्येति यावत् । तस्यासौ रिच्यतेऽतिरिच्यते उर्वरितमिवेहावतिष्ठते, न तेन ( धनिना ) समं गच्छतीति भावः । "रिचिर् विरेचने" ( रु० उ० ) "रिचेर्धने घिच्चे"ति ( उ० ४–१९४ ) असुन् । नुडागमो गुणश्च । घित्वात् "चजोः कुघिण्ण्यतोः" ( पा० ७–३–५२ ) इति चस्य कुत्वम् ॥

**नित्यस्य रायः पतयः स्याम, पित्र्यस्येव धनस्य ॥**

मन्त्रार्थो व्याख्यातः । अत्रोपमिमीते भाष्यकृत् पित्र्यस्येति । पितुरागतं हि पित्र्यं "पितुर्यच्च" ( पा० ४–५–८ )ति यत् । "रीङृतः" ( पा० ७–४–२७ ) इति ऋतो रीङादेशे "यस्येति च" ( पा० ६–४–१४८ ) इतीकारलोपः । तस्य धनस्य यथा पतयो मुख्यस्वामिनः पुत्रा भवन्ति तथा वयम् ॥

**न शेषो अग्ने! अन्यजातमस्ति । शेष इत्यपत्यनाम । शिष्यते प्रयतः । अचेतयमानस्य तत्प्रमत्तस्य भवति । मानः पथो विदूदुष इति ॥**

अत्र न शेष इत्यादि प्रतीकम् । अपत्यनाम तद्धि प्रयतो गच्छत इतो लोकादमुं लोकं पितुः शिष्यते । इहैव लोकेऽवतिष्ठते । न तेन समं गच्छतीत्यर्थः । यद्वा "शिष्लृ विशेषणे" रुधादिः ( प० ) वि-शिष्यतेऽनेन पुत्रेण पित्रादिर्विद्यादिभिः सद्गुणैरिति शेषः । नः अस्मान् । विदुक्ष इत्यस्यार्थो

१. अत्र केचित् औरसादिषु पुत्रेषु कस्य मुख्यं पुत्रत्वम् इत्येवमुपक्रमो योज्यः । "देहि नः पुत्रमौरसम्" इत्युपसंहारात् । अथवा कुण्डस्य नौरसत्वमिति सर्वज्ञानां दर्शनेनैष उपक्रमोऽपि योजनीय इत्याचक्षते ॥

२. वसिष्ठाग्निसंवादे ( असुरेण वसिष्ठपुत्रस्य शक्तेर्वधात् ) हतपुत्रेण वसिष्ठेनाग्निरभ्यर्थितः "पुत्रं मे देहि" इति । तेन किलासौ प्रत्युक्तः "क्रीतक–कृत्रिम-दत्तकादीनामन्यतमं कुरुष्व पुत्रम्" इति । स एवमुक्त एताभ्या (मुपक्रान्ता–वक्ष्यमाणाभ्या-) मृग्भ्यामन्यजान्पुत्रान्निन्दन्नौरसं पुत्रं ययाचे ॥ इत्याख्यायिका वेदेऽस्ति ॥

३. ऋणशब्दो जलार्थः । दशार्णो देश इत्यस्यार्थकरणे भट्टोजिदीक्षितैरुपन्यस्तः । तथाच हैमः "ऋणं देये जले दुर्गे" इति ॥ निघण्टौ तु अर्णःशब्दः सान्त उदकपर्यायेषु पठितः स नेह गृह्यते । अपगतार्णस्येति दुर्गव्याख्यानात् ॥

**विदुदुष इति** ॥ "दुष वैकृत्ये" ( दि० प० ) अन्तर्भावितण्यर्थः । लुङि व्यत्ययेन च्लेरङः स्थाने क्सः । षस्य कः । सस्य षः ॥ माङो योगेऽडागमाभावः ( पा० ६-४-७४ ) अत्र दुर्गः एवमस्यामृचि "नशे···मस्ती"त्यनेन विशेषलिङ्गेन उपपन्नमेतद्भवति—( यत् ) जनयितुरेवं प्रजा भवति ( बुधश्चन्द्रस्येव ) । न क्षेत्रिणः ( बृहस्पतेरिव ) । नापि क्रेतुरन्यस्य वा कस्यचिदिति । एवं चैष शब्दार्थं उपपद्यते—यस्मादेवापेत्य ततं भवति तस्यैवापत्यमितीति ॥

**अस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥**

**अस्यै**तस्य जनयितुरेव प्रजा भवतीत्यर्थस्योत्त**रा** ऋक् "नहि ग्रभाये"त्यादिका **भूयसे** बहुतराय **निर्वचनाय** निरुच्य वचनाय व्यवस्थापनाय "भवती"ति शेषः ॥ २ ॥

**"नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवाउ । अधाचिदोकः पुनरित्स एत्यानो वाज्यभीषाळेतु नव्यः ॥ ३ ॥"**

( ऋ० सं० ५-२-६ )

**नहीति** । हे अग्ने ! **अरणो**ऽपार्णः ( अपगतोदकसम्बन्धः ) **सुशेवः** सुसुखतमोऽपि । शेवमिति सुखनाम । ( निघं० ३-६ ) बहुव्रीहिः । **अन्योदर्यः** अन्योदराज्जातः । "शरीरावयवाच्च" ( पा० ५-१-६ ) इति यत् । दुर्गस्तु—अन्येनोदीरिताद्रेतसो जातोऽन्यजायोदरसंभूतो वेत्याह । **हि** निश्चयेन **ग्रभाय** ग्रहाय ( ग्रहणाय ) हस्य भश्छान्दसः ( पा० ३-१-८४ वा० ) ग्रहीतुं योग्यो न भवति । तस्मायोऽन्योदर्यः स **मनसाउ** मनसाऽपि **न मन्तवै**—न मन्तव्यो ममायमिति । "कृत्यार्थे तवैकेन्केन्यत्वनः" ( पा० ३-४-१४ ) इति तव्यार्थे तवैप्रत्ययः । किं पुनः पुत्रत्वेन परिकल्पयितव्यः । **अधा** अथ यस्मात्स **पुनरित्** पुनरेव **ओकश्चित्** तदेवौकःकुत्सितं पितृगृहं पितृवंशं वा

१. अपिरत्रायोजितो भाष्यकृताऽपि । अर्थवशात् । एवमग्रेऽपि ।

२. यो हि स्वस्यां जायायां सम्भवति स स्वे पत्योदरे सम्भूतो भवति । 'अर्धो ह वा एष आत्मनो यज्जायेति' ब्राह्मणेऽपि विज्ञायते ॥

३. नहीत्यस्यार्थचान्तेनापि ( मननेन ) सम्बन्धः । आवृत्तिवशात् ॥ अतएव भाष्ये नहि ग्रहीतव्य इति न मन्तव्य इति चोक्तम् ।

४. अधःशब्दोऽथशब्दस्यार्थे वर्तते । विसर्गस्थाने आकारो वर्णव्यत्ययेन । अथशब्दश्च हेत्वर्थो नैरुक्तैर्बहुत्रोपन्यस्तः ॥

५. चिदित्यवकुत्सने निपातप्रकरणे निरुक्तं एवोक्तः ( १ अ. २ पा. ३ खं. ) ॥ ओको गृहम् ॥ तथाचामरः "ओकः शब्दाश्रयश्चौकाः" इति । अकारान्तोऽप्ययम् "ओकउचः के" ( पा० ७-३-६४ ) इति कप्रत्ययान्तो निपातितः । किन्तु न स गृहवचनः "ओकः शकुन्तवृषलौ" इत्यभिधानात् ॥

६. कुलशब्दो हि वंशार्थोऽपि गृहे वर्तते । तथाचाभिधानम्

**एति** प्रत्यागच्छति यतोऽसावागतो भवति ( कल्पितपुत्रवतो गृहे ) । अतः **नः** अस्माकम् **वाजी** वेजनवान् ( परेभ्यो भयदाता ) **अभीषाट्** अभिषहमाणः ( अभिभवन्सपत्नान् ) "छन्दसि सहः" ( पा० ३-२-६३ ) इति ण्विः । उपधावृद्धिः ( पा० ७-२-११६ ) हस्य ढः ( पा० ८-२-३१ ) सस्य षः ( पा० ८-३-५६ ) जस्त्वचर्त्वे "अन्येषामपी"— ( पा० ६-३-१३८ ) ति पूर्वपदस्य दीर्घः ॥ **नव्यः** नवजातः शिशुरौरसः "नवस्य नूआदेशस्त्नप्तनप् खाश्च प्रत्यया वक्तव्याः" ( पा० ५-४-३० वा० ) इति नवशब्दाच्चार्थात् प्रत्ययः । "यस्येति च" ( पा० ६-४-१४८ ) इत्यकारस्य लोपः । **आ एतु** आगच्छतु । न परकीयैः सङ्कल्पितैः पुत्रैः प्रयोजनमस्त्यस्माकमिति भावः ॥ ३ ॥

मन्त्रार्थं व्याचष्टे भाष्यकृत्—

**नहि ग्रहीतव्यो अरणः सुसुखतमोऽप्यन्योदर्यो मनसाऽपि न मन्तव्यो ममायमिति । अथ स ओकः पुनरेव तदेति यत आगतो भवति । ओक इति निवासनामोच्यते । एतु नो वाजी वेजनवानभिषहमाणः सपत्नान्नवजातः स एव पुत्र इति ॥**

निगदव्याख्यातमेतत् ॥ अथेदं विचार्यते—यत्पूर्वमुक्तमपेत्य यस्मात्पितुः सकाशात्ततं भवति तस्मादपत्यमिति । तदिदमुभयोरप्यपत्यत्वं प्राप्तं दुहितुः पुत्रस्य च । दुहितापि ह्यपेत्यैव पितुः सकाशात् तता भवति । तदेवं सति उभयोर्दुहितृपुत्रयोरपत्यकार्याणि दायाद्यादीनि अविशेषेण प्राप्नुवन्ति, इति । तदेतदाह—

**अथैतां दुहितृदायाद्ये उदाहरन्ति । पुत्रदायाद्य इत्येके ॥ ३ ॥**

उक्तविचाराधिकारार्थोऽथशब्दोऽयं **एता**मृचमनुपदं वक्ष्यमाणां शासदित्यादिकाम् । **दुहितुः** कन्याया **दायाद्ये** पित्र्यशप्राप्तौ **उदाहरन्ति** धर्मविदः । अस्यामृचि दुहितुरपि दायाद्यं भवतीति दृश्यते । **एके** पुनर्धर्मविदो मन्यन्ते यत्पैतृकं वित्तं तत्पुत्रस्यैव **दायाद्यं** न दुहितुरिति । तत्र दुहितापि यथा दायाद्यमर्हति तथेयमृगिरुच्यते— ॥ ३ ॥

**"शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् । पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥ १ ॥"**

( ऋ० सं० ३-२-५ )

"कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम्" इति । गोत्रं वंश इत्यनर्थान्तरम् "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इत्यमरेण पर्यायतया पाठात् ॥ एवं गृहार्थस्यौकश्शब्दस्य कुलार्थेऽत्र प्रयोग इति स्थितिः ॥

**शासदिति** । त्रिष्टुबेषा ऐन्द्रे सूक्ते वैश्वामित्री ॥ एवमग्रेतनाऽपि **न जामय** इत्यादिका । ( ५ खं० ) **ऋतस्य** सत्यस्य प्रजनन[1]यज्ञस्य, यद्वा प्रत्यृतस्य गर्भे निहितस्य रेतसः ( तत्त्वं ) **विद्वान्** जानन् । **वह्निः** वोढा[2] स्त्रियाः "वह प्रापणे" ( भ्वा० प० ) "वहिश्रिश्रु०" ( उ० ४–५१ ) इति निप्रत्ययः । उद्वोढा **दीधितिं** विधानं ( भाष्यव्याख्यानात् ) ॥ तस्यैव ऋतस्य अविशेषेण[3] **सपर्यन्**पूजयन् । सपर्पूजायां कण्वादिस्ततो यग- ( पा० ३–१–२७ ) न्ताल्लटः शतरि रूपम् । एतत्तत्त्वं भाष्यव्याख्यायां स्फुटम् । **दुहितु**स्तस्यामुत्पादितायाः कन्यायाः **पुत्र**-[4]**भावं** पुत्रत्वं **शासत्** प्र[5]शास्ति ज्ञापयति । सन्तान[6]**कर्मणे** । यतोऽसौ **नप्त्यं** नप्तारं **गात्** उपागमत् । "छन्दसि लुङ्लङ्-लिटः" ( पा० ३–४–६ ) इति वर्तमाने इणो लुङि गादेशः ( पा० २–४–४५ ) अडभाव उपसर्गयोगः कालव्यत्ययश्चार्षः । ( अभ्युपगच्छति ) तस्यां स्वोत्पादितायां कन्यकायां जातं सुतं दौहित्रं, पौत्रो ममायमिति मन्यते । नचापुत्रस्य पौत्रः स्यादिति दुहितुः पुत्रत्वमनेनानायत्याभ्युपगतं भवति । इत्येवमर्धर्चमत्र व्याचख्यौ भाष्यकृदनेन सूत्रेण ( उत्तरार्धर्चं च पञ्चम*-सूत्रान्ते व्याख्यास्यतेऽभ्रातृकावादपक्षेण ) तदेतदुच्यते—

**प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम् । दुहिता दुर्हिता, दूरेहिता, दोग्धेर्वा, नप्तारमुपागमद् दौहित्रं पौत्रमिति, विद्वान् प्रजननयज्ञस्य, रेतसो वा, अङ्गादङ्गात्सम्भूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य विधानं पूजयन्नविशेषेण मिथुनाः पुत्रा दायादा इति ।**

अत्र शासदित्यस्य **प्रशास्ती**त्यर्थो वह्निरित्यस्य च **वोढे**ति । **सन्तानकर्मण** इति चाध्याहृतम् । दुहितृपदं निर्ब्रवीति **दुर्हिते**ति । सा हि यत्र ( कुले ) दीयते तत्र दुःखेन हिता भवति । श्वश्र्वादिभिः भृशं शासिता सती । यद्वा "जन्मतः स्वजनदुःखकारिका सम्प्रदानसमयेऽर्थहारिका । यौवनेऽपि बहुशोककारिका दारिका हृदयदारिका पितु"रित्यभियुक्तोक्तिरनेनोपपन्ना । अथ वा **दूरे** वर्तमाना सती सा पितु**र्हिता** भवति । समीपे स्थिता च सन्ततं दुःखदेति । तदेतदाह **दोग्धेर्वा,** सा हि नित्यमेव पितुः सकाशादर्थं दोग्धि प्रार्थनापरत्वात् । नप्त्यमित्यस्यार्थो **नप्तारमिति** । अत्र नप्तृशब्दस्य नप्त्यादेशः पृषोदरादित्वात् "असि पूर्वः" "वा च्छन्दसी" ( पा० ६–१–१०७ ) ति पूर्वरूपाभावे यण् । अथवा नप्तरि भवं "भवे च्छन्दसि" ( पा० ४–४ ११० ) इति यत् "रीङृतः" ( पा० ७–४–२७ ) इति रीङादेशः । "यस्येति च" ( पा० ६–४–१४८ ) इतीकारलोपः । रेफलोपश्छान्दसः ॥ **उपागमत्** अभ्युपगच्छति ॥ विद्वान्—तत्त्वज्ञः । कस्य ? **ऋतस्य** सत्यस्य । किंलक्षणस्य ? **प्रजननयज्ञस्य** गर्भाधानस्य । अथवा । **रेतसः** । अस्य विशेषणमुखेन प्रत्यृतत्वलक्षणमृतत्वमुपपादयति—**अङ्गादङ्गा**त्सर्वेभ्योऽङ्गेभ्यः **सम्भूतस्य** समाहृत्य ( निःसृत्य सम्भूय वा ) भूतस्योत्पन्नस्य तद्रूपतया परिणतस्य । यद्वा निर्गतस्य **हृदया**न्मनसो**ऽधिजातस्य** अधिकतयोत्पन्नस्य **मातरि** गर्भधातरि **प्रत्यृतस्य** प्रवृत्तस्य । **विधानमिति** दीधितिमित्यस्यार्थः ।

१. ऋतमित्येतदपठितमपि यज्ञनामसु भाष्यकारवचनादेव यज्ञनाम । सत्यपर्याये पाठाच्च ॥ "तदेव हि सत्यं यद्यज्ञ" इति हि ब्राह्मण आम्नायते ॥ तदेतद् ( ऋतपदम् ) यज्ञविशेषमिहाचष्टे प्रजननाख्यम् तदपि ( प्रजननं सन्तानोत्पादनं ) यज्ञ एवेति नैगमा मन्यन्ते ॥

२. सायणस्तु—अपुत्रो यः पिता कन्यामन्यकुलं प्रापयति स वह्निरित्युच्यते । स पिता शासत् "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥" इति स्मृत्युक्तमनुशासनं कुर्वन् दुहितुः पुत्रिकायाः(पुत्रं)नप्त्यं नप्तारं पौत्रमात्मनो गात् ( अभ्युप- )गच्छति । दुहितुः पुत्रत्वेन स्वीकारात् दौहित्रं नप्तृभवपिण्डदानादिकर्तव्यतया पौत्रमभ्युपगच्छति । किंकुर्वन् ? विद्वान् । अस्यां दुहितरि जातः पुत्रो मम स्वधाकरो भविष्यतीति जानन् । ऋतस्य सत्यस्य पुत्रोत्पादनसमर्थस्य रेतसः । दीधितिं—धर्तारं जामातरं तत्पतिं सपर्यन् वस्त्रालङ्कारादिना पूजयन् पिता ( तदात्मजे ) नप्तृभावं गच्छति । यत्र यस्मिन्विषये पिता अपुत्रो जनकः । दुहितुरप्रज्ञायाः स्वकन्यकायाः सेकं सेक्तारं तस्यां रेतसः । सिचः कर्तरि क्विप् । ऋञ्जन्प्रसाधयन् शग्म्येन सुखनिमित्तेन मनसा सन्दधन्वे—आत्मानं सन्धत्ते । अपुत्रत्वनिमित्तदुःखापगमात् ॥ अथवा यत्र—यस्या दुहितुः पिता पालकः पतिर्जामाता सेकं तस्यां रेतस्सेकमृञ्जन् प्रसाधयन् शग्म्येन केवलं सुखनिमित्तेन मनसा तस्यां स्वशरीरं सन्दधन्वे सन्धत्ते । नतु पुत्रनिमित्तेन मनसा । इत्येवं व्याख्यत् ॥ अत्र यत्रेति षष्ठ्यन्तादपि त्रल् "इतराभ्योऽपि दृश्यन्ते" ( पा० ५–३–१४ ) इत्यनुशासनात्कृतः ॥

३. अविशेषार्थो भाष्यव्याख्यायामनुपदं स्फुटिष्यति "यथैव ह्री"त्यादिना ॥

४. एतदध्याहृतं भाष्यकारेण ॥

५. प्र इत्येषोऽधिकः प्रत्युक्तो भाष्यकृतैवार्थवशात् अतएवोपसर्गाणां द्योतकत्वमुपपद्यते । धातुत एव ह्यर्थोऽवगम्यते । एवमग्रेऽपि ( गादित्यत्र ) द्रष्टव्यः । शासदिति लटः शतरि "नाभ्यस्ताच्छतुः" (पा० ७–८–७८) इति उगित्त्वात्प्राप्तस्य नुमोऽभावः ॥

६. सन्तानार्थाय । निरुक्ते कर्मशब्दोऽर्थार्थः प्रायेण ( बहुत्र ) दृश्यते । त्विदित्येषोऽनेककर्मेत्यादौ ॥

* अनयोरर्धर्चयोरन्तरा यदेतदुच्यते "तदेतदित्यारभ्य……पितुश्च पुत्रभाव इत्यन्तः" सर्वमेतत्प्रसक्तानुप्रसक्तं दायाद्यधर्माश्रितमेव पूर्वोत्तरपक्षसम्बन्धादाचारगतं बहु व्याख्यायते मन्त्रविषयख्यापनाय, ईदृशोपि मन्त्राणां विषयो भवतीति धर्मसंविज्ञानाय च । सर्व एवायमेवंप्रकारो धर्मो मन्त्रेभ्य एव निर्भावित्येतदनेन ख्यापितं भवतीति दुर्गः ॥

१. अथवा "पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्" इति

पूजयन्निति सपर्यन्नित्यस्य । यथैव हि पुत्रजनने प्रजननयज्ञस्तन्यते तथैव हि दुहितृजननेऽपि । यैरेव मन्त्रैर्येनैव च विधानेन पुत्रगर्भ आधीयते तैरेव मन्त्रैस्तेनैव च विधानेन दुहितृगर्भोऽपि । एवं येनैव हि विधानेन पुत्रजनने रेत उत्सृज्यते तेनैव हि दुहितृजननेऽपि, तत्रैवं सति रेत उत्सर्गविध्यविशेषात्प्रजननयज्ञाविशेषाद्वा **अविशेषेण मिथुनाः** पुरुषाः स्त्रियश्च उभयेऽपि **दायादा इति** एवमेके धर्मविदो मन्यन्ते ॥

**तदेतद् ऋक्श्लोकाभ्यामभ्युक्तम् ।**

**"अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ।**
**आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥"**
**इति । 'अविशेषेण पुत्राणां दायो भवति धर्मतः ।**
**मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत् ॥**

**तदेतत्** अविशेषेण मिथुनाः पुत्रौ दायादा इति । **ऋक्श्लोकाभ्याम्** ऋगर्थप्रतिपादकाभ्यां श्लोकाभ्यां गोभिलेन-मनुना चोक्ताभ्याम् **अभि** आभिमुख्येन ( विस्पष्टम् ) **उक्तम्** ॥

**न दुहितर इत्येके ॥**

न दुहितरो दायायमर्हन्तीत्येके आचार्या मन्यन्ते ॥

अत्रार्थे ब्राह्मणं प्रमाणयति—

**"तस्मात्पुमान्दायादोऽदायादा स्त्रीति" विज्ञायते ॥**

---

श्रुत्युक्तोऽर्थं इहानुसन्धेयः । अत्र ऋतसेत्यस्य सत्यस्य पुत्रोत्पादनसमर्थस्येत्यर्थं सायण आह ॥

१. ( गो० गृ० सू० २-८-२१ ) प्रवासादेत्य पुत्रस्य मूर्धनि जपन् जिघ्रति । अनुष्टुबेषा । स पुत्र उच्यते । हे पुत्र ! त्वम् अङ्गादङ्गात्सम्भवसि हृदयाचाधि-( भि ) जायसेऽतस्त्वं मे आत्माऽसि, केवलं त्वं पुत्रनामाऽहं पितृनामेत्येतावानेवावयोर्भेदः । ममैवावयवभूतस्त्वमित्यभिप्रायः । स त्वं शरदः शतं जीव । "कालाध्वनोरत्यन्तसंयोगे" ( पा० २-३-५ ) इति द्वितीया । शरदिति वत्सरनाम "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री-शरत्समाः" इत्यमरः । अत्र दुर्गः । "सर्वस्मिन्नपि संवत्सरे शरदि बहुजीवाः प्रचुररोगा भवन्ति तस्माच्छरदमेवोपलक्ष्य संवत्सरशतमेतदायुराशास्यते" इति । उक्तं चान्यत्र "वैद्यानां शारदी माता पिता तु कुसुमाकर" इति ॥ कन्यायास्त्वमन्त्रक एवायं विधिः ॥

२. अभीति प्रचुरः पाठः । हृदयान्मनसोऽभिध्यानेन जायस इति हि तत्रार्थः ॥

३. विसर्गादौ सृष्ट्यादौ ॥

४. अत्र पुत्राश्च दुहितरश्चेति "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" ( पा० १-२-६८ ) इत्येकशेषे रूपम् । अत्र मध्ये इतिकारो देहलीदीपन्यायेनोभयत्रान्वेति । यद्वा प्रथमस्यान्यत्वख्यापनाय सः ॥

एतस्मिन्ब्राह्मणे विचार्यमाणे-**ज्ञायते** । न दुहितरो दायायमर्हन्ति किन्तु पुमानेवार्हतीति ॥ अपरमपि ( ब्राह्मणम् )

**"तस्मात् स्त्रियं जातां परास्यन्ति । न पुमांसमि" ति च ॥**

पुत्रेण हि पैतृकं सर्वं शर्म निर्वाह्यते नापुत्रेणेति **स्त्रियमेव जातां परास्यन्ति** परस्मै यच्छन्ति । **न पुमांसम् ।** तस्मात्पुमानेव पैतृकस्य वित्तस्येष्टे न दुहिता । तदेतदत्र दृष्टान्तं मन्यते ( ब्रा० ) "अथ यत्स्थालीं परास्यन्ति हवनकर्मणो न तया जुह्वति । न दारुमयं परास्यन्ति हवनकर्मणो दारुमयेनैव जुह्वति" इति । किञ्च—

**स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः ॥**

प्रदीयते हि परस्मै स्त्री । विक्रीयते च वैवाहिकेन शुल्केन । न पुमांस्तथा च भगवता वासुदेवेनाप्युक्तं सुभद्राहरणे—

"विक्रयश्चाप्यपत्यस्य मतिमान् को नु मंस्यते ।
अल्पो वाथ बहुर्वापि विक्रयस्तावदेव सः ॥"

इति । तथाच ब्राह्मणमपि-"चातुर्मास्येष्वनृतं वा एषा करोति या पत्युः क्रीता सती अन्यथान्यैश्चरती"ति । तस्माच्छुल्केन प्रदानं, विक्रयश्च कन्यकाया इत्युपपद्यते । अतिसर्गः स्वेच्छाचाराय परित्यागः । परित्यज्यते हि कन्या बन्धुभिः स्वयंवरे । योऽवलिप्तः स एनां गृह्णातु । यो वा तुभ्यं रोचते तं वृणीष्वेति च सोच्यते ॥

**पुंसोऽपीत्येके, शौनःशेपे दर्शनात् ॥**

**पुंसोऽपि** दानविक्रयातिसर्गा विद्यन्त एव । पुरुषोऽपि हि परस्मै दीयते । एवं ह्युक्तं "दत्त-क्रीतक-कृत्रिम-क्षेत्रजौ-रसाः पुत्राः" **इति । शौनःशेपे दर्शनात्** बह्वृचानां शौनःशेपाख्यानं वेदे, भारतादौ च दृश्यते । अजीगर्तस्य त्रयः पुत्रा आसँस्तत्रोत्तमोऽन्त्यश्चेष्ठ्याधिकारितया पित्रा रक्षितः कनीयांश्च मात्रा स्नेहानुबन्धादित्येवमुक्ते कैताह "विक्रीतं मध्यमं मन्ये" इति । स एव शुनःशेपोऽमुना सुवर्णसहस्रेण क्रीतो हरिश्चन्द्रार्पितो जलोदरोपशान्त्यर्थं प्रस्तुते वारुणे यज्ञे । एवं परित्या-

---

१. एतच्च तस्मात्स्त्रियमित्येतस्मात्प्राक्तनमतःपरं च "तस्माद्०० मांसम्" । इत्येव ॥

२. अत्र दुहितृदायाद्यवादिनः प्रतिमन्यन्ते । स एष क्षत्रियाणामेव स्वयंवरधर्मो नान्येषाम् । एवं शुल्कोऽपि । यथाह गाधिः "कुशिका वयम्" इति । ऋचीकं प्रति श्यामकर्णाश्वमेधीयाश्वसहस्राहरणाय कन्याशुल्कतयेति पुराणेषु प्रसिद्धमेव । "वीर्यशुल्का हृता सीता राघवेण बलीयसे"-ति । यच्च क्वचन दृश्यतेऽन्यत्र स एष महानधर्म इति "न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपी"ति मन्वादिभिः सुस्पष्टमभिहितं, तथाचाधर्माचारस्य धर्मव्यवस्थापकत्वमनर्थकरमिति ॥

गोऽपि विश्वामित्रेण मधुच्छन्दसआदीनां दृष्टस्तस्मादनैकान्तिकत्वादेषां हेतूनामुभयोरपि दायाद्यमित्येके मन्यन्ते ॥

## अभ्रातृमतीवाद इत्यपरम् ॥

"आचार्यमतमि"ति शेषः । अभ्रातृकैव पित्र्यं धनमर्हति । पुरुषेषु हि पितुः पिण्डदातृषु विद्यमानेषु न स्त्री धनमर्हति । सा हि परकीयं वंशं वर्धयति न पितुः । अभ्रातृकायास्तु पितुरन्यः पुत्रो नास्तीति दौहित्रः पिण्डदानादिष्ववतिष्ठते इति भवति सार्थभागिनी । तदुक्तम्—"पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मादर्थमपत्यमिति संवाद्याभिसंधानमात्रं पुत्रिका इत्येकेषा"मिति ॥ निगममप्यस्मिन्नर्थे उदाहरन्ति—

## "अभ्रातरइव योषास्तिष्ठन्ति हुतवर्त्मनः ॥"

( अ० सं० १–१७–१ )

इति । अस्य "अमूर्या यन्ति जामयः सर्वा लोहितवाससः" इत्यादिः । इयमथर्वणां प्रसवमार्गवहन–( प्रदर– ) रोगिण्यास्तत्प्रतीकारकर्मणि विनियुज्यते । **या अमूः** नाड्यः रक्तमविरतं **यन्ति** स्रवन्ति **लोहितवाससः** अतिलोहितवस्त्रा **जामयः** कुलस्त्रिय इव । **सर्वाः** एता **हतवर्त्मनः** हतवर्त्मानो दीर्घाभाव आर्षः । हतलोहितवहनमार्गाः सत्यस्तिष्ठन्ति तिष्ठन्तु उपरमन्तु प्रवहणादस्य मन्त्रस्य वीर्येण । लोडर्थेऽत्र लट् । अत्र दृष्टान्तः **अभ्रातरो योषा इवेति** । यथा काश्चिदभ्रातृका योषा हतभर्तृवंशमार्गाः सन्तानकर्मणे पिण्डदानाय च तिष्ठन्ति । एवमेता नाड्यस्तिष्ठन्तु इति । एवमस्यामृच्यभ्रातृकाया उपयमननिषेध उपमया लिङ्गतो दर्शितः ॥

निगमस्य समासतोऽर्थमाह—

## अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय हतवर्त्मान इत्यभ्रातृकाया अनिर्वाह औपमिकः ॥

**इति** । अस्यामृचि **अभ्रातृकायाः** कन्यकायां **अनिर्वाहो**ऽनिर्वहणं विवाहनिषेध **औपमिक** उपमया दर्शितः अभ्रातर इवेति ॥ अत्र "तेन निर्वृत्तम्" ( पा० ५–१–७९ ) इत्यर्थेठञ् । ठस्येकः ( पा० ७–३–५० ) आदिवृद्धिः ( पा० ७–२–११७ ) ॥

## तस्योत्तरा भूयसे निर्वचनाय ॥ ४ ॥

**तस्य** अनिर्वाहस्य । **उत्तरा** ऋक् **भूयसे** बहुतराय **निर्विविच्य वचनाय** भवतीति शेषः ॥ ४ ॥

## "अभ्रातेव पुंस एति प्रतीचीगर्तारुगिव सनये धनानाम् । जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥ २ ॥"

( ऋ० सं० २–१–८ )

**अभ्रातेव पुंस** इति । दीर्घतमःपुत्रस्य कक्षीवत आर्षम् । त्रिष्टुप् । औषसी । प्रातरनुवाकाश्विनयोः शस्यते । **अभ्राता इव** । यथा अभ्रातृका कन्या पित्रा दत्ता भर्त्रा स्वीकृतापि सती । अत्र कप्ङीवभावौ छान्दसौ । **पुंसः** भर्तुः **प्रतीची** प्रत्यङ्मुखी पितृनेवाभिमुखं पश्यन्ती सती । **एति** पितृवंशमेव सन्तानकर्मणे ( पिण्डदानाय ) नयति । न भर्तृवंशम् । एतिरिहान्तर्भावितण्यर्थः । तस्मादभ्रातृकैव पैतृकं दायाद्यमर्हतीत्युपपद्यते । अत्रोपमान्तरमाह **गर्तेति** । गर्तः सभास्थाणुरक्षनिर्वपणपीठम् । गृणातेः शब्दार्थात्स्तुत्यर्थाद्वा "हसिमृग्रिण्वेति" ( उ० ३–८३ ) तन् प्रत्ययः । गीर्यते शब्यते स्तूयते वाऽस्मिन्नित्यर्थः । तमारोहत्युपविशतीति **गर्तारुक्** । ह्रस्व घः छान्दसः । सा यथा **धनानां** भर्तृसक्तानां **सनये** लब्धये भर्तृबन्धुभ्यः सकाशात् । **अयमर्थः**[1] । अपुत्रपतिका हि दाक्षिणात्या स्त्री भर्तृबन्धुभ्यो भर्तृसक्तं धनं ग्रहीतुं गर्ताख्यमक्षनिर्वपणस्थानमारोहति । तत्र या सच्चरित्रा भवति सैव सभायां तमारोढुं शक्नोति नान्या । तथात्वे च भर्तृबान्धवास्तस्यै स्वामिधनं यथावन्निर्वाहक्षमं ददति । सा तदादाय पैतृकं गृहमायाति तद्वंश्यानेव च पुष्णाति । एवमियमभ्रातृका भर्तुरपत्याख्यं धनमादाय पितृवंशमेव संवर्धयति पुत्रैः पौत्रैश्च, न भर्तृवंशम् । अत्रोपमामाह—**उषाहस्रेवेति** । **हस्रा इव** । यथा हस्रा हसना हसनस्वभावा दन्तानात्मनो दर्शयति एवम् **उषा** द्युस्थानदेवता ( प्राचीप्रकाशस्वरूपा ) **अप्सः** आत्मनो रूपम् **निरिणीते** विवृणुते । रात्र्या अपरकाले नभ आरोहति । विवरणे उपमामाह—**जायेवेति** । यथा

१. तदेतद्गर्तस्य सभास्थाणोरारोहणं रिक्थलाभहेतुर्दाक्षिणात्येषु अपुत्राया अपतिकायाः स्त्रियाः प्रसिद्धम् । तथैव प्रसिद्ध्या निरुच्यते । देशसमाचारव्यवस्थयापि कश्चिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति ॥

२. तां तत्राक्षैराघ्नन्ति कितवास्तत्र परीक्षायां योत्तीर्णा भवति सा ॥

३. आरोहणे ॥

४. तथाच निरुक्तम् ( ५ अ० ३ पा० १ ख० ) अप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिरित्यादि । नञ्पूर्वात्प्सातेर्भक्षणार्थादसुनि बाहुलकादाकारलोपः । आप्नोतेर्वा । "वृतॄवदिहनिकमी"–( उ० ३–५९ ) त्यादिना सप्रत्ययः ॥ ह्रस्वश्चोपधायाः ॥

५. सा यथाऽऽत्मनोऽन्तर्भूतानि सर्वद्रव्याणां रूपाणि विवृणुते शार्वरेण तमसा दिग्धानि सर्वद्रव्याणि प्रकाशोदकेन धौतानीव करोति ॥

१. शुनःशेपप्रतिमोचनाय विश्वामित्रेण स्वपुत्रा मधुच्छन्दसादयोऽभिहिता "युष्मास्वेकोऽर्थेमुष्य प्रतिगच्छत्वि"ति । ते च प्रत्याचक्षाणाः पित्रा परित्यक्ताः शप्ताश्चेति देवीभागवतादौ व्यक्तम् ॥

२. अत्र पाठभेदः क्वचिन्मुद्रितपुस्तके दृश्यते । यथाऽजमेरनगरीये–अमूर्या यन्ति योषितो हिरालोहितवाससः । अभ्रातर इव जामयस्तिष्ठन्तु हतवर्चसः ॥ इति ॥

**जाया** स्त्री पत्ये भर्त्रे '**उशती**' कामयमाना **सुवासाः** कल्याणवासाः (रमणीयवसनालङ्कृता) भूत्वा ऋतुकाले षोडशरात्र्यामन्यतमे विहिते काले आत्मानं दर्शयति । एवमुषा अपि[2] आत्मानं दर्शयति जनानाम् ॥

निगमम्र्थतोऽनुवदति—

**अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय नयति । गर्तारोहिणीव धनलाभाय दाक्षिणाजी । गर्तः सभास्थाणुर्गृणातेः । सत्यसङ्गरो भवति । तं तत्र याऽपुत्रा याऽपतिका सारोहति तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते ॥**

**दाक्षिणाजी** दक्षिणं देशमजतीति दक्षिणाजस्तस्येयं दाक्षिणाजी दाक्षिणात्या स्त्री । निगमप्रसक्तस्य तत्त्वमाचष्टे—**गर्तः सभास्थाणुरि**ति । **सत्यसङ्गरः** । सङ्गीर्यते हि तत्र सत्यमिदमत्र पतितमिदमत्र न पतितमित्येवं प्रायेण कितवास्तत्रानृतं ब्रुवते । **तम्** एवंलक्षणं कितवमध्येऽवस्थितं गर्तम् । **लभते** भर्तृबन्धुभ्यो भर्तृसक्तं **रिक्थं** धनांशम् ॥

अथ गर्तपदप्रसक्तमुच्यते—

**श्मशानसञ्चयोऽपि गर्त उच्यते । गुरतेरपगूर्णो भवति । श्मशानं श्मशयनं, श्म शरीरम् शरीरं शृणातेः शम्नातेर्वा ॥**

**गुरतेः** गुरीधातोः (तु० आ०) उद्यमनार्थस्य । सहि लोकविनाशायापगूर्णोऽभ्युद्यत इव **भवति** । यानि हि तत्र पिशाचादीनि सत्त्वानि आश्रितानि भवन्ति, तानि जनमरणमाशासते । म्रियमाणेषु च जनेषु प्रमुदितानि भवन्ति । अथ श्मशानशब्दं प्रसक्तानुप्रसक्तं निराचष्टे—**श्मशानं श्मशयन**मित्याख्यानप्रसक्तमुच्यते । तत्रहि श्म शेतेऽत्रेति **श्मशयनं** तदेव **श्मशानम्** । पृषोदरादिः । श्मशब्दार्थमाह—**श्मशरीरम्** इति । तद्धि तत्र शेते । तत्र हि तन्निःक्षिप्यते मृतस्य सतः । **शृणातेः** । शीर्यत इति हि शरीरम् । "शॄ हिंसायाम्" (क्या० प०) "कृशॄपॄ कटि" (उ० ४-३०) इतीरन् **शम्नातेर्वा** । उपशमार्थात् । शम्नात्युपशमं गच्छतीति वा । पृषोदरादित्वात्साधुः ॥

श्मशब्दप्रसक्तं निराह—

**श्मश्रु लोम, श्मनि श्रितं भवति ॥**

श्मनि शरीरे श्रितं लग्नं भवति ॥

पर्यायप्रसक्तं निराह—

**लोम लुनातेर्वा लीयतेर्वा ॥**

**लुनाते**श्छेदनार्थल्लूधातोः—(क्या० उ०) मनिन् (पा० ३-२-७५)—लूयते यत्तल्लोम । अथवा **लीयतेः** "लीङ् श्लेषणे" इत्यस्य (दि० आ०) "नामन्सीमन्नि" (उ० ४-१५१) त्यादिना निपातः । शरीरे हि तल्लीयते ॥

अथ श्मशानसञ्चयोऽपि गर्त इत्यर्थे निगममुदाहरति—

**"नोपरस्याविष्कुर्याद्यदुपरस्याविष्कुर्याद्गर्तेष्ठाः स्यात्प्रमायुको यजमानः"**

**इत्यपि निगमो भवति । (ब्रा.)**

उपरोनाम यूपस्यातष्टभागः पञ्चमांशः "पञ्चमभागोपरा यूपा" इति हि उक्तं वैदिकाम्नाये । तमतष्टं यूपस्य पञ्चमभागलक्षणमुपरं **नाविष्कुर्यान्न** व्यक्तीकुर्यादित्यर्थः । शेषे षष्ठी । पांशुभिर्बर्हिषा च तदवच्छादनीयम् । **यत्**—यदि पुनरुपरस्य कश्चिदप्यंश-(मवयव-)माविष्कुर्यात्तदा **यजमानो गर्तेष्ठा** गर्तप्रतिष्ठः "स्थे च भाषायाम्" (पा० ६-३-२०) इत्यलुक् ॥ "कृष्णोऽस्याखरेष्ठ" इतिवत् ॥ श्मशानप्रतिष्ठः । **प्रमायुकः** प्रमरणधर्मायुरेव यथाविहितादायुषः **स्यात्** । अपिशब्दादन्येऽपीदृक्षाः परश्शतं निगमाः सन्तीति बोध्यते ॥

**रथोऽपि गर्त उच्यते । गृणातेः स्तुतिकर्मणः । स्तुततमं यानम् ।**

**स्तुतिकर्मणः** स्तुत्यर्थस्य । **गृणातेः** गॄधातोः (क्या० प०) तद्धि यानं रथाख्यं **स्तुततमम्** । अतिशयेन स्तुतं भवति अश्वादिभ्यो यानेभ्यः । सुखतमं हि तेन गम्यते ॥

रथोऽपि गर्त इत्यस्मिन्नर्थे—

**"आरोहथो वरुण मित्र गर्त"मित्यपि निगमो भवति ॥** (ऋ० सं० ४-३-३१-३)

अस्य "हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्ये"त्यादिः । "अतश्चक्षाथे अदितिं दितिं चे"त्यन्तः ॥ श्रुतविदा-

---

१. जायतेऽस्यामिति जाया । तथाच श्रुतिः । "पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः" इति ॥

२. अत्र 'अनुक्तविशेषोऽपि विशेषपरो भवती'ति न्याय आश्रितो भवति । यथा "देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्" इति भगवद्वाक्ये देशादिशब्दा विहितदेशादिपरास्तद्वत् ॥

३. तदेतद्गर्तस्य सभास्थाणोरारोहणम् रिक्थलाभहेतुर्दाक्षिणात्येषु अपुत्राया अपतिकायाः स्त्रियाः प्रसिद्धम् । तयैव प्रसिध्या निरुच्यते । देशसमाचारव्यवस्थापि क्वचिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति ॥

१. अत्र प्रमाशब्देन प्रमरणधर्मोच्यते आयुरित्युकारान्तः पुल्लिङ्गः । "आयुर्जीवितकालोने"—त्यमरः । तथाच द्वयोर्बहुव्रीहौ कप् ॥

त्रेय एतया त्रिष्टुभा मित्रावरुणावस्तावीत्[1] । तावुच्येते- **हे मित्र ! हे वरुण ! युवाम् उषसोव्युष्टौ** व्युच्छेदनकाले **सूर्यस्य । उदिता** उदितौ उदयकाले । डेराकारः । (पा० ७-१-३९) **हिरण्यरूपं** हिरण्यवर्णम् **अयःस्थूणम्** अयोमयं स्थूणं[2] गर्तं रथम् । स्वम् **आरोहथः** । यज्ञं प्राप्तुम् । तौ युवां ब्रवीमि ममाप्येवंभूतं गर्तं रथमेतस्मिन्विधावङ्गभूतं (तत्स्वरूपमेव साम्प्रतमारोहतम् । **अतः** एनमारुह्य । सार्वविभक्तिक- (पा० ५-४-४४) स्तसिल् । **अदितिम्** अदीनम्[3]नुपक्षीणमात्मपक्षं **दितिं** दीनं चोपक्षीणम् स्वभिन्नपक्षं **चक्षाथे** कुरुतमिति[4] ॥ ३ ॥

तदेतद्गर्तः सभास्थाणुरित्यारभ्य प्रसक्तानुप्रसक्तमुक्तं, सम्प्रति निगमप्रसक्तं व्याचष्टे—

**जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान् विवृणुते रूपाणीति ॥**

निगदव्याख्यातमेतत् ॥

**चतस्र उपमा ॥**

**चतस्र** एता अस्यामृचि **उपमा** भवन्ति । तत्राभ्रातेव पुंस इत्येका । गर्तारोहिणीवेति द्वितीया । जायेव पत्य इति तृतीया । उषा हस्रेवेति चतुर्थी । तत्र प्रथमया अभ्रातृकाया अनिर्वाहो[5] लिङ्ग्यते । यथाऽभ्रातृका पितॄनेव प्रत्येति न पतिमेवमुषा आदित्यमेव प्रत्येति न रात्रिम् । एवमभ्रातृका कन्या यस्मिन्नेव वंशे उत्पन्ना भवति तमेव प्रकाशयति वर्धयति, न भर्तृवंशम् । इत्येवमुपमया नासौ वोढव्येति उपदर्शितं भवति, पुत्रार्थत्वाद्विवाहस्य । तस्मादवर्धयितृत्वाद्भर्तृवंशस्य, वर्धयितृत्वाच्च पितृवंशस्य, अभ्रातृका पितृदायाद्यमर्हतीत्युपपद्यते ॥

अन्यत्रापि चोक्तम्—

**"नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद्भवती" त्यभ्रातृकाया उपयमननिषेधः प्रत्यक्षः ।**

**अभ्रात्रीम्** । अविद्यमानो भ्राता यस्याः साऽभ्रात्री "ऋन्नेभ्यो ङीप्" (पा० ४-१-५) ताम् अभ्रात्रीं भ्रातृहीनाम् । अत्र मूले (ऋचि) ङीप्कवभावौ छान्दसौ ॥ **न उपयच्छेत** उपयमेन (विवाहेन) न स्वीकुर्यात् "उपाद्यमः स्वकरणे" (पा० १-३-५६) इत्यात्मनेपदम् । स्वकरणं स्वीकारः सचेह विवाहपूर्वक उपयमार्थः । तथाचामरः "विवाहोपयमौ समौ" इति । उपपूर्वाद्यमतेः (भ्वा० प०) "यमः समुपनिविषु च" (पा० ३-३-६३) इत्यप् प्रत्ययः ॥ मूले तु ल्युट् । भाव एव (पा० ३-३-११५) ॥

पूर्वयोर्हि मन्त्रयोरुपमया लिङ्गतो विवाहप्रतिषेधो दर्शितः । **इति**-एतस्मिंस्तु **प्रत्यक्षः** साक्षादेव श्रुतिचोदितः ॥

न केवलमुपयमननिषेध एव प्रत्यक्षः किन्तु—

**पितुश्च पुत्रभावः ॥**

प्रत्यक्षः श्रूयते । "**तोकं ह्यस्य तद्भवती**[1]"ति । तोकमित्यपत्यनाम । "आत्मजस्तनयः सूनुः सुतः पुत्रस्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे" इत्यमरः । तयोः स्त्रीपुंसयोः । समे-तुल्ये । यदपत्यमभ्रातृकायास्तत्पितुर्भवति तस्याः, नेतरस्य वोढुः । तस्मादुपपद्यत एतयैवाभ्रातृमती सैव पैतृकं धनमर्हतीति ॥

अधुना शासद्वह्निरित्यस्या ऋच उत्तरोर्धर्चोऽभ्रातृकावादपक्षेणैवेह निरुच्यते । पूर्वोऽपि च तथैव योजितव्यः । एष एव हि स्थितः पक्षः । तस्या एव ह्यभ्रातृमत्या यः पुत्रो भवति तमेव पुत्रिकाविधानेन कृताभिसन्धित्वान्मातामहोऽपुत्रः सन् पौत्रोऽयं ममेत्युपगच्छति नेतरान्भ्रातृमतीपुत्रान् । अन्यथा सर्वे एव हि वोढारोऽपुत्राः स्युस्ततो विवाहपरिश्रमो व्यर्थ एव स्यात्तदेतदुच्यते—

**पिता यत्र दुहितुरप्रत्ताया रेतःसेकं प्रार्ञ्जयति । सन्दधात्यात्मानं सङ्गमेन मनसेति ॥**

**पिता यत्र** यस्मिन्काले **दुहितुः । अप्रत्ताया** अप्रदत्तायाः (प्राक्प्रदानादित्यर्थः) **रेतःसेकं** रेतसः सेक्तारम् । सिञ्चतेः क्षरणार्थात् (तु० उ०) क्विप् कर्तरि कुत्वं च्छान्दसम् ॥ रेत इत्यर्थतो व्याख्यातम् ॥ (यो दुहितरि रेतः सिञ्चति तं जामातरं) **प्रार्ञ्जयति** प्रसाधयति (प्रकल्पयति उपावर्तयतीत्यर्थः) । एतच्च **ऋञ्जन्नि**त्यस्यार्थः । अत्र "लक्षणहेत्वोः क्रियायाः" (पा० ३-२-१२६) इति हेतौ लटः शता । ऋञ्जतिर्भर्जनार्थोऽपि (भ्वा० प०) नैगमैः प्रसाधनकर्मसु पठितः (निघं० ४-३) समीकरणं च प्रसाधनमात्मसात्करणम् । यतश्च प्रार्ञ्जयति अतोऽयं शग्म्येन सुखमयेन मनसाऽत्मानं सन्दधन्वे अभिसन्दधातीत्यर्थः । धविः सौत्रो धातुर्लिट् लडर्थे (पा० ३-४-६) तदा तां दुहितरं ददत् किंकरोति (संश-

---

१. राजसूये हि अभिषेचनीयो नाम क्रतुः । स तत्र यजमानस्य रथमारुरुक्षतः गृहीतेषुधनुष्कौ बाहू अनयाऽभिमन्त्रयेते । तावेवात्र मित्रावरुणावधिदेवताभिप्रायेण । एवं ह्याह-"मित्रोऽसीतीममभिमन्त्रयति मित्रस्य ह्येतद्रूपम् । वरुणोऽसीतीमं वरुणस्यैतद्रूपमि"ति ॥

२. स्थूणः स्थाणुर्गर्तो रथ इत्यनर्थान्तरम् ॥

३. तथाच निरुक्तम् "अदितिरदीना, देवमाता", (४-२२) ॥

४. व्यक्तवागर्थकोऽप्ययं करोत्यर्थे प्रयुक्तोधातूनामनेकार्थत्वात् ॥ अत्र लोडर्थे लिट् (पा० ३-४-६) ॥

५. निर्वाहो निर्वहणं विवाहः । अनिर्वाहो विवाहप्रतिषेधः । लिङ्ग्यते । मन्त्रलिङ्गेनोच्यते ॥

१. तथाच श्रुतिलिङ्गसमवाये श्रुतिरेव बलीयसीति ततोऽपि बलवत्तरत्वमस्य विचार्यते । तथाच जैमिनिसूत्रम् । "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"ति (३-२-१४) ॥

२. पूर्वोपक्रान्त( ३-१-४ )-मन्त्रार्धर्चम् । उन्यतेऽर्थतो निर्दिश्यते । यथा प्रतिज्ञातम् ॥

**शग्म्येन मनसा दधन्वे**) सन्दधाति अभिसन्दधाति आत्मानम् यदत्रापत्यमुत्पत्स्यते तन्ममेति । एतच्च **संदधन्वे** इत्यस्यार्थः । कथंपुनरभिसन्दधातीत्याह **शग्म्येन** सङ्गमेन सुखमयेन विगतापुत्रत्वसन्तापेनेति यावत् । तथाच शं सुखं गच्छतीति शग्मः । गमेरौणादिकः कप्रत्ययः । कित्वाद् "गमहने"–( पा० ६–४–९८ )–त्युपधालोपः । शग्मे साधुरिति "तत्र साधुः" ( पा० ४–४–९ ) इतियत्प्रत्ययः । **मनसा** चेतसा । नाहमपुत्र इयमेव पुत्रिका मम पुत्रः यो ह्यस्यामुत्पत्स्यते स पौत्रो मे भविष्यतीति तस्यां पुत्रिकायामात्मानमभिसन्दधाति । तत्रैवं सति यस्तस्यामेव कृतपुत्रिकाधर्मिण्यामुत्पद्यते दौहित्रस्तमेव नप्तारं पौत्रो ममायमित्युपगच्छति मातामहो, न सर्वानेव दौहित्रानिति मुख्यया वृत्त्या स एव मातामहस्य पौत्रो भवति, नेतरे भ्रातृमतीपुत्रा इति स्थितम् ॥ इत्थं चाङ्गादङ्गात्संभवसि, आत्मा वै पुत्रनामासीत्यादिषु गौणं दुहितुः पुत्रत्वमुच्यते । दुहितेति समाख्यापि तत्र भेदिका । एवमविशेषेण पुत्राणामित्यत्रापि अभ्रातृमतीपक्ष एव द्रष्टव्यः । यद्वा "श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव गरीयसी"ति मीमांसया तत्र व्यवस्था द्रष्टव्या । अत एव पुत्रिकाविधानेन विवाहकाले कन्यापिता "अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यती"ति वदन्नेव तं लभते पुत्रिकासुतमत एव "अरोगिणीं भ्रातृमतीमसपिण्डां यवीयसी"मिति कन्यालक्षणमुक्तं स्मृतिषु ॥ तस्मिंश्च वेदे—

**अथैतां जाम्यारिक्थप्रतिषेध उदाहरन्ति ॥**

धर्मविदः । **एतां**–येयमृगनुपदं वक्ष्यमाणा "न जामय" इति ( ६ खं० ) ताम् ॥ अथशब्दो विशेषाधिकारार्थः ॥

**ज्येष्ठं पुत्रिकाया इत्येके ॥ ५ ॥**

यदोत्पन्नायां पुत्रिकायां पितुरन्ये पुत्रा जायेरंस्तदा विभागकाले ज्येष्ठं भागं **पुत्रिकायै** दद्यात् । यथाभागमितरान्पुत्रान्विभजेत् । अभागा एव त्वितरा दुहितर **इति एके** मन्यन्ते ॥ ५ ॥

तदेतदनयर्चा निरुच्यते । यथा दुहितॄणां भागो नास्तीति—

**"न जा॒मये॒ तान्वो॒ रि॒क्थमा॑रैक् च॒कार॒ गर्भं॑ सनि॒तुर्नि॒धान॑म् ॥ यदी॑ मा॒तरो॑ ज॒नय॑न्त॒ वह्नि॑म॒न्यः क॒र्ता सु॒कृतो॑र॒न्य ऋ॒न्धन॑ ॥ २ ॥"**

( ऋ० सं० ३–३१–२ )

**न जामय** इति । **तान्व**स्तनोर्जात आत्मजः (आत्मनोऽधि यो जातः) **जामये** भगिन्यै । "जामिः स्वसृ–कुलस्त्रियोः" इत्यमरः । **ऋक्थं** पैतृकं धनं तथाचामरः "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इति ॥ **न आरैक्** पृथक्कृत्य न प्रादात् । "रिचिर् पृथग्भावे" ( रु० उ० ) लुङ् बाहुलकादाद् सिज्लुकौ । आड्पूर्वो वा । किन्तु सह संवर्धयन् **सनितुः** हस्तग्राहस्य

१. भवेदिति सायणभाष्ये पाठः ॥

भगिनीभर्तुर्गर्भं प्रति**निधानम्** नितरां धारणसमर्थां **चकार** कृतवान् । अपुण्यादित्यर्थः । निधा नं नित्यनपुंसकम् । **यत्** **मातरः** ई इति पादपूरणः । **वह्निं** वोढारं कुलस्य, पुत्रं चेति योजितं भाष्ये तेनावह्निमवोढ्रीं स्त्रियं च **जनयन्त** जनयन्ति इकारलोपश्छान्दसः । यद्वा अडभावः । तयोर्द्वयोरपि पुत्रयोः **अन्यः** अन्यतरः **कर्ता** सन्तानकर्ता भवति । कतरः ? यः **पुमान्** स एव **दायादः** दायार्हो नेतरः कन्यकाख्य इति भाष्यकार एव वक्ष्यति । किञ्च तयोरपि **सुकृतोः** कर्मणि क्विप् बाहुलकात् । सुकृतयोः सुतरामेकेनैव प्रयत्नेन कृतयोरुत्पादितयोर्मध्ये **अन्यः** अन्यतरो जाम्याख्यैः **ऋन्धन्** अर्धयित्वा वर्धयित्वा । "ऋधु वृद्धौ" ( दि० स्वा० प० ) छान्दसः क्त्वार्थे शता नुम् । **प्रदीयते परस्मै** इति वाक्यशेषो भाष्यकारेणैव कृतः ॥ एवमस्यामृचि न दुहितरो रिक्थभागिन्यो भवन्ति । नैताः सन्तानकर्मणि पितुरुपतिष्ठन्ते । वर्धयित्वा ह्येताः परस्मै दीयन्ते तस्मादभागा एता इति सिद्धम् ॥ यत्पुंनरुक्तं पुंसोऽपि दानातिसर्गविक्रया भवन्तीति तदेतत्कादाचित्कम् केनचिन्निमित्तेन भवति । स्त्री तु निसर्गेणैव दीयते विक्रीयते विसृज्यते वा । सा हि परार्थमेवोत्पद्यत इत्यभागा भवति ॥ २ ॥

अथ समासतो भाष्यकृदृगर्थमनुवदति—

**न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति । जामपत्यं, जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति । तान्व आत्मजः पुत्रो रिक्थं प्रारिचत् प्रादात् । चकारैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य । यदी॒ मा॒तरो॑ ज॒नय॑न्त॒ वह्नि॑म् । पुत्र, मवह्निं च स्त्रियम् । अन्यतरः सन्तानकर्ता भवति । पुमान्दायादोऽन्यतरोऽर्धयित्वा जामिः प्रदीयते परस्मै ॥ ६ ॥**

इति श्रीयास्कमुनिप्रणीतनिरुक्तशास्त्रे नैघ० काण्डे
तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥

अत्र जामिपदं निराह–**अन्येऽस्यां जनयन्तीति** । तथाच "जनी प्रादुर्भावे" ( दि० आ० ) "इणजादिभ्यः" ( पा० ३–३–१०८ वा० ) इतीण् प्रत्ययोऽधिकरणे । उपधावृद्धिः । नस्य मः पृषोदरादित्वात् । अथवा **जामपत्यम्** । जाशब्दोऽयमपत्यवचनः ( निघं० २–२ ) "जनी प्रादुर्भावे" ( दि० आ० ) इत्यस्मात् "अन्येष्वपि दृश्यते" ( पा० ३–२–१०१ ) इत्यत्रापिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात्केवलाज्जनेर्डः । डित्त्वाट्टिलोपः । टाप् । जायते मातापितृभ्यां सकाशादिति जा । तथाच निगमः "सोमः परिक्रतुना पश्यते जाः" ( ऋ०

१. पुत्रश्च दुहिता चेत्येकशेषः । "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" ( पा० १–२–६८. ) इति सूत्रेण ॥

२. भगिन्याख्यः सुकृतोऽपि सन्दीयत एव ॥ अत्र तयोर्लोप आर्षः ॥

सं० ७-२-२६-४ ) इति । जां मिनोति प्रक्षिपतीति जामिः । "डुमिञ् प्रक्षेपणे" ( स्वा० उ० ) विच् गुणाभाव आर्षः । सा हि पतिकुले गच्छन्ती पुत्रिका सती पितुर्गृह एवापत्यं पुत्रं प्रक्षिपतीति जामिरुच्यते ॥ अथवा **जमतेर्गतिकर्मणः** ( निघं० २-१४ ) जामिः **स्यात्** । जमति गच्छति पितुर्गृहात्कुलाद्वा पतिकुलमिति । इणत्र कर्तरि बाहुलकात् ॥ तदाह—**निर्गमप्राया भवति** । प्रायेण निर्गच्छत्येव पितुर्गृहात्पतिगृहम् । काचिदेव पितृगृहेऽवतिष्ठत इति प्रायपदम् ॥ **प्राश्चित्प्रादादित्यादिगैरिसर्थः** । **गर्भनिधानीम्** । गर्भो निधीयतेऽस्यामित्यर्थतो निर्वचनं गर्भ (प्रति) निधानमिति पदद्वये स्थिते सत्त्वापचयविवक्षायां स्त्रीत्वं निधानस्य । यथा मृडालं—मृडाली, तथाचामरः । "स्त्रीस्यात्काचिन्मृडाल्यादिर्विवक्षाऽपचये यदी"ति ॥ **सनितुरति** । "षणु दाने" ( त० उ० ) इत्यस्मात् तृन् संप्रदानकारके बाहुलकात् । सनोति ददात्यस्मा इति सनिता ग्रहीता । तदाह—**हस्तग्राहस्येति** ॥ निगदव्याख्यातमन्यत् ॥

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ**
**नैघण्टुककाण्डे तृतीयाध्यायस्य**
**प्रथमः पादः ॥ ३ ॥ १ ॥ ॐ ॥**

---

## अथ तृतीयाध्यायस्य द्वितीयः पादः ।

### ( अथ मनुष्यनामनिर्वचनम् )

अथापत्यनामप्रक्रमे प्रसक्तानुप्रसक्तं "जनयितुः प्रजा" इत्येवमाद्युक्तं प्रकृतमिदानीमुच्यते—

**मनुष्यनामान्युत्तराणि पञ्चविंशतिः ।**

इति । मनुष्याणां नामानि **मनुष्यनामानि, उत्तराणि** प्रकृतेभ्योऽपत्यनामभ्यः । अपत्यान्येव हि विवृद्धानि सन्ति मनुष्या इत्युच्यन्ते । कियन्ति पुनस्तानि ? **पञ्चविंशतिः** । पञ्चाधिका विंशतिः । पञ्च च विंशतिश्चेति वा । कतमानि पुनस्तानि ? मनुष्याः । नरः । धवाः । इत्येवमादीनि ॥ २५ ॥

तत्र मनुष्यपदं निराचष्टे—

**मनुष्याः कस्मात् ?**

इति । उच्यते—

**मत्वा कर्माणि सीव्यन्ति । मनस्यमानेन सृष्टाः । मनस्यतिः पुनर्मनस्वीभावे । मनोरपत्यं मनुषो वा ॥**

**मत्वा** ज्ञात्वा **कर्माणि सीव्यन्ति** तन्तुवत्सन्ततानि (नैरन्तर्येणानुस्यूतानि परस्परं संलग्नानि ) कुर्वन्ति । तक्षन्तीति दुर्गः । अथवा **मनस्यमानेन** मनस्वीभवता प्रहृष्यता प्रजापतिना ( ब्रह्मणा ) **सृष्टा** निर्मिता एतेऽतो मनुष्याः । **मनस्यतिः** मनस्यधातुः क्यङन्तः ( पा० ३-१-११ ) **मनस्वीभावे** प्रशस्तमनोवद्भवने । प्रशंसायां मत्वर्थे विनिः । ( पा० ५-२-१२१ ) तत्रहि— "भूमनिन्दाप्रशंसासु०० भवन्ति मतुबादय" इत्युच्यते । मनःशब्दश्च वृत्तिविषये तद्वति वर्तते[1] । विन्यन्ताच्चाभूततद्भावे च्विरत्र निर्दिष्टः । **पुनरि**ति वाक्यालङ्कारे । तथाचायमर्थः मनस्यमानेनेत्यादिः । इति ॥ **पाणिनीयास्तु मनोरपत्य**मित्यर्थे "मनोर्जातावञ्यतौ षुक् च" ( पा० ४-१-१६१ ) इति यत्प्रत्ययः षुगागमश्च मनोरित्याहुः । अत्र जातिश्च प्रत्ययान्तोपाधिः । मनोरपत्यं जातिश्चेदिति अपत्यमात्रविवक्षायामन्तरेण जातिं मानव इति भवति । **मनुषो वेति** मानुषाभिप्रायेण । तत्रापि मनुशब्दस्यैव षुगागमोऽञ्प्रत्ययो द्रष्टव्य उक्तपाणिनिस्मरणात् ॥ अत्र स्कन्दस्वामिनः । **मनुषो वेति** षकारान्तमेकं प्रातिपदिकमस्ति । अतस्तदन्ताद्युत्पादयति । अत्र यत्प्रत्ययसन्नियोगेन षुगिति स्मरणान्तरम् ( पा० ) । विनापि प्रत्ययेन षकारान्तप्रयोगदर्शनात् "समिद्धो अद्य मनुषो दुरोणे" ( ऋ० सं० ८-६-८-१ ) इति । ( "मनुष्वदम" इति चाम्नायते ) ॥ पृषोदरादित्वात्सर्वं सिद्धमित्याह ॥

**तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ॥ १ ॥ ( ७ ) ॥**

तत्र मनुष्यपर्यायेषु । **भवन्ति** सन्दिग्धा इति शेषः ॥१॥७॥

तत्रेयमृगनन्तरोदाहरणम्—

**"तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒ येनासु॑राँ अ॒भि दे॒वा अस॑म । ऊर्जा॑द उ॒त य॑ज्ञियास॒: पञ्च॑जना॒ मम॑ हो॒त्रं जु॑षध्वम् ॥ ४ ॥"**

( ऋ० सं० ८-१-१३ )

---

१. "णीञ् प्रापणे" । ( भ्वा० उ० ) "नयतेर्डिच्च" ( उ० २-९२ ) इति ऋन्प्रत्ययो डित्वाट्टिलोपः जस् । नयन्ति संसारचक्रमिति नरः । धवाः । "धूञ् कम्पने" "पचाद्यच्" ( पा० ३-१-१३४ ) "कम्पन्ते मृत्युतो मर्त्या" इति निगमः ॥

२. अत्र स्कन्दस्वामी—मत्वेत्यादिना मनेः सीवेश्चेति द्विधातुजत्वं प्रदर्शयति । ज्ञात्वाऽनेनेदमिति साध्यसाधनभावं, कर्माणि सीव्यन्ति सन्तन्वन्ति । पश्चादयः मनस्येति यथा मनुष्या मनस्यमानेन प्रजापतिना सृष्टाः तथा न । मनस्यतिः कस्मिन्नर्थे ? इत्याह मनस्वीभावे मनःप्रशस्तीभावे । प्रशंसायां मत्वर्थीयः (?) प्रसन्नं ह्यस्य मनः प्रसन्नसत्त्वप्राधान्यात् । अतः प्रसन्नमनस्केन तेन सृष्टा इत्यर्थः । तथाच श्रुतिः "स पितॄन्सृष्ट्वा मनस्यदनुमनुष्यानसृजत" इति ॥

१. तथाच प्रशस्तमनोवानेवात्र मनःशब्देनोच्यते । मन इवाचरति मनस्यते । स एव मनस्यमानः । लटः शानच् ( पा० ३-२१२४ ) । "कर्तुः क्यङ् सलोपश्च—" ( पा० ३-१-११ ) इत्यत्र "ओजसोऽप्सरसो नित्यमितरेषां विभाषये"—ति वार्तिकं, तेन मनायते मनस्यते इत्युभयं भवति ॥

**तद्येति** । सौचीकस्याग्नेरार्षम् । विराड् त्रिष्टुप् । तस्य विश्वेदेवैः सह संवादे होतृजपे विनियुक्ता । **वाचो** मन्त्रवर्णात्मिकायाः । तत्-प्रसिद्धं वीर्यं ( सामर्थ्यं ) **प्रथमं** परममुत्कृष्टम् अहम् । **अद्य मंसीय** इदानीं मन्ये ( जाने ) लङर्थे लिङ् । **येन** वीर्येण । **असुरान्** । **अभि असाम** अभिभवेम । ( पराभवेम ) वयम् । "असदो द्वयोश्च" ( पा० १-२-५९ ) इति स्मरणात् ॥ **हे ऊर्जादः !** ऊर्जमन्नम्-( निघं० २-७ ) अदन्तीति तथा "अदोऽनन्ने" ( पा० ३-२-६८ ) इति विट् कर्तरि ॥ अन्नभक्षयितारः । **उत अपि च हे यज्ञियासः !** यज्ञियाः यज्ञार्हाः यज्ञसम्पादकाः ! । "यज्ञर्त्विग्भ्यां घखञौ" ( पा० ५-१-७१ ) इत्यर्हार्थे घस्तस्येयः । ( पा० ७-१-२ ) "आज्जसेरसुक्" ( पा० ७-१-५० ) इत्यसुगागमः । **हे देवाः !** यूयम् । अपि च **हे पञ्चजनाः !** मनुष्याः ! निषादपञ्चमा वर्णाः ! **मम इदं होत्रं** हवनीयं सवनं **जुषध्वम्** अनुगृह्णीध्वम् "जुषी प्रीतिसेवनयोः" ( तु० आ० ) प्रार्थनायां लोट् ॥ ४ ॥

अथ भाष्यकृत्पूर्वार्धर्चमर्थतोऽनुवदति—

**तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवाः ! ॥**

इति ॥

अत्रैकपदनिरुक्तम्—

**असुराः असुरताः स्थानेष्व, स्ता स्थानेभ्य इति वा । अपिवाऽसुरिति प्राणनामास्तः शरीरे भवति, तेन तद्वन्तः ॥**

ये हि **स्थानेषु** स्वनिवासभूमिषु सुष्ठु **रताः** प्रीता **न** भवन्ति, किन्त्वितस्ततोऽतृप्ता इव धावन्ति चपलास्तेऽसुराः । **अथवा स्थानेभ्योऽस्ता** देवैः प्रच्याविताः इत्यसुराः "असु क्षेपणे" ( दि० प० ) "असेरुरन्" ( उ० १-४२ ) इत्युरन् ॥ **अपि वा**-अथवा **असुरिति प्राणस्य नाम** भवति । स हि शरीरे **अस्तः** क्षिप्त इव **भवति** । तत्रैव तस्यावस्थानमित्यर्थः । **तेन हि तद्वन्तो**ऽसुराः । भूम्नि मत्वर्थीयोऽत्र रः । असुर्येषां विद्यत इति । महाप्राणा दुर्मरा इत्यर्थः ॥

अथवा इदमन्यद्ब्राह्मणोक्तं निर्वचनं स्यात्—

**"सोर्देवानसृजत तत्सुराणां सुरत्वम् । आसोरसुरानसृजत तदसुराणामसुरत्वमिति" विज्ञायते ॥**

सुरिति प्रशस्तनाम । तथाचोक्तम् "अति सु इत्यभिपूजितार्थे" इति ( नि० १-३ ) अत्र द्व्यार्थत्वमार्षविज्ञानात् । तस्मात् **सोः** प्रशस्तादात्मनः प्रदेशात्प्रजापतिः **देवानसृजत** । ऊर्ध्वेभ्यः प्राणेभ्यः । तदुक्तम्-"ऊर्ध्वमुदतृणत्पूर्वपक्षः पञ्चदश तेन सोर्देवा ०० रत्वमि" ति ॥ एवमेतत्प्रातिलोम्येना**सोरि**त्यादि । तदुक्तम् "अर्वाङ्वातिरदपरपक्षस्तेनासुरानसृजते" ति । असुरिति प्रशस्तप्रतिषेधः । अप्रशस्तादात्मनः प्रदेशात्प्रजापतिर**सुरानसृजत** । विचार्यमाणे **ज्ञायते** ब्राह्मणग्रन्थे ॥

**ऊर्जाद उत यज्ञियासः ।**

**अन्नादाश्च यज्ञियाश्च । ऊर्गित्यन्ननामोर्जयतीति सतः ॥**

**सत** इति ( कर्तृ- ) कारकाभिधानम् । अत्र पूर्ववाक्यं सन्दिग्धमित्युद्धृतमपरं विवरणमेवमग्रेऽपि ॥ "ऊर्ज बलप्राणनयोः" ( चु० प० ) क्विप् । "चोः कुः" ( पा० ८-२-३० ) इति कुत्वम् । ऊर्जयति बलिष्ठं करोतीत्यूर्जमन्नम् ॥

**पक्वं सुप्रवृक्णमिति वा ॥**

अथवा **पक्व**मित्यूर्क् । पक्वशब्दस्य पकारलोपं कृत्वा क्वशब्दं व्यस्य वकारस्योरितिकृते रुगागमे चोर्गिति भवति । यद्वा **सुप्रवृक्ण**मित्यूर्क् । प्रश्चेरशब्दलोपे कृते, संयोगादिलोपे च कृतेऽकारस्योपरि रुकि कृते च कृते चस्य कुत्वे च ऊर्गिति भवति । सुछिन्नं हि तद्भवति मृदुलादिति स्कन्दस्वामिनः । इत्येवं ककाररेफसामान्यात्पचेर्व्रश्चतेर्वा स्यादुभयोर्वा । पक्वं सन्मृदुलात्सुच्छेद्यं भवति । ऊर्ज्यते प्राण्यते जीव्यतेऽनयेति भट्टभास्करमिश्रः । अत्र हि करणे क्विप् ॥

**पञ्चजना मम होत्रं जुषध्वम् ।**

एतदत्र सन्देहपदमुद्धृतम् ॥

अत्र—

**गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः ॥**

**एके** आचार्याः "मन्यन्त" इति शेषः । **चत्वारो वर्णाः** ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः **निषाद** एषां **पञ्चम** इति । निषद्य ( निगूढ उपविश्य ) अत्ति हन्तीति निषादः प्राणिवधजीवी । **औपमन्यव** उपमन्योरपत्यमाचार्यो "मन्यत" इति शेषः ।

आह—

**निषादः कस्मात् ?**

इति । उच्यते—

**निषण्णमस्मिन् पापकमिति नैरुक्ताः ।**

**अस्मिन्** पुंविशेषे **पापकं**-कुत्सितं पापं, कुत्सार्थे कन् ( पा० ५-३-७४ ) **निषण्णं** संविष्टम् **इति** निषादः । सदेरधिकरणे घञ् उपधावृद्धिः । **इति नैरुक्ता** निरुक्तविदो मन्यन्ते ॥

---

१. प्रबलयति प्राणयति, बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । निघण्डुः ( २-७ खं० ) ऊर्गित्यन्ननामसु ॥

२. तद् वृक्णं छेद्यमित्यर्थः ॥

३. निषादः सौधन्वनः ( सुधन्वदेशोद्भवः ) स च रथकारः । तथाच निगमः । "रथं ये चक्रुः सुवृतम्" इति ( ऋ० सं० ३-७-७-३ ) अस्य भिन्नकालमाधानं श्रूयते "वर्षासु रथकार" इति । एवं मन्त्रभेदोऽप्याधाने श्रूयते "ऋभूणांत्वा इति रथकारस्ये" ति ॥ "सौधन्वना ऋभवः सूरचक्षस" ( ऋ० सं० १-७-३०-४ ) इति च मन्त्रलिङ्गात् । एष प्राणिवधजीवनः ॥

अथ यथा पञ्चजनशब्देन मनुष्या एव निषादपञ्चमा उच्यन्ते तथैव निराह—

**यत्पाञ्चजन्यया विशा।**

**पञ्चजनीनया विशा ॥**

अत्र सन्दिग्धमन्त्रएवम्—

"यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत। अस्तृणाद्बर्हणा विपोऽर्योमानस्य स क्षयः ॥ १॥". (ऋ० सं० ६-४-४३) अस्यार्थः। यद् यदा **पाञ्चजन्यया** पञ्चजनीनया पञ्चजनसमुदायलक्षणया (निषादपञ्चमया) **विशा** प्रजया सहितैः स्तोतृभिर्ऋत्विग्भिः। **इन्द्रे** अवर्षति सति **घोषाः** स्तुतीः **असृक्षत** असृज्यन्त "वर्ष भगवन्नि"त्येवम्। तदा ताभिः (स्तुतिभिः) प्रह्लादितचेता उपजातदयः **अर्यः** ईश्वरः कृत्स्नस्य जगतः। **विपः** विपाट् पिता मेधानां, मेधावी वा **स** इन्द्रः **बर्हणा** परिवृद्धे(ढे)न वज्रेण वृहेर्वृद्ध्यर्थाद्धिंसार्थाद्वा ल्युट्। तृतीयैकवचनस्थाने डादेशः। (पा० ७-१-३९) **अस्तृणात्** अहन् मेघान्वर्षार्थम्। यतः स **मानस्य** दर्पस्य बलस्य वीर्यस्य वा **क्षयो** निवासः। (पा० ६-१-२०३) निर्वीर्यो हि स्तूयमानः किंकुर्यात्परितुष्टोऽपि? **यद्वा** मानस्य सत्कारस्य पूजायाः **स** इन्द्रः **क्षयो** निवासो भाजनमिति मन्वानैः स्तोतृभिर्वर्षार्थिभिः सत्कृतस्तान् वर्षप्रदानेन प्रतिसत्कारयिष्यन्नस्तृणादहन् मेघान्। अथवा **अस्य** जगन्निर्माणस्य देवादेः स्थावरान्तस्य **स** इन्द्रो **मानः** पूज्यः **क्षयो** निवास आश्रयश्चेति जगद्रक्षणायास्तृणान्मेघानवर्षदिति ॥ १॥

**पञ्च पृक्ता संख्या, स्त्रीपुंनपुंसकेष्वविशिष्टा॥**

**पृक्ता** संपृक्ता, "पृची सम्पर्के" (रु० प०) अकर्मकात्ततः कर्तरि "गत्यर्थाकर्मक०" (पा० ३-४-७२) इत्यादिना क्तः। मिलिता संख्या पञ्च। पर्यवसितार्थमाह **स्त्रीति**। तद्यथा पञ्च स्त्रियः। पञ्च पुरुषाः। पञ्च कुलानि। इति। अत्र स्त्रीपुंनपुंसकेषु पञ्चशब्दे नास्ति विशेषः॥

**(अथ बाहुनामनिर्वचनम्)**

**बाहुनामान्युत्तराणि द्वादश ॥**

**बाहोर्नामानि। उत्तराणि** प्रकृतेभ्यो मनुष्यनामभ्यः। मनुष्याणामेव हि बाहुरिति व्यपदिश्यते। आयती। च्यवाना। अभीशू। इत्येवमादीनि॥ १२॥

आह—

**बाहू कस्मात्?**

इति। उच्यते—

**प्रबाधत आभ्यां कर्माणि ॥**

**प्रकर्षेण बाधते** क्षिपत्याभ्यां बाहुभ्यां **कर्माणि**। "बाधृ लोडने" (भ्वा० आ०) "अर्जिदशिकम्यमिपसिबाधाम्" (उ० १-२६) इत्युप्रत्ययो होऽन्तादेशश्च। गमयत्याभ्यां कर्माणि बाधते वा परानाभ्यामिति बाहू॥

**(अथाङ्गुलिनामनिर्वचनम्)**

**अङ्गुलिनामान्युत्तराणि द्वाविंशतिः॥**

**अङ्गुलीनां नामानि। उत्तराणि** प्रकृतेभ्यो बाहुनामभ्यः। बाहोरेवाङ्गुलयो भवन्ति प्राधान्येनेति तानि च अग्रुवः। अण्व्यः। क्षिपः। इत्येवमादीनि॥ २२॥

१. अनुष्टुबियं प्रगाथेन दृष्टेन्द्री पृष्ठस्य पञ्चमेऽहनि मरुत्वतीये शस्यते॥

२. एतच्च दुर्गोक्तिमनुरुध्य व्याख्यातम्। वस्तुतस्तु। पञ्चसु जनेषु भवेति (स्वसिन्नेवाधाराधेयभावः) तद्धितार्थे (पा० २-१-५१) समासः। "पञ्चजनादुपसंख्यानम्" (पा० ४-३-५८ वा०) इति ञ्यः। आदिवृद्धिः (पा० ७-२-१०७) एवम्। पञ्चभ्यो जनेभ्यो हितेत्यर्थे (पा० ५-१-९ वा०) खः। खस्येनः (पा० ७-१-२) पाञ्चजनीना तयेत्यर्थः। प्रजाभ्यो हितया प्रधानप्रजया सहेति मन्त्रार्थे द्रष्टव्यः॥

३. पटेर्गत्यर्थस्य (भ्वा० प०) ण्यन्तत्वे भेदनार्थत्वमिति ततो विपूर्वाड्डः। टित्वाट्टिलोपः। मेधार्थे "विप क्षेपे" (चु० प०) "इगुपधलक्षणः" (पा० ३-१-१३५) कः। विविधं वेपयति क्षेपयत्यर्थानिति विपः। णिलोपः। अत्र डिप इति पाठान्तरम्। विप इति पाठोऽस्मत्कृतनिघण्टुभाष्ये दृष्टः॥ अत्रैक उपसर्गोऽन्तः॥

१. आमिश्रीभवतः कर्मभिरेताविल्यायती। च्यावयितारौ कर्मणां च्यवाना। अभ्यश्नुवाते कर्माणीत्यभीशू इत्येवमादि योज्यम्। इति दुर्गः। अन्ये त्वाचक्षते आङ्पूर्वाद्यततेः (भ्वा० आ०) प्रयत्नार्थाद्गत्यर्थाद्वा (निघं० २-१४) "इन्सर्वधातुभ्यः" (उ० ४-११४) इतीन्प्रत्ययः। आभिमुख्येन यतेते कार्येषु। गच्छतो वा साधनत्वम्। बाह्वोर्द्वित्वात्सर्वत्र द्विवचनान्तता। च्यवानेति "च्युङ् गतौ" (भ्वा० आ०) "सम्यानच्स्तुवः" (उ० २-८३) इत्यत्र प्राक्प्रत्ययनिर्देशोऽधिकविध्यर्थं इत्युक्तेरानच्प्रत्ययः। "सुपां सुलुगि"-(पा० ७-१-३९) ति द्विवचनस्याकारश्चयवेते गच्छतः कर्मणामन्तरिति च्यवाना औङ आकारः (पा० ७-१-३९)। अभीशू। अभिपूर्वादश्नोतेः (स्वा० उ०) ईशतेः (अ० आ०) वा "भृमृशृतृ" (उ० १-७) इत्यादिनोप्रत्ययो बाहुलकाद्धात्वकारस्य पक्षे ह्रस्व। अभ्यश्नुवाते अभिनयेते कर्माणीति। अभीशाते कर्माणि कर्तुमिति वा अभीशू।

२. बाह्वन्तेऽवस्थिता भवन्त्येताः कर्माणीत्यग्रुवः। अण्व्यः हस्तपरिमाणात्। क्षिप्यन्ते आभिः क्षेप्तव्यं द्रव्यमिति क्षिपः। इत्येवमादि योज्यमिति दुर्गः। अन्ये तु भवतेर्गत्यर्थस्य "जत्र्वादयश्च" (उ० ४-१००) इत्युप्रत्ययान्तो निपातः। यद्वा "अगि गतौ" (भ्वा० प०) निपातनान्नलोपोऽपि। "तन्वादित्वा" दुवङ् (पा० ६-४-८६ वा०) गच्छन्ति कर्माणि प्रतीत्यग्रुवः। अण्व्यश्च, "अण शब्दे" (भ्वा० प०) "अणश्च" (उ० १-८) इत्युप्रत्ययः। "वोतो गुणवचनादि" (पा० ४-१-४४) ति ङीष्। अणन्ति स्फोटनादित्यण्व्यः॥

आह—

**अङ्गुलयः कस्मात् ?**

इति । उच्यते—

**अग्रगामिन्यो भवन्तीति वा, अग्रगालिन्यो भवन्तीति वा, अग्रकारिण्यो भवन्तीति वा, (अग्रसारिण्यो भवन्तीति वा) अङ्कना भवन्तीति वा, अपिवाऽभ्यञ्जनादेव[1] स्युः ॥**

अग्रे ह्येताः कर्मसु नित्यं गच्छन्तीत्यग्रगामिन्योऽङ्गुलयः । अथवा अग्रे ह्येता नित्यं गलन्त्युदकमित्यग्रगालिन्योऽङ्गुलयः । अग्रे वा एताः कर्माणि नित्यं कुर्वन्ति[2] । इत्यग्रकारिण्योऽङ्गुलयः । अथवा **अङ्कना भवन्ति** । यो ह्येताभिरभिहन्यते सोऽङ्कित इव भवतीति अङ्क्यते आभिरित्यङ्कनाः "अकि लक्षणे" (भ्वा० आ०) "नन्द्यादित्वात्" (पा० ३-१-१३४) बाहुलकात् करणे ल्युट्टाप् ( पा० ४-१-४ ) अथवा **अञ्जना भवन्ति** । आभिरच्यते पूज्यते गन्धादिभिर्देव इति । **अपि वा**—अथवाऽभि—आभिमुख्येनाञ्चनाद्गमनादेवाङ्गुलयः **स्यु**रित्युपक्रान्तमेवार्थमुपसंहरति । तदित्थम् गच्छतेर्गलतेः[3] करोतेरङ्कतेरञ्चतेर्वाऽग्रपूर्वादङ्गुलयोऽनेन निरुक्ताः पृषोदरादित्वात् साधनमेषां द्रष्टव्यमेवमन्यत्रापि यथायथमूह्यम् ॥

**तासामेषा भवति ॥ २ ॥ ५ ॥**

**तासाम्** अङ्गुलीनाम् । **एषा** अनन्तरमुदाहरिष्यमाणा **ऋक् भवति** "निर्वाचिके"ति शेषः ॥ २ ॥ ( ८ )

यथा—अत्र (अङ्गुलिनामसु) अवनय इत्येवमादीनि नद्यादिनामभिः ( १-१३ ) निघण्टुकैः सन्दिह्यन्ते । तदर्थमिदमुदाह्रियते—

**"दशाऽवनिभ्यो दश कक्ष्येभ्यो दश योक्त्रेभ्यो दश योजनेभ्यः ॥ दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥ २ ॥"**

( ऋ० सं० ८-४-३० )

**दशावनिभ्य इति** । त्रिष्टुबेषा अर्बुदस्य काद्रवेयस्य सर्पस्यार्षम् । ग्रावस्तुतौ विनियुक्ता । हे ऋत्विजः ! यूयं **दशावनिभ्यः** दशभिरवनिभिरङ्गुलीभिर्य उपचर्यन्ते[1] ग्रावाणः ( सोमाभिषवकर्मणि प्रवृत्ते सति ) ते दशावनयस्तेभ्यस्तानुद्दिश्य[2]ताननुकूलयितुं[3] वा । **अर्चत** स्तुतीः प्रोच्चारयत । एवमेव दशभिः कक्ष्याभिर्य[4] उपचर्यन्ते ते दशकक्ष्यास्तेभ्यो **दशकक्ष्येभ्यः** । अर्चत । दशभिर्योक्त्रैर्य[5] उपचर्यन्ते ते दशयोक्त्रास्तेभ्यो **दशयोक्त्रेभ्यो**, दशभिर्योजनैर्य[6] उपचर्यन्ते ते दशयोजनास्तेभ्यो **दशयोजनेभ्यः** । दशभिरभीशुभिर्य[7] उपचर्यन्ते ते दशाभीशवस्तेभ्यो **दशाभीशुभ्यः** । **अजरेभ्यो**ऽजरणधर्मभ्यः (सदा नूतनवत्प्रतिभासमानेभ्यः) दशधुरोऽङ्गुलयः[8] परिमापका येषां ते **दशधुरः** । तानर्चत । एवं **दशयुक्तावहद्भ्यः** दशभिरश्वादिभिर्युक्ताः शकटे योजिता ये ऊह्यन्ते तेभ्यस्तानुद्दिश्यार्चत । इति पूर्वेणाभिसंबन्धः । आवहद्भ्य इति कर्मणि लटः शतरि रूपम् ॥ आत्मनेपदव्यत्यय आर्षः ( पा० ३-१-८५ ) ॥ २ ॥

अथैकपदनिरुक्तम्—

**अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि ॥**

१. क्वचिरवभ्यञ्जनादिति पाठः ॥

२. अत्र सर्वत्र ताच्छील्ये ( पा० ३-२-७८ ) णिनिः । उपधावृद्धिः । सततकरणं हि ताच्छील्यम् ॥

३. लोके तु "अगि गतौ" (भ्वा० प०) "ऋतन्यञ्जी"-( उ० ४-२ ) त्युलिप्रत्ययः । अङ्कं पाणिपादमवयवं लाति गृह्णातीति बाहुलकाड्डिप्रत्ययेनाङ्गुलिरिति भानुजिदीक्षिताः । "अङ्गुलिः करशाखायां कर्णिकायां गजस्य चे"ति हैमविश्वप्रकाशौ । "बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते" इति ( पा० ८-२-१८ वा ) अङ्गुरिरपि ॥ एतन्मतेऽङ्गुशब्दस्यावयवार्थत्वं चिन्त्यम् ॥

४. अत्राञ्जतेर्वेति पाठं मत्वा 'ये तु अभ्यञ्जना'-इत्यभिधीयन्ते तेषामभ्यज्यत आभिरिति दुर्गः ॥

१. उप-उपरि चर्यन्ते गम्यन्ते उद्धियन्त इति यावदेवमग्रेऽपि ॥

२. "ल्यब्लोपे कर्मण्यधिकरणे चे"-(पा० १-४-३१) ति पञ्चमी ॥

३. अत्र पक्षे "क्रियार्थोपपदस्य च कर्मणि स्थानिन" ( पा० २-३-१४ ) इति चतुर्थी । ग्रावाभिमानिनी देवतात्र स्तूयते । एवमन्यत्राप्यचेतनवस्तुषु बोध्यम् । एष च मीमांसकानां समयः ॥

४. कक्ष्या अप्यङ्गुलिनामसु पठिताः (निघं० २-५)। साधनमग्रे मूलव्याख्यायामैकपदिके द्रष्टव्यम् ॥

५. लोके तु गजमध्यबन्धनं कक्ष्येत्युच्यते । "दूष्या कक्ष्या वरत्रा स्यादि"त्यमरः । कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने । हर्म्यादीनां प्रकोष्ठे चे"ति मेदिनी । योक्त्राण्यप्यङ्गुलिनामसु पठितानि ( निघं० २-५ ) लोके तु वृषादेर्गले युगबन्धनं योक्त्रम् । "आबन्धो योत्रं योक्त्रमि"त्यमरः । साधनमग्रे स्फुटम् ॥

६. योजनान्यप्यङ्गुलयो भवन्ति ( निघं० २-५ ) लोके तु "योजनं परमात्मनि । चतुष्क्रोश्यां च योगे चे"-ति मेदिनी । साधनमग्रे स्फुटम् ॥

७. अभीशवोऽङ्गुलिपर्याये पठिताः ( निघं० २-५ ) लोके तु "अभीशुः प्रग्रहे रश्मा"-वित्यमरः । अश्वादिरज्जुः किरणश्चाभीशुः ॥

८. धुरोऽङ्गुलिपर्याये पठिताः (निघं० २-५) । लोके तु वोढृबन्धनस्थानानि धुरः । इति वक्ष्यति "धूः स्त्री क्लीबे यानमुखम्" इत्यमरः । यानस्य रथादेर्मुखं पुरोभागः । यूआ इति प्रसिद्धः ॥

९. अत्र दशभिरिति कर्तृपदम् गमकत्वाच्च समासः ॥ दुर्गस्तु दशभिर्दशभिरङ्गुलीभिर्य एते युक्ता वहन्ति ग्रावाणस्तेभ्य इत्यर्थमाह ॥ अत्र ( मते ) सौकर्यातिशयविवक्षा बोध्या ॥

अवन्ति रक्षन्ति कर्माणि । (क्षिपन्तीति) वा । अव् "रक्षण-गति-तृप्ति-भी ( प्री ) त्यऽवगम-प्रवेश-श्रवण-स्वाम-( स्वाम्य- )र्थ-याचन-क्रिये-च्छा-दीप्त्य-ऽवाप्त्या-ऽऽलिङ्गन-हिंसा-दान-भाग-वृद्धिषु" ( भ्वा० प० ) अस्माद् "र्तिसृधृधम्यम्यश्यवितृभ्योऽनिरिः" ( उ० २-९५ ) ति अनिप्रत्ययः कर्तरि कर्मणि वा । लोकेतु–**अवनिः** पृथ्वी अवति प्रजाः अव्यते वा भूपैः । **अवनिर्नदी** अवति जगत्खोदकेनेति । अव्यते प्राणिभिस्तीरादिनिर्माणेनेति वा । एवमिहाङ्गुलयोऽवनय इत्येवं नद्यादिनाममिः सन्दिह्यन्ते । एवमप्रुवोऽपि नद्योऽङ्गुलयश्च निघण्टु-( १-१३ ) ( २-५ )-पठिताः ॥

## कक्ष्याः प्रकाशयन्ति कर्माणि ।

प्रकटीकुर्वन्तीत्यर्थः । कक्षो बाहुमूलं "तत्र भव" ( पा० ४-३-५३ ) इत्यर्थे "शरीरावयवाच्चे"ति ( पा० ४-३-५५ ) यत् प्रत्ययः । अङ्गुलयोऽपि परम्परया कक्षे भवा इति वक्तुं शक्यन्ते । अंसेन नित्यं प्रच्छादितत्वात् प्रकाश्यो हि सर्वदा कक्षस्तद्भवा अङ्गुलयः । तद्वन्तः प्रकाश्याः । किन्तु **प्रकाशयन्ति कर्माणि** अनुष्ठानेन फलेन वा । यथा चाधारस्थिते अरणी अग्निना प्रकाश्येते । तत्र भवोऽग्निः प्रकाशको भवति तद्वत् । यद्वा कक्ष्या रज्जुस्तद्बन्धनसाधनत्वादङ्गुलयः कक्ष्याशब्देनोच्यन्ते ॥

## योक्राणि योजनानीति व्याख्यातम् ॥

**योक्राणी**त्येतत्पदं **योजनानी**त्यनेन पदेन **व्याख्यातम्** । यान्येव योक्त्राणि तान्येव योजनानि । "युजिर् योगे" ( रु० उ० ) "दाम्नीशसयुयुजस्तुतुद" ( पा० ३-२-१८२ ) इत्यादिना करणे ष्ट्रन्प्रत्ययः पूर्वत्र । परत्रच "युच् बहुलं" ( उ० २-७४ ) इति युच् । युञ्जन्ति पदार्थानाभिरिति, युक्तानि वा हस्तेन, । संयम्यन्त आभिः क्लेशादय इति वा । शब्दस्वाभाव्यान्नपुंसकता ॥

## अभीशवोऽस्यश्नुवते कर्माणि ।

**अभीशवो**ऽप्यङ्गुल्य एव । ता हि **अभ्यश्नुवते कर्माणि** व्याप्नुवन्तीत्यर्थः ॥ "अशू व्याप्तौ" ( स्वा० उ० ) उणि धातोरादिलोपो दीर्घश्चोपसर्गस्य । एवम्-अनेकैर्नामभिरङ्गुलय एवोक्ता अनेकक्रियाशक्त्युपप्रदर्शनाय । एते ग्रावाण एवमनेकक्रियायोगिनीभिरङ्गुलीभिर्गृहीतास्तदर्थमेतानर्चतेति भावः ॥

## दशधुरो दशयुक्ता वहन्त्यः ।

## धूर्धूर्वतेर्वधकर्मणः । इयमपीतरा धूरेतस्मादेव, विहन्ति वहं, धारयतेर्वा ॥

ध्वरति धूर्वतीति वधकर्मसु पठितम् ( निघ० २-१९ ) तथाच **धूर्वतेः । वधकर्मणः** वधार्थाद्धुर्वीधातोः (भ्वा० प०) कर्तरि क्विपि ( पा० ३-२-१७७ ) "राल्लोप" ( पा० ६-४-११ ) इति वलोपे "र्वोरुपधाया" ( पा० ८-२-७६ ) इति दीर्घे धूः । जसि धुरः । धूर्वन्ति घ्नन्ति उपक्षयन्ति कर्माण्याभिरिति धुरः । हिंसन्ति परानाभिरिति वा । धारयतेर्वीणादिके क्विपि बाहुलकादाकारस्योकारः । अङ्गुल्या हि धार्यं सुवर्णादि धारयति । **इयमपि इतरा** अनड्डहादिसम्बन्धिनी **धूः** यानमुखम् ( "जूआ" इति भाषायां प्रसिद्धा ) **एतस्मादेव धूर्वतेः** वधार्थात् । साऽपि **विहन्ति वहं** स्कन्धं वोढुरनडुहोऽश्वस्य वा । **धारयतेर्वा** सा हि धारयत्यश्वमनड्वाहं च ॥

## कान्तिकर्माण उत्तरे धातवोऽष्टादश ॥

अयं खलु पुरुषो व्याख्यातः सबाहुः साङ्गुलस्तं खलु काम एव प्रथममाविवेशेति कान्त्यर्था एवोत्तरे प्रक्रान्ताः । यदपि ह्यकान्तमकमनीयं भवति तदप्यङ्गुलीभिरेव कान्तं क्रियत इत्यतोऽङ्गुलिनामभ्य **उत्तरे कान्तिकर्माणः** कान्त्यर्थाः । **धातवः** समाम्नाताः । ते च-वश्मि । उश्मसि । वेति । एवमादयः ॥ १८ ॥

## ( अथान्ननामनिर्वचनम् )

## अन्ननामान्युत्तराण्यष्टाविंशतिः ॥

**अन्नस्य नामानि । उत्तराणि** प्रकृतेभ्यः कान्तिकर्मभ्यः । अन्नमेव हि कान्तं सर्वभावेभ्यो भवतीति कान्ति-

---

१. इतिशब्द आद्यर्थस्तेनोक्तेष्वर्थेषु यो यो योग्यः स स सर्वोऽपि सङ्गमनीयः ॥ एषोऽर्थोऽनेकार्थत्वाद्धातूनामिति ॥

२. "बाहुमूले उभे कक्षावि"त्यमरः । निरुक्तेऽपि "कक्षो गाहतेः क्स इति नामकरणः । ख्यातेर्वाऽनर्थकोऽभ्यासः । किमस्मिन् ख्यानमिति, कषतेर्वा तत्सामान्यान्मनुष्यकक्ष" इत्येवमुक्तम् । ( २-१-५ ) व्याख्यातमेतदधस्तात् । अत्र स्कन्दस्वामिनः । "ख्या प्रकथने" ( अ० प० ) इत्यस्मात्सप्रत्यये निरर्थको निर्निमित्तोऽसौ ( सः ) । यकाराकारयोर्लोपोऽभ्यासविकारश्च द्रष्टव्यः । इति । अयमर्थः । प्रायेण "वृतॄवदिहनिकमिकषिभ्यः सः" ( उ० ३-२९ ) इति ख्यातेर्बाहुलकात्सप्रत्यये द्विर्वचने च कृते । हलादिः शेषे ह्रस्वत्वे "कुहोश्चुः" ( पा० ७-४-६२ ) इति न भवति बाहुलकादेव । "अभ्यासे चर्च" ( पा० ८-४-५४ ) इति चर्त्वम् । उत्तरस्य 'ख्या'इत्यस्य यकाराकारयोर्लोपे "खरिचे"ति ( पा० ८-४-५५ ) चर्त्वम् "आदेशप्रत्यययोः" ( पा० ८-३-५९ ) इति षत्वम् । प्रकथनेन प्रकाशनं लक्ष्यते । अंसेन नित्यं प्रच्छादनात्प्रकाश्यते पुरुषेण ॥

३. तथाच निरुक्तम् "कक्ष्या रज्जुरश्वस्य । कक्षं सेवत" इत्युपक्रम्य "बाहुमूलसामान्यादश्वस्ये" त्युक्तम् ( २-१-५ ) ॥

१. काम इच्छा ॥

२. "वश् कान्तौ" ( अ० प० ) लडुत्तमपुरुषैकवचनम् । उश्मसीति बहुवचनमत्र "इदन्तो मसि" ( पा० ७-१-४६ ) इति मस इगागमः । अपिङित्वात्संप्रसारणम् । वेतीति वीगतीत्यस्य ( अ० प० ) लटि ॥

कर्मभ्य उत्तराण्यन्ननामानि २८ ॥ अन्धः । वाजः । पयः । इत्येवमादीनि ॥

आह—

**अन्नं कस्मात् ?**

इति । उच्यते—

**आनतं भूतेभ्योऽत्तेर्वा ॥**

आभिमुख्येन ह्येतत् **नतं** नम्रीभूतं भोजनाय **भूतेभ्यः** भूतानां जनानामर्थे भवति । तादर्थ्ये चतुर्थी वा (पा० १-४-४४ वा०)। **अत्तेर्वा** भक्षणार्थस्य । अद्यते स अत्ति च भूतानि । तथाचोक्तम् "अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत" इति । अत्राद भक्षण इत्यस्मात् कर्मणि भूते । कर्तरि वा बाहुलकात् वर्तमाने क्तः । "अन्नाण्ण" (पा० ४-४-८५) इति निपातनात् "अदो जग्धिर्ल्यप्ति किति" (पा० २-४-३६) ति जग्ध्यादेशो न । यद्वा "बहुलं तणि" (पा० २-४-५४ वा०) "अन्नवधकगात्रविचक्षणाजिराद्यर्थम्" इति वार्तिकोक्तेर्जग्ध्यादेशाभावः ॥ "अन्नं भक्ते च भुक्ते स्यात्" इति विश्वमेदिन्यौ ॥

**अत्तिकर्माण उत्तरे धातवो दश ॥**

अन्नमेव ह्यद्यत इत्यन्ननामभ्य **उत्तरेऽत्तिकर्माणोऽद**नार्थाः समाम्नाताः १० ॥ तेच-आवयति । भर्वति । बभस्ति । इत्येवमादयः ॥

१. अन्ध इत्ययं निर्वक्ष्यते "आध्यानीयं भवतीति" (निरु० ५-१-१) आभिमुख्येन हि ध्यातव्यं सर्वेषामन्नं, प्रीतेः शरीरस्थितेश्च तदायत्तत्वादिति स्कन्दस्वामी । आङ्पूर्वाद्ध्यायतेरसुनि बाहुलकाद्यकाराकारयोर्लोपः । उपसर्गस्य ह्रस्वत्वं धातोर्नुडागमश्च । यद्वा "अद् भक्षणे" (अ० प०) इत्यस्मात् "अदेर्नुम् धश्च" (उ० ४-२००) इति कर्मणि कर्तरि वा असुनि नुडागमो धकारश्चान्तादेशः । अद्यते प्राणिभिस्तान्वा स्वयमत्ति । तथाच श्रुतिः "अद्यतेऽत्ति च भूतानि" (तै० उ० २-२) । वाज इति "वज गतौ" (भ्वा० प०) "अकर्तरि च कारके संज्ञायामि" (पा० ३-३-१९) ति घञ् । "अजिव्रज्योश्च" (पा० ७-३-६) ति चकारस्यानुक्तसमुच्चयार्थत्वाद्वजेरपि कुत्वप्रतिषेधः । वजति गच्छत्यनेनादत्तेन सुखानि, भुक्तेन तृप्तिं वा । गच्छत्यनेन शुद्धेन सत्त्वशुद्धिं भोक्ता । यदाह "आहारशुद्धौ सत्त्वशुद्धिरि"ति । यद्वा गत्यर्थानां बुध्यर्थत्वाद्वजति जानात्यनेन भुक्तेन धर्मम् । तथाच भारतम् । "दश धर्मान्न जानन्ति धृतराष्ट्र! निबोध तान् । मत्तः प्रमत्त उन्मत्तो श्रान्तः क्रुद्धो बुभुक्षित" इत्यादि ॥ गत्यर्थेष्वन्ननामस्वेषा गतिः सर्वत्र बोध्येति ॥ त्पयइति गत्यर्थात्पयतेरसुन् । (उ० ४-१८८) ॥

२. आङ्पूर्वाद्वेतेः (अ० प०) "बहुलं छन्दसी"-(पा० २-४-७३) ति शपो लुगभावः । यद्वा "वेञ् तन्तुसन्ताने" (भ्वा० उ०) धातूनामनेकार्थत्वाद्भक्षणार्थः । भर्वतीति "भर्व हिंसायां" (भ्वा० प०) । "भस भर्त्सनदीप्त्योः" (जु० प०) इत्यस्य बभस्ति ॥

(अथ बलनामनिर्वचनम्)

**बलनामान्युत्तराणि अष्टाविंशतिः ॥**

**बलस्य नामानि । उत्तराणि** प्रकृतेभ्योऽत्तिकर्मभ्यः । अदन्त एव हि बलवन्तो भवन्तीत्यत्तिकर्मभ्य उत्तराणि बलनामानि २८ ॥ तानि च ओजः । पाजः । शवः । इत्येवमादीनि ॥

आह—

**बलं कस्मात् ?**

इति । उच्यते—

**बलं भरं भवति बिभर्तेः ॥**

भ्रियते धार्यते (स्वसमयेऽवस्थाप्यते) हि स योऽवलिप्तो भवति । "डुभृञ् धारणपोषणयोः" (जु० उ०) पचाद्यच् (पा० ३-१-१३४) वर्णव्यत्ययः पृषोदरादित्वात् ॥ **बिभर्तेर्वा** "डुभृञ् धारणपोषणयो"रित्यस्मात् (जु० उ०) बलमेव ह्येनं पुरुषं बिभर्ति ॥

(अथ धननामनिर्वचनम्)

**धननामान्युत्तराण्यष्टाविंशतिरेव ।**

बलवन्त एव धनं प्राप्नुवन्तीति बलनामभ्य **उत्तराणि धननामानि अष्टाविंशतिरेव ।** बलनामवदिमान्यपि २८ तावन्त्येवेत्येवकारार्थः ॥ तानि च-मघं । रेक्णः । रिक्थं । वेदः । इत्येवमादीनि ॥

आह—

**धनं कस्मात् ?**

इति । उच्यते—

**धिनोतीति सतः ॥**

**सत** इति (कर्तृ-) कारकाभिधानम् । धिविः प्रीणनार्थः (भ्वा० प०) "इदितो नुम्" (पा० ७-१-५८) **धिनोति**

१. "उब्ज आर्जवे" (तु० प०) "उब्जेर्बले बलोपश्च" (उ० ४-१८८) इत्यसुन् । बाहुलकादुदकेऽपि । उब्जन्ति बलवत्संनिधौ ऋजवो भवन्त्यनेनेत्योजः । न्यग्भावयत्यनेन वा शत्रून् । पाजइति-रक्षणार्थात्पातेः (अ० प०) "पातेर्बले जुट्च" (उ० ४-२०२) इत्यसुन् । बलेन हिंस्यते सर्वम् ॥ शवः "टुओश्वि गतिवृद्ध्योः" (भ्वा० प०) "श्वेः सम्प्रसारणं च" (उ० ४-१९२) इत्यसुन् । श्वयति वर्धतेऽनेनेति शवः ॥

२. बलवन्तो हि भ्रियन्ते धनिभिरन्यथा विकुर्वाणः सन् दुःसाध्यो भवति । अवलिप्तो बलगर्वितः ॥

३. मंहतिर्दानकर्मा (निघं० ३-२०) "घञर्थे कविधानम्" (पा० ३-३-५८ वा०) इतिकः । कित्त्वादनुनासिकलोपो हस्य घः पृषोदरादित्वात् । मह्यते दीयतेऽर्थिभ्य इति मघम् । रेक्णो व्याख्यातः (१०८ पृ० २० पं०) रिक्थं रिचेरेव (रु० उ०) "पातृतुदिवचिरिचिसिचिभ्यस्थक्" (उ० २-६) इति थक् । पूर्ववदर्थः । वेदो विन्दतेः लाभार्थादसुन् । (उ० ४-१८८) लभतेऽनेन, लभ्यते वा ॥

प्रीणयत्येतत्स्वामिनमिति धनम् । पचाद्यच् (पा० ३–१–१३४) बाहुलकादिकारस्थानेऽकारो बलोपश्च ॥ लोकेतु "धन धान्ये" (जु० प० ) पचाद्यच् ॥

## (अथ गोनामनिर्वचनम्)

### गोनामान्युत्तराणि नव ॥

गवां नामानि ९ ॥ तानिच–अघ्न्या । उस्रा । उस्रिया । एवमादीनि ॥

अघ्न्या अहन्तव्येत्येवमर्थः । गोशब्दनिर्वचनमुक्तमधस्तात् ( ७ पृ० ४ पं० ) गाव एव हि प्रकृष्टधनमिति धननामभ्य उत्तराणि गोनामानि ॥

### क्रुध्यतिकर्माण उत्तरे धातवो दश ॥

धनार्थमेव हि गवार्थं च क्रोधो भवतीति गोनामभ्यः उत्तरे क्रुध्यतिकर्माणः क्रोधार्थाः धातवः समाम्नाताः । ते च १० रेळते । हेळते । इत्येवमादयः ॥

क्रुध्यर्थसंबन्धेनैवाह—

### क्रोधनामान्युत्तराण्येकाश ।

ते च ११ हेडः । हरः । घृणिः । त्यजः । इत्येवमादयः ॥

### गतिकर्माण उत्तरे धातवो द्वाविंशं शतम् ॥

क्रुद्धा एव हि सन्तः सुतरां क्षिप्रं गच्छन्तीति क्रोधनामभ्य उत्तरे गतिकर्माणो गत्यर्थाः धातवः १२२ समाम्नाताः । वर्तते । अयते । लोटते । इत्येवमादयः द्वाविंशम् अधिका विंशतिर्यस्मिन् शते तत्तावत् "बहुव्रीहौ संख्येये डजबहुगणात्" (पा० ५–४–७३ ) इति डच् । "तिविंशतेर्डिति" ( पा० ६–४–१४२ ) इति तिशब्दलोपः ॥

### क्षिप्रनामान्युत्तराणि षड्विंशतिः ॥

गतिसंबन्धादेव उत्तराणि गत्यर्थात् २६ ॥ तानिच–नु । मक्षु । द्रवत् । इत्येवमादीनि ॥

आह—

### क्षिप्रं कस्मात् ?

इति । उच्यते—

### संक्षिप्तो विकर्षः ॥

विक्षिप्तोऽर्थो विकर्षस्तद्विपरीतः संक्षिप्तः स एव क्षिप्रमुच्यते ॥

### अन्तिकनामान्युत्तराण्येकादश ॥

क्षिप्रं गच्छन्त एवाभिप्रेतार्थस्यान्तिके ( समीपे ) भवन्तीति क्षिप्रनामभ्य उत्तराण्यन्तिकनामानि ११ ॥ तानिच–तेळित् । आसात् । इत्येवमादीनि । आह—

### अन्तिकं कस्मात् ?

इति । उच्यते—

### आनीतं भवति ॥

सन्निकृष्टत्वात् ॥

---

१. "कृत्यल्युटो बहुलम्" (पा० ३–३–१५३) इत्यत्र बहुलग्रहणं योगविभागेन कृन्मात्रे कार्यव्यभिचारार्थम् । अथवा पृषोदरादित्वात्साधुः ॥

२. तथाच भाष्यम् । "अहन्तव्या भवत्यघघ्नी वे"ति । (निरु० ११–४३) अघस्य दुर्भिक्षादेर्हन्त्री वा । अघशब्दे नञि वा उपपदे हन्तेर्गतिहिंसार्थात् ( अ० प० ) "अघ्न्यादयश्च" (उ० ४–१०८) इति यत्प्रत्ययान्तो निपात्यते ॥ उस्रा–"वस निवासे" (भ्वा० प० ) "स्फायितञ्ची" (उ० २–१२ )त्यादिना रक्प्रत्यये यजादित्वात् (पा० ६–१–१५) सम्प्रसारणम् । बाहुलकात् "शासिवसिघसीनां चे"–( पा० ८–३–६० ) ति षत्वाभावः । वसति क्षीरादिहविरस्याम् । उस्रियेति स्वार्थे घः पृषोदरादित्वात् । तथाच भाष्यम् "उस्रियेति गोनामोत्स्राविणोऽस्यां भोगा, उस्रेति चे"ति ( निरु० ४–१९ ) ॥

३. "हेडृ अनादरे" ( भ्वा० आ० ) बाहुलकाद्भावेऽसुन् । तथाच दुर्गः । "हे अरे" इत्यनेनाविष्टो भवतीति हेडः । "हृञ् हरणे" ( भ्वा० उ० ) असुनि हरः । हरति कृत्याकृत्यविवेकं, ह्रियते वाऽनेन पुरुषः स्ववशम् । दुर्जयो ह्यान्तरः शत्रुः क्रोधः ॥ घृणिश्च "घृ क्षरणदीप्त्योः"–(जु० प०) रित्यस्मात् "घृणि पृश्नि०" (उ० ४–५१ ) इत्यादिना निप्रत्ययान्तो निपातः । क्षरत्यनेन स्वेदादिः । दीप्यतेऽनेन, क्रुद्धोऽग्निरिव ज्वलतीति प्रसिद्धम् । अत्र दुर्गः । नीचैरनेन ह्रियते नरकं प्रतीति व्याख्यन्हृणिरिति बभ्राम । "त्यज हानौ" ( भ्वा० प० ) असुन् । त्यज इति त्यज्यते सत्पुरुषैस्त्यजत्यनेन वा प्राणान् । त्यजत्यनेनाविष्टः स्वधर्ममिति वा ॥

१. नु इत्येष निपातः । दुर्गस्तु नुन्न इव क्षिप्रं गच्छतीति नु । मां क्षिणोति ( २ मां हिनस्ति ) इति सर्व एव हि क्षिप्रगामिनं सक्रोधं दृष्ट्वा मन्यन्ते इति मक्षु । "द्रवद्रवते"रिति वदन् क्षिप्रक्रियाविशिष्टद्रव्यवचनानि क्षिप्रनामानीत्याह–वस्तुतस्तु–क्षिप्रनामानीत्यत्र भाष्ये "गुणस्य चैतानि" इति स्कन्दस्वामिनः । क्षिप्रस्य तद्वतो वा नामधेयानीति तदर्थः । तथाच वक्ष्यति भुरण्युः शकुनिरिति । एष हि क्षिप्रमुत्पततीति क्षिप्रपर्यायेषु पठितः । एवमन्यान्यपि कियन्ति क्रियाविशेषणगुणिनामधेयानि जीराः अजिरमित्यादीनि ॥ मक्षु–"टुमस्जो शुद्धौ" (तु० प० ) "मस्जीनोः पुक्" । इति भोजसूत्रेण पुक्प्रत्ययः । संयोगादिलोपः । अन्तर्भावितण्यर्थतया क्रियायाः पापतो वा मज्जयतीति मक्षु । आशु ( शीघ्रता ) लोके तु "द्राङ्मंक्षुसपदिद्रुत" इत्यमरे सानुस्वारः । तत्र मस्जेः सुः । "मस्जिनशो" (पा० ८–१–६० ) रिति नुम् । द्रवतेर्गत्यर्थात् ( भ्वा० प० ) बाहुलकादतिप्रत्ययो भवति करणे द्रवत् ॥

२. "तड आघाते" (चु० प०) "ताडेर्णिलुक् च" (उ० १–९५ ) इतीतिप्रत्ययः । ताड्यतेऽस्मिन्प्रदेशेऽवस्थित इति तडित् । आसात्–आसेः ( अ० आ० ) "पुंसि संज्ञायां घः प्रायेण" (पा० ३–३–११८ ) इति घस्ततः पञ्चम्येकवचनम् । य अन्तिकप्रदेशोपासन्नः स आसादिति दुर्गः ॥

**संग्रामनामान्युत्तराणि षट्चत्वारिंशत् ॥**

**संग्रामस्य नामानि उत्तराणि** प्रकृतेभ्योऽन्तिकनामभ्यः । अन्तिकीभूतानामेव हि संग्रामो भवतीति ४६ ॥ तानि पुनः–रणः¹ । विवाक् । विखादः । नदनुः । इत्येवमादीनि ॥

आह—

**संग्रामः कस्मात् ?**

इति । उच्यते—

**सङ्गमनाद्वा, संगरणाद्वा, सङ्गतौ ग्रामावि-ति वा ॥**

सङ्गच्छन्ति हि परस्परं योधा अत्र इति **सङ्गमनादेव** सङ्ग्रामः । वाशब्द एवार्थे । अथवा **सङ्गरणात्** । संगृणन्ति ( शब्दायन्ते ) शूरा आहोपुरुषिकामत्र² परस्परेण । **सङ्गतौ** समागतावितरेतरजिगीषया **ग्रामौ³**वत्रेति वा ॥ पृषोदरादित्वात्साधुत्वम् ॥

**तत्र खल इत्येतस्य निगमा भवन्ति ॥३॥ (९)**

**तत्र**–षट्चत्वारिंशत्के सङ्ग्रामनामगणे **खले** इत्येतस्य नाम्नः **निगमाः** भवन्ति ॥ सन्दिग्धाः इतरोऽपि धान्यखल उच्यते सङ्ग्रामोऽपि । तत्रैवं सति अस्यामृचि वक्ष्यमाणायां "खलेन पर्षान्" इति व्यपदेशाच्छस्य खलसङ्ग्रामखलयोर्विभागो लक्ष्यते । इति शेषः ॥ ३ ॥ (९)

**"अभीदमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति । खले न पर्षान् प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥२॥"**

**( ऋ० सं० ८-१-६ )**

**अभीदमिति** । वैकुण्ठस्येन्द्रपुत्रस्येयमार्षं जगती । दशरात्रस्य नवमेऽहनि निष्कैवल्ये शस्यते । आध्यात्मिको मन्त्रः । **एक** एवाहम् **इदं** जगत् **अभिअस्मि** अभिभवामि । ( अभिभूय सर्वं भवामि । अहमेवैकोऽस्य सर्वस्य जगतोऽधिपतिरित्यर्थः ) "आत्मैवेदं सर्वं सर्वंसेष्टा" इत्यादिश्रुतेः । कथम् ? **निष्षाट्** निष्षहमाणः ( निश्चयेनाभिभवन्सपत्नान् कामादीन् । सहतिरभिभवार्थश्छन्दसि, ततो निरपूर्वात् "छन्दसि सहः" ( पा० ३-२-६३ ) इति ण्विः । उपधावृद्धिः ( पा० ७-२-११६ ) ढत्वम् ( पा० ८-२-३१ ) षत्वम् ( पा० ८-३-५६ ) ष्टुत्वेन ( पा० ८-४-४१ ) पूर्वसस्य षः ॥ तत्प्रकारमाह–**एकम्** ( आगतमेक एव ) **अभि** अभिभवामि सपत्नम् । **द्वा** द्वौ ( अथागतावेक एव ) अभिभवामि । **किमु त्रयः** त्रयोऽपि युगपदागताः सन्तः एकाकिनोऽपि मम किम् । उ इति वितर्के पादपूरणेऽप्यर्थे वा । **करन्ति** कुर्वन्ति करिष्यन्ति ) वर्तमानसामीप्ये लट् (पा० ३-३-१३१) विकरणव्यत्यय आर्षः (पा० ३-१-८५) । न किमपीत्यर्थः । अहमेक एव **खले** धान्यमर्दनस्थाने । **पर्षान्** पृष्यन्ते क्षेत्रे सिच्यन्तेऽपक्वदशायां ये ते पर्षास्तान् पूलान् । "पृषु सेचने" ( भ्वा० प० ) "पुंसि संज्ञायाम्" ( पा० ३-३-११८ ) इति घः । गुणः । यद्वा "पर्ष स्नेहने" स्नेहनं चेहार्द्रीभाव इति कविकल्पद्रुमः । घः पूर्ववत् ॥ **न** इव **भूरि** बहून् अपि तान् **प्रतिहन्मि** । तैरप्रतिषिध्यमानस्तान्पूलानिव मर्दयामि । **अनिन्द्राः** मां प्रतिहन्तुमसमर्थास्ते **शत्रवः** मे । **मा** माम् **किं निन्दन्ति** किं निन्दिष्यन्ति । वर्तमानसामीप्ये भविष्यति लट् ( पा० ३-३-१३१ ) यद्वा ये माम् इन्द्रं न विदुः ( न विदन्ति ) याथार्थ्यतः ते कथमविज्ञायैव मां निन्दन्ति । यतोऽहमिन्द्रस्ते चानिन्द्रा अप्रभव इत्यर्थः । एष च व्याख्यामार्गो भाष्यकारेणैव दर्शितः ( अनुपदमग्रे ) ॥ २ ॥

अथ मन्त्रार्थमनुवदति—

**अभिभवामीदमेकमेकोऽस्मि निष्षहमाणः सपत्नानभिभवामि द्वौ किं मा त्रयः कुर्वन्ति ॥**

इति ॥

अथैकपदनिरुक्तम्—

**एक इता संख्या ॥**

**इता** अनुगता सर्वत्र या **संख्या** सा **एक** इत्यनेनोच्यते । तथाचाहुः "एकत्वं केवलान्वयी"ति । अत्यन्ताभावाप्रतियोगित्वं च केवलान्वयित्वम् ॥ एतस्या एव ह्यपेक्षाबुद्ध्या द्वित्र्यादि-

१. "रण शब्दे" (भ्वा० प०) "वशिरण्योरुपसंख्यान" मित्यप् (पा० ३-३-५८ वा०) रणन्ति दुन्दुभयो योधा वाऽत्रेति रणः । विविधा विरुद्धा वागत्र शूराणामिति विवाक् । विशिष्टं खादं स्थैर्यमत्रेति विखादः । "खद स्थैर्ये" (भ्वा० प०) घञ् । "णद् अव्यक्ते शब्दे" (भ्वा० प०) "अनुङ्नदेश्चे"–(उ० ३-४९) ति अनुङ्प्रत्ययः । नदन्ति शूरा अस्मिन्निति नदनुः ॥

२. "आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनी" त्यमरः । अहोऽहं पुरुष इति य आह स अहोपुरुषस्तस्यभाव आहोपुरुषिका मनोज्ञादित्वाद्वुञ् । वोरकश्चाप् इत्वं ॥

३. ग्रामशब्दोऽयं मनुष्यसंघातार्थः ॥ ग्रामो गतो ग्राम आगत इत्यत्र यथा ॥ इति महाभाष्यम् ॥

१. तथाचोक्तं पाणिनीयैरपि "षह मर्षणे" (भ्वा० आ०) मर्षणं क्षमा अभिभवश्चेति ॥

२. अत्रासीत्यावर्तितमनुवर्तते । एवमग्रेऽसीत्यपि ॥

३. सफलाञ्छूनान्धान्यराशीन् ॥

४. असमर्थाः ॥

५. सर्वत्र ( सर्वासु संख्यासु ) अनुस्यूतामित्यर्थः ॥

६. "अनेकैकत्वबुद्धिर्या सापेक्षा बुद्धिरुच्यत" इति । उक्तलक्षणाऽपेक्षाबुद्धिर्द्व्यादिकं प्रति एकत्वसंख्याया हेतुत्वमनुभावयति । तथा चोक्तम् "द्वित्र्यादयः परार्धान्ता अपेक्षाबुद्धिजा मताः" ( भा० प० का० ) इति ॥

संख्याप्रभवत्वमिति द्व्यादिकं प्रतिगतेत्युच्यते । तथा च एते ( भ० प० ) गत्यर्थादक औणादिको गुणपूर्वरूपे ॥

## द्वौ द्रुततरा संख्या ॥

**द्रुततरा** अतिशयेन द्रुता एकस्याः सकाशात् । अयमेकोऽयमेक एतदेकविशिष्टोऽयमेक इतीमौ द्वावयमेक इतीमे त्रय इत्येवं सा उपर्युपरि द्रुततरं गच्छतीति द्वावित्युच्यते ॥ पृषोदरादिः ॥ अत्रोद्देश्यविधेयभावेऽसमानवचनता बोध्या । एव मग्रेऽपि ॥

## त्रयस्तीर्णतमा संख्या ॥

**तीर्णतमा** अतिशयेन तीर्णा अतिशयेनोत्तरोत्तरं वृद्धिं गता। द्वयोः सकाशात् । तद्यथा "इमौ द्वावयमेक इतीमे त्रय" इति ॥

## चत्वारश्चलिततमा संख्या ॥

**चलिततमा** अतिशयेन चलिता । त्रिभ्यः सकाशात् । उक्तवदुपपत्तिः ॥ पञ्चसंख्योपपत्तिरुक्ता प्राक् ( नि० ३–२–२ ) षट्सप्तसंख्ययोस्तु न विशेषोऽस्तीति अष्टादिका निरुच्यते—

## अष्टावश्नोतेः ॥

· ते हि सप्तसंख्याः व्याप्य वर्तन्ते इत्यष्टावित्युच्यन्ते । **अश्नोतेः** "अशू व्याप्तौ" ( स्वा० प० ) इत्यस्य तनि प्रत्यय औणादिके षत्वष्टुत्वे अष्टन् इति भवति ॥

## नव, न वननीया, नावाप्ता वा ॥

**न वननीया** । न सम्भजनीया । "वन संभक्तौ" ( भ्वा० प० ) सम्भक्तिर्विभागः । तथाच तदभावोऽत्रायुग्मत्वात् । अथवा सम्भजनं सम्भक्तिः संसेवनम् ( स्वीकार इति यावत् ) नवसंख्या हि तिथिगता रिक्ताभिधां जनयतीति सा **नावाप्ता**[२] कैश्चिदपि शुभकार्यार्थिभिः । तस्मादियं नावाप्तेति नवेत्युच्यते जनैः ॥

## दश, दस्ता, दृष्टार्था वा ॥

**दस्ता** उपक्षीणा "दसु उपक्षये" ( दि० प० ) इत्यस्मात्कनिन्प्रत्यये वर्णविपर्ययेण "दशन्" इति भवति । या पुनर्न वर्धते सा[३] संख्या दश ॥ अथ **वा दृष्टार्था** इति दृष्टा सैव दशेति नैरुक्तदिशा व्याख्येया ॥

१. प्रभवत्वादिति प्रभवो हेतुः ॥ अत एव "द्वित्वादिकं तु सर्वत्रानित्यमेवेति नैयायिकाः प्राहुः ॥

२. एतच्च प्रायिकमुपपत्त्यर्थमेवानुसंहितं कथंचित् । रिक्ताऽपि शनिभौमगतोपादीयते । तथाचोक्तम् "शनिभौमगता रिक्ता सर्वसाम्राज्यदायिनी"ति ॥

३. दशान्तैव हि संख्या भवति ॥

४. दृष्टार्थैव हि दशानामुपरि पुनःपुनर्दृश्यते संख्या । तद्यथा एकादशेत्येवमादि ॥ तस्माद्दृष्टार्थदर्शनात्संख्यागा दशेति नाम । नैरुक्ता हि प्रत्यक्षवृत्तिना परोक्षं तेन चातिपरोक्षं निर्ब्रुवते । तथाचात्र दृष्टार्थाद्दष्टादशेति क्रमादूह्यम् ॥

## विंशतिर्द्विर्दशतः ॥

द्विरावृत्ता दश द्विर्दश । "द्वित्रिचतुर्भ्यः सुच्" ( पा० ५–१–१९ ) इति सुच्प्रत्ययः । ततस्तसिः सार्वविभक्तिकः ( पा० ५–४–४४ वा० ) तथाच पाणिनीयैः "पञ्चद्दशतौ वर्गे वा" ( पा० ५–१–६० ) इति निपातितस्य दशच्छब्दस्य "द्वयोर्दशतोर्विन् शतिश्च प्रत्यय" इत्येवं "पङ्क्तिविंशती" ( पा० ५–१–५९ )–ति सूत्रेण विंशतिशब्दो निपात्यते ॥

अनेनैव च शतमित्यपीत्याह—

## शतं दशदशतः ॥

दशशब्दस्य "नित्यवीप्सयोः" ( पा० ८–१–४ ) इति नित्यार्थे ( आभीक्ष्ण्ये ) द्वित्वे उक्तसूत्रेण ( पा० ५–१–५९ ) शतमिति निपातः ॥

## सहस्रं, सहस्वत् ॥

**सहस्रिति** बलनाम ( निघं० २–९ ) **तद्वत्** । दुर्बलानामपि सहस्रं समुदितं सद्बलवदेव भवति संघातबलीयस्त्वात् ॥

## अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम् ॥

सहस्रं दशकृत्वोऽभ्यस्तमयुतमामिश्रीभूतमयुतमित्युच्यते[२] । अयुतमपि दशकृत्वोऽभ्यस्तं **नियुतमित्युच्यते** । नियुतमपि दशकृत्वोऽभ्यस्तं **प्रयुत**–( लक्ष– ) मित्युच्यते ॥ **तत्तदिति** सहस्रादिकमुक्तं परामृशति । वीप्सायां द्विर्भावः । ( पा० ८–१–४ ) ॥

अथ क्रमप्राप्तान्यत्राम्नाताऽर्बुदशब्दनिर्विवक्षया–अम्बुदशब्दं तावन्निर्वक्ति—

## अम्बुदो मेघो भवति, अरणशीलमम्बु, तद्दोऽम्बुदोऽम्बुमद्भातीति वाऽम्बुमद्भवतीति वा । स यथा महान् बहुर्भवति वर्षंस्तदिवार्बुदम् ॥

**अरणशीलमम्बु तद्दः** तस्य दाता **अम्बुदो** मेघः, अथ **वाम्बुमत्तत्** **यद्भाति** वस्तु स एवाम्बुदः । **स यथा**

१. यद्वा दशकृत्वोऽभ्यस्ता याः संख्यास्ताः समुदिताः शतमित्युच्यन्ते । तथाच दशावृत्ता दश दशदश इति बहुव्रीहिः ( पा० २–२–२५ ) ततस्तसिल् दशदशतः । निपातस्तु "पङ्क्तिविंशति"रित्यनेनैव ।

२. "यु मिश्रणामिश्रणयोः" ( अ० प० ) नञ्पूर्वात्ततः क्तः । आ–समन्तान्मिश्रणमामिश्रणम् ॥ तथाचात्र अमिश्रणे युधातुः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वादा "मिश्रीभूतमिति व्याख्यातम्"॥

३. तथाचाम्नायते "इमामेऽअग्न इष्टका धेनवः सन्त्वेका च दश च दश च शतञ्च शतञ्च सहस्रञ्चायुतञ्च नियुतञ्च नियुतञ्च प्रयुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यञ्चान्तश्च परार्धश्चैतामेऽअग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोके" ( शु. य. सं. १७–२ ) इति ॥

४. अत्र विधेयप्राधान्यात्पुल्लिङ्गः निर्देशः स इति ॥

( उदकभावमापद्यमानः ) **महान्** ( मानेनान्यान् जहाति यः सः । अपरिमितः सन् ) **बहुर्भवति वर्षन् तदिवार्बुदम्।** बहुर्लोकमान्यः । तदिति वर्षणं परामृशति । तथाचार्बुदमानीयतामित्युक्ते तदिव ( मेघवर्षणमिव ) वर्षन्द्रव्यजातं ( द्रव्यसमूहं ) यो बहुर्भवति सोऽर्थोऽर्बुदमित्युच्यते ॥

अथ मन्त्रार्थं विवक्षन्पादंपादमनूद्यार्धर्चमर्थतो निराचष्टे—

**खले॒न प॒र्षान्प्रति॑हन्मि॒ भूरि॑ ॥**

**खल इव पर्षान्प्रतिहन्मि भूरि ॥ खल इति संग्रामनाम, खलतेर्वा स्खलतेर्वा ॥**

**खलतेर्वा** भ्रश्यत्यर्थस्याधिकरणे "पुंसि संज्ञायां०" ( पा० ३-३-११८ ) इति घप्रत्ययः। भ्रश्यन्ति हि योधा अत्र। **स्खलतेर्वा** हिंसार्थस्य। हिंस्यन्ते हि तत्र परस्परेण ॥ एकोऽत्र वाशब्दो वितर्केऽपरः समुच्चये ॥

**अयमपीतरः खलः एतस्मादेव, समास्कन्नो भवति [1]॥**

**इतरो** धान्यखलः । **एतस्मादेव** पूर्वोक्ताद्धेतोः । तत्रापि हि भ्रश्यन्ति चूर्ण्यमानानि धान्यानि । हिंस्यन्ते वा ( चूर्ण्यन्त इत्यर्थः ) ॥ **अथवा समास्कन्नो** व्याप्तोऽसौ **भवति** विप्रकीर्णैर्धान्यैः ॥

**किंमा॑ निन्दन्ति॒ शत्र॑वोऽनि॒न्द्राः ॥**

**य इन्द्रं न विदुरिन्द्रो ह्यहमस्म्यनिन्द्रा इतर इति वा ॥**

निगदव्याख्यानमधस्तात् ॥

**व्याप्तिकर्माण उत्तरे धातवो दश ॥**

सङ्ग्रामे हीतरेतरं व्याप्नुवन्ति योधा इति सङ्ग्रामनामभ्य उत्तरे व्याप्तिकर्माणो व्याप्त्यर्थाः १० ॥ तेच-इन्वति । ननक्षे । इत्येवमादयः ॥

**तत्र द्वे नामनी, आक्षाणः-आश्नुवानः । आपानः-आप्नुवानः ॥**

तत्र दशसंख्याके व्याप्तिकर्मधातुगणे द्वे **नामनी** भवतः । **आक्षाणः** ३ **आपान** ६ इति । तत्र य आश्नुते ( आ-व्याप्नोति ) स आश्नुवानः सन्नाक्षाण इत्युच्यते । आङ्पूर्वादश्नोतेर्लेटः शानच् "सिब्बहुलं लेटि" (पा० ३-१-३४) इति बाहुलकात्सिप् । "व्रश्चादि" ( पा० ८।२।३६ ) सूत्रेण षत्वे । "षढोः कःसि" ( पा० ८-२-४१ ) इति षस्य कत्वे च "आदेशप्रत्यययोः" ( पा० ८-३-५९ ) रिति सस्य षत्वम् ॥ यश्चाप्नोति स आप्नुवानः सन् आपानः "आप्लृ व्याप्तौ" ( स्वा० प० ) व्यत्ययेन लटः शानच् । "अन्ततेर्वधकर्मणस्तद्रूपम् ( आपानः ) इति स्कन्दस्वामिनः ॥

**वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत् ॥**

सङ्ग्रामे हीतरेतरं व्याप्य ततो घ्नन्तीति व्याप्तिकर्मभ्य उत्तरे **वधकर्माणः** । वधार्थाः ३३ दभ्नोति । श्नथतीत्येवमादयः ॥

**तत्र वियात[1] इत्येतद् वियातयते इति वा वियातयेति वा ॥**

तत्र वधकर्मधातुमध्ये **वियातः इत्येतत्** नाम । तत्पुनरेवं निर्वक्तव्यं **वियातयते** विविधप्रकारं यातयते विनाशयेति यः शत्रून्स वियातः । **इति** एवम् **वा**-अथवा एवमन्यथा स्यात् । **वियातय** शत्रून्विनाशय इत्येवमुच्यते यः स्तोतृभिः स वियातः ॥

एवमाखण्डल[3] इत्येतदपि नामैव । निगममपि चात्र दर्शयति—

**[4]आख॑ण्डल॒ प्र हू॑यसे ॥**

**आखण्डयितः ! ॥ ( खण्डं खण्डयतेः ) ॥**

( ऋ० सं० ६-१-२४-२ )

---

१. अत्रार्थनिर्देशे व्यत्यस्तपाठः केषांञ्चित्संमतः । धातुपाठे तु तथा पाठो न दृश्यते ॥ एतच्च दुर्गोक्तिमनुसृत्य व्याख्यातम् । वस्तुतस्तु "खज मन्थे" ( भ्वा० प० ) "पुंसि संज्ञायां घः" ( पा० ३-३-११८ ) इत्यधिकरणे घः । व्यत्ययेन जस्य लः । मथ्यन्ते योधारो यत्र । यद्वा "स्खल संचलने" ( भ्वा० प० ) घः पूर्ववत् । स्खलन्ति कातरा यत्र इत्येवं व्याख्येयम् । अत्रार्थे व्यत्ययेन सलोपः ॥

२. तथाच मेदिनी । "वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे समुच्चये च"ति ॥ यद्वोत्तरत्रानुवर्तनार्थस्तथाच व्याख्यायाम् अथवा समेत्यादिः ॥

१. वियातः १९ आखण्डल २२ तडित् २१ इति त्रीण्येषु नामानि तानि निर्विवक्षन्निदमाह ॥

२. "यातना तीव्रवेदनेत्यमराच्चातयतिर्वधार्थः ॥

३. शाचि॑गो॒! शाचिपूज॒नायं रणा॑यते सु॒तः । आख॑ण्डल॒! प्र हू॑यसे ॥ इरिम्बिठिर्नामकण्वो मन्त्रदृक् । तस्येयमार्षम् । गायत्री ऐन्द्री ॥ रात्रिपर्यायेषु-मध्यरात्रिपर्याये होतुरियं शस्त्रे विनियुक्ता । शचीति कर्मनाम ( निघं० २-१) । तस्य येयमिष्टिपशुसोमादिलक्षणा सन्ततिः सा शाचिः । यद्वा शच्येव शाचिः । स्वार्थिकस्तद्धितः । तं प्रत्याहूयमानो यो गच्छति स शाचिगुरिन्द्रः । तस्य सम्बोधनं हे शाचिगो ! इति । तथैव शाच्यां य आगतः सन्पूज्यते स शाचिपूजनस्तत्सम्बोधने हेशाचिपूजन ! हे आखण्डल ! हे आखण्डयितः शत्रूणां मेघानां वा, अयं ते त्वदर्थमुपकल्पितोऽस्यां शच्यां ( कर्मणि ) रणाय रमणाय । मलोप आर्षः । सुतोऽभिषुतः सोमोऽस्माभिः । अतस्त्वं प्रकर्षेण हूयसे आहूयसे अस्माभिः । इति स त्वमेवमेतज्ज्ञात्वाऽस्मदनुग्रहायानतीतकालमागन्तुमर्हसि । इति तात्पर्यम् ॥

४. "खडि भेदे" ( चु० प० ) आङ्पूर्वाच्चतोऽलच्कर्तरि ( उ० ५-७२ ) बाहुलकात् ।

आभिमुख्येनावस्थितो यः खण्डयति मेघान् स आखण्डयिता-सन्नाखण्डलः । तस्य सम्बोधनं **हे आखण्डल ! आखण्डयितस्त्वं** प्रकर्षेणादरवद्भिर्हूयस आहूयस इत्यर्थः ॥

**तडिदित्यन्तिकवधयोः संसृष्टकर्म ताडयतीति सतः ॥ ४ ॥ (१०)**

आखण्डलशब्देऽल्पतरं वक्तव्यं, बहुतरं तडिच्छब्द इति क्रमभेदतो निरुच्यते **तडिदितीति** । तडिदित्येतच्छब्दरूप-**मन्तिकवधयोः** । अन्तिकाभिधायि वधाभिधायि च । इत्येकमेव ह्येतदुभाभ्यामर्थाभ्यां सम्प्रयुज्यत इति संसृष्टकर्मोभयार्थ-मित्युच्यते । सा पुनस्तडित्कर्तरि कारके भवति **ताडयतीति** । **सत** इति कर्तृकारकाभिधानमित्यसकृदभिहितं प्राक् । तथा च "तड आघाते" (चु० उ०) तस्मात् च "ताडेर्णिलुक्"–(उ० १–९५ )ति इति प्रत्ययः ॥ "निमित्तापाये नैमित्तिकस्याप्यपाय" इति उपधावृद्धिनिवृत्तिः ॥ ४ ॥ ( १० )

यथाऽन्तिकनामेदं तडिदिति तथोदाह्रियते—

**"त्वया॑ व॒यं सु॑वृ॒धा ब्र॑ह्मणस्पते स्पा॒र्हा वसु॑ मनु॒ष्या॒ दद॑ीमहि ॥ या नो॑ दू॒रे त॒डितो॒ या अरा॑तयो॒ऽभि॒सन्ति॑ ज॒म्भया॒ ता अ॑न॒प्नसः॑ ॥४॥"**

( ऋ० सं० २–६–३० )

**त्वया वयमिति** । गृत्समदस्यार्षम् । जगती । प्रवर्ग्ये विनियुक्ता । **हे ब्रह्मणस्पते ! त्वया** सुवर्धयित्रा **वयं सुवृधाः** सुष्ठु वर्धिताः ( अनुगृहीताः ) सन्तः **स्पार्हा** स्पार्हाणि स्पृहणीयानि । शेर्डा ( पा० ७–१–३९ ) एवमुत्तरत्रापि पञ्चम्याः ॥ **वसु** वसूनि धनानि । शेर्लुक् ( पा० ७–१–३९ ) **मनुष्याः** मनुष्येभ्यः तानभिभूय, अत्र "ल्यब्लोपे" ( पा० १–४–३१ वा० ) इति पञ्चमी । **आददीमहि** गृह्णीमहि । किञ्च— **या नो**ऽस्माकम् **अरातयः** शात्रवीः सेनाः **दूरे**ऽध्वन्यवस्थिताः **अभिसन्ति** अभिभवन्ति अस्मान् । याश्च **तडितो**ऽन्तिकस्थास्ता उभयविधा अपि **अनप्नसः** अनप्ना अरूपाः कृत्वा । अत्र "आज्जसेरसुक्" ( पा० ७–१–५० ) इति जसोऽसुगागमः ॥ **आ** समन्तात् **जम्भय** निश्शेषः कुरु विनाशयेत्यर्थः ॥ ४ ॥

अथ तडित्पदं निर्वक्ष्यन्मन्त्रार्थमुपदर्शयति—

**त्वया वयं सु वर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि । याश्च नो दूरे, तडितो याश्च–अन्तिकेऽरातयो, ऽदानकर्माणोऽदानप्रज्ञा वा, जम्भय ता अनप्नसोऽप्न इति रूपनामाप्नोतीति सतः ॥**

**दूरे** अध्वन्यवस्थिताः **अरातयः** । **याश्चान्तिक** इत्यनेन तडिच्छब्दस्यान्तिकाभिधायित्वमुदाहृतम् । अरातिपदं मन्त्रस्थं प्रसङ्गागतं निर्वक्ति **अदानकर्माण** इति । रातिर्दानार्थः ( अ० प० ) अस्माकमभिमतानर्थान्ददतो ये निवारयन्ति तेऽरातयः । अथवा **अदानप्रज्ञाः** । न दातव्यमस्माभिरेभ्य इत्येवं येषां प्रज्ञाऽस्ति तेऽदानप्रज्ञाः । द्विविधा हि शत्रवः दुःखसन्नाश्याः सुखसन्नाश्याश्च । तत्र ये दुःखसन्नाश्यास्तेऽदानप्रज्ञाः । ये चादानकर्माणस्ते सुखसन्नाश्याः । ते चोभयेऽपि दूरेऽन्तिके चावस्थिता भवन्ति । **ता** दूरान्तिकावस्थितानुभयानपि शत्रून् **जम्भये**ति मन्त्रार्थः । यद्यपि ता इति स्त्रीलिङ्गनिर्देशोऽरातिशब्दं स्त्रीलिङ्गमाचष्टे, निगमान्तरेऽपि "अत्रापुरन्धिरजहादरातीर्मदे सोमस्य सूरा अमूरः" ( सं० ३–६–१५–७ ) इत्येवं स्त्रीलिङ्ग आम्नायते ॥ तथापि "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः । अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिन–" इत्यमराभिधानात्पुंस्त्वमिति स्त्रीलिङ्गनिर्देशोऽत्र सेनाभिप्रायेणेति तथैव व्याख्यातम् ॥ अप्नपदं निर्वक्ति **अप्न इति रूपनामेति**, तद्धि **आप्नोत्या**श्रयं व्याप्नोतीति अप्न इत्युच्यते । **सत** इति कर्तृकारकाभिधानम् ॥

**विद्युत्तडिद्भवतीति शाकपूणिः । सा ह्यवताडयति, दूराच्च दृश्यते ॥**

**शाकपूणि**रित्याचार्यनाम । स एवं मन्यते **विद्युत्तडिद्भवतीति** । कुतः ? **हि** यतः **सा** तडित् । **अवताडय**त्याहन्त्यशनि–( वज्र– ) रूपेण । **दूरात् एव च दृश्यते** । तस्मान्न तस्या उक्तमन्त्रस्थाया अन्तिकनामाभिसम्बन्धोऽस्ति । अस्ति च दर्शनेनाभिसम्बन्ध इति तडिच्छब्दो विद्युद्वाचीति दूरे तडित इत्यस्य दूरादवलोक्यमाना इत्यर्थः ॥ इति शाकपूणिमतम् ॥

**अपित्विदमन्तिकनामैवाभिप्रेतं स्यात् ।**

---

१. निघण्टूक्तक्रमे पुरस्तडित्तत आखण्डलेति दृश्यतेऽतः क्रमभेदतो निर्वचने हेतुमाह–अल्पतरमिति । तथाच "सूचीकटाह" न्यायेन पुरस्तादाखण्डलपदनिर्वचनमिति बोध्यम् ॥

२. वाचकत्वमत्र सप्तम्यर्थः । "आकाशे त्रिदिवे नाक" इतिवत् ॥

३. एतत्तरवमनुपदं स्फुटिष्यति लिङ्गभेदेन व्याख्याने ॥ यद्वा लिङ्गव्यत्ययोऽपि छन्दसि बाहुलकाद्बहुत्र दृश्यते । तथाचोक्तं वैदिकप्रक्रियायाम् ( सि० कौ० ) "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेने"ति ॥

१. तथाचोक्तं श्रीमहाभारते ( उ० प० अ०··· ) "सूच्यग्रेण सुतीक्ष्णेन यदि भिन्दसि मेदिनीम् । तदर्धं न हि दास्यामि विना युद्धेन केशवे"ति । एतच्च दुर्योधनवचनम् पाण्डवान्प्रति पैतृकदायादानविषये ॥

२. एतत्साधनमुक्तमधस्तात्कर्मनामनिरुक्तौ ( १०७ पृ. ३ पं. ) ॥

अपितु–किन्तु इदमनुपदमनुक्रमिष्यमाणम् ( अपरेणोदाहरणेन ) ॥ स्यादिति सम्भावनायां लिङ् ॥

**"दूरे चित्सन्तुडिदिवाति रोचसे ॥"**

( ऋ० सं० १–६–३१–२ )

## दूरेऽपि सन्नन्तिक इव सन्दृश्यस इति ॥

अत्र **दूरेऽपि सन्नन्तिक इवेति** स्फुटतरमन्तिकाभिधानत्वमस्य ( तडिच्छब्दस्य ) न तथाऽत्र पूर्वस्मिन्मन्त्रे "या नो दूरे तुडित्" इति । एवमन्तिकनामत्वेन वा, विद्युन्नामत्वेन वा, वधनामत्वेन वा प्रकरणोपपदे अवेक्ष्य यथासम्भवं निर्वक्तव्यम् ॥ उक्तमन्त्रस्य "यो विश्वतः सुप्रतीकः सदृङ्ङसि" इत्यादिः ॥ "रात्र्याश्चिदन्धो अतिदेव पश्यस्यग्ने सुख्ये मा रिषामा वयं तव" इत्यन्तः । एषा जगती । आग्नेयी । कुत्सेन दृष्टा । महाव्रते आग्निवारुणे शस्त्रेऽभिप्लवस्य च षष्ठेऽहनि आग्निमारुते एव च शस्यते । हे **अग्ने!** त्वं **विश्वतः** सर्वतः **सुप्रतीकः** शोभनदर्शनः । अपिच **सदृक्** समानो दृश्यसे[2] । अपिच **दूरेचित्** दूरेऽपि **सन्** अतिभ्राजिष्णुत्वात् **तडिदिव** अन्तिके इवावस्थितः **अति** अत्यन्तं **रोचसे** दीप्यसे । अपि च यदेतद् **रात्र्याश्चित्** रात्र्या अपि **अन्धः** अध्यानलक्षणं तमः[3] । एतदपि **अति** अतीत्याभिभूय ( निर्हत्य ) **पश्यसि** न तेऽस्माकमिव तेनान्धेनापि तमसा प्रतिबध्यते दर्शनम् । हे **देव!** सर्वभूतदीपयितः! तस्य **तव** एवंगुणयुक्तस्य **सख्ये** सखिभावे परिचरणकर्मणि **वयम्** आः उत्तमादुच्छ्वासात्कृताध्यवसायाः सन्तः **मा** केनचिद्विधिना शत्रुणा वा **रिषाम** रिष्यामहे हिंसिता भवाम । "रिष हिंसायां" ( भ्वा० दि० प० ) कर्मणि लोट् पदव्यत्ययस्तुदादित्वं च छान्दसम् ॥

## वज्रनामान्युत्तराण्यष्टादश ।

यो हि हन्यते स वज्रेणैवेति[4] वधकर्मभ्य **उत्तराणि वज्रनामानि** १८ ॥ दिद्युत्[5] । नेमिः । हेतिः । इत्येवमादीनि ॥

आह—

**वज्रः कस्मात्?**

इति । उच्यते—

**वर्जयतीति सतः ॥**

**सत** इति कर्तृकारकाभिधानमत्र "वृजी वर्जने" ( रु० प० ) । इत्यस्माद्धेतुमण्ण्यन्ताद्रक् । णिलोपे गुणेन प्राप्तस्य रेफस्य लोपः । स हि वर्जयति ( वियोजयति ) प्राणैः प्राणिनः ॥

**तत्र कुत्स इत्येतत्कृन्ततेः । ऋषिः कुत्सो भवति । कर्ता स्तोमानामित्यौपमन्यवोऽत्राप्यस्य वधकर्मैव भवति । तत्सख इन्द्रः शुष्णं जघानेति ॥**

तत्र वज्रनामसु । **कुत्स इत्येतत्**सन्दिग्धपदम् । **ऋषि**रपि **कुत्सो भवति** । तत्र यदि वज्रनाम तदा **कृन्ततेः** छेदनार्थस्य ( तु० प० ) कृत्यतेऽनेनेति कुत्सः । यदा पुनरेतदृषिनाम तदा **कर्ता स्तोमानां** कुत्स **इत्यौपमन्यव** आचार्यो "मन्यते" इति शेषः । **अत्रापि** एतदृषौ वर्तमानमप्यभिधानम् **अस्य** ऋषे **वधकर्मैव** वधार्थसंयुक्तमेव **भवत्य**भिप्रेतम् । यतस्तत्**सख**स्तस्य सखा इन्द्रस्तेन स्तूयमानो विवृद्धबलः **शुष्णं** शोषयितारं रसानां, मेघमसुरं वा **जघान** हतवान् । मेघो हि शुष्णस्तदुदये हि धान्यानि उदकग्राहनिमित्तेन शुष्यन्ति ॥

## ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः ॥

घ्नतामेव हि वज्रेणाऽन्यायुधेन वैश्वर्यं भवतीति वज्रनामभ्य **उत्तरे ऐश्वर्यकर्माण** ऐश्वर्यार्थकाः ४ । ते च–इरज्यति । पत्यते । क्षियति । एजति । इति ॥

ऐश्वर्यसम्बन्धेनैवोच्यते—

## ऐश्वर्यनामान्युत्तराणि चत्वारि ॥

**ऐश्वर्यनामानि** । ऐश्वर्यस्य नामानि ४ ॥ तानि च–राष्ट्री । अर्यः । नियुत्वान् । इन । इति ॥

**तत्रेन इत्येतत्सनित ऐश्वर्येणेति वा । सनितमनेनैश्वर्यमिति वा ॥ ५ ॥ (११)**

तत्र चतुर्षु **इन इत्येत**दभिधानं **सनितः** संभक्त **ऐश्वर्येणेति वा**–एवम् । अथवा **सनितं** सम्भक्त**मनेनैश्वर्यमित्येवं**[2] निर्वाच्यमित्यर्थः ॥ ५ ॥ (११)

---

१. सम्भावना हि बलवत्कोटिका शङ्का । यत्रैकाभि कोटिमताः सांशयिकी ( संशयस्वरूपमध्यपातिनी ) बलवत्तरा, अपरा च प्रमाणदौर्बल्याद्दुर्बला सा ॥

२. यतोयतो दृश्यसे ततस्ततः समानदर्शनस्तुल्य एव लक्ष्यसे । किन् ( पा० ३–२–६० ) कुत्वम् ( पा० ८–२–६२ ) ॥

३. यत् ध्यातुमपि न शक्यते किमुत द्रष्टुम् ॥

४. घातहेतुः सर्वोऽपि वज्र इत्युच्यते लोकेऽपि ॥

५. दिद्युत् द्यतेर्वा द्योततेर्वा । पुनः पुनरतिशयेन वा द्यति अवखण्डयति द्योतते दीप्यते वा सा दिद्युत् । "द्युत दीप्तौ" ( भ्वा० आ० ) "द्युतिगमिजुहोतीनां द्वे च" ( ३–२–१७८ वा० )ति क्विपि द्वित्वे "द्युतिस्वाप्योः संप्रसारणम्" ( ७–४–६७ पा० ) इत्यभ्यासस्य संप्रसारणम् । द्यतेस्तु क्विपि पृषोदरादित्वाद्रूपसिद्धिर्बोध्या ॥

१. वधसहकारिणोऽपि वधकत्वमाम्नायते । सर्वेतेऽपि "अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥ १ ॥" इति ॥

२. तथाच एतेः संभजनार्थे वर्तमानात् समुपसर्गार्थविशिष्टाद्वा "इण्सिञ्जिदीङुष्यविभ्यो नक् ।" ( उ० ३–२ ) इति नक्प्रत्ययः ॥

**"यत्रा॑ सु॒प॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑ऽभि॒स्वर॑न्ति । इ॒नो विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा वि॑वेश ॥ १ ॥"**

( ऋ० सं० २-३-१८ )

**यत्रेति** । मन्त्रेऽस्मिन्निन इतीश्वरनामतयोदाहृतम् ॥ त्रिष्टुप्नेषा । वैश्वदेवीये सूक्ते दीर्घतमसा दृष्टा । महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते । **यत्र** यस्मिन्मण्डलेऽवस्थिताः **सुपर्णाः** सुपतना आदित्यरश्मयः । **अमृतस्य** अमरणधर्मण उदकस्य **भागं** भजनीयमंशमादाय ( पृथिवीलोकात्तेनान्विताः सन्तः सर्वभूतानि ) **अभिस्वरन्ति** । "स्तृ शब्दोपतापयोः" ( भ्वा० प० ) अभिमतन्तीत्यर्थः । अथवा **अभि** आभिमुख्येनादित्यमण्डलं सुखेन **अरन्ति** गच्छन्ति । रसान्गृहीत्वा प्रयान्ति । यद्वा **अनिमेषं** नास्ति निमेषो नेत्रनिमीलनमस्मिन्नभिस्वरणकर्मणि तद्यथा स्यात्तथा ( अनिमिषन्तः अनिमिषमाणा इव आदरवन्तः ) **विदथा** विदथेन वेदनेन ( ज्ञानेन ) ( निरु० ६-७ ) स्वकर्माधिकारयुक्तेनान्विताः सन्तः । अत्राङ्-इनभावश्छान्दसः । **अभि** सर्वतः **स्वरन्ति** शब्दं कुर्वन्ति । **अत्र** अस्मिन् मण्डले अवस्थितः **विश्वस्य** सर्वेषाम् **इन** ईश्वरः ( ऐश्वर्येण सनितः ) **भुवनस्य** जगतो भूतानां वा **गोपाः** गोपायिता आदित्यः । **स धीरः** धीमान् **पाकम्** पाकः । सोरम्छान्दसः । पक्तव्यः पक्तव्यप्रज्ञः सम्यग्दर्शनः अनुग्राह्यतया **मा माम् आविवेश** आविशतु । लोडर्थे लिट् छान्दसः ( पा० ३-४-६ ) ॥ १ ॥

अथ मन्त्रार्थमाह भाष्यकृत्—

**यत्र सुपर्णाः सुपतना आदित्यरश्मयोऽमृतस्य भागमुदकस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाऽभिप्रयन्तीति वेश्वरः सर्वेषां, भूतानां गोपायिताऽऽदित्यः स मा धीरः पाकमत्राविवेशेति ॥**

१. वैश्वदेवेषु दिक्सूक्तेष्वेकदेवता बहुदेवताश्च मन्त्रा भवन्ति तदप्युपेक्षितव्य(सुपगम्येक्षितव्यमालोचयितव्य)मित्यर्थः ॥

२. ते हि शोभनमर्थं तमोऽविघातलक्षणमुद्दिश्य पतन्ति ॥ अथ वा शोभमानाः पतन्तीति सुपर्णाः ॥

३. इदमेव रसादानादिलक्षणं कर्मास्माभिः कर्तव्यमिति ॥

४. वचनव्यत्ययश्छान्दसो भाष्यव्याख्यानुसारात् ॥

५. मण्डलान्तरपुरुषो यस्तत्रावस्थितोऽस्ति मण्डले । तथाच श्रुतिः "योऽसावादित्ये पुरुषः सोऽसावहम्" इति ( य० ४१ अ० ) अस्य ध्यानं यथा ।

"ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः" इति ॥

६. प्रतिविशिष्टया बुद्ध्यान्वितः । बुद्धिरेव हि तस्य शरीरम् ॥

अथ मन्त्रार्थमुक्त्वा पदानि निर्वक्ति—

**धीरो धीमान्, पाकः पक्तव्यो भवति, ॥**

पक्तव्यः पक्तव्यप्रज्ञः ॥

अत्र मानमाह—

**"विपक्वप्रज्ञ आदित्य" इत्युपनिषद्वर्णो भवति । इत्यधिदैवतम् ॥**

**इति**शब्दः प्रकारवचनः एवमयमु**पनिषद्वर्णो भवती**ति । यद्विज्ञानमुपगतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति, सा रहस्यविद्योपनिषदित्युच्यते । उपनिषद्भावेन वर्ण्यत इत्युपनिषद्वर्णः । **अधिदैवतमुक्तम्** ॥ ( ५२ पृ० ९ पं० )

**अथाध्यात्मम् । यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाऽभिप्रयन्तीति वेश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा स मा धीरः पाकमत्राविवेशेति ॥ धीरो धीमान् । पाकः पक्तव्यो भवति, विपक्वप्रज्ञः आत्मेत्यात्मगतिमाचष्टे ॥६॥ (१२)॥**

इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे नैघ० काण्डे तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥ ❋ ॥

**अथाध्यात्ममिति** । "उच्यते मन्त्रदृशे"ति शेषः । तद्यथा **यत्र** यस्मिन् शरीरे **सुपर्णाः—सुपतनानीन्द्रियाणि** स्वेषु स्वेषु आयतनेषु कृष्णतारादिषु अवस्थितानि **अमृतस्या**मरणधर्मणः **ज्ञानस्य भागं** भजनीयं स्वं स्वं रूपादिलक्षणं रसमादाय **अनिमिषन्तो**ऽनिमिषमाणा इव आदरवन्तो **वेदनेन** विज्ञानेन युक्तमात्मानम् **अभिस्वरन्ति**

१. एतच्चाधस्ताद्व्याख्यातमपि ( नि० २-६-४ ) निरूप्यते दुर्बोधत्वम् । "यत्पुनरधिदैवतं सर्वमपि प्रतिविशिष्टज्ञानेनोपासकेन मुमुक्षुणा निरूप्य चेतसाऽऽत्मानमेव प्रतिसम्पाद्यते कार्यकारणाधिदेवताद्वारेण । सोऽयमेवमधिदैवतमधियज्ञं चोच्छिद्याध्यात्ममेवाभिसम्पादयति । एवं सोऽयमात्मयाज्ययेवाभिसम्पद्यते" इति ॥

२. लिङ्गमेदश्छान्दसः ॥ इन्द्रस्यात्मनो लिङ्गानि चक्षुरादीनि ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि च पाय्वादीनीति दशविधानीन्द्रियाणि भवन्ति । मनसोऽपि तत्र परिगणनमेकादशतयाभिप्रयन्ति मानसिकमप्यैन्द्रियकं ज्ञानमाचक्षाणास्तथाचोक्तममरेण "कर्मेन्द्रियं तु पाय्वादि, मनोनेत्रादि धीन्द्रियमि"ति ॥ लिङ्गेन हि लिङ्गिनोऽवगतिर्धूमेन वह्नेरिव दृष्टाऽत इन्द्रियसद्भाव एवात्मानं सन्तं प्रत्याययतीति सर्वमवदातम् ॥

३. नेत्रकनीनिकादिष्विन्द्रियाधिष्ठानेषु ॥

४. नहीन्द्रियाणां चैतन्यमस्तीति तानि ह्यचेतनानि चैतनस्य पुरुषस्य कर्तुर्विज्ञानमयस्य करणानि, तदधिष्ठानास्तु देवताश्चेतना दिग्वातादयोऽग्नीन्द्रादयश्च । तदभिप्रायेणोच्यते ॥

उपतपन्ति विषयविज्ञानेन पुरुषस्यापि भोक्तुर्दुःखं कुर्वन्ति । यद्वाऽभिप्रयन्ति तदभिमुखं प्रकर्षेण यन्ति गच्छन्ति । विषयरसमिन्द्रियाणि मनसि समर्पयन्ति, मनश्चात्मनीत्येवम् । अथवा **अभिस्वरन्ति** । बुद्धिम् **अभि** आभिमुख्येन विषयविज्ञानमादाय बाह्यप्रत्ययाधानार्थं **सुखेन अरन्ति** गच्छन्तीत्यर्थः । तत्र देहे योऽवस्थित **ईश्वरः सर्वेषामिन्द्रियाणां गोपायिता आत्मा स धीरः** धीमान् **पाकः** पाकः पक्तव्यः विपक्वप्रज्ञः ( सम्यग्दर्शी सर्वज्ञः ) **अत्र** एतस्मिन्नेव हि देहेऽवस्थितः बुद्ध्यधिदैवतभावेन, तैजसाख्यो **मा माम्** । **आविवेश** आविशतु अनुग्राह्यतया, स मामसम्यग्दर्शिनमसर्वज्ञमत्रैवावस्थितोऽनुगृह्णात्वित्यर्थः । व्यत्ययेन लिट् ( पा० ३–४–६ ) तदनुग्रहाच्चास्य सम्यग्दर्शनं प्रकाशते तदाशास्यतेऽनेन । **इति एवम् आत्मनो गतिं** विज्ञानमाचष्टे मन्त्रैः मन्त्रदृक् ॥

अत्र दुर्गः । अथ यदुक्तं "पुष्पफले देवताध्यात्मेवे–" ( नि० १–६–४ ) ति तदेवमुपपाद्यम् ॥ तत्र एक एव ह्यसावादित्यमण्डले चाधिदैवते चाध्यात्मे च बुद्ध्यधिदैवताभूतः स एव तत्र तत्रोपेक्षितव्यः । तस्मादमुष्मादादित्यमण्डलाद्ये रश्मयः प्रसर्पन्ति ते विश्वेदेवा इति । "रश्मयो वै विश्वेदेवाः" इति ह्युक्तम् ॥ अध्यात्मेऽपि हृदयाकाशाद्यानीन्द्रियाणि प्रसर्पन्ति त एव रश्मयः । अधिदैवते त एव विश्वेदेवा इत्युक्तम् । एवं तत्र तत्र योज्यम् ॥ प्रकारमात्रमेवमुपदर्शितं भाष्यकारेण (यास्केन) इति ॥ ६ ॥ ( १२ )

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ**
**नैघण्टुककाण्डे तृतीयाध्यायस्य**
**द्वितीयः पादः ॥ ३ ॥ २ ॥ * ॥**

---

१. यथा प्रजा माण्डलिके स च प्रधानाध्यक्षे मण्डलेश्वरे ॥ स एष माण्डलिकेन युज्यमानो युज्यते प्रजाभिस्तद्द्वारेण । भुंक्ते च भोग्यानर्थान्प्रजाश्रितान् ॥ तथाचोक्तम् "आत्मा मनसा युज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षमुत्पद्यत" इति ॥

२. तथाच भगवद्गीता–"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायये"ति ॥

३. तेजोमयान्तःकरणोपहितत्वात्तैजस इति वेदान्तविदो वदन्ति । तेषां हि विज्ञानमयादिकोशत्रयं मिलितं सत्सूक्ष्मशरीरं भवति । तत्राखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः । अनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिरपि भवति । एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा, हिरण्यगर्भः प्राणश्चेत्युच्यते । सर्वत्रानुस्यूतत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वादपञ्चीकृतपञ्चमहाभूताभिमानित्वाच्च, अस्यैषा समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं, विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात् (विराट्स्वरूपेणानुभूतस्थूलप्रपञ्चविषयकवासनामयत्वात्) स्वप्नोऽत एव स्थूलप्रपञ्चलयस्थानमित्युच्यते । एतद्व्यष्ट्युपहितं चैतन्यं हि तत्तैजसम् इत्यादिवेदान्तप्रकरणग्रन्थे व्यक्तम् ॥

## अथ तृतीयाध्यायस्य तृतीयः पादः ॥

### बहु नामान्युत्तराणि द्वादश ॥

ईश्वराणामेव बहुत्वं भवतीत्यत ईश्वरनामभ्य **उत्तराणि बहुनामानि** १२ उरु । तुवि । पुरु । इत्येवमादीनि ॥

आह—

**बहु कस्मात् ?**

इति । उच्यते—

**प्रभवतीति सतः ॥**

यद्धि बहुभ्यो दीयमानं प्रभवति सर्वान्सन्तोष्टुं तद्बह्वित्युच्यते लोके ॥ सत इति कर्तृकारकाभिधानमत्र । एषचार्थनिर्देशः । तथाच "बंहि वृद्धौ" ( भ्वा० आ० ) इत्यस्मात् "लङ्घिबंह्योर्नलोपश्च" ( उ० १–२९ ) इत्युः कर्तरि बंहते वर्धते इति बहु इत्येषतुनिर्वचनप्रकारः "बहु स्यात्त्र्यादिसंख्यासु विपुलेऽप्यभिधेयवत्" इति विश्वमेदिन्यौ ॥

बहुनामसम्बन्धेनाह—

### ह्रस्वनामान्युत्तराण्येकादश ॥

ऋह्वन् । ह्रस्वः । इत्येवमादीनि ॥

आह—

---

१. "ऊर्णुञ् आच्छादने" ( अ० उ० ) अस्मात् "महति ह्रस्वश्च" ( उ० १–३० ) इति उप्रत्ययो णलोपो ह्रस्वश्च । उरु आच्छाद्यतेऽनेन स्वल्पमिति । तथाच दुर्गः "उरु विस्तारे यद्धि बहु भवति तद्विस्तीर्णं भवति । तुवि वृद्धौ, यद्धि बहु भवति तद्वृद्धं भवतीति । पूरितमिव हि बहुना सर्वं भवतीति पुरु । इत्येवमादि युक्तं योज्य"मिति ॥ अत्र युक्तमित्यनेनैतदाह–उरु, तुवीति न धातू । किंतु नामनी एवार्थनिर्देशार्थमुपात्त अत्र । साधनं तूरुण्युक्तमेव, तुविपुरुणोस्तु–तु इति सौत्रो धातुस्ततो "अच इ"– (उ० ४–१३४) रिति इरवङ् । "पॄ पालनपूरणयोः" (क्र्या० प०) "पॄभिदि" ( उ० १–२३ ) ति कुप्रत्ययः । "उदोष्ठ्यपूर्वस्य" ( पा० ७–१–१८२ ) इत्युत्वं रपरत्वं च ॥

२. अत्र कुविच्छब्दोपन्यासो दुर्गस्य प्रामादिकः । स हि बहुनामस्वेव पठितः । तथाच निगमः "कुवित्सोमस्यापाम्" ( ऋ० सं० ८–६–२६–२ ) इति । बह्वहं सोम(स्य रस)म्पीतवानस्मीति तदर्थः ॥ व्याख्यात एषोऽधस्तात् ( नि० १–२–३ ) ॥ दुर्गस्तु–ह्रस्वनामसु कुविच्छब्दं पठित्वा कुत्सितमिव हि तद्विज्ञायतेऽल्पत्वादिति कुविदि"–त्येवं व्याख्यन् ह्रस्वनामस्वपि कुविच्छब्दं मन्यते । तदेतद्देहलीदीपन्यायेन स्यात् ? निघण्टौ तु ऋहन्नित्यादि क्रमेणैव ह्रस्वनामानि पठितानि । तथाचाध्यायान्ते खण्डप्रतीकसूत्रम् "ऋह्वन्हन्महद्" इत्येवम् कुविच्छब्दस्यातः पूर्वसूत्रान्ते पाठेनैव द्वादशसंख्यापूर्तिरिह पाठे न्यूनाधिक्ये पूर्वोत्तरसूत्रयोः संख्यायां प्रसज्येत । "रुह बीजजन्मनि" ( भ्वा० प० ) "रह त्यागे" ( भ्वा० प० ) अनयोः "संश्चत्तृपद्वेहदित्यादयः" ( उ० २–७९ ) इति वेकस्य

**ह्रस्वः कस्मात् ?**

इति । उच्यते—

**ह्रसतेः ॥**

यो हि ह्रसितोऽल्पतमो भवति महतः सकाशात्स ह्रस्व इत्युच्यते । "ह्रस शब्दे" ( भ्वा० प० ) "उल्वादयश्च" ( उ० ४-९५ ) इति वन्नन्तो निपातः । ह्रसति ह्रसते वा स ह्रस्वः ॥ "ह्रस्वो न्यक् खर्वयोस्त्रिषु" इति मेदिनी ॥

ह्रस्वसम्बन्धेनैवाह—

**महन्नामान्युत्तराणि पञ्चविंशतिः ॥**

ह्रस्वापेक्षयैव हि महत्त्वं भवतीति ॥ २५ ॥ तानि च महत् । ब्रध्नः । ऋष्वः इत्येवमादीनि ॥

आह—

**महान् कस्मात् ?**

इति । उच्यते—

**मानेनान्याञ्जहातीति शाकपूणिः । मंहनीयो भवतीति वा ॥**

**मानेन** स्वगुणेन परिमाणेन वा **अन्यान्** ह्रस्वान् **जहाति** अतिक्रामतीति महान् । **इति शाकपूणिः** आचार्यो "मन्यत" इति शेषः ॥—अथवा **मंहनीयः** पूजनीयो **भवतीति** महान् । बृहत्त्वाद्बृंहणत्वाद्वा ब्रध्न इति दुर्गः । बध्नातीति ब्रध्न इति शाकटायनः (उ० ३।५) ॥ दुर्गमते पृषोदरादिः । ऋष्वैः । सङ्गमनात् । इत्यादि योज्यम् ॥

संप्रसारणमतिप्रत्ययः शतृवच्चावश्च निपात्यते । यद्यपि मुद्रितपुस्तकेषु "संश्चत्तृम्पद्वेहदि"त्येतम्मात्रं पठ्यते किन्त्वत्र दण्डनाथवृत्तिः आदिशब्दाद्वहद्वियदित्यादयो भवन्तीति ॥ आरुह्यते हि ह्रस्वो वृक्षादिः । लज्यते वा दीर्घार्थिभिः । तथाच निगमः । बृहन्तंश्चिद्दहते रन्धयानि ( ऋ० सं० ७-७-२१-६ ) दुर्गस्तु लीढमेव हि तदल्पत्वाद्भवतीति रिहमिति व्याख्यन्रिहशब्दमेवेह पपाठ । केचित्तु दण्डनाथवृत्तौ रिहदिति पठन्ति । तदेतेषां निगमो गवेषणीयः ॥

१. अत्र स्कन्दस्वामिभाष्यम् । "मानशब्दाज्जहातेश्चे"ति शाकपूणिनिर्वचनात् । "मंहतेः पूजाकर्मणो वदत्याचार्यः" इति । उभयत्रापि "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्चे" (उ० २-७८) ति अतिप्रत्ययान्तो निपातो महते पूज्यत इति महान् ॥

२. बध्नाति स्वगुणैः सर्वान् वेतनदानेन वा भूत्यानित्येव ब्रध्नः । "बन्धेर्ब्रधिबुधी च" (उ० ३-५) इति नक्प्रत्ययः ॥

३. "ऋषू गतौ" (तु० प०) "सर्वनिघृष्वरिष्व०" (उ० १-१५१) त्यादिना वन्प्रत्ययो गुणाभावश्च निपात्यते । संगम्यते हि महान्सर्वैः संगतः प्राप्तो वा भूमिम् ॥ दुर्गस्तु "रेषणमानिति व्याख्यन्रिष्व" इत्युदाजहार । तथोणादिसूत्रेऽपि रिष्वेत्येवं पठन्ति, उदाहरन्ति च रिष्वो हिंस्र इति । निगमस्तु "ऋष्वावात इन्द्र स्थविरस्य बाहू" (ऋ० सं० ४-७-३१-३) इत्येवमुपलभ्यते ॥

**तत्र ववक्षिथ, विवक्षस, इत्येते वक्तेर्वा वहतेर्वा साभ्यासात् ॥**

तत्र तस्मिन्महन्नामके गणे **ववक्षिथ** १४ **विवक्षसे** १५ **इत्येते** आख्याते । ते पुनरुभे **वक्ते**र्वचधातो-(अ० प०) **वहते**र्वहधातो-(भ्वा० उ०) **र्वा साभ्यासात्**कृतद्वित्वात् भवतः । तत्राद्ये "सन्यतः (पा० ८-४-७९) इतीत्वाभाव एकवचनस्य स्थाने बहुवचनं क्षकारादकारस्त्वेत्वं च व्यत्ययेन । "अतिविश्वं ववक्षिथ" (ऋ० सं० १-६-१-५) "शीरं पावक शोचिषं विवक्षसे" (ऋ० सं० ७-७-४-१) इत्युभयत्र निगमौ भवतः ॥ विकल्पे वाशब्दः समुच्चये च । "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः ॥

**गृहनामान्युत्तराणि द्वाविंशतिः ॥**

महान्त एव गृहिणो भवन्तीति महन्नामभ्य **उत्तराणि गृहनामानि** । २२ ॥ गयः । कृदरः । गर्तः । हर्म्यम् । इत्येवमादीनि ॥

आह—

**गृहाः कस्मात् ?**

इति । उच्यते—

**गृह्णन्तीति सतः ।**

ते हि यावदेव किञ्चिदाह्रियते तत्सर्वमेव **गृह्णन्तो गृहा** उच्यन्ते दुष्पूरत्वात् "ग्रह उपादाने" (क्र्या० उ०) ततो "गेहे कः" (पा० ३-१-१४४) इति गेहे कर्तरि कः । "गृहाः पुंसि च भूम्न्येवे"-ति ( अमर ) कोशोऽत्र द्रष्टव्यः ॥

**परिचरणकर्माण उत्तरे धातवो दश ॥**

१. गम्यते सुखार्थिभिः इति गयः "अघ्न्यादयश्चे"-(उ० ४-१०८) ति यक्प्रत्ययान्तो निपातः । निपातनान्मलोपश्च ॥ कृदरः । "कृती च्छेदने" (तु० प०) "कृदरादयश्च" (उ० ५-४४) इति अरन्प्रत्ययो गुणाभावस्तकारस्य दकारश्च निपात्यते ॥ कृत्यते छिद्यतेऽनेन क्लेशः । परिच्छिन्नं वा सुशास्त्रमर्यादया । यद्वा कृदरः कृतदरः (कृतो दर आदरोऽत्र) "दृङ् आदरे" (तु० आ०) "ग्रहिवृदृनिश्चिगमश्च" (पा० ३-३-५८) इत्यप्प्रत्ययः । पृषोदरादित्वात्तलोपः ॥ गर्तः "गॄ शब्दे" (क्र्या० प०) स्तुतिकर्मा वा "हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्" (उ० ३-८३) इति तन्प्रत्ययः । शब्द्यतेऽस्मिन्स्तूयते वा ॥ हर्म्यं हरणमिति दुर्गः । "हृञ् हरणे" (भ्वा० उ०) "अघ्न्यादित्वात्" (उ० ४-११२) यङ्मुट् च ॥ यद्वा "द्रमहम्ममीमृ गतौ" (भ्वा० प०) इत्यस्यैव ह्रियतेऽत्र धान्यादीति हर्म्यम् ॥

२. "गृहं गेहोदवसित"मित्येवं नपुंसकस्यार्थस्य पुंस्त्वं भूम्न्येव (भूम्नि बहुवचने) ॥ तेन नानयोर्विरोधो भ्रमितव्यः ॥ गृहं गृहे गृहाणि । गृहाः गृहान् गृहैः । इत्येवमुभयत्र रूपाणि द्रष्टव्यानि ॥

गृहेष्वेवावस्थिताः परिचर्यन्ते परिचरन्ति चेति गृहनामभ्य **उत्तरे परिचरणकर्माणः** परिचरणार्थाः समाम्नाताः १० इरज्यति । विधेम । सपर्यतीत्येवमादयः ।

## सुखनामान्युत्तराणि विंशतिः ॥

परिचरतां परिचर्यमाणानामेव च सुखं भवतीति परिचरणकर्मभ्य **उत्तराणि सुखनामानि** २० । शिम्बाता । शतरा । शातपन्ता इत्यादीनि ॥

आह—

## सुखं कस्मात् ?

इति ॥ उच्यते—

## सुहितं खेभ्यः ॥

सुष्ठु हितमेतत् खेभ्य इन्द्रियेभ्यः । "खमिन्द्रिये खमाकाशे" इत्येकाक्षरी ॥

---

१. तथाच भारतम् । "सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च-यश्च जानाति सेवितुम्" इति ॥

२. "शिञ् निशाने" ( स्वा० उ० ) "निम्बविम्बशिम्बादयश्च"ति वप्रत्ययो मुम् च निपात्यते । अततेर्घञ् । दुःखानि तनूकुर्वत्प्रार्थ्यते यत्तत् शिम्बाता सुखम् इति । निघण्टुनिर्वचने देवराजयज्वानः । दुर्गस्तु "शिम्बाता, सुखानुसम्बन्धाद्धि हृदमग्नानामिव शरीरं शीतीभवति । शतरा, शीतलतरमिव हि जलादपि सुखम् । शातपन्ता, शान्तपापमेव हि सुखम् एवमादी"त्याख्यत् । वस्तुतस्तु—शतं बहु अनेकमिन्द्रियप्रसादादि राति ददातीति शतरा "आतोऽनुपसर्गे कः" ( पा० ३–२–३ ) शातपन्तेति । "शो तनूकरणे"–( दि० प० ) क्त "आदेच" ( पा० ६–१–४५ ) इत्यात्वम् । पततेः "हसिमृग्रिण्वामि०" ( उ० ३–८३ ) इति बाहुलकात्तन् । शातेन दुःखानां तनूकरणेन पत्यते स्तूयते । त्रिष्वपि द्विवचनस्याकारः । "मित्रेव ऋता शुतरा शातपन्ता" इति निगमः ( ऋ० सं० ८–६–१–५ )

३. अत्र स्कन्दस्वामिनः—नेयं हितयोगलक्षणा चतुर्थी ( पा० १–४–४४ वा० ) इन्द्रियाणामचैतन्यात्सुखादिभिरसम्बन्धात् । अत इयं हेतौ पञ्चमी ( पा० २–३–२५ ) इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वादुपपद्यत इन्द्रियाणां हेत्वर्थकत्वम् यथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोग्यपदार्थान्तराध्याहारः । अतिशयेन हितं पुरुषस्य खेभ्यः । खहेतुकमित्यर्थः । हितं वा पुरुषे आत्मधर्मत्वात्सुखादीनां, धर्माधिकरणत्वाच्च धर्मिणाम् । अथवा खेभ्य इति चतुर्थ्येव । खशब्देन च "आत्मा मनसा संयुज्यते मन इन्द्रियेणे"ति सम्बन्धिसम्बन्धात्पुरुष एवोच्यते इति यथाश्रुतसंबन्धः । तथाचोपनिषत् । "वर्ण्यः स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः" क्षुराधाने अव्यवहितं स्यादित्युपलक्ष्य प्राणान्ते च प्राणानां भवतीति प्राणादिशब्दैस्तस्योक्तसिद्धं दर्शयति—"खं पुनः खनतेः" इति । तत्पूर्वस्य उत्खनति विनाशयति । किं ? परमब्रह्मप्राप्तिसुखम् । कथं ? कायसुखप्रवृत्तेरघोगमनात् इति सुखमिति ॥

खशब्दार्थमाह—

## खं पुनः खनतेः ॥

यदेतदिन्द्रियं खं तत्खनतेरवदारणार्थस्य ( भ्वा० उ० ) "अन्येष्वपि दृश्यते" ( पा० ३–२–१०१ ) इति डः । यद्यप्ययं जनेर्विहितस्तथाप्यपिशब्दबलेन धात्वन्तरादपि कारकान्तरेष्वपि । 'परिखा' इति यथा । खन्यते अवदीर्यत इति खम् । "अवदीर्णमेव हि तस्य ( इन्द्रियस्य ) कर्णायतनं भवती"ति दुर्गः ॥

## रूपनामान्युत्तराणि षोडश ॥

सुखिन एव हि प्रायेण रूपवन्तो भवन्तीति सुखनामभ्य **उत्तराणि रूपनामानि** १६ । तानिच-निर्णिक् । वव्रिः । इत्येवमादीनि ॥

रूपशब्दं निर्वक्ति—

## रूपं रोचतेः ॥

"रुच दीप्तौ" ( भ्वा० आ० ) बाहुलकादुपधादीर्घश्चस्य पश्च । "दीप्यमानमिव हि तत्प्रकाशकं भवतीति" दुर्गः ॥

## प्रशस्यनामान्युत्तराणि दश ॥

रूपवन्त एव हि प्रशस्या भवन्तीति रूपनामभ्य **उत्तराणि प्रशस्यनामानि** १० । अक्षेमाः । अनेमाः । अनेद्यः । इत्येवमादीनि ॥

## प्रज्ञानामान्युत्तराण्येकादश ॥

प्रशस्या एव हि प्रज्ञावन्तो भवन्तीति प्रशस्यनामभ्य **उत्तराणि प्रज्ञानामानि** ११ । केतः । केतुः । चेतः । इत्येवमादीनि ॥

---

१. "णिजिर् शौचपोषणयोः" ( जु० उ० ) निःपूर्वः क्विप् । निर्णिक्तमिव हि तद्भवति तैजसत्वात् पोषयति वा प्रीतिम् ॥ वव्रिः । "वृञ् वरणे" ( स्वा० उ० ) "आदृगमहनजनः किकिनौ लिट् च"– ( पा० ३–२–१७१ ) ति द्विर्वचनम् कित्वाद्गुणाभावः यणादेशः । तद्धि स्वाश्रयमावृणोति । व्रियते वा सर्वैः ॥

२. "क्षिवु गतिशोषणयोः" ( दि० प० ) नञ्पूर्वः । "मनिन्सर्वधातुभ्यः" ( उ० ४–१४० ) इति मनिनि बाहुलकादड्भावः "लोपो व्योर्वलि"–( पा० ६–१–६६ ) ति वकारलोपो गुणः । न क्षिप्यति गच्छत्यकीर्तिमित्यक्षेमाः । अपाप इत्यर्थः । क्षमारहितो वा ॥ नञ्पूर्वान्नयतेर्मनिन् नेतुमशक्योऽनेमाः । अनेद्यः । अनिन्द्यार्हः । "णिदि कुत्सायाम्" ( भ्वा० उ० ) नञ्पूर्वः । "आगमशास्त्रमनित्यम्" इति नुमभावः । "ऋहलोर्ण्यत्" ( पा० ३–१–१२४ ) इति ण्यत् गुणः ॥

३. "कित ज्ञाने" ( भ्वा० प० ) असुनि ( उ० ४–१८८ ) गुणे केतः । "चायृ पूजानिशामनयोः" ( भ्वा० उ० ) "चायः किः" ( उ० १–७३ ) इति तुप्रत्ययो धातोश्च किर्गुणे केतुः । निशामनं ज्ञानम् । दुर्गस्तु कितेरेव केतुरित्याह । तन्मते "उणादयो बहुलम्" ( पा० ३–३–१ ) "चिती संज्ञाने" ( भ्वा० प० ) असुनि ( उ० ४–१८८ ) गुणे चेतः ॥

## सत्यनामान्युत्तराणि षट् ॥

प्रज्ञावन्त एव हि सत्यवादिनो भवन्तीति प्रज्ञानामभ्य **उत्तराणि सत्यनामानि ६** वेद् । श्रत् । सत्रा । इत्येवमादीनि ॥

आह—

## सत्यं कस्मात् ?

इति । उच्यते—

## सत्सु तायते सत्प्रभवं भवतीति वा ॥

**सत्सु** एव हि तत् **तायते** विस्तीर्यते । नहि सतां समीपे शक्यमनृतं वक्तुम् । अथ **वा** प्रभवत्यस्मादिति प्रभवः । अपादाने "ऋदोरप्" ( पा० ३-३-५७ ) गुणः । सन्त एव प्रभवः प्रथमप्रकाशावधिर्यस्य तत्**सत्प्रभवं**, यद्वा सति सत्पुरुषे प्रभवति **इति** सत्यं **भवति** एष चार्थनिर्देशमात्रम् । साधनं तु सति साधु सत्यम् । "तत्र साधुः" ( पा० ४-४-९८ ) इति यत्प्रत्ययः । सन्त एव हि सत्यं वदन्तीति सत्यशब्दनिर्वचनमुक्तं प्राक् ( नि० २-४-२ ) भाष्ये ॥

## अष्टावुत्तराणि पदानि । पश्यतिकर्माण उत्तरे धातवः । चायतिप्रभृतीनि च नामानि । आमिश्राणि ॥

**अष्टौ** यानि **उत्तराणि पदानि** चिक्यत्–इत्येवमादीनि ते **पश्यतिकर्माणः** दर्शनार्था **उत्तरे** सत्यनामभ्यः **धातव** एवेत्येवं मन्तव्याः । यान्यप्यत्र **नामानि** चिक्यत् १ चाकनत् २ विचर्षणिः ६ विश्वचर्षणिः ७ इति ४ तान्यपि **चायतिप्रभृतीनि** चायति कनति कर्षति इत्येवं धातव एव सत्त्वभूतानि कृतसाधनेनाभिपन्नानि । तदित्थं धातवो नामानि **चेत्यामिश्राणि** संसृष्टानीत्यर्थः ॥ केचित्त्वाचक्षते—इमानि ( यथासम्भवं ) कुत्रचिन्नाम कुत्रचिदाख्यातम् इति । एषां प्रकरणोपपदाभ्यां विशेषावधारणं भवतीति ॥ अन्ये पुनः "चिक्यत् १ विचर्षणिः ६ विश्वचर्षणिः ७ इत्येतानि नामानि । यान्यन्यानि परिशिष्टानि ते धातवः । तानि पुनरेतानि पूर्वाचार्यप्रामाण्यादामिश्राणि पठ्यन्ते इत्येवं मन्यन्ते ॥

## नवोत्तराणि पदानि सर्वपदसमाम्नानाय ॥

**नव** यानि **उत्तराणि पदानि** हिकमित्याद्याकृतमित्यन्तानि तानि **सर्व**विधानां ( चतुर्णां नामाख्यातोपसर्गनिपातानां ) **पदानां समाम्नानाय** । कथं नामैतस्मिन् समाम्नाये चतुर्विधं पदजातं समाम्नातं स्यादित्येवमर्थम् । एष्वेव हि नवसु समाम्नातेषु उभये निपातोपसर्गा दर्शिता भवन्ति ॥

## अथात उपमाः ॥

**अथेदानीमतो**ऽनन्तर**मुपमा** उपमार्थाः ( उपमायामुदाहरणभूताः शब्दसंघाः ) "भवन्ती"ति शेषः ॥ इदमिवेत्यादयो द्वादश ॥ एतासां प्रदर्शनमतऊर्ध्वं ( ३-४-१ ) यावद्भाष्यकारेणैव सूत्रपञ्चतयेनोपनिबद्धमिति द्रष्टव्यम् ॥

अथ सामान्यलक्षणमासा ( मुपमानां ) ब्रवीति—

## यदतत्तत्सदृशमिति गार्ग्यः ॥

**यत्** किञ्चिदर्थजात**मतत्** तद्भिन्नं सत् **तत्सदृशं** तत्स-( मान- ) रूपं च भवति सा उपमा । "तद्भिन्नत्वे

---

१. एते निपाताः ॥

२. "तनु विस्तारे" इत्यस्य "तनोतेर्यकि" ( पा० ६-४-४४ ) इत्यात्वम् ॥ "तायृ पूजानिशामनयोः" ( भ्वा० आ० ) इत्यस्य वा । ततो हि बाहुलकात् ड्यन्प्रत्यये डित्त्वाट्टिलोपे सत्यम् ॥ "सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति" इति मेदिनी ॥

३. "उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाक्" इति विधेयप्राधान्यात्पुल्लिङ्गनिर्देशः ।

४. यदेवहि दृश्यते तदेव सत्यमिति पांशुलपादिको हालिकोऽपि प्रतिपद्यते एषैव च सङ्गतिः ।

५. अत्र हि स्कन्दस्वामिभाष्यम् "चिक्यदित्यादीनि चायत्यर्थनिगमनानीति । अस्य चायतेर्योऽर्थो दर्शनं ( निशामनं चाक्षुषज्ञानमिति हि माधवः ) तस्य ( तदर्थकस्य धातोः ) निगमनानि बोधकानीत्यर्थः । तथाच—चिक्यदिति चायतेर्यङ्लुकि शता "छन्दस्युभयथा" ( पा० ३-४-११७ ) इत्यार्धधातुकत्वात् "चायः की" ( पा० ६-१-२१ ) इति क्यादेशः । द्वित्वमभ्यासकार्यं षणादेशश्च । एवं कनतेश्चाकनत् । भृशं पश्यन्कामयमानो वा "कनी दीप्तिकान्तिगतिषु" पठ्यते ( भ्वा० प० ) कान्तिरिच्छा । अस्य दर्शनार्थत्वं तु गत्यर्थानां ज्ञानार्थत्वाद्धन्तिर्ज्ञाने उद्ध इति यथा । तत्रहि उद्धन्यते उत्कृष्टो ज्ञायते इत्यर्थे कर्मण्यप् एवमिहापि । अत्राभ्यासस्य "नुगतोऽनुनासिकान्तस्य" ( पा० ७-४-८५ ) इति नुक्भवति । बाहुलकादेव ॥ विपूर्वाद्विश्वपूर्वाच्च "कृष विलेखने" ( भ्वा० प० ) इति धातोः "कृषेरादेश्च चः" ( उ० २-८७ ) इति अनिप्रत्ययः । आदेः ककारस्य चकारश्च । यद्वा चायतेरेव बाहुलकादनिप्रत्ययो धातोर्ह्रस्वः षंभावश्च । विविधं द्रष्टा विचर्षणिः । विश्वस्य द्रष्टा विश्वचर्षणिः ॥ अत्र चिक्यदित्यादीनि पञ्च चक्षिङो दर्शनार्थानि व्याख्यातानीति देवराजयज्वानः ॥ अत्रचाकशदिति तु "काशृ दीप्तौ" ( भ्वा० आ० ) अवपूर्वः । यङ्लुकि शतरि व्यत्ययेन ह्रस्वत्वं नामत्वपक्षे, क्रियापक्षे तु—लुङि व्यत्ययेन च्लेश्चङि द्वित्वमडभाव उपधाह्रस्वत्वं परस्मैपदं चेति सर्वथ्यैथायथमन्यत्रापि समर्थनीयम् ॥

१. साकल्येन । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः ॥

२. उपेत्यान्यधर्भैर्मानमुपमा "आतश्चोपसर्गे" ( पा० ३-३-१०६ ) इति अङ्प्रत्ययः । स्त्रियामित्यधिकारे विहित इति तदन्ताट्टाप् प्रत्ययः ॥

सति तद्गतभूयोधर्मवत्त्वं" सादृश्यं ( साधर्म्यम् ) सैव भेदे सत्युपमाऽभेदे रूपकम् । तथाच मम्मटः "साधर्म्यमुपमाभेदे" इत्याह । यथाऽनग्निः खद्योतोऽग्निसरूपश्च सोऽग्निनोपमीयते अग्निरिव खद्योत इति । एवमतत्स्वरूपेण गुणेन गुणसामान्याद्गुपमीयते इति एवं **गार्ग्य** आचार्यो "मन्यते" इति शेषः ॥

## तदासां कर्म ॥

**आसाम्** उपमानां **तत्कर्म** सोऽर्थः यदप्रसिद्धतरगुणस्य कस्यचित् प्रसिद्धतरगुणेनान्येन गुणप्रकाशनम् । क्वचित्पुनरात्मनाप्युपमानं भवत्येव । यथा "वायोरात्मोपमा गतिः" "तथा करोति सैन्यानि यथा कुर्याद्धनञ्जयः" इति ॥

## ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाऽप्रख्यातं वोपमिमीते ॥

**ज्यायसा** उत्कृष्टेन **गुणेन** ( यो यस्मिन्द्रव्ये उत्कृष्टो गुणस्तेन ) **कनीयांसम्** अनुत्कृष्टगुणमल्पतमगुणं वा[3] **उपमिमीते** उपमया योजयति । तद्यथा "सिंहो माणवक" इति । सिंहे शौर्यमुत्कृष्टं माणवकमेतेनोपमिमीते । सिंह इव ( विक्रान्तो ) माणवक इत्येवम् । अथवा **प्रख्याततमेन** अतिप्रख्यातेन ( अतिप्रसिद्धेन ) गुणेन **अप्रख्यातम्** अनतिप्रसिद्धम् । उपमिमीते । यथा–चन्द्र इव ( कान्तो ) माणवक इति । वाशब्दोऽत्र वाक्यालङ्कारे विकल्पे समुच्चये वितर्के च । तथाच मेदिनी "वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे । समुच्चये च" इति । अत्र चाद्वाक्यालङ्कारे ॥

## अथापि कनीयसा ज्यायांसम् ॥

१. अत्र "सादृश्यं न भेदघटितमि"ति वैयाकरणाः प्राहुः । तेषां हि "नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" इति परिभाषा ( ७५ ) महाभाष्यकृत्सम्मताऽस्ति । नञ्युक्तमिव युक्तञ्चँदृश्येत तदन्यस्मिंस्तत्सदृशे चाधिकरणे ( द्रव्ये ) कार्यं विज्ञायते इति शेषः । हि यतस्तथैवार्थस्य गतिर्ज्ञानं भवतीति तदर्थः । अत्र नञ्युक्तोदाहरणं महाभाष्ये "नब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवती"ति । एवमिवयोगेऽत्रान्यत्र च द्रष्टव्यम् । युक्तं चैतत् । यतोऽतत्सदृशमिति यास्कोऽप्याह । तेन परिष्कृतिरियं नव्यनैयायिकानामत्र दर्शितेति बोध्यम् ॥

२. उपमानोपमेययोः समानधर्मेण सह सम्बन्ध इति हि तदर्थः । समानधर्मणोर्भावः साधर्म्यमिति गीयते । "कृत्तद्धितसमासैः सम्बन्धाभिधानं भावप्रत्ययेने"–ति भर्तृहरिः । साधारणधर्मवत्त्वमिति तु परमार्थः । चमत्कृतिप्रयोजकं सादृश्यवर्णनमुपमेत्यालङ्कारिकाः प्राहुः ॥

३. "युवाल्पयोः कनन्यतरस्याम्" ( पा० ५–३–६४ ) इति कनादेशोऽल्पस्यापि भवति इष्ठेयसोः ॥

४. माणवको बटुः "बालस्तु स्यान्माणवकः" इत्यमरः । अत्रेवार्थस्य कनो "लुम्मनुष्ये" ( पा० ५–३–९८ ) इति लुकं प्राहुर्वैयाकरणाः ॥

**अथापि** अथवा ( क्वचित् ) **कनीयसा** अल्पीयसा गुणेन **ज्यायांसमपि** सन्तमुपमिमीते । तदेतदनुपदं निगमेनोदाहरिष्यति ॥ १ ॥ ( १३ )

अथ यथोपक्रान्त"मिदमिवे"–ति प्रथमोपमानिदर्शनस्योदाहरणमेवावरोहणक्रमेण "कनीयसा ज्यायांसमि"–ति प्रकृतमाह—

"तनूत्यजेव तस्करावनर्गू रशनाभिर्दशभिरभ्यधीताम् ॥" ( ऋ० सं० ७–५–३२–६ )

अस्य–"इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः" इत्युत्तरार्धर्चम् ॥ त्रितस्येयमार्षं त्रिष्टुप् प्रातरनुवाकाश्विनयोः शस्यते ॥ अरणावग्निमन्थने विनियुक्ता । हे **अग्ने** ! एतावस्मद्बाहू **तनूत्यजा** तनूत्यजौ ( त्यक्ततनू ) चौर्याभिप्रायेण हर्तव्यं वा मर्तव्यं वेति कृताध्यवसायौ **वनर्गू** वनगामिनौ **तस्करा** तस्करौ **इव** **दशभिर्दशसंख्याकाभिः** **रशनाभिरङ्गुलीभिः** ( निघं० २–५ ) **अभ्यधीताम्** अभितोऽधातां प्रतिबध्नीतः । अभिदधाते लडर्थे लुङ् ( पा० ३–४–६ ) सिचो लुकि "छन्दस्युभयथा" ( पा० ३–४–११७ ) इति तस आर्धधातुकत्वेन ङित्वाद् "घुमास्था"–( पा० ६–४–६६ ) इत्यादिना ईत्वम् ॥ ( अभिनिबध्य चाग्निमन्थनयोक्त्रेणाधरारण्युत्तरारणिभूतं त्वां तस्कराविव कञ्चिदध्वगं गाढं बध्वा भृशमाकर्षतः ) किमर्थंपुनरेवं मथ्यते ? यस्मात् **इयम्** अस्माभिरस्मिन्काले प्रयुक्ता **नव्यसी** नवतरा ( अति नवीना ) अन्यैः स्तोतृभिरदृष्टश्रुतपूर्वा युष्मद्गुणैः संस्कृत्यास्माभिर्विवक्षिता । **ते** तव **मनीषा** स्तुतिः प्रधानसंयुक्ता अतस्त्वम् ( एतज्ज्ञात्वा एवमभिमथ्यमानोऽस्माभिररणिभ्यां ) **शुचयद्भिः** दीप्यमानैः । शोचतिर्ज्वलतिकर्मा ( निघं० १–१६ ) स चेह ण्यन्तः शत्रन्तः । "संज्ञापूर्वको विधिरनित्यः" ( प० ९४ ) इतिह्रुप-

१. अध्याहृतमेतत्प्रकरणवशादर्थतः ॥

२. एतत्साधनमनुपदं मूले स्फुटिष्यति ॥

३. योक्त्रैरिव । रशीति बन्धनार्थो धातुः सौत्रः । ततो "युज्बहुलम्" ( उ० २–७४ ) इति युच्प्रत्ययः । योरनादेशः ( पा० ७–१–१ ) बध्नन्ति बन्धनीयं बध्यते आभिरिति वा ॥ युच्प्रकरणे "अशेरश:" इति भोजदेवः । तन्मते अश्नुवते कर्माणीति रशना । अङ्गुल्यो योक्त्राणि रश्मयश्चेति देवराजयज्वानः ॥

४. दधातिरत्र धारणार्थः । अभीत्यभितोऽर्थे । तेन बन्धने पर्यवसन्नोऽयं, प्रतिदुर्गेण योजितः ॥

५. अत्रारणिव्याजेनाग्निरेव निर्मथ्यत इति त्वामित्युक्तेः सामञ्जस्यमर्थसङ्गमनाय द्रष्टव्यम् ॥

६. नव्यशब्दात् "द्विवचनविभज्योपपदे तरबीयसुनौ" ( पा० ५–३–५७ ) इतीयसुन ईयशब्दलोप आर्षः । उगित्त्वान्ङीप् ( पा० ४–१–६ ) ॥

७. अयमर्थो नव्यसीपदस्वारस्यादुत्प्रेक्षितः ॥

धातुगुणाभावः। खैः अङ्गैः (ज्वालाख्यैः) रथं न रथमिव युङ्क्ष्व योजयाश्मानमरणी प्रति। यथा—कश्चित्कृतश्चिज्झटित्याजिगमिषुः शीघ्रं रथं योजयेदेवमेवावतरणाय त्वमाभ्याम-रणीभ्यां योजयमानो यत्स्व, विलम्बं माकार्षीरित्यर्थः॥ अत्र युङ्क्ष्वा इति दीर्घः सांहितिकः (पा० ६-३-१३७) अत्रोपमेयलुप्तोपमा बोध्या॥ ६॥

अथ मन्त्रार्थं विवक्षन्पदार्थमाह—

**तनूत्यक्-तनूत्यक्ता। वनर्गू वनगामिनौ॥**

अत्र **तनूत्यक्**त्येत्यर्थानुवादः। त्यजतेर्भूते कर्मणि क्विप् बाहुलकात्। त्यज्यतेऽसेति त्यक् त्यक्ता। त्यक् तनुर्याभ्यां तौ त्यक्तनू पदव्यत्ययेन **तनूत्यक्**। अत्र त्यक्ततनू इति वक्तव्ये तनूत्यक्तेति निष्ठान्तस्य परप्रयोगः "जातिकालसुखादिभ्यः परा निष्ठा वाच्ये"-(पा० २-२-३६ वा०) ति वचनात्॥ अत्र द्विवचनस्याकारादेशः (पा० ७-१-३९) एवं "तस्करा" इति पदेऽपि॥ वनर्गुशब्दो वनशब्दोपपदाद्गमेः "मृगय्वाद-यश्चे"ति (उ० १-३६) डुप्रत्ययान्तो रुडागमेन पूर्वपदस्य निष्पन्नः। वने गच्छतस्तच्छीलौ इति **वनर्गू**॥ अत्र ताच्छील्यविशिष्टे कर्तरि प्रत्यय इत्याह **वनगामिनाविति**। नित्यं वनगमनशीलाविति तदर्थः। सततकरणं हि ताच्छील्यमत्र णिनिप्रत्ययान्तेन विवक्षितम्—॥

अत्र—

**अग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते।**

एवमस्यामृचि-प्रशस्तावग्निमन्थनौ **बाहू** अप्रशस्ताभ्यां **तस्कराभ्यामुपमिमीते**। "मन्त्रदृगिति" शेषः। एवं प्रतिज्ञातमुक्तम्॥ तदेतत्तस्करपदनिर्वचनमुखेनोच्यते—

**तस्करस्तत्करोति यत्पापकमिति नैरुक्ताः। तनोतेर्वा स्यात्सन्ततकर्मा भवत्यहोरात्रकर्मा वा॥**

**तस्करस्तदेव करोति। यदेव पापकं** भवति। इति **नैरुक्ता** निरुक्तविदो **"मन्यन्ते"** इति शेषः। तथाच वार्तिकम् "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च" (पा० ६-१-१५७) इति॥ अत्र तात्पूर्वश्चत्वेन दकारो बोध्यः। "झरो झरी"ति (पा० ८-४-६५) तल्लोपः। तद्बृहतोर्दकारतकारौ लुप्येते। करपत्योस्तु सुट्। चोरदेवतयोरिति समुदायोपाधिः। तत्करोतीति तस्करः। "कृञो

हेतुताच्छील्यानुलोम्येषु" (पा० ३-२-१०) इति ताच्छील्यविशिष्टे कर्तरि टः। गुणः। उपपदसमासश्च (पा० २-२-१९) प्रकारान्तरमाह-अथवा **तनोतेर्धातोः स्यात्तस्करस्तं** सतं-(सम्यक् ततं विस्तृतमविरतं वा) करोतीति पूर्ववत्। समित्युपसर्गस्याप्रयोगोऽद्योतकतया विवक्षितः। अत्रार्थे पृषोदरादित्वात्पूर्वपदान्तलोपः॥ तदेतदाह **सन्ततकर्मा भवति**। रात्रौ ग्रामे मुष्णाति। दिवाऽरण्ये। एवमेषोऽ**होरात्रकर्मा** सन्सन्ततकर्मा ततकर्मा तस्कर इत्यर्थतोऽस्य (तस्करपदस्य) निरुक्तिर्दर्शिता नैरुक्तसमयेन। तत्र हि प्रत्यक्षक्रियेण परोक्षक्रियस्तेन चातिपरोक्षक्रियो निरुच्यते। वाशब्दोऽन्ते समुच्चये॥

अथोक्तार्थमुपसंहरन् द्वितीयपादार्थमन्ततो निराचष्टे—

**रशनाभिर्दशभिरभ्यधीताम्॥**

**अभ्यधाताम्। ज्यायांस्तत्र गुणोऽभिप्रेतः॥ २॥ (१४)॥**

**अभ्यधीताम्। अभितोऽधातां** प्रतिबध्नीत इत्यर्थः। एतस्य साधनमुक्तमधस्तात् (१३३ पृ० १५ पं०) **तत्र** बाह्वोः **ज्यायान्** प्रशस्यो **गुणोऽ**प्रशस्तत्वाच्च तस्करयोः कनीयान-**भिप्रेतो** भवतीत्युपसंहरति॥

अथैतस्मिन्नेव "अथापि कनीयसा ज्यायांसम्" इत्यर्थे द्वितीयमुदाहरणमाह—

**कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः। को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ॥२॥"**

(ऋ० सं० ७-८-१८)

**कुहस्विदिति**। कक्षीवतो दुहिता घोषा नाम तस्या इयमार्षम्। आश्विनी जगती। प्रातरनुवाकाश्विनयोः शस्यते। **हे अश्विना! हे** अश्विनौ! औङ आकारः (पा० ७-१-३९) युवां **दोषा** रात्रौ **कुहस्वित्** क्व "भवथः?" इति शेषः। "स्वित्प्रश्ने च वितर्के च" इत्यमरः। "सप्तम्यास्त्रलि" त्वधिकारे "किमोऽदि" त्यनुवृत्तौ "वा ह च च्छन्दसी" (पा० ५-३-१३) ति हः। "कुतिहोः" (पा० ७-२-१०४) इति किमः क्वादेशः। **कुह** क्व वा **वस्तोः** दिवा (निघं० १-९) भवथः। येन रात्रिन्दिवं दर्शनं नोपगच्छथः। **कुह** क्व च **अभिपित्वम्** अभिप्राप्तिं स्नानभोजनाद्यर्थम् **करतः** कुरुथः। अत्र पुरुषविकरणव्यत्ययौ-(पा० ३-१-८५) **कुह** क्व वा **ऊषतुः** वसथः? अत्रापि पुरुषकालव्यत्ययौ (पा० ३-१

१. लुप्तोपमा हि एकविंशतिविधाः। षड्विधा च पूर्णोपमेति "तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः" (सा० द० प० १०) इत्येवमालङ्कारिकेषु प्रसिद्धा लौकिकोदाहरणे॥

२. अन्ततोऽन्तिमपदावच्छेदेन तस्यैव सन्दिग्धत्वात्॥ सप्तम्यन्तात्सार्वविभक्तिकस्तसिः। (पा० ५-४-४४ वा०) अवच्छेदकत्वं सप्तम्यर्थः। "गृहीत्वा चास्य केशेषु शिरस्तेनासिनाऽच्छिनत्" इतिवत्। अवच्छेदकता चात्र विषयतारूपा तेन वैषयिके आधारे सप्तमीयमिति परमार्थः॥

१. "वस आच्छादने" (अ० आ०) वस्ते आच्छादयति ज्योतिषेत्यर्थे व्यत्ययेन कर्तरि तोसुन् (पा० ३-४-१३) अत्र स्कन्दस्वामिनः। "वस्तोरितीदृशमेवेदं नाम न विभक्त्यन्तरमि"ति॥

२. प्राप्तिमित्यस्य स्थाने पित्वमिति भाष्यकृतैव निरुक्तं तेनास्य पृषोदरादित्वं कल्प्यम्॥

८५ ) सर्वथा वामागमनप्रवृत्तिर्न विज्ञायते । किञ्च कः कतमो यजमानः वां युवां सधस्थे सहस्थाने वेद्याख्ये **आकृणुते** आत्मन आभिमुख्येन कुरुते ? परिचरणाय । येनेहास्मद्दर्शनं नोपगतवन्तौ स्थः । अत्रापि पदव्यत्ययः पूर्वेणैव ॥ अत्रोपमाद्वयं **विधवा** गतभर्तृका स्त्री शयुत्रा शयने 'देवरम्' भर्तृभ्रातरमिव सा यथा तमभिमुखीकरोति, शयनेचाति तरां तं परिचरति, स हि परकीयत्वान्नार्यां दुराराध्यतमो भवतीति यत्नेनोपचर्यते । न तथा निजो भर्ता । तथा-**योषा** याकाचित् स्त्री **मर्यं न** पुरुषमिव । सा यथा सम्भोगकाले तमभिमुखीकरोति तद्वत् । एवमस्यामृचि देवरेण कनीयसा ज्यायांसावश्विनामुपमीयेते । विधवया च यजमानः ॥ २ ॥

अथैतस्या ऋचोऽर्थमनुवदति—

**क्वस्विद्रात्रौ भवथः । क्व दिवा । काभिप्राप्तिं कुरुथः क्व वसथः । को वां शयने विधवेव दवेरं ( देवरः कस्माद्द्वितीयो वर उच्यते )**

अथैकपदनिरुक्तम्—

**विधवा विधातृका भवति, विधवनाद्वा विधावनाद्वेति चर्मशिराः अपि वा धव इति मनुष्यनाम, तद्वियोगाद्विधवा ॥**

धाता पोष्टा भर्तेति यावत् स विगतो यस्याः सा **विधातृका विधवा** अथवा **विशेषेण धवनात्**कम्पनाद्विधवा । सा हि भर्तृमरणेन विधूता कम्पितेव भवति । अथवा विशेषेण तत्र तत्र **धावनाद्विधवा**, सा हि भर्तुरभावादनुरुध्यमाना पुंभिर्यितस्ततो धावति । अन्नाच्छादनक्लेशाद्वा । वृत्तिकार्श्यं हि मानभ्रंशहेतुः सर्वस्य ॥ इति **चर्मशिरा** आचार्यो मन्यत इति शेषः । **अपिवा** अथवा **धवो मनुष्यः** पतिरेव । तथाच मेदिनी-"धवः पुमान्नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च"ति ॥

**देवरोदीव्यतिकर्मा । मर्यो मनुष्यो मरणधर्मा । योषा यौतेः ॥**

**देवर** इत्येष शब्दो **दीव्यतिकर्मा** दीव्यतीत्यर्थकः । "देवृ देवने" ( भ्वा० आ० ) "अर्तिकमि०" ( उ० ३-१३२ ) इत्यादिना अरन् प्रत्ययः । देवते क्रीडतीति देवरः । स हि भर्तुः कनीयान्भ्राता नित्यमेव तया भ्रातृभार्यया देवनार्थं म्रियत इत्ययं देवर इत्युच्यते । **मर्य** इति "मृङ् प्राणत्यागे" ( तु० आ० ) इत्यस्मात् "छन्दसि निष्टर्क्य०" ( पा० ३-१-१२३ ) इति यन्प्रत्ययान्तो निपात्यते । गुणश्च । म्रियतेऽसौ मर्यः । **यौतेः** मिश्रणार्थस्य ( अ० प० ) बाहुलकादौणादिके स प्रत्यये गुणे षत्वे च साधुः । सा हि मिश्रयत्यात्मानं पुरुषेण साकम् ॥ "स्त्री योषिदबला योषे"त्यमरः ॥

अथ मन्त्रार्थमुपसंहरति—

**आकुरुते सहस्थाने ॥**

इति । एतच्च "कृणुते सधस्थआ" इत्यन्तमां शस्य व्याख्यानमृचः ॥ "छन्दसि परेऽपि" ( पा० १-४-८१ ) इति उपसर्गस्याङः परप्रयोगः ॥ सहस्थाने एकस्थाने ॥ सहस्थितौ वा । निमित्तार्थे सप्तमी । आभिमुख्येनात्मना कुरुते परिचरणायेति तदर्थः ॥

एवं यथोपक्रम"मिदमिवे"ति गुणोपमोदाहरणमुक्त्वेदानीं क्रमप्राप्तस्य "इदं यथा" इत्यस्योदाहरणं विवक्षन्नाह—

**अथ निपाताः पुरस्तादेव व्याख्याताः ॥**

सामान्यतो यथावसरं **निपाताः पुरस्तात्** । पूर्वमेव **वि-भज्य आख्याताः** ( नि० १-२-१ ) समाम्नाता विशेषत इदानीमुदाहरणतो व्याख्यायन्त इत्यधिकारार्थोऽयमथशब्दः ॥

**यथेति कर्मोपमा ।**

कर्मणा क्रिययोपमायां यथाशब्दमुदाहरति-( इयं हि कर्मोपमेत्युच्यते "इदं यथे"ति ) ॥

**"यथा वातो यथा वनं यथा समुद्र एजति ॥"** ( ऋ० सं० ४-४-२०-४ )

इति । अस्याः "एवा त्वं दशमास्य सहावेहि जरायुणा" ॥ इत्युत्तरार्धम् । एषाऽनुष्टुप् । गर्भानुमन्त्रणे विनियुक्ता । **यथा-वात-वन-समुद्रा एजन्ति** कम्पन्ते "एजृ कम्पने" ( भ्वा० प० ) कम्पनं चलनम् । "कपि चलने" ( भ्वा० आ० ) तच्चेह निष्क्रमणे पर्यवसन्नम् । **एवं त्वं हे दशमास्य !** दशमाससम्भूत ! गर्भ ! "मासाद्वयसि यत्खञौ" ( पा० ५-१-८१ ) इति यत्प्रत्ययः ( एतस्मान्मातुरुदरात् एनामदुःखयन्नेजश्चलंश्च ) **जरायुणा** उल्वेन **सह अवेहि** अर्वाङागच्छ ( प्रजायस्व ) मास्या अस्या उदर इत्यभिप्रायः ॥ अत्र मकारस्याकारश्छान्दसः ॥ ४ ॥

अथापरमुदाहरणम्—

---

१. गुणतोऽल्पतमेन । "युवाल्पयोः कनन्यतरस्याम्" ( पा० ५-३-३४ ) इति अल्पस्येयसुनि कनादेशः ॥

२. प्रशस्यतमौ । "प्रशस्यस्य श्रः" "ज्य च" ( पा० ५-३-६१ ) इतीयसुनि ज्यादेशो "ज्यादादीयसः" ( पा०६-४-१०६० ) इतीयस ईकारस्याकम् ॥

३. धवति, धूयते वा "धूञ् कम्पने" ( चु० उ० ) "आधृषाद्वा" ( चु० गणसू० ) इति वा णिच् । अच् ( पा० ३-१-१३४ ) घञ् ( पा० ३-३-१९ ) वा । "संज्ञापूर्वको विधिरनित्य" इति ( प० ९४ ) वृध्यभावः । "ऋदोरप्" ( पा० ३-३-५७ ) वा ॥

१. तथाच श्रुतिः "अङ्गानि ते अङ्गैः सन्दधानि । अस्थीनि ते अस्थिभिः सन्दधानी"त्यादि चतुर्थीकर्मणि विवाहस्य, कर्मिभिः पठ्यते ॥

## "भ्राजन्तो अग्नयो यथा ॥"

( ऋ० सं० १-४-७-३ )

इति । अस्याः अदृश्रमस्य केतवो विरश्मयो जनाँ अनु" इति पूर्वार्धर्चम् ॥ एषा गायत्री । प्रस्कण्वस्यार्षम् । सौरी । अनयाऽति माह्योगृह्यते पृष्ठस्य षष्ठेऽहनि । **अस्यार्थः**— **अस्य** भगवतः सूर्यस्य **वि**-विविधाः **रश्मयः** किरणा एव **केतवः** ध्वजाः **जनान्** प्राणिनः । **अनु**-अनुतिष्ठन्तः ( तमांस्यपहन्तुमन्याँश्चोपकारानोषधिपाकादीन्कर्तुम् ) **अदृश्रम्** दृश्यन्ते । कर्मणि व्यत्ययेन वर्तमानेऽर्थे लुङ् "इरितो वा" ( पा० ३-१-५७ ) इति च्लेरङ् "ऋदृशोऽङि" ( पा० ७-४-१६ ) इति गुणाभावो रुडागमश्छान्दसः ॥ ( पा० ७-१-८ ) ते हि प्रज्ञानसतत्वात्तमोऽपहत्य सर्वप्राणिनां प्रज्ञानमभिव्यञ्जयन्तीति लक्षणया केतव इत्युच्यन्ते । यद्वा केतवः ध्वजा इव सर्वतोदिशमादित्यमण्डलादुच्छ्रिताः । अत्रोपमा **भ्राजन्त** इति । देदीप्यमाना **अग्नयो यथा** येन प्रकारेण भ्राजन्ते । तथा भ्राजन्तोऽनुतिष्ठन्तो दृश्यन्त इत्यर्थः ॥ अत्र "प्रकृत्यान्तःपादमव्यपरे" ( पा० ६-१-११५ ) इति एङः प्रकृतिभावेन पूर्वरूपाभावः ॥ ३ ॥

उदाहरणान्तरमाह—

## "आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥"

( ऋ० सं० ८-५-१०-१ )

इति । अस्याः "यदिमा वाजयन्नहमोषधीर्हस्त आदधे" ॥ इत्यादिः ॥ आथर्वणेन भिषजौषधिसूक्ते दृष्टा । अनुष्टुप् । **अस्यार्थः** । **यत्** यदा **अहम् इमा ओषधीः वाजयन्** पूजयन्नभिष्टुवन् ( निघं० ३-१४ ) रोगिणं बलिनं कुर्वन्निति सायणः । **हस्ते** । **आदधे** करोमि ( कृत्वा चान्तिकेऽपि रोगिणोऽभितिष्ठामि तदा **पुरा** पूर्वमेवौषधिप्रयोगात् ( अस्यौषधि वीर्यमसह्यं मन्वानः ) **यक्ष्मस्य** यक्ष्मणो रोगराजस्य **आत्मा** स्वरूपं **नश्यति** रोगस्यापुनरागमनाय । कथम् ? **यथा** येन प्रकारेण **जीवगृभः** जीवग्राहस्य ( हन्तुः ) "हृग्रहोर्भश्छन्दसि" ( पा० ३-१-८४ ) इति ग्रहेर्हस्य भः । ग्रहेः क्विप् "ग्रहिज्या०" ( पा० ६-१-१६ ) इति संप्रसारणम् । अहतस्यैव हि तस्यात्मा ( जीवः ) विपदो दैवान्नश्यति । एवमात्मा रोगस्यापि पुरैवौषधिप्रयोगान्नश्यतीत्यभिप्रायः ॥ १ ॥

इदानीं निगमप्रसक्तमुच्यते—

## आत्माऽततेर्वाऽऽप्तेर्वाऽपिवाप्त इव स्याद् याव-द्व्याप्तिभूत इति ॥ अततेः ।

**अततेः** । "अत सातत्यगमने" ( भ्वा० प० ) इति धातोः "सातिभ्यां मनिन्मनिणौ" ( उ० ४-१५३ ) इति मनिण् ॥ वृद्धिः ॥ सर्वमेव हि तेनातितं सन्ततं गतं भवति । सर्वगतत्वात्तस्य । **अथवाऽऽप्ते**र्व्याप्त्यर्थस्याप्धातोः ( स्वा० प० ) मनिनि पस्य तत्वं पृषोदरादित्वात् । सर्वमेव हि तेन व्याप्तं भवति सर्वगतत्वादेव । **अपि** चैवमन्यथा **स्यादाप्तो** व्याप्त **इव** । संज्ञायते ह्यसौ कार्यकारणस्थः यावद् व्याप्तिभूत इति ॥ **अयमर्थः** । सर्वगतत्वेऽपि सति यावन्मात्रमेव तस्य कार्यकारणसंघातेन व्याप्यते तावन्मात्रभूत एवासौ लक्ष्यते ( तावन्मात्रे हि प्रदेशे तस्य चैतन्यशक्तिरभिव्यज्यते । तप्तायसि दर्भमुष्टिप्रक्षेपादग्न्यभिव्यक्तिवदिति ) सूक्ष्मेण हि सूक्ष्मं व्याप्यते, न स्थूलेन सूक्ष्मं, स्थूलं च कार्यकारणम् । सूक्ष्मे आत्मा तस्मादिवशब्दः ॥

अथ तृतीयस्य 'अग्निर्नये३' इति नैघण्टुकक्रमोक्तस्य यथाक्रममुदाहरणमाह—

## "अग्निर्न ये भ्राजसा रुक्मवक्षसः ॥"

( ऋ० सं० ८-३-१२-२ )

**अग्निर्नेति** । इयं जगती । मारुती । मार्गवस्य त्रसदस्योरार्षम् । अस्याः "वातासो न स्वयुजः सद्य ऊतयः । प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते" इति शेषः ॥ **अस्यार्थः** । **अग्निर्न** अग्निरिव **ये भ्राजसा युक्ताः** भ्राजिष्णुतया रोचनाः । **रुक्मवक्षसः** केनचित्प्रकर्षेण रोचिष्णूरस्काः मरुतः ( मध्यस्थानदेवताः ) "तान्वय-

१. तथाचामरः "ग्रहभेदे ध्वजे केतुः" इति । केतुर्ना रुग्वताकारिग्रहोत्पातेषु लक्ष्मणी"ति मेदिनी च ॥

२. अनुष्ठापयन्त इति हि परमार्थः । आदित्यरश्मीनामेव केतुवदुद्गच्छतां प्रज्ञाधानद्वारा कर्मानुष्ठापकत्वं, यथा भ्राजतामेवाग्नीनाम् । "यो ह्यप्रज्वलितेऽग्नौ जुहोति स भस्मनि जुहोति" इत्यादि श्रुतिभिरभ्राजमानेग्नौ जुहोतेर्विगानात् ॥ अत्रानुशब्दे परे जनानिति नस्य "दीर्घादटि समानपादे" ( पा० ८-३-९ ) इति रुत्वम् "आतोऽटि नित्यम्" ( पा० ८-३-३ ) इति ततः पूर्वस्यानुनासिकः ॥

३. व्यत्ययोऽत्र पुरुषकृतोऽपि बोध्यः । तथाच सायणः "तिङां तिङो भवन्तीति प्रथमपुरुषबहुवचनस्योत्तमपुरुषैकवचनादेशः" इति ॥

४. एतेन पुनरुपत्तसो दीक्षित एकविंशति ( संख्याका— ) मिर्दर्भपिञ्जलीमिश्राभिषिच्यते उपतापप्रशान्त्यर्थम् । अनेनैव च सूक्तेनाग्निचयनार्थं क्षेत्रं ग्राम्यारण्याभिरोषधीभिरुप्यते इति दुर्गः ॥

१. देहेन्द्रियादिना ॥

२. तथाच—स्कान्दे नागरखण्डे ( ८९ अ० ) "एवमुक्त्वा ततो ध्यानं चक्रे देवो महेश्वरः । व्यावृत्त्य कमलं हृत्स्थमष्टपत्रं सकर्णिकम् ॥ तस्यान्तर्गतमासीनमङ्गुष्ठाग्रमितं शुभम् । द्वादशार्कप्रभं सूक्ष्मं स्वमात्मानं व्यलोकयत् ॥ ३० ॥" इति । प्रकाशमयत्वादेव यावद्देहेन्द्रियाविप्रकाशकृदात्मा ॥

३. केचिन्निरुक्तकारा निगममत्रं नाधीयते । दुर्मदासो न सुरायामिति निपातकाण्डे ( नि० १-२-१ ) उदाहृतत्वात् । अपरे पुनः समाम्नायानुक्रमोऽयमिति मन्वाना एवमेव निगममधीयते ॥

मभिप्रेतार्थसिद्धये सुर्म" इति वाक्यशेषः। । कथम्भूतास्ते **वातासो न** वाता इव **स्वयुजः** स्वेनस्वेनानुग्रहेण अनुग्राह्याणां स्तोतॄणां योजयितारः **सद्य ऊतयः** शीघ्रगतयः **प्रज्ञातारः** प्रकर्षेण ज्ञातारः ( प्रज्ञावन्तः ) **सुनीतयः न** प्रशस्तया नीत्याऽन्विता इव । **ज्येष्ठाः** प्रशस्ततमाः ( यथा केचन प्रज्ञावन्तः सुनीतिसम्पन्ना जनसमुदाये श्रेष्ठा भवन्ति तद्वत्ते बलप्रधाना मरुत इति तैरुपमीयन्ते ) **ऋतं यज्ञं यते** कर्तुमिच्छते यजमानाय **'सुशर्माणोन'** सुसुखा बन्धव इव **सोमाः** सौम्यास्ते **सन्तु** इति शेषः ॥ २ ॥

एतामर्थतोऽनुवदति—

**अग्निरिव ये ( मरुतो भ्राजमाना रोचिष्णूरस्का ) भ्राजस्वन्तो रुक्मवक्षसः ॥ ३ ॥ १५ ॥**

इति ॥ ३ ॥ १५ ॥

अथ नैघण्टुकक्रमेण चतुर्थमुपमोदाहरणमाह—

**"चतुरश्चिद्ददमानाद्बिभीयादानिधातोः । न दुरुक्ताय स्पृहयेत् ॥ ४ ॥"**

( ऋ० सं० १-३-२३ )

**चतुर इति** ॥ मित्रावरुणार्यम्णत्यृचे घोरपुत्र एतां गायत्रीमपश्यत् । **चतुरः** "अक्षान्" इति शेषः । **ददमानात्** दधमानात् । धारयतः कितवाच्चित् छलिकात् इव **बिभीयात्** उद्विजेत् कुतो दुरुक्तात् ( इत्यर्थतः ) कदा ? **आनिधातोः** निधानात्प्राक् । "ईश्वरे तोसुन्कसुनौ" ( पा० ३-४-१३ ) इति तोसुन् । निधाने हीश्वरः कितव इति । निहितेष्वक्षेषु न तथा भयं भवति यथा प्राङ्निधानात्किमयं कथङ्कारं यतिष्यते यथा मां जेष्यतीति । अत्र चिदितीवार्थे उदाहृतो वेदे ॥ **न दुरुक्ताय** दुर्वचनाय **स्पृहयेत्** । तथा २ प्रयतेत यथा दुरुक्तं न शृणुयात् नापि वदेत् । दुरुक्तेहि वरुणो देवता योऽनर्थंकृत् । किन्तु सूक्ष्ममेव सर्वदा वदेत् । शृणुयाच । तत्र हि मित्रो देवता अर्यमा च । स हि शुभकरः प्रजानाम् इति तात्पर्यार्थः ॥ ४ ॥

मन्त्रार्थमाह—

**चतुरोऽक्षान्धारयत इति । तद्यथा कितवाद्बिभीयादेवमेव दुरुक्ताद्बिभीयान्न दुरुक्ताय स्पृहयेत्कदाचित् ॥**

**कदाचित्** कर्हिचिदपि । कस्मैचिदपि । कस्माचिदपीति वा तात्पर्यार्थः ॥ अत्र पञ्चमनैघण्टुकमुदाहरणं "ब्राह्मणा व्रतचारिण" इत्येतच्चतुर्दशेऽध्याये व्याख्यास्यते । षष्ठं च "वृक्षस्य नु ते" इति पुरस्तादेव व्याख्यातम् ( १-२-३ ) इति । सप्तमं व्याख्यातुमाह—

**आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः । अथाप्युपमार्थे दृश्यते । "जार आ भगम् ॥" जारइव भगम् ॥** ( ऋ० सं० ७-६-१०-१ )

**जार इति** । तथाच मन्त्रः "उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति । विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती" इति ॥ अङ्गिरःपुत्रो हविर्धाने एतया जगत्या अग्निमस्तौत् । पितृमेधे विनियुक्ता । हे भगवन्नग्ने ! **पितरौ** अरणी प्रति । आत्मानम् **उदीरय** उद्गमय । कथम् ? **जार आ** आदित्य इव । स हि रात्रेर्जरयिता स यथा **भगं** भजनीयं भौममान्तरिक्षं च रसं खं ज्योतिर्वा उदीरयति । ( ऊर्ध्वं क्षिपति ) एवं सर्वगतं सन्त-( मशेषस्थ- ) मात्मानं विशेषात्मलाभाय ( व्यक्तीभावाय ) उदीरय । किमर्थम् ? **अयं** यजमानः **हर्यतः** हवींषि प्रेप्स्यतः देवान् "हर्य गतिकान्त्योः" ( भ्वा० प० ) ततः शतरि रूपम् । **इयक्षति** यष्टुमिच्छति । अथच **हृत्तः** हृदयेन कान्तिरिच्छा । **इष्यति** इच्छत्यात्मनोऽभिलषितान्कामान् ॥ न च देवानिष्टुं शक्यास्ते प्राप्तुमित्यतो ब्रवीमि देवयागाय यजमानेष्टकामप्राप्तये च लमात्मानमुदीरयारणी प्रतीति ॥ किंचायमपि **वह्निः** यज्ञवोढा होता **स्वपस्यते** यजमानायासीष्टकामोपपिपादयिषया देवतितर्पयिषया च तृप्तये जगदनुग्रहाय चर्त्विग्भिः क्रियमाण-

१. सायणस्तु—ये मरुतोऽग्निरिव भ्राजसा तेजसा युक्ताः किञ्च रुक्मवक्षसो रुक्मालङ्कृतवक्षस्का वातासो न, प्रत्यक्षवाता इव स्वयुजः स्वयं युज्यमानाः । प्रज्ञातारो न, प्रकर्षेण ज्ञातारो ज्ञानिन इव ज्येष्ठाः पूज्याः । सुनीतयः सुनयनाः । सुशर्माणो न सोमाः, सुसुखाः सोमा इव । ते यूयम् ऋतं यते यज्ञं गच्छते यजमानायागच्छतेत्येवं व्याचष्ट ॥

२. यद्यपि "सद्यः सपदि तत्क्षणे" इति कोशः । तथापीह क्रियान्वयित्वसाधर्म्याच्छीघ्रार्थो लक्ष्यते ॥

३. नैघण्टुकसमाम्नायक्रमानुरोधेन । अयमर्थः । चिदित्ययमपरो निपात उपमार्थीयो भवति । पुरस्तादप्ययमुक्तो "दधिचिदित्युपमार्थे" इति । इदानीं समाम्नायविशेषव्याख्यानावसरप्राप्तस्य छान्दसमुदाहरणमस्य प्रदर्श्यते ॥ इति ॥

४. अत्र वर्णव्यत्ययः पृषोदरादित्वात् ॥ "दद दाने" "दध धारणे" इतीमौ भ्वाद्यात्मनेपदिनौ ॥ धारयत इति च भाष्यव्याख्यानम् ॥

१. एतस्यानर्थकरत्वे उदाहरणम् "हरिश्चन्द्रो राजर्षिरेतेनापरितुष्यता, दीर्घरोगेण जलोदरेण योजित इत्यादि देवीभागवतादौ द्रष्टव्यम् ॥

२. अथवा द्यावापृथिव्यौ पितरौ स्याताम् "द्यौर्मे पिता माता च पृथिवी" ( ऋ० सं० २-३-२०-३ ) अहोरात्रेवा ॥ इति दुर्गः ॥

३. अप इति कर्मनाम ( निघं० २-१ ) तत इच्छार्थे क्यच् सुप्यमुक्तमार्थेऽव्ययम् । पदव्यत्ययश्छान्दसः । शोभनमपः कर्मात्मन इच्छति स्वपस्यते । अप इत्यस्य साधनमुक्तमधस्तात् ( ३-१-१ ) ॥

मुत्तमं कर्मेच्छति । **विवक्ति** शंसति ( स्तौति ) । किं च **मखः** यज्ञः **तविष्यते** परिसमाप्तिं यास्यति । उपक्रमादारभ्याऽऽपवर्गात् । किं चायम् **असुरः** असुमान् ( प्रज्ञावानतिकुशलः ) अध्वर्युः **मती** मत्या । "सुपां सुलुगि" ( पा० ७–१–३९ )ति पूर्वसवर्णदीर्घः ॥ **वेपते** अस्मिन्यज्ञकर्मणि प्रोत्कम्प्यमानहृदय आस्ते सादरः प्रह्वीभूतः । "अपिनामायमग्निरुदीरयेदात्मानं ततोऽहमेनयज्ञकर्म तनुया"मिति ॥ १ ॥

मन्त्रार्थं विवक्षन्पदार्थमाह—

**आदित्योऽत्र जार उच्यते । रात्रेर्जरयिता । स एव भासाम् । तथापि निगमो भवति 'स्वसुर्जारः शृणोतु न' इति ॥** ( ऋ० सं० ४–८–२१–५ )

यथायमादित्योऽत्र **जारशब्देनोच्यते तथा अपि** अयं **निगमो भवति** ( अथाऽन्येऽपि बहवः इत्यपिशब्दः ) यथा–**स्वसुरिति** । मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः । भ्रातेन्द्रस्य सखा मम ॥" इति ॥ एषा गायत्री । भारद्वाजस्यार्षम् । पौष्णे सूक्ते । अहम् **मातुः** निर्मात्र्या रात्रेर्दिधिषुं धारयितारं ( रोद्धारम् ) आदित्यम् **अब्रवम्** उक्तवानस्म्यभिप्रेतार्थम् । स **मम सखा** समानख्यानस्तुल्यमावयोर्जगदवनकर्म । अतश्च **नो**ऽस्माकं वचः **शृणोतु** यत्पूर्वमब्रवं तदिदं च साधयतु यतोयमिन्द्रस्य मध्यस्थानदेवतायाः ( निघं० ५–४ ) **भ्राता** उदकभागहर्ता । अथवा मध्यमस्यैव ( लोकस्य ) उदकेन भर्तव्यः । तेन ह्यसौ दीप्यते ॥

अथ द्वितीयं पादं प्रकृतांशतो भाष्यकृद्व्याचष्टे यथोपन्यस्तम्—

**उषसमस्य स्वसारमाह साहचर्याद्रसहरणाद्वा ॥**

**अस्य**–आदित्यस्य । **आह** स्वसुर्जार इत्येतस्मिन्मन्त्रे मन्त्रदृक् । केन पुनः सामान्येन ? इत्युच्यते **साहचर्यादिति** । सह चरत इति सहचरौ तयोर्भावः साहचर्यम् "ब्राह्मणादित्वात्" ( पा० ५–१–१२४ ) भावे ष्यञ् तस्मात् । भ्राता हि स्वस्रा साकं नित्यमेव चरति । तथा चोषसा साकमादित्य इत्येतत्सामान्यम् । **रसहरणाद्वा** उषाः स्वसाऽऽदित्यस्य । भ्रातृस्वस्रोः संभोजनाभिप्रायसामान्यम् ॥

**अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् । स्त्रीभगस्तथा स्याद्भजतेः ॥**

अथादित्योऽपि **मनुष्यजारः** । पारजायिकः । इत्यपि शब्दः । **अयमेवास्मिन्पूर्वोक्ते** मन्त्रे ( "उदीरय पितरा जार आभगम्" इत्ये तस्मिन् ) **अभिप्रेतो** मन्त्रदृशो नैरुक्तानां वा **स्यात्** । **तथा** सति **स्त्रीभग एव स्यात्** । भगः । **भजतेः** सेवनार्थस्य ( भ्वा० उ० ) कर्मणि घञ् ( पा० ३–३–१९ ) सहि सेव्यते मैथुनार्थिभिः पुरुषैः ॥

अथाष्टमोदाहरणमारचयति—

**मेष इति भूतोपमा ॥**

---

१. "शंसु स्तुतौ" ( भ्वा० प० ) लट् ॥

२. तु इति सौत्रो धातुर्गति–वृद्धि–हिंसासु पठितः । तत्र हिंसात्र संस्था ( चरमावस्था ) परिसमाप्तौ पर्यवस्यति ॥

३. असुरित्ययं प्रज्ञानामसु पठितः ( निघं० ३–९ ) अस्यतेः क्षेपणार्थस्य ( दि० प० ) "शृस्वृस्निहित्रप्यसिवसि०" ( उ० १–१० ) इत्यादिना उप्रत्ययः । 'असुरिति प्राणनाम' ( निरु० ३–२–२ ) इति भाष्ये अस्यति क्षिपत्यनर्थान्, अस्ताः क्षिप्ता अस्यामर्थाः, इत्यर्थप्राप्त्यनर्थपरिहारात्मकमुभयमपि प्राप्नोति ॥

४. अत्र दुर्गः । माता रात्रिरादित्यस्य, स हि भगवान् रात्र्या जघने प्रातरुदेति । कुमार इव स्त्रियाः प्रसवकाले । तेन ज्ञायते रात्रेरेवासौ जायत इति । अतो रात्रिर्माता । तस्याः स एव धारयिता रोद्धा । तं मातुर्दिधिषुम् । इति व्याख्यत् । लोकेतु व्यूढा–( पुनर्भू– )–पतिर्दिधिषुरुच्यते । तथाचामरः "पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः" इति ॥

५. यथैवाहमेतस्मिन्यज्ञे जगदनुग्राहके कर्मणि अभिप्रवृत्तः । एवमसावपि प्रकाश–पाक–रसादान–वर्षादिलक्षणे कर्मणि । इत्यावयोः समानख्यानकर्मत्वलक्षणं सख्यम् ॥

६. इराशब्दे उपपदे दृणाते–र्दधाते–र्दारयतेर्वा "ऋज्रेन्द्राग्रवज्रविप्र०" ( उ० २–२७ ) इत्यादिना रक्प्रत्ययान्त इन्द्रशब्दो निपातितः । इरा अन्नमनेन सम्बन्धात्तद्धेतुकं बलं लक्ष्यते । तेन बललक्षितलक्षणया तदाधारभूतो मेघ इरा तं धारात्मना दृणाति विदारयति । यद्वा इरा बीजं व्रीह्यादि तदसौ वृष्टिप्रदानेन विदारयति अङ्कुरोद्भेदेन । विकाशश्चात्र विदारणम् ॥ इरामन्नं ददाति वा । दधाति धारयति वा । इन्दावुपपदे द्रवतेरमतेर्वा निपातनम् । इन्दवे द्रवति गच्छति सोमं पातुम् । इन्दौ ( सोमे ) रमतेऽतिप्रियत्वात् ॥

१. भ्राता हि लोके भागस्य ( पितृदायस्य ) हर्ता भवति । अयमपि तदीयस्य दायस्योदकलक्षणस्य हर्तेति भ्राताशब्देनाभिहितः ॥

२. अनेन भ्रियतेऽसौ भ्रातेति निरुक्तिरुक्ता भवति । ज्येष्ठेन हि कनिष्ठो भ्राता भ्रियते पोष्यते । तेनासावभिपुष्टो दीप्यते ॥

३. सं–समं ( सह ) भोजनमाहारः सम्भोगश्च परिहासार्थः । तदेतद्भाष्यकार एवाह "अपि त्वयमि"त्यादि ॥

४. जरयतीति जारः । मनुष्यः "दारजारौ कर्तरि णिलुक् चे"–( पा० ३–३–२० वा० ) ति निपातितः । स हि परकीयां स्त्रियं सर्वाङ्गीणेन भोगेन निर्दयो भूत्वा जरयति जीर्णामिव करोति । ( विपरिणामयति म्लानरूपां करोतीति दुर्गः ) न तथा निजो भर्ता । तं च दृष्ट्वा तद्दर्शनेनैवोदीरित एव यथा स्त्रियाः भग उपस्थः पुरुषशिश्नसंयोगोत्कण्ठयार्द्रीभवति । एवमरणियोक्तादिहस्तानस्मान्युष्मान्निममन्थिषून्दृष्ट्वोदीरयत्वमात्मानमरणी प्रति हे अग्ने ! इति मन्त्रार्थं एतस्मिन्पक्षे ( जारशब्दे मनुष्यविषये सति ) योज्यम् ॥

**मेष** इत्येष शब्दो भूतशब्देनान्वितो ह्यत्र (वेदे) उपमार्थः। अयं च **भूतोपमा**शब्देन नैरुक्तैरुच्यते। अत्रोदाहरणमाह—

## "मे॒षो भू॒तो॑ऽ॒भियन्नयः॥"

(ऋ० सं० ५-७-२४-५)

"इ॒त्थाधीव॑न्तमद्रिवः का॒ण्वं मेध्या॑तिथिम्। मे॒षो भू॒तो॑ऽ॒भियन्नयः॥" इत्येषा गायत्री। ऐन्द्री काण्वस्यैव मेध्यातिथेरियमार्षम्। हे **अद्रिवः** अद्रिवन्। (वज्रिन्निन्द्र!) "मतुवसोरु सम्बुद्धौ च्छन्दसि" (पा० ८-३-१) इति नस्य रुत्वम् विसर्गः। **इत्थां**[1] (इत्थम्) असुना प्रकारेण **धीवन्तं** (धीमन्तं) "छन्दसीवनिपौ च" (पा० ५-२-१२२ वा०) इति मत्वर्थे वनिप् (प्रज्ञावन्तं। कर्मवन्तं वा) (नि० २-१) कल्पान्तरीणं **काण्वं मेध्यातिथिं** तन्नामकमृषिम्। (तेन याज्ञे कर्मण्याहूतः) **अभि** आभिमुख्येनाभ्युद्यतैर्महद्भिर्दायैः **यन्** गच्छन् (आह्वानसमनन्तरमेवाविलम्बमानः) **मेषोभूतः** मेष इव (किंचिदप्युत्तरमब्रुवंस्त्वम्) **अयः** प्राप्तवानसि[2]। नच तदस्माकमप्रत्यक्षमेतस्मादेव मन्त्रदर्शनादखिलं तद्विजानीमो वयमित्यतो ब्रूमः सहान्यमन्वन्तरीणैरधिकारिभिः अपवृत्ते तस्मिन्काण्वे मेध्यातिथौ इदानीमस्य मनोरन्तरे मेध्यातिथित्वप्रापकेण कर्मणा तत्पदं प्राप्तवानसि। यास्ताः काण्वमेध्यातिथिद्वारेण नित्याः स्तुतयः प्रादुर्भवन्ति ता एताः प्रत्नाः स्तुतीः शुश्रूषुः हवींषि चास्मत्प्रत्तानि प्रतिजिघृक्षुः पूर्वकाण्वमेध्यातिथिवदस्मानप्यभ्येहि। किमर्थं वा नाभ्येषीत्यभिप्रायः[3]॥ ५॥

निगमप्रसक्त उच्यते—

## मेषो मिषतेः॥

दर्शनार्थस्य (तु० प०) असुनि (उ० ४-१८८) रूपम्। यद्यप्ययं स्पर्धायां पाणिनीयैः पठितः। तथापि धातूनामनेकार्थत्वाद्दर्शने प्रचुरः प्रयोगः। केचित्तु "मिष आलोचन" इति पठन्ति। "पचाद्यच्" (पा० ३-१-१३४)॥

पर्यायप्रसक्तमुच्यते—

## तथा—पशुः पश्यतेः॥

दर्शनार्थस्यैव पश्यति ह्यसौ स्वतो घ्राणेन भक्ष्यान्। ज्ञानसामान्ये दृशेरौणादिक उशि कर्तरि पश्यादेशो यलोपश्च। शवभाव आर्षः। लोकेतु "पश् बन्धने" (चु० उ०) तत उरौणादिकः कर्मणि। पश्यते बध्यतेऽसौ दाम्ना।

अथेदानीं "तद्रूप" इति नवममुदाहरिष्यंस्तत्र तदितिसर्वनाम्ना सर्वं पदजातमग्न्यादिकमुच्यते। तत्राग्नेर्यज्ञकर्मणि प्राधान्यादाह—

## अग्निरिति रूपोपमा॥

इतिशब्दः प्रकारे वर्तते। **अग्निरित्यादि** शब्दो रूपशब्देनान्वित उपमामाह। इयं च **रूपोपमा**शब्देनोच्यते नैरुक्तैः॥ अत्र विभक्तिरविवक्षिता। तेनाग्निरूपो[1] हिरण्यरूप इत्यादि रूपोपमोदाहरणे द्रष्टव्यः। एवं वर्णशब्देनान्वयेऽपि रूपोपमैव। तथाचोभय[2]मुदाहरति—

## "हि॒र॑ण्यरू॒पः स हि॒र॑ण्यसंदृ॒गपां॒नपा॒त्सेदु हि॒र॑ण्यवर्णः॥"

(ऋ० सं० २-७-२३-५)

अस्याः "हि॒र॒ण्यया॒त्परि॒योनेर्नि॒षद्या॑ हिरण्य॒दा द॑द॒त्यन्न॑मस्मै" इत्युत्तरार्धर्चम्॥ गृत्समदस्येयमार्षम्। त्रिष्टुप्। अपान्नपाद्देवता। कुम्भेष्टकोपधाने अग्निचयने विनियुक्ता। **हिरण्यरूपः** हिरण्यस्येव रूपमस्यासौ हिरण्यसमानरूपवान्। **स अपान्नपात्** मध्यस्थानदेवता (वैद्युतोऽग्निः) आदित्यस्य पुत्रः। अपां गर्भश्चादित्यः। "स॒मु॒द्रादू॒र्मिर्मधु॑माँ॒ उदा॑र॒त्" (ऋ० सं० ३-८-१०-१) इति श्रुतेः। तथाचापान्नप्ता सै[3] भवतीति। प्रावृट्काले घर्मार्तानामन्नार्थिनीनां च प्रजानां **हिरण्यसंदृक्** हिरण्यमिव संदृश्यमानः प्रीतिजनकः। अपिंच **सेदु स एव हिरण्यवर्णः** हिरण्यमिव वरणीयः प्रार्थनीयो भूतानाम्। स **हिरण्ययात्** तेजोमयात्[4] **योनेः** स्वप्रभवात् आदित्यात् **परि** सर्वतः **निषद्य** मध्यस्थानेऽभ्रजालेनान्तरिक्षलोकं व्याप्य **हिरण्यदाः** हिरण्यस्य दाता सः (अपान्नपात्) **अन्नम्** अन्नहेतूदकम् **अस्मै** यजमानाय **आ** समन्तात् (सर्वतः) **ददति** ददातु। "दद दाने" (भ्वा० प०) प्रार्थनायां लोडर्थे लेट्॥ १॥

---

१. निपातोऽयं सत्यनामसु (निघं० ३-१०) पठित इह इत्थमित्यर्थे, निपातानां नानार्थत्वस्य "नानार्था अव्ययाः परे" इत्यमराभिधानमित्थमेव सङ्गच्छते॥ केचित्तुमस्यात्। उच्चमित्यस्योच्चेति।

२. एतेर्लङि सिपि रुत्वम्। "अदिप्रभृतिभ्यः शपः। बहुलं छन्दसि" (पा० २-४-७३) इति शपोऽलुक् "इणो यण्" (पा० ६-४-८१) इति यणादेशः। आडभावश्च (पा० ६-४-७५)॥

३. इत्थमनेन शब्देनासुनेत्येतच्छब्दपर्यायवाचिना अभिगमनप्रकारमेतस्मादेव मन्त्रदृग्दर्शनाद्विज्ञायाभिनयेन वर्तमानो मन्त्रदृक् काण्वो मेध्यातिथिर्दर्शयति॥

१. अत्र बहुव्रीहिर्द्रष्टव्यः "अग्निः रूपं यस्ये"ति। तत्र नाग्नीरूपं भवितुमर्हतीत्यग्निपदमग्निसंबन्धिरूपसदृशपरम्। सर्वत्रैवेवार्थगर्भबहुव्रीहावेषैव गतिर्यथोष्ट्रमुखः खरमुख इत्यादौ। तथाचानुगमयन्ति—"इवार्थगर्भबहुव्रीहौ पूर्वपदं स्वसम्बन्ध्युत्तरपदार्थसदृशे लाक्षणिकम्" इति॥

२. "तद्रूपः तद्वर्ण" इत्येतत्॥

३. तथाच "अपोनप्त्रपांनप्तृभ्यां घः" (पा० ४-२-२७) इति सूत्रव्याख्यायां भट्टोजिदीक्षिताः प्राहुः। अपोनपात्—अपान्नपाच्च देवता। प्रत्ययसन्नियोगेन प्रकृतिरूपं निपात्यते। अतएव "अपोनपाते" "अपांनपाते अनुब्रूही"ति प्रैषः। इति। एतेन प्रत्ययमन्तरापि तत्प्रयोगो दर्शितः॥

४. अत्र "ऋत्व्य—वास्त्व्य—वास्त्व—माध्वी—हिरण्ययानि च्छन्दसि"—(पा० ६-४-१७५) इति सूत्रेण 'म' शब्दलोपः। हिरण्मयानीति लोके भवति। सोऽपि निपात एव (पा० ६-४-१७४)॥

अथोदाहरणसंगमनाय हिरण्यवर्णहिरण्यरूपशब्दयोर्विग्रहवाक्यमर्थतो निराह—

**हिरण्यवर्णस्येवास्य रूपम् ॥**

**अस्य** अपान्नपुर्वैद्युतामेर्**हिरण्यवर्णस्या**दित्यस्येव **रूप**मस्ति । एतेन हिरण्यस्येवास्य रूपमिति हिरण्यरूपः । हिरण्यस्येवास्य वर्ण इति हिरण्यवर्णः । इत्युभयमुक्तं भवति ॥

अथैकादशस्य "तद्वदि"त्युपमोदाहरणस्य विषये बहुवक्तव्यत्वात्सूचीकटाहन्यायेनान्तिमस्य "तथा" इत्यस्योदाहरणं वक्तुं तत्र प्रकृत्यर्थस्य सर्वनाम्नो बुद्धिस्थ[1]विषयत्वात्प्रत्ययार्थमात्रमाह—

**'था' इति च ।**

**था** इत्ययं चोपमाशब्दः । प्रकारवचने ह्ययं पाणिनिना विहितः ( ५–३–२३ ) प्रकारश्च भेदे सादृश्यमित्युपमैव ॥

अत्रोदाहरणमाह—

**"तं प्रत्नथा पूर्वथा विश्वथेमथा ॥"**

( ऋ० सं० ४–२–२३–१ )

अस्याः "ज्येष्ठतातिं बर्हिषदं स्वर्विदम् । प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे" इति शेषः । अवत्सारः पञ्चदशर्चं सूक्तमपश्यत् वैश्वदेवम् । तस्मिन् ( वैश्वदेवे सूक्ते ) प्रथमामेवैतां जगतीमपश्यत् । बाह्वृच्ये वाजपेये सप्तदशे शस्त्रे विनियुक्तेयम् ॥ हे भगवन् सोम ! **ज्येष्ठतातिं** ज्येष्ठं ( श्रेष्ठं ) "वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि"–( पा० ५–४–४१ ) इति स्वार्थे तातिल् प्रत्ययः । **बर्हिषदम्** बर्हिषि आहूतो यः सीदति (उपविशति) स बर्हिषद् तं । सलोपश्छान्दसः । **स्वर्विदं** स्वः सूर्यस्तमिव दृश्यमानम् । वेत्तिरत्र दर्शने । सूर्यसमानदर्शनमिति यावत् । **आशुं** शीघ्र(गामिन–)म् "आशुस्तु व्रीहिशीघ्रयो"रिति हैम(चन्द्रः) । **जयन्तं** जेतव्यानसुरादीन् अभिभवन्तं "जि अभिभवे" ( भ्वा० प० ) लटः शता । **त**मेवंगुणसंपन्नमिन्द्रं वैश्वदेवं गणं वा **अनु** लक्षीकृत्य । अनुरत्र लक्षणे ॥ अतएव कर्मप्रवचनीय–( पा० १–४–८४ ) तद्योगे द्वितीया विभक्तिः । **यासु** क्रियासु **वर्धसे** पुनः पुनः संस्क्रियमाणो वृद्धिं गच्छसि । तासु **गिरा** अस्मदुदीरितया स्तुत्या सहितस्त्वं **प्रतीचीनं** प्रत्यङ्मुखं यज्ञाभिमुखम् तमिन्द्रं वैश्वदेवं गणं वाऽवस्थाप्य स्ववीर्येण तर्पयित्वाऽस्मै यजमानाय **वृजनं** धनं **दोहसे** धोक्षि ( प्रपूरय[2] ) कथम् ? **प्रत्नथा** प्रत्नाश्चिरन्तना[3] इव । ते भृग्वादयो यथाऽदुहन्यजमानानां कामान्मन्त्रदर्शनेन तद्वत् । एवं **विश्वथा** विश्वेषामिव । यथा सर्वेषामृषिपुत्राणामृषीणां च कामान्दुग्धवानसि तथा । अपि च **इमथा** एषां वर्तमानकालिकानामृषीणां यजमानानां च यथा दुग्धवानसि तथास्यापीत्यर्थः । अत्र "प्रत्नपूर्वविश्वेमात्थाल् छन्दसि"–( पा० ५–३–१११ ) इति स्वार्थे थाल्प्रत्ययः । इमादिति प्रयोगस्थानुकरणमिदमो निपातनात्साधु ॥ १ ॥

तदेतदाह—

**प्रत्न इव पूर्व इव विश्व इव इम इवेति ॥**

अत्र यद्यपि सर्वोऽपि प्रथमान्त एव भाष्यकृद्भिरभिहितस्तथाप्यर्थवशाद्विभक्त्यन्तरेणापि साधितः । प्रकृतिप्रत्ययार्थविभागदर्शनमेव भाष्यकृतामभिमतमिति ॥

अथेमथेत्येतस्मात्प्रसक्तमुच्यते । अयमित्यस्य शब्दस्य का निरुक्तिरिति ? तत्राह—

**अयमेततरोऽमुष्मात् ॥**

**अमुष्मात्** दूरस्थात् **एततर** आगततर आसन्नतरो यो भवति सोऽयमित्युच्यते[4] ॥

असावित्यस्य का निरुक्तिरित्युच्यते—

**असावस्ततरोऽस्मात् ॥**

**अस्मात्** एततरात् **अस्ततरः** क्षिप्ततर इव विप्रकृष्टस्थाद्भवति यः सोऽसावित्युच्यते ॥

असावित्यस्मात्प्रसक्तमुच्यते—

**अमुथा यथासाविति व्याख्यातम् ॥**

**यथासाविति** । अनेन योऽर्थं उक्तो भवति सोऽमुथेत्यनेनापि **इति** अनेन प्रकारेण सर्वमेव **व्याख्यातं** भवतीत्यर्थः ॥

---

१. यो यत्र बुद्धिविषयः स तत्र तच्छब्देन परामृश्यते इति । तच्छब्दार्थो न दर्शित इति भावः ॥

२. सुपूर्वाद्दतेरीरयतेर्वा "अन्येभ्योऽपि दृश्यन्त" ( पा० ३–२–७५ ) इति विच् ईरयतेरीकारस्याकारश्छान्दसः । शोभनमियर्ति गच्छति । सु सुखं वेरयति प्राणिनः कर्मसु इति स्वः सूर्यः द्यौश्चेति नैघण्टुकटीकापरिशिष्टे देवराजयज्वानः प्राहुः ॥ स्वरिव विद्यते दृश्यत इति स्वर्विद् कर्मणि विच् प्रत्ययस्तम् ॥ सायणस्तु–सर्वज्ञं सर्वस्व लम्भयितारं वा फलं भावयितारं वेलाह ॥

३. तथाचामरः । "अवाग्भवमवाचीनमुदीचीनमुदग्भवम् । प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु" इति । अत्र प्रत्यग्भवं प्रत्यग्भूतं प्रत्यक्पश्चिमम् । तथाच स एव "दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः" इति ॥ अत्र प्राङ्मुखस्य यजमानस्य कर्मचिकीर्षोरभिमुखो भवन्निन्द्रः प्रतीचीनः प्रत्यङ्मुख एव भवतीति तथोक्तम् ॥

१. यद्यप्ययं बलार्थे ( निघं० २–९ ) पठितस्तथापि वर्ज्यत्वऽनेन प्राणैरिति व्युत्पत्तिसामान्याद्धनेऽपि व्याख्यातः । "वृजी वर्जने" ( रु० प० ) इत्यस्मात् "कॄपॄवृजिमन्दि" ( उ० २–७६ ) इत्यादिना क्युप्रत्ययः । योरनः ॥

२. लोडर्थे लेटो मध्यमपुरुषैकवचने रूपम् । "बहुलं छन्दसि" ( पा० २–४–७३ ) इति शपो लुक् । गुणः ॥

३. तथाचामरः "पुराणप्रतनप्रत्नपुरातनचिरन्तनाः ।" इति ॥

४. यथाहुः "इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥" इति ॥

अथेदानीमेकादशं "तद्वदि"त्युपमोदाहरणं दिदर्शयिषुराह—

**वदिति सिद्धोपमा । ब्राह्मणवत् । वृषलवत् ॥ ब्राह्मणा इव वृषला इवेति ॥ ४ ॥ (१६) ॥**

**वदि**त्येतत्पदघटितोपमा सिद्धा लोके प्रसिद्धेतिकृत्वा **सिद्धोपमा**शब्देनोच्यते नैरुक्तैः। यथोदाहरणं **ब्राह्मणवदि**त्यादि ॥ ब्राह्मणवदधीते । वृषलवदाक्रोशतीत्येवं क्रियातौल्य एव वतिस्तृतीयान्तात्पाणिनिना विहितः (५-१-११५)। इह तु प्रथमान्तादेव दर्शितो भाष्यकारेण । तेनायं वच्छब्दः स्वरादिरव्ययमित्यनुसन्धेयम् ॥ ४ ॥ (१६)

**"प्रियमेधवदत्रिवज्जातवेदो विरूपवत् । अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥"**

(ऋ० सं० १-३-३१-३)

**प्रियमेधवदिति** । एषा प्रस्कण्वस्यार्षम् । अनुष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । हे **जातवेदः!** अग्ने! हे **महिव्रत!** महाव्रत! (महाकर्मन्? महद्यस्य भगवतो जातवेदसः कर्म हविर्हरणादिलक्षणं तेनैवामन्त्र्यते महिव्रतेति) **प्रियमेधवत् अत्रिवत् विरूपवत् अङ्गिरस्वत्** प्रियमेध इव अत्रिरिवेत्यादिरर्थः। यथैतेषामृषीणां प्रियमेधादीनां श्रुतवानसि पूर्वमाह्वानं शृणोषि वा, एवं ममापि **प्रस्कण्वस्य हवम्** आह्वानं **श्रुधि** शृणु । छान्दसो दीर्घः। (पा० ६-३-१३७) ॥

अथैकपदनिरुक्तम्—

**प्रियमेधः प्रिया अस्य मेधाः ॥**

मेधा यज्ञा इति दुर्गः । (निघं० ३-१७) यज्ञमिति वा वाक्यशेषः । तथा च धारणावती धीरेव मेधा । बहुलमविवक्षितम् । तथाचामरः "धीर्धारणावती मेधा" इति ॥

मन्त्रार्थमाह—

**यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम् ॥**

इति ॥ प्रस्कण्वशब्दार्थमाह—

**प्रस्कण्वः कण्वस्य पुत्रः । कण्वप्रभवो यथा प्राग्रम् ॥**

**प्रस्कण्व**शब्दे प्रशब्दस्यापत्यार्थत्वं निराह-**कण्वस्य पुत्र** इत्यनेन । कण्वस्यापत्यं प्रस्कण्व इत्यर्थः । तत्कथम्? इत्याह-**कण्वप्रभव** इति । तदेतद्दृष्टान्तमुखेन साधयति-**यथा प्राग्रमिति** । यथा प्रगतं प्रकृष्टं वाऽग्रं प्राग्रमित्युच्यते । गत-कृष्ट-शब्दयोर्लोपं कृत्वा । एवमिहापि कण्वप्रभव इति वक्तव्ये भवशब्दलोपं कृत्वा प्रशब्दव्यत्ययेन च "प्रस्कण्व" इत्युच्यते। अत्र "प्रस्कण्वहरिश्चन्द्रावृषी" (पा० ६-१-१५३) इति कण्वस्य सुडागमो निपात्यते ॥ अयं (प्रस्कण्वः) कण्वस्य-दैहादेव सम्भूत इति कण्वोऽस्य प्रभवः । प्रभवत्यस्मादित्यपादाने "ऋदोरप्" (पा० ३-३-५७) इत्यप्प्रत्ययः। यथा भागवते विष्णुपुराणे च "उत्सङ्गान्नारदो यज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुव" इत्युक्तम्। पूर्वं हि सङ्कल्पादेव सृष्टिर्ऋषीणामासीत् ॥

सङ्कल्पात्सृष्टिरितीममर्थं दृष्टान्तमुखेनाह—

**अर्चिषि भृगुः संबभूव । भृगुर्भृज्यमानो-नदेहे, अङ्गारेष्वङ्गिराः ॥**

**भृगु**र्नाम महर्षिः स **अर्चिषि** ज्वालायां **संबभूव**। व्यपगतेऽर्चिषि योऽङ्गारेषु संबभूव सोऽङ्गिरा नामाभवत्। अत्र "अगि गतौ" (भ्वा० प०) इत्यस्माद्बाहुलकादौणादिक इरसुन्। अङ्ग्यतेऽन्विष्यते असावङ्गिराः। मृगावभेरुद्गतेऽन्विष्यमाणो महर्षिभिरपरोऽङ्गिरा मिलितस्तथा च निगमः-"ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे" (ऋ० सं० ८-२-१-५) अत्राङ्गिरःप्रधानका गणा अङ्गिरसः । एवं भृगवः। तथापि निगमः । "अथर्वाणो भृगवः सोम्यासः" (ऋ० सं० ७-६-१४-१) इति ॥ अत्र निदानमाह-**भृगुर्भृज्यमानोनदेहे** इति। एतच्च ब्राह्मणवचनम् प्रजापतिना किलात्मीयं शुक्रमादायाग्नौ हुतम्। तत्र भृज्यमानो विपरिपच्यमानोऽपि यतो न देहेऽतोऽसौ भृगुर्नाम सृज्यतेस्मेति, महातेजस्त्वात्। "भ्रस्ज पाके" (तु० उ०) "प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च" (उ० १-२७) इत्युप्रत्ययः। न्यङ्क्वादित्वात् (पा० ७-३-५३) कुत्वम् ॥

अथ विग्रहप्रसक्तमुच्यते—

**अङ्गारा अङ्कनाः (अञ्चनाः) ॥**

---

१. तथाचात्र वच्छब्दयोगे "सुप्सुपेति" (पा० २-१-४) समासः । इवशब्दयोगे तु विभक्तेरलोपोऽपि (पा० २-४-७१ वा०) ॥

२. तथाच मेध्यन्ते सङ्गम्यन्तेऽध्वर्य्वादिभिरिति, मेधते सङ्गच्छत्यनेन सर्वमिति वा मेधः। "अकर्तरि च कारके संज्ञाया" (पा० ३-३-१९) मिति घञ्प्रत्ययः। "मेधृ सङ्गमे च" (भ्वा० उ०) अत्र चकाराद्धिंसामेधयोश्चेति निघण्टुभाष्ये देवराजयज्वानः । मिधिः सङ्गत्यर्थं इति माधवः । अत एवायं धनार्थेऽपि पठितः (निघं० २-११) मेध्यन्ते हिंस्यन्ते तद्वांश्चौरादिभिरिति। तथाच भारतं "घ्नन्ति चैवार्थकारणा"दिति ॥

१. "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवदि"ति मेदिनी । अत्र "प्रादयो गताद्यर्थे प्रथमया" (पा० १-४-७९ वा०) इति समासे गतशब्दलोप आर्थिकः । प्रशब्द एव वा प्रगतार्थकः प्रकृष्टार्थको वा एवमिहापि प्रशब्द एव प्रभवार्थकः पुरस्ताद्व्यत्ययेन प्रयुक्तः ॥

२. यजतः प्रजापतेः कांश्चिदभिरूपां वधूमप्सरसो वा पश्यतः सहसा रेतश्चस्कन्द तामनुधावतस्तदग्नौ पपात ततो भृगुरभवदिति पुराणेष्वाख्यायते ॥ तथाच ब्राह्मे-"देवस्य वितते यज्ञे महतो वरुणस्य च । ब्रह्मणोऽप्सरसो दृष्ट्वा रेतश्चस्कन्द कर्हिचित् । तत्प्रतीक्ष्य समर्येन स जुहाव विभावसौ । ततो भृगुः समभवदङ्गारेष्वङ्गिरास्तथे"ति ॥

ते हि यत्र निधीयन्ते तदङ्कितं भवति ॥ तस्मिन्नुत्पन्ने द्वितीये—

**अत्रैव तृतीयमृच्छतेत्यूचुस्तस्मादत्रिः ॥**

**अत्रैवाङ्गारेष्वेव तृतीयमृच्छतान्विच्छतं इत्यूचुर्य-**मुद्दिश्य महर्षयः पूर्वोत्पन्नाः **तस्मात्** "अत्रैव तृतीय" इत्येतस्मादनुव्याहारात् **अत्रिः** समभवत् ॥ एतेन "अत्र तृतीयमप्यस्तीत्युक्ताः पूर्वे महर्षयः। अन्विच्छन्तोऽलभन्तामौ तमत्रिं प्रथितौजसमि"ति ब्राह्मोक्तिरनेना( भाष्यकृता- )र्थतोऽनूदिता भवति ॥

अथवैवमन्यथा स्यात् अत्रिः। प्रतिषेधार्थोऽकारः। कथम्?

**न त्रय इति ॥**

**इतिशब्दोऽत्र** लौकिकीं विवक्षामनुसारयति । **न त्रय** एवात्र किंतर्हि? खन्यतामेतदग्निस्थानं चतुर्थोऽप्यत्र भविष्यतीत्येवमनुव्याहारादत्रिरभवत् ॥ यथाच—

**विखननाद्वैखानसः ॥**

व्युदुह्याग्निं तस्मिन्नग्निस्थाने य उत्पन्नः स **विखननाद् वैखानस** एव नाम्नाऽभूत् ॥

एवम्—

**भरणाद्भारद्वाजो, विरूपो नानारूपो महिव्रतो महाव्रत इति ॥ ५ ॥ ( १७ ) ॥**

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे नैघ० काण्डे
तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

व्रतमिति कर्मनाम ( निघं० २-१ ) भाष्येऽपि निरुक्तमेतदधस्ता "द्वृणोतीति सत" इत्यादि । ( नि० २-४-१ ) महद्बृहद्व्रतं यस्यासौ **महाव्रतः** स एव **महिव्रतः** । पृषोदरादित्वादत इलम् ॥ **इतिशब्दः** पादसमाप्त्यर्थं आद्यर्थो वा ॥ अनयैवोपपत्त्याऽन्यान्यपि संज्ञाभूतानि शब्दस्वरूपाणि निर्वचनीयानि नैरुक्तैरित्यर्थः ॥ ५ ॥ (१७)

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ**
**नैघण्टुककाण्डे तृतीयाध्यायस्य**
**तृतीयः पादः ॥ ३ ॥ ३ ॥ ॐ ॥**

१. अत्र यद्यपि "अगि गतौ" (भ्वा० प०) इत्यस्मात् "अङ्गिमदिमन्दिभ्य आरन्" (उ० ३-१३४) इत्यारन्प्रत्ययेऽङ्गन्तीत्यङ्गारा इति व्याख्यातं तथापीहाङ्गमिग्नं्रति गच्छन्तीत्यङ्गाराः "ऋ गतौ" (जु० प०) कर्मण्यण् (पा० ३-२-१) सृष्टा एव हि तेऽङ्गसङ्गता भवन्ति, अतएव तेऽङ्कनसाधनभूताः सन्तोऽङ्कनाः सन्तोऽङ्गारा इत्युच्यन्ते "अकि लक्षणे" स्युः (पा० ३-१-१३४) "अङ्गारमुल्मुके न स्त्री पुल्लिङ्गस्तु महीसुते" इति विश्वमेदिन्यौ ॥

२. अन्विच्छा अन्वेषणं तत्कुरुतेत्यर्थः ॥

३. एतच प्रसङ्गायातं सर्वमिति मन्तव्यम् ॥ तत्र भरद्वाजोऽगन्ता मुनि( रजगरवृत्ति- )रिति शब्दरत्नावली । बृहस्पतिपुत्र इति हेमचन्द्रः । विरूपो विश्वरूपोऽपि ॥

## अथ तृतीयाध्यायस्य चतुर्थः पादः ।

### अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते ॥

"यदतत्तत्सदृशमि"त्युपमाऽधिकारो वर्तते । अत्रोपमा द्विविधा पूर्णा लुप्ता च । तत्राद्या शाब्दी । अन्या लुप्तोपमा शब्दाऽऽर्थी । यथाह दुर्गः । तत्र शब्दवत्यश्चोपमा भवन्ति, लुप्तोपमा शब्दाश्चेति तत्रा"ग्निर्नेय" इत्येवमादिभिः शब्दैरुपमितिसितानामर्थानां समानरूपैरर्थस्य मानं क्रियत इत्येतदनुक्रान्तम् । **अथे**दानीं येषु लुप्यन्ते उपमाशब्दा इवादयस्तान्यवसरप्राप्तानि **लुप्तोपमानि** व्याख्यास्यामः । तानि पुनरिमा**न्यर्थोपमानी**त्येवमा**चक्षते** कथयन्ति "आचार्या" इति शेषः। निरूढा क्रियते संज्ञेयमित्यर्थः । तानि च पुनरसमाम्नातान्येव निघण्टुसमाम्नाये । तेषु वक्तुरभिप्रायगता एत एवोपमाशब्दा अर्थेत उपमीयन्त इत्यर्थोपमा इत्युच्यन्ते । तद्यथा—

**सिंहो व्याघ्र इति पूजायाम् ॥**

यो हि पूज्यो भवति स पुरुषसिंहः पुरुषव्याघ्र इत्येवमुच्यते । अत्र नासौ सिंहः । किंतर्हि? सिंहगुणस्तत्र कश्चिदस्ति शौर्यादिरतस्तदभिधानेनोपमार्थंकृत्वोपमाशब्दानामिवादीनामन्यतममनुच्चारयन्नेव ब्रवीति । यत्तदनुच्चारणमुपमाशब्दस्य स एव लोप इत्युच्यते ॥ प्रसक्तस्यादर्शनमेव लोप इत्याह भगवान्पाणिनिः । ( १-१-६० ) प्रसक्तस्यार्थतः प्राप्तस्य ॥

**श्वा काक इति कुत्सायाम् ॥**

यो हि लौल्यादिदोषसमन्वयेन कुत्सनीयो भवति स "**श्वाऽय**मि"त्युच्यते । अत्रापि श्वेवायमितीवशब्दस्य लोपो द्रष्टव्यः । एवम्—धार्ष्ट्यादिदोषसमुच्चयेन यः कुत्स्यते स "**काकोऽय**मित्युच्यते ॥ **कुत्सायां**-निन्दायां "कुत्सा निन्दा च गर्हणा" इत्यमरः ॥

अथ काकादिशब्दानुदाहरणप्रसक्तान्निर्ब्रवीति—

**काक इति शब्दानुकृतिः । तदिदं शकुनिषु बहुलम् ॥**

अनुकरणमनुकृतिः । शब्दस्यानुकृतिः **शब्दानुकृतिः** । यादृशमेवासौ शब्दं करोति तयैवानुकृत्या तस्य नामापि भवति। स हि "काउ" २ इति शब्दं कुर्वन् **काक** इत्युच्यते । **तदिदम्** शब्दानुकृतिहेतुकं नाम **शकुनिषु** पक्षिष्वेव **बहुलं** प्रायेण "दृश्यत" इति शेषः ॥

१. शब्दोपात्तोपमाशब्देत्यर्थः । लोके तु श्रौती आर्थी चेति पूर्णामेदावेव । यथाह मम्मटः "साधर्म्यमुपमाभेदे पूर्णा लुप्ता च सा, ऽग्रिमा । श्रौत्यार्थी च भवेदि"त्यादि । तत्रोपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा । एकस्य द्वयोस्त्र्याणां वा लोपे लुप्ता । अग्रिमा पूर्णा इति च तद्व्याख्यानम् । इवतु शब्दगम्या श्रौती आर्थी चार्थसामर्थ्यादवसेयेति मेदद्वयमुक्तम् ॥

मतान्तरमाह—

**न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः ॥**

शकुनिष्वपि **न शब्दानुकृति**हेतुकं नाम **विद्यत इत्यौपमन्यव** आचार्य उपमन्योरपत्यं "मन्यते" इति शेषः। किं कारणम्? हंसादिषु व्यभिचारात्। बहवोऽप्येवंप्रकारा अन्यक्रियार्थैर्नामभिरन्विताः शकुनयः यथायमेव—

**काकोऽपकालयितव्यो भवति ॥**

उपघातभयादसावपकालयितव्योऽपसारयितव्यो **भवती**त्यपकालनादेव **काकः** कुतो न स्यात्? स हि यद्यत्स्पृशति तत्तदुपहन्ति। "काकस्पृष्टं शुना दृष्ट"मित्यादिना स्मृतौ तत्स्पृष्टस्योपहतत्व–( मनुपादेयत्व– )मभिधीयत इति हि स्थितिः ॥

शकुनित्वसामान्यप्रसक्तमुच्यते—

**तित्तिरिस्तरणात्। तिलमात्रचित्र इति वा ॥**

"तॄ प्लवनतरणयोः" ( भ्वा० प० ) इत्यस्य निपातनम् **तित्तिरि**रिति। ( पा० ४–३–१०२ ) तदेतत् **तरणात्**। उत्प्लुत्यगमनात् नाम। अथवा–**तिलमात्रचित्रः** स भवतीति तिलचित्रस्तित्तिरिरित्येवं स्यात् ॥

**कपिञ्जलः कपिरिव जीर्णः। कपिरिव जवत ईषत्पिङ्गलो वा, कमनीयं शब्दं पिञ्जयतीति वा ॥**

**जीर्णः** जरन् वृद्धः सन् **कपि**र्मर्कट **इ**वासौ वर्णतो भवतीति कपिञ्जल इत्युच्यते। अथवा **कपि**र्मर्कट **इ**वासौ **जवते** गच्छति। जु इति सौत्रो धातुर्गतिवृद्धिहिंसासु पठितः। पदव्यत्यय आर्षः। वर्णतोऽपीषत्पिङ्गलः कपिरिवेत्यर्थः ॥ अथवा **कमनीयं** प्रार्थनीयं ( मङ्गल्यं मधुरं वा ) **शब्दं पिञ्जयत्य**भिव्यनक्तीति कपिञ्जलः। एवमादीनि शकुनिनामधेयानि एवमादिना प्रकारेण शब्दानुकृतिपूर्वकत्वे सति निर्वक्तव्यानि ॥

**श्वा शुयायी, शवतेर्वा स्याद्गतिकर्मणः। श्वसितेर्वा।**

शु इत्येष शीघ्रार्थे पठितः निपातः ( निघं० २–१५ ) **शु**-क्षिप्रं **यायी** गमनशीलः **श्वा**। अथवा **गतिकर्मणः** गत्यर्थस्य **शवतेः**। "शव गतौ" ( भ्वा० प० ) इत्यस्य "श्वन्नुक्षन्०" (उ० १–१५७) इत्यादिना निपातः ॥ **स्यात् श्वसितेर्वा** वधकर्मणः। ( निघं० २–१९ ) हिनस्त्यसौ मृगादीनन्यांश्च ॥ प्राणनार्थाद्वा श्वसितेः (अ० प०) निःश्वसौ श्वसिति ॥

**सिंहः सहनाद्धिंसेर्वा स्याद्विपरीतस्य। संपूर्वस्य वा हन्तेः, संहाय हन्तीति वा ॥**

सहनं मर्षणं "षह मर्षणे" ( भ्वा० आ० ) इह तु प्रार्थोऽपि। प्रसहनं क्षमाऽभिभवश्चेतीहाभिभव एव धात्वर्थः। अभिभवति ह्यसावन्यान्प्राणिविशेषान् ॥ इति (प्र) **सहनात् सिंहः**। अथवा–**विपरीतस्य** विपर्यस्तवर्णस्य **हिंसे**र्हिंसिधातो–( रु० प० ) रेव हिंसार्थस्य पचाद्यचि ( पा० ३–१–१३४ ) हिनस्तीति सिंहः। यथाहुः। "भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदर-मि"ति। अथवा **संपूर्वस्य हन्तेः** सिंहः। उपसर्गस्येत्वेन। तथाचात्र व्युत्पत्तिः **संहाय हन्तीति**। संहाय संगत्य। "ओहाङ् गतौ" ( जु० आ० ) क्त्वो ल्यप् ॥ वैयाकरणानामेवं व्युत्पत्तिरिति दुर्गः ॥

**व्याघ्रो व्याघ्राणात् व्यादाय हन्तीति वा ॥ १ ॥ ( १५ ) ॥**

**व्याघ्राणात्**। विविधमसावाजिघ्रतीति **व्याघ्रः**। स हि घ्राणपटुर्घ्रात्वैव हन्तव्यान्हन्ति। अथवा **व्यादाय** विवृतं कृत्वा मुखमात्मनस्ततो **हन्ति**। इति व्या( दाय )हननाद् **व्याघ्रः**। यद्वा प्रथमग्रहे पलायितं सत्त्वमसावमर्षात् विक्रम्य तस्मिन्नेव प्रदेशे ( प्रथमग्रहस्थाने ) आदाय ( आनीय ) हन्ति ॥ १ ॥ ( १८ )

**( समासान्युपमोदाहरणानि )**

अथ क्रमप्राप्तानाह—

**अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत् ॥**

**अर्चतिकर्माणः** अर्चत्यर्थाः ( पूजयत्यर्थाः ) **उत्तरे** उपमार्थेभ्यः। पूजायामुपमाया अवश्यंभावात्। ते पुनश्चतुरधिकाश्चत्वारिंशद् ४४ अर्चति गायति एवमादयः ॥

मेधाविन एवार्चन्तीति ( एत एव हि स्तोतुं शक्नुवन्ति नेतरे अमेधसस्तस्मात् )—

**मेधाविनामान्युत्तराणि चतुर्विंशतिः ॥**

**उत्तराणि** अर्चतिकर्मभ्यः। संख्यया **चतुर्विंशतिः** २४ विप्रैः विप्रः गृत्सः धीरः इत्येवमादीनि ॥

१. तथाच नामानुगुणक्रियाया बहुष्वसम्भवान्नाना क्रियावशान्नानानामधेयप्रतिलम्भापत्तेश्चायुक्तः शब्दानुकृतिपक्षः ॥

२. भाष्येऽपि "आशु इति च शु इति च क्षिप्रनामनी" इत्युक्तम् ( नि० ६–१ ) शुयायीति णिन्यन्तं पदम् ॥ "सुप्यजातौ णिनिस्ताच्छील्ये" ( पा० ३–२–७८ ) इति ॥ पृषोदरादित्वात्साधुः श्वाऽस्मिन्नर्थे ॥

१. श्वासप्रश्वासं कुरुते जिह्वां वितत्य ॥

२. "डुवप् बीजसन्ताने" ( भ्वा० उ० ) "क्षिप क्षेपे" इति क्षीरस्वामी ततः "ऋज्रेन्द्राग्रवज्रविप्र०" (उ० १–२७) इत्यादिना रन्प्रत्यये गुणाभाव आद्ये इत्वमपि निपात्यते। द्वितीये वत्वम्। उप्यतेऽस्मिन्नतिशयेन मेधा। क्षिपत्यनया ( मेधया ) पापं वा ॥ दुर्गस्तु विविधानर्थान्प्राप्तुं प्राति पूरयतीति विप्र इति वदन् विपूर्वात् प्रातेः कप्रत्ययमाह ( पा० ३–१–१३६ ) विपूर्वाद्भृणातेः "अन्येष्वपि

आह—

**मेधावी कस्मात् ?**

इति । उच्यते—

**मेधया तद्वान् भवति ॥**

**मेधया** धारणावत्या धियोपलक्षितो मेधावी भवति **तद्वानिति** । तदिति प्रकृत्यर्थो मेधैव । मेधाशब्दात् "अस्मायामेधास्रजो विनिः (पा० ५-२-१२१) इति विनिप्रत्ययो मत्वर्थीयः ॥ यद्वा अभेदे तृतीया धान्येन धनवानितिवत् "प्रकृत्यादिभ्य उपसंख्यानम्" ( पा० २-३-१८ वा० ) इति ॥

यथाहुः—

"प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् ।
अवच्छेदकताबुद्धिप्रकारित्वादिशंसती"ति ॥

आह—

**मेधा** कस्मात् ?

इति । उच्यते—सा हि—

**मतौ धीयते ।**

मतिर्बुद्धिः । तस्यां या पुरुषशक्तिर्धीयते अभिव्यज्यते धारणानाम सैव मेधा इत्युच्यते ॥

**स्तोतृनामान्युत्तराणि त्रयोदश ॥**

मेधाविन एव स्तोतुं शक्नुवन्तीति मेधाविनामभ्य **उत्तराणि** स्तोतृनामानि १३ रेभः, जरिता, कारुः इत्यादीनि ॥

**यज्ञनामान्युत्तराणि पञ्चदश ॥**

यज्ञेष्वेव हि अतिशयेन देवानां स्तुतयः प्रयुज्यन्त इति स्तोतृनामभ्य **उत्तराणि यज्ञनामानि** १५ यज्ञः, वेनः, अध्वरः, मेधः इत्यादीनि ॥

आह—

**यज्ञः कस्मात् ?**

इति । उच्यते—

**प्रख्यातं यजतिकर्मेति नैरुक्ताः ॥**

यदेतल्लोकवेदयोः **प्रख्यातं** प्रसिद्धतमं **यजतिकर्म** । एतदेव भावसाधनेन शब्देनोच्यते । यजनं यज्ञः । "यजयाचयतविच्छप्रच्छरक्षो नङ्" ( पा० ३-३-९० ) इति भावे नङन्तः पुंसि ॥ ( लिं० सू० ३८ ) ॥

**याच्ञो भवतीति वा ।**

अथवा-**याच्ञो भवतीति** यज्ञः । याच्यते ह्यत्र यजमानो लोकैः अन्नादिकम् । यजमानेन वा देवो वर्षादिकम् ॥ देवैर्वा यजमानो हविः । तथाच श्रुतिः । "ककुद्दोषणी शलाकादोषणी याचते महादेवः" इति ॥ शलाकादोषणी इत्यस्य शलाकाकारे दोषणी ( बाहू ) इत्यर्थः । पशुमेधे ह्येतत् ॥ ब्राह्मणेऽपि ॥ "यतो वै देवानामन्नं सम्भूतं समभावयन्निति ह विज्ञायते" इति तस्माद्याचनाद्यज्ञः ॥ अत्राधिकरणे नङ् ॥

**यजुर्भिरुन्नो भवतीति वा ॥**

अथवा अयं **यजुर्भि**र्मन्त्रै**रुन्नः** संक्लिन्न इव भवति । बहुलादत्र यजुषाम् ॥ "उन्दी क्लेदने" ( रु० प० ) क्तस्सिन्नलोपे तस्य दस्य च नत्वे ( पा० ८-२-४२ ) उन्नः ॥

दृश्यते" ( पा० ३-२-१०१ ) इति डः । विविधं गृणात्यर्थानिति विग्रः । दुर्गस्तु-विगृह्य सदसि गृणातीत्याह । "गृधु अभिकाङ्क्षायां" ( दि० प० ) बाहुलकात्सक् प्रत्यये जस्त्वचर्त्वे गृत्सः । अभिकाङ्क्ष्यतेऽसौ सर्वैः । धीरो धीमान्मत्वर्थे रः । यद्वा दधातेः "शुसुधागृधिभ्यः क्रन्" ( उ० २-२३ ) इति क्रन् "घुमास्थे"— ( पा० ६-४-६६ ) ईत्वम् ॥ धत्ते श्रुतमर्थमिति धीरः । दधा (दा) ति वा विद्याः शिष्येभ्यः । धियमीरयतीति क्षीरस्वामी । तत्र धीशब्दे उपपदे "कर्मण्यण्" ( पा० ३-२-१ ) ददातिदधात्योः समानार्थता वेदे बहुत्र दृश्यते ॥

१. रेभतिरर्चतिकर्मा ( निघं० ३-१४ ) "पचाद्यच्" ( पा० ३-१-१३४ ) जरिताऽपि जरतेरर्चतिकर्मेण एव तृच् । यद्वा जरिता गरिता ( स्तोता ) इति ( नि० १-३-२ ) भाष्याद् गृणातेस्तुत्यर्थस्यैव वर्णव्यत्ययेन साधुः ॥ कारुः कर्ता स्तोमानाम् । करोतेः "कृवापा" ( उ० १-१ ) इत्यादिनोण् प्रत्ययो वृद्धिः ॥

२. वनोतेः कान्त्यर्थात् ( निघं० २-६ ) द्वेतेर्वा गत्यर्थात्-( भ्व० प० ) क्विन टेरेत्वे गुणे वा साधुः । काम्यन्ते हि यज्ञाद्धोमपशुत्वगादयः । गच्छत्यनेन स्वर्गम् । प्रक्षिप्यते देवतोद्देशेन वाऽस्मिन्हव्यम् । इत्ययं वेन इत्युच्यते ॥ अध्वर इति ध्वरतेर्वध-कर्मणः "पुंसि संज्ञायां घः" ( पा० ३-४-११८ ) इति घः । नञ्पूर्वः । ध्वरो हिंसा तदभावो यत्र सः । भाष्येऽपि "ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः" । अतएव शिष्टाः स्मरन्ति-"ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्" इति । भाष्येऽपि "आम्नायवचनादहिंसा प्रतीयेत" इत्युक्तम् ( नि० १-५-२ ) ॥ तस्माद्यज्ञीया हिंसा हिंसा न भवतीति सुविचारितं जैमिनीये ॥ द्वेषपूर्वको हि प्राणिवधो हिंसेति राद्धान्तः । नह्योषध्यादयो द्विषन्तीति यज्ञे हिंस्यन्ते । अथवा षष्ठ्यर्थे बहुव्रीहिः । अविद्यमानोध्वरो यस्य सोऽध्वरो रक्षोभिरहिंसितः रक्षोघ्नमन्त्रैस्ते तत्र वार्यन्ते महर्षिभिः ॥ मेध इति "मिधृ मेधृ सङ्गमेच" ( भ्वा० उ० ) चान्मेधाहिंसयोः । मिथिः सङ्गत्यर्थ इति माधवः । आशु संगच्छन्त्यत्र देवता हविर्ग्रहीतुम् । दक्षिणार्थं वा सदस्याः । हिनस्त्यनेन पापं वा । दुर्गस्तु-"ममेदं दास्यतीत्येवं यज्वभिः अस्मात्फलं प्रार्थ्यत इत्यसौ मेध" इत्याह ॥ तन्मते चायाचनमपि ॥

१. यजन्त्येभिरिति यजूंषि मन्त्राः । सर्वेऽपि ऋग्यजुःसामाथर्वाणः । अतएव "एक एव यजुर्वेदो बहुधा समपद्यते"ति विष्णुपुराणम् ॥ "यजुः सर्वत्र गीयत" इति च चिरन्तनानां प्रसिद्धिः ॥ तत्र स्थितान्मन्त्रान् "तेषामृग्यत्रार्थवशेन पादव्यवस्था" "गीतिषु सामाख्या शेषे यजुःशब्द" इति जैमिनिरसूत्रयत् ॥ (२-१-३३-३५) तावत्यपि ( शेषभूते ) यजुषि स्थितान्शान्तिकपौष्टिकाभिचारपर्यन्तान्लोकोपकृतिमन्त्रानथर्वाङ्गिरा दृष्टवानितीमे आथर्वणाख्यया समाम्नाताः ॥ जैमिनिना लक्षणत्रयाभिधानादेव त्रयी संज्ञाप्युपपन्ना । चत्वारो वेदा इति च मन्त्रभेदैः ॥

**बहुकृष्णाजिन इत्यौपमन्यवः ॥**

**बहुकृष्णाजिनः** । यद्यदत्र दृश्यते प्रतिविशिष्टं साधनं किंचित्तत्तत्कृष्णाजिनमिति तल्लक्षणोपलक्षितं कर्म यज्ञ इत्यौ-पमन्यव आचार्यो "मन्यते" इति शेषः । तथाहि—सोमे तावदजिनद्वयम् । यजमानेऽप्यजिनद्वयमित्यादि । एवमसौ बहु-कृष्णाजिनो भवतीति । बहुव्रीहिरत्र बोध्यः ॥

**यजूंष्येनं नयन्तीति वा ॥**

अथवा—**यजूंषि** मन्त्रा एव **एनं नयन्त्युपक्रमप्रभृत्य-पवर्गपर्यन्तं प्राप्नुवन्तं कुर्वन्ति** ॥

यज्ञसम्बन्धादेवाह—

**ऋत्विङ्नामान्युत्तराण्यष्टौ ॥**

**ऋत्विङ्नामानि** । ऋत्विजां नामानि भरताः कुरवः इत्यादीन्यष्टौ सन्ति । तत्र भ्रियन्ते दक्षिणाभिरिति भरताः[1] । कुर्वन्ति कर्माणीति कुरव इत्येवमूह्यम् ॥

आह—

**ऋत्विक् कस्मात् ?**

इति । उच्यते—

**ईरणः ॥**

ईरयिता ह्यसौ संस्तुतीनां भवतीति **ईरणः** ऋत्विक् । तदेतदस्य प्रवृत्तिनिमित्तं[2] संस्तुतिप्रवर्तकत्वमृत्विक्त्वमिति ॥

व्युत्पत्तिनिमित्तमाह—

**ऋग्यष्टा भवतीति शाकपूणिः ॥**

ऋग्भिरसौ यष्टा यागकारी **भवतीति** ऋग्यष्टृत्विक्[3] । इत्येवं **शाकपूणि**राचार्यो "मन्यते" इति शेषः ॥

**ऋतुयाजी भवतीति वा ॥**

अथवा **ऋतौ** कालविशेषे **याजी** यजनशीलो याजन-शीलो वा । तथाच श्रूयते "वसन्ते ब्राह्मणोऽग्नीनादधीत, वर्षासु राजन्यः, शरदि वैश्य" इत्यादि ॥

१. "भृञ्भरणे" (भ्वा० उ०) "भृमृदशियजि०" (उ० ३–१०७) इत्यादिनाऽतच् गुणः । यज्ञद्वारेण नॄन्संभवतीति स्कन्दस्वामी । बिभर्तेर्वातच् ॥ करोतेर्बाहुलकादुत्वे कुरवः । यद्वा-"कॄ विक्षेपे" (तु० प०) "कॄग्रोरुच्च" (उ० १–२४) इति कुप्रत्ययः । विक्षिपत्यघानि कर्माणि ॥

२. यदर्थज्ञानाद्धि शब्दप्रवृत्तिस्तत्प्रवृत्तिनिमित्तम् (इत्युक्तमध-स्तात्) (नि० २–५) यथा गोर्गोत्वं (सास्नादिमत्त्वम्) एवमि-हापि । यथा गच्छतीति गौरिति व्युत्पत्तिनिमित्तं तथाग्रेतन-मृग्यष्टेति ॥

३. ऋच ऋत्वादेशो यजेः क्विप्च "ऋत्विक्–" (पा० ३–२–५९) इत्यादिना निपात्यते ॥ आद्यपक्षेऽपि निपातनादेव रूपसिद्धिः । यष्टेत्यत्र तृन्ताच्छील्ये (नित्यकर्मणि) द्रष्टव्यम् ॥

ऋत्विक् सम्बन्धादेवाह—

**याञ्चाकर्माण उत्तरे धातवः सप्तदश ॥**

**याच्ञाकर्माणः** याचनार्थाः १७ । ईमहे । यामि । मन्महे । इत्येवमादयः ॥

याञ्चासंबन्धादेवाह—

**दानकर्माण उत्तरे धातवो दश ॥**

**दानकर्माणः** दानार्थाः १० । दाति । दाशति । दासती-त्येवमादयः ॥

दानसम्बन्धादेवाह—

**अध्येषणाकर्माण उत्तरे धातवश्चत्वारः ॥**

अध्येषणमध्येषणा[2] प्रार्थनैवोत्कृष्टं प्रति, **तत्कर्माण**स्त-दर्थकाः ४ परिस्रव । पवस्वेत्येवमादयः । "सत्कृत्य दातृभिर्दातुं प्रतिग्रहीतॄणां प्रार्थना अध्येषणेत्युच्यत" इति दुर्ग आह ॥

**स्वपिति सस्तीति द्वौ स्वपितिकर्माणौ ॥**

सर्वोऽपि हि याच्यमानोऽदित्सँश्चेत्स्वपितीवेत्यध्येषणाकर्मभ्य उत्तरौ **स्वपितिकर्माणौ** शयनार्थौ **द्वौ** द्वावेव **स्वपिति, सस्तीती**मौ, नापरौ निगमे भवतः । एतच्च द्विग्रहणादेवाव-सीयते । स्वरूपत एव द्वित्वावगमो भविष्यतीति द्विग्रहणमव-धारणार्थम् । परिसंख्या ह्येषा । यथा—"पञ्च पञ्चनखा[3] भक्ष्याः पञ्च पञ्चनखेतराः । सशकः शल्लकी गोधा कूर्मः खड्गी तु पञ्चमः ॥" इति (२३) ॥

**कूपनामान्युत्तराणि चतुर्दश ॥**

कूपमेव हि आश्रित्य मरौ सुप्यते । सुप्तः कूप इव पतितो भवतीति वा स्वपितिकर्मभ्यामुत्तराणि **कूपनामान्युच्यन्ते** । १४ कूपः । कातुः । कर्तः[4] । इत्येवमादीनि ॥

१. ऋत्विजो हि यज्ञे यजमानाय देवानर्थयन्त इति ते याच्ञा-प्रधाना भवन्तीति तत्सम्बन्धात् ॥

२. तथाचामरः "सनिस्त्वध्येषणा याच्ञाऽभिशस्तिर्याचनाऽर्थ-ने"ति । अन्यत्रापि "प्रेषणाध्येषणानुज्ञा त्रिविधा स्यात्प्रवर्तना । अधःकक्षे चोर्ध्वकक्षे समकक्षे जने क्रमादि"त्युक्तम् ॥

३. पञ्चनखाः पञ्चैव भक्ष्या इत्यनेन परिसंख्यायते ॥ "विधि-रत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्याभिधीयत" इति जैमिनीयाः प्राहुः ॥ संख्यानियमः परिसंख्येति बहवः ॥

४. "कै गै शब्दे" (भ्वा० प०) "सितनिगमि–" (उ० १–६७) इति बाहुलकात्तुन् । आत्वम् (पा० ६–१–४५) अन्तरसौ प्रतिशब्यते बहुलत्वादिनेति कातुः । यद्वा कशब्दे उपपदेऽततेः "छन्दसीणः" (उ० १–२) इति बाहुलकादुण् । कमुदकमस्मिन्न-त्यतेऽधिगम्यते (प्राप्यते) इति कातुः । कर्त इति करोतेर्बाहुल-कात्तन । क्रियते ह्यसावुदकार्थिभिरिति कर्तः । इत्येवमन्यत् ॥

आह—

**कूपः कस्मात् ?**

इति । उच्यते—

**कुपानं भवति । कुप्यतेर्वा ॥**

यत्र ह्यसौ भवति तत्र कुत्सितं **पानं भवति** । रज्ज्वादिसाधनापेक्षत्वात् । **अथवा कुप्यतेः** "कुप् क्रोधे" ( दि० प० ) इत्यस्य कूपः । यत्सम्बन्धादुदकार्थिनः कुप्यन्ति । अत्राद्ये क्रियाविशेषणानां कर्मत्वात् "आतोऽनुपसर्गे कः" ( पा० ३–२–३ ) इति कोऽन्त्ये "इगुपधे"–( पा० ३–१–१३५ ) ति कः । उभयत्राधिकरणे प्रत्ययः कुशब्दस्य दीर्घश्च बाहुलकात् ॥ शाकटायनास्तु "स्तुवो दीर्घश्च"त्यतो दीर्घश्चेत्यनुवृत्तौ "कुयूभ्यां च" ( उ० ३–२७ ) इति पप्रत्ययश्चाकित् । कुवन्ति ( शब्दायन्ते मण्डूका अस्मिन्निति कूप इत्येवमाहुः । पाणिनीयास्तु कुत्सिता ईषद्वा आपोऽत्रेत्यर्थे "ऋक्पूरब्धूः" (पा० ५–४–७४) इति अः समासान्तः "ऊदनो०" ( पा० ६–३–९८ ) इत्यत्र दीर्घनिर्देशादन्यत्राप्यूदित्याहुः ॥ "कूपः कूपकमृन्माने गर्तान्धुगुणवृक्षके" इति कोशः । मृन्मानं काचभाण्डम् ॥

**स्तेननामान्युत्तराणि चतुर्दशैव ॥**

कूपमेव ह्याश्रित्य अन्तर्हिता मुष्णन्ति स्तेना इति कूपनामभ्य **उत्तराणि स्तेननामानि** १४ । तृपुः । तक्वा । रिभ्वा । रिपुः । इत्येवमादीनि ॥ परेभ्यो धनमाहृत्यातिशयेनासावात्मानं सूर्यांश्चात्मनः तर्पयतीति तृपुः । लिम्पत्यसावात्मानं पापेनेति रिपुः । एवमन्यत् ॥

आह—

**स्तेनः कस्मात् ?**

इति । उच्यते—

**संस्त्यानमस्मिन्पापकमिति नैरुक्ताः ॥**

**अस्मिन्**पुरुषविशेषे **पापकं** कुत्सितं पापकर्म **संस्त्यानं** संहतं ( संघातीभूतं ) भवतीत्ययं स्तेनः । इत्येवं **नैरुक्ता** निरुक्तविदो मन्यन्ते । वैयाकरणानां पुनरन्यथाऽपि स्यादिति भावः । "स्तेन चौर्ये" ( चु० उ० ) "पचाद्यच्" ( ३–१–१३४ ) इति पाणिनीया मन्यन्ते ॥ पापकमिति कुत्सार्थे कन् ( पा० ५–३–७४ ) ॥

अन्तर्द्धिसम्बन्धादेवाह—

**निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् ॥**

योऽसावन्तर्हितोऽदृष्टोपि **निर्णीतो** निश्चित एव भवति **तन्नामान्युत्तराणि** स्तेननामभ्यः ६ । निण्यम् । सस्रः । सनुतः । इत्यादीनि । निर्णीतमिव निण्यम् । सुप्तमिव सस्रः । सन्ततमिव सनुतः । इत्येवमूह्यम् ॥

**( निर्णीतं कस्मान्निर्णिक्तं भवति ) ॥**

क्षिप्तमेतत् । यदेव **निर्णिक्तं** शोधितं **भवति** प्रमाणनयाभ्यां, तदेव **निर्णीत**मुच्यते ॥

**दूरनामान्युत्तराणि पञ्च ॥**

अन्तर्हितं दूरवद्भवतीति सङ्गतिः ॥ आके । पराके । पराचैः । इत्येवमादीनि ५ आ ! कियतो देशादेतद्वर्तत इति विज्ञातव्यमेतद्भवतीत्याके । पराके पराक्रान्ते । पराङ्मुखमञ्चितम् पराचैरित्येवमूह्यम् ॥

आह—

**दूरं कस्मात् ?**

इति । उच्यते—

**द्रुतं भवति, दुरयं वा ॥**

तद्धि अध्वनो महत्त्वात् **द्रुतं** पलायितमिव **भवति** । "द्रु द्रु गतौ" (भ्वा० प० ) "गत्यर्थाकर्मक०" (पा० ३–४–७२) इति क्तः कर्तरि । **अथवा दुरयं** दूरं दुःखेन हि तदीयते गम्यते ( प्राप्यत ) इति दुरुपपदात् "दिण् गता" वित्यस्मात्कर्मणि "एरच्" ( पा० ३–३–५६ ) ॥

दूरसम्बन्धादेवाह—

**पुराणनामान्युत्तराणि षट् ॥**

प्रत्नम् । प्रदिवः । प्रवयाः । इत्येवमादीनि ॥ ६ प्राक्तनं प्रत्नम् । प्राग् द्युतिमदासीदिति प्रदिवः । प्रकृष्टवयाः प्रवयाः । इत्येवमूह्यम् ॥

१. आवृतस्थानं गर्तादिकमित्यर्थः । एतच्च दुर्गोक्तमुद्धृतमिति व्याख्यानसापेक्षताऽस्य । सङ्गतिप्रदर्शनं तस्यावश्यकमासीदिति यथाकथञ्चिदुपपादितं तेन ॥

२. "तृप प्रीणने" ( दि० प० ) "इषेः किच्च" ( उ० १–१३ ) इति बाहुलकादुप्रत्ययः किच्च ॥ तक्वा रिभ्वेति वनिबन्तौ । "तक सहने" ( भ्वा० प० ) "रभ राभस्ये" । ( भ्वा० आ० ) उपधाया इत्वं च रभतेर्वाहुलकात्पृषोदरादित्वाद्वा । लिम्पेस्तौदादिकस्य रत्वं च । अन्यत्तृपुवत् ॥

१. निरूपूर्वान्नयतेः "अघ्न्यादयश्च" ( उ० ४–१०८ ) इति निपातः । निर्णीतं बहिर्नीतम् निर्गतमन्तर्हितं वा । सस्रइति संपूर्वात्स्वरतेर्गतिकर्मणो विच्चि गुणो रपरश्च । समश्चान्तलोपः । सम्यगन्तर्गतं विनिर्गतं वा । सनुतरिति संपूर्वात्तनोतेर्डमुण्डित्वाट्टिलोपो मस्य नुः पृषोदरादित्वात् ॥

२. आङ्पूर्वात्परापूर्वाच्चैतेः "पिनाकादयश्च" ( उ० ४–१५ ) इत्याकप्रत्ययो धातुलोपश्च निपात्यते । पदन्तत्वं पृषोदरादित्वात् ( पा० ६–३–१०९ ) नीचैरिति वदन्नयं पराचैरित्याहेति भट्टभास्करमिश्रः ॥ तथाच नीत्यस्य स्थाने पराशब्दो विपर्यस्तोत्र वेदितव्यः । दृष्टश्चोपसर्गव्यत्ययो बहुत्र ( नि० १–१ ) ॥

३. समानं हि कालाध्वनोर्महत्त्वं दूरपुराणयोः ॥

४. "नश्च पुराणे प्रात्" ( पा० ५–४–२५ वा० ) इति नप्रत्ययः । तत्र हि चाद् त्नप्तनप्खाः पूर्ववार्तिकोक्ताः । प्रदिव

आह—

**पुराणं कस्मात् ?**

इति । उच्यते—तद्धि—

**पुरा नवं भवति ॥**

न वर्तमानकाले ॥

पुराणसम्बन्धादेवाह—

**नवनामान्युत्तराणि षड़ेव ॥**

नवं । नूत्नं । नूतनम् । इत्यादीनि ॥

आह—

**नवं कस्मात् ?**

इति । उच्यते—तद्धि सद्य एव कुतश्चित्—

**आनीतं भवति ॥ २ ॥**

**आ** सद्यः **नीतं** प्राप्तं **भवतीति** नवम् । "णु स्तुतौ" ( अ० प० ) "ऋदोरप्" ( पा० ३–३–५७ ) नूयते स्तूयते । अचिरकृतत्वेन रमणीयत्वादित्ययम् ( एवमादिकः शब्दो ) विशेष्यनिघ्नस्तथाचामरः "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः । नूत्नश्च" इति ( वि० नि० व० ) ॥ २ ॥ (१९)

**द्विश उत्तराणि नामानि ॥**

द्वे द्वे इति द्विशः । "संख्यैकवचनाच्च वीप्सायाम्" ( पा० ५–४–४३ ) इति शस्प्रत्ययः । "जानीयादि"ति शेषः । कारकादिति हि तत्र वर्तते ॥ पृथिवीनामभ्य आरभ्य नवनामानि यावदेकैकार्थस्य बहूनि नामानि व्याख्यातानि । इदानीं "प्रपित्वे अभीके" इत्येवमारभ्याद्यावापृथिवीनामधेयानि एकैकस्य द्वेद्वे नामनी वाचके भवत इति तान्येतानि समाम्नायेते ॥ ( निघं० ३–२९–३० ) ॥

अथैवमुक्त्वा सामान्यतो, विशेषेणैकैकं व्युत्पाद्योदाहरणैरेव दर्शयति—

तद्यथा—

**"प्रपित्वेऽभीक"इत्यासन्नस्य । प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते ॥**

**प्रपित्वे, अभीके,** इति द्वे नामनी **आसन्नस्य** भवतः । इत्येवमग्रेऽपि व्याख्येयम् ॥ **अभ्यक्ते** आभिमुख्येनाश्चिते । अभ्यागते इति यावत् ॥

इदानीमुदाहरणे ब्रवीति—

**"आपित्वे नः प्रपित्वे तूयमागहि ॥"**

( ऋ० सं० ५–७–३० )

**"अभीके चिदुलोककृत् ॥"**

( ऋ० सं० ८–७–२१ )

**इत्यपि निगमौ भवतः ॥**

**आपित्वे** इति । "यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम् । आपित्वेनः प्रपित्वे तूयमागहि कण्वेषु सुसचापिब ॥ ३ ॥" ऐन्द्र्येषा । बृहती । देवातिथेः काण्वस्यार्षम् । महाव्रते बृहतीसहस्रे शस्यते । हे इन्द्र ! **यथा**—येन प्रकारेण **गौरः**—गौरमृगः । **अवेरिणम्**—अपगतार्णमपगतोदकं मरुप्रदेशम् । गत्वा **तृष्यन्**—तृषा बाध्यमानः । **अपा** जलेन **कृतम्** पर्याप्तं तडागमन्यं वा जलाशयम् **एति** शीघ्रमागच्छति । एवं लमप्येतस्मिन् **आपित्वे**—आपानकाले । **प्रपित्वे**—प्राप्ते सति **तूयं**-क्षिप्रम् (निघं० २–१५) **आगहि**—आगच्छ । "बहुलं छन्दसि" ( पा० २–४–७३ ) इति गमेः शपोलुकि हेरपित्वेन ङित्वान्मलोपः (पा० ६–४–३७) । आगत्य च **कण्वेषु**—कण्वैर्मेधाविभिः एभिर्ऋत्विग्भिः **सचा**—सह (निघं० ४–२) **पिब** । "सोममि"ति शेषः ॥ कण्व इत्येष मेधाविनामसु ( निघं० ३–१५ ) पठितः ॥ विभक्तिव्यत्ययश्छान्दसः ( पा० ३–१–८५ ) ॥ ३ ॥

**अभीके** इति । "प्रोष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीकेचिदुलोककृत् सङ्गे समत्सु वृत्रहास्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधिधन्वसु" ॥ १ ॥ सुदासः पैजवनस्येयमार्षम् । अतिच्छन्दाः । सर्वपृष्ठायां मैत्रावरुणीयके देवताव्यत्यये यागे शाक्वरस्येन्द्रस्य चरोर्याज्यैषा, रैवतस्य पुरोऽनुवाक्या बाह्वृच्ये पुनरियमेव षोडशिशस्त्रे शस्यते । हे स्तोतारः !

---

इति सकारान्तमव्ययमिन्द्रार्थकत्वेऽस्यानादिकालप्रवृत्तिरेव बीजम् । तेन प्रगतानि दिनान्यस्येति पृषोदरादित्वान्नकारस्य वकारः । इति देवराजः । तथाच सान्तत्वपक्षे दीव्यतेः कसुन्दीव्यतिर्युत्यर्थः ॥

१. "णु स्तुतौ" (अ० प०) "ऋदोरप्" (आ० ३–३–५७) नूयते स्तूयतेऽचिरकृतत्वेन रमणीयत्वादिति ॥ "नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्यया वक्तव्याः" ( पा० ५–४–२५ वा० ) इति नूत्ननूतने साधुनी ॥

१. ऋणशब्दो दुर्गभूमौ जले च वर्तते । "ऋणं देये जले दुर्गे" इति हैमः ॥

२. अपेत्येकवचनमार्षम् । तथाच पठन्ति "अपा मार्जने विनियोग"इत्येवम् । स एष पाठोऽवैदिकत्वादशुद्ध इति निर्णीतः ॥ (महामहो मे० प० वै० के० श्रीपरमेश्वरशर्मकृताऽऽह्निकपद्धतौ ) ॥

३. "युगपर्याप्तयोः कृतमि"त्यमरः । "कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु—" ति मेदिनी च ॥

४. "आपानं पानगोष्ठिका" इत्यमरः । आ-सम्भूय पिबन्त्यत्रेत्यर्थे ल्युट् ( पा० ३–३–११ ) पानस्य गोष्ठी स्वार्थे कन् पानार्था सभा आपानमित्युच्यते ॥

५. कणति—स्तोत्रलक्षणं शब्दं करोति । कण्यते स्तूयते वा । कणयति निमीलयति परान्वा स्वतेजसेति कण्वः । "कण शब्दे" ( भ्वा० प० ) "कण निमीलने" ( चु० प० ) "अशुप्रुषिलटिकणिखटिविशिभ्यः कन्" ( उ० १–१४९ ) इति कन्प्रत्ययः ॥

**प्रो**–प्रकर्षेण । उकारः पादपूरणः । **सु**–प्रशस्ताभिः "स्तुतिभिः । इति शेषोऽध्याहृतः सुशब्दबलेन । **अस्मै**–इन्द्राय । परमैश्वर्यवते । तुध्यर्थमस्य । षष्ठ्यर्थे वा चतुर्थी ( पा० २–३–६२ वा० ) **पुरोरथम्**–रथस्याग्रे[2] स्थित्वा । **शूषम्**–बलमस्य । **अर्चत**–स्तुत । कं च पुनरर्थमभिसन्धायार्चत ? इत्याह–**अभीके**–अभ्यके–अभ्यागते ( आसन्ने ) एतस्मिन् **सङ्गे**–सङ्ग्रामकाले । ( निघं० २–१७ ) **समत्सु**–सम्भक्षैर्यितृषु[3] । सङ्ग्रामेषु । ( निघ० २–१७ ) उद्यतायुधेषु शत्रुषु **लोककृच्चित्**[4]–अभिपूजितो लोककर्ता स्थानकर्ता वा **वृत्रहा**–शत्रुहन्ता इन्द्रो भविष्यतीति । **उः** पादपूरणः । एवमन्यान्स्तोतॄन्संबोध्यात्मनापि प्रवृत्ते वक्तुम्–**हे भगवन्निन्द्र! अस्माकम् चोदिता** अनुज्ञाता त्वम् । यद्वा चोदितास्तुध्यर्थं तेऽभियोजिता एताः स्तुतीरिति शेषः । **बोधि** बुध्यस्व । बुधेश्छान्दसे लुङि "दीपजने"–( पा० ३–१–६१ ) इत्यादिना कर्तरि च्लेश्चिणादेशः "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा० ६–४–७५ ) इत्यडभावः । अपिच **अन्यकेषां**–कुत्सितानामन्येषामस्मद्विषां कुत्सार्थेऽकच् ( पा० ५–३–७१ ) **ज्याका** कुत्सिता ज्या मौर्वी ( धनुर्गुणः ) "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । कुत्सार्थे कन् ( पा० ५–३–७ ) **अधिधन्वसु** धनुःष्वधिरोपिता ॥ **नभन्तां** हिंसन्ताम् । "णभ तुभ हिंसायाम्" ( भ्वा० आ० ) कर्मणि लोट् यगभाव आर्षः । अवततज्याधनुषो हतसर्वोद्यमा एतेऽस्मद्विषो भवदभिध्यानादनुग्रहाच्च भवन्त्विति भावः ॥ १ ॥

**"दभ्रम्–अर्भकमि"त्यल्पस्य । दभ्रं दभ्नोतेः । सुदम्भं भवति । अर्भकमवहृतं भवति ॥**

**अल्पस्येति** । "नामनी भवत" इति शेषः । **दभ्नोते**र्वधार्थस्य ( निघं० २–१९ ) तद्ध्यल्पं **सुदम्भं**–सुच्छेद्यं **भवति** । अल्पत्वात् ॥ **अवहृतं** ह्रस्वम् ॥

उदाहरति—

**"उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ॥"** ( ऋ० सं० २–१–११ )

**"नमो महद्भ्यो नमो अर्भकेभ्यः ॥"** ( ऋ० सं० १–२–२४ )

**इत्यपि निगमौ भवतः ॥**

**उपेति** । "उपोप मे परा मृश मा मे दभ्राणि मन्यथाः । सर्वाहमस्मि रोमशा गन्धारीणामिवाविका" ॥ ७ ॥ भावयव्यस्येयमार्षम् । अनुष्टुप् । भावयव्यमेव[1] सा भर्तारं तेनानुपेयमाना ब्रवीति । हे राजन्! **उप**–उपगम्य । **उप**–उपश्लिष्य च । **मे**–मम । **परामृश**–संस्पृश । यो यः प्रदेशः पुरुषेण स्त्रियाः स्प्रष्टव्यस्तं तं सर्वमेव यथेच्छं स्पृश । अथ त्वमलोमकाऽ( अल्पवयस्काऽ )सि कथं स्प्रष्टव्येति प्रत्युक्ते–आह–**मा मे दभ्राणि मन्यथाः** । "लोमानी"ति शेषः । **दभ्राणि**–अल्पानि । ( निघं० ३–२ ) लोमानि मे मा मन्यथाः । जानेऽहमेतत् यथा अलोमिकाया उपगमप्रतिषेध उक्तः स्मृतौ–"नाजातलोम्न्योपहासमिच्छेत्" इति । यतस्ते वेदयामि **सर्वाहमस्मि रोमशा** सर्वेष्वेवावयवेषु ममोत्पन्नानि रोमाणि । येषु स्त्रीणामुत्पद्यन्ते । कथं च पुनरहमस्मि रोमशा ? **गन्धारीणामिवाविका** गान्धार–( खन्धार– ) देशजातानामवीनां मध्ये यथा अविका ह्रस्वा अविः । अल्पार्थे कन् । ( पा० ५–३–८५ ) तस्या रोमाणि सघनानि मृदुलानि च भवन्ति । एवमहमस्मीति निःशङ्कमुपगच्छ मामिति भावः ॥ ७ ॥

**नम इति** । "नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः" ॥ ३ ॥ त्रिष्टुप् शुनः शेपस्यार्षम् । होतृजपे विनियुक्ता । **महद्भ्यः** परिमाणेन, देवेभ्यो **नमः** । **नमो अर्भकेभ्यो**ऽल्पपरिमाणेभ्यः । **युवभ्यो** यौवनवद्भ्यः । **आशिनेभ्यो** व्यापिभ्यः "अशू व्याप्तौ" ( स्वा. प. ) "आङ्पूर्वः सुप्यजातौ णिनिस्ताच्छील्ये" ( पा० ३–२–७८ ) **यजाम देवान्** एतस्मिन्नुपस्थितकाले **यदि शक्नवाम** । अल्पश्रुतविज्ञाना वयमिति युष्मान् ब्रूमहे हे **ज्यायसः** । ज्यायांसः । ( श्रेष्ठाः ) विभक्तिव्यत्यय आर्षः । **देवाः!** युष्माकमेव **शंसं** शंसितारं । विभक्तिलुक् आर्षः । ( पा० ७–१–३९ ) स्तोतारं **मा** मां ( अस्मान् ) **मावृक्षि** माछिन्धि यज्ञफलात् । कस्मिंश्चिदल्पे महति वा दुःशस्ते कर्मणि अपराध्यतः । को हि नापराध्यति कर्म कुर्वाणः ॥ अत्र "अस्मदो द्वयोश्च" ( पा० १–२–५९ ) इति एकत्वेऽस्मदो वा बहुवचनमिति बोध्यम् ॥ १ ॥

**"तिरः सत" इति प्राप्तस्य । तिरस्तीर्णं भवति । सतः संसृतं भवति ।**

**तिरः सत** इत्येते **प्राप्तस्य** नामनी भवतः । अप्राप्तस्यैके अधीयते यथापि योज्यम् इति दुर्गः ॥ **तीर्णं** हि तत् ( प्राप्तं ) **भवति** दूरमध्वानम् । **संसृतं** समित्येकीभावे । एकीभूय सृतं गतं **भवति** । उदाहरति—

१. उपसर्गसकारस्यापि षत्वमार्षम् । अतएव च "सात्पदाद्योः" ( पा० ८–३–१११ ) इति निषेधोऽपि न । "कुगतिप्रादयः" ( पा० २–२–१८ ) इति गतिसमासः ।

२. अत्र रथस्य पुरः पुरतः ( अग्रतः ) इति "पुरोऽव्ययम्" ( पा० १–४–६७ ) इति गतित्वात् ॥

३. सम्पूर्वादततेः क्विप् ॥

४. चिदिलभिपूजितेऽर्थे व्याख्यातः ( नि० १–२–२ ) ॥

५. "धनुश्चापौ–धन्व–शरासन–कोदण्ड–कार्मुकाः" इत्यमरे धन्वन्शब्दो धनुःपर्यायः पठितः ।

१. भावयव्यो नाम कश्चन राजर्षिः ॥

"तिरश्चिदर्यया परिवर्तिर्यातमदाभ्या ॥"

( ऋ० सं० ४-४-१६ )

"पात्रेव भिन्दन् सत एति रक्षसः ॥"

( ऋ० सं० ५-७-९ )

इत्यपि निगमौ भवतः ॥

**तिर इति** ॥ "अश्विनावेह गच्छतं नासत्या मा विवेनतम्। तिरश्चिदर्यया परिवर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम्" ॥ २ ॥ अवस्योरात्रेयस्यार्षम्। पङ्क्तिराश्विनी। प्रातरनुवाकाश्विनयोः शस्यते । हे **नासत्या!** नासत्यौ[1] । **अश्विनौ!** युवाम् **इह** अस्मिन्यज्ञे **अदाभ्या** अदाभ्यया अनुपहिंसितया ( अप्रतिबद्धया ) गत्या । दभ्नातिर्वधकर्मसु पठितः । ( निघं० २-१९ ) आत्वो लुक् ( पा० ७-१-३९ ) **आगच्छतम्** "सोमं पातुम्" इति शेषः । किञ्च **मा विवेनतम्** विगतकामौ मा भूतं, युवां मयाऽऽहूयमानौ । वेनतिः कान्तिकर्मा ( निघं० २-६ ) । अथ **तिरश्चित्** प्राप्ते अप्राप्तेऽपि वा स्थानेऽवस्थितौ वां तदा **अर्यया** ईश्वरया ( समर्थया शीघ्रया रथगत्या दैवगत्या वा ) अर्य इत्येष ईश्वरनामसु पठितः । ( निघं० २-२२ ) निपातितश्च पाणिनीयैः "अर्यः स्वामिवैश्ययोः" ( ३-१-१०३ ) इति ॥ **परिवर्तिः** परिवर्ती औङः सुः (पा० ७-१-३९) सन्तौ। परिपूर्वाद्वर्ततेरिन्प्रत्ययः ( उ० ४-११६ ) परि-वर्तनं कृत्वा ( आ ) **यातम्** । सायणस्तु तिरश्चित् अन्तर्हितादूरदेशादपि युवां वर्तिरस्मद्गृहं ( सायणमते वर्तिसिति सान्तं गृहनाम ) परियातमागच्छतम् । इत्येवमत्र व्याचख्यौ ॥ हे **माध्वी!** मधुसोममिश्रं पेयं ययोस्तौ मधुमन्तौ युवां **मम हवम्** आह्वानं **श्रुतम्** शृणुतम् ॥ विकरणस्य लुक् ॥ श्रुत्वाऽविलम्बमानौ शीघ्रमायातमिति भावः ॥ २ ॥ **पात्र इति।** "इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्या विवासताम् । अभीदुशक्रः परशुर्यथा वनं पात्रेव भिन्दन्सत एति रक्षसः" ॥ १ ॥ वसिष्ठस्यार्षं, जगती । **इन्द्रः यातूनां** यातुधानानां ( रक्षसां ) **पराशरः** पराशातयिता **अभवत्** । कीदृशानां? **हविर्मथीनां** हवींषि ये मथ्नन्ति विनाशयन्ति तेषाम् । **अभ्याविवासताम्** अभ्युद्वासयतां यज्ञोत्सादकानामित्यर्थः[1] । योऽयमेवंलक्षण इन्द्रः **स शक्रः** शक्तः सर्वेयातूनां यातने । **सतः** प्राप्तात्प्रदेशात् अप्राप्ताद्दूराद्वा **अभि एति** अभ्येतु अस्मान्प्रति । लोडर्थे लेट् । **इत् उ** इतीमौ पादपूरणौ व्याख्यातौ[2]। कः कमिव **परशुः** परशुहस्तः[3] **वनं यथा**। किंकुर्वन् **पात्रा** पात्राणि । शेर्लो ( पा० ७-१-३९ ) कौलालानि मृद्भाण्डानि **इव**। **रक्षसः** रक्षांसि । लिङ्गव्यत्ययश्छान्दसः । **भिन्दन्** विदारयन् ॥ १ ॥

"त्वोनेम" इत्यर्धस्य। लोऽपततो, नेमोऽपनीतः ॥

**त्वोनेम** इत्येते **अर्धस्य** नामनी भवतः । **अपततो**ऽपेत्य एकस्माद्भागद्वयेन ततो विस्तृतो भवति । **अपनीतः**। अपभज्यनीतः पृथक् कृत इत्यर्थः ॥

अथार्धपदं पर्यायाभिधानप्रसक्तं निर्ब्रवीति—

अर्धं हरतेर्विपरीता, द्धारयतेर्वा स्यादुद्धृतं भवति। ऋध्नोतेर्वा स्यादृद्धतमो विभागः ॥

**हरतेः** "हृञ् हरणे" (भ्वा० उ०) इत्यस्मात् **विपरीतात्** अर्हरूपतामापादितात् "हलश्च०" ( पा० ३-३-१२१ ) इति कर्मणि घञि गुणः। बाहुलकाद्वस्य घः। **उद्धृतं** हि तद्भवति। अथवा **ऋध्नोतेः** "ऋधु वृद्धौ" ( स्वा० प० ) इत्यस्य । घञ् पूर्वेणैव ॥ ऋध्नोत्यनेनेत्यर्धः ॥ **ऋद्धतमः** अतिसम्पन्नतमो **विभागो** भवति । विभागेन हि सम्पद्यतेऽनेकेषामभिमतम् ॥

अथैतावुदाहरति—

"पीयति त्वो अनु त्वो गृणाति ॥"

( ऋ० सं० २-२-१६ )

"नेमे देवा नेमेऽसुराः ॥" ( ब्रा० )

इत्यपि निगमौ भवतः ॥

---

१. न सत्यावसत्यौ न असत्यौ नासत्यौ प्रत्यक्षभूतौ देवौ "नभ्राण्नपा"–( पा० ६-३-७५ )–दित्यादिना नलोपाभावो निपात्यते ॥ अत्र औङ आकारः ( पा० ७-१-३९ ) ॥

२. अत्र लिङ्गव्यत्ययेन ( पा० ३-१-८५ ) साधनं सायणोक्तं द्रष्टव्यम् । "मधोरञ्" ( पा० ४-४-१२९ ) इति मत्वर्थीयोऽञ् प्रत्ययः । "ऋत्व्यवास्त्व्यवास्त्वमाध्वी" ( पा० ६-४-१७५ ) इति यणदेशो निपात्यते । "वाच्छन्दसि" ( पा० ६-१-१०६ ) इति पूर्वसवर्णदीर्घत्वम् ॥

३. ह्वयतेराह्वानार्थात् ( भ्वा० उ० ) भावेऽपि ( पा० ३-३-५७ ) विवक्षिते "बहुलं छन्दसि" ( पा० ६-१-३४ ) इति सम्प्रसारणं पूर्वरूपत्वं, ततोऽपि गुणोऽवादेशश्च ॥

१. विवासतिः परिचरणकर्माऽपि ( निघं० ३-५ ) उपसर्गद्वययोगादर्थान्तरेऽत्र । सायणस्तु—अभिमुखम् आविवासतामागच्छताम् इति व्याचख्यौ ॥

२. निपातप्रकरणे ( नि० १ अ०२-३ पादयोः ) ॥

३. परान् शृणातीति परशुः । कुठारोऽन्यो वाऽस्त्रभेदः प्रसिद्धः ॥ 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः॥ अत्र परशुशब्दस्तद्वति लाक्षणिकः । कुन्ताः प्रविशन्तीतिवत् ॥ कुन्तो गवेधिकापरपर्याय आयुधविशेषः। "भाला" इति प्रसिद्धः । तद्वत्सु प्रविशत्सु कुन्ताः प्रविशन्तीत्युच्यते तेन यथा कुन्तहस्ताः पुरुषा लक्ष्यन्ते तद्वत् । "कुन्तो गवेधिकायां स्यात्" इति मेदिनी ॥

४. हरतेरर्हरूपतापादने क्लेश इत्याह–अथवेति ॥

५. विशेष्यनिघ्नम्। "समेंऽशके अर्धम्" इत्यमरः ॥

**पीयतीति** । "बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने" ॥ २ ॥ दीर्घतमस आर्षम् त्रिष्टुप् आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन्नग्ने ! **यविष्ठ** युवतम ! अतिशयेन युवेत्यर्थे "अतिशायने तमबिष्ठनौ" ( पा० ५-३-५५ ) इतीष्ठनि भत्वाट्टिलोपे सम्प्रसारणे ( पा० ६-४-१३३ ) दीर्घे ओर्गुणः ( पा० ६-४-१४६ ) अवादेशः ॥ **हे स्वधावः !** अन्नवन् ! स्वधा इत्येष अन्ननामसु पठितः ( निघं० २-७ ) **मे** मम **अस्य महिष्ठस्य** दातृतमस्य पूजयितृतमस्य वा, महत्तमस्य वा । अत्र महच्छब्दस्य मंहादेशः पृषोदरादित्वाद्बोध्यः । इष्ठन् तु पूर्वेणैव । टिलोपश्च ॥ **प्रभृतस्य** प्रकृष्टैर्भगवद्गुणैः सम्भृतस्य **वचसः** भवत्स्तुतिरूपस्य "गुणानि"ति शेषः । **बोधा** बुध्यस्व । "बुध अवगमने" ( भ्वा० प० ) लोट् दीर्घ आर्षः । आ संवेत इति वा । किंच इदमपरं शृणु उभयेषां प्राजापत्यानां देवासुराणां द्विधा विभक्तानां मध्ये **त्वः** अर्धः देवाख्यः **पीयति** हिनस्ति एकमर्धमसुराख्यम् । त्वः अर्धः असुराख्यः **अनुगृणाति** अनुष्टौति, अपरमर्धन्देवाख्यम् । मास्मान् हिंसीरिति । तत्रैवं सत्युभयथा विप्रतिपन्नेषु प्राजापत्येषु **वन्दारुः** वन्दनशीलोऽहं "वदि अभिवादनस्तुत्योः" ( भ्वा० आ० ) "शृवन्द्योरारुः" ( पा० ३-२-१७३ ) इत्यारुप्रत्ययः कर्तरि । "वन्दारुरभिवादके" इत्यमरः ॥ दैवं पक्षमाश्रितो हित्वाऽसुरं **ते** तवैतां **तन्वं** तनूं ज्वलन-दहन-प्रकाशीकरणसमर्थां नित्यमेव ( प्रातर्मध्यन्दिने सायं च ) **वन्दे** स्तौमीत्यर्थः ॥ २ ॥

**नेमे देवा** इति ब्राह्मणवाक्यं वाजपेये मैत्रावरुणीयानाम् ॥ अर्धतो देवा अर्धतोऽसुरा आसन्नित्यर्थः ॥ १ ॥

## "ऋक्षाः, स्तृभिरि"ति नक्षत्राणाम् ॥

**ऋक्षाः, स्तृभिरित्येते नक्षत्राणां** नामनी भवतः ॥ तत्र ऋक्षशब्दोऽत्र पुंसि निर्दिष्टो लोके पुनर्नपुंसकमेव, मकारस्य वाऽऽकारः पृषोदरादित्वात् ॥ एवं स्तृशब्दोऽत्र नक्षत्रवचनोऽस्ति ततो भिस् । न तु तृतीयान्तं नाम । वेदे तृतीयान्तस्यानुकरणमदः ॥ विभक्त्यन्तप्रतिरूपकमव्ययं वा ॥

नक्षत्रशब्दं पर्यायाभिधानप्रसक्तं निर्ब्रवीति—

## नक्षत्राणि नक्षतेर्गतिकर्मणः ॥

गत्यर्थे वर्तमानात् **नक्षतेः** नक्षधातोर्नैघण्टुकात् ( निघं० २-१४ ) सौवादिकाद्वा गत्यर्थात् ( प० ) "अभिनक्षिकलिभ्योऽत्रन्" ( उ० ३-१०५ ) इत्यत्रन्प्रत्यये नक्षत्राणि भवन्ति । तानि हि नित्यमेव गच्छन्ति ॥ पाणिनीयैस्तु क्षीयतेः क्षरतेर्वा क्षत्रमिति निपात्यते । न क्षीयन्ते न क्षरन्तीति वा नक्षत्राणि "नभ्राण्नपान्नवेदा"( पा० ६-३-७५ ) इत्यादिना नञः प्रकृतिभावान्नलोपाभाव इत्युच्यते ॥

अत्र ब्राह्मणमन्यथा व्याख्यातीत्याह—

## "नेमानि क्षत्राणी"ति च ब्राह्मणम् ॥

चशब्दोऽत्र त्वर्थे । स च भेदार्थः पूर्वनिर्वचनात् । "तुस्याद्भेदेऽवधारणे" इत्यमरः ॥ **क्षत्राणि** धनानि इमानि **न** भवन्ति । किंतर्हि ? धनसरूपाण्येतानि, सूर्यरश्म्यनुवेधाद्दीप्यमानानि सन्ति । "हिरण्ययानीव भ्राजन्त" इति हि तच्छेषः[1] । क्षत्रशब्दो धननामसु ( निघं० २-१० ) पठितः ॥ पूर्वजन्मसु कृतयशेन तद्वति स्थिरं भवतीति[2] ॥

अथ यथाप्रतिज्ञातं निर्ब्रवीति—

## ऋक्षाः उदीर्णानीव ख्यायन्ते, स्तृभिस्तीर्णानीव ख्यायन्ते ॥

**उदीर्णानि** उदीरितानि केनचिदर्धगमितामिव **ख्यायन्ते** दृश्यन्त इत्यर्थः ॥ एवं **तीर्णानि** तिर्यग्गतानीव गगनमण्डले **ख्यायन्ते** दृश्यन्त इत्यर्थः ॥

अथोदाहरति—

"अमी य ऋक्षा निहितास उच्चा ॥"
( ऋ० सं० १-२-१४ )

"पश्यन्तो द्यामिव स्तृभिः ॥"
( ऋ० सं० ३-५-६ )

## इत्यपि निगमौ भवतः ॥

**अमी येति** । अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहचिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ ५ ॥ शुनःशेपस्यार्षम् । त्रिष्टुप् । वारुणी । वरुणश्चास्यां सूर्य उच्यते ॥ **अमी ये ऋक्षाः** अमूनि यानि नक्षत्राणि **उच्चा** उच्चैरुन्नते स्थाने दिवि **निहितासः** निहितानि स्थापितानि केनचित् "आज्जसेरसुक्" ( पा० ७-१-५० ) इत्यसुगागमः ॥ **नक्तं** रात्रावेव **ददृश्रे** दृश्यन्ते "इरयोरे" ( पा० ६-४-७६ ) इति रेभावः । एतानि ।

1. शब्दतोऽर्थतश्च ॥ तदेतयोः ( धातूपसर्गयोः ) राजामात्ययोरिव क्वचित्कदाचित्कर्मव्यतिहार उपपद्यत एव ॥

१. उक्तब्राह्मणग्रन्थशेषः । चाकचक्यदर्शनाद्धिरण्ययत्वभ्रमः । हिरण्ययानीतितु "ऋत्व्यवास्त्व्यावास्त्वमाध्वीहिरण्ययानिच्छन्दसि" ( पा. ६-४-१७५ ) इति निपातः ॥

२. एतेन पाणिनीयानामुपदर्शिता निरुक्तिरुक्ता । निघण्टुभाष्येतु क्षदिः सौत्रो ग्रहणार्थः । माधवमते शकलीकरणार्थो हिंसार्थश्च "क्षद गतिहिंसनयोः" इति हि सुबोधिनीकारः । "गुधृवीपच्चिवचियमि( मनि )सादिक्षदिभ्यस्त्रः" ( उ० ४ । १६२ ) इति त्रः । गृह्यते ह्येतदुपभोगार्थिभिस्तस्साधनत्वात् । हिनस्ति दारिद्र्यम् । खण्डीकरोति वा तदेव । क्षतो नाशकात्कुतश्चित्पापाद्वा त्रायते रक्षतीति क्षत्रं धनं "त्रैङ् पालने" ( भ्वा० आ० ) तथाच निगमौ । "नहि ते क्षत्रं न सहो न मन्युम्" ( ऋ० सं० १-२-१-१ ) "सुक्षत्रासो रिशादसः" ( ऋ० सं० १-१-३६-५ ) इति ॥

न विज्ञायन्ते **दिवा** दिवसे । एतानि **कुहचित्** क्व पुनः **ईयुः** गच्छन्ति । कालव्यत्यय आर्षः । किमेतत्स्यात्? **अदब्धानि** अनुपहिंसितानि ( आश्चर्यभूतानि एतानि ) **वरुणस्य** आदित्यस्य **व्रतानि** कर्माणि स्युः । किमन्यद् भविष्यति ? स हि भगवानादित्यस्तानि कुतश्चिदानयन्निवास्तं गच्छति । पुनश्चैतान्यपनयन्निवोदेति । तदेवं दर्शनमदर्शनं वा तेषां सूर्यकृतमेव । यदपि चैतत् **विचाकशत्** देदीप्यमानः कसेर्दीप्त्यर्थाद्यङ्लुगन्ताच्छतृप्रत्ययः । "नाभ्यस्ताच्छतुः" ( पा० ७–१–७८ ) इति नुमोऽभावः ॥ **चन्द्रमाः** । **नक्तं** रात्रौ **एति** आगच्छति तदप्यस्यैव भगवतः सूर्यस्य कर्म । अयमेव हि चन्द्रमसि दीप्तिमादधान इवास्तं गच्छति । पुनश्चाक्षिपन्निव चन्द्रमसो दीप्तिमुदेति । योऽयमेवंस्वभावो वरुण आदित्यस्तं वयमभिप्रेतार्थसिद्धये स्तुमः । स इदं नामास्माकं करोत्विति तात्पर्यार्थः ॥ ५ ॥

**पश्यन्त** इति । "ऋ॒ता॒वान॒ं विचे॑तसं॒ पश्य॑न्तो॒ द्यामि॑व॒ स्तृभिः॑ । विश्वे॑षामध्व॒राणां॑ हस्क॒र्तारं॒ दमे॑दमे ॥ ३ ॥" गोतमपुत्रस्य वामदेवस्यार्षम् । अनुष्टुप् । आग्नेयी । **ऋतावानं** यज्ञवन्तम् ऋतमिति यज्ञनाम (निघं० ४–१९) ततावनिम्मत्वर्थे (पा० ५–२–१२२) । **विचेतसं** विभूतप्रज्ञानं[3] **विश्वेषां** सर्वेषाम् **अध्वराणां** यज्ञानां **हस्कर्तारं** स्पर्धाकर्तारम् । हसतिः स्पर्धायां हर्षणे वा वर्तते[4] । उपज्वलिते हि तस्मिन्स्पर्धन्त इव यज्ञाः परस्परं वयं भवामो वयं भवाम इत्येवम् । तमेवंगुणविशिष्टमग्निं **दमेदमे** यज्ञगृहे यज्ञगृहे प्रतियज्ञगृहं **पश्यन्तः** "वयं स्तुमः यो नैकधा दीप्यमानः" इति शेषः । **द्यामिव स्तृभिः** । स्तृभिः नक्षत्रैर्द्यादिवमिव "पृथिवीं वेदिं वा चित्ररूपां करोति" इति शेषः । स नोऽभिष्टुतोऽभिप्रेतानर्थान्साधयत्विति तात्पर्यार्थः ॥ ३ ॥

## "वम्रीभि, रुपजिह्विका" इति सीमिकानाम् ॥

**वम्रीभिः उपजिह्विका** इत्येते **सीमिकानां** पिपीलिकानां नामनी भवतः ॥ आद्ये विभक्त्यर्थोऽविवक्षितः ॥

अथ वम्रीपदं निर्वक्ति—

१. 'व्रत' मिति कर्मनामसु पठितः ( निघं० २–१ ) व्याख्यातश्च ( नि० २–१३ ) ॥

२. चाकशीतिर्दीप्तिकर्मा पश्यतिकर्मा च वेदे पठ्यते । विपूर्वकोऽयं भृशार्थे सन्यङोर्थमाख्याति । कसतेर्दीप्त्यर्थाद्वा यङ्लुगन्ताच्छतरि द्वित्वेऽभ्यासस्य दीर्घः ॥

३. विशिष्टभूतं प्रज्ञानं यस्य तम् । एष च "चिती संज्ञाने" इत्यस्याऽर्थोत्र निरुक्तः ॥

४. एतच्च "हासमाने" इत्येतत्पदव्याख्यायां देवराजयज्वानः प्राहुः ॥ ततश्च भावे क्विबत्र । हाः स्पर्द्धा तत्कर्तारम् ॥

५. 'दमे' इत्येष गृहनामसु पठितः ( निघं. ३–४ ) ॥

६. "द्यौः स्त्री स्वर्गे च गगने दिवं क्लीबं तयोः स्मृतमि"ति कोशः ( अ० टी० स० ) "नित्यवीप्सयोः" ( पा० ८–१–४ ) इति पदद्वित्वम् ॥

## वम्र्यो वमनात् ॥

ता हि वमन्त्युदकं तेन मृदार्द्रीभवति ॥ तथाच "टुवम उद्गिरणे" ( भ्वा० प० ) रक् । "पुंयोगे" ङीप् ( पा० ४–१–४८ ) ॥

अथ सीमिकापदं निर्वक्ति—

## सीमिकाः स्यमनात् ॥

स्यमन्ति(न्त्यो)हि ता नित्यमेव गच्छन्ति ॥

अथ उपजिह्विकापदं निर्वक्ति—

## उपजिह्विका उपजिघ्र्यः ॥

उपजिघ्रन्ति हि ताः, पटु ह्यासां घ्राणेन्द्रियं भवति ॥

अनयोर्निगममुदाहरति—

## "यद॑त्त्युप॒जिह्वि॑का॒ यद्व॒म्रो अ॑ति॒सर्प॑ति इत्यपि निगमो" भवति ॥ ( ऋ० सं० ६–७–१२–६ )

**यदत्तीति** । भार्गवस्य प्रयोगस्येयमार्षम् । उक्थेऽसौ समिदनया प्रहूयते ॥ अस्याः "सर्वं॒ तद॑स्तु ते घृ॒त"मिति शेषः । अत्र "ता जुषस्व यविष्ठ्य" इति पूर्वमन्त्रादभिसंबध्यते ॥ हे अग्ने ! **उपजिह्विका** नाम पिपीलिका अन्तरनुप्रविश्य स हि बहिर्न शक्नोत्यत्तुं खदिरसारादि । **यत्** काष्ठादिकम् **अत्ति** भक्षयति । **यत्** च वम्रस्तद्विशेषैः **अतिसर्पति** आर्द्रया मृदा परिवेष्टयन् हे **यविष्ठ्य** युवतमेषु साधो ! अत्र "तत्र साधुः" ( पा० ४–४–९८ ) इति यत् **सर्वं तत्** उभयजातीयमपि **ते** तव **घृतम् अस्तु** भवतु । **ता** घृतीभूतं तत् । लिङ्गव्यत्ययादिरार्षः । **त्वं** **जुषस्व** सेवस्व । "जुषी प्रीतिसेवनयोः" ( तु० आ० ) प्रार्थनायां लोट् ॥ ६ ॥

## "ऊर्दरं, कृदरमि"–त्यावपनस्य ॥

**ऊर्दरं, कृदरमित्येते आवपनस्य** धान्यादिनिःक्षेपभाण्डस्य नामनी भवतः ॥ ओप्यतेऽस्मिन्नित्यधिकरणे ल्युट् ॥

## ऊर्दरमुदीर्णं भवति । ऊर्जे दीर्णं वा ॥

१. "स्यमु शब्दे" ( भ्वा० प० ) धात्वर्थनिर्देशस्योपलक्षणत्वाद्गमनेऽपि वृत्तिः । यद्वा स्यमन्त्यो ध्वनन्त्यः सत्यो गच्छन्तीति सीमिका भवन्ति । स्यमनक्रियायोगात् सीमिका ॥

२. उक्थो यज्ञः । उक्थं हि सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषोऽपि लक्षणयोक्थोऽत एवोक्थानि उक्थैर्वा शंसतीत्युक्थशा यजमान इति वै० सि० कौमुदी ॥ यज्ञश्च तदुक्तलक्षणलक्षितः ॥

३. तथाच सायणः । उपजिह्विकावम्रशब्दौ यद्यपि पर्यायौ तथापि पृथगुपादानाद्वम्रशब्दस्तद्विशेषे पर्यवस्यति ॥

४. खदिरसारं ताम्बूलम् । "विना खदिरसारेण हारेण हरिणीदृशः" इति प्राचीनपद्ये तथा श्रवणात् ॥

५. आसमन्तात् ( सर्वतोभावेन ) उप्यते स्थाप्यतेऽस्मिन्नित्यावपनं मृन्मयं वंशमयं वा । कोठि "वेढी" इति भि. भाषायां प्रसिद्धम् ॥

**ऊर्दरं** कुसूलम् । तद्धि **उत् ऊर्ध्वं दीर्णं** भवति । अथवा **ऊर्जे** अन्नाय अर्थाय तदीर्णं विदीर्णं सद्भवति । ऊर्गित्यन्ननाम ( निघं० २–७ ) तदुद्गमनाय हि तच्छुषिरीभूतं भवति ॥ निगममत्रोदाहरति—

**"तमूर्दरं न पृणता यवेन ॥"**

**इत्यपि निगमो भवति ॥**

( ऋ० सं० २–६–१४ ॥ य० वा० सं० २९–१ )

**तमूर्दरमिति** । "अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा । तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु" ॥ ५ ॥ गृत्समदस्येयमार्षं त्रिष्टुप् । ऐन्द्री । हे **अध्वर्यवः ! यः इन्द्रः दिव्यस्य** द्युलोकाश्रयस्य **वस्वः** वसुनः । "आगमशास्त्रमनित्यमि"ति नुमोऽभावः । धनस्य, **यः च पार्थिवस्य** अन्तरिक्षलोकाश्रयस्य । पृथिवीत्यन्तरिक्षनामसु पठितं ( नि० १–३ ) । यश्च **क्षम्यस्य** क्षमा( भूम्या )श्रयस्य "भवेच्छन्दसि" ( पा० ४–४–११० ) इतियत् । **राजा** अधिपतिः **तम्** एवंगुणयुक्तम् **इन्द्रम् यवेन** दीर्घशूकधान्यविशेषेण **ऊर्दरं न** कुसूलमिव । **सोमेभिः** सोमैः "बहुलं छन्दसि" ( पा० ७–१–१० ) इत्यैसभावः ॥ **पृणत** पूरयत तर्पयतेति यावत् । दीर्घः सांहितिकः ( पा० ६–३–१३७ ) यद्वा आसमन्तात्पृणत । **तत् एतत् वः** युष्माकम् **अपः** कर्म ( निघं० २–१ ) **अस्तु** भवतु । सर्वमन्यद्विहायेति भावः ॥ ५ ॥

मन्त्रार्थमंशतः ( प्रकृतम् ) आह—

**तमूर्दरमिव पूरयत यवेन ॥**

निगदव्याख्यमेतत् ॥

अथ कूदरं निर्वक्ति—

**कूदरं कृतदरं भवति ॥**

कृतो दरः श्वभ्रः ( छिद्रं ) यत्र **तत्कृतदरं** तदेव कूदरं पृषोदरादित्वात्तलोपः ॥

अत्र निगममुदाहरति—

**"समिद्धो अञ्जन्कृदरं मतीनाम् "**

( य० वा० सं० २९–१ )

**इत्यपि निगमो भवति ॥ ३ ॥ ( २० ) ॥**

१. तादर्थ्ये चतुर्थी । "ऊर्ज बलप्राणनयोः" ( चु० प० ) क्विप् । अन्नाय, तत्साध्याय बलाय च यद्दीर्णं सद्भवति तदूर्दरमित्युच्यते । पिधानपिहितेऽकृतच्छिद्रे वा तस्मिन्न तेन प्राणनं ( जीवनं भोजनतो ) नापि च बलं कस्यचिद्भवति ॥

२. "शुषिरं विवरं बिलम्" इत्यमरः । उद्गमनाय । अन्तःस्थितधान्यनिःसारणाय ॥

३. ऊर्दरशब्दे ॥

**समिद्ध इति** । "समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः । वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥" आप्रीसूक्तम् । आध्वर्यवेऽश्वमेधे । तत्रेयं प्रथमा । हे **अग्ने !** भगवन् ! **समिद्धः** सन्दीप्तस्सन् । **मतीनां** मेधाविनां ( निघं० ३–१५ ) सर्वेषां देवानां, मतीनां बुद्धीनां च **आवपनं** निधानस्थानं **घृतम्** । ते हि सर्वाः मतीः ( सर्वप्राणेन ) तत्र क्षिपन्ति ममेदं स्यादिति । तदेवंगुणयुक्तं घृतं **मधुमत्** मधु ( वत् ) स्वादयुक्तम् **अञ्जन्** गमयन् "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" ( रु० प० ) ततः शता । आत्मानं प्रति ज्वालेन विलालयन् । **पिन्वमानः** पिबंश्च । ततः हे **जातवेदः** । भूस्थानदैवत अग्ने ! **त्वं वाजी** वेजनवान् बलवान् वेगवान् वा सन् **वहन्** प्रापयंस्तद्देवान्प्रति "वह प्रापणे" ( भ्वा० प० ) ततःशता **देवानां** सधस्थं समानस्थानं ( सहचारिणम् ) अथच **प्रियम्** एनम् **वाजिनम्** अश्वमाश्वमेधिकम् **आ** आभिमुख्येन आशुतरं वा **वक्षि** वह ( प्रापय ) लोडर्थे लट् शपो लुक् ( पा० २–४–७३ ) ॥ ३ ॥ ( २० )

**"रम्भः पिनाकमि"ति दण्डस्य ॥**

१. एतच्चावर्तते, शब्दतन्त्रं वा । सकृदुच्चरितः शब्दः सतितात्पर्यपर्यवसानेऽर्थद्वयबोधकस्तन्त्रम् तत्कारणं तु शब्दानां तुल्यरूपता । यथा "विद्वन्मानसहंस वैरिकमलासंकोचकीर्तिद्युते !" इत्यादौ । अत्र विदुषां मानसं मनएव मानसं सरस्तत्र हंसेति संबोधनम् । यथावा अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यादौ । अक्षशब्दो हि रथावयवे ( धुरि ) विभीतकफले देवनाक्षे ( पाशके ) च वर्तते । तदेतच्छब्दतन्त्रम् शब्दस्य पर्यायपरिवृत्त्यसहत्वात् । तत्सहत्वे त्वर्थतन्त्रं यथा पटा इत्यादौ ॥

२. "पिवि सेवने" ( भ्वा० प० ) पदव्यत्ययेन ( पा० ३–१–८५ ) लटः शानच् । "आने मुक्" ( पा० ७–२–८२ ) इति मुगागमः ॥

३. जातशब्दोपपदाद्विदेर्विचारणार्थाद्वेत्तेर्वा ज्ञानार्थात् । "विद ज्ञाने" ( अ० प० "विद विचारणे" रु० आ० ) असुणादिकः । ( उ० ४–१८८ ) जातानि सर्वाणि भूतानि कर्माणि वा वेद लोकपालत्वात् । यद्वा जाते जाते सर्वस्मिन्भूतजाते ( प्राणिसमूहे ) विद्यते । "विद सत्तायां" ( दि० आ० ) जातं वेदो हविर्लक्षणं धनमैश्वर्यादि इतरद्वा यस्य सः । जातं वेदो विचारणं यस्य स वैश्वानरविषयापि च कृतविचार इत्यर्थः । जातमात्र एव विद्योतते प्रज्ञानस्वभावत्वात् । जातं वेदः प्रज्ञानं वा अस्य सः ॥ "अग्निर्वैश्वानरो वह्नि०० र्जातवेदास्तनूनपात्" इत्यमरः ॥

४. कम्पनवान् । परेभ्यो भयदाता वा । सोऽस्यास्तीति वाजी । मत्वर्थेऽत इनिः ( पा० ५–२–११५ ) "ओविजी भयचलनयोः" ( रु० प० ) अस्य वाजः पृषोदरादित्वात्साधुः । "वाजी वेजनवानि"ति भाष्यव्याख्यानात् । यद्वा वाजो बलम् ( निघं० २–९ ) ॥

५. "इस्तरणिः प्रसभो वेगो रयो जवो वाज" इति ( राज ) निघण्टुः । इति निघण्टुभाष्ये देवराजयज्वानः ॥

**रम्भः पिनाकम् इति** एते **दण्डस्य** नामनी भवतः ॥

तत्र तावत् रम्भपदं निर्वक्ति—

### रम्भ आरभन्त एनम् ॥

अस्खलनार्थम् **एनं** दण्डम् **आरभन्ते** इत्ययं **रम्भ** इत्युच्यते । "रभ राभस्ये" ( भ्वा० आ० ) आङुपसृष्टार्थेऽत्र वर्तते । ततः "पचाद्यच्" ( पा० ३-१-१३४ ) "रभेरश-ब्लिटोः" ( पा० ७-१-६३ ) इति नुम् । रभ्यते वा "अकर्तरि च कारके संज्ञायाम्" ( पा० ३-३-१९ ) इति घञ् । "रम्भा कदल्यप्सरसोर्ना वेणौ वारणान्तरे" इति मेदिनी ॥ वेणुरत्र दण्डमुपलक्षयति । वैणवस्यैव दण्डस्य स्मृतिषु धारणविधानात् । तथाच मनुः "वैणवीं धारयेद् यष्टिं सोदकं च कमण्डलुम्" इत्यादि ॥ ( ४-३६ )

अत्र निगममुदाहरति—

### "आ त्वा रम्भं न जिव्रयो ररम्भ ॥"

### इत्यपि निगमो भवति ॥

( ऋ० सं० ६-३-४५ य० वा० सं० ३-६१ )

"आ त्वा रम्भं न जिव्रयो ररम्भा शवसस्पते । उश्मसि त्वा सधस्थ आ ॥ ५ ॥" काण्वस्य त्रिशोकस्यार्षम् । ऐन्द्री गायत्री । अतिरात्रे महाव्रते च शस्यते । हे भगवन्निन्द्र ! वयं **त्वा** त्वां **जिव्रयः** जीर्णा ( वृद्धाः ) पृषोदरादिः । **रम्भं न** दण्डमिव **आररम्भ** आरभामहे । लडर्थे लिट् दीर्घः पदव्यत्ययश्चार्षः । "रभेरशब्लिटोः" ( पा० ७-१-६३ ) इति नुम्यनुस्वारपरसवर्णौ ॥ अवष्टम्भार्थं दण्डमिव त्वामाश्रयामहे । हे **शवसः** बलस्य ( निघं० २-९ ) **पते** पालक ! अत्र "षष्ठ्याः पतिपुत्रे" ( पा० ८-३-५३ ) त्यादिना विसर्गस्य सः ॥ **सधस्थे** समाने एकस्मिन्कस्मिंश्चित्स्थाने यज्ञायतनेऽवस्थितम् **त्वा** त्वाम् । **आ** आभिमुख्येन द्रष्टुं स्तोतुं वा **उश्मसि** उश्मः नित्यं कामयामहे । "वश कान्तौ" ( अ० प० ) लट् "इदन्तो मसि" ( पा० ७-१-४६ ) इति मस इगागमः । वशश्च संप्रसारणम् ( पा० ६-१-१६ ) ॥ ५ ॥

अथ प्रकृतं मन्त्रार्थमाह—

### आरभामहे त्वा जीर्णा इव दण्डम् ॥

व्याख्यातं मन्त्रार्थे ॥ (अत्र हि जीर्णा इति जिव्रय इत्यस्यार्थे) ॥

अथ पिनाकं निर्वक्ति—

### पिनाकं प्रतिपिनष्ट्येनेन ॥

**एनेन** दण्डेन **प्रतिपिनष्टि** हन्तीति **पिनाकम्** एष उच्यते ॥

अत्र निगममुदाहरति—

### "अवततधन्वा पिनाकहस्तः कृत्तिवासाः ॥"

( कृ० य० सं० ...... )

### इत्यपि निगमो भवति ॥

अस्य "एषते रुद्रभागस्तं जुषस्व तेनावसेन परोमूजवतोऽतीहि" इत्यादिः । अनेन मन्त्रेण त्रैयम्बकाः पुरोडाशाः वृक्षे आसज्यन्ते । हे भगवन् ! **रुद्र ! एष ते** तव **भागः तेन अवसेन** पथ्यदनेन ( पाथेयेन ) ( नि० १०-१७ ) **परः** परस्तात् । **मूजवतः** तन्नाम्नः पर्वतात् ( यत्र मम शत्रवो वसन्ति ) **पिनाकहस्तः** । दण्डहस्तः । अथच **कृत्तिवासाः** कृत्तिश्चर्म "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः । तद्वसनः । 'अवततधन्वा' अवततं आरोपितगुणम् धनुर्यस्य सः "धनुषश्च" ( पा० ५-४-१३२ ) इत्यनङ् । अधिज्यकार्मुकश्च सन् अतीहि अतिगच्छ अस्मच्छत्रून्हन्तुम् । मा अत्रैवस्थाः । "इण् गतौ" ( अ० प० ) अतिपूर्वस्ततो लोट् प्रार्थनायाम् ॥

केचित्तु—

"एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि ॥ अवततधन्वा पिनाकावसः कृत्तिवासा अहिंसन्नः शिवोऽतीहि ॥ ( शु० य० वा० सं० मा० शा० अ० ३ कं० ६५ )" इत्येवमुदाहरणतयोपन्यस्यास्य महीधरभाष्यमत्रोद्धरन्ति । तदेतद्भाष्यानमिमतं वेदितव्यम् । भाष्ये हि पिनाकहस्त इत्येवं शब्दघटितः पाठो दृश्यते ॥

### मेना ग्ना इति स्त्रीणाम् ॥

**मेनाः ग्नाः** इत्येते पदे स्त्रीणां नामनी भवतः ॥

अथात्र पर्यायाभिधानप्रसक्तं निरुच्यते—

### स्त्रियस्त्यायतेरपत्रपणकर्मणः ॥

**अपत्रपणकर्मणः** लज्जार्थस्य । **स्त्यायतेः** स्त्यै धातोः "स्त्यायतेर्ड्रट्" ( उ० ४-१६५ ) इति ड्रट् प्रत्यये डित्वाट्टिलोपे ( पा० ६-४-१४३ ) यलोपे ( पा० ६-१-६६ ) च ङीप् ( पा० ४-१-१५ ) लज्जन्ति हि ता नित्यं स्वैरेष्वपि पुंभ्यः ॥

अथ प्रकृतौ ( मेनाग्नाशब्दौ ) निर्ब्रवीति—

### मेनाः मानयन्त्येनाः ॥ ग्नाः गच्छन्त्येनाः ॥

**एनाः** स्त्रियः । **मानयन्ति** पूजयन्ति ( सत्कुर्वन्ति ) पुरुषाः शुभकृत्येष्विति मान्या मानान्मेनाः । "मान पूजायाम्"

१. सप्तम्युपपत्तये क्रियापदाध्याहार आवश्यकः । क्रियाधारस्यैवाधिकरणसंज्ञायां तत्र तस्या विधानात् ( पा० १-४-४५+२-३-३६ ) ॥

२. "उपसर्गबलेन योग्यक्रियाध्याहारः" शब्दवृत्तिनियमेन तावदत्राध्याहृतं दुर्गेण ॥

१. एष च शब्दसंघातयोः पाणिनीयैः पठ्यते ( भ्वा० प० ) निरुच्यते च स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्रीति ॥

२. स्वच्छन्देष्वपि "मन्दस्वच्छन्दयोः स्वैरः" इत्यमरः ॥

३. तथाच मनुः । "पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ॥ पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥५५॥ XXX तस्मादेताः

( चु० उ० ) कर्मणि घञ् ( पा० ३–३–१२१ ) पृषोदरादित्वादेत्वमुपधायाः ॥ गच्छन्ति मैथुनधर्मेण एना इतीमा ग्ना इत्युच्यन्ते । निपातनात्साधुः पृषोदरादित्वात् ॥

अथात्र निगमावुदाहरति—

"अमेनांश्चिज्जनिवतश्चकर्थ ॥"

( ऋ० सं० ४–१–२९ )

"ग्नास्त्वा कृन्तन्नपसोऽतन्वत" ॥

( सा० वे० कौ० शा० ता० ब्रा० १–१–८ )

इत्यपि निगमौ भवतः ॥

अनयोराद्यो यथा—"आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते अभि नः सचस्व । नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ ॥ ३ ॥ अवत्सोरात्रेयस्यार्षम् । त्रिष्टुप् । ऐन्द्री । हे हरिवः ! इन्द्र ! आ आभिमुख्येनास्मान्प्रति प्र प्रकर्षेण द्रव आगच्छ । "द्रु गतौ" (भ्वा० प०) प्रार्थनायां लोट् । विवेनः मा विगतकामो माऽभूस्त्वम् । हे पिशङ्गराते ! शोभनदान ! नः अस्मान्प्रति अभि आभिमुख्येन सचस्व सङ्गच्छ । "षच समवाये" ( भ्वा० उ० ) प्रार्थनायां लोट् । समवायः सम्बन्धः सम्यगवबोधो वा ॥ किञ्च त्वत् त्वत्तः प्रतिविशिष्टम् । अन्यत् देवतान्तरम् नहि अस्ति यद्वयं प्रतिपद्येमहि । हे भगवन् इन्द्र ! वस्यो ! वसुमन् ! वसुशब्दाद्धनार्थान्मत्वर्थीयो य्युः । त्वम् अमेनांश्चित् अस्त्रीकानपि ( स्तोतॄनात्मनः ) जनिवतः प्रजननसमर्थान् सङ्कल्पतः स्त्रीमतो वा चकर्थ करोषि कृतवान्वासि । यस्मात्त्वमेवंगुणविशिष्टस्तस्मात्त्वामेव वयं स्तुम इति भावः ॥ २ ॥

द्वितीयो यथा—"ग्नास्त्वा ( अ ) कृन्तन्नपसोऽतन्वत वयित्र्योऽवयन् वरुणस्त्वानयतु । देवि ! दक्षिणे ! बृहस्पतये वासस्तेनामृतत्वमशीय वयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे"

वासःप्रतिग्रहणमन्त्रः । तद्वास उच्यते—हे वासः वसन ! ग्नाः स्त्रियः । त्वा त्वाम् ( अ ) कृन्तन् कर्तितवत्यस्ताभिस्त्वं कर्तितः सूत्ररूपेण । सूत्राण्येव हि वायकैः समुतानि वास इत्युच्यते । एतेन कार्यकारणयोरभेद इति सांख्यमतमुपपन्नं भवति । अपसः अल्पकाः कुविन्दपुत्रकास्त्वाम् अतन्वत विस्तारितवन्तः ( वयनाय ) वयित्र्यः साधुर्वयनकारिण्यः कुविन्दपुत्र्यः । अवयन् उतवत्यः ( वस्त्ररूपेण कृतवत्यः ) तदेवमभिनिष्पन्नं त्वा त्वां वरुणः देवताविशेषः ( अपामधिपतिः ) बृहस्पतये बार्हस्पत्ये आत्मनि व्यवस्थिताय मह्यम् आनयतु सदक्षिणमुदकपूर्वकमर्पयतु । हे देवि ! दक्षिणे ! त्वामेवमधिगम्याहम्—अमृतत्वम् अमृतभावम् ( यथाभिलषितम् ) अशीय अश्नुयाम् ( प्राप्नुयाम् ) तेन यथाविधि तवार्पणेन दात्रे यजमानाय वयः अन्नम् ( निघं० २–७ ) भूयात् भवतु । मह्यं च मयः सुखम् ( निघं० ३–६ ) भूयात् ॥

## "शेपो वैतस" इति पुंस्प्रजननस्य ॥

शेपः वैतसः इति पुंस्प्रजननस्य पुंसः प्रजनन—( प्रजासंपादन— ) साधनस्य ( लिङ्गस्य ) नामनी भवतः ॥

अथ शेपपदं निर्वक्ति—

## शेपः शपतेः स्पृशतिकर्मणः ॥

---

सदा पूज्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ ५९ ॥" ( अ० ३ )

१. वेनतेः कान्तिकर्मणः ( भ्वा० उ० ) "पुंसि संज्ञायां घः" ( पा० ३–३–११८ ) इति घप्रत्यये वेनशब्दः कामार्थकः ( काम इच्छा ) विगतो वेनः कामो यस्य सः । अत्र माङो वलाक्रियाध्याहारः ॥

२. पिशङ्गशब्दः पिङ्गलार्थः कोशेषु पठितोपीह साधर्म्याच्छोभनार्थः । पिशङ्गं वासः सुवर्णं वा अतिशोभनं भवतीति । तथा च "गुणिलिङ्गास्तु तद्वती"त्यभिधानात्पिशङ्गा रातिर्दानं यस्य सः । "रा दाने" ( अ० प० ) "क्तिन्भावे" ( पा० ३–३–९४ ) ॥

३. यद्यप्ययं पाणिनिना मुखतो नोपनिबद्धस्तथापि "तद्धिताः" ( ४–१–७६ ) इति बहुवचननिर्देशादविहिता अपि इन्टिकआदयः केचनोह्यन्ते । अल्पः शकटः शकटिः । अल्पो ग्रामो ग्रामटिका । एवमिह्यापि । इति व्यक्तं मनोरमायाम् ॥

१. वासो वसनम् ( वस्त्रम् ) अत्र ( मन्त्रे ) अनुषङ्ग आद्यन्तयोः क्रमेण "देवस्त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि०"—० । ( ग्नास्त्वा० ग्रहीत्रे )०—० । "क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् । कामेन त्वा प्रतिगृह्णामि कामैतत्ते" इति । हे वासः ! सवितुरादित्यस्य प्रसवे अभ्यनुज्ञायां सत्यां तेन प्रसूतोऽभ्यनुज्ञातोऽतस्त्वाम् । अश्विनोर्देवभिषजोर्देवयोः (नीरुग्भ्यां) बाहुभ्यां प्रतिगृह्णामि ( नैताभ्यामेव बाहुभ्यामपितु ) पूष्णः देवस्य आदित्यस्यान्यस्य वा ( पूततमाभ्यां ) हस्ताभ्याम् । इति आद्यार्थः । कः प्रजापतिरयं दाता कस्मै प्रजापतय एवादात् ददाति । एवं दाता प्रजापतिः प्रतिग्रहीता च । किञ्चैवं कामः कामायैवादाद्ददाति । पुण्यं भविष्यतीत्यनेन कामेन दाता ददाति । आच्छादनं भविष्यतीतीतरः ( प्रतिग्रहीता ) प्रतिगृह्णाति । एवं कामो दाता कामः प्रतिग्रहीता इति स काम एवोच्यते । हे काम ! एतत्ते वासः । तस्मात्त्वं सकामो भवेति ॥

२. अप्रसवधर्माणः अनुपजातपुंस्त्वाः ( प्रजननायासमर्थाः ) पिता ह्येव हि प्रसूयते पुत्ररूपेण । तथाच श्रुतिः "पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः" इति ॥

३. ह्रस्वार्थेऽत्र कन् ( पा० ५–३–८६ ) ॥

४. वयतेस्तन्तुसन्तानार्थात्ताच्छील्यविशिष्टे कर्तरि तृन्नन्तेत्यमर्थः । ( पा० ३–२–१३४+१३५ ) ॥

५. अङ्गायमर्थो बोध्यते ॥

**स्पृशतिकर्मणः** स्पृशत्यर्थस्य **शपतेः** शपधातोः[1] ( भ्वा० उ० ) करणे घञ् ( पा० ३–३–१९ ) पृषोदरादित्वादेत्वम् । शपति स्पृशत्यनेन स्त्रियमिति शेपः । शाकटायनीयैस्तु "वृशी-ङ्भ्यां पुट् च"–( उ० ४–२०१ ) इत्यसुनि शेते ( रेतः-पाते जाते ) इति शेप इत्युक्तम् । "शिश्नो मेढ्रं मेहनशे-(फ)पसी" इत्यमरः ॥ एतन्मते सान्तमेतत् ॥

## वैतसो वितस्तं भवति ॥

**वितस्तं** विततरं वितस्तिमितं वा **भवतीति** विततिक्रियायोगाद्वितस्तिमानयोगाद्वा **वैतसः** । उपक्षीणतरं हि तद्भवति प्रागनुस्सरणात्स्त्रियाः । पृषोदरादित्वात्साधुः ॥

**"यस्यांमुशन्तः प्रहराम शेपम्"**

( ऋ० सं० ८–३–२७ )

**"त्रिःस्म माह्नः श्नथयो वैतसेन ॥"**

( ऋ० सं० ८–५–१ )

## इत्यपि निगमौ भवतः ॥

**यस्यामिति** । "तां पूंषञ्छिवर्तमा मेरयस्व यस्यां बीजं मनुष्या3वपन्ति । या नं ऊरू उशती विश्रयांते यस्यांमुशन्तः प्रहराम शेपम् ॥ २ ॥" सूर्याया[2] आर्षम् ॥ कन्याप्रथमोपगमे विनियोगः ॥ हे भगवन् **पूषन्** ! पिष्टाद देवविशेष ! **शिवतमाम्** अतिशयेन शिवां कल्याणकरीं **तां** योनिम् **आ** समन्तात् **ईरयस्व** उद्गमय बीजग्रहणाय सुपुष्टां कुरु । **यस्यां** मनुष्या **बीजं** शुक्रम् **वपन्ति** गर्भाधानविधिना प्रक्षिपन्ति । "डुवप् बीजसन्ताने" ( भ्वा० प० ) बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च ॥ **या** इयम् स्त्री **उशती** कामयमाना प्रजननम् **नः** अस्माकम् **ऊरू विश्रयाते** व्याश्रयते विविधप्रकारमाश्रयते । आकारस्य परै[3]प्रयोग आर्षः । **यस्याम्** योनौ **उशन्तः** पुत्रजन्म कामयमाना वयमिमम् **शेपम्** लिङ्गं **प्रहराम** प्रक्षिपेमेत्यर्थः ॥ आशंसायां लोट् ॥ २ ॥

**त्रिःस्मेति** ॥ "त्रिः स्मा॒ह्नः श्नथयो वैत॒सेनो॒तस्म॒मेऽव्य॑त्यै पृणासि । पुरू॑रवोऽनु॒ ते॒ केत॑माय॒ राजा॑ मे वीर त॒न्व१॒स्तदा॑सीः ॥ ५ ॥" उर्वश्या आर्षम् । त्रिष्टुप् । सा हि पुरूरवसा मागास्तिष्ठेत्युक्ता सती अनयर्चा पुरूरवसं प्रत्यब्रवीत् । हे **पुरूरवः** ! **त्रिःस्माह्नः** त्रिरह्नो मांपूर्वं[1] ( त्रिरात्रं यावत् ) **वैतसेन** शिश्नदण्डेन **श्नथयः** अताडयस्त्वम् । **उतस्म मे** अपि च यावानभिलाषैः[2] कश्चन मम मनस्यासीत्पूर्वं तं सर्वमेव त्वम् **अव्यत्यै पृणासि** व्यतिपूरितवानेवासि । अतस्त्वाहम् । **केतम्** चेतसौ[3] अनुकूलासती **अनुआयम्** अनुगतवती । किञ्च हे **वीर** ! **तदा** तस्मिन् काले त्वम् तथानुकूलाया **मे** मम **तन्वः** देहस्यास्य **राजा** ईश्वरः **आसीः** । न तथेदानीं वर्तसे यथापूर्वमतो याम्येव । पुनस्त्वयेदानीं नाहं समेष्ये । समयभैङ्गा[4]दिति भावः ॥ ५ ॥

## "अयैने"–त्युपदेशस्य ॥

**अया एना इति एते उपदेशस्य** ( तद्धटके ) **नामनी** भवतः । न पुनरुपदेशः स्त्रीपुंनपुंसकेषु भिन्नो भवतीति त्रिष्वप्युदाहार्ये । तत्र—

**"अ॒याते॑ अग्ने स॒मिधा॑ विधेम॒ ॥"**

( ऋ० सं० ३–४–२५ )

## इति स्त्रियाः ॥

"अ॒या तें अग्ने स॒मिधा॑ विधेम॒ प्रति॒ स्तोमं॑ श॒स्यमा॑नं गृभाय । दहा॒शसो॑ र॒क्षसः॑ पा॒ह्य१॒स्मान् द्रु॒हो नि॒दो मित्रमहो अव॒द्यात् ॥ ५ ॥" इति एषः **स्त्रियाः** उपदेशः ॥

---

१. यद्यप्ययमाक्रोशे पठितस्तथापीह भाष्यकारेण ( यास्केन ) स्पृशत्यर्थं एवमभिहितः ॥

२. सूर्यस्य स्त्री देवता सूर्या । चावत्र स्त्रीत्वद्योतकः ( पा० ४–१–४८ वा० ) ॥

३. "वर्णागमो वर्णविपर्ययश्चे"ति नैरुक्तसमया–"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेने"ति पाणिनीयाच्च साधुरयम् ॥

---

१. सायणस्तु–अह्नः अहनि त्रिस्त्रिवारं "द्वित्रिचतुर्भ्यः सुच्" ( पा० ५–४–१८ ) श्नथयः स–अश्नथयः अताडयः "कृत्वोऽर्थ-प्रयोगे०" ( पा० २–३–६४ ) इति कालवाचिनोऽहश्शब्दादधिकरणे षष्ठी । उत–अपिच, स्मेतिपूरणः । अव्यत्यै–या सपत्नीभिः सह पर्यायेण पतिमागच्छति साऽव्यती तस्यै मे–मह्यं पृणासि पूरयसि । एवं बुद्ध्वा हेपुरूरवः । ते केतं गृहम् अन्वायम् अन्वगमम् । पूर्वं हे वीर ! राजा त्वं मे तन्वः शरीरस्य तत्–तदाऽसीः अभवः सुखयितेति शेषः । परमप्येवं मन्तव्यं किमिति कातरो भवसीत्येवं व्याख्यत् । एतन्मते एष संवादः कुरुक्षेत्रे पुनर्दर्शनकालिकोऽवगन्तव्यः ॥

२. अत्रोतशब्दोऽपिचेत्यर्थकः । स्मे त्यतीतार्थद्योतकः । मे इत्येष ससम्बन्धितया सर्वमाक्षिपति ॥

३. तृतीयार्थे सोरम् । केतशब्दः प्रज्ञार्थे ( निघं० ३–९ ) पठितः । यद्वा "कित निवासे" इत्यस्याधिकरणघञन्तस्य केतशब्दो गृहार्थः । तथाचानुशब्दोऽनुकूलार्थः । आयमागमम् ॥

४. पुरूरवसोर्वंश्या सहैष समय आसीद्यदहं नग्नं त्वामन्यत्र मैथुनादालोक्य सद्यो देवलोकं यास्यामि । रक्षणीयौ चेमावुरणकौ वत्सभूतौ मम । घृतमेव च भोक्ष्य इति । तत्र देवैस्तदानयनायास्या राज्ञासह सुरतावसाने रात्रावन्धतमसाच्छन्नायामुरणकौ हृतौ तच्छब्दमुपश्रुत्य तयाऽसकृद्राजाधिक्षिप्तो नग्न एव तावुधयौ देवैश्च विद्युत्प्रकाशिता तया च तथाविधो ( नग्नः ) राजोर्वंश्याऽलोकित इति तद्व्याजेन सा सत्वरं देवलोकं ययौ ॥ इत्येषाऽऽख्यायिका पुराणेतिहासयोरसकृदभिहिता ॥

वामदेवस्यार्षं त्रिष्टुप्। रक्षोघ्ने कर्मणि विनियोगः। हे भगवन्! **अग्ने! अया** अनया। वर्णलोप आर्षः। **समिधा ते** तव **विधेम** परिचर्या वयं कुर्मः। स त्वमेवमस्माभिः परिचर्य-माणः **शस्यमानम्** अस्माभिः उच्चार्यमाणमिमं **स्तोमं** स्तोत्रं **प्रतिगृभाय** प्रतिगृहाण। ग्रहेर्लोटि "छन्दसि शायजपि" (पा० ३-१-८४) इति श्नः शायजादेशः। "हृग्रहोर्भश्छन्दसि" (वा०) इति हस्य भः॥ अथ च–हे **मित्रमहः!** मित्राणां पूजयितः। मित्रैर्वा पूजनीय! **अशसः** अशंसितॄनस्तोतॄन् आत्म-नोऽस्माकं च **द्रुहः** द्रोग्धॄन् **निदः** निन्दितॄंश्चैतान् **रक्षसः** राक्षसान् **दह** भस्मीकुरु। किञ्च **अवद्यात्** अवन्दनीयात् कर्मणः पापात् **पाहि** रक्ष **अस्मानित्यर्थः**॥ ५॥

## "एना वो अग्निम्॥"

(ऋ० सं० ५-२-२१)

## इति नपुंसकस्य॥

"एना वो अग्निं नमसोर्जो नपातमाहुवे। प्रियं चेतिष्ठम-रतिं स्वध्वरं विश्वस्य दूतममृतम्॥ १॥" इति एषः। **नपुंसकस्य** उपदेशः॥ वसिष्ठस्यार्षं बृहती। प्रातरनुवाका-श्विनयोः शस्यते। हे ऋत्विग्यजमानाः! **वः** युष्माकम्। **एना** अनेन अभ्युद्यतेन। **ऊर्जः** अन्नस्य **नपातं** नप्तारं पौत्रम् अन्नच–**नमसा** अन्नेन (निघं० २-८) **प्रियम्** इष्टम् देवानाम् **चेतिष्ठम्** अतिशयेन चेतनावन्तम् **अरतिम्** अलंमतिं पर्याप्तमतिं। पृषोदरादित्वात् अत्र वर्णलोपो वर्णविपर्य-यश्च। **स्वध्वरम्** शोभनोऽध्वरो येन हुतेन तम्। **विश्वस्य** सर्वस्यापि यजमानगणस्य (एव योऽधिकृतः कर्मणि तस्य) **दूतम्** देवान् प्रति द्योतयितारम् (यजमानस्य कामान् बोध-यितारम्) **अमृतम्** अमरणधर्माणम् **अग्निम् आहुवे** अहमाह्वयामि युष्माकमाशासमृद्धये। स चाहूतो देवान्प्रति दौत्यं करिष्यतीति भावः॥ १॥

## "एना पत्या तन्वं१ संसृजस्व॥"

(ऋ० सं० ८-३-२५)

## इति पुंसः॥

"इह प्रियं प्रजया ते समृध्यतामस्मिन्गृहे गार्हपत्याय जा-गृहि। एना पत्या तन्वं१ संसृजस्वाधाजिव्री विदथ मावदाथः ॥ २॥" इति **एष पुंस** उपदेशः॥ सूर्याया आर्षम्। जगती। वधूरनया गृहान्प्रवेक्ष्यते। सोच्यते। हे वधु! **इह** अस्मिन्नेव गृहे **प्रजया** सन्तत्या युक्तायाः। उपलक्षणे तृतीया (पा० २-३-२१) **ते** तव यत् **प्रियं** तत् **समृध्यताम्**। किञ्च **अस्मिन्गृहे** त्वं **गार्हपत्याय** गृहपतिभावाय (गृहपत्नीत्वाय) **जागृहि** अवहिता भव। किञ्च **एना** अनेन **पत्या** भर्त्रा सह **तन्वं** तनुं "अमिपूर्वः। वाच्छन्दसी"ति (पा० ६-१-१०७+८) वा पूर्वसवर्णः। **संसृजस्व** मिश्रीकुरु। **अधा** अथैवं सौम-नस्ये वर्तमानौ **जिव्री** जीर्णौ यावत् तावत् परस्परेणावियुज्य-मानौ **विदथं** यज्ञम् **आ** आभिमुख्येन वर्तमानौ सन्तौ यज्ञ-सम्बन्धीनि वचांसि **वदाथः** वदतं युवामित्याशीः॥ २॥

## "सिषक्तु–सचत" इति सेवमानस्य॥

**सिषक्तु–सचते इति** एते **सेवमानस्य** सेवाकर्तुः (क्रियाविषयभूते) नामनी भवतः। अत्र धात्वर्थमात्रं विवक्षितं प्रत्ययार्थोऽविवक्षितः। पाणिनिरप्याह "षच् सेचने सेवने च" (भ्वा० उ०) इति॥

अत्र निगममुदाहरति। अर्थतोऽनुवदति चामुम्—

## "स नः सिषक्तु यस्तुरः॥"

(ऋ० सं० १-१-३४)

## स नः सेवतां यस्तुरः॥

"यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्धनः। स नः सिषक्तु यस्तुरः॥ २॥" मेधातिथेरार्षम्। गायत्री अभ्यु-पस्थाने विनियुक्ता। हे भगवन्! ब्रह्मणस्पते! **यः रेवान्** रयिवान् (धनवान्) यलोप आर्षः। **अमीवहा** रोगहा "अम रोगे" (चु० प०) "अमेरीवः" इतीवप्रत्ययः। अमीवं हन्तीत्यमीवहा। क्विप्। "अनुनासिकस्य क्विझलोः क्ङिति" (पा० ६-४-१५) इति नस्यात्वम्॥ **वसुवित्** वसुनो धन-स्यापूर्वस्यापि वित्। लब्धा। "विद्लृ लाभे" (तु० उ०) क्विप् (पा० ३-२-७६) यश्च **पुष्टिवर्धनः** धनपोषस्य वर्धयिता **सः नः** अस्मान् **सिषक्तु** सेवताम्। पुनर्युष्मत्प्रसादात् **यः तुरः** तूर्णकारी (क्षिप्रकर्ता) पटुरित्यर्थः "तुर् त्वरणे" (जु० प०) "इगुपधलक्षणः" (पा० ३-१-१३५) कः॥ २॥

## "सचस्वा नः स्वस्तये॥"

(ऋ० सं० १-१-२)

## सेवस्व नः स्वस्तये॥

---

१. "णिदि कुत्सायाम्" (भ्वा० प०) क्विप्। "आगम-शास्त्रमनित्यम्" (प० ९५) इति नुमागमाभावः॥

२. अन्नेनाहुतिभूतेनादित्यमण्डलमनुविश्यापः सृज्यन्ते ताभ्य-श्चाग्निरित्यन्नानां स पौत्र उच्यते। "अब्भ्योऽग्निर्विप्रतः क्षत्र"मिति भागवतम्। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदि-त्याज्जायते वृष्टि" रिति स्मृतिश्चात्र प्रमाणम्॥

३. "एना वो" "एना पत्ये"–त्युपक्रान्तयोर्द्वयोरप्येक एव एनाशब्दो नमसा, पत्ये, त्युपपदविशेषादेकस्य नपुंसकविषयत्वम-परस्य पुंविषयत्वमुपपादयति॥

१. क्रियापदयोः सेवमानपदे च। तेन सचस्वेत्युदाहरण-मप्युपपन्नं भवति। इत्थं च क्वचिद्धात्वर्थस्याविवक्षणं क्वचिच्च प्रत्य-यार्थस्य। आद्योदाहरणं "रुजार्थानां भाववचनानामज्वरेः" (पा० २-३-५४) अत्र वचधात्वर्थ एवाविवक्षितो ल्युप्रत्ययार्थश्च कर्ता विवक्षित इति भावकर्तृकाणामित्येवमर्थो भाष्यसंमतः॥

२. उक्तं चाहरकाणां ब्राह्मणस्पत्याभिरग्निमुपातिष्ठेतेति। तत एवेयं ब्राह्मणस्पत्या ऋक्॥

"स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ ४ ॥" मधुच्छन्दस आर्षम् । गायत्री । अभ्युपस्थाने विनियोगः । हे भगवन्! अग्ने! यं त्वां वयं परिचरामः सः त्वम् नः अस्माकम् सूनवे पुत्राय पिता इव सूपायनः सूपगमनः ( सूपचारः ) भव सूपचीर्णश्च नः अस्मान् स्वस्तये स्वस्त्ययनार्थं आ सचस्व आ सेवस्व । तथा २ आचर यथा वयं सुप्रीता भवामेत्यर्थः । सेवा हि प्रीत्यनुकूलो व्यापारः ॥ ४ ॥

निगमप्रसक्तमुच्यते—

**स्वस्तीत्यविनाशिनाम । अस्तिरभिपूजितः । सु अस्तीति ॥**

स्वस्ति इति एतत् अविनाशिनोऽर्थस्य नाम । यद्वा-अविनाशस्यैव नाम । इत्येवं तत्त्वमुक्त्वा व्युत्पत्तिं ब्रवीति-अस्तिः इत्ययम् अभिपूजितः । सुपूर्वः सन्नुच्यते-सु अस्तीति ॥

**"भ्यसते रेजत" इति भयवेपनयोः ॥"**

भ्यसते रेजते इत्येते भयवेपनयोः नामनी भवतः ॥

**"यस्य शुष्माद्रोदसी अभ्यसेताम् ॥"**

( ऋ० सं० २-६-७ )

**"रेजते अग्ने पृथिवी मखेभ्यः ॥"**

( ऋ० सं० ५-१-८ )

**इत्यपि निगमौ भवतः ॥**

यस्येति । "यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥" गृत्समदस्यार्षम् । त्रिष्टुप् । व्याख्यास्यते चैतदुपरिष्टात् ( नि० १०-१० ) इन्द्रवरप्रदानादैन्द्रं रूपमुपगतं गृत्समदं मरुद्गणैर्विना कुतोऽयमिदानीमेकः शक्यो हन्तुमिति जिघांसवोऽसुराः किल परिवव्रिरे । स किल भीतोऽनेनेन्द्रं तुष्टाव । आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयाञ्चक्रे समासतो मन्त्रार्थस्तु-हे जना( सः ) असुराः! यो जातो जायमानएव सन्प्रथमः प्रधानभूतो देवानाम् मनस्वानुदारमनाः देवो द्योतमानः सन्क्रतुना वृत्रवधादिलक्षणेन कर्मणा देवानन्यान्पर्यभूषत् पर्यभवत् । भवतेर्व्यत्ययेन क्सः । यस्य शुष्माच्छारीराद्बलात् ( निघं० २-९ ) रोदसी द्यावाभूमी ( निघं० ३-३० ) अभ्यसेताम् अबिभीताम् अवेपेतां वा, नृम्णस्य सेनालक्षणस्य बलस्य ( निघं० २-९ ) मह्ना महत्त्वेन युक्तः स इन्द्रो नाहमिति ॥ १ ॥

१. यथा पिता कुतश्चनागतः पुत्राय सूपायनं ( सन्देशवस्तु ) प्रयच्छति तद्वत् ॥

२. कल्याणाय प्रसत्तये वा ॥

३. तथाचात्र पाठभेदः ॥

रेजत इति । "प्रचित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् । ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥ ४ ॥" भरद्वाजस्येयमार्षम् । त्रिष्टुप् । चातुर्मास्ये वैश्वदेवे पर्वणि याज्या । "अग्निमारुतीं पृश्निमालभेत वृष्टिकामः" इत्यस्य पशोः षड्चें चेयम् । हे अग्ने! ( त्वत्सहायभूता ऋत्विजस्त्वं च एवं यूयम् ) गृणते शब्दंकुर्वते तुराय त्वरमाणाय स्वतवसे स्वात्मबलावष्टम्भिने स्वभूतबलाय वा मारुताय मरुतां गणाय चित्रं दर्शनीयम् अर्कम् अन्नम् ( नि० २-७ ) प्रभरध्वं प्रभरत । ये मरुतः । सहांसि शत्रूणां बलानि ( निघं० २-९ ) सहसा स्वबलेन सहन्ते अभिभवन्ति । "षह मर्षणे" मर्षणं क्षमा अभिभवश्चेति भट्टोजिदीक्षिताः । ( येभ्यः ) मखेभ्यः मंहनीयेभ्यः ( महद्भ्यः ) पृथिवी रेजते भयात्कम्पते ॥ ४ ॥

**द्याव[...]वीनामधेयान्युत्तराणि चतुर्विंशतिः ।**

यौश्च [...] च द्यावापृथिव्यौ "दिवो द्यावा" ( पा० ६-३-२९ ) [...] दिवोऽद्यावादेशः । तयोर्नामधेयानि नामानि उत्तराण[...] उपक्रान्तेभ्यः प्रपित्वे इत्येवमादिभ्यः षड्विंशतेः । चतुर्वि[...]: । स्वधे पुरन्धीत्येवमादीनि २४ । तत्र सर्वस्यास्य भूतग्राम[...]ारयित्र्यौ स्वधे । पुरन्धी पुरु बहूनि धारयित्र्यौ इत्येवम[...]ाज्यम् ॥

**त[...]षा भवति ॥ ४ ॥ (२१)**

द्वि[...]वनेन युक्तानि द्यावापृथिव्योर्नामानि । तयोः साहचर्याऽव्यापिका एषा अनुपदमभिधास्यमाना ऋक् भवति । ( साह[...]र्ये हि सति द्विवचनयोग उपपन्नरूपो भवति नाम्नाम् ) ॥ ४ ॥ (२१) ॥

**"कतरा पूर्वा कतराऽपराऽयोः कथा जाते कवयः को विवेद ॥ विश्वं त्मना बिभृतो यद्ध नाम विवर्तेते अहनी चक्रियेव ॥"**

( ऋ० सं० २-५-२-१ )

१. यथा लोके बहुष्वेककार्यकरेषु मुख्यमेकं संबोध्य यूयमे[...]वं कुरुतेति प्रार्थना । तद्वदत्रापि मुख्यमग्निमेकमेव संबोध्य प्र[...]भरध्वमिति बहुवचनप्रयोगः ॥

२. अत्र "चित्रमर्कं चायनीयं स्तोमं गृणते स्तुवते । स्तन[...]येत्नुशब्देन "कृत्स्नं जगदुपशब्दायत" इति । "अग्नये मारुताय [...]च गणाये"ति स्तोतॄन् संबोध्य ततोऽग्निं ब्रवीति, हे भगवन्नग्ने! [...]णु त्वमप्येतमर्कमेवंगुणयुक्तैर्मरुद्भिः सहे"ति च दुर्गो व्याख्यत् ॥

३. मारुतायेति तद्धितवृत्तावन्तर्भूतानामपि मरुतां बुध्या प्रविभागात् य इति प्रत्यवमर्शः । यथा महाभाष्ये "अथ शब्दा-[...]शासनम् केषां शब्दानामि"ति । यथा वा लोके राजपुरुष तु[...]के कस्य राज्ञ इति ॥ इत्यु[...]

**कतरेति** । अगस्त्यस्यार्षं त्रिष्टुप् । पृष्ठ्याभिप्लवयोः षष्ठेऽहनि महाव्रते च तृतीये सवने वैश्वदेवे शस्त्रे शस्यते । स्वयमेव तावद्वितर्कयन्नुत्पन्नसंशयो मन्त्रदृक् ब्रवीति **अयोः** अनयोः । नकारलोप आर्षः । द्यावापृथिव्योर्मध्ये **कतरा पूर्वा** पूर्वमुत्पन्ना **कतरा अपरा** पश्चाद्भाविनी ? न हि पौर्वापर्यमनयोः स्फुटं लक्षयितुं शक्यते । उभयोरविनाभावेन सहैव वर्तमानत्वादिति भावः । तथा **कथा** केन प्रकारेण हेतुना वा एते **जाते** अभूताम् । अत्र "प्रकारवचने थाल्" ( पा० ५-३-२३ ) इति किमः प्रकारवृत्तेस्थाल्प्रत्ययः । किमः कः । ( पा० ७-२-१०३ ) । किं पौर्वापर्येण उत युगपदिति । किंवाऽनयोरुत्पादकमिति वार्थः । हे **कवयः** ! अतीन्द्रियज्ञा यूयमिति वदत । कः कश्चिदपि अनयोः पौर्वापर्यं कारणं वा **विवेद** ? विशेषेण विविच्य वा जानाति ? न कोऽपि । अज्ञाने कारणमाह—**यत्** यस्मात्खलु हेतोः **नाम** ... **विश्वं** कृत्स्नमपि जगदविशेषेण **त्मना** आत्मनैव ... रपेक्ष्यैव "मन्त्रेष्वाङ्यादेरात्मनः" ( पा० ६-४-१४१ ) इत्यात्मन आकारलोपः ॥ **बिभृतः** धारयतः । **ह** इत्येतत् पादपूरणः ॥ "तुहिचस्महवै पादपूरणे" इत्यमरः । यद्वा यद्ध ... यत्किञ्चित्पदार्थजातमस्ति विश्वं तत्सर्वमात्मना बिभृतः । अनेन यत्कारणं ब्रूमस्तदप्याभ्यामेव भ्रियत इति कारणत्वाभावः प्रतिपादितः । इत उत्तरेण पौर्वापर्याभाव उच्यते । **अहनी** अहोरात्रे । एतयोः द्यावापृथिव्योः **चक्रियेव** ... **इव** ( चक्रयुगलमिव ) **विवर्तेते** अवियोगेन संयुक्ते ... ) इत्यर्थः ॥ १ ॥

अथैतद्भाष्यम्—

**कतरा पूर्वा कतरा परैनयोः कथं जाते कवयः ! क एने विजानाति सर्वमात्मना विभृतो यद्धैनयोः कर्म विवर्तेते चैनयोरहनी अहोरात्रे चक्रयुक्ते इव ॥**

मन्त्रव्याख्यानेनैव निगदव्याख्यमेतद्भाष्यम् ॥

**इति द्यावापृथिव्योर्महिमानमाचष्ट आचष्टे ॥ ५ ॥ २२ ॥**

इति श्रीमद्यास्कमु० प्र० निरुक्ते शास्त्रे नैघं० काण्डे तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

**इति अनेन मन्त्रेण द्यावापृथिव्योर्महिमानं महा-** भाग्यं मन्त्रदृगाचष्टे ब्रवीति ॥ अध्यायान्ते पदद्विरुक्तम् । एवमेतन्नैघण्टुकं प्रकरणं समाप्तम् ॥ ३ ॥ ४ ॥ * ॥

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघण्टुककाण्डे तृतीयाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ ३ ॥ ४ ॥**

---

## अथ चतुर्थोऽध्यायः ।

### अथ नैगमकाण्डम् ( द्वितीयम् )

अथ प्रकरणद्वयस्यापुनरुक्तार्थत्वख्यापनाय व्यासेनोक्तमेवार्थं समासतः प्रतिजानीते—

**एकार्थ,—मनेकशब्द,—मित्येतदुक्तम् ॥**

एकोऽर्थः पृथिव्यादिरनेकेषां गवादिशब्दानां यत्र तत्त्वभूतः कथ्यते **तदेकार्थम्** । अथवा अनेके शब्दा गवादय एकस्य गवादेरर्थस्य यत्राभिधायिनः कथ्यन्ते **तदनेकशब्दं** नाम प्रकरणम् नैघण्टुकाख्यम् । **इत्येतदुक्तं** पुरस्तात् ॥

**अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामः ॥**

१. "प्रतिज्ञाभ्यासो निगमः" इत्येतन्निगमलक्षणरक्षणायेति बोध्यम् ॥

२. तथाचोक्तम्—

"विस्तीर्य हि तमज्ञानमृषिः संक्षेपतोऽब्रवीत् ॥
इत्थं हि विदुषां लोके समासव्यासधारणम् ॥१॥" इति ॥

३. "एतावन्तः समानकर्माणो धातवः । एतावन्त्यस्य सत्त्वस्य नामधेयानि" इत्यनेन वाक्येन । यच्चैतत् "गौरिति पृथिव्या नामधेयम्" इत्यत आरभ्य नामाख्यातोपसर्गनिपातानां प्रपञ्चनं, तत्त्वभेद-पर्याय-संख्या-सन्दिग्धोदाहरण-तन्निर्वचन-व्याख्या-प्रविभागेनोक्तं, स एष नैघण्टुकस्य प्रकरणस्य निगमव्याजेन सर्वथाप्यर्थः संक्षेपत उक्तः । शास्त्रसंबन्धश्चैवमनुसृतो भविष्यति । प्रकरणद्वयस्य चैवमपुनरुक्तार्थता भविष्यतीत्यनेनाभिप्रायेण त्रैकार्थमनेकशब्दमित्युक्तम् ॥ अत्र ( पूर्वोक्ते प्रकरणे नैघण्टुके ) यद्यपि—गतिकर्मणां द्वाविंशतिशतसंख्यानामविशिष्टं गमनमेकोऽर्थ उक्तस्तथापि प्रसिद्ध्यनुरोधाय "कसति" "लोटते" "श्चोतते" इत्येवमादयः प्रतिनियतसत्त्वगमनविषया एव द्रष्टव्याः । तद्यथा—य एवोत्कटिक उरसा वा गच्छति स एव कसतीत्युच्यते, नेतरो य ऊर्ध्वो गच्छति । तथाच य एव निम्नेन प्रदेशेन कश्चिदचेतनो लोष्टादिरन्यो वा चेतनः पुरुषादिरकामकारेण गच्छति, स एव लोटत इत्युच्यते । नान्यः । एवं यदेव द्रवद्रव्यं किञ्चित्स्त्रवति तदेव श्चोतत इत्युच्यते नान्यत् । एवं गच्छति कर्मणामेकार्थत्वेऽपि सति प्रसिद्धे सामर्थ्याद्गमनविशेषेषु यथार्थं विनिवेशो द्रष्टव्यः । देशान्तरप्राप्तिस्तु चलनपूर्विका सर्वेषां समानं कार्यमित्यत एकार्थत्वमेषामुक्तम् । सामान्यशब्दाश्च कचिद्विशेषवाचिनो भवन्ति, विशेषशब्दाश्च क्वचित्सामान्यवाचिनस्तदप्युपेक्षितव्यम् ॥

---

१. अहं त्वेतावच्छक्नुयामागमादकुं यस्मादुद्धृतस्य हिरण्मयस्याण्डस्यैते शकले इति । एवं ह्याह—"ते अण्डकपाले रजतं च सुवर्णं चाभवतां, तद्यत् रजतं, सेयं पृथिवी, यत्सुवर्णं, सा द्यौः"[२] इति ॥ तेन ज्ञायते युगपदेवैते स्यातामिति दुर्गो व्याख्यत् ॥

२. चक्रशब्दान्मत्वर्थे घः । घस्येयादेशः । व इवार्थः । इति ... साधनं कथञ्चिदत्सोढम् ॥

**अथ** इदानीं यद्व्याख्यातव्यं तत्समासतः प्रतिजानीते **यानीति**। अनेके अर्था उपदयादानादयः येषां दयत्यकूपारादीनाम् पदानाम् तान्य**नेकार्थानि** पदानि । एकश्च शब्दो-दयत्यादिः येषां व्युपदयादीनां तान्**येकशब्दानि** अर्थजातानि । एतावतामर्थानामिदमभिधानमित्येवमादिना पुरस्तात्समासतः सूचितानि, **तानि अतः** **परम्** **अनुक्रमिष्यामः** आनुपूर्व्येण वर्णयिष्यामो "व्याख्ययेे"ति शेषः ॥ किंलक्षणा पुनरिह व्याख्या ? इत्येतदुच्यते—

"तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि ।
निगमो निर्णयश्चेति व्याख्येयं नैगमे पदे ॥ १ ॥" इति ॥

आह—न केवलमनेकार्थान्येवास्मिन्प्रकरणेऽनुक्रमिष्यामः, किं तर्हि ?

**अनवगतसंस्कारांश्च निगमान् ॥**

**अनवगतसंस्कारान्** अविज्ञातसंस्कारान् । येषां प्रकृति-प्रत्ययादिसंस्कारो न साकल्येन ज्ञायते **तांश्च निगमान्** । अत्रैवानुक्रमिष्यामो व्याख्यास्यामः ॥

**तदैकपदिकमित्याचक्षते ॥**

**तत्**-एवंप्रकारं प्रकरणं ( यत्रैतदुभयं व्याख्यायते ) **ऐकपादिकम्** । **इति** अनेन नाम्ना **आचक्षते** "अन्येऽप्याचार्या" इति शेषः । निरूढा हीयमस्मिन्प्रकरणे संज्ञेति भावः । पूर्वस्मिन्प्रकरणे गणशः पदानां विरचनामपेक्ष्यैतदैकपदिकमुच्यते । अत्र त्वेकैकमेव पदं समाम्नातम् । तद्यथा—जहा-निधा—इत्येवम् । यत्र पुनः क्वचिदनेकार्थान्यपि समाम्नातानि तद्यथा "देवो देवाच्या कृपा" "सोमो अक्षाः" इत्येवमादीनि, तत्रैव तत्प्रयोजनं वक्ष्यामः ॥

एवंप्रकरणार्थं संक्षेपतः प्रतिज्ञाय क्रमेण वर्णवृत्तित्वाच्च प्रथमं यत्पदं तदुपादीयते—

**"जहा—" ॥**

इति ॥ (१)

आह—किमेतदनवगतसंस्कार—मुतानेकार्थम् ? उच्यते—

**जघानेत्यर्थः ॥ १ ॥**

१. अयमर्थः । यान्येतानि दयत्यकूपारादीनि पदानि अनेकैरथैरुपदयादानदहनहिंसादिभिरर्थवन्ति, यानि चैतान्यर्थजातानि उपदयादानदहनहिंसादीनि एकशब्दवाच्यानि, तान्येवमितरेतरविशेषणविशेष्यभावलक्षणोपलक्षितानि एकप्रकरणतामुपगतानि एवंप्रकारया ऐकपदिकप्रकरणव्याख्ययेति ॥ अत्रार्थस्याप्रतीयमानस्य पर्यायाभिधानेन विभज्यप्रतिपादनं व्याख्या, शब्दस्यापि व्युत्पादनं व्याख्या, एवमेते द्वे व्याख्ये, तयोरर्थपरिज्ञानमेकस्याः कार्यम् । शब्दपरिज्ञानमपरस्याः । तदेतदुभयमप्येकस्मिन् नैगमे पदे यथासम्भवं व्याख्यासते ॥ इति ॥

अत्र हन्ते—र्जहातेश्च सन्देह इति जहेत्यनेनानवगतसंस्कारेणोक्तो भवति । अत्र भाष्यकारेणावधृतं **जघानेत्यर्थ** इति । तथाच हन्तेरेवात्र रूपं न जहातेरित्यर्थः ॥ १ ॥

आह—कुतः पुनर्विशेषावधारणं यदेतद्धन्तेरेवात्र रूपं न पुनर्जहातेः ? इति । अतोऽत्र निगम उच्यते—

**"को नु मर्या अमिथितः सखा सखायमब्रवीत् । जहा को असदीषते ॥ २ ॥"**

( ऋ० सं० ६-३-४९ )

त्रिशोकस्येयमार्षम् गायत्री महाव्रते महदुक्थे तृचाशीतिषु शस्यते, अस्यामृचि जहेत्यस्य शब्दस्य पूर्वोत्तरपदाविरोधप्रकरण—शब्दसारूप्यार्थोपपत्तिभिः संस्कारानवगमेऽपि सति हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न जहातेः । कथमिति चेच्छृणु—

"मा नु एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर ! भूरिषु ॥ ४ ॥" ( ऋ० सं० ६-३-४८ ) इत्येष मन्त्रः पठ्यते हे इन्द्र ! **नोऽस्मानेकस्मिन्नागसि** अपराधे **मा** वधीरित्येवमस्यार्थः । अस्मिन्नेव प्रकरणे "को नु मर्या" इत्येष मन्त्रः पठ्यते । अस्यार्थः । हे **मर्याः** ! मनुष्याः ! **कोनु** कः खलु **अमिथितः** अनाकृष्टः ( परुषमपि वा किञ्चिदनुक्तः ) **सखा** समानख्यानः ( सुहृत् ) **सखायम्** समानख्यानम् ( सुहृदम् ) **अब्रवीत्** ब्रवीति । कालव्यत्यय आर्षः ( पा० ३-४-६ ) । यथा यूयमनाहूताः सन्तो मां ब्रूत "मावधीरि"ति । **जहा** अत्र **कम्** अपापकम् **जातु** अहम् इति पदचतुष्टयमध्याहृतं भाष्यकारेण जहाशब्दस्य निराकाङ्क्षीकरणार्थम् । तथाच जातु कदाचिदपि कमपापकमनपराधिनं सन्तमहं **जहा** जघान हतवान् अस्मि ? प्रमादतोऽपीति लिडर्थः । न कमपीत्यर्थः । ननु मनुष्यानपापानपि त्वं हंस्येव इति प्रत्युक्त इव प्राह—**कोऽसदीषते** कः खलु अपापकारी असत्तो भीतः सन् पलायते ? न कश्चिदप्यपापकारी अस्मत्त उद्विजमानो भीतः सन् पलायते इति भावः ॥ अत्रापि भीत इत्यध्याहृतो भाष्यकारेण । न ह्यभीतः पलायते । अत्रासदिति पञ्चमीयोगादीषतेर्गमनमात्रवाचिनोऽपि ( भ्वा० प० ) गमनविशेषे पलायनेऽवस्थानम् । यो हि यस्माद्बिभेति स तस्मात्पलायत इति स्थितिः ॥ ४ ॥

अथैकपदनिरुक्तम्—

**मर्या इति मनुष्यनाम ॥** ( निघं० २-३ )

१. हन्तेर्लिडुत्तमैकवचने णलि द्विर्वचने अभ्यासचर्त्वे कुत्वाभावो नकारलोपश्च छान्दसत्वात् ॥

२. पापकं तु निहन्म्येवेति स्वारसिकोऽर्थः ॥

३. अत्र "उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्" इत्युक्तेः प्रमादार्थोऽध्याहृतः ॥

तस्य "मर्यो मनुष्यो मरणधर्मे"—ति व्युत्पत्तिरुक्ता ( नि० ३–१५ ) ॥

**मर्यादामिधानं वा स्यात् ॥**

अथवा **मर्यादाभिधानमेव अत्र स्यात्** ॥ न मनुष्यनाम । तथाच—

**मर्यादा × मर्यैरादीयते ॥**

**मर्यैर्म**नुष्यै–( निघं २–३ ) **रादीयन्ते** गृह्यते स्वपरविषयप्रविभागार्थम् । तथाचात्र मर्या इत्यत्र दाकारलोपो द्रष्टव्यः । क इति च लिङ्गव्यत्यय आर्षः । यद्वा का उ इति च्छेदः । उर्वितर्के । का नु खल्वेषा मर्यादा यतो धर्मज्ञाः सन्तो यूयम् अनाहता अनाक्रुष्टाश्च सन्तो मां ब्रूथ मा नो वधीरिति । नैतद्याय्यमित्यर्थः ॥

**मर्यादा×मर्यादिनोर्विभागः ॥**

संश्रिता या भूमिरुपक्षीणा सा मर्येत्युच्यते ( विषयान्त इत्यर्थः ) । आदिरन्यस्य विषयस्योपक्रम उच्यते । संश्रिताया भूमेरादेश्च विभागकारिणी या भूमिः सा मर्यादेत्युच्यते । तथाच मर्या चादिश्चेति द्वन्द्वः । "सामान्ये नपुंसकम्" ( पा० २–४–१७ वा० ) इति नुम् । एषा च रूढिसंज्ञाऽस्मिन्नर्थे इति भावः । "मर्यादा धारणा स्थिति"रिति चामरः । तत्र "मर्या" इति सीमार्थेऽव्ययं तत्र दीयते या सा मर्यादा "आतश्चोपसर्गे" ( पा० ३–३–१०६ ) इत्यङ् स्त्रियां टाप् "पाया" "थाक" इत्येवंशब्देन लोके प्रसिद्धा । **विभागो**–विभजत्यनेनेति करणे घञ् ( पा० ३–३–१९ ) "चजोः कुघिण्ण्यतो"– ( पा० ७–३–५२ ) रिति भजतेर्जस्य गः । उपधावृद्धिः ॥ ( पा० ७–२–११६ ) ॥

**मेथतिराक्रोशतिकर्मा ॥**

**मेथति**–मिथधातुः "इक्श्तिपौ धातुनिर्देशे" ( पा० ३–३–१०८ वा० ) **आक्रोशतिकर्मा**–आक्रोशनार्थः । "चतस्रः पत्न्योऽश्वममिमेथन्ती"ति प्रसिद्धमश्वमेधे मेथतेराक्रोशकर्मत्वम् । लोकेऽपि च "शालो मेथनक" इत्युच्यते । स ह्यसीक्ष्णमाक्रुश्यते । आक्रोशति च सः ॥

एवमेतस्मिन्मन्त्रे प्रकरणपूर्वोत्तरपदाविरोधशब्दसारूप्यार्थोपपत्तिभिर्हन्तेरेव विशेषार्थोऽवतिष्ठते, न जहातेः । तस्मान्नात्र जहातेरवकाशोऽस्ति । पारिशेष्याद्धन्तेरेतद्रूपमित्युपपन्नं भवति । एवमेव सर्वेष्वेवानवगतसंस्कारेषु योज्यम् ॥ अथ **"निधा"** ( २ ) इत्येतत्पदमनवगतसंस्कारावसरप्राप्तमैकपदिकव्याख्यामार्गेण व्याख्यानीयमिति तदभिधानाभिधेयनिगमनिर्वचनानुक्रमप्रवृत्त्याह—

**निधा पाश्या भवतीति ॥**

एतच्च पर्यायेण तत्त्ववचनम् । यो हि बालमयः स्नायुमयो वा पाशसमूहः पक्ष्यादिग्रहणार्थः प्रक्लृप्तः स पाश्येत्युच्यते ॥

अधुना द्वावप्येतौ शब्दौ निर्वक्ति—

**यन्निधीयते । पाश्या पाशसमूहः ॥**

**यत्**–यस्मादियं **निधीयते**–नीचैर्धीयते पक्ष्यादिग्रहणार्थम् तस्मात् निधिरिति निधानीति वा प्राप्ता सती निधेत्यनवगतसंस्कारेणोच्यते ॥ अथ पाश्या–शब्दं पर्यायाभिधानप्रसक्तं प्रत्ययोत्पादनार्थं निर्ब्रवीति—**पाश्या–पाशसमूहः** ॥ इति । तथाच "पाशादिभ्यो यः" ( पा० ४–२–४९ ) इति सामूहिकोऽत्र यप्रत्ययः । स्त्रियां टाप् । तथाचामरोऽपि तस्य वृन्दमित्यधिकृत्य "पाश्या गल्या पृथक्पृथक्" इति ॥ एवं पदान्निष्क्रम्य तद्धितार्थो निरुक्तोऽधुना पदार्थं निर्ब्रवीति—

**पाशः पाशयतेर्विपाशनात् ॥**

**पाशयतेः** "पश बन्धने" ( चु० उ० ) इत्यस्य करणघञन्तस्य **पाश** इत्येतद्भवति । कुतः ? **विपाशनात्** तेन हि विविधमतिशयेन वा पश्यते बध्यत इत्यर्थः ॥ २ ॥

अथ निधाशब्दं पासमूहार्थं निगमनार्थमुदाहरत्यनयर्चा—

**"वयः॑ सु॒प॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः । अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य १ स्मान्नि॒धये॑व ब॒द्धान् ॥ ६ ॥"**

( ऋ० सं० ८–३–४६ )

**वय** इति । शाक्त्यस्य गौरिवीतेरियमार्षं त्रिष्टुप् । मारुतमग्निष्टोमे मरुत्वतीयशस्त्रस्य परिधानीयैषा निविद्धानीये सूक्ते शस्यते । **वयः** गन्तारः **सुपर्णाः** सुपतना आदित्यरश्मयः । **इन्द्रम्** आदित्यम् **उपसेदुः** उपसन्ना अभवन् । कीदृशास्ते ? **प्रियमेधाः** प्रिययज्ञाः । मेध इति यज्ञनाम ( निघं०

---

१. सम्यक् श्रिता स्वायत्तीकृता ( स्वाधिकारस्था ) उपक्षीणा तावदेव स्वेतेति ततः परं सोपक्षीणैव भवति । "विषयो देश" ( ४–२–५२ ) इति पाणिनिः । अमरोऽपि "देशविषयौ तूपवर्तनमि"त्याह ॥

२. जहातौ श्वेतस्मिन्कल्प्यमाने प्रकरणं पूर्वोत्तराणि च पदानि विरुध्यन्ते शब्दसारूप्येऽपि सतीति भावः ॥

१. स हि प्रकृताऽनुवृत्त्या व्याख्यातव्यः ॥

२. तथाच निपूर्वाद्धातेः "उपसर्गे घोः किः" ( पा० ३–३–९२ ) इति कर्मणि किश्चेन्निधिः । ल्युट् चेन्निधानी । टित्वान्ङीप् "कृत्यल्युटो बहुलम्" ( पा० ३–३–११३ ) इति स्मरणात् ॥ ( करणाधिकरणयोरेव हि ल्युड्विधीयते ) "आतश्चोपसर्गे" ( पा० ३–१–१३६ ) इति कप्रत्यये अङि ( पा० ३–३–१०६ ) वा । टापि निधेति भवति ॥ सर्वमेतत्स्त्रियां विधीयते ॥ तत्र के ( देवराजोक्ते ) बाहुलकत्वमेव गतिः । कर्तर्यसौ विधीयते ॥ इह तु कर्मण्यपेक्ष्यते ॥

३. शक्तिपुत्रस्य, व्यासपितुः पराशरस्यान्यस्य वा । तथाच स्मर्यते—"व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् । पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥" इति ॥

३-१७) **ऋषयः** द्रष्टारः (कर्मणाम्) प्रकाशकत्वात् । **नाधमानाः** जनानाम् प्रज्ञां याचमानाः । "नाधृ याच्ञोपतापैश्वर्याशीःषु" (भ्वा० आ०) लटः शानचि मुगागमः शपः ॥ अथ याचनप्रकार उच्यते-हे इन्द्र! जनानां चक्षूरोधकमेतत् **ध्वान्तम्** अन्धकारम् । **अपोर्णुहि** अपावृणु (परिहर) **पूर्धि** पिपूर्हि पूरय च । "पॄ पालनपूरणयोः" (जु० प०) लोट् । हेर्ध्यादेशोऽभ्यासलोपश्चार्षः ॥ दुर्गस्तु-सफलं कुरु देहि वेत्यपि भङ्ग्यन्तरेण व्याख्यातवांस्तदेतदनुपदं (भा० व्या०) स्फुटीभविष्यति ॥ तेजसा **चक्षुः** नेत्रं जनानाम् । कथम्? **निधया** पाशसमूहेन पक्षिणं इव **बद्धान्** अस्मिन्मण्डले । **मुमुग्धि** मुञ्च भृशम् मुञ्चतेर्यङ्लुकि लोट् प्रार्थनायाम् । अभ्यासस्य गुणाभावः "संज्ञापूर्वको विधिरनित्यः" (प० ९४) इति ॥ ६ ॥

अथैकपदनिरुक्तम्—

### वयो-वे-र्बहुवचनम् ॥

**वय** इति **वेः** विशब्दस्य गत्यादौ पठितस्य वीधातोः **बहुवचनम्** ॥ (अ० प०) कर्तरि (उ०) ङिप्रत्यये साधोर्नामीभूतस्य ।

### सुपर्णाः सुपतनाः आदित्यरश्मयः ॥

तथाच सुपूर्वात्पततेर्गत्यर्थात् (भ्वा० प०) बाहुलकात्कर्तरि नप्रत्यये तकारस्य रेफादेशे णत्वम् ॥

अतएव—

### उपसेदुरिन्द्रं याचमानाः ॥

ता हि (आदित्यरश्मयः) व्युष्टायां रात्रावहन्यहनि **इन्द्र**मादित्य**मुपसेदु**रुपसीदन्ति लडर्थे लिट् (पा० ३-४-६) **याचमानाः** प्रज्ञां लोकानाम् । कथं पुनर्याचमानाः ?—

### अपोर्णुह्याध्वस्तं चक्षुः ॥

**अपोर्णुहि** अपावृणु जनानामेतद्ध्वान्तमित्यर्थतोऽवधेयम् । एवमा**ध्वस्तम्** तमसाऽऽच्छादितं **चक्षुः** । अस्योत्तरवाक्येनाभिसम्बन्धः । तावच्चक्षुःपदं निर्वक्ति—

### चक्षुः ख्यातेर्वा चष्टेर्वा ॥

**ख्यातेः** "ख्या प्रकथने" इत्यस्य (अ० प०) अथ वा **चष्टेः** "चक्षिङ् व्यक्तायां वाचि"-(अ० आ०) त्यस्य दर्शनार्थस्य धातूनामनेकार्थत्वात् ॥ अत्र "चक्षेः शिच" (उ० ३-११९) इत्युसिः । शित्वादनार्धधातुकत्वात्ख्याञ् न । पक्षे ख्यातेरपि चक्षादेशो बाहुलकात् ॥ एको वाशब्दो वाक्यालङ्कारे ॥

### पूर्धि पूरय देहीति वा ॥

युष्मदननुगृहीतमेतेषां जनानां चक्षुरसफलमिव वर्तते तत् **पूर्धि पूरय** सफलं कुर्वित्यर्थः । अथवा पूर्धि इत्यस्यार्थः **देहीति** । अस्तं हि गच्छता त्वयैतेषां चक्षुरपहृतमिव, तदेतद्धंस्त्वमेतेभ्यो देहि । कथं च पुनर्देहि ?—

### मुञ्चास्मान्पाशैरिव बद्धान् ॥

**मुञ्चेति** मुमुग्धीत्यस्यार्थः । **पाशैरिति** निधयेत्यस्यार्थः । निधा पाश्या भवतीत्युक्तमनुपदमधस्तात् । तथाच पाशसमूहैः पक्षिण इव एतस्मिन्मण्डले बद्धानस्मान्मुञ्च । यावद्वयमेतदशेषं तमो विनाश्य एतेषां जनानामेतच्चक्षुर्युगमं सफलं कुर्मः । एवं ह्येतत्त्वयैव दत्तं बोभविष्यतीति भावः ॥ (एतमर्थं याचमाना उपसेदुरिति समस्तार्थः) ॥ १ ॥

एवमेतस्मिन्मन्त्रे **"मुमुग्ध्यस्मान्निधयेव बद्धान्"** इत्येतेषां पदानां मध्ये वर्तमानस्य तृतीयान्तस्य निधाशब्दस्य पाशसमूहादन्योऽर्थो न सम्भवी "मुमुग्धि बद्धानि"त्येतौ शब्दौ येन बद्धा यस्माच्च मुच्यन्ते तदर्थाभिधायिनं शब्दमाकाङ्क्षतः । तत्रोपस्थितस्य निधाशब्दस्यैव तदर्थत्वकल्पना न्याय्या ॥ एवं सर्वत्रानवगतसंस्कारेष्वाकाङ्क्षितार्थपूरणमर्थवशादनवगतसंस्कारैः पदैः प्रकल्प्यं यथागमम् ॥

**"शितामः"** (३) इत्येतदनवगतम् । विप्रतिपत्त्याऽनेकार्थत्वसंशयेऽनुपन्यस्यैव पदम् अनुक्त्वैव चाभिधेयं निगममेव प्रथमं पठत्याचार्यः । एषोऽपि व्याख्यामार्गो भवतीति ॥

### "पार्श्वतः श्रोणितः शितामतः ॥"

(य० मा० सं० २१-४३)

पशुहविषः प्रैषेऽयं मन्त्रशेषः । अस्य "होतायक्षदश्विनौ छागस्य हविष आत्ता" मित्यादिरादिः । "उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेतां हविर्होतर्यज" इत्यन्तः । वामदेवस्यार्षं गद्यम् । मैत्रावरुणो ब्रवीति-दैव्यो **होता** अग्निः । **अश्विनौ** कर्म **यक्षत्** यजतु पूजयतु । लोडर्थेऽत्र लेट् । शपः स्थाने सिब्विकरणो व्यत्ययेन (पा० ३-१-८५) "इतश्च लोपः परस्मैपदेषु" (पा० ३-४-९७) इति तिप इकारस्य लोपः ॥ ताविज्यमानौ **छागस्य हविषः** हविः **आत्ताम्**

---

१. एतत्तत्त्वं भाष्यव्याख्यायां स्फुटम् ॥

२. अत्र पक्षिण इत्यनेन सुपर्णा वय इति सविशेषणोपादानलभ्योऽर्थः । वयः पक्षिणो भवन्ति ते च सुपर्णाः शोभनपक्षाश्चेति । तथाचामरः "खगे विहंग...विविष्किरपतत्रय"इति ॥

३. यथापोर्णुहि इत्यस्य कर्मभूतं ध्वान्तं मन्त्रस्थमत्राभिप्रेतम् । तथा "पूर्धि" इत्युत्तरवाक्यस्थेन चक्षुषोऽभिसम्बन्धेनानपध्वस्तस्य तस्य पूर्त्वमियाचनमसमञ्जसमिव भविष्यतीत्याध्वस्तमित्यध्याहृत्य भाष्यकृता व्याख्यातम् ॥

४. पूर्धीत्यनेन ॥

१. दानप्रकारं पृष्ट इव प्रत्याह-मुञ्चेत्यादिना ।

२. शितामपदेन हि बाहुयक्कृद्योनिमेदांस्युच्यन्ते । स एषोऽदन्त एवेति योनि० शितामेति भाष्यात्प्रतीयते ॥ तथा चाव्ययमेव भवति । स्वरादेराकृतिगणत्वात् ॥ साधनमस्याग्रे भाष्यव्याख्यायां व्यक्तम् ॥

अभक्षयताम् । कर्मणि द्वितीयार्थे बाहुलकात् (पा० २-३-६२) षष्ठी । किञ्च **पार्श्वतः** पार्श्वप्रदेशात् । **श्रोणितः** कटिप्रदेशात् । **शितामतः** बाहुप्रदेशात् । **उत्सादतः** छेदनप्रदेशात् । एवम् **अङ्गादङ्गात्**प्रत्यङ्गात् वीप्सायां "नित्यवीप्सयो"रिति (पा० ८-१-४) द्विर्भावः । **अवत्तानाम्** अवदानधर्मेण गृहीतानामङ्गावयवानाम् । द्वितीयार्थे षष्ठी (पा० २-३-६२) तानश्विनौ घस्तामिति पूर्वेणाभिसम्बन्धः । **एव**—एवम् मलोप आर्षः । **अश्विना** अश्विनौ । औङ आकारः (पा० ७-१-३९) **हविः जुषेतां** सेवेताम् । भक्षितावदानौ तौ **करतः** कुरुतः "तृप्तिमि"ति शेषः । विकरणव्यत्यय आर्षः (पा० ३-१-८५) । पुनर्वचनमादराय । हे मनुष्य **होतः!** त्वमपि **यज** ॥ इति हि मन्त्रार्थः ॥ ४३ ॥

अथ निगमप्रसक्तमुच्यते—

## पार्श्वं पर्शुमयमङ्गं भवति ॥

**पर्शवो** वक्ष्यं उच्यन्ते । तन्मयं हि तद्भवति । यदेतत्पार्श्वमिति ॥ "स्पृशेः श्वण् शुनौ पृ च" (उ० ५-२७) णित्वाद्वृद्धिः । यद्वा पर्शूनां समूहः "पर्श्वा णस् वक्तव्यः" (पा० ४-२-४३ वा०) सित्वात् (पा० १-४-१६) पदत्वेन भत्वाभावात् "र्घोर्गुण" (पा० ६-४-१४६) इति गुणो न । "पार्श्वमन्तिके । कक्षाधोऽवयवे चक्रोपान्ते पर्शुगणेऽपि चे"ति हैमः ॥

आह—पर्शुः कस्मादिति ?

उच्यते—

## पर्शुः स्पृशतेः ॥

**स्पृशतेः** "स्पृश संस्पर्शने" इति धातोः (तु० प०) पूर्वेण (उ० ५-२७) साधुः ॥

अथ किमनया स्पृष्टमित्युक्तः प्रत्याह—

## संस्पृष्टा पृष्ठदेशम् ॥

प्रति भवति ॥ कर्मणि क्तः । स्त्रियामयम् ॥ (पर्शुरत्र)

अथ प्रसक्तानुप्रसक्तं पृष्ठं निर्वक्ति—

## पृष्ठं स्पृशतेः ॥

एव । कर्मणि थकि "तिथपृष्ठगूथयूथप्रोथाः" (उ० २-१२) इति साधुः । तद्धि—

## संस्पृष्टमङ्गैः ॥

१. पार्श्वास्थीनि । अत एव च "पार्श्वास्थनि तु पर्शुका" इत्यमरः । स्वार्थे इवार्थे वात्र कन् ॥

२. अत्र यद्यपि "पर्शु" इति निर्विभक्तिकः पाठो मुद्रितपुस्तकेषु दृष्टः । कोशेऽपि (हैमे) "कक्षाधोवयवे पर्शु" इत्येव पठ्यते । तथापि "संस्पृष्टा पृष्ठदेशमि"त्युत्तरवाक्ये स्त्रीलिङ्गदर्शनादिह स्त्रीत्वमुपपद्यते । तथाच "स्त्रीनपुंसकयोः पर्शु" इति कतकः ॥

अङ्गैरितरैरवयवैः सम्यक् स्पृष्टं भवति ॥

आह—अङ्गं कस्मादिति ? उच्यते—

## अङ्गम् अङ्गनात् ॥

**अङ्गनात्** गमनात् "अगि गतौ" (भ्वा० प०) "पचाद्यच्" (पा० ३-१-१३४) गतं हि तत्कालेन भवति । "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीवैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिक" इति मेदिनी ॥

## अञ्चनाद्वा ॥

अथवा **अञ्चनादङ्गम्** । धातूनामनेकार्थत्वं, तदेतत् पार्श्वशब्दप्रसक्तानुप्रसक्तमुक्तम् । अधुना श्रोणिशब्दं निगमप्रसक्तं निर्ब्रवीति—

## श्रोणिः श्रोणतेः । गतिचलाकर्मणः ॥

गतिनिमित्तं चलनं कर्म यस्यासौ **गतिचलाकर्मा** तस्य । "अन्येषामपि दृश्यते" (पा० ६-३-१३७) इति मध्यमपदस्यापि कथंचित्पूर्वपदत्वमाश्रित्य दीर्घः । यद्यपि "श्रोणृ संघाते" इत्येवं (भ्वा० प०) पठ्यते तथापीहार्थविशेषे वर्ततेऽनेकार्थत्वात् धातूनाम् ॥ तत इन् (उ० १-११८) प्रत्ययः ॥

अत्र हेतुमाह—

## श्रोणिश्चलतीव गच्छतः ॥

स्वात्स्थानात्पश्चादेः ॥

अथ शितामशब्दस्य तत्त्वमाचष्टे—

## दोः [1]शितामं भवति ॥

दोर्बाहुः "भुजबाहू प्रवेष्टो दो"रित्यमरः । **शिताम**शब्देनाभिहितो **भवति** । अथ दोःशब्दं पर्यायप्रसक्तं निर्ब्रवीति—

## दोः द्रवतेः ॥

गत्यर्थस्य (भ्वा० प०) । तस्यैव हि बलेन पशवो द्रवन्ति (गच्छन्ति) ॥ तथाच श्रितमंसभागेनेति शिताम । यद्वैतच्छ्रितं कार्यं भवतीति शिताम । पृषोदरादिः ॥ लोके तु "दमेर्डोसिः" (उ० २-७२) ॥

१. अर्थविशेषे वृत्तौ ॥

२. दोरत्र नपुंसकम् । अत एव "ककुद्दोषणी शलाकादोषणी याचते महादेवः" इति श्रुतिमनुसृत्य "पद्दन्नि—" (पा० ६-१-६३) तिसूत्रे महाभाष्ये ककुद्दोषणीत्युदाहृतम् ॥ भारविरपि "तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः" इत्याह ॥ पुंस्त्वमप्यर्यं प्रवेष्टो दोरिति साहचर्यात् । अतएव च "दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणम्" इति भारविः ॥

३. एवंच श्रितशब्दे रेफलोपोऽतो दीर्घत्वं मशब्दश्चोपजनः ॥ पशोर्वाह्यावदानेषु त्रिषु पार्श्वश्रोण्यंसेषु "पार्श्वतः श्रोणितः शितामतः" इत्युक्तौ अंसावेवावशिष्येते तथाच तदाश्रितौ बाहू निगमार्थौ व्याख्यातौ भाष्यकृता यास्केनेति निरवद्यम् ॥

**योनिः शितामेति शाकपूणिः ॥**

"आचार्यो मन्यते" इति शेषः । अत्र योनिरनवदानीयेति तत्समानदेशो गुद एवात्र योनिशब्देनाभिमतः । स हि (गुदः)—

**विषितो भवति ॥**

"विष्लृ व्याप्तौ" ( जु० उ० ) बाहुलकात् ( पा० ३–३–१ ) कर्मणि इतक् ॥ **विषितो** व्याप्तः स पुरीषेण **भवति** ॥

**श्यामतो यकृच्च इति तैटिकिः ॥**

"आचार्यो मन्यते" इति शेषः । यदुक्तं भवति श्यामत इति तदुक्तं भवति शितामत इति । शब्दसारूप्यात् । यकृद्धि श्याममुच्यते । तच्चावदानीयं भवतीति । तद्धि—

**श्यामं, श्यायतेः ॥**

गत्यर्थस्य ( भ्वा० आ० ) श्यैङ् धातोः "इषियुधीन्धी"–( उ० १–१४५ ) ति मक् प्रत्ययः । आत्वम् ( पा० ६–१–४५ ) तद्धि सम्पर्कादुत्पद्यते ॥

अधुना यकृत्पदं निर्ब्रवीति—

**यकृत्—यथाकथा च कृत्यते ॥**

मृदुलाद्धि **यथाकथा च** । यथाकथंचित् । अयत्नेनैव । **कृत्यते** छिद्यत इत्यर्थः ॥ यथाशब्दस्योत्तरार्धलोपः । कृन्ततेश्छेदनार्थात्कर्मणि क्विप् बाहुलकात् ( पा० ३–३–११३ ) ॥

**शितिमांसतो मेदस्त इति गालवः ॥**

**शितिमांसतः** श्वेतान्मांसात् । तद्धि मेदोलक्षणमेव भवति तस्मात् "पञ्चम्यास्तसिल्" ( ५–३–७ ) यदुक्तं भवति शितिमांसत इति । तदुक्तं भवति शितामत इति ॥ पृषोदरादिः ॥

शितिपदं निर्ब्रवीति—

**शितिः श्यतेः ॥**

तनूकरणार्थस्य शोधातोः ( दि० प० ) क्तिन् "शाच्छोरन्यतरस्याम्" ( पा० ७–४–४१ ) इतीत्त्वम् ॥ परो हि विवेकस्तेजसो मेदस्येवावतिष्ठत इति तत्तेजसत्वाच्छितं भवति ॥

**मांसं माननं वा ॥**

य एव हि मान्यो भवति तदर्थमेतत्संस्क्रियते इति मान्यते सत्क्रियतेऽनेनेति ल्युट् ( पा० ३–३–११७ ) **माननं**, तदेव **मांसम्** । औणादिकः सो बाहुलकात् । मन्यतेर्वा मांसम् "मनेर्दीर्घश्च"–( उ० ३–६४ ) ति सः । वाशब्द एवार्थे । यदेव माननं तदेव मांसमित्यर्थः ॥

**मानसं वा ॥**

अथवा सुमनसा उपाधीयत इति **मानसं** शैषिकोऽण् ( पा० ४–२–९२ ) तदेव मांसम् । य एव हि मनस्विनो भवन्ति तैरुपाधीयते न सर्वैः । पृषोदरादिः ॥

**मनोऽस्मिन्सीदतीति वा ॥**

सर्वस्यैव हि **अस्मिन्** मांसे **मनः सीदति** गच्छति "षद्लृ गतौ" ( भ्वा० प० ) त्रस्यतीत्येके ॥

**मेदः मेद्यतेः ॥ ३ ॥**

"ञिमिदा स्नेहने" ( दि० प० ) इत्यस्य । असुनि ( उ० ४–१८९ ) **मेदः** । "मेदस्तु वपा वसे" त्यमरः ॥ एवमेव शितामशब्दोऽनवगताभिधेयोऽनवगतसंस्कारोऽप्येवं निरुक्तः प्रकरणोपपदाभ्यामाचार्यमतभेदेन च । एवमेतस्मिन्प्रकरणे अन्यान्यनवगतसंस्काराणि उपेक्षितव्यानि ॥

उक्तं च—

"शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः ।
सर्वमेतदनेकार्थे दशानवगमे गुणाः ॥" इति ॥

अत्र कतमे पुनस्ते ? इत्याक्षिप्य दुर्ग आह—

पदजात्य–ऽभिधेय–स्वर–संस्कार–गुण–विभाग–क्रम–विक्षेपा–ऽऽध्याहार–व्यवधानानि । तेषु चाभिधेयमपेक्ष्य निर्वचनं कर्तव्यम् । उक्तं हि—

"धातूपसर्गावयवगुणसत्त्वं हि धातुजम् ।
बह्वेकधातुजं वापि पदं निर्वाच्यलक्षणम् ॥ १ ॥
धातुजं, धातुजाज्जातं, समर्थार्थजमेव च ।
वाक्यजं, व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम् ॥२॥" इति ॥

(१) पदजात्यनवगतम्—"त्व" इति यथा, नाम निपातो वा ॥
(२) अभिधेयानवगतम्—"शिताम" इति यथा ॥
(३) स्वरानवगतम्—"वने न वा यो" इति यथा ॥
(४) संस्कारानवगतम्—"ईर्मान्तासः" इति यथा ॥
(५) गुणानवगतम्—"करूळती" इति यथा ॥
(६) विभागानवगतम्—"मेहना" इति यथा ॥
(७) क्रमानवगतम्—"उपरमध्वं मे वचसे" इति यथा ॥
(८) विक्षेपानवगतम्—"द्यावा नः पृथिवी" इति यथा ॥
(९) अध्याहारानवगतम्—"दानमनसो नो मनुष्यान्" इति यथा ॥
(१०) व्यवधानानवगतम्—"वायुश्च नियुत्वान्" इति यथा ॥

एकमपि पदं पदद्वितयं क्रियते,—"पुरुषादः पुरुषानदनाय" इति यथा ॥

---

१. अत्राथवा विषितमांसो विपुषितमांसः विस्रस्तमांसः स भवति इति दुर्ग आह । गुदोऽपि हि श्रोण्यनन्तरः । अवदानीयश्चेति श्रोणितः । शितामत इत्युक्तौ आनन्तर्यलक्षणं सिद्धपदसान्निध्यमत्र शक्तिग्रहहेतुः । तथाचोक्तम् "शक्तिग्रहो व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति । सिद्धपदस्य—ख्यातार्थकपदस्य ॥

१. उपगम्य निगमानीक्षितव्यान्यालोचयितव्यानि मेधाविभिः ॥

पदद्वितयमपि चैकं पदं क्रियते,—"गर्भनिधानीं सनितुः" इति यथा ॥

आख्यातमपि च नाम क्रियते,—"सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः" इति यथा ॥

एवमेव शब्दार्थसङ्करोऽनेकप्रकार उपेक्ष्यः । दृष्टानुविधानाच्छन्दसि यथासम्भवमनुविधेयः ॥ ३ ॥

अथ **मेहना** (४) इत्येतत् अनवगतम् । तस्य "मंहनीयम्" इत्यवगमस्तथा च मंहतेर्दानकर्मणो ( निघं० ३-२० ) ल्युटो योरनादेशो बाहुलकादकारस्येकारो नलोपश्च "सुपां सुलुगि" ( पा० ७-१-३९ ) त्यादिना सोराकारादेशः ॥

अत्र निगममुदाहरति—

**"यदिन्द्र ! चित्र मेहनास्ति त्वादातमद्रिवः ।**
**राधस्तन्नो विदद्वस उभयाहस्त्याभर ॥१॥"**

( ऋ० सं० ४-२-१० )

**यदिन्द्रेति** । अत्रेभौमस्यार्षमनुष्टुवैन्द्री । हे **इन्द्र !** परमैश्वर्यवन् ! **यत्** तव **चित्रं**[2] चायनीयं ( पूजनीयम् ) "चायृ पूजानिशामनयोः" ( भ्वा० उ० ) पृषोदरादिः । **राधः** धनम् ( निघं० २-१० ) **अस्ति** । हे **अद्रिवः** वज्रिन् ! "मतुवसोरु सम्बुद्धौ छन्दसि" ( पा० ८-३-१ ) इति नस्य रुत्वम् ॥ **त्वादातम्** त्वया च दातव्यम् । यतः **मेहना** मंहनीयं ( वर्धनीयम् ) अस्ति । हे **विदद्वसो !** लब्धधनेन्द्र ! "विद्लृ लाभे" ( तु० उ० ) लटः शता । ततो बहुव्रीहिः ( सन्धौ वलोपः ) **तत्** धनम् । **नः** अस्मभ्यम् । **उभयाहस्ति** उभौ हस्तौ यस्मिन्नाहरणे इति क्रियाविशेषणमेतत् । "द्विदण्ड्यादिभ्यश्च" ( पा० ५-४-१२८ ) इतीच्प्रत्ययान्तो निपातः । उभाभ्यां हस्ताभ्यामिति यावत् । **आभर** आहर देहि । "हृग्रहोर्भश्छन्दसि" ( पा० ३-१-८४ वा० ) इति हस्य भः । विलम्बं माकार्षीरित्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**यदिन्द्र ( चित्रं ) चायनीयं मंहनीयं धनमस्ति ॥**

१. दातव्यं धनादि ॥ वर्धनीयं वा "महि वृद्धौ" ( भ्वा० आ० ) इत्यस्मादर्हार्थेऽनीयर् ॥

२. अत्र हे चित्र ! चायनीय ! पूजनीयेति सायणो व्याख्यत् । यास्कस्तु मेहनेति पदसन्निधाने मलोपमाश्रित्य तद्विशिष्टं राध इत्याह ॥

३. "महि वृद्धौ" ( भ्वा० आ० ) ल्युटि ( साधनमुक्तमुपरिष्टात् ) पूजनीयमिति दुर्गस्तन्मते "मह पूजायाम्" ( भ्वा० प० ) इत्यस्य । तदेतच्चित्रमित्यनेन गतार्थमित्युपेक्षितम् ॥

४. एतेन बहु सादरं चेति गम्यते ॥

व्याख्यातमेतदुपरिष्टात् । एतच्च शाकल्यस्य मुनेर्मतेन ॥ गार्ग्यस्त्वाह—

**यन्म इह नास्तीति वा । त्रीणि मध्यमानि पदानि ॥**

अथवा—**यन्म इह नास्तीति** एतस्मिन्वाक्ये **त्रीणि पदानि मध्यमानि** । मध्ये भवन्तीत्यर्थः । "मध्यान्मः" ( पा० ४-३-८ ) त्रीणीति—इन्द्रचित्र—शब्दादपकृष्योक्तं, तथा-चैतत्पञ्चपदिकं वाक्यम् ॥ यद्धनं मे मम गृहे नास्ति तव चास्ति त्वया च तत्स्तोतृभ्यो दातव्यमेवेत्थं च हस्ताभ्यामक्रपणं नोऽस्मभ्यमाहरेति मन्त्रार्थः । अत्र बह्वृचानां "मेहना" इत्येकं पदमनवगतसंस्कारम् । छन्दोगानां पुनस्त्रीण्येतानि पदानि 'मे—इह—न' इति ॥ इहशब्दस्येकारलोप आर्षः ॥

**त्वया च तद्दातव्यमद्रिवन् ! ॥**

निगदव्याख्यमेतत् ।

अथ निगमप्रसक्तानि निरुच्यन्ते—

**अद्रिरादृणात्येतेन ॥**

अद्रिसारमयमेव ह्यायुधं भवतीत्यद्रिर्वज्र उच्यते । साधनं च **आदृणात्येतेनेति** । आदारयत्येतेनेत्यर्थः । "दॄ विदारणे" ( क्र्या० प० ) आङ्पूर्वादस्मात्क्रिः । आङो ह्रस्वश्च बाहुलकात् ( पा० ३-३-१ ) तद्वन्नद्रिवः ! अथवा सोमामिषवग्रावभिः सोमा आदार्यन्ते ( अभिषूयन्ते ) इति तेऽद्रयस्तद्वन्नद्रिवः ! ॥

**अपि वाऽत्तेः स्यात् ॥**

अथवा **अत्तेः** अदधातोरेवाद्रिः **स्यात्** । "अदिशदिभूशुभिभ्यः क्रिन्" ( उ० ४-६५ ) इति क्रिन्प्रत्ययः । स हि प्राणिनो हिंसन्नत्तीत्युच्यते ॥

अत्र निगमं प्रमाणयति—

**"ते सोमादः ॥"**

**इति ह विज्ञायते ॥**

( ऋ० सं० ८-४-३०-४ )

"ते सोमादो हरी इन्द्रस्य निंसते" इति । एतस्मिन्मन्त्रे विचार्यमाणे ज्ञायते अत्तेरेवाद्रिः स्यादिति ॥ व्याख्यातः शेषः ( नि० २-२-१ ) ॥

१. तद्वत्त्वं चास्य तैर्नित्ययोगात् । इन्द्रार्थमेव हि पुरः (प्रथमं) सोमोऽभिषूयते । इति तत्रास्य सत्त्वमन्यतः प्रतिविशिष्टम् । उक्तं च "भूम—निन्दा—प्रशंसासु नित्ययोगेऽतिशायने ॥ सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥" इति ॥ भूमा—बाहुल्यम् ॥

२. तत्रहि तत्पदेन पूर्वमन्त्रे ("ते अद्रयो दशयन्त्रास आशव" इत्येतस्मिन् ) निर्दिष्टा अद्रय एवोच्यन्ते । सोमादोऽद्रय इत्युक्तेऽत्तेरेवाद्रिः प्रतीयते । अदन्तीत्यद्रयः । "अद भक्षणे" ( अ० प० ) "अदिशदिभूशुभिभ्यः क्रिन्" ( उ० ४-६५ ) इति साधुः ॥

## राध इति धननाम । राध्नुवन्त्यनेन ॥

**राध इति** एतत् **धननाम** स्मारयति । व्यभिचारित्वाद्राधशब्दानामिहापि एतद् धननामैव भवति नान्यदिति पठिताभिधाननिरूपणे सर्वत्रैव समाधेयम् ॥ निरुच्यते चैतत्–**राध्नुवन्त्यनेनेति** ॥ राध्नोतेः संसिद्ध्यर्थात् (स्वा० प०) असुन् (उ० ४–१८९) ॥ नपुंसकमेतत् ॥

## तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहर ॥

**वित्तधन!** प्राप्तधन! "विदॢ लाभे" क्तः । "वित्तो भोगप्रत्यययोः" (पा० ८–२–५८) इति निपातः । व्याख्यातमन्यत् ॥

अथोभशब्दं निगमप्रसक्तं निर्ब्रवीति—

## उभौ समुब्धौ भवतः ॥

**समुब्धौ** सम्पूर्णौ इत्यर्थः ॥ अत्रोपसर्गलोपो वलोपश्च । धस्य च भः पृषोदरादित्वात् ॥ "उभ उम्भ पूरणे" (तु० प०) क्तः । "झषस्तथो"–(पा० ८–२–४०) रिति धः । भस्य जस्त्वेन बः (पा० ८–४–५३) इड्भाव आर्षः ॥

## दमूनाः दममनाः (वा) ॥

**दमूनाः** (५) इत्येतदनवगतम् तस्य **दममना** इत्यवगमः । स हि अग्निः । दमे (यष्टुर्मनोनिग्रहे) हि नित्यमस्य मनः । तथाचोक्तं "मनसो दमनं दम" इति । यद्वा दाम्यति उपशामयति सर्वानिति दमं प्रशान्तं मनोऽस्येति "दम उपशमे" (दि० प०) इत्यस्य । उपशम इति हि तत्र ण्यन्तस्य । तेन सकर्मकोऽयम् ॥ अक्रूरमना इत्यर्थः । साधनमस्योक्तमधस्तात् (३६ पृ० ८ पं०) ॥

## दानमना वा ॥

अथवा–दातव्यं मयेत्येवं दाने मनो यस्य स **दानमनाः** स एव दमूनाः ॥

## दान्तमना वा ॥

अथवा दमेषु दान्तेषु यमनियमवत्सु पुरुषेषु यस्य मनः स एव **दान्तमनाः** सन् दमूनाः ॥

## अपिवा दम इति गृहनाम । तन्मनाः स्यात् ॥

अथवा **दम इति** एतद्गृहनाम (निघं० ३–४) । **तन्मनाः** तस्मिन्मनो यस्य ममेदमिति स एव दमूनाः **स्यात्** (यज्ञ–) गृहपतिरग्निः ॥

अथ मनःपदं निर्वक्ति—

## मनो मनोतेः ॥ ४ ॥

"मनु अवबोधने" इत्यस्मात् (त० आ०) असुनि (उ० ४–१८९) मनः । मनोतेरिति श्तिपा (पा० ३–३–१०८ वा०) प्रयोगः ॥ ४ ॥

अथात्र (दमूना इतिपदे) निगममुदाहरति—

"जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥ ५ ॥"

(ऋ० सं० ३–८–१८)

**जुष्ट इति** । वसुश्रुतस्यात्रेयस्येयमार्षम् त्रिष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । स्विष्टकृत्पुरोनुवाक्या चेयं चातुर्मास्येषु साकमेधे ॥ हे भगवन्नग्ने! **जुष्टः** आसेवितस्त्वं स्तुतिभिरस्माभिः प्रीतो वा, पर्याप्तो वाऽस्मदभ्यर्थितार्थे दातुं तथाच **दमूनाः** दममना अक्रूरमनाभूत्वा **नः** अस्माकं दान्तानामग्निहोत्रिणां **दुरोणे** गृहे **अतिथिः** सायं प्रातश्चोद्बोधनात् अभ्यागत इव सन् **इमं** यज्ञम् **उप आयाहि** उपागच्छ । आङोव्यवहितप्रयोगश्छान्दसः (पा० १–४–८२) ॥ अथ **विद्वान्** जानानः स्वमधिकारं भक्ततां चास्माकं, **विश्वाः** सर्वान् **अभियुजः** अभियोक्तॄन् (योद्धुमभ्युद्यतान्) शत्रुवर्गान् **विहत्य** विविधप्रकारेण हत्वा **शत्रूयताम्** शत्रुत्वं कामयमानानां तेषाम् । छन्दसि परेच्छायामपि क्यच् (पा० ३–१–८ वा०) "अकृत्सार्वधातुकयोः" (पा० ७–४–२५) इति दीर्घः । लटश्चात्र शता ॥ **भोजनानि** बलानि अन्नानि धनानि वा अस्मभ्यम् **आभर** आहर । आहृत्य देहि । "हृग्रहोर्भश्छन्दसी" (पा० ३–१–८४ वा०) ति भादेशो ह्रस्व भवति ॥ छान्दसोऽत्र दीर्घः ॥ ५ ॥

अथातिथिशब्दं निर्ब्रवीति—

## अतिथिरभ्यतितो गृहान्भवति ॥

यो **गृहानभिलक्ष्यातितो** गतो **भवति** सोऽतिथिः । "अत सातत्यगमने" (भ्वा० प०) "ऋतन्यञ्जि०" (उ० ४–२) इति–इथिन्प्रत्ययः । "अध्वनीनोऽतिथिर्ज्ञेय" इति स्मृतिः ॥

## अभ्येति तिथिषु परकुलानीति वा ॥

अथवा **तिथिषु** पौर्णमास्यादिषु **परकुलानि** यजमान-

---

१. "जुषी प्रीतिसेवनयोः" (तु० आ०) क्तः । "श्वीदितो निष्ठायाम्" (पा० ७–२–१४) इतीडभावः ॥

२. अन्येचार्याः पूर्वमुक्ता इहानुसन्धेयाः (दमूनापदस्य) ॥

३. स्वभाव एवैष तवाग्निहोत्रिणामतिथित्वेन सायं प्रातरुपस्थातव्यमिति दुर्ग आह ॥

४. लिङ्गव्यत्ययः । यद्वा शत्रुसेनाभिप्रायेण स्त्रीलिङ्गता । दुर्गेण तथैव व्याख्यातं च ॥

५. एतच्च भाष्यस्वरसलभ्यं तथाच भुज्यन्ते यैर्यानि वा इति करणे कर्मणि वाऽत्र ल्युट् ॥ "करणाधिकरणयोश्च" (पा० ३–३–११७) इति चेन कर्मणोऽप्युपग्रहात् ॥ अत्र बलानि अन्येषां विहत्येति भाष्यकृतो व्याख्यानम् ॥

६. लौकिकेऽतिथौ तु तिथिशब्दः समयविशेषवचनो मध्याह्ने सायमर्थे च परोऽन्यो यः कश्चनेत्यर्थः ॥

गृहाणि यः अभ्येति सोऽतिथिरित्यततेरकारमात्रमवतिष्ठते। इतिनिर्वचनसमासौ प्रकृतस्य॥

**( अयमपीतरोऽतिथिरेतस्मादेव )**

**इतरोऽ**भ्यागतः (प्राघुणकः)। "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि च" इति विश्वमेदिन्यौ॥ "प्राघुणस्त्वतिथिर्द्वयो"रिति त्रिकाण्डशेषः॥ **एतस्मात्** अभ्यतनात् **एव**। (अत्र तिथिशब्दो जहदजहल्लक्षणया समयविशेषवचनः। मध्याह्नेसायं वा यदाकदाचित्॥)

अथ निगमस्थं दुरोणशब्दं निर्ब्रवीति—

**दुरोण इति गृहनाम, दुरवा भवन्ति दुस्तर्पाः॥**

**दुरोण इति** एतद्गृहनाम, ते हि **दुरवा** दुःखेनावितुं (तर्पितुं) शक्याः **भवन्ति। दुस्तर्पा** इत्यर्थः। अत्र "ईषदुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (पा० ३-३-१२६) इति खल्प्रत्ययः। दुरिति कृच्छ्रार्थे अव्ययम्। उक्तं च गृहमुपक्रम्य "कुटुम्बतन्त्राणि हि दुर्भराणी"ति॥ "गृहं गेहोदवसितम्" इत्यमराभिधानान्नपुंसकमपि पुंस्त्वयं बहुवचनमात्रे। तथाच स (अमर) एव "गृहाः पुंसि च भूम्न्येवे"ति॥ भूम्नि—बहुत्वे॥

अथ परिशिष्टमन्त्रार्थमुपदर्शयति—

**इमं नो यज्ञमुपयाहि विद्वान्। सर्वा अग्ने अभियुजो विहत्य शत्रूयताम् आभर भोजनानि विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा धनानीति वा॥**

एवमेतस्मिन्मन्त्रे जुष्टः दमूनाः अतिथिः विद्वान् हे अग्ने! यज्ञमुपयाहि। एतस्मिन्प्रकरणे वर्तमानो दमूनाःशब्दोऽभिविशेषणमिति कमन्यमर्थमभिदध्यात्? न कश्चिदपीति परिशेषाद्दमूना इत्येतदग्न्यर्थकमेवेति सिद्धम्॥

अथ "मूष" इत्येत( ६ )दनवगतमर्थतोऽवगमयति—

**मूषो मूषिका इत्यर्थः॥**

**मूषः** शब्दो बहुवचनान्तः। अनुपदं निर्देक्ष्यमाणनिगमे "मूषो व्यदन्ती"ति दर्शनात्। तथाचायं षान्तः। "मूष स्तेये" (भ्वा० प०) क्विप्॥ मूट् मूड् मूषौ मूषः इत्येवम्॥ **मूषिकाः**—**इति** अनेनावगतसंस्कारेण योऽर्थ उक्तः स्यात् स एव **मूष** इत्युक्तः प्रसिद्धार्थेनाभिधानेन॥

एवं मूषशब्दस्य तत्त्वमाख्याय मूषिकाशब्दं निर्ब्रवीति—

**मूषिकाः पुनर्मुष्णातेः॥**

"मुष स्तेये" (क्र्या० प०)। "मुष्णातेर्दीर्घश्च"—(उ० २-४२) इति किकन्। स्त्रीत्वाट्टाप्॥ ता हि मुष्णन्ति (हरन्ति) धान्यादीनि॥

यद्वा—

**मूषोऽप्येतस्मादेव॥ ५॥**

**एतस्मात्** मुष्णातेरेव **मूष इति अपि॥** अत्र मते "मुष्णातेर्दीर्घश्च"—(उ० २-४२)—स्वविशेषेण क्विप्यपि भवति। तदेतद्बाहुलकबलेन समाधेयम्॥ यद्वा "क्विब्वचि" (पा० ३-२-१७८ वा०) इत्यत्र "प्राक्प्रत्ययनिर्देशादिष्टसिद्धिः" इति (म० भा०) बाहुलकान्मुषेः क्विप् दीर्घश्च॥

**"सं मा तपन्त्यभितः सपत्नीरिव पर्शवः। मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी॥ ३॥"**

(ऋ० सं० १-७-२१)

**सं मेति॥** आप्त्यस्य त्रितस्य, कुत्सस्य वेयमार्षं पङ्क्तिः। ऐन्द्रेषा॥ कूपे पतितस्त्रितः कुत्सो वा इन्द्रं स्तौति—हे **शतक्रतो**! इन्द्र! **ते** तव। **स्तोतारं मा** माम्। **अभितः** सर्वतोऽवस्थिता एताः **पर्शवः** कूपपर्शवः। कूपेष्टकाः पर्शुरितीष्टकानाम, परान् शृणातीति "आङ्परयोः खनिशृभ्यां डिच्च" (उ० १-१३) इति कुप्रत्यये डित्त्वाट्टिलोपः। बाहुलकात् परस्याकारलोपः। यद्वा एता अपि (इष्टकाः) पार्श्वास्थितुल्या इति तत् साधनमुक्तमधस्तात् (नि० ४-१-३)। **सं तपन्ति** सम्यक् पीडयन्ति, सङ्कटेऽवस्थितम्। कथं सन्तपन्ति? **सपत्नीः** सपत्न्यः सुब्व्यत्यय आर्षः (पा० ३-१-८५)। **इव**। यथा समानभर्तृकाः योषित एकं पतिं सर्वतः पीडयन्ति। परस्परं वा पीड्यन्ते एवम्। आभिः कूपेष्टकाभिरहं पीड्ये॥ किं च **आध्यः** आधयः। "संज्ञापूर्वकस्य विधेरनित्यत्वात्" (प० ९४) गुणाभावे यणादेशः। असम्पाद्यमानैर्योगदानादिभिरुत्पादिता मानस्यः पीडाः "आधिः स्यान्मानसीव्यथे"त्यमरः। कामा इति भाष्यम्॥ ते ह्यसंपूर्यमाणाः मां सन्तपन्तीति तदर्थः। **व्यदन्ति** विविधं (नानाप्रकारेण) भक्षयन्ति। तत्र दृष्टान्तः—**मूषो न**। यथा मूषिकाः **'शिश्ना'** शिश्नानि (शेर्डदेशः) आम्नातानि—कुविन्देन वायितानि अन्नरसेनालिप्तानि "सूत्राणि" इति शेषः। भक्षयन्ति तद्वत्

१. अपां पुत्रस्य। तथाच तैत्तिरीया आमनन्ति। तत एकतोऽजायत सद्वितीयमभ्यपातयत् ततो द्वितोऽजायत स तृतीयमभ्यपातयत्ततस्त्रितोऽजायत। यदद्भ्योऽजायत तदाप्त्यानामाप्यत्वमिति॥ तमेतमाप्त्यं त्रितस्तद्वेदाप्त्य इति तकारोपजनेन वयमधीमहे (तै. ब्रा. ३-२-८)॥

२. तथाच श्रूयते "इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाह्ळ ऋषिरह्वदूतये" (ऋ० सं० १-७-२३-६) काटे कूपे (निघं० ३-२३) निबाह्ळो निर्वतत इति सायणः। ऊतये अवनायाह्वदित्यर्थः॥

३. इदमस्यास्त्वया कृतमिदं मम न कृतमित्येवं दुर्वचोभिरभितस्तक्षन्तीव॥

४. अत्रापि सन्तपन्तीत्येवं क्रियान्वयो भाष्ये। सायणदुर्गादिभिस्तु व्यदन्तीत्येवान्वयितं सान्निध्यात्॥

यद्वा शिश्नशब्देन प्रजनन—(लिङ्ग—)मेवोच्यते । तच्चोपचारात्पुच्छे वर्तते । यथा ताः स्वकीयानि पुच्छानि घृततैलादिभाण्डे प्रक्षिप्योर्ध्वमुत्कृष्य व्यदन्ति लिहन्तीत्यर्थः । एवं मामाधयो व्यदन्ति । न चैतत्तव स्तोतुर्मम न्याय्यम् । यदैवमर्थ्यमानो न शुश्रावेन्द्रस्तदा द्यावापृथिव्यौ आह—हे **रोदसी !** द्यावापृथिव्यौ ! "द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी" इत्यमरः । युवाम् । **अस्य मे** मम वचसः स्तुत्याख्यस्य यत्प्रयोजनमतः कृच्छ्रान्मोचनं तद् **वित्तम्** जानीतम् । यदर्थमहं रोरवीमि ॥ यदि नायमिन्द्रोऽभ्युद्धरत्यस्मात्तदा युवयोरपि स्तोतैवाहमिति भावः ॥ ३ ॥

अथास्य भाष्यम्—

**सन्तपन्ति माममितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति, स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति । सन्तपन्ति माऽऽध्यः कामाः "स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी" जानीतं मेऽस्य द्यावापृथिव्याविति ॥**

**आस्नातानि** कुविन्देनावरसेनालिप्तानि । एष च शिश्ना इत्यस्यार्थः । **सूत्राणी**त्यध्याहृतं भाष्यकारेणोपपत्त्यर्थम् । **अथवा स्वाङ्गाभिधानम्** । शिश्नसहचरितं हि स्वाङ्गं पुच्छाख्यमेषां भवति । सादृश्यं च शेपलाङ्गूलयोरेषाम् । दुर्गस्तु—स्वाङ्गाभिधानमिति शेपोऽभिप्रेतः, भवति हि तिरश्चामेष स्वभावो

१. उपचारो लक्षणा । तद्बीजं साहचर्यं सादृश्यं वा बोध्यम् ॥

२. भक्तपरित्यागो हि सतां सर्वेभ्यः पापेभ्यः पापिष्ठ इत्यभिप्राय इति दुर्गः ॥

३. रोदसशब्दो रुदेरसुन्नन्तः (उ० ४—१८९) पक्षे गौरादित्वात् (पा० ४—१—४१) ङीष् । रोदसी इत्यव्ययमप्यस्ति । "रोदश्च रोदसी चापि दिवि भूमौ पृथक्पृथक् । सहप्रयोगेऽप्यनयो रोदः स्यादपि रोदसी"ति विश्वकोशात् ॥

४. शिश्नपदशेषभूतम् । मूषकसंबन्धेन । तेषामगन्धेन सूत्राणि व्यदन्ति इति ।

५. शेपो लिङ्गं पुंसः । अयं "शिश्नो मेढ्रं मेहनशेपसी"इत्यमरे सान्ततया निर्दिष्टोऽप्यकारान्तः । "शेपपुच्छलाङ्गूलेषु शुनः" इति (पा० ६—३—२१) वार्तिकात् । तथाच "ये सान्तास्तेऽदन्ता" इति प्रवादोऽप्युपपद्यते । अतएव "पिण्डं दद्याद्गयाशिरे" "सहस्रपादाक्षिशिरोरुबाहवे" इत्याद्युपपद्यते । फकारान्तोऽपीति अमरटीकायां (व्याख्यासुधायाम्) । तथाच बाहुलकाच्छेतेः प-फ-प्रत्ययाभ्यामेतौ (शेप-शेफौ) शेते रेतःपाते इति शेपः । शेफो वा । "वृञीङ्भ्यां फुट् च"-(उ० ४—२०१) ति असुनि तु सान्तः । तत्र पुट् चेत्यपि पाठः । वस्तुतस्तु सान्तौ नपुंसकावकारान्तौ पुंलिङ्गाविति व्यवस्थितिः । अर्थः समान एव ॥

यच्छेपं भक्षयन्ति इत्यपि व्याचख्यौ ॥ अत्र (स्वाङ्गाभिधान-) पक्षे लध्याहारो नास्त्येवेत्यस्वरसबीजं पूर्वस्मिन्पक्षे ॥

अथ पर्शव इत्येतावति श्रूयमाणे कूपपर्शव इति कुतो योजितमित्यर्थे प्रमाणमाह—

**त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ ॥**

त्रितं प्रतीत्यन्वयः । **एतत्** पूर्वोक्तम् । तत्रेयमृक् "त्रितः कूपेऽवहितो देवान्हवत ऊतये । तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी" (ऋ० सं० १—७—२३—२) इति ॥ एतद्विशेषलिङ्गादेवेत्थं व्याचख्यौ भाष्यकृत् ॥

**तत्र ब्रह्मेतिहासमिश्रम् । ऋङ्मिश्रं, गाथामिश्रं भवति ॥**

तत्र तस्मिन्नुपर्युक्ते सूक्ते । ब्रह्म वेदः । **इतिहासमिश्रम्** इतिहासयुक्तं **भवति** । तद्यथा "त्रितः" इति पूर्वोक्तम् । अत्र विनापि च समुच्चयो द्योत्यते "गामश्वं पुरुषं पशुम्" इत्यत्र यथा ॥ स पुनरितिहास ऋग्बद्धो गाथाबद्धश्च भवति । ऋक्प्रकार एव कश्चिद्गाथेत्युच्यते । "गाथाः शंसन्ति", "नाराशंसीः शंसन्तीति" श्रुतम् ॥ तत्र प्रकरणादपि सन्दिग्धपदस्यार्थोऽध्यवसेय इति पर्शुशब्दोऽत्र कूपपर्श्वर्थेऽभिहितो भाष्यकारेण ॥

अथ भाष्यप्रसक्तं त्रितशब्दं निर्ब्रवीति—

**त्रितस्तीर्णतमो मेधया बभूव ॥**

**तीर्णतमो** महान् । एकत—द्वितयोः सकाशात् ॥

**अपिवा संख्या नामैवाभिप्रेतं स्यात् ॥**

**अथवा संख्या** निमित्तमेव एतत् **नाम अभिप्रेत**मभिमतं **स्यात्** । सम्भावनायामत्र लिङ् ॥ कथम्—

**एकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ ६ ॥**

त्रयो हि ते भ्रातरः । तस्मात्संख्या निमित्तमप्युपपद्यत एव । उक्तं च "भार्यो(—गा—)ङ्गारेणाभ्युपादयत् तत एकतोऽजायत, द्वितीयं ततो द्वितः, तृतीयं ततस्त्रितः इति" (ब्राह्मणम्) ॥ ६ ॥

अथ "**इषिरेण**" (७) इत्येतदनवगतम् । तस्य ईषणमेषणमृषणं वेत्येते शब्दसमाधयः । तत्र तावन्निगममेवोदाहरति—

**"इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः । सोम राजन् प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥ २ ॥"**

**(ऋ० सं० ६—४—१२)**

१. "समाधिर्ना समर्थने । ध्याने नीवाकनियमे काव्यस्य च गुणान्तरे" इति मेदिनी । अत्र निवाकेत्यस्य स्थाने वैरस्यम् इति पाठः सुबोधिन्याम् (अ० टी०) ॥

२. अभिधेयमनुक्त्वा प्रथमं निगमोदाहरणे "इषिरेण ते मनसे"ति समानविभक्तिकत्वात्प्रतीयत एवेषिरशब्दस्य मनसो विशेषणत्वमित्येव हेतुरिति दर्शयति तत्र तावदिति । तावत् आदौ ॥

**इषिरेणेति** । प्रगाथस्येयमार्षं त्रिष्टुप्सौमी । हे भगवन्सोम! **राजन्!** स्वामिन्! "सोमोऽस्माकं ब्राह्मणानां राजे"ति निगमात् (य० वा० सं० ९-४०) **इषिरेण** ईषणेन त्वां प्रति सर्वात्मना गतेन "ईष गतिहिंसादर्शनेषु" (भ्वा० प०) "इषमदिमुदि" (उ० १-५१) इत्यादिना किरच्प्रत्ययो बाहुलकात् इषभावश्च । यद्वा एषणेन इच्छावता "इष इच्छायाम्" (तु० प०) फलप्रार्थनावतेत्यर्थः । अथवा ऋषणेन दर्शनवता "ऋषी गतौ" (तु० प०) गतिर्ज्ञानं तच्चेह दर्शनम् । **मनसा** । **सुतस्य** अभिषुतस्य । **ते** तव भागं वयं **भक्षीमहि** भक्षयेमहि । आशंसायां लिङ् । आर्षमन्यत् । कथम्? **पित्र्यस्येव रायः** । यथा पित्र्यो धनांशः अविघ्नेन पुत्रेण भक्ष्यते तद्वत् । स हि भक्षितः सुखपरिणामो भवति तद्वदयं ममास्तु ॥ हे राजन्! **नोऽस्माकम् आयूंषि प्रतारीः** प्रवर्धय । कथं? **वासराणि** वासन्तिकानि । जगद्वासकानीति सायणः । **अहानि** दिनानि **सूर्य इव** । स यथा तानि क्रमेण प्रवर्धयति मन्दगतित्वात् तद्वत् ॥ २ ॥

अथास्य भाष्यम्—

**ईषणेन वैषणेन वार्षणेन वा ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य, प्रवर्धय च न आयूंषि सोम राजन्! अहानीव सूर्यो वासराणि ॥**

निगदव्याख्यमेतत् । अथ वासरशब्दमनेकधा निर्वक्ति—

**वासराणि वेसराणि विवासनानि गमनानीति वा ॥**

द्वाभ्यां शीतोष्णाभ्यां रात्रिन्दिवमनारतं सरन्ति गच्छन्तीति **वेसराणि** सन्ति **वासराणि** भवन्ति । द्विशब्दस्य वेभावो वाभावो वा पृषोदरादित्वात् । सर्तेः (भ्वा० प०) पचाद्यच् (पा० ३-१-१३४) यद्वा **विवासनान्येव** वासराणि स्युः । तानि हि तच्छीतं विवासयन्ति । विनाशयन्तीत्यर्थः । अत्र "वस निवासे" (भ्वा० प०) णिजन्तः । शुद्धोऽपि विपूर्वस्यार्थे वर्तते । "अर्तिकमिभ्रमिदिविचमिवासिभ्यश्चित्" (उ० ३-१२८) इत्यरच्प्रत्ययः । अथ **वा गमनानि** विस्तृतानि विस्तीर्णानि सन्ति **इति** हेतोर्वासराणि उच्यन्ते ॥ अत्र पक्षे विस्तीर्णशब्दस्यैव वासरशब्देन परिवर्तनं पृषोदरादित्वात् ॥

**कुरुतनेत्यनर्थका उपजना भवन्ति ॥**

**कर्तन, हन्तन, यातनेति ॥**

**"कुरुतन"** (८) इति एवमादि । **अनर्थका** अर्थशून्या एव **उपजनाः** वर्णागमाः **भवन्ति** । य एवार्थः कुरुतेत्युक्ते भवति, स एव कुरुतनेति । नात्र नकारस्यार्थे कोऽस्ति । एवमुक्त्वाऽन्यान्यपि दर्शयति—**कर्तनेत्यादि** ॥ तथाच यथा कुरुत इत्यर्थे कुरुतनेति तत्र नेत्यनर्थक उपजनः । एवं कुरुत इत्यर्थे कर्तन । हन्तेत्यर्थे हन्तन । यातेत्यर्थे यातन । अन्तेऽपीतिशब्द आद्यर्थस्तेन हननेनेत्यर्थे हन्मना इत्याद्यूह्यम् । सर्वमेतत्पृषोदरादित्वात्साधु ॥ उदाहरणान्येषां दुर्गवृत्तौ द्रष्टव्यानि ॥

**जठरमुदरं भवति ॥**

**"जठरम्"** (९) इत्येतदनवगतम् । **उदरं भवति** इत्यभिधेयवचनम् ॥

अथास्य निर्वचनम्—

**जग्धमस्मिन् ध्रियते धीयते वा ॥ ७ ॥**

**जग्धम्** भुक्तमन्नम् । **अस्मिन्** अवस्थितं **ध्रियते** इति जग्धधरं जठरम् । अन्नं **वा** जग्धमस्मिन्**धीयते** प्रक्षिप्यते इति जग्धधानं सज्जठरमुच्यते । एतौ शब्दसमाधी । जग्धशब्दोपपदाद्धृञो दधातेर्वा "कृदरादयश्च" (उ० ५-४२) इति अरन्प्रत्यये जग्धशब्दस्य जभावो धकारस्य ठकारश्च निपात्यते । पृषोदरादित्वात् । "जठरे" इति निघण्टुपाठः ॥ ७ ॥

अत्र निगममुदाहरति—

**"मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय । आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥ १ ॥"**

(ऋ० सं० ३-३-११)

**मरुत्वेति** । विश्वामित्रस्येयमार्षम् त्रिष्टुप् महाव्रते पृष्ठ्यस्य चतुर्थेऽहनि शस्यते । हे **इन्द्र!** त्वं **मरुत्वान्** मरुत्संयुक्तो भूत्वा "दीर्घादटि समानपादे" (पा० ८-३-९) इति नस्य रुत्वेऽनुनासिकः (पा० ८-३-२) रोर्यत्वयलोपौ ॥ **वृषभः** अपां वर्षिताऽतो **रणाय** रमणीयाय सङ्ग्रामाय तं कर्तुम् । **मदाय** मदनीयाय पानाय जैत्राय । हर्षायेति सायणः ।

१. "नन्द्यादि" (पा० ३-१-१३४) ल्युन्तोऽयम् ॥

२. औणादिकक्यन्तोऽयम् । योरनः (पा० ७-१-१) कित्वाद्गुणाभावः ॥

३. सुतन्त्वादिति सायणस्तन्मते । द्वितीयार्थे षष्ठी बाहुलकात् (पा० २-३-६२)

४. वासन्तिकान्यहानि ।

१. अत्र करोतेर्लोण्मध्यमपुरुषबहुवचनस्य तशब्दस्य "तप्तनप्तनथनाश्च" (पा० ७-१-४५) इति छान्दसस्तनादेशः । तत्र त-शब्द एवार्थवान् नशब्दस्तूपजनोऽनर्थकः । अत्र उपजना भवन्तीति बहुवचनेनान्येप्येवंरूपा उपजनाः सन्तीति प्रतिपादनार्थः । "क्त्वो यक्" "आज्जसेरसुक्" इत्येवमादय इति देवराजयज्वानः ॥

२. एष एव च नैरुक्तसमयः । तथाचोक्तमधस्तात् "वर्णागमो वर्णविपर्ययश्च" इत्यादि निरुक्तलक्षणम् (पृ० ३ पं० ३०) ॥

३. एतच्चाध्याहृतं भाष्यकारेण । द्विविधो हि मदः संमोहकारी जैत्रश्च । तयोर्जैत्र इष्टः संग्रामे ॥

**अनुष्वधम्**। स्वधया सेवनीयपुरोडाशादिरूपेणान्नेन ( निघं० २-७-) अनुगतं **सोमं पिब**। अत्र "पूर्वपदात्" (पा० ८-३-१०६) इति षत्वम् दीर्घश्च सांहितिकः (पा० ६-३-१३७)॥ किमीषत्? नेत्युच्यते-**मध्वः** मधुनः। छान्दसो यण् मदकरस्य सोमस्य **ऊर्मिं** संघातं बहुरसं "ऊर्मिः पीडाजवोत्कण्ठाभङ्ग-प्राकाश्यवीचिषु। वस्त्रसंकोचलेखायां संघातेऽपि प्रकीर्तितः॥" इति हैमः। भङ्गो विच्छित्तिः॥ **स्वजठरे** स्वोदरे। **आसिञ्च** सर्वतः क्षालय। यतस्त्वं **प्रदिवः** पूर्वेष्वप्यहःसु ( निघं० ३-२७) **सुतानाम्** अभिषुतानाम् (अभिषवद्वारा निष्पादितानाम्) सोमानां न केवलमाधुनिकानां **राजा** ईश्वरः प्रभुरसि॥१॥

अथास्य भाष्यम्—

**मरुत्वानिन्द्र! मरुद्भिस्तद्वान्, वृषभो वर्षितापां, रणाय रमणीयाय संग्रामाय, पिब सोममनुष्वधमन्वन्नं, मदाय मदनीयाय जैत्रायासिञ्चस्व जठरे मधुन ऊर्मिं, मधु सोममित्यौपमिकम् माद्यतेरिदमपीतरन्मध्वेतस्मादेव, त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम्॥८॥**

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे नैघ० काण्डे चतुर्थाध्यायस्य प्रथमः पादः॥४॥१॥

**औपमिकम्**। उपमा। "विनयादित्वात्" (पा० ५-४-३४) ठक् स्वार्थे॥ इत्येतस्मादेवोक्तं सोमस्य मधुत्वम्। मादकत्वमेव साधारणो धर्मः। तदेतत् **माद्यतेः** "मदी हर्षग्लेपनयोः" इत्यस्य धातोः (दि० प०) उर्दस्य धश्च पृषोदरादित्वात्। **इतरत्** माक्षिकम्। **एतस्मादेव** माद्यतेरेव। एतदपि मादकमेव कथञ्चित्॥ तथाच विश्वः—"मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे" इति॥ **पूर्वेष्वप्यहःसु** इति हि प्रदिव इत्यस्यार्थः। सकारान्तमेतदव्ययम्। एतच्च पुराणनामसु (निघं० ३-२७) पठितम्। प्रगतानि दिनान्यस्येत्यर्थे पृषोदरादित्वान्नकारस्य वस्कारः। वस्तुतस्तु—वान्तोऽयमत्यन्तसंयोगे द्वितीया-(पा० २-३-५)-र्थे प्रथमा व्यत्ययेन। (पा० ३-१-८५)॥

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ नैघण्टुककाण्डे चतुर्थाध्यायस्य प्रथमः पादः॥४॥१॥**

---

१. "अवादयः क्रुष्टाद्यर्थे तृतीयया" (पा० १-४-७१ वा०) इति समासे। "एकविभक्ति चापूर्वनिपाते" (पा० १-२-४४) इत्युपसर्जनत्वाद्ध्रस्वत्वम् (पा० १-२-४८) सायणस्तु—स्वधामनुगम्यवर्तमानम् इति व्याख्याय "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (पा० १-४-७१ वा०) इति समासे "पूर्वपदात्" (पा० ८-३-१०६) इति पठनीयम्॥



## अथ चतुर्थाध्यायस्य द्वितीयः पादः।

**तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा॥(९)**

**"तितउ"** (१०) इत्येतदनवगतम्। **परिपवनं भवती**-त्यभिधेयवचनम्॥ सक्तवः परिपूयन्ते परिशोध्यन्ते येन द्रव्येण चालन्याख्येन तत्परिपवनमित्युच्यते। पुनातेः (क्र्या० उ०) ल्युट् (पा० ३-३-११७) अथवा **ततवत्**। ततेन चर्मणा नैद्धं तितउ इति दुर्गः। विस्तारयुक्तमिति महाभाष्यप्रदीपैकृत्। अथवा **तुन्नवत्** तुन्नैर्वा छिद्रैर्युक्तं (तद्वत्) तितउ॥ अथवा **तिलमात्राणि तुन्नानि** छिद्राणि अस्मिन्सन्तीति तितउ॥ यथासम्भवमेते शब्दसमाधयः। पृषोदरादिः॥१॥(९)

अथात्र निगममुदाहरति—

**"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधिवाचि॥२॥"**

(ऋ० सं० ८-२-२३)

**सक्तुमिवेति**। विद्यासूक्ते बृहस्पतेरार्षं भुरिक् त्रिष्टुप्॥ **यत्र** यस्मिन्समाजे (विद्वद्गोष्ठ्याम्) यज्ञे वा **धीरा** ध्यानवन्तो धीमन्तो वा (विद्वांसः) **तितउना** चालन्या **सक्तुमिव मनसा** परिपवन-(चालन)-स्थानीयेन प्रज्ञानेन **पुनन्तः** प्रकृतिप्रत्ययाभ्यां निश्चिन्वन्तः न्याययुक्तां **वाचम् अक्रत** अकृषत (अपशब्देभ्यो विविक्तां कृतवन्तः) "मन्त्रे घसे" (पा० २-४-८०) ति च्लेर्लुकि सत्यकृतेति रूपम्। कुर्वन्तीति भाष्यकृत् (यास्कः) तत्र कालव्यत्यय आर्षः। **अत्रा** तत्र "ऋचितुनुघे-" (पा० ६-३-१३३)ति दीर्घः। **सखायः** समानख्यानाः (समानेषु शास्त्रेषु कृतश्रमा लब्धप्रज्ञानाश्च)

---

१. अत्र यद्यपि "चालनी तितउः पुमानि"त्यमरेण पुंस्त्वमाम्यधायि। तथापि "चालनं तितउ प्रोक्तम्" इति क्लीबकाण्डे रत्नकोशादास्कवचनाच्चास्य नपुंसकत्वमपि॥ "तनोतेर्डउः सन्वच्चे"-(उ० ५-५२) ति साधुः। डित्वाट्टिलोपः सन्वद्भावाद्दित्वादि॥

२. तथाचात्रास्त्यर्थे मतुप्। वत्वम्। गतिविस्तारयुक्तमित्येवं व्याचख्यौ॥

३. कैयटः॥

४. प्रज्ञानवन्त इति भाष्यकृत्॥

५. निश्चिन्व चशब्दार्थमिति दुर्गः॥

६. प्रज्ञानमिति भाष्यकृत्॥

७. शब्दव्यत्यय आर्षः॥

८. अत्र प्रदीपकृत्-समानख्यातयोर्मेदग्रहस्य निवृत्तत्वात् सर्वमेकमिति मन्यन्ते। सख्यानीति-सायुज्यानीत्यर्थः। वाग्विषयो

सन्तः **सख्यानि** सखिभावान् । तेषां विज्ञानानि ( यथा नैरुक्तानां नैरुक्ता वैयाकरणानां वैयाकरणाः ) **जानते** सञ्जानते ( इतरेतरस्य यो विद्याप्रकर्षस्तं सम्यक् जानते ) किं कारणम् ? यस्मात् **एषां** शास्त्रेषु कृतश्रमाणां **वाचि** वाचः । सुब्व्यत्यय आर्षः । **अधि** उपरि । **भद्रा** भन्दनीया । कल्याणी सुखमयी वा । "भदि कल्याणे सुखे चे"ति ( भ्वा० आ० ) धातोः "ऋज्रेन्द्र०" ( उ० २–२८ ) त्यादिना रन्नन्तो निपातः ॥ **लक्ष्मीः** विज्ञानाख्या **निहिता** अवस्थापिता । तया लक्ष्म्येतरेतरस्य विद्याप्रकर्षज्ञानते ते । इतरो ह्यविद्वान् किं विज्ञास्यत इति भावः ॥ २ ॥

अथ तितउशब्दार्थं विवक्षुः प्रथमपादमस्यार्थतोऽनुवदति—

**सक्तुमिव परिपवनेन पुनन्तः ॥ इति ॥**

अथ सक्तुशब्दं निर्ब्रवीति—

**सक्तुः सचतेः ॥**

**सचतेः** "षच समवाये" (भ्वा० उ०) इति धातोः "सितनिगमि" ( उ० १–६९ ) इत्यादिना तुन् । समवायः सम्बन्धः । स हि सूक्ष्मत्वात्सचति ( संश्लिष्यति ) अङ्गे । ततश्च—

**दुर्धावो भवति ॥**

इत्युपपत्तिः । दुःखं धाव्यते प्रक्षाल्यत इत्यर्थः ॥

**कसतेर्वा स्याद्विपरीतस्य ॥**

अथवा **कसतेः** । "कस गतिशासनयोः" ( भ्वा० प० ) इत्यस्य **विपरीतस्य** । सिंहवत् वर्णव्यत्ययेन सक्तुरूपतामापादितस्य सक्तुः । स हि—

**विकसितो भवति ॥**

तनीयानपि बहुवद्भाति भवति च । ततश्च विकसनात्कसतेरेव सक्तुः ॥

अथ द्वितीयपादमस्यार्थतोऽनुवदति—

**यत्र धीरा मनसा वाचमकृषत प्रज्ञानम् । धीराः प्रज्ञानवन्तो ध्यानवन्तः ॥**

**प्रज्ञानम्** इति वाचमित्यस्यार्थः । प्रज्ञानार्थत्वाद्वाचः । "तादर्थ्यात्ताच्छब्द्यं" यथा गृह्या दाराः । धीर्ध्यानं प्रज्ञानमित्यनर्थान्तरम् ॥

अथोत्तरार्धं व्याचष्टे—

**तत्र सखायः सख्यानि संजानते । भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥**

**तत्रेति** । अत्रेत्यस्यार्थः । तच्छब्दस्येदंशब्देन परिवर्तनात् ॥

अथ भद्रशब्दं निर्ब्रवीति—

**भद्रं भगेन व्याख्यातम् ॥**

यथा भगो भजतेरिति **व्याख्यातम्** ( नि० ३–३–४ ) तथा **भद्रम्** इत्यपि भजतेरेव निपातः "ऋज्रेन्द्र" ( उ० २–२८ ) ति ॥

**भजनीयं भूतानाम् अभिद्रवणीयम् ॥**

तद्धि **भूतानां** प्राणिनां **भजनीयं** सेवनीयमिति **अभिद्रवणीयम्** अभिगमनीयं भवति ॥

**भवद्रमयतीति वा ॥**

अथवा यस्य हि तत् **भवति** स **रमते** । तथाच भवतेरमतेश्च भद्रं, द्विधातुजम् । डप्रत्ययान्तम् ॥

**भाजनवद्वा ॥**

अथवा सन्ति हि कल्याणरूपाः पुरुषा ये तस्य भाजनम् । तैस्तद्वद्भवद्भद्रमित्युच्यते ॥

अथ लक्ष्मीशब्दं सप्तधा निर्ब्रवीति—

**लक्ष्मीर्लाभाद्वा लक्षणाद्वा ( लप्स्यनाद्वा ) लाञ्छनाद्वा लषतेर्वा स्यात्प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः ॥**

वाशब्द एवार्थे । **लाभात्** एव **लक्ष्मीः** लक्ष्मीवन्त एव लभन्तेऽभिमतमिति ॥ लभतेर्लक्षादेशो मुट् ईप्रत्ययश्च ( उ० ३–१६० ) अथवा **लक्षणात्** लक्ष्मीः । आलक्षितः सर्वैरेव हि लक्ष्मीवान्भवति । एवं **लाञ्छनादेव** लक्ष्मीः । लाञ्छयतेऽङ्कतेऽसौ मनसि सर्वैः धनार्थिभिरनयेति लक्ष्मीः । अथवा **प्रेप्साकर्मणः** अभिलाषार्थस्य **लखतेः** (भ्वा० उ०) लक्ष्मीः **स्यात्** । सर्वे एव हि तामभिलषन्तीति कर्मणि प्रत्ययः । धातोः षस्य कुटागमोऽत्र ॥ अथवा **आश्लेषकर्मणः**

---

हि ज्ञानेनैव प्राप्यः । वाचि वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सैषां निहितेत्यर्थः । इत्याह ॥ एषां केषां ? वैयाकरणानामिति पतञ्जलेरर्थः ॥

१. सायणस्तु–अधिः सप्तम्यर्थस्यैव द्योतकः । अर्थज्ञानमेषां वाचि पश्याम इत्यर्थः । इत्याह ॥

२. प्रदीपस्तु–"षच सेचने" इत्यस्य ( भ्वा० आ० ) सक्तुरित्याह । सहि सिच्यते भक्षणकाले ॥ तथाचात्र कर्मणि तुन्तन्मतेन ॥

३. क्रियाविशेषणमेतद् । दुर्धावो दुःशोध इति प्रदीपः ॥

१. भाजनमस्यास्तीति भाजनवत्सद् भद्रम् । अत्र "तदस्यास्ती"त्यर्थे मतुबिति ( पा० ५–२–९४ ) दर्शितम् । अत्र पृषोदरादित्वमेव शरणम् ॥

२. तथाचात्र करणे प्रत्ययः । लभन्तेऽनयेति लक्ष्मीरिति । एवमग्रेऽपि यथायथमूह्यम् ॥

३. अत्रार्थे आकारस्याप्रयोगो धातोरेव तदर्थावगतेर्द्योतका एवोपसर्गा इति गमयति ॥ आलक्षितः समन्तात्सादरं वाऽवलोकित इति दर्शनार्थेऽत्र लक्षधातुः ॥

४. अत्राङ्कार्थे लक्षधातुः । "लक्ष दर्शनाङ्कयोः" ( चु० प० ) ॥ इति ॥

आलिङ्गनार्थस्य लग्यतेः–"लगे सङ्गे" (भ्वा० प०) इति धातोः स्यात्। कर्तरि प्रत्ययः। आश्लिष्य एव हि सा वर्तते पुरुषम्। अत्र श्यना निर्देश आर्षः। आकृतिगणत्वं वा दिवादेर्गमयति। अत एव क्षीयते मृग्यतीत्यादिसिद्धिरित्युक्तम् (सि० कौ०)। अथवा लज्जतेः (तु० आ०) अश्लाघाकर्मणः। अनादरार्थस्य स्यात्। ये हि लक्ष्मीवन्तो मान्यस्वभावा भवन्ति ते स्वयमात्मानं न श्लाघन्ते। तथाचात्र करणे प्रत्ययः। लज्जन्त एव हि तेऽर्थिभिरभिमुखं वर्ण्यमाना इति॥

## शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः॥२॥(१०)

"शिप्रे" (११) इति। एतदनवगतं तत् उपरिष्टात् व्याख्यास्यामः। "शिप्रे हनू नासिके वा" इति। (नि० ६–१७) अत्र हि एतन्निगमप्रसक्तमायास्यतीति लाघवार्थमुत्कृष्टम्॥ २॥ (१०)

अथ "मध्या" (१२) इत्येतदनवगतम्। "मध्ये" इत्यवगमस्तत्र निगममुदाहरति—

**"तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सञ्जभार। यदेदयुक्त हरितः सधस्थाद्रात्री वासस्तनुते सिमस्मै॥ ४॥"**

(ऋ० सं० १–८–७)

तत्सूर्यस्येति॥ आङ्गिरसस्य कुत्सस्येयमार्षम् त्रिष्टुप्। सौर्यस्य पशोः षड्वे वपाया याज्या॥ अहम् तत् सूर्यस्य भगवतो देवत्वम् देवताभावम् तत् च महित्वम् महत्त्वं (महाभाग्यं) मन्ये यत् कर्तोः कर्मनामैतत्। (निघं० २–१) कर्मणां क्रियमाणानाम् प्रारभ्यापरिसमाप्तानाम् करोतेः "स्तुन्नन्त" (उ० १–६७)स्य रूपं। वचनव्यत्यय आर्षः॥ मध्या मध्य एव अपरिसमाप्त एव तस्मिन्कर्मणि "सुपांसुलुगि"–(पा० ७–१–३९) त्यादिना ङेर्डादेशः॥ विततम् विस्तीर्णम्। स्वकीयं रश्मिजालं संजभार संह्रियते तेन (यदन्यैर्देवैर्महताऽपि कालेन दुरुपसंहारं तन्मुहूर्तेनायत्नेनैव भगवता सूर्येणोपसंह्रियते) लडर्थे लिट् (पा० ३–४–६)। अपिच–यदेत् इदित्यवधारणे। यदैवासौ भगवान् हरितः रसहरणशीलान् खरश्मीन् हरितवर्णानश्वान्वा। सधस्थात् सहस्थानादस्मात्पार्थिवाल्लोकादाकृष्य अयुक्त अन्यत्र युक्तान्करोति। यद्वा युजिः केवलोऽपि विपूर्वो द्रष्टव्यः। यदैवासौ खरश्मीन् स्वाश्वान्वा सधस्थात् सह तिष्ठन्त्यस्मिन्निति सधस्थो रथस्तस्मादयुक्त व्ययुङ्क्त (अमुचत्) आत् अथानन्तरमेव। रात्री निशा वासः आच्छादयितृ तमः। "वस आच्छादने" (अ० आ०) वस्यतेऽनेन। "वसेर्णित्" (उ० ४–११८)–इत्यसुनुपधावृद्धिः। सिमस्मै सिमशब्दः सर्वशब्दपर्यायः। "सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः" इति हैमः। सप्तम्यर्थे चतुर्थी। सर्वस्मिंल्लोके तनुते विस्तारयति। यद्वा वासो वासरमहस्तत्सर्वस्माल्लोकादानीय तमस्तनुते॥ ४॥

अथास्य भाष्यम्—

**तत्सूर्यस्य देवत्वं तन्महित्वं, मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते। यदासावयुक्त, हरणानादित्यरश्मीन् हरितोऽश्वानिति वा, ऽथ रात्री वासस्तनुते सिमस्मै, वेसरमहरवयुवती सर्वस्मात्॥**

यदासाविति। एतन्मत इदिति पादपूरण एव॥ हरितोऽश्वानिति ऐतिहासिकमतेन॥ वेसरम् अहः। अवयुवती अवमिश्रयन्ती। उपसंहृतरश्मिजाले भगवति सूर्ये। "यु मिश्रणे" (अ० प०) लटः शतरि ङीप्। एतच्चाध्याहृतं भाष्यकारेण। सर्वस्मात् लोकात् अहरपकृष्य–वासस्तमस्तनुते विस्तारयति। अत्र पञ्चम्यर्थे चतुर्थी भाष्यमतेन॥

## अपिवोपमार्थे स्यात् रात्रीव वासस्तनुत इति॥

अपि वा। अथवा उपमार्थे इति। वास इव रात्री

---

१. धातोः सगागमोऽत्र॥ षत्वचर्त्वे॥

२. धातोः सादेशः। अलोऽन्त्यस्य। कुत्व–षत्वे॥

३. उद्धृत्य निहितम्॥

४. अहं मन्ये यदिति पदत्रयमध्याहृतं व्याख्यात्रा दुर्गेण सङ्गमनार्थम्। सायणस्तु–तच्छब्दश्रुतेर्यच्छब्दाध्याहार इत्येतावदेवाह "नत्वहं मन्ये" इति॥

५. ईश्वरत्वं स्वातन्त्र्यमिति यावदिति सायणः॥

६. सायणस्तु–अस्तं यन्त्सूर्यः स्वकीयं रश्मिजालं सञ्जभार अस्माल्लोकात्स्वात्मनि उपसंहरति। कर्मकरं च प्रवृत्तमपरिसमाप्तमेव विसृजति। अस्तं यन्तं सूर्यं दृष्ट्वा। ईदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति? न कस्यापि। सूर्यं एवेदृशं स्वातन्त्र्यं महिमानं चावगाहते इत्याह॥

१. कालव्यत्यय आर्षः (पा० ३–४–६)। वर्तमाने लिट्। तदस्य देवत्वं, तच्च महत्त्वमहं मन्ये॥

२. "घञर्थे कविधानमि" (पा० ३–३–५८ वा०) ति अधिकरणे कप्रत्ययः। "सधमादस्थयोश्छन्दसी" (पा० ६–३–९६) ति सधादेशः॥

३. तदेवमेतदपि सूर्यस्यैव महाभाग्यं यदस्य सन्निधौ तमो नश्यति। यस्मानेनोत्सृष्टो देशः सः तमसाऽऽच्छाद्यते इति भावः। इति दुर्गः॥

४. एतच्चोक्तमधस्तात् (नि० ४–१–७)॥

५. असिन्नर्थे। सिमस्मै इति चतुर्थी पञ्चम्यर्थे॥ तथाचायमर्थः। रात्रिः कर्त्री वेसरमहः सर्वस्माल्लोकादपकृष्य भगवति सूर्ये अवमिश्रयन्ती तमस्तनुते इति॥

तमस्तनुत इत्यन्वयः। पूर्वत्र वेसरमहरवयुवती तमस्तनुत इति नास्त्युपमा, इह पुनर्वास इव तमस्तनुत इत्येवमुपमेत्यर्थः॥

**तथापि निगमो भवति—**

**"पुनः समव्यद्वितंतं वयन्ती॥"**

(ऋ० सं० २-८-२-४)

**समनात्सीत्॥ ३॥ (११)**

यथा च उपमार्थोऽपि युज्यते **तथा** च **निगमः अपि** अयं **भवति पुनरिति**। समव्यदित्यस्य च **समनात्सीत्** इति निर्वचनं, समवेष्टयत् इत्यर्थः। तथाच यथा योषित् काचित् वासः (वस्त्रं) वयन्ती पुनः संवेष्टयत्यस्तमनकाले, पुनश्च वितनोत्यादित्य उदिते। एवमियं रात्रिः पुनरेव तमः संवेष्टयति योषिदिव वासो वयन्ती॥ ३॥ (११)

अथ "मन्दू" (१३) इत्येतदनवगतम्। मदिष्णू-मन्दुनेति वा शब्दसमाधी। अत्र निगममुदाहरति—

**इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा। मन्दू समानवर्चसा॥ ७॥** (ऋ० सं० १-१-१२)

**इन्द्रेणेति**। मधुच्छन्दस आर्षम् महाव्रते महदुक्थे तृचाशीतिषु शस्यते। सात्रिकेषु चाहःसु स्तोमातिवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे इन्द्र उच्यते—हे भगवन्निन्द्र! त्वम् **इन्द्रेण** ईश्वरेण दीप्तेन वा **अबिभ्युषा** अभयवता मरुद्गणेन नित्यमेव **सञ्जग्मानः** सङ्गच्छमानः। **सन्दृक्षसे हि** सम्यग्[३] दृश्यसे हि। "समो गम्यृच्छी"-(पा० १-३-२९) ति सूत्रे "अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्" इत्यात्मनेपदम्॥ यगभावश्च "यक्चिणोः प्रतिषेधे" "णिश्रन्थिग्रन्थिब्रूञामात्मनेपदाकर्मकाणामुपसंख्यानम्" (पा० ३-१-८९ वा०) इति॥ बाहुलकात्सिप् (पा० ३-१-३४) "संज्ञापूर्वको विधिरनित्य" इति गुणाभावः। षत्वं (पा० ८-२-३६) कत्वं (पा० ८-२-४१) षत्वं च (पा० ८-३-५९) तौ च युवाम् (मरुद्गणस्त्वं च) एकत्र सङ्गतौ। **मन्दू** मदिष्णू (नित्यप्रमुदितौ)

**समानवर्चसा** समानवर्चसौ तुल्यदीप्ती च भवथः। द्विवचनस्याकारादेशः (पा० ७-१-३९) पुरा कदाचिद्वृत्रवधदशायामिन्द्रस्य सखायः सर्वे देवा वृत्रश्वासेनापसारिताः। तदानीमिन्द्रस्य वृत्रसंबन्धिसकलसेनाजयार्थं मरुद्भिः सङ्गमोऽभूत्। सोऽयमर्थो "वृत्रस्य त्वाश्वसथादि"ति मन्त्रे संगृहीतः। (ऋ० सं० ६-६-३३-२) "इन्द्रो वै वृत्रं हनिष्यन्नि"ति ऐ० ब्राह्मणे (३-२०) प्रपञ्चितं च। अत्र सञ्जग्मान इति गमेः सम्पूर्वा "च्छन्दसि लुङ्लङ्लिटः" (पा० ३-४-६) इति वर्तमाने लिट् "समो गम्यृच्छी" (पा० १-३-२९)ति गमेरात्मनेपदविधानाल्लिटः कानजादेशः। अभ्यासकार्यमुपधालोपश्च (पा० ६-४-९८) एवमबिभ्युषेति "ञिभी भय" इत्यस्य पूर्ववल्लिटः क्वसुः (पा० ३-२-१०७) किलाद्गुणाभावः। क्रादिनियमात्प्राप्त इट् "वस्वेकाजाद्घसाम्" (पा० ७-२-६७) इति निवर्तते॥ मन्दू इति "मदि स्तुतिमोद०" (भ्वा० आ०) इदित्वान्नुम् कुरित्यनुवृत्तौ "खरुशंकु०" (उ० ) इत्यत्राविभक्तिकनिर्देशाद्धन्तेर्हिंगुरितिवद्धालन्तरादपि कुरित्युक्तम्॥ ७॥

अथास्य भाष्यम्—

**इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन। मन्दू मदिष्णू युवां स्थः॥**

एवं मन्दू समानवर्चसा इत्येतेन द्विवचनेन मरुद्गणेन्द्रविषयेण निगमो व्याख्यातः।

अथान्यथापि व्याचष्टे—

**अपिवा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम्॥ ४॥ (१२)**

**अपि वा**-अथवा एवमन्यथा **स्यात् मन्दुना तेनेति** एवम्। तथाच तेनेति मरुद्गणेनेत्यर्थः। अत्र पक्षे मन्दू इति तृतीयैकवचनस्य पूर्वसवर्णः (पा० ७-१-३९) **एतेन** मन्दुनेति पदेन **समानवर्चसेति** व्याख्यातं तृतीयैकवचनान्तमेवेति॥ अथवा मरुद्गण एवोच्यते त्वमिन्द्रेण मन्दुना समानवर्चसेत्येवम्॥ ४॥ (१२)

अथ "ईर्मान्तासः" (१४) इत्येतदनवगतम्। "समीरितान्ताः पृथ्वन्ता" वेति यथासम्भवं शब्दसमाधी। तदत्र निगममुदाहरति—

**"ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः। हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः॥ ५॥"**

(ऋ० सं० २-३-१२)

**ईर्मान्तास इति**॥ दीर्घतमस आर्षम् भुरिक् त्रिष्टुप्।

---

१. मन्देस्तुत्यर्थात् (भ्वा० आ०) "मृगय्वी०"-(उ० १-७) त्यादिना बाहुलकादुप्रत्ययः। मदेर्वा उप्रत्ययो नुम्च। प्रथमाद्विवचनम्। तृतीयैकवचनस्य वा "सुपां सुलुगि०"-(पा० ७-१-३९) ति पूर्वसवर्णः। इति देवराजयज्वानः॥

२. अत्र सायणः-"इन्द्रशब्दः परमैश्वर्यवन्तं, (देवराजानम्) मरुद्गणं चाभिधत्ते तदानीमिन्द्रस्य संबोधनं बहिरेवाध्याहर्तव्यम्। इति॥

३. अत्र सायणः-"सम्यग् दृश्येथाः खलु अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः" इत्येवं व्याख्याय "लिङर्थे लेडिति" (पा० ३-४-७) प्रार्थनायां लेट् "थासः से" (पा० ३-४-८०) "लेटोऽडाटौ" (पा० ३-४-९४) विलडागमः। "सिब्बहुलं लेटी-" (पा० ३-१-३४) ति सिविलाह॥

अश्वस्तोमीयं सूक्तं सूर्यदैवत्यम् । आदित्यस्य रथे युक्ता येऽश्वास्तेषु चत्वारः **'ईर्मान्तासः'** ईर्माः समीरिताः अन्ता येषां ते तथोक्ताः । प्रसृतान्ताः प्रविरला इत्यर्थः । यद्वा ईर्मं ईरितः पुरोभागे उन्नतः पृथुरिति यावत् तादृशोऽन्तो जघनप्रदेशो येषां ते तथोक्ताः । ये च मध्यमास्त्रयस्ते **सिलिकमध्यमासः** सिलिकः संसृतः ( संश्लिष्टः ) मध्यमो भागो येषां ते सर्वेऽपि **शूरणासः** विक्रमशीलाः । **दिव्यासः** दिवि भवाः । अत्र सर्वत्र "आज्जसेरसुक्" इति ( पा० ७-१-५० ) जसोऽसुगागमः । **अत्याः** अतनाः ( गमनशीलाः ) अश्वाः ( निघं० १-१४ ) ते **श्रेणिशः** एकव्यापाराणां बहूनां संघः श्रेणिरित्युच्यते । शीघ्रधावनाय पङ्क्तीभूय **संयतन्ते** सम्यग् सम्भूय वा यत्नं कुर्वन्ति । अत्र दृष्टान्तः **हंसा इव** इति । यथा ते श्रेणीभूता ईर्मान्तास इत्याद्युक्तरूपाः सन्तोऽन्तरिक्षे गमनाय संयतन्ते तद्वत् । कदा पुनरेवं गमनम् संयतन्ते ?—**यत्** यदा ( यस्मिन्काले ) अमी **अश्वाः दिव्यम् अज्मम्** अजनिं गन्तव्यमार्गम् **आक्षिषुः** आयन् ( व्याप्नुवन्ति ) उदयादारभ्य यावदस्तमिति ॥ ५ ॥

अथास्य भाष्यम्—

**ईर्मान्ताः समीरितान्ताः ( सुसमीरितान्ताः ) पृथ्वन्ता वा । सिलिकमध्यमाः संसृतमध्यमाः । शीर्षमध्यमा वा ॥**

**शीर्षमध्यमा** इत्यस्य सिलिकमध्यमा इत्यनेन शब्दसारूप्यं तथाच यः सप्तानां मध्यमः स शिरोभूतः प्रधानमिति ते बहुव्रीहित्वेन **शीर्षमध्यमाः** सप्तापि भवन्ति ॥

**अपि वा शिर आदित्यो भवति । यदनुशेते सर्वाणि भूतानि । मध्ये चैषां तिष्ठति ॥**

**अपि वा** । अथ वैवमन्यथा स्यात् । **शिर आदित्य एव भवति** । सर्वभूतप्राधान्यात् । "मूर्धा राजेति वाऽग्रहमेतमुपासे" इति ह विज्ञायते ब्राह्मणेषु । यस्माच्चासौ **अनु** प्रविश्य प्राणभावेन **सर्वाणि भूतानि शेते** आस्ते । तस्मात् सर्वभूताश्रयणात् शिर आदित्यः । स **चैषाम्** अश्वानाम् **मध्ये तिष्ठति** । तथाच शीर्षमध्यमाः सन्तस्ते सिलिकमध्यमा इत्युच्यन्ते शब्दसारूप्यात् ॥

अथ प्रासङ्गिकमुच्यते—

**इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति ॥**

**एतत्** उत्तमाङ्गम् ( शिरः ) **इन्द्रियाणि** चक्षुरादीनि **समाश्रितानि** तद्बलेनैव बलवन्ति **भवन्ति** । इति शिरस उपपत्तिः ॥

अथैकपदनिरुक्तमाचिख्यासुर्द्वितीयं पादमुद्धरति—

**संशूरणासः ( दिव्यासो अत्याः ) शूरः शवतेर्गतिकर्मणो दिव्या दिविजाः । अत्या अतनाः ॥**

**शूर** इति पर्यायाभिधानं शूरः शूरण इति । तथाच सङ्गता—**शूरणेन** भगवतादित्येनेत्यर्थः । **गतिकर्मणः** गत्यर्थस्य **शवतेः** "शु गतौ"विति सौत्रस्य "शुसिचिमीनां दीर्घश्च" ( उ० २-२५ ) इति क्रनि शूरः सूर्यस्तथाच विश्वः "शूरश्चारुभटे सूर्ये" इति ॥ **दिव्या** इति भवार्थे "द्युप्रागपागुदक्प्रतीचो यत्" ( पा० ४-२-१०१ ) इति यत् ॥ **अत्या** इति यत् ताच्छील्ये तदेतद्युचा निर्दिशति **अतना** इति ।

१. अश्वसमूहस्तुतिद्वारेणादित्य एव स्तूयते । यस्य चैवंविधा अश्वा इति ॥ तथाच "या स्तूयते सा देवते"-ति सूर्योऽस्य देवता ॥ तादर्थ्ये यत् ( पा० ५-४-२४ ) ॥

२. तथाच पृथूरस्काः पृथुजघना वा इति तदर्थः । "ईर प्रेरणे" ( चु० प० ) "अर्तिस्तु०" ( उ० १-१३७ ) इत्यादिना बाहुलकान्मनिति देवराजः । तदित्थमन्तशब्देन बहुव्रीहौ जसोऽसुगागमेन साधुः ॥

३. ते हीतरेतर-मुत्पीड्य संश्लेषेणावस्थिता भवन्ति रथेषु सहयोजिताः । तथाच निरुदरा इव यन्त्रणात्प्रतीयन्ते इति संसृतमध्याः । अन्येतु पिचण्डिला इति भावः ॥

४. "शूर वीर विक्रान्तौ" ( चु० आ० ) "बहुलमन्यत्रापि" इति युच् । योरनः ( पा० ७-१-१ ) अत्र ताच्छील्यविशिष्टे कर्तरि प्रत्ययः । बाहुलकात् ॥

५. अत्र शस्प्रत्ययो बाहुलकबलेनैवोपपादनीयः ॥

६. "व्यवहिताश्च" ( पा० १-४-८२ ) इति समो विप्रकृष्टस्यापि क्रियापदेन समन्वय इति सायणोऽभिप्रैति । दुर्गस्तु शूरेण भगवताऽऽदित्येन सङ्गता यतन्त इति यथाभाष्यं व्याचख्यौ ॥

७. दुर्गस्तु-अज्यते गम्यतेऽसामित्यजनिर्वाहिका स्वर्गपथ इत्यर्थं इत्याह ॥

१. भूतशब्दो ह्युपमार्थे सम्प्रयुज्यते । तथाच प्राधान्यमेव साधर्म्यमित्यनेनोच्यते ॥

२. तथाच दुर्गः । "स हि परानभिमुखं गच्छत्येव न पर्यावर्तते" इति । अयमपि चानिमिषं ( निरन्तरं ) गच्छत्येवोदयादस्ताध्ववदिति शूर इव शूर इत्यपि व्याख्यामार्गो भवितुमर्हति ॥ दन्त्यादिस्तु लोकेऽपि प्रसिद्ध एव । "षू प्रेरणे" इत्यस्मात् क्रनि ( उ० २-२४ ) तथाच—"सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः ॥

३. तथाच "कुमुदाकराद्वासोढसूरभासः" इति वासवदत्तायां श्लेषादिति मुकुट आह ॥

४. ताच्छील्यविशिष्टे कर्तरि । बाहुलकाद् ( पा० ३-३-११३ ) यद्वा "अह्यादयश्च" (उ० ४-१०८) इति यत्प्रत्ययान्तो निपातः । देवराजस्तु करणेऽपि यतमाह-अतति सततं गच्छति, गच्छत्यनेनाश्वारोह इति वेति ॥

अत्र हि "चलनशब्दार्थादकर्मकाद्युच्" (पा० ३-२-१४८) इति ताच्छील्ये युच् ॥ तदेतद्बाहुलकबलेन समाधेयम् ॥ ते हि अतन्त्येव मुहूर्तमपि नावतिष्ठन्ते ॥

य एवंविधा अश्वास्ते किं कुर्वन्तीत्याह—

**हंसा इव श्रेणिशो यतन्ते ॥**

**हंसा इव** श्रेणीकृताः पङ्क्तीकृताः सन्तो **यतन्ते** गच्छन्ति ॥

अथैकपदनिरुक्तम्—

**हंसा हन्तेर्घ्नन्त्यध्वानम् ॥**

**हन्तेः** गत्यर्थस्य ॥ "वृतॄवदिहनि०" (उ० ३-६२) इति सप्रत्ययः ॥

**श्रेणिश इति । श्रेणिः श्रयतेः । समाश्रिता भवन्ति ॥**

**श्रयतेः** "श्रिञ् सेवायाम्" (भ्वा० उ०) "वहिश्रि०" (उ० ४-५३) इत्यादिना निप्रत्ययः । गुणः । श्रेणीत्यपि । "कृदिकारादि"ति ङीष् (पा० ४-१-४५ ग०) "श्रेण्यावां कारुसंहतौ" इति हैमः ॥

कदा पुनरेवं यतन्ते ?—

**यदाक्षिषुर्यदापन् दिव्यमज्ममजनिमाजिमश्वाः ॥**

**आक्षिषुरिति** । "अक्षू व्याप्तौ" (भ्वा० प०) लुङ् ॥ **अज्ममिति** "अज गतिक्षेपणयोः" (भ्वा० प०) (उ० १-१३८) बाहुलकादजेरपि सङ्ग्रामनामसु पठितोऽयम् (निघं० २-१७) तेन च तद्भूमिरुपलक्ष्यत इत्याह **अजनिमिति आजिमिति** च । उभयत्राधिकरणेऽनिरिण् च (उ० २-१०६) इत्यनिश्चादजेरपि । इति "इणजादिभ्य" (पा० ३-३-१०८ वा०) इति च । "बहुलं तणी" (पा० २-४-५४ वा०) ति व्यादेशाभावः । "आजिः स्त्री समभूमौ सङ्ग्रामे" इति मेदिनी ॥

एवमेतानि ईर्मान्तास इत्यादीन्यश्वविशेषणानि विभक्तिसामान्यात् । "आत्मैवैषां रथो भवति आत्माश्वा" इत्येवं प्रक्रमेण सूर्यदैवत एष मन्त्र उक्तः । स पुनरयमश्वस्तुतौ विनियुक्तस्तदसमञ्जसमिति मन्यमानो भाष्यकारः प्रतिसमाधित्सुराह—

**अस्त्यादित्यस्तुतिरश्वस्य, आदित्यादश्वो निस्तष्ट इति ॥**

अश्वोऽपि ह्यादित्यात्मना स्तूयत इत्यर्थः । कथम् ? तत्प्रभवत्वादित्याह—**सूर्यादिति । निस्तष्टः** निर्गतः ॥ अत्र निगमं प्रमाणयति—

**"सूरादश्वं वसवो निरतष्ट" इत्यपि निगमो भवति ॥ ५ ॥ (१३)**

(ऋ० सं० २-३-११-२)

अस्य—"यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् । गन्धर्वो अस्य रशनामगृभ्णात्" इत्यादिः । एतदपि पूर्वेण समानार्षच्छन्ददैवत्यम् । **यमेन** सर्वलोकनियामकेनान्तकेनाग्निना वा **दत्तम्** अस्माकम् **एनम्** अश्वं **त्रितः** त्रिस्थानो वायुः **आयुनक्** रथे आयोजितवान् । किञ्च एणम् एनमश्वम् । णत्वमार्षम् । **प्रथमः** प्रतमः प्रकृष्टतमः । वर्णव्यत्यय आर्षः ॥ इन्द्रः । **अध्यतिष्ठत्** अधिष्ठितवान् । एवं वायुना युक्तस्येन्द्रेणाधिष्ठितस्य **अस्य** अश्वस्य । **गन्धर्वः** गन्धर्वराजः सोमः । **रशनां** नियमनरज्जुम् **अगृभ्णात्** अग्रहीत् । "हृग्रहोर्भश्छन्दसी"—(पा० ३-१-८४ वा०)ति हस्य भः । कुतः पुनरयमश्व इति ? तत्राह—**सूरादिति** । सूर्यादेवैतमेवंलक्षणम् **अश्वं वसवो** देवा **निरतष्ट** निस्तष्टवन्तः ॥ २ ॥ एवमेतस्मिन्मन्त्रे सूर्यप्रभवोऽश्व इति स्तूयते । कारणाच्च कार्यमनन्यदिति उपपद्यते सौर्येण मन्त्रेणाश्वस्य स्तुतिरिति ॥ ५ ॥ (१३)

अथ "कायमान" (१५) इत्येतदनवगतम् "चायमानः" "कामयमान" इति वाऽवगमः । अत्र निगममुदाहरति—

**"कायमानो वना त्वं यन्मातॄरजगन्नपः । न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥ २ ॥** (ऋ० सं० ३-१-५)

**कायमान इति** ॥ विश्वामित्रस्येयमार्षम् बृहती । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन्नग्ने ! **यत्** यदा **त्वं वना** वनानि काननानि । शेर्लो (पा० ७-१-३९) **कायमानः** कामयमानः । मकारलोपश्छान्दसः । यद्वा चायमानः पश्यन्

१. पृथिव्यादिषु त्रिषु स्थानेषु वर्तमानस्तीर्णतमो वेति सायणः ॥

२. प्रथम इति मुख्यनामेति सायणः ॥

३. सोमेन समयाविपृक्त इति वक्ष्यमाणत्वात् इति सायणः ॥

४. अत्र सायणः । हे वसवः ! रश्मयो यूयं सूरादादित्यादश्वमेवं महानुभावं निरतष्ट निःशेषेण साधु संपादितवन्तः । यद्वा वसुशब्देनोक्ता एव यमादयः परामृश्यन्ते । हे वसवः ! स्वस्वव्यापारेण सर्वस्याच्छादयितारो यूयं सूरादादित्यादश्वमेनं निरतष्ट अतक्षत । निरित्येष समित्येतस्य स्थाने । तक्षतिः करोतिकर्मा । सच क्रियासामान्यवचनः । अत्रौचित्याद्धारणे वर्तते । सम्यग्धारितवन्त इत्यर्थः । तक्षेर्लङि छान्दसः शपो लुक् । "स्कोः संयोगाद्योः" (पा० ८-२-२९) इति कलोपः ॥

५. अत्र सायणः । रक्षितुमित्यध्याहृत्य—त्वं यद्यस्मात्कारणात्तानि विहाय मातॄः मातृभूता अपः अजगन्नगमः गतवानसि । अप्सु प्रविष्टत्वाच्छान्तो वर्तसे । तत्तस्मात्तव निवर्तनं नितरां तत्रैव वर्तनं तेन च विनाशो लक्ष्यते स विनाशो न प्रमृषे न प्रमृष्यते न सह्यते । कुत इत्यत आह—यद्यस्मात्कारणात् दूरे सन्नदृश्यतया वर्तमानस्त्वमिहास्तसम्बन्धिषु अरणिरूपेषु काष्ठेषु अभवः मन्थनात्क्षणमात्रेणास्माकं समीपे भवसि, तस्मात्तव दूरतो वर्तनमसभ्यं न रोचत इति ॥

"चायृ पूजानिशामनयोः" (भ्वा० उ०) लटः शानच्। चस्य कश्छान्दसः। निशामनं चाक्षुषज्ञानमिति माधवः॥ स्वयोनित्वात्। दारुभ्योऽग्निर्जायत इति हि प्रसिद्धिः। अथ च "उपशाम्यन्" इति शेषः। अनुगच्छन् इति तदर्थः। तथाचाम्नायते "यदा चाग्निरनुगच्छति अरणी वाव गच्छति" इति॥ मातॄः वा (सर्वभूतनिर्मातॄः) अपः। सापि योनिरेवाग्नेः। "आपो वा अग्नेर्योनिः" इति ह विज्ञायते। अनयोर्योन्योरन्यतरां योनिम् अजगन् अगमः। "गमॢ गतौ"त्यस्य लङि "बहुलं छन्दसी"ति (पा० २-४-७६) शपः श्लुर्द्विर्वादिः। "हल्ङ्याब्भ्यो"ना (पा० ६-१-६८) सिलोपः "मो नो धातो"रिति (पा० ८-२-६४) मस्य नः। तस्य ते तवैवमनुगच्छतः। तत् निर्वर्तनम् (वर्त्म मार्गः) न प्रमृषे न प्रमृष्यते "मृष तितिक्षायाम्" (दि० उ०) व्यत्ययेन कर्मणि तप्रत्ययः। "लोपस्त आत्मनेपदेषु" (पा० ७-१-४१) इति तलोपः। न प्रमृज्यते न लुप्यत इति यावत्। तदेतत्कथं ज्ञायते? यत् यस्मात् दूरे अपि सन् अदृश्योऽपि भूत्वा इह पुनः अभवः भवसि "छन्दसि लुङ्लङ्लिटः" (पा० ३-४-६) इति लडर्थे लङ्। "जायमान" इति शेषः। यदाऽब्भ्यो जायसे वैद्युतात्मना यदा वा अरणिभ्यां जायसे मथ्यमानः॥ २॥

अथास्य भाष्यम्—

**कायमानश्चायमानः कामयमान इति वा। वनानि त्वं यन्मातॄरपोऽगम उपशाम्यन्। न तत्ते अग्ने प्रमृष्यते निवर्तनं दूरे यत्सन्निह भवसि जायमानः॥**

गतार्थमेतत्॥

अथ "लोधम्" (१६) इत्येतदनवगतम् "लुब्धम्" इत्यवगमस्तत्र निगममुदाहरति—

**"लोधं नयन्ति पशु मन्यमानाः॥"**
(ऋ० सं० ३-३-२३-३)

**लुब्धमृषिं नयन्ति पशुमन्यमानाः॥**

**लोधमिति।** अस्य "न सायकस्य चिकिते जनासो" इत्यादिः। "नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान् नयन्ति" इत्यन्तः॥ इयं वसिष्ठद्वेषिणी ऋक्। पुरा खलु तपसः क्षयो माभूदिति शापान्निवृत्तं मौनिनं विश्वामित्रं वसिष्ठपुरुषाः बद्ध्वा नीतवन्तस्तान्प्रति विश्वामित्रो ब्रूते—हे **जनासो** जनाः! "आज्जसेरसुक्" (पा० ७-१-५०) इत्यसुगजसः। **सायकस्य** अवसानकारिणो विश्वामित्रस्य मम मन्त्रगणसामर्थ्यात् **न चिकिते** भवद्भिर्न ज्ञायते। अत एव **लोधं** लुब्धं तपसः क्षयो माभूदिति लोभेन तूष्णीं स्थितमृषिं। लुब्धशब्दे बलोप उकारस्यौत्वं च पृषोदरादित्वात्। **पशु** सम्यङ्। **मन्यमानाः**। एते नयन्ति बद्ध्वा स्वीयममितं देशं प्रापयन्ति। एवं स्वसामर्थ्यं प्रदर्श्य विसदृशो वसिष्ठो मया सह स्पर्धितुं नार्हतीति धिक्करोति—**नावाजिनम्** इति। वाचामिनो वाजिनः सर्वज्ञस्तद्विरुद्धोऽवाजिनो मूर्खस्तं **वाजिना** वागीशाः **न हासयन्ति** हास्यास्पदं न कुर्वन्ति **पुरः** पुरस्तात् (अग्रे)। तेन सह न स्पर्धन्त इत्यर्थः। तथा **गर्दभं** रासभम् **अश्वात्** पुरस्तात् न **नयन्ति**। एवमेव विसदृशो वसिष्ठो मया सह स्पर्धितुं नेष्ट इत्यर्थः॥ ३॥

एतमेव दर्शयति—भाष्यकृत् **लुब्धमिति**। अत्र (भाष्ये) पशुं मन्यमाना इत्यपपाठः। पशु इत्येष निपातेषु पठितः। अथ **"शीरम्"** (१७) इत्येतदनवगतं तस्याग्निरभिधेय "इत्यनुशायिनम्" "आशिनम्" इति वा तदवगमः। अत्र निगममुदाहरति—

**"शीरं पावकशोचिषम्॥"** (ऋ० सं० ६-११)

**पावकदीप्तिम्। अनुशायिनमिति वाऽऽशिनमिति वा॥ ६॥ (१४)**

**शीरमिति।** अस्य "ज्येष्ठो यो दमेष्वा। दीदाय दीर्घश्रुत्तमः॥" इति शेषः। भार्गवस्य प्रउगस्यार्धम्। प्रातरनुवाकाश्विनयोः शस्यते। **ज्येष्ठः** श्रेष्ठः देवानां मुख्यः **दीर्घश्रुत्तमः** दीर्घं शृणोतीति दीर्घश्रुत् विद्वान्. "श्रु श्रवणे" (भ्वा० प०) क्विप् तुक्। अतिशयेन दीर्घश्रुद्दीर्घश्रुत्तमः। विद्वत्तमः **यः** अग्निः **दमेषु** यज्वनां गृहेषु **आदीदाय** आदीप्यते। छान्दसः प्रयोगः पृषोदरादिः। तं **शीरम्** अनुशायिनम् (अनुप्रविश्य सर्वभूतानि शेत इत्यनुशायी)। णिनिः (पा० ३-२-७७) तम्। यद्वा आशिनम् (अश्नोति व्याप्नोति सर्वभूतानीत्याशी तम्) व्यापिनम् **पावकशोचिषम्** पावयितृ दीप्तिम् अग्निं "स्तौमी"ति शेषः॥ तथा चाशीरमिति शीङोऽश्नोतेर्वा बाहुलकाद्रक् (उ० २-१२) धातोः शीभावः पक्षे। इति बोध्यम्॥ १॥

अथ **विद्रधे** (१८) **द्रुपदे** (१९) इत्येते पदे एकनिगमे। द्वे अनवगते। पक्षे चानेकार्थे "विद्धे" द्रुममये इत्येवं

---

१. निवर्तन्ते प्रतिगच्छन्त्यनेनेति युच् (पा० ३-२-१४९) वर्तन्तेऽनयेति वर्तनीतिवत्॥

२. "घोऽन्तकर्मणि" (दि० प०) ण्वुल् (पा० ३-१-१३३) आत्वम् (पा० ६-१-४५) युक् (पा० ७-३-३३)॥

१. "कि ज्ञाने" (जु० प०) व्यत्ययेन यगभावः। कर्मणि हि लट्॥

२. यत्तु—सायणः "पशु इति निपातः पशुशब्दसमानार्थः पशुवन्मन्यमाना" इति व्याचख्यौ तदेतदविचारितरमणीयमत्र-व्यार्थो हि निपातः। द्रव्यम् सत्त्वं यस्मिन्हि लिङ्गसंख्यादिकं सीदति (गच्छति अन्वेति) तथाच निपातस्य चतुष्पात् पशुसमानार्थत्वं कथङ्कारमिति विचार्यम्॥

३. दमशब्दो गृहार्थः (निघं० ३-४)॥

क्रमेणावगमः । दारुपादौ वा एताभ्यां शब्दाभ्यां विशेष्येते । कन्ययोर्वा पादपीठवचने सप्तम्येकवचनान्ते एते । द्वयोरप्येक एव निगमः ॥

यथा—

**"कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ॥ ७ ॥"** (ऋ० सं० ३-६-३०)

**कनीनकेवेति** ॥ वामदेवस्यार्षम् । हे इन्द्र ! **बभ्रू** पिङ्गलवर्णे "बभ्रुर्विशाले नकुले कृशानावजे मुनौ शूलिनि पिङ्गले च"–इति विश्वः । तदीये अश्वे वडवे **यामेषु** यज्ञेषु **विद्रधे** विद्धे विकुषिताधोभागे **द्रुपदे** द्रुममये पदे पादुकाख्ये अधिष्ठाने अनयोरधिष्ठिते **नवे** नवजाते **अर्भके** अवृद्धे ( अल्पके ) **कनीनकेव** कमनीये शालभञ्जिके इव । इवार्थोऽत्र वशब्दः "वं प्रचेतसि जानीयादिवार्थे तु तदव्ययम्" इति मेदिनी । **शोभेते** कान्तियुक्ते भवत इति मन्त्रार्थः ॥ ७ ॥

अथास्य भाष्यम्—

**कनीनके कन्यके । कन्या कमनीया भवति ॥**

सर्वे एव हि तां प्रार्थयन्त एव । तथाच "कमु कान्तौ" ( भ्वा० आ० ) इत्यस्य धातोः "अघ्न्यादयश्च"–( उ० ४–११० ) ति यगन्तो निपातः । कान्तिरिच्छा ॥

**कमनेनानीयत इति वा ॥**

अथवा **कमनेन** अभिलाषेणेयम् **आनीयते** प्राप्यते पुंभिरुपयियंसुभिः ॥

**क्वेयं नेतव्येति वा ॥**

अथवा **क्व** कस्मिन्पुरुषविशेषे देशविशेषे वा **इयं** कन्या **नेतव्या** दानायेति पिता तां प्रति चिन्तयतीति किमो नयतेश्च कन्या । नामधातुजमेतत्पदम् ॥

**कनतेर्वा स्यात्कान्तिकर्मणः ॥**

अथवा । कनति–इति कान्तिकर्मसु पठितम् ( निघं० २–६ ) "कनी दीप्तिकान्तिगतिषु" ( भ्वा० प० ) पाणिनीयैः पठितः । तथाच **कान्तिकर्मणः** कान्त्यर्थस्य । **कनतेः** कन्या **स्यात्** । इत्यपि पक्षान्तरम् । निपात उक्तपूर्वः । ( उ० ४–११० )

**कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनान्तानीति शाकपूणिः ॥**

"विद्रधे–नवे–द्रुपदे–अर्भके इत्येतानि चत्वारि पदानि" इति शेषः । एवं **शाकपूणिराचार्यो** मन्यते । अयमर्थः । एकस्मिन् दारुमये पादपीठे यस्मिन्समधिरूढेषु पादुकाख्येष्वधिष्ठानेषु चतुर्ष्वधिरूढे कन्यके यथा शोभेते एवं बभ्रू अश्वे यामेषु ( आजिस्थानेषु सङ्ग्रामभूमिषु यमनस्थानेषु मन्दुरासु वा ) शोभेते । तदेतैश्चतुर्भिः पदैरुच्यत इति शाकपूणेर्मतमिति ॥

यास्कस्तु—

**विद्धयोर्दारुपाद्वोः ॥**

**विद्धयोः** विद्रधयोः विकुषिताधोभागयोः **दारुपाद्वोः** दारुमय्योः पादुकयोः । "अथ पादुका । पादूरुपानत्स्त्री" इत्यमरः । "पद गतौ"–( दि० आ० ) इत्यस्मात् "णित्कशिपद्यर्तेः" ( उ० १–८५ ) इत्यूः । णित्वाद्वृद्धिः । ( पा० ७–२–११६ ) अधिरूढयोः कन्यकयोरभिधायकान्येतानि द्विवचनानीति मन्यन्ते । ताभ्यां ह्यश्विन्योः खुराकारत्वेन सारूप्यमस्तीत्येवमुपमानम् ॥

अथ दारुपाद्वोरित्येतस्मिन्व्याख्यानप्रसक्ते पदे विग्रहप्रसक्तो दारुशब्दो निरुच्यते—

**दारु दृणातेर्वा द्रूणातेर्वा ॥**

**दृणाते**र्विदारणार्थस्य दृधातोः ( क्र्या० प० ) "दृसनिजनि०" ( १–३ ) इति ञुण् । पुंस्यप्ययम् । तथाच त्रिकाण्डशेषः "पुन्नपुंसकयोर्दारु"रिति । अथवा **द्रूणाते**र्हिंसार्थस्य ( निघं० २–१९ ) "द्रूञ् हिंसायाम्" ( क्र्या० उ० ) "तृष्वीमन्तुप्रस्तिं द्रूणानः" ( ऋ० सं० ३–४–२३–१ ) हि इति निगमः ॥ अत्रपक्षे धातोर्विनिमय आर्षः ॥ एको वाशब्दो वाक्यालङ्कारे ॥

अथ द्रुशब्दं निर्वक्ति—

**तस्मादेव द्रु ॥**

**तस्मादेव** धातुद्वयादन्यतरस्य द्रु इत्येतदभिधानं भवति । "द्रु गतौ" ( भ्वा० प० ) "मितद्र्वादित्वात्" ( पा० ३–२–१८० वा० ) डुः । द्रवत्यूर्ध्वं गच्छतीति द्रु । नपुंसकाभिधानं

१. आजि–( युद्ध– )–स्थानेषु । यमन–( बन्धन– )–स्थानेषु मन्दुराख्येषु वेति दुर्गः ॥

२. तथाच विपूर्वाद् "दृभी भये" ( तु० प० ) इत्यस्मादनेकार्थत्वेन धातूनां हिंसार्थात्क्तः । विद्रब्धे इति स्थिते ऋकारस्य रादेशो बलोपश्च पृषोदरादित्वात् ॥

३. एतच्चार्थवशाद्व्याख्यातम् । ताभ्यां ह्यश्विन्योः खुराकारत्वेन सारूप्यमस्तीत्येवमुपादानम् ॥ यद्वा सप्तम्येव तदनुरोधेन चाधिष्ठिते इत्यध्याहारः ॥

४. "सममब्राह्मणे दाने"ति वरसप्तमी ॥

५. उपयन्तुमुद्वाहयितुमिच्छुभिः । उपयमनं विवाहः । "विवाहोपयमौ समौ" इत्यमरः ॥ यमेः सन्नन्तादुप्रत्ययः । ( पा० ३–२–१६८ ) ॥

६. नामजं धातुजं चेति पृषोदरादिः ॥

१. वाक्यार्थतयेति बोध्यम् ॥

जात्यभिप्रायेणेति सामान्ये नपुंसकम् । कोशेऽयं पुंस्यभिधीयते "पलाशी द्रुद्रुमागमाः" इत्यमरः ॥ "समुदाये वृत्ताः शब्दा अवयवेऽपि वर्तन्ते" इति न्यायेन द्रुः शाखाऽप्यस्य । ततश्च मत्वर्थे "द्युद्रुभ्यां मः" ( पा० ५-२-१०८ ) इति मप्रत्यये द्रुमः ॥

**नवे नवजाते अर्भके अवृद्धे । ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते ॥**

**अवृद्धे** अल्पके । **ते** कन्यके **तदधिष्ठानेषु** पादुकाख्येषु अधिरूढे **यथा शोभेते एवं बभ्रू** पिङ्गलवर्णे अश्वे ( वडवे ) **यामेषु** मन्दुराख्येषु संयमनस्थानेषु वर्तमाने शोभेते । एषः—

**बभ्र्वोरश्वयोः संस्तवः ॥**

**संस्तवः** सम्यक्स्तुतिः ॥

अथ "**तुग्वनि**" (२०) इत्येतदनवगतम् । "तूर्णमेतदार्यन्तीति तुग्व" इत्येष शब्दसमाधिः । तीर्थं चाभिधेयम् । अत्रोदाहरिष्यमाणस्यर्क्पादस्यर्क्छेषापेक्षोऽर्थनिर्णय इति तस्या अधस्त्याया ऋचः संक्षिप्यार्थमाह—

**इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्यायाह ॥**

इति । **इदं च** द्रव्यजातं **मे** मह्यम**दा**द्दत्तवानसौ राजेत्येवं सर्वं **प्रसंख्याय** परिसंख्यानं कृत्वा **ऋषिराह** उक्तवान् इत्यर्थः । कतमा पुनरसावाधस्त्या ऋग्यस्या अयमर्थः संक्षिप्यते ? इति । उच्यते—

"अदा॑न्मे पौरुकु॒त्स्यः प॑ञ्चा॒शतं॑ त्र॒सद॑स्युर्व॒धूना॑म् ॥
मंहि॑ष्ठो अ॒र्यः सत्प॑तिः ॥ ६ ॥" ( ऋ० सं० ६-१-३५ )

सौभरेः काण्वस्येयमार्षम् । परा च । इदमादिकेन प्रगाथेन त्रसदस्योर्दानमृषिः प्रशंसति । **पौरुकुत्स्यः** पुरुकुत्सस्य ( बहुशत्रुकर्तयितुः ) राज्ञः पुत्रः । यञ् ( पा० ४-१-१०५ ) **त्रसदस्युः** शत्रुत्रासनः । **मे** मह्यं **वधूनां** वोढव्यानां कन्यकानाम् **पञ्चाशतं** पञ्चाशत्संख्यामिताः । वध्वः ( कन्यकाः ) **अदात्** दत्तवान् । "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययो"रिति नियमादेकवचनम् ॥ कीदृशः सः ? **मंहिष्ठो**ऽतिमहान् । दातृतमः । **अर्यः** अभिगन्तव्यः । ईश्वरो वा । **सत्पतिः** सतां श्रेष्ठानां स्तोतॄणां पतिः पालयिता ॥ ६ ॥

किमेतदेवादात् ? नेत्युच्यते—

**"सु॒वास्त्वा॒ अधि॒ तुग्व॑नि ॥"**
( ऋ० सं० ६-१-३५-७ )

इति । अस्याः "त्रि॒तं मे॑ प्र॒यियो॑र्व॒यियो॑" रित्यादिः । "ति॒सृ॒णां स॑प्त॒तीनां॑ श्या॒वः प्र॑णे॒तासु॒वद्व॒सुर्दिया॑नां॒ पतिः॑" इत्यन्तः ॥ अप्येतद्युक्तमपि यदेतद् वक्ष्यमाणमिति **उत**शब्द एवमुभयं सम्भावयति । **मे** मह्यं **प्रयियोः** ( प्रयायते प्रगम्यते येन तत्प्रयियुर्धनमश्वादि तस्य प्रयियोः ) धनस्य बहुदात् ताभिः कन्याभिः सह **वयियोः** ऊयते इति वयियुः वस्त्रादि तस्य च बहुदात् । **तिसृणां** त्रिसंख्याकाणां **सप्ततीनां** सर्पणं-(गमन-) शीलानां गवां चेति पूर्वान्वयि । यद्वा **तिसृणां सप्ततीनां** दशाधिकद्विशतसंख्याकानां दियानां दानार्हाणां गवामित्येवमर्थः । ( तथाच दियानामित्युभयान्वयि द्रष्टव्यम् ) **श्यावः** कपिश-( श्यामं )वर्णः वृषः । श्यामवर्णानां **प्रणेता**

---

१. "द्रुत्वजातिविशिष्टमत्र द्रुपदेनाभिधीयते । यथाह कुक्कुटाण्डमित्यत्र महाभाष्यकारः । "कथं कुक्कुटाण्डम् ? 'कुक्कुटस्य अण्डम् कुक्कुटाण्डम्" इति । अत्र कुक्कुटस्येत्यस्य ( कुक्कुटत्वजातिविशिष्टस्य ) इत्येवार्थः । नहि कुक्कुटस्य ( पुंसः ) अण्डं भवितुमर्हति । एतच्च "कुक्कुट्यादीनामण्डादिषु"त्येतद्वार्तिकप्रत्याख्यानायोक्तम् ( पा० ६-३-३५ ) ॥

२. आगच्छन्ति । तथाच तूर्णशब्दोपपदादाङ्पस्ष्टार्थाद्गमेः "अन्येभ्योऽपि दृश्यते" ( पा० ३-२-७५ ) इति वनिपि तूर्णशब्दस्य तु भावो गमष्टिलोपश्च । तद्धि पानायावगाहनाय वा क्षिप्रमागच्छन्ति जनाः ॥

३. उदाहरिष्यमाणायाः पूर्वतन्याः ॥

४. त्रसदस्युरिति प्रचुरः पाठो मुद्रितपुस्तकेषु । पुराणेषु तु त्रसदस्युरित्येव ॥ त्रसन्तो दस्यवो यस्मादिति विग्रहः ॥

१. "पङ्क्तिविंशति०" ( पा० ५-१-५९ ) इत्यादिना निपातितोऽयमेकवचनान्त एव प्रयुज्यते । संख्यायामत्र द्रष्टव्यः ॥

२. "ऋ गतौ" ( भ्वा० जु० प० ) इत्यस्य "अर्यः स्वामिवैश्ययोः" ( पा० ३-१-१२० ) इति निपातितः ॥

३. प्रपूर्वाद्गत्यर्थाद्यातेः कर्मणि उणि ( पा० ३-३-१ ) युकि ( पा० ७-३-३३ ) प्रयायुरिति जाते उपधाया इत्वं पृषोदरादित्वात् ॥ पुंस्त्वमार्षम् । एवमग्रेऽपि ॥

४. एतच्च दुर्गेणाध्याहृत्य व्याख्यातं, पूर्वमन्त्रेऽ"अदादि"—ति दर्शनात् । तथाच तदेतदुभयसापेक्षमित्युक्तम् बहिति कर्म ददातेरध्याहारलभ्यमेव ॥

५. "वेञ् तन्तुसन्ताने" ( भ्वा० उ० ) इत्यस्मात्कर्मणि उणि ( पा० ३-३-१ ) अयादेशे युशब्दस्य द्वित्वमभ्यासोकारस्येत्वं च पृषोदरादित्वात् ॥

६. "सृप्लृ गतौ" ( भ्वा० प० ) इत्यस्माद्दाडुलकादतिः ( उ० ५-५ ) धातोः सप्तमावश्च ॥ ताच्छील्यविशिष्टे कर्तर्यत्र प्रत्ययः । तदाह गमनशीलानामिति ॥

७. यद्यपि "श्यावः स्यात्कपिशः" इत्यमरेण कपिशः ( कृष्णपीतः ) श्याव उक्तः सचायं धूसरारुणः कपिशवर्ण इति महेश्वरस्तथापि "कपिशस्त्रिषु श्यामे स्त्री, माधव्यां सिह्नके पुमान्" इति सुबोधिन्याम् ( अ० टी० ) दर्शनात् श्यामवर्ण एव दुर्गेण व्याख्यातः । सायणेनापि एष एवा( वृत्तिमन्योऽ )नूदितः । श्यावाः सवितुर्वोढा इति निघण्टुव्याख्याकृद्देवराजस्तु महेश्वरोक्तमेवाभिमन्यते "श्यैङ् गतौ" ( भ्वा० आ० ) वः ( उ० २-

प्रकर्षेण नेता ( अग्रतोगामी ) **भुवद्वसुः** भावयिता वसूनाम् । ( धनानाम् ) एवं प्रशस्तलक्षणः **दियानां** दीयन्त इति दियास्तासां । ददातेर्डियाप्रत्ययो बाहुलकात् ( पा० ३-३-१ ) डित्वाट्टिलोपः ॥ दानार्हाणाम् गवां **पतिः** । ताश्च गा एतत्संख्यायुक्ता एतद्गुणयुक्ताश्च एतत्सर्वं मह्यमदादित्यर्थः । क्व पुनरसावदात् ? **सुवास्त्वा** सुष्ठु निवासायास्तनाम्न्यानद्याः । **अधि-तुग्वनि** तीर्थे । अधीत्ययं सप्तम्यर्थस्यावयुक्तत्वानुवादः । द्वौ ब्राह्मणावितिवत् ॥ अत्र दानसम्बन्धात्सुवास्तुशब्दो नद्यभिधायकः । प्रसिद्धं हि नद्यां दानम् । नदीसम्बन्धाच्च तुग्वशब्दोऽपि तीर्थाभिधायक इत्युपपत्तिः ॥ निगमार्थप्रकाशनायैवं सूक्तगतोऽप्यन्वीक्षितव्य एवार्थ इत्येतत्प्रदर्शितमाचार्येण ॥ ७ ॥ अथर्क्पादं व्याख्यन् शब्दसमाधिमाह भाष्यकृत्-सुवास्तुर्नदी । तुग्व-तीर्थं भवति । तूर्णमेतदायन्ति ॥

अथ **नंसन्ते** (२१) इत्येतदनवगतम् "नमन्ते" इत्यवगमः । तत्र निगममुदाहरति—

## "कुविन्नंसन्ते मुरुतः पुनर्नः ॥"

( ऋ० सं० ५-४-२८-५ )

## पुनर्नो नमन्ते मरुतः ॥

**कुविदिति** ॥ अस्य "ताँ आरुद्रस्य मीह्लुषो विवासे" इत्यादिः । "यत्सस्वर्ता जिहीळिरे यदाविरव तदेन ईमहे तुराणाम्" इत्यन्तः । वसिष्ठस्येयमार्षम् ॥ अहम् **तान् मीह्लुषः** कामानां वर्षितुः **रुद्रस्येश्वरस्य** पुत्रान् **मरुतः आऽऽभि-**मुख्येन स्थित्वा **विवासे** परिचरामि । विवासतिर्नैरुक्तधातुः परिचरणकर्मा ( निघं० ३-५ ) तत्र विपूर्वाद्वसेर्णिच् "छन्दस्युभयथा" ( पा० ३-४-११७ ) इति शपि आर्धधातुकत्वात् णिलोप इति भट्टभास्करमिश्रः ॥ कुतः परिचरामि ? यतस्ते **कुवित्** बहुकृत्वः **नः** अस्मान्प्रति **पुनः** विशेषेण **नंसन्ते** वर्षाद्युपकारेण नमन्ते प्रह्वीभवन्ति । **यत्** येन ( तृतीयार्थे ) **सस्वर्ता** अन्तर्निहितेन **यत्** येन च **आविः** प्रकाशेन ( व्यक्तेन ) **एनः** एनसा पाप्मना अपराधेन वा "एनः पापापराधयोः" इति विश्वः । **जिहीळिरे** लज्जयन्ति नोजनौस्तदेवं प्रकारमुभयलक्षणमपि एनः । **तुराणाम्** त्वरमाणानाम् तेषां मरुतां प्रसादेन वयं सर्वेऽपि **अव** अवयजेमहि निर्णुदेमहि इत्येतत् **ईमहे** याचामहे । नैरुक्तोऽयम् ( निघं० ३-१९ ) ईङ् गतौ ( दि० प० ) बाहुलकात् ( पा० ३-४-७३ ) शपोलुकि तदपवादभूतः श्यन्नपि न प्रवर्तते । अनेन परिचारेणाराध्यैतान्मरुत इत्यर्थः ॥ ५ ॥

अथ समानश्रुतिकशब्दे निगमानुक्तौ निदानमाह—

## न सन्त इत्युपरिष्टाद्व्याख्यास्यामः ॥

**"न सन्त"** (२२) इत्येतत् **उपरिष्टात्** सप्तमाध्याये **व्याख्यास्यामः** "अभि प्रवन्त समनेव योषाः" ( ऋ० सं० ३-८-११-३ ) इत्येतन्मन्त्रव्याख्याने ( नि० ७-४-४ ) "नसतिराप्नोति कर्मावा, नमति कर्मा वे"ति ॥ अस्मा"च्छन्दसि लुङ्लङ्लिटः" ( पा० ३-४-६ ) इति वर्तमाने लङ्त्र ॥ "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा० ६-४-७५ ) इत्यडभावः ॥ प्राप्नुवन्ति नमन्ति वेत्यर्थः ॥

अथ **आहनसः** (२३) इत्येतदनवगतम् । "आहननवन्त" इत्यवगमः । तत्र निगममाह—

## "ये ते मदा आहुनसो विहायसुस्तेभिरिन्द्रं चोदयु दातवे मुघम् ॥" ( ऋ० सं० ७-२-३३-५ )

## ये ते मदा आहननवन्तो वञ्चनवन्तस्तैरिन्द्रं चोदय दानाय मघम् ॥ ७ ॥ (१५)

**ये त** इति । अस्य "परि सोम प्रधन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम्" इत्यादिः ॥ पावमानी सौमी । कवेर्भार्गवस्येयमार्षम् । जगती ॥ हे भगवन् **सोम ! स्वस्तये** स्वस्त्ययनाय ( अविनाशाय ) अस्माकम् । **नृभिः** कर्मनेतृभिरेभिर्ऋत्विग्भिः **पुनानः** पूयमानस्त्वम् कर्मणि लडर्थे प्रयोगः ।

---

१५३ ) बाहुलकात् । आत्वम् ( पा० ६-१-४५ ) "गुणवचनेभ्यो मतुपो लुगिष्टः" ( पा० १-४-१९ वा० ) इति मतुपो लुकि तद्गुणवानुच्यते श्याव इति ॥

१. आर्थिकोऽयमर्थः । प्रकरणबललभ्यः ॥

२. नमेर्नकारात्परः सुगागमो व्यत्ययेनात्मनेपदम् ॥

३. रुद्रस्येन्द्रस्य स्वभूतान् आप्तान् वेति दुर्गः । यद्वा मरुत एव विशेषणम् । तथाच वर्षस्य सेक्तॄन् धनवतो बलवतो वेति तदर्थं इति दुर्गः ॥

४. "पुनरप्रथमे विशेषे च्वे"ति कोशः ॥

५. एतच्च सायणव्याख्यानमनुरुध्य । दुर्गस्तु-यच्छरीरगत्वमेनः जिहीळिरे लज्जयन्ति । यच्च आविः प्रकाशं तत् एवंप्रकारमुभयलक्षणमपि एनः अस्मात् । जिहीळिरे लज्जयन्ति इत्याह । अत्रार्थे कर्तसङ्ख्याविप्रतिपद्यते इत्युपेक्षितव्यम् ॥

१. 'सस्वः' शब्दोऽन्तर्हितनामधेयेषु पठितः ( निघं० ३-२५ ) तत्र संपूर्वास्स्वरतेर्गत्यर्थाद्विव्वि गुणो रपरः । मलोपश्च छान्दसः । सम्यगन्तर्गतमिति तदर्थः । तस्यैव ( स्वरतेः ) तृचि रूपम् । ऋलोप आर्षः ॥

२. अत्र "मरुतः क्रुध्येयु"रिति सायणः ॥

३. अत्र धातुलोप आर्षः ॥ उपसर्गबलेन योग्यक्रियाऽध्याहारो वा ॥

४. आहन्तेरसुन् ( उ० ४-१८९ ) मत्वर्थीयस्य लुक् । "सत्रे इदमाहतम्" "ब्राह्मणे इदमाहतम्" इत्यादिप्रयोगदर्शनादाहन्तिर्वचनार्थे आहननवन्तो वचनवन्त इत्यर्थं इति देवराजः । यास्कस्तु वञ्चनवन्त इति वक्ष्यति ॥

५. स्वस्ति कल्याणमीयते प्राप्यते अनेनेति ल्युट् ॥

परिप्रधन्व परिप्रक्षर एतस्माद्दशापवित्रात् । किं च **आशिरम्** आश्रयणम् क्षीरादिकम् ( निघं० ४-३ ) **अभिवासय** अभि प्रच्छादय ( अभिभावय ) संयोजयेति यावत् । किं च **आहनसः** आहननवन्तो वचनवन्तः ( सम्मोहयितारः ) **विहायसः** महान्तः ( निघं० ३-३ ) **ये ते** त्वदीया **मदाः** मदहेतवो रसाः सन्ति **तेभिः** तैरस्माभिर्दीयमानैर्मघं मंहनीयम् धनमसभ्यं **दातवे** दातुम् । तुमर्थे तवेन्प्रत्ययः ( पा० ३-४-९ ) **इन्द्रम् चोदय** प्रेरय ॥ यथास्माकं तैर्मदैरनभिहतचेताः सन् दद्याद्धनमित्यर्थः ॥ ५ ॥ ७ ॥ (१५)

अथ "**अप्रसत्**" (२४) इत्येतदनवगतम् "अप्रसादिनी"ति वा "अनसानिनी"ति वा शब्दसमाधी ॥ तत्र निगममुदाहरति—

**"उपो॑ अदर्शि शुन्ध्युवो॒ न वक्षो॒ नो॒धा इ॑वाविरकृत प्रि॒याणि । अ॒प्रसन्न स॑सतो बो॒धय॑न्ती शश्वत्तमागा॒त्पुन॑रे॒युषी॑णाम् ॥ ४ ॥"**

( ऋ० सं० २-१-७ )

**उपो अदर्शीति** ॥ कक्षीवत आर्षम् । औषसी । त्रिष्टुप् प्रातरनुवाकाश्विनयोः शस्यते । इयमुषाः **शुन्ध्युवः** शोधयितुरादित्यस्य । **उपो अदर्शि** उपश्लिष्टा दृश्यते । कालव्यत्यय आर्षः (पा० ३-४-६) एवमग्रेऽपि उः पूरणः । कथं पुनरुपश्लिष्टा दृश्यते ? **वक्षोन** वक्ष इव । यथा तस्य स्वभासः स्वप्रकाशजालं वक्षोभूतमेतस्मिन्मण्डलेऽध्यूढम् । एवमियमुषा एतस्मिन्मण्डले उपश्लिष्टा दृश्यते, सन्निकर्षात् ॥ किञ्चेयमुषाः **नोधा इव** नवनं स्तोत्रं धारयतीति नोधानाम ऋषिः स इव **प्रियाणि** आत्मनः कामान् । **आविरकृत** आविष्कुरुतेस्म । स यथा स्तुत्वा ( देवतास्तुतिव्याजेन नानाविधैर्मन्त्रैः ) स्वप्रियाणि साधितवानेवमियमुषाः स्वात्मन एवोद्गीर्णेन प्रकाशेन रूपाणि जनानां प्रकाशीकुरुते । किं च इयमेवोषाः **अप्रसत् न** गृहाधिकारे नियुक्ता स्त्रीव **ससतः** स्वपतः । "षस्सस्ति स्वप्ने" ( अ० प० ) लटः शतरि व्यत्ययेन शपो लुगभावः । जनान् दोहकादीन् **बोधयन्ती** सती । तत्काले हि जना इतिकर्तव्यतार्थं प्रतिबुध्यन्ते तेनैतयैव बोधिता भवन्तीत्युच्यते । **पुनरेयुषीणाम्** पुनरागामिनीनाम् गवादीनाम् **शश्वत्तमा** शाश्वतिकतमा । **आगात्** आगच्छति । वर्तमाने लुङ् ( पा० ३-४-६ ) ॥ ३ ॥

अथास्य भाष्यम्—

**उपादर्शि शुन्ध्युवः । शुन्ध्युरादित्यो भवति शोधनात् । तस्यैव वक्षो भासोध्यूढम् ॥**

**शोधनात्** । तथाच "शुन्ध शौचकर्मणि" ( चु० उ० ) क्युर्णिलोपः । तथाच वक्ष्यति "सूर्यः पवित्रमुच्यते" इति ( नि० ५-६ ) तमांसि वा शोधयतीति शुन्ध्युः । तस्य **शुन्ध्युवः । भासः** प्रकाशजालम् तदेव **वक्षः** वक्षोभूतम् । **तस्यैव** आदित्यस्य मण्डलेऽध्यूढम् ॥ अधिप्रविष्टम् ॥

अथ प्रासङ्गिकमुच्यते शब्दसामान्यात्—

**इदमपीतरद्वक्ष एतस्मादेवाध्यूढं काये ॥**

**वक्षः** पुरुषवक्षः पशुवक्षो वाङ्मम् । **एतस्मादेव** "वह धातोः" ( भ्वा० प० ) असुन् ( उ० ४-१८९ ) सगागमश्च । ढल-कल-षलानि ॥ यद्वा "वक्ष संघाते" ( भ्वा० प० ) असुन् ॥ इदम् **अध्यूढम्** अधिप्रवेशितमेव **काये** शरीरे भवति ॥

**शकुनिरपि शुन्ध्युरुच्यते । शोधनादेव । उदकचरो भवति ॥**

**शकुनिरपि** । य एष मद्गुर्नाम । "मद्गुः पानीयकाकिके"ति रभसः ॥ श्वेतवर्णः पक्षिविशेष इति सायणः । अतएवामरोऽपि । पक्षिण उक्त्वा "तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लव" इत्याद्याह ॥ स एष मज्जनान्मद्गुः । "टुमस्जो शुद्धौ" ( तु० प० ) 'भृमृशी'-( उ० १-७ ) इत्युः । "न्यङ्क्वादिः" ( पा० ७-३-५३ ) इति कुत्वम् । सस्य जश्त्वेन ( पा० ८-४-५३ ) दः । स **शुन्ध्युरुच्यते । शोधनादेव** । यो हि **उदकचरो भवति** । ततश्च नित्यशुद्ध एवेति शुन्ध्युः ॥ स यथा स्वकीयं वक्षः प्रकाशयन्दृश्यते तद्वदित्यर्थः ॥

**आपोऽपि शुन्ध्यव उच्यन्ते । शोधनादेव ॥**

ता अपि हि शोधयन्ति ॥

---

१. पात्राणि परितः प्रगच्छ । धविर्गत्यर्थः इति सायणः ॥

२. आङ्पूर्वाच्छ्रयतेः श्रृणोतेर्वा 'क्विब्वची'-( पा० ३-२-१७८ वा० ) त्तत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धिः' इति महाभाष्योक्तेः क्विपि प्रकृतेः शीरादेशः ॥

३. शत्रूणामाभिमुख्येन हन्तारः । अभिहन्यमाना अभिषूयमाणाः स्तुतिमन्तः शब्दवन्तो वेति सायणः ॥

४. "उषा उच्छन्ती"ति ( १ ) पूर्वतनमन्त्रोपक्रमात् ॥

५. आदित्यो हि यदपि शश्वदशुचि भवति तदपि रश्मिभिः स्पृष्ट्वा शुचीकरोतीति शुन्ध्युरित्युच्यते ॥ "शुन्ध शुद्धौ" ( भ्वा० प० ) "यजिमनिशुन्धिदसिजनिभ्यो युच्" ( उ० ३-२० ) इति युच्प्रत्ययोऽननुनासिकत्वाद्योरनादेशो न । शुन्धिरन्तर्भावितण्यर्थः ॥

६. सायणस्तु निपातद्वयसमुदायात्मक एको निपातः सर्वैः समीप एवादर्शि दृश्यते इति व्याचख्यौ ॥

१. सायणस्तु—अप्रत इत्यभावन्तस्य पाकाय गृहे सीदतीत्यप्र सत्पाचिका योषित्सा यथास्वपतः पुत्रादीन् भोजनाय बोधयति तद्वदित्याह ॥

२. या एताः काश्चिद्गत्वा पुनरागच्छन्ति ताः पुनरेयुष्यः । छन्दस्यतान्ङीप् ॥ "उपेयिवा"-( पा० ३-२-१०९ ) नित्यत्रोपेत्य विवक्षितं तेनेयिवान्समीयिवानित्यादि भवतीति दीक्षिताः प्राहुः ॥

**नोधा ऋषिर्भवति । नवनं दधाति ॥**

**ऋषिः** । स हि **नवनं** स्तोत्रं देवताः प्रति **दधाति** । करोति ॥ स हि देवतास्तुतिव्याजेन नानाविधैर्मन्त्रैः प्रियाणि स्वमनीषितान्याविष्कृतवान् ॥ तथैषोषापि स्वकीयानि सर्वलोकप्रियाणि तेजांस्याविरकरोत् ॥

तदेतदाह—

**स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते ॥**

अथाग्नसत्पदं निर्ब्रवीति—

**अग्नसदग्नं भवति, अग्नसादिनीति वाऽग्नसानिनीति वा ॥**

अद्यते भक्ष्यते इति **अग्न अन्नम्** । कर्मणि अदेर्मन् ( उ० १–१३७ ) बाहुलकात् । तत्प्रतिकर्तव्यतया सीदति गच्छति[२] । यद्वा सनोति सम्भजत **इत्यग्नसत्** अन्नसाधिका स्त्री । अग्नन्युपपदे सदेः सनोतेर्वा "अन्येभ्योऽपि दृश्यन्ते" ( पा० ३–२–७५ ) इति क्विप् । सनोतेर्नकारलोपे "ह्रस्वस्य पिति कृति०" ( पा० ६–१–७१ ) ति तुक् । अस्मादेव णिनिः ( पा० ३–२–७८ ) चेद् **अग्नसादिनी अग्नसानिनीति वा ॥**

अथर्क्छेषमनूद्यार्थतो व्याचष्टे—

**"ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणाम् ॥"**

**स्वपतो बोधयन्ती शाश्वतिकतमाऽऽगात्पुनरेयुषीणाम् ( पुनरागामिनीनाम् ) ॥**

इति ॥ व्याख्यातप्रायम् ॥

अथ **इष्मिणः** (२५) इत्येतदनवगतम् । "ईषणिनः" इति वा "एषणिनः" इति वा "आर्षणिनः" इति वा शब्दसमाश्रयः ॥ तदेतन्निगममुखेनाचष्टे—

**"ते वाशीमन्त इष्मिणः ॥"**

( ऋ० सं० १–६–१३–६ )

ते वाशीति । श्रियसे कं भानुभिः संमिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः । ते वाशीमन्त इष्मिणो

१. "णु स्तुतौ" ( अ० प० ) ल्युट् । "धाशुवे"–( पा० ६–३–१०९ वा० ) ति वस्योत्वम् ॥

२. सायणस्तु यदा "अभ्रेति गृहनाम वरूथम् अभ्रेति तन्नामसु पाठात् । तत्र सीदतीत्यभ्रसज्जननी सा यथा स्वपतः पुत्रादीनुषःकाले प्रबोधयति, तथा भुवनाख्ये गृहे सीदन्ती तत्रत्यान्प्राणिनः प्रबोधयन्तीयमुषाः । आईयुषीणां स्त्रीणामागमनशीलानां मध्ये शश्वत्तमा आगात् पुनः पुनरागच्छती"त्येवं व्याख्यत् ॥ परं गृहनामसु तस्य पाठो नोपलभ्यते इति द्रष्टव्यम् ॥

३. तच्छीले कर्तरि । तेन णिनिना सामानाधिकरण्यमुपपद्यते ॥

अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥ इति हि मन्त्रस्वरूपम् ॥ राहूगणस्य गोतमस्यार्षम् । जगती । मारुतस्य प्रैयङ्गवस्य चरोरियं याज्या । तत्र ह्युक्तम् "प्रियवती याज्यानुवाक्ये भवत" इति ॥ **ते** पूर्वोक्ता आन्तरीक्षा मरुतः **ऋक्वभिः** रसहर्तृभिः भानुभिर्भानुशीलैर्दीप्यमानैः सूर्यस्य **रश्मिभिः** सह । **कं** वृष्ट्युदकं **श्रियसे** श्रयितुं प्राणिभिः सेवितुं । तुमर्थे कसेन्प्रत्ययः ( पा० ३–४–९ ) । **संमिमिक्षिरे** सम्यक् मेढुमिच्छन्ति । ( पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छन्ति ) "मिह सेचने" ( भ्वा० प० ) अस्मादिच्छासन्नन्ताल्लिटि "अमन्त्रे" ( पा० ३–१–३५ ) इति प्रतिषेधादामभावः व्यत्ययेनात्मने पदम् । सञ्चच्छन्त इति दुर्गः । कथंभूतास्ते ? ( मरुतः ) **सुखादयः** जनानां सुखदातारः । यद्वा शोभनस्य हविषो भक्षयितारः । **वाशीमन्तः** वाग्मिनः । **इष्मिणः** । ईर्षणिन ( हविषां स्तुतीनां च उपगन्तारः ) एषणिनो वा ( इच्छावन्तः ) आर्षणिनो वा ( आभिमुख्येन सर्वार्थानां ) द्रष्टारः । **अभीरवः** भयरहिताः । अत एव **प्रियस्य** सर्वाभिमतस्य **मारुतस्य** मरुत्सम्बन्धिनो **धाम्नः** स्थानस्य सर्वाभिमतं मरुत्सम्बद्धं विशिष्टं स्थानं कर्मणि षष्ठी । ( पा० २–३–६५ ) **विद्रे** लब्धवन्तः । यद्वा विद्रे विदारयितव्ये शत्रौ

१. स्तुतिमद्भिर्ऋत्विग्भिः सह सुखादय इति सायणः । तन्मते "ऋच स्तुतौ" ( तु० प० ) "सम्पदादित्वात्" ( पा० ३–३–९४ वा० ) भावे क्विप् । तत "इछन्दसी वनिपौ चे" ( पा० ५–२–१२२ वा० ) ति वनिप् मत्वर्थे । प्रकृते तु "ऋजगतिस्थानार्जनोपार्जनेषु"–( भ्वा० आ० ) अर्जनमिहर्कछब्दार्थः । शेषं पूर्ववत् ॥

२. "खाद् भक्षणे" ( भ्वा० प० ) तत औणादिक इन् ( उ० ४–११६ ) भावे । शोभना खादिर्भक्षणं येषां ते ॥

३. वाशीति वाङ्नाम ( निघं० १–११ ) शोभनया स्तुतिलक्षणया वाचोपेताः । तथाचात्र प्रशंसायां मतुबस्त्यर्थे ( पा० ५–२–९४ ) तथाचोक्तम्–"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादय" इति ॥

४. "ईष गत्यादौ" ( भ्वा० प० ) "इष इच्छायाम्" ( तु० प० ) इत्यनयोः "इषियुधीन्धी" ( उ० १–१४२ ) त्यादिना भावे मक् ततो मत्वर्थीय इनिः ( पा० ५–२–११५ ) तृतीयपक्षे गतिर्ज्ञानसामान्येऽपि । तदिह दर्शनमभिमतम् ॥ अत्र पक्षे ईषेरिष् भावः । बाहुलकात् ॥ तदेतद्युडन्तादस्त्यर्थेनेनाऽर्थतो निर्दिशति–ईषणिन इति । आर्षणिन इति तु "ऋषी गतौ" विलसत्साङ्पूर्वस्य बोध्यम् ॥

५. "न लोके"ति ( पा० २–३–६९ ) निषेधो "लादेशे सङ्ग्रहणं किकिनोः प्रतिषेधार्थ"मित्युक्तेर्नेह प्रवर्तते ॥

६. "विद्लृ लाभे" ( तु० उ० ) लिटि द्विर्वचनप्रकरणे "छन्दसि वा वचनम्" ( पा० ६–१–८ वा० ) इत्युक्तेर्द्विर्वचनाभावः । "इरयोरे" ( पा० ६–४–७६ ) इति इरेचोरेभावः । विद्रे इत्यस्य वेत्ति जाने इत्यर्थ इति दुर्गः ॥

प्राप्ते सति **अभीरवः** विगतभयाः । अथवोक्तविधस्य स्थानस्य विद्रे प्राप्तये तानेव मरुतः "स्तौमि" इति शेषः ॥ ६ ॥

एवमेतस्मिन्मन्त्रे "वाशीमन्त इष्मिण" इत्येतस्मादेकवाक्यसम्बन्धादिष्मिण इत्येतन्मरुद्विशेषणमित्युक्तवदर्थकमित्याह—

**ईषणिन इति वैषिणिन इति वार्षणिन इति वा । वाशीति वाङ्नाम वाश्यत इति सत्याः ॥**

**सत्या** इति कारकाभिधानम् । तथाच "वाशृ शब्दे" ( दि० आ० ) इत्यस्मात् "वसिवपी" ( उ० ४–१२१ ) इत्यादिना कर्मणि इञ् प्रत्ययः । "कृदिकारादक्तिनः" ( पा० ४–१–४५ ग० ) इति ङीष् । "वाशी–वाणी" इत्येवं वाङ्नामसु पठितम् ( निघं० १–११ ) ॥

अथ "**वाहः**" (२६) इत्येतदनवगतम् । पक्षेण चानेकार्थम् ( स्तोत्रमन्यद्वा ) अत्र निगममाह—

**"शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ॥"** ( ऋ० सं० ३–३–१९–३ )

**शंसावेति** । अस्य "एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम्" इत्युत्तरार्धर्चम् ॥ विश्वामित्रस्येयमार्षम् त्रिष्टुप् । शंसिष्यन्होताध्वर्युं प्रति ब्रूते–हे **अध्वर्यो** ! आवां **शंसाव** होतस्त्वमेव शंससि कथमहं शंसानि–? तत्राह–**प्रति मे गृणीहि** इति । त्वं मे मह्यं प्रति गृणीहि । "अनुप्रतिगृणश्च" ( पा० १–४–४१ ) ति संप्रदानसंज्ञायां चतुर्थी ( पा० २–३–१३ ) ओथामो दैवेत्यादिको होतुरुत्साहजननः प्रतिगरस्तं दत्स्व । तथासति **इन्द्राय** इन्द्रार्थं **जुष्टम्** प्रीतियुक्तम् "जुषी प्रीतिसेवनयोः" ( तु० आ० ) कर्मणि क्तः । **वाहः** स्तोत्रं देवताः प्रत्यूह्यमानत्वात् । वहतेः "वहश्च" इति णिदसुन् । **कृणवाव** करवाव । त्वं **यजमानस्य** अभिप्रेतकामावाप्तये । **इदं बर्हिः** अस्मिन्वर्हिषि । **आसीद** उपविश । तथाचोक्तम् "स प्रतिगरायोपविशती"ति ॥ **अथ च** अनन्तरञ्च **इन्द्राय** इन्द्रार्थम् आवाभ्यां क्रियमाण**मुक्थम्** शस्त्रं **शस्तं** प्रशस्तम् **भूत्** अभूत् भवतु ॥ अड्भावो ( पा० ६–४–७५ ) लुङ् चार्थः ॥ ( पा० ३–४–६ ) एतद्धि शस्त्रं स्तोमलक्षणमित्याभिमुख्यगामि । तथाच—

**अभिषहनस्तुतिम्, अभिषवणप्रवादां स्तुतिं, मन्यन्ते । ऐन्द्री त्वेव शस्यते ॥**

स्तोम एव हि देवानां वोढा भवति । तथाच निगमः "वाहिष्ठो वां हवानां स्तोमः" ( ऋ० सं० ६–२–९–१६ ) इति । "वोढृतमो ह्वानानां स्तोमः" इति हि वक्ष्यति । एवमिमामभिवहनस्तुतिं मन्यन्ते ॥ अन्येत्वेनाम्–**अभि०० स्तुतिं मन्यन्ते** । यदेतत्कूपसमीपे तदुदकस्योद्धृतस्य स्थानमाहावः । तथाच सूत्रम् "निपानमाहावः" ( पा० ३–३–७४ ) "आहावस्तु निपानं स्यादुपकूपजलाशये" इति चामरः ॥ तत्सदृशत्वात् ( उदकवाहाभिधानसारूप्यात् ) सोमरसस्य पूर्णमभिषवणचर्म वाह इत्युच्यते । तथाचायमर्थः–इन्द्रायेदं वाहः सोमोदकपूर्णमधिषवणफलकाख्यं जुष्टं प्रियं यथास्यात्तथा कुर्वः । तद्धि सु शस्तं सुप्रतिगीर्णं चेन्द्रस्य प्रीतिजनकं भवति इति ॥ एवमियमभिवहनस्तुतिः । अथवा अभिषवणप्रवादा स्तुतिर्भवतु । उभयथापि लियम्–ऐन्द्री त्वेव शस्यते ॥ यत इदमुक्थं शस्त्रमिन्द्रार्थमेव शस्तम् । तथाचेदमेवैकमभिधानमत्र व्युत्पाद्यत इति भावः ॥

**परितक्म्येत्येतदुपरिष्टाद्व्याख्यास्यामः ८(१६)**

इति श्रीमद्यास्कमु० प्र० निरुक्ते शास्त्रे नैघं० काण्डे चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

**"परितक्म्या"** (२७) इत्येतत् पदम् **उपरिष्टात्** ( नि० ११–२५ ) एकादशाध्याये "किमिच्छन्ती सरमा प्रेदमानट्" ( ऋ० सं० ८–६–५–१ ) इत्येतस्मिन्मन्त्रे प्रसक्तमायास्यतीति तत्रैव **व्याख्यास्याम** इतीहोक्तम् ॥८॥ (१६)

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैघण्टुककाण्डे चतुर्थाऽध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥ * ॥**

---

## अथ चतुर्थाध्यायस्य तृतीयः पादः ।

**सुविते–सु इते सूते–सुगते–प्रजायाम् इति वा ॥**

अथ **सुविते** (२८) इत्येतदनवगतम् । अनेकार्थमनेकप्रकृति च । तत्र **सुइते–सूते** इति वा शब्दसमाधी । तयोरेतद्यथासंख्येनार्थवचनं **सुगते प्रजायाम् इति वेति** ।

---

१. स्तोष्यन् "शंसु स्तुतौ" ( भ्वा० प० ) लृटः सद्वा ( पा० ३–३–१४ ) ॥

१. स्तोत्राणां मध्ये स्तोमः वोढृतमोऽतिशयेन वोढा प्रापको दूतभूतो भवतीत्यर्थः । तथाच हे अश्विनौ । वां युवयोरयं स्तोमो वाहिष्ठोऽतिशयेन वोढेति मन्त्रशेषार्थः ॥

२. आहाव–वाहसोः साद्दश्यं कथंचिद्वर्णकृतम् । नैतदेव किन्तु उदकेति ॥

३. उद्धृत्य निहितम् ॥

४. अनेकविकल्पस्वभावः । यथा इणा विगृह्य 'सुइते' इति गत्यर्थत्वम् सुपूर्वादिण् गताविस्मात्कर्मणि क्तः । छान्दसत्वादुवङ् । तथासतिना विगृह्य सूत इति प्रजार्थत्वम् । अत्र "षूङ् प्राणिगर्भविमोचने" ( अ० आ० ) इत्यस्माच्च छान्दसत्वादिड्भावः । सप्तम्येकवचने रूपम् । सूते इति वक्तव्ये सुवित इति वोच्यत इत्यर्थः ॥

**प्रजायामि**त्यस्य जनयितव्यायामित्यर्थः । तद्यथा 'सूते देवदत्ता पुत्रमि'ति ॥ अत्र निगमं दर्शयति—

**"सुवि॒ते मा॑ धाः"** ( य० वा० सं० ५-५ )

**इत्यपि निगमो भवति ॥**

"अना॑धृष्टमस्यनाधृ॒ष्यं दे॒वाना॒मोजो॑ऽनभिशस्त्यभिश॒स्तिपाः । अ॑नभिश॒स्तेन्यम॒ञ्जसा॑ स॒त्यमुप॑गेषꣳ सुवि॒ते मा॑धाः"

इति निगमस्वरूपम् ॥ अनेन तानूनप्त्रं हविः (आज्यं) संस्पृश्यते । हे तानूनप्त्र ! त्वम् । **अनाधृष्टमसि** । अन्यैरनाधर्षितमसि अतस्त्वयि संस्पृष्टे सति समयोपयन्त्रिता ह्येते ऋत्विजः नान्योऽन्यस्मै द्रोहमुपयास्यन्ति । कुतः पुनरेतत्सामर्थ्यं तव ? तत्राह **अनाधृष्यं देवानामोजः** । देवानामग्न्यादीनाम् ओजो बलम् । अनाधृष्यमनाधर्षणीयं ततश्च यद्दैवत्यं त्वमसि तत्प्रभावादेवैतत्सम्पत्स्यत इति भावः । किंच त्वम् **अभिशस्तिपाः** असि । अभिशंसनात्स्तोतॄन्पासि । अतएव **अनभिशस्ति** केनचिदपि अभिशंसनीयमुपालम्भनीयं नासि अनवद्यमसीत्यर्थः । किंच **अनभिशस्तेन्यम्** अनभिशस्ते अनिन्दिते स्वर्गादौ नयतीत्यनभिशस्तेनीः । अलुक् ( पा० ६-३-१४ ) द्वितीया प्रथमार्थे । पुंस्त्वं व्यत्ययेन । असि । अहम**ञ्जसा** व्यक्तम् अनायासेन वा तत्त्वतो वा "तत्त्वे त्वद्धाऽञ्जसा द्वयम्" इत्यमरः । **सत्यं** सत्यभूतं त्वाम् । **उपगेषम्** मुपगतवानस्मि योऽहमेतत्त्वामस्पृशम् । स त्वम् एवमुपगतवन्तं **मा** मां **सुविते** सुगते स्थाने यत्र गतानां शोभनं गतं भवति । तत्र **धाः** धेहि । अथ वा प्रजायां जनयितव्यायां धेहि । यथा बह्वपत्यः स्यां तथा कुर्वित्यर्थः । अत्र "स्विते" इति पाठ उवटमहीधरादिसम्मतः ॥५॥

**दयतिरनेककर्मा ॥**

**दयतिः** (२९) दयधातु**रनेककर्मा** अनेकार्थः । एकप्रकृतिरेवेति पूर्वस्माद्विशेषद्योतनार्थमुदाहरति एवमनेकार्थत्वं प्रतिज्ञायोदाहरणेनैवोपपादयति—

**"नवे॑न पूर्वं॒ दय॑माना॒ः स्याम"**

( य० वा० सं० २८-१६ )

**इत्युपदयाकर्मा ॥**

नवेनेति मन्त्रे दयधातुरु**पदयाकर्मा** रक्षणार्थः । **नवेन** धान्येन **पूर्वं** पुराणं **दयमानाः** रक्षन्तः **स्याम** भवेम इत्याशंसते । एवं पुराणेन नवम् । इष्टं हि पुराणेन नवस्य रक्षणं नवेन च पुराणस्य । प्रसिद्धं च लोके । तदेतन्नवमाध्यायान्ते व्यक्तमुपरिष्टान्निगममुदाहरिष्यते ॥

**"य एक॒ इद्वि॒दय॑ते॒ वसु॒" इति**

( ऋ० सं० १-६-६-२ )

**दानकर्मा वा विभागकर्मा वा ॥**

**इति** । एतस्मिन्मन्त्रे दयधातुः **दानकर्मा** दानार्थः **विभागकर्मा** विभागार्थो **वा** ॥ तथाच मन्त्रः "य एक॒ इद् वि॒दय॑ते॒ वसु मर्ताय दा॒शुषे॑ । ईशा॑नो॒ अप्र॑तिष्कुत॒ इन्द्रो॑ अ॒ङ्ग" इति । राहूगणस्य गोतमस्यार्षम् । ऐन्द्री । उष्णिक् । **य इन्द्रः** । **एक इत्** एक एव ( स्वतन्त्रः ) अथ च **ईशानः** सर्वस्य जगतः स्वामी ( ईश्वरः ) अतएव **अप्रतिष्कुतः** परैरप्रतिशब्दितः । अप्रतिस्खलितो वा सङ्ग्रामेषु । एवंभूतः । स **दाशुषे** हविर्दत्तवते **मर्ताय** मनुष्याय ( यज-

१. अत्र प्रजायत इत्यर्थः । अनेन सुङ्धातोरर्थोऽभिहितस्तेनेदं विषयसप्तम्यन्तमिति देवराजयज्वानः । दुर्गस्तु—अत्र यदा 'सुवते'—इति विपरिणामस्तदा सुगते इत्यर्थः । यदा 'सूते' इति तदा 'प्रजायाम्' सूते देवदत्ता पुत्रमिति । प्रजायत इत्यर्थः । इत्याह । तदेतन्मते क्रियापदमेवैतत् सूते सत्सुविते इति निगमे प्रयुज्यत इति बोध्यम् ॥

२. तनूनपाद्दैवत्यम् । तनूनपादग्निः । अन्यो वा ॥

३. समयोऽत्र शपथः । "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः ॥

४. अभिशस्तिर्ऋत्विजां परस्परविरोधेन निन्दनं, तस्याः पाति रक्षतीत्यभिशस्तिपाः ॥ पुंस्त्वं छान्दसम् ॥

५. न विद्यते अभिशस्तिर्गर्हा यस्य तत्तथोक्तम् ॥

६. एष पाठो दुर्गवृत्तौ नास्ति तत्र तु "ओजो अभिशस्तिपाः । अनभिशस्त्यञ्जसा" इत्येवमस्ति ॥

७. अत्र निगमवाक्ये तैत्तिरीयशाखायां पाठभेदो दृश्यते तदनुरोधेन व्याख्याभेदो दुर्गवृत्तौ द्रष्टव्य इत्युपेक्षितोऽस्माभिस्तत—( तै० शा० त० ) उद्धृतः पाठोऽस्मन्महर्षिणा ( मैथिलेन याज्ञवल्क्येन ) तस्योद्धिरणात् ॥

८. अत्र महीधरः—यतस्त्वमीदृशमसि अतो हे तनूनप्त्राज्य ! अहमृत्विक् अञ्जसा ऋजुमार्गेण मानसकौटिल्यरहितेन सत्य—माज्यस्पर्शरूपं शपथमुपगेषमुपगच्छेयम् । उपपूर्वस्य गायतेर्लेट्युत्तमैकवचने "सिब्बहुलं लेटि" ( पा० ३-१-३४ ) इति सिपि इडागमे "लेटोऽडाटौ" ( पा० ३-४-९४ ) इत्यडागमे च रूपम् "इतश्च लोपः परस्मैपदेषु" ( पा० ३-४-९७ ) इति इलोपः । इति ॥

१. ननु "सुविते" इतिवदनेक( विकल्प्य ) प्रकृतिरित्यर्थः ॥ अत्र दुर्गः—"अन्ये तु मुवते—यथा सुवितेशब्दोऽनेकार्थोऽनवगतसंस्कारश्च नैवमयम् । किंतर्हि अनेकार्थं एवायमिति ॥ इति । अत्र भाष्ये श्तिपा धातुनिर्देशे सत्यपि "दयतिरित्येष शब्द" इत्येवं दुर्गव्याख्यानं चिन्त्यम् ॥ दयधातोरनेकार्थत्वम् "दयदानगतिरक्षणहिंसादानेष्वि"ति पाणिनीयेऽपि । देवराजस्तु—अनेकार्थत्वाद्विभागदहनगमनेष्वपि वर्तत इत्याह ॥ उदाजहार चानेकेष्वर्थेषु यथानिगमम् ॥

२. प्रतिकूलशब्दरहित इत्यर्थः ॥

मानाय ) ( निघं० २-३ ) अङ्ग क्षिप्रं वसु धनं विदयते विशेषेण ददाति ॥ यद्वा विविधं धनं ददाति । विभजते वा । तदेवमीशान इन्द्रः । दाशुषे यजमानाय वसु दयते इत्युक्ते दानविभागाभ्यामन्यत्किं कुर्यात् ? तस्माद्वाक्यसामर्थ्यादत्र **दानकर्मा वा, विभागकर्मा वा,** इत्युपपद्यते ॥

**"दुर्वर्तुर्भीमो दयते वनानि"**

( ऋ० सं० ४-५-८-५ )

## इति दहतिकर्मा ॥

**इति** । एतस्मिन्मन्त्रे दयधातुर्**दहतिकर्मा** दाहार्थः । तथाच मन्त्रः "अधं जिह्वा पापतीति प्र वृष्णो गोषु युधो नाशनिः सृजाना । शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥" इति भारद्वाजस्यार्षम् । आग्नेयी । त्रिष्टुप् ॥ प्रातरनुवाकाश्विनयोः शस्यते ॥ **अध** अथ अनन्तरमेव **प्रवृष्णः** प्रवर्षितुरग्नेर्**जिह्वा** ज्वाला दारुषु **पापतीति** पुनः पुनः पतति गच्छति यङ्लुगन्तमेतत् । तत्र दृष्टान्तः **गोषु युधो नाशनिः सृजाना** इति । गोषु इति निमित्ते सप्तमी गवार्थम् । वादे असुरैस्तत्प्रहर्तृभिः सह युध्यतीति युत् तस्मात्सृजाना सृज्यमाना । कर्मणि लटः कानच् । **अशनिर्न** वज्रमिव । किंच **शूरस्येव प्रसितिः क्षातिरग्नेः** । यथा शूरस्य विक्रान्तस्य ( शौर्योपेतस्य ) अप्रतिहतगतेः प्रसितिः प्रसहनं संग्रामानुप्रवेशमार्गः छिन्नभिन्नरुग्णैः शत्रुभिः प्रकीर्णः स्यात् एवमस्याग्नेः क्षातिः क्षीयन्तेऽस्यामोषधिवनस्पतय इति क्षायतेरधिकरणे क्तिन् दहनमार्गः । ईषत्लुष्टार्धदग्धमसीभूतैर्वृक्षैर्गुल्मादिभिश्चाकीर्यते यदायमग्निः **दुर्वर्तुः** दुर्वारः अन्यैर्वारयितुमशक्यः ( दावाग्नीभूतः ) **भीमः** भयङ्करः **वनानि दयते** दहति ॥५॥

१. पुनरित्यर्थस्सायं प्रयोगः क्षिप्रार्थेऽङ्गशब्दस्य । यो हि क्षिप्रं ददाति स पुनर्ददाति । नानार्थत्वं वाङ्व्ययानाम् । तथा चामरः । सम्बोधनार्थेषु "स्युः प्याट्पाडङ्गहेहैभोः" इति "पुनरर्थेङ्ग" इति चाह । मेदिनी च "अङ्ग सम्बोधने हर्षे सङ्गमासूययोरपि" इत्याह ॥ एतद्वाक्यादेव क्षिप्रार्थेऽपि ॥

२. अपि चेति सायणः ॥

३. "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" ( म० अ० ३ श्लो० ७६ )॥ इति स्मृतेरग्निरेव वृष्टिहेतुः ॥ इन्द्रस्येति दुर्गः । तन्मते तस्येत्यध्याहार्यम् ॥

४. तासां गवां प्रकर्षेण हर्तृभिर्हरणशीलैर्देवपणिभिर-( रेतन्नाम्नकैर-) सुरैः । यद्वा गोषु अप्सु ( नि० स० ) "गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाग्भूष्वप्सु भूम्नि च" इति मेदिनी । मेघेन सह युध्यतीति युत् इन्द्रः । तस्य ( तेन सृज्यमाना ) अशनिर्यथा दारुषु भृशं पतति तथास्याग्नेर्जिह्वा ज्वाला दारुषु पततीत्येवमुपमा ॥

एवमयमाग्नेये मन्त्रे वनशब्दसन्निकर्षे श्रूयमाणे दयधातुरयं दहनादन्यत्किमभिदध्यात् तस्मात्सामर्थ्यादयं दहतिकर्मेत्युपपद्यते ॥

अथ निगमप्रसक्तं निर्ब्रवीति—

## दुर्वर्तुर्दुर्वारः ॥

दुर्वारणीय इत्यर्थः ॥ दुरुपपदाद्वृतेस्तुन्प्रत्यये गुणः ॥

**"विदद्वसुर्दयमानो विशत्रून्" इति**

( ऋ० सं० ३-२-१५-१ )

## इति हिंसाकर्मा ॥

**इति** । एतस्मिन्मन्त्रे दयधातुर्**हिंसाकर्मा** हिंसार्थः ॥ तथाच मन्त्रः—

"इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो विशत्रून् । ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे"

इति । विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । उद्भिद्बलभिदोर्निष्कैवल्ये निविद्धानीयस्य सूक्तस्य प्रथमैवेयम् । विश्वामित्रः स्तौति **पूर्भित्** असुरपुरां मेघानां वा भेत्ता । अतएव **विदद्वसुः** वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्युक्तः ( महाधनः ) प्राप्तधनो वा । **शत्रून्** असुरान् **विदयमानः** विशेषेण हिंसन् **दासं** दस्यते उपक्षीयतेऽनेन तम इति दासो वासरः । "दसु उपक्षये" ( दि० प० ) घञ् करणे । तम् । **अर्कैः** अर्चनीयैः स्वतेजोभिर्**आतिरत्** समन्तादवर्धयत् । इन्द्रस्य सूर्यात्मकत्वात् । तथाच स्मृतिः "चैत्रमासे तपेदिन्द्र" इति । दुर्गस्तु दासं दासयितव्यं मेघम् आतिरत् अभिनदिति व्याचख्यौ ॥ स एवेन्द्रः **ब्रह्मजूतः** ब्रह्मणा स्तुतिलक्षणेन वेदेन जूत आकृष्टः प्राप्तः प्रीतो वा । यद्वा ब्रह्मणा जगत्स्रष्ट्रा जूतः प्रेरितः । **तन्वा** शरीरेण **वावृधानः** वर्धमानः **भूरिदात्रः** दायते लूयतेऽनेन शत्रुशिर इति दात्रमायुधं "दाम्नी"-( पा० ३-२-१८२ ) त्यादिना करणे ष्ट्रन् । भूरीणि दात्राणि यस्य सः । बहुविधायुधोपेतः । **उभे रोदसी** द्यावापृथिव्यौ । **आपृणत्** सर्वतोऽतर्पयत् । आपूरयतीति दुर्गः । एवमत्र "विदद्वसुर्दयमानो विशत्रून्" इत्येवं शत्रुसन्निधौ दयतेः कोऽन्योऽर्थो भवितुमर्हत्यन्यत्र वधादित्युपपद्यते ॥ १ ॥

१. अद्भिः पूर्णाः, अपो वा पालयन्तीति पुरो मेघाः । "पॄ पालनपूरणयोः" ( क्र्या० प० ) क्विप् "उदोष्ठ्यपूर्वस्ये"ति ( पा० ७-१-१०२ उत्वे रपरत्वम् ॥

२. तथाचात्र बहुव्रीहिः विदन्ति वसूनि यस्येति ॥ अत्र विद् ज्ञानार्थस्ततः शता । अर्थान्तरे लाभार्थः ॥

३. दुर्गमते-मेघवधप्रतिबन्धिनः ।

४. अत्रान्तर्भावितण्यर्थतायां सकर्मकत्वमभिप्रैति सायणः । अत्रास्थिरुत्तरेण तुशब्देन बोध्यते ॥

५. बहुदान इति दुर्गः ॥

"इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान् । अहं हि वामूतये वन्दनायमां वायसो दोषा दयमानो अबूबुधत् ॥"

इत्येतस्मिन्—

"दयमान" इति ।

इति । एतस्मिन्पदे दयतिर्गत्यर्थः । तथाच दयमान उड्डीयमानः काकोऽन्तरिक्षेरणाधस्तात्पुतं मां दोषायामबोधयदित्येवं मन्त्रार्थोऽवगन्तव्यः ॥

**नूचिदिति निपातः पुराणनवयोर्नूचेति च ॥**

**नूचित् (३०) इति एषः निपातः पुराणनवयो**रर्थयोर्वर्तते । प्रकरणोपपदवशात् कस्यचिदर्थस्य पुराणतां, कस्यचिच्च नवतां द्योतयति ॥ एवं **नूच (३१) इति च** ॥ अयमपि पुराणनवयोरर्थयोर्वर्तते । नूचिदित्येतस्यैवार्थसामान्यप्रसङ्गादैसमाम्नात एवोदाहृतः ॥ ( नूचेत्ययं निपातसमुदायः ) ॥

अथात्र नूचिदित्यस्योदाहरणं निगमयति—

"अद्याचिन्नूचित्तदपो नदीनाम् ॥"

( ऋ० सं० ४-७-२-३ )

**अद्य च पुरा च तदेव कर्म नदीनाम् ॥**

**अद्याचिदिति** । अस्य "यदाभ्यो अरदो गातुमिन्द्र । निपर्वता अद्मसदो न सेदुस्त्वया दृह्ळानि सुक्रतो रजांसि ॥" इति शेषः ॥ भरद्वाजस्येयमार्षम् त्रिष्टुप् । उक्थपर्यायेष्वच्छावाकस्य शस्त्रे माध्यन्दिने सवने विनियुक्ता । **हे इन्द्र ! अद्याचित्** अद्यापि **नूचित्** पुरापि तव **नदीनां** सम्बन्धि **तत्** तदेव **अपः**कर्म ( निघं० २-१ ) वहनम् । वर्तते । **आभ्यः** नदीभ्यः ( आसामर्थे ) त्वं **गातुं** मार्गं । "गाङ् गतौ" ( भ्वा० आ० ) "कमिमनिजनिगाभायाहिभ्यश्च" ( उ० १-७० ) इति कर्मणि अधिकरणे वा तुन् । **अरदः** अखनस्त्वम् प्रवृहनार्थम् इति **यत्** कर्म तत्सर्वानुपक्षीणं सद्वर्तत इत्यर्थः । अपि च हे **सुक्रतो** ! शोभनकर्मन्निन्द्र ! त्वदाज्ञया **पर्वता** गिरयः **निषेदुः** निषण्णाः । उत्पतनं विहाय क्वचिदेव स्थाने नैश्चल्येनोपविष्टा बभूवुः । अत्र दृष्टान्तः **अद्मसदो न** अद्मादनीयमन्नम् । अदेर्मन् कर्मणि ( उ० १-१३७ ) वाहुलकात् तदर्थं सीदन्तीत्यद्मसदो निरन्ना मनुष्यास्त इव । यथा ते गन्तुमसमर्था एकत्रैव नैश्चल्येनावतिष्ठन्ते तद्वत् । अतः कारणात् **त्वया रजांसि** सर्वे लोकाः **दृह्ळानि** दृंहितानि स्थिरीकृता आसन् ॥ सर्वथाप्युदकप्रदानद्वारेण पर्वतानां स्थिरीकरणेन च त्वयैवैते लोकाः दृढीकृता इति भावः ॥ एवमथैतत्सन्निधौ वर्तमानो नूचिदित्येष पुराणाभिधायीत्युपपद्यते ॥ ३ ॥

अथ नूचेत्यस्योदाहरणम्-निगमयति—

"नूचं पुरा च सदनं रयीणाम् ॥"

( ऋ० सं० १-७-४-७ )

**अद्य च पुरा च सदनं रयीणाम् ॥**

**नूचेति** ॥ अस्य "जातस्य च जायमानस्य च क्षाम् । सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन् द्रविणोदाम् ॥" इति शेषः । कुत्सस्येयमार्षम् ॥ पृष्ठ्यस्य षष्ठेऽहनि अग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते । अत्र नूचेति अद्येत्यस्यार्थे । **नूच** अद्यास्मिन्काले पुरा च **रयीणां** सर्वेषां धनानां **सदनम्** आवासस्थानम् । **जातस्य** उत्पन्नस्य कार्यजातस्य **जायमानस्य** च अभिनिष्पद्यमानस्य च **क्षां** निवासम् ( भूमिम् ) ( निघं० १-१ ) **सतश्च** निष्पन्नस्य भूतजातस्य **भवतश्च** उत्पद्यमानस्य च **भूरेः** बहुनः **गोपाम् गोप्तारं** ( रक्षितारम् ) **द्रविणोदां** धनप्रदम् एवं गुणविशिष्टम**ग्निं देवा धारयन्** हविर्वहनकर्मणि धृतवन्तः ॥ अडभाव आर्षः ( पा० ६-४-७५ ) तथाच वक्ष्यति "अथा देवा दधिरे हव्यवाहम्" इति ॥ २ ॥

---

१. अस्य व्याख्याशेषोऽभ्यूहितव्यः । दुर्गेणापि मृग्योऽत्र शेष इत्येवोक्तम् ॥

२. अनेकार्थत्वेनेह समाम्नातः । न हि निपातानां प्रकृतिप्रत्ययादिसंस्कारोऽस्ति यस्मानवगमः स्यात् ॥

३. नूचिदित्येष तु समाम्नात एव ( निं० १-२-१ ) अर्थविशेषोपदर्शनार्थं उपन्यस्तः ॥

४. अस्य लोकस्योपकारायाजस्रमेता वहेयुरिति भावतोऽनुध्यानादिना अनारतं वहन्ति ॥

५. "इन्द्रो असाँ अरदद्वज्रबाहु"रिति हि आम्नायते । ( ३-२-१३-६ ) नदीनामुक्तिरियम् ॥

६. दुर्गस्तु 'निपर्वता अद्मसदो न सेदुः" य एते पर्वताः पर्ववन्तो मेघाः अद्मसदः निष्पादयितव्यमन्नमस्माभिरित्येतदर्थमुद्दिश्यान्तरिक्षे लोके सीदन्ति अवतिष्ठन्ते गच्छन्ति वा, तेऽपि युष्मदीयोपसृदिता एवोदकभूताः नीचैर्भूम्यामत्र निष्पत्त्यर्थं सेदुः सीदन्तीत्यर्थमाह ॥

१. ये तु-( सायणादयः ) अद्येति गृहनामसु पठन्ति तन्मतेन गृहिण्य इवेत्येवमर्थोऽपि सम्भवति ॥

२. नवाभिधायिन उदाहरणम्-"नूचिन्नु वायोरमृतं विदस्येत्" इति । अत्र हि वक्ष्यति । नवं च पुराणं चेति (        ) ॥

३. निवासयितारमिति सायणः ॥

४. सर्वत्र विद्यमानस्वभावस्य नित्यस्य चाकाशादेर्भवतश्च सद्भावं प्राप्नुवतो भूरेरसंख्यातस्यान्यस्य च भूतजातस्येत्येवं सायणो व्याख्यत् । तथाचाम्नायते "तस्मात्सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति विज्ञायते" "यत्र गां शयानां निर्जगाति मृतामेतामविद्वान् मन्यतेऽत्वग्नौ ह्येवैते प्रविशन्तीति च विज्ञायते ॥ तस्मादुपपद्यते स्थानत्वं निवासत्वं चाग्नेः ॥

५. द्रविणमिति धननाम ( निघं० २-१० ) सकारोपजनोऽत्र ददातेर्विच् ( पा० ३-२-७५ ) ॥

६. हविर्वोढृत्वेनेति सायणः ॥

एवमिह पुरा चेत्यस्य सन्निधौ वर्तमानो नूचेत्येष शब्दो नवाभिधायीत्युपपद्यते ॥ पुराणाभिधायित्वे गवेष्यमुदाहरणम् ॥ १ ॥ अथ **दावने** (३२) इत्येतदनवगतम् । "दानस्य" इत्यवगमः । एवम् **अकू-**(१७) **पारस्य** (३३) इत्येतदनवगतम् । "अकुपरणस्य" इत्यवगमः । द्वयोरप्येकस्मिन्नेव निगम उदाहरणमाह—

**"विद्याम तस्य ते वयमकूपारस्य दावने ॥"**

(ऋ० सं० ४-२-१०-२)

**विद्याम तस्य ते वयमकुपरणस्य दानस्य ॥**

**विद्यामे**-ति ॥ अस्य—"यन्मन्यसे वरेण्यमिन्द्र द्युक्षन्त-दाभर" त्यादिः ॥ अत्रेर्भौमस्येयमार्षम् । अनुष्टुप् । अच्छावाकस्य तार्तीयसवनिके आवापे नियुक्ता । **यदिन्द्रचित्रेति** च (४-२-१०-१) हे **इन्द्र** ! **यत्** त्वं **द्युक्षं** द्युतिः क्षियति निवसत्यस्मिन्निति द्युतिक्षं सद्युक्षम् । "क्षि निवासगत्योः" (तु० प०) "अन्येभ्योऽपि दृश्यते" (वा० ३-२-१०१) इति डः । पृषोदरादित्वात्तिशब्दलोपः ॥ द्युतिनिवासभूतं (द्युतिमत्) अन्नं धनं वा **वरेण्यं** वरणीयं (प्रार्थनीयमुत्तमम्) **मन्यसे तत्** अस्मभ्यम् **आभर** आहर । हस्य भः (पा० ३-१-८४-वा०) देहि । **ते** तव स्वभूतस्य **अकूपारस्य** अकुपरणस्य अकुत्सितपूरणस्य (प्रभूतस्य) इत्यर्थः । **तस्य** त्वया हृतस्य धनस्य अन्नस्य वा । **दावने** दानस्य वयमेव **विद्याम** लब्धारः स्यामेत्यर्थः ॥ अत्र पूर्वोत्तरमन्त्रसन्दर्भाद्दानप्रक्रमे दावने इति दानार्थकमेव भवति । एवं तद्देयं प्रभूतमेव प्रार्थ्यतेऽतोऽकूपारस्येति अतिपरोक्षवृत्तिपरोक्षवृत्तिनाऽकुपरणस्येत्यनेन व्याख्याय प्रत्यक्षवृत्तिना कुत्सितपूरणस्येत्यनेन व्याख्यायते । अत्र कुः कुत्सार्थः । परणं पूरणमुच्यते । अनयोः कर्मधारयतो नञ्समासः । यद्वा अकुत्सितः पारः यस्य सः । कोर्दीर्घः पृषोदरादित्वात् ॥ २ ॥

**आदित्योऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः ॥**

स हि अकुत्सितस्य महतोऽध्वनः पारयिता भवति । **दूरपारः** उदयादारभ्य यावदस्तमिति ॥

**समुद्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः ॥**

असावपि ह्यकुत्सितपार आत्मनैव विभुना भवति । **महापारः** विस्तीर्णपारः ॥

**कच्छपोऽप्यकूपार उच्यते । न कूपमृच्छतीति ॥**

इति । हेतोः । **ऋच्छति** । गच्छति । अल्पोदकत्वात् । किंतर्हि ? यत्र बहु प्रकीर्णमुदकं भवति तत्स्थानं गन्तुमिच्छति । समुद्रं नदीं महाह्रदं वा ॥

अथ व्याख्याप्रसक्तमुच्यते—

**कच्छपः कच्छं पाति । कच्छेन पातीति वा । कच्छेन पिबतीति वा ॥**

**कच्छम्** आत्मनो मुखसंपुटम् । **पाति**-रक्षति । स हि किञ्चिद्दृष्ट्वा स्वशरीर एव मुखसंपुटं प्रवेशयति । संपुटे हि कच्छशब्दः प्रसिद्धः पाणिकच्छ इति ॥ अथ **वा कच्छेन**—कटाहेन (पृष्ठरूपेण) इतराण्यङ्गानि **पाति** रक्षतीति कच्छपः । स हि किञ्चिद्दृष्ट्वा सर्वाण्यङ्गानि पृष्ठकटाह एवानुप्रवेश्य कूर्मत्वेनैवावतिष्ठते । **अथवा कच्छेन** मुखसम्पुटेन **पिबतीति** कच्छपः ॥ "सुपी-" (पा. ३-२-४) तियोगविभागात्कः । आलोपः ॥

अथ विग्रहप्रसक्तः कच्छशब्दो निरुच्यते—

**कच्छः खच्छः खच्छदः ॥**

य एष **कच्छः** मुखसम्पुटः कटाहो वा सोऽयं **खच्छ** इत्युच्यते । स हि **खच्छदः** खमाकाशं छादयति । मध्ये च सुषिरो भवति ॥ तथाच खच्छदः सन्खच्छः स एव कच्छ इति त्रैरूप्यम् ॥

**अयमपीतरो नदीकच्छ एतस्मादेव । कमुदकं तेन च्छाद्यते ॥**

**तेन** केन **च्छाद्यते** इति **कच्छः** अनूपदेशः । "अथ कच्छः स्यादनूपे तुन्नकद्रुमे । नौकाङ्गे पुंसि वाराह्यां चीरिकायां च योषिति" इति मेदिनी । अत्रा "न्येष्वपि दृश्यते" (पा० ३-२-१०१) इति डः । डित्त्वाट्टिलोपः । तत्र हि अपिशब्दः सर्वोपाधिव्यभिचारार्थस्तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्परितः खाता परिखे-(तियर्थे-)त्युक्तम् (सि० कौ०)

१. ददातेर्व्यत्ययेन कर्मणि वनिप् (पा० ३-२-७४) ततः षष्ठ्यर्थे द्वितीयार्थे वा चतुर्थी (पा० २-३-६२ वा) अल्लोपाभावश्छान्दसः (पा० ६-४-१३४) इति देवराजः । भावे-वनिबत्रोदाहृतम् ॥

२. येन लब्धेन सुपर्णमात्मानं मन्यामहे पर्याप्तम् । ऐहिकायामुष्मिकाय चेत्यर्थः ॥

३. "पॄ पालनपूरणयोः" (जु० प०) घञ् (पारः पूरणं कुत्सितः पार इति क० स० (पा० २-२-१८) ततो नञा षष्ठ्यर्थे ब० स० सः ।

१. अत्रार्तेः "पाघ्राध्मे"-(पा० ७-३-७८) ति ऋच्छादेशस्तथा चात्र "कर्मण्यण्" (पा० ३-२-१) इत्यणप्रत्ययः । ततो नञ्समासः ॥

२. अतिपरोक्षवृत्तिशब्दं परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तितोपपाद्येति नैरुक्तसमयः । पृषोदरादित्वात्साधुः । अत्र "पुंसि संज्ञायां घः प्रायेण" (पा० ३-३-११८) इति घप्रत्यये "छादेर्घेऽद्व्युपसर्गस्य" (पा० ६-४-९६) इति उपधाह्रस्वः । अन्यत्सर्वं (वर्णविपर्ययवर्णलोपौ) पृषोदरादित्वाद्बोध्यम् ॥

तदेवम् आदित्योऽप्यकूपारः, समुद्रोऽप्यकूपारः, कच्छपोऽप्यकूपारः। इत्येतेषु निगमा गवेष्याः॥

अथ **शिशीते** (३४) इत्येतदनवगतम्। "निश्यती"–स्त्ववगमः॥ अत्र निगममुपन्यस्यति—

**"शिशीते शृङ्गे रक्षसे विनिक्षे"**

( ऋ० सं० ३–८–१५–३ )

**निश्यति शृङ्गे रक्षसो विनिक्षणाय॥**

**शिशीत** इति। अस्य "विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा॥ प्रादेवीर्मायाः सहते दुरेवाः" इत्यादिः॥ वृषोनाम जनपुत्रस्त्रैयमार्षम्। त्रैष्टुभम्। आत्रेयस्य वा कुमारस्य उभयोर्वा, प्रातरनुवाकाश्विनयोः शस्यते। अयमग्निः **बृहता** महता **ज्योतिषा** तेजसा **विभाति** विशेषेण ( नानाप्रकारं ) दीप्यते। अथ तथाभूतः सन् **महित्वा** स्वमहत्त्वेन **विश्वानि** सर्वाणि भूतानि **आविः कृणुते** प्रकटीकरोति। एवं प्रवृद्धो ह्यग्निः **अदेवीः** अदेवनशीला आसुरीः **मायाः प्रसहते** अभिभवति। किं च **दुरेवाः** दुरवा दुस्तर्पा वा स्वा ज्वालाः। न ह्यग्नेस्तृप्तिरस्तीति। अत्रेवर्णोपजनः। **शिशीते** निश्यति। नितरां तीक्ष्णीकरोति। "शो तनूकरणे" ( दि० प० ) व्यत्ययेन शपः श्लौ ओकारस्येत्वमात्मनेपदं च। धातुरत्र न्युपसृष्टार्थे वर्तते॥ **शृङ्गे** अत्र लुप्तोपमा द्रष्टव्या। तथाच–यथा हि वृषभस्तटाभिघ्नन् शृङ्गे तीक्ष्णीकरोति। एवमग्निरपि दारूणि दहंस्तीक्ष्णीकरोति ज्वालाः। किमर्थम्? **रक्षसे–विनिक्षे** रक्षसो विनिक्षणाय विहिंसनाय। "क्षणु हिंसायाम्" ( त० उ० ) तस्माड्डु औणादिकः। विनिक्षणनं विनिक्ष इति। विभक्तिव्यत्यय आर्षः ( पा० २–३–६२ वा० ) ( पा० ३–१–८५ )॥ ३॥ अत्र शृङ्गशब्दसन्निधानात् "शिशीते" इत्यस्य तीक्ष्णार्थत्वम् तीक्ष्णीकृतैर्ह्यर्चिभिर्विनिक्षणमुपपद्यते इति॥

अथ निगमप्रसक्तमुच्यते—

**रक्षो रक्षितव्यमस्माद्रहसि क्षणोतीति वा, रात्रौ नक्षत इति वा॥**

**रक्षितव्यं** शरीरमस्मात् भवतीति **रक्षः**। "रक्ष पालने" ( भ्वा० प० ) असुन्। रक्षो हि मानुषान्भक्षयति। **अथवा रहसि** विविक्ते प्रदेशे **क्षणोति** हिनस्तीति रक्षः। "क्षणु हिंसायाम्" ( त० उ० ) डः ( पा० ३–२–१०१ ) डित्त्वाट्टिलोपः पृषोदरादिः। **अथवा रात्रौ नक्षते** गच्छतीति रक्षः। "णक्ष गतौ" ( भ्वा० प० ) पदव्यत्यय आर्षः॥

अथ **सुतुकः** (३५) इत्येतदनवगतम्। "सुतुकनः" ( सुगमनः ) "सुप्रजाः" इतिवाऽवगमस्तथाच निगमः—

**"अग्निः सुतुकः सुतुकेभिरश्वैः"**

( ऋ० सं० ७–५–३१–७ )

**सुतुकनः सुतुकनैरिति वा। सुप्रजाः सुप्रजोभिरिति वा॥**

**अग्निः सुतुक** इति। "स आवक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः। अग्निः सुतुकः सुतुकेभिरश्वैरभस्वद्भीरभस्वाँ एह गम्याः॥" इति मन्त्रः। आद्यस्य त्रितस्यैयमार्षम् त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे अग्ने! **स** तादृशस्त्वम् **नः** अस्माकम् यज्ञे **महि** महतः देवान् **आवक्षि** आह्वयसि। **आसत्सि च** आसीदसि च होतृत्वे। किंच **युवत्योः** अन्योन्यं मिश्रीभवन्त्योस्तरुण्योरिव **दिवस्पृथिव्योः** द्यावापृथिव्योर्मध्ये **अरतिः** सूर्यात्मना गन्ता। यद्वा अलमतिः पर्याप्तमतिः। सर्वेषामन्तरावर्तिनां भूतानां मध्ये इति दुर्गः। तथा **सुतुकः** सुतुकनः सुगमनः ( स्तोतृभिर्यष्टृभिश्च सुखेन प्राप्तव्यः) सुप्रजा[२] वा। **रभस्वान्** वेगवान् **अग्निः** अङ्गनादिगुणयुक्तः। **सुतुकेभिः** सुतुकैः सुगमनैः सुप्रजोभिः कुलजैः **रभस्वद्भिः** वेगवद्भिः **अश्वैः** रोहिदाख्यैः सह **इह** अस्मदीये यज्ञे **आ गम्याः** आगच्छेस्त्वम् नित्यं हवींषि वोढुम्॥ अत्र सुपूर्वात्तकतेर्गतिकर्मणः ( निघं० २–१४ ) "गेहे कः" ( पा० ३–१–१४४ ) इति बाहुलकात्कप्रत्ययोऽकारस्योकारश्च। यद्वा बहुव्रीहिः। पक्षे तुगित्यपत्यनामसु पठितम् ( निघं० २–२ ) अकारोपजनत्वं चार्षम्॥ ७॥

अथ **सुप्रायणाः** (३६) इत्येतदनवगतम् "सुप्रगमनाः" इति शब्दप्रतीतिः। सुप्रपूर्वादयतेः ( भ्वा० आ० ) ल्युट् "उपसर्गस्यायतौ" ( पा० ८–२–१९ ) इति लत्वाभावश्छान्दसः॥ यज्ञगृहद्वारोऽभिधेया यास्कमतेन। शाकपूणेस्तु अर्चिषः॥ तथाच निगमः—

**"सुप्रायणा अस्मिन्यज्ञे विश्रयन्ताम्"**

( य० का० सं०। वा० सं० २८–५ )

**सुप्रगमनाः॥ २॥ (१८)**

---

१. अत्र सायणः। शृङ्गाणि शृङ्गसदृशीः हिंसिकाः का ज्वालाः शिशीते तीक्ष्णीकरोतीति 'शृङ्गे'–पदमुपादाय व्याचख्यौ॥

१. सायणस्तु–आवह प्रापय। एवम् आसत्सि अस्माकं यज्ञमासीदेति व्याचख्यौ॥ आर्षमेतत्क्रियापदमेवमासत्सीत्यपि बोध्यम्॥

२. अपत्यं चास्य सर्वाः प्रजाः। ताश्च प्रतिशोभनः कल्याणमय इति स सुप्रजा अग्निः॥ "नित्यमसिच्प्रजामेधयोः" इत्यसिच्समासान्तः ( पा० ५–४–१२२ ) शोभनाः प्रजा अस्येति बहुव्रीहिः॥

३. एतन्निर्वचनं ( नि० ७–२४ ) द्रष्टव्यम्॥

४. शोभनानामेवाश्वानां शोभनाः प्रजा भवन्तीति प्रजाद्वारेणाग्निः स्तूयते॥

**सुप्रायणा** इति ॥ मैत्रावरुणो ब्रवीति "होता यक्षद्दुर ऋष्वा कवष्योऽकोषधावनीरुदाताभिर्जिहतां विपक्षोभिः श्रयन्तां सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज" इति ॥ **होता** एता **दुरः** यज्ञगृहद्वारः । तथाच "दुर्या" इति पदं[1]सुपादायोक्तः "दुरः गृहद्वाराणि अर्हन्तीति दुर्या गृहा उच्यन्त" इत्याह । अथवैता अग्न्यर्चिषः । **यक्षत्** यजतु । कथंभूताः? **ऋष्वाः**[2] महत्यः ( निघं० ३–३ ) हिंसा वा द्वार्येव यो निवारणीयः स हिंस्यते । अर्चिषां तु हिंसत्वमुपपद्यत एव सति संयोगे । एवं **कवष्यः** कपाटवत्यः । कुषिता वा ( विकर्तिताः ) **अकोषधावनीः** ( अकोशधावनीः ) तासु हि संवृतासु को(षा)शा अर्थराशयो न धावन्ति नान्यतो गच्छन्ति सुरक्षा भवन्तीति, अर्चिःष्वपि हविः प्रक्षिप्तं नान्यतो धावति किन्तु देवानेव प्राप्नोति ॥ एतदेवाकोशधावनीत्वमर्चिषाम् । एवंलक्षणा एता द्वार अर्चिषो वा **उदाताभिः** दिग्भिः ( निघं० १–६–१ ) सह उज्जिहताम् उत्तिष्ठन्तु । "ओहाङ् गतौ" (जु० आ०) लोट् । "ई हल्यघोः" ( पा० ६–४–११३ ) "भृञामित्" ( पा० ७–४–७६ ) इतीदीतौ ॥ **विश्रयन्ताम्** विव्रियन्ताम् च । **पक्षोभिः** स्वैरेवावय[3]वैर्हविषोऽनुप्रवेशार्थम् । विवृताश्च सत्यः **सुप्रायणाः** । सुगमनाः भवन्तु ऋत्विजं प्रति द्वारः । अथ पुनरर्चिषस्ततो हविषः सुप्रगमनाः सन्तु । **ऋतावृधः**[4] यज्ञवर्धयित्र्यः । या एता एवंलक्षणा द्वार अर्चिषो वा ता अस्मिन्यज्ञे **विश्रयन्ताम्** विव्रियन्ताम् । **आज्यस्य व्यन्तु** य आसां स्वांशस्तं पिबन्तु । **हे होतः!** त्वमपि मया प्रेरितः **यज** एताः ॥ ५ ॥ एवमेषः "सुप्रायणा" इति दुरामर्चिषां वा सन्निधौ श्रूयमाणः सुप्रगमनाभिधायीत्युपपद्यते ॥ २ ॥ (१८)

अथ "**अप्रायुवः**" (३७) इत्येतदनवगतम् "अप्रमाद्यन्तः" इत्येवमर्थप्रतीतिः । तत्र निगममुपन्यस्यति—

"देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥" ( ऋ० सं० १–६–१६–१ )

**देवा नो यथा सदा वर्धनाय स्युरप्रायवोऽप्रमाद्यन्तो रक्षितारश्चाहन्यहनि ॥**

**देवा न** इति । अस्य "आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।" इत्यादिः ॥ गोतमस्येयमार्षम् जगती । अग्निष्टोमे महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते । **आ यन्तु** आगच्छन्तु **नः** अस्माकम् **भद्राः** भन्दनीयाः स्तुत्याः[2] । **क्रतवः** सोमक्र[3]तवः । कामा वा । **विश्वतः** सर्वतः सर्वदैव यथा[4]विहितेषु कालेषु । **अदब्धासः**[5] । अनुपहताः ( अविगुणाः अहिंसिता वा ) असुरैरन्यैर्वा कैश्चिद्दस्युभिः । **अपरीतासः** शत्रुभिरपरिगता अप्रतिरुद्धा इत्यर्थः । अपरिप्राप्तपूर्वा अस्मच्छत्रुभिरिति दुर्गः । **उद्भिदः** । उद्भेत्तारः शत्रूणाम् । त्रयाणामपि लोकानाम् । येषां फलेनैतांस्त्रीनपि लोकानुद्भिन्दीमहि ( त आगच्छन्तु ) । किंच तथाच तेऽत्य[6]र्थमविगुणा आगच्छन्तु **यथा** तैः परितोषिताः सन्तः **देवाः सदमित्** सदैव ( नित्यमेव ) **नो**ऽस्माकं **रक्षितारः** रक्षां कुर्वन्तः **दिवेदिवे** अहन्यहनि **अप्रायुवः** [7]अप्रमाद्यन्तः ( प्रमादमकुर्वाणा असम्मुह्यमाना इति यावत् ) **वृधे** वर्धनायास्माकं **अ**[8]**सन्** स्युः ॥ एवमिह "प्रायुवो रक्षितार" इति रक्षितशब्देन सामानाधिकरण्यादप्रायुवशब्दस्याप्रमादार्थत्वं रक्षणे हि सत्यप्रमादस्येष्टत्वादिति बोध्यम् ॥ १ ॥

अथ "**च्यवन**" (३८) इत्येतदनवगतम् । "च्यावन"

---

१. "दुर्या" इति गृहनामसु पठितम् ( निघं० ३–४ ) ॥

२. "ऋषी गतौ" (तु० प०) "रिष हिंसायां वा" (दि० प०) "सर्वनिघृष्वरि–( ऋ– ) ष्वलष्व" ( उ० १–१५१ ) इति वन्प्रत्ययो गुणाभावश्च निपात्यते । अत्र रिषतेः सम्प्रसारणं पाठभेदपक्षे द्रष्टव्यम् । एष मन्त्रः ( एवमानुपूर्वीकः ) का० संहितास्थः । य० वा० सं० तु अन्यथानुपूर्वीकोऽपि भाष्योदाहृतांशस्योभयत्र दर्शनमिति द्रष्टव्यम् ॥

३. व्रियन्ते हि कपाटसंवरणैर्द्वारः । अर्चिषोऽपि हविषोऽदाने । सान्तोऽप्ययं पक्षश्शब्द एतन्निगमदर्शनादेव "पक्ष परिग्रहे" असादसुन् ( उ० ४–८९ ) "पक्षोपासार्थके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सान्विसहाययोः । चुल्लीरन्ध्रे पतत्रे च वाजकुञ्जरपार्श्वयो"रिति मेदिनी ॥

४. सामान्यमेवेदमाशास्तं यत् पुनस्तस्मिन्नेव वर्तमाने कर्मण्याशास्ते ऋतेत्यादिना ॥ "अन्येषामपि" ( पा० ६–३–१३७ ) इति दीर्घः ॥

१. अस्मानिति सायणः ॥

२. "वदि अभिवादनस्तुत्योः" "भदि कल्याणे सुखे च" ( भ्वा० प० ) इति चात्स्तुतौ ॥ समीचीनफलसाधनत्वेन कल्याणाः भजनीया वेति सायणः ॥

३. अग्निष्टोमादयो महायज्ञाः । इति सायणः ॥

४. सर्वस्मादपि दिग्भागात् । इति सायणः ॥

५. "दंभु दंभे" दंभो हिंसा । "उदितो वे" ( पा० ७–२–५६ ) ति इडभावः ॥

६. क्रतवः कामा वा ॥

७. प्रआङ्पूर्वाद् द्योतेः के ( पा० ३–१–१४४ ) बाहुलकाज्जाते उवङि जसः सुः ( पा० ७–३–३९ ) नञ्समासः । न प्रायुवोऽप्रायुव इति । अप्रगतमनस्काः न प्रमाद्यन्त इत्यर्थः । इति देवराजः ॥ सायणस्तु अपगच्छन्तः स्वकीयं रक्षितव्यमपरित्यजन्त इति व्याचख्यौ ॥ "इण् गता"–( अ० प० ) वित्यस्मात्प्रपूर्वा"च्छन्दसीण" इति उण्प्रत्ययः । तन्वादित्वादुवङ् ॥

८. "अस भुवि" ( अ० प० ) लेट्यडागमः । "बहुलं छन्दसी"ति ( पा० २–४–७३ ) शपो लुगभावः । तस्याङित्वात् "श्नसोरल्लोप" ( पा० ६–४–११ ) इत्यल्लोपाभावः ॥

इत्येवमर्थप्रतीतिः । "ऋषिर्भवती"त्यभिधेयवचनम् । तदेतदाह—

**च्यवनऋषिर्भवति । च्यावयिता स्तोमानाम् । च्यवानमित्यप्यस्य निगमा भवन्ति ॥**

**स्तोमानाम्** पृष्ठ्यादिसंज्ञिकानां स्तुतीनाम् । **च्यावयिता** प्रक्षोभकः ( प्रवर्तयिता ) **च्यवनऋषिः** । **च्यवानम् इति** एवंरूपेण **अपि अस्य** ऋषेर्भृगुपुत्रस्य सुकन्याभर्तुः छन्दसि **निगमा भवन्ति** । सन्ति । अत्र च्यवनस्य प्रसिद्धत्वात्तत्र निगमं न पठति-किन्तु च्यवान एव-यथा—

**"यु॒वं च्यवा॑नं स॒नयं॒ यथा॒ रथं॒ पुन॒र्युवा॑नं च॒रथा॑य तक्षथुः ॥"** ( ऋ० सं० ७-८-१५-४ )

**युवां च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथुः ॥**

**युवं च्यवानम्** इति । अस्य "निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत् तावां सवनेषु प्रवाच्या" इति उत्तरार्धर्चम् । काक्षीवत्या घोषाया इयमार्षम् जगती । प्रातरनुवाकाश्विनयोः शस्यते । अत्राश्विनावुच्येते । हे अश्विनौ ! **युवं** युवाम् **सनयं** पुराणं ( वृद्धं गमनासमर्थं सन्तम् ) **च्यवानं** स्तोमानां च्यावयितारमृषिं भृगुपुत्रम् अन्तर्भावितण्यर्थात् "च्युङ् गतौ" (भ्वा० आ०) विस्रसात्कृतः शानच् । **यथा रथं** जीर्णं रथमिव **पुनर्युवानं** तरुणं **चरथाय** चरणार्थं ( गमनार्थम् ) "चर गतौ" (भ्वा० प०) भावेऽथच् औणादिकः । **तक्षथुः** ततक्षथुः अकुरुतम् । किं च युवां **तौग्र्यं** तुग्रपुत्रं । यञ् अपत्ये ( पा० ४-१-१५ ) भुज्युम् **अद्भ्यस्परि** समुद्रस्योपरि **निरूहथुः** । निर्हृतवन्तौस्थः । किं च **वां** युवयोः **विश्वा** विश्वानि (सर्वाणि) **ता** तानि पूर्वोक्तानि कर्माणि । "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः । एवमग्रेऽपि ॥ **सवनेषु** यज्ञेषु **प्रवाच्या** प्रकर्षेण वाच्यानि वक्तव्यानि स्तोतॄणाम् इदिति पूरणः ॥ ४ ॥

एवमेतस्मिन्मन्त्रे च्यवानशब्देन च्यवन एव ऋषिरुक्तः स हि श्रूयते सौकन्ये आख्याने जीर्णः सन्नश्विभ्यां पुनर्युवा कृत इति तस्मादुपपद्यत एतत् ॥

अथ निगमप्रसक्तमुच्यते—

**युवा प्रयौति कर्माणि ॥**

१. अन्तर्भावितण्यर्थाच्च्यवतेर्गत्यर्थात् ( भ्वा० आ० ) "युज्बहुलम्" ( उ० २-७४ ) इति युचि च्यवनः । ण्यन्ताद्युचि च्यावनोऽपि भवति ॥

२. यथा चिरन्तनं रथं गमनासमर्थं कश्चिच्छिल्पी गमनसमर्थं कुर्यात् एवम् ॥

३. "तक्षू" धातुः पाणिनीयः ततो लिटि द्वित्वाभाव आर्षः । तन्वर्थोऽत्राविवक्षितः तथाच भाष्यकृत् "तक्षतिः करोतिकर्मे"ति वक्ष्यति ॥

**प्रयौति** मिश्रयति । "यु मिश्रणे" ( अ० प० ) कनिप् ।

**तक्षतिः करोतिकर्मा ॥**

**करोतिकर्मा** करोत्यर्थकः ॥

अथ रजः (३९) इत्यनेकार्थम् । तन्निगमयति—

**रजो रजतेर्ज्योती रज उच्यते । उदकं रज उच्यते । लोका रजांस्युच्यन्ते । असृगहनी रजसी उच्येते**

**( "रजांसि चित्रा विचरन्ति तायवः" इत्यपि निगमो भवति ) ॥**

**रजतेः** । इति व्युत्पत्तिः । असुन्नन्तम् ( उ० ४-१८९ ) "भूरञ्जिभ्यां कित्" ( उ० ४-२१७ ) इति किल्वाद्रञ्जेर्नलोपः **ज्योतिर्ह्यनुरञ्जयति** द्रव्याणि स्वप्रकाशेन । **उदकं** स्वेन स्नेहाख्येन गुणेनानुरञ्जयति लोकान् । **लोकेष्वपि** हि प्राणिनो रज्यन्ते **असृक्** रुधिरम् । **अहर्दिनम्** । तयोर्द्वन्द्वः । **असृगहनी रजसी** । अत्र निगमः **रजांसि चित्रा** इति । चित्राणि नानारूपाणि **रजांसि** दिनानि । **तायवः** स्तेनाः (नि० ३-१४) अत्यन्तसंयोगे द्वितीया (पा० २-३-५) असृगर्थे स्मरन्ति-"मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षती"ति ॥ आसां स्त्रीणाम् ॥ अन्यार्थं उदाहरणस्य प्रचुरत्वाद्भाष्यकृन्निगमान्न पठति । दुर्गस्तु "या ते॑ अग्ने॑ रजः॒शया॑ त॒नूः" ( य० वा० सं० ५-८ ) "भुवो॑ य॒ज्ञस्य॒ रज॑सश्च ने॒ता" ( ऋ० सं० ७-६-४-१ ) "त्वया॑ दृ॒ह्ळानि॑ सु॒कृतो॒ रजां॑सि" (ऋ० सं० ४-७-२-३) इत्येवं ज्योतिराद्यर्थेषूदाजहार ॥

१. माधवस्तु-रजो रजतेर्गतिकर्मण इत्याह ॥ गम्यन्ते हि पुण्यकृद्भिर्लोकाः ॥

२. ह्रस्वानि दीर्घाणि साभ्राणि निरभ्राणि इत्येवम् ॥ शेर्लोपः (पा० ६-१-७०) एतदुदाहरणं कस्मिति न ज्ञायते । दुर्गस्तु-भाष्यकारस्तु प्रचुरत्वादेतेषु निगमान्न पठतीत्याह तेनेदं क्षिप्तं प्रतिभाति । एवमग्रेतनं कुण्डलितम् ॥

३. आदिना द्यावापृथिव्यौ रजसी ( निघं० ३-३० ) उव्वटमहीधरौ रजःशया राजतमयीत्याह । "अयःशया" अयोमयीति प्रक्रमात् । अग्रे चापि "हरिशया" हिरण्मयीति पठ्यते । एवं व्याख्यायते-"उपसदं जुहोती"-(का० ८-२-३५) त्युपक्रम्य । "ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिंल्लोके रजतामन्तरिक्षे हारिणीं दिवी"-ति । अयमर्थः-देवैः पराजिता असुरास्तपस्तप्त्वा त्रैलोक्ये त्रीणि पुराणि चक्रुर्लोहमयीं भूमौ, राजतीमन्तरिक्षे, हैमीं दिवि । तदा देवैस्ता दग्धुमुपसदग्निराराधितस्तत उपसद्देवतारूपोऽग्निर्यदा ताश्च पूर्षु प्रविश्य ता ददाह तदा तिस्रः पुरोऽग्नेस्तनवोऽभूवन्निति ॥ अत्र "त्वया दृढानी"ति व्याख्यातो निगमः ( नि० ४-१७ ) "भुवो यज्ञस्ये" त्यस्य हे अग्ने ! त्वमेव अस्य यज्ञस्य रजस उदकस्य च भुवः पृथिवीलोकादमुमन्तरिक्षलोकं नेता प्रापक इत्येवमर्थः ॥

एवम् हरः (४०) इत्यनवगतमवगमयति—

**हरः हरतेः । ज्योतिर्हर उच्यते । उदकं हर उच्यते लोका हरांस्युच्यन्ते (असृगहनी हरसी उच्येते।)**

**("प्रत्य॑ग्ने॒ हर॑सा॒ हर॑ः शृणी॒हि"**

(ऋ० सं० ८-४-९-२५)

**इत्यपि निगमो भवति)॥**

"**हरः**" इत्येतदनेकार्थम् । **हरतेः** इति व्युत्पत्तिः । पूर्ववदसुन् ॥ असुन् (उ० ४-१८८) **ज्योतिर्हि** ह्रियते प्राणिभिः । हरति वा स्नेहं दशयाभ्यन्तरस्थया । हरति वा तम इति **हर इत्युच्यते** । "या ते अग्ने हरःशया तनूः ।" "अग्ने॒ यत्ते॒ हर॒स्तेन॒ त्वं प्रति॑ हर॒" (अथ० सं० २-१९-२) इत्येवमादयः प्रचुरा एव निगमाः सन्तीति भाष्यकृदत्रापि तान्न पठति ॥ **उदकं** ह्रियते प्राणिभिर्जीवनायेति **हर उच्यते । लोकेभ्यो** हि क्षीणपुण्याः प्राणिनो ह्रियन्त इति तेऽपि **हरांस्युच्यन्ते** ॥ **असृग-हनी** रुधिर-दिने । अत्र निगमः **प्रत्यग्न** इति । अस्य "विश्वतः प्रति॑ । यातुधान॑स्य र॒क्षसो॒ बलं॒ विरु॑ज वी॒र्यम्" इति शेषः । इति । **हे अग्ने**! त्वं **हरसा** अह्नैव **यातुधानस्य** राक्षसस्य **हरः** रुधिरं **प्रति-शृणीहि** रन्धय (नाशय) । तथा **रक्षसः** तस्यैव **बलं** सामर्थ्यं विश्वतः सर्वतः **प्रति शृणीहि** नाशय **वीर्यं** प्रभावं च तस्य **विरुज** विशेषतो भञ्जयेत्यर्थः ॥ १५ ॥

अथ "**जुहुरे**" (४१) इत्येतदनवगतम् "जुह्विरे" इत्यवगमस्तत्र निगममुदाहरति—

**"जु॒हु॒रे विचि॑तय॒न्तः ॥"**

(ऋ० सं० ४-१-११-२)

**जुह्विरे विचेतयमानाः ॥**

**जुहुरे** इति । अस्य—"अनि॑मिषं नृ॒म्णं पान्ति । आ॒दृ॒ह्ला॑ पुरं॑ विविशुः ॥" इति शेषः ॥ वन्नेरात्रेयस्यार्षम् । आग्नेयी गायत्री ॥ **हे अग्ने! ये त्वां विचितयन्तः** विचेतयमानास्तव प्रभावं जानन्तो**ऽनिमिषं** सर्वदा **जुहुरे** जुह्विरे यज्ञार्थं त्वामाह्वयन्ति । आहूय च **नृम्णं** तव बलं (निघं० २-९) हविर्भिः स्तोत्रैश्च **पान्ति** रक्षन्ति । ते **दृह्लां** शत्रुभिः प्रवेष्टुमशक्यां **पुरम्** । **आविविशुः** प्रविशन्ति । लड़र्थे लिट् (पा० ३-४-६) "गु॒तं पू॒र्भिरा॑य॒सीभि॒र्नि पा॑हि"—(ऋ० सं० ५-२-४-२) ति निगमः ॥ २ ॥

अथ व्यन्त (४२) इत्येषोऽनेकार्थं इति निगमयति—

**व्यन्त इत्येषोऽनेककर्मा ।**

**"प॒दं दे॒वस्य॒ नम॑सा॒ व्यन्त॑ः"**

(ऋ० सं० ४-४-३५-४)

**इति पश्यतिकर्मा ॥**

**अनेककर्मा** । यस्माद्धातोरयं शब्दो निष्पद्यते स धातुरनेककर्माऽनेकार्थः । "वी गतिव्याप्तिप्रजननकान्त्यशनखादनेषु" (अ० प०) इति ॥ तद्यथा—

**पदमिति** । अस्य "**श्रव॒स्यव॑ः** श्रव॒ आप॒न्नमृ॑क्तम् । नामा॑नि चिद्दधिरे य॒ज्ञिया॑नि भ॒द्रायां॑न्ते रणयन्त॒ सन्दृ॑ष्टौ ॥ इति शेषः । भरद्वाजस्येयमार्षम् त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । पशौ च विनियुक्ता । ये **देवस्य** द्योतमानस्य दानादि-गुणयुक्तस्य वाऽग्नेः **पदम्** आहवनीयं स्थानम् "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ॥ यद्वा—पदमवस्थानं याथात्म्यमर्थतो विज्ञाय **नमसा** नमस्कारेण स्तुत्या मन्त्रेणं वा । **व्यन्तः** पश्यन्तः जानानाः । **श्रवस्यवः** श्रूयते वर्ण्यमानं सर्वत्रेति श्रवोऽन्नं यशो वा तदिच्छन्तोऽन्नं यशो वाऽऽत्मनः प्रार्थयमानाः । "श्रु श्रवणे" (भ्वा० प०) कर्मण्यसुन् । गुणावौ (निघं० २-७) तदिच्छतीति क्यजन्तात् (पा० ३-१-८) "क्याच्छन्दसि" (पा० ३-२-१७०) इत्युप्रत्ययः ॥ '**अमृक्तम्**' अन्यैरनुपभुक्तं तदन्नं यशो वा **आपन्** आप्नुवन्ति । वर्तमाने लुङ् (पा० ३-४-६) इति । **हे अग्ने! ते** अपि **भद्रायाम्** भन्दनीयायां (स्तुत्यायां) अग्नेः **सन्दृष्टौ** सन्दर्शने निमित्तायाम् । **रणयन्त** रमय-

१. ह्वयतेर्वर्तमाने लिट् (पा० ३-४-६) "ह्वयोरे" (पा० ६-४-७६) इति झसेरस्वरेभावः धातोः सम्प्रसारणम् (पा० ६-१-३४) पूर्वरूपत्वम् । लिटः कित्वाद्गुणाभावः ॥ जुह्वतीति दुर्गः । तन्मते जुहोतेरेव पदव्यत्ययेन "छन्दस्युभयथा" (पा० ३-४-११७) इति सार्वधातुकत्वात् "हुश्नुवो०" (पा० ६-४-८७) रिति यण् ॥ तथाच तद्व्याख्यानम् । जुहुरे जुह्विरे जुह्वति (के?)—येऽग्निं विचितयन्तः विचेतयमानाः कर्मकर्तृसाधनानां याथार्थ्यं वेदान्तदर्शनेन जानानाः । ये च नरा अनिमिषमादरवदवस्थानमात्मनः कृत्वा युक्तात्मानो नृम्णं योगबलमात्मनः कर्मणि वर्तमाने पान्ति रक्षन्तीत्यर्थः । आह—ये एवंगुणयुक्ताः किं तेषाम्? इति । उच्यते । आदृढां पुरं विविशुः । ते दृढां नित्यम् अनावृत्तये परब्रह्ममयीं पुरमाविविशुः । इमामदृढां शरीरपुरं पापिष्ठां हित्वेत्यभिप्रायः । विचेतयमाना हि वेदप्रामाणिकाः सन्तो किमन्यत्कुर्युः ये न दृढां पुरमाविशेयुः? शब्दसारूप्यमपि च "जुहुरे" इत्येतस्मिँश्छन्देऽस्त्येवेति ॥

१. मन्त्रार्थज्ञानादेव ह्यग्नेराध्यात्माधिभूताधियज्ञेष्ववस्थानं याथार्थ्यतो दृश्यते ॥ अथवा—नमसाऽन्नेन हविराख्येनाभ्युद्यतेनेति योज्यम् ॥

२. "गत्यर्थानां ज्ञानार्थत्वाद्गतिर्ज्ञाने" (सि० कौ०) इतिवद्वेतिरत्र ज्ञानार्थे प्रयुक्तः पाणिनीयमतेन ॥

३. "इतश्च लोपः परस्मैपदेषु" (पा० ३-४-९७) इतीकारलोपो मस्य णश्छान्दसः । तानपि भद्रेण चक्षुषा पश्यत्येवाग्निरिति भावः ॥

न्यात्मानम् । येऽपि हि **यज्ञियानि** यज्ञयोग्यानि **नामानि** नमनीयानि वैश्वानरो जातवेदा इत्यादीनि तेऽभिधानानि । **दधिरे** धारयन्ति । अथवा नमनसाधनानि स्तोत्राणि दधिरे चिदिति पूरणः लडर्थे लिट् ( पा० ३-४-६ ) ॥ ४ ॥

## "वीहि शूर पुरोडाशमि"ति खादतिकर्मा ॥

( ऋ० सं० ३-३-३-३ )

**खादतिकर्मा** । भक्षणार्थः । वयतिरेव । अस्य मन्त्रस्य "इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद ॥" इत्यादिः । विश्वामित्रस्येयमार्षम् गायत्री । रात्रिपर्यायेषु महारात्रिके पर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । ऐन्द्री ॥ यज्ञो ब्रवीति-हे **ब्रह्मवाहः! इन्द्र**! तुभ्यम् **इमा** इमानि । "शेश्छन्दसि०" (पा० ६-१-७०) इति शेर्लोपः एवमग्रेऽपि । **ब्रह्म** ब्रह्माणि स्तोत्राणि अस्माभिः **क्रियन्ते** उच्यन्ते । अतः **बर्हिः** प्रति **आ सीद** स्तुत्यतयोपविश । हे **शूर**! समर्थेन्द्र! अस्माभिर्दीयमानमिमं **पुरोडाशं** पुरोडाशाख्यं हविः **वीहि** भक्षय । पुरोडाशमिति पुरःपूर्वात् "दाश्च दाने" (भ्वा० उ०) इत्यस्मा "न्मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्" (पा० ३-२-७१) इति ण्विन् निपातनाद्धस्य डः ॥ ३ ॥ अत्र बर्हिष्यासीन इन्द्रो भक्षणादृते किमन्यत् पुरोडाशस्य भक्ष्यवस्तुनः कुर्यात् । कठिनद्रव्यस्य हि भक्षणमेव युज्यत इत्युपपन्नोऽर्थः ॥ ३ ॥

## "वीतं पातं पयस उस्रियायाः"

( ऋ० सं० २-२-२३-४ )

## अश्नीतं पिबतं पयस उस्रियायाः ॥

**वीतम्** इत्यत्राशनार्थ इति विवरणेन दर्शयति-**अश्नीतमिति** । मन्त्रस्तु "उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः । उतो नो अस्य पूर्व्यः पतिर्दन् वीतं पातं पयस उस्रियायाः" इति ॥ मैत्रावरुण्येषा त्रिष्टुप् । दीर्घतमस आर्षम् । मित्रावरुणावुच्येते-ऋत्विज आहुः-**उत** अपि च हे मित्रावरुणौ! **वां** युवयोः एतासु **मद्यासु** मादयित्रीषु मदनीयासु वा **विक्षु** प्रजासु यजमानलक्षणासु वर्तमानमेतत् । **अन्धः** अन्नं हविर्लक्षणं तासामभिवृद्ध्यर्थम् एता **देवीः** द्योतनशीला दानादिगुणयुक्ता वा **गाव आपश्च** व्रीह्यादिप्रवर्तकान्युदकानि च **पीपयन्त** आप्याययन्तु । वर्धयन्तीति दुर्गः । **उतो** अपि च **नो**ऽस्मत्सम्बन्धिनः । **अस्य** यजमानस्य **पूर्व्यः** पूर्वकालीनः "तत्रभव" इत्यर्थे "दिगादिभ्यश्च" (पा० ४-३-५४) इति यत् प्रत्ययः । **पतिः** पालकोऽग्निः । **दन्** दाता "भवतु" इति शेषः । अग्नौ हूयमानत्वात्सर्वेषां हविषां तदायत्तत्वमुपपद्यते । अत्र दातेर्ददतेर्वा लटः शतरि व्यत्ययेन रूपम् ॥ तस्मात् हे मित्रावरुणौ! युवाम् **उस्रियायाः** क्षीरादिस्राविण्या गोः ( निघं० २-११ ) सम्बन्धिनः **पयसः** संबन्धि स्वं भागं घनीभूतं ( नातिकठिनं ) पयस्याख्यं ( दध्यादि ) अस्माभिर्दीयमानम् **वीतम्** अश्नीतम् **पातं** पिबतं च । यदेतदाज्यस्य स्वं भागमुपस्तरणाभिघारणसम्बद्धम् ॥ अत-एवमस्मिन्मन्त्रे उस्रियायाः पयसा निष्पन्नस्येति श्रूयमाणे पयस्याख्ये प्रतीयेते । तयोराज्यं पेयं तत्पातमित्यनेन सम्बध्यते । पारिशेष्याद्वीतमित्यस्य शब्दस्य पयस्येन सम्बन्धस्तच्च नातिकठिनं नातिद्रवमशनयोग्यमेवेति **वीतम्** इत्येषशब्दोऽशनार्थ इत्युपपद्यते । लोकेऽपि हि नातिकठिने नातिद्रवे अश्नातिशब्दः प्रसिद्धः । अश्नाति पायसमिति ॥ "पयस्यमाज्यदध्यादि" इत्यमरः ॥

अथ निगमप्रसक्तमुच्यते—

## उस्रियेति गोनामोत्स्राविणोऽस्यां भोगाः । उस्रेति च ॥

**अस्यां** गवि **भोगा** भोग्याः कर्मणि घञ् । क्षीरादयः । **उत्स्राविणः** । ऊर्ध्वं स्रवन्ति गच्छन्ति क्षीरदधिनवनीत-

१. ये चैते अन्यमात्राध्येतारः केवलछान्दसनामान्यपि च मन्त्रमात्रेणावस्थितानि धारयन्ति अनर्थज्ञा इत्यर्थः ॥

२. ब्रह्माणि स्तोत्राणि स्तुत्यतया वहतीति ब्रह्मवाहः । ब्रह्मणा स्तोत्रेणोह्यते प्राप्यत इति वा । "वह प्रापणे" (भ्वा० प०) इत्यस्मात् "वहिहाधाञ्भ्यश्छन्दसी" ( उ० ४-२२० ) ति असुन् णिदित्यनुवृत्तेरुपधावृद्धिः ॥ तथाचात्र ब्रह्मशब्दस्तत्प्रतिपादकतया वेदवचनः ।

३. ऋग्यजुःसामाख्यानि स्वरसौष्ठवादियुक्तानि । अत्र ब्रह्मवाह इति ब्रह्मणो विशेषणं दुर्ग आह । लिङ्गवचनव्यत्यय आर्षः । ब्रह्मणोऽन्नस्य ( निघं० २-७ ) हविषो वहनसमर्थानीति तदर्थः । 'सुपां सुलुगि०' ( पा० ७-१-३९ ) इति विभक्तिलुक् ॥

४. एतच्च पूर्वप्रक्रान्तमनुरुणद्धि ॥

५. प्रजा हि हविर्दानेन देवान्मादयन्ति देवाश्च फलेन तान् ॥

१. पयोरूपं, पुरोडाशादिरूपं पयस्यादि वा ( दध्यादि वा ) ॥

२. आपोऽप्यासां गवामुपकारं जनयन्तीति साहित्यं चार्थः । परस्परोपकृता एता मिलित्वा यजमानं कर्मजन्यफलेनाभिवर्धयन्ति ॥

३. यदेतदशनपानयोग्यमाज्यम् सान्नाय्यलक्षणम् आभिरद्भिर्गोभिश्च युवयोरन्धो वर्धते ॥ "ओ प्यायी वृद्धौ" ( भ्वा० आ० ) इत्यस्य "प्यायः पी" लिड्यङोश्च" (पा० ६-१-२८-२९) इति चादन्यतोऽपि बाहुलकात् ॥

४. हविषोऽस्यत्पूर्वो यजमानः पतिः स हि ऋत्विग्भ्यः प्रयच्छति "देवतायै संस्कुरुतैतदि"ति । ततस्ते तस्य हविषः पतयो भवन्ति । तानपेक्ष्य यजमानः पूर्व्यः पतिः । तदपेक्षयैव ऋत्विज आहुः योऽस्मत्तः पूर्व्यः पतिः अस्य हविषः ददन्भवति ददतीत्यर्थः । इत्यादि दुर्ग आह ॥

५. अत्र दाधातोर्विकरणव्यत्ययः । शपो "बहुलं छन्दसि" (पा० ५-४-७३ ) इति लुगेव नतु श्लुः ) तथार्च "छन्दस्युभयथा" ( पा० ३-४-११७ ) इति शतुरार्धधातुकत्वमाश्रित्य "सार्वधातुकमपित्" ( पा० १-२-४ ) इति ङित्वादातो लोपः ( पा० ६-४-६७ ) उगित्वान्नुम् । ददतेस्तु दकारलोप एव ॥

६. "बहुलं छन्दसी"ति ( पा० २-४-७३ ) शपो लुक् ॥

क्रमेणेति सेयमुस्रा । पृषोदरादिः । लोके तु वसति क्षीराद्यस्यामिति "स्फायितञ्चि"–( उ० २–१३ ) त्यादिना रक्, वसतेः ( भ्वा० प० ) "वचिस्वपी"–( पा० ६–१–१५ ) ति सम्प्रसारणम् । "न रपरे"ति ( पा० ८–३–११० ) षत्वाभावः । उस्रैव उस्रिया स्वार्थेघः पृषोदरादित्वात् ॥ घस्येयः ( पा० ७–१–२ ) "अस्येति चे" ( पा० ६–४–१४८ ) त्याकारलोपः ॥

अथ "क्राणाः" (४३) इत्येतदनवगतम् । "कुर्वाणाः" इत्यर्थप्रतीतिः । तथाच निगमः ॥

("त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः ।) गोभिः क्राणा अनूषत ॥"

**गोभिः कुर्वाणा (गाः) अस्तोषत ॥**

**गोभिः क्राणेति** । गोभिः कुर्वाणेति निर्वचनम् । त्वामिन्द्रेत्यर्धर्चं शेषपूरणम् ( वृत्तौ ) । हे **इन्द्र** ! **सुनीथासः** सुनीथाः सुष्ठुस्तोतुं शक्नुवन्तो **वसूयवः** वसुकामाः । इच्छार्थक्यजन्ता"त्क्याच्छन्दसी" ( पा० ३–२–१७० ) रुः ॥ **मतिभिः** मतिमद्भिः । "गुणवचनेभ्यो मतुपो लुगिष्टः" ( पा० १–४–१९ वा० ) इति मतुपो लुक् । मेधाविभिः **सुते** अभिषुते सोमे **त्वां क्राणा** आभिमुख्येन कुर्वाणा **गोभिः** वाग्भिः ( निघं० १–११ ) **अनूषत** अस्तोषत स्तुवन्तीत्यर्थः । लङर्थे लुङ् ( पा० ३–४–६ ) "णू स्तुतौ" ( तु० प० ) ॥ अत्राभिषुतेषु सोमेषु किमन्यदाभिमुख्येन करणादिन्द्रस्य गोभिः सुनीथाः स्तुवन्तः कुर्युः ? तस्मात् "क्राणा" इत्येष शब्दः "कुर्वाणा" इत्यर्थ एवोपपद्यते ॥ तथाच करोतेर्लटः शानचि विकरणव्यत्ययेन लुक् यणादेशः ॥

अथ "वाशी" (४४) इत्येतदनवगतं, पक्षेण चानेकार्थमिति निगमयति—

"आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ॥"

( ऋ० सं० ८–५–१९–४ )

**आतूषिञ्चेति** । अस्य "परिष्वजध्वं दशकक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥" इत्युत्तरार्धर्चम् ॥ बुधस्य सोमपुत्रस्यार्षम् त्रिष्टुप् । हे अध्वर्यो ! त्वम् एनम् **हरिं** हरितवर्णं सोमम् प्रति **ईम्** उदकम् । ( निघं० १–११ ) **द्रोरुपस्थे** द्रुममयस्याधिषवणफलकद्वयस्योपरि । **आसिञ्च** आसिक्तं कुरु प्रक्षिप । न हि सोमांशूनामनभिषुतानामासेकोऽस्ति कठिनत्वात् । तस्मादासेकशब्दोऽत्र गौणः । तु पूरणः सांहितिको दीर्घः ( पा० ६–३–१३७ ) एवं तावदध्वर्युरुक्तः सोममुपावहरति । अधुनेतरानभिषुण्वतो ब्रवीति–यूयमपि अनेनाध्वर्युणोपावहृतमेनं सोममधिषवणफलकयोरुपरि **वाशीभिरे**ताभिः । **अश्मन्मयीभिः** । अश्ममयीभिः अयःशिलासारभूताभिः । अत्र नलोपाभावश्छान्दसो मयटश्छिलान्डीप् । **तक्षत** संस्कुरुत । अभिषुणुतेत्यर्थः । "ग्रावभिरभिषुण्वन्ति" इति ह्युक्तम् ॥ अथवाऽयमन्योऽस्यार्धर्चस्यार्थः । हे उन्नेतः ! **आसिञ्च** प्रक्षारय, तं **हरिं** हरितवर्णं सोममनेन कलशेन । क्व? **द्रोरुपस्थे** द्रोणकलशस्योपरि । अत्रार्थे ईमिति पदपूरणः ( नि० १–९ ) ( निघं० १–११ ) यूयमपि च हे होतारः ! आसिच्यमानमेनं सोमं **वाशीभिः** वाग्भिः ( निघं० १–११ ) स्तुतिलक्षणाभिः । **तक्षत** संस्कुरुत, यदस्यायज्ञियमपूतं तत्स्तुतिभिः पुनीतेत्यभिप्रायः । किंभूताभिः ? **अश्मन्मयीभिः** व्यापनसमर्थाभिः । "अशू व्याप्तौ" (स्वा० प०) इत्यस्मात् "अशिशकिभ्यां छन्दसि" ( उ० ४–१४४ ) इति मनिन् । तदन्तान्मयट् इति नलोपाभावश्छान्दसः ॥ यूयमपि च हे अध्वर्यवः ! पूतमेतमुद्धातृभिः सोमं **परिष्वजध्वम्** । ग्रहेषु ( पात्रविशेषेषु ) स्थालीषु च । **दशकक्ष्याभिः** दशाङ्गुलीभिः । ( निघं० २–५ ) अङ्गुलिभिरेव पात्रस्थः सोमो गृह्यते ( घनीभूतः ) यदेव चेदं ग्रहणमेष एव तस्य परिष्वङ्गः । परिष्वज्य च ( गृहीत्वा एनं सोमम् ) **उभे** हविर्धान–**धुरौ प्रति वह्निं** वोढारमिव अनड्वाहं **युनक्त** । एवं

---

१. यद्वा उत्पूर्वात् "स्रु गतौ" (भ्वा० प०) इत्यस्मात् "उपसर्गे च संज्ञायाम्" ( पा० ३–२–९९ ) इति जनेर्विधीयमान डप्रत्ययोऽस्मादपि बाहुलकाद्भवति । उदोऽन्त्यलोपश्च । उत्स्रवन्त्यास्यो रसा इत्युस्रा ॥

२. नयतेः "हनिकुषिनीरमिकाशिभ्यः क्थन्" ( उ० २–२ ) इति क्थन्प्रत्यये नीथा स्तुतिः । शोभना नीथा येषां ते सुनीथासः "आज्जसेरसुक्" ( पा० ७–१–५० ) इति जसोऽसुगागमः ॥

१. सायणस्तु–० ० ० ० द्रोः द्रुमविकारस्य पात्रस्योपस्थ उपरि । आसिंच आसेकं कुरु । तदर्थं हे पात्रसंपादिनः ! अश्मन्मयीभिः । अयःशिलासारभूताभिर्वाशीभिस्तक्षत पात्राणि । तानि च सोमपूर्णानि दश दशसंख्याकानि कक्ष्याभिः प्रकारैः पर्यायेण परिष्वजध्वम् संस्कुरुध्वम् आसादयत । यद्वा वाशीभिरश्मन्मयीभिः हविर्धानशकटे तक्षत ते च दश कक्ष्याभिर्दशसंख्याकाभिः रज्जुभिः परिष्वजध्वम् । उभे धुरौ युगसम्बन्धिन्यौ वह्नी वाहकावनड्वाहौ युनक्त । अथ वायं मन्त्रश्चयनक्षेत्रकर्षणसाधनहलविषयतया व्याख्येय इत्याह । पतन्मते "वह्नी युनक्ते"–ति पाठः ॥

२. "वाशृ शब्दे" ( दि० आ० ) "वसिवपियजिराजिव्रजिध्वजिसदिहनिकमिवाशिवादिवारिभ्य इञ्" ( उ० ४–१२१ ) इति इञ् । यद्वा "इञ्वपादिभ्यः" ( पा० ३–३–१०८ वा० ) इति इञ्प्रत्ययः ॥ वसधातुश्छेदनार्थेऽपि ( चु० उ० ) तस्योपधावृद्धौ वासीशब्दश्छेदनद्रव्यविशेषा–(–वसु–( सि– ) ला– ) र्थकः । तस्यैव वा वर्णव्यत्ययः ॥

३. अत्र नकारोपजनश्छान्दस इति सायणः ॥

४. तथाच निगमः "ते वाशीमन्त इष्मिणो अभीरवो०" ( ऋ० सं० १–६–२३–६ ) इति । वाशीमन्तः–शोभनया स्तुतिलक्षणया वाचोपेता इति सायणः ॥

सोमं सादयतेत्यर्थः । स हि सोमो हविर्धानधुरोरधस्तात् खरे साद्यते । एतस्मादेव चानडुद्योजनप्रदेशसामान्याद्धद्विमिव युनक्तेति लुप्तोपमसुपपद्यते ॥ ४ ॥

अत्र "वाशीभिस्तक्षते"ति लक्षणयोगादश्ममय्यो वाश्यः । एता ग्रावाख्या इति प्रथमस्यार्थस्योपपत्तिः । अथवा–"असिञ्चत हरिं द्रोरुपस्थे" इत्यतोऽनन्तरं वाशीशब्दः श्रूयमाणो वाङ्नामधेयत्वेनाप्युपपद्यते एव । सोमो हि द्रोणकलशस्योपर्यासिच्यमानो वाग्भिः स्तूयते । एवमर्थद्वयमभिप्रेत्योभयथा भाष्यकारो वक्ष्यति–"वाशीभिरश्ममयीभिरिति वा वाग्भिरितिवे"ति ॥

अथ भाष्यकृन्निर्ब्रवीति—

**आसिञ्च हरिं द्रोरुपस्थे । द्रुममयस्य । हरिः सोमो हरितवर्णः । अयमपीतरो हरिरेतस्मादेव । "वाशीभिस्तक्षताश्मन्मयीभिः" । वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा ॥**

**द्रुममयस्येति** । द्रोरित्यस्यार्थः । **हरितवर्णः** । तथाच विश्वः । "हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च । हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः" इति ॥ "पालाशो हरितो हरित्" इति चामरः । पालाशः पलाशस्य नवजातपत्रस्यायमिति अण् ॥ **इतरः** । मर्कटः । **एतस्मात्**–हरितवर्णत्वात् । "शिरीषकुसुमप्रख्याः केचित्पिङ्गलकप्रभाः वानराः" इति श्रूयन्ते रामायणे ॥

अथ "**विषुणः**" (४५) इत्येतदनवगतम् "विषमः" इत्यवगमः । तत्र निगममाह—

**"स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥"**

( ऋ० सं० ५–३–३–५ )

**स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः ॥**

**स शर्धदिति** ॥ अस्य–"न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ॥" इत्यादिः ॥ वसिष्ठस्येयमार्षं त्रिष्टुप् । उन्नीयमानसूक्ते माध्यन्दिने सवने शस्यते । हे भगवन् ! **इन्द्र** ! तथा कुरु यथा **यातवः** यातयितारः यज्ञविघ्नकर्तारः राक्षसाः । अत्र लिङ्गव्यत्यय आर्षः । **नः** अस्माकमिमम् **ऋतम्**[3] यज्ञं **न जूजुवुः**[4] नहिंस्युः । यद्वाना गच्छेयुः । "जु इति सौत्रो धातुर्गतौ वेगे चे"ति पठ्यते । अपि च हे **शविष्ठ** ! बलवत्तमेन्द्र ! य एते **वेद्याभिः** वेदितुं योग्याभिर्जानपदीभिराकृतिभिर्युक्ताः । उपलक्षणे तृतीया ( पा० २–३–२१ ) किं ब्राह्मणा एते स्युरुतान्यजातीयाः केचिदिति ? । अथवा अवेदितव्याभिरनवस्थिताभिः प्रवृत्तिभिर्युक्ता अतिचपलत्वात् । येऽपि चैते श्रोत्रिया अपि सन्तो नित्यं श्रौतानि कर्माण्युत्सृज्य **शिश्नदेवाः** शिश्नेन प्रकीर्णाभिः ( पुंश्चलीभिः ) स्त्रीभिः साकं दीव्यन्ति ( क्रीडन्ति ) तेऽपि अब्रह्मचर्याः ( पापकर्माणः ) युष्मदनुग्रहादिदम् । **ऋतं** यज्ञं वा सत्यं वा **मा अपिगुः** माऽऽगमन् । अत्रापिराङोऽर्थे । तथाच मा आगच्छन्तु मा जानन्तु वा । "ये गत्यर्थास्ते ज्ञानार्थाः" इति नियमात् । कीदृशास्तर्हि ? **य एव शर्धत्** उत्सहताम्[3] विध्यर्थे लेट् । ( इममस्मद्यज्ञमागन्तुम् ) यः **अर्यः** स्वामी ( वशयिता ईश्वरः ) आत्मीयानामिन्द्रियाणाम् । "अर्यः स्वामिवैश्ययोः" ( पा० ३–१–१०३ ) इति निपातितः ॥ जितेन्द्रिय इत्यर्थः । यं च **विषुणस्य** विषमस्य यज्ञविध्वंसयितुर्जन्तोः प्राणिनः । अर्यो स्वामी निग्रहाय समर्थं इति पूर्वेणान्वयः । येन परिपाल्यमानः वयमेतं यज्ञमविघ्नेन समापयेमहीति भावः ॥ ५ ॥

एवमेतस्मिन्मन्त्रे अनिष्टत्वाद् यातवो वन्दनाः शिश्नदेवाश्च मा आगच्छन्तु इति प्रतिषिद्धेष्वेतेषु स शर्धदर्य इति श्रूयमाणमर्यवृत्तमनुष्याभ्यागमनविषयमेतद्भवति, तस्येष्टत्वात् । स चाभ्यागतः सन्नवश्यं विषुणस्य विषमस्य मनुष्यस्य निग्रहं कुर्यादिति विषुणस्येति शब्दो विषमस्येत्यर्थ एवोपपद्यते ॥ तथाच विषमशब्देषादस्योत्वं मस्य णश्च पृषोदरादित्वाद्बोध्यम् ॥

अथ निगमप्रसक्तं निरुच्यते—

**शिश्नं श्नथतेः ॥**

---

१. तन्नामके पात्रविशेषे । तदेतद्व्याख्यानं यथा दुर्गवृत्त्युद्धृतमत्र बोध्यम् ॥

२. "नैर्ऋतो यातुरक्षसी" इत्यमरो नपुंसकतयाऽमुं निर्दिशतीति ॥

३. यद्यप्ययं सत्यार्थे पठितः ( नि० ३–१० ) तथापि यज्ञार्थेऽपि अत्र भाष्ये ॥

४. जूजुवुरिति हिंसाक्रियः पृथक्करणक्रियो वेति सायणः । जुरति सौत्रो धातुर्गतिवृद्धिहिंसासु इति भट्टोजिदीक्षिताः प्राहुः ( सि० कौ० ) तथाचैतन्मते वन्दना इति विभक्तिरहितः पाठः । तथाच 'वन्दना' वन्दनानि रक्षांसि 'वेद्याभिः' वेद्याभ्यः प्रजाभ्यो नोऽस्मान्न जूजुवुः न पृथक्कुर्वन्तु । किंच 'अर्यः' स्वामी 'स' इन्द्रः 'विषुणस्य' विषमस्य 'जन्तोः' प्राणिनः शासने 'शर्धत्' उत्सहेत । अथच 'शिश्नदेवाः' शिश्नेन दीव्यन्ति क्रीडन्त इति शिश्नदेवा अब्रह्मचर्या इत्यर्थः । नोऽस्माकम् 'ऋतं' यज्ञं सत्यं वा 'मापिगुः' मापिगमन् । इति हि सायणो व्याख्यत् ॥

१. शव इति बलनाम ( निघं० १–९ ) ततोऽस्त्यर्थे विनिः ( पा० ५–२–१२१ ) तदन्तादतिशायने इष्ठन् ( पा० ५–३–६५ ) इति विनो लुकि पुनष्टिलोप ( पा० ६–४–१५५ ) आर्षः ॥

२. शर्धतिरुत्साहार्थं इति स्कन्दस्वामिनः "अभ्राजि शर्धो मरुतो यदर्णसं मोषथ०" इति । हे मरुतः ! यद्यूयमर्णसमर्णोवन्तम् ( अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययः ) उदकवन्तं मेघं मोषथ–ताडयथ । स एष शर्धं उत्साहः । अभ्राजि भ्राजते । वर्तमाने लुङ् ( पा० ३–४–६ ) । पाणिनीयैस्तु प्रसहनादौ शृधुः पठ्यते ( चु० प० ) प्रसहनं क्षमाऽभिभवश्चेति च । तथाच क्षमतामित्यप्यर्थः संभवति ।

**श्नथते:** हिंसार्थस्य ( निघं० २–१९ ) "श्नथ क्नथ क्रथ हिंसायाम्" ( भ्वा प० ) अत्र पाठान्तरं "श्नथश्लथक्नथक्रथेति" तदेतेनानाकरम्। आकृतिगणत्वं वा भ्वादेः शरणम्। पृषोदरादिः (पा० ६–३–१०९) श्नथति हन्त्यनेनोपस्थेन्द्रियं स्त्रियाः (योनिम्) इति **शिश्नम्**। घञ् (पा० ३–३–११७) थलोपो ह्रित्वादि च बाहुलकात्पृषोदरादित्वाद्वेति तत्त्वम्॥ अर्धर्चादित्वमस्य (पा० २–४–३१) यास्कोऽभिप्रैतीति **शिश्नमित्याह**। कोशेतु "भगं योनिर्द्वयोः, शिश्नो मेढ्रो मेहनशेप (फ) स्त्री" इत्याह। केचित्तु द्वयोरिति देहलीदीपन्यायेनोभयत्राप्यन्तयोरन्वयन्ति। तथाच शिश्नो द्वयोर्योनिश्चेति द्वयोः स्त्रीपुंसयोः। तथाच अमरेऽपि "मिथुने तु द्वयोरिति" इति परिभाषितम्। अतएव मेण्ढ्रमित्यपि पाठ इति महेश्वरः॥

अथ ऋतशब्दमुभयथा व्याचष्टे—

**"अपिगुर्ऋतं नः।"**

**सत्यं वा यज्ञं वा ॥ ३ ॥ (१९)**

अपिगुरिति। अत्र गतिर्गमनज्ञानयोरविशेषेण वर्तते॥ एतदेवोक्तव्याख्यामेदे मूलम्॥ ३॥ (१९)

अथ **"जामी"** (४६) त्वनेकार्थम् भगिनी बालिशः पुनरुक्तं चास्याभिधेयानि प्रकरणादेवैतेषामन्यतममस्मिन्नवतिष्ठते यथानेन तावद्भगिन्युच्यते तथोदाहरति—

**"आघाताऽऽगच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि। उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत्॥ ५॥"**

(ऋ० सं० ७–६–७)

**आघातेति**॥ यमस्येदमार्षं त्रिष्टुप्। स एव देवता॥ प्रातरनुवाकाश्विनशस्त्रयोर्विनियुक्ता॥ यमी किल यमं कामयमाना प्रार्थयाञ्चकार एहि मैथुनाय सङ्गच्छावहा इति। तामकामयमानोऽसावनयर्चा प्रत्याह—**आगच्छान्** आगमिष्यन्तीत्यर्थः। घा इत्यनर्थकः पादपूरणः। **ता** तानि **उत्तरा** उत्तराणि शेर्लोपः। (पा० ६–१–७०) **युगानि** कालविशेषाः। **यत्र** येषु कालेषु **जामयः** भगिन्यः "जामिः स्वसृकुलस्त्रियावि"त्यमरः। **अजामि** भ्रातॄणामयोग्यानि कर्माणि मैथुनसम्बन्धनानि **कृणवन्** करिष्यन्ति। कृवेर्लृडर्थे लङउभावः शप्चार्षः। भ्रातरं पतिं करिष्यन्तीति यावत्। कलियुगान्ते हि तादृशः सङ्करो भविष्यति। न साम्प्रतं स कालः। स्वाचारा एव तावत्प्रजाः अतो ब्रवीमि—हे **सुभगे!** त्वम् इदानीं **मत्** मत्तः **अन्यम् पतिं** भर्तारम् **इच्छस्व** कामयस्व। ततश्च **वृषभाय** तव योनौ रेतः सेक्रे पुरुषाय आत्मीयं **बाहुम् उपबर्बृहि** शयनकाले उपबर्हणम् (उपधानं) कुरु॥५॥ एवमेतस्मिन्मन्त्रे सूक्ते वा संवादाधिकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते॥

तदेतद्व्याचष्टे–भाष्यकृत्—

**आगमिष्यन्ति तान्युत्तराणि युगानि, यत्र जामयः करिष्यन्त्यजामि कर्माणि ॥**

अथ जामिशब्दस्यार्थान्तरमाह—

**जाम्यतिरेकनाम, बालिशस्य वा, ऽसमानजातीयस्य वोपजनः ॥**

**जामी**त्येतत्स्वरान्तशब्दरूपम् **अतिरेकनाम** अतिरेकस्य पुनरुक्तस्य नाम। आगमोऽन्वेष्यः॥ **अथवा बालिशस्य** मूर्खस्य, स हि बाल एव शेते, प्रमादित्वाद्धर्मकार्येषु। अन्वेष्य आगमः॥ प्रकृतार्थमभिप्रेत्याह **असमानेति**। पुरुषस्य स्त्रीत्वादसमानजातीयोऽर्थो भगिनी। तस्यैव नाम जामीति। तत्र मीत्येष **उपजनः** आगमः। यदेवोक्तं भवति जा इति तदेव जामीति॥

अथोपबर्बृहीति क्रियापदं व्याख्यास्युत्तरार्धर्चमर्थतोऽनुवदति—

**उपधेहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत्॥ इति व्याख्यातम्॥ ४॥ (२०)**

**इति** एतद् **व्याख्यातं** निगदसिद्धमेवेत्यर्थः। अथवैतानि पदान्यधस्तायथावसरं तत्र तत्र व्याख्यातानि। तद्यथा—"अन्योनानेयः" इत्येवमादि (नि० १–६) उपेक्षितव्यम्॥ ४॥ (२०)

अथ **पिता** (४७) इत्यनवगतम् "पाता वा पालयिता वा" इत्यवगमः। तदेतन्निगमयति—

---

१. तथाच निगमः "श्नथद्वृत्रमुत सनोति वाजम्" (ऋ० सं० ४–८–२७–१) इत्यादि॥

२. पतञ्जभाष्यम्। अयमर्थः। यदा ऋतशब्दोऽत्र सत्यार्थस्तदा प्रतिज्ञानार्थः। यदा तु यज्ञार्थस्तदा गत्यर्थ इति॥ इणो गत्यर्थस्यायं गादेशो लोडर्थे लुङि (पा० २–४–४५) तदेतद्गमिरत्र प्रयुज्यते दुर्गेण सायणेन चेति द्रष्टव्यम्। "सिजभ्यस्ते०" (पा० ३–४–१०९)—ति झेर्जुसि के "गातिस्थे०" (पा० २–४–७७)—ति सिचो लुक्। आतोलोपोऽभावश्च माङो योगात् (पा० ६–४–७४)॥

१. 'अजामि' भ्रातरं पतिं 'कृणवन्' करिष्यन्तीति सायणः॥ अत्र जायते मातापितृभ्यां सकाशादिति जा "जनी प्रादुर्भावे" (दि० आ०) "अन्येष्वपि दृश्यते" इत्यत्रापिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वाद्धात्वन्तरादपीति गमेर्विधीयमानो डप्रत्ययो जनेरपि। डित्वाट्टिलोपे टाप्। यथा यथाजातोजा अत्रार्थे धातुरेव यथार्थविशिष्टेऽर्थे वर्तते मकारश्चोपजनो मिशब्देन सह। एवं पुनः पुनरर्थेऽपि बोध्यम्। जामिविपरीतोऽजामि विभक्तेर्लुक् (पा० ७–१–३९)॥

२. "जामि वा एतद्यज्ञे क्रियते" (ऐ. ब्रा. ३–५–३) पुनरुक्तमित्यर्थः॥

**"द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वोर्३ योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ ३ ॥"**

( ऋ० सं० २-३-२० )

**द्यौर्मे पितेति** ॥ इयमस्यवामीयं दीर्घतमस आर्षम् त्रिष्टुप् । तृतीयसवने वैश्वदेवे शस्यते । दीर्घतमा ब्रवीति— **मे** मम **द्यौः** द्युलोकः ( अन्तरिक्षम् ) **पिता** पालकः । न केवलं पालकत्वमात्रमपि तु **जनिता** जनयिता उत्पादयितेत्यर्थः । अन्तर्णीतण्यर्थोऽत्र जनिः । अत्रोपपत्तिमाह-**नाभिरत्र** नाभिभूतो भौमो रसोऽत्र "तिष्ठती"ति शेषः । ततश्चान्नं जायते अन्नाद्रेतः रेतसो मनुष्य इत्येवं पारंपर्येण जननसम्बन्धिनो हेतो रसस्यात्र सद्भावात् अनेनैवाभिप्रायेण जनितेत्युच्यते । अत एव **बन्धुः** अङ्गसम्बन्धकारणात् बन्धिका **मही** महती तथा **इयं पृथिवी मे** मम **माता** मातृस्थानीया स्वोद्भूतौषध्यादिनिर्मात्रीत्यर्थः । किं च **उत्तानयोः** ऊर्ध्वतानयोः **चम्वोः** सर्वस्य अत्त्र्योः ( भक्षयित्र्योः ) भोगसाधनयोर्वा पृथिव्योः । **अन्तः** मध्ये **योनिः** सर्वभूतनिर्माणाश्रयमन्तरिक्षं "वर्तत" इति शेषः । **अत्र** अस्मिन्नन्तरिक्षे अवकाशदानोपकारप्रवृत्ते सति **पिता** द्युलोकास्थः पर्जन्यः अधिष्ठात्रधिष्ठानयोरभेदात् । यद्वा द्यौरेव रसान्प्रार्जयति तस्मात्सैवात्र पर्जन्यशब्देन भाष्यकारेणोक्ता । **दुहितुः** दूरे निहितायाः पृथिव्याः **गर्भं** सर्वोत्पादनसमर्थं वृष्ट्युदकलक्षणम् **आधात्** आदधाति सर्वतः करोति । वर्तमाने लुङ् ( पा० ३-४-६ ) "गातिस्थे"ति ( पा० २-४-७७ ) सिचो लुक् ॥ ३ ॥

अत्र मातृपितृसम्बन्धात्पितृशब्दः पितर्येवेत्युपपद्यते ॥

अथास्य भाष्यम्—

**द्यौर्मे पिता माता वा पालयिता वा जनयिता । नाभिरत्र । बन्धुर्मे माता पृथिवी महतीयं बन्धुः सम्बन्धना, नाभिः सन्नहना, नाभ्यासंनद्धा गर्भा जायन्ते, इत्याहुरेतसादेव ज्ञातीन्त्सनाभय इत्याचक्षते, सम्बन्धव इति च, ज्ञातिः संज्ञानात् । उत्तानयोश्चम्वोर्योनिरन्तः । उत्तान उत्ततान ऊर्ध्वतानो वा । तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः ॥**

इति । **उत्तान** । उत्त उन्नः ( क्लिन्नः ) रसेन, तानः विस्तारः यस्य स उत्तानः । पृषोदरादित्वात्तलोपः । "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" ( पा० ८-२-५६ ) इति उन्देः क्लेदनार्थान्निष्ठातस्य वा नः । **पिता पर्जन्यः दुहितुः पृथिव्या** इत्यन्वयः । निगदव्याख्यानमन्यत् ॥

अथ **शंयु**-शब्दं (४८) पर्यायेण निर्बुवन्निगमतो दर्शयति—

**शंयुः सुखंयुः । "अथा नः शंयोररपो दधात"** ॥ इति ॥ ( ऋ० सं० ७-६-१७-४ )

**शंयुरिति** । "कंशंभ्यां बभयुस्तितुतयसः" (पा० ५-२-१३८) इति शमिति मान्ताव्ययाद्युस् । सित्वात्पदत्वेन ( पा० १-४-१६ ) अनुस्वारः ॥ शमिति सुखे तदाह-**सुखंयुरिति** । निगममाह **अथान इति** ॥ अस्य "बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आगतावसा शन्तमेन" इत्यादिः ॥ यमपुत्रस्य शङ्खस्यार्षं पित्र्यम् ( पितरो देवतास्य ) त्रिष्टुप् । प्रातरनुवाकाश्विनशस्त्रयोर्विनियुक्ता ॥ **हे बर्हिषदः!** बर्हिषि यज्ञे सीदन्तीति बर्हिषदः । अत्रापि ये वै यज्वानस्तेऽपि पितरो बर्हिषदश्च यतस्ते यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता भवन्ति । बर्हिषदश्च यज्ञसम्बन्धात् । **हे पितरः! अर्वाक्** प्रसूतानाम् अर्वाचीनानामस्माकम् **ऊती** रक्षा "भवद्भिः कर्तव्येति" शेषः । **वः** युष्मदर्थम् **इमा** इमानि **हव्या** हव्यानि हवींषि शेर्लोपः ( पा० ६-१-७० ) वयं **चकृम** कृतवन्तः स्मः । अतस्तानि **जुषध्वम्** । **ते** हविर्जुषन्तो यूयम् **शंतमेन** सुखतमेन **अवसा** रक्षणेन "अव रक्षणे" ( भ्वा० प० ) ततोऽसुन् ( उ० ४-१-८९ ) निमित्तभूतेन **आगत** आगच्छत आभिमुख्येनास्मान्प्राप्नुत । शपोऽत्र लुकि ( पा० २-४-६३ ) मलोपः ( पा० ६-४-३७ ) **अथ** अनन्तरं सांहितिको दीर्घः ( पा०-६-३-१३७ ) 'नः' अस्मभ्यम् **शं** सुखम्, शमनं "वा रोगाणामिति" शेषः । **योः** दुःखवियोगं, यावनं वा "भयानामि"ति शेषः । **अरपः** अपापं च । **दधात** दत्तेत्यर्थः ॥

१. उदकं हि द्युलोकात्पतितं पार्थिवेन धातुना संपृक्तमोषधिभावमागम्य शरीरभावेनावतिष्ठते । इत्येतदपेक्ष्य सर्वभूतानां द्यावापृथिव्यौ मातापितराबुच्येते तत्र तत्र निगमवाक्येषु ॥

२. "चमु अदने" ( भ्वा० प० ) "कृषिचमितनि०" ( उ० १-८० ) इत्यूः । चमत इति चम्वौ तयोः ॥

३. सायणस्तु-पिता द्युलोकः । अधिष्ठात्रधिष्ठानयोरभेदेनाविलो द्यौरुच्यते सस्वरद्धिमभिः । अथवा इन्द्रः पर्जन्यो वेति व्याचख्यौ ॥

१. बर्हिःशब्दोपपदात्सदः "सत्सूद्विष०" ( पा० ३-२-६१ ) इत्यादिना क्विप् । पृषोदरादित्वाद्बर्हिषः सकारलोपः । "सुषामादित्वात्" ( पा० ८-३-९८ ) षत्वम् महन्नामस्वयं निघण्टौ पठ्यते ( ३-३ ) ॥

२. "ऊतियूतिजूती" ( पा० ३-३-९७ ) त्यादिना निपातितान्ङीप् ( पा० ४-१-४५ वा० ) "कृदिकारादक्तिन" इति ॥

३. 'रप' इति पापाभिधानमव्ययं तद्विपरीतमरप इति तदभावम् ( अव्ययीभावः ) ॥

४. शान्तरोगाः प्रहीणसर्वभयाश्च यथा स्याम तथा कुरुतेत्यर्थः ॥

यद्यप्यत्र ( निगमवाक्ये ) शंयुशब्द एक एव पञ्चम्यन्तो वा षष्ठ्यन्तो वा प्रतिभाति । स हि ( शंयुः ) बृहस्पतेः [1]पुत्रः । नहि तस्मायजमानोऽत्रार्थयति न वा तस्य पितृभ्य इति भाष्यकार एकमपि सन्तं तं ( शंयोरिति शब्दं ) द्विधा चकार द्वितीयान्तं च । अरप इति च । अर्थाभावेऽव्ययीभावः ( पा० २-१-६ ) तदेतदाह—

**रपो[2]रिप्रमिति पापनामनी भवतः । शमनं च रोगाणां, यावनं च भयानामथापि शंयुर्बार्हस्पत्य उच्यते ॥**

[3]अपि शं, योः, इत्यनेन पदद्वयेन शमन-यावने रोग-भययो-रुच्येते प्रविभक्तेन । अपि यथावस्थितेनैवाविभक्तेन **बार्हस्पत्यो** बृहस्पतेः पुत्र **उच्यते** । तस्याप्येतदेव नामेत्यपि शब्दः । तत्र निगमं प्रमाणयति—

**"तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये" ॥**

**इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ॥ ५ ॥ ( २१ )**

**इति यास्कमुनिय० नि० शास्त्रे चतुर्थोऽध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥ ※ ॥**

**तच्छंयोरिति** । अस्य ( दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य ऊर्ध्वं जिगातु भेषजम् । शंनोऽअस्तु द्विपदे शंचतुष्पदे । ) इति शेषः । शंयोः एव बृहस्पतिपुत्रस्यार्षं, शक्करी । शंयोर्वाके विनियुक्ता । वयमेतेन कर्मणा **शंयोः** वाकाख्येन, शंयोः सकाशाद्वा **तत् आ** आभिमुख्येन **वृणीमहे** प्रार्थयामः । किंतत् ? **गातुं** गमनम् अस्मै **यज्ञाय** देवान्प्रति । **गातुं** गमनं चास्मै **यज्ञपतये** यजमानाय, देवान्प्रति । किञ्च **दैवी स्वस्तिरस्तु** देवानुग्रहादस्माकं कल्याणमस्तु । मा नो देवाः काञ्चिदापदमुत्पादयन्त्वित्यर्थः । **स्वस्तिर्मानुषेभ्यः** मनुष्येभ्योऽपि सकाशान्मा नः काञ्चिदापदस्तु । **ऊर्ध्वं जिगातु भेषजम्** भेषजं भयसादयितृकर्म ऊर्ध्वं जिगातु-यावज्जीवमनवच्छिन्नमविगुणश्चोर्ध्वगमनयोग्यमस्माकमस्त्वित्यर्थः । किंच **शंनो**

१. एवमर्थासम्भवे पदप्रविभागोऽन्यत्रापि बहुशोदृष्टः । यथा—उद्गीथशब्दे "प्राण एवोत् प्राणेन ह्युत्तिष्ठति । वाग्गीर्वाचो हि गिर इत्याचक्षतेऽन्नं थमन्नेन हीदं सर्वं स्थितम्" इति ( छा० ब्रा० १-३ ) एवमादि ॥

२. रिप्रममेध्यं पापमपि तथेति समानार्थता ॥

३. अपिरयं सम्भावनार्थे द्रष्टव्यः ॥

४. यज्ञमुद्दिश्य ल्यब्लोपे पञ्चमी ( पा० १-४-३१ वा० )

५. अत्र "गाङ् गतौ" इत्यस्मात् ( भ्वा० आ० ) "कमि-मनि-जनि-गा-भा-या-हिभ्यश्च" ( उ० १-७० ) इति भावे तु प्रत्ययः ॥

**अस्तु द्विपदे** मनुष्यादिकाय । **शं चतुष्पदे** गवादिकाय ॥ "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" ( पा० २-३-७३ ) इति चतुर्थी ॥ एतावदेवत्वेतस्मान्मन्त्रात्सिद्धम्-एकमेवेदं पदमविभक्तमिह निरुच्यते पञ्चम्यन्तं वा षष्ठ्यन्तं वा, न यथा पूर्वस्मिन्मन्त्रेऽर्थासम्भवाच्छंयुशब्दो विभक्त इति ॥ ५ ॥ ( २१ )

इति श्रीमद्यास्कमु० प्र० निरुक्ते शास्त्रे नैग० काण्डे चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥ * ॥

## अथ चतुर्थाध्यायस्य चतुर्थः पादः ।

**अदितिरदीना देवमाता ॥ १ ॥ ( २२ )**

**अदितिः** (४९) इत्येतदनवगतम् **"अदीना"** इत्यवगमः **देवमाता** अभिधेया ॥ ऐतिहासिकमतेन ॥ नैरुक्तपक्षेण पुनर्यान्येतस्यामपि वक्ष्यमाणायां द्यौरित्येवमादीनि पदानि श्रूयन्ते एतान्येवादितिशब्देनोच्यन्ते—तथाहि—

**"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ॥ विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्" ॥ ५ ॥**

( ऋ० सं० १-६-१६ )

**अदितिरिति** । राहूगणस्य गोतमस्येदमार्षम् तृतीयसवने सर्वस्तोमेष्वेव, वैश्वदेवस्य शस्त्रस्य परिधानीयैषा-त्रिष्टुप् । **अदितिः** अदीना अखण्डनीया वा पृथिवी देवमाता वा सैव **द्यौः** द्योतनशीलो नाकः । **अदितिः** सैव **अन्तरिक्षम्**

१. अदीना । अखण्डनीयेति सायणः ॥ तत्रादीनाऽदुर्गताऽभीता वा, "दीना स्त्री मूषिके स्त्रियां । वाच्यवद्दुर्गते भीते" इति मेदिनी ॥ अनुपक्षीणेति वयम् । तथाच देवराजः । अदितिः सकलप्रपञ्चधारणेष्वदीना न खिद्यते इत्यर्थ इति । तथाच "दीङ् क्षये" ( दिं० आ० ) इत्यस्मात् "कृत्यल्युटो बहुलम्" ( पा० ३-३-११३ ) इति कर्तरि क्तिनि छान्दसं ह्रस्वत्वम् । नञ्समासः । अत एवात्र अदितिरदीनेति भाष्यमुपादाय स्कन्दस्वामिनः-यद्यपि नञ्पूर्वाद्द्यतेः क्तिनि "द्यति-स्यतिमास्थामित्तिकिति"( पा० ७-४-४० ) इतीत्वे च रूपं सिध्यति तथापि द्यतेर्नित्यमदपूर्वादर्थो नन्वयाच्च "दीङ् क्षये" इत्यस्यैवेदं छान्दसं रूपं द्रष्टव्यम् । तथाचोक्तं "न संस्कारमाद्रियेत अर्थनित्यः परीक्षते" ( म० भा० ) इति ॥

२. रहूगणस्य राजर्षेः पुत्रस्य ॥

३. तथाचोक्तम्-अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात्सर्वत्र वैश्वदेव इति च । ब्राह्मणं च-"सदैव पञ्चजनीयया परिदध्या-दि"ति ( ऐ० ब्रा० ३-३१ ) इयमदितिदेवताके पशौ हविषो याज्येत्यन्यत्रोक्तम् ॥

अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणम् व्योम, सैवादितिः सैव माता सर्वभूतनिर्मात्री, स साऽदितिरेव पिता विधेयप्राधान्यात्पुल्लिङ्गनिर्देशः। उत्पादकः पालकस्तातश्च। स एव च पुत्रः। मातापित्रोर्जातः पुत्रोऽपि सैव। यद्वा सैव हि परितुष्टा सती स्तोतारं पुरुणः (बहुनः) पापात् त्रायते। अथवा सैव निपृणाति नितराम् पूरयति-प्रयच्छति ददाति सर्वभूतानामवश्यं निर्वर्तव्यं (दातव्यं) भवति तत्। येऽपि चैते विश्वेदेवाः सर्वेऽपि देवास्तेऽपि अदितिरेव। पञ्चजनाः निषादपञ्चमाश्चत्वारो वर्णाः। यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसीति। ब्राह्मणे त्वेवमाम्नातम्-"सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चेति" (ऐ० ब्रा० ३-३१) अत्र गन्धर्वाप्सरसामैक्यात् पञ्चजनत्वम्। एवंविधाः पञ्चजना अपि अदितिः। एव। सर्वथापि किंबहुना यावदेतत्किंचित् जातं च जनित्वं च जनिष्यमाणं च सर्वमप्येतत् अदितिः एव। एवं सकलजगदात्मना अदितिः स्तूयते ॥५॥

**इत्यदितेर्विभूतिमाचष्टे ॥**

इति। एवमनेन मन्त्रेण मन्त्रदृक् अदितेः देवमातुः विभूतिम् विशिष्टां भूतिं सम्पदम् "भूतिर्भस्मनि सम्पत्तौ हस्तिशृङ्गारयोः स्त्रियाम्" इति मेदिनी ॥ आचष्टे-कथयति। देवमातुस्तस्याः सर्वमप्युपपद्यत एव महाभाग्याद्देवताया स्तदेतदुत्तरत्र वक्ष्यते (दै० का० ७-१-५) ॥ एवमैतिहासिकपक्षेणोक्तम्। नैरुक्तपक्षेण तु—

**एनान्यदीनानीति वा ॥**

एनानि-द्युलोकादीनि सर्वाणि अदीनानि-अनुपक्षीणानि। नह्येषां क्षयोऽस्तीति ॥ अथ एरिरे (५०) इत्यनवगतम्। 'आ ईरिरे' इत्यवगमस्तत्र निगममाह—

**"यमेरिरे भृगवः ॥"**

(ऋ० सं० २-२-१२-४)

यमेरिर इति ॥ "यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना। अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥" इति दीर्घतमस आर्षम्। जगती। प्रातरनुवाकाश्विनयोराग्निमारुते च शस्यते। भृगवः भृगुपुत्राः "अत्रिभृगु" (पा० ४-२-६५) इत्यादिना गोत्रापत्यार्थस्याणो लुक् ॥ पापस्य भर्जका वा। विश्ववेदसं सर्ववेत्तारं सर्वधनं वा। "वेद" इति धननाम (निघं० २-१०) यम् अग्निम् पृथिव्याः वेद्याः। एकदेशे कृत्स्नशब्दः। यद्वा "एतावती वै पृथिवी" इत्यादिश्रुतेः (तै० सं० २-६-४) वेद्याः पृथिवीत्वम्। नाभा नाभौ। "ङेरा" (पा० ७-१-३९) उत्तरवेद्याम् भुवनस्य भूतजातस्य मज्मना बलेन निमित्तेन (निघ० २-६)। यद्वा भुवनस्योदकस्य (निघं० १-१२) मज्मना मननीयेन वीर्येणान्नेन हविर्लक्षणेनात्मास्मिप्रेतार्थसिद्धये आ आभिमुख्येन ईरिरे ईरितवन्तः भृशम्। (प्रेरितवन्तः स्थापितवन्त इति यावत्) तमग्निं हे यजमान। स्वे स्वकीये एव दमे गृहे। दमइति गृहनाम (निघं० ३-४) उत्तरवेद्यां गीर्भिः स्तुतिभिः आ आभिमुख्येन स्थित्वा हिनुहि प्राप्नुहि प्रेरय वा। मा कस्य चिदार्लिज्येऽवस्थित इति भावः। "हि गतौ वृद्धौ च" (स्वा० प०) "उतश्च प्रत्ययाच्छन्दसि वावचनमि"ति हेर्लुगभावः। कथंभूतमग्निम्? यः अग्निः एकः मुख्यः सन् एक एव वा वस्वः वसुनः धनस्य गवादिलक्षणस्य राजति ईश्वरो भवति "प्रदातुमि"ति शेषः। राजतिरैश्वर्यकर्मा (निघं० २-२१) अत्र दृष्टान्तः। वरुणो न वरुण इव। यथा वरुणः समुद्रान्तर्गतानां धनानामीष्टे दातुमेवम् ॥४॥

**एरिर इतीर्तिरुपसृष्टोऽभ्यस्तः ॥ २ ॥ (२३)**

इति। अत्र ईर्तिः ईरधातुः (अ० आ०। चु० प० वा) गतौ कम्पने च पठितः पाणिनीयैः। नैघण्टुकैस्तु गतौ (२-१४) स पुनरयमाङोपसर्गेण उपसृष्टोऽभ्यस्तश्च। पुनःपुनरा ईरितवन्त इत्यर्थः ॥ २ ॥ (२३)

अथ जसुरिः (३) (५१) इत्येतदनवगतम्। 'जस्तम्' इत्यवगमः। तत्र निगममाह—

**"उतस्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु। नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥ ५ ॥**

(ऋ० सं० ३-७-११)

उतस्मेति ॥ वामदेवस्यार्षं त्रिष्टुप्। दधिक्राव्णे सूक्ते। दधिक्रावा चेन्द्र एव। वायुर्वा। मध्यस्थानत्वात्। लैङ्गिको विनियोगः ॥ उतस्म अपि खलु एनं दधिक्रावाणमिन्द्रम्।

१. सायणव्याख्यानमेतदुद्धृतमिति दीर्घमध्यस्यार्षे ह्रस्वत्वेन निर्वचनम्। उचितंतु यथाभाष्यमुक्तपूर्वं निर्वचनम् (नि० २-३-१) क्षान्तं क्षियतीति वेति ॥ पृषोदरादिः ॥

२. "उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनामपर्यायेण तत्तल्लिङ्गभाक्" इति नियमसद्भावेऽपि "प्रधानकार्यं सर्वतोबलवदि"ति न्यायेनात्र पुंलिङ्ग एव निर्दिष्टः। प्रतिनिर्देश्यो विधेयः ॥

३. जननं प्रजानामुत्पत्तिः साप्यदितिरेव। जनित्वं जन्माधिकरणं तदप्यदितिरेवेति सायणः। तथाच जातं जनित्वमित्युक्ते "विनापि चं समुच्चयो चोत्यते गामश्वं पुरुषं पशुम् इति वदि"-त्युक्तन्यायेन कालत्रयेऽपि यत्किञ्चिदुत्पत्तिमात्रं सर्वमप्यदितिरिति दुर्गेणैव व्याख्यातमेतदुद्धृतं तत इति वेद्यम् ॥

१. णोपसर्गार्थवृत्त्याङ्पूर्वात् "ईर गतौ" (चु० प०) इत्यस्माल्लिटि झस्येरेच्। अत्र प्रकर्षः पौनःपुन्येन ॥

२. वारक आदित्य इव, स यथा सर्वस्य ईष्टे तद्वदिति सायणः ॥

३. सूक्तमिदमुतो हि वेत्यादि दशर्चं षष्ठम्। तदस्य दधिक्रामिंत्याख्याऽनुक्रमण्यां तेनास्य दधिक्रा देवता स एव दधिक्रावाऽख्यायते। स चेन्द्रोऽन्यो वा दधदन्यं धारयन्क्रामतीति तन्निर्वचनात्। दुर्गस्त्विन्द्रमाह ॥

**दृष्ट्वा भरेषु** सङ्ग्रामेषु **अनुक्रोशन्ति** अभिक्रन्दन्ति। "वैरिण" इति शेषः । अत्र दृष्टान्तः—**वस्त्रमथिम्** वस्त्रमाथिनं ( वस्त्रापहर्तारं ) **तायुं** स्तेनं चौरं ( निघं० ३–२४ ) "दृष्ट्वे"ति शेषः । **क्षितयो न** मनुष्या इवं ( निघं० २–३ ) किं च **नीचा** नीचैः **अयमानम्** गच्छन्तं **जसुरिं** जस्तं बद्धमुक्तं ( नि० ४–१ ) **श्येनं न** श्येन( म्पक्षिविशेष– )मिव, स हि क्षुधितः स्नायुतन्तुना बद्धपादो व्याधहस्ते चर्मोपरि कृतसन्निवेशस्तिष्ठति पक्षिणमन्यमभिलक्ष्य व्याधेन मुक्तो नीचैर्गच्छन् सपदि तं हिनस्तीति प्रसिद्धिः ॥ तं दृष्ट्वा यथा पक्षिण आक्रन्दन्ति पलायन्ते च तद्वत् । कमर्थमभिसन्धायायमानमेनमनुक्रोशन्ति ? ( अभिक्रन्दन्ति ? ) तत्राह—**श्रवः** अन्नं धनं कीर्तिं वा, **पशुमच्च यूथं** च अनेकपशुजातिसंयुक्तं पशुयूथं च **अच्छ** अभिलक्ष्यं कथमेतदस्माकं स्यादिति ॥ एकश्चः पूरणः ॥ ५ ॥

अथास्य भाष्यम्—

**अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् ॥**

अथैकपदनिरुक्तम्—

**वस्त्रं वस्तेः । तायुरिति स्तेननाम, संस्त्यानमस्मिन्पापकमिति नैरुक्तास्तस्यतेर्वा स्यात् ।**

**वस्तेः** । आच्छादनार्थस्य वस्धातोः ( अ० आ० ) ष्ट्रन् ( उ० ४–१५९ ) करणे । वस्यतेऽनेनेति **वस्त्रम्** । **स्तेन**श्चौरः । "चौरैकागारिकस्तेनदस्युतस्करमोषकाः" इत्यमरः । तन्निर्ब्रवीति—**संस्त्यानमित्यादि** । **संस्त्यानं** संहतम् **अस्मिन्** पुरुषाधमे **पापकम्** कुत्सितं पापम् **इति नैरुक्ता** निरुक्तविदो मन्यन्ते । अथ **वा तस्यतेः स्यात्** उपक्षयार्थस्य तसुधातोः ( दि० प० ) "छन्दसीणः" ( उ० १–२ ) इति बाहुलकादुण् सकारस्य यकारश्च । उपक्षीणो ह्यसौ भवति आयुषेह लोके अधार्मिकत्वात् । परलोकमनपेक्ष्य कल्पयति कर्माणि ततश्चामुत्रापि भ्रमणधर्मकत्वात्तस्यते—उपक्षीयत एवासावितितायुः ॥

अथ भरशब्दार्थं विवक्षन्द्वितीयं पादमर्थतोऽनुवदति—

**अनुक्रोशन्ति क्षितयः संग्रामेषु ।**

**भर इति सङ्ग्रामनाम । भरतेर्वा हरतेर्वा ॥**

**सङ्ग्रामनाम** । तथाच निघण्टुः रणः विवाक् विखादः नदनुः भर इत्यादि ४६ सङ्ग्रामनामानीति ( २–१७ ) ॥ अथ **वा भरतेः** भरणार्थस्य भृञ्धातोः ( भ्वा० उ० ) पचाद्यच् ( पा० ३–१–१३४ ) सच बाहुलकादत्राधिकरणे । भ्रियन्ते ह्यस्मिन्योधार इति भरः । अथ **वा हरतेः** अच्पूर्ववत् । ह्रियन्ते हि तत्र योधानामायूंषि धनानि चेति भरः "हृग्रहोर्भश्छन्दसि" (पा० ३–१–८४ वा०) इति हस्य भः ॥

अथ पुनरेकपदनिरुक्तम्—

**नीचायमानम् । नीचैरयमानं, नीचैर्निचितं भवति । उच्चैरुचितं भवति ।**

**नीचा** नीचैः । वर्णव्यत्ययः ( पा० ३–१–८५ ) **अयमानम्** गच्छन्तम् "अय गतौ" ( भ्वा० आ० ) लटः शानचि मुक् ॥ ( पा० ७–२–८२ ) मध्ये शप् ( पा० ३–१–६८ ) **निचितं भवति** । तथाच निचीयतेऽस्मेति कर्मणि निपूर्वाच्चयते "नौं दीर्घश्चे"ति ( उ० ५–१३ ) डैसिः । **उच्चितं भवति** । तथाच उच्चीयतेऽस्मेति कर्मणि उत्पूर्वाच्चयतेः "उदि चेर्डैसिः" इति ( उ० ५–१२ ) डैसिः ॥

अथ शिष्टं तृतीयं पादं व्याचष्टे—

**जस्तमिव श्येनं, श्येनः शंसनीयं गच्छति ॥**

**जस्तम्** बद्धमुक्तम् । "जसु ताडने" ( चु० प० ) "जसिसह्योरुरिन्" ( उ० २–६९ ) इत्युरिन्प्रत्ययः । यद्वा असतेर्बाहुलकादुरिन् जुडागमश्च धातोः ॥ ताडितो बद्धमुक्तो हतवेगः श्रान्तो जसुरिरिति देवराजयज्वानः ॥ **शंसनीयं** स्तुतियोग्यम् "शंसु स्तुतौ" ( भ्वा० प० ) अनीयर् ( पा० ३–१–९६ ) शीघ्रत्वात् ॥

अथ तुरीयपादं व्याचष्टे—

**श्रवश्चाच्छा पशुमच्च यूथम् ॥**

**श्रवश्चापि पशुमच्च यूथम् । प्रशंसां च यूथं च, धनं च यूथं चेति वा ॥**

तथाचात्र **श्रवः**शब्दार्थः प्रशंसा ( कीर्तिः ) धनं वा ॥

अथैकपदनिरुक्तम्—

**यूथं यौतेः, समायुतं भवति ॥**

**यौतेः** । "यु मिश्रणे०" ( अ० प० ) ति धातोः "तिथपृष्ठगूथयूथप्रोथाः" ( उ० २–१२ ) इति साधु० । **समायुतम्** एकत्र मिश्रीभूतं स्त्रीपुंबालवृद्धैः पशुभिः ॥

एवमिह नीचायमानं श्येनमित्यनेन संबन्धाज्जसुरिर्बद्धमुक्त इत्युपपद्यते । न ह्यतथाभूतः श्येनो नीचैरयते ॥

अथ **जरते** (५२) इत्येतदनवगतम् । धातोरस्वार्थे प्रवृत्तिरेवानवगमः । तदत्र निगममुदाहरति—

---

१. तं दृष्ट्वा क्षितयो मनुष्या यथा क्रोशन्ति तद्वद्वैरिणोऽनुक्रोशन्तीति सायणः ॥ तथा चैतन्मतेन दृष्ट्वेत्यध्याहृतम् ॥

२. निघं० २–७ "श्रु श्रवणे" ( भ्वा० प० ) कर्मण्यसुन् ( उ० ४–१८९ ) श्रूयते ह्यन्नं वर्ण्यमानम् ॥

३. निघं० २–११ पूर्ववत्साधनम् ॥

४. श्रूयते लोके ख्यायतेऽनेनेति करणेऽसुन् (उ० ४–१८९) ताद्धर्म्यादन्नमपि श्रव इति देवराजः ॥

५. "यूथं तिर्यक्समूहे स्त्रीपुष्पभेदे च योषिति" इति मेदिनी ॥

६. कथं नाम श्रूयेमहि ? प्रशस्येमहि जितमनेनेति तमर्थमभिसन्धाय ॥

१. गतिकर्मस्वयं पठितः ( निघं० २–१४ ) इह च स्तुत्यर्थे उदाह्रियते । यद्वा "गॄ स्तुतौ" ( क्र्या० प० ) इत्यस्य गकारस्य जकार इति स्कन्दस्वामी ॥

"इन्धान एनं जरते स्वाधीः ॥" गृणाति ॥

( ऋ० सं० ७-८-२८-१ )

**इन्धान इति** ॥ अस्य "दिवस्परि प्रथमं जज्ञे अग्निरस्म-द्वितीयं परि जातवेदाः ॥ तृतीयमप्सु नृमणा अजस्रमि" त्यादिः ॥ भालन्दनस्य वत्सप्रेरार्षं त्रैष्टुभमाग्नेयम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्थस्याग्नेरुपस्थाने विनियुक्ता ॥ अयम् **जातवेदाः** जातप्रज्ञो जातधनो वा **अग्निः प्रथमं पूर्वं दिवः** द्युलोकस्य पर्युपरि **जज्ञे** जातः । आदित्यात्मना । **द्वितीयं** पुनः **नृमणाः** नृषु मनुष्येष्वस्मासु अनुग्राहकतयाऽऽसक्तं मनो यस्य तथाभूतोऽसावग्निः **अस्मत्** अस्माकं **परि** उपरि । पार्थिवात्मना जज्ञे । **तृतीयं** पुनश्च **अप्सु** अन्तरिक्षे लोके, वैद्युतात्मना जज्ञे । योऽयमेक एव त्रिषु स्थानेषु जातस्तमेवंगुणयुक्तम् **एनम्** अग्निम् **स्वाधीः** सुप्रज्ञो नेता ( यजमानः ) **इन्धानः** दीपयन् **जरते** स्तौति ॥ १ ॥

इन्धानो हि किमन्यत्स्तुतेः कुर्यात्? तस्मात् "जरते" इत्यस्य शब्दस्य **गृणाति** इत्यर्थ उपपद्यते ॥

अथ **मन्दिने** (५३) इत्येतदनवगतम् । तदवगमयति— निगमयति च—

**मन्दी मन्दतेः स्तुतिकर्मणः ।**

**"प्रमन्दिने पितुमदर्चता वचः"**

( ऋ० सं० १-७-१२-१ )

**प्रार्चत मन्दिने पितुमद्वचः ॥**

**मन्दीति । प्रमन्दिन** इति च ॥ **स्तुतिकर्मणः** स्तुत्यर्थस्य, मन्दनीयः स्तुतिमान् वा । तथाच "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" ( भ्वा० आ० ) इति धातोः भावे घञ् ( पा० ३-३-१८ ) मन्दनं मन्दस्तत "अत इनिठनौ" ( पा० ५-२-११५ ) इति मत्वर्थे इन् । मन्दोऽस्यास्तीति मन्दी तस्मै मन्दिने ॥ मन्त्रस्तु—"प्रमन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना । अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥" इति । आङ्गिरसस्य कुत्सस्यार्षम् । जगती । ऐन्द्री । दशरात्रस्य नवमेऽहनि मरुत्वतीये एतत्सूक्तम् । हे स्तोतारः **मन्दिने** स्तुतिमते स्तोतव्यायेन्द्राय । **पितुमत्** हविर्लक्षणेनान्नेनोपेतम् । पितुरित्यन्ननाम, पाते रक्षणार्थात् ( अ० प० ) "कमिमनिजनिभायागापाहिभ्यः" ( उ० १-७० ) इति तुप्रत्ययो बाहुलकादाकारस्येकारः । रक्षितव्यं हि तद्भवति । **प्रार्चत** प्रकर्षेणोच्चारयत । **यः इन्द्रः ऋजिश्वना** एतत्संज्ञकेन राज्ञा सख्या सहितः सन् **कृष्णगर्भाः** कृष्णोनाम कश्चिदसुरस्तेन निषिक्तगर्भास्तदीया भार्याः **निरहन्** अवधीत् । कृष्णमसुरं हत्वा पुत्राणामप्यनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्या अपि अवधीदित्यर्थः । एतच्चैतिहासिकमतेन । नैरुक्तमतेन तु ऋजिश्वना-ऋजुरेवावक्षिप्तो लक्ष्ये यः श्वति गच्छति स ऋजिश्वा वज्रस्तेन कृष्णगर्भाः—कृष्णस्य मेघस्य गर्भभूता अपः निरहन्-नीचैरहन् निरगमयदित्यर्थः ॥ योऽयमेवंप्रभाव इन्द्रस्तमिमं **वृषणं** कामानां वर्षितारं **वज्रदक्षिणं** वज्रयुक्तेन दक्षिणहस्तेनोपेतम् । **मरुत्वन्तं** मरुत्सहितमिन्द्रम् "इन्द्रो मरुत्वान्मघवे"त्यमरः । **अवस्यवः** अवनं ( रक्षणम् ) आत्मनस्तर्पणं वेच्छन्तः । अवशब्दाद्धन्तादिच्छाक्यजन्तात् "क्याच्छन्दसी" (पा० ३-२-१७०) त्युप्रत्ययः । "सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ"- ( पा० ७-१-५१ वा० ) इति सुगागमः । वयं **सख्याय** सखिभावाय **हवामहे** आह्वयामहे ॥ १ ॥ एवमेतस्मिन्मन्त्रे "मन्दिने पितुमद्वचः-प्रार्चत" इत्येतस्माद् वाक्यसम्बन्धादिन्द्रविशेषणं स्तुतिमदर्थकमेतदित्युपपद्यते ॥

अथ **गौः** (५४) इत्येतदनेकार्थत्वादिह समाम्नातम् । यथा-चैतदनेकार्थत्वं तथा पुरस्ताद्व्याख्यातमित्याह—

**गौरिति व्याख्यातः ॥ ३ ॥ ( २४ )**

इति ॥ ( नि० २-२-१ )

अथ यदुक्तं पुरस्तात् ( नि० २-२-२ ) अत्राह गोरमन्वतेत्येतदुपरिष्टात् ( ऐकपदिके ) व्याख्यास्याम इति तदेतदवसरप्राप्तमिहोच्यते—

**"अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।**

**इत्था चन्द्रमसो गृहे" ॥ ५ ॥**

( ऋ० सं० १-६-७ )

**अत्राहेति** । गोतमस्य राहूगणस्येयमार्षम् गायत्री । ऐन्द्री अग्निचयने इष्टकोपधाने विनियुक्ता । **अत्राह** अत्रैव **गोः** गैन्तुश्चन्द्रमसः । **गृहे** मण्डले । **त्वष्टुः** दीप्तस्यादित्यस्य सम्बन्धि **अपीच्यम्** अपगतम् रात्रावन्तर्हितम् । यद्वा अपेत्य सूर्यमण्डलाच्चन्द्रमण्डले चितमपचितं तदेवापीच्यम् । पृषोदरादिः ॥

१. दुर्गस्तु—छन्दोगेषु तृतीयेऽहनि मरुत्वतीये शस्त्रे निविद्धानीयसूक्तस्य प्रथमैवेत्याह ॥

१. सख्युः कर्मणे वा । ईक्षितसाधनाय ॥ "सख्युर्यः" ( पा० ५-१-१२६ ) इति भावकर्मणोर्यत् "यस्येति च-" ( पा० ६-४-१४८ ) इतीकारलोपः ॥

२. दुर्गस्तु-'गोः' सुषुम्णस्यैकस्य सूर्यरश्मेरितरे सूर्यरश्मयोऽमन्वतामन्यन्त समनुज्ञातवन्त इत्यर्थः । किंपुनस्तत् सममन्यन्त? 'नाम' नमनम् प्रहणमवस्थानमित्यर्थः । कुतः? त्वष्टुः आदित्यस्य स्वभूता रश्मयः समसमन्यन्त । कथं तस्य नमनं तस्समन्यन्त? इति अपीच्यम् अपगतं तत्रैव चन्द्रमण्डलेऽन्तः प्रविष्टस्य यदवस्थानान्तरं तत्सममन्यन्तेत्याह ॥

३. एतत्साधनमग्रे स्फुटम् ॥

(खं) स्वकीयं यत् नाम¹ तेजस्तदादित्यरश्मयः । इत्था इत्थंमनेन प्रकारेण अमन्वत सममंसत । अजानन् इति सायणः । उदकमये स्वच्छे चन्द्रबिम्बे सूर्य-किरणाः प्रतिफलन्ति । तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां (दीप्तिं) लभन्ते तादृशीं चन्द्रेऽपि वर्तमाना लभन्ते इत्यर्थः । एतदुक्तं भवति । यद्वात्रावन्तर्हितं सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्य अतीव नैशं तमोनिवार्य सर्वं प्रकाशयति । ईदृग्भूततेजसा युक्तः सूर्यश्चेन्द्र एव । द्वादशस्वादित्येषु चन्द्रस्यापि परिगणितत्वात् । अतोऽहोरात्रस्य प्रकाशक इन्द्र एवेति इन्द्रस्तुतेः प्रतीयमानत्वादिन्द्रो देवतास्येत्युपपद्यते ॥ ५ ॥

**अत्र ह गोः सममंसतादित्यरश्मयः । स्वं नामापीच्यम् अपचितमपगतमपिहितमन्तर्हितम् वाऽमुत्र चन्द्रमसो गृहे ॥**

अत्र हेति । तथाचात्र ह इत्येवकारार्थः । मन्त्रे "ऋचि तनुघमक्षुतङ्कुत्रोरुष्याणाम्" (पा० ६-३-१३३) इति त्रशब्दस्य दीर्घः । अपचितम् अपीच्यम् । तथा चापपूर्वात् चिनोतेः "अघ्न्यादित्वात्" (उ० ४-११०) यत्प्रत्ययष्टिलोपादि च निपात्यते बाहुलकात् । अथ वा अपगतम् अपीच्यम् ॥ तथाच अपपूर्वादञ्चतेर्गत्यर्थात् (भ्वा० प०) क्विन् (पा० ३-२-५९) अपस्यापिना विनिमयः । अप्यच् । तत्र भवमपीच्यम् । "भवे छन्दसी-" (पा० ४-४-११०) ति यत् भत्वादल्लोपे (पा० ६-४-१३८) दीर्घः (पा० ६-३-१३८) अपिहितम् इत्यर्थे धातुविनियमः । हिरपि गत्यर्थ एव (स्वा० प०) अतएवापीच्योऽप्रकाश इति भट्टभास्करमिश्रः ॥ अमुत्रेति इत्था इत्यस्यार्थः ॥ अमुष्मिंश्चन्द्रमण्डलेऽन्तर्हितस्य सुषुम्णाख्यस्य सूर्यरश्मेरवस्थानमिति भाष्यसंमतोऽर्थः ॥

**गातुः व्याख्यातः ॥**

गातुः (५५) इति व्याख्यातः "गमनं यज्ञपतये" इत्यत्र (नि० ४-३-५) (अथात्र निगममुदाहरति—

**"गातुं कृण्वन्नुषसो जनाय"-त्यपि निगमो भवति ।)**

अथ दंसयः (५६) इति । एतदनेकेषां कर्मणामभिधानम् । तदाह—

**दंसयः । कर्माणि । दंसयन्त एनानि ॥**

एनानि कर्माणि दंसयन्ते पश्यन्ति । कर्मकराः । "दसि दर्शनदंशनयोः" (चु० आ०) "अच इः" (उ० ४-१३४) इति इः । जस् । दुर्गस्तु उपक्षयन्तीत्यर्थमाह । "दसु उपक्षये" (दि० प०) णिच् ॥ अत्र निगममुदाहरति—

**"कुत्साय मन्मन्नह्यश्च दंसयः"**

(ऋ० सं० ८-७-२६-१)

**इत्यपि निगमो भवति ॥**

कुत्सायेति । अस्य "तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्बलम् । यत्रा दशस्यन्नुषसो रिणन्नपः" इत्यादिः ॥ उरुदाम्नः पुत्रस्याङ्गाख्यस्यार्षम् जागतमैन्द्रम् । महाव्रतस्य चतुर्विंशेऽहनि निष्कैवल्ये शस्यते ॥ हे इन्द्र! तव सख्येषु सखिलेषु सत्सु त्ये ते प्रसिद्धाः वह्नयः वोढारः हविषां स्तुतीनां वा । अतएव ऋतं यज्ञं मन्वानाः अवबुध्यमाना अङ्गिरसः बलं गवामपहर्तारमेतत्संज्ञकमसुरम् । व्यदर्दिरुः । अत्यर्थं व्यदारयन् ॥ "दॄ विदारणे" (क्र्या० प०) अस्माद्यङ्लुगन्ताल्लुङि "सिजभ्यस्ते"ति (पा० ३-४-१०९) झेर्जुस् "जुसिचे"ति (पा० ७-३-८३) गुणः । व्यत्ययेनेत्वम् । अपि च यत्रा यत्र "ऋचितनु" (पा० ६-३-१३३) इत्यादिना दीर्घः । यस्मिन्काले मन्मन् मन्मनि "मदि स्तुत्यादौ" (भ्वा० आ०) मनिन् (उ० ४-१४४) दस्य मो बाहुलकात् "सुपां सुलुगि-" (पा० ७-१-३९) ति सप्तम्याल्लुक् । स्तोत्रे सति कुत्साय महर्षये उषसः उषःकालात् वृत्रेणावृतत्वात् पूर्वमसत्प्रायान् तदपनोदनेन दशस्यन् प्रयच्छन् तथा अपः वृत्रेणावृतान्युदकानिच रिणन् तस्मान्निर्गमयन्वर्तसे ।

१. यद्यपि नामशब्दः उदकेऽर्थे निघण्टावुक्तः (१-१२) तथापीह तत्प्रभवं तेज इह लक्ष्यते । "अग्नेराप" इति श्रुतेः । यद्वा नामेति प्रसिद्धार्थेऽव्ययम् । "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः । प्राकाश्यं प्रसिद्धिः । आदित्यस्य हि प्रसिद्धं तेजः । अमन्वतेत्यस्य कर्तृपदमादित्यरश्मय इति । प्रकरणवशादध्याहृतम् ॥

२. दुर्गस्तु—अमुष्मिंश्चन्द्रमण्डल इति यथाभाष्यं व्याख्यत् । इह तु सायणोक्तमुद्धृतम् ॥

३. एतच्च भाष्यव्याख्यानम् । आदरेणावाबुध्यन्तेत्यर्थः ॥

४. अयं पाठः क्षिप्त इव प्रतिभाति दुर्गादिभिरधृतत्वात् पुस्तकान्तरेऽपि मुद्रितेऽस्तीति रक्षितम् ॥

१. दुर्गस्तु—समानख्यानेषु कर्मसु वर्तमानाः । इदमेव हि भवतः कर्म, "मेघो विदारयितव्य" इति तदेव तेषामश्वानामिति समानख्यानत्वम् । ऋतमुदकमसिन्नस्तीत्येवमेतं मन्वाना अश्वाः किमकुर्वन्? व्यदर्दिरुः विदारितवन्तः काले काले, बलं मेघम् (निघं० १-१०) यत्र यस्मिन्मेघे विदारिते दशस्यन् दशस्यन्ति । उषसः माध्यमिकाः । एकस्या एव पूजनार्थे बहुवचनम् । किं दस्यन्? अपः अद्भ्यश्च अहिनिवासिन्यः मेघनिवासिनीरित्यर्थः । ताश्च दीर्यमाणाः 'रिणन्' आगच्छन् पृथिवीलोकम् तदेतत्सर्वमपि युष्मदश्वैः क्रियते । कंपुनरर्थमुद्दिश्यत एवं कुर्वन्ति? मन्मन् मन्यमानाः कुत्साय पृथिवीं कृन्तते कृषीवलाय । दंसयः कृषिकर्माणि सफलानि कर्तुम् । इति व्याख्यन्नैरुक्तमतेन ॥

२. अश्वा इति दुर्गः ॥

३. "दाश्रृ दाने" (स्वा० उ०) इत्यस्यैव कृतोपधाकार्यस्य छान्दसं रूपम् ॥

"री गतिरेषणयोः" (क्र्या० प०) "प्वादीनां ह्रस्वः" (पा० ७–३–८०) तदानीं अंहः अहेर्वृत्रस्य च दंसयः कर्माणि वितथान्यासन्नित्यर्थः ॥ १ ॥

अत्र दंसयः इत्येतेन शब्देन कर्माणि उक्तानि । दासैः कर्मकर्तृदस्यन्त इति कृत्वा कर्मकरा दासा इति । बाहुल्याद्भाष्यकारेण नोदाहृतः ॥

अथ तूताव (५७) इत्येतदनवगतम् "तुताव" इत्यवगमस्तदत्रार्थप्रतीतये निगममुदाहरति—

"स तूताव नैनमश्नोत्यंहुतिः ।"

(ऋ० सं० १–६–३०–२)

**स तुताव नैनमंहतिरश्नोति ॥**

**स तूतावेति** । अथ "यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम्" इत्यादिः । अग्ने सख्ये मारिषामा वयं तव" इत्यन्तः ॥ आङ्गिरसस्य कुत्सस्येयमार्षम् । जगती, आग्नेयी । महाव्रते आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते । हे भगवन् **अग्ने! अस्मै** यजमानाय **त्वम् आ** आहूय देवान् आभिमुख्येन वा **यजसे** पूजयसि होतृत्वेऽवस्थितः । **स** एव **साधति** अन्तर्भावितण्यर्थः । साधयति आत्मनोऽभिप्रेतार्थम् । किंच स एव यजमानः **अनर्वा** शत्रुभिरप्रत्यृतः (अप्रतिगतः) अनाश्रितो वा कश्चिदन्यम् (स्वेनैव महिम्ना युक्तः) **क्षेति** निवसति । "क्षि निवासगत्योः" (तु० प०) व्यत्ययेन शस्य लुक् (पा० २–४–७३) तथा **सुवीर्यं** शोभनमात्मनो वीर्यम् **दधते** धारयते "दध धारणे" (भ्वा० आ०) धृत्वा च **स** यजमानः **तूताव** तुताव वर्धते प्रजाधनयशोभिः । तवतेर्वृद्धिकर्मणो लिटि णलि "तुजादीनां दीर्घोऽभ्यासस्य—" (पा० ६–१–७) इति दीर्घोऽभ्यासस्य । **एनम्** यजमानम् **अंहतिः** रोगः "अंहतिस्त्यागरोगयोः" इति हैमः । अंहः (पापम्) इति दुर्गः । अर्तिर्दारिद्र्यमिति सायणः ॥ **न अश्नोति** न सम्प्राप्नोति । हे भगवन्नग्ने! यस्त्वमेवमतिमहानुभावस्तस्य **तव सख्ये** सखिभावे परिचरणकर्मणि वर्तमाना **वयम् मारिषाम** हिंसिता न भवाम केनचिदपि ॥ २ ॥

एवमस्मिन्प्रकरणवशात्तूतावेति वृद्ध्यर्थं उपपद्यते ॥

**अंहतिश्च अंहश्च अंहुश्च हन्तेर्निरूढोपधाद्विपरीतात् ॥**

एते शब्दाः **हन्तेः** । तथाच "हन्तेरंह च" (उ० ४–६२) इत्यतिः । तदेतदाह–**निरूढोपधादित्यादि** । अकारमुपधातो निष्कृष्यादौ कृत्वा ततो हकारनकारौ विपर्ययेण भवतः ।

१. "छन्दसि वावचनं प्राक् णौ चङ्युपधायाः" इति वचनाद्गुणाभावे यणादेशः ॥

२. शोभनवीर्योपेतं धनमिति सायणः ॥

३. तुजादिराकृतिगणः । तथाचायं सौत्रस्तवतिर्वृद्ध्यर्थः ॥

४. केचित्तु–"वहि-महि वृद्धौ"- "अहि गतौ" (भ्वा० आ०) इति धातुपाठे गतौ चेति पठन्ति ॥

अथ चयसे (५८) इत्येतदनवगतम् "चातयसि" इत्यवगमस्तदत्रार्थप्रतीतये निगममुदाहरति—

"बृहस्पते चयस इत्पियारुम् ॥"

(ऋ० सं० २–५–१२–५)

**बृहस्पते यच्चातयसि देवपीयुम् । पीयतिर्हिंसाकर्मा ॥**

**बृहस्पत इति** ॥ अस्य "ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः । न दूढ्ये अनु ददासि वामम्" इत्यादिः ॥ आगस्त्यस्य मैत्रावरुणस्य (बृहस्पतेः) आर्षम् त्रैष्टुभम् लैङ्गिको विनियोगः ॥ हे **बृहस्पते देव!** दानादिगुणयुक्त! **ये** यजमानाः **पज्राः** प्रार्जितधना अपि भोगप्रधानाः । **पापाः** अप्रत्युपचिकीर्षवः । **भद्रं** भन्दनीयं स्तुत्यं **त्वा** त्वाम् **उस्रिकम्** उत्स्राविणं (दातारं) भोगानां **मन्यमानाः उपजीवन्ति इत्** केवलं उपजीवन्त्येव न क्रियया प्रत्युपचिकीर्षन्ति, तेभ्यः **दूढ्ये** (दुःध्ये दुर्धिये) दुर्धीभ्यः वचनव्यत्ययः साधनं चार्षम् । **वामं** वननीयं सम्भजनीयं (प्रशस्यं) धनम् । **अनु** अनुकूलं **न ददासि** । किन्तु **पियारुं** देवपीयुं देवहिंसकमयष्टारं देवानां, स्वभोगप्रधानं तं **चयसे** चातयसि नाशयसि ॥ ५ ॥

**वियुते द्यावापृथिव्यौ । वियवनात् ।**

**वियुते** (५९) इत्येतदेकमेव समस्तयोर्द्वयोरपि **द्यावापृथिव्योरभिधानम्** कुतः? **वियवनात्** इति निर्वचनम् ।

१. अत्र देवराजः–"चय गतौ" भ्वादिरात्मनेपदी । अत्र चातयतेर्नाशनार्थस्यार्थे वर्तते । यद्वा चातयतेरेव विकृतं रूपमित्याह ॥

२. तथाच शौनकः–"स्नात्वा जपेदनर्वाणं नमस्कृत्य बृहस्पतिम् । वीरान्धनं च प्राप्नोति सौश्लोक्यं च नियच्छति" इति । अनर्वाणं तदादिकं बार्हस्पत्यं सूक्तमृष्टर्च यत्रेदमपि पञ्चमम् ॥

३. सायणस्तु–पापा पापबुद्धयोऽल्पाः पज्राः हविर्लक्षणान्नवन्तः पापेन जीर्णा वा नरा इत्येवमन्यथैव व्याचख्यौ ॥

४. "वदि अभिवादनस्तुत्योः । भदि कल्याणे सुखे चेति" (भ्वा० आ०) धातुपाठे चास्तुतिः ॥ 'ऋज्रेन्द्रे'–(उ० २–२८)ति निपातनाद्रक् ॥

५. दातैव केवलं भोगानामयमाजेवेन, न प्रत्युपकारार्थीत्येवं मन्यमानाः ॥

६. "वनुष सम्भक्तौ" (भ्वा० प०) "इषियुधी–" (उ० १–१४२) त्यादिना बाहुलकान्मक् प्रत्ययो नकारस्य आकारादेशश्च । सम्भजनीयं हि प्रशस्यं भवतीति धनमेवेति तथाविधं मन्यते ॥

७. य एव श्रद्धधानो यष्टा च देवान् तस्मै यजतेऽनुददासि वाममिति पापबुद्धयस्त्वां सम्यक् न पश्यन्तीत्यर्थः ॥

यौतिर्मिश्रणार्थः । (अ० प०) तस्योपसर्गसामर्थ्याद्विपर्ययेणार्थो भवति विमिश्रीभूते (नियतं वियुक्ते) इत्यर्थः ॥

अत्र निगममुदाहरति—

**"समान्या वियुते दूरे अन्ते ॥"**

(ऋ० सं० ३-३-२५-२)

**समान्येति** । अस्य "ध्रुवे पदे तस्थतुर्जागरूके । उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥" इतिशेषः । विश्वामित्रस्येयमार्षम् । वैश्वदेवी त्रिष्टुप् । लैङ्गिको विनियोगः । **समान्यौ** समान्यौ समाने वा एते द्यावापृथिव्यौ, समानपरिमाणे । परस्परप्रीणनाख्येन कर्मणा ऐकमत्यं गते वा, **वियुते** विमिश्रीभूते–वियुज्यवर्तमाने वा । **दूरेअन्ते** दूरेऽन्तेअवसाने ययोस्ते । "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इति (पा० २-२-२४ वा०) बहुव्रीहिः । "हलदन्तादि" (पा० ६-३-९) ति सप्तम्या अलुगसन्धिश्चार्षः । अविनाशिन्यौ । **जागरूके** सर्गादारभ्य स्वं स्वमधिकारं प्रति जागरणशीले सत्यौ **ध्रुवे** अविनाशिनि **पदे** अन्तरिक्षे स्थाने **तस्थतुः** स्थितवत्यौ ॥ **उत** अपिच–**स्वसारा** स्वसारौ–भगिन्यौ (सहोत्पत्तित्वात्) **युवती** युवत्यौ–नित्यतरुण्यौ **भवन्ती** भवन्त्यौ (अपरस्परसम्भोगेन) "वा च्छन्दसि" (पा० ६-१-१०६) इति पूर्वसवर्णदीर्घः ॥ **आत्** अनन्तरम् **उः** पूरणः । इमेऽभिमिश्रीभूते इव **मिथुनानि** द्वन्द्वानि (द्विवचनसम्बद्धानि) **नाम** नामानि । शेर्लोपः । "स्वधे–पुरन्धी–धिषणे–रोदसी" इत्येवमादीनि । **ब्रुवाते** परस्परं ब्रूतः । कर्मकर्तरि प्रत्ययः । "सकर्मकाणां प्रतिषेधो वक्तव्यः" (पा० ३-१-८७ वा०) इति यगात्मनेपदाभावौ । यद्वा कर्त्तर्येव । "स्तोतृभ्यः" इति शेषः । स्तुतिनामभिः स्वधे–पुरन्ध्री इत्येवमादिभिर्द्विवचनान्तैर्द्यावापृथिव्यावुच्येते इति हि परमार्थः ॥ २ ॥

एवमेतस्मिन्मन्त्रे वियुते इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वं, द्यावापृथिवी शब्दश्चाध्याहार्यः ॥ "दूरे अन्ते" इत्येवमादीनां तथोपपत्तिदर्शनादिति बोध्यम् ॥

अथैकपदनिरुक्तम्—

**समानं सम्मानमात्रं भवति । मात्रा मानात् । दूरं व्याख्यातम् । अन्तोऽततेः ॥**

**सम्** सममेव **मानम्** यस्य तत्समानम् । तदुक्तं **सम्मानमात्रं भवतीति** । अत्र मयूरव्यंसकादित्वान्नित्यसमासो मात्रशब्देन, (पा० २-१-७२) एवशब्देन च विग्रहः । सम्मानमेव सम्मानमात्रम् । समस्य चान्त्यलोपः । अन्ये तु-सहमानेन वर्तत इति, समानं मानमस्येति वा, अत्राद्ये–"तेनसहेति" (पा० २-२-२८) बहुव्रीहिः । "वोपसर्जनस्य" (पा० ६-३-८२) सहस्य सादेशः । द्वितीये–"समानस्य छन्दसी–" (पा० ६-३-८४) तिसः । शब्दसाम्यान्निर्ब्रवीति–**मात्रा-मानादिति** । तथा–"माङ् माने" (दि. आ.) ष्ट्रन् (उ. ४-१५९) अनित्यः पित्वान्ङीप् । टाप् (पा० ४-१-४) "मात्रं स्वयधृतौ स्वार्थे कात्स्न्र्ये मात्रापरिच्छेदे । अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे । काले वृत्ते चे"ति हैमः ॥ **व्याख्यातम्** (नि० ३-१९) **अततेः** गत्यर्थस्य (भ्वा. प.) बाहुलकात्तनि तस्य नः ॥ तथाच "दूरे अन्ते" इत्यत्र "तत्पुरुषे कृति बहुलम्" (पा० ६-३-१४) इत्यलुगिति देवराजः ॥

अथ ऋधक् (६०) इत्यव्ययमनेकार्थम् । तत्राह—

**ऋधगिति पृथग्भावस्य प्रवचनं भवति । अथापि ऋध्नोत्यर्थे दृश्यते ॥**

**पृथग्भावस्य** पृथक्त्वस्य **प्रवचनं भवति** सोऽनेन प्रोच्यत इत्यर्थः । **अथापि** अयमेव ऋधगितिशब्दः कदाचित् **ऋध्नोत्यर्थे** अपि **दृश्यते** । तथाच निगमः—

**"ऋधगया ऋधगुता शमिष्ठाः ॥"**

(य० वा० सं० ८-२०)

**ऋध्नुवन्नपाक्षीर्ऋध्नुवन्नशमिष्ठा इति च ॥**

**ऋधगयेति** । अस्य "वयं हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ॥" इत्यादिः । "प्रजानन्यज्ञमुपयाहि विद्वान् स्वाहा ॥" इत्यन्तः । समिष्टयजुःषु सौमिकेषु विनियुक्ता । तत्र चोक्तम् "एतौ विश्वामित्रो यज्ञस्यारणी अपश्यत्" इति ॥ हे भगवन् ! **अग्ने** ! यत्प्रयोजनमुद्दिश्य **इह** अस्मिन्देशे **अस्मिन्यज्ञे वा प्रयति** प्रोत्सर्पति सति **वयं त्वा** त्वां **होतारम्** "अग्निर्वै देव्यो होता" इति हि श्रूयते ॥ **अवृणीमहि** वृतवन्तः । तत्त्वया कृतमिति परिसमाप्तेऽस्मिन्यज्ञे प्रत्यभाष्यसेऽस्माभिः **ऋधगयाः** त्वम् । यानि मिथ्याण्यपि हवींषि हुतानि सन्ति तानि त्वमग्ने ! ऋधग् पृथगेक कृत्वा ततो देवान् अयाः अयाक्षीः । न ते सम्मोहोऽस्तीति भावः । किञ्च **'ऋधगुताशमिष्ठाः'** त्वम् । उत–अपिच यदपि किञ्चिद्विगु-

१. विश्वामित्रपुत्रस्य वाक्पुत्रस्य वा प्रजापतेरार्षं त्रैष्टुभं वैश्वदेवमिति सायणः ॥

२. "सुपां सुलुगि–" (पा० ७-१-३९) ति विभक्तेर्डादेशः । एवमग्रेऽपि । क्वचिल्लुगपि भवति ॥

३. "एकस्मादात्मनो जाते" इति सायणः । तथाच श्रुतिः–"तस्माद्वा-एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी" इति ॥

४. परस्परमित्यध्याहार्यमत्रास्मिन्पक्षे ॥

१. गौरादिषु मातामहीशब्दपाठात् । "मातरि षिच्चे"–(पा० ४-२-३६ वा.) ति षित्वादेव ङीप्सिद्धेः ॥

२. दुःशब्दोपपदादेतेः "दुरीणो लोपश्च" (उ० २-१८) इति रक्प्रत्ययो धातोर्लोपश्च । "रोरी"–(पा० ८-३-१४) ति रेफलोपः । लोपे पूर्वस्य दीर्घः (पा० ६-३-१११) अत्र स्कन्दस्वामिनः । "दुःखेन गम्यते दूरमतोऽस्यादेर्मध्याच सततगतो भवति, न कदाचिदादौ मध्ये वास्ती"–ति । तथाच 'दूरेऽन्तमवसानगतिर्ययोः' इति दूरे अन्ते इत्यस्यार्थः ॥

णमकार्ष्म; वयमेतस्मिन्यज्ञे। तदपि सर्वमेव ऋधक् समृद्धं सगुणमेव कुर्वन्, पापमस्य यज्ञस्य अशमिष्ठाः स्विष्टकृद्रूपेण शमितवानसि। यस्त्वमेतदकार्षीरस्माकमेतस्मिन्यज्ञे, तत्त्वां ब्रवीमि– एतदेव मयैतेषां कर्तव्यमिति **विद्वान् प्रजानन्** प्रकर्षेण जानँश्चास्माकमात्मन उपरिभक्तिम् **यज्ञम्** एतम् **उपयाहि** उपागच्छ पुनःपुनरस्माभिरनुध्यातः परिचर्याया इति भावः॥ वस्तुतस्तु– अत्र द्वावप्येतावृध्नोत्यर्थावेव। यतः "अथाप्यृध्नोत्यर्थे दृश्यते" इत्युपक्रम्य भाष्यकारेणायमुपन्यस्तो निगमः। निरुक्तं ( प्राक्तनं ) च "ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठा" इति। ततश्च "ऋधगयाः" त्वम् इत्यस्य–अल्पमपि हुतमस्माभिर्हविः। ऋधक् ऋद्धमेव ( देवतातृप्तिसमर्थं बहु ) कुर्वन् अयाः–यागमकार्षीस्त्वमित्यर्थः॥ इत्थं च सुसम्पादितमस्मत्प्रयोजनं दयमानेन भवतेति समुदितार्थः॥ अथ ऋधक्शब्दस्य पृथग्भावार्थत्व उदाहरणम्—

"यदि॑न्द्र दि॒वि पार्ये॒ यदृध॒ग्यद्वा॒ स्वे सद॑ने॒ यत्र॒ वासि॑॥ अतो॑नो य॒ज्ञमव॑से नि॒युत्वा॑न् स॒जोषा॑ः पाहि गिर्वणो म॒रुद्भिः॥" इति ( ऋ० सं० ४–७–१२–५ )

भारद्वाजस्येयमार्षम्। पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये निवद्धानीये सूक्ते शस्यते। हे भगवन् **इन्द्र**! **यत्** यदि त्वम् **पार्ये** पारणीये स्थाने **दिवि** द्युलोके वर्तसे, **यत्** यदि वा **ऋधक्** पृथगन्यस्मिन्देशे **यद्वा स्वे** स्वकीये **सदने** गृहे अन्तरिक्षलोके। अथ **वा** किमनेन **यत्र** यस्मिन्देशे **असि**[2] भवसि। **अतः** अस्मात्स्थानात् आगत्य[3] हे **गिर्वणः** गिरां ( स्तुतीनां ) सम्भक्तैरिन्द्र[4]! **नियुत्वान्** नियुतोऽश्वास्तद्वान् **मरुद्भिः**। अन्यैः देवैः **सजोषाः** सह प्रीयमाणस्त्वं **नः** अस्माकम् **अवसे** रक्षणायान्नाय[6] वा **यज्ञम्** अस्मदीयं **पाहि** रक्ष॥ यद्वा—यज्ञं-यजनसाधनमस्मदीयं सोमं, पाहि पिब। "बहुलं छन्दसि"– ( पा० २–४–७३ ) इति शपो लुक्॥५॥

## अस्या इति अस्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे॥

**अस्या** ( ६१ ) इति **अस्य** ( ६२ ) इति च पदद्वयं स्त्रीपुंसविषयम्। स्वरकृतात् विशेषात् प्रधानाभिधायि वा[1] भवति। अत्र हेतुमाह–**उदात्तं प्रथमादेशे** इति। **प्रथम** इति मुख्यनाम। तथाच मेदिनी–"प्रथमश्च भवेदादौ प्रधानेऽपि च वाच्यवदि"ति॥ तस्यादेशेऽभिधाने एतत्पदद्वयम् **उदात्तम्** भवति। **अन्वादेशे**–प्रधानार्थमनु–( पश्चात् गुणभावेन ) यो वर्तते तस्य **आदेशे** अभिधाने वर्तमानम् **अनुदात्तम्** एतत्पदद्वयं भवति।

अनयोर्लक्षणं प्रसिद्ध्या दर्शयति—

## तीव्रार्थतरमुदात्तम् अल्पीयोऽर्थतरमनुदात्तम्॥

लोकेऽपि हि–यत्–**तीव्रार्थतरम्** उत्कृष्टार्थेन प्रधानतरं तत् **उदात्तम्** इति प्रसिद्धम्। यथा–"उदात्तमेतत्कुलमि"ति। यच्च–**अल्पीयोऽर्थतरम्** अल्पीयसार्थेनाप्रधानतरं–तत् **अनुदात्तम्** उच्यते॥

उदाहरणैरेवानयोर्विभागं दर्शयति—

"अ॒स्या ऊ॒ षु ण॒ उप॑ सा॒तये॑ भु॒वोऽहे॑ळमानो ररि॒वाँ अ॑जाश्व श्रवस्य॒ताम॑जाश्व॥"

( ऋ० सं० २–२–२–४ )

**अस्या** इति। अस्य "ओषु त्वाऽववृतीमहि स्तोमेभिर्दस्मसा॒धुभिः॥ न॒हि त्वा पूषन्नति॒मन्य आघृणे॒ न ते॑ स॒ख्यमपह्नु॒वे" इत्युत्तरार्धर्चम्॥ परुच्छेपस्यार्षम्पौष्णम्[3]। आत्यष्टम् इति सायणः। अतिच्छन्दा इति दुर्गः। विनियोगो लैङ्गिकः॥ हे **अजाश्व**! पूषन्! **नः** अस्माकम् **अस्याः**। अस्यै चतुर्थ्यर्थे षष्ठी ( पा० २–३–६२ )। **सातये** लब्धये "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" ( पा० ३–३–९७ ) इति निपातनात्साधुरयम्। **अहेळमानः** अनादरमकुर्वन्। अक्रुध्यन्[5] इतिभाष्यम्।

१. "ऋधगया" "ऋधग्धुता शमिष्ठाः" इति वाक्यद्वयमित्यर्थः॥

२. क्वचिदन्यत्रैव स्थानेऽवस्थितः। को हि तत्त्वतो वेद तव स्थानं यत्रास्तीति भावः॥

३. "गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्" इति हि वार्तिकं ( पा० १–४–३१ ) महाभाष्ये तु "प्रश्नाख्यानयोश्चे"ति एतदर्थे पठ्यते॥

४. "वन षण सम्भक्तौ" ( भ्वा० प० ) असुन् ( उ० ४–१८८ ) एवमग्रेऽपि॥ "गीर्भिः सम्भजीत! सहि स्तुतीः सम्भजति। स्तुतिभिर्वा सम्भज्यत" इति दुर्गो व्याख्यत्॥

५. वायुर्भूत्वेति दुर्गः॥

६. रक्षसीति दुर्गः। तत्र पदव्यत्यय आर्षोऽवगन्तव्यः। प्रकृतार्थे तु भावेऽसुन् ( उ० ४–१८८ ) पक्षे "अवसि"ति अन्ननाम ( निघं० २–७ )॥

१. वेति विकल्पे तेनाप्रधानाभिधायीत्यपि स्वारसिकोऽर्थः॥ यद्वा प्रधानेत्येतदप्रधानस्याप्युपलक्षणमेकदेशाभिधानं वा। वाशब्देन स्वरकृतमुदात्तानुदात्तत्वद्वयं प्रधानाप्रधानभावेन वेत्यर्थो विवक्षितः॥ पुनरुक्तस्यान्वादेशविषयतयाऽनुदात्तत्वमिदमो वक्ष्यते "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" (पा० २–४–३२) इति॥

२. अभेदे तृतीया "प्रकृत्यादित्वात्" ( पा० २–३–१८ वा० ) धान्येन धनवानितिवत्॥ अत्र पदलोपो द्रष्टव्यः॥

३. पूष्ण इदं पूषास्य देवतेत्यर्थः॥

४. कथं नाम वयमभिप्रेतार्थं लभेमहीति भावः। यद्यप्ययं सातिशब्दो दानावसानयोरेवाभरेणाभिहितस्तथापि लाभस्यापि तत्पूर्वकत्वेन दानेन ( दानशब्देन ) लाभोऽप्यभिधीयते॥

५. सर्वोह्यभ्यर्थ्यमानः प्रायेण क्रुध्यतीति भावः। हेडृ अनादरे क्रोधे चेति देवराजः ( भ्वा० आ० ) लटः शानचि शपि मुगागम आनस्य॥

**ररिवान्** दानाभिप्राययुक्तः सन् **सु** सुष्ठु **उप** समीपे **भुवः** भव । त्वयि सन्निकृष्टे सति त्वदनुग्रहादभिमतमेतमर्थं लभेमहीति भावः । **ऊ** इति पादपूरणः "सुञः" ( पा० ८-३-१०७ ) इतिषत्वे "नश्च धातुस्थोरुषुभ्यः" ( पा० ८-४-२७ ) इतिणत्वम् । **हे अजाश्व !** अजनाश्वं ! ( गमनाश्व ! छागाश्वेतिवा ) **श्रवस्यताम्** अन्नं-धनं वेच्छतामस्माकम् **सुररिवान्तुपभुवः** उक्तवैदर्थः । **हे दस्र** शत्रूणामुपक्षपयितः इति सायणः । दर्शनीय ! अथवा दान्त ! इति दुर्गः । **हे पूषन् !** पोषक एतन्नामकदेव ! **साधुभिः** शोभनैः—त्वां प्रीणयितुं समर्थैः **स्तोमेभिः** स्तोमैः पृष्ठ्यादिसंज्ञिकाभिः स्तुतिभिः "बहुलं छन्दसि" ( पा० ७-१-१० ) इत्यैसभावे एत्वम् ( पा० ७-३-१०३ ) **ओषु** आ-उ-सु इति पदत्रयम् तत्र उः पूरणः । सुष्ठु-**त्वा** त्वाम् **आववृतीमहि** आभिमुख्येनात्मनो वर्तयामहे । वृतेरन्तर्भावितण्यर्थाल्लिङि "बहुलं छन्दसी" ( पा० २-४-७६ ) ति शपः श्लुः । यज्ञान्तरगमनान्निवर्तयाम इत्यर्थः । **हे आघृणे !** सर्वतोवृष्टेः क्षारयितः ! यद्वा हविषामाहर्तः ! स्वीकर्तरिति सायणः । आगतदीप्ते ! इति दुर्गः । "घृ क्षरणदीप्त्योः" ( जु. प. ) छान्दसो धातुः । तस्य "घृणिपृश्नी-" ( उ० ४-५६ ) त्यादिना निपातितः । आजिघर्तीत्याघृणिस्तत्संबुद्धौ रूपम् ॥ **पूषन् ! नहि** नैव **त्वा** त्वाम् **अति** अतीत्य ( अतिक्रम्य ) साधुतरां दर्शनीयतरां वाऽन्यां कांचिद्देवतामहं **मन्ये** ( कदाचिदपि तेऽवमतिं नकरोमि ) न केवलमनतिक्रममात्रं किन्तु-**ते** तव **सख्यं** सखित्वं-हितकर्तृत्वं कदाचिदपि **न अपह्नुवे** । नैवापनयामि । न त्यजामि सर्वतः प्रख्यापयामि कृतज्ञोऽहमिति भावः ॥ ४ ॥

एवमत्र-सातिः प्रधानभूतेति कृत्वाऽस्या इत्येतत्पदमन्तोदात्तम् । अन्तोदात्तमपि च सदुदात्तमित्युक्तं भाष्यकारेण, एकदेशस्य उदात्तत्वात् ॥

१. दातासन्नित्येव सायण आह ॥

२. अजना अजाः । पचाद्यच् । गमनशीला भृशमत्यर्थं गन्तारो वस्ता वा तएवाश्वा अश्वस्थानीया रथे निबद्धा यस्य सः । तत्सम्बुद्धौ ॥

३. श्रवश्शब्दात्क्यजन्ताच्छता । श्रव इति अन्नस्य धनस्य वा नाम ( निघं० २-७-११ ) ॥

४. दानमनास्सुष्ठु समीपे भवेति ॥

५. "दसु उपक्षये" ( दि० प० ) यद्वा "दस दर्शनदंसनयोः" ( चु० आ० ) पक्षे "दसु उपशमे" ( दि० प० ) इत्येतेभ्यो मनिन् ( उ० ४-१४४ ) पक्षे मस्य रो विपर्ययेण । अनपुंसकत्वेपि नलोप आर्षः ॥

६. उपरि इदमः फिट्स्वरेणान्तोदात्तत्वम् । शान्तनवाचार्येण हि फिट्सूत्राणि प्रणीतानि यत्र "फिषोऽन्त उदात्तः" इति प्रथमं सूत्रम् । फिडिति प्रातिपदिकस्य संज्ञा तस्यान्तउदात्त इति हि तदर्थः ॥ एक एवात्राकार इदमोऽवशिष्यते स एव उदात्त इति कथमयं नान्तोदात्तो व्यपदेशिवदेकस्मिन्निति परिभाषितमस्ति । ( प० ३१ ) भाष्यकारस्य तु प्राधान्याभिप्रायकमेवोदात्तत्वाभिधानमिति बोध्यम् ॥

**अस्मै नः सातये उपभवाहेळमानोऽऋध्यन् ररिवान् । रातिरभ्यस्तोऽजाश्वेति पूषणमाहाजाश्वाजा अजनाः ॥**

**रातिः** "रा दाने" ( अ० प० ) इत्येष धातुः । **अभ्यस्तः** अभ्याससंज्ञामापन्नः । तथाचात्र रातेश्छान्दसस्य लिटः क्वसुः ( पा० ३-२-१०७ ) द्विलम् ( पा० ६-१-८ ) अभ्यस्तसंज्ञा च ( पा० ६-१-५ ) क्वसोरिट् ( पा० ७-२-८७ ) आतो लोपः ( पा० ६-४-६४ ) **अजाश्वेति** । अजा एव अश्वस्थानीया यस्य स वस्तरथेतियावत् । **अजा** "अज गतौ" (भ्वा० प०) पचाद्यच् (पा० ३-१-१३४) "अजाविभ्यामि"-(पा० ५-१-८) ति निर्देशा"दजेर्वी"-(पा० २-४-५६) ति व्यादेशो न । **अजना** इति "नन्द्यादित्वात्" ( पा० ३-१ १३४ ) ल्युः "योरनः" ( पा० ७-१-१ ) ॥

## अथानुदात्तम् ।

**अथ**-पुनरस्मिन्ननुदात्तमेतत्पदं गुणभूतार्थाभिधायि भवति । तस्यैव निगमः—

**"दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥"**

( ऋ० सं० ८-३-२७-४ )

**दीर्घायुरस्या यः पतिर्जीवतु शरदः शतम् ॥**

**दीर्घायुरि**ति । अस्य "पुनः पत्नीमग्निरदादायुषा सह वर्चसा" इत्यादिः ॥ सूर्याया आर्षमनुष्टुप् । विवाहे विनियुक्ता । पित्रा पूर्वमेतां दत्तां सतीं कन्यां **पत्नीं पुनरग्निरदात् आयुषा सह वर्चसा** तेन सहैतस्मिन्वैवाहिके कर्मणि "अग्निसन्निधिसंस्काराद्भार्यात्वमुपजायते" इत्येतदपेक्ष्य पूर्वदानात्पुनर्दातृत्वमुच्यते तदेवमस्यादत्ताया एवमाशास्महे **योऽस्याः** पत्न्याः **पतिः** । भर्ता **दीर्घायुः** अस्तु इति । यतो विशेषयन् ब्रवीमि-**जीवाति** जीवतु लोडर्थे लेट् (पा० ३-४-७) 'लेटोऽडाटौ" (पा० ३-४-९४) इत्याट् । **शरदः शतम्** इति । शरदि हि दुर्जीवाः प्राणिनो भवन्ति रोगभूयस्त्वात् । अत एवमाशास्यते शरच्छतं जीवत्विति ॥ यद्वा शरदिति संवत्सरनाम "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः ॥ "कालाध्वनोरत्यन्तसंयोगे" (पा० २-३-५) इति द्वितीया ॥४॥

एतस्मिन्मन्त्रे-भर्तृकन्यासंयोगे सति भर्तैव प्रधानम् तस्य ह्यायुराशास्यते । तस्य लक्षणार्थो पत्नी । तस्मात् "दीर्घायुरस्या यः पतिः" इत्येतदनुदात्तम् ॥

१. तथाचोक्तम् "वैद्यानां शारदी माता पिता तु कुसुमाकरः" इति ॥

२. अस्या इति पदमप्रधानभूतकन्याभिधायित्वात् । स्वरकृतोऽप्यत्र विशेषो द्रष्टव्यः । पुनरुपादानेनान्वादेशविषयत्वेदमोऽनुदात्तोऽशादेशोऽत्र विधीयते ( पा० २-४-३२ ) "किञ्चित्कार्यं

अथ निगमप्रसक्तमुच्यते—

**शरच्छृता अस्यामोषधयो भवन्ति शीर्णा आप इति वा ॥**

**शृताः** पक्वाः "श्रा पाके" (अ. प.) क्तः "शृतं पाके" (पा० ६-१-२७) इति साधुः ॥ **ओषधयः** व्रीह्याद्याः । शीर्यन्तेऽस्यां पाकेनौषधय इति **शरत्** । "शॄ हिंसायाम्" (क्र्या. प.) "शॄदृभसोऽदिः" (उ० १-१३०) इत्यदिः । "शरत्स्त्री वत्सरेऽप्यृतौ" इति मेदिनी ॥ अथवा **शीर्णा आपोऽस्यां भवन्तीति** शरत् । वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्यन्ते ॥

**अस्येत्यस्या इत्येतेन व्याख्यातम् ॥४॥ (२५)**

**अस्य-इति** एतत्पदम् **अस्या इत्येतेन** स्त्रीविषयेण पदेनैव **व्याख्यातम्** । तथाचात्र (पुंविषये) निगमो यथा—॥ ४ ॥ (२५)

**"अ॒स्य वा॒मस्य॑ पलि॒तस्य॒ होतु॒स्तस्य॒ भ्राता॑ म॒ध्य॒मो अ॒स्त्यश्नः॑ । तृ॒तीयो॒ भ्राता॑ घृ॒तपृ॑ष्ठो अ॒स्यात्रा॑पश्यं वि॒श्पतिं॑ स॒प्तपु॑त्रम् ॥१॥**

(ऋ० सं० २-३-१४)

**अस्य वामस्येति** । दीर्घतमस आर्षम् वैश्वदेवं त्रिष्टुवनादेशपरिभाषया । तार्तीयसवने महाव्रते वैश्वदेवे शस्यते । अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्यक्रियार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । योऽयं दिवि द्योतते तस्य **अस्य वामस्य** वननीयस्य सम्भजनीयस्य सर्वैरारोग्यार्थिभिः सेवनीयस्य "वन षण सम्भक्तौ" (भ्वा० प०) ततः "इषियुधी"त्यादिना (उ० १-१४२) बाहुलकात्कर्मणि मक् नकारस्याकारश्च । **पलितस्य** पालयितुः । प्रकाशवृष्ट्यादिप्रदानेन सर्वस्य जगतः पालकस्य । तथा योऽयं दिवि द्योतते तस्य अस्य **होतुः** ह्वातव्यस्य आह्वानार्हस्यादित्यस्य (सूर्यस्य) **मध्यमः** मध्यमस्थानो मध्ये भवो वायुः "मध्यान्मः" (पा० ४-३-८) इति भवार्थे मप्रत्ययः । आदित्याग्नी अपेक्ष्यास्य मध्यमत्वम् । सचाऽश्नः अशनः सर्वत्र व्याप्तः । "अशू व्याप्तौ" (स्वा० आ०) "इणः सिञ्जी०" (उ० ३-२) इत्यादिना बाहुलकान्नक् । "शात्" (पा० ८-४-४४) इति श्रुत्वनिषेधः । न हि वायुरहितः कश्चित्प्रदेशोऽस्ति ॥ तादृशो **भ्राता** भागहर्ता, भर्तव्यो वा उदकेन । **अस्ति** भ्रातृस्थानीयो भवति । **किञ्च अस्य** वायोः **भ्राता** हविर्भागहर्ता, ऐन्द्राग्ने हविषि स्तुतौ वा **घृतपृष्ठः** घृतेन स्पृष्टः । यद्वा-घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशः । **तृतीयोऽग्निरस्ति** । पृथिवीस्थानः । तृतीयत्वमुक्तोभयापेक्षया द्रष्टव्यम् । वायुरपि ज्योतिरेव, "वायुना ज्योतिषा" इति हि विज्ञायते । **अत्रैतस्मिन्नेवाविभक्ते** ज्योतिषि **विश्पतिं** विशां प्रजानां पतिं पालयितारम् । **सप्तपुत्रम्** सर्पणरश्मिपुत्रोपेतम् । **अपश्यम्** प्रधानत्वेन दृष्टवानस्मि ॥ १ ॥

अस्मिन्मन्त्रे सूर्यः प्रधानम् सूक्ते सूर्याधिकारात् । तस्मात् "अस्य वामस्ये"त्येषः "अस्य" शब्दोऽन्तोदात्तः । वायुश्चाप्रधानमिति तदर्थेऽयम् 'अस्य' शब्दोऽनुदात्तः । एवमेकस्मिन्नेवास्मिन्मन्त्रे उदात्तानुदात्तावेतौ "अस्य" शब्दौ प्रधानाप्रधानविषयावित्येकमेवोदाहरणम् ॥ अथास्य भाष्यम्—

**अस्य वामस्य वननीयस्य, पलितस्य पालयितुः । होतुर्ह्वातव्यस्य । तस्य भ्राता मध्यमो । मध्यमोऽअस्त्यशनो । भ्राता भरतेर्हरतिकर्मणो हरते भागं, भर्तव्यो भवतीति वा । तृतीयो भ्राता घृतपृष्ठोऽअस्यायमग्निस्तत्रापश्यं, सर्वस्य पातारं वा, पालयितारं वा । विश्पतिं, सप्तपुत्रं सप्तम-**

विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः" इत्यन्वादेशलक्षणम् । पुनरुपादानं च स्वशब्देनैवेति नानेनापेक्ष्यते । तथाच पत्नीशब्देनाप्यभिहितायाः पुनरिदमाभिधानेऽप्यन्वादेश उपपाद्यः । तथाच श्रीमद्भागवते ६ स्कन्धे (९ अ० ४० श्लो० ८ गद्ये) एनमिति द्रष्टव्यम् ॥

१. यथा लोके भ्राता पितृधनस्य भागं हरति तद्वन्मध्यस्थानमन्तरिक्षलोकं हरतीति, वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा, हरति वोदकं द्युलोकात् ॥ भ्राता हि पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवति । मध्यमो वायुरपि वृष्ट्यर्थं रसैर्भर्तव्यो भवति ॥

२. सम्भूय कार्यकारित्वात्त्रयाणामयं पूरणस्तृतीयो भवति । "द्वेस्तीयः" "त्रेः संप्रसारणं चे"-(पा० ५-२-५५) ति साधुः । सजातीयत्वमुपपादयति वायुरपीति ॥

३. विशन्ति अनुप्रविशन्ति सर्वकर्मसु अधिकारित्वेन । यद्वा अनुप्रविष्टा आत्मीयभूराजादेः श्रिता इति विशः । "विश प्रवेशने" (तु० प०) क्विप् । "वि॒शो राजा॑नमु॒पत॑स्थुरॄ॒ग्मिय॑म्" इति (ऋ० सं० ४-५-१०-४) हि निगमः ॥

४. एतत्तत्त्वमुपरिष्टाद्व्यक्तीभविष्यति ॥

५. विश्पतित्वाभिधानेनापि प्राधान्यमस्योक्तम् ॥

६. प्रथमादेशान्वादेशशब्दाभ्यां हि प्रधानाप्रधानावुच्येत इत्युक्तमुदात्तानुदात्तकारणम् । अत्र दुर्गः-अन्येतु मन्यन्ते-प्रथमादेशो नाम प्रारम्भस्तत्र यद्वर्तते तदुदात्तं भवति । प्रधानार्थतामुदात्तमित्युक्तलक्षणेन, तद्यथा "अ॒स्या ऊ॒षु णः॑" "अ॒स्य वा॒मस्य॑" इति । अन्वादेशो नामान्यस्य पदस्य पश्चादादेशस्तत्र वर्तमानमनुदात्तं भवति । पदात्परस्य निघातो भवतीति हि लक्षणविदोऽपि ब्रुवते । तच्चानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतरं अप्रधानार्थतरं भवति । तद्यथा-"दी॒र्घायु॑रस्या॒यः पतिः॑" "तृ॒तीयो॒ भ्राता॑ घृ॒तपृ॑ष्ठो अ॒स्य" इति ॥

पुत्रम् । सर्पणपुत्रमिति वा । सप्तसृप्ता संख्या । सप्तादित्यरश्मय इति वदन्ति ॥ ५ ॥ ( २६ )

**वननीयस्येति** । वामशब्दसाधनमुक्तमधस्तात् । **पालयितुः** तथाच "पल गतावि" (भ्वा० प०) तस्मात् "गत्यर्थाकर्मके"-(पा० ३-४-७२) ति कर्तरि क्तः । धातोश्च पालयतिना रक्षणार्थेन (चु० प०) विनिमयः । यद्वा पालयतेरेव "लौष्टपलितौ च"— (उ० ३-९२) इति निपातः । **ह्वातव्यस्य** । तथाच "ह्वेञ्स्पर्धायां शब्दे चे" (भ्वा० उ०) ति धातोर्बाहुलकात्कृत्यार्थे तृच् "बहुलं छन्दसि" (पा० ६-१-३४) इति ह्वः संप्रसारणम् ॥ **भरतेः** "भृञ्भरणे" (भ्वा० उ०) इत्यस्य **हरतिकर्मणः** हरणार्थस्य "नप्तृनेष्टृ" (उ० २-९५) इत्यादिना निपातः ॥ **तत्रेति** । अत्रेत्यनेन विपरिवर्तितं द्रष्टव्यम् । **सर्वस्य**—जगतो मानवादिप्रजावर्गस्य । "द्वौ विशौ वैश्यमनुजा"—विश्वमरः । अत्र मनुज इत्युपलक्षणम् ॥ **पातारं पालयितारं वेति** । अनेन पातेः पालयतेर्वा डतिः पतिरित्ययमभिप्रैति । **सप्तपुत्रम्** । सप्तसंख्याका रश्मय एव पुत्रा यस्य तम् । यद्वा **सप्तमपुत्रम्** अत्र मस्य लोपः पृषोदरादित्वात् । "सप्तमो ह्यसावादित्यः पुत्र" इत्येवमैतिहासिका मन्यन्ते । ब्राह्मणेऽपि च "मृतपितरमण्डमवापद्यत तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम इतिह विज्ञायते" अथ **वा** नैव संख्याभिप्रायकमेतत्किंतर्हि ? **सर्पणपुत्रम्** । **इत्येवम्** । सर्पणाः सृप्ताः मुहूर्तमप्यनवस्थायिनो रश्मय एव पुत्रा यस्य तम् । संख्यापक्षे निर्ब्रवीति—**सप्त सृप्ता संख्येति** । सृप्ता प्रवृद्धा । (उपरिगता) "सृप्लृ गतौ" (भ्वा० प०) कर्तरि क्तः । (पा० ३-४-७२) एवं सप्तसंख्योपेताः सर्पणक्रियायोग्या वा एत एव **आदित्यरश्मयः** आदित्यस्य पुत्रा **इति** मन्त्रविदः **वदन्ति** मन्यन्ते ॥५॥ (२६)

यथाचायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेयमपरा ऋगेतस्मिन्नेव सूक्त उदाह्रियते—

"सप्त युञ्जन्ति रथमेकचक्रमेकोऽअश्वो वहति सप्तनामा ॥ त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः ॥२॥ (ऋ० सं० २-३-१४)

**सप्तेति** । सप्त संख्योपेताः सर्पणा वा रश्मयः यम् **एकचक्रम्** एक एव ह्यसावन्तरिक्षे चरति, इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा (प्रकाशेन) **रथं** रंहणं (गन्तारमनारतम्) "रहि गतौ" (भ्वा० प०) "हनिकुषि०" इति (उ० २-२) थकन् बाहुलकात् । नकार-हकार-लोपश्च । आदित्यम् । **युञ्जन्ति** योजयन्त्यात्मना अन्तर्भावितण्यर्थः । उदयेनैव ह्यसावादित्यो-रश्मिभिर्युज्यते रंहणश्चासौ मुहूर्तमप्यनवस्थायित्वात् स **एकोऽ**सहाय एवाश्वः अशनो व्यापनः सर्वभूतानाम् । **सप्तनामा** सप्तस्तुतिः सप्तपुत्र इत्येवमादीनि सप्तसंख्याकानि नामानि स्तुतयो यस्य भवन्ति स **वहति** गच्छति । एवमादित्यप्रधानः पूर्वोऽर्धर्चो व्याख्यातो भाष्यकारेण-यथा—

**सप्त युञ्जन्ति रथमेकचक्रमेकचारिणं, चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा । एको अश्वो वहति सप्तनामादित्यः । सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वेदमपीतरन्नामैतस्मादेवाभिसन्नामात् ॥**

**एकचारिणमिति** । एक एव चरतीत्येकचारी तम् । "अर्धर्चादि"त्वात्पुन्नपुंसकम् (पा० २-४-३१) अथनिर्वचनमुक्त्वा साधनमाह—**चकतेर्वेत्यादि** । तथाच "चक तृप्तौ प्रतिघाते चे-"ति (भ्वा० आ०) धातोर्गत्यर्थेऽपि वृत्तिमनेकार्थत्वाद्धातूनां मन्यमानो रक्-प्रत्ययमाह बाहुलकात् । चरतेस्तु "पचाद्यच्" (पा० ३-१-१३४) कुगागमश्च । क्रामतेस्तु गत्यर्थस्य (भ्वा० प०) डे द्वित्वं (पा० ३-३-५८ वा.) बाहुलकात् । अथ सप्तनामेतिपदं निर्ब्रवीति—**सप्तास्मै** ००० **यन्ति** । "एतस्मिन्मण्डल" इति शेषः । अतोऽसौ सप्तनामा अथवा **सप्तैनमृषयो** नमन्ति **स्तुवन्तीति** । सप्तनामा । तथाच "णम प्रह्वत्वे शब्दे चे"ति (भ्वा० प०) धातोः संप्रदानेऽत्र नामन्निति निपात्यते (उ० ४-१५१) । अथ नामशब्दमत्र प्रह्वत्वे प्रयुक्तमर्थतो व्याचष्टे—**इदमपीतरन्नामैतस्मादेव, कस्मात् ? अभिसन्नामात्** । इति । एतच्च क्रियाभिधानं भावघञन्तेन । तथाच—स्वमर्थं (वक्तव्यम्) प्रत्याययितुमाभिमुख्येन सन्नमत्यनेनेति नाम । अत्रोपसर्गयोर्लोप ऐच्छिकोधातोरेव वा तावदर्थे वृत्तिर्यथोक्तं निरुक्तलक्षणे (पृ० ३-३० पं०) अभिसन्नमनं च प्रह्वीभवनमेव ॥

अथ—

## संवत्सरप्रधान उत्तरोऽर्धर्चः ॥

व्याख्यायते । कोऽसौ ? त्रिनाभिचक्रम् इति । नाभयादि-

---

१. "पातेर्डतिः" (उ० ४-५७) इति तु शाकटायनस्य ॥

२. ऐतिहासिकपक्षेहि—अदितिः पुत्रकामा कश्यपमुपतस्थाविति प्रस्तुते मित्रवरुणादिष्वदितिपुत्रेष्वस्यादित्यस्य सप्तमत्वम् ॥ ईदृशं महानुभावमादित्य(मण्डलान्तर्वर्तिनं पुरुष)महमपश्यमद्राक्षम् । भावनयाऽस्मत्वेन साक्षात्करोमीत्यर्थः । "योऽसावादित्ये पुरुषः सोऽसावहम्" इति । "तद्योऽहं सोऽसौ योऽसौ सोऽह"मिति च श्रुतिः । अस्याध्यात्मपरतया व्याख्यानं सायणभाष्ये द्रष्टव्यं, प्रकृतानुपयुक्तत्वादिह नोदङ्कितम् ॥

१. नामन्शब्दो हि "नामन्सीमन्नि०" (उ० ४-१५१) त्यादिना निपातित इह स्तुत्यर्थ उपन्यस्तः । अत्रान्तरोऽपि भाष्यकारेणास्योक्तोऽनुपदं तद्व्याख्यायां द्रष्टव्यः ॥

२. तथाचोक्तं "चक्रं चकनधर्मि, चकनं चलनमुच्यते, चरणधर्मि क्रमणधर्मि चे"ति ॥

त्प्रधानस्तथाहि—**त्रिनाभिचक्रम्** त्रिनाभिसंयुक्तं कालचक्रम्। **अजरम्** अजरणधर्माणं सर्वदैव नवम्। तथाच श्रुतिः "नवो नवो भवति जायमानः" इति। **अनर्वम्** "अप्रत्यृतमन्यस्मिन्" अनाश्रितमित्यर्थः। **यत्र** यस्मिन् **इमा** इमानि **विश्वा** विश्वानि सर्वाणि। **भुवना** भूतानि "शेश्छन्दसि बहुलम्" (पा० ६-१-७०) इति शेर्लोपः। **अधि** उपरि **तस्थुः** अभिसन्तिष्ठन्ते। आश्रितानि (सन्ति) विनाशमुपयान्ति। अत्र तिष्ठतेरेवाभिसंस्थाने वृत्तिर्निरुक्तलक्षणाभिनिवेशात् (पृ० ३-३० पं०) "संस्था"शब्दो विनाशे प्रयुज्यते। "संस्थितो मे पिता" 'संस्थितो यज्ञः' इति यथा। तथाचामरः "संस्थाधारे स्थितौ मृतौ" इति। (य) एवमुक्तलक्षणः सप्तचारी व्यापनः **सप्तनामा** सर्पणैः सप्तभिर्वा रश्मिभिर्युक्त एकचारी रंहणश्चादित्यो यथोक्तलक्षितलक्षणं कालचक्रं **वहति** उदयादारभ्य यावदस्तमनमनारतं वहनमिनिर्वर्तयति। यच्चेदमभिनिर्वर्त्यते कालचक्रं तदेतदुभयमप्यहं स्तौमीत्येवमस्य मन्त्रस्य पूर्वोऽर्धर्च आदित्यप्रधान उत्तरः संवत्सरप्रधानो व्याख्यातः ॥ २ ॥

अथ त्रिनामीत्यस्यार्थं वदन् संवत्सरप्रधानत्वमुत्तरार्धर्चस्योपपादयति—

## त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति ॥

त्रयस्तपस्याद्याश्चत्वारो मासा ग्रीष्मर्तुः शुच्याद्याश्चत्वारो मासा वर्षर्तुः। कार्तिकाद्याश्चत्वारो मासा हेमन्तर्तुरित्येवं त्रय ऋतवो यत्र सः। **संवत्सरः**। संवसन्त्यृतवोऽत्रेत्यर्थे "संपूर्वाच्चित्" (उ० ३-७२) इति वसेः सरः प्रत्ययः॥ "सः स्यार्धधातुके" (पा० ७-४-४९) इति सस्य तः। अनेनर्तुविभागेनैतदेवास्य त्रिनाभित्वमित्युपपादितम् ॥

## संवत्सरः संवसन्तेऽस्मिन्भूतानि ॥

**भूतानि** प्राणिनः। "भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते। प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना" इति मेदिनी॥ पदव्यत्यय आर्षः। एतच्च प्रसक्तानुप्रसक्तमुक्तम्। मैथुनाभिप्रायो वा स्यात्संवासः।

१. चक्रशब्देन हि पूर्वार्धर्चे आदित्य एवोक्त इहतु त्रिनाभीति विशेषयन्नाभिशब्देन त्रय ऋतव उच्यन्त इति तैः सन्नद्धं कालचक्रं संवत्सरात्मकमेव चक्रशब्देनोच्यत इति भावः॥

२. चकनधर्मिकं चकनं चलनमुच्यते चलनधर्मि क्रमणधर्मि वा॥

३. नहि संवत्सरस्य जरा नाम धर्मोऽस्ति॥

४. अप्रतिगतमनाश्रितमन्यत्र क्वचित्॥

५. उपसंहरन्नुभयोरर्धर्चयोरेकार्थत्वमुपपादयति—(य)एवमित्यादिना। यत्र (य) इति फलितमर्थमभिसम्बन्धुमुपढौकितम्॥

६. एतत्सर्वमनुपदं स्फुटीभविष्यति॥

७. ऋतुभिरसौ संवत्सरो नह्यते सन्नह्यते इत्यर्थः॥

८. यद्वा—"वस निवासे" (चु० उ०) "अनिलण्यन्ताश्रुदय" इति णिजभावे रूपम्॥

सूर्येण। तथाच "ग्रसु अदने" (भ्वा० आ०) अतोऽधिकरणे मक् धातोर्ग्रीभावः। षुगागमश्च। "ग्रीष्मः" (उ० १-१४९) इत्युणादिसूत्रेण निपातितः। "ग्रीष्म ऊष्मर्तुभेदयोः" इति मेदिनी॥

## वर्षा वर्षत्यासु पर्जन्यः ॥

तदेतत्प्रत्यक्षमेव। तथाच वर्षं वर्षणमत्रास्तीत्यर्थे "अर्शआदिभ्योऽच्" (पा० ५-२-१२७) इति मत्वर्थीयोऽच् टाप् (पा० ४-१-४) भूम्नि बहुत्वे स्त्रियाम्॥ "स्त्रियां भूम्नि वर्षाः" इत्यमरः॥

## हेमन्तो हिमवान् ॥

तत्र हि बहु हिमं भवति। तथाच "हन्तेर्मुट् हिं च" (उ० ३-१२९) झच् हिरादेशो मुडागमो गुणो झस्यान्तादेशश्च॥

## हिमं पुनर्हन्तेर्वा हिनोतेर्वा ॥

## ग्रीष्मः ग्रस्यन्तेऽस्मिन्रसाः ॥

**हन्तेः** हिंसार्थस्य **हिमं** तद्ध्योषधिवनस्पतीन्हन्ति। "हन्तेर्हि च" (उ० १-१४७) इति मक्। अथवा **हिनोतेः** वृद्ध्यर्थस्य "हि गतौ वृद्धौ च" (स्वा० प०) मन् बाहुलकेन (उ० १-१४१)॥ संज्ञापूर्वकत्वान्न गुणः॥ "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम्। शीतले वाच्यलिङ्गं स्यादि"ति मेदिनी॥ वृद्धिरत्र पुष्टिः तेन हि पुष्यन्ति यवादयः। गत्यर्थयोर्वोभयोः। तद्धि गमयति क्षयं भूतानि॥ "ग्रीष्मः" (उ० १-१४७) इति नियतितः॥

## अजरमजरणधर्माणम् ॥

अजरं हि तत्संवत्सरचक्रम्। **अजरणधर्माणम्** इति संवत्सरशब्दस्य पुंस्त्वाभिप्रायेण। चक्रे त्वजरणधर्मि। न हि संवत्सरस्य जरा नाम धर्मोऽस्ति॥

## अनर्वमप्रत्यृतमन्यस्मिन् ॥

अर्वम् इति ऋच्छतेर्वन्नन्तो "अवद्यावमाधमार्वरेफाः कुत्सिते" (उ० ५-५४) इति निपातः। प्रतिगतं सम्बद्धमन्यस्मिंस्तद्विपरीत**मनर्वम्** अनाश्रितमन्यत्र क्वचित्॥

अथ तुरीयपादं निगमस्य व्याचष्टे—

## यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते ॥

अवगतमेतन्मन्त्रार्थव्याख्यानेऽधस्तात्॥

## तं संवत्सरं सर्वमात्राभिः स्तौति— ॥

तमेतं **संवत्सरम्** उत्तरस्मिन्नर्धर्चे प्रकृत्य मन्त्रकृत् "त्रिनाभिचक्रम्" इत्येवमाद्याभिः **सर्वमात्राभिः** सर्वैः अवयवैः "**पञ्चारे चक्रे**" "**षडरे**" "**त्रीणि शतानि षष्टिश्च**" "**सप्त शतानि विंशतिश्च**" इत्येवंप्रकारैः **स्तौति**

१. तेन नित्यबहुवचनान्तो वर्षाशब्दः॥

२. अन्तर्भावितण्यर्थयोः॥

तस्मात्सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्दस्त्वृतुविषय इत्युपपद्यते—षण्णामृतूनां द्वौ द्वौ ऋतू समानस्वभावावित्यभिप्रायेण त्रित्वम् ॥

अधुना यथैतं सर्वमात्राभिः स्तौति तथोपपादयति—

"पञ्चारे चक्रे परिवर्तमान" इति

(ऋ० सं० २-३-१६-३)

अस्य "तस्मिन्नातस्थुर्भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः"। इति शेषः। ऋष्यादिकमत्र यथोक्तपूर्वमुन्नेयम् ॥ एवमग्रेऽपि ॥

**इति पञ्चर्तुतया ॥**

इति–अत्र **पञ्चर्तुतया** पञ्चर्तुरूपेण "संवत्सरस्य स्तुतिः"। इति शेषः। तथथा **पञ्चारे** पञ्च अराः चक्राङ्गानि यस्मिंस्तत्र पञ्चर्तुरूपैररैर्युक्ते **चक्रे** संवत्सरात्मके **परिवर्तमाने** संवत्सरपरिवत्सरादिरूपेण पुनःपुनरावर्तमाने सति । **तस्मिन्** कालचक्रे **विश्वा** विश्वानि सर्वाणि **भुवनानि** भूतजातानि **आतस्थुः** अधितिष्ठन्ति वर्तन्त इत्यर्थः ॥ कालचक्रे हि सर्वमेवेदं जगदधिरूढं बंभ्रमीति । अथैवमतिमहतापि सर्वभूतभरेणाक्रान्तस्य **तस्य** कालचक्रस्य "मध्ये वर्तमान" इति शेषः । **अक्षः** संवत्सराख्यः **भूरिभारः** प्रभूतभारोऽपि सन् **न तप्यते** न पीड्यते न भज्यते । अनारतं वहत्येव । अपि च **सनादेव** चिरन्तन एव सोऽक्षः **सनाभिः** समाननाभिकः "समानस्य छन्दसी–" (पा० ६–३–८४) ति सादेशः । सर्वदैकरूपनाभिरसौ **न शीर्यते** न भिद्यते । यथा लौकिकरथाक्षः अतिभरेण भग्नो भवति । अक्षघातेन च नाभिर्विवृता भवति । तद्वदत्र नास्तीत्यर्थः ॥ ३ ॥

ननु–कथं ज्ञायतेऽरशब्देनात्रर्तवोऽभिप्रेता इति ? नह्यत्र विशेषलिङ्गमृतूनामरत्वेऽस्ति । अपि चर्तवः षट् प्रसिद्धा इह च "पञ्चार" इति श्रूयते–अत्रोच्यते–सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिति । तथाच—

**"पञ्चर्तवः संवत्सरस्ये"ति च ब्राह्मणम् । हेमन्तशिशिरयोः समासेन ॥**

१. "आरा अङ्गे रथाङ्गस्य शीघ्रशीघ्रगयोरपि" इति शाश्वतः। इयर्तेराङ्पूर्वात् (जु० प०) पचाद्यच् (पा० ३-१-१३४)। आर्यते वा अङ् (पा० ३-३-१०४) भिदादित्वात् ॥ अत्रारमङ्गे इत्यपि पाठः ।

२. एतच्च हेतुगर्भं विशेषणम् । यतोऽयं सनाभिरत एव न तप्यते न शीर्यते वा । तथाच यद्यप्यसावतिभरेणाक्रान्तश्चिरन्तन एव च सन् सहसैव भंक्तुं शरितुं वा शक्यस्तथापि न भज्यते शीर्यते वा यतः सनाभिरथ किमेवमतिबलीयसाक्षेण घृष्यमाणा नाभिर्न तप्यते शीर्यते वा ? नाभिरादित्य एवाभिप्रेतोऽत्रेति गृहाण ॥

**समासेन** एकत्वेन । तस्मादुपपद्यते एव पञ्चर्तुत्वम् । ऋतूनामरत्वं चावयवस्तुत्यभिसम्बन्धात् ॥

"षळर आहुरर्पितम्" (ऋ० सं० २-३-१६-२)

**इति षड्ऋतुतया ॥**

**इति** । अत्र । **षड्ऋतुतया** षड्ऋतुरूपेण "संवत्सरस्य स्तुति" रिति शेषः । तथाच मन्त्रः "पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ॥ अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्" इति । **अस्यार्थः** । **पञ्चपादम्** पञ्चसंख्याक ऋत्वात्मकपादोपेतम् । हेमन्तशिशिरयोरेकत्वाभिप्रायेणैतत् । **पितरं** सर्वस्य प्रीणयितारं पालकमुत्पादयितारं वा । **द्वादशाकृतिम्** द्वादशमासप्रविभक्तविग्रहम् "द्वादशमासाः संवत्सरस्ये–"ति च ब्राह्मणम् । **पुरीषिणम्** पुरीषमुदकम् (निघं० १-१८) तदस्त्यस्मिन्तम् । मत्वर्थे इनिः (पा० ५-२-११५) वृष्ट्युदकेन तद्वन्तम् एवमुक्तलक्षणं संवत्सरं **दिवः** द्युलोकस्य **परे** परमे **अर्धे** स्थानेऽन्तरिक्षलक्षणे योऽयमवस्थित आदित्यस्तस्मिन् "तात्स्थ्यात्ताच्छब्द्य"मितिन्यायात् **अर्पितम् आहुः** । अविशेषेणान्ये ब्राह्मणाः । एतदुत्तरस्थितमत्राप्यनुषज्यते । यद्यत्रार्पितं तत्तदधीनमतः संवत्सरं परायत्तमाहुरित्यर्थः ॥ **अथ** पुनः । अपिचेति सायणः । **इमे अन्ये** य एते **उपरे** उपर्यवस्थिताः सप्तऋषयस्ते **विचक्षणम्** विविधानां सर्वभूतानां चष्टारं द्रष्टारम् एनमादित्यं **षडरे चक्रे** तस्मिन्संवत्सराख्ये **अर्पितमाहुः** । एतदुक्तं भवति—एकेऽमुमादित्यं दक्षिणोत्तररूपभिन्नगतेस्तीव्रमन्दादिभावस्य च कालाधीनत्वात्संवत्सराधीनत्वमाहुः । **अन्ये पुनः** संवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात्तदायत्तत्वमाहुरिति ॥ २ ॥

एवमेतस्यामृचि आदित्यसंवत्सरौ स्तूयेते । वक्ष्यति हि "चन्द्रमसा–वायुना–संवत्सरेणेति संस्तवः" इति । संवत्सरस्य चक्ररूपेण नाभ्यादिभिः स्तुतिरुपपद्यते ॥

१. एकत्वमनयोः कार्यकृतं, समानं हि शैत्यं प्रायेणोभयत्र भवति ॥

२. ऋतवो हि संवत्सरस्य पादास्तैरसौ पतति गच्छतीति ॥

३. पिपर्तेः "शृपृभ्यां किच्चे"–(उ० ४–२७) ति ईथन् ॥

४. "तस्मात्सर्वे ऋतवो वृष्टिमन्त इति ह विज्ञायते" तस्मात्संवत्सरसोदकवत्त्वमुपपद्यते इति हि दुर्ग आह ॥

५. अथवा सप्तचक्र आदित्यः स हि सप्तमी रश्मिभिश्चक्रते दीप्यते, तत्रेति दुर्गः ॥

६. सायणस्तु–उपरे उपरमन्तेऽस्मिन्नुपरताः प्राणिनोऽत्रेति वोपरः संवत्सरस्तस्मिन् । कीदृशे ? सप्तचक्रे–सप्तादित्यरश्मयस्तद्वारेण चक्रस्थानीया यस्य स तथोक्तः । यद्वा अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त सप्त चक्राणि पुनःपुनः क्रममाणानि यस्य तादृशे षडरे षड्ऋतव एव अरा नाभौ प्रत्यृताः संबद्धा यस्य तथोक्तलक्षणे संवत्सरे रथे इत्येवं व्याख्यत् ॥

**आराः प्रत्यृता नाभौ ॥**

**प्रत्यृताः** प्रतिगताः (संबद्धाः) **नाभौ** चक्रमध्ये। "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे" इति मेदिनी ॥ "णभ हिंसायाम्" (भ्वा० आ०) "इञजादिभ्यः" (पा० ३-३-१०८ वा०) इतीञ् ॥ **आराः** व्याख्याताः ॥

**षट् पुनः सहतेः ॥**

**सहतेः** "षह मर्षणे" (भ्वा० आ०) क्विप्। "हो ढः" (पा० ८-२-३१) इति हस्य ढत्वं जश्त्वचर्त्वे। षस्य सत्वं संज्ञापूर्वकमित्यनित्यमत्र न भवति ॥ ते हि पञ्चसंख्यामभिभूय वर्तन्ते। मर्षणं नाम प्रसहनं, तच्च क्षमा अभिभवश्चेति (सि० कौ०) दीक्षिताः ॥

**"द्वादशारं नहि तज्जराय"**
(ऋ० सं० २-३-१६-१)

**"द्वादश प्रधयश्चक्रमेकम्"**
(ऋ० सं० २-३-२३-२)

**इति मासानाम् ॥**

**इति**—एतौ पादौ **मासानाम्** "आरत्वे भवत" इति वाक्यशेषः ॥ तथाच मन्त्रः—(१)

"द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य। आपुत्रा अग्ने मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः" इति। **अस्यार्थः**—**ऋतस्य** उदकस्य, पूर्णम् सत्यात्मकस्य वाऽदित्यस्य स्वभूतम्। अथवा—यज्ञस्योङ्गभूतम्। **चक्रम्** पुनः पुनः क्रमणशीलं मण्डलाख्यं, रथचक्रं वा (कालाख्यम्) **द्याम्** द्युलोकस्य—अन्तरिक्षस्य व्यत्ययेन षष्ठ्यर्थे द्वितीया **परि** उपरि। यद्वा परितः **वर्वर्ति** पुनःपुनर्वर्तते सञ्चरति। कीदृशं तत्? **द्वादशारं** द्वादशसंख्याकमासात्मकैर्मेषादिराश्यात्मकैर्वा अरैः रथाङ्गावयवैर्युक्तम्। **तत्** चक्रम् **नहि जराय** न हि तज्जीर्यते अन्यानि भूतानि जरयत्। नैव खलु जरायै भवतीति वा अत्रार्थे लिङ्गव्यत्यय आर्षः। हे **अग्ने**! सर्वदा गमनयुक्तादित्य! "अगि गतौ (भ्वा० प०) "अङ्गेर्नलोपश्च" (उ० ४-५०) इति निर्नलोपश्च। यद्वा—अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वादसावग्निरित्युच्यते। **अत्र** अस्मिंस्त्वदीये चक्रे **मिथुनासः** स्त्रीपुंसरूपेण परस्परं मिथुनीभूताः **सप्तशतानि विंशतिश्च** विंशत्युत्तरसप्तशत-संख्याकाः **पुत्राः** पुत्रवदुत्पद्यमानास्त्वत्तः, प्राणिनां दुःखात्त्रातारो वा अहोरात्ररूपा **आतस्थुः** आतिष्ठन्ति निष्पद्यन्ते। व्यत्ययेन लिट्। षष्ठ्यधिकशतत्रयसंख्याकान्यहानि तावत्य एव रात्रयश्च इत्येवं तद्विभागः ॥ १ ॥

**अथापरो मन्त्रः (२)**

"द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः" इति। **अस्यार्थः**—**द्वादश** एतत्संख्याकाः **प्रधयः** परिधयः प्रहिताः (प्रश्लिष्य सम्भूय चक्रे निहिताः) वर्तन्ते मासाख्यास्ते **एकम्** अद्वितीयं **चक्रं** क्रमणस्वभावम् संवत्सराख्यं (चक्रं) भवति। आश्रितं वा तत्। तत्र पुनः **त्रीणि** त्रिसंख्याकानि **नभ्यानि** नाभ्याश्रयाणि फलकानि ग्रीष्मवर्षाहेमन्ताख्यानि आश्रितानि। अत्र "उगवादिभ्यो यत्" (पा० ५-१-२) इति हितार्थे यत् "नाभिनभं च" (ग० सू०) इति नभादेशः ॥ यथा सूर्यरथचक्रस्य द्वादशपरिधयो, नाभ्याश्रयाणि त्रीणि फलकानि सन्ति, तद्वत्कालचक्रस्यापीति **क उ** कोऽपि महान् **तत्** चक्रं **चिकेत** जानाति। **तस्मिन्** चक्रे **साकं** सह **शङ्कवो न** शङ्कव इव। अत्र पुरस्तादुपचरितोऽपि नशब्द उपमार्थीयोऽर्थक्रमानुरोधात्। **त्रिशताः षष्टिर्न** षष्ठ्यधिकशतत्रयात्मका आरास्तत्स्थानीयान्यहानि। अत्र नशब्दश्चार्थः। **चलाचलासः** चलाचलाः। असुक् (पा० ७-१-५०) चलनस्वभावानि। चलतेर्गत्यर्थात् (भ्वा० प०) अचि (पा० ३-१-१३४ वा०) द्वित्वमभ्यासस्यागागमश्च ॥ २ ॥

अथ व्याख्यानप्रसक्ते मासप्रधिपदे निर्ब्रवीति—

**मासा मानात्। प्रधिः प्रहितो भवति ॥**

इति मीयते हि तैः (मासैः) संवत्सरः। तथाच माते-र्मानार्थात् (दि० आ०) सस् औणादिको बाहुलकात्। यद्वा—मस्यते परिमीयतेऽयं, अनेन वा। "मसी परिमाणे" (दि० प०) कर्मणि घञ् (पा० ३-३-१९) उपधावृद्धिः (पा० ७-२-११६) **प्रहितः**। प्रश्लिष्य निहितः। प्रोपसृष्टाद्धधातेः क्ते हिः (पा० ७-४-४२) प्रधीयतेऽनेनेति वा। "उपसर्गे घोः

१. सत्यात्मकतयैव यज्ञस्यापि ऋतसंज्ञाऽत्र ॥

२. तथाचास्य योगे द्यामिति द्वितीया "अभितः-परितः-समया-निकषा-हा-प्रतियोगेऽपी"-ति (पा० १-४-४८ वा) दुर्गस्तु परि द्यां-परिगृह्य द्यां च पृथिवीं च ततो वर्वर्तीत्येवं व्याख्यत् ॥

३. तथाचात्र बहुव्रीहिर्बोध्यः। "अरमङ्गे रथाङ्गस्ये"ति शाश्वतः। अत्रारा अङ्गे इत्यपि पाठः "आराः प्रत्यृतानाभा"विति निरुक्तमत्रार्थे गमकम् ॥

४. अत्र दुर्गः—अग्निशब्दोऽस्मिन्मन्त्रे सम्बोधनान्तः षष्ठ्या विपरिणम्यते अग्नेः पुत्रा आतस्थुरिति। अग्निश्चात्रादित्य एवाभिप्रेतस्तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते, तत्कृतत्वादहोरात्राणाम्। इत्यादि ॥

१. तद्गतिवशादेव रात्रिन्दिवमुत्पद्यते।

२. एतच्च "त्र्यृतुः संवत्सर" इत्यत्रोक्तदिशा द्वौद्वावृतू समानस्वभावावेकतयोच्यत इत्यवगन्तव्यम् ॥

३. (१४ पृ.) नेति निपातमुपक्रम्य-प्रतिषेधार्थीयः पुरस्तादुपचार उपमार्थीयस्य चोपरिष्टादिति यत्प्रतिज्ञातं तत्प्रायिकमित्येतेन व्याख्यानेनावगम्यते। "शब्दक्रमादर्थक्रमो बलीयान्" इति न्यायोऽप्यत्र शरणम् ॥

४. अत्र चलानि चाचलानि चेति। विगृह्य चलान्यनवस्थायित्वात्। अचलान्यहोरात्रात्मभावं न मुञ्चन्तीति दुर्गव्याख्यानमन्यथापि विवरणमस्य सम्भवतीति पाण्डित्यप्राख्यबोधकम् ॥

कि:" ( पा० ३–३–९२ ) दधातेरेव ( जु० उ० ) धारणार्थस्य ॥ "गण्डपुच्छः प्रधिः पुमान्" इति रभसः । "चक्रान्तः प्रधिरि"त्यमरः[1] ॥

अथ प्रकृतमन्त्रोत्तरार्धं ब्राह्मणेन विवरिष्यन्निर्दिशति—

**तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥**

इति ॥

व्याख्यातमेतत् ॥ अथ कथं ज्ञायतेऽहोरात्राण्येवैतानीति ? तत्राह—

**"षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः[2] । इति च ब्राह्मणं समासेन ॥**

( ऐ० ब्रा० ३।१२ )

**समासेन** । अहोरात्रयोरेकत्वेन ।

अथ द्वादशारमिति पूर्वप्रकृतमन्त्रद्वितीयपादं ब्राह्मणेन विवरिष्यन्निर्दिशति—

**सप्तशतानि विंशतिश्च तस्थुः ॥**

व्याख्यातमेतत् । ब्राह्मणमपि चैतस्मिन्नर्थे प्रमाणयति—

**"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः" इति च ब्राह्मणमहोरात्रयोर्विभागेन—विभागेन ॥ ६ ॥ ( २७ )**

इति ॥ ( आरण्यकम् )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे नैग० काण्डे
चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥

**इति चेति** । चकारः पूर्वोक्तं ब्राह्मणवाक्यं समुच्चिनोति । स एषोऽहःसमान इत्यस्य वाक्यशेषः सायणेन दर्शितः ॥ तस्मादुपपद्यते[3] "सप्त युञ्जन्ती–" त्येतस्यामृचि संवत्सरप्रधानत्रिनाभिचक्रमित्येषोऽर्धर्चः । यमेयं[4] सर्वमात्राभिः स्तौतीति । विभागेनेति पदाभ्यासोऽध्यायसमाप्तिसूचकः ॥ ६ ॥ ( २७ )

**इति यास्कमुनिप्र० नि० शास्त्रे चतुर्थाध्यायस्य चतुर्थः पादोऽध्यायश्च
समाप्तः ॥ ४ ॥ ४ ॥ ❀ ॥**

---

१. "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमानि" त्यमरः ॥

२. अहानीति सायणसम्मतः पाठः । अर्थतो वा भाष्येऽनूदितः ॥

३. मन्त्रदृक् ॥

४. उपसंहरति ॥

## अथ पञ्चमाध्यायस्य प्रथमः पादः ।

तदेतत्सर्वमपि सप्तपुत्रं सर्पणपुत्रमित्येतस्मात्पदात्प्रसक्तानुप्रसक्तमुक्तम्[1]। प्रकृतमिदानीमैकपदिकसमाम्नायव्याख्यानमुच्यते—

तत्र पूर्वाध्याये "जहा" इत्यादिका द्वाषष्टिशब्दा अनवगताः संस्कारतोऽर्थतश्च, केचिदुभयतोऽपि, तत्र तावत् **सस्निम्** ( १ ) इत्येतदुभयतोऽनवगतम्[2] । तदेतन्मेघाभिधायीति निगमतो दर्शयति—

**"सस्निमविन्दच्चरणे नदीनाम्" ॥**

( ऋ० सं० ८–७–२७–६ )

**सस्निमिति** । अस्य "अपावृणोद्दुरो अश्मव्रजानाम् । प्रासां गन्धर्वो अमृतान्यवोचदिन्द्रो दक्षं परिजानादहीनाम् ॥" इति शेषः । विश्वावसोर्देवगन्धर्वस्य[3]येयमार्षम् त्रिष्टुप् । घर्मोत्सादने विनियुक्ता । **इन्द्रः नदीनाम्** नदनानाम् शब्दकारिणीनामपाम् । "णद् अव्यक्ते शब्दे" ( भ्वा० प० ) पचादिषु (पा० ३–१–१३४) नदट् इति टित्त्वनिपातना "टिड्ढे"ति (पा०४–१–१५)ङीप्। **चरणे** सञ्चरणस्थानेऽन्तरिक्षे **सस्निम्** संस्नातमद्भिः परिवेष्टितम् ( सर्वतः परिस्नुतं धौतं वा ) मेघम् **अविन्दत्** अलभत । लब्ध्वा च–**अश्मव्रजानाम्** अश्मा व्याप्तो मेघः (निघं० १–१०) "अशू व्याप्तौ" ( स्वा० आ० ) "अशिशकिभ्यां छन्दसि" ( उ० ४–१४४ ) इति मनिन् । तत्र व्रजन्तीनाम् । यद्वा–अश्मा–मेघो व्रजो गोष्ठं (निवासस्थानं) यासां तादृशीनामपाम् । **दुरः** द्वाराणि मेघान्निर्गमनप्रदेशान् **अपावृणोत्** अपावृतवान् (उद्घाटितवान्)। **अथवा**–अश्मसु शिलासु व्रजन्तीनां गच्छन्तीनां व्याप्तगमनानां वा नदीनां गङ्गायमुनादीनां चरणे सञ्चरणे ( प्रवहणे ) निमित्तभूते सति तदर्थमिति यावत् । इन्द्रः सस्निं मेघम् अविन्दत् अलभत । लब्ध्वा चान्तर्गतानामपां निर्गमसाधनानि मेघस्य दुरः द्वाराणि अपावृणोदपवृतवान् । तथा–**आसाम्** नदीनाम्[4] **अमृतानि** अम-

---

१. अस्य (६२) इति पदविषयोदाहरणे निगमप्रसक्तं सप्तपुत्रमित्येतत्पदमुपादायाध्यायान्तेन सूत्रसन्दर्भेण यदुक्तं तत् ॥

२. न विज्ञायते किमप्युक्तं भवति ? प्रकरणादत्र मेघोऽभिधेयः । अन्यत्रान्योऽपि कश्चित्स्यात् प्रकरणविशेषादेव । एवं सर्वत्रैवोपेक्षितव्यम् ॥ इदमत्रावधेयम् । अर्थाप्रतीतिरप्यनवगम इत्युच्यते । लक्षणासम्पन्नश्च संस्कारः खल्वपि अविज्ञातमित्युच्यते । तत्रैवं सति क्वचित्प्रकृत्यादेः संस्कारस्यानवगमः, क्वचिदर्थाप्रतीतिरेव । क्वचिदुभयस्याप्यनवगम इति ॥

३. गन्धर्वराजस्य ॥

४. अत्र दुर्गः–आसामपामस्य चेन्द्रस्य गन्धर्वः विश्वावसुः प्रावोचत् अमृतानि नामानि छान्दसस्तुतियुक्तानि, तानि हि नित्यत्वादमृतानि । आह कस्मात्पुनरस्येन्द्रस्यामृतानि प्रावोचदासां चापाम् ? इति । उच्यते–इतः । यस्मादसाविन्द्रः दक्षं दातारं मेघम् अयमासाम् अहीनामयनानाम् अपां द्वारेषु अपावृतेषु

रणसाधकान्युदकानि **गन्धर्वः** गोव्रजस्य धर्ता विश्वावसुरूपेण वर्तमान **इन्द्रः प्रावोचत्** प्रब्रवीति प्रवोढुमनुजानाति । वर्तमाने लुङ् ( पा० ३-४-६ ) । तथा **दक्षम्** दक्षति उदकं प्रयच्छतीति दक्षो वर्षणसमर्थो मेघस्तादृशं मेघम् "दक्ष वृद्धौ शीघ्रार्थे च" ( भ्वा० आ० ) पचाद्यच् ( पा० ३-१-१३४ ) इह दानार्थः । यो हि ददाति सोऽविलम्बेनैवेति शीघ्रार्थ एव । यद्वा चाहानेऽपि ॥ **अहीनाम्** मेघानां मध्ये **परि** सर्वतोभावेन **जानात्** जानाति ( समर्थोऽयमिति ) "ज्ञा अवबोधने" ( क्र्या० प० ) लेट्यडागमः "ज्ञाजनोर्जा" ( पा० ७-३-७९ ) ति जादेशः ॥ "इतश्च लोपः परस्मैपदेषु" ( पा० ३-४-९७ ) इतीकारस्य लोपः ॥ अत्र सस्निमिति "ष्णा शौचे" "ष्णा वेष्टने" वा० ( अ० प० ) "आ-दृ-गम-हन-जनः किकिनौ लिट् च" ( पा० ३-२-१७१ ) इति किन्प्रत्ययः । लिड्वद्भावाद्द्विर्वचनादि । "धात्वादेः षः सः" ( पा० ६-१-६४ ) एवमेतस्मिन्मन्त्रे "चरणे नदीनामविन्दत्" "अपावृणोद्ध दुरोऽश्मव्रजानाम्" "दक्षं च परिजानात्" इत्येकवाक्यतार्थसम्बन्धात् "सस्नि" शब्दो मेघविशेषणमुपपद्यते ॥

तदेतदाह—

## सस्निं-मेघम् ॥

अथ **वाहिष्ठः** ( २ ) इत्येतदनवगतम् । "वोढृतमः" इत्यवगमस्तदेतन्निगमेनाह—

## "वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ॥"

( ऋ० सं० ६-२-२९-१ )

## वोढृतमो ह्वानानां स्तोमो दूतो हुवन्नरौ ॥१॥

**वाहिष्ठ इति** । अस्य "युवाभ्यां भूत्वश्विना" इति शेषः । विश्वमनसो वैयश्वस्यैयमार्षम् पितुर्वा व्यश्वस्य । गायत्री, प्रातरनुवाकाश्विनयोः शस्यते । **नरा हे नरौ** ! सर्वस्य नेतारौ ! । "सुपां सुलुग्" ति ( पा०७-१-३९ ) औकारस्याकारः । एवमग्रेऽपि । **अश्विना** अश्विनौ ! **हवानाम्** हूयते आहूयते एभिरिति हवानि स्तोत्राणि "ऋदोरप्" ( पा० ३-३-५७ ) करणे । "ह्वः संप्रसारणं च" ( पा० ३-३-७२ ) बाहुलकात् । तेषां स्तोतॄणां स्तोत्राणां मध्ये **स्तोमः** स्तुतिविशेषः **वाहिष्ठः** वोढृतमः ( अतिशयेन वोढा ) आह्वातृतमः । अयमेव **दूतः** दूतभूतः **वां** युवाम् । "अतिशयेन व्याप्नुवन्" इति शेषः । **हुवत्** आह्वयत् ( अस्मत्प्रेरितोऽसौ मदीयः स्तोमः ) **युवाभ्यां भूतु** भवतु "प्रियकरः" इति शेषः । तथाच "रुच्यर्थानां प्रीयमाणः" ( पा० १-४-३३ ) इति चतुर्थी "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुक् "भूसुवोस्तिङि" ( पा० ७-३-८८ ) इति गुणाभावः ॥ १ ॥

अथ निगमप्रसक्तमुच्यते—

## नरा मनुष्याः । नृत्यन्ति कर्मसु ॥

**मनुष्या** अपि हि **नराः** उच्यन्ते, ते हि **नृत्यन्ति** गात्राणि पुनः पुनः विक्षिपन्ति **कर्मसु** उपस्थितेषु । तान्यनुतिष्ठन्तः ॥ तथाच नृत्यतेर्गात्रविक्षेपार्थात् ( दि० प० ) पचाद्यच् ( पा० ३-१-१३४ ) तलोपश्च पचादिगणे निपातनाद्गुणः ।

## दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा ॥

---

दानाय समर्थो भविष्यति—इत्येवं परिजानात् परिज्ञातवान् । परिज्ञाय च अपावृणोद्दुरोऽश्मव्रजानां तस्मादश्मेन्द्रस्यामृतानि नामानि प्रावोचदद्भिश्चानेन प्रकारेणेन्द्रेण सर्वमेवेदं जगद्भियत इलासामपि अनेन हेतुना प्रावोचदिति ॥ तदेतद्दुर्गमतेन गन्धर्वोऽन्य एव, नेन्द्रः । सायणमतेन तु यथोल्लिखितः ॥

१. वोढशब्दादतिशायने "तुश्छन्दसि" (पा० ५-३-५९) इतीष्ठनि "तुरिष्ठेमेयस्सु" (पा० ६-४-१५४) इति तृचो लोपः । उपधादीर्घश्छान्दसः ॥ अत्र दुर्गः—अथवाऽयमप्यस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात्संज्ञातं मेघमविन्ददलमतेन्द्रः पर्येष्यमाणः, क्वाविन्दत् ? चरणे नदीनाम्—अपामन्तरिक्षलोके । लब्ध्वा च स एवेन्द्रस्तं मेघं दक्षं दातारम् अहीनामपां परिजानात् । परिज्ञाय च समर्थोऽयमिति ततस्तस्य द्वाराण्यपावृणोत् । अश्मव्रजानामपामपोनिर्गमनाय । तत एतानि निर्गतानि अमृतानि उदकानि शस्यसम्पत्कराणि प्रावोचदिव प्राकथयदिव । असाविन्द्रो गन्धर्वः, आसां प्रजानां, जीवधमेमिरुदकैरसहदैरिति । "इन्द्रो गन्धर्वः, तस्य मरुतोऽप्सरसः" इति श्रूयते । तस्मादिन्द्रस्यापि गन्धर्वत्वमुपपद्यत एव स च गोः वज्रस्य धारयिता इति गन्धर्वः । इति ॥

२. क्षयनानामिति दुर्गस्तथा चायतेर्गत्यर्थादिन् ( उ० ४-११४ ) यकारस्य हकारो व्यत्ययेन । अहिर्मेघः ( निघं० १-१० ) एतेर्वा गत्यर्थस्य ( अ० प० ) इन्, गुणावादेशौ । यकारस्याहकारो व्यत्ययेन । एत्यन्तरिक्षे ॥

१. व्यश्वस्यापत्यस्य । अण् । ( पा० ४-१-९२ ) "न य्वाभ्याम्" ( पा० ७-३-३ ) ऐजागमः ॥

२. "ह्वेञ् स्पर्धायां शब्दे च" ( भ्वा० उ० ) "आज्ञाह्वानाध्वरा हवाः" इत्यमरः ॥

३. सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः ( सि० कौ० ) "ष्टुञ् स्तुतौ" ( अ० उ० ) "अर्तिस्तुसु-" ( उ० १-१४१ ) इति करणे मन् । "स्तोमः स्तोत्रेऽध्वरे वृन्दे" इत्यमरः ॥

४. वोढृशब्दात् "तुश्छन्दसी–" ( पा० ५-३-५९ ) ति इष्ठनि "तुरिष्ठेमेयःसु" ( पा० ६-४-१५४ ) इति तृचो लोपः ॥ उपधादीर्घश्छान्दसः । "वह प्रापणे" (भ्वा० प०) प्रापको ह्वायकश्चेति वैशिष्ट्यमस्यान्यत इत्ययमेव दूतो युवाभ्यां रोचेतेति भावः ।

५. एतच्च—सायण आह । व्यापनमत्र विषयीकरणं युवामेवास्य स्तुतिविषयौ ॥

६. प्रियकरोहि रोचते प्रीयमाणायेति रुच्यर्थत्वमस्य । भूत्विति शपो लुक् "बहुलं छन्दसि" ( पा० २-४-७३ ) इति ॥

जवतेर्गत्यर्थस्य "गत्यर्थाकर्मके" (पा० ३-४-७२) ति कर्तरि क्ते पृषोदरादित्वाज्जस्य दः "द्रुतनिभ्यां दीर्घश्च-" (उ० ३-९०) ति साधुः । स हि गच्छति प्रेरितः । अथवा द्रवतेर्गत्यर्थस्यैव (भ्वा० प०) द्रोर्दुभावः पृषोदरादित्वादेव । अथवा वारयतेर्वा ॥ अन्तिमो वाशब्द एवार्थे । स हि वारयत्यनर्थात् । पूर्ववत्साधुः ॥

अथात्र निगममुपन्यस्यति—

**"दूतो देवानामसि मर्त्यानामि"त्यपि निगमो भवति ॥**

स्पष्टोऽर्थः । अथ **वावशानः** (४) इत्यनवगतमवगमयति—

**वावशानो वष्टेर्वा वाश्यतेर्वा ॥**

**वष्टेः** कान्त्यर्थस्य वश् धातोः (अ० प०) यङ्लुकि शानचि रूपमिति श्रीनिवासः । अथवा **वाश्यतेर्वा** ॥ वाश्यतेरेव शब्दार्थस्य (दि० आ०) । अत्रोपधाह्रस्वत्वं व्यत्ययेन । (पा० ३-१-८५)

अत्र निगममुदाहरति—

**"सुप्त स्वसृररुषीर्वावशानः ॥"**

(ऋ० सं० ७-५-३३-५)

**इत्यपि निगमो भवति ॥**

सप्तेति । अस्य "विद्वान्मधु उज्जभारा दृशेकम् । अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य" इति शेषः ॥ त्रितस्याप्त्यस्येयमार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । **अग्निः विद्वान्** स्वीयमधिकारम् । सर्वं वा, जानानः **वावशानः** भृशं कामयमानो वाश्यमानः (शब्दं कुर्वाणो) वा **अरुषीः** आरोचमानाः । आङ्पूर्वाद्रोचतेर्दीप्त्यर्थात् (भ्वा० आ०) बाहुलकादुषच् टिलोपः । आङो ह्रस्वश्च । षिद्गौरादिभ्यश्च (पा० ४-१-४१) **सप्त** सप्तसंख्याकाः **स्वसृः** स्वयं सारिणीः कालीकरालीचेत्यादिकाः सप्तजिह्वाः । अर्चिषो वा । ता हि भगिन्य इव समानजन्मत्वात् । यद्वा सहसर्पणात् **मध्वः** मदकरायह्यात् **उज्जभार** उज्जहार ऊर्ध्वं हृतवान् "हृग्रहोर्भश्छन्दसि" (पा० ३-१-८४ वा०) इति हस्य भः । दीर्घ आर्षः । यद्वा स्वतेजसा प्रादुर्भूत इत्यर्थः ॥ किमर्थम् ? कं सुखेन सर्वेषामेव पदार्थानाम् **दृशे** दर्शनार्थम् । क्विप् । किञ्च **पुराजाः** सर्वदेवेभ्यः प्रथममेव जातः सोऽग्निर्द्यावा-पृथिव्योरन्तर्मध्ये **अन्तरिक्षे** तस्मिन् ता जिह्वाः **येमे** नियमितवान् । सर्वत्र तेजोयुक्तोऽवर्ततेत्यर्थः । अपि च **इच्छन्** यजमानान्कामयमानोऽग्निः । **पूषणस्य** पूष्णः । पूषेति पृथिवीनाम (निघं० १-१) पार्थिवस्य लोकस्य **वव्रिं** रूपम् (निघं० ३-७) पृश्निवर्णम् (शुक्लम्) **अविदत्** प्रायच्छत् । यद्वा-"मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्" इति मन्त्रान्तरे (ऋ० सं० ८-४-११-१) दर्शनादादित्यात्मनाग्निः स्तूयते । कामयमानः सूर्यात्मनाग्निः सप्तसंख्याकाः (नू) स्वसृः रश्मीन् सुष्ठु अस्यते क्षिप्यते दिग्विदिक्ष्विति सुपूर्वो "दसु क्षेपणे" (दि० प०) इत्यस्मात् "सावसे ऋन्" (उ० २-२६) इति ऋन्प्रत्ययः ॥ मध्वः समुद्रोदकात् (निघं० १-१२) उज्जभार उद्धृतवान्प्रातः । अन्तरिक्षे विद्युदात्मना स्थित्वा वृष्टिलक्षणं रूपं पृथिव्याः प्रयच्छतीति सायणः ॥ ५ ॥

एवमत्र "स्वसृर्वावशान" इत्यनेन सामानाधिकरण्याच्छन्दसारूप्याच्च "वावशान" इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वं चोपपद्यते ॥

अथ **वार्यम्** (५) इत्यनवगतमवगमयति—

**वार्यं वृणोतेरथापि वरतमम् ॥**

**वृणोतेः** "एतिस्तुशास्वृदृजुषः क्यप्" (पा० ३-१-१०९) इति क्यपि प्राप्ते "कृत्यल्युटो बहुलम्" (पा० ३-३-११३) इति ण्यति-वृद्धिः ॥ यद्वरयितव्यं भवति तद्वार्यमित्युच्यते । **अथापि** कदाचित् वार्यशब्देन यद् **वरतमं** श्रेष्ठतमं किञ्चिद्भवति तदुच्यते । तथाच निगमः—

**"तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ॥"**

(ऋ० सं० ६-२-२३-३)

आदित्यस्य मध्ये यदन्तरिक्षं तत्र येमे तत्रोपनियमितवांस्तद्धविः । पुराजाः अग्निः । सहि सर्वदेवेभ्यः प्रथमएव जातः । इच्छन्वव्रिं रूपं पूषणस्य पूष्ण आदित्यस्य । कथं नामासावादित्यो दीप्तरूपः स्यादतोऽन्तरादित्यस्य येमे । तत्रासावेतमर्थम् अविदत्-अलभत । सएवं दीप्तरूप आदित्यस्संवृत्त इत्यभिप्राय इत्याह ॥

१. तथाच स्वयंशब्दोपपदात्सृधातोः क्विबुगभाव "आगमशासनमनित्यम्" (पा० ९५) इति ॥

२. "मद तृप्तौ" (दि० प०) अस्माद्बाहुलकादुप्रत्ययो धान्तादेशश्च । माद्यन्तिहि तेन पीतेन प्राणिनः । वैयाकरणास्तु—मन्यतेऽतिशयेन जनैरिति मधु—"निदिति" (उ० १-९) वर्तमाने, "फलिपाटि०" (उ० १-१८) इत्यादिना उप्रत्ययो धोन्तादेशश्चेत्याहुः । "मधु क्षौद्रे जले क्षीरं मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे" इति विश्वः । अत्र यणार्षः । अत्र दुर्गः—मध्वः घृतस्य हविषः पूर्णं उज्जभार ऊर्ध्वं हृतवानेषां लोकानां दृशेकं दर्शनायेत्यर्थः । (अत्रार्थे कमिति पदपूरणः) ततश्च अन्तः

१. अत्राकारोऽनर्थक एवोपनिबद्धः । दृष्टश्चैवमन्यत्रापि निगमे नद्युत्र (नि० पृ० २४ । पं० १६) सर्वार्थपोषणात्पूषेति भट्टभास्करः ॥

२. तथाच पृश्निशब्दमुपादाय देवराज आह-प्रपूर्वादश्नोतेः स्पृशतेर्वा "घृणिपृश्नी"— (उ० ४-५२) त्यादिना निप्रत्ययः प्राशेः स्पृशेश्च पृशभावो निपात्यते । प्राश्नुत एनं शुक्लो वर्णः । संस्पृष्टो रसान् । संस्प्रष्टा भासं ज्योतिषामसृष्टो भासेति वा पृश्निरादित्य इत्येवम् । तथाचाग्निर्यजमानान्कामयमानः समुज्ज्वलनकृतेत्यर्थः ॥

**तद्वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यम् ॥ गोपायितारो यूयं स्थ युष्मभ्यमिति वा ॥**

**तद्वार्यमिति** । अस्य "मित्रो यत्पान्ति वरुणो यदर्यमा" इति शेषः । विश्वमनस इयमार्षम् उष्णिक् मैत्रावरुणे सूक्ते । हे स्तोतारः ! वयं **वार्यं** सर्वैर्वननीयं वरणीयं ( वरार्हं ) वा **तत्** तादृशं धनं यथेष्टमुपभोगार्हं **वृणीमहे** सम्भजामहे । "वृङ् सम्भक्तौ" (क्र्या० आ०) लट् । यद् **वरिष्ठम्** उरुतमम् । उरुशब्दो बह्वर्थस्तस्यातिशायन इष्ठनि वरादेशः ( पा० ६-४-१५७ ) **गोपयत्यम्** गोपायितव्यं यद्रक्षणार्हमित्यर्थः । वर्णलोप आर्षः । अथवा–गोपयत्यं गोपायितारो यस्य धनस्य यूयं स्थ भविष्यथ तद्वृणीमहे । अथवा **युष्मभ्यं** यौष्माकीणं यद्भवति तद्वृणीमहे । किञ्च–**यत्** धनं **मित्रः** सर्वेषां मित्रभूतः **वरुणः** शत्रूणां वारयिता **यत्** च **अर्यमा** सर्वदा गच्छन् एतन्नामकास्त्रयो देवाः ( मित्रावरुणार्यमाणः ) **पान्ति** नित्यकालमेव पालयन्ति ( अस्मदीयस्य धनस्य रक्षका भवन्ति ) **तद्वृणीमहे** ॥ ३ ॥

एवमत्र मित्रावरुणार्यमाणो यत्पान्ति तद्वार्यं वृणीमह इत्यभिसम्बन्धाद्वार्यशब्दो धनविशेषणमित्युपपद्यते ॥

अथान्धः ( ६ ) इत्यनवगतमवगमयति—

**अन्ध इत्यन्ननाम, आध्यानीयं भवति ॥**

एतद्ध्यनेकार्थमनवगतं च संस्कारेण । **अध्यानीय**मित्यर्थप्रतीतिः । प्रार्थनीयमन्नं भवति सर्वस्यैव । आध्यानं द्युत्कण्ठापूर्वकं स्मरणम् । "स्याच्चिन्ता स्मृतिराध्यानमि"त्यमरः । अद्यत इत्यन्धः "अदेर्नुम्धौ च" ( उ० ४-२०-६ ) इत्यसुन् । यद्वा "अन्ध दृष्ट्युपघाते" ( चु० उ० ) असुन् ( उ० ४-१८९ ) अन्धयत्येतद्बुभुक्षितमित्यत एवाध्यानीयं **भवति** ॥

तथाचात्र निगमः—

**"आमत्रेभिः सिञ्चतामद्यमन्धः ॥"**
( ऋ० सं० २-६-१३-१ )

**आसिञ्चतामत्रैर्मदनीयमन्धः ॥**

**आमत्रेभिरिति** । अस्य "अध्वर्यवो भरतेन्द्राय सोम" मित्यादिः । कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि" इत्यन्तः ॥ गृत्समदस्येयमार्षम् । त्रैष्टुभमैन्द्रम् । अतिरात्रे प्रथमे पर्याये शस्यते । होतुः शस्त्रे विनियुक्ता । गृत्समदो ब्रूते–हे **अध्वर्यवः**! अध्वरस्य नेतारः ! ( नि० १-८ ) **इन्द्राय** देवाय तदर्थमिमं **सोमम्** एतस्माद्धविर्धानादुत्तरवेदिं प्रति **भरत** हरत प्रापयत । "हृग्रहोर्भः–" ( पा० ३-१-८४ वा० ) ति हस्य भः । हृत्वा चैनम् **अमत्रेभिः** अमत्रैः ( अमा सह अदन्ति ) होत्रादयोऽत्रेत्यमत्राणि पात्राणि "पात्रामत्रं च भाजनम्" इत्यमरः । "अमत्रं पानभाजनम्" इति च ॥ ( सोमचमसाः ) तैः । पृषोदरादित्वात्साधुः । "बहुलं छन्दसि" ( पा० ७-१-१० ) इत्यैसभावः । लोके तु "अम गत्यादिषु" ( भ्वा० प० ) "अमिनक्षियजिवधिपतिभ्योऽत्रन्" ( उ० ३-१०५ ) वषट्कारे प्राप्ते सति **मद्यं** मदकरम् **अन्धः** सोमलक्षणमन्नम् ( अदनीयं वस्तु ) **आ-सिञ्चत** अग्नौ प्रक्षिपत । कुत एवं ब्रवीमि ? यतोऽसौ **वीरः** इन्द्रः **अस्य** सोमस्य **पीतिं** पानं **सदमित्** सदैव **कामी हि** कामयमानो हि–निश्चयेन । तस्मात् **वृष्णे** वर्षित्रे इन्द्रायास्मै **सोमम् जुहोत** जुहुत । "हु दानादनयोः" ( जु० प० ) ततो लोटि "तप्तनप्तनथनाश्च"– ( पा० ७-१-४५ ) ति तबादेशः, यत **एष** इन्द्रः **तत् इत्** तत्सोमप्रदानमेव **वष्टि** कामयते । "वश कान्तौ" ( अ० प० ) तस्मादासिञ्चतेममस्मै मा विलम्बध्वमिति भावः ॥ १ ॥

एवमत्र दानसम्बन्धादन्धःशब्दोऽन्नार्थ उपपद्यते । पठितमपि चान्ननामसु । अनेकार्थत्वात्तु सन्दिह्यत इत्येष निगम उपात्तः ॥

अथ निगमप्रसक्तमुच्यते—

**अमत्रं पात्रममा अस्मिन्नदन्ति, अमा पुनरनिर्मितं भवति ॥**

**अदन्ति** अश्नन्ति । **अमाशब्देन** यत् **अनिर्मितम्** अपरिमाणं किञ्चिद्**भवति** तदुच्यते । न हि तेषां परिमाणमस्ति यावन्तस्तस्मिन्नदन्ति । अतोऽमा अपरिमिता इत्यर्थः ॥

**पात्रं पानात् ॥**

पीयते हि तेन । तथाच पिबतेः पातेर्वा ष्ट्रन् ( उ० ४-१५९ ) "पात्रं तु कुलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि" इति हैमः ॥

अनेकार्थत्वमन्धःशब्दस्योपपादयति—

**तमोऽप्यन्ध उच्यते, नास्मिन्ध्यानं भवति । न दर्शनम् ।**

**ध्यानं** दर्शनम् **अस्मिंस्तमसि–न भवति** कृतम् । चक्षुषो दृष्टिनिरोधात् । लौकिका अपि दर्शननिरोधे सति—

**अन्धन्तम इत्यभिभाषन्ते ।**

अथादर्शनलक्षणां तमोऽन्धशब्देनोच्यत इत्याह—

**अयमपीतरोऽन्ध एतस्मादेव ॥**

**इतरः** अदर्शनलक्षणः । **एतस्मादेव** उक्तरूपात् । अत्र निगममाह—

**"पश्यद्क्षण्वान्न विचेतदन्धः ॥"**
( ऋ० सं० २-३-१७-१ )

---

१. एतदादिपदजातमध्याहृत्य व्याख्यातं भाष्यकारेणैवेत्यधोनिर्दिष्टं द्रष्टव्यम् ॥

१. अत्र निरिति निश्चितार्थे, अधिकं प्रक्षिप्तं धातोरेव तदर्थे वृत्तिरित्यभिसन्धाय, द्योतकाद्धिनिपाता इति ॥

इत्यपि निगमो भवति ।

**पश्यदिति** । अस्य "स्त्रियः सतीस्ताँउ मे पुंस आहुः" रित्यादिः । कुविर्यः पुत्रः स ईमाचिकेत् यस्ता विजानात्स पितुष्पितासत्" इत्यन्तः ॥ अस्यवामीये सूक्ते दीर्घतमस आर्षम् । त्रिष्टुप् । आदित्यान्तरपुरुष आह-**मे** मदीया या दीधितयः **स्त्रियः** संस्त्यानवत्यो योषितः **सतीः** सत्यः । योषिद्वदुदकरूपगर्भधारणात्स्त्रीत्वम् । येषां रश्मीनामाविष्टलिङ्ग-त्वात्स्त्रीलिङ्गता **तान् उ** तान् रश्मीनेव **पुंस आहुः** प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः । प्रतिनिर्देश्यापेक्षया पुल्लिङ्गता । अमुमर्थमत्यन्तनिगूढम् । **अक्षण्वान्** ज्ञानदृष्ट्युपेतः ( सूक्ष्मदृष्टिः ) "छन्दस्यपि दृश्यते" ( पा० ७-१-७६ ) इत्यनङ् । कश्चिन्महान् **पश्यत्** जानाति । **अन्धः** अतथारूपः स्थूलदृष्टिः **न विचेतत्** न विचेतयति न जानाति । किञ्च **यः कविः** क्रान्तदर्शी ( पारदर्शी ) **पुत्रः** स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः । पुरु जगतां त्राता वृष्ट्युदकलक्षणोऽस्ति **स ईं** स एव पुत्रः । यद्वा स ईमेनमर्थं स्त्रीणां सतीनां पश्चात्पुरुषभावम् **आचिकेत** सर्वतोभावेन जानाति । ( पित्रोः स्थितिं पुत्र एव जानाति नान्यः ) **यः** कश्चित् । **ता** तानि "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः ॥ **विजानात्** स्त्रीपुरुषपुत्ररूपाणि जानीयात् । लिङर्थे लेटो रूपम् । **स पितुः** वृष्ट्या जगत्पालकस्य रश्मिसमूहस्य ( अपि ) **पिता** आदित्यः **सत्** भवति । आदित्य एव भवतीत्यर्थः । यद्वा लौकिकोक्तिरियं यस्तानि जानाति स पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति । पुत्रपौत्रादिसहितश्चिरकालं जीवतीत्यर्थिदैवतम् । **अथाध्यात्मम्**-या इदानीं **स्त्रियः सतीः** स्त्रीत्वं प्राप्ता **आहुः**लौकिकाः **ताँउ** तानेव **मे** मह्यं **पुंसः** पुरुषानाहुः प्रतिपादयन्ति तत्त्वज्ञाः । कथमन्यस्यान्यभावः? उच्यते-एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनस्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः । श्रूयते हि "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी"त्यादि । अनेन स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति । स्मृतिरपि तदभावं बोधयति-"नैव स्त्री न पुमानेष नैव चायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स चोच्यत"इति । द्वितीयः पादः पूर्ववत् । किञ्च **पुत्रः** वयसाऽल्पोपि **यः कविः** क्रान्तप्रज्ञो ज्ञानी स्यात्सः **ईमिममर्थं आचिकेत** विजानाति । एवमुक्तलक्षणस्य परमात्मनस्**ता** तानि स्त्रीपुंस्त्वादीनि **यो विजानात्** औपाधिकानि जानीयात् **स पितुः** स्वोत्पादकस्यापि ज्ञानरहितस्य **पिता सत्** पितृवत्पूज्यो भवति ॥ उक्तमेवार्थमभिप्रेत्य ताण्डकब्राह्मणम्-"शिशुर्वाङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत्स पितॄन्पुत्रकाः! इत्यामन्त्रयत" इत्युपक्रम्य "तं पितरोऽब्रुवन्नधर्मं करोषि यो नः पितॄन्सतः पुत्रका इत्यामन्त्रयस इति, सोऽब्रवीदहं वाव पिताऽस्मि यो मन्त्रकृदिति, देवानपृच्छन्त ते देवा अब्रुवन् एष वाव पिता यो मन्त्रकृदिति तद्धै स उदयजत्" इति । मन्त्रद्रष्टुरेव पितृत्वं तत्त्ववित् पितुः पिता भवतीति किमाश्चर्यमिति भावः ॥ १ ॥

एवमेतस्मिन्मन्त्रे य एवाक्षण्वान् भवति स एव पश्यतीत्यस्य सन्निधौ न विजानात्यन्ध इत्यन्धःशब्दप्रयोगाददर्शनलक्षणं तमः अन्धःशब्देनोच्यत इत्युपपद्यते ॥

अथ **असश्चन्ती** ( ७ ) इत्येतदनवगतमवगमयन्निगममेव तावदुदाहरति—

"असश्चन्ती भूरिधारे पयस्वती ॥"

( ऋ० सं० ५-१-१४-२ )

**असश्चन्तीति** । अस्य "घृतं दुहाते सुकृते शुचिव्रते । राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम्" इति शेषः ॥ भरद्वाजस्यार्षम् जागतम् द्यावापृथिवीदेवताकम् । अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्यावापृथिवीये निवद्धानीये सूक्ते शस्यते-**असश्चन्ती** असज्यमाने ( असंश्लिष्यमाणे परस्परतः ) व्युदस्यन्त्यौ वा **भूरिधारे** बहुधारे ( दिवो वृष्टिधाराः पृथिव्याश्चाहुत्युद्भूतरसधाराः एवमुभयोरपि बहुधारत्वम् ) बहूदकप्रक्षरणस्वभावे एव, अथवा बहुभूतं धारयित्र्यौ इति दुर्गः । **पयस्वती** उदकवत्यौ । **शुचिव्रते** शुचिक्रिये ( शुक्लकर्मणी ) द्यावापृथिव्यौ व्रतमिति कर्मनाम ( निघं० २-१ ) **सुकृते** शोभनकारिणे यजमानाय **घृतम्** शस्यादिसमृद्धिहेतुभूतमुदकम् **दुहाते** प्रपूरयेते इतरेतरसम्भोगेन । अथ प्रत्यक्षस्तुतिः-**हे रोदसी** द्यावापृथिव्यौ! **अस्य भुवनस्य** भूतजातस्य **राजन्ती** देदीप्यमाने, स्वैः स्वैस्तेजोभिः । यद्वा ईशाते, राजतिरैश्वर्यकर्मा ( निघं० २-२१-४ ) युवां **अस्मे** अस्मासु **रेतः**

१. अत्र दुर्गः-त्रायतेः पालनार्थस्य स्त्रीशब्दो निरुच्यत इत्युपक्रम्य-रश्मयो नाडीभिरध्यात्मिकीभिः अनुप्रविश्य प्राणिशरीरेष्वन्नपक्तिं कुर्वन्ति ततः स्थितिरुपजायते । ता एव च वर्षप्रदानेन कृत्स्नं जगत्त्रायन्ते तस्मात् ( त्राणात् ) स्त्रिय एताः । तानिति नकारान्तं पदम् । उ इति पादपूरणे एव । तानेवंलक्षणात्रश्मीन् पालयितॄन्सतः मे ममेति मन्त्रकृदात्मानं निदर्शयति । ममैतान्पुंस आहुः । एत एव रश्मयो "बहुप्रजानाः" इत्येवं ब्रह्मविद आहुः । एत एवान्नपक्त्यादिनोपकारेणोपकुर्वन्ति । जगत्त्रायन्ते, एत एव च बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्ति इत्यभिप्रायः । आदित्यान्तःपुरुषोहि बुध्यधिदेवता, तदवयवभूताश्च रश्मयः । तेन क्षान्तगैता अध्यात्मे पुरुषस्य विज्ञानमुपहरन्ति अतस्तेषां बहुप्रजावत्त्वमुपपद्यते । इत्येवं व्याख्यत्समानमन्यत् ॥

१. दुर्गस्तु-सुकृते इति प्रथमाद्विवचनान्तमित्यभिप्रैति । तथाच सः-सुकृते शोभनकृते । अथवा शोभनानां स्वाधिकारयुक्तानां कर्मणां कर्त्र्यौ इति ॥

२. रोधसी रोधयित्र्यौ ये एते एवंलक्षणे द्यावापृथिव्यौ ते इति दुर्गः ॥

३. असे असमभ्यं रेतः उदकम् सिञ्चतम् अभिमते काले ।+ ++शस्यसम्पत्करमिति दुर्गः ॥

प्रजननसमर्थं वीर्यम् **सिश्चतं** आक्षरतम् यत् रेतः **मनुः** मनुष्येभ्यो **हितम्** भवति तत् ॥ अत्रापत्यार्थस्य प्रत्ययस्य सहैव सुप्रत्ययेन लुगार्षः ॥ २ ॥

एवमेतस्मिन्मन्त्रे "भूरिधारे" इत्येवमादिभिः समानविभक्त्यन्तत्वात् "असश्चन्ती" इति द्यावापृथिवीविशेषणमुक्तार्थकमुपपद्यते ॥ तदेतदाह—

**असज्यमाने इति वा व्युदस्यन्त्याविति वा । बहुधारे उदकवत्यौ ॥**

**असज्यमाने** न हि ते सज्येते परस्परतः । **अव्युदस्यन्त्यौ** । अनुपक्षियन्त्यौ अविपर्यस्यन्त्यौ वा । न हि ते उपक्षीयेते विपर्यस्येते वेति सश्चतिर्गतिकर्मा ( निघं० २–१४ ) प्यत्रास्यतेरर्थे वर्तते । लटः शतरि ङीपा नञ्समासः । अवक्षिपन्त्यावाश्रिते वा द्यावापृथिव्या उच्यते इति देवराजयज्वानः प्राहुः ॥

**वनुष्यतिर्हन्तिकर्माऽनवगतसंस्कारो भवति ।**

अथ **वनुष्यतिः** ( ८ ) वनुष्यधातुः **हन्तिकर्मा** हन्त्यर्थे वर्तमानः । अत्र—

**"वनुयाम वनुष्यतः ॥"**

( ऋ० सं० ६–३–२५–१ )

**इत्यपि निगमो भवति ॥**

"यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा । अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्युवो, वनुयाम वनुष्यतो, नभन्तामन्यके समे" इति । नाभाकस्येयमार्षम् । महापङ्क्तिः । इन्द्राग्निदैवत्या । महाव्रते निष्कैवल्ये शस्यते । हे **इन्द्राग्नी !** **यत्** यदा **इमे जनाः** लोकाः ( येऽस्मदीयाः परकीयाश्च सन्ति ते उभयेऽपि ) **तना** सन्तत्या यद्वा तना धनेन ( निघं० २–१०–१९ ) निमित्तभूतेन ( जेतव्येन पुरस्कृतेन ) **गिरा** वाचा **विह्वयन्ते** व्यत्ययेनेतरेतरं विजिगीषुतया आह्वयन्ते तदा युवाम् **अस्माकेभिः** अस्मदीयैः । अत्रादिवृद्ध्यभावः "संज्ञापूर्वको विधिरनित्य" इति परिभाषणात् (९४) । **नृभिः** मनुष्यैः "संहितौ भूयास्त"मिति शेषः । ते **वयं** नाभाकाः युवाभ्यां सहिताः **पृतन्यवः** पृतनां ( तत्कर्म युद्धम् ) इच्छन्तः । "क्याच्छन्दसी—" (पा० ३–२–१७०) तीच्छार्थक्यजन्तादुः । **सासह्याम** पुनः पुनरभिभवेम "शत्रून्" इति शेषः । किञ्च **वनुष्यतः** हन्तॄन् **वनुयाम** हन्म इत्यर्थः । **अन्यके** कुत्सिता अन्ये **समे** सर्वे **नभन्ताम्** नाभूवन् । अत्र नभतिरभावे । प्रार्थनायां युवयोरनुग्रहात्सर्वानप्येतानिह समेतान्हन्म इत्यभिप्रायः ॥ १ ॥

एवमेतस्मिन्मन्त्रे "सासह्याम पृतन्यत" इत्येतस्मिन्संग्रामाधिकारे वनुष्यते-र्हन्त्यर्थत्वमुपपद्यत एव । न हि संग्रामे ततोऽन्यत्किञ्चित्कर्तव्यमस्ति ॥

अथात्र वनुष्यतः क्रुध्यतिकर्मसु ( निघं० २–१२–८ ) पाठाद्वनुष्यतः स्तुतिमिच्छत इति विवरणादल्पप्रयोगविषयत्वाच्च निगमान्तरमप्युपन्यस्यति—

**"दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥"**

( ऋ० सं० ५–६–३–१ )

**दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं–दुर्धियं पापधियम् ॥**

**दीर्घप्रयज्युमिति** । अस्य "इन्द्रावरुणा युवमध्वराय नो विशेजनाय महि शर्म यच्छतम्" इत्यादिः ॥ वसिष्ठस्येयमार्षम् । जगती । तार्तीयसवनिकीये मैत्रावरुणस्य शस्त्रे विनियुक्ता । हे **इन्द्रावरुणा** इन्द्रावरुणौ । औकारस्याकारः ( पा० ७–१–३९ ) **युवम्** युवाम् **नः** अस्माकं **विशे** निवेशयित्रे जनाय "द्वौ विशौ वैश्यमनुजा–" वित्यमरः । (परिचारकाय पुत्रपौत्रादिलक्षणाय ) अथ च **अध्वराय** यज्ञाय ( यज्ञानुष्ठानार्थम् ) **महि** महत् **शर्म** गृहं सुखं वा ( निघं० ३–५+६–२१+४ ) **यच्छतम्** प्रयच्छतम् । अपिच **दीर्घप्रयज्युम्** दीर्घप्रततयज्ञं (नित्ययायजूकमग्निहोत्रिणम्) अस्मदीयं जनं यः शत्रुः **अतिवनुष्यति** अतिजिघांसति **पृतनासु** संग्रामेषु **दूढ्यः** दूढ्यं दुर्धियं ( पापधियं ) तं **वयं जयेम** अभिभवेम "जिजि अभिभवे" ( भ्वा० प० ) लिङ् । अभिभवोऽत्र न्यूनीकरणम् ॥ १ ॥

एवमत्रापि प्रकरणात् वनुष्यतिर्हन्त्यर्थः । अथ व्याख्यानप्रसक्तमुच्यते—

१. अत्र स्कन्दस्वामिनः "वनोतेः कण्वादिप्रक्षेपात् यक्प्रत्ययस्तत्सन्नियोगेन च वनुर्भावो द्रष्टव्यः" इत्याहुः ॥ यद्यप्ययं याचने पठितः (त० आ०) (चान्द्रमतेऽयं परस्मैपदी) तथापि हिंसायामयमनूद्यते स्वादौ (प०) ॥

२. महद्युक्थे शस्यत इति दुर्गः । अस्याः पुनरष्टाक्षराः षट्पादाः । छन्दसां पुनरनुक्रमण्यां शौनकेनाभिमस्तौपीलत ( ऋ० सं० ६–३–२२–१ ) आरभ्य जागतानि त्रीणि सूक्तानि अनुक्रान्तानि तेषामपीयं मध्ये । इति च ॥

३. "तनु विस्तारे" ( त० प० ) पचाद्यच् ( पा० ३–१–१३४ ) तृतीयैकवचनस्य "सुपां सुलुक्" ( पा० ७–१–३९ ) इत्यादिनाऽऽकारः ॥

१. अत्र "पृतन्यत" इति सायणाभिमतः पाठः । "ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः" इत्यमरः ॥

२. सायणमते न शेषापेक्षास्ति ॥

३. मद्रिपवः । अत्र कुत्सार्थेऽकच् ( पा० ५–३–७४ )

४. यद्यप्ययं हिंसायां पठितः ( भ्वा० आ० ) तथाप्यभावेऽपीति ( सि० कौ० ) दीक्षितचरणाः प्राहुः ॥

५. अत्र सुब्व्यत्यय आर्षः ( पा० ३–१–८५ ) दुर्धियः शत्रूनिति सायणव्याख्यानम् ॥

## पापः पाताऽपेयानाम् ॥

अपेयान्यलेह्यानि यानि तान्यसौ विषयप्रसक्तः पिबतीत्ययं **पापः**। तथाच "पा पाने" ( भ्वा० प० ) इत्यस्मात् "पानीविषिभ्यः पः" ( उ० ३-२३ ) इति पः ॥

## पापत्यमानोऽवाङेव पततीति वा । पापत्यतेर्वा स्यात् ॥

अथवा-पापत्यमानः पुनः पुनः पात्यमानः । तेनैव पापेन कर्मणा **अवाङेव** नरकमेव **पततीति** पापः । अत्रार्थे द्विधातुजत्वं पृषोदरादित्वादभिप्रैति । अथ **वा-पापत्यतेर्यङ्** लुगन्तात् पापः **स्यात्** । अत्रार्थे पापत्यतेः पादेशः । पश्च प्रत्ययः पूर्वेणैव ।

## तरुष्यतिरप्येवंकर्मा ॥

"तरुष्यति" ( ९ ) **अपि एवंकर्मा** हन्त्यर्थः[1]। यद्यप्ययं गत्यर्थे नैरुक्तैः पठितस्तथापि मृत्युं तरति तरति ब्रह्महत्यामित्यादि दर्शनाद्विनाशार्थस्तरतिस्तस्यैवोकारषकारावुपजनावित्याहुः ॥ अत्र निगममुदाहरति—

### "इन्द्रेण युजा तरुषेम वृत्रम् ॥"

( ऋ० सं० ५-४-१५-२ )

## इत्यपि निगमो भवति ॥

**इन्द्रेणेति** ॥ अस्य "ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि । वाजो अस्माँ अवतु वाजसातौ" इत्यादिः । वसिष्ठस्येयमार्षम् । त्रिष्टुप् । अविवाक्ये तृतीयसवने वैश्वदेवे शस्त्रे आर्भवे सूक्ते निविद्धानीये शस्यते । ऋभवो नाम देवास्तैः सहेन्द्रोऽत्र स्तूयते । उरु भवन्ति भान्तीति वा ऋभवः । उरुशब्दादुपपदाद्भातेर्भवतेर्वा "मृगय्वादयश्च" ( उ० १-३७ ) इति कु प्रत्ययः । उरुशब्दस्यादिलोपः संप्रसारणं, टिलोपश्च धातोर्निपात्यते । तथा चायमर्थः—

हे ऋभवः! **वयम् ऋभुभिः** उरुभाभिर्युष्माभिः सह **ऋभुः** ऋभवः । जसः सुः (पा० ७-१-३९) उरुभासः सन्तः । **विभुभिः** प्रभूतबलैर्युष्माभिः सह **विभ्वः** विभवः प्रभूतबलाश्च सन्तः । **वः** युष्माकं **शवसा** बलेन[1] ( निघं० १-१२-४१ ) **शवांसि** बलानि शत्रूणाम् । **अभिस्याम** अभिभवेम । किञ्च **वाजः** एतत्संज्ञकऋभुर्देवः । **वाजसातौ** सङ्ग्रामे ( निघं० २-१७-३६ ) **अस्मान् अवतु** रक्षतु । अपिच **युजा** सहायभूतेन **इन्द्रेण वृत्रं** शत्रुं वयं **तरुषेम** हनाम ।

१. यद्यप्ययमुदकार्थेषु पठितः । धातुश्च शवतिर्गत्यर्थे (निघं० २-१४-१७) तथापि सहः शवः ओज इत्येवं पर्यायेषु पाठादिह बलार्थ उपन्यस्तः । "टुओश्वि गतिवृद्ध्योः" ( भ्वा० प० ) "श्वेः संप्रसारणं च" (उ० ४-१८८) इत्यसुन् । श्वयति वर्ध्यतेऽनेनेति शवो बलम् ॥

तरतेर्विध्यादौ लिङ् उः शप् सिप्चेति त्रयो विकरणाव्यत्ययेन ( पा० ३-१-८५ ) ॥ २ ॥

एवमिहाभिभवाधिकारात्तरुष्यतिर्हन्त्यर्थ उपपद्यते ॥

## भन्दना भन्दतेः स्तुतिकर्मणः ॥

भन्दनाः ( १० ) इत्येतत् **स्तुतिकर्मणः** स्तुत्यर्थस्य **भन्दतेः** "युच्बहुलम्" ( उ० २-७४ ) इति युच् । योरनः ( पा० ७-१-२ ) टाप् ॥ अस्याख्यातपदसम्बद्धमुदाहरणं निगमयति—

### "पुरुप्रियो भन्दते धामभिः कविः ॥"

( ऋ० सं० २-८-२०-४ )

## इत्यपि निगमो भवति ॥

**पुरुप्रिय इति** । अस्य "पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ॥ आविवेश रोदसी भूरिवर्पसा" इत्यादिः ॥ विश्वामित्रस्येयमार्षम् जगती । पृष्ठ्यस्य प्रथमेऽहनि आग्निमारुते शस्त्रे निविद्धानीये, वैश्वानरीये सूक्ते शस्यते ॥ **यज्ञानां पिता** पालयिता । **विपश्चितां** प्रज्ञावतां ( विदुषां स्तोतॄणाम् ) मध्ये **असुरः** प्रज्ञावान् । असुरिति प्रज्ञानाम ( निघं० ३-९-६ ) रो मत्वर्थीयः । **विमानम्** विमीयते निर्मीयतेऽग्निहोत्रादिकमैद्वारेण जगदनेनेति ल्युट् करणे (पा० ३-३-११७ ) । कर्मसाधनमिति यावत् । **वाघताम्** मेधाविनामृत्विजाम् **वयुनं च** प्रज्ञानं चायम् **अग्निः भूरिवर्पसा** पार्थिववैद्युतादिबहुविधरूपेण **रोदसी** द्यावापृथिव्यौ । **आविवेश** प्रविशतिस्म । तमेवंगुणयुक्तमग्निं **पुरुप्रियः** बहुकामप्रियः स्तोता । पुरु इति बहुनाम ( निघं० ३-१-३ ) **कविः** क्रान्तदर्शी ( विद्वान् ) **धामभिः** नामभिरनेकप्रकारैः **भन्दते** स्तौति ॥ ४ ॥

अत्र पुरुप्रियः स्तोता धामभिरग्नेः किमन्यत्स्तुतेः कुर्यात्? तस्मादुपपद्यतेऽस्य स्तुत्यर्थत्वम् ॥ अथास्यैव ( भन्दतेः ) नामरूपसम्बद्धमुदाहरणान्तरं यथाप्रकृतं निगमयति—

१. यद्यप्ययं पाणिनीयैः "भदि १२ कल्याणे सुखे च"ति पठितः । तथापि-"वदि ११ अभिवादनस्तुत्योः" इति स्तुत्यर्थे चकारः समुच्चिनोति । इत्यसकृदवोचाम ॥

२. साधनापेक्षमिह नपुंसकत्वम् । ऋत्विजो ह्ययमेवाग्निर्विशिष्टं यज्ञसाधनमिति मन्यन्ते । कोशेतु "विमाने व्योमयाने च सप्तभूमिगृहेऽपि च । घोटके यानपात्रे च पुन्नपुंसकयोर्मत" इत्युक्तम् ॥

३. वहन्ति प्रन्यार्थमिति वहेः "संश्चत्तृम्पद्वेहद्दि०" ( उ० २-८९ ) त्यादिनाऽतिप्रत्ययः । उपधावृद्धिर्हकारस्य घकारश्च निपात्यते ( निघं० ३-१६-२४ )

४. निघं० ३-८-१०

५. "धाम रश्मौ गृहे देहे नाम्नि शक्तौ च जन्मसु" इति शाश्वतः ॥

**"स भन्दना उदियर्ति प्रजावती–"रिति च ॥**

( ऋ० सं० ७–३–२०–१ )

**स भन्दनेति** । अस्य "विश्वायुर्विश्वाः सुभरा अहर्दिवि । ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्दविन्द्रमस्मभ्यं याचतात्" इति शेषः ॥ भौमस्यात्रेरार्षम् । जगती । पावमानसौमी । **सः** एषः ( यः "यदि मम याज्ञं कर्मोपनमेत्तत्सुयामहमेतं सोमं तत्रेति" एवं नित्यकालमाशास्ते ) । साम्प्रतमस्मिंस्तोमकर्मणि उपनीते **विश्वायुः** सर्वायुः ( परिणतवयाः ) यद्वा विश्वमयतीति विश्वायुः सर्वत्राप्रतिहतप्रज्ञानः । सन् **प्रजावतीः** प्रजासंयुक्ताः प्रजालिङ्गाः ( प्रजारूपफलदात्र्यः ) **विश्वाः** सर्वप्रकाराः नाम–बन्धु–कर्म–रूपसम्बन्धात्स्तुतीनां नानात्वस्योक्तत्वात् । **सुभराः** सुभृताः ( सुपुष्टाः[1] ) **भन्दनाः** स्तुतीः **अहर्दिवि** नित्यकालम् । समासान्तप्रकरणस्यानित्यत्वा"दचतुरे" ( पा० ५–४–७७ ) ति टजभावः । **उदियर्ति** उदीरयति । ( उत्कृष्टं प्रेरयति ) कंपुनरर्थमभिप्रेत्य स्तुतीरुदीरयति ? **ब्रह्म** परिवृढं[2] भवति सर्वप्राणिभिर्यत्तदन्नम् ( निघं० २–८–२५ ) कर्मेति सायणः । "वृहि वृद्धौ" (भ्वा० प०) "बृंहेर्नलोपश्चे"ति ( उ० ४–१४१ ) मनिन् । **प्रजावत्** प्रजासंयुक्तं ( भोक्तृसहितम्[3] ) अपिच **रयिं** धनं गोहिरण्यादि ( निघं० २–१०–८ ) कीदृशम् ? **अश्वपस्त्यम्** व्याप्तगृहम् । "अशू व्याप्तौ" ( स्वा० प० ) पस्त्यं गृहम् । "निशान्तपस्त्यसदनं भवनागारमन्दिरम्" इति गृहपर्यायेऽमरः । यद्वा अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम् । हे **इन्दो** दीप्त ! सोम ! **पीतः** त्वमस्माभिरस्मिन्कर्मणि । **अस्मभ्यम्** अस्मदर्थम् **इन्द्रं याचतात्** याचस्वेत्यर्थः । पदव्यत्यय आर्षः ( पा० ३–१–८५ ) ॥ १ ॥

अत्र "भन्दना उदियर्ति–"त्युदीरणसम्बन्धात्स्तुतय एव भन्दनाशब्देनोच्यन्त इत्युपपद्यते ॥ अथ **आहनः** ( ११ ) इत्येतत्सम्बोधनपदमनवगतमर्थतः । "आहंसी"त्यर्थप्रतीतिः । तत्र निगममुदाहरति—

**"अन्येन मदाहनो याहि तूयम् ॥"**

( ऋ० सं० ७–६–७–३ )

**अन्येन मदहननो गच्छ क्षिप्रम् ॥**

**अन्येनेति** ॥ "न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति । अन्येन मदाहनो याहि तूयं ते न विवृह रथ्येव चक्रा" इति । यमयम्योः संवादसूक्तम् । तत्र यमस्येयमार्षम् । त्रिष्टुप् । स यमीं मैथुनाय प्रार्थयमानां ब्रवीति–हे यमि ! मामंस्थाः साम्प्रतं रहोवर्तत इति किन्तु–इह एतस्मिँल्लोके **देवानां** सम्बन्धिनो **ये स्पशः** चाराः[1] । अहोरात्रादयः[2] । "स्पश बाधनस्पर्शनयोः" ( भ्वा० उ० ) क्विप् । **चरन्ति** सर्वेषां शुभाशुभकर्मप्रत्यवेक्षणार्थं परिभ्रमन्ति । त एते **न तिष्ठन्ति** क्षणमात्रमपि चरणव्यापाररहिता न भवन्ति । अपिच **न निमिषन्ति** निमेषणं नेत्रसङ्कोचमपि न कुर्वन्ति शुभमशुभं वा यः करोति तं निरीक्षन्त एवादरेणेत्यर्थः । हे **आहनः !** असह्य–(असभ्य)–भाषणेनाहन्त्रि ! ( दुःखयित्रि ! ) आहन्तेरसुनि आहन्ति आहनाः सम्बुद्धौ हे आहनः । असह्यवचनादाहन्तरिति देवराजः ॥ त्वं **मत्** मत्तः **अन्येन** अन्यकुलजेन केनचित्पुरुषेण **तूयं** शीघ्रं ( निघं० २–१५–११ ) **याहि** संगच्छ । मैथुनम् ॥ **तेन** सह **विवृह** अभ्युद्यच्छस्वात्मानं मैथुनकर्मणि । "वृहू उद्यमने" ( तु० प० ) लोट् । धर्मार्थकामानुद्यच्छस्वेति सायणः । अत्र दृष्टान्तः **रथ्येव चक्रा** इति । अत्र वशब्द इवार्थः । चक्रा–इत्येकारस्यांकारादेशः ( पा० ७–१–३९ ) रथावयवभूते चक्रे इव । यथैकमक्षं रथचक्रे द्वे अभ्युद्यतः । एवमेकमनस्त्वमुपपाद्य तेनैकभूतेन मनसाऽक्षेणेवोभे अपि शरीरेऽभ्युद्यच्छस्वेति भावः ॥ ३ ॥

एवमेतस्मिन्मन्त्रेऽनिष्टत्वा–( दनभिप्रेतत्वा– )न्मैथुनसमाचारस्य "आहनः ।" इत्येतद्यमीविषयं सम्बोधनम् । कुत इत्याह–

**आहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यात् ॥**

**आहंसीव**–असभ्यमेतत् **भाषमाणा** त्वम् नाहमेतदसभ्यं श्रोतुमप्युत्सहे तव, किंपुनः कर्तुम् ? तथाचाहन्यत इव ययाऽसौ ( यमः ) साऽऽहनाः । आङ्पूर्वाद्धन्तेरसुन् तत्सम्बुद्धौ रूपम् हे आहनः आहन्त्रि ! अत्र हेतुमाह–**इत्यसभ्यभाषणात् इति** । एतदुक्तरूपासभ्यस्य दुर्वचनस्य–भाषणात् कथनात् । तदेतद्विशदयति–**आहना इव भवति** आहन्त्री अयोघनिकेव[3] भवति ॥ **एतस्मात्** एव कारणात् **आहनः स्यात्** योऽयमुपदेशः स्त्रियै, असावपि यस्य सन्निधौ क्रियते स आहन्यत इव मर्माहत इव भवति । असभ्यत्वादस्य[4] वचस इति भावः ॥

अथ **नदः** ( १२ ) इत्येतदनवगतमवगमयति—

**ऋषिर्नदो भवति, नदतेः स्तुतिकर्मणः ॥**

१. स्थानकरणानुप्रदानवतीः ॥

२. सर्वदा भुज्यमानमप्यनुपक्षीयमाणत्वात् । स्वभावतो वा परिवृद्धं सर्वस्य जगतोभरणात् । वर्धन्तेऽनेन भूतानीति वा ॥

३. प्रजाफलकम् इति सायणः ॥

१. स्पाशयितारः कृताकृतानां कर्मणाम् स्पर्शयितारोऽवबोद्धारः । "अपसर्पश्चरः स्पशः । चारश्च गूढपुरुषः" इत्यमरः ॥

२. तथाचोक्तम्–

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।

अहश्च रात्रिश्च उभेच सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥ १॥ इति॥

३. "मरया" इति हिन्दिभाषायां प्रसिद्धा अयो हन्यतेऽनयेति तदर्थः । "करणेऽयोविद्रुषु" ( पा० ३–३–८२ ) इत्यप्घनादेशश्च टाप् । ततः स्वार्थे कः पुनष्टाप् ॥

४. भ्रातृभगिनीविषयत्वेनास्य गर्हितत्वम् ॥

ऋ० ० ति । इतिशब्दस्य पर्यायेण तत्त्ववचनम् । नद० ० णः । इति व्युत्पत्तिः । नदिता वा नदतीति वेत्यर्थप्रतीतिः । तथाच "णद् अव्यक्ते शब्दे" ( भ्वा० प० ) अच् ( पा० ३-१-१३४ ) निघण्टौ त्वर्चतिकर्माऽयमिति स्तुतिकर्मता ( ३-१४-९ ) । अत्र निगममुदाहरति—

**"नदस्य मारुधतः काम आगन् ॥"**

( ऋ० सं० २-४-२२-४ )

**नदनस्य मारुधतः काम आगमत् ॥**

**नदस्येति** । अस्य "इत आजातो अमुतः कुतश्चित् । लोपामुद्रा वृषणं नीरिणाति । धीरमधीरा धयति श्वसन्तम्" इति शेषः । अगस्त्यलोपामुद्राब्रह्मचारिसूक्तसंवादे लोपामुद्राया इयमार्षम् । त्रिष्टुप् । सा ब्रवीदगस्त्यं भर्तारमभिप्रेत्य—**नदस्य** नदनस्य जपशब्दयितुः ( जपाध्ययनकर्तुः ) नदितुर्वा देवतास्तोतुरस्यागस्त्यस्य । पचाद्यच् (पा० ३-१-१३४) **रुधतः** रेतस इन्द्रियग्रामस्य वा निरोद्धुः । ब्रह्मचर्यमास्थितस्य सम्बन्धी **कामः मा** मांप्रति **आगन्** आगमत् ( आगतवान् )"बहुलं छन्दसि" (पा० २-४-७३) इति शपोलुकि मलोपः ( पा० ६-४-३७ ) येनाहं साम्प्रतं पीड्ये । साहं पुनरेवं न जाने किमयं ( कामः ) **इतः** अस्मान्मच्छरीरात् **आजातः** अभिव्यक्तोऽस्मत्पीडनाय । अथवा **अमुतः** अमुष्मादगस्त्यशरीरात् ? पुरुषगुणानुसरणाद्धि स्त्रियाः कामो जायते (अभिव्यज्यते) पुरुषस्य च स्त्र्यनुसरणात् । अत एव च "स्मर" इत्यभिधीयते कामः । इत्येवं विलपमाना कामार्ता **लोपामुद्रा** राजर्षिपुत्रिका **वृषणं** रेतसो वर्षितारमगस्त्यम् । **नीरिणाति** नितरां निश्चयेन वा गच्छति "निपातस्य च" ( पा० ६-३-३६ ) इति दीर्घः । रिणाति इति गतिकर्मसु पठितम् ( निघं० २-१४-५८ ) अथवा—चेतसो-प्रगच्छति । इष्टपुरुषानुचिन्तनं हि कामार्तायाः स्त्रियाः स्वभावः । **धीरम्** स्थिरबुद्धिं तं ब्रह्मचर्ये, **अधीरा** संक्षुब्धसर्वेन्द्रियग्रामा, सती **श्वसन्तं** चेतसा व्यावर्तमानं तस्याः सकाशात् । ब्रह्मचर्ये कृतबुद्धिम् । तथापि **धयति** पिबतीव चेतसा, चक्षुर्भ्यां वा सादरं पश्यति ॥ ४ ॥

एवं लोपामुद्रावाक्ये "नदस्य रुधतो मामागमत्कामः" इति प्रकरणाद्यविनंदशब्देनोच्यत इत्युपपद्यते ।

**संरुद्धप्रजननस्य ब्रह्मचारिणः । इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ २ ॥**

इत्येतन्निदानप्रख्यापनम् ॥ २ ॥

अथ **सोमोअक्षाः** ( १३ ) इत्येते द्वे पदे । अत्राक्षा इत्येतदनवगतं पक्षेण चानेकार्थम् । अस्यैव च सम्बन्धान्मन्त्रविशेषोपलक्षणार्थमत्र सोमशब्द उपात्तः । यथा "मेषोभूतः" "अग्निर्नये" इत्यनयोर्मेषाग्निशब्दौ । तथाच मन्त्रः—

**"न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्र्यः सोमोअक्षाः ॥"** ( ऋ० सं० ८-४-१५-१ )

**नयस्येति** ॥ अस्य "यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि" । इति शेषः ॥ रेणुर्नाम विश्वामित्रस्य पुत्रस्तस्येयमार्षम् । त्रैष्टुभमैन्द्रम् ॥ सूर्यस्तुत्नाद्र्येकाहे सूक्ते निष्कैवल्ये निविद्धानीये सूक्ते शस्यते—**द्यावापृथिवी** द्यावापृथिव्यौ । "सुपां सुलुगि" ( पा० ७-१-३९ )ति पूर्वसवर्णः । **यस्य** इन्द्रस्य महिमानं **न** अश्नुवाते । न व्याप्नुत इत्यर्थः । एतं च्चाक्षा इति ( अश् ) धातुस्वरसादध्याहृतं वेदितव्यम् । **न धन्व** उदकमपि नाश्नोति । तद्धि धन्वति ( गच्छति ) अन्तरिक्षलोकादिति धन्व । "धविर्गत्यर्थः" ( भ्वा० प० ) इदित्वान्नुम् (पा० ७-१-५८ ) ततः कनिन् ( उ० १-१५४ ) **न अन्तरिक्षम् न अद्र्यः** पर्वताश्च अश्नुवते महिमानम् । किन्तर्हि ? **सोमो-अक्षाः** सोम एव महिमानमश्नोतीत्यर्थः । सोमो इत्यन्तःपादं प्रकृत्या भवति (पा० ६-१-१३५) । एतच्च अश्नोतेर्लुङि छान्दसं रूपम् । तत्र ( छन्दसि ) सर्वकालेषु लुङ् लङ् लिटो-विहिताः ( पा० ३-४-६ ) कथं पुनर्गम्यते सोम एवेन्द्रस्य महिमानमश्नोतीति ? **यत्** यतः **अस्य** इन्द्रस्य **मन्युः** क्रोधः सोमेन पीतेन सता मदसामर्थ्यात् **अधि** उपरि शत्रूणाम् । **नीयमानः** प्राप्यमाणः **शृणाति** हिनस्ति । यदपि **वीळु** दृढं सन्नद्धं शत्रुबलं भवति । ( निघं० २-९-१५ ) वीलयतिः सन्नद्ध-(संस्तम्भ)कर्मा "भृमृशी" ( उ० १-७ ) त्यादिनाविहित उप्रत्ययो बाहुलकादस्मादपि भवति । संस्तब्धो दृढो भवति अनेन, संस्तभ्यन्त अनेन शत्रव इति वा । **स्थिराणि** दृढान्यपि मेघवृन्दानि **रुजति** भिनत्ति ॥ १ ॥

एवमेतस्मिन्मन्त्रे व्याख्यार्थस्य—

**अश्नोतेरित्येके ॥**

**अश्नोतेः** अक्षा इत्येष शब्दो निरुच्यते । यथा चोक्तमधस्तात् **इति** एवम् **एके** मन्त्रार्थविदो"मन्यन्ते"इति शेषः ॥

**"अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः"**

( ऋ० सं० ७-५-१३-४ )

**( लोपाशः सिंहं प्रत्यञ्च मत्साः )**

**अनूप इति** ॥ अस्य "समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोशते" इति शेषोऽर्धर्चः ॥ सप्तर्षीणामार्षं बृहती ।

---

१. समधिकं दोषदर्शनतः । यदि न ममोपर्यसौ प्रजननं न्यरोत्स्यत् तदा नायं कामो ममागमिष्यदिति ॥

२. "नयस्येति" उपक्रम्यमाणस्यैव मन्त्रविशेषस्याक्षाशब्दोदाहरणतया प्रतिपत्त्यर्थम् । एकपदसमाम्नाने प्राप्तेऽपि पदद्वयमुपात्तम् ॥

१. "महिमान"मिति, "अश्नुवात" इति च पदद्वयम् । पवमन्त्रेऽपि बोध्यम् ॥ सायणस्तु प्रतिमानभूतमित्येतावदेवाध्याहरति । तदेतदक्षा अश्नोतेरिति भाष्याननुमतम् ॥

२. यद्यपि "धन्व" इत्यन्तरिक्षनामसु पठितम् ( निघं० १-३-५ ) तथापीह तत्प्रभवत्वादुदकमपि ॥

३. अश्नोतेर्लुङि सिचि "उदितो वा" ( पा० ७-२-५६ ) इति अनिट्पक्षे आडागमे च आष्टेति । इट्पक्षे आक्षिष्टेति प्राप्ते व्यत्ययेनं तस्य स्थाने सिपि शस्य षत्वे ( पा० ८-२-३६ ) षस्य कादेशे ( पा० ८-२-४१ ) आकार इतश्च विसर्जनीयौ ॥

पावमानी सौमी। **सोमः** दिव्यौषधी लताविशेषः। सत्यममृतं सूत इति सोमः। "अर्तिस्तुसु०" (उ० १-१४०) इत्यादिना मन्। तथाच हैमः "सोमस्त्वोषधीतद्रसेन्दुषु। दिव्यौषध्यां घनसारे समीरे पितृदैवते॥ वसुप्रभेदे सलिले वानरे किन्नरेश्वरे॥" इति॥ स यदा **अनूपे** अनुगता आपोऽत्रेति "ऋक्पूरब्धू-" (पा० ५-४-७४) इत्यः समासान्तः। "ऊदनोर्देशे" (पा० ६-३-९८) इति अप ऊकारः। तस्मिञ्जलप्राये देशे "जलप्रायमनूपं स्यादि"त्यमरः। **गोमान्** गोभिः सहितः **अक्षाः** क्षियति। निवसति, तदा [1]यवसत्वात्तस्य देशस्य-स सोमः **दुग्धाभिः** दुग्धाभ्यः। सुब्व्यत्यय आर्षः। गोभ्यः **अक्षाः** क्षरति। दुग्धरूपेणानारतं प्रवहति। कथं पुनः क्षरति? **समुद्रं न संवरणानि** संवरणानि संभजनीयानि जनैः सर्वतः संभृतानि (सञ्चितानि) वा उदकानि यथा सर्वेभ्यो देशेभ्यः संसृत्य समुद्रमाभिमुख्येन **अग्मन्** गच्छन्ति गमेर्लुङि च्लेर्लुकि रूपम्। कालव्यत्यय आर्षः (पा० ३-४-६)। एवं सोमः दुग्धाभ्यः गोभ्यः सर्वगात्रेभ्यः संसृत्य अधः प्रतिक्षरति। **मदाय** हर्षाये"न्द्रस्ये"ति शेषः। तेन सोमेनामावास्यायां सान्नाय्येन तृप्त इन्द्रः **मन्दी** हर्षशीलः सन् यजमानस्य शत्रून् **तोशते** हिनस्तीत्यर्थः (निघं० २-२०-२९)॥ ४॥

एवमेतस्मिन्मन्त्रे—

## क्षियतिनिगमः पूर्वः॥

**पूर्वः**—"अनूपे गोमान् गोभिरक्षाः" इत्येषः **क्षियतेर्निवासार्थस्य** (तु० प०) निगमः॥

## क्षरतिनिगम उत्तरः। इत्येके॥

**उत्तरः**। "सोमो दुग्धाभिरक्षाः" इत्येषः **क्षरतेः** सञ्चलनार्थस्य (भ्वा० प०) निगमः। **इति** एवम् **एके** मन्त्रार्थविदो मन्यन्ते।

अथ यथोक्तक्रमेण मन्त्रार्थं व्याचष्टे—

## अनूपे गोमान् गोभिर्यदा क्षियति, अथ सोमो दुग्धाभ्यः क्षरति,

अथ मतान्तरपरतया व्याचष्टे—

## सर्वे क्षियतिनिगमा इति शाकपूणिः॥

**सर्वे** एवैते त्रयोऽपि "अक्षाः" इति **क्षियतिनिगमाः** "क्षि निवासगत्योः" (तु० प०) इत्यस्यैव। **इति शाकपूणि**र्नामाचार्यो "मन्यत" इति शेषः॥ न यस्य द्यावापृथिवी निवासः। न धन्वनान्तरिक्षं किन्तर्हि! सोम एवेन्द्रस्य निवास इत्येवमन्यदुक्तवत्सर्वम्॥ अथ "सोमो दुग्धाभि रक्षा" इत्यत्र तृतीया सप्तम्यर्थे सोमो दुग्धास्वपि गोषूधःसु निवसति। तथाच यवसाश्रितः सोमोऽविरतं पयः स्रावयतीति न ता निर्दुग्धाः कर्तुं शक्यन्त इत्यर्थः।

## श्वात्रमिति क्षिप्रनाम, आशु अतनं भवति॥

**श्वात्रम्** (१४) **इति** एतदनवगतम् **क्षिप्रनाम** इत्यभिधेयवचनम्। **आशु० वति**। इति शब्दसमाधिः। तथाच आशुशब्द उपपदे "अत सातत्यगमने" (भ्वा० प०) इत्यस्माद्रक्। आशुशब्दे च वर्णविपर्ययः पृषोदरादित्वात्। आशु यदतति गच्छति तच्छ्वात्रं धनम् (निघं० २-१०-६) क्षिप्रं वा (निघं० ४-२-१४) अत्र निगममुदाहरति—

## स प॒त॒त्री॑त्व॒रं स्था जग॒द्यच्छ्वा॒त्रम॒ग्निर॑कृणो॑ज्जा॒तवे॑दाः॥ (ऋ० सं० ८-४-१०-४)

## स पतत्रि चेत्त्वरं स्थावरं जंगमं च यत्तत् क्षिप्रमग्निरकरोज्जातवेदाः।

**स पतत्रीति**॥ अस्य "यो होतासीत्प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः।" इत्यादिः॥ इदमूर्धन्वताऽऽङ्गिरसेन दृष्टम् त्रैष्टुभम्। पृष्ठ्यस्य पञ्चमेऽहनि आग्निमारुते शस्त्रे निविद्धानीये शस्यते। यः वैश्वनारोऽग्निः **होता** देवानाम् **प्रथमः** मुख्यः (प्रधानः) मनुष्यहोतुः सकाशात् अतएव **देवजुष्टः** देवैरासेवितः। **आसीत्** अभूत्। यं च वैश्वानराग्निम् **आवृणानाः** आसेवमाना यजमानाः **आज्येन** घृतेन **समाञ्जन्** समुक्षितवन्तः। **स जातवेदाः** जातप्रज्ञो जातधनो वाग्निः **यत् पतत्रि** इतश्चेतश्च पतनशीलं [1]पक्ष्यादिप्राणिजातम् **इत्वरं** गमनशीलं सरीसृपादिकम्[2]। **स्थाः** तिष्ठतेर्विच्। स्थावरं वृक्षादिरूपम् च **जगत्** स्थावरं जंगमं च जगदित्यर्थः। **तत्** सर्वमेतत् सृष्ट्यादिकाले **श्वात्रं** क्षिप्रं झटित्येव **अकृणोत्** अजनयत्। प्रलयकाले चात्मसादकरोदित्यर्थः॥ ४॥

एवमेतस्मिन्मन्त्रे "श्वात्रमित्येतत्क्षिप्रनामैव भवति। स्थावरजङ्गमानामन्तकाले क्षिप्रदहनादन्यत्किमग्निः कुर्यात्? इति॥

अथोतिशब्दमवगमयति—

## ऊतिरवनात्॥

**ऊतिः** (१५) इत्येतदनवगतम् **अवनादि**त्यर्थप्रतीतिः। अवनं रक्षणम्। तथा चावतेरक्षणार्थस्य भावे क्तिनि "ऊतियूति-

---

१. अक्षैषमिति प्राप्ते व्यत्ययेन वर्तमाने (पा० ३-४-६) लुङ्। सिपि च्लेरङ् धातोष्टिलोपः। दीर्घः इतश्चविसर्जनीयौ॥

२. "घासो यवसम्" इत्यमरः॥

३. "क्षर् सञ्चलने" (भ्वा० प०) अक्षरीदिति प्राप्ते "बहुलं छन्दसी"-तीडभावे इतश्च लोपे संयोगान्तस्य लोपे "रात्सस्ये"ति सलोपे रेफस्य विसर्जनीयः। अडागमः॥

---

१. "गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्" इत्यमरात्पतत्रं पक्षस्तदस्यास्तीति पतत्रि। इन्मत्वर्थे। तथाच स एव पक्षिपर्याये "पतत्रि पत्रि पतग पतत्पत्ररथाण्डजा" इति। प्राणिजातापेक्षमत्र नपुंसकाभिधानम्॥

२. सर्पादिकम्॥

जूतिसातिहेतिकीर्तयश्चे"ति ( पा० ३-३-९७ ) निपातः । अमरोऽपि "अवने ऊति"रित्याह ॥ अत्र निगममुदाहरति—

**"आ त्वा रथं यथोतये"**

( ऋ० सं० ६-५-१-१ )

**इत्यपि निगमो भवति**

**आ त्वेति** । अस्य "सुम्नाय वर्तयामसि । तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते" इतिशेषः । आङ्गिरस्य प्रियमेधस आर्षम् । अनुष्टुप् । हे **शविष्ठ** वसिष्ठ ! **सत्पते** सतां पते ! पालक ! **इन्द्र ! तुविकूर्मिम्** बहूनामनेकप्रकाराणां कर्मणां कर्तारम् **ऋतीषहम्** च आर्तानामभिभावयितारम् **त्वा** त्वां वयम् **आवर्तयामसि** आवर्तयामः । "इदन्तो मसि" ( पा० ७-१-४६ ) इति मस इगागमः । स्तुतिभिस्त्वाधीना भवामः । किमर्थम् ? **ऊतये** आत्मनः रक्षणाय । **सुम्नाय** सुखाय च ( निघं० ३-६-१६ ) कथमिव **रथंयथा** अशक्तोहि कश्चिद्यथारथमावर्तयेत्तद्वत् ॥ १ ॥

एवमिहावर्तनेनेकवाक्यताभिसम्बधेन "ऊति" शब्दो रक्षणार्थे उपपन्नः ॥

**हासमान इत्युपरिष्टाद्व्याख्यास्यामः ॥**

अथ **हासमाने** ( १६ ) इत्यनवगतं तत्र हासतिः स्पर्धायां हर्षणे वा वर्तते । स्पर्धमानौ परस्परं हृष्यन्तौ वेति तदवगमः । "अश्वे इव विषिते हासमाने" ( ऋ० सं० ३-२-१२-१ ) तदेतत् **उपरिष्टात्**-अग्रे "प्रपर्वतानामुशती उपस्थात्" ( नि० ९-३९ ) इत्यत्र ॥

अथ **पङ्क्तिः** ( १७ ) इत्येतन्निधावगमिष्यन्निगममेव तावदाह—

**"वम्रकः पड्भिरुपसर्पदिन्द्रम्"**

( ऋ० सं० ८-५-१५-६ )

**वम्रक इति ।**

"एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम् ।
स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥"

वैखानसस्य वम्रस्येयमार्षंत्रैष्टुभमैन्द्रम् । अनया स्तुतिमुपसंहरन्नभिमतं वम्रकः प्रार्थयते-हे **असुर** ! बलवन्निन्द्र ! **एव** एवमुक्तप्रकारेण **वम्रकः** कल्पान्तरीणः **वक्षथाय** स्तुतिवक्रे **महः** महते यजमानाय कल्पान्तरीणाय **पड्भिः** सोमपानैरभ्युदितैः । अथवा गुणस्पाशनैर्बन्धनैः स्पर्शनैः स्तुतिलक्षणैः **इन्द्रम्** कल्पान्तरीणं त्वामेव **उपसर्पत्** उपसृतवान् । **स** तेन

१. "राजासाम्रासुम्नद्युम्नन्निम्ने"ति भोजसूत्रेण निपात्यते । शोभनेन कर्मणा मीयते निमीयते, सुष्ठु मीयते परिच्छिद्यते भोगेनेति वा ॥

२. असुः प्राणस्तेन बलमुपलक्ष्यते सोऽस्यास्तीति मत्वर्थे रो नैरुक्तः ॥ यद्वा असुः प्रज्ञा ( निघं० ३-९-६ ) तद्वन् ! ॥

तथा **इयानः** ईयमानः अनुस्तियमाणः **स्वस्तिम्** स्वस्त्ययनम् **करति** करोति भूते लट् ( पा० ३-४-६ ) कृतवान् "व्यत्ययो बहुलम्" ( पा० ३-१-८५ ) इति विकरणव्यत्ययेन साधुः । साम्प्रतमहमेतस्मिन् कल्पे वम्रकस्त्वं चेन्द्रस्त एवैताः स्तुतयो याभिरहमुपसर्पं भवन्तम् स त्वमेवं विज्ञाय **अस्मै** वर्तमानीय यजमानाय स्वमधिकारं जानानैः कुरु स्वस्त्ययनम् । किञ्च **इषम्** अन्नम् ( निघं० २-७-१४ ) व्रीहियवादिलक्षणम् इष्यते ( अभिलष्यते ) हि तत्प्राणिभिः । "इषु इच्छायाम्" (तु० प०) क्विप् । **ऊर्जम्** क्षीरादि तदप्यन्नमेव ( निघं० २-७-१५ ) । **सुक्षितिं** शोभननिवासं च । "क्षि निवासगत्योः" ( तु० प० ) अधिकरणे क्तिन् ( पा० ३-३-१७४ ) **विश्वम्** एतत्सर्वम् **आभाः** आभिमुख्येनास्मै यजमानाय भावयस्व आहरस्वेति वा । छान्दसं रूपम् ॥ ६ ॥

एवमेतस्मिन्मन्त्रे शब्दसारूप्यात्प्रकरणाच्च "पड्भिरि"त्येतदुक्तार्थकमुपपद्यते ॥

अथामुमवगमयति—

**पानैरिति वा, स्पाशनैरिति वा । स्पर्शनैरिति वा ॥**

पानार्थात्पिबतेः, स्पशतेर्वा बन्धनार्थात्, पृशतेर्वा "सर्तेरटिः" ( उ० १-१३३ ) इति विहितोऽटिप्रत्ययो बाहुलकाद्भवति, धातूनां पभावश्च । **स्पर्शनं** प्रथनं गुणानाम् ॥

अथ **ससम्** ( १८ ) इत्यनवगतं "स्वपनम्" इत्यवगमस्तत्र निगममुदाहरति—

**"ससं न पक्वमविदच्छुचन्तम् ।"**

( ऋ० सं० ८-३-१४-३ )

**ससमिति ।**

"प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥"इति ।

वैश्वानरस्य सूचीकस्य वाऽग्नेः, सप्तेर्वाजम्भरस्येयमार्षम् । त्रिष्टुबाग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । अयमभिप्रायः । **मातुः** सर्वभूतनिर्मातुः पृथिव्याः सम्बन्धिनीः **उर्वीः** बह्वीः ऊर्णवत्यो वा निर्झरप्रदेशं **वीरुधः** लताः । तथा तासां **प्रतरं**

१. स्वस्ति कल्याणमीयते प्राप्यते येन तत् । शुभादृष्टमिति यावत् ॥

२. इदमः सन्निकृष्टे वृत्तिरिति । तथाचोक्तम्-"इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् ॥ अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्" इति ॥

३. अयं चोपक्रान्तोऽर्थः ॥

४. पाणिनीयैस्तु "स्पश बाधनस्पर्शनयोः" ( भ्वा० उ० ) इत्युक्तम् । बाधनं च बन्धनेनेति तेन बन्धनं लक्ष्यते ॥

५. पतच्च ( सि० कौ० ) दीक्षितचरणैरुक्तम् ॥

६. तत्रहि ताः सुविवृद्धा भवन्ति ॥

प्रकृष्टतरं प्रततरं वा, प्रगततरं वा **गुह्यं** गुप्तं मूलमपि **इच्छन्** कामयमानो दग्धुं **प्रसर्पत्** प्रसर्पति । "इतश्च लोपः परस्मैपदेषु" ( पा० ३–४–९७ ) इति इकारलोपो बाहुलकात् ॥ क इव ? **कुमारोन** यथाकुमारः स्तन्यपानाय मातुः प्रकर्षेण गुह्यतरं सर्वाङ्गेभ्यः स्तनप्रदेशम् इच्छन्प्रसर्पति जानुभ्यां तद्वत् । तमेतमग्निं **रिपः** तस्याएव भूमेः ( निघं० १–१–१३ ) उपस्थे तत्रैव (निर्झरप्रदेशे) **रिरिह्वांसं** पुनः पुनरास्वादयमानं वीरुधः । **अन्तर्मध्ये** निहितमव्यक्तमपि **शुचन्तं** दीप्यमानम् **अविदत्** अपश्यत् । कश्चित् ऋषिरन्यो वा । कथं पुनरविदत् ? **ससं न पक्वम्** यथैव ससं स्वपनशीलम् "षस स्वप्ने" (अ० प०) ताच्छील्यविशिष्टेकर्तरि अच् ( पा० ३–१३४ ) अष्टसु मासेषु वर्षातिरिक्तेषु अनभिव्यक्तत्वात् । माध्यमिकं ज्योतिः वैद्युताख्यं पक्वमभिव्यक्तं वर्षासु उपर्यवस्थानादयत्नेनैव दृश्यते । एवं निर्झरान्तःप्रविष्टमपि सन्तमग्निमतिमहत्त्वादर्चिषोऽविददेव । निर्झरे ह्यन्योऽनुप्रविष्टो न विज्ञायते, अग्निस्तु निर्झरस्थोऽपि स्वया दीप्त्या विज्ञायत एवेत्यभिप्रायः ॥ ३ ॥

तदेतदनुपपाद्यते यदुपक्रान्तम्—

**स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनम् तदिवाविदज्जाज्वल्यमानम् ॥**

**स्वपनम्**–ससम् "षस स्वप्ने" ( अ० प० ) पचाद्यच् ( पा० ३–१–१३४ ) सस्ति स्वपितीति ससम् **इति**–एतत् **माध्यमिकं ज्योतिरुच्यते** वर्षाव्यतिरिक्तकालेऽदर्शनात्स्वापव्यपदेशः । तदेतदाह **अनित्यदर्शनम्** न ह्यष्टौ मासान्माध्यमिकं ज्योतिर्दृश्यते ॥ एवमिह शब्दसारूप्यादर्थोपपत्तेश्च "ससम्" इत्यनेन शब्देन स्वपनमुच्यते । पक्वशब्देन चाभिव्यक्तमिति सर्वमुपपन्नम् ॥

अथ **द्विता** ( १९ ) इत्यनवगतम् "द्वैधम्" इत्यवगमस्तत्र निगममाह—

**"द्विता च सत्ता स्वधया च शम्भुः"**
( ऋ० सं० ३–१–१७–५ )

**द्वैधं सत्ता मध्यमे च स्थाने उत्तमे च शम्भुः सुखभूः ॥**

**द्वितेति** । "यस्त्वद्धोता पूर्वो अग्ने यजीयान् द्विता च सत्ता स्वधया च शम्भुः । तस्यानुधर्म प्रयजा चिकित्वोऽथानो धा अध्वरं देववीतौ ॥" इति । कतस्य वैश्वामित्रस्येयमार्षी त्रिष्टुप् प्रातरनुवाकाश्विनयोः शस्यते–हे भगवन् **अग्ने** ! पृथिवीस्थान ! **त्वत्** त्वत्तोऽपि **यः पूर्वः** प्रथमभावी होता मध्यमस्थानो वायुः । असावपि हि दूतो देवानामिति श्रूयते–"आदूतो अग्निमभरदविवस्वतः" इति । वैद्युतोऽग्निरिति केचिन्मन्यन्ते । **यजीयान्** यष्टृतरः । **द्विता च सत्ता** द्वैधं च यस्य विद्यमानता "मध्यमे च स्थाने" वैद्युतभावेन "उत्तमे च" स्थाने सूर्यभावेन **स्वधयाच** अन्नेन च सोमाख्येन ( निघं० २–७–१७ ) सर्वभूतानां वर्षद्वारेण यः **शम्भुः** "सुखभूः" सुखस्य भावयिता-"ऽभूदि"ति शेषः । हे **चिकित्वः** ! धर्मविषयकचेतनावन्नग्ने ! **तस्य** यस्त्वत्तोऽपि पूर्वभावी होता निरूपितस्तस्य होतुरनुष्ठितं **धर्मम्** वायोर्वृत्तिलाभमन्वात्मनो दीप्तिलक्षणां वृत्तिम् **अनु** उपलक्ष्येति सायणः । अतिलाभमाप्नुवन्निति दुर्गः । "वायुर्वा अग्नेस्तेजः, तस्माद्वायुरग्निमन्वेति" इति ह विज्ञायते । **प्रयज** प्रकर्षेण देवान्पूजय **अथा** अनन्तरम् "निपातस्य च" ( पा० ६–३–१३६ ) इति दीर्घः । **नः** अस्माकं सम्बन्धिनम् **अध्वरम्** यज्ञमिमं **देववीतौ** देवानां प्रीत्यर्थम् ( तर्पणाय ) **धाः** विधेहि । "डुधाञ्धारणपोषणयोः" ( जु० उ० ) इत्यस्य छान्दसे लुङि रूपम् अडभावश्छान्दसः ॥ ५ ॥

एवमिह शब्दसामर्थ्यादर्थोपपत्तेश्च "द्विता" इति द्वैधमित्यर्थकमुपपद्यते ॥

अथ **व्राः** ( २० ) इत्यनवगतम् "व्रात्या" इत्यवगमस्तत्र निगममाह—

१. अतिविस्तृतम् ॥

२. प्रकर्षेण गततरं गह्वरम् ॥

३. निर्झरे हि भूमेः प्रदेशे आप उपतिष्ठन्त इति निर्झर एवोपस्थोभूमेः ॥

४. "रलयोर्डलयोश्चैव शषयोर्वबयोस्तथा । वदन्त्येषाञ्च सावर्ण्यमलङ्कारविदोजनाः ।" इत्यभियुक्तोक्तेर्लिलिह्वांसं, "लिह आस्वादने" ( अ० उ० ) इत्यस्माछिटः कसौ रूपम् । पुनः पुनरित्यभ्यासोऽर्थवशान्नतु धातुलभ्योवेदितव्यः ॥

१. यष्टृशब्दात् "तुरछन्दसी"–( पा० ५–३–५९ ) ति ईयसुनि "तुरिष्ठेमेयःसु" ( पा० ६–४–१५४ ) इति तृलोपः ॥

२. द्विशब्दात् "संख्याया विधार्थे धा" ( पा० ५–३–४२ ) इति धाप्रत्ययः । धकारस्य तकारश्छान्दसः । द्वैधमिति "द्वित्र्योश्च धमुञ्" इति धेत्यस्य धमुञादेशेन भवति ॥

३. सायणस्तु–सत्तेत्यस्य निषण्ण इत्यर्थमाह तथाच–"द्विधा द्वैधं–मध्यमे चोत्तमे च स्थाने स्वधया सोमाख्येनान्नेन सह सत्ता निषण्णः सन् शम्भुर्यष्टॄणां सुखभूरभूदिति तद्व्याख्यानम् । तथाचात्र ताच्छीलिकस्तृन् "षद्लृ विशरणगत्यवसादनेष्वि"–(भ्वा० प० ) ति धातोर्द्रष्टव्यः । दुर्गमते त्वस्तेश्शत्रन्ताद्भावे तल ॥

४. स्वं लोकं दधाति यजमानस्येति स्वधा । स्वशब्द उपपदे दधातेः ( जु० उ० ) "गेहे कः" ( पा० ३–१–१४४ ) इति कप्रत्ययो बाहुलकाद्भवति । स्वेभ्यो दीयते–स्वस्मिन्धीयते वा, स्वेन धनेन धीयतेवेति देवराजः ॥ दधोरर्थविपर्ययो निगमे भवति ॥

५. "कित ज्ञाने" ( भ्वा० प० ) इत्यस्य कसौ रूपम् । "मतुवसोरु सम्बुद्धौ च्छन्दसी"ति ( पा० ८–३–१ ) नस्य रुः ॥

६. देवानां वीतिरशनं यत्र प्रीतौ, सा देववीतिः । "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" ( अ० प० ) अस्माद्भावे क्तिन् निमित्ते सप्तमी ॥

७. "वृञ् वरणे" (स्वा० उ०) "गेहे कः" (पा० ३–१–

**"मृगं न व्रा मृगयन्ते"** (ऋ० सं० ५-७-१८-१)

**मृगमिव व्रात्याः प्रैषाः ॥ ३ ॥**

**मृगमिति** ॥ "गोभिर्यदीं मन्ये अस्मन्मृगं न व्रा मृगयन्ते। अभित्सरन्ति धेनुभिः" ॥ इति काण्वस्य मेधातिथेराङ्गिरसस्य चप्रियमेधस्यार्षमैन्द्रे सूक्ते गायत्री। महाव्रते निष्कैवल्ये शस्यते। हे भगवन्निन्द्र ! **यत्** यद्यपि **ईम्** इतिपदपूरणो निपातः (नि० १-३-५) त्वाम् **अस्मत्** अस्मत्तः **अन्ये** ऋत्विग्यजमाना **गोभिः** वाग्भिः ( निघं० १-११-४ ) स्तुतिलक्षणाभिः। **धेनुभिः** च तर्पयित्रीभिराहुतिभिः। "धिवि प्रीणने" ( भ्वा० प० ) अस्यैव "धेन्वादयश्चे"ति निपात इति मुकुटः। **अभि** आभिमुख्येन **त्सरन्ति** छद्मना ( कुत्सितफलाभिसन्धानेन ) गच्छन्ति। "त्सर छद्मगतौ" ( भ्वा० प० ) तथाप्यस्मानेव प्रत्येहि। येतस्ते-**व्राः** "व्रात्याः" "प्रैषाः" युष्मत्संस्तवसंयुक्ताः प्रतिप्रहिताः ( वरीतारो जालादिभिरुपायैर्निरुन्धानाः व्याधाः ) **मृगं न** "मृगमिव" **मृगयन्ते** अन्विष्यन्ति। तद्वदनधिकारिण एव बलादिन्द्रस्यान्वेषणे प्रवर्तन्ते कुत्सिताभिसन्धयश्चेति न तान्प्रत्येहि किन्त्वस्मानेव भक्त्यतिरेकादन्विष्यतः ॥ १ ॥

एवमेतस्मिन्मन्त्रे मृगसम्बन्धात् "व्राः" शब्देन लुब्धकलक्षणा व्रात्या उच्यन्ते। "व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृत" इत्यमरः ॥ ३ ॥

**वराहो मेघो भवति वराहारः।**

**"वरमाहारमाहार्षीरि"ति च ब्राह्मणम् ॥**

**वराहः** ( २१ ) इत्यनवगतमनेकार्थं च। तत्र तावत् **मेघः वराहो भवति**। स हि **वराहारः** भवति। तस्य वरैमुदकमाहारः। अथैतन्निर्वचनप्रतीत्यर्थं ब्राह्मणं प्रमाणयति **वरमि**त्यादि ॥

अथास्मिन्नर्थे निगमं प्रमाणयति—

**"विध्यद्वराहं तिरो अद्रिमस्ता"**

( ऋ० सं० १-४-२८-२ )

**इत्यपि निगमो भवति ॥**

**विध्यदिति**। "अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना। मुषायद्विष्णुः पचतं सहीयान् विध्यद्वराहं तिरो अद्रिमस्ता ॥" इति। नोधानाम गोतमपुत्रस्तस्येयमार्षम्। ऐन्द्री। त्रिष्टुप्। अभिजिद्विश्वजिन्महाव्रतादिषु आहीनिकेषु अहःसु अहीनसूक्ते माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता अत्र "इत्" "उ" इत्येतन्निपातद्वयं पादपूरणं यद्वाऽवधारणार्थम्। **मातुः** वृष्टिद्वारेण सकलस्य जगतो निर्मातुः **महः** महतः अच्छब्दलोपश्छान्दसः। यद्वा मह इति प्रशस्तार्थकं पितुर्विशेषणं **अस्य** यज्ञस्य-**सवनेषु** अवयवभूतेषु प्रातःसवनादिषु त्रिषु सवनेषु **पितुं** सोमलक्षणमन्नम् ( निघं० २-७-६ ) **सद्यः** तत्क्षणे **पपिवान्** पीतवान्। तथा-**चार्वन्ना** चारूणि-शोभनानि अन्नानि-"सुपां सुलुगि-"ति ( पा० ७-१-३९ ) शसो लुक् धानाकरम्भादि-हविर्लक्षणानि-"भक्षितवानि"ति शेषः। किञ्च **विष्णुः** सर्वस्य जगतः व्यापकः। वेष्टा वा सर्वभूतानां प्राणभावेन **पचतं** परिपक्वम् ( चिरसञ्चितम् ) असुराणां यद्धनमस्ति तत् **मुषायत्** अपहरन् **सहीयान्** अतिशयेन शत्रूणामभिभविता **अद्रिं** शत्रूणामत्तारं वज्रम् "अद् भक्षणे" ( अ० प० ) "अदिशदिभूशुभिभ्यः क्रिन्" ( उ० ४-६४ ) इति क्रिन् प्रत्ययः। **अस्ता** क्षेपकः "न लोके"ति ( पा० २-३-६९ ) षष्ठीनिषेधः। एवंभूत इन्द्रः **तिरः** प्राप्तः सन् ( नि० ३-२० ) **वराहं** मेघं **विध्यत्** अताडयत् "व्यध ताडने" ( दि० प० ) लङ् अडभाव आर्षः ॥ २ ॥

एवमस्मिन्मन्त्रे "वज्रमस्ता वराहं विध्यदि"ति वाक्यार्थवशाद्वराहो मेघ उपपन्नः ॥

**अयमपीतरो वराह एतस्मादेव। वृहति मूलानि। वरं वरं मूलं वृहतीति वा।**

---

१४४ ) इति बाहुलात् कः। यणादेशः। जस्। वरितारोऽन्वेष्टारो मृगादीनां व्रात्यस्थानीया लुब्धकादयः ॥

१. दुर्गस्तु "तत्र ( ऐन्द्रे सूक्ते ) पृष्ठ्याऽभिप्लवस्य द्वितीयेऽहनि मरुत्वतीये शस्त्रेऽनुचरतृचे शस्यते" इत्याह ॥

२. अयंच स्वारसिकोऽर्थः ॥

३. वृणोतेः "ग्रहवृदृनिश्चिगमश्च" (पा० ३-३-५८) इत्यप्। सर्वैरपि व्रियत इति वरमुदकम् ॥ वरमाहारो यस्य, वरमाहरतीति वा "कर्मण्यण्" ( पा० ३-२-१ ) पृषोदरादित्वादाहारशब्दस्याकाररेफयोर्लोपः ॥ यद्वा-वरशब्दे उपपदे हरतेराङ्पूर्वात् "अन्येष्वपि दृश्यते" ( पा० ३-२-१०४ ) इति बाहुलका ड्डप्रत्ययष्टिलोपः ( पा० ६-४-१४३ ) ॥

१. तथाचोक्तम्—"अग्नौ प्रास्ताऽऽहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति ॥

२. "पा रक्षणे" ( भ्वा० प० ) इत्यस्मात् "कमि-मनि-जनि-भा-या-गा-पा-हिम्यश्च" ( उ० १-७० ) इति तुप्रत्ययः। बाहुलकादाकारस्येकारः। रक्षितव्यं ह्यन्नम्। रक्षति वा भुक्तम्। प्यायतेर्वा बाहुलकात्तुप्रत्ययो धातोः पिभावश्च ॥

३. यदा तौ हूयते तदानीमेव पानं कृतवानित्यर्थः ॥

४. पचतेः "भृमृदृशियजिपर्विपच्यमि" ( उ० ३-११० ) इत्यतच्कर्मणि "भूतेऽपि दृश्यन्ते" ( पा० ३-३-२ ) इति वचनाद्भूतेऽपि द्रष्टव्यः ॥

५. उदकदानसमर्थं मेघमिति दुर्गः। एतच्च नैरुक्तमतेन द्रष्टव्यम् ॥

६. "मुष स्तेये" ( क्र्या० प० ) घनर्थे कः ( पा० ३-३-५८ वा० ) मोषणं मुषमात्मन इच्छति "सुपआत्मनः क्यच्" (पा० ३-१-८) इति क्यचि व्यत्ययेन दीर्घस्ततो लटः शतृ। आगमशास्त्रस्यानित्यत्वान्नुमभावः। अस्य मन्त्रस्यैतिहासिकपक्षे व्याख्यानं ( तै० सं० ६-२-४ ) तदेतत्सायणभाष्ये द्रष्टव्यम् ॥

**इतरः** शूकरः । **एतस्मात्**-वराहरणात् **एव** । कथं । **वरं** श्रेष्ठं मूलाख्यं मुस्तादीनाम् आहारमाहरतीति । यद्वा-**मूलानि** कसेरुकादीनाम् **वृहति** उद्यच्छतीति वराहः । "वृहू उद्यमने" ( तु० प० ) "पचादेराकृतिगणत्वादच्" ( पा० ३-१-१३४ ) तत्सन्नियोगेनाडागमश्च हकारस्य । अथ **वा वरं २ मूलं वृहतीति** वराहः । अत्रैकस्य वरशब्दस्य निवृत्तिः । वरशब्दाद्वृहेश्च वराह इत्यर्थः । तथाचात्र कर्मण्यण् ( पा० ३-२-१ ) पृषोदरादित्वाद्वरशब्दस्याकारादेशः ॥

अत्र निगममुदाहरति—

**"व॒रा॒हमिन्द्र॑ एमु॒षम्"**

( ऋ० सं० ६-५-३०-५ )

**इत्यपि निगमो भवति ।**

**वराहमिति** । "विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः । शतं महिषान् क्षीरपाकमोदनं वराहमिन्द्र एमुषम्" इति-काण्वस्य पुरुसुतेरार्षम् । ऐन्द्री बृहती । **उरुक्रमः** बहुविक्रान्तः **विष्णुः** व्यापनशील **इन्द्रः त्वेषितः** मन्त्रैस्तुतिलक्षणैः सन्दीपितः "त्विष दीप्तौ" ( भ्वा० उ० ) ण्यन्तात् क्तः । **विश्वा-इत्-ता** सर्वाण्येव तानि वसूनि । अत्रेच्छब्दएवार्थे, विभक्तेश्च लुक् "सुपांसुलुगि-" ( पा० ७-१-३९ )ति **आभरत्** आहरत "हृग्रहोर्भश्छन्दसि" ( पा० ३-१-३४ वा० ) इति हस्य भः । कानि पुनस्तानि ( किंलक्षणानि ) वसूनि ? उच्यते-**शतम्** असंख्यातान् **महिषान्** महतो यज्ञान् ( निघं० ३-३-८ ) कथंभूतान्? **क्षीरपाकमोदनम्** प्रायणीयाख्यम्-आदितः कृत्वा ये क्रियन्ते तान्सोमक्रतून् इत्यर्थः । किञ्च **एमुषम्** आमुषम् सर्वेषामसुराणां मध्ये मोर्हस्थानीयम् ।

अत्राकारस्यैकारश्छान्दसः । **वराहम्** तदाख्य ( न्तदाकार- ) ममुरमाहरत् अहन् । हरतिरत्र नाशनेऽर्थे वर्तते पूर्वत्र प्रापणे । हरणं प्रापणं स्वीकारस्तेयं नाशनंचेत्युक्तेः ।

**अङ्गिरसोऽपि वराहा उच्यन्ते ॥**

तथाचागमः

**"ब्रह्मणस्पतिर्वृषभिर्वराहैः ॥"**

( ऋ० सं० ८-२-१६-१ )

इति "स ईं स॒त्येभिः॒ सखि॑भिः शु॒चद्भि॒र्गोधा॑यसं॒ वि ध॑न॒सैर॑दर्दः । ब्रह्म॑ण॒स्पति॒र्वृष॑भिर्व॒राहै॑र्घ॒र्मस्वे॑देभि॒र्द्रवि॑णं॒ व्या॑नट्" इति । आयास्यस्याङ्गिरसस्येदमार्षं त्रैष्टुभं बार्हस्पत्यम् । ब्राह्मणस्पत्यस्य काम्यपशौ मैत्रायणीयके षडर्चे विनियुक्ता । **स ब्रह्मणस्पतिः** बृहस्पतिः **सत्येभिः** सत्यवादिभिर्यथार्थबलैर्वा **सखिभिः** समानख्यानैः ( सखिभूतैः ) **शुचद्भिः** दीप्तिमद्भिः **विधनसैः** विविधधनैर्वद्भिः । **वृषभिः** वर्षितृभिः । "वृषु सेचने" ( भ्वा० प० ) "कनिन्युवृषी" ( उ० १-१५६ ) इति कनिन् । **वराहैः** वरस्य वरणीयस्योदकस्याहारैराहर्तृभिर्**घर्मस्वेदिभिः** घर्मतापयितृभिः । दीप्तागमनैरिति सायणः । यद्वा क्षरद्रुदकैः । अथवा घर्मो यज्ञः (निघं० ३-१८-१५) "घृ क्षरणदीप्त्योः" (भ्वा० प०) ततो मः । क्षरत्यस्मिन्सोमः । दीप्यतेऽत्राश्रय इति वा । तस्य स्वेदिभिः खादयितृभिः । तं प्रति गन्तृभिरिति सायणः । यज्ञसद्भिर्वा । एवङ्गुणविशिष्टैरङ्गिरोभिः संहितः **गोधायसं** गवां वाचामपां वा धारकम् **ईम्** एनं मेघम् **अदर्दः** अदारयत् । विपरिणामपरोक्षकृतत्वान्मन्त्रस्य । दारयित्वा च **द्रविणम्** उदकम् **व्यानट्** व्याप्नोत् । "अशू व्याप्तौ" ( स्वा० आ० ) विपूर्वादस्माल्लङ् ॥ १ ॥

यद्यप्यस्मिन् अङ्गिरसां विशेषलिङ्गं नास्ति तथापि सूक्तेऽस्मिन्नस्तीति तेषामेव वराहशब्दवाच्यत्वं भाष्यकृदभिप्रैति ॥

---

१. यद्वा त्वेषो दीप्तिः स सञ्जातोऽस्येतीतच् (पा० ५-२-३६) सायणस्तु-हे इन्द्र ! ता-तानि त्वया सृष्टान्युदकानि विष्णुर्व्यापनशील उरुक्रमः बहुगतिः आदित्यः त्वेषितस्त्वया प्रेरितः सन् आभरत् आभरति लोकाय प्रयच्छतीत्यर्थः । न केवलमुदकान्येवापि तु शतमसंख्यातान् महिषान् पशून् महतो यज्ञान्वा यजमानाय । किञ्च क्षीरपाकमोदनं चरुपुरोडाशादिकंचोपलक्षणविधया । किञ्च इन्द्रो वराहं जलपूर्णं मेघं हन्तीति शेषः । कीदृशं तमेमुषमुदकस्य मोषकमित्येवं नैरुक्तपक्षेण व्याचख्यौ ॥ ऐतिहासिकपक्षे चरकब्राह्मणे इतिहास आम्नायते; सोऽ"यमस्येदुमातुः सवनेषु" । "विश्वेत्ताविष्णुरि"त्येताभ्यां प्रतिपादित इत्यनयोरेकवाक्यता सायणेनैतन्मन्त्रव्याख्याने स्पष्टमुपपादितेति तत एव द्रष्टव्या ॥

२. महतेः "अविमह्योष्टिषच्" ( उ० १-४५ ) इति टिषच् ॥

३. एव चोपलक्षणविधयार्थः । प्रायणीयोदयनीयन्नामयज्ञस्य पूर्वोत्तराङ्गं चरुपुरोडाशादिसाध्यम् ॥

४. तथाच ब्राह्मणं (मैत्रावरुणीयके) "मायायामिन्द्रो जघान, तस्य मध्यादाहरत, यदयं वराहमिन्द्रएमुषमेकविंशत्या पुरां पार इत्युच्यते" इत्येवम् ॥

१. ब्रह्मण ऋग्यजुःसामलक्षणस्य स्तोत्रस्य पतिरधिपतिः ॥

२. विविधानि धनानि येषान्ते विधनास्त एव विधनसास्तैः । अत्र स इत्येष संज्ञाकरणः ॥

३. मरुद्भिरिति सायणः । तन्मते गवां धारकं बलं नामासुरं व्यदारयत् द्रविणं गोलक्षणं धनं व्याप्नोदित्येवं व्याख्यामार्गः ॥

४. बलमिति सायणः ॥

५. "द्रु गतौ" ( भ्वा० प० ) "द्रुदक्षिभ्यामिनिन्" ( उ० २-५२ ) यद्यपीदं बलार्थ निघण्टौ ( २-१०-२६ ) पठितं तथापि शम्बरस्यापि तत्पर्यायान्ते पाठाज्जलार्थत्वमपि । "अम्भोर्णस्तोयपानीयं नीरक्षीराम्बुशम्बरमि"त्यमरः ॥

६. "विप्रं॑ प॒दमङ्गि॑रसो॒ दधा॑ना य॒ज्ञस्य॒ धाम॑ प्रथ॒मं म॑नन्त" ( ऋ० सं० ८-२-१५-२ ) इत्यत्र । अङ्गिरसोऽङ्गारेभ्यो जाता अग्नेः पुत्रास्तन्नामानः ॥ विप्रं विशिष्टया व्रतचर्यया सर्वतः प्राप्तं यत्पदं ज्ञानसहितस्य कर्मणः फलरूपं तद् दधाना धारयन्तश्चेतसा, विवृद्धप्रज्ञत्वात् । यज्ञस्य यत्प्रथमं मुख्यं परमात्माख्य-

अथ शब्दसारूप्येण प्रसक्तन्निगमतो दर्शयति—

**अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते ।**

**माध्यमिकाः** मरुतः रुद्रा इत्येवमादयः । ( नि० ५-५ ) अङ्गिरसोऽपृषिसमाख्यामपि लभन्ते तस्मान्माध्यमिकत्वेऽपि सति पृथगुद्धृत्योक्ताः । ये तावन्मरुतो वराहशब्देनोच्यन्ते तेषां निगममाह—

**"पश्य॒न् हिर॑ण्यचक्रा॒नयो॑दंष्ट्रा॒न् वि॒धाव॑तो व॒राहू॑न्" ॥ ४ ॥** ( ऋ० सं० १-६-१४-५ )

**पश्यन्निति ।** अस्य "पृतत्त्यन्न योज॑नमचेति स॒स्वर्ह॒ यन्म॑रुतो गोत॑मो वः" इत्यादिः ॥ रहूगणस्य गोतमस्येयमार्षम् विराड्रूपा । **हे मरुतः ! एतत् योजनं** युज्यतेऽनेन देवतेति योजनमेतत्सूक्तसाध्यं स्तोत्रं **त्यत् न** प्रसिद्धमन्यदुत्कृष्टं स्तोत्रमिव **अचेति** सर्वैर्ज्ञायते । छान्दसः वर्तमाने कर्मणि लुङ् ॥ **यत्** एतत्सूक्तरूपं स्तोत्रं **गोतमः** ऋषिः **वः** युष्मदर्थं **सस्वर्ह** उच्चारितवान् खलु "स्वृ शब्दोपतापयोः" ( भ्वा० प० ) लङि तिपि"बहुलं छन्दसी"-( पा० २-४-७६ ) ति शपः श्लुर्गुणो "हल्ङ्याभ्य" ( पा० ६-१-६९ ) इति तलोपः । अडभाव आर्षः । ह इति पुरातीताख्याने पादपूरणे वा । किंकुर्वन् ? **हिरण्यचक्रान्** हिरण्मयचक्ररथाधिरूढान्-हित-रमणीय-कर्मयुक्तान्वा । **अयोदंष्ट्रान्** दशतीति दंष्ट्रा चक्रधारा । अयोमयीभिश्चक्रधाराभिर्युक्तान् । यद्वा दंशन-साधना ऋष्टयः ( अस्त्रविशेषाः ) दंष्ट्राः । अयोमया दंष्ट्रा येषां तान् । **विधावतः** विविधमितस्ततः प्रवर्तमानान् । **वराहून्** वरस्योत्कृष्टस्य शत्रोर्हन्तॄनुद्वहितॄन्वा । यद्वा उत्कृष्टस्य वृष्ट्युदकस्याहर्तॄन् । यद्वा उत्कृष्टानां देवतानामाह्वातॄन् वरस्य हविषो भक्षयितॄन्वा । एवंभूतान्मरुतः **पश्यन्** सम्यग्जानन् । गोतमो यत्स्तोत्रं कृतवान् तदेतत्सर्वोत्कृष्टं सदस्माभिः सर्वैरुपलभ्यत इत्यर्थः ॥ अत्र वरशब्दोपपदादाङ्पूर्वाद्धन्तेर्वा हरतेर्वा ह्वयतेर्वा जुहोतेरदनार्थाद्वा हु इत्यस्य निष्पत्तिरिति स्कन्दस्वामिभाष्यम् । अस्य च पृषोदरादित्वाद्भिमतसिद्धिः । वराहशब्देन च समाननिर्वचनादिहोपन्यस्तः ५

एवमत्र प्रकरणे मरुतो वराहव उच्यन्ते । इत्युपपत्तिः । मरुतां च गणाः सप्तसप्त का ४९ ब्राह्मणे श्रूयन्ते "ते सप्तसप्तमरुतां गणा" इत्येवम् ॥ वराहविषये तु-इत्येष निगमो द्रष्टव्यः ॥ ४ ॥

**"दि॒वो व॑रा॒हम॑रु॒षं क॑प॒र्दिन॑म्"**

( ऋ० सं० १-९-५-५ )

**स्वसराण्यहानि भवन्ति । स्वयं सारीण्यपि वा स्वरादित्यो भवति स एतानि सारयति ॥**

अथ **स्वसराणि** ( २२ ) इत्यनवगतम् **स्वयंसारीणि** इत्यवगमः । **अहानीत्यभिधेयवचनम् ।** तानि हि स्वयमेवसरन्ति गच्छन्ति "सृ गतौ" ( भ्वा० प० ) पचाद्यच् ( पा० ३-१-१३४ ) ताच्छील्यविशिष्टे कर्तरि बाहुलकात् । **अपि वा** अथवा **स्वः आदित्यः** अत्र **भवति । स एतानि** अहानि **सारयति** गमयतीत्येतानि स्वसराणीत्युच्यन्ते । सर्तेः "पुंसि संज्ञायां घः प्रायेण" ( पा० ३-३-११८ ) अन्तर्भावितण्यर्थश्चात्र सर्तिः । स्वरित्यस्य रेफलोपः पृषोदरादित्वात् ( पा० ६-३-१०९ ) आदित्येन सार्यन्ते । स हि स्वोदयास्तमयाभ्यान्तानि गमयति । अत्र निगममुदाहरति—

**"उ॒स्रा इ॑व॒ स्वस॑राणि"**

( ऋ० सं० १-१-६-२ )

**इत्यपि निगमो भवति ।**

**उस्रा** इति । अस्य "विश्वे॑देवासो॑ अ॒सुरः॑ सु॒तमाग॑न्त तू॒र्णयः॑" इत्यादिः ॥ मधुच्छन्दस आर्षम् अग्निष्टोमे प्रउगे शस्त्रे गायत्रे तृचे वैश्वदेवे शस्यते-हे **विश्वेदेवासः !** विश्वेदेवाः ! एतन्नामका गणरूपा देवविशेषाः ! "आज्जसेरसुक्"(पा० ७-१-५०) इति जसोऽसुगागमः । यूयम् **अप्तुरः** कर्म प्रति त्वरमाणाः । अतः **सुतं** अभिषुतमेतं सोमंप्रति **तूर्णयः** त्वरणशीलाः ( त्वरायुक्ताः ) सन्तः **आगन्त** आगच्छत । कथंपुनरागच्छत ? **उस्रा इव स्वसराणि** यथा उस्राः रश्मयः (नि० १-५-९) स्वसराण्यहानि प्रति शीघ्रमागच्छन्ति एवम् २

एवमस्मिन्रश्मिसम्बन्धात्स्वसराण्यहान्युपपद्यन्ते ॥

अथ **शर्याः** ( २३ ) इत्यनवगतम् । शरमय्यः इत्यवगमः । इषवोऽभिधेया इत्याह—

---

मनावृत्तिलक्षणं धाम स्थानं तत् मनन्ते । तत्वेन जानते इत्यर्थः । एतदेवैतस्यामृचि अङ्गिरसो लिङ्गं दृष्ट्वा एष निगमो भाष्यकारेणोदाहृतः । "अङ्गिरसो वराहा उच्यन्त" इति ॥

१. यस्मिन् "आविद्युन्मद्भि"रित्यादिके षडर्चे सूक्ते एष निगमोऽस्ति ॥

२. दुर्गस्तु-एतत्त्यद्वलं यौष्माकीणं न योजनमचेति नयोगमागच्छति विजितारित्याद्भवतामित्येव व्याख्यत् ॥

३. दुर्गस्तु-अन्तर्हितं यत्सर्वेषां मनुष्याणामित्येवं व्याख्यत् ( निघं० ३-२६-२ ) ॥

१. अनुपदं वक्ष्यमाणः एकदेवताविषयः । रुद्रो ह्ययं वराहः ॥

२. ते हि याज्ञिकं कर्म प्रत्यागन्तुं त्वरन्ते अत एवमामन्त्र्यते । अप् इति कर्मनाम ( नि० २-१-२ ) पृषोदरादित्वात् ( पा० ६-३-१०९ ) साधुः । सायणस्तु तत्तत्काले वृष्टिप्रदा इत्यर्थमाह ॥

३. मध्यमपुरुषबहुवचनम् । "बहुलं छन्दसी"-( पा० २-४-७३ ) ति शपो लुक् । तस्य "तप्तनप्तनथनाश्च"-( पा० ७-१-४५ ) ति तबादेशे अपिदिति प्रतिषेधादङित्त्वादनुनासिकलोपाभावः ॥

४. एतच्च प्रकृतनिगमोदाहरणानुरोधेन । अन्नुलिपु तु- "आ यः शर्याभिस्तुविनृम्णो अस्य" (ऋ०सं०८-१-२६-३)॥

**शर्या अङ्गुलयो भवन्ति । सृजन्ति कर्माणि । शर्या इषवः । शरमय्यः । शरः शृणातेः ॥ इति ॥**

तथाच—"शॄ हिंसायाम् ( क्र्या० प० ) "अघ्न्यादयश्च"—( उ० ४-१०८ ) ति आकृतिगणत्वाद्यत् । शृणन्त्याभिरिति **शर्याः** ॥ अङ्गुलिपक्षे **सृजन्ति कर्माणीति शर्याः** ॥ **शृणातेः** हिंसार्थस्य शॄधातोः ( क्र्या० प० ) "ऋदोरप्" ( पा० ३-३-५७ ) इत्यप्करणे **शरः** । "शरस्तु तेजने बाणे दध्यग्रे ना, शरं जले" इति विश्वमेदिन्यौ ॥ यथा च शर्या इषव उच्यन्ते तथा निगममुदाहरति—

**" शर्याभिर्न भरमाणो गभस्त्योः"**

( ऋ० सं० ७-५-२२-५=९-७-७-५ )

**रित्यपि निगमो भवति ॥**

**शर्याभिरिति** । अस्य "अभ्यर्षन्ति श्रवसा ततर्दिथोत्सं न कञ्चिज्जनपानमक्षितम्" इत्यादिः । त्र्यरुणत्रसदस्युश्च "पर्यू षु प्रधन्व वाजसातये" ( ऋ० सं० ७-५-२२-१ ) इति पावमानं सौम्यं सूक्तं ददृशतुः पिपीलिकमध्यास्तिस्रोऽनुष्टुभः । षड्र्ध्वबृहत्यः । तासामियं द्वितीया । हे **अभि** ! अभिषोतारः । अत्रोपसर्गवशाद्धातुरध्याहृतः । कर्तृप्रतीतिपयानामी भूतः । **हिः** पादपूरणः । **अभिततर्दिथ** पुनः पुनरभिहत एतं सोमम् । **श्रवसा** श्रवणीयेन मन्त्रेण एभिर्ग्राविभिः । कथं ? **गभस्त्योः शर्याभिर्न भरमाणः** यथा भरमाणः धनुर्धारयमाणः "डुभृञ् धारणपोषणयोः" ( जु० उ० ) कश्चित् गभस्त्योर्बाह्वोः ( निघं० २-४-६ ) अवस्थिताभिः शर्याभिः शरमयीभिरिषुभिः कंचित्तर्दयेदेवम् ॥ किञ्च एवमेतं सोममभितर्दयन्तो यूयं वसतीवरीभिरद्भिराप्याय्य **जनपानं** जनैर्यत्रानारतं पयः पीयते तमविदासिनम् **कञ्चित् उत्सम्** उत्सरणशीलं वाप्यादिकमिव । ( निघं० ३-२३-१० ) उत्पूर्वात्सर्तेः सदेः स्यन्देर्वोडः । स्यन्देर्नलोपो बाहुलकात् । उन्देर्वा "उन्देर्नलोपश्च—" ( उ० २-७७ ) ति सप्रत्ययः । उद्गच्छत्यस्माज्जलं, स्यन्यते आर्द्रीक्रियते वा जलेन । **अक्षितम्** अक्षीणं कुरुतम् । महतो देवजनौघस्य पानार्हं प्रभूतं कुरुतेतिभावः ॥५॥

एवमिहाभितर्दनक्रियासम्बन्धात् शर्याशब्देनेषवः उच्यन्त इत्युपपद्यते ॥

१. "उ-तृदिर् हिंसानादरयोः" ( रु० उ० ) लिट् लोडर्थे ॥
२. रात्रिपर्युषिताभिर्मन्त्रपूताभिः ॥
३. सर्वदा जलपूर्णम् ॥
४. सायणस्तु—हे सोम ! त्वं श्रवसाऽन्नेन हेतुनाऽभ्यभि ततर्दिथ हि पवित्रमभि तृणवानसि च्छिन्नवानसि । तत्र दृष्टान्तद्वयम्—उत्सन्नं,—यथाकश्चिज्जनपानं यस्मिञ्जना उदकं पिबन्ति तमक्षितमक्षीणं कञ्चित्कंचनोत्सरणशीलं वाप्यादिकमभितृणत्ति, अथवा—कश्चिद्भरत्योर्बाह्वोः ( निघ० २-४ ) शर्याभिरङ्गुलीभि-( निघं० ४-२ ) र्भरमाण उदकं सम्भरन्कंचिद् अभितृणत्ति तद्वत् । इति व्याचख्यौ ॥

अथार्कः ( २४ ) इत्यनेकार्थमित्यनेकधावगमयति—

**अर्को देवो भवति यदेनमर्चन्ति,**
**अर्को मन्त्रो भवति यदनेनार्चन्ति,**
**अर्कमन्नं भवति अर्चति भूतानि,**
**अर्को वृक्षो भवति संवृत्तः कटुकिम्ना ॥५॥(४)**

**देवः** सर्वोऽप्यर्कः । कुतः ? **यत्** यस्मात् **एनं** देवं **अर्चन्ति** स्तोतारः पूजयन्ति । एवमग्रेऽपि । तथाच "अर्च पूजायां" ( भ्वा० प० ) कर्मणि घञ् ( पा० ३-३-१९ ) "चजोः" ( पा० ७-३-५२ ) इति कुत्वम् । यद्वा "कृदाधारार्चिकलिभ्यः कः" ( उ० ३-४ ) इति कः "चोः कुः" ( पा० ८-२-३० ) इति कुत्वम् "झरो झरि"—( पा० ८-४-६५ ) ति कलोपः । **अर्चति** । अत्रार्थे घः ( पा० ३-३-११८ ) **भूतानी**—ति कर्तृपदम् । "पूज्यं हि प्राणिनामन्नमद्याच्चैनदकुत्सयन्नि"—ति स्मृतेः । पूज्यं हि पूज्यते तस्मात्तदपि संस्कारविशेषेण संस्कृतं पूज्यते ॥ **संवृत्तः** सङ्गतः ( संव्याप्तः ) **कटुकिम्ना** कटुकभावेन ॥ पृथ्वादित्वादिमनिच् ( पा० ५-१-१२२ ) भावे ॥ ५ ॥ ( ४ )

अथात्रोपक्रान्तेष्वर्थेष्वाद्ययोरर्कमुदाहरत्येकस्मिन्नेव निगमे—

**"गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥"**

( ऋ० सं० १-१-१९-१ )

**गायन्तीति** । मधुच्छन्दस आर्षम् । अनुष्टुप् । ऐन्द्री । हे भगवन् **शतक्रतो** ? इन्द्र ! **गायत्रिणः** गायत्रं साम तदेषामस्तीत्यर्थे इनिः । एवमग्रेऽपि (पा० ५-२-११५) उद्गातारः सामगाः । सामभिः **त्वा त्वां गायन्ति** स्तुवन्ति । "गै शब्दे" (भ्वा० प०) । **अर्किणः** मन्त्रिणः होतारः (ऋत्विजः) **अर्कम्** अर्चनीयं "अर्च पूजायाम्" ( भ्वा० प० ) कर्मणि घञ् ( पा० ३-३-१८ ) "चजोः" ( पा० ७-३-५२ ) इति कुत्वम् । त्वाम् **अर्चन्ति** पूजयन्ति । एवमेते सर्वेऽपि **ब्राह्मणाः** याज्ञे कर्मणि **वंशमिव** ध्वजमिव **उद्येमिरे** उद्यच्छन्ति ( उच्छ्रितं कुर्वन्ति ) स्तुतिभिर्हविर्भिश्च तवैव महिमानं वर्धयन्तीत्यर्थः ॥ १ ॥

अथैतद्व्याचष्टे—

**गायन्ति त्वा गायत्रिणः । प्रार्चयन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रतो ! उद्येमिरे वंशमिव । इति ।**

अथ निगमप्रसक्तं वंशपदं निर्ब्रवीति—

**वंशो वनशयो भवति । वननाच्छ्रूयत इति वा ।**

**वनशयः** वने शयित इवास्ते । अथवा **वननात्** सम्भजनात् "वन सम्भक्तौ" ( भ्वा० प० ) वल्लिभिः । संभक्तिः

संश्लेषः । श्रूयत इति वंशः । पृषोदरादित्वात् ( पा० ६-३-१०९ ) साधुः ॥

अथ **पविः** ( २५ ) इत्यनवगतोऽनेकार्थश्च । तत्रैकतममर्थमुपादाय निगमं दर्शयिष्यन्नुपक्रमते—

## पवी रथनेमिर्भवति । यद्विपुनाति भूमिम् ॥

**रथनेमि**रित्यभिधेयवचनम् । "नेमिर्ना तिनिशे, कूपत्रिकाचक्रान्तयोः स्त्रियाम्" इति मेदिनी । तथाच रथस्य रथचक्रस्य नेमिः **पविः** स्त्रियामत्र रथचक्रस्यान्तो भूमिस्पर्शिभागो नेमिरित्यमरकृत् ॥ नयति रथमिति नेमिः । "नियो मिः" ( उ० ४-४३ ) **यदि**तिअवगमप्रकारः । "पूञ् पवने" ( क्र्या० उ० ) "अच इः" ( उ० ४-१३४ ) इति इप्रत्ययः । **विपुनाति**-विदलयति । विपूयो मुञ्ज इत्यत्र यथा ॥

अत्रार्थे निगममुदाहरति—

**"उ॒त प॒व्या रथा॑ना॒मद्रिं॑ भिन्द॒न्त्योज॑सा ॥"**

**"तं म॑रुतः क्षु॒रप॑विना॒ व्य॑युः ॥"**

( ऋ० सं० ४-३-९-४ )

## इत्यपि निगमौ भवतः ॥

**उतेति** । अस्य "उ॒त स्म॑ ते॒ परु॑ष्ण्या॒मूर्णा॑ वसत शु॒न्ध्यवः॑" इत्यादिः । आत्रेयस्य श्यावाश्वस्येय-मार्षम् मरुद्दैवत्यानुष्टुप् ॥ **हे मरुतः । उतस्म** येषां वस्तिरोभवितुमाविर्भवितुं च काले शक्तिरस्ति **ते** यूयम् **परुष्ण्यां** नाम नद्यां, माध्यमिकायां वा । विपर्यवत्यामिति दुर्गः । **शुन्ध्यवः** शोधयितारोऽथच **ऊर्णाः** चित्राः, तिरोहिताः सन्तः । **वसत** वसथ, एतस्मिन्नन्तरिक्षलोके ॥ वर्णव्यत्यय आर्षः । **उत** अपिच । कस्मिंश्चिदभ्युद्गमकाले प्राप्ते युष्माकं **रथानां पव्याः** या रथनेमयस्ता एव । जसोऽत्राडागमश्छान्दसः । **ओजसा** बलेन **अद्रिं** पर्वतं मेघं (नि० १-१० ) वा **भिन्दन्ति** विदारयन्ति । किमुत यूयमित्यर्थः ४

१. पविर्हि वाक्-( निघं० १-११-१५ ) वज्रं-( निघं० २-२०-५ ) रथनेमिः यज्ञश्चेति ( नि० ४-२-२५ ) आद्यार्थे "वा॒णस्य॑ चोदया प॒विम्" ( ऋ० सं० ७-१-७-१ ) इत्येष निगमः । द्वितीये "सू॒क्तं सु॑शा॒र्यं प॒विमि॑न्द्र ति॒ग्मम्" ( ऋ० सं० ८-८-३८-२ ) इति । साधनं तु सर्वत्र समानमेव । वागपिहि पुनाति पूयते वा इति संकीर्तनादिना । तथाचोक्तम् । "वाचं शौरिकथालापप्रसङ्गेन पुनीमही"ति । शौरिर्विष्णुः ॥

२. तथाचामरः "चक्रं रथाङ्गं, तस्यान्ते नेमिः स्त्रीस्यादि"ति ॥

३. सायणस्तु—ऊर्णा दीप्ताः शुन्ध्यवः शोधिकाः अपः वसत आच्छादयन्ति । ते उतापि च पव्या नेम्या रथानां स्वकीयानां रथचक्रेणौजसा बलेन चाद्रिं भिन्दन्ति मेघं गिरिं वा विदारयन्तीति व्याचख्यौ ॥

४. अत्र "विशिष्टवाचकपदानां सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमि"-ति न्यायेन अन्तभाग एवम्भूमिस्पर्शी नेमिशब्दाभिधेयस्तथाचार्थसङ्गतिर्भवति । इति बोध्यम् ।

एवमेतस्मिन्नर्थसंयोगात्पविशब्देन रथचक्रनेमिरभिसम्बध्यते । ब्राह्मणमपि चैतस्मिन्नेवार्थे-चातुर्मास्येषु सान्तपनं हविरधिकृत्य "देवा वै वृत्रस्य मर्म नाविदं-स्तं **मरुतः क्षुरपविना व्ययुः** सान्तपनं सन्तपँस्तस्मात्सान्तपनाः" इति ॥ एतस्मिन्नपि च ब्राह्मणे चक्रनेमिः क्षुरधाराकृतिस्तीक्ष्णपविरित्युच्यते तस्मादुपपन्नमुपक्रान्तम् । अयमर्थोऽल्पप्रयोगविषय इत्युदाहरणद्वयम् ॥

## वक्षो व्याख्यातम् ॥

अथ **वक्षः** ( २६ ) इति पदं व्याख्यातम् । "उपो अदर्शि शुन्ध्युवः" इत्यत्र ॥ ( नि० ४-१६ )

## धन्वान्तरिक्षं, धन्वन्त्यस्मादापः ॥

अथ **धन्व** ( २७ ) इत्यनवगतम् । **धन्वन्ती**त्यवगमः । **अन्तरिक्ष**मित्यभिधेयवचनम् । **धन्वन्त्यस्मादाप** इति नामप्राप्तौ हेतुनिर्देशः । तथाच धविर्गत्यर्थः । ( भ्वा० प० ) इदित्वान्नुम् ( पा० ७-१-५८ ) "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः" ( उ० १-१५४ ) इति कनिन् ॥

अथ निगममुदाहरति—

**"ति॒रोध॒न्वाति॑ रोचते"**

( ऋ० सं० ८-८-४५-२ )

## इत्यपि निगमो भवति ॥

**तिर** इति । अस्य "यः पर॑स्याः परा॒वत॑स्ति॒रो ध॒न्वाति॑रोच॑ते । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥" इति स्वरूपम् अग्निपुत्रस्य वत्सस्येदमार्षम् । गायत्रमाग्नेयम् । व्यूढस्य दशरात्रस्य नवमेऽहन्याग्निमारुतस्य शस्त्रस्य जातवेदस्ये सूक्ते निविद्धानीये शस्यते । **यः** अग्निः आदित्यात्मनाऽवस्थितः । **परस्याः परावतः** परस्यामपि परावति ( अतिदूरदेशेऽपि ) वर्तमानः **तिरः** तीर्णतममेतन्महत् **धन्व** अन्तरिक्षम् **अति** अतीत्य ( स्वेन प्रभावेन दीप्त्या अस्मान्प्रति ) **रोचते** प्रकाशत एव । सायणस्तु-तिरस्तिर्यक् अतिरोचते सूर्यः प्रकाशते-इत्याह । **सः** अग्निः **नः** अस्माकम् **द्विषः** द्वेष्टॄन् **अतिपर्षत्** अतिपारयेत् । नाशयतु इत्यर्थः ॥ २ ॥

एवमेतस्मिन्नादित्यस्तुतिसम्बन्धाद्धन्वशब्दोऽन्तरिक्षाभिधानमित्युपपद्यते ।

## सिनमन्नं भवति । सिनाति भूतानि ।

अथ **सिनम्** ( २८ ) इत्यनवगतम् । **सिनातीति** शब्दयुक्तिः । **अन्नं भवती**त्यभिधेयवचनम् । सिनाति बध्नाति । अन्नेन हि सर्वाणि भूतानि बध्यन्ते । विनश्यन्ति भूतानि धारयतीति स्कन्दस्वामिभाष्यम् । "षिञ् बन्धने" (स्वा० क्र्या० उ० )

१. अत्र "सं वा एनं तदतपंस्तस्मादि"त्येवं मु-मुद्रित-नि-वृत्ति पाठः ॥

"इण्सिञ्दीङुष्यविभ्यो नक्" (उ० ३-२) इति नक्। अत्र निगममुदाहरति—

**"येन॑ सा॒सिन॑ भर॑थः सखि॑भ्यः"**

**इत्यपि निगमो भवति ॥**

(ऋ० सं० ३-४-९-१)

**येनेति ।** अस्य "इ॒मा उ॑वां भू॒मयो॒ मन्य॑माना युवाव॑ते न तु॒ज्या॑ अभूवन्। क्व१॒ त्यदि॑न्द्रावरुणा॒ यशो॑ वां॒" इत्यादिः। विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। तार्तीयसवनेषु उक्थपर्यायेषु स्तोमाभिशंसने मैत्रावरुणस्य शस्त्रे विनियुक्ता। **हे इन्द्रावरुणा** इन्द्रावरुणौ। "सुपां सुलुगि" (पा० ७-१-३९) त्यादिनौकारस्यात्। **वां** युवयोः सम्बन्धिन्यः। **इमाः** अस्माभिः क्रियमाणाः। **भूमयः** युवां प्राप्तुं भ्रमणशीलाः **मन्यमानाः** युवामर्चन्त्यः स्तुतयः। **युवावते** युष्मद्वते (मैवद्भ्यां तद्वते) यजमानाय **तुज्याः** अभिमतार्थदानसमर्थाः **न अभूवन्** अतो ब्रवीमि—**त्यत्** तत् तादृशं **वां युवयोः यशः** महाभाग्यम् **क्व** कुत्रास्ते ? **येन** महाभाग्येनैताभिः स्तुतिभिरभिष्टुतौ सन्तौ **सिनम्** अन्नम् **सखिभ्यः** समानख्यानेभ्यः यजमानेभ्यः **भरथः स्म** पूर्वं भृतवन्तौ। 'स्मयोगे भूते लट्' (पा० ३-२-११८) उः पूरणः ॥ १ ॥ अन्नमेव हि प्रायेण यजमानैः प्रार्थ्यत इति "सिन" शब्देनात्रान्नमेवाभिधीयत इत्युपपत्तिः ॥ व्यभिचारित्वादभिधानानां "सिनम्" इत्यादीनि खे खेऽभिधानवर्गे पठितान्यपि सन्ति नैघण्टुके प्रकरणे, समाम्नातान्येतस्मिन्नैकपदिके प्रकरणेऽनवगतसंस्काराभिप्रायेण, कानिचिदनेकार्थाभिप्रायेणेति बोध्यम् ॥

**इत्था अमुथेत्यनेन व्याख्यातम् । सचा सहेत्यर्थः ॥**

अथ **इत्था** (२९) इत्येष निपातरूपम्। **अमुथा इत्यनेन व्याख्यातम्** तृतीया-(३-१६) ध्याये। तत्र इदंशब्दा- 'त्थाहेतौ च छन्दसी" (पा० ५-३-२६) ति हेतौ प्रकारवचने थाल् प्रत्ययः। "एतेतौ रथोः" (पा० ५-३-४) इतीदम इदादेशः ॥

अथ **सचा** (३०) इत्यप्रतीतार्थो निपातः। **सह इत्यर्थ**प्रतीतिः। अत्रोदाहरणमाह—

१. "भ्रमु अनवस्थाने" (दि० प०) "भ्रमेः सम्प्रसारणञ्चे"ति (उ० ४-२०) इन्प्रत्ययः ॥

२. मन्यतिरर्चतिकर्मा (निघं० ३-१४-३८) "मन ज्ञाने" (दि० प०) इति पाणिनिः ॥

३. युष्मत्सदृशायेति सायणः। तन्मते "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानमि"ति वतुप्। अविभक्तावपि युवादेशश्छान्दसः ॥

४. "तुज हिंसाबलादाननिकेतनेषु (चु० प०) "अघ्न्यादयश्च" (उ० ४-११०) इति यत् कृलार्थे ॥

**"वसु॑भिः सचा॒भुवा॑"**

(ऋ० सं० ६-३-१४-१)

**वसुभिः सहभुवौ ॥**

इत्यर्थः। तथाच मन्त्रः—"अ॒ग्निनेन्द्रे॑ण॒ वरु॑णेन॒ विष्णु॑नादि॒त्यैरु॒द्रैर्वसु॑भिः सचा॒भुवा॑। स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोम॑ पिबतमश्विना" इति। श्यावाश्वस्येयमार्षं त्रिष्टुप् ज्योतिष्मती। **हे अश्विना** अश्विनौ ! एताभिरग्न्यादिभिर्देवताभिः **सचाभुवा** सचाभुवौ सहभुवौ (सहितौ भूत्वा) **सजोषसा** सजोषसौ सहप्रीतौ च **इमं सोमं पिबतम्**। पीत्वा चैतन्नामास्माकमभिप्रेतार्थं कुरुतमित्येवमाशीर्योज्या ॥ १ ॥

एवमिहाग्न्यादिदेवताभिसम्बन्धात् "सचा" इत्येष सहयोगे भवतीत्येतदुपपद्यते ॥

**चिदिति निपातोऽनुदात्तः पुरस्तादेव व्याख्यातोऽथापि पशुनामेह भवति, उदात्तः ।**

**"चिद॑सि म॒नासि॑" इति ॥**

**चितास्त्वयि भोगाश्चेतयस इति वा ॥**

**चित्** (३१) इति एष निपातः **अनुदात्तः**। तद्यथा- "सुचश्चिद॑ः शव॑सा प॒ञ्च कृ॒ष्टीः" इति (ऋ० सं० ८-८ ३६-३) स **पुरस्तादेव व्याख्यातः** "चिदित्येषोऽनेककर्मा" इत्यत्र (नि० १-२-२)। **अथापि** अयमेव **उदात्तः** आद्युदात्तः सन् **पशुनाम इह** निगमे **भवति**। तद्यथा "चिद॑सि म॒ना॑सि॒ धीर॑सि" इति राजक्रयणीगोस्तुतौ। अतः पुनरेतत् ब्राह्मणे व्याख्यायते "चिदसीति यद्वाव विचिकित्सते" इत्येवमादि-आध्वर्यवे (शतपथे)। कथं पुनश्चिदसि ? आह- **चितास्त्वयि भोगा इति**। चिताः सञ्चिताः। समुच्चित्य निहिताः। अथवा **चेतयसे** सर्वं ज्ञापयसे **इति** त्वं चिदसि। "चिती संज्ञाने" (चु० प०) क्विप्तुकौ।

**आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातोऽथाप्यध्यर्थे दृश्यते ।**

अथ **आ** (३२) **इति । पुरस्तादेव** "आ इत्यर्वागर्थे" (नि० १-१-५) इति। "अथाप्युपमार्थे दृश्यते" निपातत्वेन "जा॒र आभग॑म्" इति (नि० ३-१६-५) **अथापि** कदाचित् **अध्यर्थे दृश्यते** तद्यथा—

**"अ॒भ्र आँ अ॒पः ।"**

(ऋ० सं० ४-३-२-१)

इत्येष निगमः।

"कद्व॑ मि॒याय॒ धाम्ने॑ मनामहे॒ स्वक्ष॑त्राय॒ स्वय॑शसे म॒हे व॒यम्। आ॒मेन्य॑स्य॒ रज॑सो॒ यद॒भ्र आँ अ॒पो वृ॑णा॒ना वि॑तनो॒ति मा॒यिनी॑॥"

प्रतिभानोरात्रेयस्येयमार्षम् । वैश्वदेवं[1]स्य प्रथमैव । जगती । अत्र पुनः प्रायेणापैः[2] स्तूयन्ते । "आपो वै विश्वेदेवाः, सर्वा एव वा देवताः" इत्यनेन ब्राह्मणदर्शनेनापां विश्वेदेवत्वमुपपद्यते । **वयम् कद्दु प्रियाय उः** पूरणः कमिति सुखनाम तत्र मकारस्य तकारः पृषोदरादित्वात् । "कत्पयम्" ( ऋ० सं० ४–१ ३२–६ ) इतिवत् । कम्पयसम् सुखपयसम् इति तदर्थः । तथाच सुखाय प्रियाय च **धाम्ने** स्थानाय वैश्वदेवाय, तत्प्राप्त्यर्थम् । तानेव विश्वान्देवान् **मनामहे** याचामहे ( नि० ३–१९–१६ ) "म्ना अभ्यासे" ( भ्वा० प० ) व्यत्ययेनात्मनेपदम् । "पाघ्राध्मे–" ( पा० ७–३–७८ ) ति मनादेशः । यद्वा मन्यामहे । मत्वाचोपास्महे । तथाच सायणः "स्तवाम" इत्येवं व्याचख्यौ । त एव ह्युपास्यमानाः तत्स्थानं प्रापयितुं समर्था इति । स्थानविशेषणान्येवोत्तराणि स्वक्षत्रादीनि । तथाच **स्वक्षत्राय** स्वमेव क्षैत्रं[3] वलं यत्र तस्मै । न तत्र परकीयं वलमाशास्यते यथेह लोके । एवम् **स्वयशसे** स्वमहिमकृतमेव यशो यत्र न सांयौगिकद्रव्यकृतं तस्मै, **महे** महते धाम्ने । ( तत्प्राप्त्यर्थम् ) अथोत्तरत्र स्त्रीलिङ्गनिर्देशात् **यत्** इति येति विपरिणामयितव्यम् । मध्यमावाक् तदर्थः । तथाच **मेन्यस्य** मेनार्हस्य । मेनेति मैध्य[4]मावागुच्यते ( निघं० १–११–१९ ) सा यत्र वर्तते तस्य **रजसः** अन्तरिक्षलोकस्य । तथाच माधवः "रजो रजतेर्गतिकर्मणोऽसुन्" इति । गम्यते ह्यसौ पुण्यकृद्भिः । रञ्जयतेर्वा ( भ्वा० उ० ) "भूरञ्जिभ्यां कित्" इत्यसुन् । कित्वान्नलोपः । **आँ** अधि उपरि "आङोऽनुनासिकश्छन्दसी–" ( पा० ६–१–१२६ ) ति अनुनासिकः । **अभ्रे** मेघे अवस्थिताः **अपः आवृणाना** समन्तात्सम्भजमाना, अथच **मायिनी** माया प्रैज्ञा[5] ( निघं० ३–९–९ ) तद्वती । "व्रीह्यादित्वात्" ( पा० ५–२–११६ ) इनिः । सती **वितनोति** विस्तृणाति वर्षभावेन ॥ १ ॥

१. तथाच सूत्रितं "कदुप्रियायेति वैश्वदेवम्" इति । सूक्तमिदं पञ्चर्चं तत्रेयं प्रथमा । तत्पुनः सूक्तमभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे शस्यते ॥

२ अत्र वैद्युताग्निसंस्तव इत्येवं सायण आह ॥

३. यद्यपि क्षत्रमिति ( निघं० १–१२–४५ ) उदकार्थे पठितं तथाप्युदकार्थकस्य वलार्थे प्रचुरः प्रयोगो निगमे । तथाचौजःशब्दोऽपि तत्रैवोदकार्थे ४३ पठितः सच त्वप्रसिद्ध एव वलार्थे ॥

४. "मान पूजायामि"ति ( चु० आ० ) धातोः "वहुलमन्यत्रापीनज्भवती"ति ( उ० २–४६ ) वचनादिनज्वहुलग्रहणान्न लोपष्टाप् ॥ पूज्यतेऽनया, पूज्या वा ॥ यद्वा "आमेन्यस्ये"त्येकमेव पदम् आभिमुख्येन मननीयस्येति तदर्थः । तथाच "कृत्यल्युटो वहुलम्" ( पा० ३–३–११३ ) इति मन्यतेर्ण्यति ( पा० ३–१–१२४ ) एत्वम् ॥

५. मीयन्ते परिच्छिद्यन्तेऽनया पदार्थाः, "मायतेर्यः" ( उ० ४–१०६ ) टाप् ॥

तथाचाभ्र एव हि अधि आपः वर्तन्त इति आङ्व्यर्थं इत्युपपद्यते ॥ अधुना पदविभागमस्य भाष्यकारः करोति–उपसर्गविभागोपप्रदर्शनार्थम्—

**अभ्रे आँ अपः ।**

इति । अधुना आँ इत्यस्यार्थं ब्रवीति—

**अपोऽभ्रेधीति ।**

यदुक्तं स्यात्तदेवोक्तं भवति "अभ्र आँ अपः" इति ॥

अथ **द्युम्नम्** ( ३३ ) इत्यनेकार्थम् । तदाह—

**द्युम्नं द्योततेर्यशो वा अन्नं वा ॥**

अत्र यशोवे[1]त्यभिधेयवचनम् **द्योतते**रिति निर्वचनप्रकारः । तथाच "द्युत दीप्तौ" ( भ्वा० अ० ) इत्यस्मान्नप्रत्ययो मकारश्चान्तादेशो निपात्यते "वाहुलकात्" (पा० ३–३–१) उदाहरति–

**"अस्मे द्युम्नमधि रत्नं च देहि"**

( ऋ० सं० ५–३–९–३ )

**अस्मासु द्युम्नं च रत्नं च देहि ॥ ६ ॥ ( ५ )**

**इति श्रीयास्कमुनिप्र० नि० शास्त्रे नैग. का. पञ्चमाध्यायस्य प्रथमः पादः ॥ ५ ॥ १ ॥**

**अस्म इति** । अस्य "शुतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु ॥ जहि वधर्वनुषो मर्त्यस्य" इत्यादिः ॥ वसिष्ठस्यार्षं त्रिष्टुप् । महाव्रते महदुक्थे दक्षिणे पक्षे शस्यते **हे शिप्रिन्** ! उष्णीषिन् इन्द्र ! **ते** त्वदीयाः **शतं** वह्वय **ऊतयः** रक्षाः आगमानि वा, "अव रक्षणगतिकान्ति." ( भ्वा० प० ) इत्यस्य निपातः ( पा० ३–३–९७ ) सन्तु । एतच्च वचनविपरिणामेनास्तु क्रियाया वोध्यम् । क ? **सुदासे** कल्याणदाने एतस्मिन्यजमाने । ( तथैनमनुगृहाण यथा नित्ययाज्येवायं यजमानः स्यादिति मखः ) एवं **सहस्रं** नानाविधाः **शंसाः** शंसनीयाः कामाश्च सन्तु । यद्वा आगतस्य सतस्तव सहस्रं शंसा वहूनि स्तोत्राणि सन्तु । "शंसु स्तुतौ" ( भ्वा० प० ) "गुरोश्च हलः" ( पा० ३–३–१०३ ) इत्यप् टाप् ॥ **उत** अपिच **रातिः** धनं, दत्तिर्वा हविषः । **अस्तु** । अपिच **वनुषः** हिंसकस्य "वनुष्यतिर्हन्तिकर्मा" ( नि० ५–२ ) **मर्त्यस्य** मनुष्यस्य **वधः** हिंसासाधनमायुधं वलं वा ( निघं० २–९–१९ ) **जहि** । हत्वा च **अस्मे अधि** अस्मासु । "सुपां सुलुगि–"ति ( पा० ७–१–३९ ) सुपः शे । **द्युम्नम्** दीप्तिमद् यशो वलं वा **रत्नं च** धनं च ( निघं० ३–१०–७ ) "धेहि" देहीत्यर्थः ॥३ एवमेतस्मिन् शत्रुवधसम्वन्धा "द्युम्न" शब्देन "यशो वा अन्नं

१. अन्नं हि भुञ्जानस्य दीप्तिं जनयति । यशस्तु दीप्तं स्वतःप्रकाशस्वभावात् ॥

वाऽभिधीयत" इत्युपपत्तिः । हुते हि शत्रौ यशो वाऽन्नं वा भवतीति ॥ ६ ॥ ( ५ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैग० काण्डे पञ्चमाध्यायस्य प्रथमः पादः ॥ ५ ॥ १ ॥

## अथ पञ्चमाध्यायस्य द्वितीयः पादः ॥

### पवित्रं पुनातेर्मन्त्रः पवित्रमुच्यते ॥

अथ **पवित्रम्** ( ३४ ) इत्यनेकार्थम् । **पुनातेः** इति धातुनिर्देशो निर्वचनाभिप्रायः । **मन्त्र** इत्यभिधेयवचनम् । तदत्र मन्त्रस्य पवित्रत्वख्यापकं निगममुदाहरति—

**"येन॑ दे॒वाः प॒वित्रे॑णा॒त्मानं॑ पु॒नते॑ सदा॑"**

( सा० सं० उ० आ० ५–२–८–५ )

**इत्यपि निगमो भवति ॥**

**येनेति** ॥ अस्य "तेन॑ स॒हस्र॑धारेण पाव॒मानीः(न्यः)पु॑नन्तु नः" इत्युत्तरार्धम् । पवित्रस्य वसिष्ठसहितस्य वा आर्षम् । पावमानी सौमी । **देवाः** ऋत्विग्यजमानाः प्रस्तुते कर्मणि **येन पवित्रेण** मन्त्रेण **सदा** सततमेव **आत्मानं पुनते** पवित्रयन्ति **तेन** तादृशसामर्थ्यवता **सहस्रधारेण** बहु प्रस्नरेण प्रविरलेन मन्त्रेण **पावमानीः** पवमानदैवत्या ऋचो **नः** अस्मान् **पुनन्तु** । पवमानश्च ( पूयमानः ) सोम एव सचापि नः पुनात्विति भावः ॥ ५ ॥

### रश्मयः पवित्रमुच्यन्ते ॥

ते हि स्पर्शनेनैव पावयन्ति । अत्र निगममुदाहरति—

**"गभ॑स्तिपूतः"**

**इत्य॑पि निगमो भवति ॥**

"वा॒चस्पत॑ये पवस्व॒ वृष्णः॑ अं॒शुभ्यां॒ गभ॑स्तिपूतः ॥ दे॒वो दे॒वेभ्यः॑ पवस्व॒ येषां॑ भा॒गोऽसि" इत्येषा उपांशुग्रहग्रहणे विनियुक्ता । हे सोम ! **वाचस्पतये** इन्द्राय प्राणात्मने ( तदर्थम् ) आत्मानं **पवस्व** पूयस्व । **वृष्णः** वर्षितुः अग्नौ प्रास्ताहुत्या वृष्टिं कर्तुरादित्यस्य चार्थे पवस्वात्मानम् । यौ चैतावन्तर्हितौ सन्तौ सकलयज्ञं व्याप्नुवानौ ताभ्याम् **अंशुभ्यां** पवस्व । किञ्च त्वं प्रागप्यभिषवात् **गभस्तिपूतः** रश्मिपूत एवासि । किञ्च **देवः** दानादिगुणयुक्तस्त्वं **देवेभ्यः** देवाना–( न्दानादिगुणयुक्तानामृत्विग्यजमानाना– ) मर्थे **पवस्व** तेषां त्वं पवित्रं ( पावयिता ) भवसि । किं सर्वेषाम् । नेत्याह–**येषां भागोऽसि** ये त्वामभिषवादिक्रियया भजन्ति ऋत्विग्यजमानास्ते ह्यत्र देवत्वेनाभिप्रेताः पावनसम्बन्धात् नहीतरेषां देवानां पापमस्तीत्युक्तमधस्तात् ॥

### आपः पवित्रमुच्यन्ते ॥

ता अपि हि पावयन्ति । तथाचात्र निगमः—

**"श॒तप॑वित्राः स्व॒धया॒ मद॑न्ती"ब॒ह्वुदकाः ॥**

( ऋ० सं० ५–४–१४–३ )

**शतेति** । "श॒तप॑वित्राः स्व॒धया॒ मद॑न्तीर्दे॒वीर्दे॒वाना॒मपि॑ यन्ति॒ पाथः॑ । ता इन्द्र॑स्य॒ मिन॑न्ति व्र॒तानि॒ सिन्धु॑भ्यो ह॒व्यं घृ॒तव॑ज्जुहोत" इतीयमब्दैवत्या त्रिष्टुप् । वसिष्ठस्यार्षम् । **शतपवित्राः** बहूदकाः **स्वधया** स्वकार्यभूतेन अन्नेन ( निघं० २–७–१७ ) **मदन्तीः** जनान्मदयन्त्यः **देवीः** द्योतमानाः दानादिगुणयुक्ता वा **देवानाम्** इन्द्रादीनामपि **पाथः** स्थानमन्तरीक्षम् ( निघं० ४–३–३० ) **यन्ति** गच्छन्ति **ताः** एवंलक्षणाः **इन्द्रस्य व्रतानि** कर्माणि लोकप्रीणनाख्यानि यज्ञादीनि **न मिनन्ति** न हिंसन्ति ( निघं० २–१९–३१ ) प्रत्युतोत्पादयन्ति । हे ऋत्विजः ! यूयम् ताभ्यः **सिन्धुभ्यः** नदीभ्यः ( निघं० १–१३–२१ ) ता उद्दिश्य **घृतवत्** घृतमिश्रम् ( उपस्तरणाभिघारणलक्षणाज्ययुक्तं ) **हव्यम्** पुरोडा-

१. दानादिगुणयुक्ताः ( दातारोऽभिमतानां भक्तेभ्यः ) दीव्यतिरत्र दानार्थः । दीप्त्यर्थो वा ॥ मन्त्रेणैव हि ते ( ऋत्विगादयः ) आत्मानं पुनन्ति । नहीतरेषां देवानां पापमस्ति "न च वै देवान् पापं गच्छती"ति विज्ञायते । ते हि हविषां दातारः । याचनेन चार्थिभ्यस्तत्सादुपपद्यते तेषां देवत्वम् ॥

२. केचिदत्र "पव॑मान॒ मह्यर्णो॒ वि धा॑वसि॒ सूरो॒ न चि॒त्रो अव्य॑यानि॒ पव्य॑या । गभ॑स्तिपूतो॒ नृभि॒रद्रि॑भिः सु॒तो म॒हे वाजा॑य॒ धन्या॑य धन्वसि" ( ऋ० सं० ७–३–१९–३४ ) इति मन्त्रमुदाहरन्ति । पावमानसौमी जगती । हे पवमान ! पूयमान सोम ! पूर्वंत्वमरण्येऽवस्थितः 'सूरोन' सूर्य इव 'चित्रः' चायनीयः पूजनीयः सन् 'गभस्तिपूतः' रश्मिपूत आसीस्तत आहृत्य सोमस्तूपक्रयविधानेन क्रीतः 'नृभिः' मनुष्यैर्ऋत्विग्यजमानैः । 'सुतो'ऽभिषुतश्च 'अद्रिभिः' ग्रावभिस्त्वं, 'महे' महते 'वाजाय' अन्नाय ( निघं० २–७–२ ) 'धन्याय' कृत्स्नं जगद्धारयितुंर्ऽयाय कथंनाम कृत्स्नजगदुपकारित्वमभिनिष्पद्येत वृष्टिनिमित्तेनेत्येतमर्थं पुरस्कृत्य रसभावमापन्नो 'महि' महत् 'अर्णः' उदकम् ( निघं० १–१२–१ ) तत्त्वेनाभिसम्पन्नस्त्वं ( तत्स्वभावमुपगतः ) 'पव्यया' पविमयेन और्णेन पवित्रेण पूयमानः 'अव्ययानि' अविमयानि पात्राणि 'विधावसि' "धावु गतिशुद्ध्योः" ( भ्वा० उ० ) ततो निर्ऋजीषः ( स्वच्छः ) भूत्वा द्रोणकलशंप्रति 'धन्वसि' गच्छसि । धन्वतिर्गतिकर्मा ( निघं० २–१४–६४ ) । एवमसि "गभस्तिपूत" इत्येतस्मात्पावनसम्बन्धाद्रश्मीनां पवित्रत्वमुपपद्यते ॥

१. अत्र "गभ॑स्तिपूतः" "गभ॑स्तिपूतो नृ॒भिरद्रि॑भिः सु॒तः" इत्यपि निगमौ भवतः । इत्येवं पाठो मु. मुद्रितपुस्तके दृश्यते सोऽसङ्गतः । "गभस्तिपूतः" इत्येतावतैवोभयोर्मन्त्रयोर्लाभसम्भवात् । अत एव वृत्तौ केचित्तु-इत्येवमुपक्रम्य द्वितीयो मन्त्र उपन्यस्तः ॥

शादिकं हविः **जुहोत** जुहुत तस्यतवादेशे (पा० ७-१-४५) गुणः ॥ ३ ॥

एवमत्रापरपवित्रशब्देनोच्यन्ते ॥

**अग्निः पवित्रमुच्यते । वायुः पवित्रमुच्यते । सोमः पवित्रमुच्यते । सूर्यः पवित्रमुच्यते । इन्द्रः पवित्रमुच्यते ॥**

अग्न्यादयोऽपि ह्येते पवित्रशब्देनोच्यन्ते । तेऽपि हि सर्व एव पावयन्ति । अत्र निगमं दिग्दर्शनेनोदाहरति ।

**"अ॒ग्निः प॒वित्रं॒ स मा॑ पुनातु । वा॒युः सोम॒ः सूर्य॒ इन्द्रः॑ । प॒वित्रं॑ ते मा॑ पुनन्तु" ॥**

**इत्यपि निगमो भवति ॥**

निगदप्रसिद्ध एवैष निगमः ॥

**तोदस्तुद्यतेः ॥ १ ॥ ( ६ )**

अथ **तोदः** (३४) इत्यनवगतम् "तुदः" इत्यवगमः । **तुद्यतेः** व्यथनार्थस्य (तु० उ०) एष धातुनिर्देशो निर्वचनार्थः । कर्मण्यत्र घञ्द्रष्टव्यः । कोऽत्र युज्यते, भूमेर्विलं तोद इत्युच्यते, तद्धि तुन्नं भवति दीर्घत्वात् । कूप इत्येके । गृहस्थ इत्यपरे । स हि तुद्यते पुत्रपौत्रादिभिः स्वसमीहितसाधनाय । यद्वा तुदति कार्येषु कर्मकरानित्यच् । कशादिरुच्यते ॥ १ ॥

उक्तार्थे निगममुदाहरति—

**"पुरु॒ त्वा॑ दा॒श्वान्वो॑चे॒ऽरिर॑ग्ने॒ तव॒ स्वि॒दा । तो॒दस्ये॑व श॒रण॒ आ म॒हस्य॑ ॥"**

(ऋ० सं० २-२-१९-१)

**पुरुत्वेति** । दीर्घतमस आर्षम् । उष्णिक् । प्रातरनुवाकाश्विनयोः शस्यते । हे **अग्ने** ! **पुरु** बहु **दाश्वान्** दत्तवानभिमतं हविरहं **त्वा** त्वाम् **आ** आभिमुख्येन **वोचे** ह्वयामि । यद्वा बहु वोचे ब्रवीमि "पुत्रं देहि वित्तं देहीत्याशासनानि" ब्रवीमीत्यर्थः । कुतस्त्वामेवाभिह्वयामि ? यतः **तवस्वित्** तवैव **अरिः** अर्ता हविरादिप्रापणेन सेवकोऽहम् । कुतस्त्वय्येव बहु दातुं सामर्थ्यमस्तीत्युपमयाह-**तोदस्येवशरण**

१. "दाश्वान्साह्वान्मीढ्वांश्च-" (पा० ६-१-१२) ति निपातितोऽयं लिटः क्वस्वन्तः । "दाशृ दाने" (भ्वा० उ०)

२. दुर्गस्तु-"अरिः अग्ने ! तवस्वित् आ" इत्येतद्विवक्षार्थम् । सुचिरमपि विचार्य-तवाहमरिरेव स्तोमानामुच्चारणे । अर्यः ईश्वर एव, समर्थोऽहमाह्वयामि त्वां स्तोतुं बहुच दातुमित्यभिप्राय इत्याह ॥ अर्तेति च सायणव्याख्यानमनुसृत्योपन्यस्तम् ॥

३. सायणस्तु-सेवकत्वे दृष्टान्तमनेनाह-महस्य महतः तोदस्येव शिक्षकस्य स्वामिनः शरणेऽस्य गृहे । यथा गर्भदासादिरासमन्तान्नियतो वर्तते तद्वदहमपि । यस्मादेवं तस्मादभिमतं बहु वोचे । त्वमपि सर्वन्देहीत्यर्थ इति ॥

**आमहस्येति** । यथा **महस्य** महतः **तोदस्य** "तुदस्य" तुन्नस्य विदीर्णस्य कस्यचित् भूप्रदेशस्य **आ** अधि (उपरि) **शरणे** विले "शॄहिंसायाम्" । तद्धि विदारितं भवति । एवम् । अयमर्थः । श्वभ्रे (विले) कस्मिंश्चिद्बहव आपः सर्वतो गच्छन्ति, नच तस्य श्वभ्रस्य महतो ग्रहणशक्तिपरिहाणमस्ति । एवं तवानेकाश्वानेकदैवत्याश्चाहुतीरस्माभिः प्रदत्ताः प्रतीच्छतो न सामर्थ्यपरिहाणमस्ति । अतो देवानामस्माकं च त्वमेवातिविशिष्टोपकारे प्रवृत्तोऽतस्त्वामेवाह्वयामि त्वय्येव बहु दातुं सामर्थ्यमस्तीति ॥१॥

एवमत्र शब्दसामर्थ्यादुपमार्थोपपत्तेश्च "तोद" शब्दस्य भूप्रदेशाभिधायित्वमुपपद्यते । तथाचोक्तम् "तोदमध्ये निर्हृत्यार्धचतुर्दशशङ्कं निखन्यादि"ति सदसो निर्माणे ॥ क्रिया अपि चासत्प्रदेश-"स्तोद" इत्युच्यते । तस्मादेतदपि तुन्नस्य भूप्रदेशस्याभिधायकमित्युपपद्यते ॥

**अरिरमित्र ऋच्छतेः ॥**

एतच्च निगमप्रसक्तमुक्तम् । **ऋच्छतेः** हिंसार्थस्य (भ्वा० प०) "अच इः" (उ० ४-११९) **अमित्रशब्दो** नञ्समासेऽपि पुंस्येव । तथाच माघः "स्यातामभित्रौ मित्रे च सहजप्राकृतावपि" इति ॥

**ईश्वरोऽप्यरिरेतस्मादेव ॥**

**एतस्मादेव** धातोः । ऋच्छतेः । असावप्यर्यतेऽभिगम्यतेऽर्थिभिरिति कर्मणि इः ईश्वरोऽत्र राजोच्यते ॥

**यदन्यदेवत्या अग्नावाहुतयो हूयन्ते, इत्येतद्दृष्ट्वैवमवक्ष्यत्—**

**"तो॒दस्ये॑व श॒रण॒ आ म॒हस्य॑-"**

**तुदस्येव शरणेऽधिमहतः ॥**

**यत्**-यस्मात् **अन्यदेवत्याः** अन्याभ्यो देवताभ्य इमा इत्यन्यदेवत्याः "देवतान्तात्तादर्थ्ये यत्" (पा० ५-४-२४) **आहुतयो**ऽसंख्याता **अग्नौ हूयन्ते** नचाग्नेस्तासां ग्रहणशक्तेः परिहाणमस्ति । नच ज्ञायते श्वभ्रे (विले) निषिक्ता आप इव माः क्व गच्छन्तीत्येतत् सामान्यं **दृष्ट्वैवम्** । **अवक्ष्यत्** अवोचत् मन्त्रदृक् भूतेऽत्र लृङ् (पा० ३-३-१४०) **तोद०** ह्स्य इति । **तुद० हतः** । इत्यर्थः ॥ ईश्वरोऽत्र राजोच्यते ॥

१. यद्यपि "ऋ" धातुर्गतिप्रापणयोरेव भ्वादौ पठितः । तस्य ऋच्छादेश (पा० ७-३-७५) उच्यते । तथापीह हिंसार्थे वृत्तिः । प्रापणमपि गतिरेवेति गतिग्रहणात्प्रापणमिह्यातिरिच्यते तद्धिंसयेत्यपि केचिदाहुः ॥

२. मित्रशब्दो हि नित्यं नपुंसकमिति नञ्समासे (तत्पुरुषे) परवल्लिङ्गता युक्ता "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (पा० २-४-२६) इति शासनात् । तथापीह "लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्ये"ति महाभाष्योक्तेरत्र नित्यपुंस्त्वमस्य यथाचोदाहृतम् । एवमन्यत्रापि बोध्यम् ॥

३. आहुतयः ।

**स्वश्वाः । सुअश्वनः ॥**

**स्वश्वाः** ( ३६ ) इत्यनवगतम् **सुअश्वनः** इत्यवगमः । सुगमनं इति तदर्थः । सुपूर्वादश्वतेः ( भ्वा० प० ) असुन् ( उ० ४-१८८ ) अत्र निगममुदाहरति—

**"आजुह्वानो घृतपृष्ठः स्वश्वाः"**

( ऋ० सं० ४-२-८-१ )

**इत्यपि निगमो भवति ॥**

**आजुह्वान इति** ॥ सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वश्वाः ॥ तस्मा अमृध्रा उषसो व्युच्छान्य इन्द्राय सुनवामेत्याह" इति । अत्रेरार्षम् ऐन्द्री त्रिष्टुप् ॥ **सूर्यस्य भानुना** तेजसा सह **आजुह्वानः** सर्वत्र हूयमानः । कर्मणि कर्तृप्रत्ययः । **घृतपृष्ठः** प्रदीप्तज्वालः घृतयुक्तपृष्ठप्रदेशो वा **स्वश्वाः** स्वश्वनः ( शोभनगमनः ) अग्निः **संयतते** सम्यक् प्रयत्नं करोति । उदयकाले ह्यग्नयः प्रज्वाल्यन्ते संगच्छते संस्पर्धते वा सूर्येण, अतिदीप्तत्वादिति दुर्गः । तस्मात् कारणात् **यो** यजमानः **इन्द्राय** इन्द्रार्थं **सुनवाम** अभिषुणुमः सोमम् **इति आह** ब्रूते अध्वर्युं प्रति **तस्मै** तस्यापि कल्याणाभिव्याहारिणः । विभक्तिव्यत्यय आर्षः । ( पा० २-३-६२ ) **अमृध्राः** अमृताः ( अहिंसिताः अम्लानाः ) **उषसः** प्रभातानि ( सुप्रभाता उषसः ) **व्युच्छान्** विभान्ति । किमुत यः सुनोतीत्यर्थः ॥ १ ॥

एवमस्मिन्"सूर्येण संयतते" इत्यनेन सम्बन्धात् "स्वश्वाः सुअश्वनः" अश्वतेः ( भ्वा० प० ) गत्यर्थस्य दर्शनादित्युपपद्यते ॥

**शिपिविष्टो-विष्णुरिति विष्णोर्द्वे नामनी भवतः । कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः ॥ २ ॥ ( ७ )**

**इति एते विष्णोरेव द्वे नामनी भवतः** । अत्र **शिपिविष्टः** ( ३७ ) इत्येतद्गुणपदमनवगतम् । पक्षे चानेकार्थम् । शिपिविष्टः—शेप इव निर्वेष्टित इत्यर्थप्रतीतिः । अस्य सम्बन्धादत्र **विष्णु**—( ३८ ) शब्दः समाम्नातः । यथा "अक्षाः" इत्यस्य सम्बन्धात् "सोम" शब्दः "सोमो अक्षाः" इति । न ह्यत्र प्राधान्येन विष्णुशब्दः समाम्नातः । देवतापदत्वात् । अनयोर्द्वयोरपि नाम्नोर्यत् **पूर्वं** पदं तत् **कुत्सार्थीयं** कुत्सितार्थम् स्वार्थे छः । **भवतीति-औपमन्यवः** । आचार्यो "मन्यत" इति शेषः ॥

यथाच कुत्सितार्थीयं तथोदाहरणार्थमेव निर्ब्रुवन्दर्शयिष्यति—॥ २ ॥ ( ७ ) ॥

**"किमित्ते विष्णो परिचक्ष्यंभूत् प्रयद्ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदपगूह एतद्यदुन्यरूपः समिथे बभूथ" ॥ ६ ॥**

( ऋ० सं० ५-६-२५-६ )

इयमुत्तरा चैते वसिष्ठस्यार्षे । विष्णोः शिपिविष्टस्यान्वारम्भणीये चरुः, तस्यैते याज्यानुवाक्ये, वाजपेये च सप्तदशे शस्त्रे शस्येते, सोमातिरेकशस्त्रे च तृतीयसवने च ॥ पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमरूपान्तरं धारयन्संग्रामे वसिष्ठस्य साहाय्यं चकार तं जानन्नृषिरनया प्रत्याचष्टे—हे **विष्णो ! ते** तव **यत्** नाम अस्मभ्यं **प्रयद्ववक्षे** पुनःपुनः ब्रूषे **'शिपिविष्टोऽस्मी'**—ति । अन्तर्भावितोपमानमेतत् शेप इव निर्वेष्टितस्तेजसा अनाच्छादितो भवामीति तदश्लीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः । तन्नाम **किं परिचक्ष्यं** वर्जनीयं ( परित्याज्यं ) विरुद्धार्थप्रतिपादकत्वात्स्वत एव परित्यक्तं हि तत् । शिष्टं समानं पूर्वेण । अत उक्तरूपविलक्षणं यद्वैष्णवरूपमस्ति **एतद् वर्पः** रूपम् ( निघं० ३-७-३ ) **अस्मत्** अस्माकम् **मापगूहः** अपगूढं संवृतं मा कुरु । "गुहू संवरणे" ( भ्वा० उ० ) अपि तु तदेव रूपं प्रकटय, वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत् **यत्** यस्मात् **अन्यरूपः** रूपान्तरमेव धारयन् **समिथे** सङ्ग्रामे **बभूथ** अस्माकं सहायो भवसि । तस्मादिदं गूहनं न कार्यम् ॥ **इद्**—ति पादपूरणः ॥ प्रशंसापक्षे तु हे विष्णो ! ते तव तन्नाम किं परिचक्ष्यं भूत् किं प्रख्यापनीयं भवति ? न प्रख्यापनीयं, किं तन्नाम ? शिपिविष्टः रश्मिभिराविष्टः अस्मीति यन्नाम पुनःपुनः प्रब्रूषे । यत एवं प्रख्यातरूपस्त्वमतोऽस्माकमेतद्वैष्णवं रूपं संवृतं मा कार्षीः । इदानीं गूढरूपोऽपि यद्यस्मात्त्वं समिथे संग्रामे अन्यरूपः कृत्रिमरूपाद्यदन्यद्वैष्णवं रूपं शौर्यादिलक्षणं तादृग्रूप एव बभूथ भवसि, तस्मात्त्वं गूढोऽपि ज्ञायस एवेति व्यर्थमेव तस्य रूपस्य गूहनमतो बहुतेजस्कं यद्वैष्णवं रूपं तदस्माकं प्रदर्शयेति तात्पर्यार्थः ॥ अत्रापीदिति पूरण एव ॥ ६ ॥

तदेतदुभयथा स्वयं व्याचष्टे—

१. **अमर्धन्ता सोमपेयाय देवाः"** ( ऋ०सं० ३-१-२५-४ ) इत्यादौ मृधिर्हिंसार्थो भवतीति स्कन्दस्वामिभाष्ये, सायणे अमरटीकायां ( सुबो० ) च "मृधु हिंसायाम् ( भ्वा० उ० ) इति पठ्यते ततः क्विप्भावे मृधमृत्युस्ततो मत्वर्थे रः नैरुक्त इति साधनमस्योह्यम् । स्वादेराकृतिगणत्वमत्र शरणम् ॥

२. "शिश्नो मेढ्रं मेहनशेपसी" इत्यमरः । निर्वेष्टितः वेष्टनत्वग्विवर्जितः ॥

१. वेष्टनत्वग्विवर्जित इति श्रीभोजनिवासः ॥

२. उदितमात्रत्वादप्रतिपन्नरश्मिः । तथा च विष्णोरादित्यस्य च नामनी एते ( शिपिविष्टः विष्णुरिति च ) इति देवराजयज्वानः । अपि वा "उपमानयोगात्कुत्सितार्थमिद" मित्यौपमन्यवः । पृषोदरादित्वाद्रूपसिद्धिरर्थसिद्धिश्च ॥

३. कुत्सितार्थीयतया, प्रशंसार्थीयतया च ॥

**किं ते विष्णो ! अप्रख्यातमेतद्भवति । अप्रख्यापनीयं, यन्नः प्रब्रूषे, शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः, अपि वा प्रशंसानामैवाभिप्रेतं स्यात् ? किं ते विष्णो ! प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते, तैराविष्टो भवति । मा वर्पो अस्मदपगूह एतत् । वर्प इति रूपनाम, (निघं. ३।७) वृणोतीति सतो, यदन्यरूपः समिथे सङ्ग्रामे भवसि संयतरश्मिस्तस्योत्तरा भूयसे निर्वचनाय ॥ ३ ॥ (८)**

अथ "परिचक्ष्यमि"त्यस्यार्थमाह—**अप्रख्यातमिति** । परिध्याख्यापनीयं भवतीति हि तदर्थः । किमेतदेवैकं विगतरश्मिरूपं परिचक्ष्यं परिध्याख्यापनीयं भवति, नान्यानि रूपाणि तव सन्ति । **यत्** येन नः अस्माकमग्रत एवं प्रब्रूषे इति प्रवक्षे इत्यस्यार्थः । प्रेत्यस्य पुनः पुनरित्यर्थः । अथ शिपिविष्टोऽस्मीत्यस्यार्थमाह—**शेप इवेत्यादि** । **अप्रतिपन्नरश्मिर्हि** सूर्यः उदयकाले निर्वेष्टितः शेपरूपो भवति, तस्य तद्रूपगुणयोगिलमकुत्सितार्थमित्युपपद्यते-**अपि वा** अथवा **प्रशंसानामैवाभिप्रेतं स्यात्** । प्रशंसायुक्तगुणमेवैतन्नाम स्यात् "शिपिविष्ट" इति । आह-कथम् ? इति । उच्यते-**शिपयः अत्र** अस्मिन्प्रशंसापक्षे **रश्मय उच्यन्ते** । स च सूर्यो मुहूर्ततस्तैः शिपिसंज्ञैर्बालरश्मिभि**राविष्टो भवति** । तस्मात् शिपिविष्ट इत्युच्यते । एवमेतद्व्युत्पाद्यमानं प्रशंसानामैव भवति, नाश्लीलोपमासम्बद्धमित्यभिप्रायः । तद्यथा हे **विष्णो ! किमेत**देवैकं रूपं **ते** तव **प्रख्यातं**-प्रख्यापनीयमस्ति, एतच्च "परिचक्ष्य-"मित्यस्यार्थः । यदेतदुदयकाले प्रतिपन्नमात्रेषु रश्मिषु नान्यानि रूपाणि प्रख्यापनीयानि सन्ति । **यदुत एवं प्रब्रूषे ० ० रश्मिः** प्रतिपन्नमात्रेषु रश्मिष्विति । विजानीमस्त्वेतद्रूपद्वयमतो ब्रूमः **माव० एतत्** । **मा** एतद् **वर्पः** रूपम् **अस्मत्** अस्माकमग्रतः ख्यापय, किं तर्हि ? **अपगूह एतत्** संवृतं कुरुष्वैतत् शिपिविष्टशब्दवाच्यमुपमेयरूपम् । अथवा बालरश्मिसंयुक्तम् । **वर्प इति रूपनाम वृणोतीति सतः** । सत इति कर्तृकारकाभिधानम् "वृञ् वरणे" (स्वा० उ०) "वृञ्शीङ्भ्यां रूपस्वाङ्गयोर्पुट् च" (उ० ४-१९६) इत्यसुन्पुडागमश्च । किं तर्हि ? **यदन्यरूपः** येनान्येन रूपेण । **भवसीति** बभूथेत्यस्यार्थः । "बभूथाततन्थजगृभ्मववर्थेतिनिगमे" (पा० ७-२-६४) इति निपातितः । लडर्थेऽत्र लिट् । **संयतरश्मिः** संवद्धानेकरश्मिजालः । तदेव नो माध्यन्दिनं रूपमनेकरश्मिविकचं प्रकाशयस्वेत्यभिप्रायः । तच्चनाधृष्टं संग्रामेषु भवति । **तस्य** एवार्थस्य प्रकृतस्य, यथाप्रशंसानामैतदिति **उत्तरा** ऋगस्या एव प्रकृताया ऋचः **भूयसे निर्वचनाय** । बहुतराय निर्व्यवचनाय भवति । हि अत्र स्वशब्देनैवास्य प्रशंसानामत्वमुच्यते ॥ ३ ॥ (८)

**"प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥"**

(ऋ० सं० ५-६-२५-५)

**प्रतत्त इति** ॥ हे **शिपिविष्ट !** रश्मिभिराविष्ट ! विष्णो ! **तत् ते** तव **नाम** "शिपिविष्टे"ति रूपम् । **अर्यः** स्वामी "अर्यः स्वामिवैश्ययोः" (पा० ३-१-१०३) इति स्मरणात् स्तुतीनामुदीरणे हविषां वा दाने तथा **वयुनानि** ज्ञातव्यान्यर्थजातानि युष्मद्विषयाणि प्रज्ञानानि वा (निघं० ३-८-९-१०) **विद्वान्** जानन्नहम् । **अद्य** इदानीम् **प्रशंसामि** प्रकर्षेण स्तौमि । यद्वा-"तत्प्रशंसार्थायमेव पश्यामि, यदन्ये कुत्सितार्थीयं पश्यन्ति" यस्त्वं सर्वगुणसम्पन्न ईश्वरः **तं त्वा** त्वां **तवसम्** महान्तम् (निघं० ३-३-६) प्रवृद्धं विष्णुं (वामनरूपिणम्) **अतव्यान्** अमहान्[२] । "अतवीयानप्रवृद्धतर" इति सायणः । अहं **गृणामि** स्तौमि । कीदृशम् ? **अस्य रजसः** अन्तरिक्षलोकस्य (निघं० ३-३-८) **पराके** पराक्रान्ते दूरदेशे (निघं० ३-२६-२) **क्षयन्तम्** निवसन्तम् "क्षि निवासगत्योः" (तु० प०) शता ॥ ५ ॥

अथास्य भाष्यम्—

**तत्तेऽद्य शिपिविष्टनाम-अर्यः प्रशंसाम्यर्योऽहमस्मीश्वरः स्तोमानामर्यस्त्वमसीति वा, तं त्वा स्तौमि तवसमतव्यांस्तवस इति महतो नामधेयमुदितो भवति, निवसन्तमस्य रजसः पराके पराक्रान्ते ॥**

**अर्योऽहमस्मि** । यस्मादीश्वरस्तुतीनामुदीरणे युष्मद्गुणाभिज्ञश्च[१] तस्मात्**प्रशंसामि** । अथवा **अर्यस्त्वमसि** । **अर्य** ईश्वरो मदनुग्रहाय समर्थस्त्वमस्मात्प्रशंसामि । तत्ते नामेति विस्फुटतरं प्रशंसानामत्वमिति भावः । प्रसिद्धार्थोह्ययं तच्छब्दो यतो यच्छब्दं नाकाङ्क्षते । **तं त्वा स्तौमि** यस्त्वं सर्वगुणसम्पन्न ईश्वरः । एषोऽपि प्रसिद्धार्थक एव तच्छब्दः । **तवसम्** महान्तम् । **उदितो भवति** । उद्धर्वमितो गतो विवृद्धो भवतीति तवसः । तवतिर्वृद्ध्यर्थ इति देवराजयज्वानः । तस्मात् "अस्मविचमी"

१. तथास्यैतद्धेतुगर्भविशेषणम् । यतोऽहं युष्मद्गुणाभिज्ञस्तस्मादहं प्रशंसामि । इति ॥

२. एवमात्मनिन्दया स्तूयते विष्णुः ॥ नमसते च । स्वावधिकोत्कर्षबोधनमेव हि नतिरिति निगर्वः । तवतिर्वृद्ध्यर्थः सौत्रो धातुः । ततो"ऽचोयत्" (पा० ३-१-९७) अर्हार्थे "अर्हे कृत्यतृचश्च" (पा० ३-३-१६९) ति स्मरणाद् स्तोतुं योग्यस्तव्यः । ससंज्ञनवीति तव्यान् । सायणस्तु तवइत्यबन्तस्य अतिशायने ईयसुनि तवीयान्सं तव्यानित्याह ॥ अत्र पक्षे वर्णविपर्यय आर्षः ॥

( उ० ३–११३ )—त्यादिना विहितोऽसज्बाहुलकाद्भवति । निगदव्याख्यानमन्यत् ॥

**राघृणिरागतहृणिः ।**

**"आघृणे संसचावहै"**

( ऋ० सं० ४–८–२१–१ )

**आगतहृणे संसेवावहै ॥**

अथ **आघृणिः** ( ३९ ) इत्यनवगतम् । **आगतहृणिः** इत्यवगमः । आगतदीप्तिरागतक्रोधो वाभिधेयः । तथाच निगमः— **आघृ० वहै** इति । "एहि वां विमुचो नपादाघृणे संसचावहै । रथीर्ऋतस्य नो भव" इयं भारद्वाजस्यार्षं गायत्री । पौष्णे सूक्ते ॥ **हे विमुचः** विमोचयितः! प्रजानां तमोभ्यः पूषन्! सूर्य! सायणस्तु—"विमुञ्चति सृष्टिकाले स्वसकाशात्सर्वाः प्रजाः विसृजतीति विमुक्प्रजापतिस्तस्य पुत्र" इत्यर्थमाह । अत्रार्थे आदिवृद्ध्यभाव आर्षः कल्पनीयःस्यादित्युपेक्षितः । **नपात्** नप्तः! अपाम् पौत्र! अब्भ्योऽग्निरग्नेरादित्य इत्यागमपक्षे नप्तृत्वं सूर्यस्यापाम् । यद्वा—मानुषाणामेवास्माकं नप्तस्त्वमसि । यतो नृभ्य एव ऋत्विगादिभ्यो जायतेऽग्निरग्नेरपि च सूर्यो जायते । यथाचोक्तमभ्युपस्थाने—"एष व्रातः प्रवत्युवती"—ति । **आघृणे** आगतदीप्ते! **एहि** आगच्छ उदिहि । त्वदुदयप्रतीक्ष एवाहं यज्ञप्रारम्भं प्रत्याशासे । त्वय्युदिते प्रोत्सर्पतामयं मे यज्ञ इति भावः । **वाम्** आवाम् । आकारलोपश्छान्दसः । **संसचावहै** संसेवावहै परस्परम् । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः । "षच् सेचने सेवने च" ( भ्वा० प० ) तादृशस्त्वं **नः** अस्माकम् **ऋतस्य** यज्ञस्य **रथीः** रंहयिता—गमयिता ( प्रोत्सर्पयिता ) **भव** ॥ तथाच "रंहतेर्गतिकर्मणः" ( भ्वा० प० ) "हनिकुषी—" ( उ० २–२ )—त्यादिना विहितः क्थन्बाहुलकाद्भवति नकारहकारलोपश्चेति रथः । सोऽस्यास्तीति रथीः । "छन्दसीवनिपौ चे" ( पा० ५–२–१२२ वा० )ति मत्वर्थे ईप्रत्ययः ॥ १ ॥

एवमत्र सूर्यसम्बन्धात् "आघृणि–" शब्दो दीप्तिवाचकः । दीप्तिकर्मसु पठितोऽप्ययं "हृणि–"रिति ( निघं० १–१७–१० ) गतशब्दलोपश्च "प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपश्चे"ति( पा० २–२–२४ ) वार्तिकात् । क्रोधोऽपि "हृणि" रित्युच्यते ( निघं० २–१३–३ ) तदपि प्रकरणवशादुपेक्षितव्यम् ॥

**पृथुज्रयाः पृथुजवः ॥**

**"पृथुज्रया अमिनादायुर्दस्योः ।"**

( ऋ० सं० ३–३–१३–२ )

**ग्रामापयदायुर्दस्योः ॥ ४ ॥ (९)**

अथ **पृथुज्रयाः** ( ४० ) इत्यनवगतम् **पृथुजवः** इत्यवगमः । पृथुजवो बहुवेगः । "ज्रि अभिभवे" ( भ्वा० प० ) असुनि ( उ० ४–१८८ ) गुणे ज्रयो वेगः । पृथुः ज्रयो यस्य सः । वेगेनान्यानभिभविता महाजव इत्यर्थः । उदाहरणमस्य— **पृथु० दस्योः** इति ॥ अस्य "यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम् । इनतमः सत्वभिर्यो ह शूषैः" इत्यादिः । विश्वामित्रस्येयमार्षं त्रिष्टुप् । ऐन्द्रे सूक्ते व्यूढस्य दशरात्रस्य द्वितीयेऽनि मरुत्वतीये शस्त्रे शस्यते । **पृतनासु** व्याप्रियन्तेऽत्र योद्धार इति पृतनाः सङ्ग्रामाः ( निघं० २–१७–१८ ) "पृङ् व्यायामे" ( तु० आ० ) "पृपूसांकित्" इति तन्किलाद्गुणाभावः । तत्र **स्वराजं** स्वतेजसा राजमानम् अपराधीनराज्यमिति दुर्गः । **हरिष्ठां** हरिस्थां हरियुक्ते रथे वर्तमानम् । "अमिपूर्वः" (पा० ६–१–१०७) इत्यत्र "वा छन्दसी" ( पा० ६–१–१०६ ) त्यनुवृत्तेरप्रवृत्तौ "प्रथमयोः पूर्वसवर्ण" ( पा० ६–१–१०२ ) इति पूर्वसवर्णदीर्घः ॥ हर्योः स्थातारमिति दुर्गः । **नृतमं** बलस्य युद्धे नेतारम् । यो हि **द्विता** द्विविधेनापि बलेन सांयौगिकेनौरसेन च **तरति** जयति शत्रून् । सर्वथा यो जेतुं न शक्यस्तथाभूतम् इत्यर्थः । यद्वा द्विता—युद्धमासाद्य सेनां द्विधा कृत्वा—वर्तमानम् । **यम्** इन्द्रम् **नकिः** अव्ययम् न कश्चिदपि **तरति** उत्तीर्य गच्छति हन्तुं शक्नोतीत्यर्थः । **नुः** प्रसिद्धौ ॥ स इन्द्रः **इनतमः** ईश्वरतमश्च यः सर्वेभ्य ईश्वरेभ्यः । अतिशयेन सेनाखामीति सायणः । **सत्वभिः** परितः सीदद्भिर्मरुद्भिः सदेस्त्वन् औणादिकः (देवैः) यद्वा बहुसत्वसंयुक्तैः हस्त्यश्वपदातिलक्षणैः सांयोगिकैर्बलैः **शूषैः** च बलविशेषैरेव सह **यः** यान् गच्छन् अत एव **पृथुज्रयाः** युद्धं प्रति तीव्रवेगस्सन् **दस्योः** शत्रोर्वृत्रस्यासुरस्य मेघस्य वा **आयुः** अन्नं प्राणं वा ( निघं० २–८–२३ ) **अमिनात्** मिनाति प्रामापयत् हिनस्तीत्यर्थः । वर्तमाने लुङ् ( पा० ३–४–६ ) **ह** पादपूरणः "तुह्रि च स्म ह वै पादपूरणे" इत्यमरः ॥ २ ॥

एवमत्र शब्दसारूप्याद्बधाधिकाराच्च "पृथुज्रयाः पृथुजव" इत्युपपद्यते ॥

अथ "**अथर्युम्** इत्यनवगतम् । अतनवन्तम्" इत्यवगमस्तत्र निगममेव तावदाह—

---

१. सायणस्तु—वाति गच्छति स्तुतिं प्राप्नोतीति वाः स्तोता "वा गतिगन्धनयोः" (अा० प०) इत्यस्मात् "आतो मनिन्नि–" (पा० ३–२–७४ ) ति विच् । वां गन्तारं स्तोतारं मामेहीत्येवं व्याचख्यौ ॥

१. शोषयन्ति परबलानीति शूषाणि बलानि ( निघं० २–८–१३ ) "शुष शोषणे" ( दि० प० ) अस्मात् कप्रत्ययश्छिलोपश्च निपात्यते । एतच्च सत्वस्यैव विशेषणमित्यपि मतम् ।

२. नैरुक्तमतेनैतत् ॥

३. पतेर्गत्यर्थस्य "पतेर्णिच्चे" ( उ० २–११५ ) त्युसिः णित्वाद्वृद्धिः । पत्यनेनेत्यायुः ॥

**"अ॒ग्निं नरो॒ दीधि॑तिभिर॒रण्यो॒र्हस्त॑च्युती जनयन्त प्रश॒स्तम् । दू॒रे॒दृशं॑ गृ॒हप॑तिमथ॒र्युम् ॥"**

( ऋ० सं० ५-१-२३१ )

**अग्निमिति** । वसिष्ठस्यार्षं विराट् त्रिष्टुप् । महाव्रते आग्नेये सूक्ते प्रथमैवेयम् । **नरः** नेतारः मनुष्याः ऋत्विजः **प्रशस्तं** प्रकर्षेण स्तुतम् । "शंसु स्तुतौ" ( भ्वा० प० ) क्तः । प्रशस्यमिति दुर्गः । **दूरेदृशं** दूरे दृश्यमानम् । दूरे पश्यन्तं वा । **गृहपतिं** गृहाणां पालकम् । **अथर्युम्** अतनवन्तं गमनवन्तमग्निम् । अततेर्गत्यर्थात् ( भ्वा० प० ) युस्प्रत्ययो धातोरथरादेशश्चातनमथर्युशब्देनोच्यते, ततो मत्वर्थीयस्य लुक्[1] । **अरण्यो** रागत्यं वर्तमानम्, यद्वा अरण्योः सकाशात् **हस्तच्युती** हस्तप्रच्युत्या "सुपां सुलुगि" ( पा० ७-१-३९ ) ति पूर्वसवर्ण आकारस्य । हस्तगत्या । हस्ताभ्यां प्रच्यावयन्त इति यावत् **दीधितिभिः** अङ्गुलीभिः ( निघं० २-५ ) ( योक्त्रं परिगृह्य ) **जनयन्त** उत्पादयामासुः । अडभाव आर्षः ॥ १ ॥

एवमत्रातर्तेर्गत्यर्थस्य शब्दसारूप्यादन्यधिकाराच्चापि "अथर्युः" अतनवानित्युपपद्यते ॥

अथास्य भाष्यम्—

**दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मसु ॥**

तथा च दधातेः क्तिचि रूपम् "पृषोदरादित्वात्" ( पा० ६-३-१०९ ) साधुत्वम् ॥ **कर्मस्वनुष्ठीयमानेषु** ता **धीयन्ते** इति **दीधितयो भवन्ति अङ्गुलयः** करशाखाः ॥

अथ निगमप्रसक्तमरणिं निर्ब्रवीति—

**अरणी प्रत्यृत एने अग्निः ॥**

**प्रत्यृतः** प्रतिगतः । तथाचाग्निर्ऋच्छत्येने प्रतीत्यरणी "ऋ गतिप्रापणयोः" ( भ्वा० प० ) ततः "अर्तिसृधृधमि०" ( उ० २-१०२ ) इत्यादिनाऽनिप्रत्ययः । "अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि" इति मेदिनी ॥

अथ वाग्निरेवारणिरित्याह—

**समरणाज्जायत इति वा ॥**

अथवा **समरणात्** अरण्योः समागमनान्निर्मन्थना-**ज्जायत इति** अग्निरेवारणिः । तथा च अग्निरिति पूर्ववाक्याद्देहलीदीपन्यायेन वाऽत्रापि सम्बध्यते ॥

**हस्तच्युती—हस्तप्रच्युत्या, जनयन्त, प्रशस्तं, दूरे दर्शनं, गृहपतिमतनवन्तम् ॥ ५ ॥ ( १० )**

**अतनवन्तम्** गमनवन्तम् अथर्युशब्दाभिधेयमेतद्गतमन्यदधस्तात् ॥ ५ ॥ ( १० )

अथ **काणुका** ( ४१ ) इत्येतदनवगतमनेकार्थं चावगमयन्निगममेव तावदाह—

१. गुणवचनत्वमाश्रित्य "गुणवचनेभ्यो मतुपो लुगिष्ट" ( पा० १-४-१९ वा० ) इति ॥



**"एक॑या प्रति॒धाऽपि॑बत्सा॒कं सरां॑सि त्रिं॒शतं॑म् । इन्द्र॒ः सोम॑स्य काणु॒का ॥"**

( ऋ० सं० ६-५-२९-४ )

**एकयेति** । काण्वस्य कुरुसुतेरार्षं गायत्र्यैन्द्री ॥ अयम् **इन्द्रः एकया प्रतिधा** एकेनैव प्रति ( णि ) धानेन ( सकृत्प्रहितेनैव चेतसा ) **साकं** सह । एकधैव **त्रिंशतं** तावत्संख्याकानि **सोमस्य** "रसेन पूर्णानी"ति शेषः । **काणुका** कान्तकानि, कमनीयानि प्रियाणि **सरांसि** तत्तुल्यानि बृहन्ति पात्राणि ( पात्रस्थान्सोमरसानिति यावत् ) **अपिबत्** पीतवान्माध्यन्दिनसवने । याज्ञिकप्रसिद्ध्यैव व्याख्यातम् । नैरुक्तप्रसिद्ध्या तु—कालाभिमानीन्द्रस्त्रिंशदपरपक्षस्याहोरात्रांस्त्रिंशत्पूर्वपक्षस्य च सन्ति, तानेकरूपमनुभवतीत्यर्थं भाष्यकारोऽभिप्रैति, यथाचोपरिष्टाद्व्यक्तीभविष्यति ॥ ४ ॥

तथाच भाष्यम्—

**एकेन प्रतिधानेनापिबत्साकं सहेत्यर्थः । इन्द्रः सोमस्य काणुका । कान्तकानीति वा, क्रान्तकानीति वा कृतकानीति वा ॥**

**क्रान्तकानि** सोमस्य क्रान्तानि । अखिलं सरांसि सोमस्य रसेनैव पूर्णानीत्यर्थः । अथवा **कृतकानि** संस्कृतानि ऋत्विग्भिरिन्द्रार्थमेव । तथाच कान्त-क्रान्त-कृत-शब्दानां स्वार्थे के काणुभावः पृषोदरादित्वात् । ततः शसि "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लुक् । सरांस्यनेन विशिष्यन्ते यद्वा काणुकेतीन्द्रविशेषणम् तदाह—

**इन्द्रः सोमस्य कान्त इति वा ॥**

अथ वा **इन्द्रः** यस्मात् **सोमस्य कान्तः** कामुकस्तस्मादपिबदिति काणुकेन्द्रः । लिङ्गव्यत्यय आर्षः ।

**आकणे घात इति वा ॥**

अथवा काणुकेति पानक्रियाविशेषणम् कणेशब्दस्य स्थाने निपात्यते, पृषोदरादित्वात् स चायं ( कणेशब्दः ) सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते तत्प्रतीघातय्यावदपिवत् तदाह—**आकणे घात इति** । यावत्कणे हन्यते तावत् ॥ तथाच पाणिनिसूत्रम् "कणेमनसी श्रद्धाप्रतीघाते" ( १-४-६६ ) इति ॥ अयमेतावानर्थः ( आ कणेघातमिति ) कणेशब्दबलेनैवाध्याहृतो भाष्यकारेण, सचायं काणुकाशब्दप्रकृतिभूतस्तदर्थश्च कान्तिः कामः प्रार्थना अभिलाषः सर्वोऽप्यतिशयित एव । तदेतदुदाहरणेन दर्शयति—

**कणे हतः कान्तिहतः ॥**

१. आहवनीयं प्रति गतानीत्यर्थः । ऋजुः ॥

२. मूले घात इति अमः सुभावः "सुपां सुलुगि"ति ( पा० ७-१-३९ ) यद्वा घा इत्येव हन्त्यर्थस्ततस्तसिः । "पञ्चम्यास्तसिल्" ( पा० ५-३-७ ) इति ॥

इति । हृतपानाभिलाष इत्यर्थः । तदित्थं काणुकेति सरोविशेषणमिन्द्रविशेषणं वा, पानक्रियाविशेषणं वा ? सर्वेषामेवास्मिन्मन्त्रे प्रकृतत्वात् । एवं चास्य विकल्प्यमानस्यानेकार्थतापि दर्शितैव भवति ॥

अथास्मिन्मन्त्रे "सरांसि त्रिंशत" मिति यदुक्तं तदभिधेयविषयख्यापनप्रसक्तमाह—

**तत्रैतद्याज्ञिका वेदयन्ते, त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि, तान्येतस्मिन्काल एकेन प्रतिधानेन पिबन्ति, तान्यत्र सरांस्युच्यन्ते ॥**

तत्र एतस्मिंस्त्रिंशच्छब्दे । **एतत्** अभिधेयमर्थवस्तु **याज्ञिकाः** यज्ञविदो **वेदयन्ते** कथयन्ति । किं ? **त्रिंश००तानि** इति । तत्र हि माध्यन्दिने सवने उक्थपर्यायास्त्रयोऽप्यैन्द्रा एव भवन्ति । त्रिष्वपि चैतेषु दश चमसाः, तदभिप्रायेण त्रिंशत्सरांसीत्युक्तमन्त्रदृशा । ते ह्यत्रेन्द्रस्य "सरकाः"[२] ( मद्यपानपात्राणि ) अभिप्रेताः शीधुसरका इवेतरस्य कस्यचित्क्षत्रियस्य । **तानि** तथाभूतानि यान्युक्थसम्बद्धानि सोमपात्राणि तानि सर्वाणि **एकेन प्रतिधानेन** सकृत्प्रहितेनैव चेतसा **पिबन्ति** पीयन्ते । **तान्यत्र सरांस्युच्यन्त** इत्येष याज्ञिकानामभिप्रायः ॥

**त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्ताः ॥**

**तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति, तथापि निगमो भवति-"यमक्षितिमक्षितयः पिबन्ती"ति॥**

**तद्**-तत्रैवंसति **या एताश्चान्द्रमस्यः** चन्द्रमसि भवाः **आगामिन्यः** प्रतिपद्द्वितीयाद्यासु तिथिष्वागच्छन्ति **आपस्ता एव रश्मयो भवन्ति ताः** रश्मीः[३] **अपरपक्षे** मानुषाणां कृष्णपक्षे **पिबन्ति** सूर्यरश्मयः ( तदभिमानिनो देवाः ) **तथापि** यथाचैतदेवं तथैषः **यमक्षितिम्** चन्द्रम् **अक्षितयः** अक्षीणाः सर्वदानुपक्षीणाः सूर्यरश्मयः ॥

**तं पूर्वपक्ष आप्याययन्ति । तथापि निगमो भवति—**

**"यथा देवा अंशुमाप्याययन्ति" इति ॥६॥**

**तं** चन्द्रमसमपरपक्षे पीतं ते **पूर्वपक्षे** मानुषाणां शुक्लपक्षे प्राप्ते पुनः **आप्याययन्ति** पूरयन्ति । **तथापि**-यथा चैतदेवं तथैषः **निगमो भवति यथा०० यन्ति इति** ॥ **अंशुम्** सोमम् तथाच पठ्यते—

"यथा देवा अंशुमाप्याययन्ति यमक्षितिमक्षितयः पिबन्ति ॥ तेन चन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः" इति ॥

राजयक्ष्मगृहीतस्य वैश्वदेवश्चरुर्निरूप्यते, तत्र प्राक् स्विष्टकृतोऽनेन याज्याहुतिर्हूयते । तत्र यजमान एतेनाशिषाभिवर्द्धते हे यजमान ! यथा एवं तथा त्वामपि हविर्दातारं सन्तमिन्द्रादयो भुवनस्य गोप्तारः देवाः पिबन्तु उपजीवन्तु पीलाचायुषा धनेन चाप्याययन्तु इति समासार्थः । अत्र (नैरुक्तपक्षे) इन्द्र आदित्यः "असावादित्य इन्द्रः" इति हि विज्ञायते । तदवयवभूताश्च रश्मय आदित्येन सह समासव्यासस्तुतिभाजः । सरःशब्दः खल्वपि उदके वर्तते "पयः सरः भेषजम्" इत्युदकनामसु ( निघं० १-१२ ) पठितम् । तत्रैवंसति यानि तान्युदकानि सरांसि पञ्चदशाहःसम्भृतानि साकमवस्थितानि भवन्ति चन्द्रमसि, तानि सूर्यः इन्द्रो रश्मिभिरपरपक्षे पिबतीति सर्वमेतदुपपद्यते नैरुक्तपक्षे ॥ ६ ॥ **अथाध्रिगुः** ( ४३ ) इत्यनवगतमनेकार्थं च तत्रोच्यते—

**अध्रिगुर्मन्त्रो भवति, गव्यधिकृतत्वात् ॥**

**अध्रि००भवतीति** । अत्र हेतुमाह-**गवीति** । सोऽयमधिगुः सन्नध्रिगुरित्युच्यते । गवि योऽधिकृतो मन्त्रः[२] सोऽध्रिगुः । अधिकृतशब्दस्याध्रिभावः पृषोदरादित्वात् । गोशब्दश्चात्र पशुमात्रोपलक्षणः । छागादिष्वधिकृतत्वात् ॥ तथाच मन्त्रः "तुभ्यम्" (ऋ० सं० ३-१-२१-४) इत्याद्यनुपद-(मग्रे स-) मुपन्यस्तः ॥

**अपि वा प्रशासनमेवाभिप्रेतं स्यात् । तच्छब्दवत्त्वात् ॥**

**अपि वा** अथवा । **तच्छब्दवत्त्वात्** अध्रिग्वादिशब्दवत्वात् **प्रशासनम्** विधिवचनम्[३] **एव** एतत् **अभिप्रेतं स्यात्** अध्रिगुशब्देन मन्त्रदृशः । अध्रिगुर्नाम दैव्यः कश्चन

---

१. लोकोऽपि "काणेहत्य पयः पिबति" अभिलाषातिशयं हृत्वा ( अतिवाह्य ) पिबतीत्यर्थः ॥

२. तथाचाजयः-"सरकः शीधुपानेक्षुशीधुनोर्मद्यभाजने" इति ॥ तत्र मद्यपदेन मद्यपानमुच्यत इति मुकुटः । तथाचामरोऽपि "चषकोऽस्त्री पानपात्रं सरकोऽपी"ति ॥

३. यद्यपि "रश्मिः पुमान्दीधितौ स्यात्पक्ष्मप्रग्रहयोरपी"ति मेदिनी । अमरोऽपि "किरणप्रग्रहौ रश्मी" इति । तथापि यास्कोक्तेरसार्षचादित्वं ( पा० २-४-३१ ) कल्प्यम् ॥

१. सूर्यरश्मयः ॥

२. अधिकृतो गौर्यस्मिन्मन्त्रे सोऽधिगुः । अत्र "गोस्त्रियोः" ( पा० १-२-४८ ) इति गोशब्दस्य ह्रस्वः । स च "एच इग्घ्रस्वादेशे" ( पा० १-१-४८ ) इति नियमादोकारस्य उकारः ॥ अत्रोपलक्षितस्य गोरनित्यत्वात् ( अनियतत्वात् ) अपरितुष्यन्नत्रार्थेऽर्थान्तरमाह भाष्यकृत् अपिचेत्यादिना ॥

३. प्रशस्यतेऽनेनेति करणव्युत्पत्तेः सम्प्रेषणमवयवार्थस्तच्च विधि-( ब्राह्मण- ) वचनमेवेति ॥

शमितौ, तस्यैतत्प्रशासनं (सम्प्रेषणं) स्यादित्यर्थः। किं तत्—?

**अध्रिगोशमीध्वं, सुशमि शमीध्वं शमीध्वमध्रिगविति ॥**

इतिशब्द आद्यर्थः। हे **अध्रिगो**! तन्नामशमितः! यूयं सर्वे एव **शमीध्वम्** शमयध्वम् एनं पशुम्। संज्ञपैतेति तदर्थः। तथाच निगमः—

"दैव्याः शमितार आरभध्वम्०—०आशासाना मेधपतिभ्यां मेधम्०—० नेद्वस्तोके तनये रवितारमपच्छमितारः०—०अध्रिगोशमीध्वम्" इति प्रैषः। (ऐ० ब्रा० २-१-७)

**अग्निरप्यध्रिगुरुच्यते ॥**

अधृतगमनः सर्वत्राप्रतिहतगतिरित्यध्रिगुरग्निरप्युच्यते। तथाच निगमः—

**"तुभ्यं श्चोतन्त्यध्रिगो शचीवः ॥"**

(ऋ० सं० ३-१-२१-४)

**अधृतगमनकर्मवन् ॥**

**तुभ्यमिति**। अस्य "स्तोकासो अग्ने मेदसो घृतस्य। कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर" इति शेषः॥ कुशिकपुत्रस्य गाथिन आर्षम्। त्रिष्टुप्। पार्श्विष्टस्तोके सूक्ते विनियुक्ता हे **अध्रिगो**! अधृतगमन! (सततगमनस्वभाव!) अतएव **शचीवः** कर्मवन्! शक्तिमन्वा! "शचीतिकर्मनाम" (निघं० २-१-२२) मतुपो "मतुवसोरु०" (पा० ८-३-१) इतिरुत्वम्। **अग्ने! तुभ्यम्** त्वदर्थम् **मेदसः** मेदोरूपस्य हविषः **घृतस्य च स्तोकासः** स्तोकाः "आज्जसेरसुक्" (पा० ७-१-५०) इत्यसुगागमः। अल्पाः बिन्दवः श्चोतन्ति स्रवन्ति। तस्मात् **कविशस्तः** कविभिः कर्माभिज्ञैर्होत्रादिभिः शस्तःस्तुतस्त्वं **बृहता** प्रभूतेन **भानुना** भासा (तेजसा) सहितः सन् **आगाः** अस्मदीयमिमं पश्वागमागच्छ। आगत्य च **हे मेधिर**! यज्ञवन्प्रज्ञावन्वाऽग्ने! "मेधारथाभ्यामिरन्निरचौ

---

१. शमित्रं नाम पशुवैशसं कर्म, शमनं विशसनं घातनं हिंसनमित्यनर्थान्तरम्। तथाचामरः "परम्पराकं शमनं प्रोक्षणं च वधार्थकम्" इति, "निर्वापणं विशसनं मारणं प्रविघातनम्" इति च। तत्कर्ता शमिता॥

२. संज्ञपनं वधः॥

३. अत्र अधृतोऽन्येनानिवारितो गौर्गमनं यस्येत्यर्थे बहुव्रीहिः। "गोस्त्रियोरुपसर्जनस्ये"ति (पा० १-२-४८) गोशब्दस्य ह्रस्वत्वं धृतशब्दस्य च ध्रिभावः पृषोदरादित्वात्॥

४. "पशौ स्तोकानुवचनमिदं सूक्तम्" इति सायणः॥

५. स्तोकाख्या बिन्दवोवपामवीत्यश्चोतं क्षरन्तीति दुर्गव्याख्यानम्॥

६. प्रक्षरणे प्रक्षरणे कविभिरभिष्टुत इति दुर्गः॥

७. मेधाइति धन-यज्ञ-प्रज्ञानामसु छान्दसैः पठितः। ततो मत्वर्थीय इरन्॥

वक्तव्यावि—" तीरन् प्रत्ययः। **हव्या**! अस्माभिर्दीयमानानि वपादीनि हवींषि (यानि स्तोकाख्यानि त्वदर्थमेव क्षरन्ति तानि) **जुषस्व** सेवस्व "जुषी प्रीतिसेवनयोः" (तु० आ०) लोट्। एवमत्र "अध्रिगो" इत्यग्निरुक्तस्तस्मादग्नेरध्रिगुत्वमुपपन्नं भवति॥

**इन्द्रोऽप्यध्रिगुरुच्यते ॥**

तस्यापि न कश्चिद्गमनधारयितास्ति। तथाच—

**"अध्रिगव ओहमिन्द्राये"—त्यपि निगमो भवति ॥"**

(ऋ० सं० १-४-२७-१)

"अस्मा इदु प्रतवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय॥ ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा॥"

इत्येषा नोधस आर्षम् ऐन्द्रं त्रैष्टुभम् अहीनसूक्ते शस्यते। **इदु** इति निपातद्वयं पदपूरणे (नि० १-३-५) यद्वा अवधारणार्थम्। **तवसे** प्रवृद्धाय (महते) तवतेर्वृद्ध्यर्थात्सौत्रादसुन् (उ० ४-१८९) तवस इति असजन्तो वा महन्नामसु पठितः (निघं० ३-३-६) चतुर्थ्यर्थे सप्तमी व्यत्ययेन (पा० ३-१-८५) **तुराय** त्वरमाणाय, यद्वा तुर्वित्रे शत्रूणां हिंसित्रे **माहिनाय** गुणैर्महते (निघं० ३-३-१७) "महतेः" (भ्वा० प०) "महेरिनण्चे" (उ० २-५३)-ति इनण् प्रत्ययः। **ऋचीषमाय** ऋक्समाय (स्तुतिसमानगुणाय+यावती स्तुतिरुदीर्यते तावानेवासौ भवति महाभाग्यात्) **अध्रिगवे** अधृतगमनाय (अप्रतिहतगमनाय, एवंलक्षणाय **इन्द्राय**) **स्तोमं** स्तोत्रं **प्रहर्मि** प्रह-(भ) रामि। करोमीत्यर्थः। "बहुलं छन्दसी"-(पा० २-४-७३)ति शपो लुक्॥ अत्र दृष्टान्तः—**प्रयोन** प्रय इत्यन्ननाम (निघं० २-७-४) तद्वत्। यथा बुभुक्षिताय कश्चनान्नं प्रहरति (प्रयच्छति) यद्वा प्रयोऽन्नमिव यः स्तोमस्तृप्तिं करोति तं प्रभरामि। कीदृशम्? **ओहम्** वहनयोग्यम् (प्रापणीयं वा, यमहं प्रापयामि वा) अत्यन्तो-

---

१. तथाच आम्नायते "अस्मा इदु प्रतवसे तुरायेति नोधास्त एते प्रातःसवने षळहस्तोत्रियान् शस्त्वा माध्यन्दिनेऽहीनसूक्तानि शंसन्ती"ति (ऐ० ब्रा० ६-१८)

२. "तुर त्वरणे" (जु० प०) "इगुपधलक्षणः" (पा० ३-१-१३५) कः। सम्प्रसारणं छान्दसम्। यद्वा—"तुर्वी हिंसार्थः" (भ्वा० प०) तुर्वतीति तुरः "पचाद्यच्" (पा० ३-१-१३४) छान्दसो वलोपः।

३. "ऋचीषम ऋचासम" इति यास्कः (नि० ६-२३) "तृतीया तत्कृते-" (पा० २-१-३०) ति समासः। पृषोदरादित्वादीकारोपजनः। "सुषामादि-" (पा० ८-३-९८) त्वात्षत्वम्। अधिकगुणाध्यारोपेणापि कृता स्तुतिर्यत्र नातिरिच्यते सः॥

४. तथाच मम तस्य वा वहनयोग्यमित्यर्थः। वहतेः कर्मणि घञि छान्दसं सम्प्रसारणम्। यद्वा "तुहिर्दुहिरुहिर् अर्दने" (भ्वा० प०) इत्यस्मादोहतेः पूर्ववद्घम्॥

त्कृष्टमित्यर्थः। न केवलं स्तोमं किं तर्हि ? **ब्रह्माणि** हविर्लक्षणान्यन्नानि ब्रह्मेत्यन्ननाम ( निघं० २-७-२५ ) कीदृशानि ? **राततमा** राततमानि, दातृतमानि ( यान्यमावेवार्हति नान्यस्तानि ) पूर्वैर्यजमानैरतिशयेन दत्तानीति सायणः। तथाच "रा दाने" ( अ० प० ) इत्यस्मात्क्तार्थनिष्ठान्ता-दातिशायनिकस्तमप् "शेश्छन्दसि०" ( पा० ६-१-७० )-ति शेर्लोपः ॥ एवं स्तुत्वा हविषा चेन्द्रं परिचरेमेति भावः ॥ १ ॥

एवमस्मिन्नध्रिगुशब्देनेन्द्रविशेषणत्वादिन्द्राभिधानमित्युपपद्यते ॥

अथाऽङ्गूषः ( ४४ ) इत्यनवगतमवगमयति—

**अङ्गूषः स्तोम आघोषः ॥**

**स्तोम** इत्यभिधेयवचनम्। **आघोष** इति शब्दसमाधिः। अत्र निगमः

"एनाङ्गूषेण वयमिन्द्रवन्तः ॥"

( ऋ० १-७-२३-४ )

**अनेन स्तोमेन वयमिन्द्रवन्तः ॥ ७ ॥ (११)**

**एनेति**। अस्य "अभिष्याम वृजने सर्ववीराः। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः" ॥ इति शेषः। कुत्सस्य त्रितस्य वा कूपे पतितस्यार्षं त्रिष्टुप्। वैश्वदेवस्य चरोर्भ्रातृव्यवतो याज्यैषा ॥ **एना** एनेन। अनेन **आङ्गूषेण** आघोषणीयेन स्तोमेन ( स्तोत्रेण ) हेतुभूतेन **इन्द्रवन्तः** अनुग्राहकेणेन्द्रेण युक्ताः **सर्ववीराः** सर्वैर्वीरैः पुत्रैः पौत्रादिभिश्चोपेताः सन्तो **वयं वृजने** संग्रामे "वृजी वर्जने" ( रु० प० ) "कृपृवृजिमन्द्रिनिधाञ्भ्यःक्युः" ( उ० २-७६ ) इति क्युप्रत्यययोऽधिकरणे योरनादेशः (पा० ७-१-१) वृज्यन्तेऽत्र प्राणैरिति वृजनम्। निघण्टौ तु बलार्थे ( २-८ ) पठ्यते। **अभिष्याम** शत्रूनभिभवेम। **तत्** इदम् **नः** अस्मदीयं वचनम् **मित्रः वरुणः अदितिः सिन्धुः पृथिवी उत द्यौः** यौश्च **मामहन्ताम्** पुनःपुनर्महयन्तां पूजयन्तु पालयन्त्वित्यर्थः। अत्राभिष्यामेति "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" ( पा० ८-३-८७ ) इति षत्वम् ॥ अस्तेः प्रार्थनायां लिङ् "श्नसो" ( पा० ६-४-१११ )-रित्यल्लोपे स्यामेति भवति ॥ ४ ॥

१. "द्वितीयाटौःस्वेनः" ( पा० २-४-३४ ) इति तृतीयायामिदम एनादेशः। "सुपां सुलुगि" ( पा० ) ति विभक्ते राजादेशः ॥

२. आघोषणयोग्येन। आङ्पूर्वाद्गुपेः कर्मणि घञ्। ङस्य लोपाभावश्छान्दसः। घोषशब्दस्य गूषभावश्च पृषोदरादित्वात् ॥

३. सर्व एव वयमनवखण्डिताः सन्तः सर्वानेव भ्रातृव्यानभिभवेम इति तात्पर्यार्थः ॥ बहुव्रीहिः।

एवमत्र स्तोमोऽयम् "आङ्गूष" शब्देनोक्तः शब्दसाहृप्याद्र्थोपपत्तेश्च ॥ १७ ॥ ११ ॥

अथापान्तमन्युः ( ४५ ) इत्यनवगतं, पक्षे चानेकार्थम् "अपतितमन्यु"रित्यवगमः। तदेतन्निगमतो दर्शयति—

**"आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ॥**

**सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ ५ ॥"** ( ऋ० सं० ८-४-१४ )

**आपामिति** ॥ वैश्वामित्रस्य रेणोरियमार्षम् त्रिष्टुप्। सूर्यस्तुन्नाह्येकाहे निष्कैवल्ये विनियुक्ता। **आपान्तमन्युः** आपाततिमन्युः ( आपादितदीप्तिः उत्पादितमन्युर्वा ) शत्रुभिः सङ्ग्रामे। **तृपलप्रभर्मा** ग्रावादिभिः क्षिप्रप्रहारी। **धुनिः** शत्रूणां कम्पयिता **शिमीवान्** स्वाधिकारविहितेन कर्मणा कर्मवान् "शिमीति कर्म नाम" ( निघं० २-१-२४ ) **शरुमान्** आयुधवान्हिंसावान्वा। **ऋजीषी** ऋजीषवान् सोमो **विश्वानि** सर्वाणि **अतसा** अतसानि अनुपक्षीणानि। "शेश्छन्दसि बहुल"-( पा० ६-१-७० ) मिति शेर्लोपः। "तसु उपक्षये" ( दि० प० ) अच् ( पा० ३-१-१३४ ) नञ्समासः ॥ **वनानि** उदकानि ( निघं० १-१२-८ ) इतराणि वा वनसत्त्वाख्यानि "वर्धयती"ति शेषः। स हि तेषामधिपतिः। एवमेते त्रयोऽपि पादाः सौम्या भवन्ति। उत्तर ऐन्द्र एव **प्रतिमानानि** प्रतिमानभूतानि समानद्रव्याणीति सायणः। यैः प्रतिमीयन्ते

१. "मन्युः पुमान्क्रुधि। दैन्येशोके च यज्ञे च" इति मेदिनी। चाद्दीप्तिरपि। तथाच ( निघण्टुभाष्ये ) मन्युर्दीप्तः क्रुद्धो वेति देवराजः ( ५-४ ) ॥

२. अभेदे तृतीया "प्रकृत्यादित्वात्" (पा० २-३-१८ वा०) धान्येन धनवानितिवत् ॥ विनियतेनेनेत्यपि पाठः ॥

३. शृणातेर्हिंसार्थात्करणे भावे वा उ प्रत्ययः ( उ० १-८ ) गुणः। शरुः खड्गादिर्हिंसा वा। ततो मतुप्। "तदस्यास्ती"-( पा० ५-२-९४ ) ति ॥

४. "ऋजीषं पिष्टपचनमि"त्यमराभिधानात्पिष्टपाकपात्रमृजीषं "तावे"ति प्रसिद्धं तद्वान्सोमस्तदाकारत्वात्। यद्वा सोमस्य निर्गतरसः शिष्टमानः "सीठ" इति प्रसिद्ध ऋजीषः। तेनासौ ( सोमः ) तद्वान्। स हि इन्द्रस्याश्रयोर्भाग इत्याम्नायते तेनासावपि तद्वान्। तथा च भाष्यं "यत्सोमस्य पूयमानस्ये"ति। अत्र "अर्जेर्ऋज चे" ( उ० ४-२८ ) तीषन् प्रत्ययः ॥ ततोऽस्त्यर्थे इनिः ( पा० ५-२-११५ ) ॥

५. ऋचीपमित्यपि "ऋच स्तुता" ( तु० प० )-वित्यस्माद्बाहुलकादीरनि भवति। एतद्भाष्ये व्यक्तम्। तथाच "नेन्द्रम् अर्वाक् देभुः। दभ्नोतिरत्राकर्षणकर्मा, तुलाया मीयमानानि आत्माभिमुखतया नाकर्षयन्ति लघूनि भवन्तीत्यर्थः। अन्यत्र प्रतिनिधीय-

स्तोत्राणि तानीति दुर्गः। **न एनम् इन्द्रम् दभ्नुवन्ति** । नाभिभवितुं शक्नुवन्ति । वर्तमाने लिट् ( पा० ३-४-६ ) किन्तर्हि ? **अर्वाक्** पराक् एवं भूत्वा एनमप्राप्यैव "विनश्यन्ति" इति शेषः । नोपमार्थं कुर्वन्ति स हि तेषां विनाशः । एवमेष पाद ऐन्द्रः । एवमुभयप्रधानत्वमस्या ऋचः ॥

**अथवा**–द्वौ प्रथमौ पादावैन्द्रत्वेन व्याख्यायेते ( तत्र तस्याश्वयोर्ऋजीषभागा भवन्तीत्यपेक्षया ऋजीषित्वमुपपाद्यम् ) तृतीयपादमुत्क्रम्य चतुर्थः पाद आद्याभ्याममिसम्बन्धयितव्यः । योऽयमेवंगुणविशिष्ट इन्द्रः ( आपादितमन्युः, तृ(प्र)प्रहारी, धुनिः, शमीवान्, शरुमान्, ऋजीषीच ) तमेनमिन्द्रमेवंप्रभावं प्रतिमानानि न दभ्नुवन्ति । किं तर्हि ? अर्वागेवैनमप्राप्य वर्तमानानि विनश्यन्ति । एवमेते त्रय ऐन्द्राः पादा द्वावाद्यौ चतुर्थश्च । अयं च तृतीयः सौम्यः "सोमो००नानि" इति । यः सोमः सर्वाण्यतसानि ( अनुपक्षीणानि ) वनानि महिम्ना व्याप्नोति वर्धयति वा । यं च "इन्द्रं न प्रतिमानानि दभ्नुवन्ति" तौ सोमेन्द्राविदं नाम कुरुतामित्याशीर्योज्या ॥ ५ ॥

एके पुनरिन्द्रप्रधानैवेयमृगिति व्याचक्षते–तदेतदुपरिष्टात् ( भाष्यव्याख्याने ) व्यक्तीभविष्यति—एवमस्या ऋचस्त्रिधा समासार्थो बोद्धव्यः । तथाहि भाष्यम्—

**आपातितमन्युस्तृ(प्र)प्रहारी ( क्षिप्रप्रहारी सृप्रप्रहारी) सोमो वेन्द्रो वा धुनिर्धुनोतेः, शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वा ॥**

अत्र **पातित**शब्दस्य "पान्ता"–देशः पृषोदरादित्वात् । **तृप्रहारीति**–हृधातोर्धारणार्थस्य मनिनि भर्मेति भवति "हृग्रहोर्भश्छन्दसि" ( पा० ३-१-८४ वा० ) इति वार्त्तिकात् । तृप्र ( क्षिप्रसृप्र ) शब्दस्थाने तृपलशब्दप्रयोग आर्षः । तृप्रनामोपलमुच्यतेऽन्यद्वा प्रहारसाधनम् तृप्रं दुःखं तत्कारणं चेति ( सि० कौ० ) दीक्षितचरणा आहुः । सृप्रं गमनशीलं "सृपी-गतौ" ( भ्वा० प० ) रक् । कित्त्वाद्गुणाभावः ॥ **धुनोतेः** कम्पनार्थस्य ( स्वा० उ० ) बाहुलकान्निःकित् । **शमयतेः** उपशमार्थस्य ( दि० प० ) "इन् सर्वधातुभ्यः" ( उ० ४-११४ ) इतीन् बाहुलकादकारस्येकारः । "कृदिकारादि"–( पा० ४-१-४ ) इति ङीष् । बाहुलकादकारस्येकारः । **शक्नोतेर्वा** ककारस्य मकारः । अकारस्येकारश्च ॥ शाम्यन्त्यनेनानिष्टानि । शक्नोति या(पा)नेनाभिमतं साधितुम् ॥

**ऋजीषीसोमो "यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीषम्" अपार्जितं भवति, तेनर्जीषी सोमः ॥**

सोमस्य ऋजीषित्वोपपादनार्थं प्रतिजानीते **ऋजीषीसोम इति** । कुत ? इत्याह–**यदिति** । **अतिरिच्यते** रसादन्यदसारम् **तदृजीषमित्युच्यते** । कुत इत्युक्ते निर्ब्रवीति–**अपार्जितम्** अपवर्जितम् ( त्यक्तम् ) **भवति** कल्कभूतत्वात् **तेन** संयोगात् **ऋजीषीसोम** उच्यते ॥

**अथाप्यैन्द्रो निगमो भवति ॥**

**"ऋजीषी वज्री ॥"** ( ऋ० सं० ४-२-११-४ )

**इति ॥**

**अथापीति** । अत्रापीति पक्षान्तरे **अथ** यस्मिन्पक्षे **ऐन्द्रः** अर्धर्चः भवति, एतस्मिन्पक्षे इन्द्रस्य ऋजीषित्वाभिधायक **एष निगमो भवति** । अथेन्द्रस्य ऋजीषित्वमनुपपन्नं मन्यमानो निगमं पठति—"**ऋजीषी वज्रीति** ॥" अस्य "वृषभस्तुराषाट् छुष्मी राजा वृत्रहा सोमपावा । युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यन्दिने सवने मत्सदिन्द्रः" इति शेषः । अत्रेरियमार्षम् त्रिष्टुप् । **ऋजीषी** ऋजीषेण तद्वान् । एवं **वज्री** । **वृषभः** वर्षिता कामानाम् **तुराषाट्** तुराणां त्वरमाणानां शत्रूणां सोढा भारसहनः अभिभविता । **शुष्मी** बलवान् **राजा** अधिपतिः ( ईश्वरः ) **वृत्रहा** वृत्रस्य हन्ता **सोमपावा** सोमरसस्य पाता । वनिप् ( पा० ३-२-७४ ) य एवंगुणयुक्तो महानुभाव इन्द्रः स **हरिभ्याम्** अश्वाभ्यां रथं **युक्त्वा** योजयित्वा तमथाधिरुह्य **अर्वाक्** अस्मानाभिमुख्येन **उपयासत्** उपागच्छतु । उपागम्य च **माध्यन्दिने सवने** एतस्मिन् अभ्युयते **मत्सत्** माद्यतामस्मत्प्रदत्तेन सोमेनेत्यर्थः ॥ ४ ॥

एवमेतस्मिन्मन्त्रे "ऋजीषी" इन्द्र उक्तः ॥ तत्पुनरेतदिन्द्रस्य ऋजीषित्वं कुत इत्याह—

**हर्योरस्य स भागो धानाश्चेति ॥**

**हर्योरस्य**योरस्येन्द्रस्य **स भागो** यदृजीषम् । **धानाश्चेति** प्रसङ्गागतमेतत् । यथाचोक्तम् "हर्योर्धानाहरिवतो"–रिति । धाना मृष्टयवाः "धाना मृष्टयवे स्त्रिय" इत्यमरः । तथाच लक्षितलक्षणया वृत्त्या हरिसंयोगेनास्य ऋजीषित्वमिन्द्रस्योपपन्नम् ॥

अथ धानाशब्दं निर्वक्ति—

**धाना भ्राष्ट्रे हिता भवन्ति, फले हिता भवन्तीति वा ॥**

आह—**धानाः** कस्मात् ? उच्यते ता हि **भ्राष्ट्रे हिता**

मानि गुरूणि तान्यात्माभिमुखमाकर्षन्ति नैवमिन्द्रं कुर्वन्तीति सर्वेभ्यो महानिन्द्र" इति सायणव्याख्यानम् ॥

१. एषच भाष्यकाराभिमतोऽर्थस्तदेतदग्रे व्यक्तीभविष्यत्यनुपदम् ॥

१. माद्यतेर्लेटि सिप् ( पा० ३-१-३४ ) इतश्च लोपः । ( पा० ३-४-९७ ) आत्मनेपदोक्तिरार्षत्वाभिप्रायेण ॥

२. वक्ष्यमाणनिगमवाक्ये "हरी उपजिघ्रतामृजीषमि"ति विशेषलिङ्गादृजीषित्वमश्वयोः । अश्वयोगाचेन्द्रस्यर्जीषित्वमितीयं लक्षितलक्षणा बोध्या ॥

भवन्ति। तथाच दधातेर्धारणार्थात् (जु० उ०) "धापॄवस्यज्यतिभ्यो नः" (उ० ३-६) इति नप्रत्ययः। हिताः निहिताः सत्यो धाना भवन्ति यवाः। अथवा भ्राष्ट्रादवतार्य फले फलके पात्रविशेषे हिताः निहिता भवन्ति। तत्र हिता विसार्यन्तेऽतिदाहभयात्॥

अथ यथा ऋजीषं धानाश्च हर्योरश्वयोरिन्द्रस्य च भागस्तथैतं निगमं प्रमाणयति—

**"बध्धां ते हरी धाना उप ऋजीषं जिघ्रताम्॥" (ब्रा०)**

**इत्यपि निगमो भवति॥**

अस्य "धानाः सोमानामिन्द्राद्धि च पिबचे"त्यादिः। तथाचायमर्थः—हे इन्द्र! अद्धि भक्षय धानाः सोमानां च एतेषां रसभूतरसं पिब च। किंच ते तव हरी अश्वावेतौ धानाः बध्धां भक्षयताम् ऋजीषंच उपजिघ्रताम् आघ्रायतामिति॥

अत्र (निगमवाक्ये) बध्धामित्येतत्पदमवयवशोऽर्थतश्च व्याचष्टे—

**आदिनाभ्यासेनोपहितेनोपधामादत्ते बभस्तिरत्तिकर्मा॥**

अत्तिकर्मा भक्षणार्थः बभस्तिः भस्धातुः (जु० प०) आदि०० दत्ते। उपलक्षणेऽत्र तृतीया (पा० २-३-२१) उपहितेन उपजनितेन आदिना आदिभूतेनाभ्यासेन उपलक्षिता—मुपधामकारम् आदत्ते लुम्पति "घसिभसोर्हलि च" (पा० ६-४-१००) इति। ततो "झलो झलि" (पा० ८-२-२६) इति सलोपे "धत्वे" (पा० ८।२।४०) "जश्त्वे" (पा० ८-४-५३) च कृते बध्धामिति लोटः प्रथमपुरुषद्विवचने। छान्दसोऽयं धातुः॥

अथोत्तरार्धर्चं व्याचष्टे—

**सोमः सर्वाण्यतसानि वनानि।**
**नार्वागिन्द्रं प्रतिमानानि दभ्नुवन्ति॥**

इति। व्याख्यातमधस्तात्॥

अथैतत्तुरीयपादार्थं विवृणोति—

**यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्त्यर्वागेवैनमप्राप्य विनश्यन्तीति॥**

यैरेनं प्रतिमिमत इति प्रतिमानानीत्यस्यार्थः। "माङ् माने शब्दे च" (जु० आ०) गतमन्यन्मन्त्रार्थव्याख्याने॥ एवं सोमप्रधानतया व्याख्याय मतान्तरेण व्याचष्टे—

**इन्द्रप्रधानेत्येके, नैघण्टुकं सोमकर्म॥**

एके पुनः इन्द्रप्रधाना एवेयमृक् इति एवं मन्यन्ते। नैघण्टुकम् अस्याम् (ऋचि) सोमकर्म इति। तेषामियं योजना—य इन्द्र आपादितमन्युस्तृप्रहारी, धुनिः, शिमीवान्, शरुमान् ऋजीषी च, स सोम इव अतसानि वनानि व्याप्नोति न चैनं प्रतिमानानि दभ्नुवन्ति, किं तर्हि? एनमिन्द्रमप्राप्यैव विनश्यन्तीति। एवमियमिन्द्रप्रधाना भवति॥

**उभयप्रधानेत्यपरम्॥**

"मतमि"तिशेषः। तथाचोपपादितमधस्तात्पादशो व्याख्याय।

अथ श्मता (४६) इत्यनवगतम् "श्वाशिनी श्माशिनी"ति वाऽवगमः। श्वाशिनी—शीघ्राशिनी—शीघ्रव्यापिनी उदकवाहिनी कुल्या, नदी वा। श्माशिनी—पुनर्नाड़ी सा हि श्मं शरीरं व्याप्नोतीति। एवमेतद्विगृह्यमाणमनेकार्थमपि भवत्येवेत्याह—

**श्मशा—शुअश्नुत इति वा, श्माश्नुत इति वा॥**

तथाच शु इत्याशुशब्दस्याकारलोपेन। अश्नुत इति व्याप्त्यर्थस्य "अशूधातोः" (स्वा० आ०) ताच्छील्यविशिष्टे कर्तरि "पचाद्यच्" (पा० ३-१-१३४) यणि। उकारस्य वकारः। वकारस्य च मकारः पृषोदरादित्वात्। श्म इति शरीरमुच्यते। अत्रार्थे "शकन्ध्वादि—" (पा० १-१-६४ वा०)—त्वात्पररूपम्॥

अत्रार्थे निगमं दर्शयति—

**"आवं श्मशा रुधद्वाः॥"**
**(ऋ० सं० ८-५-२६-१)**

**अवारुधच्छमशा वारिति॥ ८॥ (१२)**

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे पञ्चमाऽध्यायस्य द्वितीयः पादः॥ ५॥ २॥ ॐ॥**

"कुदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः॥ दीर्घं सुतं वाताप्याय" इतीयं कुत्सपुत्रस्य दुर्मित्रस्यार्षम् उष्णिक्। ऐन्द्रस्य सूक्तस्य प्रथमैवेयम्॥ हे वसो वसुमन्वासयितर्वा इन्द्र! स्तोत्रम् एतन्मयोदीरितम्। आ सर्वतोभावेन हर्यते कामयमानायास्मै यजमानाय "हर्य गतिकान्त्योः" (भ्वा० प०) लटः शता॥ तदर्थम्। त्वम् अवारुधत् अवरोत्स्यति आवर्जयिष्यति लडर्थे लुङ् (पा० ३-४-६) दीर्घं सवनत्रयरूपेण आयतं सुतम् अभिषुतं सोमं प्रति। अत्र दृष्टान्तः—श्मशा वाः कुल्योपममेतत्। श्मशा=शमशा कुल्येव वा उदकं विसर्पमाणं, नाडीव वाऽध्यात्मिकी शरीराश्रितं रसम्।

१. अत्रार्थे इन्द्रोऽधिपतिर्वनानामपां वनस्पतीनां चेति विशेषणमिदं सोमस्य यमेनमिन्द्रं सोममिति॥ तथाच चत्वारोऽपि पादाः सोमार्थेऽनुयन्ति॥

१. अन्नरसवाहित्वात्॥ तथाच शमशा सती श्मशा-श्माशिनीति चोच्यते। एवं श्वासा सती श्मशा शमितिनान्तमव्ययं शरीरार्थं सुखार्थंच "शंसुखं च प्रकीर्तितमि"ति कोशे चाच्छरीरम्॥

२. "आपः स्त्रीभूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः।

किमर्थम्? **वाताप्याय** वातेनाप्यायते अधस्तान्निपात्यते इति वाताप्यं वर्षोदकं तत् प्रदानायेत्यर्थः ॥ १ ॥

एवमेतस्मिन् "श्मशा" इति कुल्याभिधानं नाद्यभिधानं वा शब्दोपपत्तेश्चेति ॥

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैग० का० पञ्चमाध्यायस्य द्वितीयः पादः ॥ ५ ॥ २ ॥ * ॥

---

## पञ्चमाध्यायस्य तृतीयः पादः ॥

### उर्वश्यप्सरा उर्वभ्यश्नुत ऊरुभ्यामश्नुत उरुर्वा वशोऽस्याः ॥

अथ **उर्वशी** (४७) इत्यनवगतम् **अप्सराः** इत्यभिधेयवचनम्। **उर्वभ्यश्नुत** इति व्युत्पत्तिः। उरुमहत् यशोऽभिव्याप्नोतीत्यर्थः। अथवा **ऊरुभ्याम्** जानूपरिभागाभ्याम् **अश्नुते** व्याप्नोति वशीकरोति ( मैथुने धर्मे पुरुषम् ) इति णिनिः ( पा० ३–२–७८ ) उ० (ऊ०)वशिनी सती उर्वशीत्युच्यते। अथ **वा उरुर्महान् वशः** कामोऽ**स्याः** सेयमुरुवशिनी सती उर्वशीत्युच्यते। एताः शब्दसमाधयः। अत्र सर्वत्र उ० ( ऊ० ) रुशब्दोपपदादश्नोतेर्वष्टेर्वा कान्त्यर्थात् ( अ० प० ) "इन्सर्वधातुभ्यः" ( उ० ४–११४ ) इतीन्प्रत्यये "कृदिकारादक्तिनः" ( पा० ४–१–४५ ) इति ङीष्। पक्षे ऊकारस्य ह्रस्वः। वश्युत्तरपदे उरुशब्दस्यान्त्यलोपः ॥

अधुना "अप्सराः" इति इत्येतं शब्दं समाख्यानप्रसक्तं[१] निर्ब्रवीति—

### अप्सरा अप्सारिण्यपि वाऽप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा ॥

अथ **अप्सराः** कस्मात्? उच्यते,—सा हि **अप्सारिणी** भवति। अपः प्रति नित्यमेव सरति। तत्प्रभवत्वात्तदेव[२] तस्याः प्रियमुदकम्। तस्मादप्सराः। अथवाऽद्भ्यः सरतेत्यप्सरा। "सृ गतौ" ( भ्वा० प० ) "पचाद्यच्" ( पा० ३–१–१३४ ) टाप्। अत्र "स्त्रियां बहुष्वप्सरसः" इति कोशे[३] बहुषु इति प्रायोवादः "अनचि चे" ( पा० ८–४–४७ ) ति सूत्रे "अप्सरा" इति महाभाष्यप्रयोगाद्यास्कवचनाच्च "स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपी"—ति शब्दार्णवोक्तिः साधीयसी ॥ अथाप्सरा इत्येकंपदमवयवशः ( पदद्वयेन ) विभज्य निर्ब्रवीति—**अपिवेति**। अपिचैवमन्यथा स्यात्। **अप्स इति** एतत् **रूपनाम** (निघं० ३–७–६ ) **अप्सातेः**। नञ्पूर्वस्य "प्साते-र्भक्षणार्थस्य" ( अ० प० ) असुनि ( उ० ४–१८८ ) बाहुलकादाकारलोपः। तद्धि **अप्सानीयम्** अभक्षणीयं **भवति** नहि तद्भक्ष्यते, किं तर्हि? **आदर्शनीयं** तदाभिमुख्येन स्थित्वा द्रष्टव्यमेव भवति चक्षुषा। न पुनर्मुखेन भक्षयितव्यमित्यर्थः। **व्यापनीयं वा** अथवा व्यापनीयमेव तत् ( रूपं )[१] भवति। तथाचोक्तम् "चक्षुर्व्याप्नोति यद्रूपं मनस्तत्प्रतिपद्यते"[२] इति। एवंच। शैतेर्बाहुलकात् "वृतृ०" ( उ० ३–५९ ) इत्यादिना विहितः सोऽत्र बोध्यः ॥

### स्पष्टं दर्शनायेति शाकपूणिः ॥

**स्पष्टं** व्यक्तं, चक्षुषैव नेतरेणेन्द्रियेणेति भावः। तथाचोक्तम् "चक्षुर्मात्रग्राह्यो गुणो रूपम्" इति ॥ **शाकपूणिः** आचार्यो "मन्यत" इति शेषः ॥

अथात्र निगमं प्रमाणयति—

### "यदप्स" ( य० वा० सं० २०–१७ ) इत्यभक्षस्य ॥

अप्सःशब्दवाच्यत्वख्यापको निगम इत्यर्थः। "यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ॥ यच्छूद्रे यदर्ये यदेनश्चकृमा वयं ( यदप्सश्चकृमावयं )[३] यदेकस्याधिधर्मणि तस्यावयजनमसि ( एनसस्तोऽवयजनमसि स्वाहा ) इत्येष निगमः। वरुणप्रघासेषु करम्भपात्र—( कुम्भ— )[४] हवने पत्नीयजमानयोर्मन्त्रः। अत्रावपूर्वो यजिर्नाशने वर्तते ॥ **वयं सभायाम्**—पक्षपातादि **इन्द्रिये** इति निमित्तसप्तमी प्रजननार्थं **यत्** परावादपरनारीदर्शनादिलक्षणम**नः** पातकम्। **अर्ये वैश्ये** "अर्यः स्वामिवैश्ययोः" ( पा० ३–१–१३० ) इति निपातितः। **चकृम** कृतवन्तः **यदि**त्येकमतिरिच्यमानमन्यत्रापि क्वचिद्ग्रामादिभ्य इत्यवगमयति। ( यच्चाप्सः अभक्ष्यभक्षणं चकृम ) **यत् च** एकस्यावयोः पत्नीयजमानयोर**धिधर्मणि** कर्मणि विषये[५] **एनः तस्यैनसः अवयजनं** नाशनं **त्वमसि हे कुम्भ!** करम्भपात्राख्यं हविः! इत्येष समासतोऽर्थः ॥ एवमिह

---

१. पर्यायप्रसक्तम् ॥

२. पुराणे ह्याख्यायते—समुद्रमन्थनादप्सरसामपि ततः संभव इति ॥

३. अमरादौ ॥

---

१. व्यापनीयं व्यापनमर्हतीति, अर्हार्थेऽनीयर् "अर्हे कृत्यतृचश्च" ( पा० ३–३–१६९ )—ति। तद्धि नायनेन रश्मिनाऽऽत्मनः प्रत्ययाधानार्थं व्यापयितव्यं भवति ॥

२. आत्मा मनसा युज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षमुत्पद्यत इति स्थितिः ॥

३. अयमत्र ( ) कोष्ठाङ्कितपाठो यास्कानुमतो दुर्गधृतः। मुद्रितपुस्तकेषु तु न दृश्यते। शाखान्तरे स्यादिति बाढं प्रतीमः। कथमन्यथा भाष्यकृद्यास्कोऽनुवदेत्। इति तथैवात्रोद्धृत्य व्याख्यातम् ॥

४. "करम्भो दधिसक्तवः" इत्यमरः। अत्र "करम्भपत्रे हवने" इति क्वाचित्कः पाठः ॥

५. धर्मैलोपलक्षणम् ॥

"अप्सः" इत्येष शब्दोऽभक्ष्यस्याभिधायको दृष्टस्तस्मात्साधूक्तम् "अपिवाप्स इति रूपनामाप्साते"रिति ॥ १७ ॥

अधुना यदुक्तं "व्यापनीयं वे-"ति, तदर्थख्यापकनिगमं पठति—

**"अप्सो नाम ॥"**

**(य० वा० सं० १४-४) इति व्यापिनः ॥**

"पृथिव्याः पुरीषमस्यप्सोनाम तान्त्वाविश्वे अभिगृणन्तु देवाः ॥ स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिह त्वा" इत्येष निगमः ॥

अग्निचयने द्वितीयायां चितावश्विन्योनामेष्टकास्तासामेकस्यामयमुपधानमन्त्रः हे इष्टके ! त्वं **पृथिव्याः** प्रथमचितेः **पुरीषम्** पूरयित्र्यसि "पृथिवी वै प्रथमा चितिस्तस्या एतत्पुरीषमिव यद्द्वितीया" इति (श० ब्रा० ८-२-१-७) श्रुतेः। पृणाति पूरयतीति पुरीषम्। "पॄ पालनपूरणयोः" (क्र्या० प०) "शॄपॄभ्यां किच्च" (उ० ४-२७) इतीसन्प्रत्ययः। "उदोष्ठ्यपूर्वस्ये-" (पा० ७-१-१०२)ति उदूपरत्वम् ॥ **अप्सो नाम** त्वमसि। नामेति प्रसिद्धौ। "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः। अप्सः व्यापनीयम्। आप्नोतेः सः ॥ रूपमिति तदर्थः। रस इत्युवटमहीधरौ। (अपः सनोति ददातीत्यप्सो नामापां कारणीभूतो रसश्च त्वमसीति महीधरः। अपां हि रसो गुणः "तस्य वा एतस्य यजुषो रस एवोपनिषत्" इत्येतच्छ्रुतिर्दर्शयतीत्युवटः) सर्वथा व्याप्नोतेरर्थ उपपद्यते। रसोऽपि ह्यपो व्याप्नोत्येव। तां त्वामुपधीयमानां विश्वेदेवा अभिगृणन्त्वभिष्टुवन्त्वित्यादिरर्थः ॥ ४ ॥

एवं तावदप्सरा इत्यस्याभिधानस्य "प्स"इत्ययमेकदेश उपपादितः। अधुना रा इत्येकदेशमुपपादयिष्यन्नाह—

**तद्रा भवति रूपवती ॥**

रो मत्वर्थ इत्यसकृदभिहितं प्राक्। अप्सो रूपं विद्यतेऽस्या इत्यप्सरा, तदाह **तद्रा**-तद्वती **रूपवती**ति फलितार्थः। तस्या एव सर्वयोषिद्भ्यः प्रतिविशिष्टं रूपं **भवति** ॥

**तदनयात्तमिति वा ॥**

अथ **वा** एवमन्यथाप्सरा स्यात् **तत्** अप्सशब्दवाच्यं रूपम् **अनया** उर्वश्या (तदन्यया वा) **आत्तम्** गृहीतमेव कुतश्चित् (सर्वस्माज्जगतः) **इति** हेतोरियमप्सराः। अत्रार्थे "रा"इत्ययमादानार्थः[1]। अत्रार्थेऽपरितुष्यन्नर्थान्तरमाह—

**तदस्मै दत्तमिति वा ॥**

अथ-**वा**। **तत्** अप्सशब्दवाच्यं रूपम् **अस्यै** उर्वश्यै (तदन्यस्यै वा) **दत्तं** विधात्रा सर्वस्माज्जगतः प्रतिविशिष्ट**मिती**यमप्सराः। अत्रार्थे "रा"इत्ययं दानार्थ एव यथानिर्दिष्टः पाणिनिना (अ० प०) अत्रार्थे चेतिहासं प्रमाणयञ्छ्रुतिमवतारयति

**तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द तदभिवादि(धायि)न्येषर्ग्भवति—॥ १ ॥ (१३)**

**तस्या** एवंगुणविशिष्टाया उर्वश्या अप्सरसः **दर्शनात्** **मित्रावरुणयोः** तन्नाम्नोर्देवर्षयोः सहचारिणोः (मित्रो-वैरुणश्चेत्येके) **रेतः** शुक्रम् **चस्कन्द** स्कन्नम् (पतितम्) **तत्** तस्यार्थस्य **अभिवादिनी** संवादिनी (प्रमाणभूता) **एषा**-**ऋग् भवति**— ॥ १ ॥ (१३)

**उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातः।**

**द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त ॥ १ ॥** (ऋ० सं० ५-३-२४)

**उतासीति**। वशिष्ठस्य सपुत्रस्येयमार्षं तस्यैव स्तुतिरिन्द्रस्य वा वाक्यम्[1]। त्रिष्टुप् ॥ **उत** इत्ययम् अपिचेति निपातसमुदायार्थे वर्तमानोऽधस्त्याया-(पूर्वस्या)-मृचि ये जन्मनी वसिष्ठस्योक्ते ते सम्भावयति (समालंबयति) यथाच सा ऋक् "विद्युतोज्योतिः परिसञ्जिहानं मित्रावरुणा यदपश्यतां त्वा। तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वाविश आजभार ॥" इति ॥ (ऋ० सं० ५-३-२३-५) हे वसिष्ठ। **यद्** यदा विद्युत इव स्वीयं ज्योतिः देहान्तरपरिग्रहार्थं परिसञ्जिहानं परित्यजन्तम्। "ओहाक् त्यागे" (जु० प०) लटः शानच् ॥

---

१. दानार्थ एव पाठः पाणिनेरित्ययमपरितोषहेतुः ॥

१. एतेन मन्त्राणां नेतिहासप्रतिपादकत्वमिति नव्या वैदिकम्मन्या अनाचाराः पाखण्डा दयानन्दिनोऽपास्ताः ॥

२. तथाच मित्रांशाद्वसिष्ठः। तस्य हि "निमिशापाद्वसिष्ठस्य देहपातोऽभवत्पुरा। स जज्ञे कुम्भतो मित्रादगस्त्यो वरुणान्मुनिः ॥" इति ब्रह्मपुराणम्। कुम्भात् कुम्भसमीपपतिताद्रेतसः। कुम्भात्त्वगस्त्यः। तथाच वक्ष्यतेऽनुपदम्। व्याडिरपि "मित्रावरुणयोः सूनुरौर्वशेयश्च वारुणिः" इत्यगस्त्यमभिप्रेत्याह। "अगस्त्यः कुम्भसंभवः। मैत्रावरुणि"-रित्यमरोऽपि। ऋषिसमुदायस्यानृषित्वादत इञ् (पा० ४-१-९५) "देवता द्वन्द्वेच" (पा० ७-३-२१) इति पूर्वपदस्यानङ् ॥ तथाच मैत्रो वसिष्ठ अगस्त्यो वारुणिः ॥

३. एष एव पक्षः साधीयान्। एतास्वृक्षु वसिष्ठस्यैव देहपरिग्रहः प्रतिपाद्यत इति ॥ वसिष्ठपुत्राणामेवेति केचनाहुः। वसिष्ठस्येयमार्षं युष्मदश्च प्रयोग इत्येतन्मन्त्राणां नित्यत्वादुपपद्यतएव ॥ अत्र "ऐन्द्रेण तेजसा निदधे वसिष्ठः, मित्रपरिगृहीतायामुर्वश्यामुत्पन्नो वरुणतेजसो जात इत्यपि पुराणे श्रूयते। तदप्युपेक्षितव्यम्" इति दुर्ग आह ॥

४. एतेनेयं लुप्तोपमेति लक्ष्यते ॥ एता-(एतदादिका-)स्वृक्षु वसिष्ठस्यैव देहपरिग्रहः प्रतिपाद्यते। एताश्चेन्द्रस्य वाक्यमित्येके वर्णयन्ति, अपरे वसिष्ठपुत्राणामिति ॥

छान्दसमात्मनेपदम् । यद्वा जिघृक्षितदेहार्थं स्वीयं ज्योतिःपरिसञ्जिहानं परिजिघृक्षन्तमित्यर्थः । अस्मिन्पक्षे जिहातेर्गत्यर्थत्वादात्मनेपदं छान्दसं न भवति । **त्वा** त्वां **मित्रावरुणा** मित्रावरुणौ ओङ् आत् **अपश्यतामा**वाभ्यामयं जायेतेति समकल्पयतामित्यर्थः । **तत्** तदा **ते** तवैकं जन्म, **उत** अपिच **यद्** यदा **अगस्त्य** ऋषिः **विशः** मनुष्यान्प्रति ( मनुष्यलोकम् ) **आजभार** आहृतवान् तत्ते द्वितीयं जन्मेत्यर्थः । अयं भावः । अगस्त्यो मित्रावरुणावावां जनिष्याव इति समकल्पयत् तदा तत्रैतसा वसिष्ठेन साकं स्वयं प्रादुरभूत् । "आत्मा वै जायते पुत्रः" । "तस्यां पुनर्नवो भूत्वा दशमे मासि जायत" इत्यादि श्रुतिस्मृतिसंवादात् ॥ तथाच पूर्वोपक्रान्तगर्थः-**हे वसिष्ठ ! त्वं मैत्रावरुणः** मित्रावरुणयोः पुत्रोऽसि भवसि । समुदितर्षित्वादपत्येऽण् प्रत्ययः ( पा० ४-१-११४ ) किं संघर्षेण ? नेत्याह **हे ब्रह्मन्** वसिष्ठ ! **उर्वश्याः** अप्सरसः । **मनसः** मम अयं पुत्रः स्यादितीदृशात्संकल्पात् **अधिजातः** असि । कथं ? तद्दर्शनान्मित्रावरुणयोः **द्रप्सं** शुक्रम् **स्कन्नं** पतितमासीत् । तथाच वक्ष्यते "सत्रे ह जातौ"-वित्यृचि ( ऋ० सं० ५-३-२४-३ ) एवंजातं **त्वा** त्वां **दैव्येन** देवसम्बन्धिना **ब्रह्मणा** वेदराशिना स्तुवन्तः **विश्वेदेवाः** मा एतद्भूमौ पतेदिति **पुष्करे** कुम्भे वासतीवरे कलशे **अदधन्त** अधारयन्तेत्यर्थः ॥ १ ॥

तथाचादितेर्मित्रावरुणौ यज्ञाते-इति प्रकृत्य ( परिशिष्टे ) पठ्यते—

तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे ॥ १ ॥

---

१. "ओहाङ् गतौ" ( जु० आ० ) इति हि पठ्यते ॥

२. "पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां०० जायते । तज्जाया जाया भवति यदस्यां जायते पुनः" इति जायाशब्दनिर्वचनश्रुतिः ॥ "आत्मा वै पुत्रनामासि त्वं जीव शरदः शतमि"ति स्मृतिश्च ॥

३. दृप्यन्त्यनेनेति "दृप हर्षादौ" ( दि० प० ) बाहुलकात्सः । "अनुदात्तस्य चे"-( पा० ६-१-५९ )त्यम् ॥

४. "सुत्रे ह जातावि॒षि॒ता नमो॑भिः कु॒म्भे रेतः॑ सिषिचतुः समा॒नम् । ततो॑ ह॒ मान॒ उदि॑याय॒ मध्या॒त्ततो॑ जा॒तमृषि॑माहु॒र्वसि॑ष्ठम्" इति पूरणार्थौ । सत्रे बहुकर्तृके यागे जातौ दीक्षितौ मित्रावरुणौ इषिताऽध्येषितौ स्वयमन्यैर्जैनैर्नमोभिः स्तुतिभिः कुम्भे वासतीवरे कलशे समानमेकदैव रेतः सिषिचतुरसिञ्चतां ततो वासतीवरात्कुम्भान्मध्यादगस्त्यो मानः शमीप्रमाण उदियाय प्रादुर्बभूव । तत एव कुम्भाद्वसिष्ठमपि ऋषिं जातमाहुरित्यर्थः ॥

५. तेन शुक्रेण सहैकतामुपगतमिति दुर्गव्याख्यानम् ॥

६. अहम्भुवा ( सहभूतेन ) युक्तमिति सायणः ॥

७. यत्र वासतेयी रात्रिस्तत्संबन्धि पर्युषितं जलमाधीयते ॥

८. अयं ( दद् धातुः ) दाने ( भ्वा० प० ) पठितोऽपि वेदे धारणेऽपि वर्तते । दधतिना ( भ्वा० प० ) समानार्थः ॥

तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ॥ २ ॥
बहुधा पतितं रेतः कलशे च जले स्थले ।
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः ॥ ३ ॥
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः ।
उदियाय ततोऽगस्त्यः शम्यामात्रो महातपाः ॥ ४ ॥
मानेन सम्मितो यस्मात्तस्मान्मान इहोच्यते ।
यद्वा कुम्भाद्दृषिर्जातः कुम्भेनापि हि मीयते ॥ ५ ॥
कुम्भ इत्यभिधानं च परिमाणं च लक्ष्यते ।
ततोऽप्सु गृह्यमानासु वसिष्ठः पुष्करे स्थितः ॥ ६ ॥
सर्वतः पुष्करे तं हि विश्वेदेवा अधारयन् ॥ ७ ॥

इति ॥ एवमेतस्मिन्मन्त्रे "द्रप्सं स्कन्नम्"

इत्यादिनाऽभिसम्बन्धा-"दुर्वशी-" शब्देना"प्सराः" इत्युपपद्यते ॥

अथास्य भाष्यम्—

**अप्यसि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातो द्रप्सं स्कन्नं ब्रह्मणा दैव्येन ॥**

सुगममेतदिति न व्याख्यातं किन्त्वनूदितमेव । अथ शुक्रं कस्मा"द्रप्स" इत्युच्यत ? इत्याह—

**द्रप्सः सम्भृतः प्सानीयो भवति ॥**

स हि रेतःसंज्ञको रसः पुरुषस्याङ्गादङ्गात् **सम्भृतः** स्त्रीयोनौ सञ्चितो **भवति** । तथाचायं भरतेरेव निपातितः ( पा० ६-३-१०९ ) यद्वा-**प्सानीयः** भक्षणीयश्च भवति कठिनादन्यद् ( शिथिलं ) दध्याख्यम् । तथाचामरः "द्रप्सं दधि घनेतरत्" इति । "द्रप्सं द्राक्प्सानीयमि"ति सर्वानन्दः ॥

अथ मन्त्रशेषमर्थतो व्याचष्टे—

**सर्वे देवाः पुष्करे त्वा धारयन्त ॥**

गतमेतत् । अथ पुष्करशब्दोऽनेकार्थस्तमिह प्रसक्तं निर्ब्रवीति—

**पुष्करमन्तरिक्षं, पोषति भूतानि । उदकं पुष्करं पूजाकरं पूजयितव्यमिदमपीतरत्पुष्करमेतस्मादेव पुष्करं, वपुष्करं वा ॥**

**अन्तरिक्षम्** नभः । कस्मात् ? यतस्तत् **पोषति** पुष्णाति ( पोषयति ) अवकाशदानेनोपकुर्वत् । **उदकम्** जलमपि **पुष्करम्** यतस्तत् **पूजाकरम्** तेन हि पूजा क्रियत इति पूजाकरत्वात्पुष्करम् । अथवा **पूजयितव्यम्** पूजनार्हमात्मन एवेति पुष्करम् । पूज्यते हि तत् ॥ **इतरत्** पद्मम् **एतस्मादेव** कारणात् **पुष्करम्** इत्युच्यते तदपि हि पूजाकारं, पूजयितव्यं (श्लाघनीयं) च भवति शोभनत्वात् । अथवा **वपुष्करं** सत् **पुष्करम्** इत्युच्यते । व्यवहृतेऽहि तस्मिन् वपुष्मान्देहगात्रो भवति । शोभनगन्धग्रहणाद्वपुः पुष्यतीति ॥ तथाच "पुष

पुष्टौ" ( भ्वा० प० ) "पुषः कित्" ( उ० ४-४ ) इति कर्मप्रत्ययः । पुषिरत्रान्तर्भावितण्यर्थः पोषयति हि तत् ॥

अथ पद्मप्रसङ्गात्पुष्पशब्दं निराह—

**पुष्पं पुष्प्यतेः ॥**

विकसनार्थस्य ( दि० प० ) "पचाद्यचि" ( पा० ३-१-१३४ ) तद्धि विकसितं भवति ॥

अथ वयुनम् (४८) इत्यनवगतमनेकार्थं चेति निर्ब्रवीति—

**वयुनं वेतेः, कान्तिर्वा प्रज्ञा वा ॥ २ ॥ (१४)**

**वेतेः** इति धातुनिर्देशः । "वी गत्यादौ" ( अ० प० ) तस्मान्नप्रत्यये वेनमिति न्याय्यम् ॥ बाहुलकादुननि ( उ० ३-५८ ) तु वयुनं भवत्येव "अजतेः" ( भ्वा० प० ) स्तु व्यादेशे बाहुलकत्वं न शरणम् । **कान्तिर्वा प्रज्ञा** वेत्यभिधेयवचनम् ॥ ( निघं० ३-८-९-१० ) ॥ २ ॥ ( १४ )

**"स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार"** ( ऋ० सं० ४-६-११-३ )

**स तमोऽप्रज्ञानं ततन्वत् सतं सूर्येण प्रज्ञानवच्चकार ॥**

**स इदिति ।** अस्य "कदा ते मर्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः ॥" इत्युत्तरार्धर्चम् । भारद्वाजस्यार्षं त्रिष्टुप् । ऐन्द्रे सूक्ते व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते अस्मात्पूर्वस्यामृचि "यस्य दिवमति मह्ना पृथिव्याः पुरुमायस्य रिरिचे महित्वम्" इति यच्छब्देनेन्द्रो निर्दिष्टः । **स-इत्** स एव इन्द्रः । **अवयुनम्** अप्रज्ञानं ( प्रज्ञाननाशकं **तमः** शार्वरम् ( नैशं ) ध्वान्तम् **ततन्वत्** अभितो मुहुर्विस्तारयन् । **सूर्येण** दिव्यारोपितेन देवेनैतजगत् **वयुनवत्** प्रज्ञानवत् **चकार** कृतवान् । अत्र भाष्यकारः सतमित्यधिकं निचिक्षेप-तस्य स इन्द्रस्तमुद्गमयन्नित्यर्थः । "प्राणो हीन्द्रस्तस्मात्सूर्य उदेति, प्राणाद्वा एष उदेति, प्राणेऽस्तमेती"ति श्रुतेः । प्राण इन्द्रः सूर्यस्योदयहेतुरिति तद्भावस्तस्मात्स एवेन्द्र एवमुच्यते-सूर्येण स्वमेतज्जगद्वयुनवच्चकार कृतवानसीत्यर्थं दुर्ग आह । अत्रार्थे पुरुषव्यत्यय आर्षः ( पा० ३-१-८५ ) एवमयमर्धर्चः परोक्षस्तुतिः । अथापरोऽर्धर्चः प्रत्यक्षकृतः । हे **स्वधावः** ! बलवन्निन्द्र ! **मर्त्याः** मनुष्याः । **अमृतस्य** अमरणधर्मिणः । नित्यस्य **ते** तव **धाम**

१. तनोतेर्यङ्लुगन्ताच्छतरि रूपम् । "आगमशास्त्रमनित्यम्" ( प० ९५ ) इति नुकोऽ ( पा० ७-४-८५ )-भावः ॥ श्लुश्च ( पा० ३-१-७३ ) बाहुलकात् ( पा० ३-१-८५ ) "नाभ्यस्ताच्छतुः" ( पा० ७-१-७८ ) इति नुमोऽभावः ॥

२. एतच्च सायणानुमतम् । दुर्गस्तु यथाह तदनुपदं स्फुटमेव ॥

३. यद्यपि स्वधाशब्दो निघण्टौ न बलार्थ उक्तः किन्त्वन्नार्थ उदकार्थश्च ( १-१२-९७ ) तथापि उदकार्थस्य बलार्थत्वेऽसकृत्प्रयोगो निगमेषु दृष्टः ॥ ओजसोऽप्युदकार्थेषु पाठदर्शनाच ॥

स्वर्गाख्यं स्थानं तत्रस्थान् देवान् इति यावत् । **इयक्षन्तः** यष्टुमिच्छन्तः **कदा** कदाचिदपि किञ्चिदपि प्राणिजातं **न मिनन्ति** न हिंसन्ति "मीञ् हिंसायाम्" ( क्र्या० उ० ) लट् ॥ ३ ॥

अत्र "तमस्तन्वत्सूर्येण वयुनवच्चकारे"ति वाक्यदर्शनाद्वयुनशब्देन प्रज्ञानं कान्तिर्वोच्यते । तदैव हि भुवनं रोचते यदा सूर्य उदेतीति ॥

अथ—

**वाजपस्त्यम्—वाजपतनम् ॥**

**वाजपस्त्यम्** ( ४९ ) इत्येतदनवगतम् । **वाजपतनम्** इत्यवगमः । अन्नगृहम् सोमो वास्याभिधेयः । वाजः । अन्नं बलं वा ( निघं० २-७-९-२ ) सोऽस्माकमयमिति मन्यमानाः सन्तो यन्देवाः पतन्ति स सोमो वाजपस्त्यः । पततेर्यति तस्य सुडागमो बाहुलकात् । देवराजस्तु-"वाजोऽन्नं, पस्त्यं गृहं, वाजश्च पस्त्यञ्च परममेतदन्नाद्यमस्माकमिति मन्यमाना यस्मिन्देवाः पतन्ति तम् । सोम उच्यते" इत्याह ॥

उक्तार्थे निगमं दर्शयति—

**"सनेम वाजपस्त्यम् ॥"**

( ऋ० सं० ७-४-२५-६ )

**इत्यपि निगमो भवति ॥**

**सनेमेति ।** "तं सखायः पुरोरुचं यूयं वयं च सूरयः । अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्" इतीयं पावमानी सौमी । वृषागिरोराज्ञः पुत्रोऽम्बरीषो भरद्वाजपुत्र ऋजिश्वा चोभौ सहितावस्यर्षी । अनुष्टुप् ॥ हे **सखायः** ! स्तोतार ऋत्विजो वा **सूरयः** मेधाविनः प्राज्ञा वा **यूयं वयं च** यजमानाः सम्भूताः सन्तः **पुरोरुचम्** पुरतोऽग्रतो रोचमानं ( दीप्तम् ) **तम्** एतं मुपकल्पितं **वाजगन्ध्यम्** वाजेनान्नेन मिश्रयितव्यम् अन्नगृहम् **अश्याम** व्याप्नुयामेति दुर्गः । "अशू व्याप्तौ" ( स्वा० आ० ) विकरणोपग्रहव्यत्ययावार्षौ । अश्नीम पिबेमेति सायणस्तन्मते सोमोऽभिधेयः । किञ्च **वाजपस्त्यम्** अन्नमिश्रं सोमं **सनेम** नित्यकालमेव सम्भजेमहि ॥ "षण सम्भक्तौ" ( भ्वा० प० ) लिङ् ॥

१. "तात्स्थ्यात्ताच्छब्द्यमि"ति न्यायात् । वस्तुतस्तु यजतिः सङ्गतिकरणार्थोऽपि । तथाच इयक्षन्तः सङ्गत्या स्वीकरिष्यन्तो जिगमिषन्त इति यावत् ॥

२. तथाचानुक्रम्यते-"अभितो द्वादशाम्बरीष ऋजिश्वाचानुष्टुभं ह बृहत्युपान्त्ये"ति ॥

३. "गन्ध अर्दने" ( चु० आ० ) अत्र मिश्रणार्थः "अचो यत्" ( पा० ३-१-९७ ) गृह्णतेर्गन्धादेशो ण्यच्चेति केचित् । गृह्यमाणस्य मिश्रीभावाद्गन्ध्यं मिश्रयितव्यमित्यर्थः ॥ अत्र दुर्गः "प्रतिविशिष्टान्नसमानगन्धम् अथवा-वाजग्रहीतारम् अथवा-वाजसंमिश्रयितारमि"ति सर्वथा सोमोऽभिधेयः ॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "वाजपस्त्य"-शब्देन सोम उच्यते, अन्नगृहं वा ॥

**वाजगन्ध्यम् । गध्यत्युत्तरपदम् ॥**

**"अ॒श्याम॒ वाज॑गन्ध्यम् ॥"**

(ऋ० सं० ७-४-२५-६)

**इत्यपि निगमो भवति ॥**

**वाजगन्ध्यम्** (५०) इत्येतदपि पदमेकस्मिन्नेवोपक्रान्त-निगमे निरुक्तम् । केवलं समाम्नायानुक्रमविपर्यासोऽत्र (निगमे) द्रष्टव्यः । **गध्यतीति** "गन्ध अर्दने" इत्यस्य दैवादिकत्वमभि-मत्योक्तम् । तथाचोक्तं "दिवादिषु भ्वादिवदाकृतिगणस्तेन क्षीयते मृग्यतीत्यादिसिद्धम्" इति (सि० कौ०) ॥

अथांशतः समानाभिधानाभिधेयं क्रमप्राप्तं निर्वक्ति—

**गध्यं गृह्णातेः ॥**

**"ऋ॒ज्रा वाज॒ं न गध्य॒ं युयू॑षन् ॥"**

(ऋ० सं० ३-५-१९-१)

**इत्यपि निगमो भवति ॥**

**गध्यम्** (५१) सोम एवात्राप्यभिधेयः । **गृह्णातेः** (क्र्या० उ०) "अघ्न्यादिलात्" (उ० ४-१०९) यत्प्रत्ययो धातोर्गध्यादेशश्च । ग्राह्यमित्यर्थः । गृह्यमाणस्य मिश्रीभावादात्मना मिश्रयितव्यं भक्षयितव्यमित्यर्थः ॥ अत्र निगमः **ऋज्रा०** षन् । इति । अस्य "यासि॒ कुत्से॑न स॒रथ॑मव॒स्युस्तो॒दो वात॑स्य॒ हर्यो॒-रीशा॑नः" इत्यादिः "क॒विर्यदह॒न्पार्या॑य॒ भूषा॑त्" इत्यन्तः ॥ वामदेवस्यार्षं त्रिष्टुबैन्द्री ॥ अहीनसूक्ते चतुर्विंश उक्थे माध्य-न्दिने सवने मैत्रावरुणस्येयं शस्त्रे शस्यते । हे भगवन्निन्द्र ! **अवस्युः** कुत्सस्य रक्षणमिच्छुः । छन्दसि परेच्छायामपि क्यजदृश्यते "अघायु"रित्यत्र यथा । **तोदः** तोदको हिंसकः शत्रू-णां तदीयानाम् । **हर्योः** अश्वयोरमोघवीर्ययो **रीशानः** ईश्व-रस्त्वं **कुत्सेन** कुत्साख्येन कथंरुरुनाम्नो राजर्षेः पुत्रेण राजर्षिणा

१. "वाजपस्त्यं वाजगन्ध्यमि"त्येष समाम्नायानुक्रमः । निगमे पुनः "अश्याम वाजगन्ध्यं सनेम वाजपस्त्यमि"ति ॥

२. "छन्दस्यघशब्दात्परेच्छायां क्यच्" (पा० ३-१-८ वा०) इति दर्शनाद्दृष्टानुविधानाच्च छन्दसि अवनमिच्छुरवस्युः । इत्यपि भवति ॥

३. अत्र काचिदाख्यायिका श्रूयते—कथं रुरुनामकः कश्चिद्राज-र्षिस्तस्य पुत्रः कुत्साख्यो राजर्षिरासीत् । स च कदाचिच्छत्रुभि-स्सह युयुत्सुः सङ्ग्रामे स्वयमशक्तः सन् शत्रूणां हननार्थमिन्द्रस्य आह्वानं चकार । स चेन्द्रः कुत्सस्य गृहमागत्य तस्य शत्रूञ्जघान । तदनन्तरमतिप्रीला तयोः सख्यमभवत् । सख्यानन्तरमिन्द्र-पनमपि स्वकीयं गृहमेकरथेऽधिरुह्य प्रापयामास । तत्र च शची

**सरथं** समानरथं एकरथमधिरुह्य **वातस्य** "जवेने"ति शेषः । **ऋज्रा** ऋज्रेण "ऋज्रेन्द्र" (उ० १-१८६) इत्यादिना "ऋज गतिस्थानार्जनोपार्जनेषु" (भ्वा० आ०) इत्यस्माद्रक् प्रत्ययः । आङ आकारः । (पा० ७-१-३९) सायणमतेन औङ आ"ऋज्रा-ऋजुगामिनावश्वावि"ति हि तद्भाष्यम् ॥ ऋजु-नैव मार्गेण (राजमार्गेण) **वाजं न** प्रतिविशिष्टान्नमिव (निघं० २-७) **गध्यं** ग्रहणार्हं सोमं **युयूषन्** सिषेविषुः (अयं मयाधुना सुरक्षितः सोमेन मां यक्ष्यतीत्याशंसमानो मनसा) **यासि** गच्छसि । स च कुत्सः **कविः** क्रान्तदर्शनः प्राज्ञः **यद्-हन्** यस्मिन्नहनि ङेर्लुक् (पा० ७-१-३९) **धार्याय** धार-णाय आपन्निस्तरणाय । पारयितव्याय वा ("पारयितव्या मयैते शत्रव" इति यदा चेतः करोति तस्मिन्नेवाहनि) तान्सर्वा-नरातीन् **भूषात्** अतिक्रम्य वर्तते । लेट आडागमः (पा० ३-४-९४) सिप्च विकरणः (पा० ३-१-३४) इतश्च लोपः (पा० ३-४-९७) सिब्बहुलमित्युक्तेः सिपः कित्त्वमाश्रित्य गुणाभाव उपपाद्यः ॥ यद्वा त्वमेव कविः०० अतिक्रम्य वर्तसे ॥ पर्यगृह्णात् पर्यक्रामत् पर्यरक्षत् इत्येते भूषतेः (प्रयोगे) अर्था इति दुर्गः ॥ १ ॥

एवमेतस्मिन् शब्दसारूप्यादर्थोपपत्तेश्च "गध्यम्" इत्येष गृह्णातेरित्युपपन्नम् ॥

अथ **गधिता** (५२) इत्यनवगतमवगमयस्तत्प्रकृतिभूतं धातुमेव तावदाह—

**गध्यतिर्मिश्रीभावकर्मा ॥**

**"आग॑धिता॒ परि॑गधिता" ॥**

(ऋ० सं० २-१-११-६)

**इत्यपि निगमो भवति ॥**

इन्द्रं प्राप्तुमागता सती तौ समानरूपौ दृष्ट्वा अयमिन्द्रोऽयं कुत्स इति विवेकाभावेन संशयं चकार ॥ तथाचाम्नायते—

"आर्दस्युघ्ना मन॑सा याह्यस्तं॒ भुव॑त्ते॒ कुत्सः॑ स॒ख्ये निका॑मया । स्वे योनौ॑ निषदतं॒ सरू॑पा॒ विवा॑ चिकित्सदृतचिद्ध॒ नारी॑ ॥

(ऋ० सं० ३-५-१८-५)

हे इन्द्र ! दस्युघ्ना मनसा युक्तस्त्वमस्तं कुत्सगृहं मायाहि मागाः । कुत्सश्च ते सख्ये नितराङ्कामयमानोऽभूत् ततो वां युवां स्वे योनौ स्वकीये स्थाने न्यसीदतं ऋतन्चित्सत्यदर्शनी नारी शची सरूपौ वां विचिकित्सत्संशयं चकार ॥

१. पतञ्च दुर्गेण "जुषी प्रीतिसेवनयोः" (तु० प०) इत्यस्य वर्णव्यत्ययेन कथञ्चिन्निरुच्य व्याख्यातम् । ऋज्रा ऋजुगामिना-वश्वौ युयूषन्स्वकीये रथे योजयन्निति सायणव्याख्यानम् । मन्त्रार्थे यौतेः शतरि सगागम आर्षः ॥

२. सायणस्तु—कविः प्राज्ञः कुत्सः यदहन् यस्मिन्नहनि (यस्मिन्दिवसे) पार्याय पारणायापन्निवारणाय भूषात्प्रभवते । तस्मिन्नेव दिने कुत्सेन सरथं यासीति पूर्वेण सम्बन्ध इत्याह ॥

**गध्यति**रप्रतीतार्थः स पुनरिह ( निगमे ) **मिश्रीभावकर्मा** मिश्रणार्थः नैरुक्तः । पाणिनीयमते ग्रहेः क्ते ग्रहस्य गधादेशः । तथाचात्र निगमः **"आग० धिता"** इति । अस्य "या कशीकेव जङ्गहे । ददाति मह्यं यादुरी याशूनां भोज्या शता" इति शेषः ॥ भावयव्यस्यार्षम् । अनुष्टुप् ॥ रोमशानाम बृहस्पतेः पुत्री ब्रह्मवादिनी तया सम्भोगाय प्रार्थितो भर्ताऽस्या भावयव्यस्तां स्वभार्यामप्रौढां मत्वा परिहसन्नाह— **हे रोमशे ! मया भोज्या** भोगयोग्याऽन्या पत्नी **आगधिता** आ समन्तात् गृहीता ( अवयवैर्गाढं परिष्वक्ता ) **या** परिगधिता सर्वतोऽन्तर्बहिश्च मिश्रिता ( आलिङ्गनचुम्बनपुरस्सरं प्राप्तप्रजनना सती सम्भोगाय परिगृहीता च सती ) **जङ्गहे** अत्यर्थं ग्रहणे **कशीकेव** कशीकानाम सूतवत्सा नकुली सा यथा पत्या सह चिरकालं क्रीडति न कदाचिदपि विमुञ्चति वद्वत् **यादुरी** "यादुरित्युदकनाम" ( निघं० १-१२-४८ ) रेतोलक्षणमुदकं राति ददातीति यादुरी । गौरादित्वात् ( पा० ४-१-४१ ) ङीष् । बहुरेतोयुक्ता **याशूनां** यश इति प्रजननक्रीडा "अशेर्देवने युट् च" ( उ० ४-१८६ ) इत्युन्प्रत्ययः । तत्सम्बन्धीनि कर्माणि याशूनि पृषोदरादिः । संभोगास्तेषां **शता** शतानि असंख्यातानि "शेश्छन्दसि बहुलम्" ( पा० ३-४-६ ) इति शेर्लोपः । **मह्यं ददाति** ॥ ६ ॥

एवमत्र मैथुनसम्बन्धाच्छब्दसारूप्याच्च "गध्यतिः" मिश्रीभावकर्मेत्युपपद्यते, अस्योत्तरवचनं (नि० ३-२०) पुरस्ताद्द्रष्टव्यम् ॥

## कौरयाणः । कृतयानः ॥

### "पाकस्थामा कौरयाणः ॥"

( ऋ० सं० ५-७-२९-१ )

### इत्यपि निगमो भवति ॥

अथ **कौरयाणः** (५३) इत्यनवगतम् । **कृतयानः** इत्यवगमः । तत्र निगमः **पाकेति** । अस्य "यं मे दुरिन्द्रो मरुतः" इत्यादिः "विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम्" इत्यन्तः ॥ मेध्यातिथेः काण्वस्यार्षम् । त्रिष्टुप् ( अनादेशे ) दानमनया प्रशंसते । **यं** यादृशं धनसंघं **मे** मह्यम् **इन्द्रो मरुतश्च दुः** दत्तवन्तः । ददातेर्लुङि "गातिस्थे" ( पा० २-४-७७ )ति सिचो लुकि-अड्भाव आर्षः । तादृशमेव धनसमूहं **कौरयाणः** कृतयानः ( शत्रून्प्रति युद्धाभिमुख्येन कृतं यानं हस्त्यश्वादिकं येनासौ कृतयानः स एव कुरयाणः स कौरयाणः ) स्वार्थेऽण् ( पा० ५-४-३८ ) कृतशब्दस्य कुरादेशः पृषोदरादित्वात् आदिवृद्धिः ( पा० ७-२-११७ ) यद्वा कौरशब्दः कृतशब्दपर्याय इति देवराजः । **पाकस्थामा** नाम नरपतिः । **मह्यम्** । प्रादात् इति शेषः । कीदृशं धनसंघं ? **विश्वेषां** सर्वेषां धनानां मध्ये **त्मना** आत्मना स्वत एव **शोभिष्ठम्** अतिशयेन शोभावन्तम् । "मन्त्रेष्वाङ्यादेरात्मनः" ( पा० ६-४-१४१ ) इत्यात्मन आदिलोपः । अतिशयेन शोभावत्त्वे दृष्टान्तः । **दिवि** आकाशे **उपधावमानम्** यद्वा धावमानं शीघ्रगामिनं प्रभाभिश्चोपेतं सूर्यमिवेत्यार्थिकोऽर्थः ॥ १ ॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "कौरयाणः कृतयान" इत्युपपद्यते ॥

## तौरयाणः । तूर्णयानः ॥

### "स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः ॥"

( ऋ० सं० ३-३-१६-३ वा० )

### इत्यपि निगमो भवति ॥

**तौरयाणः** (५४) इत्यनवगतम् । **तूर्णयानः** इत्यवगमः । अत्र हि तूर्णशब्दस्य तौरभाव इति देवराजः । अत्र निगमः—**सेति** ॥ अस्य "जातं यत्त्वा परि देवा अभूषन् महे भराय पुरुहूत विश्वे" इत्यादिः । विश्वामित्रस्येयमार्षत्रिष्टुबैन्द्री । **हे पुरुहूत** बहुभिराहूत इन्द्र ! **विश्वे-देवाः यत् जातं** जातमात्रं **त्वा** त्वां **महे** महते **भराय** भरणाय महान्तमसुरैः साकमयं सङ्ग्रामं करिष्यति, ततश्चास्मान्भरिष्यति इत्यभिप्रायेण **पर्यभूषन्** परिगृहीतवन्तः । ततस्त्वं **तौरयाणः** तूर्णयानः ( त्वरितयानः ) भूत्वा **सखिभिः** सहायभूतैः **मरुद्भिः** देवैः **सजोषाः** सम्प्रीयमाणः सन् **उपयाहि** । उपगच्छ एनं **यज्ञम्** उपागत्य चास्माकमाशिषः ( अभिमतान्कामान् ) समर्धयेत्यभिप्रायः ॥ ३ ॥

एवमत्रागमनसम्बन्धात् "तौरयाणः तूर्णयान" इत्यर्थ उपपद्यते ॥

## अह्रयाणः अह्रीतयानः ॥

### "अनुष्टुया कृणुह्यह्रयाण" ॥

( ऋ० सं० ३-४-२५-४ )

---

१. गध्यं गृह्णातेरिति भाष्यानुसारि व्याख्यानमेतत् ॥

२. गध्यतिर्मिश्रीभावकर्मेति प्रकृतभाष्यानुसारि व्याख्यानमेतत् । अत्र सायणः । आगधिता आसमन्तान्मिश्रयन्ती । आन्तरं प्रजननेन, बाह्यं भुजादिभिरित्यर्थः । परिगधिता परितो गृहीता ॥ अत्र पक्षे पुरुषस्य प्राधान्यं, पूर्वस्मिंस्तु योषित इत्यर्थक्रमाद ॥

३. कशीका यथा प्रतिकश-( प्रत्याघात- )मतितरां परिष्वजति । स हि तस्याः परिष्वजनस्वभावः ॥

४. मेध्यतिथिर्नाम ऋषिः स कौरयाणात्पाकस्थामनाम्नो नरपतेर्दानं लब्ध्वा तदीयं दानं स्तौति— । अत्र पाकस्थामा विपकप्राणः । कौरयाणः संस्कृतयान इति दुर्गः । तन्मते कृतशब्दस्यैव भाष्योक्तस्य संस्कृतार्थत्वमवसेयम् ॥

१. शोभावच्छब्दादातिशायनिक इष्ठन् ( पा० ५-३-५५ ) "विन्मतोर्लुक्" ( पा० ५-३-६५ ) इतिमतुपो लुक् । "यस्येति च" ( पा० ६-४-१४८ ) इत्याकारलोपः ॥

२. अत्रोपसर्गबलेन क्रियाध्याहारः सायणेन कृतः ॥

इत्यपि निगमो भवति ॥

**अह्रयाणः** (५५) इत्यनवगतम् । **अह्रीतयानः** इत्यवगमः । अत्र ह्रीतशब्दस्य ह्रभावः । निगमश्च **अन्विति** । अस्य "त्वया वयं सधन्य१स्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शंसा सूदय सत्यताते" इत्यादिः ॥ वामदेवस्यार्षं त्रिष्टुप् ॥ अग्नये रक्षोघ्ने अष्टाकपालः । तत्र मैत्रायणीयके स्विष्टकृतः पुरोऽनुवाक्यैषा ॥ हे भगवन् ! अग्ने ! **अह्रयाण** ! अह्रीतयान ! (अलज्जितगमन !) **वयं** स्तोतारः **त्वया सधन्यः** त्वत्प्रसादात्समानधनाः **त्वोताः** त्वयाच रक्षिताः **तव प्रणीती** प्रणीत्या "सुपां सुलुक्" (पा० ७–१–३९) इति आङा सह पूर्वसवर्णदीर्घः । प्रेरणयाऽनुज्ञया वा । **वाजान्** अन्नानि (निघं० २–७–२) **अश्याम** प्राप्नुयाम । हे **सत्यताते** यज्ञतनितः ! **शंसा** पापानां शंसितारौ **उभा** उभौ आसन्नविप्रकृष्टौ शत्रू **सूदय** जहि । किञ्च **अनुष्टुया** अनुष्ठानेन कर्मणा **कृणुहि** कुरु । सम्पादयास्मिन्सूक्ते प्रतिपादितमस्मदर्थम् ॥ ४ ॥

एवमस्मिन् "अह्रयाण" इत्यनेन "अह्रीतयानो"ऽभिरुच्यते । उपपद्यते तद्देवतानाम् ॥

हरयाणः । हरमाणयानः ॥

"रजतं हरयाणे ॥" (ऋ० ६–२–२५–२)

इत्यपि निगमो भवति ॥

**हरयाणः** (५६) इत्यनवगतम् । **हरमाणयानः** इत्यवगमः । अत्र निगमः **रजतमिति** । "ऋज्रमुक्षण्यायने रजतं हरयाणे । रथं युक्तमसनाम सुषामणि" इयं विश्वमनसो वैयश्वस्यार्षम् । उष्णिक् । दानमनया स्तूयते । **उक्षण्यायने** उक्ष्णो गोत्रापत्ये **सुषामणि** शोभनं सामास्य सुषामा तस्मिन् । अत्र पितृशब्देन पुत्रोऽभिधीयत इति सुषाम्णः पुत्रे वरुनाम्नि राजनि यजमाने सति । कथंभूते ? **हरयाणे** हरमाणयाने । नित्यकालमेवाभिप्रस्थितयाने । शत्रुजीवितैश्वर्यादिहरणशीलयाने । **ऋज्रम्** ऋजुगामिनम् । **रजतम्** रजतमयम् । **युक्तम्** अश्वाभ्याम् । **रथम्** । **असनाम** एतेषां मित्रादीनां प्रसादाद्वयं सम्भक्तवन्तो लब्धवन्तोऽभूम । तादृशः स दक्षो दातेत्यभिप्रायः ॥ "षण सम्भक्तौ" (भ्वा० प०) लङ् ॥ २ ॥

अथ **आरितः** (५७) इत्यनवगतम् "प्रत्यृत" इत्यवगमः । तत्रादौ निगमं दर्शयति—

"य आरितः कर्मणि कर्मणि स्थिरः ॥"

(ऋ० सं० १–७–१२–४)

प्रत्यृतः स्तोमान् ॥

**य आ००स्थिर इति** ॥ "यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणि कर्मणि स्थिरः । वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे" इतीयं कुत्सस्यार्षम् । व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे निविद्धानीये सूक्ते शस्यते । **य इन्द्रः अश्वानाम्** वडवानां **यः च गवाम्** । **गोपतिः** षण्डः "षण्डो गोपतिरिट् चर" इत्यमरः । गर्भधारयिता पुंस्त्र्व इति यावत् । **वशी** अपराधीनः स्वतन्त्र इत्यर्थः । अपि च य **इन्द्रः** "कर्मणि कर्मणि" सर्वेषु कर्मसु "नित्यवीप्सयोः" (पा० ८–१–४) इति द्वित्वम् । **स्थिरः** नैश्चल्येनावतिष्ठमानो नित्य इति यावत् । यमृते न किञ्चन कर्म प्रवर्तते । अथच य **आरितः** "प्रत्यृतः स्तोमान्" सर्वान्स्तोमान् प्रतिनित्यमृतोऽवस्थितो देवतारूपेण ॥ किञ्च यः **असुन्वतः** अभिषवं सोमानामकुर्वाणस्य सुन्वतां यागानुष्ठातॄणां विरोधिनो वा **वीळोश्चित्** वीडयतिः संस्तम्भकर्मा नैगमो धातुः । ततो बाहुलकादुप्रत्ययः (उ० १–७) संस्तम्भस्यापि

१. धनमेषामस्तीति "छन्दसीवनिपौ चे" (पा० ५–२–१२२ वा०) ति मत्वर्थे ईप्रत्ययः । "परनेकाच०" (पा० ६–४–८२) इति यण् ॥

२. सत्यं तनोतीति वा सत्यंतायते यस्मिन्निति वा सत्यतातिः । तनोतेः क्तिनि "सनः क्तिच्चि०" (पा० ६–४–४५) इत्यत्र "तनोतेरि" (पा० ६–४–४४) त्यनुवृत्तेरात्वम् ॥

३. योऽग्रतो नः पापानि शंसति यश्च पृष्ठतस्तावुभावपीति दुर्गः । "सुपां सुलुगि" (पा० ७–१–३९) ति औङ आकारः ।

४. "अपदुःसुषु स्थः" (उ० १–२५) इति कुप्रत्ययो बाहुलकादनुपूर्वेऽपि भवति । "सुपां सुलुगि"–(पा० ७–१–३९) ति तृतीयाया याजादेशः ॥

५. यो ह्यर्थितोऽर्थिभ्यो दातुं न शक्नोति स ह्रीतो गच्छति । तदस्य नास्त्यतः श्लाघ्यगमन इत्यर्थः ॥

६. व्यश्वपुत्रस्य ॥

७. "सुषामादिषु च" (पा० ८–३–९८) इति षत्वम् ॥

१. ण्यन्तादत्र फक्छान्दसः । वृद्ध्यभावः "संज्ञापूर्वको विधिरनित्य" (प० ९४) इति परिभाषणात् ॥

२. "हरतेः" (भ्वा० उ०) आत्मनेपदे लटः शानच् मुक् (पा० ७–२–८२) सच (लट्) अत्र ताच्छील्यविशिष्टे कर्तरि बोध्य आगमानुरोधात् ॥ बहुव्रीहिः पष्ठ्यर्थेऽत्र बोध्यः ॥ मानपदस्य लोपः ॥

३. "सांड" इति ख्यातः । अधिपतिरिति परमार्थः ॥

४. सायणस्तु—आरितः स्तुतिभिः प्रत्यृतः प्राप्तो न भवति "आरितः प्रत्यृतः स्तोमानि"ति निरुक्तमित्याह । तन्मते प्रत्यृतः प्रत्यागतः प्रतिनिवृत्त इत्येवं प्रतीयस्य स्थाने आकारो नैगमोऽत्र द्रष्टव्यः ॥ देवराजस्तु—अर्तेर्यङ् लुकि निष्ठायां छान्दसत्वादिटि ऋकारस्य यणि "रोरी" (पा० ८–३–१४) लभ्यासरेफस्य "ह्रग्रिकौचे"–(पा० ७–४–९१)–ति रुका निष्पन्नस्य लोपे "ढूलोप"–(पा० ६–३–१११) इति दीर्घत्वमित्याह ॥

(दर्पितस्यापि) शत्रोः **वधः** हन्ता। "हनश्च वधः" (पा० ३-३-७६) इत्यप् वधादेशश्च। तमेवं गुणसम्पन्नं **मरुत्वन्तम्** मरुद्भिः सहितम् इन्द्रं वयं **सख्याय** सङ्गमायास्मिन्कर्मणि **हुवामहे** आह्वयामः ॥ ४ ॥

एवमस्मिन् "आरितः" इत्ययमर्थोपपत्त्या "प्रत्यृतः" इत्यर्थ उपपद्यते ॥

अथ व्रन्दी (५८) इत्यनवगतमवगमयति—

**व्रन्दी—व्रन्दतेर्मृदूभावकर्मणः ॥ ३ ॥ (१५)**

मृदुभावार्थात् व्रन्दधातोर्नैरुक्तादिनिः (उ० ४-६) बाहुलकादुपधादीर्घे (पा० ६-४-१३) **व्रन्दी** मृदुकारी ॥ ३ ॥ (१५)

अथोक्तार्थे निगममुदाहरति—

**"नि यद् वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना ॥"**

(ऋ० सं० १-४-१७-५)

**नियदिति** ॥ अस्य "प्राचीनेन मनसा बर्हणावता यदद्याचित् कृणवः कस्त्वा परि" इत्युत्तरार्धर्चम् ॥ सव्यस्येयमार्षमैन्द्री जगती। अतिरात्रे प्रथमपर्यायेऽच्छावाकशस्त्रे शस्यते हे इन्द्र! **यत्** यस्त्वम् मेघं हत्वा **रोरुवत्** रोरूयमाणः। स्तनयित्नुशब्दं कुर्वाणः। **श्वसनस्य** शब्दकारिणः वायोः। "श्वसनः स्पर्शनो वायुः" इत्यमरः। **मूर्धनि** उपरि **शुष्णस्य चित्** रसानां शोषयितुः। **व्रन्दिनः** स्वकिरणैरार्द्रदेर्मृदुभावकर्तुर्भगवत आदित्यस्यापि मण्डलं प्रत्यूर्ध्वं **वना** वनानि उदकानि (निघं० १-१२-९) **निवृणक्षि** आवर्जयसि प्रापयसि, निक्षिपसि वा। ऊर्ध्वमधश्चोदकानि क्षिपतस्ते न शक्तिप्रतिघातोऽस्तीत्यभिप्राय इति दुर्गः। वायुना सूर्यकिरणैश्च वृष्ट्या आपः सूर्यस्योपरि पुनरवस्थाप्यन्ते। तदेवोपस्थापनमिन्द्रः करोतीत्युपचर्यते इति सायणः। **यत्** यस्मात् च **प्राचीनेन** प्रागञ्चितेन। अदीनेन तस्मिन्कर्मण्यभिमुखेनेत्यर्थ इति दुर्गः। प्रकर्षेण गत्वा अपराङ्मुखेनेति सायणः। **बर्हणावता** हिंसावता (बृहेर्हिंसार्थाद्भावे ल्युट्। बर्हणा हिंसा तद्वता) **मनसा** युक्तस्त्वम् **अद्याचित्** अद्यापि घर्मकाले। "निपातस्य च"-(पा० ६-३-१३६) इति दीर्घः। **कृणवः** करोष्येव कर्म। उपरि सूर्यस्य भौमात्रसानवस्थापयसि वर्षासु च वर्षसि तस्मात् कारणात् **त्वा** त्वां **परि** उपरि तव। "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु द्वितीये०" (पा० १-४-४८ वा०) ति द्वितीया। उकारलोपोऽत्र छान्दसो द्विर्भावाभावश्चोपरिशब्दस्य ॥ **कः** वर्तते? न कोऽपीत्यर्थः। त्वमेव सर्वभूतानि परिगृह्य (वशेकृत्य) वर्तस इति भावः ॥ ५ ॥

अथास्य भाष्यम्—

**निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः। शुष्णस्यादित्यस्य च शोषयितू रोरूयमाणो वनानीति वा वधेनेति वा ॥**

अत्र यस्मिन्पक्षे **वधेन** इति निर्वचनं **वना** इत्यस्य, तत्र मेघवधेनेति योज्यम्। उदकशब्दश्चास्मिन्पक्षेऽध्याहार्योऽभिवर्जनसम्बन्धात्। मेघवधेनोदकानि **निवृणक्षि** समन्ततोऽधऊर्ध्वं च विक्षिपसीत्यर्थः ॥

एवमत्र संस्तम्भकर्मणा (दृढीभावार्थेन) वीडयतिना (प्रतिद्वन्द्वितया) सह प्रयोगात् (वीडयतेरर्थवैपरीत्येन) व्रन्दतेर्मृदुतार्थत्वमुपपद्यते ॥ व्रीडयतेर्व्रन्दिना (प्रतिद्वन्द्वितया) सह प्रयोगोऽन्वेष्टव्यः ॥

एवमत्र व्रन्दिशब्देनादित्य उक्तः। तत् पुनरेतदस्पष्टं मृदुभावकरणादादित्यस्य व्रन्दित्वमिति, अतो व्रन्दिशब्दस्य मृदुभावार्थोपपिपादिषया व्रीडयतिना संस्तम्भार्थवाचिना सह सम्बद्धमत्र व्रन्दतेः प्रयोगं भाष्यकारो दर्शयति निगमेन—

**"अव्रन्दत वीळिता" ॥**

(ऋ० सं० २-७-१-३)

**इत्यपि निगमो भवति ॥**

अपिपूर्वः, अप्ययं स्पष्टतर इति अपिशब्दः अत्र—

**वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्माणौ पूर्वेण संप्रयुज्येते ॥**

**संस्तम्भकर्माणौ** दृढीभावार्थौ **पूर्वेण** अनेनैव (अनन्तरेण) व्रन्दिना, यत् **सं**-गतौ प्रतिद्वन्द्विभावेन (समानवाक्यतामुपगतौ) **प्रयुज्येते** तस्मात् व्रन्दिशब्दस्य मृदुभावार्थत्वमुपपद्यते (तौ हि दृढीभावार्थौ) इति भावः ॥ तथाचायं निगमः—

"तद्देवानां देवतमाय कर्त्वमश्रथ्नन्दृह्ळाव्रदन्त वीळिता। उद्गा आजदभिनद्ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ॥"

गृत्समदस्येयमार्षं जगती। बार्हस्पत्ये सूक्ते शस्यते—**देवानाम्** इन्द्रादीनां मध्ये **देवतमाय** अतिशयेन दानादिगुणयुक्ताय। षष्ठ्यर्थे चतुर्थी। (पा० २-३-६२ वा०) ईदृशस्य बृहस्पतेः **तत् कर्त्वं** कर्तव्यं कर्म "कृत्यार्थे तवैकेन्केन्यत्वनः" (पा०

---

१. "वृजी वर्जने" (रु० प०) लट् ॥ निवर्जनमावर्जनम् (उत्क्षेपः) निक्षेपश्चाधोवर्षास्तत्र वोध्यः ॥

२. "निबर्हयती"ति वधकर्मसु (निघं० २-१९-३०) पाठात् ॥

३. "कृवि हिंसाकरणयोश्च" (भ्वा० प०) इदित्त्वान्नुम्। लेटि सिप्यडागमः। "धिन्विकृण्व्योरच"-(पा० ३-१-८०) ति उप्रत्ययो वकारस्याकारादेशश्च। तस्यातो लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः। गुणावादेशौ ॥

१. छान्दस एव। अत एवाम्रेडितान्तेषूपर्यादिषु सत्स्वित्ति वार्तिकार्थस्यात्र बाधः ॥

२. अनेन हि व्रन्दतेर्मृदूभावार्थता स्पष्टतरा भवतीति ॥

३-४-१४ ) इति लन्प्रत्ययः। यत् **दृह्ला** दृढानि मेघवृन्दानि असुरबलानि वा, **अश्रथ्नन्** "श्रन्थ विमोचनप्रतिहर्षणयोः" ( क्र्या० प० ) अस्य बलेन श्रथितानि ( विश्लिष्टानि ) अभूवन्। तथा **वीळिता** वीळितानि संस्तम्भितानि ( सन्नद्धानि दर्पितानि वा ) असुरकुलानि शेर्लोपः ( पा० ६-१-७० ) **अव्रदन्त** अत्रन्दन्त मृदून्यभवन् व्रन्दतेर्लङि नलोप आर्षः। अपिच स ( बृहस्पतिः ) बलेन ( असुरेण तदाख्येन ) अपहृताः **गाः** धेनूः। "आप" इति दुर्गमतम्। नैरुक्तपक्षेण **उदाजत्** "अज गतिक्षेपणयोः" ( भ्वा० प० ) लङ् देवान्प्रत्युदगमयत्। तथा **ब्रह्मणा** आत्मीयेन मन्त्रेण **वलं** सर्वस्यावरकमसुरम्। मेघमिति दुर्गः। **अभिनत्** मन्त्रसामर्थ्येनाभैत्सीत्। तदनन्तरं बलेनोत्पादितं **तमः** ध्वान्तम् **अगूहत्** "गुहू संवरणे" ( भ्वा० प० ) लङ्। गूढ(मदृश्य)मकरोत्। वैद्युतात्मनेति दुर्गः। तदनन्तरं **स्वः** आदित्यं **व्यचक्षयत्** तमसो निराकरणेन विशेषेण तत्स्थमदर्शयत्। चष्टिः पश्यतिकर्मा ॥ ३ ॥

अथ "निष्षपी" (५९) त्येतदनवगतमवगमयति—

## निष्षपी स्त्रीकामो भवति। विनिर्गतसपः।

अत्र **स्त्रीकामः** पुंश्चलोऽभिधेयः। **विनिर्गतसप** इत्येष शब्दसमाधिः। सपः शेप इत्यनर्थान्तरम्। तेनात्र बहुव्रीहिः षष्ठ्यर्थे। **निष्षपी**-ति कर्मधारयादपि मत्वर्थीय इनिः ( पा० ५-२-११५ ) आर्षः। निर्गतः सपो निष्षपस्सोऽस्यास्तीति निष्षपी। "नुम् विसर्जनीये"-( पा० ८-३-५८ )ति सपः सस्य षत्वे ष्टुत्वेन ( पा० ८-४-४१ ) पूर्वस्य ( निसः सस्य ) षः ॥ यद्वा सपति समवैति योन्या सङ्गच्छत इति सपः शेपः। पचाद्यच् ( पा० ३-१-१-३४ ) निर्गतो नित्योद्धृतः सपः शेपो यस्य स निष्षपः स्त्रीव्यसनी पुरुषः। स एव निष्षपी। वर्णव्यापत्त्या ईकारः पृषोदरादित्वात्। इति सायणः ॥

अथ सपसब्दं निर्ब्रवीति—

## सपः सपतेः स्पृशतिकर्मणः ॥

स्पृशत्यर्थे वर्तमानस्य "पुंसि संज्ञायां घः" ( पा० ३-३-११८ ) **सपः**। **सपतेः** "षप समवाये" ( भ्वा० प० ) इत्यस्य। समवायः सम्बन्धः स चेह स्पर्शरूपः। तेन हि स्त्रीभगः स्पृश्यते। वस्तुतस्तु-स्पर्शनात्र सुखातिशयो लक्ष्यते सपति स्पृशति सुखयतीति सपः ॥

अत्र निगममुदाहरति—

## "मा नो॑ म॒घेव॑ निष्ष॒पी परा॑दाः ॥"

( ऋ० सं० १-७-१८-५ )

## स यथा धनानि विनाशयति, मा नस्त्वं तथा परादाः ॥

**मा न इति**। अस्य "प्रति यत् स्या नीथादर्शि दस्योरोको नाच्छासदनं जानती गात्। अध स्मानो मघवञ्चर्कृतादिन्" इत्यादिः। कुत्सस्येयमार्षं त्रिष्टुप् ऐन्द्री। **हे मघवन्** इन्द्र! **यत्** यस्मात् **स्या** सा **नीथा** स्तुतिः "णीञ् प्रापणे" ( भ्वा० उ० ) "हनिकुषी"-( उ० २-२ )-त्यादिना क्थन् करणे। नीयतेऽभिप्रेतोऽर्थोऽनया स्तव्यं प्रतीति ॥ "नीथा विदो जरितारः" ( ऋ० सं० ३-१-११-५ ) इति निगमात्। "जरितारः स्तोतारः" इति तद्भाष्यम् ॥ **दस्योः** शत्रूणामुपक्षपयितुस्तव "दसु उपक्षये" ( दि० प० ) "जनिमनिदसिभ्यो युः" ( उ० ३-२० ) इति युप्रत्ययः। **ओकोन** निवासस्थानमिव "हृदयम्" इति शेषः। **अच्छा** अच्छ आभिमुख्येन "निपातस्य चे"-( पा० ६-३-१३६ )ति दीर्घः। "अनुप्रविश्य" इति शेषः। **सदनं** स्थानमेतन्ममेति **जानती**। **गात्** अगात्। नित्यकालमेव गच्छति। एतेर्लुङि "इणो गा लुङि"-( पा० २-४-४५ ) ति गादेशे "गातिस्थे" ( पा० २-४-७७ )ति सिचो लुकि "बहुलं छन्दस्यमाङ्योगेऽपी"-( पा० ६-४-७५ )-त्यडभावः। इति अस्माभिः **प्रत्यदर्शि** दृष्टम्। भवद्भूतार्थे-( व्यंसैषः स्तोता मामधुनाभिमतगुणेन स्तूयात्साधु स्यादिति तमेत-) मनुप्रविश्येव भवतो हृदयं तेनात्मानमभिसम्बध्यैतन्मम सदनमित्यभिमत्य तत्रगच्छतीति तथाविधाः स्तोतारो वयमतो ब्रूमः **चर्कृतात्** पुनः पुनः क्रियमाणात् कर्मणः। आत्मनः सुखाश्रयभूतात् **नः** अस्मान् **मा परादाः** पराङ्मुखान्मा दधीथाः। येन वयं विनाशमुपैम तथा मा कार्षीरित्यर्थः। अत्र दृष्टान्तः—**मघेव निष्षपी** निष्षपी पुंश्चलः स्त्रीकामो लंपटः स यथा मघा मघानि धनानि ( निघं० २-१०-१ ) विनाशयति तद्वत्। "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः ॥ ५ ॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च धननामसम्बन्धा "निष्षपी" निर्गतपसः स्त्रीकामो लंपट इत्युपपद्यते ॥ **स यथे**-त्यादि मन्त्रभाष्यम् ॥

१. पर्वतादीनि-इति सायणः।

२. दृढीकृतानि वृक्षादीनि-इति सायणः॥

३. स्तूयमान इति दुर्गस्तथा च शेषपूरणेन बृहस्पतेरेतद्विशेषणम्॥

४. अत्र "विनिर्गतपसा" इत्यसुवन्तवर्णविपर्ययेण दुर्गः पपाठ। तत्र मूलं स्कन्दस्वामिभाष्यमिति देवराजः। सपः शेप इत्यनर्थान्तरं तन्मते परं स ( शेपः ) शेतेःपे -ऽयं च स्पृशतेरित्यर्थभेदो दुर्निवारस्तथाचासद्भूतपाठ एवान्यत्रापि मुद्रितपुस्तक उपलभ्यमानः साधीयानिति सायणोऽप्याह ॥

५. "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर" इति हि व्याकृतिविदां राद्धान्तः। अत एव कृष्णसर्पवान्वल्मीक इति न भवतीति शब्दरत्नादौ व्यक्तम् ॥

१. अत्र विभजतीति पाठः सायणेन धृतः ॥ अस्थाने परित्यजतीति तदर्थमाह। तथास्मान्मा पर्यत्याक्षीरित्युपमार्थम् ॥

२. करोतेर्यङ्लुगन्तात्कः ॥

३. धनभूतास्तव वयमिति रक्षस्वास्मान्मावसादयिष्ठा इति मात्रं दुर्ग आह। अत्र "डुदाञ् दाने" ( जु० उ० ) "गातिस्थे"ति ( पा० २-४-७७ ) सिचो लुकि "बहुलं छन्दस्यमाङ्योगेपी"-( पा० ६-४-७५ )-त्यडभावः ॥

**तूर्णाशमुदकं भवति तूर्णमश्नुते ॥**
**"तूर्णाशं न गिरेरधि" ॥**

( ऋ० सं० ६-३-१-४ )

**इत्यपि निगमो भवति ॥**

अथ **तूर्णाशम्** (६०) इत्यनवगतम् । **उदकं भवती**त्यभिधेयवचनम् । तद्धि **तूर्णम्** क्षिप्रम् **अश्नुते** व्याप्नोति, "अशू व्याप्तौ" (स्वा० आ०) "कर्मण्यण्" (पा० ३-२-१) "क्रियाविशेषणानां कर्मत्वं नपुंसकत्व"मिति नियमात्[1] । अत्र निगमः **तूर्णा० रधीति** । "प्रतिश्रुताय वो धृषत्तूर्णाशं न गिरेरधि । हुवे सुशिप्रमूतये" इतीयं मेधातिथेरार्षम् गायत्री ऐन्द्री । रात्रिपर्याये शस्यते-मैत्रावरुणस्य प्रथमे शस्त्रे विनियुक्ता । हे ऋत्विग्यजमानाः ! **प्रतिश्रुताय** यन्मयार्त्विज्यमुपगच्छता प्रतिश्रुतम् "अहमिन्द्रं स्तुतिभिराह्वयिष्यामी"ति, तस्मै (तत्पालनाय) **वः** युष्माकमर्थे एतस्मिन्प्रस्तुते कर्मणि **सुशिप्रं** सुहनुं सुनसं वा[2] इन्द्रमहम् **ऊतये** तर्पणाय भवतामात्मनश्च, रक्षणाय वा **धृषत्** धृष्टं प्रगल्भं यथा स्यात्तथा **हुवे** आह्वये ॥ अत्र दृष्टान्तः-**तूर्णाशंनेति** यथा तूर्णाशमुदकम् **गिरेः** पर्वतस्य मेघस्य वा ( निघं० १-१०-१० ) **अधि** उपरि वर्तमानमाह्वयन्ति वर्षार्थिनस्तद्वत् ॥ ४ ॥

एवमत्र गिरिसम्बन्धा"तूर्णाशम्" उदकमित्युपपद्यते ॥

**क्षुम्पमहिच्छत्रकं भवति, यत् क्षुभ्यते ४ (१६)**

अथ **क्षुम्पम्** (६१) इत्येतदनवगतम् । **अहिच्छत्रकं भवती**त्यभिधेयवचनम् । **यत्** यस्मात् स्पृष्टमात्रं तत् **क्षुभ्यते** शीर्यते । "क्षुभ सञ्चलने" (दि० प०) "शकिलिङ् चे"-(पा० ३-३-१७२) ति शक्यार्थे ण्यति क्षोभ्यमिति प्राप्ते औकारस्य ह्रस्वत्वम् भकारस्य पकारो यकारलोपश्च, उपजनश्च मकारस्य पृषोदरादित्वात् ॥ अयत्नेनैव क्षोभयितुं शक्यम् । अथवा कर्मणि घञि बहुलग्रहणाद्धातोर्गुणाभावो नुमागमश्च वर्णव्यापत्त्या भकारस्य पकारः पृषोदरादित्वात् । अहिच्छत्रकमुच्यते । "क्षुम्पं क्षोभणमिति न्याय्यम्" इति दुर्गः ॥ ४ ॥ (१६)

१. अत्र फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वं स्तोकं पचतीति वदित्येव मूलम् । नपुंसकं तु लिङ्गसामान्ये "सामान्ये नपुंसकम्" (पा० २-४-१७ वा०) इति वचनात् ॥ देवराजस्तु अश्नुत इत्यशं पचाद्यच् (पा० ३-१-१३४) तूर्णञ्च तदशञ्चेति कर्मधारयमाह ॥ तूर्णाशनमिति प्राप्तमिति दुर्ग आह । अस्यानवगतत्वे हेतुरुदकनामसु निघण्टावपाठ एव ॥

२. तथाच वक्ष्यते "क्षिप्रे हनू नासिके वा" (नि० ६-१७-२) इति ।

३. अवतेस्तृप्त्यर्थस्य निपातः (पा० ३-३-९७) रक्षणार्थस्य वा ॥

४. यद्भोमयोपरि छत्राकारमुत्पद्यते तत् ॥

उक्तार्थे निगममुदाहरति—

**"कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।**
**कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥"**

( ऋ० सं० १-६-६-३ )

**कदेति** ॥ गौतमस्यार्षम् । उष्णिगैन्द्री । तार्तीयसवनिकेषु उक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । **इन्द्रः कदा** कस्मिन्काले **अराधसम्** हविर्लक्षणेन राधसा धनेन (निघं० २-१०-१७) रहितम् । अयष्टारम् स्तुत्या हविषा वा अनाराधयन्तमिति परमार्थः । **मर्तम्** मनुष्यम् (निघं० २-३-१३) **पदा** पादेन **क्षुम्पमिव** अहिच्छत्रकम् इव । **स्फुरत्** अवस्फुरिष्यति अभिहिंसिष्यति । स्फुरति स्फुलतीति वधकर्मसु पठितम् । (निघं० २-१९-१५) "छन्दसि लुङ्लङ्लिटः" (पा० ३-४-६) इति लृडर्थे लङ् । "बहुलं छन्दस्यमाङ्योगेऽपी"-(पा० ६-४-७५) त्यडभावः । **कदा च नः** अस्माकम् परिचरितॄणां **गिरः** स्तुतिलक्षणा वाचः **अङ्ग** क्षिप्रम् **शुश्रुवत्** श्रोष्यति ? । "श्रु श्रवणे" (भ्वा० प०) लेट्यडागमः "बहुलं छन्दसी"-(पा० २-४-७६)-ति शपः श्लुः ॥ श्रुत्वा च समर्द्धयिष्यत्याशिषः । अनाराधयितॄंश्च पदा पादेन हनिष्यति ? अनाराधयित्राराधयित्रोर्विशेषं कदा ज्ञास्यतीति भावः ॥ ३ ॥

अथास्य भाष्यम्—

**कदामर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदानः शृणोति च गिर इन्द्रो अङ्ग । अङ्गेति क्षिप्रनामाञ्चितमेवाङ्कितं भवति ॥**

**शृणोतीति** । "विभाषा कदाकर्ह्योः" (पा० ३-३-५) इति भविष्यति लट् । अत्रावस्फुरसीति पाठः प्रत्यक्षकृतः शृणोतिना परोक्षकृतेन दुर्योज्य इति क्वचिन्मुद्रितपुस्तके सन्नप्युपेक्षितः सायणेनापि ॥ **अङ्गे**त्यव्ययम् । अञ्चतेर्गतिकर्मणोऽचि घञि वा लोके । वेदेत्वञ्चतेरङ्कतेर्वा गतिकर्मण एवात्र निर्दिष्टम् । यद्धि **क्षिप्रं** तत् **अञ्चितमङ्कितं वा भवति** उत्तरक्रियासु ॥

**निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति ॥ ५ ॥ (१७)**

अथ **निचुम्पुणः** (६२) इत्यनवगतमनेकार्थश्च **सोम** इत्यभिधेयवचनम् । **निचान्तपृण** इति शब्दसमाधिः । स हि **निचमनेन** नितरां भक्षणेन **प्रीणाति** तर्पयति भक्षितारम्[1] । "चमु अदने" (भ्वा० प०) तथाचात्र "प्रीणातेः" (क्र्या० पु०) वीणादिवण्णगन्तो निपातः ॥ चमेरुपधाया उत्वं प्रीणातेः पुम्भावश्च ॥ साधनान्तराण्यर्थान्तरेष्वग्रे यथावसरं वक्ष्यन्ते ॥ ४ ॥ (१७)

१. निचान्तो भक्षितः सन्पृणः प्रीणयितेति तदर्थः ॥

अत्र निगममुदाहरति—

**"पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये । अपां जग्मिर्निचुम्पुणः ॥"**

( ऋ० सं० ६–६–२५–२ )

**पत्नीवन्त इति** । कक्षस्याङ्गिरस आर्षमैन्द्री गायत्री । रात्रिपर्यायेषु मध्यमे पर्याये होतुः शस्त्रे विनियुक्ता । **पत्नीवन्तः** सोमसेकार्थे पत्न्यः पालयित्र्य आपो वासतीवर्यः एकधनाश्च तद्वन्तः **सुताः** अस्माभिरभिषुता **इमे** गृहस्थाश्रमसस्थाश्च सोमाः **वीतये** आत्मनः भक्षणार्थं (पानार्थ–) **उशन्तः** कामयमाना इव सन्तो **यन्ति** गच्छन्ति देवान् प्रति । किञ्चैष **निचुम्पुणः** निचान्तपूर्णऋजीषरूपः सोमः **अपां जग्मिः** अपः प्रतिगमनशीलः । "नलोके"–( पा० २–३–६९ )ति षष्ठीनिषेधाभावश्छान्दसः । यद्वा अपां मध्यं प्रतिजग्मिर्गमनशीलः साधुगन्ता वा "भविष्यती"ति शेषः । "ऋजीषमप्सु प्रास्यन्ती"ति वचनादप्सु ऋजीषः प्रक्षिप्यते । सोऽपि देवान्प्रत्येव गच्छतीति दुर्गमतम् ॥ २ ॥

अथास्य भाष्यम्—

**पत्नीवन्तः सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये पानायापां गन्ता निचुम्पुणः ॥**

**अद्भिरिति** 'सहार्थे तृतीया' ( पा० २–३–१९ ) तथाच तत्सहिता इति **पत्नीवन्त** इत्यस्यार्थः । **कामयमाना** इत्युशन्त इत्यस्य । गतमन्यत् ॥

**समुद्रोऽपि निचुम्पुणः । निचमनेन पूर्यते ॥**

**निचमनेन** उदकेन । नियमेन चम्यत इति व्युत्पत्तेः । कर्मणि ल्युट् ( पा० ३–३–११३ ) अत्र पिपर्तेः पूरणार्थात्कर्मणि णक् धातोः पुभावश्च । मृग्योऽत्र निगमः ॥

**अवभृथोऽपि निचुम्पुण उच्यते । नीचैरस्मिन्क्वणन्ति, नीचैर्दधतीति वा ॥**

**अवभृथः** दीक्षान्तकर्म **नीचै०० णन्ति** नीचैःशब्दे नात्र कर्म कुर्वन्ति । तत्र उक्तम् "अवभृथेष्ट्योपांश्वेव चरन्ती"–ति । अथवा **नीचैरस्मिन्** यज्ञपात्राणि **दधतीति निचुम्पुण उच्यते** ॥ तानि हि तत्राप्सु निधीयन्ते ॥ तथाचात्र नीचैःशब्दस्य निचुंभावः । शब्दार्थस्य क्वणतेर्दधातेर्वा धारणर्थस्य पुण इति च निपात्यते "वीणास्थूणव्रणभ्रूणक्षूणत्राणतृकघृणादय" इति भोजवार्तिकेन ॥

अत्र निगममुदाहरति—

**"अवभृथ निचुम्पुण"** ( य० वा० सं० ३–४८ )

**इत्यपि निगमो भवति ॥**

**अवेति** । अस्य "निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि" इति शेषः ॥ इदं यज्ञदैवतं यजुः । वरुणप्रधानकर्मणोऽन्ते तदङ्गभूतं यदवभृथाख्यं कर्म जलसमीपे क्रियतेऽत्रानेन मन्त्रेण दम्पतीभ्यां स्नानं कर्तव्यम् । हे **अवभृथ** ! यज्ञ ! अवाचीनानि सोमपात्राणि जलमध्ये भ्रियन्ते ( ध्रियन्ते ) अस्मिन्यज्ञविशेषे सोऽवभृथस्तत्संबोधनम् । हे **निचुम्पुण** ! नीचैः क्वणन ! यद्यपि त्वं **निचेरुः** नितरां गमनशीलः **असि** भवसि, तथापि त्वं **निचुम्पुणः** नितरां मन्दगमनो भव । यतस्त्वां प्राप्यैवाहम् **देवैः** द्योतनात्मकैरिन्द्रियैः ( तद्वारकं ) **देवकृतम्** देवेषु हविःस्वामिषु कृतम् **एनः** पापम् **अवयासिषम्** अवनीतवानस्मि, अस्मिञ्जले । तथा **मर्त्यैः** मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिः **मर्त्यकृतम्** मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदपि **अव** अवयासिषमवनीतवानस्मि । किञ्च हे **देव** ! अवभृथाख्य यज्ञ ! वरुण ! वा, **पुरुराव्णः** बहुकर्मोपभोगसन्तापान्दातुः संसारलक्षणात् **रिषः** बन्धात् । "रिष् हिंसायाम्" ( दि० प० ) क्विप् । **पाहि** रक्ष ॥ ४८ ॥

**निचुम्पुण निचुङ्कुणेति च ॥**

अत्र **निचुङ्कुणेति** प्रातिपदिकनिर्देशः समानावगमप्रदर्शनार्थः । **निचुङ्कुणोऽप्यनेनैव** व्याख्यात इत्यर्थः ॥

**पदिर्गन्तुर्भवति, यत्पद्यते ॥ ६ ॥ (१८)**

अथ **पदिः** (६३) इत्येतदनवगतम् । **गन्तुरिति** तुन्नन्तः गत्यर्थसाधननिर्देशाय । तथाच गमनशीलः स **भवति** पक्ष्याख्यस्तदाह–**यत्पद्यते** इति । आकाशे ह्यसौ नित्यकाल-

१. कथं नाम देवा अस्मान्पिबेयुरित्येवमर्थम् "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" ( अ० प० ) क्तिन् भावे । भक्षणमिह पाने पर्यवस्यति ॥

२. रसरूपस्याप्सु प्रक्षेपासम्भवात् । ऋजीषः सोमकल्कः "सीठ" इति प्रसिद्धः ॥

३. स हि ( निचुम्पुणः ) अपां वीर्येण सहितस्तासु तासु क्रियासु प्रदीयमानोऽस्माभिर्देवान्प्रति जग्मिर्गन्तैव भविष्यतीत्येवं हि तद्व्याख्यानम् ॥

४. प्रधानकर्मसमाप्तौ क्रियमाणो यो यज्ञ इष्टिविशेषः वरुणप्रघासस्य कर्मणोऽन्ते तदङ्गभूत इति महीधरः । सोऽवभृथः स्नानरूपः । तथाचामरः "दीक्षान्तोऽवभृथो यज्ञ" इति ॥

१. अत्रोवटः "उपांश्ववभृथेष्ट्या चरन्तीति श्रुति"रित्याह ॥

२. नितरां चोपति मन्दगमनो भवतीति व्युत्पत्तेः । "चुप मन्दायां गतौ" ( भ्वा० प० ) उणन् प्रत्ययो धातोर्मुमागमश्च ॥

३. अत्रोपसर्गबलेन योग्यक्रियाध्याहारो देहलीदीपन्यायेन वोभयत्रान्वेति ॥

४. रा दाने वनिप् ( पा० ३–२–७४ ) यद्वा पुरु बहु रुवन्ति शब्दं कुर्वन्ति प्राणिनः संसार्यमाणा अस्मिन्स पुरुरावा, अनणन्तस्तस्मात् ॥

मेव पद्यते इति "पद गतौ" ( दि० आ० ) इन् ( उ० ४–११४ ) ॥ ६ ॥ (१८)

अत्र निगममुदाहरति—

**सुगुरसत् सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति । यस्त्वा यन्तं वसुना प्रातरित्वो-मुक्षीजयेव पदिमुत्सिनाति ॥**

( ऋ० सं० २–१–१०–२ )

**सुगुरिति** ॥ कक्षीवत आर्षं त्रिष्टुब्दानदैवत्यम् । कक्षीवतः पिता स्वनयाद्राज्ञो गृहीतधनमागतं सुतमालोक्य तं राजानं बहुप्रकारेणाशास्ते–असौ स्वनयो राजा **सुगुः** शोभना गावो यस्य स **असत्** अस्तु शोभनैर्बहुभिर्गोभिस्तद्वान् भवेत्तु । तथा **सुहिरण्यः** सुष्ठुत–हित–रमणीयैर्धनैस्तद्वान् भवतु । एवं **स्वश्वः** शोभनाश्वः । **अस्मै** प्रदात्रे राज्ञे, **इन्द्रः** परमेश्वरो धर्मदेवता **बृहत्** महत् ( प्रभूतं ) **वयः** अन्नम् ( निघं० २–७–७ ) आयुर्वा **दधाति** दधातु ददातु । योऽयं राजा **अस्मै** मत्सुताय गोहिरण्याश्वादीनि बहुसंख्याकानि दत्तवान् अतस्तेषामभिवृद्धिप्रार्थनोचितैव । कस्येयमाशीरिति स उच्यते–हे **प्रातरित्वः**! प्रातरागामिन्नतिथे! पुत्र! । प्रातरुपपदादेतेः क्वनिप् ( पा० ३–२–७५ ) तुक् ( पा० ६–१–७१ ) "नेड्वशि कृति"–( पा० ७–२–८ ) इतीडभावः । रुत्वं छान्दसम् ॥ **यः** राजा **आयन्तं** गुरुकुलादागच्छन्तं **त्वा** त्वाम् **वसुना** अन्नसाधनेन गवादिधनेन **उत्सिनाति** भूते लट् उत्कृष्टं यथा स्यात्तथा गमनतः प्रत्यवध्नात् । रात्राविहागमनं न्यरौत्सीत् । स हि गुरुकुलात्समाप्तविद्यः पैतृकं गृहं प्रत्यागच्छन्पूर्वेऽह्नि तद्गृहे तेन दित्सया निरुद्धगतिरुषितवान् ॥ अत्र दृष्टान्तः **मुक्षीजयेव पदिम्** इति । यथा कुमारः मुक्षीजया पाशयया पदिं नित्यपदितारं ( गन्तारं ) पक्षिणम् उद्भ्रम्य सिनाति बध्नाति तद्वत् मयाऽननुज्ञातं सपद्यागच्छन्तमपि त्वां बहुदानेन न्यरौत्सीदवासयच्च स्वे गृहे गतेऽह्नि । इति भावः ॥ २ ॥

अथास्य भाष्यम्—

**सुगुर्भवति सुहिरण्यः स्वश्वो महच्चास्मै वय इन्द्रो दधाति । यस्त्वायन्तमन्नेन प्रातरागामिन्नतिथे! मुक्षीजयेव पदिमुत्सिनाति कुमारः ॥**

१. "या तेनोच्यते सा देवते–"ति परिभाषणात् ॥

२. "लेटोऽडाटौ" ( पा० ३–४–९४ ) इति लेटोऽडागमः । "इतश्च लोपः" ( पा० ३–४–९७ ) एतच्च–यथा सायणाभिमतं व्याख्यातं भाष्यस्वरसस्तु भवतीत्येव । वयःशब्देन वसुशब्देन चान्नमेवाभिधीयते । यः प्रातरित्वानमतिथिमन्नेन ( प्रातरासेन ) सत्करोति स एवं भवतीति तद्भावं दुर्गं आह ॥

३. गवादीनाम् ॥

४. मुच्यमाना सती बन्धनं जयतीति मुक्षीजा मृगपक्ष्यादिबन्धनरज्जुस्तयेति सायणः ॥

निगदव्याख्यमेतत् । अथ मुक्षीजापदं बहुधा निर्वक्ति—

**मुक्षीजा–मोचनाच्च सयनाच्च तननाच्च ॥**

**मोचनाच्च** सान्त्वमुच्यते पक्षिणः पादे । **सयनाच्च** सीयते बध्यते हि तया पक्षी । **तननाच्च** सा हि पक्षिणो वधार्थं तन्यते । एताभ्यः क्रियाभ्यो यथासम्भवम् **मुक्षीजा** इत्येतदभिधानं भवति । तत्र तन्यतेरिज्भावः । सर्वोऽप्ययं पृषोदरादित्वात्साधुः ॥

**पादुः पद्यतेः ॥**

अथ **पादुः** (६४) इत्येतदनवगतम् । **पद्यते**रित्यर्थ-प्रतीतिः । "पद गतौ" ( दि० आ० ) "छन्दसीणः" ( उ० १–२ ) इति बाहुलकादुण् वृद्धिः । पदनं पादुर्गमनमित्यनर्थान्तरम् ॥

अथास्य निगममुदाहरति—

**"आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥ ४ ॥"**

**आविष्कुरुते भासमादित्यो गूहते बुसम् ॥**

( ऋ० सं० ७–७–१९ )

**आविरिति** । अस्य "सा ते जीवातुरुत तस्य विद्धि मास्मैतादृगपगूहः समर्ये" इत्यादिः ॥ वसुक्रस्येन्द्रपुत्रस्येयमार्षं त्रिष्टुबैन्द्री ॥ महाव्रते मरुत्वतीये शस्यते । अत्रान्तरात्मनेन्द्रः स्तूयते । हे अन्तरात्मन्! **ते** तव **सा** तादृशी आदित्यात्मिका देवता **जीवातुः** जीवनहेतुः जीवेरातुः । "जीवातुर्जीवनौषध"मित्यमरः । या तापप्रकाशवृष्ट्युदयास्तमयरसादानादिलक्षणया प्रवृत्त्या त्वामुपजीवयति । **उत** अपि च **तस्य** भगवत आदित्यस्य तमुपकारं **विद्धि** जानीहि । यन्मयास्य स्तुतिहविर्दानादिलक्षणः प्रत्युपकारः कर्तव्य इत्येतदपि विजानीहि ॥ **समर्ये** सङ्ग्रामे ( निघ० २–१७–२३ ) एतस्मिन्मृत्युना सह वर्तमाने सर्वभूतानाम् । अद्य श्वो वा को वा कदा वा म्रियेत इति को हि वेदात्र । **एतादृक्** एतादृशमुपकारमस्य **मास्मापगूहः** संवृतं माकार्षीः । प्रत्युपकारायास्मै त्वमभ्युद्यच्छस्वेति भावः । किञ्च **निर्णिजः** उपनिर्णेजयितुः ( सर्वस्य शोधयितुः ) **अस्य** आदित्यस्य **पादुः** गमनमवभासनेन चरणदानादि कर्म, निवेदनाच्छद्मेण वा **न मुच्यते** नोपरम्यते । किन्तु अयं **स्वः** आदित्यः **आविष्कुरुते** प्रकाशी-

१. इन्द्रो ह्यन्तरात्मा पुरुषस्तस्यैतल्लिङ्गमनुमापकं यदिन्द्रियन्नाम, पाणिनिरपि "इन्द्रियमिन्द्रलिङ्ग" मित्यादि लक्षणमसूत्रयत् ( ५–२–९३ ) । व्याख्यातं च इन्द्र आत्मा तस्य लिङ्गमिन्द्रियं, करणेन कर्तुरनुमानादिति ( सि० कौ० ) ॥

२. "उताप्यर्थविकल्पयो"–रित्यमरः ॥

३. तमःपङ्कदिग्धानि जगन्ति स्वेन प्रकाशोदकेन निर्णिक्तानि धौतानीव करोतीति निर्णिक् सूर्यः । तस्य ॥

४. शोभनमरणं गमनमस्य सः । विच् ( पा० ३–२–७५ ) ॥

करोति स्वभासा सर्वमिदं जगत् । तेनैवोपभासितमिदं व्यवहाराय कल्पत इत्यर्थः । **बुसम्** उदकं च ( निघं० १-१२-२० ) स एव **गूहते** संवृणोति रश्मिभिः "गुहू संवरणे" ( भ्वा० पु० ) लट् ॥ ४ ॥

**आविष्कुरुते** । इत्यादि भाष्यं स्पष्टार्थम् ॥

अथ बुसं व्याचष्टे—

**बुसमित्युदकनाम, ब्रवीतेः शब्दकर्मणः । भ्रंसतेर्वा । यद्वर्षन्पातयत्युदकं, रश्मिभिस्तत्प्रत्यादत्ते ॥ ७ ॥ (१९)**

**इति श्रीयास्कमुनिप्र० नि० शास्त्रे नैग. का. पञ्चमाध्यायस्य तृ० पादः ॥ ५ ॥ ३ ॥**

**शब्दकर्मणः** शब्दार्थस्य ( अ० प० ) सप्रत्यये धातोर्ब्वादेशो बाहुलकात् । तद्धि शब्दवद्भवति । **भ्रंसतेर्वा** । अधःपतनार्थस्य ( भ्वा० आ० ) पचाद्यचि ( पा० ३-१-१३४ ) पृषोदरादिः । तद्धि भ्रस्यते मेघात् । **यत् उदकम्** । **वर्षन्न**न्तरिक्षात्पातयत्यादित्यः । **तत् रश्मिभिः प्रत्यादत्ते** इति समासतोऽयमर्धर्चो व्याख्यातो भाष्यकारेण ॥ ७ ॥ (१९)

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ नैग० काण्डे पञ्चमाध्यायस्य तृतीयः पादः ॥ ५ ॥ ३ ॥

---

## अथ पञ्चमाध्यायस्य चतुर्थः पादः ॥

**वृकश्चन्द्रमा भवति, विवृतज्योतिष्को वा, विकृतज्योतिष्को वा, विक्रान्तज्योतिष्को वा ॥ १ ॥ (२०)**

अथ **वृकः** (६५) इत्येतदनवगतमनेकार्थं च । तत्र तावत् **चन्द्रमाः** वृकः । स हि **विवृतज्योतिष्कः** प्रकाशितज्योतिष्कः । **भवति** । **अथ वा विकृतज्योतिष्कः** । तद्धि तस्य विकृतं ज्योतिः, शीतत्वात् ह्रासवृद्धिभ्यां च । इतराणि तूष्णानि ज्योतींषि सूर्यादीनाम् शोभनानि एतदपेक्षया । **अथवा विक्रान्तज्योतिष्को** वृकः । तस्य हि विक्रान्तं ( दिगन्तरगमनात् सर्वतोविसारि ) ज्योतिः, इतरेभ्यो ग्रहनक्षत्रतारकादिभ्यो ज्योतिर्भ्यः सकाशात् । एते च शब्दसमाधयोऽस्य ( वृकशब्दस्य ) तथाच व्युपसर्गार्थविशिष्टाद्वृणोतेः ( स्वा० उ० ) "सृवृभूशुषिमुषिभ्यः कक्" ( उ० ३-४१ ) इति कक् प्रत्ययः । विवृत-( स्पष्ट-) ज्योतिष्कत्वाद्विवृतः सन्वृक इत्युच्यते । नहि नक्षत्राणामिवाव्यक्तमस्य ज्योतिः । एवं विकृत-विक्रान्तशब्दयोर्वृकभावः पृषोदरादित्वात् । ज्योतिःशब्दलोपश्च "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः" ( पा० ५-३-८३ वा० ) इति वचनात् ॥ सर्वत्रात्र बहुव्रीहिलक्षणः कः ( पा० ५-४-१५४ ) समासान्तः । "इदुदुपधस्य चाप्रत्ययस्य" ( पा० ८-३-४१ ) इति विसर्जनीयस्य षः ॥ १ ॥ (२०)

अत्र निगममुदाहरति—

**"अरुणो मासकृद्वृकः पथा यन्तं ददर्श हि । उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तं मे अस्य रोदसी ॥ ३ ॥"**

( ऋ० सं० १-७-२३ )

**अरुण इति** । अपां पुत्रस्य त्रितस्य कूपे पतितस्य कुत्सस्य वार्षम् । पङ्क्तिः वैश्वदेवी । **अरुणः** आरोचनः ( आभिमुख्येन सर्वस्य जगतो रोचयिता स्वया ज्योत्स्नया ) **मासकृत्** मासानामर्धमासानां च कर्ता चन्द्रमाः **वृकः** । स हि नक्षत्रमण्डलस्याधोऽवस्थितः । **पथा** खेन २ मार्गेण **यन्तं** गच्छन्तम् । एतेः शतरि रूपम् "इणो यण्" ( पा० ६-४-८१ ) नक्षत्रगणम् **ददर्श** पश्यति । "छन्दसि लुङ्लङ्लिटः" ( पा० ३-४-६ ) इति वर्तमाने लिट् । **हि** अवधारणे, नक्षत्रगणमेव पश्यति न मामयमन्धकूपे पतितं पश्यति । यदिनाम स पश्येत्कदाचिदवश्यमस्यात्रायेतापदो मामिति भावः । **निचाय्य** दृष्ट्वा च नक्षत्रगणम् **उज्जिहीते** अभिजिहीते । येन येन नक्षत्रेण योक्ष्यमाणः ( अमुना मयाद्य योक्तव्य इति कृताभिसन्धिर्भवति ) तं तमेवाभिलक्ष्य जिहीते उत्पतति । तेनैव सहोदेति नान्येनेति स मां कथंकारं पश्येदित्यर्थः ।

---

१. आदत्ते ॥

२. "बुस उत्सर्गे" ( दि० प० ) इत्यस्मादिगुपधलक्षणे ( पा० ३-१-१३५ ) के बाहुलकात्कर्मणि । विपूर्वाद्वसतेर्वा ( भ्वं० प० ) "आतश्चोपसर्गे" ( पा० ३-३-१०६ ) इति करणे बाहुलकात्के उपसर्गेकारस्योकारो वत्वं च धातोर्नस्य लोपः । इत्येष तु साधीयान्साधुत्वप्रकारो देवराजेन धृतः ॥

१. त्रितस्याप्यत्वं तैत्तिरीयाः स्पष्टमामनन्ति—"तत एकतोऽजायत स द्वितीयमभ्यपातयत्, ततो द्वितोऽजायत स तृतीयमभ्यपातयत्, ततस्त्रितोऽजायत । यदद्भ्योऽजायन्त तदाप्यानामाप्यत्वमिति" ( तै० ब्रा० ३-२-८ ) ॥

२. आकाशमार्गेण ॥

३. एतेनानादरो व्यज्यते ॥

४. "चायृ पूजानिशामनयोः" ( भ्वा० उ० ) निशामनं चाक्षुषज्ञानमिति माधवः । निपूर्वादस्मात् क्त्वो ल्यप् ( पा० ७-१-३७ ) ॥

५. अत्रो"हाङ् गता"विति जौहोत्यादिकस्य "भृञामित्" ( पा० ७-४-७६ ) इति श्नावभ्यासस्येत्वे जिहीत इति भवति । अत्रोच्छन्दार्थे धात्वर्थेऽन्तर्भाव्योदित्यस्याभ्यर्थकत्वं भाष्यकृदभिप्रैति तदनुसारेणार्थे उट्टङ्कितः । तथाच जिहीत इत्यस्य उद्गच्छतीत्यर्थः ।

अत्र दृष्टान्तः **आततेव पृष्ठ्यामयी** यथाऽऽतष्टा वर्धकिः पृष्ठ्यामयी तक्षणजनितपृष्ठक्लेशः । तदपनोदनायोर्ध्वाभिमुखो भवन्नधो न पश्यत्येवमयमधोवर्तमानमपि मां न पश्यति । अतो हे **रोदसी !** द्यावापृथिव्यौ ( तदधिष्ठातृदेवते ) **अस्य** एवंभूतस्य ( कूपे पतितस्य ) **मे** मम दुःखं **वित्तं** विजानीतं युवाम् । विदित्वा चोत्तारयतं मामस्मात्कूपादिति भावः ॥ ३ ॥

अथास्य भाष्यम्—

**अरुण आरोचनो, मासकृन्मासानां चार्धमासानां च कर्ता भवति चन्द्रमा वृकः । यथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी । जानीतं मे अस्य द्यावापृथिव्याविति ॥**

**मासानाम्** इति मासशब्दसम्बन्धाद् **र्धमास**शब्दोऽध्याहृतो भाष्यकारेण । तानपि ह्यसौ निर्मिमीत इति । उपलक्षणमेतदृत्वयनसंवत्सरादीनां कालविशेषाणाम् **कर्ता** तिथिविभागज्ञानस्य चन्द्रगत्यधीनत्वात् । **नक्षत्रगणम्** । इति चन्द्रमः-शब्दाभिनिवेशादध्याहृतम् । तथार्थोपपत्त्यविरोधाय । **तक्ष्णुवन्** इत्यस्य "वृक्षमि"ति शेषः । स हि उच्छेदनासदे वयं नियोज्या न वा ? इत्यनेनाभिसन्धिनोत्कटो भूत्वा निचाययति पश्यति एवं चन्द्रमा अप्युज्जिहीते । **द्यावापृथिव्यौ** । द्यौश्च पृथिवी चेति देवताद्वन्द्वे "दिवसश्च पृथिव्याम्" ( पा० ६-३-३० ) इति दिव्शब्दस्य द्यावादेशः । चादत्र "दिवो द्यावे" ( पा० ६-३-२९ ) ति समुच्चीयते ॥ अत्र ( मन्त्रे ) **मासकृत्** इति पदं मा-सकृदिति शाकल्यश्चिच्छेद—तन्मतेऽयमर्थः— दक्षप्रजापतेर्दुहितृभूताः स्वभार्या अश्विन्याद्यास्तारकाः पुनः पुनर्ददर्श, मां सकृदेव पश्यतीति, सकृद्दृष्ट्वा च उज्जिहीते ताराभिः सहोर्ध्वमेव गच्छति न मां कूपादुत्तारयति अत इदमनुचितमस्य हे द्यावापृथिव्यौ ! युवां जानीतं मांचोत्तारयतमस्मादिति । दुर्गस्तु—सकृन्मां ददर्श चन्द्रमाः । यदि पुनः पुनः पश्येदवश्यं मोचयेदस्मा आपदः । यथा तु यन्तं नक्षत्रगणं पुनः पुनः पश्यति न मामित्येवमादियोज्यमेतत्पक्ष इत्याह ॥

## आदित्योऽपि वृक उच्यते, यदावृङ्क्ते ॥ २ ॥

**यत्** यस्मादसौ तमः **आवृङ्क्ते** विनाशयति समन्ततः । आवृणोति वा जगत्प्रकाशनेन । आवृणोति चोदकानि रश्मिभिः संभजत इत्यर्थः ॥ ततोऽयमा**दित्योऽपि वृक** इत्युच्यते ॥ २ ॥

उक्तेऽर्थे निगममुदाहरति—

**"अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ॥"** (ऋ० सं० १-८-१६-१)

**अजोहवीदिति** ॥ अस्य "विजयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण" इत्युत्तरार्धर्चम् ॥ कक्षीवत आर्षमाश्विनी त्रिष्टुप् प्रातरनुवाकाश्विनयोः शस्यते । "आस्नो वृकस्य वर्तिकामभीके युवं नरानासत्या मुमुक्तम्" इत्युक्तमधस्तात् ( ऋ० सं० १-८-१०-४ ) तदर्थमेवात्र पूर्वार्धर्चेन प्रतिपादयति । हे **अश्विना** अश्विनौ ! औकारस्याकारः ( पा० ७-१-३९ ) **वां** युवाम् ( कर्मभूतौ ) **वर्तिका** वर्तनशीला उषाः **अजोहवीत्** आह्वयत् ( आहूतवती ) । कदा पुनराह्वयत् ? **यत्सीम्** यदा खलु । **वृकस्य** आदित्यस्य **आस्नः** आस्यात् ( मुखात् ) आस्यस्थानीयान्मण्डलात्सूर्येणैकीभूतामुषसं पृथक्कृत्योदयात्पूर्वं रात्रेरपरभागे । "पदन्न-" ( पा० ६-१-६३ ) इति आसन्नादेश आस्यस्य ॥ **अमुञ्चतम्** युवां मोचितवन्तौ स्थापितवन्तौ । एतद्युवयोर्महाभाग्यम् ॥ किञ्चान्यत् **जयुषा** जयशीलेन रथेन **अद्रेः** मेघस्य ( निघं० १-१०-१ )

१. "तक्षू तनूकरणे" ( भ्वा० प० ) तृन् ( पा० ३-२-१३५ ) आङ्पूर्वः । ऊदित्वात्पक्ष इडभावः ( पा० ७-२-४४ ) कनिनि तु तक्षेति ॥

२. "स्पृश संस्पर्शने" ( तु० प० ) करणे क्तिनि पृष्टिः । थनि ( उ० २-१२ ) तु पृष्ठम् । देहपेक्षाद्भागः । स्पृश्यतेऽनेनेति, छान्दसः सलोपः । षत्वम् ष्टुत्वं च । पृष्ठो आमयः पृष्ठ्यामयस्तद्वान्पृष्ठ्यामयी मत्वर्थे इनिः ( पा० ५-२-११५ ) ॥

३. एवमस्य येनार्थस्तमयमादरेणोर्ध्वकायो हि भूत्वा पश्यति । मया त्वस्यार्थो नास्तीति मां न पश्यतीत्यर्थः ॥

४. आर्तघोषणम् । यद्वा मे ममास्यार्तप्रलापस्यार्थम् ( एष च भाष्यस्वरसार्थः । पूर्वस्तु सायणोक्तः ) ॥

५. कटास्त्वासनादुत्थितो भूत्वा । एतच्च दुर्गकृतं व्याख्यानमिहोद्धृतम् ॥

१. वृणक्तेर्वधकर्मणः । ( निघं० २-१९-५ ) बाहुलकादौणादिकः ( उ० ३-४१ ) कक्यथापूर्वं जकारलोपश्च । अत्र हि "वृजी वर्जने" ( रु० प० ) इत्येष धातुः । तमेवेदितमदादौ केचित्पठन्ति । स चात्मनेपदी । इदित्वान्नुम् ( पा० ७-१-५८ ) आवृङ्क्ते । वर्जनं चेह विनाशो नैघण्टुकमतेन । आसमन्तात् ॥

२. अत्रापि स एव ( वृजी- ) धातू रौधादिक अनेकार्थत्वादावृणोत्यर्थः ॥

३. "भृञ् संभक्तौ" ( क्र्या० आ० ) संभक्तिरिहादानम् ॥

४. अत्र वर्तिका चटकसदृशस्य पक्षिणः स्त्री । तामरण्ये वर्तमानेन शुना ( वृकेण ) ग्रस्तां पुरा किलाश्विनावमोचयतामित्याख्यायत इति सायण आह । यास्कमतेन तु वर्तिकोषा, वृक आदित्यस्तदास्यात उषसन्तावमोचयतामित्यर्थः । अभीके सङ्ग्राम इति सायणमते ( निघं० २-१७-१७ ) यास्कमते आसन्ने । अभीके अभ्यक्ते । अभिपूर्वादञ्चतेरीकन्धातुलोपश्च ॥

सानु समुच्छितप्रदेशं वियययथुः वृष्टिचिकीर्षया विशेषेण गतवन्तौ । गत्वा च विष्वाचः विविधगतियुक्तस्य मेघस्य सम्बन्धिना विषेण उदकेन ( निघं० १-१२-१५ ) जातम् उत्पन्नं सर्वं भूतजात-( म्प्राणिसङ्घ-) महतम् अगमयतं "हन हिंसागत्योः" ( अ० प० ) लङ् । मध्यमपुरुषद्विवचनम् । सुखमनुभावितवन्तौ सुवृष्टिं कृतवन्तावित्यर्थः ॥ १ ॥

यथाचास्मिन्वृकशब्देनादित्य उच्यते तथाख्यानादुपेक्षितव्यमित्याह—

## आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता, तामश्विनौ प्रमुमुचतुरित्याख्यानम् ॥

उषाः किल आदित्येन अभिग्रस्ता अन्तर्णीता अश्विनौ आह्वयत् आहूतवती प्रमुमुचतुः प्रमोचितवन्तौ इत्याख्यानम् आख्यायिका अस्मिन्नर्थे निदानविदो बह्वृचा वेदयन्ते तदुपेक्षितव्यं मन्त्रार्थनिर्णयायेति भावः ॥

## श्वापि वृक उच्यते विकर्तनात् ॥

विविधमसौ कृन्तति ( छिनत्ति ) उरणादीनि, तस्मात् वृकः श्वाप्युच्यते ॥ तथाच विपूर्वात्कृन्ततेः ( तु० प० ) पूर्ववद्रूपसिद्धिरुन्नेया ॥

अत्र निगममुदाहरति—

## "वृकश्चिदस्य वारण उरामथिः ॥"

( ऋ० सं० ६-४-३१-३ )

वृकश्चिदिति । अस्य "आ वयुनेषु भूषति । सेमं नस्तोमं जुजुषाण आगहीन्द्र प्रचित्रया धिया" इति शेषः । प्रगाथपुत्रस्य कलेरार्षम् । सतोबृहती । महाव्रते तृचाशीतिषु विनियुक्ता । वृकश्चित् वृकोऽपि श्वापि ( सारमेयोऽपि ) अस्य इन्द्रस्य वारणः वारयिता शत्रूणां विद्यत एव । किमुतान्यान्युपकरणानि? य उरामथिः उरान्मेषान् मध्नाति । "मंथ विलोडने" ( क्र्या० प० ) इन्स च कित् । "अन्येषामपी-" ( पा० ६-३-१३७ ) ति पूर्वपदस्य दीर्घः । स उरामथिरुरणमथिरिति भाष्याद्वुरशब्द उरणार्थः । स पुनरयं मेषः । "मेढ्रोरभ्रोरणोर्णायुर्मेषवृष्णय एडक" इत्यमरः । तथाभूतैः सन्नपि वयुनेषु प्रशस्तेषु मार्गेषु प्रज्ञानेषु वा ( निघं० ३-८-९-१० ) आभूषति आनुकूल्यमेव भजते । अतीव हिंस्रोऽपीन्द्रस्यानुकूल एव भवतीत्यर्थः । यद्वा अस्येति कर्मणि षष्ठी । इममिन्द्रमुक्तरूपो वृकोऽपि वयुनेषु स्तोत्रेषु आभूषति अलङ्करोति । हे इन्द्र ! स त्वमिमं नोऽस्माकं स्तोममुपश्लुत्य जुजुषाणः प्रीयमाणः "जुषी प्रीतिसेवनयोः" ( तु० आ० ) "छन्दसि लुङ्लङ्लिटः" ( पा० ३-४-६ ) इति वर्तमाने लिटः कानच् । चित्रया चायनीयया ( कमनीयया ) धिया बुद्ध्या स्तुतिलक्षणेन कर्मणा वा निमित्तभूतेन ( निघं० २-१-२१ ) प्रआगहि प्रकर्षेण शीघ्रमागच्छ । इममस्मद्यज्ञम् ॥ अत्र दुर्गः । सरमा हि देवशुनी श्रूयते । तत्पुत्रनप्तृभिश्च देवानां गवि हव्यम् । तस्मात् श्वापि वृक उच्यत इत्युपपद्यते, इतरेषामारण्यकानां परिग्रहाभावात् । अस्य मन्त्रस्य पूर्वोऽर्धर्चः परोक्षकृतः वृकश्चिदस्येत्यस्यात्षष्ठीयोगात् । उत्तरस्तु प्रत्यक्षकृतः आगहीन्द्रेत्यस्मान्मध्यमपुरुषयोगात्संबोधनाच्च । देवता किल परोक्षा स्तूयमाना प्रत्यक्षीभवति । तदेतत्सर्वेष्वेवंलक्षणेषु मन्त्रेषूपेक्षितव्यम् ॥ ३ ॥

अथोरशब्दस्यार्थं विवक्षुः पर्यायमुरामथिशब्दस्याह—

## उरणमथिः । उरण ऊर्णावान्भवति, ऊर्णा पुनर्वृणोते-रूर्णोतेर्वा ॥

उरामथिरिति । निगमप्रसक्तमुच्यते उरण ऊर्णावानिति । ऊर्णया तद्वान् । अथ विग्रहप्रसक्तमुच्यते-ऊर्णा पुनर्वृणोतेरिति ॥ ता अपि हि शीतत्राणार्थं व्रियन्ते इत्यूर्णाः । अथ वा ऊर्णोतेः आच्छादनार्थे वर्तमानस्य ( अ० उ० ) "अन्येभ्योऽपी"-( पा० ३-२-१०१ वा० ) ति डप्टाप् । ताभिराच्छन्न उरणो भवति ॥

## वृद्धवाशिन्यपि वृक्युच्यते ॥

वृद्ध-मुच्चैःश्रावं वाशयते ( शब्दं करोति ) तच्छीला वृद्धवाशिनी "सुप्यजातौ णिनिस्ताच्छील्ये" ( पा० ३-२-७८ ) इति णिनिर्ङीप् । शिवा, साऽपि वृक्युच्यते विकर्तनादेव ॥ निगममत्रोदाहरति—

## "शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार"—

( ऋ० सं० १-८-११-१ )

---

१. सायणस्तु—शत्रुभिरावेष्टितं जाहुषाख्यं राजानं स्तुवन्तं शत्रुसमूहान्निर्गमय्य तेन सह अन्यैर्गन्तुमशक्यं पर्वताग्रं गतवन्तावित्यर्थः । तदुक्तं "परिविष्टं जाहुषम्" ( ऋ० सं० १-८-११-५ ) इत्यत्र ॥

२. तथा विष्वाचो विविधगतियुक्तस्यैतत्संज्ञस्यासुरस्य जातमुत्पन्नमपत्यं विषेण क्ष्वेलेन अहतं युवां हतवन्तौ ॥ इति च सायणः ॥

३. तथा चोक्तं ( वै० सि० कौ० ) "गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने" इति ( पा० ३-३-८६ ) सूत्रे ॥

४. उपगम्य मन्त्रार्थमीक्षितव्यमालोचितव्यमिति नैरुक्तानामर्थः ।

५. उरामथिः ॥

१. यदैवासौ विजानीते आभूषत्वयं शत्रूनिति, तदैवासौ आभूषति । यस्य तवैवं सर्वोपकरणसंपन्नत्वम् । स त्वमित्युत्तरेणाभिसम्बन्धोऽत्र बोध्यः ॥

२. सोमसाध्येषु यागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका-स्तुतिः स्तोमः ॥

३. विशेषेण व्रियन्तेऽभिकाङ्क्ष्यन्ते ॥

४. "वृक आदाने" ( भ्वा० आ० ) इत्यस्मात् "इगुपध०" ( पा० ३-१-१३५ ) लक्षणकः । यद्वा वृणोतेरेव कः ( उ० ३-४१ ) इत्यन्ये व्याचक्षते ( भा० दी० ) ॥

त्यपि निगमो भवति ॥

**शतमिति** । अस्य "तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन्" इत्युत्तरार्धर्चम् ॥ अजोहवीदित्यनेन समानार्षेयम् । वृषागिरः पुत्र ऋज्राश्वोनाम राजर्षिस्तस्य समीपेऽश्विनोर्वाहनभूतो रासभो वृकीभूत्वावतस्थे । स च तस्याहारार्थमेकोत्तरशतसंख्यान् पौरजनानां स्वभूतान्मेषान् शकलीकृत्य प्रददौ, "शतमेकं च मेषान्" ( ऋ० सं० १-८-१६-३ ) इति मन्त्रान्तरे दर्शनात् । एवं पौराणामहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् । तेन स्तूयमानावश्विनौ, अस्मद्वाहननिमित्तमस्यान्धता जातेति जानन्तौ तस्मै अक्षिणी प्रायच्छताम् इत्याख्यायते । तदेतन्मन्त्रेणाह मन्त्रदृक्— ऋज्राश्वो नाम राजर्षिः **शतं** शतसंख्याकान् **मेषान्** उरणान् **वृक्ये** वृक्यै शिवायै "जसादिषु छन्दसि वावचनमि"-( पा० ७-३-१०९ वा० ) ति चतुर्थ्येकवचनस्याडभावे यणादेशः । आत्मना योषितायै शकलीकृत्य प्रादादिति शेषः । **तं चक्षदानं** क्षदतिरत्तिकर्मा अत्र शकलीकरणार्थः ततो लिटः कानच् । तथाच शकलीकृत्य दत्तवन्तम् **ऋज्राश्वं पिता** कुपितःसन् शापेन **अन्धम्** दृष्टिहीनं **चकार** कृतवान् । हे **नासत्या** नासत्यौ सत्यस्वभावौ सत्यस्य नेतारौ वा **भिषजौ** देवानां वैद्यभूतौ । "अश्विनौ वै देवानां भिषजौ" इति श्रुतेः ( तै० सं० २-३-११ ) **दस्रा** दस्रौ दर्शनीयौ । एतत्संज्ञौ वा

"नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभा" वित्यमरात् ॥ **अनर्वन्** अनर्वणी । द्रष्टव्यं प्रति पितृशापाद्गमनरहिते । "सुपां सुलुगि"-( पा० ७-१-३९ ) ति द्विवचनस्य लुक् । छान्दसो नलोपाभावः । **अक्षी** चक्षुषी । "ईच द्विवचने" ( पा० ७-१-७७ ) इति परत्वादक्षिशब्दस्येकारान्तादेशः । **विचक्षे** विगतदर्शनाय **तस्मै** ऋज्राश्वाय **आऽधत्तं** व्यधत्तमकुरुतम् ॥ १ ॥

**जोषवाकमित्यविज्ञातनामधेयम् । जोषयितव्यं भवति ॥ ३ ॥ (२१)**

अथ **"जोषवाकम्"** (६६) इत्यनवगतम् । **अविज्ञातनामधेयम्** इत्यभिधेयवचनम् अविस्पष्टं वचनमित्यर्थः । यद्धि **जोषयितव्यम्** विज्ञापयितव्यं परस्मै **भवति** । अस्पष्टत्वादितीयं शब्दसमाधिः ॥ विस्पष्टतायै सेवयितव्यमिति देवराजयज्वानः । तथाच "जुषी प्रीतिसेवनयोः" ( तु० आ० ) कर्मणि घञ् । वचेश्च भावे । "चजोरि"-( पा० ७-३-५२ ) ति कुत्वम् ॥ ३ ॥ (२१)

उक्तेऽर्थे निगममुदाहरति—

"य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा । जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥ ४ ॥ ( ऋ० सं० ४-८-२५ )

**य इन्द्राग्नी** इति ॥ भारद्वाजस्येयमार्षम् । बृहती । हे **ऋतावृधा** ऋतावृधौ । ( ऋतस्य सत्यस्य यज्ञस्य वा ) वर्धयितारौ ! । इगुपधलक्षणः कः ( पा० ३-१-१३५ ) "सुपां सुलुगि"-( पा० ७-१-३९ ) ति औङ आत् । **हे इन्द्राग्नी !** **यः** यजमानः **सुतेषु** अभिषुतेषु सोमेषु **वां** युवां **स्तवत्** स्तौति । लेटस्तिप इतो लोपः ( पा० ३-४-९७ ) अडागमश्च ( पा० ३-४-९४ ) "तस्याश्नीथ सोममि"ति शेषः । स युवयोर्बहुमत इत्यर्थः ॥ अथ पुनः **जोषवाकं वदतः** योऽयं जोषवाकं वदेति ( अविज्ञातं किमप्युपांशु ) तस्य हे **पज्रहोषिणा !** प्रार्जितहोषिणौ ! । प्रभूतयागाविति दुर्गः । प्रसिद्धस्तोत्राविति सायणः । **देवा** देवौ ! "सुपां सुलुगि"-

१. खण्डीकृत्य "भिसं शकलखण्डे वे-"त्यमरः ॥

२. एतच्चार्थवशादध्याहृतं वेदितव्यम् ( तमृज्राश्वमिति परवाक्यप्रयोगात् ) ॥

३. "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययो-"रित्यभिधानात् ॥

४. अरण्यश्वा वृकस्तस्य स्त्रियै इति सायणः । युज्यते चैतत् "कोकस्त्वीहामृगो वृक" इति सृगालतः पृथग् वृकस्याभिधानात् । दुर्गेण तु शकुनावेदकतया व्याख्यातमिति शिवाऽत्र वृकीत्युक्तम् । तदेतदनुपदं व्यक्तीकरिष्यते ॥

५. दुर्गस्तु—चक्षदानमितिस्थिते वर्णलोपमार्षमनुसृत्यैवं व्याख्यातम् । "वृक्ये शिवायै, तया वाश्विते सति परितुष्टः चक्षत् व्यादिष्टवान् दानम् । येयमेवं शोभनमभिप्रस्थितानामस्माकमर्थसिद्धये वाश्यते, तस्यै शतं मेषाणां दीयताम् इत्येवमाज्ञापितवानिति ॥

६. "शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा । अक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे" ( ऋ० स० १-८-१६-२ ) इति मन्त्रान्तरसंवादात् ॥

७. नसत्यावसत्यौ न असत्यौ नासत्यौ "नभ्राण्नपान्ने-" ( पा० ६-३-७५ )—त्यादिना नलोपाभावो निपातनात् ॥

८. भयसादयिताराविति दुर्गः ॥

९. "दस दर्शनदंसनयोः" ( चु० आ० ) "स्फायितञ्ची-" ( उ० २-१३ ) त्यादिना रक् । औङ आकारः ( पा० ७-१-३९ ) ॥

१. "ऋ गतौ" ( भ्वा० प० ) अस्मा"दन्येभ्योऽपि दृश्यन्ते" ( पा० ३-२-७५ ) इति बाहुलकाद्भावे वनिप् अर्व गमनं विषयं प्रत्यनयोर्नास्तीत्यनर्वणी इतिप्राप्ते अनर्वन्निति छान्दसः प्रयोगः ।

२. जोषं वदतीत्यर्थः । लटः शतरि षष्ठ्येकवचनम् । जोषवाकमित्यस्य विवरणमविज्ञातमित्यादि ॥

३. "यदिन्द्रश्चाग्निश्च भूयिष्ठभाजौ देवतानां तस्माद्ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणामिति ह विज्ञायते" इति श्रुतेः । तथा च पज्रः प्रभूतः होषो यागोऽनयोरस्तीति कर्मधारयादपि मत्वर्थीय इनिरार्ष एव ॥

४. तथाच पज्रः प्रार्जितः प्रसिद्धः होषो घोषः स्तोत्रम् ( निघं० १-११-३० ) अस्त्यनयोस्तादृशाविलर्थः ॥

( पा० ७-१-३९ ) ति औङ आत् । नभसथश्चन न कदाचिदपि भक्षयथो हवींषि सोमं वा । नासौ युवयोर्बहुमत इत्यर्थः ॥ ४ ॥

अथास्य भाष्यम्—

**य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथो,ऽथ योऽयं जोषवाकं वदति विजञ्जपः । प्राजितहोषिणौ न देवौ तस्याश्नीथः ॥**

**विजञ्जपः** । केवलमुदकतीरेऽन्यत्र वाऽत्रस्थितो जपनशील एव न कर्मकारी सः । अत्र विरुपसर्गौ विशेषार्थः स्थलं विशिनष्टि । जञ्जप इति जपते"र्लुपसदे"-( पा० ३-१-२४ ) ति यङ्लुतात्-"पचाद्यचि" ( पा० ३-१-१३४ ) यङो लुकि ( पा० २-४-७४ ) द्विर्वेऽभ्यासस्य "जपजभे"-( पा० ७-४-८६ ) ति नुगागमः । स ( यङ् ) चात्र धात्वर्थगर्हायामेवेति गर्हितं जपतीति जञ्जपः ॥ एवमत्राध्यातं भाष्यकारेण । विजञ्जपस्य भक्षयितव्याभावाज्जपस्य चोपांशुत्वाभाव्यात् "जोषवाक" शब्दोऽविज्ञातनामधेयमित्युपपत्त्यर्थम् ॥

**कृत्तिः कृन्ततेर्यशो वा अन्नं वा ।**

अथ **कृत्तिः** (६७) इत्येतदनवगतम् । अनेकार्थं च । **कृन्ततेरि**ति धातुनिर्देशः । **यशो वाऽन्नं वा** इत्यर्थवचनम् । कर्तनमिति न्याय्यं, यशो हि द्विषतां मर्माणि कृन्तति । अन्नमप्यसम्यगुपयुक्तमायुरेव कृन्तति, अपथ्यं च कुलमाष-माषादि ॥ "कृती च्छेदने" ( तु० प० ) करणे क्तिन् ( पा० ३-३-९४ ) "तितुत्रे"-( पा० ७-२-९ ) तीडभावः ॥

अथात्र निगममुदाहरति—

**"महीव कृत्तिः शरणात इन्द्र"**

( ऋ० सं० ६-६-१३-६ )

**सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेति ।**

**महीवेति** ॥ अस्य "तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे" इत्यादिः । "प्रते सुम्नानो अश्नवम्" इति शेषः ॥ नृमेधसः प्रियमेधस्येयमार्षम् । सतोबृहती । ऐन्द्री । चतुर्विंशादिषु सात्रिकेष्वहःसु माध्यन्दिने ब्राह्मणाच्छंसिनः शस्त्रे स्तोत्रियानुरूपवर्गे विनियुक्ता । हे **असुर** ! प्रज्ञावन् । असुरिति प्रज्ञानाम ( निघं० ३-९-६ ) रो मत्वर्थे । बलवन्प्राणवन् ! ( महाप्राण ) वा इन्द्र ! **तम्** उक्तगुणं **प्रचेतसं** प्रकृष्टज्ञानं **त्वाउ** उ इत्ययमवधारणे त्वामेव पितृवत् पोषकं **राधः** धर्मादिसाधनं धनं ( निघं० २-१०-१७ ) स्वं पित्र्यं **भाग**मिव **वयमीमहे** याचामहे ( निघं० ३-१९-१ ) **नूनम्** निश्चयेनोत्पन्नप्रणयं त्वादित्यर्थः । "नूनं तर्केऽर्थनिश्चये" इत्यमरः । किञ्च हे **इन्द्र** ! **ते** तव **कृत्तिरिव** कृत्तिः यशोऽन्नं वा ( निघं०…) तद्वत् **महि** सुमहत् **शरणा** शरणं गृहम् "सुपां सुलुगि-" (पा० ७-१-३९)-ति सोरात् । **अन्तरिक्षे** द्युलोके "वर्तते" इति शेषः । किञ्च **ते** तव स्वभूतानि **सुम्ना** सुम्नानि । शेर्लोपः (पा०६-१-७०) सुखानि ( निघं० ३-६-१६ ) तत्साधनानि लब्धोग्यानि अप्सरःप्रभृतीनि, पुत्रादिविषयसुखानि वा, "शेश्छन्दसि बहुलमि-" ( पा०६-१-७० )-ति जसश्शेर्लोपः । **नः** अस्मान्प्रति **प्राश्नवन्** प्रकर्षेणाश्नुवन्ताम् व्याप्नुवन्तु "अशू व्याप्तौ" ( स्वा० आ० ) लेट्यडागमः ( पा० ३-४-९४ ) । दुर्गस्तु-प्राश्नवमिति पाठो मन्यते-तथाच "प्राश्नुयामहम् तदहं सोमं सुन्वानः तस्याभिषवकर्मणो महाभाग्येन, येन त्वत्सायुज्यमश्नुयाम् । देहपातोत्तरकालमिह चामुत्र चैतन्नः फलद्वयमस्तु त्वत्त इत्यभिप्रायः । यशो हि विस्तीर्णं भवति । तेन हि गृहस्योपमानमुपपद्यते । यदनुप्रविष्टानामशनापिपासे न स्तस्तदहन्नवगृहस्याश्नुयामित्येवमन्नेनाप्युपपद्यते" इति स आह । परमत्र वचनव्यत्यय आद्यन्तवाक्ययोः कथं संगच्छताम् ? ॥ ६ ॥

**सुमहत्त** इति भाष्यं तावदंशस्य । (यावानुद्धृत उपरि )-

**इयमपीतरा कृत्तिरेतस्मादेव सूत्रमयी ॥ उपमार्थे वा ॥**

कन्थेति या प्रसिद्धा साऽपि **एतस्मादेव** कृतीधातोः वेष्टनार्थात् ( रु० प० ) कर्मणि क्तिनि ( पा० ३-३-९४ ) । सा हि वस्त्रावयवैः सूत्रैर्ग्रथिता भवति इति **कृत्तिः** । अथ **वा उपमार्थे** कृत्तिरिव कृत्तिः कन्था । चर्मापि हि कृत्तिरुच्यते ।

---

१. अतिकर्मसु "भसथः" ( २-८-८ ) इत्यस्य निघण्टौ पाठात् । भसेर्लेटि थलि "बहुलं छन्दसी-" ( पा० २-४-७६ ) ति शपः श्लुर्न भवति । अयं ( भसतिः ) भर्त्सनदीप्योर्जौहोत्यादिकः परस्मैपदी ॥

१. "तन्नो देहि स्थिरशरीराणां तदेतदस्तु नः" इत्येवम् । यथा कश्चित्पितृभागभूतं धनं याचते तद्वत् इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्माद्भागभूतं धनं यद्यारो वयं याचामह इत्यर्थः ॥

२. उपजातविश्रम्भत्वादित्यर्थः ॥

३. स्वस्वामिभावसम्बन्धेऽत्र षष्ठी (पा० २-३५०) स्वामिनः । भेदका ( द्विशेषणा-)देव तस्या विधानात् । तथाचोक्तम् "भेद्यभेदकयोश्चैव सम्बन्धोऽन्योन्यमिष्यते । द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्" इति । स्वभूतानि च यानि यथेष्टं विनियुज्यन्ते तान्येव ॥

४. सुखयन्तीति सुखानि "सुखदुःख तत्क्रियायाम्" (चु० उ०) पचाद्यच् ( पा० ३-१-१३४ ) ॥

५. ऐहिकं पुत्रादिसुखमामुष्मिकञ्चाप्सरःप्रभृति एतदुभयम् ॥

६. ईमहे वयं, प्राश्नवमहम् इति । ये त्वाहुः "असदो द्वयोश्चे-" ( पा० १-२-५९ )-ति द्वित्वएकत्वे चासदो बहुवचनं पक्षे भवतीति । तेषां न इति बहुवचनं सदैव प्रयुक्तं कथङ्कारमन्वेयम् ॥ इत्युपेक्षितोऽयं पाठः सायणादिभिरपि नाश्नवन्नित्येव पदेऽपि दृष्टम् ॥

तयेतरा (सूत्रमयी) उपमीयते। विकर्तनसामान्यात्। तथाच कृन्ततेरेव कृत्तिरियं कन्यापि। सापि हि च्छिन्नेव सर्वतः सीवनाल्लक्ष्यते॥

अत्र निगममुदाहरति—

**"कृत्तिवासाः पिनाकहस्तोऽवततधन्वे"–त्यपि निगमो भवति॥** ( कृ. य. सं. ...... )

व्याख्यातोऽयं तृतीयेऽध्याये ( पा० ४– सू० ४ )॥

**श्वघ्नी कितवो भवति। स्वं हन्ति॥**

अथ "श्वघ्नी" (६८) इत्यनवगतम्। **कितवो भवती**त्यभिधेयवचनम्। **स्वं हन्तीति** शब्दव्युत्पत्तिः। स्वहा इति न्याय्यं। स्वशब्दे कर्मणि उपपदे हन्तेः "कर्मणि हनः" (पा० ३–२–८६) इति भूते णिनिप्रत्ययः। स्वं धनं हतवान्स्वघाती सन् श्वघ्नी कितवोऽक्षदेवी ( धूर्तः )। "धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः" इत्यमरः। अत्र हन्तेरुपधालोपे कुत्वम् ( पा० ७–३–५४ ) सस्य च शो व्यत्ययेन (पा० ३–१–८५)॥

अथ विग्रहप्रसक्तमुच्यते—

**स्वं पुनराश्रितं भवति॥**

तद्धि स्वामिनम् **आभिमुख्येन श्रितं** संगतं **भवति** स्वत्वेनेति **स्वम्। पुनरिति** विशेषार्थमव्ययम्। "पुनरप्रथमे विशेषे च" इत्यमरः॥

अत्र निगममुदाहरति—

**"कृतं न श्वघ्नी विचिनोति देवने॥"**

( ऋ० सं० ७–८–२४–५ )

**कृतमिव श्वघ्नी विचिनोति देवने॥**

**कृतं नेति**। अत्र न इत्ययमुपमार्थ इत्यावेदयितुं भाष्यकृत्तथानुवदति **कृतमिवे**त्यादि। अस्य "संवर्ग यन्मघवा सूर्यं जयत्। न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः" इति शेषः। कृष्णस्याङ्गिरसस्येयमार्षम्। ऐन्द्री जगती। तार्तीयसवनिकेषु उक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। **श्वघ्नी** परस्वानां हन्ता ( हर्ता ) कितवः। **देवने** द्यूते **कृतं न** पूर्वैरर्जितं धनमिव, **मघवा** इन्द्रः **सूर्यं विचिनोति** मृगयते। कदा? **यत्** यदा **संवर्गं** सम्यक् वृष्टेर्वर्जयितारं **सूर्यं** सुष्ठु ईरयितारमपामादित्यं तदीयरसापहरणद्वारेण **जयत्** जयति। अत्र सार्वकालिको लङ् ( पा० ३–४–६ ) अडभावश्च छान्दसः। एवमग्रेऽपि। लुङ् ( पा० ३–४–६ ) एवमग्रेऽपि। अथ प्रत्यक्षस्तुतिः— हे **मघवन्**! इन्द्र! **ते** तव **तत्** सूर्यजयलक्षणं **वीर्यम्** वीरकर्म **अन्यः** त्वत्तोन्यः कश्चिद्भविष्यत्कालिकः **अनु** अनुकर्तुं **न शकत्** न अशकत् न शक्ष्यति। **न पुराणः**। पुरातनोऽपि न त्वद्वीर्यमनुकर्तुं **शकत्** अशकत्। **न उत** नापि **नूतनः** नवः ( वर्तमानकालिकः )। **शकत्**–शक्नोति। न पूर्वे चक्रुर्नापरे करिष्यन्ति सांप्रतं त्वत्स्येव न कोऽपीत्यभिप्रायः॥ ५॥

अत्र कृतसंबन्धाद्देवसंबन्धाच्च "श्वघ्नी कितव" इत्युपपद्यते॥

अथ निगमप्रसक्तमुच्यते—

**कितवः–किन्तवास्तीति शब्दानुकृतिः। कृतवान्वाशीर्नामकः॥**

**कितव** इति। अस्य शब्दस्य **किन्तवास्ती**त्येषा **शब्दानुकृति**र्यथाभ्यस्तशब्दस्यानुकरणम्। स हि नित्यकालमेव दिदेविषुः प्रतिदेवितृभिः कितवैः पृच्छयते—किं तवास्तीति, तस्माच्छब्दानुकरणात्कितव एवासौ लोके प्रसिद्धोऽभवत्॥ अथ **वा कृतवान्** पर्याप्तधनवानयं यथा स्यादित्येवमसावाशास्यते सुहृद्भिरन्यैः कितवैः, स हि तस्मादेवमाशासनात् **आशीर्नामकः** आशीर्निमित्तनामवान् कितव एवासौ बभूव॥

**सममिति परिग्रहार्थीयं सर्वनामानुदात्तम्॥ ४॥ ( २२ )**

अथ **समम्** ( ६९ ) इति एतत् **परिग्रहार्थीयं** परिग्रहोऽर्थोऽस्य स एव परिग्रहार्थीयः। "गहादि"–( पा० ४–२–१३८ ) त्वात्स्वार्थे छः। तत्पुनरेतद्**दनुदात्तम्** "त्वत्वसमसिमेत्यनुच्चानी"ति ( ४–७८ ) फिट्सूत्रेण। विप्रतिपन्नैस्वरत्वादत्र भाष्यकारेण स्वरोऽवधृतः। पक्षेण चानेकार्थताप्यस्य भवतीत्येतत्प्रदर्शितं भवति भाष्यकारेण॥ ४॥ ( २२ )

उक्तेऽर्थे निगममुदाहरति—

**"मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः। ऊर्मिर्नेनावभावधीत्॥"** ( ऋ० सं० ६–५–२५ )

---

१. चर्माऽपि कृत्तिरित्यर्थे। ययोपमिमीते॥

२. "कृतलब्धक्रीतकुशलाः" ( पा० ४–३–३८ ) इति सूत्रे तथार्थदर्शनात्। तथाच दुर्गः–यथात्र कृतादीनां दायानां मध्ये कितवः 'कृतं विचिनोति' देवने आस्तारे। अपि नामात्र कृतं यस्मात् ततो जयेयमहमित्येवम्॥

१. दुर्गस्तु–उदकसंवर्जयितारमन्तरिक्षे बहूनां मेघानां मध्ये विचिनोति–कतमस्त्वेषां मेघानामुदकदाने समर्थ इति। तं विज्ञाय जयद्। सूर्यं सुष्ठु ईरयितारमपाम् इति। तदेतन्मते सूर्योऽत्र मेघ एव॥

२. एतेन पूर्वोऽर्धर्चः परोक्षकृतः स एव विपरिणमयितव्य इत्युक्तोऽत्र समाधिः पुरस्तात् ( नि० ५–४–३ )॥

३. शकदित्यत्र। एवं–सार्वकालिकः। अडभावोऽपि एवमेव–छान्दस इत्यर्थः॥

मान इति । विरूप आङ्गिरस एनामाग्नेये सूक्ते ददर्श इतीयमाग्नेयी० गायत्री । दशरात्रस्य तृतीयेऽहनि प्रातःसवने आद्ये सूक्ते विनियुक्ता । हे भगवन् अग्ने ! **समस्य** सर्वस्यैव **परिद्वेषसः** परितोद्विषतः "द्विष अप्रीतौ" (अ० उ०) "असुन्" (उ० ४-१८) गुणः (पा० ७-३-८३) **दूढ्यः** दुर्धियः (पापधियः) प्रहितः **अंहतिः** वधः । "हन्तेरंह च" (उ० ४ । ६२) इत्यतिप्रत्ययो भावे । करणे तु दानरोगा-वंहती । तथा "चांहतिस्त्यागरोगयोरि"ति हैमः ॥ **ऊर्मिः** समुद्रादितरङ्गः **नावं न** नावमिव । स यथा तां पीडयति तद्वत् **नः** अस्मान् **मावधीत्** माहिंसीत्सर्वतः लिङर्थे । "माङि लुङ्" (पा० ३-३-१७५) ॥ ४ ॥ ४ ॥ (२२)

अत्र सर्वस्मादेव द्विषो वधस्यानभीष्टत्वात्"समम्"इति सर्वनामेत्युपपद्यते ॥

अथास्य भाष्यम्—

**मा नः सर्वस्य दुर्धियः पापधियः सर्वतोद्वेषसो अंहतिरूर्मिरिव नावमावधीत् ॥**

**मान इत्यादि** । निगदव्याख्यमेतत् ॥

अथ निगमप्रसक्ते निर्ब्रवीति—

**ऊर्मि-रूर्णोतेर्नौः प्रणोत्तव्या भवति नमतेर्वा ॥**

**ऊर्णोते**राच्छादनार्थस्य "ऊर्णोतेर्णुलोपश्चे"ति (उ० १-२९) मिप्रत्ययो बाहुलकात् । सा ह्याच्छादयति तीरमुदकमध्ये वा यदन्यद्भवति तत् ॥ **प्रणोत्तव्या** पारगमनाय प्रकर्षेण प्रेरयितव्या **भवतीति नौः** "णुद प्रेरणे" (तु० उ०) "ग्लानुदिभ्यां डौः" (उ० २-६४) इति कर्मणि डौर्डित्वाट्टिलोपः (पा० ६-४-१४३) । **अथवा नमतेरेव नौः** स्याद्बाहुलकाड्डौरेव प्रत्ययः कर्तरि । सा हि नमति प्रह्वीभूतेव भवति, पारगमनाय ॥

अथ प्रकृतमेव समशब्दं स्वरतो यथाप्रतिज्ञं शङ्कासमाधानाभ्यां द्रढयति—

**तत्कथमनुदात्तप्रकृति नाम स्यात् ? दृष्टव्ययं तु भवति ॥**

यदेतत्सममिति शब्दरूपम् **अनुदात्तप्रकृति** अनुदात्तस्वभावमुक्तम् **तत्कथं नाम स्यात् ?** अनुदात्तप्रकृतयो हि निपाताः (फि० सू० ४-८४) उदात्तप्रकृतीनि नामानि भवन्तीति । अत्रोच्यते—**दृष्टव्ययं तु इति** । अत्र तुरित्युत्तरपक्षद्योतनाय । यस्मादेतदनुदात्तप्रकृतित्वेऽपि सति दृष्टव्ययं, दृष्टो व्ययः स्वरव्यत्ययो निगमे यस्य तथाभूतं तस्मान्नामैव भवति अनुदात्तमपि सत् । "त्वत्वसमसिमेत्यनुच्चानी" (४-७८) ति फिट्सूत्रेण तथावगमात् ॥ तथाच व्य-(त्य-)यदर्शनाद्यथादृष्टं स्वर उपपादनीयः ॥

अथ यत्रास्य व्य(त्य)यो दृष्टस्तं निगममुदाहरति—

**"उतो सं॒मस्मि॒न्नाशि॑शीहि नो वसो ॥"**

(ऋ० सं० ६-२-२-३)

**इति सप्तम्याम् । शिशीतिर्दानकर्मा ॥**

**उत इति** । अत्र **समस्मिन्** **सप्तम्यां** व्ययो **दृष्टः** । अनुदात्तप्रकृतिस्प्याद्युदात्तत्वमत्र दृष्टम् । तथा च "दृष्टानुविधिश्छन्दसि भवती"ति महाभाष्यवचनमेवात्र शरणम् । तथाहि—

"वि॒द्मा स॑खि॒त्वमु॒त शू॑र भो॒ज्य१ मा ते ता व॑ज्रिन्नीमहे । उ॒तो स॑मस्मि॒न्नाशि॑शीहि नो वसो वाजे॑ सुशिप्र गोम॑ति" इति ॥

सौभरेरार्षं, सतोबृहती, ऐन्द्री । आख्याने विनियुक्ता—हे **शूर** ! शत्रूणां शासयितर्बलवन्निन्द्र ! **सखित्वं** तव सखिभावं वयं **विद्म** जानीमः । **उत** अपि च **भोज्यम्** अभ्यवहारार्थं धनं च विद्म । अतो हे **वज्रिन्** ! इन्द्र ! **ते** त्वदीये **ता** ते "सुपां सुलुगि-"(पा० ७-१-३९)-ति औङ आत् । सख्यधने । **आ** आभिमुख्येन स्थित्वा **ईमहे** वयं याचामहे (निघं० ३-१९-१) । **उतो** अपिच हे **वसो** ! सर्वस्य वासयितः । वसुमन्वा (प्रभूतधन !) **सुशिप्र** ! शोभनहनो ! (निघं० ४-१-११) इन्द्र ! **गोमति** गवादियुक्ते **समस्मिन्** सर्वस्मिन् **वाजे** अन्ने (निघं० २-७-२) **नः** अस्मान् **आशिशीहि** सर्वतोभावेन प्रतिष्ठापय । देहीति पर्यवसितोऽर्थः ॥ तदाह—**शिशीतिर्दानकर्मेति** । "शिल् निशाने" (स्वा०

---

४. "स्वाङ्गशिटामदन्तानाम्" (फि० सू० २-२९) इत्याद्युदात्तत्वमत्र प्राप्तम् । शिट् इति सर्वनामोच्यते । तत्रानुदात्तमनेनोच्यते । अनुच्चमनुदात्तम् ॥

१. अत्र दुःस्थिता धीर्यस्येति विग्रहे दुरित्यस्य धीशब्दं प्रति गतित्वमेव नास्तीति गतिपूर्वत्वाभावात्र (पा० ६-४-८२ वा०) न भवति ॥ "यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे"ति "उपसर्गाः क्रियायोग" (पा० १-४-५९) इति सूत्रे योगग्रहणेन नियमनात् ॥

१. तन्मन्त्र-(मनुदात्तप्रकृतित्वेऽपि आद्युदात्तसमशब्दप्रयोगघटितं) प्रदर्शयति—

२. दुर्गस्तु—भोग्यमंशोपजीव्यत्वं मित्राणामिति व्याचख्यौ ॥

३. वसतेरन्तर्भावितण्यर्थात् निवासार्थात् (भ्वा० प०) "शॄस्वृस्निहि" (उ० १-१०) इत्युः कर्तरि ॥

४. "गुणवचनेभ्यो मतुपो लुगिष्ट" (पा० १-४-१९ वा०) इति मतुपो लुक् ॥

५. "सृप्लृ गतौ" (भ्वा० प०) "स्फायितञ्चि-" (उ० २-१२) इति रक् बाहुलकात्सृशब्दस्य शिभावः । अत्रगन्त्रं प्रति सृप्ते भवत इति शिप्रे हनू चिबुकाधोभागौ । शोभने शिप्रे यस्य सः । तत्सम्बुद्धौ रूपम् ॥ शोभनशिरस्त्राण इति सायणः । सुनस ! इति दुर्गः ॥

६. उपलक्षणविधयैतद् ॥

उ० ) इत्यस्य छान्दसः श्लुः ( पा० २-४-७६ ) । निशानमिह दानं नतु तीक्ष्णीकरणम् ॥ ३ ॥

अत्राद्युदात्तत्वमेव "स्वाङ्गशिटामदन्तानाम्" ( फि० सू० २-२९ ) इति भवति ॥

उदाहरणान्तरमाह—

"उरुष्याणो अघायतः समस्मात्" ॥

( य० वा० सं० ३-२६ )

इति पञ्चम्याम् । उरुष्यती रक्षाकर्मा ॥

**उरुष्याण** इति । अस्य "तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवम्" इत्यादिः । श्रुतबन्धोरार्षमाग्नेयी द्विपदाऽग्न्युपस्थाने विनियुक्ता । **हे शोचिष्ठ !** दीप्तिमत्तम ! शोचिरिति दीप्तिनाम, तदस्यास्तीति शोचिष्मानतिशयेन शोचिष्मानिति शोचिष्ठः । "अतिशायने तमबिष्ठनौ" ( पा० ५-३-५५ ) इति इष्ठनि "विन्मतोर्लुक्" ( पा० ५-३-६५ ) इति मतुपो लुक् । **हे दीदिवः** । सर्वस्य दीपयितः । दिवेर्ज्वलनार्थस्य लिडादेशक्वस्वन्तस्य सम्बुद्धौ "मतुवसोरुसम्बुद्धौ छन्दसि" ( पा० ८-३-१ ) इति रुत्वम् । भगवन्नग्ने ! वर्तमानेऽत्र लिट् ( पा० ३-४-६ ) यस्त्वमुक्तगुणस्वभावः । **तं त्वा** त्वां वयं **सखिभ्यः** समानख्यानेभ्यस्तुहृद्भ्यस्तदर्थं **सुम्नाय** द्वितीयार्थे चतुर्थी व्यत्ययेन ( पा० ३-१-८५ ) सुम्नं सुखं ( निघं० ३-६-१६ ) **नूनं** निश्चयेन "नूनं तर्केऽर्थनिश्चये" इत्यमरः । **ईमहे** याचामहे ( निघं० ३-१९-१ ) यद्वा—सुम्नाय सुखार्थं सखिभ्योऽस्मत्सखीनामुपकारार्थं, च तादर्थ्ये चतुर्थी ( पा० १-४-४४ वा० ) वयम् **ईमहे** याचामहे ॥ **स** त्वं **नः** अस्माकमभिप्रायं **बोधि** बुध्यस्व । "बुध अवगमने" ( भा० प० ) लोट् "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुक् । "हुझल्भ्यो हेर्धिः" ( पा० ६-४-१०१ ) छान्दसौ गुणधलोपौ । **श्रुधी** शृणु च **हवम्** आह्वानम् । "ह्वेञ्स्पर्धायां शब्दे च" ( भ्वा० उ० ) "भावेऽनुपसर्गस्य" ( पा० ३-३-७५ ) इत्यप्संप्रसारणं च । श्रुधीति "श्रुशृणुपृकृवृभ्यश्छन्दसि" ( पा० ६-४-१०२ ) इति हेर्धिः । संहितायां "अन्येषामपि०" ( पा० ६-३-१३७ ) इति दीर्घः ॥ आहूतश्च—**उरुष्याणः** उपगम्यास्मान् । **समस्मात्** सर्वस्मात् । समः सर्वपर्यायः ( सि० कौ० ) **अघायतः** परस्य पापमिच्छतः

१. सायणस्तु आशिशीहि—तिक्ष्णीकुरु । उपलक्षणं प्रदानेनास्मान् प्रसिद्धान्कुर्वित्यर्थः । इत्याह । सर्वथा चात्रोपसर्ग एव दानार्थत्वमवगमयति तस्य च द्योतकत्वमेवेति शिशीतिर्दानकर्मेति भाष्यमपि सङ्गच्छत इति वयम् ॥

२. नोऽस्मान्भवत्सेवकानित्येवं महीधर आह ।

३. अघं परस्येच्छतीत्यर्थे "छन्दसि परेच्छायामपि०" ( पा० ३-१-८ वा० ) इति क्यच् । "अश्वाघस्यात्" ( पा० ७-४-३७ ) इत्याकारः । लटः शतरि षष्ठ्येकवचने रूपम् ॥ अत्र,

शत्रोः "पाहि" इति शेषः । यद्वा—सर्वस्मादघमिच्छतः नोऽस्मान् उरुष्य—रक्षेत्यर्थः । तथाच भाष्यम् **उरुष्यती रक्षाकर्मेति** । "ऋचि तुनुघ०" ( पा० ६-३-१३३ ) इत्यादिना दीर्घः । "नश्च धातुस्थोरुषुभ्यः" ( पा० ८-४-२७ ) इति नस्य णत्वम् ॥ २६ ॥

**इति** एवमत्र समस्मादिति **पञ्चम्यां** व्य(त्य)यो दृष्टः । तस्मात् ( व्य(त्य)यदर्शनात् ) "दृष्टानुविधिश्छन्दसि भवती"-ति कृत्वाऽनुदात्तप्रकृतित्वेऽपि सति नामैतद्भवत्याद्युदात्तमित्युपपद्यते ॥

**अथापि प्रथमाबहुवचने—**

**"नभन्तामन्यके समे ॥ ५ ॥" (२३)**

( ऋ० सं० ६-३-२२-१ )

**अथ** इति कृत्स्नार्थमव्ययम् । **अपीति** सम्भावने । बहून्यप्येवंविधानि उदाहरणानि निगमे सम्भाव्यन्ते तत्र **प्रथ०० समे** इति । अस्य—"अग्निमस्तोष्यृग्मियमग्निमीळा यजध्यै । अग्निर्देवाँ अनक्तु न उभे हि विदथे कविरन्तश्चरति दूत्यम्॥" इत्यादिः । काण्वस्य नाभाकस्यार्षम् षडष्टकामहापङ्क्तिश्छन्दः । आग्नेयी । अहम् **ऋग्मियम्** ऋगर्हम् । स्तोत्रार्हम् "ऋच स्तुतौ" ( तु० प० ) क्विप् । ऋच्यन्ते स्तूयन्ते देवा अनया इति ऋक्स्तोत्रम् । ततो मियशब्दोऽर्हार्थे प्रयुक्तो नैरुक्तः ॥ यद्वा ऋचां मानं शब्दमर्हतीति ऋग्मियस्तम् । **अग्निम्** । **ईळा** स्तुत्या । "ईड स्तुतौ" ( अ० आ० ) भावे क्विप् । **अस्तोषि** स्तौमि । छान्दसं रूपम् । प्रत्ययः । अपि च **यजध्यै** यष्टुम् । तुमर्थेऽध्यै ( पा० ३-४-९ ) प्रत्ययः अपि च **अग्निः** । **नः** अस्माकं **विदथे** यज्ञे ( निघं० ३-१७-५ ) देवेभ्यः । **अनक्तु** हविर्भिस्तर्पयतु । **कविः** क्रान्तदर्शी ( विद्वान् ) अग्निः । **उभे** द्यावापृथिव्यौ **अन्तः** तयोर्मध्ये **दूत्यम्** दूतकर्म । यत् ( पा० ४-४-१२० ) **चरति** करोति । सर्वेभ्यः देवेभ्यः स्वस्वभागं यथाहुतं प्रयच्छति । **अन्यके** कुत्सिता अन्ये शत्रवोऽपि । कुत्सार्थेऽकच्प्रत्ययेष्टेः प्राक् ( पा० ५-३-७४ ) **समे** सर्वे । **नभन्ताम्** अग्निना हिंस्यन्ताम् । नभतिर्हिंसाकर्मा ( निघं० २-

"प्रकृत्यान्तःपादमव्यपरे" ( पा० ६-१-११५ ) इति पङ्क्तिभावात्पूर्वरूपत्वं न भवति ॥

१. भ्वादेराकृतिगणत्वात् । नैरुक्तो वा । दुर्गस्तूपगम्येत्यर्थकमुरुष्येति ल्यबन्तं मनुते तदेतद्भाष्याननुमतमपि समुद्धृतं ततोऽत्र, तदनुगामित्वादस्या विवृतेः । अत्र व्युत्क्रम्य ( अग्रेतनं पश्चात्कृत्य ) व्याख्यानमर्थसङ्गत्यै न दोषाय ॥

२. एतदादि दशर्चं यावद्वाविंशे वर्गे प्रत्यृचमेतदन्तमेव वाक्यं "नभ⋯समे" इति पठ्यते ॥

३. तथाचानुक्रान्तम् "अग्निमस्तोषि नाभाक आग्नेयं महापाङ्क्तं ही"—ति ॥

१९–१०) पाणिनीयेऽपि "णभ तुभ हिंसायाम् (भ्वा० आ०) इति पठ्यते। अत्र दीक्षिताः प्राहुः आद्योऽभावेऽपि "नभ-न्तामन्यके समे" माभूवन्नन्यके सर्वे इति निरुक्तमिति। इदं च निरुक्तं शाकपूण्यादिकृतं हरदत्तादिभिरुल्लिखितमिहानेनोद्धृत-मिति तत्काले तस्योपलब्धिः संभाव्यते। अत्र सर्वत्र पदकाले समशब्दः सर्वानुदात्तः पदग्रन्थेषूपन्यस्तः। संहितायां त्वाद्यु-दात्त एवेति बोध्यम्॥ १॥ ५॥ (२३)

अथ "कुटस्य" (७०) "चर्षणिः" (७१) इत्येते अनव-गते। "कृतस्य"। "चायिता" इत्येतौ शब्दसमाधी। एक एव निगमः। यथा—

**"हविषा जारो अपां पिपर्ति पपुरिर्नरा। पिता कुटस्य चर्षणिः॥ ४॥"**

(ऋ० सं० १–३–३३)

**हविषेति**। प्रस्कण्वस्यार्षम्। आश्विनी गायत्री। प्रातर-नुवाकाश्विनयोः शस्यते। हे **नरा** नरावश्विनौ! **अपां** सर्व-भूतान्तर्गतानां **जारः** जरयिता शोषयिता प्राणभावेनाव-स्थितः सन्। यद्वा—स्वकीयतापेनोदकानां जरयिता **पपुरिः** पूरयिता प्रीणयिता च प्राप्ते काले एष सूर्यः। यश्च **पिता** पालकः कृत्स्नस्य जगतः। **कुटस्य** कृतस्य कर्मणः सार्व-भौमस्य साध्वसाधुनः। **चर्षणिः**। चायिता द्रष्टा च। बुध्य-धिदेवताभावेनावस्थितः सर्वभूतानाम्। स **हविषा** अस्म-द्दत्तेन **पिपर्त्ति** देवान्पूरयति प्रीणयति वा अतस्सूर्योदय-काले युवाभ्यामागन्तव्यमित्यर्थः॥ ४॥ एवमत्र "कुटस्य" "चर्षणिः"॥ इत्येते कृतस्य चायितेत्येवमुपपद्यते।

अथास्य भाष्यम्—

**हविषाऽपां जरयिता, पिपर्त्ति–पपुरि–रिति पृणाति निगमौ वा प्रीणाति निगमौ वा, पिता, कृतस्य कर्मणश्चायिताऽऽदित्यः॥**

इति एवमेतौ निगमस्थौ शब्दौ **पृणा ० ० ० गमौ वा** पृणात्यर्थौ वा प्रीणयत्यर्थौ वा॥ **पिता** पालकः। "पा रक्षणे" (अ० प०) इत्यस्य "नप्तृनेष्टृ०" (उ० २–९५) इत्यादिना पितृशब्दो निपातितः। **चायिताऽऽदित्यः**॥ चायितेति चर्षणिरित्यस्यार्थः॥ अत्र दुर्गः। नरावत्र द्यावापृथिव्यावभिप्रेते तयोश्चोदकेनादित्यः पूरयिता, तस्मादादित्यविषयता चर्षणि-शब्दस्य, तस्य च बुध्यधिदेवताभावेन कृतस्य कर्मणो द्रष्टृत्व-मुपपद्यत इति समासार्थमाह॥

**शम्ब इति वज्रनाम, शमयतेर्वा शातयतेर्वा॥**

अथ "**शम्ब**" (७२) इत्यनवगतम् "**वज्रनाम**" इत्य-भिधेयवचनम्। **शम ० ० तेर्वा** इति शब्दसमाधी॥ तथाच "शमु उपशमे" (दि० प०) उपशमे इति ण्यन्तस्य (मित्त्वा-द्ध्रस्वत्वम्) तेन सकर्मकोऽयम् "शमेर्बन्" (उ० ४–९१) इति बन् प्रत्ययः। यद्वा शातयतेर्बाहुलकाद्वन्प्रत्यये पृषोदरा-दित्वाच्छमादेशः॥

अथास्योदाहरणम्—

**"उग्रो यः शम्बः पुरुहूत तेन॥"**

(ऋ० सं० ७–८–२३–२)

**इत्यपि निगमो भवति॥**

**उग्र** इति॥ अस्य—"आराच्छत्रुमपबाधस्व दूरमि" त्यादिः। "अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम्"॥ इत्युत्तरार्धर्चम्॥ कृष्णस्याङ्गिरसस्यार्षम्। त्रिष्टुप्। माध्यन्दिने सवने स्तोमातिशंसने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। हे **पुरुहूत** बहुभिराहूत **इन्द्र**! तव **य उग्र** उद्गूर्णः **शम्बः** वज्रः **तेन** वज्रेण **शत्रुम्** अस्मदरिम् **आरात्** अस्मत्समीपात् **दूरम् अपबाधस्व** अपगमय त्वम्। किञ्च **अस्मे** अस्मभ्यं "सुपां सुलुगि"ति (पा० ७–१–३९) भ्यसः शेभावः। **यवमत्** यवैस्तद्वत्। **गोमत्** गवादिभिः (पशुभिः) तद्वत् च धनं **धेहि** देहि। किञ्च **जरित्रे** स्तोत्रे (निघं० ३–१७–२) जरतिरर्चतिकर्मा नैरुक्तः (निघं० ३–१४–७) ततस्तृच्कर्तरि॥ मह्यं **वाजरत्नाम्**

१. नरधर्मत्वात् नरावित्यश्विनावुच्येते। पूर्वं ह्येषां यज्ञे भागो नासीद्देवभिषक्त्वात्। च्यवनेन तु स निसृष्टस्तदारभ्येमौ हविर्भुजौ देवधर्माणावभूतामिति पौराणिकाः॥ यद्वा—नर इत्य-श्वनाम (निघं० १–१४–२३) तेनाश्विनौ लक्ष्येते। तत्प्र-भवत्वात्॥

२. प्राणाधिष्ठाताऽऽदित्य इत्याम्नायते। "आपोमयः प्राण" इति श्रुतेश्च। अत्र "दारजारौ कर्तरि णिलुक् च" (पा० ३–३–२० वा०) इति घञन्तो जारशब्दो निपातितः॥

३. "पृ पालनपूरणयोः" (जु० क्र्या०। चु० प०) "आदृ-गमहनजनः किकिनौ लिट् च" (पा० ३–२–१७१) इति किन्प्रत्ययः। लिड्वद्भावा"दसंयोगाल्लिट्कित्" (पा० १–२–५) इति कित्त्वे सिद्धे पुनः कित्करणसामर्थ्यात् "ऋच्छत्यृताम्" (पा० ७–४–११) इति गुणाभावे "उदोष्ठ्यपूर्वस्य" (पा० ७–१–१०२) इत्युत्वम् रपरत्वम्॥

४. कृतशब्दस्य कुटभावः। पृषोदरादित्वात्। कृन्तर्वाऽकुटेर्वा बाहुलकात्कर्मणि कप्रत्ययः। (पा० ३–१–१३५) इत्यन्ये॥

५. "चायृ पूजानिशामनयोः" (भ्वा० उ०) निशामनं चाक्षुषज्ञानमिति माधवः। ततो बाहुलकादनिप्रत्ययः। धातोश्चर्ष-भावश्च। "कृषेरादेश्च चः" (उ० २–९७) इति तु शाकटायनः॥

१. अश्विनौ द्यावापृथिव्यावहोरात्रे सूर्याचन्द्रमसौ वेति निघण्टुभाष्ये देवराजयज्वानः (५–६–१)॥

२. असाङ्घ निषेहीति सायणः॥

वाजेनान्नेन रमणीयाम् । धियं कर्मैतत् ( निघं० २-१-२१ ) कृधि कुरु । प्रचुरेणान्नेन यथैतस्मिन्कर्मणि वर्तमाना रमेमहि तथा कुरुष्वेत्यभिप्रायः ॥ २ ॥

एवमत्राऽपबाधनसम्बन्धात् "शम्ब" इत्येतद्वज्रनामेत्युपपद्यते । अपठितमेतद्वज्रनामसु इत्यतोऽप्रसिद्धार्थं तस्यैवं प्रकरणादर्थसिद्धिर्भवति ॥

**केपयः कपूया भवन्ति । कपूयमिति पुनाति कर्म कुत्सितं दुष्पूयं भवति ॥ ६ ॥ (२४)**

अथ "केपयः" (७३) इत्यनवगतम् । "कपूयाः" एते सन्तः केपयः भवन्ति ॥ (२५) अथ कपूयमिति किमुक्तं भवति ? **पुनाति कर्म कुत्सितम्** यदेतत्पापकारी पुमान् प्रायश्चित्तेन पुनाति कुत्सितं कर्म, यच्च तत् **दुष्पूयम्** दुष्पावं दुःशोधं भवति पूयमानमप्यसकृत् तदेतत्कुत्सितपूयत्वात्कपूयम् । कुशब्दोपपदात्पुनातेर्बाहुलकात्कर्मणि क्यप् । कोः कादेशः पृषोदरादित्वात् ॥ तथाच कुत्सितं सत्पूयत इति कपूयं तदस्त्येषामिति कपूया मत्वर्थे "अर्श आदिभ्योऽच्" ( पा० ५-२-१२७ ) इत्यच् । कपूयाः सन्तः केपयः । कपूयशब्दस्य केपिशब्दे विपर्ययः पृषोदरादित्वात् ॥६॥ (२४)

उक्तेऽर्थे निगममुदाहरति—

**पृथ॒क्प्राय॑न् प्रथ॒मा दे॒वहू॑त॒योऽकृ॑ण्वत श्र॒व॒स्या॑नि दु॒ष्टरा॑ ॥ न ये शे॒कुर्य॒ज्ञियां॒ नाव॑मा॒रुह॑मी॒र्मैव ते न्य॑विशन्त॒ केप॑यः ॥**

( ऋ० सं० ७-८-२७-१ )

**पृथगिति** ॥ पूर्वेण समानार्षविनियोगेयं जगती । हे इन्द्र ! तव प्रसादात् इमे **प्रथमाः** पूर्वे मुख्या वा **देवहूतयो** देवानामाह्वातारः । कर्तरि क्तिन् । विद्याकर्मानुरूपेण देवयानेन पितृयानेन वा **पृथक्** भूता एव **प्रायन्** गच्छन्ति वर्तमाने लङ् ( पा० ३-४-६ ) येऽत्र लोके **दुष्टरा** दुस्तराणि ( दुरनुकराणि ) "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः "युष्मत्तत्ततक्षुःष्वन्तःपादम्" ( पा० ८-३-१०३ ) इति षत्वम् । अन्यैः असद्भिः । **श्रवस्यानि** श्रवणीयानि यशांसि प्रशस्तकर्माणि । **अकृण्वत** अकुर्वत । "व्यत्ययो बहुलम्" ( पा० ३-१-८५ ) इति विकरणव्यत्ययः । **ये** च तत्प्रसादरहिता जनाः **यज्ञियाम्** यज्ञसम्बन्धिनीं ( यज्ञमयीं ) **नावम्** नौकाम् **आरुहम्** आरोढुम् "शकि णमुल्कमुलौ" ( पा० ३-४-१२ ) इति कमुल् तुमर्थे ॥ **न शेकुः** न शक्नुवन्ति । वर्तमाने लिट् ( पा० ३-४-६ ) **ते** केपयः कुत्सितपूयकर्माणः ( पापकर्मरता जनाः ) **ईर्मैव** इहैव लोके यथाकर्मानुरूपायां योनौ **न्यविशन्त** अधोगतिं प्राप्ताः । तदुक्तम् "य इह कपूयचरणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन् । श्वयोनिं वा, शूकरयोनिं वा, चण्डालयोनिं वा" इत्येवमादि ॥ १ ॥

अथास्य भाष्यम्—

**पृथक्प्रायन्—पृथक्प्रथतेः । प्रथमा देवहूतयो ये देवानाह्वयन्त, अकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैः । येऽशक्नुवन्यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्त, इहैव ते न्यविशन्त ऋणेहैव ते न्यविशन्तास्मिन्नेव लोक इति वा ॥**

अत्र ऋणे ह एवेति पदत्रयम् । अयमर्थः । जायमानो द्विजो हि त्रिभिर्ऋणैर्जायते । तथाच श्रुतिः "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवाजायते, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, स्वाध्यायेन ऋषिभ्यः" इति । तदपनोदमन्तरा सुगतिर्न भवति । **तथाच मनुः** ( अ० ६ ) ॥

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥ ३५ ॥
अधीत्य विधिवद्वेदान्पुत्राँश्चोत्पाद्य धर्मतः ॥
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ ३६ ॥
अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् ॥
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः ॥ ३७ ॥
इति ॥

तथाच यज्ञमकुर्वन्त ऋणे एव निविशन्ते न तत उद्भ्रियन्ते कथंचिदपीत्यर्थः । ह इति खेदे कुत्सायां वा ॥ सायणस्तु-ईर्मैव ऋणेनैव न्यविशन्त अधोगतिं प्राप्ता इत्यर्थः । इत्याह ॥ तथाच "ईर्म" इत्येतदिहाव्ययमनेकार्थं "नानार्था अव्ययाः परे" इत्यमराभिधानात् ॥ इर्तेर्मन् ( उ० १-१३७ ) बाहुलकात् ॥

अथ शब्दसारूप्यप्रसङ्गादुच्यते—

**ईर्मेति बाहुनाम, समीरिततरो भवति ॥**

अङ्गान्तरेभ्यः **समीरिततरः** क्षिप्रकारी **भवति** ॥ तथाचेर्तेर्मे इतीर्मः पुमान् । व्रणे चैतन्नपुंसकम् । तथाचामरः "व्रणोऽस्त्रियामीर्ममरुः" इति ॥

**अथ तूतुम् आकृषे** (७४) इत्येतद्युगमपदमनवगतम् । तत्र "तूतुमि"त्यस्य "तूर्णम्" इति शब्दसमाधिः । "आकृषे" इत्यस्य च "उपाकुरुषे" इति ॥ तदेतन्मन्त्रभाष्याभ्यामाह—

१. एतच्च सायणव्याख्यानानुसारेण । वस्तुतो यथाकालमेवात्र लकारौ । तेन शेकुरित्यपि भूतानद्यतनपरोक्ष एव लिट् बोध्यः ॥

२. दुःखेनानुकर्तुं योग्यानीत्यर्थः । कृच्छ्रार्थेऽत्र खल् ( पा० ३-३-१२६ ) प्रत्ययः करोतेर्गुणश्च ॥

१. ब्राह्मण इत्युपलक्षणं द्विजातिमात्रस्य । तदेतन्मनुनैवोपसंहृतमग्रेतने (३७) वचने । इति द्रष्टव्यम् ॥

२. तथाच "अहहेत्यद्भुते खेदे" इत्यमरे-अह-इति ह-इति च पदं केचित्पक्षे छिन्दन्ति । अत्रापरितुष्यन्नाह-कुत्सायां वेति । तथाच मेदिनी-"ह स्यात्संबोधने पादपूरणे च विनिग्रहे । नियोगेच क्षिपायां स्यात्कुत्सायामपि दृश्यते" इति ॥

**"एता विश्वा सवना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे ॥"** (ऋ० सं० ८-१-९-६)

इति अर्धर्चं प्रथमम् । अथास्य भाष्यम्—

**एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्व ॥**

इति ॥ उत्तरार्धर्चं तु—"वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः" इति ॥ वैकुण्ठस्येन्द्रपुत्रस्यार्षम् जगती । ऐन्द्रे सूक्ते निविद्धानीये महाव्रते महदुक्थे शस्यते—हे इन्द्र! **एता** एतानि । **विश्वा** विश्वानि । सर्वाणि । **सवना** सवनानि स्थानानि । शेर्लोपः (पा० ६-१-७०) त्वं **तूतुम्** तूर्णम् **आकृषे** उपाकुरुषे (उपागम्य तेन तेन देवतात्मना कुरुषे) तानि कुरुष्व निर्वर्तयेत्यर्थः । लेट् मध्यमपुरुषैकवचनम् । कतमानि पुनः स्थानानि? **स्वयमित्यादि** । हे **सहसः** बलस्य (निघं० २-९-१७) **सूनो!** पुत्र! बलवन्नित्यर्थः । **यानि** एतानि स्थानानि **स्वयम्** आत्मनैव **दधिषे** धारयसि तानि धत्स्वेत्यर्थः ॥ यतस्त्वमेवास्य जगतो धारयिता (पाता) स्रष्टा च भवसि । अतः **वराय** वरयितव्याय कामाय **ते** तव **पात्रम्** एतत्सोमपूर्णम् । प्रदिशाम इति शेषः । **धर्मणे** धारणाय च **तना** धनं च (निघं० २-१०-१९) तनोति विस्तारयति तदिति पचाद्यच् (पा० ३-१-१३४) "सुपां सुलुगि"-(पा० ७-१-३९) ति सुप आत् । सर्वं तवैव प्रदिशामः । **यज्ञश्च** कृत्स्नः । तवैव । **मन्त्रः**—च कर्मकरणः । तवैव । **ब्रह्म** चान्नं च (निघं० २-८-२५) सर्वं तवैव । **उद्यतं** चैतदनेकप्रकारमपि स्तुतिलक्षणं **वचः** तवैव ॥ ६ ॥

एवमत्र शब्दसारूप्यात् "तूतुम्" इत्येष शब्द "स्तूर्णमसि"-त्येवमुपपद्यते, करणसम्बन्धाच्च । यतोहि कर्म तूर्णमेव करणमिष्यते कर्तृभिः । एवम् "आकृष" इत्यत्रापि, यद्धि क्रियते तदुपगम्याभिमुख्येनैव स्थित्वा क्रियत इत्युपशब्दोऽत्राध्याहृतो भाष्यकारेण ॥

**अंसत्रमंहसस्त्राणं, धनुर्वा, कवचं वा ॥**

अथ **अंसत्रम्** (७५) इत्यनवगतम् । विकल्पतश्चानेकार्थम् । **अंहसस्त्राणम्** इत्यर्थप्रतीतिः । **धनुर्वा**त्वभिधेय-वचनम् ॥ ताभ्यां हि पुरुषाः साङ्ग्रामिका अंहसस्त्रायन्ते ॥ तथाच अंहतेर्गत्यर्थात् (भ्वा० प०) असुनि (उ० ४-१८९) अंहःपापम् । "अंहोदुरितदुष्कृतम्" इत्यमरः । अंहसस्त्रायते "सुपी-"(पा० ३-२-४)तियोगविभागात्कः । इत्यंहस्त्रं सत् अंसत्रम् । सकारो हकारस्य स्थान उपकल्पितो वर्णव्यापत्तिलक्षणनिरुक्तावगमात् ॥

अथाख्यानप्रसक्तमुच्यते—

**कवचं कुअञ्चितं भवति, काञ्चितं भवति, कायेऽञ्चितं भवतीति वा ॥ ७ ॥ (२५)**

**कु अञ्चितं** कुटिलमञ्चितम् । स हि तस्य स्वभावः । अथवा **काञ्चितं** कुटिलीकृतम् । अथ **वा कायेऽञ्चितं** तद्गतं **भवति** । इति **कवचम्** ॥ ७ ॥ (२५)

अथांसत्रशब्दे निगममुदाहरति—

**प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित् कृणुध्वम् ॥ द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ॥ १ ॥** (ऋ० सं० ८-५-१९)

**प्रीणीतेति** ॥ बुधस्य सोमपुत्रस्यार्षम् त्रिष्टुप् वैश्वदेवे सूक्ते । तथाचैतत्पक्षे एवं योजनात्र—हे अस्मदीया योद्धारः । यूयम् **अश्वान्** एतान् **प्रीणीत** प्रीणयत, यवसोदकादिना सङ्ग्रामयोग्यान्कुरुतेत्यर्थः । प्रीणयित्वैतानेभिरुपजातवीर्यैः । **हितं** सुहितं यथास्यात्तथा (बन्धुसुहृद्भ्यो हितं यथा भवति तथा) **जयाथ** जयथ संग्रामम् । "अन्येषामपि दृश्यते" (पा० ६-३-१३७) इति दीर्घः संहितायाम् । जयनं वो हितमस्तु । स्वस्तीत्यविनाशनाम अभिपूजितं वा, इदिति चार्थेऽव्ययम् । तथाच **स्वस्तिवाहम्** अविनाशवाहनमभिपूजितवाहनं वा । **रथमित्** रथंच **कृणुध्वम्** कुरुध्वम् । "व्यत्ययो बहुलम्" (पा० ३-१-८५) इति विकरणव्यत्यय आर्षः । एवमेतां साङ्ग्रामिकीमितिकर्तव्यता (मश्वं रथं च दृढं-) कृत्वा सङ्ग्राममूमिं गत्वा (द्रोणाहावमित्यादीनि द्वितीयान्तानि कूपरूपसङ्ग्रामविशेषणानि सिञ्चतेत्यनेन संबध्यन्ते) **द्रोणाहावम्** द्रोणः द्रुममयः स एव रथ आहाव आहाव-(निपान-)-स्थानीयो यस्य सङ्ग्रामस्य तम् **अवतम्** एतं सङ्ग्रामरूपं कूपम् (निघं० ३-२३-७) **अश्मचक्रम्**

१. वरं लब्धुमित्यर्थः । "क्रियार्थोपपदस्य च"-(पा० २-३-१४) ति चतुर्थी ॥

२. त्रिवर्गसाधनं हि धनं भवति ॥

३. कर्म क्रियते अनेनेति युच् । सायणस्तु यज्ञ इति करणसाधनमिष्यतेऽनेनेति । तथाच यज्ञकरणसाधनभूतो मन्त्रो यजुरिति तदर्थः । ब्रह्मपरिवृढं शस्त्रमित्यर्थः । तदुभयात्मकं वचस्ते तुभ्यमुद्यतं भवतीत्यर्थमाह ॥

४. "क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्" इति नीतिविदां प्रवादात् ॥

१. ऋत्विक्स्तुतिपक्षे तु सायणोक्तमर्थान्तरमेतस्येति तत एव द्रष्टव्यमित्यनेन सूच्यते ॥

२. अहितोऽपि जयः कश्चिद्भवत्येव यथा महाभारते पाण्डवानां कुलक्षयफलकः ॥

३. सुखस्य वाहकमिति दुर्गः ॥

४. तथाचामरः । "आहावस्तु निपानं स्यादुपकूपजलाशये" इति ॥ "निपानमाहाव" (पा० ३-३-७४) इति निपातितः ॥ निपानमिति—निपतं पिबन्त्यस्मिन्नित्यधिकरणे ल्युट् (पा० ३-३-११७) ॥

अशनचक्रम् व्यापनचक्रम् कूपप्रान्तनिबद्धाश्मसदृशप्रहरणायुधवन्तं वा, अथवा असनचक्रम् ( असनानि क्षेपणानि चक्राणि आयुधविशेषा यत्र तम् ) इत्यमश-(स-)निशब्दस्याश्मशब्देन विनिमयः। **अंसत्रकोशम्** अंसत्राणि धनूंषि कवचानि वा कोशः कोशस्थानीयानि यत्र तम्। कोशोऽत्राङ्गरक्षकः कोशइव कोशः कूपप्रान्तबन्धश्च । **नृपाणम्** नरः योद्धारः पीयन्ते उदकवत् प्राणतः ( उत्क्रान्तप्राणा भवन्ति ) यत्र तम् "वा भावकरणयोः" (पा० ८-४-१०). इति णत्वमत्र बाहुलकात् ॥ ईदृशं कूपतुल्यम् सङ्ग्रामम् **सिञ्चता** उत्सिञ्चत । हे सैनिकाः। विश्वेषां देवानां प्रसादात्सर्वमेतत्कुरुतेत्यर्थः । सांहितिको दीर्घः ॥ १ ॥

एवमत्र सङ्ग्रामोपमासम्बन्धादुत्सेचनसम्बन्धाच्च "अंसत्रशब्देन धनुः कवचं वोच्यत इत्युपपद्यते ॥

तथाचास्य भाष्यम्—

**प्रीणीताश्वान् सुहितं जयथ जयनं वो हितमस्तु। स्वस्तिवाहनं रथं कुरुध्वम् । द्रोणाहावं द्रोणं द्रुममयं भवति । आहाव आह्वानात् । आवह आवहनात् । अवतोऽवातितो महान्भवति । अश्मचक्रमशनचक्रम् । असनचक्रमिति वा । अंसत्रकोशमंसत्राणि वः कोशस्थानीयानि सन्तु । कोशः कुष्णातेः । विकुषितो भवति । अयमपीतरः कोश एतस्मादेव । सञ्चय आचितमात्रो महान्भवति । सिञ्चत नृपाणं नरपाणम् । कूपकर्मणा सङ्ग्राममुपमिमीते ॥**

इति । अत्र **आहाव आह्वानात्** इत्येतयथावस्थितस्यैव मन्त्रपदस्य निर्वचनम् आह्वयतेऽस्मिन्पाययितेत्याहावः । अप् (पा० ३-३-७४) अधिकरणे । इदं लभ्यत्—**आवह आवहनात्** इति । अस्यैव वर्णविपर्ययेणाह्वः कूपः । ओह्यतेऽस्मिन्नुदकमिति । अधिकरण एवात्रापि अप् "ग्रहवृदृनिश्चिगमश्चे"ति (पा० ३-३-५८) धाद्वहः । संग्रहमयमभिप्रैति (यास्कः) **अवतः** कूपः स हि खन्यमानः **अव** अवाङ् (अधस्तात्) **अतितः** गतः सन् **महा**न्गम्भीरतमो **भवति** । अथ प्रकृतम् **अंसत्रकोशम्** इति विगृह्याशास्ते **सन्तु** इति । उक्तरूपं सङ्ग्रामं सिञ्चत (उत्सिञ्चत) इति वदता (तावद्भिर्गुणैः कूपरूपं तं विशेषयतु । मन्त्रदृशा धर्मिपारतन्त्र्येण तावतस्तस्य गुणा आशंसिता इत्युक्तं भवति ॥

अथ कोशशब्दं विग्रहप्रसक्तं निर्ब्रवीति—

**कोशः कुष्णातेः** इति । "कुश निष्कर्षे" (क्र्या० प०) ततः "अकर्तरि च कारके" (पा० ३-३-१९) इति कर्मणि घञ् । निष्कर्षो निष्कोषणं तदन्तर्गतस्य बहिर्निःसारणम् । अयं तालव्यान्तोऽपि । तथाचोष्मविवेकः "विष्वक्सेनोमेषकोषविषादौ चे"ति ॥ कोशोऽत्र कूपप्रान्तनिबद्धाश्ममयमावरणम् । कोश इव कोशः । तथाच मेदिनी "कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोशेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे" इति ॥ अत्र पात्रपदेन कूपमध्यप्रान्तद्वयमिति केचिन्मन्यन्ते । तथाच विश्वः "पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे" इति ॥ तथाच **विकुषितः** विविधं कुषितः निष्कोषितः स **भवति** । अत एव चर्मकोश इति दैतिरुच्यते । अन्तःशुषिरत्वात् ॥ **अयमपीतरः** द्रव्यकोशः **कोश** इत्युच्यते **एतस्मादेव** कुष्णातेः । अयमेव **सञ्चयकोशः । आचितमात्रः** मात्राभिर्वित्तैराचितो व्याप्तः पूर्णो वा, राजदन्तादि-(पा० २-२-३१)-त्वादाचितस्य पूर्वप्रयोगः । **भवति** महत्वात् ॥ **सिञ्चत** उत्सिञ्चत । एवमत्रै **कूपकर्मणा** उक्तरूपेण (तद्गुणसंबन्धेन)

१. व्यापयन्ति हि तत्र क्षिप्तानि परचक्राणि योद्धृनभितः । तथाच "अशू व्याप्तौ" (स्वा० आ०) ल्युट् (पा० ३-१-१३४)। सायणस्तु—व्याप्तचरणवन्तं व्याप्तक्रमणवन्तं वा, चक्रं चक्रतेर्वा. चरतेर्वा. क्रमतेर्वा. क्रमयतेर्वेति निरुक्तम् (४ अ० १७ सू०) इत्युक्तवान् ॥

२. "असु क्षेपणे" (दि० प०) ततः कर्मणि ल्युट् "कर्मणि चे"-(पा० ३-३-११६)-ति योगविभागात् । अस्यन्त इत्यसनानि ।

३. "कोशः खड्गपिधानकम्" इत्यजयः । तत्साधर्म्यात् (रक्षणसाधर्म्यात्) परचक्रं कूपप्रान्तबन्धश्च कोश इत्यर्थः ॥ प्रान्तमत्राऽन्तरं (मध्यमं) बोध्यं यद्बन्धनं पक्वमृदाऽश्मना वा सर्वतो मृत्पाताभावाय शिल्पिभिः क्रियते कोष्ठमिति च प्रसिद्धं लोके ॥

४. मार्यन्त इति यावत् । अयमर्थः "आपोमयः प्राण" इति श्रुतेः प्राणानामुदकरूपत्वम् । मरणं च प्राणोत्क्रमः प्रसिद्ध एव । तथाच नृप्राणपानमेवात्र नृपाणम् । प्राणत इति सार्वविभक्तिकस्तसिः (पा० ५-४-४४) प्राणैरित्यर्थः । अवच्छेदकत्वं तृतीयार्थः । "प्रकृत्यादिभ्यश्च तृतीया (पा० २-३-१८ वा०) "प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् । अवच्छेदकतामुद्रिप्रकारत्वादि शंसती"ति हरिः ॥

१. तथाच हैमः "आह्वः सङ्गरे कूपे" इति । इत्थञ्चाहावशब्देनात्राह्वोऽप्यनुस्मृत्य निरुक्तः । तत्र कूपार्थे आवहस्य वर्णविपर्ययो बोध्यः । संगरे तु "आङि युद्धे" (पा० ३-३-७३) इत्यप् संप्रसारणं, च आहूयन्ते योद्धारोऽस्मिन्निति । अधिकरण एव ॥ "ह्वेञ्स्पर्धायां शब्दे चेति (भ्वा० उ०) धातुः । आहावेऽप्ययमेव ॥

२. "दृतिश्चर्मपुटे मत्स्ये" इति मेदिनी ॥ "दृतिश्चर्ममयं भाण्डम्" इति रमसश्च ॥

३. तथाच मेदिनी "मात्राकर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कात्स्न्र्येऽवधारणे" इति ॥

४. असिन्नुत्तरार्धचें ॥

**सङ्ग्राममुपमिमीते** यथा कथञ्चित्साधर्म्यमनुसृत्य मन्त्रदृगित्यर्थः ॥

अथ **काकुदम्** ( ७६ ) इत्यनवगतमवगमयति—

## काकुदं तात्वित्याचक्षते, जिह्वा कोकुवा सास्मिन्धीयते ॥

अत्र **तालु** इत्यभिधेयवचनम् । **जिह्वाकोकुवा** इत्युच्यते **सा** हि कोकुवाख्या जिह्वा **अस्मिन्** तालुनि वर्णाभिव्यक्त्यर्थं मुहुर्मुहुः[1] **धीयते** तदेतत् कोकुवाधानं सद्वर्णव्यापत्त्यादिना ( निरुक्तलक्षणेन ) काकुदं ताल्वुच्यते ॥

अथ कथम्—

## जिह्वा कोकुवा ? ॥

अत्रोच्यते—

## कोकूयमाना वर्णान्नुदतीति वा ।

तथाच शब्दानुकरणनिबन्धनं जिह्वायाः कोकुवात्वम् । **कोकूयमाना** तथा तथाविधं शब्दं कुर्वाणा तालुनि **वर्णान्नुदति** प्रेरयतीति कोकुवां नुदत्काकुदं स्यात् ॥ तदित्थं कोकूयतेर्नुदेश्च काकुदमिति द्विधातुजं रूपम् ॥

अथ कथं ज्ञायते शब्दानुकरणनिबन्धनं जिह्वायाः कोकुवात्वमिति ? तत्रोच्यते—

## कोकूयतेर्वा स्याच्छब्दकर्मणः ॥

तथाच कौतेः शब्दकर्मणः ( अ० प० ) यङि "पचाद्यचि" ( पा० ३–१–१३४ ) "यङोऽचिच" ( पा० २–४–७४ ) इति यङ्लुकि द्विर्वचनादौ "नधातुलोप आर्धधातुके" ( पा० १–१–४ ) इति गुणनिषेधे उवङ् ( पा० ६–४–७७ ) कोकूयते पुनःपुनः शब्दं करोतीति कोकुवा ॥

अथ जिह्वां निर्वक्ति—

## जिह्वा जोहुवा ।

पुनः पुनरहरहर्हूयतेऽस्यामन्नमिति बाहुलकादधिकरणे जुहोतेर्यङन्तात् पचाद्यचि ( पा० ३–१–१३४ ) अपि ( पा० ३–३–५७ ) वा । बाहुलकाद्यङ्लुकि कोकुवावत् **जोहुवा** सती **जिह्वा** । "शेव–यह्व–जिह्वा०" ( उ० १–१५२ ) इति निपतिता । आह्वयत्यनयेति वा ॥

अथ तालुशब्दं निर्ब्रवीति—

## तालु तरतेस्तीर्णतममङ्गं, लततेर्वा स्यात् (लम्बकर्मणो ) विपरीताद् यथातलं, लतेत्यविपर्ययः ॥ ८ ॥ ( २६ )

**तरतेः** तॄ प्लवनतरणयोरिति धातोः ( भ्वा० प० ) "त्रोरश्चलः" ( उ० १–५ ) इति गुणकरणे । वृद्धिः ( पा० ७–२–११६ ) तरन्त्यनेन वर्णा इति तालु । **तीर्णतममङ्गम्** । इतराङ्गेभ्य उत्तीर्णतममुपरिगतं सर्वतो भवतीति वर्णा अप्यनेनैव तरन्ति । पूर्वं तालुनि वायुरभिहन्यतेयोऽसौ शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना[1] नाभिप्रदेशात्प्रेरितो भवति । ततोऽसौ वेगान्मूर्धपर्यन्तं गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्योक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति इत्युक्तमभियुक्तैः[2] ॥ **लततेर्लवनार्थस्य**[3] ( भ्वा० प० ) **विपरीतात्** आद्यन्तविपर्ययेण **यथा तलम्** इति । समानजातीयशब्दोपप्रदर्शनं दृष्टप्रतीत्यर्थम् । अस्यैव लततेर्लवनार्थस्य **लता** इत्येतच्छब्दरूपम् **अविपर्ययः** । अविपर्ययेण[4] भवतीत्यर्थः ॥ ८ ॥

अथात्र ( काकुदशब्दे ) निगममुदाहरति—

## सुदेवो असि वरुण यस्य ते सप्तसिन्धवः ॥ अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥ १ ॥

( ऋ० सं० ६–५–७ )

**सुदेव इति** ॥ प्रियमेधस आर्षम् । अनुष्टुप् । **हे वरुण !** जलाभिमानिन्देव ! त्वं **सुदेवोऽसि** शोभनस्त्वमसि देवः । **यस्य** सुदेवस्य **ते** तव **काकुदम्** तालु ( कर्म ) समुद्राख्यम् **अनु**[5] लक्षीकृत्य **सप्त सिन्धवः** स्रोतांसि ( नद्यो गङ्गाद्याः[6] ) **क्षरन्ति**

---

१. अभीक्ष्णं तथाविधम् "नित्यवीप्सयो"–( पा० ८–१–४ ) रिति द्वित्वम् ॥

१. इच्छयोत्पन्नो यत्नो यस्मिन्मनसि तेनाभिहतेनाग्निनेत्यर्थः । तथाच विवक्षयेत्येतद्यत्नस्याप्युपलक्षणम् ॥

२. तथाचोक्तं पाणिनीयशिक्षायाम् । "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ + + + सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते" इति ॥ व्याख्यातमेतदधस्तात् ( पृ. १३ पं. २७ ) ॥

३. भ्वादेराकृतिगणत्वात् । अत्र मूले "लम्बकर्मणः" इति पाठो मुद्रितपुस्तके क्वचिद्दृश्यते तेन लंबनार्थस्य इति व्याख्यानमपि "सुषिरामिवेति" श्रुत्यर्थविरोधादुपेक्ष्यम् । तस्यान्तश्छिद्रामिति व्याख्यानं सर्वाभिमतं, तेन च छेदनार्थं एव तालुशब्दघटकलतधातोरुपपन्नो भवति । ( लवनकर्मण इति साधीयान् पाठः ) "तल प्रतिष्ठायामि"ति ( चु० पु० ) धातोर्मृगय्वादित्वा–( उ० १–३७ ) दुप्रत्यये णिच्युपधावृद्धौ णिलोपे च तालुशब्दस्तालयति प्रतिष्ठापति नाभिप्रदेशात्प्रेरितं वायुमित्यर्थेऽपि व्याख्यात इत्यन्यत् ॥

४. बहुव्रीहिफलितार्थकथनमिदम् ॥

५. अनुर्लक्षणे । "अनुर्हीने सहार्थे च पश्चात्सादृश्ययोरपि । आयामेऽपि समीपे च लक्षणादावनुक्रमे" इति विश्वः ॥

६. "गङ्गा च यमुना चैव गोदावरी सरस्वती । नर्मदासिन्धुकावेर्यौ सप्तनद्योऽमृतावहाः" इत्यभियुक्तोक्तेः । दुर्गस्तु–सप्तसिन्धवः–अन्तरिक्षनद्यो वा बहुलाह्वेत्येवमाद्याः "अश्वानामासि, तितुत्रानामासि, अभ्रपत्नीनामासि, मेघपत्नीनामासि, वर्षयन्तीनामासि, पुरस्तादरुन्धानामासि" इत्यादि । सप्तैताः सिन्धुनद्य उच्यन्ते । समुद्रा एव वा सप्त सिन्धुशब्देनोच्येरन् इत्याह ॥

स्रवन्ति । (सर्वदा जिह्वायाम्) । अत्र दृष्टान्तः सूर्म्य००मिव यथा सूर्मि (कल्याणोर्मि) स्रोतः सुषिरं नगरोदकनिःसरणमार्गम् अनुक्षरतीति वचनविपरिणतमन्वेति ॥ एष च भाष्यकारीयो मन्त्रार्थः । अत्रार्थे सूर्म्य सुषिरामिति अम्भावश्चाप् चार्षः । दुर्गस्तु सुखिरामिति नगरोदकनिस्सरणभूमिमित्येवं स्त्रीत्वं समर्थयन्नपि सूर्म्यमिति यथावदवस्थापयतिस्म (न किञ्चिद्याचख्यौ) सायणस्तु–यथासूर्यं प्रति रश्मिजालं तद्वदित्येवं व्याख्यत् । महाभाष्यकारस्तु–"यथा शोभनामूर्मि सुषिरामभिरन्तः प्रविश्य दहति एवं ते सप्त सिन्धवःसप्तविभक्तयस्त्वाल्वनुक्षरन्ति तेनासि सत्यदेवः सत्यदेवः स्यामित्यध्येयं व्याकरणमि"त्येवं व्याकरणपरतया व्याचख्यौ ॥ वयं तु प्रतीमः–सूर्मी जलनिर्गमननलिका लौहमयी "सूर्मी स्थूणायःप्रतिमे" त्यमराभिधानात् । तत्र शोभना ऊर्मिरिति कर्मधारयः । बहुव्रीहिर्वा । "सर्वतोऽक्तिन्नर्थात्" (पा० ४–१–१५ ग० वा०) इति, गौरादित्वात् (पा० ४–१–४१) वा ङीष् । ऊर्मिरिति "अर्त्तेरुच्च" (उ० ४–४४) इति मिरर्त्तेरुदादेशे रपरे "हलिचे–" (पा० ८–२–७७)–ति दीर्घः । "ऊर्मिः पीडाजवोत्कण्ठाभङ्गप्राकाश्यवीचिषु । वस्त्रसंकोचलेखायाम्" इति हैमः । "अमिपूर्वः" (पा० ६–१–१०७) इत्यत्र "वा छन्दसीति पूर्वसूत्रानुवृत्तेर्वाक्यभेदेन सम्बन्धात्पूर्वरूपाभावे यण् ॥ शर्मी च शम्यं चेतिवत् ॥ तथाच सुषिरामित्यस्यान्तश्छिद्रामित्यर्थः । "शुष शोषणे" (दि० प०) "इगुपधात्कित्" (उ० ४–११८) इति इन्प्रत्यये शुषिरस्यास्तीति "उषसुषि०" (५–२–१०७) इति रः । "शुषिरं वंशादि वाद्ये विवरेऽपि नपुंसकम् । शुषिरं न स्त्रियां गर्त्ते वह्नौरन्ध्रान्विते त्रिषु" इतिमेदिन्याममरेऽपि तालव्यादिरुक्तोऽपि "विवराभिधायिनि शुषिरादौ शास्त्रेषु दन्त्यतालव्या–"वित्यूष्मविवेकाद्दन्त्यादित्वमपि । स्त्रीत्वन्तु सूर्म्यामन्वयानुरोधाच्छ्रुतेश्च । अमरे स्थूणाऽयःप्रतिमेत्येकं पदं स्थूणाऽऽकारायःप्रतिकृतिरित्यर्थः ॥ २ ॥

एवञ्च यथाऽपः सुषिरामन्तश्छिद्रां सूर्मि स्थूणाकारामयोमयीं नगरजलनिर्गमननलिकामनुक्षरन्ति सर्वतः समश्नुवते (सर्वस्मात्प्रदेशादेकीभूय व्याप्नुवन्ति) तन्मार्गेण (१) वहिरभिनिष्क्रामन्त्येवन्ते सप्तसिन्धवस्त्वाल्वनुक्षरन्ति । अत्र सिन्धव इव सिन्धवो महावगाहाः (सर्वशास्त्रमभितोऽश्नुवानाः) सप्तविभक्तयः प्रथमाद्यास्ते ताल्वतोऽनुक्षरन्ति वर्णभावमापन्ना उच्चयत्नसहायेन नाभिप्रदेशात्प्रेरितेन वायुना वर्णोच्चिचारयिषयेत्येवं महाभाष्यकारीयोऽप्यर्थोऽत्रानुगमयितव्य इति ॥ एतेन वरुणस्य भाग्यवत्त्वं महावैयाकरणत्वञ्च सुदेवत्वेन सुस्तुतं भवति ॥

१. परमनुक्षरन्तीत्यस्य सर्वतः समश्नुवते इत्यर्थमाह ॥

२. श्रुतौ लिङ्गव्यत्ययो "व्यत्ययो बहुलम्" (पा० ३–१–८५) इति सूत्रमुपादाय "सुप्तिङुपग्रहलिङ्गनराणाम्" इति कारिकयां व्याख्यातोऽन्यत्र (          ) द्रष्टव्यः ॥

३. "स्थूणास्तम्भेऽपि वेश्मनः" इत्यमराच्चस्वकारा यष्टिः स्थूणा ॥

अत्र प्रक्षिप्तोभाष्यपाठः—

**(सुदेवस्त्वं कल्याणदानो यस्य तव देव सप्तसिन्धवः । प्राणायानुक्षरन्ति काकुदं सूर्म्यं सुषिरामिवेत्यपि निगमो भवति) ॥ इति ॥**

अथ मन्त्रभाष्यम्—

**सुदेवस्त्वं कल्याणदेवः । कमनीयदेवो वा भवति वरुणः । यस्य ते सप्त सिन्धवः । सिन्धुः स्रवणात् । यस्य ते सप्त स्रोतांसि, तानि ते काकुदमनुक्षरन्ति, सूर्मि कल्याणोर्मि स्रोतः सुषिरमनुयथा ॥**

अत्र सिन्धुः स्रवणादिति सिन्धुनामनिर्वचनम्–"स्यन्दू प्रस्रवणे" (भ्वा० आ०) इतिधातोः "स्यन्देःसंप्रसारणं धश्च" इत्युप्रत्ययः । स्यन्दतीति सिन्धुर्नदी (निघं० १–१३–२१) "सिन्धुः समुद्रे नद्यां च नदे देशभेदानयोः" इति विश्वः । व्याख्यातमन्यन्मन्त्रार्थे ॥

अथ वीरिटम् (७७) इत्यनवगतत्वं पक्षेण चानेकार्थमित्यवगमयति—

**बीरिटं तैटीकिरन्तरिक्षमेवमाह । पूर्वं वयतेरुत्तरमिरतेर्वयांसीरन्त्यस्मिन्भांसि वा, तदेतदेतस्यामृच्युदाहरन्त्यपि निगमो भवति ॥ ९ ॥ (२७)**

बीरिटम् इति अन्तरिक्षम् एवं तैटीकिराचार्य आह । तत्र पूर्वं विरिति वयतेः वेञ्धातोः (भ्वा० उ०) "वेञो डित्" (उ० ४–७२) इतीनः डित्वाट्टिलोपे, तस्य बहुवचने वयः पक्षिणः "विविष्किरपतत्रय" इति पक्षिपर्यायेऽमरः । उत्तरम् इरिटम् इति इरतेः गत्यर्थस्य (तु० प०) बाहुलकादिटक्प्रत्यये कित्वाद्गुणाभावः । तथाच पर्यायेण विगृह्यावगमयति–वयांसि इरन्त्यस्मिन् इति । वयांसि (वयः) पक्षिणः "वयः पक्षिणि बाल्यादौ यौवने च नपुंसकमि–"ति मेदिनी । अथवा भांसि नक्षत्राणीरन्त्यस्मिन्निति बीटिरम्

१. वयधातोर्गत्यर्थत्वेऽपि पक्षान्तरमनुपदं स्फुटम् । वेञ् धातोस्तन्तुसन्तानार्थत्वेऽपीह गत्यर्थत्वम् । अतएव विशब्दसाधने "वयतेर्डित्" इति शाकटायनसूत्रं स्वामिमुकुटावुपन्यास्तुः । "वातेर्डिच्चे"ति (उ० ४–१३४) शाकटायनः ॥

२. "सर्वधातुभ्य इन्" (उ० ४–११६) इति विहितस्येति स्वामिमुकुटौ । ईचेरिति दीक्षिताः ॥

३. यद्यपि तुदादौ इल इत्येव स्वप्नक्षेपणयोः पठितस्तथापि यास्कप्रामाण्यादिरतिरपि गत्यर्थः । रल्योर्वा सावर्ण्यमिति । धात्वर्थनिर्देशश्चोपलक्षण एव ॥

४. भासतेर्भावक्विबन्तस्यैव स्त्रीलिङ्गत्वं "स्त्रियां भाः करणे श्रुतौ" इति नानार्थरत्नमालायाम् ॥

अत्र भांश्शब्दस्य भासतेर्दीप्त्यर्थात् ( भ्वा० आ० ) कर्तृक्विबन्तस्य व्यादेशः। एवं पूर्वत्र वयतेर्गत्यर्थस्यापि ( भ्वा० आ० ) असुन्नन्तस्य ( वयश्शब्दस्य ) व्यादेशः सम्भवति। पूर्वत्रार्थेऽपि वस्य वः। सर्वोऽप्ययं पृषोदरादित्वात्॥ **तदेतत्** वीरिटस्यान्तरिक्षार्थत्वम्। **एतस्याम्** अनुपदं वक्ष्यमाणायाम्। **अपि अन्योऽपि निगमो भवति।** य इह ग्रन्थविस्तरभिया नोपन्यस्तः॥ ९॥ ( २७ )

**प्र॒वा॑वृजे सु॒प्र॒या ब॒र्हिरे॑षा॒मा वि॒श्पती॑व॒ बीरि॑टइयाते।**

**वि॒शाम॒क्तोरु॒षस॑ः पू॒र्वहू॑तौ वा॒युः पू॒षा स्व॒स्तये॑ नि॒युत्वा॑न्॥ २॥** ( ऋ० सं० ५–४–६ )

**प्रवावृज** इति। इदं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम्। **एषां** यजमानानां सम्बन्धि। **सुप्रयाः** सुप्रायणं–सुप्रगमनं (यत्सुखमभिगच्छन्ति देवताः प्रास्तीर्णे तस्मिंस्तथाविधं) "सुखमयान्नयुक्तमि"ति सायणः। **बर्हिः** कुशमयम्[1] **प्रवावृजे** प्रवव्रजे। प्रवृज्यते प्रस्तीर्यत इत्यर्थः। तुजादित्वादभ्यासस्य (पा० ६–१–७) दीर्घः। अथ **विश्पती** विशां प्रजानां ( मनुष्याणाम् ) "द्वौ विशौ वैश्यमनुजौ" इत्यमरः। पती पातारौ वा पालयितारौ[2] वा। **नियुत्वान्**[3] वायुः **पूषा** चेतीमौ **विशां** प्रजानाम् **स्वस्तये** स्वस्त्ययनाय ( कल्याणाय ) **अक्तोः**[4] रात्रेः (निघं० १–७–४) अपगमे **उषसः** "आगमनकाले" इति शेषः। **पूर्वहूतौ** पूर्वस्यामेवाभिहूतौ प्रथमे एवाह्वानकाले। **वीरिटे** अन्तरिक्षे[5]"वस्थितावि"ति शेषः। **आइयाते**।[6] आगच्छताम्। इवेत्यत्र पक्षे पादपूरण एव। "षष्ठीयुक्तश्छन्दसि वा" (पा० १–४–९) इत्यत्र वेति योगविभागा"त्सर्वे विधयश्छन्दसि विकल्प्यन्त" इति नात्र प्रकृत्येति[7] दीर्घः॥ अथवोपमार्थ एवेवशब्दस्तत्र पक्षे विशां मनुष्याणां, वीरिटे–गणे, वर्तमानौ ( तन्मध्यगतौ ) विश्पतीव–सर्वपती राजानौ यथा तद्वत्। अस्मिन्पक्षे विशामित्युभयत्र[1] सम्बध्यते॥ २॥

अन्तरिक्षेणैव हि देवता आगच्छन्तीति "बीरिटम् अन्तरिक्ष–"मित्युपपद्यते॥ यस्मिन्नपि पक्षे गणो बीरिटशब्देनोच्यते, तत्रापि विश्पती राजानौ सर्वदा गणमध्यगतावेवागच्छत इत्युपपद्यते एव सोऽर्थः॥

अथास्य भाष्यम्—

**प्रवृज्यते सुप्रायणं बर्हिरेषामेयाते, सर्वस्य पातारौ वा पालयितारौ वा, बीरिटमन्तरिक्षम्। भियो वा भासो वा ततिः। अपिवोपमार्थे स्यात्–सर्वपती इव राजानौ बीरिटे गणे मनुष्याणाम् रात्र्याविवासे, पूर्वस्यामभिहूतौ, वायुश्च। नियुत्वान्पूषा च। स्वस्त्ययनाय॥**

**प्रवृज्यत** इति। प्रवावृज इत्यस्यार्थे, विनिमयवशात् छान्दसो व्यत्ययोऽत्र शरणम्॥ **सुप्रायणम्** इति सुप्रया इत्यस्य।[2] तत्र यातेः प्रापणार्थादधिकरणेऽसुन्बाहुलकात् ( उ० ४–१८८ ) तत्पर्यायभूतं सुप्रायणमिति[3] अयतेर्गत्यर्थादधिकरणल्युडन्तम् ( पा० ३–३–११७ )। अथ बीरिटशब्दं निर्ब्रवीति–**भियो वा भासो वा ततिरिति**। ततिरिति भावेक्तिन् (पा० ३–३–९४) "अस्मिन्नस्ती"तिशेषः। एष चार्थनिर्देशस्तथाच भीरस्मिंस्तन्यत इति भीतननम् ल्युट् ( पा० ३–३–११७ ) निरालम्बत्वात्सर्व एवात्र बिभेति, तदेवं भीतननं सद्बीरिटमन्तरिक्षमुच्यते। अथवा भासोऽत्र नक्षत्रादीनां तन्यते तदेतद्भास्तननं सद्बीरिटमुच्यते। एवं गणाभिधानपक्षेऽपि यथासम्भवं योज्यम्। सर्वोऽप्ययं पृषोदरादित्वाद्बोध्यः। **विवासे** समासौ। **वायुश्चेति** चात्पूषा। तदाह–**नियुत्वान्पूषा** चेति। **स्वस्त्ययनाय** स्वस्ति कल्याणमीयते प्राप्यतेऽनेनेति वा। स्वस्ति कल्याणस्यायनाय प्राप्तये वा॥ तमेतन्निगमप्रसक्तं नियुत्वच्छब्दं निर्ब्रवीति—

**नियुत्वान् नियुतोऽस्याश्वाः॥**

**अश्वा** इत्येतदत्र स्त्रीलिङ्गम्। "वडवावाहनोवायु"रिति परिभाषणात्॥ "सन्ती"ति शेषः॥ तथाचास्त्यर्थेऽत्र मतुब्बोध्यः ( पा० ५–२–९४ )॥

अथ नियुतः कस्मादित्युच्यते—

**नियुतो नियमनात्। नियोजनाद्वा॥**

**नितरां यमनात् नियुतः।** तथाच निपूर्वा"द्यमु उपरमे" ( भ्वा० प० ) इत्यस्मात्कर्मणि उतिप्रत्ययः। ( उ० १–९१ )

१. कुशमुष्टिरिति केचित्॥

२. धात्वन्यत्वमर्थैकत्वम्। एतच्च यथाभाष्यव्याख्यानमिहोद्धृतम्॥

३. नियुतः वडवाः। वायोर्वाहनम् ( निघं० १–१५–१० ) तद्वान्॥

४. अक्तुरि"त्यञ्जूव्यक्तिम्रक्षणकान्तिगतिषु" ( रु० प० ) इति धातोः "षः किच्च" ( उ० १–६८ ) इति विधीयमानस्तुप्रत्ययः कित्त्वं च बाहुलकाद्भवति। "वाञ्जनृभ्यः क्तुः" इति क्तुरिति श्रीभोजः॥

५. क्रियाया आधारः कारकमधिकरणमिति पाणिनिस्वरसात्॥ एतच्च शेषपूरणं दुर्गोक्तिमनुसृत्य व्याख्यातम्। सायणस्तु–नात्र शेषयति॥

६. अत्र पदव्यत्यय आर्षः। इणत्र गत्यर्थोऽदादिस्ततो लेटः प्रथमपुरुषद्विवचनम्। यद्वा लडेव लेडर्थे। बाहुलकात्॥

७. "ईदूदेद्द्विवचनं प्रगृह्यम्"–( पा० १–१–११ ) इति प्राप्तप्रगृह्यसंज्ञया प्राप्तः प्रकृतिभावः ( पा० ६–१–१२५ ) अत्र न भवति॥

१. स्वस्तय इत्यत्र वीरिट इत्यत्र च॥

२. सुखेन प्रयात्यस्मिन्निति सुप्रयाः॥

३. सुखेन प्रकर्षेणायते समागच्छत्यस्मिन्निति सुप्रायणम्॥

टिलोपश्च बाहुलकात् ॥ नियम्यन्ते सारथिनेति नियुतः। अथ वा **नियोजनात्** नितरां रथे योजनात् **नियुतः**। तथाचोक्तमादिष्टोपजनेषु "नियुतो वायोः" इति। ( निघं० १–१५–१० ) अत एव विप्रकृष्टोऽपि नियुत्वच्छब्दो वायुशब्देनैव संयोजितो भाष्यकारेण ॥ न हि पूष्णो नियुद्भिः सम्बन्धोऽस्ति ॥

अथाच्छशब्दमवगमयति—

## अच्छाभेः। आप्तुमिति शाकपूणिः ॥

**अच्छ** (७८) इत्येष शब्दोऽ**भेः** अर्थे भवति। **अथाप्तुमिति** अनेन योऽर्थ उक्तो भवेत्स एवाच्छ इत्यनेनेत्येवं **शाकपूणि**राचार्यो "मन्यत" इति शेषः ॥

## परीं सीमिति व्याख्याताः ॥

**परि** (७९) **ईम्** (८०) **सीम्** (८१) **इति** एते शब्दा **व्याख्याताः** निपातोपसर्गप्रकरणे ( नि० १ अ० ) अनेकार्थत्वादिहोपन्यासः ( अनवगतप्रकरणे )

## एनमेनामस्या अस्येत्येतेन व्याख्यातम् ॥

**एनम्** (८२) **एनाम्** (८३) इति पदद्वयम् **अस्याः अस्य इत्येतेन** पदद्वयेन **व्याख्यातं** प्रतिलोमक्रमेण। ( नि० ४–२५ ) अनेकार्थत्वादेवेहोपन्यासः ॥

## सृणिरङ्कुशो भवति सरणात् ॥

**सृणिः** (८४) इत्यनवगतम् **अङ्कुशो भवती**त्यभिधेयवचनम्। **सरणात्** इति व्युत्पत्तिः। सर इति न्याय्यम्। सरतेर्गत्यर्थात् ( भ्वा० प० ) पचाद्यचि ( पा० ३–१–१३४ ) सरति गच्छत्यसौ हस्तिशिरसि अनया वा सरति हस्तीति करणेऽपि बाहुलकात् "सृवृभिभ्यां कित्" ( उ० ४–४८– ) इति निप्रत्यये सृणिः। "अङ्कुशोऽस्त्री सृणिः स्त्रिया"मित्यमरः ॥

अथ पर्यायप्रसक्तमङ्कुशं निर्वक्ति—

## अङ्कुशोऽञ्चतेराकुचितो भवतीति वा ॥

**अञ्चतेः** "अञ्चु गतिपूजनयोः" ( भ्वा० प० ) इति धातोः "सानसिवर्णसि" ( उ० ४–१०६ ) इत्यादिना निपातितः **अङ्कुशः**। अथवा **आकुचितो भवतीति अङ्कुशः** "कुच संपर्चनकौटिल्य–" ( भ्वा० प० ) इति धातोराङुपसृष्टस्यैव वा निपातः। उपसर्गस्य द्योतकतया धातुत एव तदर्थप्रतीतेः। अञ्चतेरङ्कुश इत्यमरटीकायाम् ॥

अत्रार्थे निगममुपन्यस्यति—

"नेदीय इत्सृण्यः पक्वमेयात् ॥"
( य० वा० सं० १२–६८ )

## इत्यपि निगमो भवति ॥

**नेदीय इति** ॥ अस्य "युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो" इत्यादिः। बुधस्येयमार्षं त्रिष्टुप् वैश्वदेवी ॥ ऋत्विक्स्तुतिर्वा, अग्नौ मध्यमदात्रयोजने सौरानुमन्त्रणे विनियुक्ता ॥ भो देवाः योजयितारः। यूयं **सीरा** सीराणि "शेश्छन्दसि बहुलम्" ( पा० ६–१–७० ) इति शेर्लोपः। हलानि। यद्यपि "लाङ्गलं हलं। गोदारणं च सीरः" इत्यमरे। "हलतिग्मकरौ सीरा"विति रभसे च सीरः पुंस्येव पठितस्तथापीह हलानीति विशेष्यमनुसृत्यार्थविज्ञाने नपुंसकमुपात्तम्। बहुलं हि वेदे लिङ्गव्यत्ययो दृष्टः। एवमग्रेऽपि **युनक्त** युङ्क्त "श्नसोरल्लोपः" ( पा० ६–४–१११ ) इत्यस्याभावो बाहुलकात्। योजयत **वितनुध्वं** वितनुत विस्तारयत **च युगा** युगानि एतानि। शम्यायोक्त्रादिभिः। ततः **कृते** कर्षणेन संस्कृते **इह** अस्मिन् **योनौ** क्षेत्रे ( उपलक्षणविधयैतत् ) **बीजम्** व्रीह्यादिकं **वपत** यथा **गिरा** वाचा यत्प्रार्थयामस्तत् **श्रुष्टिः** क्षिप्रमेव ( निघं० ४–३–५० ) **असत्** भवेत्। किं प्रार्थयामः? **सभराः** अतिफलभारवत्यः एताः स्युरोषधयः **नः** अस्माकम् इति। किञ्च **नेदीय इत्सृण्यः** सृण्याः। विभक्तेराटो ह्रस्व आर्षः। अङ्कुशादपि नेदीयोऽन्तिकतमम्। यावति प्रदेशेऽवस्थितं व्रीह्याद्यङ्कुश आक्रष्टुं शक्नोति ततोऽपि नेदीयोऽत्र **पक्वम्** व्रीह्यादिधान्यम् **एयात्** आगच्छेदस्मान्प्रति। तथा शीघ्रं बहु च वपतेत्यर्थः ॥ ६८ ॥

एवमत्र नेदीय इत्यनेन सम्बन्धात् "सृणिरङ्कुशो भवती"त्युपपद्यते ॥

तथाच भाष्यम्—

## अन्तिकतममङ्कुशादायात्। पक्वमौषधमागच्छत्वित्यागच्छत्विति ॥ १० ॥ (२८)

इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे नैग. का. पञ्चमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ ५ ॥ ४ ॥

इति ॥ अन्ये तु ब्रुवते नियमवाक्ये—सृणिर्दात्रमेव। तथाचायमर्थः। तथा वपत यथा प्राग्दात्राकर्षणात् मुष्टिः पूर्येत। अन्ति-

---

१. आदिष्टमुपदिष्टमुपयोजनमुपयोगो येषां तान्यादिष्टोपजनानि। तथाच निरुक्तम् "दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते" इति ( २ अ० २८ सू० ) ॥

१. युगशब्दे। सोऽपि हि "यानाद्यङ्गे युगः पुंसी"—त्यमरेण पुंस्येवाभिहितः। मेदिन्यामपि "युगो रथे हलाद्यङ्गे" इत्युक्तम् ॥

२. "भगं योनिर्द्वयो"—रित्यमराभिधानेनास्य सरमन्दिरार्थत्वेऽपीह स्थानोपलक्षणेन क्षेत्रमुक्तम् ॥

३. तथाच महीधरः हे कर्षकाः! यूयं सीराणि हलानि युनक्त युङ्क्त ( योजयत ) युगा—युगानि वितनुध्वं शम्यायोक्त्रादिभिर्विस्तारयत। ततः कृते कर्षणेन संस्कृते इहास्मिन्योनौ स्थाने बीजं व्रीह्यादिकं वपत। कया? गिरा। "या ओषधी"रित्यादिकया ( कं० ७५ ) वेदमन्त्रवाचा। चकाराच्चमसेन च। किं च "वाग्वै गीरन्नं श्रुष्टिः" (श० ब्रा० ७–२–२–५) इति श्रुतेः। श्रुष्टिरन्नजातिर्व्रीह्यादिकाः ( जात्येकवचनं सन्ध्यभाव आर्षः ) सभरा—भरसा फलपुष्पा सह वर्तमानाः। भूयोऽस्तु नः प्रत्ययः। पुष्टा असत्—अस्तु "इतश्च लोपः परस्मैपदेषु" ( पा० ३–४–

कतमं( सन्निकृष्टतम )मौषधं पक्वम् आगच्छेत् । इत्येवं युष्माभिरुक्ते सति एतद्वयमाशास्महे पक्वमौषधमागच्छतु । इति ॥ आगच्छतु इति पदाभ्यासोऽध्यायसमाप्तिसूचकः ॥ १० ॥

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ पञ्चमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ ५ ॥ ४ ॥ ॐ ॥

---

## अथ षष्ठाध्यायस्य प्रथमः पादः ॥

अथ **आशुशुक्षणिः** (१) इत्येतदनवगतमवगमयन्निगममेव तावदुपन्यस्यति—

**त्वम॑ग्ने॒ द्युभि॒स्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑ । त्वं वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वं नृ॒णां नृ॑पते जायसे॒ शुचिः॑ ॥ १ ॥**

( ऋ० सं० २–५–१७ )

**त्वमग्न** इति ॥ गृत्समदस्येयमार्षम् । आग्नेयी जगती । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन् **अग्ने !** अग्रणीत्वादिगुणविशिष्ट ! **त्वं द्युभिः** द्योतनात्मकैरहोभिः ( यागदिवसैः ) ( निरु० १–६ ) पौर्णमास्यादिभिः "पौर्णमास्याममावास्यायां वाऽऽदधीते"त्युक्तेः **नृणां** ऋत्विग्भिर्मथ्यमानः । व्यत्ययेन षष्ठी (पा० ३–१–८५) **जायसे** यागार्थं मन्थनेनोत्पद्यस इत्यर्थः । यद्वा–तत्तद्यागदिवसैः सहितो नृणामर्थे जायसे, तत्तद्यागदिवसेषु प्रसिद्धो भवसीत्यर्थः । अत्राविर्भाव एवोत्पत्तिः । तथा **त्वम् आशुशुक्षणिः** । आशुशु–अतिशीघ्रं क्षणोषि हिनस्सि शत्रून् इत्याशुशुक्षणिरसि । अत्राशु शु इति क्षिप्रार्थकद्वयं समुच्चित्यातिक्षिप्रार्थकं भवति, तस्मिंश्चोपपदे क्षणोतेर्हिंसार्थादिन् ( उ० ४–११४ ) प्रत्ययः । हे **नृपते !** नृणां मनुष्याणां ( यद्वा नृणां विशेषेण ) पालयितः ! **त्वम् अद्भ्यः** वृष्ट्युदकेभ्यः वैद्युतरूपेण, समुद्रोदकेभ्यो वा वाडवरूपेण, जायसे इत्येवोत्तरोत्तरमभिसंबध्यते । **त्वम् अश्मनः** पाषाणात् **परि** सर्वतः ( इतरेतराभिघातात् ) जायसे । यद्वा–अश्मनो मेघात् ( निघं० १–१०–८ ) परि सर्वतोऽन्तरिक्षे निर्घातरूपेण जायसे । "यो अश्मनोरन्तरग्निं परि जजाने"ति हि मन्त्रान्तरम् ( ऋ० सं० २–६–६–... ) त्वं **वनेभ्यः** वृक्षादिसमूहेभ्यः दावरूपेण, **त्वम् ओषधीभ्यः** व्रीह्यादिभ्यः । "ओषध्यः फलपाकान्ताः" इत्यमरः । वैश्वानररूपेण, एवं महानुभावस्त्वं मथनेनोत्पन्नः सन्त्सर्वात्मको भवसीत्यर्थः । **शुचिः** दीप्त एव जायसे । यद्वा शुचिरादित्यरूपो जायसे अभिव्यज्यस इत्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**त्वमग्ने द्युभिरहोभिस्त्वमाशुशुक्षणिराशु इति च शु इति च क्षिप्रनामनी भवतः । क्षणिरुत्तरः क्षणोतेः । सनोतेर्वा आशु शुचा क्षणोतीति वा सनोतीति वा ॥ शुक् शोचतेः ॥**

अथात्राशुशुक्षणिपदं निराह—**आशु इति च शु इति च** एते **क्षिप्रनामनी भवतः** । (निघं० २–१५–१६–१५) शु–इत्येतदत्र प्रासङ्गिकमन्यत्रोपकरिष्यतीति । तथा "शुनो वायुः, शु इत्यन्तरिक्षे" इत्येवमादौ ॥ "आशुशुक्षणि–" रित्येतेषां पञ्चानामक्षराणां मध्ये आद्यं तावदक्षरद्वयं क्षिप्रनाम, अधुना शु इत्येतत् तृतीयमक्षरमतिक्रम्य–उत्तरमक्षरद्वयं निराह–**क्षणिः** इत्येष द्व्यक्षरः शब्दः । **उत्तरः** स हि **क्षणोते**र्धातोः ( त० उ० ) हिंसार्थस्य । अथवा **सनोतेः** ( त० उ० ) सम्भंजनार्थस्य । मध्यमं तु शु इत्येतदक्षरं शुचेर्दीप्त्यर्थस्य ( भ्वा० प० ) डुप्रत्यये इति वक्ष्यते । तथाचायमर्थः— **आशु ००० ति वा** ॥ आशु शीघ्रं शुचा दीप्त्या क्षणोति हिनस्तीत्याशुशुक्षणिरग्निः । यद्वा आशु शुचा सनोति सम्भजति ( संसेवते ) इत्याशुशुक्षणिरग्निः । इत्येवं क्षणोतेः सनोतेश्च विकल्पः ॥ अथ यथोक्तार्थतृतीयं शु इत्येतदक्षरं निराह **शुक् शोचतेः** इति । अत्र शुगिति विग्रहप्रसक्तमुक्तं तथाच शुगर्थकं शु इति शोचतेर्दीप्त्यर्थस्य डुप्रत्यय इत्यर्थः ॥ एवं तावदेको निर्वचनप्रकारोऽत्र ( आशुशुक्षणिपदे ) । अथापरः परिदर्श्यते—

**पञ्चम्यर्थे वा प्रथमा । तथाहि वाक्यसंयोगः ॥**

अथवा **पञ्चम्यर्थे** इयमाशुशुक्षणिरितिपदे **प्रथमा** विभक्तिः । अथ कथमयं विपरिणामः ? तत्राह–**तथाहीति** ॥ तेन प्रकारेण हि ( पञ्चम्यन्तत्वेन ) विपरिणामे क्रियमाणे उत्तरवाक्यैः पञ्चम्यन्तपदघटितैः समं ( तुल्यरूपेण ) योगो भवति । तथाच–विपरिणतेऽर्थं सङ्गमयति—

**आ इत्याकार उपसर्गः पुरस्तात् । चिकीर्षितज उत्तरः ॥ आ शुशोचयिषुरिति ॥**

---

९७ ) इतीकारलोपेऽडागमेऽसदिति रूपम् । पक्वं धान्यं नेदीय- इदतिशयेनान्तिकमेव । इदित्येवार्थे । अत्यल्पकालमेव । सृण्यः– सृण्या ( विभक्तिव्यत्यय आर्षः ) लवनसाधनेन दात्रेण लूनमिति शेषः । छिन्नं सत् नोऽस्मान्प्रति आ-इयात्=आगच्छतु । अल्पकालेन पक्वमसदृहमागच्छतु इत्यर्थः ॥ अत्र नेदीय इति "अन्तिकबाढयोर्नेदसाधौ" (पा० ७–५–३–६३) इति अन्तिकशब्दस्य नेदादेशोऽतिशयार्थे चात्रेयसुन् (पा० ५–३–५८) तस्मिंष्टिलोपः (पा० ६–४–१५५)॥

१. सायणस्तु–हे नृणां नृपते ! नृणां मनुष्याणां मध्ये ये नरो यष्टारः सन्ति तेषां विशेषेण पालयितः ! यद्वोभाभ्यां पदाभ्यां बहुत्वं नित्यस्वामित्वं च प्रतिपाद्यते, सर्वेषामपि नराणां नित्यपालकेत्यर्थः ॥

१. यद्यप्ययं दानार्थे एव गणे पठितस्तथाप्यनेकार्थत्वाद्धातूनामिह संभजनेऽ( संसेवनेऽ)–पि प्रयुक्तः ॥ दानार्थेऽपि आशु शीघ्रं शुचं शोकं ददाति शत्रुभ्य इत्याशुशुक्षणिः यद्वा शुचेः सन्नन्तस्यैव छान्दसं रूपं सर्वतो दीप्यमानो भवसीत्यर्थः ॥

अयमर्थः । आशुशुक्षणिपदे **पुरस्तात्**–प्रथममुच्चरितः **आ–इति आकारः** एष तावत् **उपसर्गः** । यः पुनरेष–शुशुक्षणिरिति **उत्तरः** अनन्तरश्चतुरक्षरः । शब्दः एष चिकीर्षितजः चिकीर्षितादर्थाज्जातः । इच्छार्थ–सन्नन्तज इत्यर्थः । तथाच योऽर्थोऽभिनिष्पन्नस्तमाह आ–दिदीपयिषुरिति यदुच्यते स एव **आशुशोचयिषुरिति** सन्ना–शुशुक्षणिर्यजमानस्तस्मादाशुशुक्षणेस्त्वं जायस इत्येवं यथोत्तरं पञ्चम्यन्तवाक्यैरभिसम्बन्धस्तुल्यरूपो भवतीति साधुरयमर्थः ।

अथ मन्त्रस्यान्तिमं पदं व्याचष्टे—

## शुचिः शोचतेर्ज्वलतिकर्मणः ॥

**ज्वलतिकर्मणः** । दीप्तार्थात् **शोचतेः** । "शुच् दीप्तावि"ति (भ्वा०प०) धातोः "इगुपधात्कित्" ( उ०–४–११८ ) इति इन्प्रत्यये, कित्त्वाद्गुणाभावे **शुचिर्दीप्तोऽग्निरादित्यो वा** ॥ शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु" इति मेदिनी ॥

## अयमपीतरः शुचिरेतस्मादेव ॥

**इतरः** लौकिकः । **एतस्मादेव** ज्वलतिकर्मणः शोचतेः । इति वैयाकरणा मन्यन्ते ।

## निषिक्तमस्मात्पापकमिति नैरुक्ताः ॥ १ ॥

**नैरुक्ता** निरुक्तविदः पुनर्निष्पूर्वात्सिञ्चतेरितरः शुचिरित्येवं मन्यन्ते । **निः**–निष्कृष्य हि **अस्मात्** अशुचीभूतात् **पापकं** कुत्सितं पाप–(मशुचित्व–)मन्यस्मिन् **सिक्तम्** अध्यस्तं भवतीति स शुचिरयं संवृत्त इत्युच्यते ॥ अत्राग्निराशुशुक्षणिरन्यो वाकश्चिदग्निर्मैथिला तेन किञ्चिदादिदीपयिषुर्भवति सोऽप्याशुशुक्षणिरिति सिद्धम् ॥ १ ॥

अथ **आशाभ्यः** (२) इत्यनवागतं ( शब्दतः ) अनेकार्थं च "आसदनादि"त्यवगमः । अत्र निगममुपन्यस्यति—

## "इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ॥" ( ऋ० सं० २–८–९–२ )

**इन्द्र इति** । अस्य "जेता शत्रून् विचर्षणिः" इति शेषः ॥ गृत्समदस्येयमार्षम् । गायत्री ऐन्द्री । अभिप्लवस्य द्वितीयेऽहनि–प्रउगे शस्यते । **विचर्षणिः** विविधं द्रष्टा सार्वभौतिकानां कर्मणामधिद्रष्टेत्यर्थः । **शत्रून् जेता** असुराणां जयशीलः । ताच्छील्यार्थ–तृन्नन्तयोगे "नलोके" ( पा० २–३–६९ ) ति षष्ठीनिषेधः । एवंविधः **इन्द्रः** परमैश्वर्यवान्देवः **सर्वाभ्य आशाभ्यः परि** दिग्भ्यो दशभ्योऽस्माकम् **अभयं करत्** करोतु "इतश्च लोपः परस्मैपदेष्वि"–( पा० ३–४–९७ )–ति इलोपः । परीति पञ्चमीद्योतकः चतुर्थ्यन्तभ्रमवारणाय ॥ २ ॥

अथास्य भाष्यम्—

## आशा दिशो भवन्त्यासदनात् । आशा उपदिशो भवन्त्यभ्यशनात् ॥

**आसदनात्** । आभिमुख्येन ताः सर्वत्र सन्नाः ( प्राप्ताः ) इव भवन्तीति **आशा दिशो भवन्ति** ॥ तथाच आङ्पूर्वात् "शद्लृ शातने" ( भ्वा० प० ) इत्यस्मादत्र गत्यर्थे वर्तमानात् बाहुलकाड्डप्रत्ययः । स हि "उपसर्गे च संज्ञायाम्" (पा० ३–२–९९ ) इति जनेर्विहितः । अथवा–आ–इत्येषोऽभीत्यस्यार्थे वर्तते "अशू व्याप्तौ" (स्वा० आ०) इत्यस्मादच् (पा० ३–१–१३४) तदाह **आशा उप०० अभ्यशनात्** । तथाचाभ्यश्नवतेऽन्योन्यमित्याशा **उपदिशः** ॥ "अतएव–अश्नुवते आशा" इति क्षीरस्वामिनः ॥

## काशिर्मुष्टिः प्रकाशनात् ।

अथ **काशिः** (३) इत्यनवगतम् "काशयितव्यः" इत्यवगमः । **मुष्टिरि**त्यभिधेयवचनम् । **प्रकाशनात्** इति निर्वचनम् ॥ तथाच "काशतेः" ( भ्वा० आ० ) इन् ( उ० ४–११४ ) कर्मणि बाहुलकात् । काश्यते प्रकाश्यते इति काशिः ॥

अथ मुष्टिरित्येतत्पर्यायप्रसक्तं निराह—

## मुष्टि–र्मोचनाद्वा, मोषणाद्वा, मोहनाद्वा ॥

**मोचनात् मुष्टिः** । मुच्यते ह्यसौ किमस्त्यपिहितेऽत्रेति केनचित्पृष्टे सति । **अथवा मोषणात्** । तेन हि मुष्यते परधनम् । **अथवा मोहनात्** तत्र हि मुह्यति परः किमेतन्मुष्टौ ? इति ॥ तथाच मोचतेर्मुष्णातेर्मुह्यतेर्वा"स्त्रियां क्तिन्" (पा० ३–३–९४) यद्वा क्तिच् ( पा० ३–३–१७४ ) । स एष कर्मणि करणेऽधिकरणे च यथाक्रमं बोध्यः । चकारहकारयोः षकारः पृषोदरादित्वात् । "तितुत्र–" (पा० ७–२–९ ) तीडभावः ॥ "संपीडिताङ्गुलिर्मुष्टिः" इति हलायुधः । "मुष्टिर्द्वयोः फले । बद्धपाणौ त्सरौ–" इति मेदिनी ॥ द्वयोः स्त्रीपुंसयोः ॥

अथात्र निगमं दर्शयति—

## "इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते" ( ऋ० ३–२–१–५ )

**इम इति** । अस्य "उताभये पुरुहूत श्रवोभिरेको दृह्ळमवदो वृत्रहा सन्" इत्यादिः ॥ विश्वामित्रस्यार्षं त्रिष्टुबैन्द्री । पृष्ठ्याभिप्लवयोर्द्वितीयपञ्चमयोरह्नोः सम्पातसूक्तं नाम तत्रेयं शस्यते । उतेत्यामन्त्रणे । हे **इन्द्र** ! **पुरुहूत** ! पुरुभिर्बहुभिर्यज्वभिराहूत ! यद्वा देवैरसुरेभ्यो रक्षार्थं बहुवारमाहूत ! **एकः** असहायोऽपि **सन् वृत्रहा** शत्रुहा भवसि । यत्त्वम् **अभये** अभयविषये

---

१. यद्यप्ययं शोकार्थं एव गणे पठितस्तथापि शोको दीप्तिरपि । तथाच निगमे पठ्यते "अर्कशोकैः" इति । वस्तुतस्तु नैघण्टुकोऽयं धातुः ( निघं० १–१६–५ ) शोचति–ज्वलतीत्यर्थः ॥

१. धातूनामर्थनिर्देशस्याधुनिकत्वमिह शरणमत एवानेकार्थत्वं धातूनामाचक्षते । वस्तुतस्तु षद्लृ विशरणगत्यवसादनेष्विति धातोः ( भ्वा० प० ) इह डः । सस्य शः पृषोदरादित्वादत एवासदनादित्येव भाष्यकारो निराह ॥

अवदः उक्तवानसि देवान्प्रति "असुरेभ्यः सकाशान्मा बिभी-ते"ति वाक्यम् तत् दृह्ळम् दृढम् सत्यमेव जातम् । किञ्च हे मघवन् इन्द्र ! यत् यस्मात् कारणात् त्वम् अपारे दूरपारे इमेचित् इमे अपि रोदसी द्यावापृथिव्यौ संगृह्णः संगृह्णासि-परस्परमधरोत्तरभावेन संयोजिते करोषीति यावत् । अतस्ते तव काशिर्मुष्टि"र्महान्" इति शेषः । इदिति पूरणः ॥ ५ ॥

एवमत्र संग्रहणसम्बन्धात् "काशि" शब्दो मुष्टिमभिधायकः ॥

अथात्र प्रसक्तानुप्रसक्तं निराख्यातुं प्रतीकयति—

**इमे चिदिन्द्र रोदसी–रोधसी द्यावापृथिव्यौ विरोधनात् ॥ रोधः कूलं, निरुणद्धि स्रोतः । कूलं रुजतेर्विपरीतात् । लोष्टोऽविपर्ययेण । अपारे दूरपारे । यत्संगृभ्णासि मघवन् ! काशिस्ते महान् ॥**

इमे चिदिन्द्र रोदसी इति–अथात्र य एते रोदसी ते रोधसी । कुतः ? विरोधनात् । विशेषेण–विविधानि हि वा भूतानि–एते रुन्धत इति रोधसी सत्यौ रोदसी इत्युच्यते । तथाच "रुधिर् आवरणे" ( रु० उ० ) इति धातोरसुन् ( उ० ४–१८८ ) पृषोदरादित्वाद्धस्य दः । "उगितश्च" ( पा० ४–१–६ ) ङीप् । "वाच्छन्दसी"–( पा० ६–१–१०६ )–ति वा पूर्णसवर्णदीर्घः । के ते ? द्यावापृथिव्यौ तथाचामरः "भूद्यावौ रोदस्यौ रोदसी च ते" इति । अ"त्राथ इवन्तो दिवि भुवि च वर्तेते अन्त्यः सान्तः" इति क्षीरस्वामिनः । कूलम् अपि रोध उच्यते तदपि हि स्रोत उदकप्रवाहं निरुणद्धि निवारयति । इति निरोधनाद्रोधः ॥ कूलं पुना रुजतेः "रुजो भङ्गे" (तु० प०) इति धातोर्विपरीतात् । तथाच रुजो वैपरीत्ये जुर इति भवति । तत्रोकारस्य दीर्घो जस्य को रस्य लश्च पृषोदरादित्वात् । रुज्यते भज्यत इति कूलं कर्मणि घञ् ॥ लोष्टः पुनरस्यैव धातोरविपर्ययेण । यथास्थिताद्रुजतेः कर्मणि तन् गुणः । ललत्वे पृषोदरादित्वात्, भज्यते हि सः ॥

अथ "कुणारुम्" ( ४ ) इत्यवगतम् । मेघोऽभिधेयः "क्वणन"मिति शब्दसमाधिस्तत्र निगममेव तावदाह—

**"अहस्तमिन्द्र सम्पिणक्कुणारुम् ॥"**

( ऋ० सं० ३–२–२–३ )

अहस्तमिति ॥ "सुहदानुं पुरुहूत क्षियन्तं मह... णारुम् । अभि वृत्रं वर्द्धमानं पियारुमपादमिन्द्र तवसा जघन्थ" ॥ इतीयं पूर्वेण समानार्षच्छन्दोदैवतविनियोगा ॥ हे पुरुहूत ! इन्द्र ! त्वं सुहदानुं सह इत्युदकनाम (निघं० १–१२–४०) तस्य दानुं दातारं क्षियन्तम् अन्तरिक्षलोके वसन्तं गच्छन्तं वा "क्षि निवासगत्योः" ( तु० प० ) शतरि रूपम् कुणारुम् परिक्वणनशीलम् मेघम् । अहस्तम् अप्रतीकारसमर्थं कृत्वा सम्पिणक् सम्पिण्ढि । संचूर्णय । "पिषॢ संचूर्णने" ( रु० प० ) रुधादित्वात् श्नम् हल्ङ्यादिलुक् षकारस्य ककारश्च छान्दसः । अथापरं वृत्रं वर्तितारम् पियारुं हिंसनशीलम् अभि उभयतः वर्धमानम् अपादम् गमनहीनं कृत्वा तवसा बलेन ( निघं० २–९–५ ) जघन्थ जहीति नैरुक्तदिशोऽर्थः ॥ ३ ॥

एवमत्र वधाधिकारान्मेघाधिकाराच्च "कुणारुं क्वणनशील"-मित्युपपद्यते ॥

तथाच भाष्यम्—

**अहस्तमिन्द्र कृत्वा सम्पिण्ढि परिक्वणनं मेघम् ॥ २ ॥ (१)**

व्याख्यातमेतदधस्तान् मन्त्रार्थे ॥ २ ॥ (१)

---

१. "इतश्च लोपः" ( पा० ३–४–९७ ) इति सिप इकारलोपे सस्य रुत्वम् "हृग्रहोर्भश्छन्दसी–" ( पा० ३–१–८४ वा० )–ति हस्य भः । क्र्यादित्वात् श्नाप्रत्यये "ग्रहिज्ये–" ( पा० ६–१–१६ ) ति संप्रसारणम् ॥

२. अत्रोपसर्गार्थो धात्वर्थ एवान्तर्भूतः । एवमग्रेऽपि ( रोधःपदे ) ॥

३. अयमभिसन्धिः "रोदसी" इतीदमस्ति स्त्रीलिङ्गद्विवचनान्तं छान्दसं, द्यावापृथिव्योर्वाचकं, वेद एव "वाच्छन्दसी–" त्यस्य विधानात् । अस्ति च नपुंसकद्विवचनान्तम् अस्ति चाव्ययम् । "द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसीति ।" ( विगृहीतयोरप्येते नामनी ) "रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदः स्यादपि रोदसी" इति विश्वः ॥ "रोदश्च रोदसीति च । दिवि भूमौ पृथक् च स्यात्सहोक्त्याप्येतयोस्तथे"ति मेदिन्यपीति ॥

१. यद्यपि "लोष्टानिलेष्टवः पुंसी"त्यमरेण लोष्टं नपुंसकमुक्तं तथापि पुंलिङ्गोऽप्ययम् । तथाच वोपालितः "लेष्टुः षण्ढेऽपि लोष्टः स्यादि"ति ॥

२. अध ऊर्ध्वं च ॥

३. क्वणतेः शब्दकर्मणः "कणेरारुग्" इति बाहुलकाच्छौलिक आरुप्र० "क्वणेः संप्रसारणं च–" ( उ० ३–१४३ ) ति सम्प्रसारणमपि ॥

४. पीयुः सौत्रो धातुः हिंसार्थः "पीयुकणिभ्यां कालन् ह्रस्वश्च–" ( उ० ३–७६ )–ति बाहुलकादारुगपि । इति पियारुः कुणारुरित्युभयमप्यनेनैव भवति ॥

५. ऐतिहासिकपक्षे सायण आह–हे पुरुहूत इन्द्र ! सहदानुम् दानुर्दानवी वृत्रमाता तया सह वर्तमानम् तथाच मन्त्रवर्णः । "दानुः शये सहवत्सेति" ( ऋ० सं० १–२–३७–४ ) यद्वा दानवैः सह वर्तमानं क्षियन्तं बाधमानं कुणारुं क्वणनशीलं कञ्चिदसुरमहस्तं हस्तहीनं कृत्वा सम्पिणक् सम्यक्चूर्णीकुरु । किंच हे इन्द्र ! वर्धमानं सर्वत इषुमात्रं "स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धते"ति श्रुतेः ( तै० सं० २–४–१२ ) पियारुं हिंस्रम् वृत्रं वृत्रासुरम् अपादं पादहीनं कृत्वा तवसा बलेन अभिजगन्थ हतवानसीति ॥

अथ **"अलातृणः"** इत्यनवगतम् "अलमातर्दनः" इत्यवगमस्तत्र निगमं दर्शयति—

**अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार ॥ सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः ॥ ५ ॥**

(ऋ० सं० ३-२-२)

**अलातृण** इति । इयमपि पूर्ववदार्षच्छन्दोदैवतविनियोगा। हे **इन्द्र !** योऽयम् **अलातृणः** बहूदकतयाऽलमत्यर्थमातृद्यते हिंस्यत इत्यलातृणः । अलमातर्दनः । **गोः** एतस्या माध्यमिकाया वाचोभीवत्काया: । **व्रजः** गोष्ठभूतः । घान्तो निपात एषः । **वलः** व्रियतेऽनेन दिश आकाशो वेति वलो मेघः । "वृञ्प्रावरणे" (स्वा० उ०) "प्रहृद्द्वनिश्चिगमश्चे"-(पा० ३-३-५८)-त्यप्"कपिलादित्वा"ल्लत्वम् ॥ यद्वा "वल संवरणे" (भ्वा० आ०) अस्मा"त्पुंसि संज्ञायां घः प्रायेण" (पा० ३-३-११८) इतिघर्प्रत्ययः । (निघं० १-१०-४) **पुरा** पूर्वमेव **हन्तोः** हननात् तव वज्रप्रहारात्। हन्तेस्तुन् भावे । **भयमानः** बिभ्यत् । व्यत्ययेन शप्। असह्योऽयमस्य वध इति मन्यमानः । **व्यार** विश्लिष्टो बभूव । अथ परोक्षस्तुतिः । स इन्द्र एवमेनं विदारयन् **गाः** अपः । **निरजे** निरजनाय । निर्गमनाय (निर्गमयितुं) निः पूर्वादजतेर्गत्यर्थाद्भावे क्विप्संपदादित्वात् (पा० ३-३-९४ वा०) अत्रव्यत्ययेन (पा० ३-१-८५) षष्ठ्यर्थे द्वितीया ॥ **सुगान्** सुगमान् "सुदुरोऽधिकरणे" (पा० ३-२-४८ वा०) इति गमेर्डोर्डित्वाट्टिलोपः । **पथः** मार्गान् **अकृणोत्** अकरोत्। "कृवि हिंसाकरणयोश्च" (भ्वा० प०) इत्यस्य लङ्रूपम् "धिन्विकृण्व्योरच"-(पा० ३-१-८०) ति उप्रत्ययसन्नियोगेन वस्याकारेऽतो लोपे तस्य स्थानिवत्त्वाद्गुणाभावः । (पा० ६-४-४८) ततो निर्गतास्ताः **वाणीः** वननीयाः (सम्भजनीयाः)

१. अलं पर्याप्तमातर्दनं हिंसा यस्य बहूदकत्वात्सः । अलंपूर्वात्तृदेर्हिंसार्थात् (रु० पु०) "वीणस्थूणे०" (उ० ३-१३) त्यादिना णप्रत्ययो दकारलोपो गुणाभावश्च निपात्यते, अलमोमकारस्याकारश्च पृषोदरादित्वात् । यद्वा—त्युटि दकारस्य लोपो गुणाभावश्च पृषोदरादित्वात् ॥

२. दुर्गस्तु—शब्दमुपष्टभ्य पुराहन्तोरित्येवं व्याख्यन् व्रज इति अन्तरीक्षे व्रजतीत्यर्थकमाह ॥

३. "पुंसि संज्ञायाम्०" (पा० ३-३-११८) इति घे "गोचरसंचरवहव्रजे०" (पा० ३-३-११९) ति कुत्वाभावो निपात्यते "चजो—" (पा० ७-३-५२)-रिति हि कुत्वमत्र प्राप्तम् ॥

४. वल्यत आच्छाद्यते नभोऽनेनेति वलो मेघः ॥

५. तथाचामरः "स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इति ॥

आपः **धमन्तीः** गच्छन्त्यः पथा निम्नमभिसरन्त्यः । **पुरुहूतम्** पुरुभिर्बहुभिर्मनुष्यैर्हूतमुपभुक्तं "हु दानादनयोः" (जु० प०) क्तः । पार्थिवमुदक-(स्थानं तडागनद्यादिक)-म्प्रति **प्रावन्** अभ्यागच्छन् । अवतिर्गतावपि (भ्वा० प०) यद्वा रक्षणा एवावतिः । तत्रैव तद्युदस्येत यदि ता न पतेयुः ॥ ५ ॥

एवमत्र "पुराहननाद्भयमानो व्यारे"ति वाक्यसंबन्धा"दलातृणो मेघ" इत्युपपद्यते ॥

अथास्य भाष्यम्—

**अलातृणोऽलमातर्दनो मेघोऽवलो वृणोते, व्रजो व्रजत्यन्तरिक्षे, गोरेतस्या माध्यमिकाया वाचः । पुराहननाद्भयमानो व्यार । सुगान्पथो अकृणोन्निरजे गाः । सुगमान्पथो अकरोन्निरजनाय । गवाम् । प्रावन्वाणीः पुरुहूतं धमन्तीः । आपो वावहना, द्वाचो वा वदनात् । बहुभिराहूतमुदकं भवति । धमतिर्गतिकर्मा ॥ ३ ॥ (२)**

अत्र **वाच** इत्यन्तेन प्रथमपादार्थ उक्तः । **हननादि**ति हन्तेरित्यस्य । तुरीयपादार्थे **आपः** वाणीशब्देनोक्ताः । ता हि **वहनादेव** वाण्य उच्यन्ते । **वाचो वा वदनात्** । वाणीरित्युच्यन्ते । अत्र दुर्गः । "यदा विदीर्णान्मेघान्निर्गतमुदकं पुरुहूतं भवति वर्षभावेन, अथ तदा तेषामेव प्राणिनामहोदृष्टमित्येवमाया वाणीः वाचो धमन्तीर्मुखेभ्यो निर्गच्छमानास्तदेवोदकं प्रावन्प्रागच्छन्नित्यर्थः" इत्येवं व्याचख्यौ ॥ **बहुभिः** प्राणिभिः **आहूतम्** आहूयते ममेदं ममेदमिति क्षेत्रतडागादौ। तस्मात्पुरुहूतमुदकं **भवति** । **धमतिः** । एषोऽत्र **गतिकर्मा** गत्यर्थ एव न स्तुतिकर्मा । (निघं० २-१४-५०) स्तुतिकर्मस्वपि हि धमतिः पठितः (निघं० ३-१४-१०) ॥ ३ ॥ (२)

अथ **सललूकम्** (६) इत्यनवगतम् "संलुब्धं" सरूकम् इति वा शब्दसमाधिस्तत्र निगमसुपन्यस्यति—

**उद्वृह रक्षः सहमूलमिन्द्र वृश्चामध्यं प्रत्यग्रं शृणीहि ॥ आकीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ॥ २ ॥** (ऋ० सं० ३-२-४)

**उद्वृहेति** ॥ पूर्वेण तुल्यार्षच्छन्दोदैवतविनियोगेयमपि । हे **इन्द्र ! रक्षः** कर्मविघ्नकारिरक्षःकुलम् **सहमूलम्** मूलसहितं यथा भवति तथा **उद्वृह** उद्धर । उन्मूलयेत्यर्थः । किञ्चास्य **मध्यं** मध्यभागं **वृश्च** छिन्धि । **अग्रं** चास्य **प्रतिशृणीहि** प्रतिजहि । किञ्च **आकीवतः** आकियतः । आङत्र मर्यादायाम् । कियोऽनिर्ज्ञायमानपरिमाणादतिदूराद्देशादित्यर्थः । किमस्य परि-

१. तथाचात्र "दीर्घाज्जसि च" वा च्छसीति (पा० ६-१-१०६) पूर्वसवर्णदीर्घः (पा० ६-१-१०२) ॥

२. तद्—तडागनद्याद्युदकम् । व्युदस्येत्—विच्छिद्येत ॥

माणेमित्यर्थे विहितस्य वतुपो वस्य "किमिदंभ्यां वो घः" (पा० ५–२–४७) इतिघादेशोऽत्र छान्दसत्वान्न भवति किन्तु "इदंकिमोरीश्की" (पा० ६–३–९०) इति क्यादेशः। उद्धृत्य **सलल्लूकं संलुब्धं** ( सम्मूढमप्रतिपक्षं ) **चकर्थ** कुरु "छन्दसि लुङ्लङ्लिटः" (पा० ३–४–६) इति लोडर्थे लिट्। यद्वा सलल्लूकं पापकं पापतरमस्मत्तः कुरु। एतच्च नैरुक्तपक्षेण। ऐतिहासिकपक्षे सररूकं सरणशीलमत्यन्तदूरं नष्टं कुर्वित्यर्थः॥ एवमेतदुन्मूलनं कृत्वा स्थानप्रच्युतयास्मै **ब्रह्मद्विषे** ब्राह्मणद्वेषकारिणे रक्षसे। **तपुषिं** तापयित्रीं **हेतिम्** हन्त्रीमायुधजातिम् मूलमध्यानुक्रमेण च्छेदनाय पुनःपुनरस्य क्षिप "असु क्षेपणे" (दि० प०) लोण्मध्यमपुरुषैकवचनम्॥ २॥

एवमत्र"सलल्लूकम्" इति लुभेर्मोहनार्थस्य (तु० प०) शब्दसारूप्या"त्संलुब्धम्" इत्यर्थं उपपद्यते॥ "सर्त्तेः" (भ्वा० प०) अप्यत्र सारूप्यमस्तीति "सररूकम्" वा स्यादित्युक्तं भाष्यकारेण। रक्षोविशेषणं चैतत्तस्य हि सम्मोहो वा नाशनं वाऽभीष्टमिति॥

तथाहि भाष्यम्—

**उद्धर रक्षः सहमूलमिन्द्र!। मूलं मोचनाद्वा, मोषणाद्वा, मोहनाद्वा। वृश्च मध्यम् प्रतिशृणीह्यग्रम्। अग्रमागतं भवति। आकियतोदेशात्सलल्लूकं संलुब्धं भवति, पापकमिति नैरुक्ताः। सररूकं वा स्यात्सर्त्तेरभ्यस्तात्तपुषिस्तपतेर्हेतिर्हन्तेः॥ इति॥**

**उद्धर** इत्युद्वृह इत्यस्यार्थः। तत्र"वृहू उद्यमन" इति (तु० प०) धातोर्लोटि मध्यमपुरुषैकवचनम्। उद्बर्हणमुद्धरणमुज्जासनमितिहिंसनपर्यायाः। हरणं प्रापणं स्वीकारस्तेयं नाशनं चेति महदुक्तेः॥ अथ निगमप्रसक्तं निराह–**मूलं मो००हनाद्वेति**। सर्वत्र धातोर्मूभावोलक्प्रत्ययश्च बाहुलकात्। **वृश्च** इति "ओव्रश्चू च्छेदन" (तु० प०) इति धतोर्लोटि मध्यमपुरुषैकवचनम्। **शृणीहीति**"शॄ हिंसायाम्" (क्र्या० प०) इत्यस्य। "शॄदॄप्रांह्रस्वो वे"–(पा० ७–४–१२)तिह्रस्वः। **अग्रम्** इति गत्यर्थादगधातोः (भ्वा० प०) "ऋज्रेन्द्रे०" (उ० २–१८) त्यादिना रक्प्रत्ययान्तो निपातस्तदाह **आगतं भवतीति**।

अथ कत्पयम् (७) इत्यनवगतम् "कपयम्" इत्यवगमः। "सुखपयसमि"ति पर्यायेणाभिधेयवचनम्। मधुरोदको हि मेघोऽभिधेयः। तथाच निगमः—

**"त्यं चिदित्था कत्पयं शयानम्"**

(ऋ० सं० ४–१–३२–६)

**सुखपयसं सुखमस्य पयः॥**

**त्यश्चिदिति**। अस्य "असूर्ये तमसि वावृधानम्। तश्चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान" इति शेषः॥ गातुर्नामात्रेयस्तस्येयमार्षं त्रिष्टुबैन्द्री। **सुतस्य** तृतीयार्थे षष्ठी अभिषुतेन सोमेन **मन्दानः** मोदमानः "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" (भ्वा० आ०) लटश्शानच् "बहुलं छन्दसी"–(पा० २–४–७२) ति शपो लुक्। **वृषभः** कामानां वर्षिता। **इन्द्रः इत्था** इत्थम् "थाहेतौ च छन्दसी"–(पा० ५–३–२६)–ति प्रकारार्थे इदमस्था "एतेतौ रथोः" (पा० ५–३–४) इतीदादेशः। यद्वा इत्था अमुष्मिन्नन्तरिक्षलोके **कत्पयम्** कत्सुखकरं पयो यस्य तम्। **शयानम्** अप्सु शयनं कुर्वन्तम् **असूर्ये** सूर्यरहिते **तमसि** अन्धकारे **वावृधानम्** वर्धमानम्। "वृधु वृद्धौ" (भ्वा० आ०) लिटः कानच् (पा० ३–२–१०६) द्विर्वचनादिः। "तुजादीनां दीर्घोऽभ्यासस्ये"–(पा० ६–१–७)–ति वस्य दीर्घः, कित्त्वाद्गुणाभावः॥ **त्यंचित्** तमेव वृत्रमसुरं मेघं वा **उच्चैः** ऊर्ध्वम् **अपगूर्य** वज्रमुद्यम्य **आजघान** आऽवधीत्। **तश्चिदिति** पुनर्वचनं पूरणमेव॥ ६॥

एवमत्रेन्द्रो जघानेति वाक्यसम्बन्धात् कत्पयः सुखपयः मेघ इत्युपपद्यते॥ भाष्ये बहुव्रीहिलब्धार्थमाह–**सुखमस्य पय इति**। सुखयतीति सुखं पचाद्यच्॥

**विस्रुह आपो भवन्ति। विस्रवणात्॥**

अथ **विस्रुहः** (८) इत्यनवगतम्। "विस्रव" इत्यवगमः। **आपो भवन्ति** इत्यभिधेयवचनम् **विस्रवणात्** इति हेतुनिर्देशः॥ तथाच विपूर्वात्स्रवतेर्गत्यर्थात् (भ्वा० प०) क्विप्। अत्र धातोर्दीर्घो वस्य हश्च छान्दसः। अत्र निगमं दर्शयति—

**"वया इव रुरुहुः सप्त विस्रुहः॥"**

(ऋ० सं० ४–५–९–६)

**इत्यपि निगमो भवति॥**

**वया इवेति**॥ अस्य "वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना। तस्येदु विश्वा भुवनाऽधि मूर्धनि" इत्यादिः। भारद्वाजस्येयमार्षं वैश्वानराग्निदैवत्यं जगती। प्रातरनुवाकाश्विनयोः शस्यते। **वैश्वानरस्य** भगवतोऽग्नेः **अमृतस्य** अमरणधर्मिणः (नित्यस्य) **केतुना** कर्मणा प्रज्ञापकेन।

---

१. यद्यपि "यत्तदेतेभ्यः" (पा० ५–२–३९) एव परिमाणेवतुब्विहितस्तथापि "किमिदंभ्यामि"ति ज्ञापकात्किमोऽपि सोऽस्तीति ज्ञायते॥

२. सम्पूर्वाल्लुभेर्निष्ठायां "लुभोऽविमोहने" (पा० ७–२–५४) इति गार्ध्ये इडभावः। संलुब्धस्यैव सलल्लूकेन विनिमयः पृषोदरादित्वात्। पक्षे–सर्त्तेः "मण्डूकोलूकोरूकशूकशम्बूकयूकवरूकादयः" (उ० ४–४०) इत्यूकप्रत्यये गुणे रपरे च कृते अरित्यस्य द्विर्वचनं रेफयोर्लत्वं च निपात्यते॥

३. "तप सन्तापे" (भ्वा० प०) अस्मात् "अर्त्तिपॄवपियजितनिधनितपिभ्यो नित्" (उ० २–११७) इति उसिप्रत्ययः। इकारश्छान्दसः। षत्वम्॥

४. हन्तेर्हिंसार्थस्य–(अ० प०) "ऊतियूती–" (पा० ३–३–९७) त्यादिना निपातः॥

१. कमिति सुखनाम, तत्र मकारस्य तकारः पयसश्च सलोपः पृषोदरादित्वात्। कं सुखं (सुखकरं) पयो जलमस्य तम्॥

(निघं० ३–८–२) **चक्षसा** चक्षुषा दर्शनेनेति दुर्गः। तेजसेति सायणः । **दिवः** द्युलोकस्यापि यानि **सानूनि** समुच्छ्रितानि स्थानानि नक्षत्ररूपाणि, तानि **विमितानि** विनिर्मितानि यद्वा दिवोऽन्तरिक्षस्य सानूनि समुच्छ्रितप्रदेशा मेघात्मकाः **विमितानि** विनिर्मिताः । धूमविकारत्वात्तेषाम् । किञ्च **तस्येदु** तस्यैव वैश्वानराग्नेः **मूर्धनि** मूर्धस्थानीये उपरि वर्तमाने धूमे मेघात्मना परिणते **विश्वा** विश्वानि सर्वाणि "शेश्छन्दसि बहुलम्" (पा० ६–१–७०) इति शेर्लोपः । **भुवनानि** सर्वभूतभावयितृणि उदकानि । "भूसुधूभ्रस्जिभ्यश्छन्दसि" (उ० २–७५) इति क्युन्प्रत्यय उवङादेशः । (निघं० १–१२–५०) **अधि** अधिवसन्तीति शेषः। यद्वा वैश्वानरात्मकस्य परब्रह्मणो मूर्धनि उपरि प्रदेशे सर्वाणि भूतजातान्यधिवसन्ति तथा–**वयाः** शाखा इव **सप्त** सर्पणशीलाः सप्तसंख्या वा **विस्रुहः** विस्रुवः (विविधं स्रवमाणा यथा निम्नमापः) **विरुरुहुः** नद्यादिभावेन रोहन्ति–अस्यां पृथिव्याम् । यस्मादेव वैश्वानरात्प्रादुर्भवन्ति । आहुतिद्वारा सकलं जगदग्नेरुत्पद्यत इत्यर्थः ॥६॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "विस्रुह आपो भवन्ती"-त्युपपद्यते ॥

## वीरुध ओषधयो भवन्ति । विरोहणात् ॥

अथ "**वीरुधः**" (९) इत्यनवगतम् । **ओष००वन्ति** इत्यभिधेयवचनम् । **विरोहणादिति** हेतुनिर्देशः । तथाच विपूर्वाद्रुहेः (भ्वा० प०) क्विपि वेर्दीर्घो हकारस्य धकारश्च । यद्वा "मूलविभुजादि"–(पा० ३–२–५ वा०) त्वात्के विरुहाः सत्यो वीरुधः । विविधं रोहन्तीति ॥

अत्र निगमं दर्शयति—

**"वीरुधः पारयिष्ण्वः ॥"**

(ऋ० सं० ८–५–८–३)

## इत्यपि निगमो भवति ॥

**वीरुध** इति । अस्य "ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः । अश्वा इव सुजित्वरीः" इत्यादिः । भिषज आथर्वणस्येयमार्षम् । ओषधिसूक्ते अनुष्टुप् ॥ हे **ओषधीः** ओषधयः । "सुपां सुलुक्पूर्वसवर्णे०" (पा० ७–१–३९)–त्यादिना पूर्वसवर्णे गुणाभावः । **प्रतिमोदध्वम्** इमं रुग्णं प्रति अस्मान्प्रति वा । मुदिता (हृष्टा) भवत यूयम् । कीदृशो यूयम्? **पुष्पवतीः** पुष्पवत्यः । **प्रसूवरीः** प्रकर्षेण सूयन्ते प्रसवायेति प्रसवाः फलानि "ऋदोरप्" (पा० ३–३–५७) तद्वत्यः । एतच्चार्थतो निर्वचनं, शब्दतस्तु प्रपूर्वात्सूतेः प्रसवार्थात् (अ० आ०) "अन्येभ्योऽपि दृश्यन्ते" (पा० ३–२–७५) इति क्वनिप् । "वनोर च" (पा० ४–१–७) इति ङीब्रादेशश्च । क्वित्वाद्गुणाभावः । (याः पुष्पवत्यो याश्च फलवत्यो याश्चाफला याश्चापुष्पास्ताः सर्वा अपि) **अश्वा इव** अश्ववाना वडवा इव **सजित्वरीः** सह (एकीभूय) रोगं जयन्त्यः । **वीरुधः** विविधं रोहन्त्यः । ता यूयं सर्वान्रोगाञ्जित्वा अस्माकमायुषः **पारयिष्ण्वः** पारयित्र्यः । पुरुषं वा पारयित्र्यो रोगात् । "भवते"ति वाक्यशेषः ॥ ३ ॥

एवमत्र "पुष्पवतीः प्रसूवरीः" इति विशेषलिङ्गा–"द्वीरुध ओषधयो भवन्ती"त्युपपद्यते ॥

## नक्षद्दाभमश्नुवानदाभम् अभ्यशनेन दभ्नोतीति ॥

अथ **नक्षद्दाभम्** (१०) इत्यनवगतम् । "न क्षणदाभम्" इत्यवगमः । **अश्नुवानदाभम्** इति पर्यायेणाभिधेयवचनम् । **अभ्यशनेना**भिव्यापनेन यो **दभ्नोति** हिनस्ति स नक्षद्दाभः । तथाच नक्षतेर्गतिकर्मणोऽभिव्याप्तिकर्मणो वा (निघं० २–१४–३१=२–१८–२) शतरि नक्षत् । नक्षतोदभ्नोतीति कर्मण्यणि (पा० ३–२–१) नक्षधातोर्नकारलोपश्छान्दसो वृद्धिश्चोपधायाः (पा० ७–२–११६) युद्धार्थमभिगच्छतां व्याप्नुवतां च शत्रूणां हन्तारमित्यर्थः ॥

अत्र निगमं दर्शयति—

**"नक्षद्दाभं ततुरिं पर्वतेष्ठाम् ॥"**

(ऋ० सं० ४–६–१३–२)

## इत्यपि निगमो भवति ॥

---

१. अत्र दुर्गः। अग्निप्रकाश्यमानविषयो हि लोकः कर्मणि प्रवर्तते साध्वन्यसाधुनि वा, साधुभ्यः साधुना च पापेभ्यः पापेन च सार्वलौकिकेन कर्मणा स्वकर्मफलभोगायेदं सर्वं विनिर्मीयते । इत्यनयाऽऽपेक्षयोक्तम् "वैश्वानरस्य चक्षुषा केतुना च दिवः सानूनि निर्मितानी"ति । अग्निरेव हि वाच्यधिदेवताभावेनावस्थितः सर्वमिदं ख्यापयति । ततः कर्म प्रतायते । तदुक्तम् "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति ॥

२. व्याप्तानीति सायणः । तन्मते "विषॢ व्याप्तावि–" (जु० प०)–ति धातोरेवात्र कन् (उ० १–१५२)॥

३. अत्र छन्दसीति प्रायिकं तेन लोकेऽपि "भुवनं वनम्" इति जलपर्यायेऽमरः । केचित्त्वाहुः । अत्र भुवनशब्देन भूतान्येवोच्यन्ते । चतुर्विधश्च भूतग्रामः । (जरायुजोऽण्डजः स्वेदज उद्भिज्जश्चेति) विस्रुहश्च वया इव रुरुहुः पृथिव्या उपरीति ॥

४. एष चार्थः सायणेनोत्प्रेक्षितः ॥

५. तथाच निगमः "वृक्षस्य नु ते पुरुहूत वयाः" "वृक्षस्येव ते पुरुहूत शाखा" इति निरुक्तम् (१–२–३)॥

६. केचित्तु–सप्तशब्देन समुद्रानेव वर्णयन्ति । ते हि पृथिव्याः शाखा इव लक्ष्यन्ते विस्रवन्ति च ॥ सायणस्तु–सप्तसंख्याका गङ्गाद्या नद्य एवात्र विस्रुहो रोहन्तीत्याह ॥

१. यमभिप्रयुज्यत एष मन्त्रोऽभिमन्त्रणे चोषधीनाम् ॥

२. तथाच मन्त्रवर्णः । "याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः" (ऋ० सं० ८–५–२०–५) इति ॥

**नक्षद्दाभमिति** । "तस्मु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभिवाजयन्तः। नक्ष ० ० तेष्टामद्रोघवाचं मतिभिः शविष्ठम्" इतीयं भरद्वाजस्यार्षं त्रिष्टुबैन्द्री । सम्पातसूक्ते माध्यन्दिने ब्राह्मणाच्छंसिनः शस्त्रे शस्यते । "तमीमह" इति च ॥ ये **पूर्वे** प्रत्नाः ( पुराणाः पुराणेषु पठिताः ) **नः** अस्माकं **पितरः** अङ्गिरसः पितृगणाः **सप्त** सप्तसंख्याकाः । अथवा सप्ताः गताः पूर्वतरमस्माल्लोकादमुं लोकं, ते **नवग्वाः** नवगतयः । अभिनवा हि तेषां गतिः । अर्धमासे अर्धमासे भवति पितृयज्ञं प्रति आगन्तुम् । अथवा नवनीतगतयः । ( नवनीते हि तेषां मनसो गतिर्भवति इदमस्माकं स्यादिति ) "स्वयं विलीनं पितॄणाम्" इत्युक्तम् **विप्रासः** विप्राः "आज्जसेरसुक्" ( पा० ७-१-५० ) इति जसोऽसुगागमः । प्राप्तयज्ञाः, पितृलोकेऽवस्थिताः । **तमु** तमेवेन्द्रम् **मतिभिः अभिवाजयन्तः** अभिस्तुवन्तः "आसत" इति शेषः । वाजयतिरर्चतिकर्मा ( निघं० ३-१४-३६ ) । कीदृशमिन्द्रम् ? **नक्षद्दाभम्** अश्नुवानदाभम् ( यो ह्यभ्यशनेनाभिव्यापनेन दभ्नोति तम् ) । यद्वा नक्षतामभिगच्छतां शत्रूणां दम्भितारं हिंसितारम् **ततुरिम्** तरणशीलम् **पर्वतेष्ठाम्** मेघस्थायिनम् । पर्वतो मेघः ( निघं० १-१०-९ ) तिष्ठतेः क्विप् ( पा० ३-२-७६ ) सप्तम्या अलुक् ( पा० ६-३-१४ ) **अद्रोघवाचम्** । अद्रोघा अनतिक्रमणीया वागाज्ञारूपा यस्य तम् । **शविष्ठम्** बलिष्ठम् । शव इति बलनाम ( निघं० २-९-३ ) ॥२॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च योऽभ्यशनेन दभ्नोति स "नक्षद्दाभः" इत्युपपद्यते ॥

## अस्कृधोयुरकृध्वायुः । कृध्विति ह्रस्वनाम, निकृत्तं भवति ॥

अथ "**अस्कृधोयुः**" (११) इत्यनवगतम् । "अकृध्वायुः" इत्यवगमः । **कृधु**-इति ह्रस्वनाम, ( निघं० ३-२-६ ) तद्धि **निकृत्तम्** इव **भवति** । तत्प्रतिषिद्धमकृधु दीर्घम् आयुर्यस्य सः । चिरस्थायी-पुत्रपौत्रान्वित इत्यर्थः । अत्र नञ्पूर्वात्कृतीधातोः ( रु० प० ) बाहुलकात्कुप्रत्यये ( उ० १-२३ ) तकारस्य धकारः । धातोः सुडागम अस्कृधु तस्यायुषा समासे पूर्वोत्तरवर्णयोः-( उकाराकारयोः ) विपर्यये गुणः । सर्वोप्ययं पृषोदरादित्वात् ॥ यद्वा अकृतायुरेवास्कृधोयुः । नित्यायुरिति तदर्थः । अकृतस्यास्कृधुभावोऽन्यत्सःमानम् ॥

अत्र निगमं दर्शयति—

### "यो अस्कृधोयुरजरः स्वर्वान् ॥"

( ऋ० सं० ४-६-१३-३ )

## इत्यपि निगमो भवति ॥

**य इति** ॥ "तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः । यो अ ० ० स्वर्वान् तमाभर हरिवो मादयध्यै ॥" पूर्वेण समानमार्षादिकमस्य इति मन्त्रार्थ उच्यते । हे **हरिवः** ! हरिवन् ! "मतुवसोरु सम्बुद्धौ च्छन्दसी"-(पा० ८-३-१) ति रुत्वम् । स्वकीयाश्वोपेतेन्द्र ! त्वाम् **तम्** एवं वक्ष्यमाणलक्षणं पुत्रम् वयम् **ईमहे** याचामहे ( निघं० ३-१९-१ ) कथम्भूतम् ? **अस्य** मदीयस्य **रायः** धनस्य **इन्द्रम्** ईश्वरम् परिपालने भोगे च समर्थम् । कथंभूतस्य ? **पुरुवीरस्य** बहुभिर्वीरैरुद्वतः । **नृवतः** परिचारकजनसहितस्य । **पुरुक्षोः** बह्वन्नस्य । क्षु-इत्यन्ननाम ( निघं० २-७-१० ) न केवलं परिपालनसमर्थ एव किं तर्हि ? **यः अस्कृधोयुः** अकृध्वायुः दीर्घायुरित्यर्थः । **अजरः** जरा-रहितः ( नित्यतरुणः ) **स्वर्वान्** बलवान् । स्वरित्युदकनामसु पठित-(निघं० १-१२-८६ ) मपि बलार्थमित्यसकृदुक्तमधस्तात् । **तम्** एवंलक्षणं पुत्रं **मादयध्यै** अस्मान्मादयितुं हर्षयितुम् "तुमर्थे" ( पा० ३-४-९ ) अध्यैप्रत्ययः । **आभर** आहर । अर्पयास्मभ्यमित्यर्थः । "हृग्रहोर्भश्छन्दसी"-( पा० ३-१-८४ वा० )-ति हस्य भः ॥ ३ ॥

## निशृम्भा निश्रथ्यहारिणः ॥ ४ ॥ (३)

अथ "**निशृम्भाः**" (१२) इत्यनवगतम् "**निश्रथ्यहारिणः**" इत्यवगमः । निश्रथया ( अशिथिलया दृढया ) गत्या हरन्तः ( हरणशीलाः ) अविश्रामहरणा इत्यर्थः ॥ अत्र निपूर्वात् "श्रथि शैथिल्ये" ( भ्वा० आ० ) इत्यस्माड्डः । निर्गतः श्रथः शैथिल्यं यस्याः सा निश्रथा गतिः तया ( अशिथिलया ) गत्या हरन्तीति "अन्येष्वपि दृश्यते" ( पा० ३-२-१०१ ) इति डः । अथ शब्दस्य शृम्भावः । हस्य भः । ( पा० ३-४-८४ वा० ) ॥ ४ ॥ (३)

अथोक्तेऽर्थे निगममुदाहरति—

### आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् । देवं वहन्तु बिभ्रतः ॥" ( ऋ० सं० ४-८-२१-६ )

---

१. सायणस्तु-नवग्वाः नवभिर्मासैः सत्रमनुष्ठितवन्त इत्यर्थमाह । उवटस्तु-( य० वा० सं० भाष्ये १९-५० ) नवनीयास्तोतव्या वा गतिर्येषां ते नवग्वा इत्याह । महीधरस्तु नवा नूतना ग्वा गतिर्येषामित्येवं व्याख्यत् ॥

२. स्वयं विलीनमिति नवनीतमुच्यते कर्मठसदसि ॥

३. अत्र सायणः-"वाजयन्तः वाजमन्नं हविर्लक्षणमिन्द्रस्य कुर्वन्तः । इन्द्रं वा वाजिनं बलवन्तं कुर्वन्तः । "तत्करोती-" ( पा० ३-१-२६ वा० ) ति णिच् । एवं भूता नोऽस्माकं पितरोऽङ्गिरसस्तमु तमेवेन्द्रं मतिभिस्तुतिभि"रभिष्टुवुरि"ति शेषः इत्येवं व्याख्यत् । अत्र वाजः अन्नम् ( निघं० २-७-२ ) बलं च वाजः ( निघं २-९-२ ) इष्यद्वाधाचाट्टिलोपः ॥

४. "निकृत्तमिव तद्भवति ह्रस्वत्वादेवे-"ति स्कन्दस्वामिभाष्यम् ॥

**आजास** इति । भारद्वाजस्यार्षं, पौष्णं, गायत्रम् । **अजासः** । अजाः "आज्जसेरसुक्" ( पा० ७-१-५० ) इति जसोऽसुगागमः । छागा इति सायणः । अश्वा इति दुर्गः । वस्तुतोऽजा एव मार्गव्यापित्वादश्वाः पूष्णो वाहनभूतास्तथाचाद्विष्टेपयोजनेषु पठ्यते । "अजाः पूष्णः" इति ( निघं० १-१५-५ ) "अज गतिक्षेपणयोः" ( भ्वा० प० ) पचाद्यच् ( पा० ३-१-१३४ ) वीभावाभावो व्यत्ययेन ॥ कथम्भूताः ? **निशृम्भाः** निश्रथ्यहारिणः ( अविश्रामहरणाः ) ते पूष्णो वाहनतया प्रसिद्धाः । **जनश्रियम्** । जातश्रियम् । ( उद्भूतश्रियम् ) **देवं पूषणं रथे** बिभ्रतः । धारयमाणाः सन्तः **आवहन्तु** आनयन्तु ॥ ६ ॥

एवमत्र समानविभक्त्यन्तत्वा"न्निशृम्भा" इत्येत "न्निश्रथ्यहारिण" इत्यर्थतया अश्वविशेषणमिति शीघ्रहारिण उच्यन्ते ॥ इत्युपपद्यत एव ॥

अथ—

## वृबदुक्थो महदुक्थो, वक्तव्यमस्मा उक्थमिति वृबदुक्थो वा ॥

## "वृबदुक्थं हवामह" इत्यपि

( ऋ० सं० ६-३-२-५ )

## निगमो भवति ॥

"**वृबदुक्थः**" (१३) इत्यनवगतम् "**महदुक्थः**" इति वक्तव्यमस्मै उक्थम् इति वा शब्दसमाधी ॥ तत्र वृब०० महे "सुप्रकरस्नमूतये । साधुकृण्वन्तमवसे" इतीयं कश्यपस्यार्षम् गायत्र्यैन्द्री । प्रथमे पर्याये मैत्रावरुणस्य शस्त्रे तृचाशीतिषु च महाव्रते शस्यते । वयं **वृबदुक्थं** महदुक्थम् । उक्थशब्दः स्तुतिपर्यायस्तेन च शस्त्रमुच्यते "वच परिभाषणे" ( आ० प० ) ततः ( पा तॄ तुदि वचि रिचि सिचिभ्यः थक्" — ( उ० २-६ ) — ति थकन् संप्रसारणम् ( पा० ६-१-१५ ) वृहदिति च महदित्यर्थे निपातितः ( उ० २-७८ ) तस्यैव ह्रस्व वोऽत्र पृषोदरादित्वात् । तथाच वृबन्महदुक्थं शस्त्रं ( सामविशेषः ) यस्य ( स्तुतौ ) स वृबदुक्थस्तम् । स्तुत्यर्हमित्यर्थः । यद्वा वृबद्वक्तव्यमुक्थमस्मा इति । अनेनेन्द्र इहोच्यते ( अनादेशपरिभाषया ) तं **हवामहे** आह्वयाम एतस्मिन्कर्मणि । कथम्भूतम् ? **ऊतये** अवनाय लोकानाम् "ऊतियूती" ( पा० ३-३-९७ ) — त्यादिना निपातः । तथाचामरः "अवने ऊति"रिति । **सुप्रकरस्नम्** प्रसृतबाहुम् ( दीर्घबाहुम् ) पुनश्च **अवसे** लोकरक्षणाय **साधुकृण्वन्तम्** साधुकारिणम् यद्वा **अवसे** अन्नाय ( निघं० २-७-९ ) तर्पणाय वा ( समागतं सन्तमस्मिन्कर्मणि तर्पयिष्याम इत्येतेनाभिप्रायेण ) हवामहे इति पूर्वेणान्वयः ॥ ५ ॥

एवमिहाह्वानसम्बन्धा"द्वृबदुक्थो महदुक्थ" इत्युपपद्यते । य एव हि महदुक्थो भवति वक्तव्योक्थो वा ( स्तुत्यर्हः ) स एवाहूयते लोकरक्षणाय ॥

अथ—

## ऋदूदरः सोमो, मृदूदरो मृदुरुदरेष्विति वा ॥

## "ऋदूदरेण सख्या सचेय" इत्यपि

( ऋ० सं० ६-४-१२-५ )

## निगमो भवति ॥

"**ऋदूदरः**" (१४) इत्यनवगतम् । "**मृदूदरः**" इत्यवगमः । **सोमः** अभिधेयः ॥ तत्र ऋदू०० चेय "यो मा न रिष्येद्धर्यश्वपीतः । अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ।" इतीयं काण्वस्य प्रगाथस्यार्षम् । त्रिष्टुप् सौमी । सोमचायिनः प्रायश्चित्तेष्टौ सोमेन्द्रस्य श्यामाकस्य चरोर्याज्यैषा ॥ अहं प्रगाथः **ऋदूदरेण** मृदूदरेण सोमेन । मृदु हि सोमस्योदरं शुषिरत्वात् । अथवा "मृदुरय-

१. "अशू व्याप्तौ" ( स्वा० आ० ) "अशूप्रुषि" ( उ० १-१४९ ) इत्यादिना क्वन् । अश्वा अश्नुवते मार्गमिति । अजहत्स्वार्थलक्षणया वाहनमात्रमत्रोच्यते । तथाच निगमे पठ्यते—"अहेळमानोररिवाँ अजाश्व अवस्युतामजाश्व" ( ऋ० सं० २-२-२-४ ) इति ॥

२. तथाच अजन्ति अनारतं गच्छन्ति, सर्वतो विक्षिपन्ति वा तम इति अजाः पूष्णो वाहनानि ॥

३. अतएव न यच्छब्दापेक्षाऽपि । "प्रक्रान्तप्रसिद्धानुभूतार्थको हि तच्छब्दो यच्छब्दोपादानं नापेक्षत" इत्यधस्तादसकृदभिहितम् ॥

४. सायणस्तु—जनं स्तोतृसंघं श्रयति गच्छतीति जनश्रीस्तमित्याह ॥

५. काण्वस्य मेधातिथेरिति सायणः । तथाचानुक्रमणिका "प्रकृतानि त्रिंशन्मेधातिथि—रिति । इयंच ततोदशमीति ॥

१. "अनादेश इन्द्रः" इति हि नैगमानां परिभाषा । अतएवात्र देवता "यातेनोच्यते सा देवते" — ति न्यायात् ॥

२. "सृप्लृ गतौ" ( भ्वा० प० ) अस्मात् "स्फायितञ्चि०" ( उ० २-१३ ) — त्यादिना रक्प्रत्यये सिप्रौ "करस्नौ बाहू कर्मणां प्रस्नातारावि"ति निरुक्तम् ( ६-१७ ) अनयोः पञ्चर्थे बहुव्रीहिरिन्द्रोऽन्यपदार्थः ॥

३. "कृवि हिंसाकरणयोः" ( भ्वा० प० ) लटः शतरि "धिन्विकृण्व्योरच" — ( पा० ३-१-८० ) — ति उप्रत्ययसन्नियुक्तोऽकारादेशः । अतोलोपस्तस्य स्थानिवत्वाद्गुणाभावे यण् । नित्यकालमेवास्य जगतः साधु करिष्यामीत्यभिप्रायम् इति दुर्गः । एष चार्थस्ताच्छील्यणिनिना तेन व्याख्यातः । सततकरणं हि ताच्छील्यम् ॥

४. अवरक्षणगतिकान्तिप्रीतितृप्त्यवगमादौ ( भ्वा० प० ) ततोऽसुन् ( उ० ४-१८८ ) ॥

५. अन्तश्छिद्रत्वात् । तथाचामरः "शुषिरं विवरं बिलम्" इति ॥

मुदरेपु नः स्यात्–" इत्येवं पातृभिर्वमनविरेचनाशङ्कयाऽऽशास्यमानो मृदूदरस्सन्नृदूदर इत्युच्यते । तेनोदराबाधकेन सोमेन **सख्या** सुहृद्भूतेन **सचेय** सङ्गच्छेय (सङ्गतो भवामि) "पच समवाये" (भ्वा० उ०) लिङ् ॥ **यः** सोमः पीतस्सन् **मा** मां **न रिष्येत्** न हिंस्येत् "रिष हिंसायाम्" (दि० प०) लिङ् । **हे हर्यश्व** इन्द्र! सोमस्वामिन्! **यः अयं सोमः । अस्मे** अस्मासु **न्यधायि** निहितं आसीत् **तस्मै** तदर्थम् **प्रतिरम्** प्रतीर्णम् (पूर्णं–मनवखण्डितम्) **आयुः** जीवितकालम् "आयुर्जीवितकालो ने"–त्यमरः । **इन्द्रम्** ईश्वरं सर्वेषां त्वाम् वयम् **एमि** याचामः ॥ सोमवमनवैगुण्यादायुषश्छेदमाशङ्कमान इन्द्रं दीर्घमायुर्याचते यजमानायात्मने वा ॥ ५ ॥

एवमस्मिन् प्रकरणात् शब्दसारूप्याच्च "ऋदूरो मृदूदरः सोम" इत्युपपद्यते ॥

## ऋदूप इत्युपरिष्टाद्व्याख्यास्यामः ॥

**"ऋदूपे"** (१५) इति पदमनवगतन्तत् **उपरिष्टात्** (नि०६–६–५) "तुविक्षन्त" इति मन्त्रव्याख्याने ॥ "ऋदूपे अर्दनपातिनौ" इत्यादिना । अर्दतेरुणि ऋदादेशे ऋदु तस्मिन्नुपपदे पतेरन्तर्भावितण्यर्थात् "दन्येष्वपि दृश्यते" (पा० ३–२–१०१) इति डः । "अन्येषामपि दृश्यते" (पा० ६–३–१३७) इति दीर्घः । बाहुविशेषणमेतदत्र । शत्रूणामर्दनेन पातितारावितिं तदर्थः ॥

## पुलुकामः पुरुकामः ॥

## "पुलुकामो हि मर्त्य" इत्यपि ॥

(ऋ० सं० २–४–२२–५)

## निगमो भवति ॥

१. हरी इन्द्रस्य (निघं० १–१५–१) सोमाहरणपानादिक्रियायाः साधनत्वात् । वाहावुच्येते ताभ्यां बहुव्रीहिः ॥

२. अत्र दुर्गः । पुनरागामिषु कालेषु यथाहमेतेन सोमेन पीतेनाहिंसितः स्यान्तथा सचेय संसेवेयैनमिति ॥

३. सौम्ये सूक्ते इन्द्रस्य कीर्तनं सोमस्येन्द्रस्वामिकत्वान्न विरुद्धमित्याशयः ॥

४. बलाद्दर्पितः कामनया सख्या वा केनचिद्येनेमामापदमापादिताः सो वमनद्वारेणेत्यर्थः ॥

५. तेनास्माकमायुषो यदवखण्डनं कृतं तत्पूरणाय ॥

६. अत्र यद्यपि "ईमहे" इत्येवं याच्ञाकर्मसु पठितं (निघं० ३।१९।१) तथापि तत्र ई गतावित्येव (दि० अ०) धातुर्यस्य "बहुलं छन्दसी"–(पा० २–४–७३)–ति शपोलुकि श्यन्नभावेरूपम् । "लुकानुत्पत्तिरेवान्वाख्यायत" इति भाष्यसम्मतेः । तथापि धात्वर्थनिर्देशस्योपलक्षणत्वाद्याच्ञार्थतास्य । तेनचोपलक्षणविधया गत्यर्थस्यान्यस्यापि याच्ञार्थत्वमुच्यत इतीण्धातोरप्युत्तमपुरुषेऽत्र एमीति याच्ञार्थकं रूपमित्यवगन्तव्यम् ॥

**पुलुकामः** (१६) इत्यनवगतं **पुरुकामः** इत्यवगमस्तत्र निगमः "पुलु ०० मर्त्य" इति । अस्य "इमं नु सोममन्तितो हृत्सु पीतमुपब्रुवे । यत्सीमागश्चकृमा तत्सुमृळतु" इत्यादिः ॥ अगस्त्यलोपामुद्रासंवादेऽन्तेवासी ब्रह्मचारी **इमां** सौमीं बृहतीमपश्यत् ॥ अहम् **अन्तितः** समीपे वर्तमानम् । **पीतं** पीयमानं सन्तं **हृत्सु** स्वेष्वेव हृदयप्रदेशेषु अवस्थितं **इमं सोमम् सीं** सर्वतः सर्वप्रकारम् **तु** क्षिप्रम् **उपब्रुवे** उपगम्य चेतसा प्रार्थये । किम्? **यत् आगः** गुर्वोः कामप्रलापश्रवणविषयं पापं **चकृम** कृतवन्तो वयम् **तत्** अयं सोमः **सुमृळतु** सुष्ठु सुखविपरिणामं करोतु । "मृड सुखने" (तु० प०) लोट् । ननु महत्पापमनुभुज्यमानं प्रार्थनया कथं लुप्येतेत्यत आह—**हि** यस्मात् **मर्त्यः** मनुष्यः **पुलुकामः** पुरुकामयते, बहुकामनावान्भवति । अल्पेनैव कर्मणा बहुकामानाकलयति सोऽयं मनुष्यस्वाभाव्यात् (बहुकामत्वात्) अवश्यमवश आगः करोति तदयं पीतः सोमः शमयत्विति भावः ॥ अत्र कपिलिकादित्वाल्लत्वम् ॥ ५ ॥

एवमत्र "पुलुकाम" शब्देन "पुरुकामो बहुकाम" उच्यते । "मर्त्य"–शब्दसामानाधिकरण्यात्सारूप्याच्च ॥

## असिन्वती असङ्खादन्त्यौ ॥

## "असिन्वती बप्सती भूर्यत्तः" इत्यपि

(ऋ० सं० ८–३–१४–१)

## निगमो भवति ॥

**"असिन्वती"** (१७) इत्यनवगतम् । **"असङ्खादन्त्यौ"** इत्यर्थप्रतीतिः । अत्र निगमः असि ० ० यत्त इति । अस्य "अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु । नानाहनू विभृते संभरेते" इत्यादिः । वैश्वानरस्याग्नेः सौचीकस्य वा,

१. स हि अनयोर्दम्पत्योः सम्भोगसंलापं श्रुत्वा तत्प्रायश्चित्तं चिकीर्षुरिमामृचमुत्तराञ्चापश्यदित्यनयोर्विनियोगः शौनकेनोक्तः—"इमन्नुसोममित्येते द्वे ऋचौ प्रयतो जपन् । सर्वान्कामानवाप्नोति पापेभ्यश्च प्रमुच्यते" इति ॥

२. पापजनितदुःखं माकरोत्वित्यर्थः ॥

३. अत्र सायणः । यस्मादेवं तस्मात्परिहरेत्यर्थः । यद्वा–पापमपवर्जनीयतया प्राप्यत इत्येत्याह–"पुरु०० मर्त्य" इति । कामहतः सन्कामेन निरुद्ध एव वर्तते । अतस्तयोरस्येको युक्तः । तच्छब्दश्रवणदोषोऽपि प्रामादिकोऽस्माकं प्राप्तोऽनेन सोमेन परिहर्तव्य इत्यर्थः । यद्वा अयं मन्त्रः चन्द्रपरो व्याख्येयः । मनसोऽभिमानित्वाच्च तस्य पापस्यापि मनस्येव सम्भावितत्वात् । असिन्पक्षे हृत्सु पीतं हृदयस्थितमित्यर्थः । शिष्टं स्पष्टमिति ॥

४. सान्तः क्लीबोऽयम् । "सहिष्ये शतमागांसी–"ति माघात् । तथाचामरोऽपि अचिरादिशब्देषु (सान्तेषु) "पापापराधयोरागः" (३–३) इति पठितवान् । "इणशतावि"त्यस्मात् (अ० प०) "इण अपराधेच" (उ० ४–२१२) इत्यसुन् आगादेशश्चेति साधुः ॥

वाजम्भरस्य वा सतेरियमार्षम् । त्रिष्टुबाग्नेयी ॥ अहम् **महतो** महनीयस्य **अस्य** भगवतः अग्नेर्**महित्वम्** महाभाग्यम् **अपश्यम्** । कथम्भूतस्य । **मर्त्यासु** मरणधर्मिणीषु **विक्षु** मनुष्यप्रजासु । ( तासां हृदये ) **अमर्त्यस्य** अमरणधर्मिणः । ( वैश्वानररूपेण वर्तमानस्य ) यद्वा–मर्त्यासु विक्षु ऋत्विग्यजमानरूपासु प्रजासु । अमर्त्यस्य सर्वदा जागरितस्य ( अथवा-द्यावाग्निरूपोऽग्निरनेनोच्यते ) । किम्पुनस्तन्महाभाग्यम् ? यदस्य **हनू** हननसमर्थे शिप्रे इव ज्वाले **नाना** भावेनावस्थिते **विभृते** विविधमिव धृते सत्यौ **संभरेते** एकत्र हरेते हवींषि दारूणि वा । हस्यात्र भः ( पा० ३–१–८४ वा० ) संहृत्य च **असिन्वती** असंखादन्त्याविवं । "दीर्घाज्जसिच वा छन्दसी"ति ( पा० ६–१–१०६ ) वा पूर्वसवर्णदीर्घः । ( असंचूर्णयन्त्याविव वा ) एवं शीघ्रं **बप्सती** भक्षयन्त्यौ **भूरि** प्रभूतमपि हविर्जातं दारुजातं वा यत् **अत्तः** भक्षयतः । नच श्राम्यतः । एतदस्य महाभाग्यमहमपश्यमस्मिन्मनुष्यलोक इति । हनुरूपसम्बन्धात् बह्वीष्वपि ( सप्तसु ) ज्वालासु द्विवचनमेव स्थितं द्वे एव हनू भवत एकस्येति ॥ १ ॥

एवमत्र हनुसम्बन्धात् "असिन्वती–असंखादन्त्यौ" इत्युपपद्यते ॥

## कपनाः कंपनाः क्रिमयो भवन्ति ॥
## "मोषथा वृक्षं कपनेव वेधसः" ॥

( ऋ० सं० ४–३–१५–१ )

## इत्यपि निगमो भवति ॥

"**कपना**" (१८) इत्यनवगतम् "**कम्पनाः**" इति शब्दसमाधिः । **क्रिमयो भवन्ति** इत्यभिधेयवचनम् क्रिमयोऽत्र घुणः । तत्र निगमः **मोष००धसः** इति ।

"अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः । अध स्मानो अरमतिं सजोषसश्चक्षुरिव यन्तमनुनेषथा सुगम् ॥"

इतीयं श्यावाश्वस्यात्रेयस्यार्षम् । मारुती जगती । दाशरात्रिके त्रिवृत्–स्तोमे प्रथमेऽहन्याग्निमारुते विनियुक्ता । हे **वेधसः** ! वृष्टेर्विधातारः **मरुतः** ! भवतां **शर्द्धः** गणः बलं वा ( निघं० २–९ ) "शृधेः" (भ्वा० आ०) असुन् ( उ० ४–१८८ ) **अभ्राजि** भ्राजते । वर्तमाने लुङ् (पा० ३–४–६) **यत्** येन गणेन बलेन वा **अर्णसम्** उदकवन्तम् "अर्श आदि"-त्वात् ( प० ५–२–१२७ ) मत्वर्थीयोऽच्प्रत्ययः । **वृक्षं** वृक्ष्यते विदार्यते इति वृक्षं मेघम् "ओव्रश्चू छेदने" ( तु० प० ) सक् (उ० ३–६६) **मोषथा** मोषथ मुष्णीथ । बाहुलकाद्विकरणव्यत्ययः । ताडयथ, निरुदकं कुरुथ यूयमित्यर्थः । संहितायाम् "अन्येषामपी"–(पा० ६–३–१३७)–ति दीर्घः । एवमग्रेऽपि । कथं पुनर्मुष्णीथ ! **कपनेव** कपनाः म्पनाः अल्पसत्वाः क्रिमयो घुणा यथा । ते यथा वृक्षमनुप्रविश्यान्तर्गतं दारुचूर्णं रसं वा मुष्णन्ति तद्वदित्यर्थः । अत्र "आगमशास्त्रमनित्यमि" ( प० ९५ ) ति नुमिदिल्लक्षणः ( पा० ७–१–५८ ) न भवति । युच् त्वौणादिकः ( उ० उ० ४–७४ ) "कपि चलने" इत्येष धातुः ( भ्वा० आ० ) योरनः ( पा० ७–१–१ ) सन्धिरथार्ष एव ॥ **अध** अपि च **स्म** इति पूरणः । हे **सजोषसः** ! अस्मासु समानप्रीतयो ! **यूयम् अरमतिम्** अलंमतिं पर्याप्तमतिं ( परिसमाप्तविद्यं ) यजमानं स्वकृतेनैव कर्मणा विद्यया वा । **यन्तम्** इतो लोकादमुं लोकं गच्छन्तम् । **सुगम्** शोभनमार्गम् "सुदुरोरधिकरणे" ( पा० ३–२–४८ वा० ) इति डो डित्वाट्टिलोपः **अनुनेषथ** अनुक्रमेण नयत, विकरणवर्णव्यत्यय आर्षः । नयतेर्द्विकर्मकत्वाद्द्वयोरपि द्वितीया । अत्र दृष्टान्तः–**चक्षुरिव** चक्षुर्यथा-गच्छतः पुरुषस्य गमनानुग्रहे वर्तते एवं यूयमप्येनं यजमानं सुगमध्वानमनुनेषत, गमनानुग्रहे वर्तध्वमिति भावः ॥ १ ॥

एवमत्र वृक्षसम्बन्धात् "क्रिमयः कम्पनाः" ते हि वृक्षं मुष्णन्ति, मोषयन्ति च ( कम्पयन्ति च ) यं खादन्ति, स्वयमेव वा कम्पन्ते चलनस्वाभाव्यात् ॥

## भाऋजीकः=प्रसिद्धभाः ॥
## "धूमकेतुः समिधा भाऋजीकः ॥"

( ऋ० सं० ७–६–११–२ )

## इत्यपि निगमो भवति ॥

"**भाऋजीकः**" (१९) इत्यनवगतम् "ऋजुभाः" इत्यवगमः । **प्रसिद्धभा** इतिपर्यायशब्देन निर्वचनम् । तथाच ऋजुका

---

१. "षिञ् बन्धने" ( स्वा० उ० ) इह भक्षणार्थः । लटः शतरिशुः । ङीप् ( पा० ४–१–६ ) । अत्र सायणः स्तोतारमिति शेषयति ततश्च–बप्सती भक्षयन्त्यौ भूरि प्रभूतं काष्ठमरण्योर्वर्तमानमत्तः भक्षयतः । इत्येवंस व्याख्यत् ॥

२. "भस भर्त्सनदीप्त्योः" ( जु० प० ) "घसिभसोर्हलिचे" ( पा० ६–४–१०० )–त्युपधालोपः । लटः शतरि० श्लौ द्वित्वादिर्ङीप् ( पा० ४–१–६ ) ॥

३. हनुना रूपणात् ॥ ( रूपकोक्तिरियम् ) ॥

४. "प्रथमेऽह्न्याग्निमारुत" इति सूत्रणात् ॥ प्रथमेऽह्न्यादिकमंदः सूक्तं यत्रैषा ऋक् ॥

१. पादविक्षेपार्थात्तु क्रमतेः ( भ्वा० प० ) "क्रमितमिशतिस्तम्भामतइत्" ( उ० ४–१२२ ) इति क्रिप्रत्ययेऽत इत्त्वे च क्रिमिर्दुमामयः कीटः । सोऽयं क्रमिरप्युच्यते बाहुलकात्संप्रसारणेन । तथाच रभसः "द्रुमामये भवेत्पुंसि कीटे च क्रिमिवत् कृमि"–रिति । "घुनकीड़ा" इति ख्यातः ॥

२. अत्र मलोपो रत्वं च पृषोदरादित्वात् । स्वकृतेनैवेत्यादि हेतुभावेन गमनविशेषणमर्थोपपत्तयेऽभ्यूहितं व्याख्यातृभिर्दुर्गादिभिः ॥

३. सुगयच्छन्दयोरित्यर्थः । यन्तमितीणो गत्यर्थाच्छतरि रूपम् । "इणो यण्" ( पा० ६–४–८१ ) ॥

अकुटिला (अप्रतिहता प्रसिद्धा) भा दीप्तिर्यस्य स ऋजुकभाः सन्भाऋजीकोऽग्निरुच्यते पृषोदरादिः (पा० ६-३-१०९) ॥ अत्र निगमः **धूम ०० जीक इति** ॥

"द्वेवो द्वेवान् परिभूर्ऋतेन वहा॑नो ह॒व्यं प्र॒थ॒मश्चि॑कि॒त्वान्। धूमके॑तुः स॒मिधा॒ भाऋ॑जीको म॒न्द्रो होता॒ नित्यो॑ वा॒चा यजी॑यान्" ॥ इतीयमाङ्गिरसस्य हविर्द्धानस्यार्षम्। त्रिष्टुप् आग्नेयी ॥ हे भगवन्नग्ने! **देवः** द्योतमानो दानादिगुणयुक्तो वा त्वं **देवान्** इन्द्रादीन्प्रति **परिभूः** आह्वानहविर्नयनद्वारेण परिगृह्णन् **ऋतेन** यज्ञेन सह नः अस्माकं **हव्यं** हविः **वह** प्रापय। संहितायां "मन्येषामपी-" (पा० ६-३-१३७) ति दीर्घः। कीदृशस्त्वम्? **प्रथमः** मनुष्यहोतारमपेक्ष्य। यद्वा-मुख्यो देवानाम्। **चिकित्वान्** सर्वं (स्वमधिकारं) जानानः। **धूमकेतुः** धूमस्य कर्ता धूमप्रज्ञानो धूमध्वजो वा **समिधा** समिन्धनेन सन्दीपनेन **भाऋजीकः** प्रसिद्धभाः। ऋजुदीप्तिरूर्ध्वज्वलन इत्यर्थः। **मन्द्रः** स्तुत्यः। देवानां मदनः (तर्पयिता) वा। **होता** आह्वाता **नित्यः** ध्रुवः (इतरं मनुष्यहोतारमपेक्ष्याग्निरेव नित्यो होता) **वाचा** वागधिदेवताभावेनावस्थितः सन् **यजीयान्** अतिशयेन यष्टा च मनुष्यहोतारमपेक्ष्येति दुर्गः ॥ २ ॥

एवमत्र शब्दार्थोपपत्तेः "भाऋजीकः प्रसिद्धभा" इत्युपपद्यते ॥

**रुजाना नद्यो भवन्ति, रुजन्ति कूलानि ॥**
**"सं॒रु॒जा॒नाः॑ पि॒पि॒ष॒ इन्द्र॑शत्रुः" ॥**
**(ऋ० सं० १-२-३७-१)**
**इत्यपि निगमो भवति ॥**

**"रुजानाः"** (२०) इत्यनवगतम्। **"रुजत्यः"** इत्यवगमः। **नद्यो भवन्ति** इत्यभिधेयवचनम्। **रुजन्ति कूलानि** इति हेतुनिर्देशः। तथाच "रुजो भङ्गे" (तु० प०) व्यत्ययेन शानच्। तद्विधौ (पा० ३-२-१२४) लडित्यनुवर्तमाने पुनर्लड्ग्रहणादप्रथमासामानाधिकरण्येऽपि भवति। आगमानित्यत्वाच्च (प० ९५) मुगभावः "आने मुगि"ति (पा० ७-२-८२)। अत्र निगमः **संरु ०० शत्रुरिति** ।

"अ॒यो॒द्धेव॑ दु॒र्मद॒ आ हि जु॒ह्वे म॑हावी॒रं तु॑विबा॒धमृ॑जी॒षम्। नाता॑रीदस्य॒ समृ॑तिं व॒धानां॒ सं रु॒जानाः॑ पिपिष॒ इन्द्र॑शत्रुः ॥"

इतीयं हिरण्यस्तूपस्याङ्गिरसस्यार्षं त्रिष्टुबैन्द्री अग्निष्टोमे निष्कैवल्ये शस्यते। इन्द्रशत्रुः इन्द्रः शत्रुः शातयिता (घातको) यस्य सः। इन्द्रेण शातयितव्यो वा। वृत्रो मेघोऽसुरो वा तदाख्यः। **दुर्मदः** दुर्मत्तः दुष्टमदोपेतो हर्षयुक्तो वाक्यात्रसारः सन् **अयोद्धेव** योद्धृरहित इव योद्धृभिन्न इव वा (तथाचात्र बहुव्रीहिः कर्मधारयो वा तत्पुरुषः) **महावीरं** महाविक्रान्तम् (गुणैर्महान्भूत्वा शौर्योपेतम्) **तुविबाधम्** बहूनां शत्रूणां बाधितारं तुवि इति बहुनाम (निघं० ३-१-२) **ऋजीषम्** ऋजीषिणम् इन्द्रम्। तदुक्तम् "ऋजीषी वज्री वृषभस्तुराषाट्" (ऋ० सं० ४-२-११-४) इति। अत्र "अर्जेर्ऋज च"-(उ० ४-२७)-तीषन्। किंचेत्यनुवृत्तेर्गुणाभावस्तत "अर्श-आदि"-(पा० ५-२-१२७)-त्वान्मत्वर्थीयोऽच्प्रत्ययः। यत्सोमस्य पूयमानस्यातिरिच्यते तदिहर्जीषमुच्यते। तमेवम्प्रभावमिन्द्रम् **आजुह्वेहि** आहूतवानस्मि खलु। अथ च **अस्य** एवंप्रभावस्येन्द्रस्य **वधानां** प्रहाराणाम्। यद्वा यावन्तोऽस्य शत्रुवधास्सन्ति वर्णिताः पुराणादिषु तेषां **समृतिं** सङ्गमं (समागमं) **नातारीत्** तरितुं नाशक्नोत्। अतरमाणश्च (तर्तुमशक्नुवंश्च) तत्प्रहारेण विशीर्यमाणः सन् **रुजानाः** ऊर्मिभिः कूलानि रुजन्त्यो वहन्त्यो या नद्यो भवन्ति ताः **संपिपिष** सम्यक् पिष्टवान्। व्यत्ययेनात्मनेपदम्। "पिषू संचूर्णने" (रु० प०)। सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यं पाषाणादिकं च चूर्णीभूतमित्यर्थः ॥ १ ॥

एवमत्र शब्दार्थोपपत्तेः "नद्यः रुजाना" इत्युपपद्यते ॥

**जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वा ॥**
**"क्षि॒प्ता जू॒र्णिर्न व॑क्षति" त्यपि**
**(ऋ० सं० २-१-१७-३)**
**निगमो भवति ॥**

**"जूर्णिः"** (२१) इत्यनवगतम्। **"जवते"**रित्यादि शब्दसमाधयः। तथाच जवनाद्द्रवणाद्दवनाद्वा जूर्णिः शक्तिः (आयुधविशेषः) तत्र **जवति-द्रवती** गत्यर्थौ तत्र "जु" इति सौत्रो धातुर्गतौ वेगे चेति दीक्षिताः। द्रवतिस्तु भ्वादिः परस्मैपदी। **दुनोतिर्हिंसार्थः** (स्वा० प०) तस्य दीर्घान्तत्वं धुनोतिसहपाठात् (तत्रोक्तं दीर्घान्तोऽप्ययमिति तद्देहलीदीपन्यायेनोभयत्र संबध्यत इत्यभिमानः) पृषोदरादित्वात्साधुः। लोके तु

१. अत्र सर्वतो भवतीत्यर्थं दुर्ग आह। तथाच मन्त्रो भवति "अ॒ग्ने॒र्नेमि॑र॒राँ इ॑व दे॒वांस्त्वं प॑रि॒भूर॑सि" इति (ऋ० सं० ४-१-५-६)

२. केतुरिति प्रज्ञानाम (निघं० ३-९-२) वेदे। लोके तु ध्वजः "ग्रहभेदे ध्वजे केतु"रित्यमरः ॥

१. समासान्तविधेरनित्यत्वा"न्नृतश्च" (पा० ५-४-१५३) इति कबभावः ॥

२. "ह्वेञ्स्पर्द्धायां शब्दे च" (भ्वा० उ०) लिट्। "अभ्यस्तस्य च" (पा० ६-१-३३) इति सम्प्रसारणम्। उवङादेशाभावश्छान्दसः। यद्वा "छन्दस्युभयथे"-(पा० ३-४-११७)-ति सार्वधातुकसंज्ञायां "हुश्नुवोः सार्वधातुके" (पा० ६-४-८७) इति यणादेशः। अत्र च लक्षणप्रतिपदोक्तपरिभाषा नोपतिष्ठते लक्ष्यानुरोधादेव। अन्यथाहि आजुह्वान इत्यादिषु यणादेशो न स्यात्। न चैवं सति "सातयेहुवे वामि"त्यादिष्वपि तथा स्यादिति वाच्यम् अनेकाच्त्वाभावात्। अनेकाच इति हि तत्रानुवर्तते ॥

३. इन्द्रेण हतो नदीषु पतितस्सन् ॥

जूर्तिरिति भवति । तदपि ज्वरतेः क्तिनि "ज्वरत्वरे"—( पा० ६–४–२१ ) त्यूठि बोध्यम् ॥

अत्र निगमः **क्षिप्ता ० ० क्षति** इति ॥ "प्रप्रावो अस्मे स्वयशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्दुर्मतीनाम् । स्वयं सारिषयध्यै यान उपेषे अत्रैमहूते मंसच वक्षति क्षिप्ताजूर्णिर्न वक्षति ॥ इतीयं पुरुच्छेपस्यार्षम् । अतिशक्वर्यतिच्छन्दाः । पृष्ठ्यस्य षष्ठेऽहनि निष्कैवल्ये शस्यते । अत्रोपसर्गश्रुतेर्योग्यक्रियाध्याहारः कार्यः । तथाच—हे स्तोतार ऋत्विजः ! **प्र** प्रब्रवीमि **वः** युष्मान् । यत् यूयं **प्र** प्रब्रूत **अस्मे** अस्मदर्थम् "सुपांसुलुगि"—(पा० ७–१–३९)—ति भ्यसः शेभावः । **स्वयशोभिः** आत्मीयैर्यशोभिर्युक्ताः **ऊती** अवनप्रधानाः स्तुतीरिन्द्रस्य । विसर्गलोप आर्षः । यतोऽसौ **इन्द्रः** युष्माभिः स्तुतः सन् **दुर्मतीनाम्** पापमतीनामस्मच्छत्रूणाम् **परिवर्गे** परिवृज्यन्ते वियुज्यन्ते प्राणा अत्रेति घञ् ( पा० ३–३–१९ ) "चजोः" ( पा० ७–३–५२ ) इति कुत्वम् । सङ्ग्रामे । हन्ता "भविष्यती"ति शेषः । ततश्च **दुर्मतीनां** दुष्टबहुमानवतां हननबुद्धीनां **दरीमन्** दरीमणि । ङे र्लुक् ( पा० ७–१–३९ ) अतिशयेन दारयितरि तस्मिन् इन्द्रे सम्यक्पालयति सति । **अत्रैः** अदनैः ( भक्षकैरक्षोभिरस्मद्विरोधिभिः ) **या जूर्णिः** शक्तिः **नः** अस्मान्प्रति **रिषध्यै** रेषितुं ( हिंसितुं ) रिषेर्हिंसार्थात् ( दि० प० ) "तुमर्थे०" ( पा० ३–४–९ ) कध्यैप्रत्ययः । कित्त्वाद्गुणाभावः । अथ **च उपेषे** उपगन्तुम् ( अस्मान्प्राप्तुं धर्तुं वा ) "इङ् गतौ" (दि० आ० ) "तुमर्थे०" (पा० ३–४–९ ) क्से प्रत्ययः । **क्षिप्ता** प्रेरिता **सा स्वयम्** आत्मनैव **हता** नष्टा **असत्** भूयात् । लिङर्थेऽत्र लेट् । "लेटोऽडाटौ" ( पा० ३–४–९४ ) "इतश्च लोपः" ( पा० ३–४–९७ ) इतीकारलोपः । **ईम्** इत्यनर्थकः । एवार्थो वा हतैव भूयात् तादृशोऽस्येन्द्रस्य महिमास्तीति भावः । अतः **न वक्षति** न प्राप्नुयात् अस्मान्प्रति । तथाऽस्मच्छत्रूनपि **न वक्षति** तानपि प्रतिन प्राप्नुयात् । आपणार्थाद्वहेर्लेटि "सिब्बहुलं लेटी"—( पा० ३–१–३४ )—ति सिप् शपोऽपवादः । "ह्रोढः" ( पा० ८–२–३१ ) ढस्य कः ( पा० ८–२–४१ ) षत्वम् । इन्द्रस्य भगवतो महिम्ना मध्य एव नंक्ष्यतीत्यर्थः ॥ ३ ॥

एवमत्र क्षेपणसम्बन्धात् "जूर्णिः शक्तिः" इत्युपपद्यते ॥

१. सायणस्तु—हे ऋत्विजः ! वो युष्मदर्थमस्मेऽस्मदर्थञ्चायमिन्द्रः स्वयशोभिः स्वकीययशोयुक्तैः ऊती ऊतीभिः रक्षणैर्दुर्मतीनां दुर्मननयुक्तानां विरोधिनां परिवर्गे परितो वर्जने निमित्तभूते सति प्रप्र प्रकृष्टो भवति समर्थो भवतीत्यर्थः । द्विर्भावः पादपूरण इत्येवमाह ॥

२. अथवा ऊती अविता । ऊतीशब्दादवनार्थाद्वीह्यादित्वान्मत्वर्थ इनिः ॥

३. दृणातेर्हिंसार्थात्तच्छीले कर्तरि ईमनिच् प्रत्यय औणादिकः ॥

अथ "**ओमनाः**" (२२) इत्यनवगतम् "अवनायावनेन वे"त्यवगमः । तत्र तावन्निगमं पठति—

## "परिंग्रंसमोमनां वां वयोऽगात्" ॥

( ऋ० सं० ५–५–१६–४ )

## पर्यगाद्वां ग्रंसमहरवनायान्नम् ॥ ५ ॥ (४)

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नैग० का० पूर्वषट्के षष्ठाध्यायस्य प्रथमः पादः ॥ ६ ॥ १ ॥ * ॥

**परिंग्रंसमिति** । अस्य "युवोः श्रियं परि योषा वृणीत सूरो दुहिता परितक्म्यायाम् । यद्देवयन्तमवथः शचीभिः" इत्यादिः ॥ वसिष्ठस्येयमार्षम् त्रिष्टुवाश्विनी । प्रातरनुवाकाश्विनयोः शस्यते ॥ **हे** अश्विनौ ! **युवोः** युवयोः **श्रियं** श्रयत एनमिति श्रीः रथस्तम् । यद्वा श्रयणं श्रीस्तां सेवामेव **पर्यवृणीत** सर्वतः सम्भजते । "वृङ् सम्भक्तौ" ( क्र्या० आ० ) वर्तमाने लुङ् ( पा० ३–४–६ ) का ? **योषा** योषित् । आत्मानं सर्वदा मिश्रयन्ती । "यु मिश्रणे" ( अ० प० ) सक् । कतमा ? **सूरः** सूर्यस्य । ङसः "सुपां सु०" ( पा० ७–३९ ) इत्यादिना सुः । **दुहिता** पुत्री उषःसंज्ञिका । कदा ? **परितक्म्यायाम्** रात्रौ (निघं० ४–१–२७) ऊर्ध्वमर्धरात्रात् । सह्यश्विनोः कालः । किञ्च **यत्** यस्मात् **देवयन्तम्** देवान्यष्टुमिच्छन्तं यजमानम् **शचीभिः** स्वैः कर्मभिः ( निघं० २–१–२२ ) **अवथः** रक्षयथः । युवाम् । तस्मात् **वयः** अन्नम् हविर्लक्षणम् **ग्रंसम्** अहः ( निघं० १–९–६ ) प्राप्य । प्राप्तेऽहनीति यावत् । तथाचोक्तम्—"पूर्वाह्णो ह्यश्विनोर्यागकालः" इति । वेदेऽपि "प्रातर्यावाणा प्रथमा यजध्वम्" इति ( ऋ० सं० ४–४–१८–१ ) पठ्यते । **ओमना** अवनायै । अवनेन वा निमित्तभूतेन । **वां** युवां **पर्यगात्** परिगच्छति । "इण् गतौ" ( अ० प० ) वर्तमाने लुङ् ( पा० ३–४–६ ) "इणो गा लुङि" ( पा० २–४–४५ ) इति गादेशे "गातिस्थे"ति ( पा० २–४–७७ ) सिचो लुक् ॥ ४ ॥

१. परिपूर्वात् तकतेर्गत्यर्थात् ( निघं० २–१४–६८ ) मनिन् । अनो यादेशः पृषोदरादित्वात् । सर्वत्रहिदेशे रात्रिर्गच्छति । यद्वातक्मेत्युष्णनाम तत्परित उभयतोऽस्यास्सेयं म्परितक्म्या । यकारोपजनः ॥

२. "ग्रह उपादाने" ( क्र्या० उ० ) अस्माद्भि "पृषोदरादि"त्वात् ( पा० ६–३–१०९ ) गकारस्य घकारोनुगागमो हकारस्य सकारश्च । गृह्यन्तेऽस्मिन्रसा अवश्याया आदित्येनेति ग्रंसम् अहः ॥

३. अवनशब्दस्याकारवकारयोरोकारमकारौ विभक्तेश्चाकारः । ( निघं० ४–३–२२ ) ॥

एवमत्राश्विनोर्हविःसंप्रदानसम्बन्धात् "ओमना" इत्यस्य "अवनाय अवनेन वे"-त्येवं विपरिणततोऽर्थ उपपद्यते ॥५॥ (४)

**इति श्रीमद्यास्कमु० प्र० नि० शास्त्रे लघु० नै० का० षष्ठाध्यायस्य प्रथमः पादः ॥ ६ ॥ १ ॥ * ॥**

---

## अथ षष्ठाध्यायस्य द्वितीयः पादः ॥

### उपलप्रक्षिणी=उपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वा ॥

अथ "उपलप्रक्षिणी" (२३) इत्यनवगतम् । सक्तुकारिकाऽभिधेया । सा हि **उपलेषु** प्रस्तरेषु ( घरट्टेषु ) "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषद्" इत्यमरः । यवान् **प्रक्षिणाति** हिनस्ति पिनष्टीति यावत् । "क्षीष् हिंसायां" क्र्यादिः परस्मैपदी ॥ एवमस्याप्रतीयमानार्थस्य विग्रहेणेनार्थप्रतीतिरधगमः ॥ अथ **वा उपलप्रक्षेपिणी** । उपलेषु पाकभाण्डेषु प्रक्षेपिणी भर्जनार्थं यवानाम् यद्वोपलान् शर्कराः ( प्रतप्तवालुकाकणाः ) प्रक्षिपति सयवे पाकभाण्डे भर्जनार्थं यासेयमुपलप्रक्षेपिणी सती उपलप्रक्षिणीत्युच्यते । तथाचोपलशब्दोपपदात्क्षिणातेः क्षिपतेर्वा "सुप्यजातौ णिनिस्ताच्छील्ये" ( पा० ३-२-७८ ) इतिणिनिप्रत्यये व्यत्ययेन टिलोपे ङीप् ( पा० ४-१-५ ) ॥

एवमत्र सक्तुकारिका तज्जीविनी स्त्री उपलप्रक्षिणीत्युक्ता । स एव आपद्धर्मस्तस्या इति ( इममर्थम् )-आख्यायिकयाभिदधाति—

**( इन्द्र ऋषीन्पप्रच्छ दुर्भिक्षे केन जीवतीति ? तेषामेकः प्रत्युवाच**
**शकटः शाकिनी गावो जालमस्यन्दनं वनम् ।**
**उदधिः पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥ १ ॥**
**इति ।**

**सा निगदव्याख्याता ) ॥ १ ॥**

**शकट** इत्यादि छागलेयस्मृतावप्यापद्धर्मप्रकरणे पठ्यते । तत्रानूपम्पर्वत इति प्रचुरः पाठः । तथाच याज्ञवल्क्योऽपि- "कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः । सेवानूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु ।" इति । अत्रापत्तौ जीवनानीति विशेषणात्कृष्यादीनां मध्येऽनापदवस्थायां यस्य या वृत्तिः प्रतिषिद्धा तस्य सा वृत्तिरनेनाभ्यनुज्ञायते । यथाऽऽपदि वैश्यवृत्तिः स्वयं कृता कृषिर्विप्रक्षत्रिययोरभ्यनुज्ञायते । एवं शिल्पादीन्यप्यभ्यनुज्ञायन्ते ॥ तत्र **शकटः** धान्यादिवहनद्वारेण जीवनहेतुः । **शाकिनी** शाकयुक्ता भूमिर्गृहवाटिका । सा हि शाकाद्याहरणेन । **गावः** दुग्धादिना । **जालम्** मत्स्याद्याहरणेन । **अस्य-( स्प-) न्दनम्** । अचलनं स्वस्थानात्त्यागः । तद्धि ऋणादिलाभेन, व्याधिक्यनिवृत्त्या च । **वनम्** फलपुष्पाद्याहरणेन । **उदधिः** अनूपो देशः । अजहत्स्वार्थलक्षया तथावगमात् । स हि मृडालशालूकाद्याहरणेन । **पर्वतः** गैरिकमृदाद्याहरणेन । **राजा** भैक्षादिना ॥ **सा इयं** म्प्रत्युक्तिर्क्षे-**निगदव्याख्याता** । निगदेन पाठमात्रेण व्याख्यातं व्याख्यानं यस्यास्तथाभूता । व्यक्तार्थेति यावत् ॥ १ ॥

उक्तार्थे निगममुदाहरति—

**कारुरहं ततो भिषगुपलप्रक्षिणी नना । नानाधियो वसूयवोऽनुगा इव तस्थिमेन्द्रायेन्दो परिस्रव ॥ ३ ॥** ( ऋ० सं० ७-५-२५ )

**कारुरिति** ॥ आङ्गिरसस्य शिशोरार्षम्पङ्क्तिरैन्द्री । स्वदुष्कृताशङ्कया किलापरिस्रवति सोमे पापसङ्कीर्तनादात्मशुद्धिर्भविष्यतीति मन्यमान आत्मानमेव निर्दिशन्नाह—अहं तावत्करिः-

---

१. उपलेषु श्लक्ष्णासु संतप्तासु वालुकासु यवान् क्षिणाति हिनस्ति भृज्जतीत्यर्थ इति देवराजयज्वानः प्राहुः ।

२. आपद्धर्मोपजीव्यपरिगणनमिदमुदाहरणमात्रं न परिसंख्या, तेनोपलप्रक्षिण्याः ( सक्तुकारिकायाः ) ताद्धर्म्यमिणिना तांच्छील्यार्थेनाभिहितं न विरुध्यते । सततकरणं हि ताच्छील्यमुच्यते ॥ अतएव याज्ञवल्क्येन मनुना च यदृच्छयाऽन्येऽपि जीवनहेतवोऽभिहिताः । तथाच मनुः—"विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः । धृतिर्भैक्षं कुसीदं च दश जीवनहेतव" इति । तत्र विद्यागारुडादिः । शिल्पं चित्रादि-सूपकरणादि वा । भृतिर्वेतनम् । विपणि-विक्रयस्थानं तेन वाणिज्यं लक्ष्यते । धृतिः सन्तोषः । तस्मिन्सति स्वल्पेनापि जीवनम् । "भैक्षं भिक्षाकदम्बकम् । कुसीदं वृद्धिजीविके"ति चामरः ॥ इयमाख्यायिकाऽप्रासङ्गिकीति मन्वानाः कोष्ठाङ्कितं कृत्वा पाठमेतं कलिकातामुद्रितेधृतवन्तः ॥

१. "शकटोऽस्त्रियामि"त्यमराभिधानेन शकटमपि ॥

२. तथाचोक्तम् "पत्रं पुष्पं फलं कन्दं नालं संस्वेदजं तथा । शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरमि"ति वैद्यकोक्तशाकयोगाच्छाकिनीति । ( आह्निकतत्त्वे रघु० भट्टाचार्येण ) ॥

३. स्वस्थानस्थायिनामेव तत्सुलभं भवति ॥

४. यथाकथाच गृहे निर्वाहस्य कर्तुं शक्यत्वात् ॥

५. यद्यपि "जलप्रायमनूपं स्यादि"त्यमरेण नपुंसकमनूपमुक्तं तथापि "अनूपो महिषे नाम्बुप्रायदेशे तु वाच्यवदि-"ति मेदिन्यभिधानाद्विशेष्यनिघ्नतास्य ॥ अनुगता आपो यस्मिन्निति बहुव्रीहावकारः समासान्तः ( पा० ५-४-७४ ) "ऊदनोर्देशे"-( पा० ६-३-९८ ) इत्यपोऽकारस्योदादेशः । उदधिरपि=उदकानि धीयन्ते अस्मिन् इति किः (पा० ३-३-९३ ) "पेषं वासवाहनधिषु च"-( पा० ६-३-५८ ) ति उदकस्योदादेश इति नार्थेतोऽस्त्यन्तं भिद्यते ॥

६. सायणस्तु—ऋषिः प्रवृत्तसोमयागः सन्दशापवित्रात्सोमे क्षरति सति तत्प्रतिबन्धकपापापनुत्तये पुरश्चरितानुकीर्तनपुरस्सरमध्येषणां चकारेत्येवममुं मन्त्रमवततार ॥

श्विदनादिकाले परेषां **कारुः** स्तोमकर्ता ( स्तुतीनां प्रयोक्ता ) होतृत्वेनावस्थितो यज्ञकर्मणि । बहिर्वा यज्ञात्प्रियवक्ता लौकिकाभिर्वाचोयुक्तिभिर्जीविकापरतया । आसम् । **ततः** मम पिता पुत्रो वा **भिषक्** भेषजकृत् ( वैद्यः ) यज्ञस्य, ब्रह्माभिधानः । "स हि सर्वं त्रय्याविद्यया भिषज्यती"—ति श्रुतेः । इतरो लौकिको वा भिषक् । **नना** मम माता दुहिता वा **उपलप्रक्षिणी** सवनीयानां पेष्ट्री दासीकर्मकरी । "दासीपिनष्टी"—ति ह्युक्तम् । अथवा धानासक्तुकरम्भादीनां कारिका तदाजीव्याऽऽसीत् । ते वयमेवमनादिकाले कस्मिंश्चिज्जीविकाप्रधानाः सन्तः **नानाधियः** नानाकर्माणः । धीरिति कर्मनाम ( निघं० २–१–२१ ) अथच **वसूयवः** वसुकामाः । "क्याच्छन्दसी"—( पा० ३–२–१७० )–ति उः । कथन्नाम वसु लभेमहि येन प्राणधारणं स्यादित्येतेनाभिप्रायेण **अनुतस्थिम** अन्वास्थितास्मो लोकमिमम् । कथम् ? **गा इव** गाव इव । छान्दसो जसश्शसादेशः । गावो यथानेकैरुपकारप्रकारैर्लोकमन्वास्थिता एवमन्वास्थितास्मो वयमपीमं लोकम्परिचर्याभिः कारुरहमित्युक्तपूर्विकाभिः । एतज्ज्ञात्वा सँलम् हे **इन्दो** ! सोम ! **इन्द्राय** इन्द्रार्थम् **परिस्रव** परिक्षर एतस्माद्दशापवित्रादस्माभिरध्येष्यमाण ( प्रार्थ्यमानः ) इत्यर्थः ॥ ३ ॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "उपलप्रक्षिणी" सक्तुकारिकेत्युपपद्यते ॥

अथास्य भाष्यम्—

## कारुरहमसि कर्ता स्तोमानां । ततो भिषक् ।

तत इति सन्ताननाम । पितुर्वा पुत्रस्य वा । उपलप्रक्षिणी=सक्तुकारिका । नना नमतेः । माता वा दुहिता वा । नानाधियो नानाकर्माणः । वसूयवो वसुकामाः । अन्वास्थिताःस्मो गाव इव लोकम् । इन्द्रायेन्दो परिस्रवेत्यध्येषणा ॥

**पितुरिति** । पितुर्हि सकाशात्पुत्रस्तन्यते इत्यसौ **ततः** । एवमपादाने कारके अत्रार्थेक्तः । पुत्रः पुनस्तन्यते । अयं ततः कर्मणि क्त बोध्यः । **इति** एवमेषा **अध्येषणा** सत्कारपूर्विका व्यापारणा ॥ गतमन्यत् ॥

अथ **उपसि** (२४) इत्यनवगतम् । "उपस्थे" इत्यवगमस्तत्र निगमन्दर्शयति—

## "आसीन ऊर्ध्वामुपसि क्षिणाति" उपस्थे ॥

( ऋ० सं० ८–७–१७–३ )

**आसीन** इति । "पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम् ॥ आसी ० ० णाति न्यङ्ङुत्तानामन्वेति भूमिम् ॥" इतीयं वसुकस्येन्द्रपुत्रस्यार्षम् ॥ त्रिष्टुबैन्द्री । महाव्रते मरुत्वतीये शस्त्रे शस्यते । अत्रादित्यात्मनेन्द्रः स्तूयते तदंशत्वात् । आदित्यरूपीन्द्रः **पत्तः** रश्म्याख्यैः पादैः । सार्वविभक्तिकस्तसिल् ( पा० ५–३–१४ ) इतो लोकादुदकं वृष्टिलक्षणं यत् **जगार** गिलति गृह्णाति वा । तत् गृहीत्वा च **प्रत्यञ्चम्** आत्मानं प्रतिगत( मुदक– )–**मत्ति** भक्षयति । मण्डलेऽवस्थापयतीत्यर्थः । तदनन्तरं **वरूथं** वरणीयं तापनिवारकं वा ( निघं० ३–४ ) तद् ( वृष्टिलक्षणमुदकं ) **शीर्ष्णा** शिरःस्थानीयेन रश्मिजालेन **शिरः** सर्वस्य लोकस्य मस्तकं **प्रति दधौ** दधाति क्षिपतीत्यर्थः । अत्र पूर्वत्रच लिट् वर्तमाने ( पा० ३–४–६ ) किञ्च–**उपसि** उपस्थे आत्मन उपस्थानेऽन्तरिक्षलोके मण्डले वा **आसीनः** उपविष्टः सन्

**ऊर्ध्वाम्** उद्गताम् ( उपरि+अन्तरिक्षलोके+अवस्थिताम् ) स्वदीप्तिं **क्षिणाति** हिनस्ति । "क्षीष् हिंसायाम्" ( क्र्या० प० ) अस्य ह्रस्वः ( पा० ७–३–८० ) आलोककरणायाधश्चापि प्रक्षिपतीत्यर्थः । ततश्च **न्यङ्** रश्मिसमूहेन तेन नीचैरञ्चिता ( गन्ता ) सन् **उत्तानाम्** विस्तृतामिमां **भूमिम्** **अन्वेति** अन्वागच्छति यथा निम्नोन्नतं ( सर्वत्र ) प्रकाशनायेत्यर्थः ॥ ३ ॥

१. अध्याहृतमेतद् । भाष्ये तु–असीत्यध्याजहार । तस्य य एवाहं कारुरासं स एवैषम आङ्गिरसोऽस्मीत्येवमात्मप्रत्यभिज्ञापने तात्पर्यमवसेयम् ॥

२. तन्यतेऽस्मादिति ततः पिता, तन्यतेऽसाविति ततः पुत्रः । अपादाने कर्मणि वा क्तः । "अनुदात्तोपदेशे" ( पा० ६–४–३७ )–त्यादिना नलोपः ॥

३. दुर्गस्तु स हि प्रायश्चित्तरोगे उत्पन्ने यज्ञस्य भेषजं करोति । यदुक्तम्–"भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवती"–त्यभिदधौ । "भिषग्वैद्यौ चिकित्सके" इत्यमरः ॥

४. नमनक्रियायोगात् । माता हि स्तन्यदानाद्युपकारार्थमपत्यं प्रति नता ( नमनशीला ) भवति । दुहिता वा शुश्रूषार्थे पितुः प्रह्वीभवति । एवं सर्वेषां परिचरणेन नानाधियो नानाकर्माण इत्येवं मन्त्रार्थ उपपाद्यः । तथाचात्र नमतेः पचाद्यच् ( पा० ३–१–१३४ ) मस्य नद्याप् ॥ अत्र यस्मिन्पक्षे पिता भिषक् तत्र मातानना । यस्मिंश्च पुत्रस्तत्र दुहितानेति योज्यम् ॥

५. पशुपुरोडाशादीनां सोमानां वा पेष्ट्री संचूरिका ॥

६. अत्र वसुशब्दाद्धनार्थादिच्छार्थे क्यच् । "अकृत्सार्वधातुकयोर्दीर्घः" ( पा० ७–४–२५ ) इति वसोर्दीर्घः ॥

७. विज्ञाप्यैतदनेन स्वदुरितानुकीर्तनेन क्षपितकल्मषाः स इति मन्यमान इत्यर्थः ॥

१. प्रतिकूलगन्तारमुदकसङ्घमिति कश्चित् ॥

२. वरतरमिति दुर्गः । वस्तुतो वरूथमिव वरूथम् । गृहं ह्यत्र ( निगमे ) वरूथमुच्यते ( निघं० २–४ ) "भयावरूथं गृणते विभावो" ( ऋ० सं० १–४–२४–४ ) इत्यत्र यथा । व्रियते हि तत् "वृञ् वरणे" ( स्वा० उ० ) "जॄवृञ्भ्यामूथन्" ( उ० २–५ ) इत्यूथन् गुणः ॥

३. "अपि वा शिर आदित्यो भवति" इति ह्युक्तम् ( नि० ) तेन शिरस्त्वमादित्यस्यैवेति दुर्ग आह ॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "उपसि उपस्थे" इत्युपपद्यते ॥

**प्रकलविद्वणिग्भवति । कलाश्च वेद प्रकलाश्च ॥**

**"दुर्मित्रासः प्रकलविन्मिमाना" ॥**

**( ऋ० सं० ५-२-२७-५ )**

**इत्यपि निगमो भवति ॥**

अथ **"प्रकलवित्"** (२५) इत्यनवगतम्। "प्रकलावित्" इत्यवगमः। **वणिक् भवती**त्यभिधेयवचनम्। स हि **कलाश्च वेद प्रकलाश्च ।** कलाः=मानोन्मान-प्रतिमानादिविषयाः । प्रकलाः प्रकृष्टाश्वगणितरत्नपरीक्षादिकाः । वेद-जानाति इति प्रकलवित्। "सत्सूद्विष०" ( पा० ३-२-६१ ) इत्यादिना क्विप्। "ड्यापोः संज्ञाछन्दसोर्बहुलम्" ( पा० ६-३-६३ ) इति ह्रस्वः ॥ अत्र निगमः **दुरि**त्यादिः । तथाच "इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः। दुर्मित्रा० ०माना जहुर्विश्वानि भोजना सुदासे ॥ इति वसिष्ठस्यार्षम्। त्रिष्टुबैन्द्री । महाव्रते निष्कैवल्ये दक्षिणे पक्षे शस्यते ॥ ये पूर्वमुच्चैर्गतयः मेघा असुरा वा ते **एते इन्द्रेण** भगवता मघवता **तृत्सवः** दारयितव्या अथ च दीर्णाः सन्तः **वेविषाणाः** भृशं व्याप्नुवन्तः युद्धार्थं वा सन्नद्धा अपि । "विषॢ व्याप्तौ" ( जु० प० ) यङ्लुगन्तात् लिटः कानच्। **आपो न** आप इव **सृष्टाः** संजाताः विलीनप्राया इत्यर्थः । अतएव **नीचीः** नीचैः । छान्दसं रूपम् । **अधवन्त** अधावन्त । अगच्छन्नित्यर्थः । उच्चैर्गतय एते सन्त इन्द्रवलान्नीचैर्गतयः संवृत्ता इति भावः ॥ ततश्च **दुर्मित्रासः** दुर्मित्राः प्रतिसन्धानपराः **प्रकलवित्** प्रकल्पविदः वणिज इवेति लुप्तोपमानमेतत्, "सुपां सुलुगि"-( पा० ७-१-३९ )-ति जसो लुक् । **मिमानाः** शब्दं कुर्वन्तः "माङ्माने शब्दे च" (जु० आ०) लटः शानच्। बाध्यमाना इति सायणः । ते यथा कृपणसुहृत्संगताक्षणेनाभिद्रोहबुद्ध्या वाल्पं प्रयच्छन्तो बलीयसा राजपुरुषेण बाध्यमाना आक्रोश्यमाना बहु यथालभ्यं प्रयच्छन्ति, तद्वत् एते मेघा असुरा वा इन्द्रबलोद्यताः सन्तः **विश्वानि** सर्वाणि ( अशेषाणि ) **भोजना** भोजनानि शेर्लोपः ( पा० ६-१-७० ) उदकानि भोग्यानि धनानि वा **सुदासे** तन्नाम्नि वा राज्ञि राज्ञे वा कल्याणदाने वा यजमाने सति **जहुः** अर्पितवन्तस्त्यक्तवन्तः ॥ ये पूर्वमल्पोदकदातारो, यथालभ्यं धनं-( करमन्यद्वा ) अप्रयच्छन्त आसंस्त एवाधुना बाध्यमाना इन्द्रेणाशेषाणि तानि जहुरिति तात्पर्यार्थः ॥ ५ ॥

एवमत्राल्पोदकाल्पदानोपमासम्बन्धात् "प्रकलविद्=वणिक्" इत्युपपद्यते ॥

**अभ्यर्द्धयज्वाऽभ्यर्द्धयन्यजति ॥**

**"सिषक्ति पूषा अभ्यर्द्धयज्वा" ॥**

**( ऋ० सं० ४-८-८-५ )**

**इत्यपि निगमो भवति ॥**

अथ **"अभ्यर्द्धयज्वा"** (२६) इत्यनवगतम्। "अभिवृद्धदान" इत्यवगमः **अभ्यर्द्धयन्** अभिवर्द्धयन् यः **यजति** स इत्यवगमप्रकारः । अभ्यर्द्धयतिरत्र दानार्थः ॥ अत्र निगमः **सिषक्ती**त्यादिः । तथाच—"मिम्यक्षयेषु रोदसी नु देवी सिषक्ति ० ० ० यज्वा ॥ श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते ॥" इति ॥ ऋजिश्वा नाम भारद्वाजस्तस्येयमार्षम्। वैश्वदेवे सूक्ते त्रिष्टुप् । **हे मरुतः! येषु** युष्मासु **रोदसी** रुद्रस्य पत्नी **देवी** द्योतमाना माध्यमिका वाक् **मिम्यक्षयेषु** क्षिप्रं सङ्गच्छते । पुनः पुनरेकतां गच्छतीत्यर्थः । म्यक्षतिर्गतिकर्मा ( निघं० २-१४-३३ ) वर्तमाने लिट् ( पा० ३-४-६ ) यजादित्वमस्य भ्वादेराकृतिगणत्वादिति संप्रसारणमभ्यासस्य ( पा० ६-१-१७ ) । तथा **अभ्यर्द्धयज्वा** अभिवृद्धदानः **पूषा** पोषको देवः सूर्यः रश्मिभिः **सिषक्ति** युष्मान् सेवते ( निघं० ३-२९-२३ ) ते यूयं **हवम्** अस्मदीयमाह्वानं **श्रुत्वा यद्ध** यत् ह यदा खलु **आयाथ** आगच्छथ अस्मान्प्रति । तदानीम् **अध्वनि** मार्गे एतस्मिन्नन्तरिक्षे **प्रविविक्ते** आगमनार्थं प्रकर्षेण विविक्ते विजने ( जनैः पृथक् ) कृते सति । विस्तीर्णे इति यावत्। तत्र विद्यमानानि **भूम** बहूनि भूतजातानि **रेजन्ते** कम्पन्ते ( निघं० ३-२९-२६ ) तथाच मन्त्रान्तरम् "प्रवेपयन्ति पर्वतान्विविञ्चन्ति वनस्पतीन्" ( ऋ० सं० १-३-१८-५ ) इति ॥ ५ ॥

१. अत्र दुर्गः—अवयव-प्रत्यवयवादिकलाः प्रकलाशब्देनोच्यन्ते, तेषु च वणिगेव निपुणो भवति गणितकुशलत्वाच्च तथान्य इति ॥

२. पलायनार्थमुद्युक्ता इति सायणः ॥

३. नीचीना इति सायणः ॥

४. सन्धानमिह तुलाप्रग्रहस्याभिमतं तदेव हि तेषां कुवणिजां कौशलं यदल्पं बहुतया तथा कुर्वन्तस्तुलासन्धानं प्रयच्छन्ति । सन्धानं सञ्चय इत्येके ॥

१. सुदासो नाम राजा यत्पुत्रः सौदासो मदयन्तीपतिः । तथाच रामायणं ( वा० सु० ) "सौदासं मदयन्तीवे"ति । यद्वा सुदाः पैजवनो राजा स एवान्यो वा तस्मै । "दासृ दाने" क्विप्। पक्षे भावे घञ्। शोभनः दासो दानं यस्य सः ॥

२. स्तोतॄनभ्यृद्धान्कुर्वन्। यजति धनेन पूजयति ॥

३. महोर्भाव इमनिजन्तस्य पुंस्त्वाभिधानेऽपीह तद्वतोऽभिधाने नपुंसकत्वं मन्त्रदृगाह । जसो लुगत्र । तथाचाभिधानं पुंसीत्यनुवर्त्य "स्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यत" इति ( अमरः ) ॥

एवमत्र "पूषा-अभ्यर्द्धयज्वा" सहि स्वरश्मिपोषं पुष्यन् भूतान्याभिमुख्येन वृध्या योजयन् अभिमतानर्थान्भूतेभ्यो ददाति ॥

**ईक्षे ईशिषे ॥**

**"ईक्षे हि वस्वं उभयस्य राजन्" ॥**

( ऋ० सं० ४-६-८-५ )

**इत्यपि निगमो भवति ॥**

अथ "ईक्षे" (२७) इत्यनवगतम् "ईशिषे" इत्यवगमस्तत्र निगमः **ईक्षे हीत्यादिः** । तथाच—"नृवत्तं इन्द्र ! नृतमाभिरुती वंसीमहि वामं श्रोमतेभिः । ईक्षेहि ० ० जन् धारत्नं महिं स्थूरं बृहन्तम् ॥ इति । भारद्वाजस्यार्षं त्रिष्टुप् ऐन्द्री व्यूढस्य दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते । हे **राजन् !** राजमान ! **इन्द्र !** वयं **ते** त्वत्तः **नृवत्** नृभिर्मनुष्यैः परिचारकजनैर्युक्तम् । **श्रोमतेभिः** श्रोतव्यैर्यशोभिः सहितं **वामं** वननीयं सम्भजनीयं प्रशस्यं याचनीयं वा धनं **नृतमाभिः** नेतृतमाभिः ( मनुष्यतमयोग्याभिः ) । **ऊती** ऊतिभिः "सुपांसुलुगि–" ( पा० ७-१-३९ )त्यादिना विभक्तेः पूर्वसवर्णदीर्घः । रक्षाभिः हेतुभूताभिः **वंसीमहि** सम्भजेमहि याभिस्त्वमस्माञ्छश्वदपुषस्ताभिरेवोपजातशश्वदाश्वासा वयं त्वत्तोऽद्य प्रतिविशिष्टं धनमासाद्य परस्परं समं भजेमहि विभजाम इत्यर्थः । **हि** यस्मात्कारणात् त्वम् **उभयस्य** पार्थिवस्य दिव्यस्य च **वस्वः** वसुनः धनस्य । "आगमशास्त्रमनित्यम्" ( प० १५ ) इति आगमानित्यत्वान्नुमभावः । एवम् **ईक्षे** ईशिषे ईश्वरः ( प्रदातुं समर्थः ) भवसि । अत्रापि "ईशः से" ( पा० ७-२-७७ ) इतीडभावः ॥ तस्मात् **महि** महान्तं **स्थूरं** स्थूलं विपुलं । वर्णव्यत्ययो रलयोरैक्यात् । **बृहन्तं** गुणैः परिवृढं **रत्नं** रमणीयं धनम् **धाः** धेहि । रत्नशब्दो हि रमतेरन्तर्भावितण्यर्थान्नप्रत्यये "रमेस्तच" ( उ० ३-१४– ) इति साधुरत्र पुंलिङ्ग उपन्यस्तः । अर्थान्तरे च नित्यनपुंसकम् । तथाच मेदिनी "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकमि"ति ॥

एवमत्र वसुसम्बन्धात् "ईक्षे" इत्यस्य "ईशिषे" स्वामी भवसीत्यर्थ उपपद्यते ॥

**क्षोणस्य=क्षयणस्य ॥**

१. अत्र दुर्गस्तु—यथा केचिदुत्पन्नप्रणयाः कञ्चिदीश्वरं मनुष्यं स्तुतिभिः सम्भजेरन् एवं वयं त्वां नृतमाभिर्मनुष्यतमयोग्याभिः ऊती–अवन्तीभिस्तर्पयन्तीभिः स्तुतिभिः वंसीमहि सम्भजेमहीत्येवमाह ॥

२. "वनषण सम्भक्तौ" ( भ्वा० प० ) "इषियुधी"–( उ० १-१४२ )–त्यादिना बाहुलकान्मक् प्रत्ययो नकारस्याकारादेशः ( पा० ६-४-४२ ) बाहुलकात् ॥

**"महः क्षोणस्याश्विना कण्वाय"—**

( ऋ० सं० १-८-१४ )

**इत्यपि निगमो भवति ॥ २ ॥ ( ६ )**

अथ **"क्षोणस्य"**–(२८) त्यनवगतम् । **"क्षयणस्य"**–त्यवगमः । अत्र निगमः **मह इति ॥**

तथाच—"युवं श्यावाय रुशतीमदत्तं महः ० ० ण्वाय । प्रवाच्यन्तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥"

इतीयं कक्षीवतआर्षम् । आश्विनी, त्रिष्टुप् ॥ प्रातरनुवाकाश्विनयोः शस्यते । हे **अश्विना** अश्विनौ । "सुपांसुलुगि–" ( पा० ७-१-३९ )-ति औङआकारात् । **युवं** युवाम् । **श्यावाय** कुष्ठरोगेणश्याव(कपिश)वर्णाय ऋषये राज्ञे वा **रुशतीम्** ज्वलितरूपां श्रियम् इति दुर्गः । दीप्तत्वचं स्त्रियमिति सायणः । **अदत्तम्** प्रायच्छतम् । अपिच युवामेव **क्षोणस्य** क्षयणस्य चतुर्थ्यर्थे षष्ठी "व्यत्ययो बहुलम्" (पा० ३-१-८५) इति । तथाच "क्षि निवासगत्योः" (तु० प०) अस्मात् "कृत्यल्युटो बहुलमि"–( पा० ३-३-११३ )-ति कर्तरि ल्युट् । गुणे यस्योकारः पृषोदरादित्वात् "आद्गुणः" ( पा० ६-१-८७ ) इति गुणे क्षोणाय (योऽयं दृष्टिराहित्येनैकस्मिन्नेव स्थाने निवसति तस्मै) **कण्वाय** ऋषये **महः** तेजः ( तैजसं चक्षुरिन्द्रियम् ) अदत्तमिति पूर्वेणैवान्वयः । तथा हे **वृषणा !** वृषणौ कामानां वर्षितारौ औङ आ ( पा० ८-१-३९ ) **वां** युवयोः **तत्** अनिर्वचनीयं **कृतं** कर्म । **प्रवाच्यम्** (प्रकर्षेण वाचनीयं) शंसनीयं **यत् नार्षदाय** नृषदपुत्राय वधिराय ऋषये "ऋष्यन्धके"–( पा० ४-१-११४ )त्यणपत्ये । **श्रवः** श्रवणेन्द्रियम् **अध्यधत्तम्** अधिकं दत्तवन्तौ स्थः ॥ ३ ॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "क्षोणस्ये"–ति"क्षयणास्य" गृहस्य ( दुर्गमतेन ) क्षयणाय निवसते इति ( सायणमतेन ) वाऽर्थ उपपद्यते ॥

१. दुर्गस्तु भावे ल्युडन्ताभिप्रैति तन्मते हि मह इति महत इत्यर्थकः छान्दसोऽछोपः ॥ तच्च क्षयणस्येत्यस्य विशेषणम् । क्षयणस्य निवासस्य दातारौ युवामेवेति तन्मतेऽर्थः । अत्र सायणोऽस्य मन्त्रस्यार्थान्तरमपर आहेत्यादिना कृतवान् । तथाहि ब्राह्मण्यस्य परीक्षार्थमसुराः कण्वमृषिं गूढे तमसि निदधुः । "अत्रैव स्थितः सन्व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोऽसी"–ति । तमश्विनावागत्योचतुः व्युष्टायामुषसि हर्म्यस्योपरि वीणां वादयन्तावावामागमिष्यावस्तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि तदेतत्प्रतिपाद्यते । हे वृषणा कामानां वर्षितारावश्विनौ ! वां युवयोस्तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं, यन्नार्षदाय नृषदपुत्राय कण्वाय महः महतः क्षोणस्य शब्दकारिणो वीणाविशेषस्य श्रवःशब्दमध्यधत्तमुषसो विज्ञानार्थमधिकमकुरुतम् ॥ इति ॥ अत्र पक्षे क्षोणस्येति "टुक्षु शब्दे" ( अ० प० ) इत्यस्मादौणादिको नप्रत्ययो गुण इति बोध्यम् ॥

अथ "अस्मे" (२९) इत्येतत्पदं सर्वविभक्त्यन्तमित्यनेकार्थम्। प्रकरणादिवशात्तस्य निगमो भवति तद्यथा—

"अस्मे ते बन्धुः।" (य० वा० सं० ४-२२)

वयमित्यर्थः॥

अस्मे इति प्रथमाविभक्त्यन्तम्। बन्धुः बन्धुभूताः। दुर्गस्तु—

"तपसस्तनूरसिप्रजापतेर्वर्णः। परमेण पशुना क्रीयसे सहस्रपोषं पुष्यन्ती। अस्मे ते बन्धुः पुषेयम्" इति मन्त्रमुदाजहार व्याचख्यौ च सोमक्रयणस्य द्रव्यापाकरणमन्त्रेषु अजाया एषोऽपाकरणमन्त्रः। सोच्यते—हे अजे! तपसः अग्नेस्त्वं तनूः शरीरम् असि भवसि। "अग्नेर्ह्येषा अजा" इति ह्युक्तम्। "स एता एभ्यः प्ररोचयत्" इति च। तस्मादुपपद्यतेऽग्नेस्तनुत्वमजायाः। प्रजापतेः। वर्णः वरणीया त्वम् (लिङ्गव्यत्यय आर्षः) सहस्रपोषम् अस्माकं पुष्यन्ती एतस्मिन्कर्मण्यङ्गभावमुपेहि। एवमजामभिष्टुत्याधुना सोमं ब्रवीति—हे सोम! त्वमनेन परमेण श्रेष्ठेन पशुना अजया क्रीयसे। किं कारणम्? अस्मे वयं ते तव बन्धुः बन्धवः विनियोक्तारः॥ एवमत्र प्रथमान्तेन बन्धुशब्देन सामानाधिकरण्यात् "अस्मे" इत्यस्य "वय"मित्येवं प्रथमाया विपरिणाम उपपद्यते॥ द्वितीयायास्तावत्—

"अस्मे यातं नासत्या सजोषाः"

(ऋ० सं० १-८-१९-६)

अस्मानित्यर्थः॥

तथाच मन्त्रः—

"आश्येनस्य जवसा नूतनेनास्मे ०० जोषाः। हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ॥"

इतीयं कक्षीवत आर्षं त्रिष्टुबाश्विनी। प्रातरनुवाकाश्विनयोः शस्यते॥ हे नासत्या! नासत्यौ न असत्यौ अश्विना अश्विनौ सजोषाः सजोषसौ समानप्रीतियुक्तौ "सुपां सुलुक्" (पा० ७-१-३९) इति औङः सुः। पूर्वत्र चात्। युवां श्येनस्य पक्षिविशेषस्येति दुर्गः। शंसनीयं गच्छतोऽश्वस्येति सायणः। नूतनेन नवतमेन जवसा जवेन (परिश्रान्तस्य हि मन्दतरो जवो भवति) अस्मे अस्मान्प्रति आयातम् आगच्छतम्। हि यतः रातहव्यः युवामुद्दिश्योत्सृष्टहव्योऽयं शश्वत्तमायाः कालात्मकतया नित्यायाः उषसः। व्युष्टौ विच्छेदनकाले (प्रभाते) वां युवां हवे आह्वयामि। ह्वेञो लडुत्तमैकवचने "बहुलं छन्दसी"—(पा० ६-१-३४)—ति सम्प्रसारणं शबगुणायादेशाः॥ ६॥

एवमत्रायातमित्यनेन सम्बन्धात् "अस्मे" इत्यस्य "अस्मानि"—त्येवं द्वितीयया विपरिणाम उपपद्यते॥ तृतीयायास्तावत्—

"अस्मे समानेभिर्वृषभ पौंस्येभिः"

(ऋ० सं० २-३-२५-२)

अस्माभिरित्यर्थः॥

तथाच मन्त्रः—

"भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः॥ भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम॥"

इतीयमिन्द्रमरुत्संवादे मरुतामार्षम्। त्रिष्टुबैन्द्री। महाव्रते च व्यूढस्य दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। इन्द्र उच्यते मरुद्भिः। हे इन्द्र! वृषभ! वर्षितस्त्वम् भूरि बहु चकर्थ कृतवानसि कर्म तस्मिंस्तस्मिन्संग्रामे। किंतु तत् समानेभिः समानैः। अस्मे अस्माभिरेव सहायभूतैः। न त्वमेक एवेत्यर्थः। "बहुलं छन्दसी"—(पा० ७-१-१०)त्यैसभावः। युज्येभिः युक्तैः पौंस्येभिः पुंसः कर्म पौंस्यं बलं तद्वद्भिः। "अर्शआदिभ्य"—(पा० ५-२-१२७)न्मत्वर्थीयोऽत्राच्प्रत्ययः। हे शविष्ठ बलिष्ठ! शव इति बलनाम (निघं० १-१२-४१) वयं त्वत्तोऽपि भूरीणि बहूनि कर्माणि कृणवामा कृणवाम कृतवन्तः स्म। हि निश्चयेन। संहितायाम् "अन्येषामपी"—(पा० ६-३-१३७)ति दीर्घः। न केवलमेतद्वचसैव किन्तु क्रत्वा क्रतुना कर्मणा (निघं० २-१-९) "जसादिषु छन्दसि वा वचनम्" (पा० ७-३-९७) इति नाभावाभावः। यदु वृष्ट्यादिकं वशाम कामयामहे "वश कान्तौ" (अ० प–) "बहुलं छन्दसी"—(पा० २-४-७३) ति शपो लुगभावः। सलोप आर्षः। यतो वयं मरुतः। एतेन स्वमहत्त्वं स्थापितं भवति॥ २॥

एवमत्र तृतीयान्तमध्यपातित्वाद् "अस्मेभिः" इति तृतीयया विपरिणाम उपपद्यते॥ चतुर्थ्यास्तावत्—

"अस्मे प्रयन्धि मघवन्नृजीषिन्"

(ऋ० सं० ३-२-२०-५)

१. एकमेव ह्येतच्छन्दरूपं सप्तस्वपि विभक्त्यर्थेषु वर्तते। तथाच जसादीनां "सुपां सुलुगि—" (पा० ७-१-३९)—ति शेआदेशः प्रगृह्यश्च सः (पा० १-१-१३) "शेषे लोपः" (पा० ७-२-९०) इति टिलोपः। सर्वत्र॥

२. विधेयतया वा वचनविपर्यय इति केचित्। वेदाः प्रमाणमितिवत्॥

३. कल्पोऽयमिति न निश्चिनुमः।

४. पशुशब्द उप्रत्ययान्तो नित्यपुल्लिङ्ग इति दारशब्दवत्स्त्रियामपि प्रवर्तत एव। अत एव "पशुना यजेते"ति श्रुतौ पशुस्त्रियामपि प्रवर्त एव। अत एव "पशुना यजेते"ति श्रुतौ पशुस्त्रियायागमाशङ्क्य "छागो वा मन्त्रवर्णादि"—ति न्यायेनैव निर्णयो मीमांसायां चतुर्थाध्याये। "पद्वान तायुं गुहाचरन्तम्" इति श्रुतौ जसादिषु छन्दसि वावचनमिति नाभावाभाव इति वेदभाष्ये स्थितम्॥

१. उदकनाम्नामपि बलार्थे प्रयोगो बहूनां दृष्टो निगमवाक्येषूक्तश्च पुरस्तादनेकत्रेति सन्तोष्टव्यम्॥

**असभ्यमित्यर्थः ॥**

तथाच मन्त्रः—

"अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः । अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्" ॥

इतीयं घोरस्याङ्गिरस आर्षम् । त्रिष्टुबैन्द्री । जातकर्मणि विनियुक्ता । हे **मघवन्** धनवन्! **ऋजीषिन्** गतसारसोमवन् **इन्द्र** ! **विश्ववारस्य** सर्वैर्वरणीयस्य, सर्वोपद्रविवारकस्य वा **भूरेः** बहुनः **रायः** धनस्य "मात्रामि"ति शेषः । यद्वा द्वितीयार्थे षष्ठी । धनम् । **अस्मे** असभ्यं **प्रयन्धि** प्रयच्छ (देहि) । किञ्च **अस्मे** असभ्यं **शतं शरदः** वर्षाणि **जीवसे** जीवितुं (जीवनाय) "तुमर्थे सेऽसे" ( पा० ३-४-९ ) इत्यादिना असेप्रत्ययः । **धाः** देहि । हे **शिप्रिन्**! शोभनहनो! **इन्द्र**! **अस्मे** असभ्यं **शश्वतः** दीर्घायुषः **वीरान्** पुत्रान्देहि । वेदे हि दधातिर्ददात्यर्थेऽपि बहुधा प्रयुज्यते ॥ ५ ॥

एवमत्र याच्ञार्थेनाभिसम्बन्धाद् "अस्मे" इत्यस्या "सभ्यसि"-ति चतुर्थ्यां विपरिणाम उपपद्यते ॥

पञ्चम्यास्तावत्—

"अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु"

( ऋ० सं० ४-७-३२-३ )

**अस्मदित्यर्थः ॥**

तथाच मन्त्रः—

"तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ स सुत्रामा स्ववाँ इन्द्रो अस्मे···योतु ॥" इति ॥

गर्गस्य भारद्वाजस्यार्षम् । षष्ठे मण्डले ऐन्द्री त्रिष्टुप् पुनरपि चेयमेव कक्षीवतेन सुकीर्तिनाम्ना दशमे मण्डले दृष्टा । षष्ठे चाहनि पृष्ठ्यस्य, विश्वजिति चेयं तृतीये सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । **वयम् यज्ञियस्य** यज्ञार्हस्य **तस्य** इन्द्रस्य **सुमतौ** शोभनायामनुग्रहात्मिकायां बुद्धौ **स्याम** विषयभूता भवाम । आशंसायां लोट् । **अपि** चास्य **भद्रे** भन्दनीये स्तुत्ये **सौमनसे** सुमनोभावेऽपि तदीये नित्यमेव स्याम भवेम । **स्ववान्** धनवान् **सः सुत्रामा** सुष्ठु त्राता इन्द्रश्च **अस्मे** अस्मत्तः **आराच्चिद्** दूरदेश एव **द्वेषः** द्वेष्टॄन् शत्रून् **सनुतः** अन्तर्हितान् ( यथा तं न पश्येम तथा ) **युयोतु** पृथक्करोतु नाशयतु वा ॥ ३ ॥

एवमत्रारादित्यनेनाभिसम्बन्धाद् "अस्मे" इत्यस्य "अस्मदि-"ति पञ्चम्या विपरिणाम उपपद्यते ॥

षष्ठ्यास्तावत्—

"ऊर्व इव पप्रथे कामो अस्मे"

( ऋ० सं० ३-२-४-४ )

**अस्माकमित्यर्थः ॥**

तथाच मन्त्रः—

"आनो भर भगमिन्द्र द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके । ऊर्व इव पप्रथे कामो अस्मे तमापृण वसुपते वसूनाम्" इति ॥ "उद्वह रक्षः" इति ( नि० ६-१-३ ) पूर्वोक्ताया एवेयं तृतीयेति तत एवास्या अपि ऋष्यादिकमूह्यम् । हे **इन्द्र**! **द्युमन्तं** द्युतिमन्तं (दीप्तिमन्तं) **भगं** भजनीयं धनराशिम् **नः** अस्मभ्यम् **आभर** आहर आहृत्य देहि । "हृग्रहोर्भश्छन्दसी-" ( पा० ३-१-८४ वा० )-ति हस्य भः ॥ तथा प्रभूतं देहि यथा भुक्तशेषस्य **ते** तव स्वभूतस्य **देष्णस्य** दानस्य "डुदाञ् दाने" (जु० उ० ) "गादाभ्यामिष्णच्" (उ० २-१६) इतीष्णच्प्रत्ययः । **प्ररेके** अतिरेके सति **निदधीमहि** निहितं दधीमहि धारयाम वयम् । अत्र सायणेन "धीमहि" इत्येव पाठो धृतस्तन्मते देष्णस्यात्यर्थं दददस्ते तव सम्बन्धिनो धनस्य प्ररेके प्ररेचने दाने निधीमहि निधिभूताः ( धनदानस्य पात्रभूताः ) स्म इत्यर्थः ॥ कुतः इत्यत आह-**अस्मे** अस्माकं **कामः** अभिलाषः **ऊर्व इव** वडवामुखेऽवस्थितोऽनवाप्तकामोऽपां पानेऽग्निरिव **पप्रथे** प्रथते विस्तीर्यते । लडर्थे लिट् (पा० ३-४-६) हे **वसूनां वसुपते**! मध्यमोत्तमधनानामधिपते इन्द्र! **तं** महान्तं नः कामम् । **आपृण** बहुधनप्रदानेनापूरय ॥ "पृण प्रीणने" (तु० प० ) लोट् ॥ ४ ॥

एवमत्र "कामः पप्रथे" इत्यनेनाभिसम्बन्धादात्मविषयत्वाच्चाशिषः "अस्मे" इत्यस्य "अस्माकम्" इत्येवं षष्ठ्या विपरिणाम उपपद्यते ॥

सप्तम्यास्तावत्—

"अस्मे धत्त वसवो वसूनि" ( वा० सं० ८-१८ )

**अस्मास्वित्यर्थः ॥**

अयं मन्त्र उपरिष्टाद्व्याख्यास्यते ( नि० १२-४-८ ) अत्र "धत्त" इत्यनेन संबन्धात् "अस्मे" इत्यस्या "स्मासु" इत्येवं सप्तम्या विपरिणाम उपपद्यते ॥

अथ "पाथः" ( ३० ) इत्यनवगतमनेकार्थं चेत्यर्थमेदेनावगमयति—

## पाथोऽन्तरिक्षं पथा व्याख्यातम् ।

१. भावेऽत्र प्रत्ययं दुर्गोऽभिप्रैति । सायणस्तु भृशार्थस्तेर्ददातेः कर्तर्याह ॥

२. दधातेर्लिङि "बहुलं छन्दसी"-( पा० २-४-७३ )-ति शपो लुक् । "छन्दस्युभयथे"-( पा० ३-४-११७ )-ति महिङः सार्वधातुकत्वात्सीयुटः सलोपः । आर्धधातुकत्वादालोपः ॥

३. "विशिष्टवाचकपदानां सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्" इति नियमस्य "सकीचकैर्मारुतपूर्णरन्ध्रैः" (रघु० म० का० २ स०) इत्यादिषु दर्शनादिह वसुपतिशब्दोऽधिपतिमात्रार्थः ॥

४. अपठितमेतदन्तरिक्षनामस्विलप्रतीतार्थम् ॥

"श्येनोन दीयन्नन्वेति पाथः"
( ऋ० सं० ५-५-५-५ )

## इत्यपि निगमो भवति ॥

**पाथ इति।** अन्तरिक्षं तावत्पाथ उच्यते तत्पुनरेतत् **पथा व्याख्यातम्** "पन्थाः पततेर्वा" इत्यत्र ( नि० २-२८ ) तथाच पततेरलुक् उपधावृद्धिः । "पतस्थ च" ( उ० ४-१२ ) इति तस्य थो बाहुलकादिति पततीति पाथः ॥ अत्र निगमः **श्येन** इति । तथाच मन्त्रः

"यत्रा चक्रुरमृता गातुमस्मै श्येनो···पाथः ।
प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः" ॥ इति ॥

वसिष्ठस्यार्षम् । त्रिष्टुप् । अस्याः प्रथमोऽर्धर्चः सौर्यो द्वितीयो मैत्रावरुणः । तथाच शौनकः "ऋचः सौर्या हि गीयन्ते उद्वेतीत्यर्धपञ्चमाः" इति । अर्धपञ्चमा इति सार्धचतस्र इत्यर्थोऽर्धेन पञ्चमा इति तदर्थात् ॥ **यत्रा** यत्र यस्मिन्नन्तरिक्षे **अमृता** अमरणधर्माणः पूर्वे देवाः **अस्मै** सूर्याय **गातुं** मार्गं ( निघं० १-१-२० ) **चक्रुः** अकुर्वन् । संहितायाम् "अन्येषामपी"–( पा० ६-३-१३७ ) ति पूर्वपदस्याद्दीर्घः । तत् **पाथः** । अन्तरिक्षम् **श्येनोन** श्येन इव **दीयन्** गच्छन् ( निघं० २-१४ ) **अन्वेति** अनुगच्छति झटिति तम् । "अवकाशदानाये"ति शेषः । अयमर्धर्चः सौर्य इत्युक्तम् । अथापरो मैत्रावरुण उच्यते । हे **मित्रावरुण !** मित्रावरुणौ । औङआकारः ( पा० ७-१-३९ ) । **सूरे** सूर्ये **उदिते** अभ्युद्गते सति प्रातःसवने **वां** युवां **नमोभिः** नमस्कारैः स्तुतिभिः **उत** अपिच **हव्यैः** हविर्भिश्च **प्रतिविधेम** परिचरेम वयम् ॥ ५ ॥

एवमत्रवाक्ये ( श्येनोनेत्यादिके ) परस्पराभिसम्बन्धा"त्पाथोऽन्तरिक्षम्" इत्युपपद्यते ॥

## उदकमपि पाथ उच्यते पानात् ॥

**पानादिति।** रक्षणादित्यर्थः । तथाच "पातेर्वले जुट् चे"–( उ० ४-२०३ ) त्यनुवर्तमाने "उदके थुट् चे"–( उ० ३-२०४ ) त्यसुन् थुडागमः । एवमग्रेऽपि । उदकं चान्नं च लोकान्पान्तीति पाथ इत्युच्यते । अत्रार्थे निगममुदाहरति—

"आचष्ट आसां पाथो नदीनाम्
( ऋ० सं० ५-३-२५-१० )

## इत्यपि निगमो भवति ॥

अस्य "वरुण उग्रः सहस्रचक्षा" इति शेषः । **सहस्रचक्षाः** बहुचक्षुः **उग्रः** उद्गूर्ण ओजस्वी वा **वरुणः आसां नदीनाम् पाथो** जलम् **आचष्टे** अभिपश्यति । एषा द्विपदा विंशत्यक्षरा विराड् वासिष्ठी । व्यूढस्य दशरात्रस्य चतुर्थेऽहनि तृतीये सवने वैश्वदेवे शस्त्रे शस्यते ॥

## अन्नमपि पाथ उच्यते । पानादेव ॥

"देवानां पाथ उपवक्षि विद्वान्"
( ऋ० सं० ८-२-२२-५ )

## इत्यपि निगमो भवति ॥

"वनस्पते रशनया नियूया देवानां ० ० विद्वान् ॥
स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥"

इतीयमाप्रिसूक्ते वाध्र्यश्वस्य सुमित्रस्यार्षंत्रिष्टुप् ॥ हे **वनस्पते** वनस्पतिविकार यूप ! **विद्वान्** जानानस्त्वं **रशनया** रज्ज्वा **नियूया** नियूय निबध्य, संहितायाम्"अन्येषामपी" ( पा० ६-३-१३७ )–ति पूर्वपदस्याद्दीर्घः । **देवानाम्** एतत्प्रभूतं **पाथः** अन्नं हविर्लक्षणम् **उपवक्षि** समीपं वहसि । "बहुलं छन्दसी"–( पा० २-४-७३ )–ति शपो लुक् । ढलकलषत्वानि । कस्मात्पुनरेवं ब्रवीमि ? यतः स **देवः** त्वयोढान्येतानि **हवींषि** अस्माभिर्दत्तानि **स्वदाति** स्वादयति । अन्तर्भावितण्यर्थात्स्वदतेर्लेट् आडागमः । ( पा० ३-४-९४ ) अनित्यण्यन्ताश्चुरादय इति णिजभावः । यानि **कृणवत्** अकरोत् एष यजमानः । वनस्पतिमेवमुक्त्वा द्यावापृथिव्यावाह हे **द्यावापृथिवी !** द्यावापृथिव्यौ ! "दीर्घाज्जसि च" "वा छन्दसी" ( पा० ६-१-१०६ )ति वा पूर्वसवर्णदीर्घः । **मे** मम **हवं** देवविषयाह्वानम् । **अवताम्** अवगच्छतां रक्षतां वा युवाम् ॥ ५ ॥

## सवीमनि=प्रसवे ॥

"देवस्य वयं सवितुः सवीमनी–"
( ऋ० सं० ५-१-१५-२ )

## त्यपि निगमो भवति ॥

अथ **"सवीमनि"** ( ३१ ) इत्यनवगतम् **"प्रसवे"** इत्यवगमः । तथाच "षु प्रसवैश्वर्ययोः"( भ्वा० प० )अस्माद्बाहुलकादिमनिच् गुणः । प्रसवोऽत्राभ्यनुज्ञानं तदाह **देवस्येत्यादि** । अस्य "श्रेष्ठे स्याम वसुनश्च दावने । यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः" इति शेषः । भरद्वाजस्यार्षं जगती । गवामयने चतुर्विंशनाम द्वितीयमहस्तत्रेयं द्वितीयसवने वैश्वदेवशस्त्रे शस्यते । **सवितुः** सर्वार्थप्रसवितुस्तस्य **देवस्य श्रेष्ठे** अतिशयेन प्रशस्ते **सवीमनि** प्रसवे सर्वार्थाभ्यनुज्ञाने एवं **वसुनः** धनस्य **दावने** दाने **च** नित्यं **वयं स्याम** समर्था भूयास्म । अत्र"ददाते"–( जु० उ० )–र्वनिन्भावे ( पा० ३-२-७४ ) सप्तम्यर्थे च चतुर्थी ( पा० ३-१-८५ ) हे सवितः ! **यः** त्वम् **विश्वस्य** सर्वस्यास्य **द्विपदः** मनुष्यादेः **यः चतुष्पदः** गवादेः **भूमनः** भूम्नः । "संज्ञापूर्वको विधिरनित्यः" ( प०९४ ) इत्य"ल्लोपोऽनः" ( पा० ६-४-१३४ ) इति अल्लोपो न भवति । बहोः **निवेशने** स्थितौ **प्रसवे च** सृष्टौ **च** "प्रभु-

१. अत्र "पिबतेस्थुट्चे"ति पाठं मत्वा पीयत इति पाथ इति स्वामिसुकुटाभ्यां व्याख्यातं, तन्मतेऽन्ते पिबतिरभ्यवहारार्थे इति देवराजयज्वानः प्राहुः ॥

रि"ति शेषः। असि भवसि । तस्य तवैवंगुणविशिष्टस्य प्रसवे च दाने च वयमेवाङ्गभूता भवामेति समुदितोऽर्थः ॥ २ ॥

एवमत्र "सवितुः" इत्यनेनाभिसम्बन्धात् "सवीमनी"—त्यस्य "प्रसव"इत्यर्थ उपपद्यते ॥

**सप्रथाः सर्वतः पृथुः ॥**

**"त्वमग्ने सप्रथा असि—"**

(ऋ० सं० ४-१-५-४)

**त्यपि निगमो भवति ॥**

अथ "सप्रथाः" (३२) इत्यनवगतम्। "सर्वतः पृथुः" इत्यवगमः ॥ अत्र प्रथतेरसुन् । सर्वतःशब्दस्य सभावः पृषोदरादित्वात् ॥ अत्र निगमस्त्वमित्यादि । अस्यं "जुष्टो-होता वरेण्यः । त्वया यज्ञं वितन्वते" इति शेषः ॥ सुतम्भरस्ये-यमार्षं गायत्री आग्नेयी प्रातरनुवाकाश्विनयोः शस्यते ॥ हे अग्ने ! त्वम् एव सप्रथाः सर्वतः पृथुर्विस्तीर्णः । जुष्टः आसेवितश्च यजमानैः होता आह्वाता देवानाम् वरेण्यः वर-णीयश्च सर्वथा असि भवसि । किंबहुना त्वया एव हेतुभूतेन यजमानाः यज्ञं वितन्वते विविधं तन्वते विस्तारयन्ति ॥४॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "सप्रथाः" इत्यस्य "सर्वतः पृथुः" इत्यर्थ उपपद्यते ॥

**विदथानि=वेदनानि ॥**

**"विदथानि प्रचोदयन्"—**

(ऋ० सं० ३-१-२९-२)

**त्यपि निगमो भवति ॥ ३ ॥ (७)**

अथ "विदथानि" (३३) इत्यनवगतम्। "वेदनानि" इत्यवगमः। अत्र "विदेरथक्"(उ०३-१११) इति भावेऽथक् ॥ विज्ञानानीति तदर्थः । अत्र निगमः विदथानीति । अस्य "होता देवो अमर्त्यः पुरस्तादेति मायया" इत्यादिः । विश्वा-मित्रस्यार्षं गायत्री आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । अग्नीषोमप्रणयने विनियुक्ता । होता होमनिष्पादकः अमर्त्यः मरणधर्मरहितः देवः द्योतमानोऽग्निः । विदथानि विज्ञानानि (वेदितव्यानि कर्माणि) प्रचोदयन् प्रकर्षेण प्रेरयन् मायया कर्मविषयाभिज्ञानेनोपलक्षितः । पुरस्तात् प्रथममेवास्य यज्ञस्य सोमस्य वा प्रणीयमानस्य एति अस्मानागच्छति । दुर्गस्तु मायया प्रज्ञया (निघं० ३-९-९) एषामृत्विजां विदथानि प्रज्ञानानि प्रचोदयन्ननुगृह्णन्नेतीत्यर्थमाह ॥ २ ॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "विदथानि" वेदनानी-त्युपपद्यते ॥ ३ ॥ (७)

अथ श्रायन्तः (३४) इत्यनवगतं "समाश्रिताः" इत्यव-गमस्तत्र तावन्निगममेवोपन्यस्यति—

**श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ॥**

**वसूनि जाते जनमान ओजसा प्रतिभागं न दीधिम ॥ ३ ॥** (ऋ० सं० ६-७-३-३)

श्रायन्त इति ॥ नृमेधस्याङ्गिरसस्येयमार्षं बृहती । अनर्श-रातिमितीयमनन्तरा चास्याः, महाव्रते बृहतीसहस्रे विनियोगः। अत्र इवोऽनर्थक इत्याह भाष्यकृत्तथाहि—

**समाश्रिताः सूर्यमुपतिष्ठन्ते ॥**

इति । तथाच श्रायन्तः समाश्रिताः (समन्तादाश्रिताः)- "श्रिञ् सेवायाम्" (भ्वा० उ०) भूते लटः शतरि शपि गुणे प्राप्ते व्यत्ययेन वृद्धिः । रश्मयः सूर्यम् उपतिष्ठन्ते इति शेषो भाष्यकारीयः। किमिति ? विश्वा विश्वानि सर्वाणि "शेश्छन्दसि बहुलमि"-(पा० ६-१-१७)-ति लोपो जसश्शेः । इन्द्रस्य सूर्यस्य स्वभूतानि (धनतुल्यानि) उदकानि तेन प्रवृत्तानि भक्षते विभक्षन्ते विभजितुमिच्छन्त इति तदर्थः । इदित्यप्यत्रार्थेऽनर्थक एव । पक्षान्तरमाह—

**अपि वोपमार्थे स्यात् सूर्यमिवेन्द्रमुपतिष्ठन्त इति ॥**

अपीत्यथार्थे अथवा उपमार्थे एव इवशब्दः स्यात् तद्यथा सूर्यमिवेति । अत्रोपमार्थस्योपरिष्टादुपचारप्रतिज्ञानं (नि० १-२-१) नशब्दविषयकमेवेति न तद्विरोधः । दुर्गस्तु अथवा—इदित्ययमुपमार्थे स्यान्नानर्थक इत्येवं व्याख्यत् ॥ तदस्या-प्युपरिष्टादुपचारो यथाकथञ्चिदेवेति न किञ्चिदेतत् ॥ तथाच यथा श्रायन्तः समाश्रिता रश्मयः (सूर्यस्य सर्वाण्युदकानि विभ-जितुमिच्छन्तः) सूर्यमुपतिष्ठन्ते—तथा समाश्रिता मरुतः (देवाः) इन्द्रस्य विश्वा विश्वानि (सर्वाणि धनानि) विभजितुमिच्छन्त "इन्द्रमुपतिष्ठन्त" इति शेषः ॥ उपस्थाय च मरुतः वसूनि उद-कलक्षणानि धनानि जाते जाताय जनमाने जनिष्यमाणाय च मनुष्याय विभक्तिविकरणव्यत्ययावार्षौ। ओजसा बलेन भक्षत विभजन्ते । आर्षः प्रयोगः । तत्र चास्माकं यो भागस्तं भागं न इति संप्रत्यर्थे प्रति इति अनोः स्थाने । तथाच साम्प्रतमनु-दीधिम ध्यायाम वयम् इत्यर्थः ॥ ३ ॥

१. इन्द्रशब्दो मध्यस्थानदेवतानामतया निघण्टौ (५-४-४) धृतो व्याख्यातश्चेतीह सूर्यस्तेनाभिहितः । स्वभूतानीत्यादि "षष्ठी शेषे" (पा० २-३-५०) इति स्वस्वामिभावसम्बन्धार्थे इन्द्रस्येति षष्ठी बलवत्यम् ॥

२. विभक्षयमाणा इति भाष्यस्य विभक्तुमिच्छन्त इति दुर्गं व्याख्यानेऽन्तर्भावितण्यर्थता भजतेरभ्युपेया सकर्मकत्वोपपत्तये । तदत्र (भाष्ये) विभक्षमाणा इत्येव पाठः साधीयानिति प्रतिभाति॥

३. अत्र व्याख्याने प्रथम इवशब्द एवानर्थकः । वस्तुतस्तु उभयमप्यर्थवत् (उपमार्थकम्) एवेति भाष्ये स्फुटिष्यति ॥

४. अत्र सायणः । हे अस्मदीया जनाः ! श्रायन्त इव सूर्यं, यथा साश्रिता रश्मयः सूर्यं भजन्ते । तथेन्द्रस्य विश्वेत् विश्वान्येव धनानि भक्षत भजत । स च यानि वसूनि धनानि जाते उत्पन्ने जनमाने जनिष्यमाणे चौजसा बलेन करोति । अतः भागं न, पित्र्यं भागमिव तानि धनानि प्रतिदीधिम । प्रतिधारयेम । इत्येवं व्याख्यत् ॥

एवमत्र सूर्यसम्बन्धादृश्मयोऽध्याहृताः । रश्मिसम्बन्धाच्च "ध्यायन्तः" इत्येष शब्दः समाङावुपसर्गावध्याहृत्य "समाश्रिताः" इत्येवमुपमार्थे भवतीत्युपपद्यते ॥ तथाचोक्तार्थे भाष्यम्—

**सर्वाणीन्द्रस्य धनानि विभक्षमाणाः । स यथा धनानि विभजति जाते च जनिष्यमाणे च । तं वयं भागमनुध्यायाम । ओजसा बलेन ॥**

अत्र **विश्वेदिन्द्रस्येति** वाक्ये इदित्युपमार्थेऽपरपक्षे, तदाह **स यथेति । जाते चेति** सममत्राह्मणे दानमितिवत्सप्तमी ॥ सुयाचको हि स्वयमपि प्रदातुं वदान्यमुपतिष्ठते इत्ययमर्थोऽनेन दर्शितः ॥ अथ निगमप्रसक्तं निराह—

**ओज ओजतेर्वोब्जतेर्वा ॥**

**ओजते**र्वृद्ध्यर्थस्य नैरुक्तधातोरसुनि **ओजः । उब्जतेर्वा** न्यग्भावार्थस्य ( तु० प० ) "उब्जेर्बलोपश्च" ( उ० ४–१८७ ) इत्यसुन् । ओजयति वर्धयति इति, उब्जयति न्यग्भावयतीति वा ओजः ॥

अथ **"आशीः"** ( ३५ ) इत्यनवगतमनेकार्थं च "आश्रयणीयमाश्रपणीयं वा पयआदिकम्" इत्यर्थप्रतीतिस्तदाह–

**आशीराश्रयणाद्वाश्रपणाद्वा ॥**

"या हि यजमानस्य व्रतधुक् तामाशिरं दुहन्ति" इति याज्ञिका आमनन्ति । अत्राङ्पूर्वाच्छ्रयतेः श्रृणातेर्वा क्विपि "अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्ताः" ( पा० ६–१–३६ ) इति निपातित आशिर्शब्दो रान्तस्तस्मात्प्रथमैकवचने "र्वोरुपधाया दीर्घ इकः" ( पा० ८–२–७६ ) इति दीर्घे आशीः । आङत्रेषदर्थेऽपरपक्षे । ईषद्धि तच्छृतं भवति, दधिभावात् । आद्यपक्षे च होमार्थस्य सोमस्याश्रयणादाशीः पयः ॥ सान्तोऽप्ययमाशीःशब्द इत्याह—

**अथेयमितराशीराशास्तेः ॥**

**अथ** पुनर्या **इयमितरा** उक्तादन्या **आशीः ।** हिताशंसारूपा सा **आशास्ते**राङ्पूर्वस्य शास्तेः ( अ० प० ) अभिलाषार्थस्य क्विपि "आशासः क्वावुपधाया इत्वं वाच्यम्" ( पा० ८–४–२० वा० ) इति इत्वे रुत्वे उपधादीर्घे आशीः । स्त्रीलिङ्गम् । इत्यन्यत् । अथ पूर्वोक्तेऽर्थे निगममुदाहरति—

**"इन्द्रा॑य॒ गाव॑ आ॒शिर॑म्"**

( ऋ० सं० ६–५–६–१ )

१. आश्रयणसाधनम् । बाहुलकात्करणेऽनीयर् ॥

२. व्रतार्थमुपलाल्यमाना ( व्रतं दुहन्ती ) या धेनुस्तामाशिरं पयः दुहन्ति । बाहुलकादमो लुगभावो नपुंसकत्वपक्षेऽस्य । दुहधातुर्द्विकर्मको गां दोग्धि पय इति यथा ॥ "अकथितं च"–( पा० १–४–५१ )ति गोः कर्मत्वम् ॥

३. गौर्हि ह्यः सोमं तत्कल्कमृजीषं वोपलिह्य प्रातः पयो दोग्धि, तस्मिन्सोमरसमेव सम्भृतं मन्वानो यजमानस्तमेवाश्रयते इति तदेतदनुपदं वक्ष्यमाणमन्त्रार्थशेषे द्रष्टव्यम् ॥

**इत्यपि निगमो भवति ॥**

**इन्द्रायेति ।** अस्य "दु॒दु॒ह्रे व॒ज्रिणे॒ मधु॑ । यत्सी॑मुपह्व॒रे वि॒दत्" इति शेषः ॥ प्रियमेधस आङ्गिरसस्येयमार्षम् । मध्यमे रात्रिपर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । **गावः वज्रिणे** वज्रायुधाय **इन्द्राय** इन्द्रार्थम् **मधु** मधुरास्वादम् मदकरं वा **आशिरम्** आश्रयणीयमाश्रपणीयं वा पयः **दुदुह्रे** पुनःपुनर्दुहते स्तनैः स्वयं यज्ञेषु । कर्मकर्तरि लट् । "नदुहस्नुनमां यक्चिणौ" (पा० ३–१–८९) इतियगभावः ॥ भृशार्थे द्विर्भावः । "लोपस्त आत्मनेपदेषु" ( पा० ७–१–४१ ) इति लोपे "शीङो रुट्" "बहुलं छन्दसि" ( पा० ७–१–८ )ति रुडागमः ॥ **यत्** यदा **उपह्वरे** उपगूहे ऊधःप्रदेशे दोग्धा यजमानोऽन्यो वा **सीम्** सर्वतः (भावेन) **अविदत्** लभते विजानाति वा सोमोऽयमिति तदा । गा दुहन्योगोभुक्तसोमरसमेवेन्द्राय दोग्धि तत्र गवां व्यापारे स्वतन्त्रत्वारोपः ॥ १ ॥

एवमत्र गोशब्दसम्बन्धात् "आशीः" शब्देन "पयआदिक"–मुच्यत इत्युपपद्यते ॥

अथेयमितराशीराशास्तेरित्यस्योदाहरणं तु—

"सा मे सत्याशीर्देवान्गम्यात् । शृण्वन्तु ते समर्धयन्तु जुष्टात् जुष्टतरा पण्यात् पण्यतरा । अहेडता मनसा नु गच्छ यज्ञो देवान्गच्छतु" इति प्रस्तरे प्रह्रियमाणे यजमानो जपत्येनम् । **सत्या** यथा प्रार्थिता **सा मे** ममाशीर्देवान्गम्यात्प्राप्नोतु । **ते** देवाः **शृण्वन्तु ।** श्रुत्वा च **समर्द्धयन्तु । जुष्टा**त्प्रियादपि **जुष्टतरा** प्रियतरा **पण्या**त्स्तुतादपि **पण्यतरा** स्तुततरा । किञ्च **अहेडता** अक्रोधनेन **मनसा** प्रहितोऽस्माभिस्त्वमपि "हे प्रस्तर !" इति शेषः । **देवान्** गच्छ **नु** इत्यनुनये । **यज्ञः** अपि देवान् **गच्छतु ।** त्वमपि चान्यं यज्ञं । यद्वयं याचामासावपि **देवान्** गम्यात् । एवमत्राशीरेव मनसाभ्यूहिता देवान्प्रत्यपि बुबोधयिषितेत्याशीरेवात्राभिधीयते ॥ ४ ॥

अथ **"अजीगः"** ( ३६ ) इत्यनवगतम् **"अगारीः"** इत्यवगमः । अत्र निगममुपन्यस्यति—

**"य॒दा ते॒ मर्तो॒ अनु॒ भोग॒मान॒ळादिद्ग्रसि॑ष्ठ॒ ओष॑धीरजीगः ॥"** ( ऋ० सं० २–३–१२–२ )

१. सोममाश्रयते पयः । परिणामभावं गतं भुक्तसोमकल्कस्य । ईषत् श्रपणीयं वा तद्भवति दधिभावाय । सोमसम्बन्धादस्याशिसंयोगेनैव तत् श्रप्यते । येन दधिभावं झटिलधिश्रितं पात्रेषु गच्छति यथाकालम् ॥

२. तथा चोक्तम् "यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते, स्वव्यापारे स्वतन्त्रत्वात्" इत्यादि ( वै० सि० कौ० ) कर्तृव्यापारो न विवक्ष्यत इत्यस्य तद्गतं स्वातन्त्र्यं न विवक्ष्यत इत्यर्थः । किन्तु यद्व्यापारे स्वातन्त्र्यं विवक्ष्यते स एव कर्ता "स्वतन्त्रः कर्ते"–ति ( १–४–५४ ) पाणिनिसरणादिति भावः ॥

३. हिताशंसारूपेण लोकप्रसिद्धा । आशीःपदेनेत्यर्थः ॥

अथास्य भाष्यम्—

**यदा ते मर्तो भोगमन्वापदथ ग्रसितृतम ओषधीरगारीः ।** इति ।

तथाचास्य "अन्नाते रूपमुत्तममपश्यं जिगीषमाणमिष आपदे गोः" इत्यादिः दीर्घतमस आर्षमियम् । त्रिष्टुप् । अश्वमेधेऽश्वस्तुतौ विनियुक्ता । हे अश्व ! **ते** तव **उत्तमम्** उत्करूपेणोत्कृष्टतमं **रूपम्** अहम् **अत्र** अस्मिन् काले यागदेशे वा **अपश्यम्** पश्यामि, वर्तमाने लङ् ( पा० ३-४-६ ) कीदृशम् **गोः** भूम्याः **पदे** स्थाने देवयजनप्रदेशे आजिधावनस्थाने वा **इषः** इष्यमाणानि अन्नानि **आ** सर्वतो **जिगीषमाणम्** जेतुमिच्छन्तम् । किञ्च **यदा** यस्मिन्काले **मर्तः** मनुष्यः **ते** तव **भोगं** भोक्तव्यमन्नम् **अन्वानट्** नशतिर्गतिकर्मा । अन्वापदत् । ( अनुक्रमेण समीपं गमयति ) वर्तमाने लुङ् ( पा० ३-४-६ ) । धातुरन्तर्भावितण्यर्थः । **आदित्** अनन्तरं तदानीमेव । ( तदनुग्रहाद्विलंवमकृत्वा ) **ग्रसिष्ठः** ग्रसितृतमः । ( भक्षयितृतमः ) महातृष्णः । स एव सन् अत्र "तुरिष्ठेमेयस्सु" ( पा० ६-४-१५४ ) इति तृचो लोपः । **ओषधीः** अन्नानि **अजीगः** अगारीः गिलसि ( भक्षयसि ) पूर्ववल्लुङ् । महानुभावोऽपि त्वं लौकिकाश्ववत्तुच्छेन पुरुषेण दीयमानं स्वल्पमपि भक्ष्यमन्नं तदनुग्रहात्स्वीकरोषीत्यर्थः ॥ २ ॥

एवमत्र ओषध्यश्वसम्बन्धात्—

**जिगर्ति-गिरतिकर्मा वा, गृणातिकर्मा वा, गृह्णातिकर्मा वा ॥**

इत्युपपद्यते ॥ अथ "**अमूरः**" (३७) इत्यनवगतम् "अमूढः" इत्यवगमः । अत्र निगममुदाहरति—

**"मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से"** ( ऋ० सं० ७-५-३२-४ )

**मूढा वयं स्मो मूढस्त्वमसि न वयं विद्मो महत्त्वमग्ने त्वं तु वेत्थ ॥**

**मूरेति** । अस्य "शये वव्रिश्चरति जिह्वयाऽदन्रेरिह्यते युवतिं विश्पतिः सन्" इति शेषः ॥ आग्नेयस्त्रितस्यार्षस्त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन् **अमूर** अमूढ ! अतएव **चिकित्वः** ! चेतनावन् ! **अग्ने** ! **मूराः** मूढा **वयं** स्मः । अतस्ते माहात्म्यं न जानीमः । किन्तु-**त्वमङ्ग** त्वमेव आत्मनः **महित्वम्** महत्त्वम् महाभाग्यं **वित्से** वेत्सि ।

जानासि त्वत्तः कोन्यो वेदितुमर्हति । किञ्च **वव्रिः** रूपनामैतत् ( नि० घं० ३-७-२ ) विशेषात्मा तव रूपाख्यः ( आहवनीयः ) **शये** शय-( हस्त-) परिमिते स्थाने उत्तरवेद्याख्ये **जिह्वया** दीर्घप्रसृतया ज्वालया तानि तानि हवींषि **अदन्** भक्षयन् **चरति** मुहुर्मुहुर्ज्वलति समिद्धत्वात् । एतमेवार्थं रूपकान्तरेणाह **रेरिह्यत** इति । **विश्पतिः** विशां मनुष्याणां पतिः पालकः । पक्षे विश्पतिर्जारः । **सन्** । **युवतिम्** आत्मनो मिश्रयित्रीं तां तामाहुतिं, पक्षे पुंश्चलीं तरुणीं । **रेरिह्यते** पुनः पुनरास्वादयति । "लिह आस्वादने" (अ० उ०) यङि रूपम् । रलयोः सावर्ण्यात् । उपभुङ्क्ते इति पक्षान्तरेऽर्थः । स यथा तां कामयमानामन्तर्गृहं प्रविश्यात्यर्थमादरवानुपभुङ्क्ते तथा ते विशेषात्माऽऽहवनीयाख्यो हवींष्यदंश्चरतीत्यर्थः ॥ सायणस्तु-"वव्रिरिति रूपनाम, सामर्थ्याच्चान्तर्णीतमत्वर्थं द्रष्टव्यम् आहवनीयगव्येन रूपेण रूपवान्" इत्येवं व्याख्यत् । एतन्मते वाक्यभेदात्मा दोषः ॥ ४ ॥

एवमत्र "मूढाः" इत्यात्मनिन्दाद्वारेणाग्निः "अमूढः" इत्यनेन स्तूयते । इत्येवमस्या-"मूर-"शब्दस्या-"मूढः" इत्येष विपरिणाम उपपद्यते ॥

**शशमानः=शंसमानः ॥**

**"यो वां यज्ञैः शशमानो ह दाशति"** ( ऋ० सं० २-२-३१-२ )

**इत्यपि निगमो भवति ॥**

अथ "**शशमानः**" (३८) इत्यनवगतम् "**शंसमानः**" इत्यवगमः । तत्र निगमः **यो वामि**त्यादिः । अस्य "कविर्होता यजति मन्मसाधनः। उपाहुतं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू" इतिशेषः । दीर्घतमस आर्षम् जागतं

१. इषे अन्ने जेतव्ये निमित्तभूते इत्येवं दुर्ग आह ॥

२. अङ्गेति निपात एवार्थे इति सायणः । वस्तुतः "सावधारणं सर्वं वाक्यमब्भक्षो वायुभक्षः । अप एव भक्षयति, वायुमेव भक्षयती"ति महाभाष्यादिह्यवधारणं वाक्यबलादेव लभ्यमिति अङ्गेति सम्बोधन एव । "स्युः प्याट्पाडङ्गहेहेमो" इत्यमरः ॥

१. तथाचामरः "पञ्चशाखः शयः पाणि"रिति ॥

२. तथाच विश्वः ॥ "विट् स्मृतो वैश्यमनुजप्रवेशेषु मनीषिभि"-रिति । अत्र पक्षान्तरे विशति प्रविशत्यविज्ञातोऽन्यैरिति विट् स चासौ पतिश्चेति विग्रहः । स चायम् ( अज्ञातप्रवेशकर्ता पतिः ) उदपतिरेव भवति नान्यः ॥

३. तथा चोक्तम् ॥ "रलयोर्डलयोश्चैव शषयोर्बवयोस्तथा । वदन्त्येषां च सावर्ण्यमलङ्कारविदो जनाः" इति ॥

४. ज्वलतीत्यर्थः ॥

५. "गुणवचनेभ्यो मतुपो लुगिष्टः" (पा० १-४-१९ वा०) इति मतुपोऽस्त्यर्थस्य लुगिति तु न युक्तम् । वव्रिशब्दस्य वृणोते "रादृगमहने"-(पा० ३-२-१७१) ति किप्रत्ययान्ततयाऽगुणवचनत्वात् । "समस्तकृत्तद्धिताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तशब्दा एव गुणवचना" इति भाष्याद्युक्तेः ॥

६. धान्येन धनवानितिवदभेदे तृतीया "प्रकृत्यादित्वात्" ( पा० २-३-१८ वा० ) ॥

७. प्रत्यक्षपरोक्षवादयोरेकत्रासामञ्जस्यमिह निदानम् ॥

मैत्रावरुणम् । हे मित्रावरुणौ ! **यो ह** यः खलु यजमानः **वां** युवामुद्दिश्य, युवाभ्यां वा **यज्ञैः** यागैर्निमित्तभूतैः **शशमानः** शंसमानः स्तुवन्नित्यर्थः । "शंसु स्तुतौ" वित्यस्मात् ( भ्वा० प० ) लटः "ताच्छील्यवयोवचनशक्तिषु चानश्" (पा० ३-२-१२९) इति चानश् शितोऽपितश्चास्य ङित्वादनुनासिकलोपः । "नकारजावनुस्वारपञ्चमौ झलि धातुषु" इत्युक्तेः ॥ पदव्यत्ययः आर्षः । **दाशति** ददाति हविरादिकम् "दाशृ दाने" ( भ्वा० उ० ) य एव **कविः** क्रान्तदर्शनः । अनूचानः "ये वाऽनूचानास्ते कवय" इति ( ऐ० ब्रा० २-२ ) श्रुतेः । **होता** सम्यक् होमनिष्पादको यजमानः **मन्मसाधनः** मननसाधनो विज्ञानसाधन इति दुर्गः । मननीयद्रव्यदक्षिणादिसाधनोपेतः सन्निति सायणः । **यजति** सोमयागादिकं करोति **तम् एव सुमतिं** शोभनप्रज्ञं यजमानम् **उप** उपलक्ष्य **गच्छथः अह** प्राप्नुथः खलु । प्राप्य च **अध्वरं** तदीयं यज्ञं **वीथः** कामयेथे युवाम् । "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" ( अ० प० ) कान्तिरिच्छा कामयतेरर्थः । किंच **अस्मयू** अस्मान्कामयमानौ युवाम् "क्याच्छन्दसी"-( पा० -३-२-१७० )-ति उप्रत्ययः । **गिरः** स्तुतीः ( अस्मदीयाः ) **अच्छ** अभिलक्ष्य **आ गन्तम्** आगच्छतम् "बहुलं छन्दसी" ( पा० २-४-७३ )ति शपो लुक् ॥ तथाच तादृशं मां प्राप्य स्तुतीः स्वीकुरुतमित्यर्थः ॥ २ ॥

एवमत्र "यज्ञैः शशमान" इति यज्ञसम्बन्धाच्छब्दसारूप्याच्च शशमानः शंसमान" इत्येवमुपपद्यते ॥

## देवो देवाच्या कृपा ॥ देवो देवान्प्रत्यक्तया कृपा ॥

अत्र **देवाच्या कृपा** ( ३९ ) इत्येते अनवगते । देवशब्दोऽनयोरेवोपलक्षणार्थोऽत्र समाम्नातः । तत्र देवाच्या इत्यस्य **देवान्प्रति अक्तया** अञ्चितयेत्यर्थः । तथाच देवशब्दोपपदादञ्चते "ऋत्विग्"-(पा० ३-२-५९)त्यादिना क्विनि "अनिदिताम्" ( पा० ६-४-२४ ) इति नलोपे "अचः" ( पा० ६-४-१३८ ) इत्यकारलोपे "चौ" ( पा० ६-३-१३८ ) इति दीर्घे उगित्त्वान्ङीपि ( पा० ४-१-६ ) "विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" ( पा० ६-३-९२ ) इति न भवति ।

१. मेधावी ।

२. तृन्नन्ततयाऽयमर्थो लभ्यते । स हि "आकेस्तच्छीलतद्धर्मतत्साधुकारिष्व" ( पा० ३-२-१३४ ) त्वधिकृत्य विधीयते ।

३. अत्र सायणः "अत्र यद्यपि तमिति सामान्यनिर्देशः प्रतिभाति, तथापि अस्मयू इत्युक्तत्वाद्दीर्घतमाः स्वात्मानमेव परोक्षतयोक्तवानिति गम्यते । यद्वा यो ददाति यश्च यजते तमुपेत्य तदीयं यज्ञं कामयेथे अतोऽस्मयू युवां सुमतिं मां मदीयगिरः स्तुतीः अच्छाभिलक्ष्य गच्छतम्" इत्येवं व्याख्यत् ॥

४. आर्षत्वात्प्रत्ययपरत्वाद्वा । अञ्चतेरेवायं "धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवे"ति "उगिदचाम्" ( पा० ७-१-७० ) इति सूत्रेऽच्ग्रहणेन नियमनात् ॥

देवान्प्रति गतयेत्यर्थः ॥ अथ **कृपा** इत्येतदविवृतं निर्ब्रुवन्नेव विवृणोति—

## कृप् कृपतेर्वा कल्पतेर्वा ॥ ५ ॥ ( ८ )

**कृपतेः** कृपतिर्नैरुक्तधातुः "कृपायति कृपण्यति" ( निघं० ३-१४ ) इत्यादौ यथा । पाणिनीयमते चौरादिकस्यादन्तस्याऽनित्यण्यन्तात्क्षुरादय इति भवति । अर्चयन्तीति प्रथमकल्पेऽर्थः । अथ **वा कल्पतेः** "कृपू सामर्थ्ये" ( भ्वा० आ० ) इत्यस्य क्विपि कृपू तृतीयैकवचने कृपा कल्पितया । सामर्थ्योक्त्या कल्पितया कृपयेति दुर्गव्याख्यानम् । तन्मते "आपं चैव हलन्तानाम्" इति भागुरिः शरणम् ॥ तथा च निगमः—

**अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।**
**य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।**
**घृतस्य विभ्राष्टिमनु वष्टि शोचिषाऽऽजुह्वानस्य सर्पिषः ॥** ( ऋ० सं० २-१-१२ )

**अग्निमिति** । दिवोदासपुत्रस्य परुच्छेपस्यार्षम् । आग्नेयम् । अतिच्छन्दाः अत्यष्टिः । अग्निचयने इष्टकोपधाने विनियुक्ता । परुच्छेप आह । अहम् **अग्निम्** सर्वासां देवसेनानामग्रण्यं यज्ञेष्वग्रं नीयमानं वा **होतारम्** अस्मद्यागं प्रति देवानामाह्वातारम् । यद्वा होमनिष्पादकं होतारं "जुहोतेर्होतेत्यौर्णवाभः" इति यास्कः ( नि० ७-१५ ) "अग्निमद्य होतारमवृणीतायं यजमान" इति श्रुतेः ( तै० ब्रा० ३-६-१५ ) "अग्निमग्न आवहे"ति च ( तै० ब्रा० ४-५-३ ) अग्नेराह्वातृत्वं प्रसिद्धम् । **मन्ये** इति हि प्रतिविशेषणमभिसम्बध्यते । यद्वा यागनिष्पत्तेरेवापेक्षितत्वादेतदेव विधेयविशेषणम् । इतराणि वक्ष्यमाणविशेषणानि स्तुतिपराणि । **दास्वन्तम्** अतिशयेन दानवन्तम् । "दासृ दाने" ( भ्वा० उ० ) क्विब्भावे ततोऽस्त्यर्थे मतुबतिशायने । **वसुं** सर्वेषां निवासहेतुं, **सहसः सूनुं** बलस्य पुत्रम् अग्निर्मन्थनकाले बलेन मथ्यमान उत्पद्यत इति पुत्रत्वमुपचर्यते । **जातवेदसं** जातानां वेदितारं, जातप्रज्ञं वा जातबलं वा जातवेदश्शब्दो यास्केन बहुधा निरुक्तः । ( नि० ७-५-१ ) अग्नेर्जातवेदस्त्वे दृष्टान्तः । **विप्रं न जातवेदसम्** जातविद्यं मेधाविनं ब्राह्मणमिव । तं यथा जनो बहु मन्यते तथा त्वामपि मन्ये स्तौमीत्यर्थः । उक्तगुणविशिष्टो यो **देवः स्वध्वरः** शोभनयज्ञवान् यज्ञं सम्यङ्

१. अग्निं होतारं मन्ये । अग्निं दास्वन्तं मन्ये । अग्निं वसुं मन्ये इत्येवम् ॥

२. कथम्भूतमग्निम् ? दास्वन्तम् । पुनः कथंभूतं वसुम् ? इत्येवम् ॥

३. तथाचोक्तम् "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति ॥

निर्वहन् **ऊर्ध्वया** उन्नतया ( उत्कृष्टया ) **देवाच्या** देवान् पूजयन्त्या देवान्प्रत्यक्तया वा **कृपा** कृपया सामर्थ्याख्यया कल्पितया ( देवेभ्यो हवि-वर्द्धनबुद्ध्या युक्तः सन् ) **आजुह्वानस्य** आसमन्ताद्धूयमानस्य **सर्पिषः** सरणशीलस्य **घृतस्य** । विलेपनेन दीप्तस्याज्यस्य । **विभ्रष्टिं** विभ्रंशम् **अनु** स्वल्पमपि तदाज्यं **शोचिषा** ज्वालया **वष्टि** कामयते । स्वीकरोतीत्यर्थः । "वश कान्तौ" ( अ० प० ) लट् ॥ १ ॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "देवाच्या, कृपा" इत्येतौ शब्दौ देवान्प्रत्यक्तया कल्पितयोरेवमुपपद्यते ॥ ५ ॥ ( ८ )

अथ **विजामातुः** ( ४० ) इत्यनवगतम् । उपसर्गस्यापरिसमाप्त्यर्थे वृत्तिरत्रानवगमः । "असुसमाप्त इव वरोऽभिप्रेतः" इति भाष्यकारो निराह । विगतजामातृभाव इव च ॥ यो ह्यप्राप्तजामातृभावः स विजामातेत्युच्यते । स हि दाक्षिणात्येषु प्रसिद्धस्ततः पञ्चमी ॥

अत्रार्थे निगममुदाहरति—

**"अश्र॑वं॒ हि भू॑रि॒दाव॑त्तरा वां॒ विजा॑मातुरु॒त वा॑ घा स्या॒लात् ॥ अथा॒ सोम॑स्य॒ प्रय॑ती यु॒वभ्या॒मिन्द्रा॑ग्नी॒ स्तोमं॑ जनयामि॒ नव्य॑म् ॥ २ ॥"**

( ऋ० सं० १-७-२८ )

**अश्रवमिति** । कुत्सस्येयमार्षं त्रिष्टुप् । हे **इन्द्राग्नी** ! **वां** युवां **भूरि दावत्तरा** अतिशयेन बहुधनस्य दातारौ । कुतः ? **विजामातुः** असुसमाप्ताज्जामातुः यो हि श्रुताभिजात्यादिभिर्गुणैर्हीनतया समाप्तजामातृभावो भवति स बहुधनदानेन कन्यापितृनाराध्य तेभ्य आत्मानं रोचयति, ततोऽपि बहुतरस्य धनस्य दातारौ इत्यहम् **अश्रवं हि** अश्रौषं खलु । **उतवा** अपिच **घा स्यालात्** स्यं शूर्पं तस्मादलति विवाहकाले लाजानावपतीति स्यालः कन्याभ्राता तस्मात् स हि भगिनीप्रीत्यर्थं बहुधनं प्रयच्छति ततोऽपि । घेति पूरणः । **अथ** एतस्मात्

कारणात् **युवभ्याम्** युवाभ्याम् **सोमस्य** अस्माभिषुतस्य **प्रयती** प्रयत्या प्रदानेन सह **नव्यं** नवतरं प्रत्यग्रम् अन्येभ्यः ( स्तोमेभ्यः ) "अचो यत्" ( पा० ३-१-९७ ) "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नव" इत्यमरः । **स्तोमं** स्तोत्रं **जनयामि** उच्चारयामि ॥ २ ॥

एवमत्र "विजामातृ"-शब्देन "असुसमाप्तजामातृभावः" उच्यते । तस्य बहुदातृत्वादित्युपपद्यते ॥

अथास्य भाष्यम्—

**अश्रौषं हि बहुदातृतरौ वां विजामातु–रसुसमाप्ताज्जामातुः ॥ विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतः ॥**

इति-एतत् **शश्वत्** प्रसिद्धम् **दाक्षिणाजाः** दाक्षिणात्याः **क्रीतापतिम्** स हि निर्गुण इति क्रीणाति कन्यामात्मनो भार्यार्थं बहुतरधनप्रदानेन । तस्मात् **असुसमाप्त इव** असौ **वरोऽभिप्रेतः** । अर्थलिप्सूनां कन्यापितॄणामित्यर्थः ॥

अथ जामातृपदं निराह—

**जामाता=जा अपत्यं तन्निर्माता ।**

स्त्रीत्वं ह्यसौ मैथुनेन व्यवहारेण निर्मिणोति । तेनासौ दुहितुः पतिर्जामाता भवति ।

अथ पुनर्मन्त्रार्थमाह—

**उत वा घा स्यालात् । अपि च स्यालात् । स्याल आसन्नसँय्योगेनेति नैदानाः । स्याल्लाजानावपतीति वा ॥**

**आसन्नः सँय्योगेनेति** । संयोगेन सम्बन्धेन पत्नीकृतेनासँन्नो मुखवर्णेन तदात्मक इवेति शश्वत्प्रियो भवतीति **स्याल** इति नैदानाः निदानविदो मन्यन्ते । एतन्मते "स्यम वितर्के" ( चु० प्रा० ) इत्यस्मात्पचाद्यच् ( पा० ३-१-१३४ ) पृषोदरादित्वात् ( पा० ६-३-१०९ ) मस्य लः । स्यमयते

---

१. "सृप्लृ गतौ" ( भ्वा० प० ) इसिः ( वा० २-१०८ ) ॥

२. "घृ क्षरणदीप्त्योः" ( जु० प० ) ततः क्तः ।

३. धनादन्ये कुलीनत्वादयो विगता जामातृगुणा यस्मात्सोऽयमप्राप्तगुणोऽपि जामाता कन्यापतिरुच्यते दाक्षिणत्यैः । जामातृशब्दस्तु जायां मिमीते मिनाति वा । "माङ् माने" ( जु० आ० ) "डुमिञ् प्रक्षेपणे" ( स्वा० उ० ) वा "नप्तृनेष्टृ–" ( उ० २-९५ ) इति साधुः–शाकटायनीयमतेन । नैरुक्तस्तु स्फुटमनुपदं वक्ष्यत एव ॥

४. "डुदाञ् दाने" (जु० उ०) "आतो मनिन्." ( पा० ३ २-७४ ) इति वनिप् । अतिशयेन भूरि दावानौ भूरिदावत्तरौ "भूरिदाव्नस्तुड् वाच्यः" (पा० ८-२-१७ वा०) इति तरपस्तुट् "स्वादिष्व" ( पा० १-४-१७ ) ति पदसंज्ञायां नलोपः । "सुपांसुलुगि" ( पा० ७-१-३९ ) ति विभक्तेराकारः ।

५. "ऋचितुनुघ–" ( पा० ६-३-१३३ ) ति दीर्घः ।

६. "निपातस्य चे"–( पा० ६-३-१३६ ) ति दीर्घः ॥

१. "सर्वे विधयश्छन्दसि विकल्प्यन्त" इति "युष्मदस्मदोरनादेशे" ( पा० ७-२-८६ ) इत्यात्वाभावे "शेषे लोपः" ( पा० ७-२-९० ) इति दलोपः ।

२. प्रोपसृष्टाद्यमेः क्विनि "अनुदात्तोपदेशे"–( पा० ६-४ ३७ ) त्यादिना मलोपः । "सुपांसुलुग्" ( पा० ७-१-३९ ) इत्यादिना पूर्वसवर्णः । धीतीमतीतिवत् । प्रयमनं दानम् ।

३. स्त्यायेते संघीभवतः शुक्रशोणिते अस्यामिति स्त्री । "स्त्यायतेर्ड्रट्" ( उ० ४-१६५ ) टित्वान्ङीप् ॥

४. शब्दस्य मूलतत्त्वगवेषकाः । "निदानं त्वादिकारणम्" इत्यमरः ॥

वितर्कयत्येतमिति स्याल इति स्वामी। अथ वा स्यात् स्यमिति सूर्पमुच्यते तस्मादसौ गृहीत्वा कन्यकाया भगिन्या विवाहकाले **लाजान्** भृष्टधान्यान् **आवपति** प्रक्षिपत्यग्नौ। तस्मादयं स्याल उच्यते। अत्र पक्षेऽलतेरेवावपने वृत्तिस्ततः पचाद्यच् ॥

अथ निर्वचनप्रसक्तं निराह—

**लाजा लाजतेः ॥**

भर्जनार्थस्य ( भ्वा० प० ) घञि ( पा० ३-३-१९ ) पुंसि बहुत्वे **लाजाः**। "लाजाः पुंभूम्नि चाक्षताः" इत्यमरः ॥

अथ स्यशब्दं निगमप्रसक्तं निराह—

**स्यं शूर्पं स्यतेः ॥**

प्रक्षेपणार्थवृत्तेः षोधातो ( दि० प० ) र्बाहुलकाच्छप्रत्ययः कर्तरि। शितः सार्वधातुकत्वेन श्यनि ओकारस्य लोपः ( पा० ७-३-७१ ) "अतोगुण" ( पा० ६-१-९७ ) इति पररूपम् ॥ स्यति प्रक्षिपति तुषानिति स्यं शूर्पम् ॥

अथ शूर्पशब्दनिर्वचनप्रसक्तं निराह—

**शूर्पमशनपवनं, शृणातेर्वा ॥**

**अशनपवनम्** तेन ह्यशनमन्नं पूयत इति शूर्पम् पृषोदरादित्वात्साधुः। तथाचोक्तं "प्रस्फोटनं शूर्पमस्त्री" त्यमरेण। प्रस्फोट्यते निस्तुषीक्रियतेऽनेनेति ल्युट् ( पा० ३-३-११७ ) **अथ वा शृणातेः** हिंसार्थस्य शृधातोर्बाहुलकात्पप्रत्यय उत्वं च धातोः। रपरत्वे दीर्घः ( पा० ८-२-७६ ) तद्धि शरमयं भवति ॥

अथोत्तरार्धर्चमर्थतोऽनुवदति—

**अथ सोमस्य प्रदानेन युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं नवतरम् ॥**

इति व्याख्यातमधस्तात् ॥ अथ—

**ओमास ( ४१ ) इत्युपरिष्टाद्व्याख्यास्यामः ॥ ६ ॥ (९)**

इति श्रीमद्यास्कमु० प्र० नि० शास्त्रे नैग० का० षष्ठाध्यायस्य द्वितीयः पादः ॥ ६ ॥ २ ॥

**"ओमासः" ( ४१ ) इति** एतत्पदम् **उपरिष्टात्** द्वादशेऽध्याये "ओमासश्चर्षणीधृतः" इत्यत्र ( १२-४-६ ) व्याख्यास्यामः। अर्थतो निगमेन च वर्णयिष्यामः। साधनं तु—अवतेः पालनार्थस्य तर्पणार्थस्य वा कर्तरि कर्मणि वा "अविसिविसिशुषिभ्यः कित्" ( उ० १-१४१ ) इति मन्प्रत्यये "ज्वरत्वरे" ( पा० ६-४-२० ) त्यादिनोठि ऊ मास इति प्राप्ते व्यत्ययेन गुणः ॥ जस्। "आज्जसेरसुक्" ( पा० ७-१-५० ) ( रक्षितारः सर्पितारस्तर्पणीया वा ) ॥

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तलघुविवृतौ नै० का० षष्ठाध्यायस्य द्वितीयः पादः ॥ ६ ॥ २ ॥**

## अथ षष्ठाध्यायस्य तृतीयः पादः।

अथ **सोमानम्** (४५) इत्यनवगतम् "सोतारम्" इत्यवगमस्तत्र निगममेव पुरस्ताद्दर्शयति—

**सोमानं स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः ॥** (ऋ०सं०१-१-३४-१)

**सोमानमिति।** मेधातिथेः काण्वस्यार्षं गायत्री। अभ्युपस्थाने विनियुक्ता। हे **ब्रह्मणस्पते** एतन्नामकदेव! **सोमानम्** अभिषवस्य कर्तारं ( सोतारं ) सोमानाम् माम्। सुनोतेर्मनिन् ( पा० ३-२-७५ ) **स्वरणं** शब्दमानं सुयशस्विनं "स्वृ शब्दोपतापयोः" (भ्वा० प०) "कृत्यल्युटो बहुलम्" ( पा० ३-३-११३ ) इति कर्मणि ल्युट्। **कृणुहि** प्रकाशनवन्तं कुरु। कथं च पुनः प्रकाशनवन्तं कुरु? **कक्षीवन्तं य औशिजः** लुप्तोपममेतत्। य औशिज उशिजः पुत्रः कक्षीवान्नामऋषिस्तमिव। अत्र करोतिसम्बन्धा"त्प्रकाशनवन्तमि"

१. यद्यपि कर्तर्येव कृत्तथापि "कृत्यल्युटो बहुलम्" ( पा० ३-३-११३ ) इति सूत्रे बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थमिति कर्मण्यत्राच्प्रत्ययः। कन्याभ्रातृमुखमाकलय्य वितर्कयति सादृश्यं कन्यामुखस्येति स्थितिः। यद्यपि कोषे "श्यालः स्युर्भ्रातरः पत्न्या" इति तालव्यादिरभिहितस्तथापि—"स्याल-साल-समसर-सरय" इति समेदाद्दन्त्यादिरपीति भानुजिदीक्षिताः प्राहुः ॥

२. "लज लजि भर्जने" "लाज लाजि भर्त्सने चे" ( भ्वा० प० ) ति पठ्यते तत्र चाद्भर्जनेऽपि लाजतिः। लजतेरेव वा घञि लाजा इति भानुजिदीक्षिताः ॥

३. यद्यप्ययमन्तकर्मणि पाणिनीयैः पठितस्तथापि नैरुक्तैरत्रापि प्रयुज्यते। कर्त्रर्थे सार्वधातुके शपोऽपवादः श्यन्दैवादिकाद्विधीयते ॥

४. यद्यपि तेन हि तुषाः प्रक्षिप्यन्त इति दुर्गेणोक्तं तथापि सौकर्यातिशयद्योतनाय कर्तर्येव प्रत्ययः शब्दसाधनानुरोधेन कृतः ॥

५. अद्यत इति ल्युट्। पाणिनीयैस्तु"शूर्प माने" (चु० प०) इति पठ्यते। सूर्पं चेति पाठाद्दन्त्यादिरपीति भानुजिदीक्षिताः ॥

१. तथाचोक्तम् "सोमानं स्वरणमिति ब्राह्मणस्पत्ययोपतिष्ठेते"ति ॥

२ "षष्ठ्याः पतिपुत्रे" ( पा० ८-३-१०३ ) त्यादिना संहितायां विसर्जनीयस्य सकारः।

३. प्रख्यातमिति सायणः।

४. "कृवि हिंसाकरणयोश्च" ( भ्वा० प० ) इदित्त्वान्नुम्। लोटः सिपो हिः। शपि प्राप्ते "धिन्विकृण्व्योरच्" ( पा० ३-१-८० ) त्युप्रत्ययः। तत्सन्नियोगेन वकारस्य चाकारः। ततः"ऽतो लोप" ( पा० ६-४-४८ ) इति लोपः। तस्य स्थानिवद्भावात्पूर्वस्य लघूपधगुणो न। हेर्ङित्त्वादुकारस्य न गुणः। "उतश्च प्रत्ययाच्छन्दो वा वचनम्" (पा० ६-४-१०६ वा०) इति हेर्न लुक् ॥

त्येतद्व्याहृतं भाष्यकारेण । प्रकाशनं च वेदेषु देवेषु च । मन्त्रदेवतयोर्ज्ञानसम्पत्त्या मामृषिमनुष्ठातारं च कुर्विति वर्तुलार्थः ॥ १ ॥

अथास्य भाष्यम्—

**सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते ! कक्षीवन्तमिव य औशिजः । कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्रः । उशिग्वष्टेः । कान्तिकर्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात् । तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते ॥ १ ॥ ( १० )**

**कक्ष्यावान्** कक्ष्यया तद्वान् । कक्ष्या अश्वोदरसम्बन्धिनी रज्जुः । "भवे च्छन्दसी" ( पा० ४-४-११० ) ति यत् । सा अस्यास्तीत्यर्थे "आसन्दीव" ( पा० ८-२-१२ ) दित्यादिना मतुबन्तो निपातः "छन्दसीरः" ( पा० ८-२-१५ ) इति वत्वम् । **अपि० ० तःस्यात्** । स हि ( ऋषिः ) कक्षे ( उशिग्नाम्नऋषेः ) उत्पन्नः । तदुत्पत्तिसंयोगात् **कक्षीवान्** निपातनादेव सिद्धिः । **उशिक्** पुनः **वष्टेः** कान्त्यर्थस्य ( अ० प० ) वश्धातोरिजीत्यनुवृत्तौ "वशेः किच्च"-( उ० २-७२ )ति इजि प्रत्ययः । कित्वात्संप्रसारणम् ( पा० ६-१-१६ ) पूर्वरूपे गुणाभावश्च । ततोऽण् (पा०४-१-९२) अपत्ये ॥ **तं सोमानामि**त्याद्युदितानुवादो ढीकारायार्थान्तरनिरासाय चेति सर्वं चतुरस्रम् ॥ १ ॥ ( १० )

अथ "**अनवायं**" (४३) "**किमीदिने**" (४४) इत्येते अनवगते । तत्र अनवायमित्यस्य "अनवयवम्" इत्यवगमः । "किमीदिने" इत्यस्य "किमिदङ्किमिद"ङ्कारिणे पिशुनायेति ।

अत्र निगममुपन्यस्यति—

**इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒॑घं तपु॒र्यय॑स्तु चरुर॒ग्निवाँ॑ इव । ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे द्वेषो॑ धत्तमन॒वा॒यं किमी॒दिने॑ ॥ २ ॥**

( ऋ० सं० ५-७-५- )

**इन्द्रेति** । वसिष्ठस्यार्षं जगती । हे **इन्द्रासोमा** इन्द्रासोमौ । औङ आकारः ( पा० ७-१-३९ ) **अघशंसम्** अघस्य पापस्य अनर्थस्य वा शंसितारम् । शंसेः पचाद्यच् । ( श० ३-१-१३४ ) **अभ्यघम्** अघमेव कर्तुमाभिमुख्येन योऽवस्थितस्तम् । यद्वा अघम् आगत्य हन्तारम् राक्षसम् । **सम्** सहैव **अभि** इति श्रुतेर्योग्यक्रियाध्याहारः अभिभवन्तम् । स च **तपुः** युवयोस्तेजसा तप्यमानो राक्षसः **अग्निवान्** अग्नियुक्तः ( अग्नौ प्रक्षिप्तः ) **चरुरिव ययस्तु** "यसु प्रयत्ने" ( दि० प० ) केवलोऽप्ययमाङ्पूर्वार्थो द्रष्टव्यः । भृशमायस्यतु ( आयासं प्राप्नोतु ) उपक्षीयतामित्यर्थः । अपिच **ब्रह्मद्विषे** ब्राह्मणेभ्योऽसभ्यं द्वेष्ट्रे **क्रव्यादे** आममांसभक्षयित्रे "क्रव्ये च" ( पा० ३-२-६९ ) इत्यदेर्विट्प्रत्ययः । **घोरचक्षसे** घोरदर्शनाय । परुषभाषिणे वा **किमीदिने** पिशुनाय **द्वेषः** द्वेष्यभावं ( सर्वलोकद्वेष्यताम् ) अमः सुः ( पा० ७-१-३९ ) **अनवायम्** अनवयवं ( सकलं ) नैरन्तर्येण यथा भवति तथा **धत्तम्** दत्तम्[3] ॥ २ ॥

अथास्य भाष्यम्—

**इन्द्रासोमावघस्य शंसितारम् । अघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति[1] । तपुस्तपतेः । चरुर्मृच्चयो भवति, चरतेर्वा, समुच्चरन्त्यस्मादापः[2] । ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे । क्रव्यमदते । घोरचक्षसे घोरख्यानाय । क्रव्यः विकृत्ताज्जायत इति नैरुक्ताः । द्वेषो धत्तमनवायमनवयवं यदन्ये न व्यवेयुर्द्वेषस इति वा । किमीदिने किमिदानीमिति चरते । किमिदं किमिदमिति वा । पिशुनाय चरते । पिशुनः पिंशतेर्विपिंशतीति ॥ २ ॥ (११)**

**निर्ह्रसितोपसर्गः** । धातुरत्र विशेष्यः । निर्ह्रसितः ह्रस्वभावं गत उपसर्ग आकारो यस्य सः । आङ्पूर्वाद्धन्तेः "अन्येष्वपि दृश्यते" ( पा० ३-२-१०१ ) इति डः । पृषोदरादित्वादाङो ह्रस्वत्वं घत्वं च हकारस्य । आहन्ता वधस्वभावोऽघः ॥ **तपतेः** "भृमृशी" ( उ० १-७ )-त्यादिना विधीयमान उप्रत्ययो बाहुलकाद्भवतीति **तपुः** । कर्मणि प्रत्ययः । **मृच्चयः** मृदादिसञ्चितः । तथाच चिनोतेर्डरुप्रत्यये

१. कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते "एतं वै पर आट्णारः कक्षीवाꣳ औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वते"ति ( तैं० सं० ५-६-५ ) ऋगन्तरेप्यृषित्वकथनेनानुष्ठातृत्वप्रसिद्धिः सूच्यते "अहं कक्षीवां ऋषिरस्मि विप्र" इति ( ऋ० सं० ३-६-१५-१ ) अस्मिन्मन्त्रे सोमानमिति पदेन, ब्रह्मण इति पदेन च सूचितं तात्पर्यं तैत्तिरीया आमनन्ति "सोमानं स्वरणमित्याह सोमपीथमेवावरुन्धे । कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवावरुन्ध" इति । ( तै० सं० १-५-७ )

२. अत्र व्युत्क्रमेण व्याख्यानमर्थसङ्गत्यै कृतमिति नापरितोष्टव्यम् ॥

३. अपि चैवमन्यथास्यात्-योऽहं सोमानां सोता । कक्षीवानौशिजः, तमेवंगुणविशिष्टं मां प्रकाशनवन्तं कुरु हे ब्रह्मणस्पते ! इति ।

१. तथाच वक्ष्यति भाष्यकृत् आहन्तीत्यर्थमिति निर्ह्रसितोपसर्गोऽत्र हन्तिरिति च ॥

२. समुच्चरन्ति समुच्छलन्ति ॥

३. वर्णव्यत्यय आर्षः ॥

डित्वाट्टिलोपे चरुः । अथ वा चरतेः । "भृमृशीतृचरित्सरितनिधनिमिमसूजिभ्य उः" ( उ० १-७ ) इत्युप्रत्ययः । समुच्चरन्त्यस्मादाप इति मृच्चयपक्षे । समुच्चरन्ति समुच्छलन्ति चर्यते भक्ष्यत इति च हव्यपाके । क्रव्यम् आममांसम् । तस्मिन्नुपपदेऽदेर्विट् । क्रव्याद इति तु पक्कमांसशब्दे उपपदेऽण् ( पा० ३-२-१ ) उपपदर्थक्रव्यादेशः पृषोदरादित्वादित्युक्तम् ( सि० कौ० ) ॥

घोरचक्षस इति चक्षिङो व्यक्तवागर्थात् ( अ० आ० ) असुन् ( उ० ४-१८८ ) बाहुलकात् ख्याञादेशाभावः । अयं दर्शनेऽपि । अन्त्येदिदिति व्याख्यानात्तुन्न । क्रव्यम् मांसम् तद्धि निकृत्तात् नितरां छिन्नात्प्राण्यवयवात् जायते लभ्यत इति क्रव्यम् निकृत्तजम् इत्येवं नैरुक्ताः निरुक्तविदो मन्यन्ते । पृषोदरादित्वमेवैषां शरणम् । "क्रुङ् गतौ" ( भ्वा० आ० ) "अचो यत्" ( पा० ३-१-९७ ) इति तु स्वामी । क्रूयते गम्यते ( प्राप्यते ) निकृन्तनादिति क्रव्यमिति पाणिनीयाः ॥ अनवायशब्दस्य अनवयवभावः पृषोदरादित्वात् । अथ वा यदन्ये अतद्द्रुहः अद्वेषसः अद्वेष्टारः न व्यवेयुः व्यवेतुं वियोजयितुं घटमाना अपि न शक्नुयुस्तादृशं द्वेषोधत्तम् ॥ किमीदी साधुजनवैरी सदाविरुद्धबुद्धिः । किमिदानीं कस्य किञ्चिदिति चरन् तथोच्यते जनैः । अत्र वाक्यस्यैव किमीदिन्भावः पृषोदरादित्वादेवमग्रेऽपि ॥ पिशुनाय चरते इति व्युत्क्रमेण योज्यम् ॥ पिंशतेः अवयवार्थस्य ( तु० प० ) "शे मुचादीनाम्" (पा० ७-१-५९) इति नुम् । विपिंशति विपुष्यति इति पिशुनः । स हि स्वयमपि पापं विपिंशतीति पिशुन उच्यते । "क्षुधिपिशिमिथिभ्यः कित्" ( उ० ३-५५ ) इत्युनन् ॥ २ ॥ ( ११ )

अथ "अमवान्" (४५) इत्यनवगतमनेकार्थं च निगमेनावगमयति—

**कृ॒णु॒ष्व पाजः॒ प्रसि॑तिं॒ न पृ॒थ्वीं या॒हि राजे॒वाम॑वाँ॒ इभे॑न । तृ॒ष्वीमनु॒ प्रसि॑तिं द्रूणा॒नोऽस्ता॑सि॒ विध्य॑ र॒क्षस॒स्तपि॑ष्ठैः ॥ १ ॥** (ऋ० सं० ३-४-२३)

कृणुष्वेति । वामदेवस्यार्षम् । त्रैष्टुभम् । अग्निर्वयने पुरुषव्याघारणे विनियुक्ता । रक्षोघ्नेन व्याघारयेदिति श्रुतम् । हे भगवन्नग्ने ! पाजः तेजःसंघं पृथ्वीं विस्तीर्णां प्रसितिन प्रसितिमिव । वागुरातन्तुमिव जालमिव वा कृणुष्व कुरुष्व । "कृवि हिंसाकारणयोः" ( भ्वा० प० ) लोट् । विस्तारयेत्यर्थः । एवमेतद्विस्तीर्णं कृत्वा अमवान् "अमात्यवान्" राजा इव याहि रक्षांसि हन्तुं गच्छ । यथा स प्रीतियुक्तो विजयाय परबलं प्रति यायादेवं त्वं याहि । अथवा अमवान् "अभ्यमनवान्" रोगभूतः परेभ्यो भयदाता यथा स यायादेवम् । अथवा अमवान् "स्ववान्" आत्मवित्तवान्सुभृतसैन्योऽसौ जायादेवम् ॥ केथम् ? इभेन "इराभृता" अन्नभृतेन "गणेन" सुपुष्टेन युक्तः ( यथा समायादेवं ) अथवा इभेन "गतभयेन शूरेण "हस्तिना" वा ( यथा स यायादेवम् ) । किञ्च तृष्वीं क्षिप्रगामिनीं प्रसितिं प्रकृष्टां सेनाम् अनुद्रूणानः अनुगच्छन् "द्रु हिंसागतिकौटिल्येषु" ( तु० प० ) आन-दीर्घाबाधौ । यद्वा तृष्वीमिति तृतीयार्थे द्वितीया तृष्व्या क्षिप्रया प्रसित्या अनुबद्धया सन्ततया गत्या द्रूणानः शत्रुसेनां हिंसन् अस्तासि असितासि । शत्रूणां क्षेप्तासि "असु क्षेपणे" (दि० प०) तृन् "आगमशास्त्रमनित्यम्" (९५) इति इड्भावः । तपिष्ठैः तप्ततमैस्तेजोभिः रक्षसः राक्षसानसच्छत्रून् । विध्य ताडय "व्यध ताडने" ( दि० प० ) लोट् ग्रहि संप्रसारणम् ॥ १ ॥

एवमत्र राजोपमानसम्बन्धात् "अमवान्-अमात्यवान्" इत्येवमाद्युपपद्यते ॥ अथास्य भाष्यम्—

**कुरुष्व पाजः=पाजः पालनात् । प्रसितिमिव पृथ्वीं । प्रसितिः प्रसयनात् । तन्तुर्वा जालं वा । याहि राजेवामात्यवान् । अभ्यमनवान् स्ववान्वा । इराभृता गणेन गतभयेन, हस्तिनेति वा । तृष्व्यानुप्रसित्या द्रूणानस्तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा । असिताऽसि । विध्य रक्षसस्तपिष्ठैस्तप्ततमैस्तृप्ततमैः प्रपिष्ठतमैरिति वा ।**

इति प्रसितिर्वागुरा तां पक्षिग्रहणार्थं वनगहनेषु प्रसारयति तद्वत्त्वमपि रक्षांसि हन्तुं महद्बलमग्रतस्तनुष्व ॥

---

१. सायणस्तु—प्रातरनुवाकाश्विनयोरस्य ( एतन्मन्त्रघटितस्य ) सूक्तस्य विनियोग इत्याह ॥

२. अत एवैतद्रक्षोहाग्निदेवताकम् । "कृणुष्व पञ्चोना राक्षोघ्नम्"—त्यनुक्रमणिका ॥

३. बलमिति भाष्यम् "पातेर्बले जुट्च" (उ० ४-२०२) इति असुन्जुटौ । अत्र दृष्टान्तः पृथ्वीं प्रसितिं नेति । यथा मृगयुः ( व्याधः ) पृथ्वीं (विस्तीर्णां) प्रसितिं प्रकर्षेण सीयते बध्यते यया

१. अमाशब्दः सहार्थे "अमान्तिकसहार्थयो"रित्यभिधानात् । तथाच सायणः । अमा राज्ञा सह वर्तत इत्यमोऽमात्यस्तद्वानिति । तथाच सहार्थस्यामाशब्दस्य साहित्यमर्थस्ततोऽर्श आद्यच् (पा० ५-२-१२७) मत्वर्थे । तस्माच्च मतुबस्त्यर्थे एव । मत्वर्थान्मत्वर्थीयः सरूप एव नेष्टः । विरूपस्तु भवत्येव । यथा दण्डिमती शाला । तथा चोक्तम् "शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपप्रत्ययो नेष्टः सन्नन्तान्न सनिष्यत" इति ॥

२. अमोऽमनं रोगः "अम रोगे" ( चु० प० ) शत्रूणां कर्तव्ये रोगैस्तद्वान् शत्रूणां रोगभूत इत्यर्थः । अमीत्युपसर्गो भाष्यकृतैव योजितः । एवमग्रेतनोऽप्यर्थस्तेनैवाभ्यूहितः ॥

३. स्वशब्दोऽत्र धनार्थः । तच्च सेनाभरणक्षममिहाभिप्रेतम् ॥

४. केन प्रकारेणेति ? कमनप्रकारमेतदादिनाभिधीयते ॥

५. इराभृत शब्दस्यैव इभशब्दे परिवृत्तिमाह भाष्यकृत् ॥

६. "इभः स्तम्बेरमः पद्मी"ति हस्तिपर्याये अमरः ॥

**पाज** इति बलनाम (निघं० २-९) कुतः? **पालनात्**। तेन हि पाल्यते । **प्रसयनात्** प्रकर्षेण बन्धनसाधनत्वात् । "षिञ् बन्धने" (क्र्या० ख० उ०) भावे क्विन् । **तन्तुर्वा जालं वा** । उभाभ्यामपि ताभ्यामभिभूयन्ते मृगाश्च मत्स्याश्च । **अमात्यवान्** इति अमवानित्यस्यार्थः । अथ **वा अभ्यमनवान् स्ववान्** ॥ **तृष्वीतीति** । तृषुशब्दः क्षिप्रपर्याये पठितः (निघं० २-१५-१०) तत्र **तरतेर्वा त्वरतेर्वा** धुक्प्रत्ययो धातोस्तृभावश्च बाहुलकात् । तरत्यनेन फललाभमथ, त्वरतेऽनेन फलमागन्तुम् । "वोतो गुणवचनात्" (पा० ४-१ ४४) इति वा ङीष् । **तपिष्ठैः** । तप्यते इति तपः कर्तर्यच् (पा० ३-१-१३४) ततोऽ"तिशायने तमबिष्ठनौ" (पा० ५-३-५५) इतीष्ठनि टिलोपः । (पा० ६-४-१५५) तदाह **तप्ततमैरिति** । अत्र कर्तरि क्तः (पा० ३-४-७२) । अथ **वा प्रपिष्ठतमैः** अतिशयेन प्रापणस्वभावैः । प्रस्तरस्वभावैर्वा । अत्र "तपिष्ठतमै"रिति सायणसम्मतः पाठः । अत्रातिशयनातिशयोऽभिधीयते ॥

अथ **अमीवा** (४६) इत्यनवगतं "रोगभूतः क्रिमि"-रभिधेयः । तदेतन्निगमयति—

"यस्ते॒ गर्भ॒ममी॑वा दु॒र्णामा॒ योनि॑मा॒शये॑ ॥"
(ऋ० सं० ८-८-२०-२)

**यस्त** इति । अस्य "अ॒ग्निष्टं ब्रह्म॑णा स॒ह निष्क्र॒व्याद॑मनीनशत्" इत्युत्तरार्धर्चम् रक्षोहानभिन्नाह्मणस्तस्येदमार्षम् । अनुष्टुप् । पुत्रकामस्य षडाहुतो नाम स्थालीपाकस्तत्रेयं विनियुक्ता । हे स्त्रि ! यः **दुर्णामा** पापनामा क्रिमिः । **अमीवा** रोगभूतः सन् "अम रोगे" (चु० प०) अमेरीवन्न् बाहुलकात् ॥ **योनिम् आ** आगत्य **गर्भं** गर्भस्थानम् **शये** अधिशेते । "लोपस्त आत्मनेपदेषु" (पा० ७-१-४१) इति तलोपः । अत्राध्युपसर्गाध्याहारो द्वितीयाश्रुत्याऽर्थवशात् । **तं** 'क्रव्यादम्" आममांसभक्षितारं गर्भहिंसितारं **ब्रह्मणा सह** सहितः **अग्निः निरनीनशत्** निःशेषेण नाशयतु । लोडर्थे लुङ् (पा० ३-४-६) ॥ २ ॥

एवमत्र "अमीवा" इत्यस्य "क्रिमिरोगभूतः" अभिधेयः । क्रिम्युपहते हि योनौ गर्भो न सम्भवतीत्युपपत्तिः ॥

१. तदेतल्लिष्टकल्पनमुभयत्रैव समानमिति यथोक्तमेव साधु ॥

२. सत्रितंच "ब्रह्मणा षट् ब्राह्मो रक्षोहागर्भसंस्रावे प्रायश्चित्तमानुष्टुभं ही"-ति (अनुक्र०) ॥

३. सायणस्तु अर्शआख्यो रोगस्तद्रूपोऽमीवायस्ते गर्भमाशेते । यश्च ते योनिरेतस आधानं गर्भस्थानमाशेते तं क्रव्यादं मांसाशिनं राक्षसादिकमित्येवं व्याख्यत् । यथा भाष्यं तु मूलोक्तम् ॥

४. नान्तोऽयं, आवन्तपक्षे इवः । यद्वा "शेवयह्वजिह्वाग्रीवाप्वामीवाः" (उ० १-१५२) इति वप्रत्ययान्तो निपातः ॥

५. विट्प्रत्ययान्तं (पा० ३-२-६९) हलन्तमेतदित्याहामर्मासेति ॥

अथास्य भाष्यम्—

**अमीवाऽभ्यमनेन व्याख्यातः । दुर्णामा क्रिमिर्भवति । पापनामा । क्रिमिः क्रव्ये मेद्यति । क्रमतेर्वा स्यात्सरणकर्मणः । क्रामतेर्वा ॥**

**अभ्यमनेन** अभ्यमनवानिति यदुक्तमाधस्त्ये मन्त्रे अनेनैव स **व्याख्यातः** । तुल्यार्थत्वात् ॥ **दुर्णामेति** । सूत्रमतेनात्र णत्वम् (पा० ८-४-१४) वार्तिकमते तु दुर्नामेत्येव । **पापनामा** । पापदेशे नतः परिणत उत्पन्नः । तथाच नमतेर्निणन्तोऽयम् ॥ **क्रिमिः क्रव्ये मेद्यति** । तथा च "ञिमिदा स्नेहने" (दि० प०) इति धातोर्डिप्रत्ययः । क्रव्यशब्दस्य क्रिभावः । अथ **वा क्रमतेः** । नैरुक्तोऽयं धातुः । "क्रमितमि-सति-स्तम्भामत इच्" (उ० ४-१२०) इति इन्किच्चेति (किः) सम्प्रसारणानुवृत्तेः क्रमिरपि । तथाच रभसः "द्रुमामये भवेत्पुंसि कीटे च क्रिमि वा क्रमिरि"ति । **क्रामतेर्वा** पादविक्षेपार्थस्य क्रमुधातोः (भ्वा० प०) "क्रमः परस्मैपदेषु" (पा० ७-३-७६) इति दीर्घः ॥

अथ **दुरितम्** (४७) इत्यवगतम् । "दुर्गतिर्गमनम्" इत्यर्थप्रतीतिः । "दुष्कृतम्" अभिधेयम् ॥

तथाच निगमः—

"अ॒ति॒क्राम॑न्तो दुरि॒तानि॒ विश्वा॑ ॥"

**अतिक्रममाणा दुर्गति गमनानि सर्वाणि ॥**

**अतीति** । अस्य "वै॒श्व॒दे॒वीं सू॒नृता॒मार॑भध्वं शु॒द्धा भव॑न्तो य॒ज्ञिया॑सः पाव॒काः" इत्यादिः । "श॒तं हि॒माः स॒र्ववी॑रा मदेम" इत्यन्तः । **वैश्वदेवीं** वाचं **सूनृताम्** सत्याम् **आरभध्वम्** उपक्रमध्वं वक्तुम् । तयैवंलक्षणया वाचा **शुद्धाः** इहानभिशस्ताः पूताश्च परलोके भवथ । **यज्ञियासः** यज्ञियाः (यज्ञसंपादिनः) असुक् (पा० ७-१-५०) **पावकाः** पावयितारः । किञ्च **दुरितानि** दुर्गतिप्रापकाणि **विश्वा** विश्वानि सर्वाणि शेर्लोपः (पा० ६-१-७०) कर्माणि । **अतिक्रामन्तः** अतिक्रममाणा वयं (तस्या वाचो महाभाग्येन । **सर्ववीराः** अनवखण्डितपुत्रपोत्राः सन्तः । **शतं हिमा** हिमानां हेमन्तानां **मदेम** हृष्येमेत्यर्थः । षष्ठ्या अस् ॥ १ ॥

१. "दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य" (पा० ८-४ १६) इति हि वार्तिकम् ॥

२. "भ्रमेः संप्रसारणं चे"ति पूर्वसूत्राद् ॥

३. दुर्गतेः प्रापकं (कारणभूतं) कर्म पापकं दुरितं दुष्कृतमुच्यते "कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्" इत्यमरः । दुःशब्दोऽत्र दुर्गतौ वर्तते "इणगता"विलसात् (अ० प०) "इगश्चिदृषिभ्यः क्तः" । इति बाहुलकात्करणे क्तः । दुर्गतिरीयते गम्यते येन तद्दुरितम् ॥

एवमत्रातिक्रमणसम्बन्धात् "दुरितम्" "दुष्कृतम्" इत्युपपद्यते। तस्य हि अतिक्रमणमभीष्टमिति ॥

**अप्वा=यदेनया विद्धोऽपवीयते । व्याधिर्वा भयं वा ।**

**"अप्वे परेही"–त्यपि निगमो भवति ॥"**

(ऋ० सं० ८-५-२३-६)

अथ **अप्वा** (४८) इत्यनवगतम्। "अपवयति" इत्यवगमः। तदेतदाह **यदिति**। यथस्मादेनया रोगजात्या भयजात्या वाऽप्वाख्यया **विद्धो**ऽभिसम्बद्ध **अपवीयते** अपवेष्ट्यते प्राणैः। अत्र निगमः—**अप्वेपरे हीति**।

व्याख्यास्यते चैतदुपरिष्टात् (नि० दै० का० ९-३३)

**अमतिरमामयी मतिरात्ममयी ॥**

**"ऊर्ध्वा यस्यामतिर्भा अदिद्युतद्" ॥**

**इत्यपि निगमो भवति ॥**

(सा० छ० आ० ५-२-३-८)

अथ **अमतिः** (४९) इत्यनवगतम्। **अमामयीमतिः** इत्यवगमः। "दीप्ति"रभिधेया तत्र अमामयीत्यप्रतीतार्थकमित्याह **आत्ममयी**। तथाच अमामयीमतिर्यस्यासावमतिः अमाशब्द आत्मवचनः। तेनापि प्रकाशो लक्ष्यते सवितृविशेषणत्वात्तथाचात्मप्रकाशमयी मतिरमतिः। माशब्दलोपः पृषोदरादित्वात्॥ अत्र निगमे **ऊर्ध्वेति**। तथाच पठ्यते—

३ २ उ० ३१ २३१२३क०२ र ३१२३१२ ३१२
"अभित्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं
३२३२ २ २ ३ २
रत्नधामभिप्रियं मतिम्।
३३उ ३ २ ३ १ २२३१२३ १ २
ऊर्ध्वा यस्या मतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमी-
३१२ ३ १ २
त सुक्रतुः कृपास्वः ॥

१. अपगमयति सुखं प्राणांश्चेत्यर्थः। तथाच अपपूर्वाद्वेञ्वासोरन्तर्णीतण्यर्थात् "अन्येष्वपि दृश्यते" (पा०३-२-१०१) इति डप्रत्यये अपस्यान्तलोपश्छान्दसष्टाप्। यद्वा "शेवयह्वजिह्वाग्रीवाप्वामीवाः" (उ० १-१५२) इति वन्प्रत्यये वेञो लोपोऽपशब्दस्यान्तलोपश्च निपात्यते।

२. अपगम्यते लक्ष्यत इति यावत् ॥

३. अमामरोगे (चु० उ०) इत्यस्मा"द्दमेर्द्विषति च्चित्" (उ० ४-१७४) इतीञ्प्रत्ययः। नञ्समासे तु परवल्लिङ्गतायां नपुंसकत्वापत्तिः। तथा चोक्तं माघेन "स्वातामामित्रौ मित्रे च सहजप्राकृतावपी"ति ॥

४. अत्र ततिर्मतिर्वेति देवराजयज्वानः। तन्मते अमाततिशब्दस्यात्ममतिशब्दस्य वाऽमतिभावः। तन्यत इति ततिर्दीप्तिः। मतिरपि प्रकाशरूपत्वाद्दीप्तिः ॥

इति। नकुलस्यार्षम्। अतिच्छन्दा अष्टिः। प्रवर्ग्ये शस्यते, सोमसम्मानेचाध्वर्यवे विनियुक्ता। अहं त्यं तं **सवितारं देवं अभिअर्चामि यस्य** सवितुः **अमतिः** आत्मप्रकाशमयी मतिः **ऊर्ध्वा**: उपरिगताः भाः रश्मीन् **अदिद्युतत्** अद्योतयत् शसो लुगत्र। कथंभूतंतम्? **ओण्योः** द्यावापृथिव्योः (निघं० ३-३०-१५) (यान्यन्तराभूतानि वर्तन्ते तेभ्यः सर्वेभ्यः सकाशात्) **कविक्रतुम्** क्रान्तप्रज्ञानम् **सत्यसवम्** सत्याभ्यनुज्ञम् **रत्नधां** रमणीयानां धनानां दातारम्। **अभिमतिम्** सर्वार्थानामभिमन्तारम् ईश्वरत्वात्। **प्रियं** च सर्वभूतानाम् ॥ किञ्च **सवीमनि** प्रसवे (निघं० ४-३ ३१) यस्य अभ्यनुज्ञाने सर्वमिदं प्रवर्तते। **हिरण्यपाणिः** रश्मिपाणिः (हितरमणत्वात्तद्रश्मेर्हिरण्यत्वमुपचरितम्)। सन्सर्वमिदं जगत् **अमिमीत** निर्मितवान्। **सुक्रतुः** सुकर्मा। **कृपा** स्वसामर्थ्यकल्पनया **स्वः** सुअरण आदित्याभिधानः ॥ ८ ॥

एवमत्र "अमति"–शब्देन आत्मप्रकाशगत आदित्यस्य विज्ञानमुच्यते। स हि प्रकाशसतत्त्व एव नान्यत्प्रकाशान्तरमपेक्षत इत्युपपद्यते ॥

**श्रुष्टीति क्षिप्रनामाशु अष्टीति ॥ ३ ॥ (१२)**

अथ **श्रुष्टी** (५०) इत्यनवगम् **पुरन्धिः** (५१) इति च। तत्राद्यस्य श्वशनम् इत्यवगमः। क्षिप्रत्वाभिधेयमित्याह **क्षिप्रनामेति**। आशु इति शु इति च क्षिप्रनामनी इत्युक्तमधस्तात् (नि० ६-१) **अष्टीति** अश्नोतेः व्याप्त्यर्थात् (स्वा० आ०) क्तिनि "कृदिकारादक्तिनः" (पा० ४-१ ४५ ग० वा) इति वा ङीष्। तथाचाशनमष्टीव्यापनं शु अष्टी श्रष्टी सत् श्रुष्टी वशब्दस्य रुभावः। पृषोदरादित्वात्। अत्र शुशब्द एवाशुवचनः ॥ पुरन्धिरित्यस्यापि पुरांधीरित्येवमवगमः ॥ ३ ॥ (१२)

अत्र निगममुदाहरति—

**"ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम् ॥"** (ऋ० सं० ५-४-६-४)

१. "ओणृ अपनयने" (भ्वा० प०) "इन्सर्वधातुभ्यः" (उ० ४-११४) इतीन् "कृदिकारादक्तिनः" (पा० ४-१-४५ प० वा०) इति ङीष्। अपनयतः स्वाश्रितानां क्लेशान्। यद्वाऽवतेर्धुटि छान्दसत्वात्सम्प्रसारणे गुणश्च टित्त्वान्ङीप् ॥

२. अत्र धीरितिद्युणातेः क्विबन्तस्य वर्णविपर्ययेण बोध्यः। तथाच वक्ष्यति भाष्यकृत् "पुरांदारयितृतम" इति। अत्रातिशायनार्थः प्रभावातिशयद्योतनार्थः। शब्दगतिरेवैषा यथा मत्वर्थप्रकृतेः। तथा चोक्तम् "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति। नैष मतुबर्थं इति सूत्रे (पा० ५-२-९४) व्यक्तम्। पुरुशब्दस्य पुरम्भावो धीरित्यस्य धिभावश्चार्षः। एवमग्रेऽपि बोध्यम् ॥

**तानिति** । अस्य "ते हि युज्ञेषु युज्ञियास ऊमाः सुधस्थं विश्वे अभिसन्ति देवाः" इत्यादिः । वसिष्ठस्यार्षं वैश्वदेवी त्रिष्टुप् । **ते हि** ते खलु प्रसिद्धाः **यज्ञियासः** यज्ञार्हाः **ऊमाः** अवितारः रक्षकाः अवतेर्मक् । "ज्वरत्वरे" (पा० ६–४–२०)–त्यादिनोपधावकारयोरूठ् । **विश्वेदेवाः** । **यज्ञेषु** यागेषु **सधस्थं** सहस्थानम् समानं स्थानम् (वैश्वदेवम्) **अभिसन्ति** अभिभवन्ति आक्रमन्ति । **हे अग्ने! अध्वरे** अस्मदीये यज्ञे **उशतः** स्वमंशं कामयमानान् **तान्** विश्वान् देवान् **श्रुष्टी** क्षिप्रम् ( अविलंबमानः ) **यक्षि** यज । "सेह्यपिच्च" "वा छन्दसी"–(पा० ३–४–८८) ति ह्यादेशाभावे "बहुलं छन्दसी" (पा० २–४–७३) ति शपो लुक् । कुत्वषत्वे ॥ तथा **भगं** तदाख्यं देवम् **नासत्या** नासत्यौ आश्विनौ देवौ औङ आ ( पा० ७–१–३९ ) **पुरन्धिम्** पुरां ध्यातारमिन्द्रं च यज ॥ ४ ॥

एवमत्र यागस्य विघ्नभयात्क्षिप्रस्येष्टत्वात् "श्रुष्टी" इति "क्षिप्रनाम" इत्युपपद्यते । अन्यत्र हि वक्ष्यति "श्रुष्टीवरीः= सुखवरीः" इति ( ऋ० सं० ७–७–२६–१ ) तस्मादेतदनेकार्थमपि भवति ॥ अथास्य भाष्यम्—

**तानध्वरे यज्ञ उशतः कामयमानान् यजाग्ने श्रुष्टी भगं नासत्यौ चाश्विनौ ॥**

इति । उक्तोऽर्थः । अत्र नासत्यपदं मतभेदेन व्याचष्टे–

**सत्यावेव नासत्यावित्यौर्णवाभः ।**

"आचार्यौ मन्यत" इति शेषः । तौ हि सत्यमेव ब्रूतः न कदाचिदप्यसत्यम् । तस्मान्नासत्यावित्युच्येते । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकरणात् ॥

**सत्यस्य प्रणेतारावित्याग्रायणः ॥ नासिकाप्रभवौ बभूवतुरिति वा ॥**

अथवा **सत्यस्य** उदकस्य यज्ञस्य वा ( निघं० १–१२ ) **प्रणेतारौ** नासत्यौ **इति आग्रायण** आचार्यो मन्यत इति शेषः । अथ **वा** ऐतिहासिकपक्षेण **नासिवतुः इति** ॥

अथ पुरन्धिपदमवगमयति–

**पुरन्धिर्बहुधीस्तत्कः पुरन्धिः ? भगः । पुरस्तात्तस्यान्वादेश इत्येकम् । इन्द्र इत्यपरम् । स बहुकर्मतमः । पुरां च दारयितृतमः । वरुण इत्यपरं, तं प्रज्ञया स्तौति ।**

**"इमामूनु कुवितमस्य मायामि"त्यपि निगमो भवति ॥** ( ऋ० सं० ४–४–३१–१ )

**पुरन्धिरित्यादि** । पुरुशब्दस्यात्र पुरम्भावः स च बह्वर्थः । तथा च हैमः "पुरुः प्राज्येऽभिधेयवदि"–ति । "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इति चामरः ॥ धीरित्यत्र धिभावः । एवमयं पुरन्धिशब्दो गुणवचनत्वात्सन्दिह्यते **तत्कः पुरन्धिरिति** । **भग** इत्युत्तरम् । योऽयं **पुरस्तात्** पूर्वतनः "श्रुष्टी भगम्" इति **तस्य** अयम् **अन्वादेशः** पुनर्वचनम् **इत्येकम्** आचार्यमतम् । **इन्द्रः** पुरन्धि**रित्यपरम्** मतम् । कुतः ? **स हि** इन्द्रः **बहुकर्मतमः** अतिशयेन बहुकर्मा । अन्येभ्यो देवेभ्यः । धीरिति कर्मनामसु पठितम् ( निघं० २–१ २१ ) तद्यस्य पुरु स पुरन्धिरिन्द्रः । अथ **च पुरां दारयितृतमः** । पुरां मेघौघानामतिशयेन दारयिता । **वरुणः** पुरन्धिः । **इत्यपरम्** मतम् । कुतः ? **तं हि** अन्यत्रापि **प्रज्ञया** बुद्ध्या **स्तौति** मन्त्रदृक् । तद्यथा–**इमामित्या**दि ।

"इमामूनु कुवितमस्य मायां मही देवस्य नकिरादधर्ष । एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्" ॥

अत्रेरार्षम् । त्रिष्टुप् । वारुणी । **कवितमस्य** मेधावितमस्य (प्रकृष्टप्रज्ञस्य) **देवस्य** द्योतमानस्य स्तुत्यस्य वा वरुणस्य **इमां** सर्वप्रसिद्धां **महीं** महतीम् **मायां** प्रज्ञां **न किः** नैव कश्चित् **आदधर्ष** आधर्षयितुम् ( अभिभवितुं ) शक्नोति **स्म ऊन्विति** पूरणौ ॥ **यत्** यस्मात् **एनीः** गमनशीलाः **अवनयः** नद्यः ( निघं० १–१३–१ ) **बह्व्योऽपि आसिञ्चतीः** । सततमुदकमासिञ्चयन्त्यः (सर्वदोदकेन पूरयन्त्योऽपि) **एकम्** अपि समुद्रम् **उद्ना** उदकेन । उदकशब्दस्योदन्भावः ( पा० ६–१–६३ ) **न पृणन्ति** न पूरयन्ति न पूरयितुं शक्नुवन्ति । तदेतद्वरुणस्य कर्मेत्यहोऽस्य प्रज्ञामहत्त्वम् ॥ १ ॥

एवमत्र वरुणः प्रज्ञया श्रूयते । धीरिति च प्रज्ञानाम ( निघं० ३–९–७ ) सा यस्य पुर्वी ( बह्वी ) स ( वरुणः ) पुरन्धिरित्युपपद्यते ॥

**रुशदिति वर्णनाम, रोचतेर्ज्वलतिकर्मणः ॥**

**"समिद्धस्य रुशददर्शि पाजः ॥"**

**इत्यपि निगमो भवति ॥** ( ऋ० सं० ३–८–१२–२ ) (१३)

---

१. अत्र नासत्यावन्तरापि सन्तौ न सन्दिह्येते, तयोर्द्विवचनवाच्यत्वात् । एकवचनान्तत्वाच्च पुरन्धिशब्दस्येति दुर्गः ॥

२. शत्रुपुराणामित्यैतिहासिकाः । तथाचात्र पुरशब्दस्यैवामागम इति बोध्यम् ॥

३. आदित्योऽत्र वरुण इति दुर्गः । स ह्यन्तरिक्षे उदकमावृणोति । "वृञ् वरणे" ( स्वा० उ० ) "कृवृदारिभ्य उनन्" ( उ० ३–५० ) इत्युनन् प्रत्ययः । अत्र पक्षेऽवनय इत्युपमानपदम् । एनीः एन्यः । शुभ्रा गमनशीला वा सततमुदकमादायादित्यमण्डलं गच्छन्त्यो रश्मयः । लिङ्गव्यत्यय आर्षः । इत्येवं तत्रैव ( दुर्गव्याख्याने ) व्यक्तं द्रष्टव्यम् ॥

४. विज्ञातुम् ॥

५. अन्तरिक्षविस्तारादिति समुद्रापूरणपर्यन्तम् । ( यदेतत्पूर्वतनेन मन्त्रेणाभिहितमनेन च ) ॥

अथ **रुशत्** ( ५२ ) इत्यनवगतम् । **रोचतेरित्यादि** निर्वचनम् । "रोचनम्" इत्यवगमः । तथाच "रुच दीप्तौ" ( भ्वा० आ० ) इत्यस्य "संश्चत्तृम्पद्वेहत्" ( उ० २-७९ ) इत्यादिनाऽतिप्रत्ययो गुणाभावश्चकारस्य शकारश्च निपात्यते । अत्र निगमः **समिद्धस्येति** । तथाहि—

"अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् । समिद्धस्य रुशदर्शि पाजो महान् देवस्तमसो निरमोचि" ॥ इति ।

गविष्ठिरबुधयोरार्षम् । आग्नेयी त्रिष्टुप् अग्निचयने इष्टकोपस्थाने विनियुक्ता । अयं **होता** होमनिष्पादकोऽग्निः । **देवान्** यष्टव्यान् । **यजथाय** यष्टुम् । **अबोधि** बुध्यते लडर्थे लुङ् ( पा० ३-४-६ ) एवमग्रेऽपि । स **अग्निः** । प्रातःकाले **सुमनाः** शोभनमनस्कः । यजमानानुग्रहबुद्धिः । सन् **ऊर्ध्वः** **अस्थात्** उत्तिष्ठति । **समिद्धस्य** अस्य **रुशत्** रोचमानम् **पाजः** बलम् ( निघं० २-९-२ ) ज्वालालक्षणम् **अदर्शि** दृश्यते । अथ तथाभूतः **महान्** । **देवः** अन्धकारात् **निरमोचि** निर्मुक्तोऽभूत् ॥ २ ॥

एवमत्राग्न्यधिकाराच्छन्दसारूप्याच्च "रुशत्" इति "वर्णनाम" इत्युपपद्यते ॥ ४ ॥ ( १३ )

अथ **रिशादसः** ( ५३ ) इत्यनवगतम् । "रेशयदासिनः" इत्यवगमः । अत्र निगममेव तावदुपन्यस्यति—

**"अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् ॥"** ( ऋ० सं० ६-२-३२-५ )

**अस्ति हि वः समानजातिता रेशयदासिनो देवा अस्त्याप्यम् । आप्यमाप्नोतेः ॥**

**अस्तीति** । अस्य "प्रणः पूर्वस्मै सुविताय वोचत मक्षु सुम्नाय नव्यसे" इति उत्तरार्धर्चम् । मनोर्वैवस्वतस्येयमार्षम् । सतोबृहती । वैश्वदेवे सूक्ते । हे **रिशादसः** रेशयदासिनः । रिशतां हिंसतामसितारः ? अत्रान्तर्भावितण्यर्थो रिशतिरवगन्तव्यः । **देवासः** देवाः ( द्योतमाना मरुदादयः । **वः** युष्माकं **सजात्यम्** परस्परं समानजातिभावो देवत्वम् "संज्ञापूर्वको विधिरनित्यः" (प० ९४) इति आदिवृद्ध्यभावः । भावे ह्यत्र ष्यञ् (पा० ५-१-१२४) **अस्ति हि** विद्यते खलु । किञ्च **आप्यम्** आपिर्बन्धुस्तस्य भावः बन्धुता **अस्ति** । दुर्गस्तु आप्यमाप्तव्यं ( धनादि ) मनुष्यैरस्तीत्यर्थमाह यथा भाष्यम् । यत एवमतो ब्रवीमि—**पूर्वस्मै** प्रथमभाविने **नव्यसे** नवीयसे नवतराय च **सुविताय** सुगताय सुभोगाय स्थानाय ( सभूताय ) **सुम्नाय** सुखाय च ( निघं० ३-६-१६ ) (उभयमुद्दिश्य) **नः** अस्मभ्यम् **मक्षु** शीघ्रम् **प्रावोचत** यूयमभ्यनुजानीत । अभ्युदयधनानि प्रयच्छतेत्यर्थः ॥ ५ ॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "रिशादसः रेशयदासिनः, रेशयदारिणो वा" इत्युपपद्यते ॥ **आप्यमाप्नोतेरिति** निगमप्रसक्तस्य निर्वचनम् । तथाच "ऋहलोर्ण्यत्" ( पा० ३-१-१२४ ) इति कृत्यप्रत्ययः । सचार्हार्थे ( पा० ३-३-१६९ ) भवति ॥

**सुदत्रः कल्याणदानः ॥**

अथ **सुदत्रः** (५४) इत्यनवगतम् "सुदान" इत्यवगमः । सुरत्राभिपूजितार्थं इत्याह **कल्याणदान** इति । तदेतदभिधेयवचनम् तथाच सुपूर्वाद्ददातेः ष्ट्रन् । बाहुलकाद्दद्भावः । ह्रस्वत्वं वा ॥

अत्र निगममुदाहरति—

**"त्वष्टा सुदत्रो विदधातु रायः" ॥** ( ऋ० सं० ५-३-२७-२ )

**इत्यपि निगमो भवति ॥**

**त्वष्टेति** । अस्य "ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु । वरूत्रीभिः सुशरणो नो अस्तु" इत्यादिः । वसिष्ठस्यार्षं त्रिष्टुप् । वैश्वदेवी । व्यूह्ले दशरात्रे चतुर्थेऽहनि वैश्वदेवे शस्त्रे शस्यते । **ताः** देव्यः ( देवपत्न्यः ) याः **रातिषाचः** रातिं हविर्दानं सचन्ते सेवन्ते, ण्विः (पा० ३-२-६४) "रा दाने" ( अ० प० ) "षच सेवने" ( भ्वा० आ० ) **नः** अस्मभ्यं **वसूनि** धनानि यान्यस्माकमभीष्टानि **रासन्** प्रय-

१. रोचत इति रुशद्वर्णविशेषो ज्वालाविर्भूतप्रकाशरूपोऽनेनाभिधीयते । यद्वा रुशेर्हिंसार्थाद् ( तु० प० ) रोचयत्यर्थे वर्तमानाल्लटः शतरि रूपम् ॥

२. रेशयतां हिंसयितॄणामसितारः । णिनिः ( पा० ३-२-७८ ) रेशयत आयुधानि येऽस्यन्ति ते इति दुर्गः । "रेशयदारिण" इति केचिदधीयते निर्वचनम् । तेषां रेशयन्तं हिसन्तं दारयन्तीत्यर्थः ॥

१. मनुष्यैः प्राप्तव्यं धनाद्यैश्वर्यसाधनमस्ति युष्माकमितीश्वरा यूयमित्यभिप्रायः ॥

२. अत्र "वी गतिव्याप्त्यादौ" (अ० प०) पठितः तत्र वी—ई इति छेदं व्याकृतिविदो मन्यन्ते । नैरुक्तास्तु वि० इत्यपि, विनिगमनाविरहात् । ततः क्तः ॥ यद्वा ह्रस्वत्वमेव धातोर्बाहुलकात् ॥

३. तादर्थ्यचतुर्थ्या ( पा० १-४-४४ वा० ) अयमर्थो लभ्यते । तादर्थ्यमुपकार्योपकारकभावः सम्बन्धः । "कृत्तद्धितसमासैः सम्बन्धाभिधानं भावप्रत्ययेने"ति नियमात् ॥

४. यद्यपि—अमरेण "द्राङ्मङ्क्षु—सपदि द्रुते" इत्येवं सङ्कारो मङ्क्षुशब्दः पठितः । युज्यते च सः "टुमस्जो शुद्धौ" (तु० प०) इत्यस्माद्बाहुलकात्सुप्रत्यये "मस्जिनसोर्झली—" ( पा० ७-१-६० ) तिनुमि "स्कोः—" ( पा० ८-२-२९ ) इति सलोपेऽनुस्वारपरसवर्णयोर्नाप्राप्तत्वात् । तथापि छन्दस्यत्र मलोपो द्रष्टव्यः । छन्दसि दृष्टानुविधेरनुशासनसिद्धत्वात् ॥

५. सायणस्तु ता इति "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति लुका तानीत्यर्थेनामुमर्थमाह ।

३८ नि०

च्छन्तु (ददतु) इत्यर्थः । "रा दाने" ( अ० प० ) लोडर्थे लुङ् ( पा० ३-४-६ ) अडभाव आर्षः । अपि च **रोदसी** रुद्रस्य पत्नी द्यावापृथिव्यौ वा **वरुणानी** वरुणस्य पत्नी च **आशृणोतु** आभिमुख्येन स्थित्वाऽऽकर्णयन्तु । किञ्च **वरूत्रीभिः** उपद्रवाणां वारयित्रीभिः वरयितव्याभिर्वा देवपत्नीभिः सहितैः **सुदत्रः** कल्याणदानः **त्वष्टा** तदाख्यो देवः ( विश्वकर्मा प्रजापतिः ) **नः** अस्माकं **सुशरणः** स्वाश्रयणः ( सुशरणप्रदः ) **अस्तु** भवतु । **रायः** धनानि च **विदधातु** अर्पयतु ॥ २ ॥

एवमत्र "रायः" पदसम्बन्धात् "सुदत्रः=कल्याणदान" इत्युपपद्यते ॥

## सुविदत्रः=कल्याणविद्यः ॥

## "आग्ने याहि सुविदत्रेभिरर्वाङ्" ॥

( ऋ० सं० ७-६-१८-४ )

## इत्यपि निगमो भवति ॥

अथ **सुविदत्रः** ( ५५ ) इत्यनवगतम् "सुविद्यः" इत्यवगमः । सुरत्राप्यभिपूजितार्थे इत्याह-**कल्याणविद्य** इति । तदेतदभिधेयवचनम् । अत्र सुपूर्वात् "विद ज्ञाने" ( अ० प० ) इत्यस्मात् "अमिनक्षियजि०" ( उ० ३-१०५ ) इत्यादिना विहितोऽत्र प्रत्ययो गुणाभावश्च बाहुलकाद्भवति । अत्र निगमः **आग्ने याहीति** । तथाच—

"ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः । आग्ने ० ० र्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः" इति ॥

शङ्खस्य यामायनस्यार्षम् । त्रिष्टुप् पैत्री । पितृयज्ञे स्विष्टकृद्याज्यैषा । **देवत्रा** देवान् प्रति "देवमनुष्य" ( पा० ५-४-५६ ) इत्यादिना द्वितीयान्तात्त्राप्रत्ययः । असर्वविभक्त्यन्तत्वादव्ययत्वम् ( पा० १-१-३८ ) पाणिनीये तु—**जेहमानाः** गच्छन्तः । जेहतिर्गतिकर्मसु पठितः ( निघं० २-१४-९४ ) "जिह गतौ" "जेह प्रयत्ने" (भ्वा० आ०) अत्र गताविव्त्तुवर्तते । लटः शानचि शपि "आने मुक्"(पा०७-२-८२)"ओहाङ् गतौ" ( जु० आ० ) इत्यस्य रूपमिति स्कन्दस्वामिनः । क्रमेण देवत्वं प्राप्ता इत्यर्थः । **होत्राविदः** स्तुतिविदः । होत्रा हि वागुच्यते । हूयते ह्यनया मन्त्ररूपया हविः । "हु दानादनयोः" ( जु०प० ) "हुयामाश्रुभसिभ्यस्त्रन्" ( उ० ४-१६९ ) इति त्रन्प्रत्ययः । यद्वा होत्रेति यज्ञनाम ( निघं० ३-१७-८ ) यज्ञान्सम्यक्कर्तुं वेदितारः । **अर्कैः** अर्चनीयैः "अर्च पूजायाम्" ( भ्वा० प० ) "कृदाधारार्चिकलिभ्यः कः" ( उ० ३-३८ ) इति करणे कः । स्तोत्रैर्मन्त्रैर्वा **स्तोमतष्टासः** स्तोमानां सम्यक् कर्तारः **ये** पितरः । **तातृषुः** तृष्यन्ति । **हे अग्ने** ! त्वं तैः **सुविदत्रेभिः** सुविदत्रैः कल्याणविद्यैः **पितृभिः** साकम् । **अर्वाङ्** अस्मदभिमुखमागत्य **सत्यैः** यथावत्संस्कृतैः **कव्यैः** पितृदैवत्यैः **घर्मसद्भिः** घर्म इति यज्ञनाम ( निघं० ३-१७-१५ ) तत्सादिभिस्तद्गतैर्हविर्भिस्तृप्तिमुपयाहि उपगच्छ । यद्वा सत्यैरविसंवादिभिः ( सत्यवादिभिः ) कव्यैः कव्यं नाम पितृदैवत्यं-हविस्तत्सम्बन्धिभिः कव्यवाहैरित्यर्थः । अथवा कविभिर्मेधाविभिः स्वार्थिको यत् घर्मसद्भिर्यज्ञसादिभिर्यज्ञेऽभीष्टं सीदद्भिः पितृभिः साकम् आयाहीति । अत्राध्याहर्तव्यः । यद्वा अर्वाङित्येवाभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमाङर्थाभिधानायालमिति नाध्याहारायासः ॥ ४ ॥

एवमत्र शब्दसामर्थ्यात् "सुविदत्रः कल्याणविद्य" इत्युपपद्यते ।

## आनुषगिति नामानुपूर्व्यस्यानुषक्तं भवति ॥

## "स्तृणन्ति बर्हिरानुषक्" ॥

( ऋ० सं० ६-३-४२-१ )

## इत्यपि निगमो भवति ॥

अथ **आनुषक्** ( ५६ ) इत्यनवगतम् **अनुषक्तम्** इत्यवगमः । **आनुपूर्व्यस्य नाम** इत्यर्थवचनम् । अत्र निगमः **स्तृणन्तीति** । तथाच—

"आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा" त्रिशोकस्यार्षम् । गायत्री । बृहतीसहस्रे त्र्यृचाशीतिषु विनियुक्ता । **ये** एवं ऋषयो यज्वानः । नित्यम**ग्निम्** **आ** आभिमुख्येनावस्थिताः । **इन्धते** दीपयन्ति । **येषाम्** च **युवा** नित्यतरुणः **इन्द्रः सखा** समानख्यानो याज्ञे कर्मणि भवति त एव यज्ञेषु **बर्हिः** कुशान् । **आनुषक्** अनुषक्तम् । आनुपूर्व्येण

चिन्तन्त्या" ( ऋ० सं० ४-१-१९-३ ) इति निगमः । तथाच यज्ञवचनोऽप्ययं होत्राशब्दः स्त्रीलिङ्गः शब्दस्वाभाव्यात् ॥ यथा दारशब्दः पुंवचनः । "होत्राभ्यश्छन्दसि" ( पा० ५-१-१३५ ) इति निर्देशसिद्धः ॥

१. "तक्षू तनूकरणे" ( स्वा० प० ) ततस्तृन्नन्तस्यैव वर्णव्यत्यय आर्षोऽवगन्तव्यः ।

२. णिनिना ताच्छील्यार्थेनायमर्थोऽभिद्योत्यते । सततकरणं हि ताच्छील्यम् ॥

३. "सावधारणं हि सर्वं वाक्यमब्भक्षो वायुभक्ष इत्युक्ते अप एव भक्षयति वायुमेव भक्षयतीति गम्यत" इति महाभाष्यादेवमवधारणपरतया दुर्गाचार्येण व्याख्यातम् ॥

४. जात्येकवचनमत्र बर्हिरित्यतः कुशानित्युक्तम् ॥

५. पुरस्ताद्दक्षिणत उत्तरतः पश्चादग्रैर्मूलान्याच्छादयन्नित्येवं परिस्तरणकर्मणि कुशकण्डिकायामुक्रमनुसत्य तथाचैतत्क्रियाविधेयम् ॥

१. ऋच्येकवचनं वरुणान्यभिप्रायकम् । अत एव सायणः "वरुणानी वरुणस्य पत्नी अभि शृणोत्वसदीयं स्तोत्रम् । रोदसी द्यावापृथिव्यौ चाभिशृणुताम्" इत्येवं व्याख्यत् ॥

२. सहार्थे विनापि तद्योगे तृतीयाया अनुशासनसिद्धत्वात् ॥

३. हूयते ह्यस्मिन् हविरिति । यज्ञश्च वागुच्यते, तत्साध्यत्वात् । "वाचं यच्छति वाग्वै यज्ञः" इति ब्राह्मणम् ( ऐ० ब्रा० ५-४-५-४-५ ) तथाच ऋतुयाजप्रैषेषु दशमे प्रैषे-"यूनेम तद्धोत्रया

स्तृणन्ति अच्छादयन्ति "स्तृञ् आच्छादने" ( क्र्या० उ० ) नेतरेऽयज्वानः । अग्निप्रज्वालनं बर्हिस्तरणं च समानकर्तृकमेव तदपीन्द्रानुग्रहादेव भवति नान्यथेति मन्त्रार्थः । अत्र घ इत्यनर्थको निपातः पदपूरणः "ऋचि तुनुघ॰" ( पा० ६-३-१३३ ) ति दीर्घः ॥ १ ॥

एवमत्र बर्हिःसम्बन्धा–"दाशुषक्" "इति" एतत् "आनुपूर्व्यस्य नाम" इत्युपपद्यते ।

**तुर्वणिस्तूर्णवनिः ॥**

**"स तुर्वणिर्महाँ अरेणुपौंस्ये" ॥**

( ऋ० सं० १-४-२१-३ )

**इत्यपि निगमो भवति ॥**

अथ **तुर्वणिः** ( ५७ ) इत्यनवगतम् **तूर्णवनिः** इत्यर्थवचनम् । तूर्णं हि यः सम्भजते स तूर्णवनिः "वन सम्भक्तौ" (भ्वा० प० ) "इन्सर्वधातुभ्यः" ( उ० ४-११४ ) इतीन्प्रत्ययः । तूर्णशब्दस्य च तुर्भाव आर्षः । सायणस्तु "तुर्वी हिंसायाम्" ( भ्वा० प० ) इत्यस्मादौणादिकं निप्रत्ययमाह ॥ शत्रूणां हिंसिता क्षिप्रकारी वा ॥ अत्र निगमः **स तुर्वणिरिति** । अस्य "गिरेर्भृष्टिर्न भ्राजते तुजा शवः । येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥" इति शेषः । सव्यस्यार्षम्[1] ऐन्द्री जगती । वैषुवतेऽहनि निष्कैवल्ये शस्त्रे शस्यते । **स इन्द्रः तुर्वणिः** तूर्णवनिता ( यो हि तूर्णं सम्भजते शत्रुवधाय स्तोतारं ) क्षिप्रकारीत्यर्थः । **महान्** प्रवृद्धश्च प्रभावतो भवति । स एव च **आयसः** अयोमयकवचयुक्तदेहः **दुध्रः** दुष्टानां शत्रूणां धर्ता (अवस्थापयिता) "धृङ् अवस्थाने" ( दि० आ० ) इत्यस्मादन्तर्भावितण्यर्थात् "मूलविभुजादि॰" ( पा० ३-२-५ ) त्वात्कप्रत्ययो यणादेशश्च । रलोपश्छान्दसः । **मदे** सोमपानेन हर्षे सति । **येन** बलेन **शुष्णं** सर्वस्य शोषयितारम् **मायिनम्** मायाविनमसुरम् । **आभूषु** कारागृहेषु ( बन्धनालयेषु )[2] **दामनि** बन्धके निगडे **नितरां रामयत्**

१. सव्यनामा कश्चनर्षिः सहीन्द्र एव प्रादुर्बभूवेति याज्ञिकानां प्रसिद्धिः ॥

२. "कारा स्याद्बन्धनालये" इत्यमरः ॥ आभूशब्दः कारागृहवचनतया सायणेनैव व्याख्यातः । दुर्गस्तु–अरेणु पौंस्ये इत्येकं पदमुपादाय अन्तरिक्षे हि यद्बलं भवति तत्र न रेणवः सन्तीति तथाभूते पौंस्ये बले (निघं० २-१०-२४) अन्तरिक्षे सङ्ग्रामे ( निघं० २-१७-४० ) वा । "पुंसअभिवर्द्धने"(चु० प०) "अघ्न्यादित्वात्" (उ० ४-१०८ ) साधुः । तुजा–तुजेन वज्रेण ( निघं० २-२०-१३ ) आङ् आकारः । (पा० ७-१-३९) प्रगृहीतेन शवः शविष्ठो बलिष्ठः । ( आतिशायनिकस्येष्ठनो लुक् आर्षः ) गिरेः पर्वतस्य भृष्टिर्न शृङ्गमिवोच्छ्रितः भ्राजते दीप्यते । येन वज्रेण नित्यं शुष्णं शोषयितारं मायिनं–प्रज्ञावन्तम् ( निघं० ३-९-९ ) असुरम् इति शेषः । मेघमिति तदर्थः ( निघं० १-१०-२९ ) आयसः देवा-

न्यवासयत् तत् शवः बलम् "टुओश्वि गतिवृद्ध्योः" (भ्वा० प०) "श्वेः सम्प्रसारणं च" ( उ० ४-१८८ ) इत्यसुन् । श्वयतिवर्द्धतेऽनेनेति ( निघं० २-९-३ ) **पौंस्ये** पुंभिर्वीरैः कर्तव्ये सङ्ग्रामे **अरेणु** अनवद्यम् **तुजा** शत्रूणां हिंसकं सत् **भ्राजते** दीप्यते । अत्र दृष्टान्तः **गिरेः** पर्वतस्य **भृष्टिर्न** शृङ्गमिव । तद्यथोन्नतं सद्दीप्यते तद्वत् । यद्यपि भृष्टिशब्दः "भृष्टिः स्याद्भर्जने शून्यवाटिकायां च योषिति" इति मेदिनीकोशे भर्जनादावेवोक्तस्तथापि शून्यवाटिकाप्रदेशतयाऽद्रिशृङ्गमिह भृष्टिपदेनाभिहितं सायणदुर्गादिभिः ॥ ३ ॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "तूर्वणिः" "तूर्णवनिः" इत्युपपद्यते ॥

**गिर्वणा देवो भवति । गीर्भिरेनं वनयन्ति ॥**

**"जुष्टं गिर्वणसे बृहत्" ॥**

( ऋ० सं० ६-६-१२-७ )

**इत्यपि निगमो भवति ॥**

अथ **गिर्वणाः** ( ५८ ) इत्यनवगतम् "गीर्वणनीयः" इत्यवगमः । **देवो**ऽभिधेयः **गीर्भिरि**त्यर्थवचनम् । **गीर्भिः** स्तुतिभिः । **वनयन्ति** सम्भजन्ते ( स्वार्थे णिच् ) इति श्रीनिवासः । तथाच गीःशब्दोपपदा"द्वन सम्भक्ताविं"–(भ्वा० प०)–त्यस्माण्ण्यन्तादसुनि ( उ० ४-१८८ ) वनेर्घटादित्वेन मित्संज्ञकत्वाद्ध्रस्वत्वम् ( पा० ६-४-९२ ) गीर्वणा इति प्राप्ते दीर्घाभावश्छान्दसः । "पूर्वपदात्संज्ञायामगः" ( पा० ८-४-३ ) इति नस्य णत्वम् । **जुष्टम्** इत्यादिनिगमः । तथाच—

"आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।

घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत्" इति ॥

नृमेधसः प्रियमेधसो वा आर्षं बृहती ऐन्द्रे सूक्ते । हे इन्द्र ! त्वम् **आमासु** अपक्वासु अप्राप्तयौवनासु गोषु **पक्वं** परिणतं-पूर्णं पय **ऐरयः** प्रेरितवान्प्रवर्तितवानसि । अत्र "तस्मादामा सती पक्वं दुहे इति ह विज्ञायते । तदिदमामायां सत्यां गवि शृतंपय"इति दुर्गः । किञ्च **दिवि** द्युलोके **सूर्यम् आरोहयः**

न्प्रत्ययन (–गमन–)शीलस्य सोमस्य मदे–प्राप्ते सति दुध्रः दुर्धरः शत्रूणाम् आभूषुः उपर्युपरि आत्मनो भवितुमिच्छन् शमयन्निदामनि दान्नीव न्यरामयत्स्तु प्रावघ्नादित्यर्थं इति नैरुक्तपक्षेण क्लिष्टं व्याचख्यौ । "ढ्रलोपः" ( पा० ६-३-१११ ) इति दीर्घाभावेऽत्र क्लेशः ॥

अत्र रमेरमन्तत्वान्मित्त्वे "मितां ह्रस्वः" ( पा० ६-४-९२ ) इत्युपधाह्रस्वत्वं "संज्ञापूर्वको विधिरनित्यः" ( प० ९४ ) इति परिभाषणान्न भवति ॥ अडभावस्तु "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा० ६-४-७५ ) इति ॥

१. रेणुवदाच्छादकत्वादवद्यं रेणु तद्विपरीतमनवद्यमरेणु ॥

२. "तुज हिंसायाम्" ( भ्वा० प० ) इगुपधलक्षणः कः ( पा० ३-१-१३५ ) "सुपां सुलुगि" ( पा० ७-१-३९ )–त्यादिना सोराकारादेशः ॥

अवरोपितवानसि । अथ परोक्षकृतोऽर्द्धर्चः । तथाचेन्द्रमुक्त्वा स्तोतॄनाह—हे स्तोतारः ! यूयं **सुवृक्तिभिः** शोभनाभिः स्तुतिभिः **जुष्टं** प्रियं **बृहत्** तदाख्यं **घर्मं न** घर्मं प्रस्वेदहेतुकं तापमिव सुततं सुष्टु-सुगुणमिति दुर्गः । **सामन्** साम "सुपां सुलुगि"( पा० ७–१–३९ )ति द्वितीयाया लुक् । **गिर्वणसे** स्तुतिसम्भक्तेऽस्मा इन्द्राय । तमुद्दिश्य **तपत** स्थानकरणानुप्रदानवदुच्चारयतेत्यर्थः । सायणस्तु=तपत–इन्द्रं तीक्ष्णीकुरुत प्रवर्द्धयत स्तुतिभिः । अत्र दृष्टान्तः घर्मं न, यथा घर्मं दीपनशीलं प्रवर्ग्यं सामन–सामभिः "सुपां सुलुग्०" ( पा० ७–१–३९ ) इति तृतीयाया लुक् । तपन्ति तद्वत् । ततो गिर्वणसे गीर्भिर्वननीयायेन्द्राय जुष्टं प्रीतिकरं पर्याप्तं वा बृहत्साम गायत= इत्येवं व्याख्यत् । अत्र "तपता" इति दीर्घ आर्षः ( पा० ६–३–१३७ ) ॥ ७ ॥

एवमत्र शब्दसामर्थ्यादर्थोपपत्तेश्च "गिर्वणाः=देव" इत्युपपद्यते ॥ ५ ॥ ( १४ )

अथ **"असूर्तेसूर्ते"** (५९) इत्येते अनवगते । "असुसमीरिताः" "सुसमीरिते" इत्यवगतस्तत्र निगममेव तावद्दर्शयति—

**"असूर्ते सूर्ते रजसि निषत्ते ये भूतानि सम-कृण्वन्निमानि ॥"** (ऋ० सं० ८–३–१७–४)

इति । अस्य "त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भू(मे)ना" इत्यादिः ॥ विश्वकर्मणो भौवनस्येयमार्षम् ।

विश्वकर्मदैवत्यं त्रैष्टुभम् । "वैश्वकर्मणीभ्यां जुहोती"त्युक्तमग्निप्रणयने, तत्र विनियोगः । **ये** माध्यमिका देवगणाः मेघा इतरे च मरुदादयः । **असूर्ते** असु–समीरिताः वातसमीरिताः सन्तः । "सुपांसुलुगि"( पा० ७–१–३९ )ति जसश्शेभावः । **सूर्ते** सुसमीरिते विस्तीर्णे **निषत्ते** निषण्णे निश्चलमवस्थिते **रजसि** अन्तरिक्षलोके "रजस्तु ज्योतिरुदकलोकास्रगिदनवाचकम्" इत्यभिधानं देवराज आह । "रजो रजतेर्गतिकर्मणः" इति माधवः । गम्यते ह्यसौ पुण्यकृद्भिः । रञ्जतेर्वा "भूरञ्जिभ्यां कित्" ( उ० ४–२११ ) इत्यसुन् । अनुरञ्जयति ह्येतत्सर्वं खेन खेन व्यापारेण प्राणिनः । तथाच निरुक्तम् "लोका रजांस्युच्यन्ते" इति ( ४–१९–३ ) **इमानि भूतानि** एतान्प्राणिनः **समकृण्वन्** समस्तानि कृतवन्त इति दुर्गः । सम्यग्धनादिनाऽपूजयन्निति सायणः । **ते समस्मै** सर्वस्मै भूतग्रामाय । समशब्दोऽत्र सर्वपर्याय इति दुर्गाशयः । **द्रविणम्** उदकम् **आयजन्त** आभिमुख्येन ददति । लडर्थे लङ् ( पा० ३–४–६ ) अस्मै विश्वकर्मणे द्रविणं पुरोडाशादिलक्षणं धनं **सं** सम्यक् **आयजन्त** सर्वतो यजन्त इति सायणः । अत्र दृष्टान्तः **ऋषयः पूर्वे जरितारो न भू-(म-)नेति** । जरितारः स्तोतारः जरतिरर्चतिकर्मा नैरुक्तो धातुः (निघं० ३–१४–७) ततस्तृन् ( पा० ३–२–१३५ ) तच्छीले कर्तरि । पूर्वे ऋषयो विश्वसृजः भू-(म–) ना न भूम्ना महता कर्मणा वार्षसहस्रिकेण सत्रेणेव । तैर्हि तेन सर्वो भूतग्रामः पूर्वं सृष्टोऽनुगृहीतश्च । एवं ते (मेघाः) रसेन ( उदकेन ) पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति । इत्येवं भाष्यकृदनुमतोऽर्थः ॥ ४ ॥

तथाच भाष्यम्—

**असुसमीरिताः सुसमीरिते वातसमीरिता माध्यमिका देवगणास्ते रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति ॥**

इति । अत्र—

**त आयजन्तेत्यतिक्रान्तं प्रतिवचनम् ॥**

**प्रतिवचनं** प्रतिनिर्देशः विधानमित्यनर्थान्तरम् । तदतिक्रान्तं पूर्वमुक्तम् तच्छब्देन पूर्ववचनमुद्देशनं च पश्चाद्यच्छब्देनेति व्युत्क्रमेण यत्तच्छब्दयोरुपादानं मन्त्रपाठक्रमेण द्रष्टव्यम् यथाक्रमे तु यच्छब्द एव पुरस्तादुपादेयः । पश्चाच्च तच्छब्द इति भावः । तथा चोक्तम्—

"यच्छयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तच्छब्द एवकारश्च स्याद्विधेयस्य लक्षणम्" इति ॥

---

१. स्थापितवानसि । तथा चाख्यायते–पूर्वं पणयोनामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंश्चित्पर्वते ताः स्थापितवन्तः । ततोऽङ्गिरस इन्द्रं स्तुत्वा गाः पुनरस्मभ्यमाहरेति तैरुक्त इन्द्रो गवां स्थानं तमसाऽऽवृतं दृष्ट्वा तत्र गोदर्शनाय द्युलोके सर्वप्रकाशकं सूर्यमारोहितवानिति ॥

२. एवं हि व्याख्याक्रमो मन्त्रेष्वसकृदभ्यूहितोऽधस्तात् ॥

३. जिघर्त्यङ्गमनेनेति विग्रहे निपातः (उ० १–१४९) "घृ क्षरणदीप्त्योः" (जु० प० ) यद्वा घरत्यङ्गमनेन "घृ सेके" (भ्वा० प० ) इति भानुजिदीक्षिताः । "घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि" इति मेदिनी ।

४. असुशब्दपूर्वस्य सुशब्दपूर्वस्य च "ईर गतौ" (अ० आ०) इत्यस्य निष्ठायां छान्दसत्वादिड्भाव ईकारस्य पूर्वसवर्णो दीर्घश्चोकारस्य । प्रथमाबहुवचनान्तमाद्यमिति भाष्यकृद्यास्क आह । अत्रार्थे असुः–प्राणः स च वायुः "योऽयं वायुः पवत एष प्राणः" इति श्रूयते । तेन समन्वादीरिता इत्येवमवगमः सप्तम्येकवचनमिति सायणादयस्तन्मते असूर्ते सरण( गमन )वर्जिते स्थावरे, सूर्ते सरणसहिते जंगमात्मके रजसि लोक इत्येवमर्थः । यद्वा ये स्थावरजङ्गमात्मके जगति वर्तमानानेतान्प्राणिनस्तेजसा समकृण्वन् ते पूर्वे ऋषयो द्रष्टारो रश्मयोऽस्मा आदित्यात्मकाय विश्वकर्मणे द्रविणं तेज आयजन्ते इति सायणः ॥

५. अत्र मकाररहितः पाठः सायणेन धृतः । तत्सहितश्च दुर्गेण ॥

१. यद्यप्ययं बलार्थेषु ( निघं० २–८–२६ ) धनार्थेषु च ( निघं० १–१०–२५ ) पठितस्तथापि द्रविणं स्पन्द्रासः शम्बरमित्येवं जलपर्यायसहपाठादुदकार्थताप्यस्य भाष्यकृता ( यास्केन ) दर्शिता ।

२. एतन्मते "जरितारो न भूने"त्यस्य स्तोतारो यथा भूना भूम्ना महता स्तोत्रेण यजन्ति तद्वत् ये महर्षयोऽसूर्ते सूर्ते स्थावरजङ्गमात्मके इत्येवं व्याख्या द्रष्टव्या ॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "असूर्ते सूर्ते" इत्येतयोः "असुसमीरिताः" "सुसमीरिते" इत्येते शब्दसमाधी उपपद्येते ॥

अथ अस्यक् (६०) इत्यनवगतम् । "अमाक्ता" इति वा "अभ्यक्ता" इति वा शब्दसमाधी । ऋष्टिः ( शस्त्रविशेषः ) अभिधेया तां हि सङ्ग्रामे शत्रवो मन्यन्ते मामेषा प्रत्यञ्चिता ( क्षिप्ता ) मामेषा प्रत्याञ्चितेति । तथाच मांशब्दे द्वितीयैकवचनान्ते उपपदेऽञ्चतेः क्विप् नकारलोपे मांशब्दस्य इदामो द्रष्टव्योऽकारोपजनेन च भाष्यम् । क्षिप्ता सती मां प्रतीव गतेत्यम्यक् । यद्वाऽभिपूर्वादञ्चतेः क्विनि अभ्यक्सती भकारस्य मकारापत्त्याऽम्यक् । शत्रून्प्रत्यभिगता । यद्वा अमाशब्दः सहार्थे निपातः । अमाक्सती अम्यक् सहभूतेत्यर्थः ॥

तदेतन्निगममुखेन दर्शयति—

"अम्यक्सा त इन्द्र ऋष्टिः" ॥

( ऋ० सं० २-४-८-३ )

## अमाक्तेति वाऽभ्यक्तेति वा ॥

अम्यगिति । अस्य "अस्मे सनेम्यभ्वं मरुतो जुनन्ति । अग्निश्चिद्धिष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि" इति शेषः । अगस्त्यस्यार्षं त्रिष्टुप् ऐन्द्री छन्दोमेषु द्वितीयेऽहनि मरुत्वतीये शस्त्रे शस्यते । हे इन्द्र ! ते तव सा प्रसिद्धा ऋष्टिः रेषणा शक्तिर्वज्राख्यायुधविशेषो वा यदा अम्यक् आभिमुख्येन मेघमञ्चिता भवति विदारणाय अथ तदा मरुतः वायवः तदाख्या देवविशेषा वा तेऽपि तदनुविवृत्तस्यैव अस्मे अस्मभ्यम् अस्मदर्थम् "सुपां सुलुगि—" ( पा० ७-१-३९ ) ति भ्यसश्शेभावः । सनेमि पुराणम् ( निघं० ३-२७-४ ) चिरकालं सङ्गृहीतम् अभ्वम् उदकं ( निघं० १-१२-८९ ) जुनन्ति वेगेन क्षिपन्ति (गमयन्ति) "जुन गतौ" ( तु० प० ) लट् । दुर्गस्तु सनेमि चिरन्तनमभ्वं बहूदकमिह पातयितव्यमिति स्वान्यायुधानि मेघविदारणाय जुनन्ति गमयन्तीत्येवं व्याचख्यौ ॥ किं च सर्वेषामेवायुधानां मध्ये भावत्कैव शक्तिः । अतसे अनुपक्षीणे काष्ठे शुशुक्वान् शु आशुगामी ( नि० ६-१ ) शुक्वान् देदीप्यमानः अग्निश्चिद् अग्निरिव । एतस्मिन्मेघ आस्ते । एनाम् आपोन आप इव द्वीपम् प्रयांसि वृष्ट्युदकानि ( निघं० १-१२-३७ ) दधति धारयन्ति यथा ता द्वैप्या आपो द्वीपं परिवार्यात्मानं धारयन्ति एवमेतानि मेघ्यानि प्रयांसि तां मज्जयितुमशक्नुवन्ति ( सन्ति ) द्वीपमिव परिवार्य धारयन्तीत्यर्थः । अत्र हिस्मेतिपादपूरणे वर्तते । "पूर्वपदात्" (पा० ८-३-१०३) इति षत्वम् ॥ ३ ॥

एवमत्राञ्चतेर्गत्यर्थस्य ( भ्वा० प० ) अम्यक् इत्येतद्वृष्टिसम्बन्धादित्युपपद्यते ॥

अथ यादृश्मिन् (६१) इत्यनवगतम् "यादृशे" इत्यवगमः । तदेतन्निगमयति—

"यादृश्मिन् धायि तमपस्यया विदत्" ॥

( ऋ० सं० ४-२-२४-३ )

## यादृशेऽधायि तमपस्यया विदत् ॥

यादृश्मिन् इति । अस्य "ज्यायांसमस्य यतुनस्य केतुना ऋषिस्वरं चरति यासु नाम ते" इत्यादिः । "यदंस्वयं बृहते सो अरं करत्" इत्यन्तः ॥ अवत्सारस्येयमार्षम् । जगती आग्नेयी सौरी वा । उपहव्ये तृतीयसवने वैश्वदेवे शस्यते । हे देव ! अयं यजमानः ज्यायांसम् अतिशयेन प्रवृद्धं महत्तरं यतुनस्य यतनशीलस्य ( गमनशीलस्य ) । यततिर्गतिकर्मा ( निघं० २-१४-४४ ) तत उनन् । अस्य भगवतः सूर्यस्य अग्नेर्वा कर्मणि षष्ठ्यौ । गन्तारमिमं केतुना प्रज्ञापकेन कर्मणा उदयादिलक्षणेन प्रज्ञया वा ( निघं० ३-९-२ ) विशिष्टम् । उपलक्षणेऽत्र तृतीया (पा० २-३-२१) । ऋषिस्वरम् ऋषिभिस्तुत्यम् । स्वरतिरर्चतिकर्मा ( निघं० ३-१४-४१ ) त्वां चरति गच्छति भजते । केन साधनेन ? यासु नाम ते यासु स्तुतिषु ते त्वदीयं नाम नमनं ( नमस्कृतिः ) नामकं रूपं वा वर्तते ताभिरित्यर्थः । य एवं चरति स यादृश्मिन् यादृशे कामे धायि धत्ते । च्चिण् कर्तरि दधातेः कर्तरि वर्तमाने लुङ्यपि ( पा० ३-४-६ ) च्लेश्चिणि युगड्डागमाभावश्छान्दसः । सामर्थ्यान्मनःकर्म गम्यते । तं तादृशं कामम् अपस्यया

---

१. वर्षन्तीत्यर्थः । वृष्ट्या सस्यादिसमृद्धौ सत्यामग्निश्चिद्धि स्म । हि स्मेति पूरणे ( चिदित्यप्यर्थे ) अग्निरपि अतसे सन्तते कर्मणि निहितभूते सति शुशुक्वान्दीप्यमानो वर्तते । पश्चात्प्रयांसि अन्नानि (निघं० २-७-४) चरुपुरोडाशादिहवींषि दधति धारयन्ति ददति वा यजमानाः । किमिव ? आपो न द्वीपम् द्विपार्श्वस्थोदकवान् पर्वतादिर्द्वीपस्तं यथा आपो धारयन्ति तद्वदिति सायणः ॥

२. आङ्पूर्वाद्भवतेः क इत्येष बाहुलकात् भवति । उपसर्गह्रस्वत्वं च "छन्दस्युभयथा" (पा० ६-४-८६ ) इति सुपि भूसुधियोर्विधीयमानो यणादेशो व्यत्ययेन कप्रत्ययेऽपि भवति । आसमन्ताद्भवति विद्यते इत्यभ्वम् ( बहूदकम् ) "अभ्वमाभवती"ति माधवः ॥

३. न्निच्छब्द उपमार्थ उक्तोऽधस्तात् ( नि० १-४ ) ॥

१. सायणस्तु—प्रयांसि सस्यान्यन्नानि ( निघं० २-७-४ ) दधति धारयन्ति वृष्ट्युदकानीति कर्तृपदमध्याहृत्य व्याख्यत् । एतत्सर्वं महानुभावस्येन्द्रस्य ऋष्टेः सामर्थ्यमितीन्द्रस्तुतिरेषा ॥

२. तानीति दुर्गस्तन्मते मरुतोऽपि स्वान्यायुधान्येव जुनन्ति इत्येवं व्याख्योक्तपूर्वा ॥

३. द्वीपं द्विपार्श्वस्थोदकवन्तं पर्वतमिति सायणार्थः ॥ यथापां पर्वताभिभव असामर्थ्यमेवमिन्द्रायुधाभिभवेऽपीति वर्तुलार्थः ॥

४. पृषोदरादित्वात्साधुः ॥

५. तमोनिर्हरणादिनेति सायणः ।

६. यथानिर्देशं प्रतिनिर्देष्टव्यत्वात्तादृशमित्यर्थो ज्ञातव्यः ॥

७. अप इति कर्मनाम ( निघं० २-१-१ ) ततः कण्ड्वादियक् (पा० ३-१-२७ ) तदन्तादकारप्रत्ययः स्त्रियाम् (पा० ३-३-१०२ ) टाप् ( पा० ४-१-४ ) ॥

क्रियया हविःस्तुत्यादिलक्षणया। तव प्रसादात् **विदत्** विन्दते। लडर्थे लुङि (पा० ३–४–६) च्लेरङ् (पा० ३–१–५५) अडभाव आर्षः। किं च यउ य एव **स्वयम्** अनन्यप्रेरितः सन् (स्वमनीषयैव) **वहते** त्वांप्रति आदरवान्प्रापयति स्तुतीः **स एव अरम्** अलं–पर्याप्तमात्मनोऽभिप्रेतमर्थं **करत्** करोति। नह्यन्येन कारितमत्यर्थं फलवद्भवतीत्यर्थः॥

"इतश्च लोपः परस्मैपदेषु" (पा० ३–४–९७) इतीकारलोपे विकरणव्यत्ययः (पा० ३–१–८५)॥ ३॥

एवमत्र शब्दसारूप्यात् "यादृश्मिन्" इत्यस्य "यादृशे" इत्येवं विपरिणाम उपपद्यते॥

अथ **जारयायि** (६२) इत्यनवगतम्। "अजायि" इत्यवगमस्तदेतन्निगममुखेनाह—

**"उ॒स्रः पि॒तेव॑ जा॒र॒या॒यि॑ य॒ज्ञैः"॥**

(ऋ० सं० ४–५–१४–४)

**उस्र इव गोपिता जायि यज्ञैः॥६॥(१५)**

**उस्र** इति। अस्य "सास्माकेभि॑रे॒तरी॑ न शू॒षैर॒ग्निष्ट॑वे॒ दम॒ आ जा॒तवे॑दाः। द्र्व॑न्नो व॒न्वन्क्रत्वा॒ नार्वो॒" इत्यादिः॥ भरद्वाजस्यार्षम्। आग्नेयी त्रिष्टुप्॥ प्रातरनुवाकाश्विनयोः शस्यते। सास्माकेभिरिति छान्दसः सवर्णदीर्घः॥ **जातवेदाः** जातधनो जातप्रज्ञो वा (भूस्थानदेवता) **सः अग्निः आस्माकेभिः** अस्मदीयैः **शूषैः** सुखकरैः स्तोत्रैः। शूषमिति सुखनाम (निघं० ३–६–१०) तत्कर्तृभिः। "तत्करोती" (पा० ३–१–२५ ग०) ति णिजन्तादच्॥ **दमे** अस्मदीये यज्ञगृहे। दम इति गृहनाम (निघं० ३–४–१२) **एतरी न** अतिथिरिव। **आ** आभिमुख्येन **स्तवे** स्तूयते। अत्र "व्यत्ययो बहुलम्" (पा० ३–१–८५) इति यकः स्थाने शब् व्यत्ययेन। "लोपस्त आत्मनेपदेष्वि–" (पा० ७–१–४१) ति तलोपे गुणः (पा० ७–३–८४) पररूपम् (पा० ६–१–९७) अपिच **द्रन्नः** द्रुमान्नः (वृक्षभक्षयिता) स **वन्वन्** वनानि सम्भजन् "वन् सम्भक्तौ" (भ्वा० प०) वनिप्। **क्रत्वा** आत्मीयेन कर्मणा (निघं० २–१–१०) "कृञः क्रतुः" (उ० १–७४) क्रियतेऽसौ द्विजातिभिः। "जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधायाः" (पा० ७–३–१०९ वा०) इति नाऽभावः। **अनार्वा** अनर्वा अनाश्रितः कश्चिदन्यम् **पिता** गोपिता (गवांपिता) **उस्रः** वृषः साण्ड इव **यज्ञैः** साधनभूतैः **जारयायि** अजायि जायते। लडर्थे लुङ् (पा० ३–४–६) स यथा पुत्रपौत्रादिभिरनेकधा प्रजायते एवमयमग्निर्यज्ञेषु विह्रियमाणोऽनेकधा जायते॥ अत्रोपजनो वर्णानां द्रष्टव्यः॥ ४॥

एवमत्र "जारयायि" इत्यस्य "अजायि" इत्यर्थप्रतीतिः॥ ६॥ (१५)

अथ **अग्रिया** (६३) इत्यनवगतमनेकधावगमयिष्यन्निगममेव तावदुपन्यस्यति—

**"प्रवोऽच्छा॑ जुजुषा॒णासो॑ अस्थु॒रभू॑त॒ विश्वे॑ अ॒ग्रियो॒त वा॑जाः॥"** (ऋ० सं० ३–७–३–३)

**प्रव** इति। अस्य "अ॒यं वो॑ य॒ज्ञ ऋ॑भवोऽकारि॒ यमा॑ मनु॒ष्वत्प्र॒दिवो॑ दधि॒ध्वे।" इति पूर्वार्धर्चम्। वामदेवस्यार्षम्। आर्भवे त्रिष्टुप्। व्यूढस्य दशरात्रस्य पञ्चमेऽहनि तृतीये सवने वैश्वदेवे शस्यते॥ हे **ऋभवः** मेधाविनः! (निघं० ३–१५–९) द्युस्थानदेवताः। **वः** युष्मदर्थम् मया यजमानेनानेन वा **अयं यज्ञः अकारि** कृतः। यं यज्ञं **मनुष्वत्** मनुष्यवत्। यशब्दलोप आर्षः। **प्रदिवः** प्रकर्षेण द्योतमानाः सन्तः यूयम् **आदधिध्वे** धारयध्वे (धारयत जठरे) तदर्थं **वः** युष्मान् **अच्छा** आभिमुख्येन **जुजुषाणासः** जोषयमाणाः देवैः सेव्यमानाः सोमाः **प्रास्थुः** प्रतिष्ठन्ते। लडर्थे लुङ (पा० ३–४–६) **उत** अपिच हे **वाजाः**! ऋभवः! **विश्वे** सर्वे यूयम् **अग्रियाः** अग्रगामिनः अग्रसम्पादिनो वा अग्रमेव वा **अभूत** अभवत भवत। लोडर्थे लङ् (पा० ३–४–६) अत्रासन्धिसन्धी आर्षे॥ ३॥

अथास्यावगममुपशिक्षयन्मन्त्रार्थमुखेनाह—

**प्रास्थुर्वो जोषयमाणा अभवत सर्वेऽग्रगमनेनेति वाऽग्रगरणेनेति वा ग्रसम्पादिन इति वा, अपिवाग्रमित्येतदनर्थकमुपबन्धमाददीत॥**

**अग्रगमनेने**त्यादि अग्रियत्वाभिधित्सया। अग्रशब्दाद्धि "अग्राद्यत्" "घच्छौ च" (४–४–११७) इति घो "भवे छन्दसी"–

१. वेद इति धननाम–"विद्लृ लाभे" (तु० उ०) असुन्। विद ज्ञाने वा (निघं० २–१०–४)॥

२. स्तोतृभिरिति सायणः कर्तृपदमध्याजहार।

३. अत्र सायणः–एतरि गन्तरि याचमाने पुरुषे विद्यमानानि स्तोत्राणि यथात्यन्तं सुखकराणि तथा शूषैः सुखकरैः स्तोत्रैरित्येवं व्याचख्यौ॥

४. द्रुर्द्रुमः स एवान्नं भक्षितव्यमस्येति द्रन्नः।

१. एतच्च भाष्यकृतां निर्वचनम्। अन्ये त्वाहुः उस्रविशेषणमेतत्। नपुंसकत्वं व्यत्ययेन ततश्चेदं नाख्यातम्। तथात्वे निघातप्रसङ्गश्च। तथाच जारश्चासौयायीति जारयायि, गवांयौवनस्यजरयितृत्वाज्जारत्वम्। अभिगमनाच्च यायित्वम्। अपरेतु–जनेरपत्याभिगतमाख्यातमेतदिति गम्यते ततश्च जारयायि=अजायतेत्यवगम इत्युक्त्वा मन्त्रव्याख्याने निघातप्रसङ्गस्य भिन्नवाक्यत्वेन वाक्यादित्वादुदात्तप्रतिपादनेन परिहृतत्वात्। अजायतेत्येव स्कन्दस्वामिनोऽप्यवगम इत्याहुः॥

२. अत्र–हे वाजाः अन्नानि! (निघं० २–७–२) यान्येतानि हवींषि तानि प्रास्थुः प्रस्थितानि यूयमप्यग्रगमनेनाग्रहारणेन वा अग्रियाः सन्तः जुजुषाणासः जोषयमाणा देवैः सेव्यमान अभूत भवतेति भाष्यानुसार्यर्थं केचनाहुः॥

(पा० ४-४-११०) ति भवार्थे विहितः। यद्वा अग्रशब्दोपपदाद्यातेः "गेहे कः" (पा० ३-१-१४४) इति को बाहुलकात्। आकारस्येकारः। तृतीयैकवचनस्याकारः। यद्वा अग्रमर्हन्तीत्यग्रियाः "छन्दसि चे-" (पा० ५-१-६७)त्यर्हार्थे यत्। इकार उपजनः। "तदर्हती"-(५-१-६३)-ति वा घन्बाहुलकात् "पात्रात्" (पा० ५-१-६८) विहितोऽप्यादपि भवति। घस्येयादेशो विभक्तेराकारः। अग्राहाः। गरणं भक्षणम् "गॄ निगरणे" (तु० प०) ल्युट्। अग्रसम्पादिनः अग्रलसम्पादिनः। भावप्रधानो निर्देशः। अथवा अग्रा एव अग्रियाः। अनर्थक एवाग्रशब्दे "या"कार उपबन्ध उपात्त इकारश्चोपजनोऽन्त्याकारस्थान इत्याह-**अपि** वेत्यादि॥ अपीत्यर्थेऽत्रासकृदुपात्तमधस्तात्॥

अथ **चनः** (६४) **पचता** (६५) इत्येते अनवगते। तत्राद्यमन्नमाम, पचतेः कर्मणि ल्युटि (पा० ३-३-११३) पच्यत इति पचनः। पकारलोपे सकारोपजने च चन इति सान्तं क्लीबम्। पचतेति "भृमृदृशियजिपर्विपच्यमी-" (उ० ३-११०)त्यादिना कर्मण्यतच् "भूतेऽपि दृश्यन्ते" (पा० ३-३-२) इति भूतेऽत्र द्रष्टव्यः। विभक्तेराकारः॥ पक्वमित्यर्थस्तदेतदुदाहरति—

**"अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम्॥"** (ऋ० सं० ८-६-२१-३)

**अद्धीति**॥ अस्य "प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः" इत्युत्तरार्धर्चम्॥ इयममिथुतस्य वा अग्नियूपस्य वार्षम्, त्रिष्टुप्। ऐन्द्री॥ हे **इन्द्र! इमा** इमानि। शेर्डा (पा० ७-१-३९) शेर्लोपो वा (पा० ६-१-७०) **हवींषि प्रस्थिता** प्रस्थितानि। तदेतद् **चनः** अन्नं हविर्लक्षणम् एकवचनमार्षम्। अन्नानि एतानि भक्षणीयानि। यतः **पचता** पचतानि पक्वानि। तस्मात् **दधिष्व** प्रक्षिप जठरे। **उत** अपिच **सोमम्** चेमसुपकल्पितमात्मनः (भवतः) अर्थे दधिष्व। **प्रयस्वन्तः** अन्नवन्तो वयम्। प्रय इत्यन्ननाम (निघं० २-७-४) ततोऽऽस्त्यर्थे मतुपो मस्य वः (पा० ८-२-९) हवींषि कामयमानं **त्वा** त्वां **प्रति हर्यामसि** हर्यामः कामयामहे। "हर्य गतिकान्त्योः" (भ्वा० प०) लट्। "इदन्तो मसि" (पा० ७-१-४६) इति मस इगागमः। किं? "सत्याः ०० कामाः" इति॥ यजमानस्य यागं कुर्वाणस्य "पूङ्-यजोः शानन्" (पा० ३-२-१२८) इति यजेस्ताच्छील्य-विशिष्टे कर्तरि शानन्। कामाः धनादिविषया अभिलाषाः सत्याः यथार्थाः सन्तु भवन्तु इत्यर्थः॥ ३॥

अत्र "हवींषि" इत्यनेन सम्बन्धात्पचता इत्येदन्नविषयं बहुवचनान्तं चन इति च॥ तदेतद्भाष्यकृदाह—

**अद्धीन्द्र! प्रस्थितानीमानि हवींषि चनो दधिष्व, चन इत्यन्ननाम, पचतिर्नामीभूतः॥**

अत्र **पचतिः** पचधातुर्नामीभूतः उक्तदिशा प्रातिपदिकत्वमापन्नः।

अथास्यैवार्थविशेषदर्शनायोदाहरणान्तरमाह—

**"तं मेदस्तः प्रति पचताग्रभीष्टामि"—** (ऋ० सं०......)

**त्यपि निगमो भवति॥**

**तमिति**। **मेदस्तः** मेदसा प्रदेशेन (यतस्तस्य मेदोवपासहयोगि ततस्तेन प्रदेशेन) **पचता** पक्वं **तं** पशुम् **प्रत्यग्रभीष्टाम्** प्रत्यग्रहीष्टाम् इन्द्राग्नी इत्येतत् कर्तृपदमस्य॥ "हृग्रहोर्भश्छन्दसी-" (पा० ३-१-८४ वा०)-ति ग्रहेर्हस्य भः॥

एवमेतदेकवचनं भवति—

**अपि वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्यात्। यत्र ह्येकवचनार्थः प्रसिद्धं तद्भवति॥**

**"पुरोळा अग्ने पचतः"** (ऋ० सं० ३-१-३१-२)

**इति यथा॥**

**अपि वा** अथवा **मेदसश्च** वपासहयोगिनः **पशोः** पश्वदानस्य च अभिधायकमेतत्सात्त्वं सत्त्वविषयं **द्विवचनं स्यात्**। सन्ति ह्येवंरूपाणि द्विवचनान्यपि तद्यथा "दैव्या होतारा भिषजा" इति॥ अथात्र कारणमुच्यते—**यत्र हीति। प्रसिद्धं** निःसन्दिग्धमेव॥ **तद्भवति पुरो० यथा**॥ अस्य "तुभ्यं वा घा परिष्कृतः। तं जुषस्व यविष्ठ्य" इति शेषः॥ विश्वामित्रस्यार्षम् गायत्री आग्नेयी। आश्विनस्य द्विकपालस्यातिरात्रे यदि स्विष्टकृद्भवति, तस्येयं पुरोनुवाक्या भवति। **यविष्ठ्य!** युवतम! हे **अग्ने! पुरोळाः** पुरोडाशः **पचतः** कपालयोः पक्वोऽस्ति। स च **तुभ्यं** त्वदर्थं **परिष्कृतो** वाघ पर्यग्निकरणादिभिरलङ्कृतः खेलु। वाघेत्यनर्थकौ घा इति संहितायां दीर्घः (पा० ६-३-१३३) **तम्** इमं पुरोडाशं **जुषस्व** सेवस्व। "जुषी प्रीतिसेवनयोः" (तु० आ०) लोट् प्रार्थनायाम्॥२॥

एवमत्र "परिष्कृतः" इत्येतस्मादेकवचनसम्बन्धात्पचत इत्येकवचनमेव सिध्यति॥

---

१. द्विवचनमेतत्स्यादित्यत्र॥

२. अथवा मिश्रयितृतमेति दुर्गः। अत्र स्वार्थे "पादार्घाभ्यां च" (पा० ५-४-२५) ति यदे। अत्र चकारबलेन वस्त्रादीनां स्वार्थ उपसंख्यानाद्॥

३. पुरोऽग्ने दाशन्ते ददलध्वर्यव एनमित्यर्थे कर्मणि ण्विनो-(पा० ३-२-७१)ऽपवादो डश् (वा०) "अवयाःश्वेतवाःपुरोडाश्च"-(पा० ८-२-६७) ति निपातनादस्य डः। डस्य लकारो बह्वृचां सांप्रदायिकः॥

४. "संपरिभ्यां करोतौ भूषणे" (पा० ६-१-१३७) इति करोतेः सुडागमः "परिनिविभ्यः" (पा० ८-३-७०) इति सस्य षत्वम्॥

अथ शुरुधः ( ६६ ) इत्यनवगतमवगमयति—

**शुरुध आपो भवन्ति, शुचं संरुन्धन्ति ॥**

अत्र आपो भवन्ति इत्यभिधेयवचनम्, शुचं संरुन्धन्ति इति निर्वचनम् । शुग्रुध इति न्याय्यम् शुचं दीप्तिं तापं वा रुधन्ति इति क्विप् ( पा० ३-२-७५ ) गलोपः पृषोदरादित्वात् ( पा० ६-३-१०९ ) अत्रार्थे—

"ऋतस्य हि शुरुधः सन्ति पूर्वीः—"
( ऋ० सं० ३-९-११-३ )

**रित्यपि निगमो भवति ॥**

दैवते ( काण्डे- )ऽस्य शेषः ( नि० १०-४-४+४१ )

अथ अमिनः ( ६७ ) इत्यनवगतमवगमयति—

**अमिनोऽमितमात्रो महान् भवति, अभ्यमितो वा ॥**

अत्र अमितमात्र इत्यवगमः । न यस्य मात्राणां मानमस्ति सोऽमिन इत्युच्यते । तथाच—"माङ् माने" ( अ० प० ) निष्ठाक्तः "द्यतिस्यतिमास्थामित्ति किति" ( पा० ७-४-४० ) इतीत्वम् । मितः परिच्छिन्नः । न मितोऽमितः सन्नमिनः । अपरिमाण इत्यर्थः । अथवा अभ्यमितः अनभिहिंसितो यः केनचिदसावमिनः । तथाच मिनोतेर्वधकर्मणः ( निघं० २-१९-१३३ ) "इणुसिञ्जिदीङुष्यविभ्यो नक्" ( उ० ३-२ ) इति नक् बाहुलकात् । ततो नञ्समासः ॥

अत्रार्थे—

"अमिनः सहोभिः" ( ऋ० सं० ४-६-७-४ )

**इत्यपि निगमो भवति ॥**

अस्य "महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्" इति स्वरूपम् । भरद्वाजस्यार्षम् त्रिष्टुप् ऐन्द्री । दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते । माहेन्द्रश्च ग्रहोऽनयैव गृह्यते । **महान्** प्रभावतः **इन्द्रः नृवत्** यथा नेता राजा भृत्यादीनां कामानां पूरयिता तद्वत् **चर्षणिप्राः** चर्षणीनां स्तोतृजनानां ( निघं० २-३-८ ) कामानां पूरकः "प्रा पूरणे" ( अ० प० ) क्विप् । सन् । **आ** आगच्छतु । उपसर्गबलादध्याहारो योग्यक्रियायाः । "उपसर्गाः क्रियायोगे" ( पा० १-४-५९ ) इत्यनुशासनात् ॥ **उत** अपि च **द्विबर्हाः** द्वयोः स्थानयोर्मध्यमोत्तमयोः ( द्वयोर्लोकयोः ) परिवृढः । **सहोभिः** बलैः ( निघं० २-९-१७ ) **अमिनः** अमितमात्रः । नहीन्द्रस्य बलमात्राः केनचिन्मितपूर्वा इत्यर्थः । अथवाऽनभिहिंसितः केनचित् **अस्मद्र्यक्** अस्मदभिमुखं यथा भवति तथा **वीर्याय** वीरकर्मणे **उरुः** महान् प्रमाणतः **पृथुः** विस्तीर्णश्च **वावृधे** वर्द्धते । लडर्थे लिट् ( पा० ३-४-६ ) दीर्घ आर्षः । सः **कर्तृभिः** ऋत्विग्भिर्यजमानैर्वा । **सुकृतः** स्तुतिभिरभिमुखीकृतः **भूत्** भूयात् । यालोप आर्षः ॥ ४ ॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "अमिन"शब्देन अमितमात्रः ॥ "अनभिहिंसितो वा" इत्युच्यत इत्युपपद्यते ॥

अथ जज्झतीः ( ६८ ) इत्यनवगतमवगमयति—

**जज्झतीरापो भवन्ति, शब्दकारिण्यः ॥**

शब्दानुकरणाद् आप इति प्रतीयन्ते । जसि वा पूर्वसवर्णः ( पा० ६-१-१०६ ) शत्रन्तादत्र ङीप् ॥ अत्रार्थे—

"मरुतो जज्झतीरि"—
( ऋ० सं० ४-३-९-६ )

**त्यपि निगमो भवति ॥**

अस्य "आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत । अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ।" इति स्वरूपम् ॥ यावाश्वस्यार्षम् । मारुती पङ्क्तिः । **नरः** वृष्टेर्नेतारः

१. तेन तत्रैवैतद्व्याख्यानं द्रष्टव्यम् ॥

२. अपरिगणितकालो वेति देवराजयज्वानः ॥ अत्र तस्य नः पृषोदरादित्वात् ॥

३. अत्र नृशब्दो नृविशेषाभिधित्सया प्रयुक्तः । अस्ति हि सामान्यवचनस्यापि विशेषपरत्वम् । यथा मत्वर्थप्रकृतेः । यथोक्तं "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति । उदाहृतश्चोपरिष्टात् ॥ ( नितम्बिनीत्यादि ) ॥

४. "क्रुपेरादेश्च चः" ( उ० २-९७ ) इत्यनिप्रत्यये क्रुपेरेतद्रूपम् । आकर्षन्ति वचसा वशीकुर्वन्तीत्यर्थे इति भट्टभास्करमिश्राः प्राहुः ।

१. एतदप्यर्थवशादध्याहृतं वेदितव्यम् ।

२. मध्यमे च स्थाने वैद्युतात्मना, उत्तमे च सूर्यात्मनेति दुर्गः ।

३. प्रभुः "प्रभौ परिवृढः" ( पा० ७-२-२१ ) इत्यनुशासनात् । स हि वीर्येण सर्वानतिशेते । न ह्यन्तरिक्षे वीर्येणापरिवृढः शक्नोति वर्षितुम् । नापि दिवि आदित्याद्रसान्परिग्रहीतुम् ॥

४. अत्रासच्छन्द उपपदेऽञ्चतेर्भावे क्विन् । तेनेदं क्रियाविशेषणं भवति । तथा च "विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" ( पा० ६-३-९२ ) इति चास्सर्वनाम्नष्टेरद्र्यादेशः । दुर्गस्तु असदनुग्रहायास्मद्दर्शनायेति व्याचख्यौ ।

५. वर्षार्थमिति दुर्गः । वीरकर्मकरणायेति सायणः ।

६. शरीरेण विस्तीर्ण इति सायणः ।

७. गुणैः प्रथित इति सायणः ।

८. सुष्ठु परिचितोऽभूत् भवतीति सायणः । दुर्गस्तु सोऽस्माकं प्रत्यभिमुखो दानायाभिप्रेतानामामर्थानां सुकृतःस्तुतिभिरेतैः कर्तृभिर्ऋत्विग्भिर्भूत् भूयादित्यर्थमाह ॥

९. अत्र जज्झेत्यनुकरणशब्दादाचारक्विब-( पा० ३-१-११ वा० )-न्ताल्लटः शता बोध्यः ॥

१०. "मरुत्" इति ऋक्षुपाठो भाष्यकारेण तु प्रदिव् इति पठितं, तत्र कतरद्युक्तमिति सन्दिग्धम् ॥

**ऋष्वाः** महान्तः (निघं० ३-३-३) **मरुतः** वायवः । **रुक्मैः** हिरण्यैः ( निघं० १-२-३ ) "विकृतानि" (निर्मितानि) इति शेषः । **आयुधा** आयुधान्येतानि "शेश्छन्दसि बहुलम्" (पा० ६-१-७०) इति शेर्लोपः । **ऋष्टीः** शक्तीश्च **असृक्षत** असृजन्त । शातयितव्यान् शत्रून् ( मेघान् ) प्रति । किञ्च **एनान्** प्रहारान् **अनुलक्षणीकृत्य** **विद्युतः** । **भानुः** आदित्य इव **अत्मना** स्वरूपेण **दिवः** द्युलोकात् **अर्त** निरगुः । अथ **जज्झतीः** जज्झत्यशब्दकारिण्य आपोऽपि **अह** निरगमन् ॥ "अह व्याप्तौ" ( स्वा० प० ) व्याप्तिरिह समन्तात् परिस्रवः । प्रत्ययादिलोप आर्षः ॥ ६ ॥

एवमत्र शब्दानुकरणात् "आपः जज्झतीः" इत्युपपद्यते ॥

अथ **अप्रतिष्कुतः** (६९) इत्यनवगतमवगमयति—

## अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रस्खलितो वा ॥

**अप्रतिष्कुतः** अप्रतिशब्दितः ( प्रतिशब्दैरहितः ) "कुङ् शब्दे" ( भ्वा० आ० ) कर्मणि क्तः । पारस्करादेः ( पा० ३-१-१५७ ) आकृतिगणत्वात्सुडागमः । "सुषामादे–" ( पा० ८-३-९८ ) राकृतिगणत्वात्षत्वम् । नञ्समासः । **अप्रतिष्कृत** इत्यर्थे करोतिः क्रियासामान्यवचन इति पूर्वैणैकार्थता । अन्यत्साधनं यथापूर्वम् । यद्वा अन्येनाप्रतिगतः । युद्धेऽन्येनाप्रतिहतपूर्व इत्यर्थः । अथ **वा अप्रतिस्खलितः** अप्रतिस्खलितपूर्वः । अत्र पक्षे स्खलितशब्दस्य स्कुतभावः । षत्वं सुषामादित्वात् ( पा० २-३-९८ ) अत्रार्थे—

**असभ्यमप्रतिष्कुतः** ॥

( ऋ० सं० १-१-१४-१ )

## इत्यपि निगमो भवति ॥

अस्य "स नो वृषन्नमुं चरुं सत्राादावन्नपावृधि" इत्यादिः । मधुच्छन्दस आर्षम् । गायत्री ऐन्द्री । पृष्ठ्याभिप्लवयोः प्रातःसवनिके आवापे विनियुक्ता । ब्राह्मणाच्छंसिनः शस्त्रे शस्यते । हे **सत्रादावन्** सततदान ! "आतो मनिन्" ( पा० ३-२-७४ ) इति वनिप् । सत्रेति सदार्थे । यद्वा सत्रेति सहार्थे अव्ययम् । "साकं सत्रा समं सह" इत्यमरः । अस्मदभीष्टानां सर्वेषां फलानां सहैव प्रदातः । अत एव हे **वृषन्** वर्षितः ! व्रीह्यादिनिष्पत्त्यर्थं वृष्टिप्रदेन्द्र ! **नः** अस्मदर्थम् **अमुं** दृश्यमानं **चरुम्** अन्तरिक्षचरणशीलं मेघं ( निघं० १-१०-१२ ) चरतेर्गत्यर्थात् ( भ्वा० प० ) "भृमृशी–" ( उ० १-७ )त्यादिना उप्रत्ययः । **अपावृधि** अपावृणु । उत्पाटय–( विदारय–)ऽस्मभ्यमुदकदानार्थमित्यर्थः । यतस्त्वम् । **अप्रतिष्कुतः** । अप्रतिकृतः । न हीन्द्रः परान्प्रति पराङ्मुखः कृतपूर्वः केनचित् । यद्वा नोऽस्मदर्थमप्रतिष्कुतः प्रतिशब्दरहितः । ( यद्यस्माभिर्याच्यते ) तत्रतत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयसि अतोऽस्मद्विषये कदाचिदप्यप्रतिस्खलित इत्यर्थ इति सायणः ॥ १ ॥

एवमत्रार्थसङ्गत्या निगम उपपन्न उक्तपूर्वः ॥

## "शाशदानः शाशद्यमानः" ॥

अथ **शाशदानः** ( ७० ) इत्यनवगतम् **शाशद्यमानः** इत्यवगमः । "शद्लृ शातने" ( भ्वा० प० ) अस्माद्यङ्लुगन्ताद्व्यत्ययेन कर्मणि लटः शानच् । पुनःपुनरसुरांस्तत्पुराणि वा शातयन् ( दारयन् ) । अत्रार्थे—

**"प्र स्वां मतिमतिरच्छाशदानः"**

( ऋ० सं० १-३-३-३ )

## इत्यपि निगमो भवति ॥

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे नैगमका० षष्ठाध्यायस्य तृतीयः पादः ॥ ६ ॥ ३ ॥**

अस्य "अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत् । सं वज्रेणासृजद् वृत्रमिन्द्रः" इत्यादिः । आङ्गिरसस्य हिरण्यस्तूपस्यार्षम् । त्रिष्टुबैन्द्री । गोसववीवधयोर्निष्कैवल्ये शस्यते । **अस्य** इन्द्रस्य स्वभूतः **सिध्मः** साधयिता शत्रूणां, साधनभूतः ( साधकः ) वा । "षिधु संराद्धौ" ( दि०

---

१. सायणस्तु रोचमानैराभरणविशेषै रोचन्त इति शेषः । उपसर्गश्रुतेः संगतक्रियाध्याहारः । तथाऽऽयुधा प्रहरणसाधनेनायुधेनारोचन्ते । एते मरुतः ऋष्टीरायुधविशेषानसृक्षत प्रक्षिपन्ति मेघभेदार्थमेनान्मरुतो विद्युतोऽपि जज्झतीः शब्दकारिण्य आप इवान्वहानुगच्छन्त्येव । दिवा द्योतमानस्य मरुद्गणस्य भानुर्दीप्तिः । त्मना आत्मना स्वयमेवार्त निरगादिति व्याचख्यौ । अत्रार्थे "मन्त्रेष्वाङ्यादेरात्मनः" ( पा० ६-४-१४१ ) इत्याकारलोपो द्रष्टव्यः ॥

२. अत्रा"नुर्लक्षणे" ( पा० १-४-८४ ) इति कर्मप्रवचनीयानुयोगे एनानिति द्वितीया ( पा० २-३-८ ) बोध्या ॥

३. अत्र वर्णव्यत्ययेनाकारस्य मन्त्रादौ पाठः । यद्वा "मन्त्रेष्वाङ्यादेरात्मनः" (पा० ६-४-१४१) इत्यात्मन आकारस्य लोपः । मन्त्रादिभूतस्त्वुपसर्गः "व्यवहिताश्च" ( पा० १-४-८२ ) इति आर्तेतिक्रियापदात्त्रिष्कृष्य प्रयुक्तस्तत्र हि "अर्तिश्रुदृशिभ्यश्च" ( पा० १-३-६० वा० ) इत्यात्मनेपदं गत्यर्थात् ऋधातोर्लुङि । च्लेरङि ( पा० ३-१-५६ ) "ऋदृशोऽङि गुणः" ( पा० ७-४-१६ ) इतिगुणे "व्यत्ययो बहुलम्" ( पा० ३-१-८५ ) इति अङो व्यत्ययेन लुक् ॥

४. एतत्तत्त्वं मन्त्रार्थे सायणीयव्याख्यायां स्फुटं द्रष्टव्यम् ।

१. शातनजन्यं विशरणमिह धात्वर्थः । विशरणं विदारणमित्यनर्थान्तरम् ॥

२. सायणमतेन कर्तरि । स हि यङन्तादेव शानचं विधाय "छन्दस्युभयथे–" ( पा० ३-४-११७ ) त्यार्धधातुकत्वादतोलोपयलोपौ मन्यते । तन्मते हिंसन्नित्यर्थो वक्ष्यते ।

प० ) मक् कित्त्वाद्गुणः । तथाभूतः वज्रः **शत्रून्** इन्द्रवैरिणः **अभि** लक्ष्य **अजिगात्** गतवान् । जिगातिर्गतिकर्मा । ( निघं० ३-१४-११३ ) लुङ् । स चेन्द्रः **तिग्मेन** तीक्ष्णेन **वृषभेण** श्रेष्ठेन वर्षप्रवर्तकेन वाऽऽयुधेन तेन वज्रेण **पुरः** वृत्रस्यासुरस्य मेघस्य वा पुराणि **वि-असेत्** विविधं भिन्नवान् । श्नसि प्राप्ते व्यत्ययेन शपो लुक् (पा० २-४-७३) लघूपधगुणे "हल्ङ्याभ्य" (पा० ६-१-६८) इति तिलोपः । ततः स इन्द्रः **वज्रेण** स्वीयेनायुधेन **वृत्रं** तमेवासुरं मेघं वा **समसृजत्** संयोजितवान् अभिनत् । स च तेन **शाशदानः** शाशयमानः पुनःपुनः शात्यमानः (भिद्यमानः) **स्वां** स्वीयां **मतिं** न दातव्यमेषां स्वस्थानमुदकं वेति बुद्धिं **प्रातिरत्** प्राजहात् । सायणस्तु-संयोज्य च ( वज्रं ) शाशदानो वृत्रं हिंसन्स्वां मतिं स्वकीयां हर्षेणोपेतां बुद्धिं प्रतिरत्प्रकर्षेण वर्धितवान् इत्येवं व्याख्यत् ॥३॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्चोपपन्नो निगमः ॥ ❀ ॥

इति श्रीमद्यास्कमुनिप्रणीतनिरु० विवृतौ नैगमकां० षष्ठस्य तृतीयः पादः ॥ ६ ॥ ३ ॥

---

## षष्ठाध्याये चतुर्थः पादः ।

अथ सृप्रः ( ७१ ) इत्यनवगतम् "सर्प" इत्यवगमस्तदेतदाह—

### सृप्रः सर्पणादिदमपीतरत्सृप्रमेतस्मादेव, सर्पिर्वा तैलं वा,

अत्र **सर्पणात्** इति निर्वचनम् । "सृपी गतौ" ( भ्वा० प० ) अस्मात् "स्फायितञ्चि–" ( उ० २-१२ ) त्यादिना रक्प्रत्ययः । कित्त्वाद्गुणाभावः । **एतस्मादेव** स्यात् यदेतत् **सर्पिर्वा तैलं वा,** एतदपि हि सर्पति ॥ अत्रार्थे—

**"सृप्रकरस्नमूतये" ॥** ( ऋ० सं० ६-३-२-५ )

### इत्यपि निगमो भवति ॥

अस्य "बृबदुक्थं हवामहे" इत्यादिः । "साधुं कृण्वन्तमवसे" इत्यन्तः । व्याख्यातः ( नि० ६-१-५ ) अत्र "सृप्रकरस्नमि"त्यस्य सृप्रबाहुं ( अदीर्घबाहुम् ) इत्यर्थस्तदेतदाह—

### करस्नौ बाहू कर्मणां प्रस्नातारौ ॥

इति । **प्रस्नातारौ** निर्वर्तयितारावित्यर्थः ॥

### सुशिप्रमेतेन व्याख्यातम् ॥

एतेनैव सृप्रशब्देन सुशिप्रम् ( ७२ ) व्याख्यातम् रपतेरेतदपीति । बाहुलकात्सृशब्दस्य शिभावः । अर्थे विशेषं वक्ष्यत्यनुपदम् ॥ निगमं तावद्दर्शयति—

**"वाजे सुशिप्रगोमती" ॥**

( ऋ० सं० ६-२-२-३ )

### त्यपि निगमो भवति ॥

अस्य "विद्मा सखित्वमुत शूरभोज्य१ मातेता वज्रिन्नीमहे । उतो समस्मिन्नाशिशीहि नो वसो" इत्यादिः । व्याख्यातः ( नि० ५-२३ ) अत्र शिप्रशब्दार्थमाह—

### शिप्रे हनू नासिके वा ॥

ते यस्य शस्ते स सुहनुः सुनासो वा सुशिप्रः ॥

नास्मिन्मन्त्रे नासिकयोर्हन्वोर्वा शिप्रशब्दवाच्यत्वे विशेषलिङ्गमस्तीत्यत उभयमुपात्तम् । विशिष्टतल्लिङ्गमन्यदुदाहरणमनुपदं वक्ष्यति–हनु–नासिके पर्यायप्रसक्ते तावन्निर्ब्रवीति—

### हनुर्हन्तेः नासिका नसतेः ॥

**हन्तेः** ( अ० प० ) उप्रत्यये **हनुः** । **नसतेः** कौटिल्यार्थस्य नसधातोः ( भ्वा० आ० ) ण्वुल्युपधावृद्धिः ( पा० ७-२-११६ ) । यद्वा णप्रत्यये नासा सैव नासिका । स्वार्थे कन्नन्ताट्टाप् । "केऽण–"( पा० ७-४-१३ ) इति ह्रस्वत्वे इत्वम् ( पा० ७-३-४४ ) नैरुक्तदिशा तु "नसतिराप्नोतिकर्मा वा-नमतिकर्मा वे"ति वक्ष्यति ( नि० ७-१७-१ ) ॥

अथोक्तमुदाहरणमाह—

**"विष्यस्व शिप्रे विसृजस्व धेने" ॥**

( ऋ० सं० १-७-१३-४ )

### इत्यपि निगमो भवति ॥ धेना दधातेः ॥

**विष्यस्वेति** । अस्य "मादयस्व हरिभिर्येत इन्द्र" इत्यादिः । "आ त्वा सुशिप्र हरयो वहन्तूशन् हव्यानि प्रति नो जुषस्व" इत्यन्तः । कुत्सस्येयमार्षम् । ऐन्द्री जगती । दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते । हे **इन्द्र ! हरिभिः** अश्वैः सह **मादयस्व** तृप्तो भव । **ये ते** तव स्वभूताः तदर्थं च **शिप्रे** सृप्रे दीर्घे हनू ( संतते ) सोमपानाय हविर्भक्षणाय वा, नासिके वा गन्धाघ्राणाय । अथ च **धेने** आधस्त्ये द्रंष्ट्रे जिह्वोपजिह्विके वा । तयोर्ह्यन्नं धीयते । तथाच भाष्यं-**धेना दधातेरि**ति । इत्थं च **धेने** इति लटः शानचि व्यत्ययेनैत्वाभ्यासलोपयोः सतोर्भवति । दधाने इति हि तदवगमः । **विष्यस्व** विवृते कुरु । विमुञ्चस्वेति दुर्गः । "षोऽन्तकर्मणि" (अ० प०) व्यत्ययेनात्मनेपदम् । दिवादित्वात् श्यनि "ओतः श्यनि" ( पा० ७-३-८१ ) इत्योकारलोपे "उपसर्गात्सुनोती–"( पा० ८-३-६५ ) त्यादिना सस्य षत्वम् । हे **सुशिप्र** शोभनशिप्र !

---

१. एतन्मते प्रपूर्वस्तिरतिर्वर्धनार्थः । यद्वा तरतेर्व्यत्ययेन शः । "ऋत इद्धातोः" ( पा० ७-१-१०० ) इतीत्वम् । तिरस्तीर्णं भवतीति ( ३-४-३ ) निरुक्तम् ।

२. अत्र नपुंसकनिर्देशो लिङ्गसामान्यविवक्षया बोध्यः । निघण्टौ तु "सुशिप्रः" इत्येव पठ्यते ।

१. तृत्यर्थश्च ।

( सुहनो ! सुनास ! इति वा ) । इन्द्र ! **हरयः** तेऽश्वाः ( हृष्टाः सन्तः ) **त्वा** त्वाम् **आ-वहन्तु** अस्मान्प्रति, अस्मदीयं यज्ञं प्रापयन्त्वित्यर्थः । त्वं च **उशन्** कामयमानोऽस्मान् **नः** अस्माकमेतानि प्रत्तानि **हव्यानि** हवींषि **प्रति-जुषस्व** प्रत्येकं सेवस्व । मा उदासिष्ठा इति सायणः । अस्माभिः स्तुतिभिरासेवितः प्रतिसंसेवस्व नः कामैरिति दुर्ग आह ॥ ४ ॥

एवमत्र मादनसंबन्धाद्धविःसंप्रदानसंबन्धाच्च "शिप्रे हनू नासिके वा" इत्युपपद्यते ॥

अथ **रंसु ( ७३ )** इत्यनवगतं "रमणीयेषु" इत्यवगमस्तदाह—

## रंसु रमणात् ॥

## "स चित्रेण चिकिते रंसु भासे" ॥

( ऋ० सं० २-५-२४-५ )

## इत्यपि निगमो भवति ॥

इति । अत्र **रमणात्** इति निर्वचनम् । तथाच रमतेर्विच्सप्तमीबहुवचनम् । रमणीयशब्दस्य वा रंभावः । निगमस्यास्य "आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम्" इत्यादिः "जुजुर्वां यो मुहुरा युवा भूत्" इत्यन्तः । सोमाहुतेर्भार्गवस्यार्षम् । त्रिष्टुबाग्नेयी, प्रातरनुवाकाश्विनयोः शस्यते । **यत्** यस्य **अभ्वं** महत्त्वम् । भावप्रधाननिर्देशोऽयम् । "अभ्वं" शब्दो हि महन्नामसु पठितः ( घंनि० ३-३-९ ) अभ्वमाभवतीति माधवः । आङ्पूर्वाद्भवतेः को बाहुलकादुपसर्गह्रस्वत्वं च । सुपि विधीयमानो यण् ( पा० ६-४-८३ ) व्यत्ययेन केऽपि भवति । **मे** मम संबन्धिनः **वनदः** वननीयस्य हविषोदातारः । अत्र "सुपी"-( ३-२-४ ) ति योगविभागात्के आतो लोपे ( पा० ६-४-६४ ) जसः सुः ( पा० ७-१-३९ ) । ऋत्विजः ( स्तोतारः ) । यद्वाऽवशब्दो भृशार्थस्तत्पूर्वान्नदतेः क्विप् भागुरिमते अलोपः । भृशं शब्दयन्त इत्यर्थः । **आ-पनन्त** समन्तात्स्तुवन्ति, सोऽग्निः **उशिग्भ्यः** मेधाविभ्यः । ( निघं० ३-१६-१९ ) अस्मदीयं प्रार्थितं कामयमानेभ्यो वा तेभ्य ऋत्विग्भ्यः । "वश कान्तौ" ( अ० प० ) "वशेः किच्च" ( उ० २-६८ ) इतीजिप्रत्ययः । "ग्रहिज्ये-" ( पा० ६-१-१६ )ति संप्रसारणम् । **वर्णम्** वरणं वरं ( प्रार्थनां ) **न अमिमीत** न हिनस्ति किं तर्हि ? यथाप्रार्थितमेव समर्थयति । किंच **सोऽग्निः चित्रेण** चायनीयेन **भासा** युक्तः **रंसु** रमणीयेषु स्थानेषु द्युलोकादिषु अग्निहोत्रेषु वा **चिकेत** विज्ञायते । यः अग्निः **जुजुर्वान्** पुनःपुनः जरावानपि भूत्वा इन्धनक्षयात् **मुहुः** पुनःपुनः **आ युवा** सर्वतो मिश्रयिता तरुणो वा **भूत्** भवति । इच्छब्लोपावार्षौ ॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्च **रंसु** इत्यस्य **रमणीयेषु** इति विपरिणाम उपपद्यते ॥

अथ **द्विबर्हाः ( ७४ )** इत्यनवगतम् । "द्विपरिवृढः" इत्यवगमस्तदाह—

## द्विबर्हाः द्वयोः स्थानयोः परिवृढो मध्यमे च स्थाने उत्तमे च ॥

**मध्यमे** वैद्युतात्मना **उत्तमे** च सूर्यात्मना **परिवृढः** प्रभुः । द्विशब्दे सप्तम्यन्त उपपदे "बृहु वृद्धौ" ( भ्वा० प० ) इत्यस्मादसुन् । अत्रार्थे—

## "उत द्विबर्हा अमिनः सहोभिः" ॥

( ऋ० सं० ४-६-७-१ )

## इत्यपि निगमो भवति ॥

**महाँ इन्द्र** इत्यादिकोऽयमनुपदं व्याख्यातपूर्वः ( नि० ६-३-७ )

## अक्र आक्रमणात् ॥

**अक्रः** (७५) इत्यनवगतम् । "आक्रमणः" इति न्याय्यम् । **आक्रमणात्** इति निर्वचनम् । प्राकारोऽभिधेयः । आङ्पूर्वात्क्रमेः "अन्येभ्योऽपि दृश्यते" ( पा० ३-२-१०१ ) इति डः । आङो ह्रस्वत्वम् । असौ ह्याक्रम्यते परैराक्रमिता वा परेषाम् ।

अत्रार्थे—

## "अक्रो न बभ्रिः समिथे महीनाम्"

( ऋ० सं० २-८-१५-२ )

## इत्यपि निगमो भवति ॥

**अक्रो न** इति । अस्य "दिदृक्षेयः सूनवे भा ऋजीकः । उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥" इति शेषः । विश्वामित्रस्यार्षं त्रिष्टुबाग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । **जनिता** सर्वस्य लोकस्य जनयिता ( अन्तर्गर्भितण्यर्थः । ) **अपाम्** उदकानाम् **गर्भः** गर्भरूपः "अब्भ्योऽग्निः" इति स्मरणात् । **नृतमः** नेतृतमः । अतिशयेन मनुष्याणां रक्षिता । **यह्वः** महान् ( निघं० ३-३-१३ ) यजतेर्वन् ( उ० १-११२ ) जस्य ह्रश्च निपात्यते । यः **अग्निः अक्रोन** प्राकार इव **समिथे** सङ्ग्रामे ( निघं० २-१७-२६ ) संपूर्वादेतेः "समीणः" ( उ० २-१० ) इति थक् । **महीनाम्** महतीनां शत्रुसेनानाम् । **बभ्रिः** भर्ता धारयिता ( स्तम्भयिता ) भाक्त-

---

१. सायणस्तु—उशिग्भ्योऽस्मदीयं रूपं कामयमानेभ्य ऋत्विग्भ्यो वर्णं वर्णं स्वसदृशं रूपं नामिमीत । नशब्दश्चार्थे । निर्मिमीते च रंसु रमणीयेष्वाज्यादिहविःषु निमित्तेषु त्वित्रेण भासा कनकादिनावर्णया दीप्त्या त्विकिते विज्ञायत इत्येवं व्याख्यत् ॥

१. "अब्भ्योऽग्निर्विंप्रतः क्षत्रमश्मनो लोहमुच्यते । तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥" इति श्रीमद्भा० ।

जीकः प्रसिद्धभाः ( नि० ६-१-५ ) प्रसिद्धदीप्तिः । नित्योज्ज्वलित इत्यर्थः । **दिदृक्षेयः** दर्शनीयः सर्वैः । **सूनवे** सोमाभिषवकर्त्रे हविषां प्रदात्रे वा यजमानाय । **उस्रियाः** अपः । **उज्जजान** उदजनयत् ॥ २ ॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्च अक्रः प्राकार इत्युपपद्यते ॥

## उराण उरुकुर्वाणः ॥

**उराणः** ( ७६ ) इत्यनवगतम् । **उरुकुर्वाण** इत्यवगमः । अत्र वाक्यार्थे उराण इति पदवचनम् वर्णपञ्चकलोप आर्षः । अत्रार्थे—

"दूत ईयसे प्रदिव उराणः" ॥

( ऋ० सं० ३-५-७-३ )

### इत्यपि निगमो भवति ॥

**दूतेति** । अस्य "वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान्" इत्यादिः । विदुष्टरो दिव आरोधनानि" इत्यन्तः । वामदेवस्यार्षम् । त्रिष्टुबाग्नेयी प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन्नग्ने ! **वेः** कमनीयस्य यजमानस्याभीष्टफलजनकस्य । **अध्वरस्य** यज्ञस्य संबन्धीनि **दूत्यानि** दूतकर्माणि । यत् ( पा० ४-४-१२० ) **विद्वान्** जानन् । **उभे रोदसी** उभयो रोदस्योः द्यावापृथिव्योः षष्ठ्यर्थेऽत्र प्रथमा । "द्यावापृथिव्यौ रोदसी" इत्यमरः । **अन्तः** । मध्येऽवस्थितमन्तरिक्षं **संचिकित्वान्** सम्यग्जानन् **प्रदिवः** पुराणः ( निघं० ३-२७-२ ) **उराणः** अल्पमपि हविः उरु ( बहु ) कुर्वाणः । **विदुष्टरः** विद्वत्तरः । मनुष्यहोतुः सकाशात् **दिवः** स्वर्गस्य **आरोधनानि** आरोहणानि । आरोहणार्हाणि स्थानानि देवानां हवींष्यर्पयितुम् **ईयसे** गच्छसि ॥ ३ ॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च उराणः इत्यस्य उरुकुर्वाण इत्येष विपरिणाम उपपद्यते ॥ १ ॥

## स्तिया आपो भवन्ति स्त्यायनात् ॥

**स्तियाः** ( ७७ ) इत्यनवगतम् । "स्त्यायनाः" इति न्याय्यम् । **आपो भवन्ती**त्यभिधेयवचनम् **स्त्यानात्** संहननात् "स्त्यै ष्ट्यै शब्दसंघातयोः" ( भ्वा० प० ) "अन्येभ्योऽपि दृश्यन्ते" ( पा० ३-२-७५ ) इति विच् । दृशिग्रहणाज्निरुपपदादपि । तस्य प्रयोगानुसरणार्थत्वात् । "आदेच उपदेशेऽशिति-" ( पा० ६-१-४५ ) त्वात्वे मध्ये इकारोपजनः पृषोदरादित्वात् ( पा० ६-३-१०९ ) हिमभावेन संहता आप उच्यन्ते । अत्रार्थे—

"वृषा सिन्धूनां वृषभः स्तियानाम्" ॥

( ऋ० सं० ४-७-२०-१ )

### इत्यपि निगमो भवति ॥

**वृषेति** । अस्य "वृषासि दिवो वृषभः पृथिव्याः" इत्यादिः । "वृष्णे त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय" इत्यन्तः । शंयोर्बार्हस्पत्यस्येयमार्षमैन्द्री त्रिष्टुप् । हे इन्द्र ! त्वं **दिवः** द्युलोकस्य **वृषा** हविर्भिः सेक्ता **असि** भवसि । **पृथिव्याः** भूमेश्च **वृषभः** कामानां वर्षिता, अथ च **सिन्धूनां** स्यन्दनशीलानां नदीनां **वृषा** वर्षेण पूरयितासि । तथा **स्तियानाम्** संघीभूतानामात्मनैव हिमप्रभावेण । अथवा संहत्रीणामपां **वृषभः** वर्षितासि सेक्तासि । **हे वृषभ !** कामाभिवर्षकेन्द्र ! तस्मै एवंगुणविशिष्टाय **वराय** श्रेष्ठाय **वृष्णे** वर्षित्रे सेक्त्रे **ते** तुभ्यम् ( त्वदर्थम् ) **स्वादुः** मधुरः **रसः** रसनीयः ( स्वादनीयः ) प्रशस्यो रसवान्वा रसात्मको वा **मधुपेयः** मधुवत्पातव्यः एष **इन्दुः** सोमः **पीपाय** पुनःपुनराप्यायते ( वर्धते ) अतस्त्वमागत्य तं सोमं पिबेति भावः ॥१॥

एवमत्र स्तियाशब्देन संहताः संहत्र्योवाऽऽप उच्यते शब्दसारूप्यात् ॥

## स्तिपाः स्तियापालनः उपस्थितान्पालयतीति वा ॥

**स्तिपाः** ( ७८ ) इत्यनवगतम् **स्तियापालन** इत्यवगमः । कूपोऽभिधेयः । स हि **उपस्थितान्** पातॄन् **पालयति** स्वोदकेन । अत्रार्थे—

"स नस्तिपा उत भवा तनूपा" ॥

( ऋ० सं० ८-२-१९-४ )

### इत्यपि निगमो भवति ॥

अस्य "यं त्वा पूर्वमीळितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व" इत्यादिः । "दात्रं रक्षस्व यदिदं ते अस्मे" इत्यन्तः । वाध्र्यश्वस्य सुमित्रस्येयमार्षम् । त्रिष्टुबाग्नेयी । हे अग्ने ! **ईळितः** व्यत्ययेन कर्तरि क्तः । स्तोता **वाध्र्यश्वो** मम पिता **पूर्वं** पूर्व-

---

१ आप एव हि पार्थिवानामवयवानां संहनने हेतुभूता भवन्ति । हिमप्रभावेण च ता आत्मनैव संहता भवन्तीति दुर्गः ।

१. संघीभूतानां स्थावरजंगमात्मकानां प्राणिनामिति सायणः । एतन्मते स्तियाशब्दः संघीभूतार्थसामान्यार्थकः । आपो वाऽन्यद्वा यत्किंचित् ।

२. यत्किंचित्सेचनकर्म तत्सर्वं त्वदधीनमित्यभिप्रायः ।

३. प्यायतेर्वृद्ध्यर्थात् ( भ्वा० आ० ) यङ्लुकि "लिङ्यङोश्च" ( पा० ६-१-२९ ) इति प्यायः पीभावः । अन्यत्कार्यं छान्दसमूह्यम् ॥

४. सायणस्तु–पस्त्यपाः स्तिपाः । पस्त्यं गृहम् । "निशान्तपस्त्यसदनं भवनागारमन्दिरम्" इत्यमरः । पृषोदरादिः । यद्वा उपस्थितान् ज्योतिष्टोमादीन्यागान्पालयतीति ( उपस्थितपाः सन् ) स्तिपाः । अस्मदीयानां यज्ञानां पालयिता भव । उत अपिच तनूपाः स्वाङ्गानां रक्षको भव । किंच दात्रं तद्धनम् रक्षस्व, यदिदं धनं ते तव स्वभूतेषु अस्मे अस्मासु तिष्ठतीति व्याचख्यौ ॥

५. यद्वा सर्वैर्महर्षिभिरभिष्टुतो विदितवेदितव्योऽधिगतयाथातथ्यः ॥

सिन्काले संजातं **यं त्वा** त्वां **समीधे** सम्यगदीपयद्धविर्भिः। **स त्वम्** इध्यमानः। इदानीं मया क्रियमाणम् **इदम्** स्तोत्रं हविर्वा **जुषस्व** सेवस्व, प्रीत्या शृधि वा। "जुषी प्रीतिसेवनयोः" (तु० आ०) लोट्। किंच य एवमस्माभिरिध्यसे त्वम् स **नः** अस्माकम् **स्तिपा उत** कूप इव। स हि स्तिपाः (संघीभूताय अपः) पातीति स्तियापाः सन् स्तिपा इत्युच्यते उतेतीवार्थे। निपातानां नानार्थत्वाऽभिधानात् (नि० १-३-११) **तनूपाः** रक्षको भव। संहितायां "अन्येषामपि दृश्यते" (पा० ६-३-१३७) इति दीर्घः। कूपो हि तृष्णयार्तान् पातॄन् पात्युदकसंप्रदानेन। किंच **दात्रं** प्रदेयं धनं हविर्वा **रक्षस्व**। कतमत्? **यदिदं ते अस्मे** अस्मासु स्वभूतेषु "तिष्ठती"ति शेषः॥ ४॥

एवमत्राविरोधाच्छब्दसारूप्याच्च स्तिपाः कूपः इत्युपपद्यते॥

## जवारु जवमानरोहि-जरमाणरोहि-गरमाण-रोहीति वा॥

**जवारु** (७६) इत्यनवगतम्। "जवमानरोहि" इत्येवमाद्याः शब्दसमाधयः। आदित्यमभिधेयम्। तद्धि **जवमान**मेव नभसो मध्यं **आरोह**ति उदेति तत्रेत्यर्थः। अथवा **जरमाणं** जीर्णांकुर्वत्सर्वलोकमा**रोह**ति दिवम्। अथवा **गरमाणं** निगिलद्रसाना**रोह**ति दिवम्। अत्र जवमानादिशब्दानां जवभाव आङ्पूर्वाद्रुहेश्च ड्वुप्रत्ययो बाहुलकान्निपात्यते। मण्डलं विशेष्यमिति नप्सकत्वम्। अत्रार्थे—

### "अग्ने॑ रू॒प आरु॑पितं ज॒वारु॑"॥

(ऋ० सं० ३-५-२-२)

### इत्यपि निगमो भवति॥

अस्य "तुमि॑त्स्वे॒ऽवर्स॒माना स॒मानम॒भि क्रत्वा॑ पुन॒ती धी॒तिर॑श्याः। स॒सस्य॒ चर्म॒न्नधि॒ चारु॒ पृश्ने॑:" इत्यादिः। वामदेवस्यार्षम् त्रैष्टुभम् वैश्वानराग्निदैवत्यम्। अत्रादित्यात्मना वैश्वानरः स्तूयते। अग्नि-विद्यु-दादित्यानां मतभेदेन वैश्वानरत्वस्य यास्केनाभिधानात् (नि० ७-२३) हे यजमान! त्वम् **तमित्** तमेव **समानं** सर्वेषामेकरूपम् द्युस्थानमादित्यं **समाना** समानयैव तदनुरूपयैव **धीतिः** धीत्या स्तुत्या **पुनती** स्वात्मपवनसमर्थेन **क्रत्वा** कर्मणा (निघं० ३-१-१०) प्रज्ञानेन वा (निघं० ३-९-५) **न्वेव** क्षिप्रमेव **अभ्यश्याः** प्राप्नुयाः। अश्नोते (स्वा० आ०) लिङि "बहुलं छन्दसी-"(पा० २-४-७६) ति विकरणस्य लुक्। व्यत्ययेन परस्मैपदम् (पा० ३-१-८५) अन्यच्च वर्णव्यत्ययादि॥

१. "जु" इति सौत्रो धातुर्गतौ वेगे च। तथा च वेगेन गच्छत् इति तदर्थः। आत्मनेपदप्रयोग आर्षः॥

२. यथा समानयेत्यस्य समाना, पुनतेत्यस्य पुनतीत्येवमादि। धीत्येत्यस्य धीतिरित्यादि तु "सुपां सुलुग्-" (पा० ७-१-३९) त्यस्य विषयः॥

तुशब्दः क्षिप्रार्थे (निघं० २-१५-१) यस्य **चारु** दीप्तिमत् **जवारु** मण्डलम् **अग्रे** पूर्वसर्गादौ। पुरस्तात्पूर्वस्यां दिशीति सायणः। **रूपः** रिपः (वर्णव्यत्यय आर्षः) पृथिव्याः सकाशात् (निघं० १-१-१३) सायणस्तु—आरोपयति स्वात्मनि सस्यादीनीति रुविति भूमिरुच्यत इत्याह। **ससस्य** स्वपनस्य "सस स्वप्ने" (अ० प०) लुप्तोपममेतदिति सायणः। निश्चलस्य **पृश्नेः** "स्वः पृश्नि" रिति द्युलोकादित्ययोः साधारणनामसु पाठात् ज्योतिरादित्यादिभिः स्पृश्यमानस्य द्युलोकस्य **अधि** उपरि **चर्मन्** चर्मणे चरणाय। चरेरौणादिको मन्। "सुपां सुलुक्०" (पा० ७-१-३९) इति चतुर्थ्या लुक्। **आरुपितम्** आरोपितं देवैः। "इह वा आदित्य आसीत् तमाभ्यां परिगृह्योपरिष्टात्तासां प्रजानां न्यदधु"रिति विज्ञायते॥ ३॥

एवमत्र जवारुशब्देनादित्यमण्डलमुच्यत इत्युपपद्यते॥

## जरूथं गरूथं गृणातेः॥

### "ज॒रूथं॑ हन्य॒क्षि रा॒ये पुर॑न्धिम्"॥

(ऋ० सं० ५-२-१२-६)

### इत्यपि निगमो भवति॥

**जरूथम्** (८०) इत्यनवगतम्। **गरूथम्** इत्यवगमः। **गृणातेः** इति धातुनिर्देशः। "गॄ शब्दे" क्र्यादिः अर्चतिकर्मसु पठितः (निघं० ३-१४-६) स्तुतिकर्माप्ययम्। जरतेर्वार्चतिकर्मण इति देवराजः। "जॄवृञ्भ्यामूथन्" (उ० २-६) इति ऊथन्बाहुलकाद्गृणातेरप्यर्थसामान्यात्। स्तोत्रमभिधेयम्। अत्रार्थे **जरूथं** हन्निति निगमः। अस्य "त्वाम॑ग्ने स॒मिधा॒नो वसि॑ष्ठो॒ ज॒रूथं॑ हन्य॒क्षि रा॒ये पुर॑न्धिम्। पु॒रु॒णी॒था जा॑तवेदो ज॒रस्व॑ यू॒यं पा॑त स्व॒स्तिभि॒: सदा॑ नः॥" इति स्वरूपम्। वसिष्ठस्यार्षम्। आग्नेयी त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! **अग्ने! वसिष्ठः** पूर्वयुगीयः **पुरन्धिम्** बहुधियम् बहुकर्मतमं धीरिति कर्मनामसु पठितम् (नि० २-१-३१) बहुदावृतमं वा धनसंबन्धात्। **त्वां समिधानः** संदीपयन् **राये** धनप्राप्त्यर्थं **जरूथं** गरूथं स्तोत्रं **हन्** घ्नन् गमयंस्त्वां प्रति। "हन्ति सेधति" इति गतिकर्मसु पठितम् (निघं० २-१४-१०९) पाणिनीयैरपि "हन् हिंसागत्योः" (अ० प०) इति पठ्यते। **यक्षि** अयजत्। यस्त्वं वसिष्ठेनैवमिज्यसे तं त्वां वयमपि यजाम इति भावः। हे **पुरुणीथा** पुरुणीथ! सांहितिको दीर्घः (पा० ६-३-१३७) बहुस्तुत! **जातवेदः!** भूस्थानदैवताग्ने! अस्माभिरिज्यमानस्त्वं **आ** सर्वतोभावेन **जरस्व** जुषस्वैतद्धविरस्मत्प्रत्तम्। किंच **हे देवाः** अग्निपुरोगमाः! **यूयं स्वस्तिभिः** स्वस्त्ययनैराशीःप्रयोगैः **सदा** नित्यम् **नः** अस्मान् **पात** रक्षत॥ ६॥

१. एतच्च संबन्धिपदं तच्छब्दबलेनाध्याहृतम्॥

२. एकस्यैव वा पूजार्थे बहुवचनम्। सायणस्तु—हे अग्ने! त्वां वसिष्ठ ऋषिः समिधानो भवति। त्वं च जरूथं परुषभाषिणं जरणीयं

एवमत्र जरतेः स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च गृणातेरपि जरूथं स्तोत्रं इत्युपपद्यते । द्विलम् ॥ २ ॥

**कुलिश इति वज्रनाम, कूलशातनो भवति ॥ "स्कधांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः" ॥ ( ऋ० सं० १-२-३६-५ )**

**कुलिशः (८१)** इत्यनवगतम् । **वज्रनाम** इत्यभिधेयवचनम् । **कूलशातन** इति शब्दसमाधिः । तथाच कूलशब्दोपपदादन्तर्भावितण्यर्थात् "शद्लृ शातने" ( भ्वा०+तु० प० ) इत्यस्मात् "अन्येष्वपि दृश्यते" ( पा० ३-२-१०१ ) इति डः । पृषोदरादित्वादिकारान्तादेश आदिह्रस्वश्च कूलस्य । "कुलपर्वतान् श्यति पक्षच्छेदेन तनूकरोति" इति स्कन्दस्वामिनः । तन्मते श्यतेस्तनूकरणार्थात् ( दि० प० ) "आतोऽनुपसर्गे कः" (पा०३-२-३) इतिकः पूर्ववदिकारान्तादेशः । अत्र पुंस्त्वेनाभिधानमार्षम् । लोकेतु "कुलिशं भिदुरं पविः" इत्यमराभिधानम् । अत्रार्थे निगमं पठति—**स्कन्धांसीवेति** । अस्य-"अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन" इत्यादिः । हिरण्यस्तूपस्यार्षं त्रिष्टुबैन्द्री । अग्निष्टोमे निष्केवल्ये शस्यते । अयम् **इन्द्रः वज्रेण** संपादितो यो महान्वधस्तेन **महता वधेन** । "हनश्च वधः" ( पा० ३-३-७६ ) इति हन्तेर्भावेऽप्प्रत्ययः । **वृत्रतरम्** अतिशयेन लोकानामावरकं मेघम्, अन्धकारं वा । यद्वा वृत्रैरावरणैः सर्वान् शत्रून् तरति तं **वृत्रं** वृत्रनामकमसुरम् **व्यंसं** विगतांसं छिन्नबाहुर्यथा भवति तथा विच्छिन्नसन्धिबन्धनं वा कृत्वा । **अहन्** हतवान् ( हन्ति वेति दुर्गः ) । अंसच्छेदे दृष्टान्तः—**कुलिशेन** कूलशातनेन वज्रेण । कुठारेणेति सायणः सांहितिकोऽत्र दीर्घः । **विवृक्णा** विवृक्णानि । "शेश्छन्दसि बहुलं" ( पा० ६-१-७० ) इति शेर्लोपः । विशेषतश्छिन्नानि **स्कन्धांसीव** वृक्षशाखा इव ( यथा वृक्षस्कन्धाश्छिन्ना भवन्ति तद्वत् ) सान्तनपुंस्त्वमार्षम् । तथासति **अहिः** अगमनो मेघः । वृत्रासुरेणाच्छिद्यमानोऽस्याः **पृथिव्याः उपपृक्** उपपर्चनः संपर्कस्य कर्ता ( सामीप्येन संपृक्तः ) भूत्वा उदकभावेनास्यामेव पृथिव्यां **शयते** अगमयत् । "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुगभावः । लङर्थे लट् । व्यत्ययेन ( पा० ३-१-८५ ) अवस्थानमेवात्र पक्षे स्वप्नोऽभिमतः । असुरपक्षे-शयनं करोति । छिन्नकाष्ठवद्भूमौ पततीत्यर्थः ॥ ५ ॥

एवमत्र वधसंबन्धात् कुलिशः वज्रः इत्युपपद्यते ॥

अथ स्कन्धशब्दं निर्वक्ति—

**स्कन्धो वृक्षस्य, समास्कन्नो भवति ॥ अयमपीतरः स्कन्ध एतस्मादेव, आस्कन्नं काये, अहिः-शयत उपपर्चनः पृथिव्याः ॥**

**समास्कन्नः** । समाश्लिष्टः ( दृढसंपृक्तो वृक्षे ) **भवति** । **इतरः** भुजशिरोंसः । **एतस्मात्** समास्कन्दनात् । तथाच "स्कन्दिर् गतिशोषणयोः" ( भ्वा० प० ) कर्मणि घञ् ( पा० ३-३-१९ ) पृषोदरादित्वाद्दस्य धः । "स्कन्धः स्याच्चृपतावंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च भ्रात्रादौ छन्दसोभिदि" इति मेदिनी । **उपपर्चनः** । ल्युः ( पा० ३-१-१३४ ) कर्तरि "पृची संपर्के" ( रु० प० ) क्विपि पृक् ॥

**तुञ्जस्तुञ्जतेर्दानकर्मणः ॥ २ ॥ ( १७ )**

**तुञ्जः ( ८२ )** इत्यनवगतम् । **तुञ्जतेः** इति निर्वचनम् । तुञ्जनमिति प्राप्तम् । तत्र भावे घञ् ( पा० ३-३-१८ ) अयं चुरादौ "तुजिपिजि हिंसाबलादाननिकेतनेषु" स्वेवं पठितोपीह भाष्यकारवचनाद्दानार्थः । धातूनामनेकार्थत्वात् । तथार्थे च निगममनुपदं वक्ष्यति ॥ २ ॥ ( १७ )

**"तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम्" ॥ २ ॥ ( ऋ० सं० १-१-१४ )**

मधुच्छन्दस आर्षम् । गायत्री ऐन्द्री । अस्यार्थमाह—

**दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणोनास्य तैर्विन्दामि समाप्तिं स्तुतेः ॥**

अत्र **ये स्तोमाः** स्तोत्रविशेषाः **उत्तरे** उत्तरोत्तरे उत्कृष्टा[१] सन्ति तैः स्तोमैः सर्वैरपि **वज्रिणः** वज्रयुक्तस्य **अस्य इन्द्रस्य सुष्टुतिं** समाप्तिं स्तुतेः । **न विन्धे** न विन्दामि । व्यत्ययेन दस्य धः ( पा. ३-१-८५ ) इन्द्रस्यात्यन्तगुणबाहुल्येन देवान्तरेभ्युत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्याप्तानीत्यर्थः । तुञ्जेतुञ्ज इति "नित्यवीप्सयोः" ( पा० ८-१-४ ) इति द्विलम् ॥ २ ॥

एवमत्र स्तोमसंबन्धात् तुञ्जे शब्दो दानपर्यायवचनस्तुञ्जतेश्च दानार्थस्य दर्शनात् ॥

**बर्हणा परिबर्हणा ॥**

**"बृहच्छ्रूवा असुरो बर्हणा कृतः" ( ऋ०सं० १-४-१७-३ )**

**इत्यपि निगमो भवति ॥**

वा रक्षोगणं हन् जहि । राये धनवते यजमानाय पुरन्धि बहुधियं देवगणं यक्षि यज । किंच हे जातवेदोऽग्ने ! पुरुणीथा बहुनीथेन बहुना स्तोत्रेण जरस्व देवान्स्तुहि । यद्वा पुरुणीथानेकमार्गाणि रक्षांसि जरयेत्येवं व्याचख्यौ ॥

१. "कुलिशम्" इत्येवं दुर्गेण धृतम् । भाष्ये तु कुलिश इत्येव ॥

२. "स्कन्धो भुजशिरोंसोऽस्त्री" इत्यमरे स्कन्ध इत्यकारान्तमेव । इह तु सान्ततया भाष्यकृदभिधत्ते वेदे तथा दर्शनात् ॥

१. उत्पूर्वात्तरतेर्भावे "ऋदोरप्" ( पा० ३-३-५७ ) उच्छब्द उत्कृष्टवचनः । उत्कृष्टस्तरो यस्येति बहुव्रीहिः ॥

**बर्हणा** ( ८३ ) इत्यनवगतम् । **परिवर्हणा** इत्युपसर्गाध्याहारेणार्थप्रतीतिः । परिवर्हणा परिवृद्धिः हिंसा वा । तथाच वृहेर्वृद्ध्यर्थस्य हिंसार्थस्य वा "कृत्यल्युटो वहुलम्" (पा० ३–४–११३) इति भावे ल्युट् तृतीयैकवचनस्थाने डादेशः ( पा० ३९ ) तदेतदृचि दर्शयति–**बृहच्छ्रवा** इति । अस्य "अर्चा दिवे बृ॒ह॒ते शू॒ष्यं॑ वचः॒ स्वक्ष॑त्रं॒ यस्य॑ धृष॒तो धृ॒षन्मनः॑" इत्यादिः । "पु॒रो हरि॑भ्यां वृष॒भो रथो॒ हि षः" इत्यन्तः । सैव्यस्यार्षम् । ऐन्द्री जगती । अतिरात्रे प्रथमपर्यायेऽच्छावाकशस्त्रे विनियुक्ता । हे स्तोतः ! । **दिवे** दीप्ताय **बृहते** महते इन्द्राय **अर्च** उच्चारय । संहितायां दीर्घः । ( पा० ६–३–१३७ ) । किंलक्षणायेन्द्राय ? **यस्य इन्द्रस्य धृषतः** शत्रून्धर्षयतः "ञिधृषा प्रागल्भ्ये" ( स्वा० प० ) व्यत्ययेन शः । **स्वक्षत्रं** स्वभूतमेव क्षत्रं धनं बलं वा यस्य तादृशं **मनः धृषत्** धृष्टं भवति । किंच येनेन्द्रेण **बृहच्छ्रवाः** बृहद्घोषः । **असुरः** मेघो वा **बर्हणा** परिवृद्ध्या ( परिवृद्धेन वधेन ) परिहिंसया वा **हरिभ्याम्** अश्वाभ्याम् **पुरः** अर्वाक् । तत्प्राप्तेः पूर्वमेव शीघ्राव्रत्वाद्दूरपातित्वाच्च तदस्त्राणां **वृषभः** वर्षिता **कृतः हि** । यतः **सः** असुरो मेघो वा **रथः** रंहणः शीघ्रः । "पूर्वपदात्" ( पा० ८–३–१०६ ) इत्यनादेशस्यापि सस्य ष आर्षः ॥ ३ ॥

एवमत्र शब्दसारूप्यादसुरसंबन्धाच्च बर्हणा परिबर्हणा इत्युपपद्यते ॥ ३ ॥ ( १८ )

अथ **ततनुष्टिः** ( म् ) (८४) इत्यनवगतम् । **ततनुष्टः** तितनिषुः इति वाऽत्रगमः । तदेतन्निगममुखेन प्रदर्शयति—

१. देवराजस्तु कर्तर्याह । तथा च सायणोपि–द्विषः सहि=स खल्विन्द्रः बृहच्छ्रवाः प्रभूतयशाः असुरः शत्रूणां निरसिता, यद्वा असुः प्राणो बलं वा तद्वान् । मत्वर्थीयः । अथवा असवः प्राणास्तेन चापो लक्ष्यन्ते "प्राणा वा आपः" इति श्रुतेः । तान् राति ददातीत्यसुरः । बर्हणा शत्रूणां निवर्हयिता हरिभ्यामश्वाभ्यां पुरस्कृतः पूजितः वृषभः कामानां वर्षिता रथो रंहणशील इत्येवं व्याख्यत् ॥

२. सव्यनामा ऋषिः । दुर्गस्तु–सव्यत्वमापन्नस्येन्द्रस्यार्षमिति व्याख्यंस्तस्येन्द्रावतारत्वमाचष्टे स ॥

३. यद्यप्ययं निघण्टौ धनार्थे ( २–१०–९ ) उदकार्थे च ( १–२–४५ ) पठितो न बलार्थे, तथापि उदकार्थो बलार्थ इति नैरुक्तसमयेनेत्थं व्याख्यातं दुर्गाचार्यैः ॥

४. विषयभोगप्रधान इति पर्यवसितोऽर्थः । अत्राद्यपक्षे तनोतेः "तनिमृङ्भ्यां किच्च" ( उ० ३–८८ ) इति तन् ॥ "तितुत्र–" ( पा० ७–२–९ ) इति नेट् । तुदतेः निष्ठायां नुन्नस्तस्य नुष्टिभावः । द्वितीयपक्षे निपात एव सन्नन्तस्य स्थाने पृषोदरादित्वात् ( पा० ६–३–१०९ ) सायणमते त्रिधातुजमेतत्पदमिति वक्ष्यते । यद्वा तशब्दस्य ततन्भावः । वशेर्बाहुलकात्कर्तरि क्तिन्कि संप्रसारणे उष्टिः । तथाच द्विधातुजपक्षे तताद्धर्मसंतानादग्निहोत्रादेर्नुन्नः क्षिप्तस्तं भोगसंतानं वष्टि कामयत इति वा व्याख्यानं देवराज आह । भाष्यकारस्याप्यत्र स्वरसः ॥

"यो अ॒स्मै घ्रं॒स उ॒त वा॒ य ऊध॑नि॒ सोमं॑ सु॒नोति॒ भव॑ति द्यु॒माँ अह॑ । अपा॑प श॒क्रस्त॑तनु॒ष्टिमू॑हति त॒नूशु॑भ्रं म॒घवा॒ यः क॑वास॒खः" ॥ २ ॥

( ऋ० सं० ४–२–३ )

**य इति** । प्राजापत्यस्य संवरणस्येयमार्षम् । ऐन्द्री जगती । यः यजमानः **अस्मै** । "प्रकृत्यान्तःपादमव्यपरे" ( पा० ६–१–११५ ) इति प्रकृतिभावाच्च पूर्वरूपम् । इन्द्राय ( इन्द्रार्थम् ) **घ्रंसे** अहनि ( निघं १–८–६ ) **उत वा** अपिवा **यः ऊधनि** रात्रौ ( निघं १–७–२० ) अत्रानङ् छान्दसः ( पा० ५–४–१३१–१४२ ) **सोमं** सुनोति अभिषुणोति । नित्यकालमेव य इन्द्रार्थं सोमाभिषवाय प्रयतत इत्यर्थः । स एव निश्चयेन **द्युमान्** द्योतनवान् **भवति अह** इति विनिग्रहार्थीयः ( नि० १–५–२ ) अथ पुनरितो **यो** विपरीतो भवति **कवासखः** कवाः कपूयाः ( कुत्सिताः ) सखायो यस्य तथाभूतः ( असाधुजनसंपर्की कुत्सितपुरुषसहायः ) तं **ततनुष्टिं** ततनुत्तम् । ततात् पूर्वैश्च पूर्वतनैश्च अनुष्ठितात् धर्मसन्तानात् अग्निहोत्रादेर्नुन्नमपेतम् अलंकर्मभिरिस्त्येवंवादिनमलङ्करिष्णुमयज्वानम् ( अयजनशीलम् ) आत्ममण्डनपरम् । अथवा विषयोपभोगपरतया स्ववित्तं–**ततनुष्टिं** तितनिषुम् । अनेकैः प्रकारैः ( अपव्ययेन ) यो वित्तं तनितुं विस्तारयितुम् अपव्ययितुं वेच्छति तमश्रद्दधानं धर्मे । सायणस्तु–ततं धर्मसंततिं नुदति वष्टि कामयते च कामान् इति ततनुष्टिस्तमित्याह । **तनूशुभ्रम्** तनूशोभयितारम् स्वपोषकं **मघवा** धनस्वामी **शक्रः** शक्त इन्द्रः **अपाप ऊहति** अपोहति अपोहति पुनःपुनरपोहति नाशयतीत्यर्थः । उपसर्गाभ्यासदर्शनादूहतेरप्यभ्यास आदरार्थं कृतः । अवश्यंभावी तस्य विनाश इत्यभिप्रायः ॥ ३ ॥

एवमत्र ततनुष्टिशब्देन विषयोपभोगप्रधान उच्यत इत्युपपद्यते ॥

१. "दीर्घादटि समानपादे" ( पा० ८–३–९ ) इति नस्य रुत्वम् यत्वं यलोपः । अतो नित्यम् ( पा० ८–३–३ ) इति अनुनासिकः ॥

२. एतच्च भाष्यव्याख्यानुरोधेन । षष्ठीतत्पुरुषेऽप्यर्थतौल्यमेव । तत्र "राजाहःसखिभ्यष्टच्" (पा० ५–४–५१) इति टच् समासान्तः । भाष्यव्याख्याने स आर्ष एव । अत्रहि कपूयशब्दस्य कुशब्दस्यैव वा कवादेशः समासान्तश्चाच्प्रत्ययः ( पा० ५–४–७५ ) अजितियोगविभागात् ॥

३. एतच्च वष्टेः क्तिनि बाहुलकात्कर्तरि संप्रसारणे रूपमुष्टिरितिनिर्वचनमनुसन्दधाति । तथाच ततात्नुन्नो वष्टीति ततनुष्टिरित्येवमर्थः । नुन्नस्य नकारमात्रमवशिष्यत इति प्रतिभाति । सायणस्तु ततं नुदति वष्टिवेत्येवमाह ॥

४. शरीरशोभयितारम् । "स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः ॥

अथास्य भाष्यम्—

**ग्रंस इत्यहर्नाम, ग्रस्यन्तेऽस्मिन्रसाः ॥ गोरूध उद्धततरं भवति ॥ उपोनद्धमिति वा ॥ स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते ॥ स योऽस्मा अहन्यपि वा रात्रौ सोमं सुनोति, भवति ह द्योतनवान् ॥ अपोहत्यपोहति, शक्रस्तितनिषुं धर्मसन्तानादपेतं अलंकरिष्णुमयज्वानं तनूशुभ्रं तनूशोभयितारं, मघवा, यः कवासखो, यस्य कुपूयाः सखायः ॥**

**ग्रस्यन्ते** सूर्येण। तथाच "ग्रसु अदने" ( भ्वा० प० ) इत्यस्माद्धवि "पृषोदरादित्वात्" ( पा० ६–३–१०९ ) गकारस्य घकारो नुगागमश्च निपात्यते। **उद्धततरम्** उच्छ्रिततरं प्रसवकालेऽङ्गान्तरेभ्यः। तथाचोद्धततरस्योधसादेशः पृषोदरादित्वात्। **उपोनद्धम्** तद्धि विज्ञायते केनचिदुपश्लिष्य गोरुदरे नद्धमिति। अत्र पक्षेऽप्युपनद्धमित्येतस्मिन्नर्थे निपात एव ऊध इति। उभयसाधारण्येन निराह **स्नेहे**त्यादि। स्निह्यतेऽनेनेति स्नेहो रसः। सचावश्यायो वा दुग्धं वेत्यभिप्रेत्याह—**रात्रिरप्यूध उच्यते** इति। सापि ह्यवश्यायान् ओषधिवनस्पतिस्नेहकान्दधातीत्युदकाधानादूध उच्यते। उनत्त्यूध इति क्षीरस्वामिनः। तन्मते "उन्दी क्लेदने" ( रु० प० ) इत्यस्मादसुनि ( उ० ४–१८४ ) बाहुलकान्नलोपे दकारस्य धत्वे दीर्घे च रूपम्। उनत्त्यवश्यायेनौषधिवनस्पतीनित्यूधः ॥

अथ **इलीबिशस्य** ( ८५ ) इत्येतदेकपदमनवगतम्। "इलाबिलशयस्य" इत्यवगमः।

**"न्याविध्यदिलीबिशस्य दृह्ळा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः"** ( ऋ० सं० १–३–३–२ )

**निरविध्यदिलाबिलशयस्य दृढानि व्यभिनच्छृङ्गिणं शुष्णमिन्द्रः ॥ ४ ॥ ( १८ )**

मेघोऽभिधेयः। स हि इला पृथ्वी ( निघं० १–१–५५ ) अन्नं वा ( निघं० २–७–१३ ) तस्याः हेतोरुदकस्य आत्मीयानि निर्गमनबिलानि संरुध्य शेते। तस्यैव बिलेषु इलाहेतुरुदकं शेते इति इलीबिश इति दुर्गः। इलाया भूमेर्बिलेशयानमिति सायणः। एतन्मते वृत्रो ( निगमवाक्ये )ऽभिधेयः। तथाच इला बिलेशयः सन् इलीबिशः निपातनात् ( पा० ६–३–१०९ ) तदेतदपि निगममुखेनैवाह—**न्याविध्यदिति**। अस्य "यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम्" इत्युत्तरार्धम्। हिरण्यस्तूपस्यार्षं त्रिष्टुबैन्द्री। गोसवविधयोर्निष्कैवल्ये शस्यते। तत्र पूर्वोऽर्धर्चः परोक्षकृतः उत्तरस्तु प्रत्यक्षकृतः। पूर्वेण स्तूयमानः स प्रत्यक्षीभूत इति तथाभिधानम् ॥

**इन्द्रः इलीबिशस्य** इलाबिलशयस्य **दृह्ळा** दृढानि दुर्भेद्यानि उदकसंरोधक्षमाणि स्थानानि। शेर्लोपः (पा० ६–१–७०) **न्याविध्यत्** निरविध्यत् ( निरताडयत् ) ततश्च **विशृङ्गिणम्** विशिष्टशिखरवन्तं दीप्तिमन्तं वा विद्युद्भिः **शुष्णम्** शुष्णवन्तं तं मेघं बलवन्तं। शुष्णमिति बलनाम ( निघं० २–९–१२ ) अत्र बलस्य गुणत्वात् "गुणवचनेभ्यो मतुपो लुगिष्टः" ( पा० १–४–१९ वा० ) इति मतुपोऽस्त्यर्थस्य लुक्। **अभिनत्** बिभेद वर्षायाम्। हे **मघवन्! यावत्** यत्प्रमाणम् **तरः** बलम् ( निघं० २–९–४ ) मे तस्मिंस्त्वयि वाऽस्ति **यावत्** च **ओजः** क्रोधः ( निघं० १–१२–४३ ) शक्तिर्वा त्वय्यस्ति तावता **शत्रुम्** शातयितव्यमेनम् **पृतन्युम्** पृतनां संघमभिलषन्तम्। "क्याच्छन्दसि" ( पा० ३–२–१७० ) इत्युप्रत्ययः। **अवधीः** जहि। लोडर्थे लुङ् ( पा० ३–४–६ ) "लुङि च" ( पा० २–४–४३ ) इति हन्तेर्वधादेशः ॥ २ ॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्च इलीबिशः मेघ इत्युपपद्यते ॥ ४ ॥ ( १९ )

अथ **क्रियेधाः** ( ८६ ) इत्यनवगतम्। "कियद्धाः" इति "क्रममाणधा" इति वाऽवगमः। तदेतन्निगममुखेनैवाह—

**"अस्मा इदु प्रभरा तूतुजानो वृत्राय वज्रमीशानः क्रियेधाः। गोर्न पर्व विरदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै" ॥ २ ॥** ( ऋ० सं० १–४–२८ )

**अस्मा इति**। नोधानाम गोतमस्येयमार्षं त्रिष्टुबैन्द्री। आहीनिकेष्वहःसु अहीनसूक्ते विनियुक्ता। हे इन्द्र! एषः असुरः वृत्रः मेघोवा **क्रियेधाः** कियद्धाः ( कियदप्युदकमप-

---

१. तथाच इलार्थं बिलेशय इत्यर्थे "अधिकरणे शेतेः" ( पा० ३–२–१५ ) इति अच्। यद्वा। इला ( तद्धेतुभूतमुदकं ) बिलशयो यस्य सः। अत्रेलाशब्दो मात्तः ॥

१. इलाया भूमेर्बिलेशयानस्य वृत्रस्य संबन्धीनि दृह्ळा दृंहितानि असुरेण निरुद्धानि प्रभूतान्युदकानि इन्द्रो न्यविध्यन्नितरां विद्धवान्। यद्वा दृढानि प्रबलानि सैन्यानि नितरां विद्धवान्। तत ऊर्ध्वं शृङ्गिणं गोमहिषादिशृङ्गसमानैरायुधैरुपेतं शुष्णं जगतः शोषकं वृत्रं व्यभिनद्विविधं ताडितवान्। हे मघवन्! धनयुक्तेन्द्र! तव यावत्तरः यावान्वेगोऽस्ति, यावच्चौजः बलमस्ति तेन सर्वेण युक्तस्त्वं पृतन्युं पृतनां युद्धं ( निघं० २–१७–१८ ) इच्छन्तं शत्रुं वृत्रं वज्रेणावधीर्हतवानसीति सायणः ॥

२. अत्र "नपुंसकमनपुंसकेन०" ( पा० १–२–६९ ) इति नपुंसकस्यैव यावच्छब्दस्य शेष ऊह्यः।

३. अत्र कियतोऽनवधृतपरिमाणस्य बलस्य धाता। यद्वा क्रममाणं शत्रुबलं दधात्यवस्थापयति ( निरुणद्धि ) इति क्रियेधा इन्द्र इति सायण आह। दुर्गोऽपि क्रियेधाः इन्द्र इत्येके मन्यन्ते इत्याद्युक्त्वा यस्मादीशानस्त्वं क्रियेधाश्च तस्मात्प्रहर वज्रमितीत्येवमाह ॥

रिमाणं धारयति ) क्रममाणधा वा ( क्रममाणो वा धारयति )। यद्वा त्वमेव कियेधाः सर्वधारणसमर्थः । एतच्च हेतुगर्भं विशेषणम् । **असै** त्वं **तूतुजानः** तूर्णं ( निघं० २–१६–१९ ) त्वरमाणः "तुज हिंसायाम्" ( भ्वा० प० ) कानचि "तुजादीनां दीर्घोऽभ्यासस्य" (पा० ६–१–७ ) इत्यभ्यासस्य दीर्घत्वम् । **वज्रं प्रभर** प्रहर "हृग्रहोर्भश्छन्दसि" ( पा० ३–१–८४ वा. ) इति हस्य भः । यतस्त्वम् **ईशानः** ईश्वरोऽस्माकमसि फलदानायेति साभिप्रायं ( हेतुगर्भं ) विशेषणम् । प्रहृत्य च **अर्णांसि** वृष्टिजलानि **इष्यन्** इच्छन् "इष इच्छायाम्" ( तु० प० ) कर्तरि लटः शता । व्यत्ययेन श्यन् ( पा० ३–१–८५ ) यद्वा "इष गतौ" ( दि० प० ) अन्तर्भावितण्यर्थः । तस्माद्वृत्राद्धमयंस्त्वम् **अपां चरध्यै** चरणाय ( चरितुम् ) "चर गतौ" (भ्वा० प०) "तुमर्थे" ( पा० ३–४–९ ) अध्यै प्रत्ययः । भूप्रदेशं प्रति गमनाय तस्य वृत्रस्य मेघरूपस्य **पर्वं** पर्वाणि "शेश्छन्दसि बहुलम्" ( पा० ६–१–७० ) इति शेर्लोपः । अवयवसन्धीन् । **तिरश्चा** तिर्यग्गामिना वज्रेण **विरद** विलिख छिन्धीत्यर्थः । दुर्गस्तु विदर–विदारयेति वर्णविपर्ययमिच्छति । अत्र दृष्टान्तः **गोर्न** इति । नशब्द इवार्थे । ( नि० १–२–१ ) यथा मांसविकर्तारो लौकिकाः पुरुषाः पशोरवयवानितस्ततो विभजन्ति तद्वत् ॥ २ ॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्च कियेधाः मेघः इन्द्रो वा इत्युपपद्यते ॥

अथात्र भाष्यम्—

## असै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः ॥ कियेधाः कियद्धा इति वा क्रममाणधा इति वा । गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय ॥

**कियेधाः** कियच्छब्दे क्रममाणशब्दे वोपपदे दधातेर्विच् । कियत् किं ( अविज्ञायमानं ) परिमाणमस्य बलस्येति कियत् । "किमः संख्यापरिमाणेडति च" (पा० ५–२–४१ ) इति वतुप् । "किमिदंभ्यां वो घः" ( पा० ५–२–४० ) इति वस्य घस्तस्येयादेशः ( पा० ७–१–२ ) तद्बलं दधाति धारयति कियद्धाः सन् कियेधाः । यः कोप्यस्य बलस्येयत्तां न जानातीत्यर्थः । यद्वा क्रममाणमाक्रममाणं ( अभिमुखमागच्छत् ) परेषां बलं दधाति धारयति ( निवारयति ) इति क्रममाणधाः सन् कियेधाः ॥ उभयत्र पृषोदरादित्वात् पूर्वपदस्य कियेभावः । **गोरिति** पशुसामान्याभिधानम् । "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः ॥

## भूमिर्भ्राम्यतेः ॥

अथ भूमिः(८७)इत्यनवगतम् । "भ्रामयिता" इत्यवगमः । भ्राम्यतेरिति निर्वचनम् । तथाच "भ्रमेः संप्रसारणं च" ( उ० १–११८ ) इतीन्प्रत्ययः । अग्निश्चाभिधेयः । तथाचात्र—

### "भूमिरस्यृषिकृन्मर्त्यानाम्"

( ऋ० सं० १–२–३५–१ )

## इत्यपि निगमो भवति ॥

अस्य "इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् । आपिः पिता प्रमतिः सोम्यानाम्" इत्यादिः । हिरण्यस्तूपस्यार्षम् । आग्नेयी जगती प्रातरनुवाकाश्विनयोः शस्यते । हे अग्ने । **नः** अस्मत्संबन्धिनीम् **इमाम्** इदानीं संपादिताम् **शरणिम्** हिंसाम् व्रतलोपरूपामिति सायणः । मारणलक्षणां संसृतिं वेति दुर्गः । **मीमृषः** क्षमस्वेति सायणः । मार्जयस्व नाशयस्वेति दुर्गः । तथा–त्वदीयसेवामग्निहोत्रादिरूपां परित्यज्य **दूरात्** दूरदेशं **यमिममध्वानम् अगाम** गतवन्तो वयं तदपि क्षमस्वेति शेष इति सायणः । दुर्गस्तु–इममध्वानं यम् एतं संसाराध्वानम् अगाम गतवन्तो वयम् अमुष्माँल्लोकादिमं लोकम् अस्मात्तु एतां संसारहिंसामेतां वा संसारसृतिमेतमाजवं जवीभवन्तमस्माकं मार्जय त्वम् इत्याह । कस्मादेवमुच्यते?–यतस्त्वं **सोम्यानाम्** सोमसंपादितानां ( सोमार्हाणामनुष्ठातॄणाम् ) **मर्त्यानां** मनुष्याणाम् **आपिः** प्रापणीयः । यद्वा **पिता** पालकः । आपिर्व्यापयिता च कृत्स्नस्य जगतो महिम्ना । **प्रमतिः** प्रकृष्टमतिश्च । **असि** भवसि । **भूमिः** संसारे भ्रमयिता च पश्चाग्निविद्योक्तेन प्रक्रमेण । त्वदधीन एव संसारो मोक्षश्चेति दुर्गः । सायणस्तु–भूमिर्भ्रामकः कर्मनिर्वाहक इत्यर्थः । अथच **ऋषिकृत्** दर्शनकारी असि । अनुजिघृक्षया प्रत्यक्षीभवसीति सायणः । दुर्गस्तु—त्वदधीनमेव दर्शनं मर्त्यानामिति सर्वविज्ञानप्रकाशेनानुगृह्यास्मान्मोक्षयास्मात्संसारादित्यभिप्रायः । देवयानेनैव पथा गमय, मा पितृयानेनेत्येवं व्याचख्यौ ॥ १ ॥

एवमत्रार्थाविरोधात् भूमिः अग्निः विशेष्यते ॥

## विष्पितः विप्राप्तः ॥

अथ **विष्पितः** ( ८८ ) इत्यनवगतम् । **विप्राप्तः** इत्यवगमः । विस्तीर्णः इतश्चेतश्च ( सर्वतो यः प्राप्तः ) संसाराध्वा सः । विप्राप्तशब्दस्य विष्पितभावः । यद्वा विषेर्व्याप्त्यर्थात् ( जु० प० ) क्तः । इकारपकारावुपजनौ, पृषोदरादित्वात् ॥ अत्रार्थे–

### "पारं नो अस्य विष्पितस्य पर्षन्"

( ऋ० सं० ५–५–२–१ )

## इत्यपि निगमो भवति ॥

१. "शॄ हिंसायाम्" ( क्र्या० प० ) औणादिको निप्रत्ययः ॥

२. "मृष तितिक्षायाम्" ( दि० उ० ) असाणौ चङि गुणे प्राप्ते "नित्यं छन्दसि" ( पा० ७–४–८ ) इत्युपधाया ऋकारादेशः । णिलोपद्विर्भावहलादिशेषोरदत्वसन्वद्भावेत्वदीर्घत्वानि ॥

३. "ऋषिर्दर्शनात्" इति निगमात् । "ऋषी गतौ" (तु०प०) इत्यासादिन्सर्वधातुभ्यः ( उ० ४–१८४ ) किबेति ऋषिर्गत्यर्थस्य ज्ञानार्थत्वेनेह दर्शनार्थत्वमपि ॥

अस्य "इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति । व्रजे चिन्नया गाधमस्ति" इत्यादिः । वसिष्ठस्यार्षम् मित्रावरुणदैवत्यं त्रिष्टुप् ॥ इमे इति द्वयोरेव मित्रावरुणयोः पूजार्थे बहुवचनम् । **दिवः** सकाशात् एत्य आगत्य **अनिमिषाः** आदरवन्तः **पृथिव्याः** पृथिवीलोकात् **चिकित्वांसः** सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः **अचेतसम्** अचेतयमानं प्राणिनं कर्मानुरूपेण अमुं लोकं **नयन्ति** । अतो ब्रवीमि—**प्रव्राजे** प्रकृष्टेऽस्मिन्व्रजने मरणाख्ये मृत्युकाल उपस्थिते सति यदि **गाधं** संसारगाहमसमर्थं कर्म विज्ञानं वा **नः** अस्माकम् **अस्ति** तदा **अस्य** विष्पितस्य विप्राप्तस्य संसाराध्वनो **नद्याश्चित्** नद्या इव **पारं पर्षन्** नयन्तु ॥ १ ॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्च विष्पितः विप्राप्तः संसाराध्वा इत्युपपद्यते ॥ ५ ॥ ( २० )

अथ **तुरीपम्** ( ८९ ) इत्यनवगतम् । "तूर्णापि" इत्यवगमः । उदकम् अभिधेयम् । तद्धि तूर्णमाप्नोति निम्नभुवम् । तथाच तूर्ण—मामुं व्याप्तुं शीलमस्येति णिनिः ( पा० ३-२-७८ ) तूर्णाऽपि सत्तुरीपम् पृषोदरादित्वात् ॥

तदेतदुदाहरणेन दर्शयति—

**"तन्नस्तुरीपमद्भुतं पुरुवारं पुरु त्मना ।**
**त्वष्टा पोषाय विष्यतु राये नाभा नो अस्मयुः"**

( ऋ० सं० २-२-११-४ )

**तन्न** इति । इदं दीर्घतमस आर्षम् त्वाष्ट्री अनुष्टुप् आप्रीसूक्ते । **त्वष्टा** वृष्ट्यादेः कर्ता माध्यमिको देवः एतन्नामको ( वैद्युतोऽग्निः ) **अस्मयुः** अस्मान्कामयमानः । "क्याच्छन्दसि" ( पा० ३-२-१७० ) इत्युप्रत्ययः । **राये** रायः । षष्ठ्यर्थे चतुर्थी ( पा० २-३-६२ वा० ) । गवादिधनस्य पोषाय पुष्ट्ये **नः** अस्मत्संबन्धिनो यज्ञस्य **नाभा** नाभौ । "सुपां सुलुग्—" ( पा० ७-१-३९ ) इति सप्तम्या डादेशः । उत्तरवेद्यां **नः** अस्मदर्थम् **अद्भुतम्** महत् ( निघं० ३-३-२३ ) सारतः । यद्वा अभूतमिव पूर्वम् ( नि० १-३-१ ) सद्य आविर्भवत् । **पुरुवारं** बहुदेशान्तरमावृण्वानम् ।

सायणस्तु—पुरूणां बहूनां प्राणिनामर्थायैव अरमलं समर्थमित्याह । **त्मना** आत्मना **संभृतं पुरु** बहु यदेवंलक्षणं **तत्** तादृशम् **तुरीपम्** तूर्णापि, उदकम् **विष्यतु** विमुञ्चतु । स्यतिरुपसृष्टो विमोचने । उक्तलक्षणां वृष्टिं मुञ्चतु ॥ ४ ॥

एवमत्र माध्यामिको देवस्त्वष्टा ( वैद्युतोऽग्निः विष्यतु विमुञ्चतु ) इत्यनेन संबन्धात् तुरीपम् उदकम् इत्युपपद्यते ॥

तथाचास्य भाष्यम्—

**तन्नस्तूर्णापि महत् संभृतमात्मना त्वष्टा धनस्य पोषाय विष्यत्विति ॥ अस्मयुरस्मान्कामयमानः ॥**

अत्र संभृतमिति तृतीयाश्रुतेरात्मनेति । श्रुतावाकारलोप आर्षः । ( पा० ६-४-१४१ ) **धनस्येति** राये इत्यस्यार्थः । इतिशब्दो वाक्यसमाप्त्यर्थः ॥

## रास्पिनो रास्पी रपतेर्वा रसतेर्वा ॥

अथ **रास्पिनः** ( ९० ) इत्यनवगतम् । "रापिनः" इति "रासिनः" इति वावगमः । अत्र **रपलेर्वेति** मूलभूतधातुनिर्देशः । इमौ शब्दार्थौ । आभ्यां भावे घञ् रापः रासः । सकारपकारोपजनेन रास्पमुदकं स्तोत्रं वा तदस्यास्तीति रास्पी । मत्वर्थे इनिः ( पा० ५-२-११५ ) तस्मात्पुनर्मत्वर्थ एवार्थे आयच् ( पा० ५-२-१२७ ) दण्डिमती शालेतिवत् । प्रकृतिभावश्चात्र द्रष्टव्यस्तेन "नस्तद्धिते" ( पा० ६-४-१४४ ) इति टिलोपेन । आर्षत्वादेव । ततश्च शब्दवदुदकं तद्वान्मेघोऽभिधेयः । उच्चार्यमाणेन स्तोत्रेण स्तोता वा ॥ अत्रार्थे—

**"रास्पिनस्यायोः"** ( ऋ० सं० २-१-१-४ )

**इत्यपि निगमो भवति ॥**

अस्य "उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै । प्र वो नपातमपां कृणुध्वं प्र मातरा" इत्यादिः । कक्षीवत आर्षं त्रिष्टुब् वैश्वदेवे सूक्ते । **उतत्यौ** तावप्यश्विनौ औङ आकारः ( पा० ७-१-३८ ) **मे** मम **यशसा** अन्नेन ( निघं० २-७-२८ ) धनेन वा ( निघं० २-१०-२३ ) हविर्लक्षणेन "तर्प्यमाणौ" इति शेषः । **श्वेतनायै** श्वेत्याया

१. यद्यर्यमाप्यस्मिन्सूत्रे श्रूयते "मित्रो अर्यमा वरुणो हि सन्ति" ( ऋ० सं० ५-५-१-५ ) तथाच बहुवचनं तदभिप्रायेणापि संभवति । परं शौनको मैत्रावरुणमिदमिति वदन् परीक्ष्यः ॥

२. गाहनं विलोडनमपध्वंसो निवर्तनमिति यावत् "गाहू विलोडने" ( भ्वा०प० ) ल्युट् भावे ॥

३. चिदित्युपमार्थे ( नि० १-२-२ ) दधिचिदोदनः । दधिरूप इत्यर्थः ॥

४. तथाच वक्ष्यति—त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा स्यात्करोतिकर्मण इति ( नि० ८-१३ )

१. एतन्मते वाशब्द एवार्थे, चार्थे वा पक्षान्तरे । पुरु इति लुप्तविभक्तिकम् ॥

२. सञ्चितम् । त्मनेति । "मन्त्रेष्वाङ्यादेरात्मनः" ( पा० ६-४-१४१ ) इत्याकारलोपः ॥

३. दुर्गस्तु—रपणशीलो वा रसनशीलो वा यः स रास्पीत्याह । तन्मते णिनिरार्षः । स्तोता चाभिधेयः । ततश्च अर्शआद्यचार्थान्तरप्रसक्तिरिति सोऽप्यनर्थक एव उपजनः कल्प्य इति गौरवपराहतोऽर्थः ॥

४. अत्र यद्यपि विशेषो न श्रुतः तथापि सूक्तस्यास्य वैश्वदेवत्वादुपःसंबन्धाद्द्विवचनलिङ्गाच्चाश्विनाविति गम्यते ॥

५. श्वेतनाश्वेत्यनर्थान्तरमागमिनां निकाये ॥

उषसः ( निघं० १-८-१२ ) षष्ठ्यर्थे चतुर्थी । ( पा० २-३-६२ वा० ) काले प्राप्ते सति **व्यन्ता** वीताम् भक्षयेताम् पुरोडाशम् । वीधातुरशनार्थेऽपि ( अ० प० ) **पान्ता** पिबेतां सोमम् । हे **उशिजः** मेधाविनः ! ( निघं० ३-१६-१९ ) ऋत्विजः ! यूयम् **आहुवध्यै** आह्वयध्वम् । तावश्विनौ । किंच प्रब्रवीमि **वः** युष्मान् यद्यूयमेतस्मिन्कर्मणि **अपांनपातम्** तन्नामकं देवविशेषमपि भागिनं **कृणुध्वं** कुरुत । तथा **प्रमातरा** प्रमातरौ सर्वभूतनिर्मात्र्यौ द्यावापृथिव्यावपि भागिन्यावेतस्मिन् कुरुत । किमर्थम् ? **रास्पिनस्य** प्रकृष्टध्वनियुक्तवृष्ट्युदकवतो मेघस्य ( प्रभूतवृष्ट्युदकस्य ) उच्चार्यमाणशब्देन ( स्तोत्रेण ) तद्वतः स्तोतुः । **आयोः** आयवे प्राप्त्यर्थम् । एतेर्गत्यर्थादुण् चतुर्थ्यर्थे षष्ठी ( पा० २-३-६२ ) यद्वा आयुरिति मनुष्यनाम ( निघं० २-३-१७ ) स्तोतुः पुत्रस्य "प्राप्त्यर्थमि"ति शेषः ॥४॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्च रास्पिनशब्देनोदकं स्तोता वाऽभिधीयते ॥

## ऋञ्जतिः प्रसाधनकर्मा, ॥

"आ व॑ ऋञ्जस ऊ॒र्जां व्यु॑ष्टिषु"

( ऋ० सं० ८-३-८-१ )

## इत्यपि निगमो भवति ॥

अथ **ऋञ्जतिः** ( ९१ ) ऋञ्जधातुरनवगतार्थस्तमवगमयति **प्रसाधनकर्मा** प्रतिकर्मार्थः । "प्रतिकर्म प्रसाधनम्" इत्यमरः । प्रतिकर्मालंकृतिः । "प्रसाधितोऽलंकृतश्च" इत्यमरात् । अत्रार्थे निगमः **आव** इति । अस्य "इन्द्रं॑ म॒रुतो॒ रोद॑सी अनक्तन । उ॒भे यथा॑ नो॒ अह॑नी सचा॒भुवा॒ सद॑ःसदो वरिव॒स्यात॑ उ॒द्भिदा॑ ॥" इति शेषः । इरावतः पुत्रस्य सर्पजातेर्जरत्कर्णनाम्न आर्षं जागतं, सोमाभिषवार्था ये ग्रावाणस्तद्दैवत्यम् । तथा चानुक्रान्तम्—"आवोऽष्टौ सर्प ऐरावतो जरत्कर्णो ग्राव्णोऽस्तौत्" इति । अस्यार्थः-हे ग्रावाणः ! **वः** युष्मान् **ऊर्जाम्** "ऊर्गित्यन्ननाम ऊर्जयतीति सत" इति निरुक्तमुक्तपूर्वम् ( ३-८ ) तेन तद्वत्त्य उपलक्ष्यन्ते । यद्वा "ऊर्ज बलप्राणनयोः" ( चु० प० ) ऊर्जयतीत्यस्य बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । ( सि० कौ० ) तथाच—सारभूतानामन्नवतीनां वोषसां **व्युष्टिषु** विभागेषु सत्सु **आऋञ्जसे** आ समन्तात् प्रसाधयामि । पुरुषव्यत्यय आर्षः । यूयं सोमेन **इन्द्रं मरुतः** रोदसी द्यावापृथिव्यौ च । "द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी" इत्यमरः । **अनक्तन** व्यञ्जयत । "अञ्जू व्यक्त्यादौ" ( रु० प० ) लोट् । तस्य "तप्तनप्तनथनाश्च" ( पा० ७-१-४५ ) इति तनप् । "श्नसोः–" ( पा० ६-४-१११ ) इत्यल्लोपाभाव आर्षः । **यथा** येन प्रकारेण **वरिवस्यतः** परिचरतः ( शुश्रूषतः ) **नः** अस्मान् **उभे** द्वे अपि **सचाभुवा** सहभुवौ सहोत्पन्ने **अहनी** द्यावापृथिव्यौ **सदःसदः** सर्वेषु यागगृहेषु । "नित्यवीप्सयोः" ( पा० ८-१-४ ) इति पदद्वित्वम् । **उद्भिदा** उद्भेदकेन धनेन "पूरयतामि"ति शेषः ॥१॥

१. सायणस्तु-"औशिजः उशिजः पुत्रः कक्षीवानहं मे तादर्थ्ये चतुर्थी मदर्थं, यशसा यश इत्यन्नं बलं कीर्तिर्वोच्यते । तदन्तौ व्यन्ता भक्षयन्तौ चरुपुरोडाशादिकं पान्ता पिबन्तावाज्यसोमादिकं, त्या तच्छब्दसमानार्थस्त्यच्छब्दः ॥ यौ स्तुत्यत्वेन प्रसिद्धौ तावश्विनौ । श्वेतनायै इति षष्ठ्यर्थे चतुर्थी ॥ विश्वं जगच्छ्वेतयन्त्या उषसः सम्बन्धिनि काले आहुवध्यै आह्वानाय आह्वयितुं तुमर्थे ह्वयतेः कध्यैप्रत्ययः ॥ भावश्च तुमर्थो"ऽव्ययकृतो भावे" इत्युक्तेः । यजेयमिति शेषः ॥ हे ऋत्विजः ! यूयमपान्नपातमग्निं प्रकृणुध्वं प्रकर्षेण स्तुध्वम् ॥ किंच रास्पिनस्य स्तोतुरायोर्मनुष्यस्य मम मातरा मातरौ मातृवद्धितकारिण्यावहोरात्रदेवते अपि कृणुध्वम् । अथवा रास्पिनस्य ॥ एको मत्वर्थे प्रत्ययश्छान्दसः ॥ प्रवर्षणध्वनियुक्तस्य वृष्ट्युदकस्य गमनशीलस्य निर्मात्र्यावहोरात्रे प्रकृणुध्वम् ॥ करोतिरिह क्रियासामान्यवाची ( अपि ) क्रियाविशेषे स्तोत्रे पर्यवस्यति इत्येवमाह ॥ एतन्मते व्यन्ता पान्ता इति उभयत्र "सुपां सुलुग्–" इत्यौङ आकारः ॥

२. उपसर्गबलाद्योग्यक्रियाध्याहारोऽसकृदुक्तपूर्वः ॥

३. तथाच पाणिनिः "अपोनप्त्रपान्नप्तृभ्यां घः" ( पा० ४-२-२७ ) इति वदन् अपांनपाच्छब्दस्यापान्नप्त्रादेशमनुशास्तीति दीक्षितचरणाः प्राहुः ॥ अत एवापोनपाते अपान्नपाते अनुब्रूहीति प्रैषः ॥ सायणस्तु–आपामुदकानां नपातं नप्तारम् अग्निं प्रकृणुध्वं ॥ प्रकर्षेण स्तुध्वमित्यर्थं इत्याह ॥ अद्भ्य ओषधिवनस्पतयस्ताभ्योऽग्निरित्यपान्नप्तृत्वमग्नेः ॥

४. धर्मिपारतन्त्र्येणोदकस्यैव प्राप्त्यर्थेऽन्वयः ॥ निध्वनत्पान्नजन्यः श्रुत इत्यत्र ध्वनेः श्रवण इव ॥

५. धान्येन धनवानिति वदमेदे तृतीया ॥ प्रकृत्यादित्वात् ( पा० २-३-१८ वा )॥

१. दुर्गस्तु-भाऋञ्जीक इत्यनेन गतार्थतामस्य मन्यमानो भाष्यकारो निगमं नाधीते इति व्याख्यन्नस्य पाठं नाभिमनुते ॥ किंतु 'केचित्त्वत्र एतं शेषमधीयते'–"दू॒तं वो॑ वि॒श्ववे॑दसं हव्य॒वाह॒मम॑र्त्यम् ॥ यजि॑ष्ठमृञ्जसे गि॒रा" ( ऋ० सं० ३-५-८-१ ) इति वामदेवस्यार्षं गायत्री आग्नेयी प्रातरनुवाकाश्विनयोः शस्यते ॥ वः इत्येतस्य त्वं इति विपरिणामः । हे यजमान ! त्वं 'दूतं' विश्ववेदसं' सर्वप्रज्ञानं 'हव्यवाहं' हविषां वोढारम् 'अमर्त्यम्' अमरणधर्माणम् 'यजिष्ठं'यष्टृतमम् 'ऋञ्जसे' प्रसाधयसि 'गिरा' स्तुत्येत्यर्थः ॥ एवमत्र "ऋञ्जतिः प्रसाधनकर्मा दूतसंबन्धात्" इत्येवमाह ॥

२. आकार आर्षः ॥ यद्वा "वरिवस्या तु शुश्रूषा" इत्यमरादन्त एव वरिवस्याशब्दः वरिवःशब्दादिच्छाक्यजन्तादकारप्रत्ययेन साधुस्तस्मात्तसिः तृतीयार्थे सार्वविभक्तिकः ॥

३. अहीशब्द एवान्नार्थे निघण्टौ पठितः (२-३०-२२) किंत्विह सायणेनाहनीत्यस्यैव तथार्थकत्वमुक्तमिति तथा व्याख्यातम् ॥

४. सदःशब्दः सभावचनोऽपीह यज्ञगृहमभिधत्तेऽर्थेनशास्त्रभासंबन्धाच्च ॥

ऋजुरित्यप्यस्य भवति ॥

"ऋजुनीती नो वरुणः"

( ऋ० सं० १-६-१७-१ )

इत्यपि निगमो भवति ॥

**ऋजुः ( ९२ ) इत्यपि अस्य एव ऋजतेः भवति।** परमर्येऽत्र भेदः । कुप्रत्ययो नलोपश्च । अकौटिल्यार्थोऽत्र ऋजतिः । पाणिनीयैस्तु भर्जनार्थे पठितः ( भ्वा० आ० ) अत्रार्थे निगमः । **ऋजुनीती** इति । अस्य "मित्रो नयतु विद्वान् । अर्यमा देवैः सजोषाः" इति शेषः । गोतमस्यार्षम् गायत्री वैश्वदेवसूक्ते । **मित्रः** अहरभिमानी देवः **वरुणः** राज्यभिमानी देवः स ( अन्यतरः ) **विद्वान्** नेतव्यमुत्तमं स्थानं जानन् **नः** अस्मान् **ऋजुनीती** ऋजुनीत्या अकुटिल-पथा अस्माल्लोकादमुं लोकं कर्ममार्गप्राप्त्यर्थं **नयतु** प्रापयतु । तथा **देवैः** अन्यैरिन्द्रादिभिः **सजोषाः** सह प्रीयमाणः ( समानप्रीतिः ) **अर्यमा** अहोरात्रस्य विभागकर्ता सूर्य-श्चास्मानृजुगमनेनाभिमतं स्थानं नयतु प्रापयत्वित्यर्थः । अत्र ऋजुनीती इति "सुपां सुलुक्-" ( पा० ७-१-३९ ) इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । दुर्गस्तु-ऋजुनीती ऋजुनयनः ऋजुप्रज्ञो वेत्यर्थमाह । तन्मते सोरेव पूर्वसवर्णदीर्घः ॥ १ ॥

प्रतद्वसू प्राप्तवसू ॥

"हरी इन्द्र प्रतद्वसू अभिस्वर"

( ऋ० सं० ६-१-१२२ )

त्यपि निगमो भवति ॥

**प्रतद्वसू ( ९३ )** इत्यनवगतम् । **प्राप्तवसू** इत्यवगमः । अश्वौ अभिधेयौ । निगमश्च **हरी** इति । अस्य "इहत्या सधमाद्या युजानः सोमपीतये" इत्यादिः । नारदस्येयमार्षम् उष्णिक् महाव्रते औष्णिही तृचाशीतिः तस्यां शस्यते । हे **इन्द्र ! इह** अस्मिन्कर्मणि **त्या** त्यौ तौ । औङ आकारः ( पा० ७-१-३९ ) **हरी** अश्वौ **प्रतद्वसू** प्राप्तवसू प्राप्तधनौ । तयोर्हि ऋजीषं धानाश्च धनम् । स हि ताभ्यां यज्ञे भागः प्राप्तः **सधमाद्या** सहमादनौ तौ **युजानः** रथे योजयन् कानच् । **सोमपीतये** सोमपानार्थम् **अभिस्वर** अस्मान्प्रत्यागच्छ ॥ २ ॥

एवमत्र हरी इत्यनेन सम्बन्धात् प्रतद्वसू प्राप्तवसू अश्वावि-त्युपपद्यते ॥ ६ ॥ ( २१ )

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् । ऋतस्य योगे विष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥

( ऋ० सं० ७-७-२६-१ )

अत्र **हिनोत ( ९४ )** इत्यनवगतम् । "प्रहिणुत" इत्यव-गमः । इयं कवषस्यार्षं त्रैष्टुभमब्दैवत्यम् अपोनप्त्रीयास्वृक्षु शस्यते ॥

हे ऋत्विजः ! **हिनोत** प्रहिणुत प्रगमयत ( प्रोत्सर्पयत ) **नः** अस्माकम् एतम् **अध्वरं** यज्ञं **देवयज्या** देवयज्यायै । ङेर्लुक् ( पा० ७-१-३९ ) ( देवयजनमार्गार्थम् ) किंच **हिनोत** प्रहिणुत **ब्रह्म** सुत्याख्यम् यथाशास्त्रदृष्टक्रमेण **सनये** लब्धयेऽस्माकं **धनानाम्** किंच **ऋतस्य** यज्ञस्य **योगे** संयोगे यदेतत् **ऊधः** इव गोः सोमपूर्णमधिषवणचर्म वर्तते । अथवा सोमसंबद्धशकटं योगः तद्धि तत्र युज्यते । तेनाधिषवणचर्मो-धसोऽधस्तादवस्थितेनेति मन्यमानो भाष्यकारो वक्ष्यति याज्ञे शकट इवेति । यदेतद्यज्ञशकटस्याधस्तादुपरि वाऽधिषवणचर्मैतद् **विष्यध्वं** विमुञ्चध्वम् । ग्रहचमसस्थाल्यादिषु यो निषेकः सोमस्य एतद्विमोचनमधिषवणचर्मोधसः । तद्धि सोम उत्सिच्यमाने श्लथीभवति । यथेतरद्वोरूधो दुह्यमानायां गवि । एवमृत्विज उक्त्वाऽधुनैव सोमसंमिश्रा अपो ब्रवीति-**हे आपः !** यूयमपि एभिः ऋत्विग्भिः उत्सिच्यमानाः **श्रुष्टीवरीः** सुखवत्यः **अस्मभ्यम् भूतन** भवत "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपोलुक् । "तप्तनप्तनथनाश्च" ( ७-१-४५ ) इति तस्य तनादेशः ॥ १ ॥

एवमत्र प्रशब्देनार्थस्य सुतरां प्रकटनं भवतीति भाष्यका-रेण प्रशब्दोऽध्याहृतः । अध्वरमित्यनेन संवद्धाद्धिनोतेर्गत्यर्थत्व-मुपपद्यते ॥

अथास्य भाष्यम्—

**प्रहिणुत नो अध्वरं देवयज्यायै, प्रहिणुत ब्रह्मधनस्य सननाय, ऋतस्य योगे यज्ञस्य योगे ॥ याज्ञे शकट इति वा, शकटं शकृदितं भवति ॥ शनकैस्तकतीति वा, शब्देन तकतीति वा ॥ श्रुष्टीवरीर्भूतनास्मभ्यमापः । सुखवत्यो भवतास्मभ्यमापः ॥**

अत्र **शकृदितं भवतीति** शकटशब्दस्य निवर्चनम् । यदा अनड्वान्युक्तः सन्नत्र शकृद्विमुञ्चति तदैतच्छकृता गोमयेनेतं

---

१. दिवसे देहापगमे मित्रः, रात्रौ च वरुणः ॥ उभयाभिमानी अर्यमा सूर्यश्च तयो रात्र्यह्नोरन्तरा कालेऽपि ॥

१. यद्यपि "षणु दाने" ( त० उ० ) इति पठ्यते तत इना दानमात्रं सनिशब्दार्थस्तथापि तत्पूर्वोत्तरमवयोर्याचनालब्ध्योरप्येष वर्तते ॥ तथा चामरः—"सनिस्त्वध्येषणायाञ्चाभिशस्तिर्याच-नार्थने"ति ॥ वेदे लब्ध्यर्थ एव प्रायः पठ्यते ॥

२. सायणेनेमां दुर्गोक्तव्याख्यामुद्धृत्य व्याख्यातवता "एतस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतम्" इत्युक्तम् ॥ तेन दुर्ग-व्याख्यानमेव ततः प्राक्तनटीकात उद्धृतमिति प्रतिभाति ॥ यतः सायणव्याख्यानात् परतनं दुर्गव्याख्यानमिति "अत्र सायणः किमर्थम् ? जीवनायकम् जीवनार्थम्" इत्यादि तल्लेखादेवावसीयते ( नि० वृ० १-३-५ ) स्पष्टे ॥

संगतं भवति । तेन शक्नुदितं सत् शकटमुच्यते । शनकैस्तकतीति वा तद्धि भाराक्रान्तं शनकैर्गच्छति । शब्देन तकतीति वा तद्धि शब्देन गच्छति । यद्यपि तकधातुर्हसने (भ्वा० प०) वर्तते तथापीह गमने (निघं० २-१४-६८)

"चोष्कूयमाण इन्द्र भूरि वामम्" ।

(ऋ० सं० १-३-१-३)

ददिन्द्र बहुवननीयम् ॥

अत्र चोष्कूयमाणः (९५) इत्यनवगतधातुः । ददत् इत्यवगमः । तेनायं स्कुन्धातुराप्रवणे पाणिनीयैः (स्वा०उ०) पठितोऽपीह दानार्थः । क्वचित्त्युदसनार्थश्च । यङि लटः शानच् । "आने मुक्" (पा० ७-२-८२) इति मुगागमः, ददिति ददातेर्लटः शता, "नाभ्यस्ताच्छतुः" (पा० ७-१-७८) इति नुमोऽभावः । अत्रार्थे निगमः चोष्कूयमाण इति । अस्य "नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि । चो० मं मापणिर्भूरस्मदधि प्रवृद्ध ॥" इति स्वरूपम् । हिरण्यस्तूपस्यार्षमैन्द्री त्रिष्टुप् । उद्धिर्वलभिदोर्निष्कैवल्ये शस्यते । सर्वसेनः कृत्स्नसेनायुक्तः इन्द्रः इषुधीन् बाणानामाधारभूतान् निषङ्गान् । "निषङ्गा इषुधिर्द्वयोः" इत्यमरः । न्यषक्त नितरां पृष्ठभागे संयोजितवान् । यस्य एवं तूणान्संनह्य (बध्वा) गोधाङ्गुलित्रवान्भूत्वा । अर्यः स्वामिरूप इन्द्र ईश्वरः सर्वस्य जगतः । "अर्यः स्वामिवैश्ययोः" इति पाणिनिः (पा० ३-१-१०३) यस्य राज्ञो देशे कुटुम्बिनो वा क्षेत्रे वष्टि कामयते क्षेप्तुं तस्यैव गाः समजति समस्ताः क्षिपति इषुभिर्मेघांश्छिन्दन् । "अज गतिक्षेपणयोः" (भ्वा० प०) वर्षं प्रवर्तयत इत्यर्थः । एवं स्तूयमान इन्द्रः प्रत्यक्षीभूतः, यतः प्रत्यक्षकृत उत्तरोऽर्धर्चः । हे प्रवृद्ध प्रकृष्टवृद्धियुक्त ! इन्द्र ! चोष्कूयमाणः ददत् अस्मदधि अस्मासु भूरि बहु वामं वननीयं शतसंपत्करमुदकं जनेभ्यः मापणिर्भूः मावणिक्शीलोऽस्मान्प्रति (मन्दोदकदाता कृपणः) भूः भव । "माङि लुङ्" (पा० ३-३-१७५) सर्वलकारापवाद इति लोडर्थे "न माङ्योगे" (पा० ६-४-७४) इत्यडागमप्रतिषेधः । "गातिस्था–" (पा० २-४-७७) इति सिचो लुक् । किं तर्हि । प्रवृद्धोदक उन्नतचित्तोऽस्मान्प्रति बहूदकदाता भव ॥ ३ ॥

एवमत्र मापणिर्भूर्भूरिवामम् इत्येभिः पदैः संबन्धात् "चोष्कूयमाणः" इत्यस्य ददत् इत्यर्थ उपपद्यते ।

"एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ।" (ऋ० सं० ४-७-३३-१)

व्युदस्यत्येधमानानसुन्वतः सुन्वतोऽभ्यादधात्युभयस्य राजा दिव्यस्य पार्थिवस्य च ॥

अत्र चोष्कूयते (९६) इत्यनवगतधातुः । "व्युदस्यति"-त्यवगमः । तदेतन्निगमभाष्याभ्यां दर्शयति—तत्र तावन्निगमः एधमानेति । अस्य "शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः" इत्यादिः । गर्गस्य बार्हस्पत्यस्येयमार्षम् त्रिष्टुबैन्द्री । अयम् इन्द्रः वीरः वीर्यवान् इति शृण्वे अश्रौषमहम् । श्रूयते इति सायणः । किंकुर्वन् ? उग्रम् उग्रम् अभीक्ष्णमुद्गूर्णास्त्रं शत्रुम् । आदरार्थो द्विरभ्यासः । आदरश्चार्थभूयस्त्वम् । "अभ्यासे भूयांसमर्थं मन्यन्ते" इति हि वक्ष्यति । अथवा उग्रं भीषणं शत्रुं प्रति उग्रमुद्गूर्णबलम् । अत्रार्थे वीर इति अमः सुः "सुपां सुलुग्" (पा० ७-१-३९) इत्यादिनेति द्रष्टव्यम् । दमायन् दमः दमनं बाधनमिच्छन्निति इच्छार्थक्यजन्ताच्छता । दमयितारं शत्रूणाम् । अत्रार्थेऽप्यमः सुः पूर्ववत् । कथं पुनरश्रौषम् ? अन्यमन्यम् प्रथमं नेतव्यमन्यं पश्चान्नेतव्यं चान्यं पूर्वमपरं परस्परव्यवहारेण स्तोतॄन् अतिनेनीयमानः अतिशयेन स्वामीष्टेन कामेन तुष्टूषया "अमुष्मात्सुतादमून्कामानवाप्स्यथ" इत्येवं पुनःपुनर्नेयमानः एधमानद्विट् दीप्यमानानपि (असुन्वतः सोमाभिषवमकुर्वाणान्यज्वनः) द्वेष्टीति क्विप् । अत एवं वैपरीत्येन "सुन्वतोऽभ्यादधाति" इत्यध्याजहार भाष्यकारः । क्व पुनरभ्यादधाति ? "सुकृतस्य लोके" इति सामर्थ्याद्गम्यते । ये हि सुन्वते त इष्टा इन्द्रस्य ये न सुन्वन्ति ते द्वेष्याः । इत्यभिप्रायः । यतोऽयम् उभयस्य दिव्यस्य पार्थिवस्य च मानुषस्य धनस्य राजा ईश्वरः (प्रदाता) । किंच चोष्कूयते व्युदस्यति विशः मनुष्यान् (निघं० २-३-५) एधमानानसुन्वतः इतरांश्च सुन्वतः मनुष्यान् अभ्यादधाति सुकृतस्य लोके इति ॥ १ ॥

एवमत्र एधमानद्विट् इत्यनेन संबन्धात् चोष्कूयतिः व्युदसनार्थं उपपद्यते ॥

अथ सिंहावलोकितकेन पूर्वनिगमस्थपदमुपादाय भाष्यकृदाह—

चोष्कूयमाण इति चोष्कूयतेश्चर्करीतवृत्तम् ॥

चर्करीतवृत्तं यङन्तस्य रूपमिति बोध्यम् । एतच्चोभयत्र द्रष्टव्यमिति उभयान्त एतदुक्तम् ॥

सुमत् स्वयमित्यर्थः ॥

"उपप्रागात्सुमन्मेऽधायि मन्म"

(ऋ० सं० २-३-८२)

१. तथा चामरः "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ॥ लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इति ॥

२. व्यवहारी हि पणिशब्दार्थः ॥ "पण व्यवहारे स्तुतौ च" (भ्वा० प०) तेनेह वणिगुच्यते ॥

१. एतेनात्र एधमानमिति नैधतेर्वृद्ध्यर्थस्यापि तु इन्धीदीप्ताविति (रु. आ.) धातोर्लटः शानच् ॥ मध्ये विकरणव्यत्ययेन श्नमः स्थाने शः । तस्यापित्सार्वधातुकत्वेन ङित्त्वान्नलोपः (पा० ६-४-२४) गुणश्चार्षः ॥ एधतेरप्यर्थतस्तौल्यमेव ॥ यो हि वर्धते स दीप्यतेऽपि ॥

**उपप्रैतु मां स्वयं यन्मे मनोऽध्यायि यज्ञेनेति । आश्वमेधिकोऽयं मन्त्रः ॥**

अथ **सुमत्** ( ९७ ) इत्यनवगतम् । **स्वयम्** इत्यवगमः उपेति । अस्य "देवानामाशा उप वीतपृष्ठः । अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्" ॥ इति शेषः । दीर्घतमस आर्षं त्रिष्टुबश्वदैवत्यम् । अश्वमेधेऽश्वस्तोमीयेन षोडशाहुतयो हूयन्ते तत्रेयं विनियुक्ता । **मन्म** मननीयमर्थजातम् **उपप्रागात्** उपप्रैतु माम् प्रकर्षेणैतु । लोडर्थे लुङ् ( पा० ३-४-६ ) **सुमन्** स्वयं एव । यदनेन यज्ञेन प्राप्नुयामिति **मे** मम मनः अपि **अधायि** अध्यायि, अनेकविधान्संकल्पविकल्पांश्चकार । तत्तदहमेव अहं मनसा ध्यातवानित्यर्थः । किंच अयमपि **वीतपृष्ठः** कान्त-( कमनीय- )पृष्ठोऽश्वः । वीधातुः कान्त्यर्थोऽपि ( अ० प० ) **उपप्रागात्** उपगच्छतु **देवानाम् आशाः** "पूरयितुमि"ति शेषः । यागार्थमागतम् **एनं सुबन्धुम्** शोभनयूपबन्धनमश्वं **देवानां** आशास्समानानां **पुष्टे** पुष्ट्यै पोषणाय भावे क्तः । **चकृम** कुर्मः । वर्तमाने लिट् ( पा० ३-४-६ ) तं च **विप्राः** मेधाविन ऋत्विजः ( निघं० ३-१५-१ ) **ऋषयः** अतीन्द्रियार्थद्रष्टारः । अन्ये वा ( विप्रा ऋषयश्च ) **अनुमदन्ति** अनुमोदन्ताम् ( अनुमन्यन्ताम् ) सम्यक्कृतमिति परितुष्यन्तु लोडर्थेलट्छान्दसः ॥२॥

एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च सुमत् इत्यस्य स्वयम् इत्येष विपरिणाम उपपद्यते ॥

**आश्वमेधिकोऽयमिति** प्रकरणोपप्रदर्शनार्थमाह । एतेन मन्त्रार्थं निर्ब्रुवता प्रकरणमप्युपेक्षितव्यमिति प्रदर्शितं भवति ॥

**दिविष्टिषु दिव एषणेषु ॥ ७ ॥**

**दिविष्टिषु** ( ९८ ) इत्यनवगतम् । **दिव एषणेषु** इत्यवगमः । याभिः क्रियाभिर्दिवमिच्छन्ति गन्तुं ता दिविष्टयः । दिवशब्दोपपदादिषेर्गत्यर्थादिच्छार्थाद्वा करणे क्तिन् । द्यौर्गम्यते प्रार्थ्यते वा याभिस्ता इति व्यक्तोऽर्थः ॥ ७ ॥

उक्तार्थे निगममुपन्यस्यति—

**"स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।"**

( ऋ० सं० ५-७-३३-४ )

**स्थूरमिति** । अस्य "राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि" इत्युत्तरार्धर्चम् । देवातिथेरार्षं बृहती । दानमनया प्रशस्यते । एवमादिकेन तृचेन देवातिथिः कुरुङ्गनाम्नो राज्ञो दानं स्तौति-**त्वेषस्य** दीप्तस्य ( महतः ) **सुभगस्य** शोभन( धन )स्य **कुरुङ्गस्य राज्ञः** संबन्धिनीषु **दिविष्टिषु** दिवः स्वर्गस्य एषणेषु प्राप्तिहेतुभूतासु यागक्रियासु **रातिषु** दानरूपासु दक्षिणात्वेनोपकल्पितासु सत्सु **तुर्वशेषु** मनुष्येषु ( निघं० २-३-१५ ) ( तद्धटकाः ) वयं **स्थूरं** स्थूलं **शताश्वम्** अश्वानां शतेन युक्तम् **राधः** धनम्

१. तथाच स्वयमर्थे सुमदिति निपातः ॥

( निघं० २-१०-१७ ) **अमन्महि** मन्यामहे । अज्ञासिष्म अलभामहीत्यर्थं इति सायणः ॥ ४ ॥

एवमत्र दिविष्टिशब्देन क्रिया उच्यते ताभिर्हि द्युलोकमिष्यते गन्तुम् ॥

अथास्य भाष्यम्—

**स्थूरः समाश्रितमात्रो महान्भवति ॥**

समस्ता हि तत्र मात्रा आश्रिता भवन्ति ॥

अथ स्थूलप्रसङ्गेनाणुशब्दो निरुच्यते—

**अणुरनु स्थवीयांसम् ॥ उपसर्गो लुप्तनामकरणः ॥ यथा संप्रति ॥**

**स्थवीयांसमनु** यो वर्तते स **अणुरि**त्युच्यते । अन्विल्ययं **उपसर्गः** । **लुप्तनामकरणः** । सन् येन प्रत्ययेन न्याय्यमेतत् नाम स्यात्सोऽत्रै लुप्तो न श्रूयत इत्यर्थः । कथं लुप्तः ? **यथा संप्रति** इति । अस्मिन्नामकरणलोपेन प्रयोगसिद्धिः । सांप्रतमिति हि न्याय्यम् तथापि संप्रतीत्येवमपि वर्तमानकालविषयप्रयोगः प्रसिद्धः । एवमिहाप्यनुशब्दे ।

अथ निगमप्रसक्तं निराह—

**कुरुङ्गो नाम राजा बभूव ॥ कुरुगमनाद्वा ॥ कुलगमनाद्वा ॥**

**कुरुगमनाद्वा कुरुङ्गः** । स हि कुरुन्राज्ञः प्रति पुत्रत्वेन गतः । यद्वा कुरून्देशाञ्जेतुं गतः । **कुलगमनाद्वा** । स हि शत्रुकुलानि विजेतुं नित्यमेव गच्छतीति कुरुङ्गः । खच् स च डित् । तेन मुमुटिलोपौ । सर्वमेतत् पृषोदरादित्वात् ॥

अथ कुरुशब्दं निर्वक्ति—

**कुरुः कृन्ततेः ॥ क्रूरमित्यप्यस्य भवति ॥**

स हि शत्रून् कृन्ततीति कुरुः । तथाच "कृती छेदने" ( रु. प. ) इत्यस्मात्कुप्रत्यये उपधाया उत्वं तस्य लोपश्च निपातनात् । रपरत्वं च ( पा० १-१-५१ ) **क्रूरमिति** । एतदपि **अस्य एव कृन्ततेर्भवति** तथाच "स्फायितञ्ची-" त्यतो रगित्यनुवर्तमाने "कृतश्छः क्रू च" ( उ० २-२१ ) इति रक् क्रूरादेशश्च कित्वाद्गुणाभावः ।

अथ कुलशब्दं निर्ब्रवीति—

**कुलं कुष्णातेः ॥ विकुषितं भवति ॥**

**कुष्णातेः** "कुष निष्कर्षे" ( क्र्या० प० ) इत्यस्य तद्धि

१. नामशब्देनात्र सुबन्तं द्रव्यभूतमुच्यते ॥ अयमर्थः—अनुशब्दो हि स्थूलतममनु इत्येवं वर्तमानो यदा सुपासंबन्धान्नामीभवितुमधिकुरुते तदा णत्वं पृषोदरादित्वादासाद्याणुर्भवति ॥

२. सुवृणत्वं च । अत्र—अनुशब्दे ॥

३. अत्राकारेकारेत्वं च कृत्वा सांप्रतमित्येव सम्प्रतिरूपतामापद्यते ॥ तथाच सांप्रतमित्येतदव्ययस्यैव विकृतिभूतं संप्रतीति यास्कोऽभिमन्यते ॥

४. तथाचामरः "एतर्हि संप्रतीदानीमधुना सांप्रतं तथे" ति ॥

विकुषितमिव भवति । विस्तीर्णत्वात् । निष्कोशो हि निष्कोषणं तचान्तर्गतस्य बहिर्निःसारणम् । तदेतत् कुले सजातीयसमूहे प्रायोवृत्त्या भवत्येव यथासमयमिति विकुष्यत इति कुलम् उपसर्गलोपे कुषेः कः षस्य लश्च पृषोदरादित्वात् ।

**दूतो व्याख्यातः ॥**

दूतः (९९) इत्येतदनवगतम् । जूतः इति न्याय्यम् । स हि व्याख्यातः । जवतेर्वा द्रवतेर्वा इत्येवम् (नि० ५-१) तथाच "दुतनिभ्यां दीर्घश्च" (उ० ३-९०) इति क्तप्रत्ययो बाहुलकाज्जवलतेर्द्रवतेर्वा रयतेर्वा धातूनां दूभावश्च । गच्छति हि सः द्रवते वा शैघ्र्यात् । वारयति हि स्वसामर्थ्यादपरमिति दूतः ॥

**जिन्वतिः प्रीतिकर्मा ॥**

**"भूमिं पर्जन्या जिन्वन्ति, दिवं जिन्वन्त्यग्नयः"**

(ऋ० सं० २-३-२३-५१)

**इत्यपि निगमो भवति ॥ (२२)**

**इति श्रीमद्यास्कमु० प्र० नि० शास्त्रे षष्ठाध्यायस्य चतुर्थः पादः ॥ ६ ॥ ४ ॥**

अथ जिन्वति (१००) धातुः स हि प्रीतिकर्मा इत्यर्थवचनमप्रतीतार्थत्वात् । भूमिमिति । अस्य "समानमेतदुदकमुच्चैत्यवचाहभिः" इत्यादिः ॥ एतद्व्याख्यानमग्रे सप्तमाध्याये (९-२३) व्यक्तीभविष्यति ॥ ८ ॥ २२ ॥

इति श्रीमद्यास्कनिरुक्तविवृतौ षष्ठाध्यायस्य चतुर्थः पादः ॥ ६ ॥ ४ ॥ ॥

---

## षष्ठाध्याये पञ्चमः पादः ।

**अमत्रो अमात्रो महान्भवति, अभ्यमितो वा ॥**

अमत्रः (१०१) इत्यनवगतम् । अमात्र इति शब्दसमाधिः । महान्भवति इत्यर्थवचनम् । यो हि महान्भवति न तस्य मात्राः प्रमातुं शक्यन्ते, ततोऽसावमात्रः सन्नमत्र इत्युच्यते । मात्राः सामर्थ्यम् तस्य ह्रस्वः । अभ्यमितो वा स्यादनभिहिंसितः केनचित् । "मिञ् हिंसायाम्" (क्र्या० उ०) मितशब्दस्य मत्रभावः पृषोदरादित्वात् । अत्रार्थे—

**"महाँ अमत्रो वृजने विरप्शीम्"**

(ऋ० सं० ३-२-१८-४)

**इत्यपि निगमो भवति ॥**

अस्य "उग्रं शवः पत्यते धृष्ण्वोजः । नाह विव्याच पृथिवी च नैनं, यत्सोमासो हर्यश्वममन्दन् ॥" इति शेषः । विश्वामित्रस्यार्षं त्रिष्टुबैन्द्री । पृष्ठ्यस्य चतुर्थपञ्चमयोरह्नोर्माध्यन्दिने सवनेऽच्छावाकस्य शस्त्रे सम्पातनामकसूक्तं तत्रेयं विनियुक्ता । योऽयमिन्द्रः महान् प्रभावतः (अतिशयितसामर्थ्यवान्) अमत्रः च अपरिमितमात्रः । वृजने बलोपलक्षिते युद्धे विरप्शी तोष्टूयमानः । विरावणशील इति दुर्गः । विरपणशीलः । भुजास्फालनेन युद्धार्थं शत्रूणामाह्वानकारीति सायणः । तस्य (तादृशस्येन्द्रस्य) उग्रम् उद्गूर्णमभ्युद्यतम् शवः बलम् (निघं० १-२-४१) उदकार्थस्य बलार्थत्वमत्र । धृष्णु शत्रूणां धर्षणशीलम् ओजः पराक्रमलक्षणं तेजः । पत्यते सर्वत्र प्रसरति एनम् एतादृशमहिमोपेतमिन्द्रं पृथिवी विस्तीर्णा भूमिः न विव्याच न व्याप्नोति । अहशब्द एवार्थे । चन इत्यप्यर्थे । तेन द्यौरित्यध्याहृतं भवति । द्यौरपि नैव व्याप्नोति उपमानत्वेन । यद् यदा सोमासः स्वाहाकृताः सोमाः "आज्जसेरसुक्" (पा० ७-१-५०) इति जसोऽसुगागमः । हर्यश्वम् इन्द्रम् अमन्दन् अमादयन् । अतर्पयन्नित्यर्थः । पत्यत इति व्यत्ययेन यक् कर्तरि ॥ ४ ॥

एवमत्र शव इत्यादिसंबन्धादमत्रः अमात्र इत्युपपद्यते ॥

**"स्तवे वज्र्यृचीषमः"** (ऋ० सं० ७-७-६-२)

**स्तूयते वज्र्यृचा समः ॥**

अत्र ऋचीषमः (१०२) इत्यनवगतम् । (ईकारोऽत्रानवगतः) ऋचा समः इत्यवगमः । तथाच "ऋच स्तुतौ" (तु० प०) क्विप्रत्यये ऋचिः "कृदिकारात्-" (पा० ४-१-४५ ग० वा०) इति ङीष् । ऋची स्तुतिस्तया समः "सुषामादि" (८-३-९८) त्वात्षत्वम् । अधिकगुणाध्यारोपेणापि कृता स्तुतिर्यत्र नातिरिच्यत इत्यर्थः । स्तव इति । अस्य "इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः । मित्रो न यो जनेष्वा यशश्चक्रे असाम्या" इति स्वरूपम् । विमदस्यार्षमास्तारपङ्क्तिरैन्द्री । पृष्ठ्यस्य चतुर्थेऽहनि निष्कैवल्ये शस्यते—ऋचीषमः ऋचा समः । यावतैवार्थेन युक्तोचार्यते ऋक्स्तुत्यभिप्रायेण तावानेवासौ भवत्यैश्वर्ययोगात् । वज्री वज्रहस्तः इन्द्रः श्रुतः विख्यातः सर्वासु दिक्षु सः । इह एतस्मिन्कर्मणि अद्य अस्मिन्नहनि अस्मे अस्माभिः "सुपां सुलुक्-" (पा० ७-१-३९) इत्यादिना भिसः शेभावः । स्तवे स्तूयते विजेतुम् । यः इन्द्रः मित्रो न मित्रं इव असामि असमाप्तम् अनन्तमित्यर्थः । यशः आचक्रे आभिमुख्येन सर्वासु दिक्षु करोति । वर्तमाने लिट् (पा० ३-४-६) यथा हि कश्चिदाप्तो मित्रो जनेषु यशः कुर्यादेवम् । य एवंगुणयुक्त इन्द्रः सोऽस्माभिरिह स्तूयते इत्याशयः ॥ २ ॥

---

१. वृजनशब्दो हि बलार्थे पठ्यते (निघं० २-९-२१) सोऽत्र युद्धे भाक्त उपन्यस्तः । न हि तदन्तरा तद्भवति ॥

१. "रप लप व्यक्तायां वाचि" (भ्वा० प०) ततः "रपमृक्रम्यभिकुस्यः शक्" इति बाहुलकात् शक् ॥ विविधं रपन्तीति विरप्शाः स्तोतारः तेऽस्य सन्तीति मत्वर्थे इनिः (पा० ५-२-११५) यद्वा रपणं रप्शं स्तुतिर्विविधं रप्शं यस्येति सायणः ॥ तन्मन्दम् ॥ "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति नियमात् ॥

२. "अथ मित्रं सखा सुहृत्" इत्यमरादौ लौकिकेऽभिधाने नपुंसकमपि मित्रमितिशब्द इह पुल्लिङ्गो व्यत्ययेन (पा० ३-१-८५) निर्दिष्ट इति तथैव व्याख्यातोऽपि ॥

एवमत्र स्तुतिसंबन्धात् शब्दसारूप्याच्च ऋचीषमः—ऋचासमः इत्युपपद्यते ॥

**अनर्शरातिमनश्लीलदानमश्लीलं पापकमश्लीलमश्रिमद्विषमम् ॥**

अथ **अनर्शरातिम्** ( १०३ ) इत्यनवगतम् । **अनश्लीलदानमि**त्यवगमः । विग्रहप्रसक्तस्याश्लीलशब्दस्यार्थमाह—**अश्लीलं पापकम्** इति । न यस्याशाश्लीला रातिर्दानं सोऽनर्शरातिः । अथ शब्दसारूप्यप्रसक्तमाह—**अश्लीलमश्रिमद् विषमम्** तत्सारूप्योपपत्तितोऽश्रिमदेवाश्लीलमित्युच्यते । अत्रार्थे—

**"अनर्शरातिं वसुदामुपस्तुहि ॥"**

( ऋ० सं० ६-७-३-४ )

**इत्यपि निगमो भवति ॥**

अस्य "भद्रा इन्द्रस्य रातयः । सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन्" इति शेषः । "श्रायन्त इव सूर्यम्" इत्यस्या ( नि० ६-८ ) अनन्तरैव । नेमस्यार्षमैन्द्री सतोबृहती । हे स्तोतः ! **अनर्शरातिम्** अपापदानमेनमिन्द्रम् **वसुदा** वसुदातारम् **उप** उपगम्योपगम्य चेतसा **स्तुहि** । कुतः ? यस्मात् **इन्द्रस्य** अस्य **रातयः** दत्तयः ( दानानि ) **भद्राः** भन्दनीयाः स्तुत्याः "वदि अभिवादनस्तुत्योः" "भदि कल्याणे सुखे च" ( भ्वा० आ० ) अत्र चास्तुतावप्यत्र पठन्ति । किंच **सः** इन्द्रः स्वकीयं **मनः दानाय** अभीष्टप्रदानाय **चोदयन्** प्रेरयन् **विधतः** परिचरतः **अस्य** स्तोतुः **कामम्** इच्छाम् **न रोषति** न हिनस्ति । "रुष हिंसायाम्" ( भ्वा० प० ) य एवं स्तुत्वा याचते तस्मै कामान्प्रयच्छतीत्यर्थः ॥ ४ ॥

एवमत्र शब्दसारूप्यादर्थाविरोधाच्च अनर्शरातिम्=अनश्लीलदानम् इत्युपपद्यते ॥

**अनर्वा अप्रत्यृतोऽन्यस्मिन् ॥**

**अनर्वा** ( १०४ ) इत्यनवगतम् । **अप्रत्यृतः** इत्यवगमः । यः **अन्यस्मिन्** आश्रितो न भवति । स्वप्रधान एव तिष्ठति सः अनर्वा इत्युच्यते । तथाच अर्तेः "अन्येभ्योऽपि दृश्यन्ते" ( पा० ३-२-७५ ) इति वनिप् । नञ्समासः । **अप्रत्यृतोऽप्रतिगतोऽन्यस्मिन्** अन्यमनाश्रितः स्वतन्त्र इति स्फुटोऽर्थः ॥ अत्रार्थे निगमो भवति—

**अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ॥** ( ऋ० सं० २-५-१२-१ )

**अनर्वाणमि**ति । अस्य "गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः" इत्युत्तरार्धर्चम् । अगस्त्यस्यार्षं बार्हस्पत्या त्रिष्टुप् । हे स्तोतः ! **अनर्वाणं** स्वेन महिम्ना युक्तम् अप्रतिगतं कंचिदन्यं प्रत्यधीनत्वेन **वृषभम्** वर्षितारम् **मन्द्रजिह्वं** मदनजिह्वं मोदनजिह्वं वा । मदयितृघोषम् । हर्षकरो वा जनानां तस्य स्तुतिलक्षणः घोषः "जिह्वाघोष" इति हि वाङ्नामसु पठितम् ( निघं० १-११-२९-३० ) नव्यं नवतरं स्तुत्यम् "णु स्तुतौ" ( अ० प० ) "अचो यत्" ( पा० ३-१-९७ ) **बृहस्पतिं** वृहतो मन्त्रस्य पालयितारम् एतन्नामकं देवम् **अर्कैः** अर्चनीयैः स्तोमैः अर्चनसाधनैर्मन्त्रैः । **वर्धया** वर्धय प्रवृद्धं कुरु । दीर्घ आर्षः । **सुरुचः** शोभनदीप्तेः **नवमानस्य** स्तूयमानस्य । कर्मणि कर्तृप्रत्ययो लटः शानच् "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुगभावः । **यस्य** बृहस्पतेः कर्मणि षष्ठ्यः । रोचमानं स्तूयमानं यं **गाथान्यः** गाथेति वाङ्नाम (नि० १-११-३७) स्तुतिवचसो नेतारः **देवाः** व्यवहर्तारः । "दिवु क्रीडाविजिगीषाव्यवहारादौ" ( दि० प० ) अच् ( पा० ३-४-१३४ ) **मर्ताः** मनुष्याः होत्रादयः । यद्वा नवमानस्य स्तुवानस्य यजमानस्य संबन्धिनस्ते **आशृण्वन्ति** अन्तर्भावितण्यर्थः । आश्रावयन्ति । दुर्गस्तु—गाथान्यः स्तुतिप्रापणार्हा देवाः सुरुचः सुदीप्तिमन्तः यस्य शुष्मं ( बलम् इति शेषः ) आभिमुख्येन स्थित्वा शृण्वन्ति आदरेण । मर्ताश्च नवमानस्य नवो हि मानस्तस्य अहन्यहनि अनया स्तुत्या स्तुत्यस्य भवति तेनासौ नवमानस्तस्य । अथवा नवमानस्य प्रशासत इत्यर्थः । अथवाऽयमन्यो मन्त्रार्थः स्यादैतिहासिकपक्षेण—मन्द्रजिह्वः हर्षकारी हि जिह्वा तस्य स्तुतिः । गाथानीः स एव पौरोहित्येन गाथाः स्तुतीर्नयति देवान्प्रति । स एव सुरोचनः । तस्यैव च—नवमानस्य—स्तुवतः देवा आशृण्वन्ति मर्ताश्च "बृहस्पतिर्देवानां पुरोहितः" इति ह विज्ञायते । तस्मादेवमुपपद्यते इत्येवमाह ॥ १ ॥

एवं मन्त्रार्थाविरोधात् अनर्वा—अप्रत्यृतः इत्युपपद्यते ॥

अथास्य भाष्यम्—

**अनर्वमप्रत्यृतमन्यस्मिन् वृषभं मन्द्रजिह्वं मदनजिह्वं मोदनजिह्वमिति वा ॥ बृहस्पतिं, वर्धय नव्यमर्कैरर्चनीयैः स्तोमैः ॥**

**स्तोमैरि**ति । स्तोमो नाम सोमसाध्येषु यागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः । तैः ।

**असामि, सामि प्रतिषिद्धम् ॥ सामि स्यतेः ॥**

अथ **असामि** ( १०५ ) इत्यनवगतम् । **सामि प्रतिषिद्धम्** । सामीति समाप्तमुच्यते तस्य प्रतिषेधः असामि । इत्यवगमः । असमाप्तम् अनन्तमित्यर्थः । अथ सामि कस्मात् ? इत्युच्यते—**सामि स्यतेः** षोऽन्तकर्मणीति धातोर्मिन्प्रत्यये आलम् ( पा० ६-१-४५ ) अव्ययमेतत् । "सामि त्वर्धे जुगुप्सिते" इत्यमरः ॥ अत्रार्थे निगमो भवति—

---

१. जिह्वाशब्देनात्र स्तुतिर्लक्ष्यते ॥

२. तथा च षष्ठ्यन्तमेतत्सुरुच इति च नवमानस्य विशेषणम् ॥

३. अत्र पक्षे कर्तर्येव प्रत्ययः । शपो लुगभावमात्रं विशेषः । छान्दसः ॥

**"असाम्योजो बिभृथा सुदानवः ॥"**

( ऋ० सं० १-३-१९-५ )

**असुसमासं बलं बिभृत कल्याणदाना: ॥ १ ॥ (२३) ॥**

असामीति । अस्य "असामि धूतयः शर्वः । ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्" इति शेषः । घोरपुत्रस्य कण्वस्यार्षम् । सतोबृहती मारुती । हे **सुदानवः !** कल्याणदानाः **मरुतः !** यूयम् **असामि** असमाप्तमनन्तमोजः बलं **विभृथ** धारयथ । हे **धूतयः !** कम्पनकारिणो मरुतः ! **असामि** संपूर्णं **शवः** बलम् **परिमन्यवे** कोपपरिगताय ( प्रकृष्टक्रोधाय ) **ऋषिद्विषे** ऋषीणां द्वेषं कुर्वते । शत्रवे ( तद्विनाशार्थम् ) **द्विषं** द्वेषकारिणम् हन्तारं **सृजत** । अत्र दृष्टान्तः-**इषुं न** यथा शत्रोरुपरि बाणं मुञ्चन्ति तद्वत् । दुर्गस्तु-इषुमिव द्विषं सर्वलोकद्वेष्यतां सृजत क्षिपतेत्येवमाह । एतन्मते भावप्रधानो निर्देशो द्विषमिति ॥ ५ ॥

एवमत्र असामि=असुसमानम् उच्यतेऽर्थाविरोधात् ॥१॥(२३)

अथ **गल्दया (१०६)** इत्यनवगतम् । **धमनिः** इत्यभिधेयवचनम् । नाडीति तदर्थः । "नाडी तु धमनिः शिरा" इत्यमरः । सा हि गलितधानी-गलितं हि तस्यां धीयत इति गल्धा सती गल्दा इत्युच्यते दधातिददात्योरसकृद्विनिमयस्य दर्शितत्वात् । तदत्रार्थे निगममेव पुरो दर्शयति—

**"मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा । भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत्" ॥ ५ ॥**

( ऋ० सं० ५-७-१३ )

**मा त्वेति** । मेधातिथेरार्षम् । ऐन्द्री बृहती । महाव्रते बृहतीसहस्रे विनियुक्ता । हे इन्द्र ! **सवनेषु** यज्ञेषु **सोमस्य गल्दया** गलितरसधान्या धमन्योपलक्षितं **त्वा** त्वाम् । असत्प्रत्तसोमरसपायिनमिति फलितोऽर्थः । **सदा** सर्वदा **याचन्** प्रार्थयमानः **गिरा** गीत्या स्तुत्या च युक्तः अहं **माचुक्रुधम्** माक्रोधयानि । "माङि लुङ्" (पा० ३-३-१७५) सर्वलकारापवाद इति लोडर्थेऽत्र सः । "न माङ्योगे" (पा० ६-४-७४) इत्यडागमाभावः । बहुशो याच्यमाने त्वयि क्रोधो जायते तं सोमस्य गालनेन स्तुत्या चापनयामीत्यर्थः । कीदृशं त्वाम् ? **भूर्णिम्** भर्तारम् **मृगं न** सिंहमिव भीमम् । स्वामिन इन्द्रस्य भृशं याचने लौकिकन्यायं दर्शयति-लोके हि **कः** वा पुरुषः **ईशानम्** ईश्वरं प्रभुं ( स्वामिनं ) **न याचिषत्** न याचेत । लेट्यत्र सिवागमः ( पा० ३-१-३४ ) सर्व एव हि याचते । अतोऽहमपि त्वां स्वामिनं याचे इति भावः । अत्र याचिषदित्यस्य याचिष्यत इति भाष्यव्याख्यानमार्थिकं बोध्यम् ५

एवमत्रेन्द्रस्य या गलना धमनिः यया सोम आगल्यते, सा तेनैव आगलनेन ( आस्रावस्रावणेन धमनेन पूरणेन वा ) उपलक्ष्यमाणा "गल्दा" इत्युच्यते । नह्येवमर्थविरोधोऽस्ति ।

अथास्य भाष्यम्—

**मा चुक्रुधं त्वां सोमस्य गालनेन सदा याचन्नहं गिरा गीत्या स्तुत्या भूर्णिमिव मृगं न सवनेषु चुक्रुधं क ईशानं न याचिष्यत इति गल्दा धमनयो भवन्ति ॥**

**गलनमासु धीयते ।**

अत्र **सोमस्य गालने** स्वार्थिकार्थनिर्देशः । **गल्दा धमनयो भवन्तीति** । उत्तरभाष्यानुसारात् । अथात्र ( मन्त्रे ) न धमनिलिङ्गं विशिष्टमस्तीत्यतो विशिष्टलिङ्गमन्यमुदाहरति—

**"आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम् ॥"**

इति । हे इन्द्र ! **त्वा** त्वाम् **इन्दवः** सोमाः **आविशन्तु** । कथम् ? याः **धमनीनाम्** नाडीनाम् मध्ये **आगल्दाः** आगलना धमनयः । (याभिरनुप्रविष्टाः सोमा नवं मदमुत्पादयन्ति) ताभिरधोवाहिनीभिर्धमनीभिराविशन्तु । शेषोऽत्र मृग्यः ॥

एवमिह धमनीशब्दसहयोगी "गल्दाः" शब्द इति कृत्वा गल्दा=धमनिः इत्युपपद्यते ॥

**नानाविभक्तीत्येते भवतः ॥ आगलना धमनीनामित्यत्रार्थः ॥ २ ॥ ( २४ )**

गल्दया-गल्दाः **इत्येते** पदे **नानाविभक्ति** यथा स्यात्तथा **भवतः** । तृतीयान्तं प्रथमान्तं चेत्यर्थः । नतु नानार्थे । अत्र

---

१. यद्यप्योजः शवः इत्यादिक उदकार्थे पठितः ( निघं० १-१२ ) तथाप्युदकार्थकानां बलार्थत्वमित्यसकृदभिहितं न विसर्तव्यम् । शव इति तु बलार्थेऽपि ( निघं० २-९-३ ) ॥

२. अत्र हे असामिधूतयः ! असमाप्तगतयः ! इत्येवं दुर्गो व्याख्यत् । धवति धावति इति गतिकर्मसु पठितमिति च ॥

३. सोमरसादिकम् ॥

४. "यज्ञः सवोऽध्वरो यागः" इत्यमरेपि सवनं सव इत्यनर्थान्तरेण प्रयोगः ॥

१. भाष्ये तु-भूर्णिमिवेत्युपमे । तेनात्र भ्रमणशीलो भूर्णिः कः पुनरसौ व्याघ्रो वा सिंहो वा । स हि भ्रमणशीलो बिभर्त्ति च शृगालादीन् तेनेन्द्र उपमीयते । यथा शृगालादयो लाङ्गूलचालनादिनोपचारेण सर्पमाणास्तं न क्रोधयन्त्येवमहं सोमसंप्रदानपूर्विकया स्तुत्योपसर्पमाणो मा चुक्रुधं भवन्तमिति दुर्गः । अत्रार्थे घूर्णिं मृगमिति समानाधिकरणं बोध्यम् ॥

२. "मृगः पशौ कुरङ्गे च" इति मेदिन्यादौ पशुसामान्यवचनो मृगशब्द इह सिंहार्थे प्रयुक्तः ॥

३. मुद्रित ऋक्पुस्तके तु "आत्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । नत्वामिन्द्रातिरिच्यते" इत्येव पाठो दृश्यते ॥

दुर्गः—आह कोऽभिप्रायः ? इति, उच्यते—पूर्वस्मिन्मन्त्रे यद्यपि धमनिशब्दो नास्ति, तथापि निगमे "गल्दा" शब्देन धमनिरेवोच्यते। तत्र गल्दया गालनेन आस्रावणेन गिरा स्तुत्या च युक्तोऽहमित्येवं यथाभाष्यं व्याख्यातम् ॥ २ ॥ ( २४ )

अथ **जल्हवः** ( १०७ ) इत्यनवगतम्। **ज्वलनहीनाः** इत्यवगमः। ज्वलतेः क्विपि ज्वलनो ज्वल् ज्वलं जहातीति मृगय्वादित्वात् ( उ० १-३६ ) कुप्रत्ययः। पूर्वपदस्य जल्भावश्च निपात्यते ज्वलनेनाग्निना हीना इत्यर्थः। अत्रार्थे निगममुदाहरति—

**"न पापासो मनामहे नारायासो न जल्हवः॥"**

( ऋ० सं० ६-४-३७-६ )

**न पापास** इति। अस्य "यदिंं स्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै" इत्युत्तरार्धर्चम्। प्रगाथपुत्रस्य भर्गस्यार्षं बृहती ऐन्द्री। तस्यामेव तृचाशीत्यां विनियुक्ता। वयं **पापासः** पापाः पापवन्तः मत्वर्थेऽच् ( पा० ५-२-१२७ ) "आजसेरसुक्" ( पा० ७-१-५० ) इति जसोऽसुगागमः। कृतकिल्विषाः ( ब्रह्मचर्याध्ययनतपोदानरहिताः ) **न** भवामः। अथ मतम् एतैरपि युक्तो यो निर्धनः स पाप एवेति, तत्राह **नारायासः** नारायाः नाधनावयम्। पूर्ववदसुक्। अथापि स्याद्धनवत्त्वेऽपि सति अनाहिताग्नित्वाज्ज्वलनहीनत्वेन पापवत्त्वमिति, तदपि नेत्याह—न **जल्हवः** न वयं ज्वलनहीनाः किंतर्ह्याहिताग्नयो वयम्। अत **इन्द्रं मनामहे** मन्यामहे जानीमः। "मन ज्ञाने" ( दि० आ० ) बाहुलकत्वाद्विकरणव्यत्ययः ( पा० ३-१-८५ ) मत्वा च स्तुम इत्यर्थः। अत्रोपपत्तिमाह—**यदिंं** यस्मादेव कारणादिदानीं वयं **वृषणं** वर्षितारं कामानामपां चेन्द्रं **सुते** सोमेऽभिषुते। **सचा** सहिता वयमेतेन **सखायं** सहभूतस्य सोमपानस्य ख्यापयितारम् ( अमीभिः सह मया सोमः पीत इत्येवं वक्तारं ) **कृणवामहै** कुर्मः। न हि पापानामधनानामनाहिताग्नीनां चेन्द्रः सखा भवतीत्यर्थः ॥ १ ॥

एवमत्र "जल्हवः=ज्वलनहीनाः" इत्युपपद्यते शब्दसारूप्यादर्थाविरोधाच्च ॥

अथास्य भाष्यम्—

**न पापा मन्यामहे नाधना न ज्वलनेन हीनाः॥ अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपोदानकर्मेत्यृषिरवोचत् ॥**

अथ—

**बकुरो भास्करो भयङ्करो भासमानो द्रवतीति वा ॥ ३ ॥ ( २५ )**

अत्र **बकुरः** ( १०८ ) इत्यनवगतम्। **भास्करादयः** शब्दसमाधयः। एषां बकुरभावः पृषोदरादित्वात्। दुर्गस्तु भास्वद्द्रवणस्यापि तमाह ॥ ३ ॥

**"यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा।**

**अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय" ॥ १ ॥** ( ऋ० सं० १-८-१७ )

**यव**मिति। कक्षीवत आर्षम् आश्विनी त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे **अश्विना** अश्विनौ! औङ आकारः ( पा० ७-१-३९ ) एवमग्रेऽपि बोध्यम्। युवां द्युस्थानदेवते इति कृत्वा यथा **वृकेण** लाङ्गलेन ( हलेन ) कर्षणद्वारा जनाः कर्षका **यवं** वपन्ति तद्वत् **बकुरेण** ज्योतिषा (सूर्यरूपेण) वर्षणद्वारा **वपन्ता** निवपन्तौ पितृभ्यो जलमर्पयन्तौ तत्पुत्रनप्त्रादिभिः। अश्विनोरनुग्रहेण हि वर्षणेन जलं जनैर्लभ्यते नान्यथा, अत्र निरुपक्षिप्तो भाष्यकारेण। "पितृदानं निवापः स्यादि"ति चामरः। अथच **दस्रा** दस्रौ दर्शनीयौ युवां **मनुषाय** मनुष्याय। मनेरौणादिक उषन्प्रत्ययः। तदर्थम् **इषम्** अन्नम् ( निघं० २-७-१४ ) **दुहन्ता** दुहन्तौ प्रपूरयन्तौ ( मेघात्क्षारयन्तौ ) किंच **दस्युम्** उपक्षयितारम् ( नाशयितारम् ) दुर्भिक्षं "दसु उपक्षये" ( दि० प० ) युच्प्रत्यय औणादिकः। बकुरेण जलसमूहेनैव **अभिधमन्ता** अभिघ्नन्तौ। धमतिर्वधकर्मा ( निघं० २-२०-३३ ) **आर्याय** ईश्वरपुत्राय ऋज्राश्वाय **उरु** विस्तीर्णमविकलं **ज्योतिः** चक्षुराख्यम् **चक्रथुः** कृतवन्तौ। स ह्यन्धीभूतो युवाभ्यां चक्षुष्मान्कृत इति भावः ॥१॥

एवमिह ज्योतिःसमूहो जलसमूहश्च बकुरशब्देनोच्यते। शब्दार्थाविरोधात्। स हि भास्करो भयङ्करश्च भवति, भासमानश्च द्रवति जलरूपः।

अथास्य भाष्यम्—

**यवमिव वृकेणाश्विनौ निवपन्तौ वृको लाङ्गलं भवति ॥ विकर्तनात् ॥ लाङ्गलं लङ्गतेः ॥ लाङ्गूलवद्वा ॥ लाङ्गूलं लगतेर्लङ्गतेर्लम्बतेर्वा ॥ अन्नं दुहतौ मनुष्याय, दर्शनीयावभिधमन्तौ दस्युं बकुरेण ज्योतिषा वोदकेन वा,ऽऽर्य ईश्वरपुत्रः ॥**

१. इति ऋषिरात्मानमाहेति सायणोक्तोऽर्थः। वस्तुतस्तु—वयमेवंविधा नेति मनामहे यत् इदिंनु इदानीमेव वृषणं कामानां वर्षितारमिन्द्रमिमं सचा सखायं कुर्मः इत्येवार्थः। नहि कृतकिल्विषादीनां स सखा भवितुमर्हतीति भवाम वयमपाप्मानो धनवन्तश्चाहिताग्नयश्चेत्येतयोपपत्त्याऽऽध्याधानधनपुण्यानामेतदेकफलं यत्सोमेनेन्द्रं यजामह इति वर्तुलोऽर्थः ॥

१. उपलक्षणविधया सर्वं धान्यजातम् ॥

२. अत एव मनुष्यशब्दं मनोरपत्यं मनुषो वेति निर्वचनं भाष्यकृद्यास्क आह ( नि० ३-७-७ ) ॥

३. ज्योतिषा वोदकेन वेति भाष्यपाठात् ॥

४. ज्योतिःसमूहः ॥

अत्र यवमिवेति लुप्तोपमनिर्देशं भाष्यकृदाह । लाङ्गलं हलम् "कृषको लाङ्गलं हलम्" इत्यमरः । विकर्तनात् इति वृकशब्दनिर्वचनम् । स हि भूमिं विकृन्तति ( विच्छिनत्ति ) "कृती छेदने" (तु० प०) इगुपधलक्षणः कः (पा०३-१-१२५) पृषोदरादित्वात् (पा०६-३-१०९) रूपसिद्धिः । अथ पर्याय-प्रसक्तं लाङ्गलं निर्वक्ति-लाङ्गलं लङ्गतेः "लिगि गतौ" (भ्वा० प०) इत्यस्मादलच् आदिवृद्धिश्च निपातनात् (पा०३-३-१) अथ वा लाङ्गूलवद्वावो भुवः पश्चात् कृष्यते इति तन्नाम्नस्तुल्याभिधानं लाङ्गलमुच्यते । लाङ्गूलं त्रिधा निर्वक्ति लगतेरित्यादि । "लगे सङ्गे" ( भ्वा० प० ) "लगि गतौ" (भ्वा० प०) "लबि अवस्रंसने" (भ्वा० आ०) त्रिभ्योऽप्यलच् प्रकृतेश्च लाङ्गभावः पृषोदरादित्वात् । ईश्वरपुत्रः ईश्वरनामा कश्चनर्षिस्तस्य पुत्रोऽर्कपत्राणि स्वयं पतितानि भक्षयन्नन्धीभूतो गामनुसरन्नधिशायमन्धकूपे पतितो गुरोरुपदिष्टेनाश्विमन्त्रेण जप्तेन चक्षुष्मान्जात इति भारत आख्यायते ॥

अथ बेकनाटान् (१०९) इत्यनवगतम् । द्विगुणकारिणो वा, द्विगुणदायिनो वा, द्विगुणकामिनो वा, इति शब्दसमाधयः । अत्र देवराजः—एकं कार्षापणमृणिकाय प्रयच्छन् द्वौ मह्यं प्रदातव्याविर्त्येवमभिनयेन दर्शयन्ति । ततो द्विशब्दादेकशब्दा-न्नटयतेश्च बेकनाटाः । एतदेते नाटाः द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणं कामयन्त इति वेति । द्व्येकयोर्नाटा नटनं तद्वन्तो बेकनाटा । मत्वर्थीयस्य लुक् । नटेर्घञि नाटः । द्व्येकशब्दस्य बेकभावः (पा० ६-३-१०९) वार्धुषिका अभिधेया इति । तथा च भाष्यम्—

**बेकनाटाः खलु कुसीदिनो भवन्ति द्विगुण-कारिणो वा द्विगुणदायिनो वा द्विगुणं काम-यन्त इति वा ॥**

१. सायणस्तु—आर्याय विदुषे । मनुषशब्दो मनुशब्दपर्यायः । मनुषाय मनवे मनोरर्थं हे दस्रा दर्शनीयावश्विनौ ! वृकेण लाङ्ग-लेन कर्षकैः कृष्टदेशे यवं यवाद्युपलक्षितं सर्वं धान्यजातं वपन्ता वापयन्तौ, तथा इषम् । अन्ननामैतत् । तत्कारणभूतं वृष्ट्युदकं च दुहन्ता ( दुहन्तौ ) मेघात्क्षारयन्तौ; तथा दस्युम् उपक्षयका-रिणमसुरपिशाचादिकं बकुरेण बकुरो नाम भासमानो वज्रः तेनाभिधमन्ता अभिधमन्तौ । धमतिर्वधकर्मा । अभिघ्नन्तौ एवं त्रिविधं कर्म कुर्वन्तौ युवां उरु विस्तीर्णं ज्योतिः स्वकीयं तेजः माहात्म्यं चक्रथुः कृतवन्तौ । दर्शितवन्तावित्यर्थः । यद्वा त्रिवि-धकर्माचरणे आर्याय विदुषे मनवे उरु विस्तीर्णं सूर्याख्यं ज्योति-श्चक्रथुः कृतवन्तौ, जीवन् हि सूर्यं पश्यति तद्धेतुभूतानि त्रीणि कर्माणि युवाभ्यां कृतानीति भावः इत्याह ॥

२. द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः । बे इत्यप-भ्रंशो द्विशब्दार्थे ॥

इति । अत्रार्थे निगममुदाहरति—

**"इन्द्रो विश्वान् बेकनाटाँअहर्दृश उत क्रत्वा पणीँरभि ॥"** ( ऋ० सं० ६-४-३१-५ )

**इन्द्रो यः सर्वान्बेकनाटानहर्दृशो य इमान्य-हानि पश्यन्ति न पराणीति वाभिभवति कर्मणा पणींश्च वणिजः ॥ ४ ॥ ( २६ )**

इन्द्र इति । अस्य "कदू महीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम्" इत्यादिः । प्रगाथस्य कलेरार्षम् ऐन्द्री बृहती । महाव्रते बार्हस्पत्यां तृचाशीत्यां विनियुक्ता । कदु कदा खलु अस्य इन्द्रस्य तविषीः बलानि (निघं० २-९-१०) महीः महान्ति अधृष्टाः अधृष्टानि अधर्षकाणि । कर्तरि क्तः । (अनभिभावकानि) "आसन्नि"ति शेषः । कदु कदानु खलु वृत्रघ्नः वृत्रहन्तुरिन्द्रस्य हन्तव्यम् अस्तृतम् अहिंसितमभवत् । स्तृणातिर्वधकर्मा ( निघं०२-१९-१२ ) न कदाचिदित्यर्थः । अथवा अस्य महान्ति बलानि सेनालक्ष-णानि कदापि अधृष्टानि अन्यबलैरहिंसितानि । तथा वृत्रघ्नः शारीरं बलम् अस्तृतम् अन्यैरहिंस्यम् ईदृशेन द्विविधेन बलेन इन्द्रः विश्वान् सर्वान् बेकनाटान् कुसीदिनः (वृद्धिजी-विनो वार्धुषिकान्) अहर्दृशः अहःशब्देन तदुत्पादक आदि-त्योऽभिधीयते तं पश्यन्तीत्यहर्दृशः । ननु सर्वे सूर्यं पश्यन्ति कोऽत्र विशेष इति ? उच्यते इहैव जन्मनि सूर्यं पश्यन्ति ते न जन्मान्तरे । ते हि लुब्धा अयष्टारोऽन्धे तमसि मज्जन्तीति भावः। अथ वा लौकिकान्येवाहानि पश्यन्ति न पारलौकिकान्यहानि अदृष्टानि । दृष्टप्रधाना हि नास्तिकाः विषयभोगलोलुपाः । अस्य दुष्कृतस्य कर्मणः कोऽपि फलपरिणामो भविष्यतीत्येव भावि न पश्यन्ति । यद्वा अहान्येव ये पश्यन्ति गणयन्ति कुसीदग्रहणाय तेऽहर्दृशः । अत ईदृशान् पणीन् वणिजश्च क्रत्वोत कर्म-णैव । क्रतुरिति कर्मनाम ( निघं० २-१-१० ) "जसादिषु छन्दसि वावचनम्" ( पा० ७-३-१७ वा० ) इति नाभावा-भावे यण् । उत एवार्थे अभि अभिभवति । उपसर्गबलेन योग्य-क्रियाध्याहारः । यद्वा पणीनुत पणीनेवाभिभवति, न यष्टॄरम् । तथा चैषां निन्दा स्मर्यते । "गोरक्षकानापणिकाँस्तथा च कारु-शीलकान् । प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥" इति । अत्र पणीन् अभि इति स्थिते "दीर्घादटि समानपादे"

१. मानेन स्वगुणेन ( परिमाणेन ) अन्यान्स्वसादृनाजहा-त्यतिक्रामतीति महीति मानशब्दाज्जहातेश्च मही । पृषोदरादि-त्वात् ( पा० ६-३-१०९ ) ॥

२. ३. यष्टारस्तु वदान्या वार्धुषिका वणिजोऽपि माह्यास्ता एव भवन्ति देवानामपीत्याख्यायते । "दीक्षितस्य कदर्यस्य वदान्यस्य च वार्धुषेः । मीमांसन्तः समं देवाः सममन्नमकल्पयन् ॥ १ ॥ तान्प्रजापतिराहैत्य मा कृध्वं विषमं समम् । श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ २ ॥" इति ॥

(पा० ८–३–९) इति नस्य रुत्वम् । "अत्रानुनासिकः पूर्वस्य तु वा" (पा० ८–३–२) इत्यनुनासिकः ॥ ५ ॥

एवमत्र बेकनाटाः कुसीदिनः इत्युपपद्यतेऽर्थाविरोधात् ॥ ४ ॥ ( २६ )

अथ **अभिधेतन** (११०) इत्यनवगतम् । **अभिधावत** इत्यवगमस्तत्र निगमः—

**"जीवान्नो अभिधेतनादित्यासः पुरा हथात् । कद्ध स्थ हवनश्रुतः ॥"** ( ऋ० सं० ६–४–३३ )

**जीवान्न** इति । एतस्यार्षमुक्तं भाष्यकारेणैव एवं सर्वत्र परिज्ञेयमार्षमिति । गायत्री आदितेयी । हे **आदित्यासः**! आदित्याः! "आज्जसेरसुक्" (पा० ७–१–५०) इति जसोऽसुगागमः । **नः** अस्मान् **जीवान्** इदानीं जीवतः सतः **अभिधेतन** अभिधावत । अभिधावनं कुरुत रक्षणाय । **पुरा हथात्** पूर्वहननात् मृतेः पूर्वम् अस्मान्संभावयत । हे **हवनश्रुतः**! आह्वानश्रोतारः! **कद् ह स्थ** क्वनुभवथ । यूयमार्तानामस्माकमाह्वानं श्रुत्वा शीघ्रमागच्छतेत्यर्थः । कोः कदादेश आर्षः । "वा ह च छन्दसि" (पा० ५–३–१३) इति किमः सप्तम्यन्ताद्धप्रत्ययः ॥ ५ ॥

एवमत्र पुरा हथादित्यनेनाभिसंबन्धात् [illegible] अभिधावते इति विपरिणाम उपपद्यते ॥

अथास्य भाष्यम्—

**जीवतो नोऽभिधावताऽऽदित्याः पुरा [illegible]नात् ॥ क नु स्थ ह्वानश्रुत इति मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते ॥**

अत्र दुर्गः—ऋषेर्वा मत्स्यवधकारुण्याभिभूतस्यैतदार्षं मत्स्यानां वा केचिन्मन्यन्ते इति । अथ निर्वचनम्—

**मत्स्या मधा उदके स्यन्दन्ते, माद्यन्तेऽन्योन्यं भक्षणायेति वा ॥**

मधु इत्युदकनाम ( निघं० १–१२–११ ) तत्र हि ते **स्यन्दन्ते** गच्छन्ति । "स्यन्दते कसति" इत्येवं गतिकर्मसु पठितम् ( निघं० २–१४ ) **माद्यन्ते** हृष्यन्ति । **अन्योन्यमिति** । मत्स्या हि इतरेतरभक्षणजीविनः ॥

अथ प्रसक्तानुप्रसक्तं जालं निर्वक्ति—

**जालं जलचरं भवति ॥ जले भवं वा ॥ जलेशयं वा ॥**

**जलचरं** तद्धि बहुधा जल एव चरति मत्स्यघाताय । **जले भवं वा** जले वा भवति । **जले वा शेत** इति जलशयं सज्जालमिति **भवति** निपातनात् ( पा० ६–३–१०९ )

१. "कोः कत्तत्पुरुषेऽचि" ( पा० ६–३–१०१ ) इत्यत्र "अर्थे विभाषा" ( पा० ६–३–१०० ) इत्यतो विभाषेत्यनुवृत्तेर्व्यवस्थितविभाषाश्रयणादिति भावः ॥

**अंहुरोऽहस्वानंहूरणमित्यप्यस्य भवति ॥**

**"कृण्वन्तं हूरणादुरु"** ( ऋ० सं० १–७–२३ )

**इत्यपि निगमो भवति ॥**

**अंहुरः** (१११) इत्यनवगतम् । **अंहस्वान्** इत्यवगमः । अंहः पापम् । "अंहोदुरितदुष्कृतम्" इत्यमरः । ततो रो मत्वर्थे । अंहःशब्दस्यांहादेशो निपातनात् ( पा० ६–३–१०९ ) **अंहूरणमि**त्यादि प्रासङ्गिकम् । एवमपि हि प्रयोगो भवतीति । अत्र निगमः—

**"त्रितः कूपेऽवहितो देवान्हवत ऊतये । तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी" ॥ १ ॥** ( ऋ० सं० १–७–२३ )

**इति हि मन्त्रस्वरूपम् ॥ २ ॥**

**त्रित** इति । इयमुत्तरा च अपां पुत्रस्य त्रितस्य कूपे पतितस्य कुत्सस्य वार्षम् । वैश्वदेवी पङ्क्तिः । प्रातरनुवाकाश्विनयोर्विनियुक्ता । **कूपे अवहितः** पतितस्त्रितः एतत्संज्ञ ऋषिः **ऊतये** अवनाय "ऊतियूति—" ( पा० ३–३–९७ )इत्यादिनाऽवतेः क्तिनि निपातः । रक्षणायात्मनः **देवान् हवते** आह्वयते स्म । ह्वयतेः ( भ्वा० उ० ) लटि "बहुलं छन्दसि" ( पा० ६–१–३४ ) इति संप्रसारणम् । शब्गुणावादेशाः । [illegible]भिगकारयते स्म । व्यत्ययेन लिडर्थे लट् (पा० ३–१–८५) इत्यादिना [illegible]नं **बृहस्पतिः** बृहतां महतां देवानां रक्षक [illegible] । किंच [illegible] एतत्संज्ञको देवः **शुश्राव** श्रुतवान् । यदा से नोज्जहारामुं तदासौ **वित्तं मे अस्य रोदसी** इत्येवं द्यावापृथिव्यावाजुहाव । हे रोदसी द्याव्यापृथिव्यौ! मे मदीयम् अस्य इदं स्तोत्रम् । सुब्व्यत्ययो बाहुलकात् ( पा० ३–१–८५ ) वित्तं जानीतं युवाम् । यद्वा मदीयं कूपपतनरूपं यदिदं दुःखं तदवगच्छतम् । मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा वा अस्मा-

१. प्रासङ्गिकमेव तावदागन्तूनामग्रे सन्निवेशन्यायेन निगमेन दर्शयति । प्रकृतं त्वग्रेतने । उभयोरप्येक एव वक्ता त्रित इति ॥

२. त्रितस्य चापां पुत्रत्वं तैत्तिरीयाः स्पष्टमामनन्ति—"तत एकतोऽजायत स द्वितीयमभ्यपातयत । ततो द्वितोऽजायत स तृतीयमभ्यपातयत ततस्त्रितोऽजायत यदद्भ्योऽजायत तदाप्यानामाप्यत्वमिति ( तै० ब्रा० ३–२–८ ) अत्र शाट्यायनिन इतिहासमाचक्षते एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो बभूवुः । ते कदाचिन्मरुभूमौ अरण्ये वर्तमानाः पिपासया संतप्तगात्राः सन्त एकं कूपमविदन् । तत्र त्रिताख्य एको जलपानाय कूपं प्राविशत् । स्वयं पीत्वा इतरयोश्च कूपादुदकमुद्धृत्य प्रादात् । तावुदकं पीत्वा त्रितं कूपे पातयित्वा तदीयं धनं सर्वमपहृत्य कूपं च रथचक्रेण पिधाय प्रास्थिषत । ततः कूपे पतितः स त्रितः कूपमुत्तरीतुमशक्नुवन् सर्वे देवा मामुद्धरन्तु इति मनसा सस्मार । ततस्तेषां स्तावकमिदं सूक्तं ददर्शेति ॥

त्कूपान्मामुत्तारयतमित्यर्थः । एवं पुनः पुनरुच्यमानं द्यावापृथिव्यौ शुश्रुवतुरित्येवं दुर्गेणात्राधिकं व्याख्यातम् । किं कुर्वन् ? अंहूरणात् अंहखतः ( पापरूपात् ) कूपात् आत्मनः उरु विस्तीर्णं ( सार्वैदिकं ) त्राणं कृण्वन् कुर्वन् । सायणस्तु-अंहूरणादंहसः पापरूपादस्मात्कूपपातादुत्तीर्य उरु विस्तीर्णं शोभनं कृण्वन्कुर्वन्नित्येवं व्याख्यत् । तत्र कुर्वन्नित्यस्य करिष्यन्नित्यर्थ ऊह्यः । वर्तमानसमीपे भविष्यति लट् ( पा० ३-३-१३१ ) ॥ २ ॥

एवमत्र अन्धकूपः-अंहूरणः इत्युपपद्यते । प्रकरणाविरोधात् ॥

अथ प्रकृतेंऽहुरशब्दे निगमं दर्शयति—

"सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरोगात्" ( ऋ० सं० ७-५-३३-६ )

सप्तेति । अस्य "आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ" इत्युत्तरार्धर्चम् । कवयः मेधाविन ऋषयः ( हिरण्यगर्भ-मनुप्रभृतयः ) सप्त मर्यादाः सप्त स्थितीः ततक्षुः । तक्षतिः करोति कर्मा । दुष्टुलङ्घनीयाः कृतवन्तः । तासाम् मर्यादानां मध्ये एकामित् एकामपि अभिगात् अभिगच्छन् ( अभिक्रामन् ) अंहुरः अंहखान् पापी "भवती"ति शेषः । यः पुनरेताः न अभिगच्छति ( नातिक्रामति, किंतु पालयति ) तस्य किं भवतीत्यत आह-स हि आयोः अयनस्य ( निरन्तरगमनशीलस्य ) सूर्यस्य स्कम्भे ...मिभागी मण्डले स्थितस्य उपमस्य सर्वभूतोपनिर्मातुरा... "पृ... नारायणस्य नीळे निलयने स्थाने यानि ध... न धारयितॄणि स्थानानि अप्रध्वंसीनि तेषु धरुणेषु पथां विषयानुप्रवेशमार्गभूतानामिन्द्रियाणां विसर्गे विसर्जनकाले ( मृत्युकाले ) प्राप्ते तस्थौ तिष्ठति । वर्तमाने लिट् ( पा० ३-४-६ )

अथास्य भाष्यम्—

**सप्त मर्यादाः कवयश्चक्रुस्तासामेकामप्यभिगच्छन्नंहस्वान् भवति ॥ स्तेयं, तल्पारोहणं, ब्रह्महत्यां, भ्रूणहत्यां, सुरापानं, दुष्कृतस्य कर्मणः पुनः पुनः सेवां, पातकेऽनृतोद्यमिति ॥**

मर्यादा एवाह-स्तेयमित्यादि । स्तेयमित्यत्र ब्राह्मणस्वामिकस्य सुवर्णस्य बोध्यम् । प्रतिविशिष्टपापानामेवेह परिगणनात्तस्य च महापातकतया स्मृत्यन्तरेषु स्मरणात् । तल्पारोहणमपि गुरोरेव । स हि गुर्वङ्गनागमः । तथाच स्मर्यते-"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चमः ॥" इति । "सुरापो गुरुतल्पगः" इत्यादि च । भ्रूणो गर्भः । "गर्भो भ्रूण इमौ समौ" इत्यमरः । पातक इति । सर्वत्रैवानृतवचनमंहः ( पापं ) तथाप्यत्र प्रतिविशिष्टपातकाभिधाने पातके एकस्मिन्कृते तत्रापि प्रायश्चित्तकाले ( ब्राह्मणसन्निधौ ) इदमेवं वा मया न कृतमित्यभिधानं मिथ्याभूतमतीव पापावहमित्यनेन चोदितं भवति । तस्मात्तत्र यथाभूतमर्थमेव ब्रुवता प्रायश्चित्तफलेन युज्यते नाऽयथार्थाभिधायिनेति पुष्कलम् ॥

अथ रथ इति निपातः खेदानुकम्पयोः ॥ ५ ॥

( २७ )

वत ( ११२ ) इत्यनवगतमनेकार्थं च । निपात इति पदजात्यवधारणम् । खेदानुकम्पयोरित्यर्थवचनम् ॥५॥ ( २७ )

अत्र निगममुदाहरति—

**"बतो बतासि यम नैव ते मनो हृदयं चाविदाम । अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम्" ॥ ३ ॥**

( ऋ० सं० ७-६-८ )

बत इति । अस्या विवस्वतः पुत्री यमी ऋषिर्यमो देवता । "यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवते"ति न्यायात् । अनादेशपरिभाषया त्रिष्टुप् छन्दः । प्रातरनुवाकाश्विनशस्त्रयो-

---

१. अत्र सूक्ते प्रतिमन्त्रान्तेऽयं पाठः "वित्तं मे अस्य रोदसी" इति । एकोनविंशत्यृचं चेदं सूक्तं यत्रचेयमृक्पठितास्ति ॥

२. अत्र सायणः-"अहि गतौ" इदित्वान्नुम् "खर्जिपिञ्जादिभ्य ऊरोलचौ" ( उ० ४-८९ ) इति भावे ऊरप्रत्ययः । दुःखप्राप्तिहेतुभावागतिरस्यास्तीति पामादिलक्षिणो मत्वर्थीयो नः आङ्पूर्वाद्धन्तेर्वा रूपमुन्नेयम् इत्याह ॥

३. एता न कथञ्चित्कर्तव्या इत्येषा या धारणा ( स्थितिः ) सैव मर्यादा "मर्यादाधारणास्थितिः" इत्यमरः । यद्यपि नित्या एव हि तास्तथापि तैस्तत्प्रख्यापकोऽनुसरणार्थो ग्रन्थसन्दर्भोऽभिव्यञ्जित एतदेवासां करणमित्युपचर्यते । अत्र दुर्गः-मर्यादासंबन्धास्पष्टतर एव निगम इत्यतो द्वितीय उपात्तः । स्मृतिसमाचारश्चानेन प्रतिविशिष्ट उपदर्शितो भविष्यतीत्येवं मन्त्रे एवोपश्लल सर्व एव समाचारो विशिष्टैः स्मृतिकारैः संदृष्टो न स्वतन्त्र इति प्राह ॥

४. अतिक्रामन् आभिमुख्येन वा ( ज्ञात्वा ) क्रामन् प्रतिविशिष्टपापभाग्भवतीत्यर्थः ॥

५. एषोऽर्थ अभ्यूहितोऽर्थसङ्गत्यै दुर्गाचार्येण ॥

६. "इण् गतौ" ( अ० प० ) "छन्दसीणः" ( उ० प० ) इत्युण् प्रत्ययः ॥

७. तथा चाम्नायते-"योऽसावादित्ये पुरुषः सोऽसावहम्" इति ( य० सं० ४० अ० ) ॥

१. आभूतसंप्लवस्थायीनि ॥

२. खेदो दुःखमानसता । अनुकम्पा दया । तयोरयं वर्तत इत्यर्थः ॥

३. भ्रातृभगिन्योरेवं संवादमुखेन स्त्रिया ज्ञानदौर्बल्यमिन्द्रियलोलुपता च ( निसर्गसिद्धा ) स्वाभाविकी इति तस्या आत्मानं गोपायेत् । अत एव तां यमीं प्रति बोधयतो यमस्योक्त्यांस्याततपूर्वा ( पृ० १९३ पं० २१ ) द्रष्टव्या ॥

विनियोगः । यमी यमं ब्रवीति हे यम! त्वं **बतः** बलातीतो-ऽसि । **बत** दुर्बलहृदयस्त्वमधर्मभीरुर्मोहमयस्त्वमेवमसकृन्मया प्रार्थ्यमानः खेदमुपयासि–नेच्छसि मया संभोक्तुं स त्वं सर्वथा-ऽनुकम्प्यः शोच्य इत्यर्थः । वयं[3] **ते** तव **मनः** मनोगतं सङ्कल्पं **हृदयं च** हृद्गतमध्यवसायं च **नैव अविदाम** विजानीमः । लङर्थे लङ् ( पा० २–४–६ ) अथवा लब्धस्ते मयाभिप्रायः– **अन्या** मत्तः प्रतिविशिष्टा काचिन्नितम्बिनी **त्वां परिष्वजाते** परिष्वङ्क्ष्यते, वर्तमानसमीपे भविष्यति लट् ( पा० ३–३–१३१ ) भाष्यव्याख्यानुरोधात् । ततः **किल** त्वं मां ( तयापहृतचेतस्त्वात् ) नेच्छसि परिष्वक्तुम् । कथं च पुनरन्या त्वां परिष्वङ्क्ष्यते ? इत्यत्र दृष्टान्तद्वयमुच्यते– **कक्ष्येव युक्तम् लिबुजेव वृक्षम्** इति । यथा कक्ष्या अश्वकक्षभवा ( तत्स्था ) रज्जुः ( पर्याणबन्धनसाधन-भूता[5] ) **युक्तम्** आत्मना संबद्धम् अश्वं परिष्वजते गाढं तद्वत् । अथच यथा लिबुजा व्रततिः ( लता ) वृक्षं गाढं परिष्वजते परिवेष्टयते तद्वत् । अत्र वचनव्यत्यय आर्षः ( पा० ३–१–८५ ) "षज्ज परिष्वङ्गे" लट् । "उपसर्गा-त्सुनोति–"( पा० ८–३–६५ ) इत्यादिना षत्वम् । परिष्वङ्ग आलिङ्गनम् । "परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्" इत्यमरः ॥ ३ ॥

एवमत्र प्रकरणाविरोधात् "बत" इत्येष निपातः खेदानु-कम्पयोरुपपद्यते ॥

अथास्य भाष्यम्—

**बतो बलातीतो भवति ॥ दुर्बलो बतासि यम ॥ नैव ते मनो हृदयं च विजानीमोऽन्या किल त्वां परिष्वङ्क्ष्यते कक्ष्येव युक्तं, लिबुजेव वृक्षं, लिबुजा व्रततिर्भवति लीयते विभजन्तीति ॥ व्रततिर्वरणाच्च शयनाच्च तनानाच्च ॥**

**लीयते विभजन्तीति** लिबुजाशब्दनिर्वचनम् । तथाच लिभजा सती लिबुजोच्यते । निपातनात् ( पा० ६–३–१०९ ) **वरणात्** । वृणोति ह्यसौ समीपस्थतर्वादिकम् । ततश्च तम-धिगत्य शेते गाढमालिङ्गतीति **शयनात्** । ततश्चात्मानं तत्र सन्तनोति विस्तारयतीति **तननाच्च** व्रततिशब्दस्त्रिधातुजो निरुक्तः । एमवन्येऽपि यथोपयुक्तार्थं निर्वक्तव्या इत्यनेनोच्यते ॥

१. अत्र देवराजः–बलातीत इति वाक्यस्यार्थे पदं बलशब्दा-दततेर्निष्ठायां च बलातीतः सन्बतः दुर्बल इत्यर्थः ॥

२. अनेन दुर्गसन्दृब्धव्याख्यानेन खेदानुकम्पे अभ्यूहिते ॥

३. "अस्मदो द्वयोश्च" ( पा० १–२–५९ ) इति बहुवचन-मेकार्थेऽपि ॥

४. दुर्गस्तु–पक्षे इवोऽनर्थकः कक्ष्या कक्षजाता सुबद्धा लिबुजा वल्ली यथा युक्तमात्मना संयुक्तं समीपजं वृक्षं परिष्वजेत्परिवेष्टये-देवं किल त्वामन्या परिष्वङ्क्ष्यत इतीत्येवमाह ॥

५. पर्याणं पृष्ठास्तरणं यत्राश्ववार उपविशति ॥

**वाताप्यमुदकं भवति ॥ वात एतदाप्याययति ॥**

अथ **वाताप्यम्** (११३) इत्यनवगतम् । **उदकं** भव-तीत्यभिधेयवचनम् । अत्र आङ्पूर्वात् प्यायतेर्वृद्ध्यर्थात् ( भ्वा० आ० ) अन्तर्भावितण्यर्थात् "अन्येष्वपि दृश्यते" ( पा० ३–२–१११ ) इत्यपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात्कर्मणि डः । **उदकं** वृष्टिलक्षणमभिधेयम् **एतत् वातः** पुरो वायुः **आप्याययति** अभिवर्धयति[1] । तदेतद् वातेनाप्यायत इति **वाताप्यम्** उच्यत इत्यर्थः । अत्रार्थे—

**"पुनानो वाताप्यं विश्वश्चन्द्रम्" ॥**

( ऋ० सं० ७–४–३ )

**इत्यपि निगमो भवति ॥**

अस्य "नू नो रयिमुपमास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम् । प्रवन्दितुरिन्दो! तार्यायुः प्रातर्मक्षू धिया वसुर्जगम्यात्" ॥ ५ ॥ इति स्वरूपम् । नोधसो गौतमस्या-र्षम् । पावमानी सौमी प्रातरनुवाकाश्विनयोः शस्यते । हे **इन्दो**! सोम! **विश्वः** सर्वोऽपि त्वं **पुनानः** पूयमानः । कर्मणि लिटः शानच् । ( गाल्यमानः ) **नः** अस्मभ्यम् **नृवन्तं** पुत्रपौत्रैः सहितं छान्दसमत्र मतुपो वत्वम् । **रयिं** धनम् **नु** क्षिप्रम् ( नि० २–१५–१ ) "ऋचि तुनु–" ( पा० ६–१–१३३ ) इत्यादिना नुइत्यस्य दीर्घः । **उपमास्व** उपनिर्मिमीष्व[2] । उप-कुर्वित्यर्थः । किंच **चन्द्रम्** चायनीयम् **वाताप्यम्** वृष्ट्युदकं **प्रतारि** प्रतीर्णं–दीर्घं त्वया वर्धितम् अस्तु । यद्वा चन्द्रं चाय-नीयं वर्धनीयम्[3] वाताप्यमुदकं प्राप्य द्रवीभूतस्त्वं विश्वः सर्वोऽपि पुनानः पूयमानः **वन्दितुः** स्तोतुः **आयुः** जीवनं **प्रतारिं**[4] प्रतीर्णं ( दीर्घं ) "कुर्वि"ति शेषः । किंच तथा **रयिमुपमास्व** यथा **धिया** प्रज्ञया कर्मणा वा ( निघं० २–१–२१ ) **वसुः** वसुमान् । मतुपो लुक् छान्दसः । प्राप्तधन इन्द्रस्त्वां पातुमस्म-दीयं यज्ञं प्रति **प्रातः** एव **मक्षु** शीघ्रम् ( निघं० २–५–२ ) "ऋचितुनुघमक्षुत०" ( पा० ६–३–१३३ ) इत्यादिना दीर्घः । **जगम्यात्** आजगम्यात् आगच्छेत् । क्रियाबलेन योग्योपसर्गा-ध्याहारः । गमेर्लिङि "बहुलं छन्दसि" ( पा० २–४–७६ ) इति शपः श्लुः ॥ ५ ॥

एवमत्र "वाताप्यम्=उदकम्" अर्थाविरोधाच्छन्दोपपत्तेश्च ॥

१. पुरोवातेन हि वृष्टिभूतमुदकं संवर्धते ॥

२. उपनिर्मिणुहि इति दुर्गस्तन्मते "डुमिञ्प्रक्षेपणे" ( स्वा० उ० ) इत्यस्य । सायणमते "माङ् माने शब्दे च" ( जु० आ० ) इत्यस्य रूपम् । प्रक्षेपणं परिपूर्तिः ॥

३. येन क्षिप्तेन सोमरसोऽभिवृध्यते तत् ॥

४. उदकं प्राप्य वर्धमानेन त्वया स्तोतुरात्मन आयुर्वर्धनी-येति प्रार्थनम् ॥

अथ **चाकन्** ( ११४ ) इत्यनवगतम् । **चायन्** इति **कामयमान** इति शब्दसमाधी । चायतेः स्वरितेत्त्वाल्लटः शतरि यक्कारस्य ककारो बाहुलकात्। धातूनामनेकार्थत्वादिच्छार्थोऽपि । अत्रार्थे निगमं पठति—

**"वने न वायो न्यधायि चाकन्" ॥**

( ऋ० सं० ७-७-२९-१ )

## वन इव वायो वेः पुत्रश्चायन्निति वा कामयमान इति वा ॥

**वनेनेति** । अस्य "शुचिर्वां स्तोमो भुरणावजीगः । यस्येदिन्द्र पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्" इति शेषः । वसुक्रस्येयमार्षमैन्द्री त्रिष्टुप् । महाव्रते निष्कैवल्येऽपि शस्यते । हे **भुरणौ !** पोषकौ धारकौ वा ( भर्तारौ ) "भुरण धारणपोषणयोः" कण्ड्वादिलक्षणो यक् स्वार्थे । ततः कर्तरि पाचाद्यच् ( पा० ३-१-१३४ ) अश्विनौ ! **वने न** वने इव वृक्षे यथा शकुनिना नीडे **वायः** वेः पक्षिणः स्वस्य पुत्रः **न्यधायि** निहितः **चाकन्** चायन् पश्यन् ( भयादिशो निरीक्षमाणः ) अथवा कामयमानस्तदुत्सुकमना आसीत् । एवमयमस्मासु नीडभूतेषु शकुनिपुत्रभूतः **शुचिः** व्यपगतसर्वदोषः **वां** युवयोः स्वभूत एष **स्तोमः** स्तुतिविशेषः समस्ति । **यस्य** स्तोमस्य **नृणां** मनुष्याणां मध्ये **नृतमः** मनुष्यतमः मनुष्यश्रेष्ठो राजेति जहत्स्वार्थलक्षणयाऽर्थः । शूराणां मध्ये शूरतमो वा । **नर्यः** नृभ्यो हितश्च । **क्षपावान्** रात्रिपर्यायेषु सोमभागी **इन्द्र इत्** इन्द्रोऽपि **पुरुदिनेषु** बहुष्वहःसु । "पुरुः प्राज्ये विशेषवत्" इति मेदिनी । "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इति चामरः । **होता** नित्य आह्वाता भवति । ममायं स्तोमः स्यादिति । "ह्वेञ् स्पर्धायां शब्दे च" ( भ्वा० उ० ) इत्यस्मात्ताच्छील्यविशिष्टे कर्तरि तृन् ( पा० ३-२-१३५ ) "बहुलं छन्दसि" ( पा० ६-१-३४ ) इति संप्रसारणे गुणः ( पा० ७-३-८४ ) एवंगुणयुक्तेनेन्द्रेणापि यः स्तोमः प्रार्थ्यते सोऽयमस्मासु वर्तमानो युवां प्रति **अजीगः** नित्यकालमेव गच्छतीत्यर्थः ॥ १ ॥

१. "चायृ पूजानिशामनयोः" ( भ्वा० उ० ) निशामनं चाक्षुषज्ञानमिति माधवः ॥

२. एतत्तत्त्वमनुपदं स्फुटीभविष्यति ॥

३. वने इत्यस्य वनावयवे इत्यर्थात् वृक्षसमुदाय एव हि वनमुच्यते । अनुद्भूतावयवभेदविवक्षयेति बोध्यम् ॥

४. अपत्येऽण् ( पा० ४-१-९२ ) अजातपक्षः शिशुकः सादरं तत्र तेन निधीयते एवमस्माभिर्हृदयेऽसौ ते स्तोमो निहित इति स्फुटोऽर्थः ॥

५. अपिनाम मामनेन स्तोमेन स्तुयुरिति ॥

६. सततकरणं हि ताच्छील्यम् ॥

७. जिगातीति गतिकर्मसु पठितं ( निघं० २-१४-११३ ) ततो लडर्थेऽत्र लुङ् ( पा० ३-४-६ ) "गा स्तुतौ" छन्दसि

एवमत्र चाकन् इत्यस्य चायन् इति, कामयमान इति वा इत्येतौ विपरिणामावुपपद्येते शब्दसारूप्यादर्थाविरोधाच्च ।

एतस्मिन्निगमे पदविभागतः कश्चिद्विचारोऽस्ति तमाह भाष्यकारः—

## वेति य इति च चकार शाकल्य उदात्तं त्वेवमाख्यातमभविष्यदसुसमाप्तश्चार्थः ॥

**शाकल्यस्तन्नामक** आचार्यः पदकारः । तदेतद्विचार्यमाणं न साधु भवति । किं कारणम्? **उदात्तं त्वेवमाख्यातमभविष्यत्** । एवमेतस्मिन्पदद्वये सति यदेतदाख्यातं न्यधायीति, एतदुदात्तमभविष्यत् । यद्वृत्तात्परस्य नित्यमाख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते । तथाच पाणिनिस्मरणम्-"यद्वृत्तान्नित्यम्" ( पा० ८-१-६६ ) इति । न चेदमुदात्तम् । तस्मात् "य" इति नेदं यद्वृत्तं पदं, किं तर्हि । "वायः" इत्येकं पदम् । किंच-**असुसमाप्तश्चार्थः** । एवमेतस्मिन्पदद्वये सति मन्त्रस्यार्थोऽप्यसुसमाप्तोऽपुष्कलो भवति? कथम्? द्विपदत्वे हि सति "वा" शब्दस्यार्थेन केनचिद्भवितव्यम् । न चेह विकल्पः समुच्चयो वा कश्चिदर्थोऽस्ति । तस्मादाख्यातस्यानुदात्तत्वादर्थासंभवाच्च वाय इत्येकमेव पदं शकुनिपुत्रक एव चास्याभिधेय उपपद्यते ॥

## रथर्यतीति सिद्धस्तत्प्रेप्सू रथं कामयत इति वा ॥

अथ **रथर्यति** ( ११५ ) इत्यनवगतम् । **रथं हर्यति**

जुहोत्यादिर्गतावपि पठ्यते । "बहुलं छन्दसि" (पा० ७-४-७८) इत्यभ्यासस्येत्वम् । अत्र दुर्गः—एवं तावदेतामृचमाश्विनीमितिकृत्वा व्याचक्षते-तदसाधु-ऐन्द्रे हि सूक्ते प्रथमैवेयमृग्भवति । तच्च पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोमे वर्धमाने माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते । हे भुरणौ भर्तारौ ! देवतानां पती ! य एष स्तोमोऽस्मासु विहितः शुचिः व्यपगतदोषः शकुनिपुत्र इव वने वानावयवे वृक्षे चाकन् पश्यन्निव कामयमान इव वा इन्द्रमाशास्ते यः स्तोमः तस्य किं? इति-यस्येन्द्रः पुरुदिनेषु बहुष्वहःसु आह्वाता अभूत् । अपिनाम मामनेन स्तोमेन स्तुयुरिति । किंलक्षणः पुनराह्वाता यस्येन्द्रः? इति-नृणां नृतमः नर्यश्च क्षपावांश्च । समानमेतत्पूर्वेणैवार्थेन । यमेवमिन्द्रः प्रार्थयते स एव स्तोमः तं प्रत्यजीगः गच्छतीत्यर्थः । अथ वा स एव स्तोमोऽस्माभिरुदीर्यमाणस्तमिन्द्रस्य गुणान्गृणातीति स्यात् "जिगर्तिः०-० गृणातिकर्मा वा" इति युक्तम् । अत्र व्याख्याने देवतानां पती कौ? "वां" पदेन च कौ गृह्येते? सन्दिह्यते । सायणेन चैतदीयं ( दुर्गीयं ) व्याख्यानमक्षरशोऽत्र स्वीये मन्त्रभाष्ये उद्धृतं परमपूर्णे तत्रापि सन्देह एवोपक्षिप्यते अनयोः कतरः पूर्वतन इति? दुर्गवृत्त्या सायणनाम्नोऽपि क्रोडीकृतत्वात्सायणेनापि निरुक्तवृत्तिनाम्ना कश्चित्कश्चित् समुद्धाटनदर्शनात् ॥

१. "तिङ्ङतिङः" ( पा० ८-१-२८ ) इति हि सूत्रमतिङन्तात्पदात्परं तिङन्तमनुदात्तं विदधाति ॥

इत्यवगमः। कथम्? "हर्य गतिकान्त्योः" (भ्वा० प०) इति हि पठ्यते। कान्तिश्चेच्छैव "कमु कान्तौ" (भ्वा० आ०) इति हि स्मर्यते, तथा चानुस्वारहकारयोर्लोपेन तत्प्रेप्सुः तस्य रथस्य प्राप्तीच्छुरेव रथर्यतीत्युक्त्या सिद्धः अभिनिष्पन्नो भवति। अथ वा रथं कामयते इत्येष तदर्थः। रथमात्मन इच्छतीत्यर्थे क्यचि (पा० ३-१-९) रथीयतीति प्राप्ते रेफ उपजनो व्यवधानाद्दीर्घत्वाभावः॥ अत्रार्थे—

"एष देवो रथर्यति" ॥

(ऋ० सं० ६-७-२०-५)

इत्यपि निगमो भवति ॥

अस्य "पवमानो दशस्यति। आविष्कृणोति वग्वनुम्" इति शेषः। शुनःशेपस्यार्षम् पावमानी सौमी गायत्री ग्रावस्तुत आवापे शस्यते। अस्यार्थः। पवमानः क्षरन् एष सोमः देवः देवत्वेनाध्यवसितः। अस्मदीयं यागं प्रत्यागमनाय रथर्यति आत्मनो रथं कामयते। आगत्य च दशस्यति दानमात्मन इच्छति कथं नाम मां देवेभ्यो दद्युरिति। किंच-वग्वनुम् वचोवननीयम् (वचसा याचनीयं) दत्त मां देवेभ्य इति आविष्कृणोति प्रकाशीकरोतीति॥ ५॥

एवमत्र "रथर्यति=रथप्रेप्सुः" इत्येतदुपपद्यते शब्दसामर्थ्या-दर्थोपपत्तेश्च॥

अथ असक्राम् (११६) इत्यनवगतम्। असंक्रमणीयम् इत्यवगमः। संपूर्वात्समानपूर्वाद्वा क्रमेः (दि० प०) "जनसनखनक्रमगमो विट्" (पा० ३-२-६७) इति विट्। छन्दस्युपसर्गेऽपीति च तत्रानुवर्तते। "विड्वनोरनुनासिकस्यात्" (पा० ६-४-४१) इत्यात्वम्। आतोलोपश्छान्दसः। "समानस्य छन्दसि" (पा० ६-३-४) इति समानशब्दस्य सभावः। न सक्रा असक्रा ताम्। यावज्जीवमनपायिनीमस्मत्सजातैरप्राप्त-पूर्वामित्यर्थः। अत्रार्थे निगमं पठति—

"धेनुं न इषं पिन्वतमसक्राम्" ॥

(ऋ० सं० ५-१-४-३)

असंक्रमणीम् ॥ ६ ॥

इति श्रीमद्यास्कमुनि० प्र० नि० शास्त्रे नैग० का० षष्ठाध्यायस्य पञ्चमः पादः॥ ६॥ ५॥

२. "दाश्र दाने" (भ्वा० उ०) इत्यस्य घञन्तस्योपधाह्रस्वो व्यत्ययेन (पा० ३-१-८५) ततश्चेच्छार्थे क्यचि सुगागमः (पा० ७-१-५१ वा०) सायणस्तु—आगत्य चास्मभ्यमभिलषितं प्रयच्छति इत्येवमाह॥

३. अत्र टिलोपो वनतेर्याचनार्थादुश्च कृत्यार्थे निपात्यते पृषोदरादित्वात्॥ सायणस्तु—वग्वनुं शब्दमाविष्कृणोति। अभिषूयमाणः प्रकटयतीति व्याचख्यौ॥

धेनुंनेति। अस्य "पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्राम्। स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन्॥ ३॥ इति स्वरूपम्। भरद्वाजस्येयमार्षं त्रिष्टुबाश्विनी प्रातरनुवाकाश्विनयोः शस्यते। हे पुरुभुजा! पुरुभुजौ! बहुभोजिनौ! बहुपालकौ! वा। "भुज पालनाभ्यवहारयोः" (रु० उ०) क्विप्। अश्विनौ। औङ आकारः (पा० ७-१-३९)। वां युवयोः देष्णं दातव्यं धनं दानं वा पुरु बहु हि भवति। अतः कारणात् नः अस्मभ्यं धेनुं प्रीणयित्रीं। "धिवि प्रीणने" (भ्वा० प०) नुवलोपगुणौ। असक्राम् असंक्रमणीम् मत्तोऽन्यत्रासंक्रमणशीलाम् अनपायिनीम् इषम् इच्छाविषयीभूतान्नलक्षणाम्। "इष इच्छायाम्" (तु० प०) कर्मणि क्विप् (निघं० २-७-१४) यद्वा एषणीयां धेनुम्। अथवा धेनुमन्नं च पिन्वतम् प्रयच्छतं प्रक्षारयतं वा। "पिवि सेचने सेवने वा" (भ्वा० प०) इदित्वान्नुम्। अथवा असंक्रमणशीलां द्याम् इषम् इड्हेतूदकं पिन्वतं प्रक्षारयतम्। दुहार्थतया द्विकर्मकत्वमत्र पिन्वतेः। हे माध्वी माध्व्यौ! मधुपावश्विनौ। "छन्दसीवनिपौ च वक्तव्यौ" (पा० ५-२-१२२ वा) इति ईप्रत्ययो मत्वर्थे। वां युवयोः स्तुतश्च स्तोतारश्च। क्विबन्तस्य स्तौते रूपम्। सन्ति। सुष्टुतिश्च शोभना स्तुतिश्च स्तोतृषु भवति। रसाश्च सोमरसाश्च सन्ति। ये रसाः वां युवयोः रातिं दानम् अनु उद्दिश्य अग्मन् देवयजनं प्राप्ताः। अयं भावः—सुष्टुतिं श्रुत्वा देवयजनं प्राप्तान् सोमरसान् पीत्वा स्तोतृभ्यः कामान्प्रयच्छतमिति शेष इति॥३॥

एवमत्र शब्दसामर्थ्यादर्थाविरोधाच्च असक्राम् इत्यस्य शब्दस्य असंक्रमणीम् इत्येष विपरिणाम उपपद्यते। इडभिधेया द्यौर्वा ६

इति श्रीमद्यास्कमुनिप्रणीत नि० विवृतौ नैगमकाण्डे षष्ठाध्यायस्य पञ्चमः पादः॥ ६॥ ५॥

---

## अथ षष्ठाध्यायस्य षष्ठः पादः।

### आधव आधवनात् ॥

आधवः (११७) इत्यनवगतम्। आधवनात् इत्यवगमः। आकम्पनादित्यर्थः। "धूञ्कम्पने" (स्वा० उ०) पचाद्यच् (पा० ३-१-१३४) आङ्पूर्वोऽन्तर्भावितण्यर्थश्चाधावक (आकम्पयिता) इति हि तदर्थः। अत्रार्थे—

"मतीनां च साधनं विप्राणां चाधवम्" ॥

(ऋ० सं० ७-७-१३-४)

इत्यपि निगमो भवति ॥

अस्य "मंसीमहि त्वा वयमस्माकं देव पूषन्" इति पूर्वार्धर्चम्॥ ऐन्द्रस्य विमदस्यार्षम्। अनुष्टुप् पौष्णी। हे देव! द्योतमान पूषन्! सूर्य! वयं स्तोतारः अस्माकं मतीनां प्रज्ञानाम् अभिलषितानां वा फलानां साधनं साधयितारम्। आदित्येन हि प्राणिनां प्रज्ञा अभिव्यज्यन्ते।

सिध्यन्ति च कर्तव्यार्थाः । किंच अन्येषामपि विप्राणां प्राप्तप्रज्ञानां मेधाविनाम् **आधवम्** आकम्पयितारं ( तथात्वमात्मनो गुणवत्तां दर्शयसि यथा प्रोत्कम्पमानहृदयास्ते त्वां स्तुवते ) **त्वा** त्वाम् **मंसीमहि** मन्यामहे स्तुम इत्यर्थः । नैरुक्तो धातुः ( ३–८–१ ) ॥ ४ ॥

एवमत्र शब्दसामर्थ्यादर्थाविरोधाच्च "आधवः=आकम्पयिता" इत्युपपद्यते ॥

## अनवब्रवोऽनवक्षिप्तवचनः ॥

अथ **अनवब्रवः** ( ११८ ) इत्यनवगतम् । **अनवक्षिप्तवचन** इत्यवगमः । अप्रतिहतशासन इति हि तदर्थः । "ब्रूञो" व्यक्तवागर्थकात् ( अ० उ० ) "ऋदोरप्" इत्यप्प्रत्ययः । "छन्दस्युभयथा" ( पा० ३–४–११७ ) इत्यपः सार्वधातुकत्वात् वच्यादेशो (पा० २–४–५३) न भवति । ब्रवो वचनम् । अवक्षिप्तब्रवोऽवब्रवः । "प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपश्च" ( पा० १–४–७८ वा० ) इति समासादिः । न अवब्रवोऽनवब्रव इति नञ्समासः । अत्रार्थे—

**"वि॒जे॒ष॒कृदिन्द्र॑ इ॒वाऽन॒व॒ब्र॒वः" ॥**

( ऋ० सं० ८–३–१९–५ )

**इत्यपि निगमो भवति ॥**

अस्य "०वो॒३॒ऽस्माकं॑ मन्यो अधि॒पा भ॑वे॒ह । प्रि॒यं ते॒ नाम॑ सहुरे गृणीमसि वि॒द्मा तमुत्सं॒ यत॑ आ ब॒भूथ॑" इति शेषः । मन्योरार्षं त्रिष्टुप् । मान्यवे सूक्ते । श्येनादिषु निष्कैवल्ये शस्यते । हे **मन्यो ! इन्द्र इव विजेषकृत्** विजयकर्ता । तथा **अनवब्रवः** अनवक्षिप्तवचनः ( अप्रतिहताज्ञः ) नहि केनचिदिन्द्रस्याक्षिप्यते वचः । ईदृशस्त्वम् । **अस्माकम् अधिपाः** । अधिकं अधिष्ठाय वा पाता **भव इह** अस्मिन्यज्ञे । हे **सहुरे** शत्रूणां सहनशील ! यत् **ते** तव **प्रियं नाम** स्तोत्रं तेन त्वां **गृणीमसि** गृणीमः । "इदन्तो मसि" ( पा० ७–१–४६ ) इति मस इमागमः । नित्यमेव स्तुम इत्यर्थः । त्वं **यतो** नाम्नः स्तोत्रात् **आबभूथ** आभवसि । वर्तमाने लिट् ( पा० ३–४–६ ) "बभूथाततन्थजगृम्भववर्थेति निगमे" ( पा० ७–२–६४ ) इतीड्भावो निपातनात् । प्रवृद्धो भवसि **तम् उत्सम्** उत्स्यन्दनं बलस्योद्गमयितारं वयं **विद्म** विद्म जानीमः । संहितायां दीर्घः ( पा० ६–३–१३७ ) ॥ १५ ॥

एवमत्र शब्दसामर्थ्यादर्थाविरोधाच्च "अनवब्रवः अनवक्षिप्तवचनः" इत्युपपद्यते ॥ ७ ॥ ( २९ )

अथ **सदान्वे** (११९) इत्यनवगतम् । **सदानोनुवे** इति शब्दसमाधिः । सदा नो नोशब्दकारिके इति हि विस्फुटोऽर्थः । दुर्भिक्षाधिदेवता अलक्ष्मी चाभिधेया । सैव संबोध्यतेऽनेन । तत्र "नोनुवा" इत्यस्य न्वाभावः । एवं **शिरिम्बिठः** (१२०) इत्यनवगतम् । मेघोऽभिधेयः । विठेऽन्तरिक्षे शीर्यत इति हि शब्दसमाधिः । निपातनात्साधुः ( पा० ६–३–१०९ ) अनयोरर्थयोर्निगममुदाहरति—

**"अरा॑यि॒ का॒णे॒ विक॑टे गि॒रिं ग॑च्छ सदान्वे । शि॒रिम्बि॑ठस्य॒ सत्व॑भि॒स्तेभि॑ष्ट्वा चातयामसि" ॥ १ ॥**

( ऋ० सं० ८–८–१३ )

**अरायीति** । शिरिम्बिठस्य भारद्वाजस्यार्षमनुष्टुप् । दुर्भिक्षाधिदेवतोच्यते । कालकर्णा (र्णी) वा अलक्ष्मीः । हे **अरायि !** अदायिनि अदानशीले ! ( दानविरोधिनि ) दुर्भिक्षाधिदेवते ! अथवा हे अलक्ष्मि ! दुर्भिक्षेण पीडितानां न दाने मतिः प्रभवति, नाप्यलक्ष्म्याऽभिभूतानाम् । हे **काणे !** कुत्सितशब्दकारिणि ! कुत्सितदर्शने ! वा । यद्वा दुर्भिक्षेण ह्यभिभूतानां मान्द्यं चक्षुषोर्भवति । अन्नाभावात् । अलक्ष्मीपक्षेऽपि तद्रूपा अलक्ष्मीरिति प्रतीयते । लोकेऽपि च या विरूपा भवति अलक्ष्मीरिति सोच्यते । हे **विकटे !** विकृतगमने ! विकृताङ्गि ! वा । यद्वा–दुर्भिक्षे दुर्बलत्वात् विकटेव प्राणिनां गतिर्भवति, अलक्ष्मीरपि तद्रूपा । हे **सदान्वे !** सदानोनुवे ! नो नो–( मा देहि मा देहि इति ) शब्दकारिके ! **गिरिं** पर्वतं निर्जनदेशम् **गच्छ** अस्मान् मा बाधिष्ठाः । अहं **त्वा** त्वाम् **शिरिम्बिठस्य** मेघस्य **सत्वभिः** अन्तर्वर्तमानैः **तेभिः** प्रसिद्धैरुदकैः । यद्वा शिरिम्बिठो भरद्वाजपुत्रस्तस्य–तद्दृष्टैः–सत्वभिः कर्मभिः । नामभिर्वा **तेभिस्तै**रनुभूतचरैः स्तम्भनसमर्थैः स्तुतियुक्तैः । अत्र "बहुलं छन्दसि" ( पा० ७–१–१० ) इत्यैसभाव उभयत्र । केचित्तु सत्वनशब्दं कर्मवचनं मन्यते । तन्मते यथास्थितमेव साधु ॥ **चातयामसि** चातयामः नाशयामः । "इन्दतो मसि" ( पा० ७–१–४६ ) इति मस इमागमः । अतस्त्वमेव शीघ्रं गिरिं गच्छेत्यर्थः ॥ १ ॥

एवमत्र शब्दार्थाविरोधात् "सदान्वे" इत्यस्य "सदानोनुवे" इत्येवं विपरिणाम उपपद्यते ।

अथास्य भाष्यम्—

## अरायिनि काणे विकटे ॥ काणोऽविक्रान्त-

१. नोनो शब्दकारिणी नोनुवाशब्देन लोकेऽप्युच्यते । तस्मात्तदनुकरणमेवात्र साधनहेतुः । सायणमते–नोनुवा आक्रोशनेन सदाऽऽक्रोशकारिणीति तस्यार्थः ॥

१. यत्तु–दुर्गेण सत्वमिति क्षुदकनामसु पठितमित्युक्तं तत्प्रामादिकम् । तत्र हि सत्यमिति पठितं सदिति च । तत्राद्ये सत्सु भवं "भवे छन्दसि" ( पा० ४–४–११० ) इति यदिति देवराजयज्वानः । सदिति तु असेर्लेटः शतरि "श्नसोरल्लोपः" ( पा० ६–४–१११ ) इति साधुः । यत्तु भाष्ये–"तस्य सत्त्वैरुदकैरिति स्यात्तैः" इत्युक्तं तस्योक्त एवार्थः । यद्वा तदार्थिकाभिधानमस्तु ।

२. प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यच्छब्दोपादानं नापेक्षत इत्यसकृदभिहितं न विस्मर्तव्यम् ॥

३. अत्र विक्रान्तदर्शनपाठे विक्रान्तं हि तस्य दर्शनं भवति एकीभूतत्वादिति तदर्थः ॥

**दर्शन इत्यौपमन्यवः ॥ कान्तिर्वा स्यादणूभावकर्मणः ॥ कणतेर्वा स्यादणूभावकर्मणः । कणतिः शब्दाणूभावे भाष्यते,ऽनुकूणतीति ॥ मात्राणूभावात्कणः ॥ दर्शनाणूभावात्काणः ॥ विकटो विक्रान्तगतिरित्यौपमन्यवः ॥ कुटतेर्वा स्याद्विपरीतस्य विकुटितो भवति ॥ गिरिं गच्छ सदा नोनुवे शब्दकारिके ॥ "शिरिम्बिठस्य सत्त्वभिः" शिरिम्बिठो मेघः ॥ शीर्यते विठे ॥ विठमन्तरिक्षम् ॥ विठं बिरीटेन व्याख्यातम् ॥ तस्य सत्त्वैरुदकैरिति स्याचैष्ट्वा चातयामः ॥ अपि वा शिरिम्बिठो भारद्वाजः ॥ कालकर्णोपेतोऽलक्ष्मीर्निर्णाशयांचकार ॥ तस्य सत्त्वैः कर्मभिरिति स्याचैष्ट्वा चातयामः ॥ चातयतिर्नाशने ॥**

निगमप्रसक्तान्यधुनोच्यन्ते—तत्र "रातिर्दाने" ( अ० प० ) तस्यैव नञ्पूर्वस्य णिन्प्रत्यये युकि ( पा० ७-३-३३ ) चारायीति स्त्रियां ङीषि ( पा० ४-१-४५ ग० वा० ) भवति, तत्संबुद्धौ "अरायि" इति । तदर्थमाह—**अदायिनि** इति । **अविक्रान्तदर्शनः** । अपूर्णदर्शनोऽणुदर्शन इति वार्थं इत्याह—**कणतेर्वेति** । **कणः** श्यामाकादिधान्यांशश्चातिसूक्ष्मः । तथाच मेदिनी "कणोऽतिसूक्ष्मे धान्यांशे कणः काकैकचक्षुषोः" इति । **विक्रान्तगतिः** विकटगतिः । अथ **वा कुटतेः** धातोः **स्यात्** । असौ हि **विकुटितो भवति** कुब्जीभूत इत्यर्थः । **विठम्** इत्यपठितमन्तरिक्षनामस्तु, तत्पुनरेतद् **बीरिटेन** व्याख्यातम् ( नि० ५-२८-१ ) तस्मिन् **विठे** यः **शीर्यते** सः **शिरिम्बिठो मेघः** । **भारद्वाजः** भरद्वाजपुत्रः । सहि **कालकर्णोपेतः** कालकर्णयाऽलक्ष्म्योपेतो युक्तोऽनेन सूक्तेन **अलक्ष्मीर्निर्णाशयाञ्चकार** इति निदानमन्वाख्यातम् । अद्यापि योऽलक्ष्म्याभिभूतो भवति स आर्स्वैदघ्ने उदके अवतीर्य सूक्तमेतज्जपति चेत्तस्याऽलक्ष्मीर्निर्णश्यति ॥

१. अयं णिन्यर्थे औणादिक ऊषः ॥

२. मन्दचक्षुष्ट्वादिति दुर्गः ॥

३. आस्यपरिमिते । ऊर्ध्वमाने दघ्नच् प्रत्ययः । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" ( पा० ५-२-३७ ) इति । तत्र "प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम" इति भाष्यात् । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम् । अत एव "कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप । तथापीयमवस्था ते न हि सर्वे भवादृशाः" इति भोजराज—काष्ठभारधृतशिरोब्राह्मणयोः संवादः संगच्छते । तथाविधो हि ब्राह्मणो—जलमुत्तीर्य नद्या आयान्मध्येमार्गे स्थितेनोस्तिरीषैता भोजराजेन पृष्टः कियन्मात्रमित्यादि ॥

**पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे । "पराशरः शतयातुर्वसिष्ठः"**
( ऋ० सं० ५-२-२८-१ )

**इत्यपि निगमो भवति ॥**

अथ **पराशरः** ( १२१ ) इत्यनवगतम् । पराशीर्णः ( जः ) इत्यवगमः । परापूर्वाच्छृणातेः "ऋदोरप्" ( पा० ३-३-५७ ) इत्यपि गुणः । **स्थविरस्येति** हि **पराशीर्णस्येत्य**स्यार्थः । अतिजीर्णस्य ( वसिष्ठस्य ) नप्ता । चिरमृते शक्तौ तत्पुत्रेऽयं जातस्तत्क्षेत्रे । अत्रार्थे—"प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः । न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥" इति स्वरूपम् । वसिष्ठस्येयमार्षं त्रिष्टुप् ऐन्द्रं सूक्ते । हे इन्द्र ! **पराशरः** ऋषिर्वसिष्ठस्य नप्ता शक्तेः पुत्र एव । स हि **शतयातुः** शतानां ( बहूनां ) यातयिता । तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते । यद्वा शतयातुः शक्तिः पराशरस्य पिता **वसिष्ठश्च** इति क्रमाभिधानादेवमादयो **ये** ऋषयः **त्वाया** त्वया सह । दीर्घ आर्षः । **गृहात् गृहे** । सप्तम्यर्थे पञ्चमी व्यत्ययेन ( पा० १-३-८५ ) यद्वा गृहं प्राप्य । ल्यब्लोपे पञ्चमी ( पा० १-४-३१ वा ) **प्र** प्रकर्षेण **अममदुः** तृप्तवन्तः सोमेन, हृष्टवन्तो वा यज्ञेषु । **ते** पराशरप्रभृतयः **भोजस्य** भोजकस्य भोगिनो वा तव **सख्यम्** सख्युः कर्म स्तोत्रं, यजनं वा सखिभावं वा **न मृषन्त** न विस्मरन्ति । मृषधातुश्चौरादिकस्तितिक्षार्थः । स्वरितेत् आधृषीयश्चेति वा णिच् । गुणाभावेकारलोपौ । अर्थभेदश्च धातूनामनेकार्थत्वात् । यतो न विस्मरन्ति **अधा** अतो हेतोः **सूरिभ्यः** विशिष्टगुणवद्भ्यो विद्वद्भ्यस्तेभ्यः । "धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः" इत्यमरः । **सुदिना** सुदिनानि । शेर्डा ( पा० ७-१-३९ ) **व्युच्छान्** व्युच्छन्ति । उपगच्छन्तीत्यर्थः । "इतश्च लोपः परस्मैपदेषु" ( पा० ३-४-९७ ) इतीकारलोपे संयोगान्तलोपः । आडागमश्च ( पा० ३-४-९४ ) गत्यर्थेऽत्र उच्छी धातुः ( भ्वा० प० ) तेषामेव सुप्रभाता रात्रय इति भावः ॥ १ ॥

एवमत्र ऋषिः "पराशरः" वसिष्ठसंबन्धात् ॥

**इन्द्रोऽपि पराशर उच्यते ॥ परा शातयिता यातूनाम् ॥**

स हि **परा** परितः **यातूनां** यातयितव्यानां रक्षसाम् । "नैरृतो यातुरक्षसी" इत्यमरः । **शातयिता** विनाशकः । अत्रार्थे—

**"इन्द्रो यातूनामभवत्पराशरः"**
( ऋ० सं० ५-७-९-१ )

**इत्यपि निगमो भवति ॥**

अस्य "हविष्मथीनामभ्याड्वि विवासताम्" इत्यादिशेषं व्याख्यातः ।

## क्रिविर्दती विकर्तनदन्ती ॥

अथ **क्रिविर्दती** ( १२२ ) इत्यनवगतम् । **विकर्तनदन्ती** इत्यवगमः । "कृविघृष्वि–" ( उ० ४–५६ ) इत्यादिना करणे क्रिन्प्रत्ययो धातोः क्रिरादेशश्चाऽत्र ( निगमे ) निपात्यते । बाहुलकाल्लोके तु कृविस्तन्तुवायद्रव्यम् । इति करोतेरेव कृविरिह्तु–"कृवि हिंसाकरणयोश्च" (भ्वा० प०) इति पाणिनीयैः पठ्यते । कृणोति हिनस्ति ( विकृन्तति ) अनेनेति क्रिविः । क्रिविर्दन्तो यस्याः सा क्रिविर्दती रेफ उपजनः । "स्त्रियां संज्ञायाम्" ( पा० ५–४–१४३ ) इति दन्तस्य दत्रादेशः समासान्तः । "उगितश्च" (पा० ४–१–६ ) इति ङीप् ॥

अत्रार्थे—

"यत्रा वो दिद्युद्रदति क्रिविर्दती"

( ऋ० सं० २–४–२–१ )

## इत्यपि निगमो भवति ॥

अस्य "यूयं नं उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन । यत्रा००र्दती रिणाति पश्वः सुधितेव बर्हणा" इति स्वरूपम् । अगस्त्यस्येयमार्षं जगती । लैङ्गिको विनियोगः । हे **उग्राः !** उद्गूर्णबलाः **मरुतः !** यूयम् **सुचेतुना** शोभनचेतसा **अरिष्टग्रामाः** अनुपसंहितसंघाताः सन्तः **नः** अस्माकम् **सुमतिं** शोभनां बुद्धिम् **पिपर्तन** पूरयत पालयत वा । कस्मिन्काले ? इति तदुच्यते–**यत्रा** यत्र यस्मिन्काले । सांहितिको दीर्घः । **वः** युष्माकम् **क्रिविर्दती** विकर्तनदन्ती ( विकर्तनसमर्थैर्दन्तैस्तद्वती ) **दिद्युत्** हेतिः ( वज्रम् ) मेघसंस्थायम् **रदति** भिनत्ति । "रद विलेखने" ( भ्वा० प० ) विलेखनं भेदनम् । **पश्वः** पशूंश्च । "जसादिषु छन्दसि वा वचनम्" ( पा० ७–३–९७ वा० ) इति पूर्वसवर्णदीर्घाभावे यणादेशः । **रिणाति** रेषति हिनस्ति "रि हिंसायाम्" ( स्वा० प० ) विकरणव्यत्यय आर्षः (पा० ३–१–८५) वायौ वाति सति पशवः शीर्यन्त इति प्रसिद्धम् । कथं पुनः रदति ? इत्यत्र दृष्टान्तः– **सुधितेव बर्हणा** । यथा–सुधिता सुहिता=सुष्ठु प्रेरिता "हि गतौ" ( स्वा० प० ) स्वधितिः (क्षुरम्) बर्हणा–परिवृद्धया हिंसया ( निघं० ४–३–८३ ) तृतीयैकवचनस्य डादेशः ( पा० ७–१–३९ ) रदति । दुर्गस्तु–यथा पशोरङ्गानि प्रवृद्धया हिंसया स्वधित्या रिणाति तद्वदित्येवं तुरीयं पादं व्याचष्ट ॥ १ ॥

एवमत्रार्थाविरोधादायुधं "क्रिविर्दती"शब्देनोच्यत इत्युपपद्यते ॥

## करूळती कृत्तदती । अपि वा देवं कंचित्कृत्तदन्तं दृष्ट्वैवमवक्ष्यत् ॥ २ ॥ ( ३० )

अथ **करूळती** ( १२३ ) इत्यनवगतम् । **कृत्तदती** इत्यवगमः । अत्र कृत्तदन्तशब्दस्य करूळती भावः पृषोदरादित्वात् । स्त्रीलिङ्गप्रतिरूपकमेतत् । "सुपां सुलुक्–" ( पा० ७–१–३९ ) इति सोर्लुक् । देवं भगं पूषणं वा ॥ २ ॥ ( ३० )

उक्तार्थे निगममुपन्यस्यति—

"वामं वामं त आदुरे देवो ददात्वर्यमा । वामं पूषा वामं भगो वामं देवः करूळती" ॥ ४ ॥ ( ऋ० सं० ३–६–२३ )

## वामं वननीयं भवति, आदुरिरादरणात् ॥४॥

**वाममिति** । वामदेवस्यार्षम् । ऐन्द्रे सूक्ते अनुष्टुप् । रात्रिपर्याये प्रशास्तुः शस्त्रे विनियुक्ता । हे **आदुरे !** आदरवन् यजमान ! स हि यागं प्रति नित्यमादृतो भवतीत्येवं संबोध्यते । **अर्यमा देवः** सूर्यः **वामं** वननीयम् ईप्सितमात्मनो धनम् **ते** तुभ्यम् **ददातु** । अत्र वामं वामं इति भूयस्त्वार्थोऽभ्यासः । "अभ्यासे भूयांसमर्थं मन्यन्ते" इति हि वक्ष्यति । **वामं पूषा** ददातु । **वामं भगः** ददातु । वामं देवः **करूळती** ददातु इत्येतदेवानुवर्तते ॥ ४ ॥

अत्र "करूळती"त्येतद्गुणपदत्वात्सन्दिह्यते भाष्यकारेण—

**तत्कः करूळती ? भगः पुरस्तात्तस्यान्वादेश इत्येकम् । पूषेत्यपरम् । सोऽदन्तको"ऽदन्तकः पूषेति"च ब्राह्मणम् ॥** ( शत० ब्रा० ८–७३ )

**तत्** एतद् विचार्यते । कः **करूळती ?** इति । **भगः पुरस्तात्** करूळतीशब्दस्य । **तस्य** एवायम् **अन्वादेशः** बोधकः संनिधानसामर्थ्यात् । **इत्येकम्** आचार्यमतम् । अत्रोच्यते—नहि सांनिध्यमात्रेणान्वयो युक्तः किंतु साकाङ्क्षत्वमप्यत्रोपयुज्यते तच्च पूषण्येवेत्याह—**पूषा इत्यपरम्** आचार्यमतम् । किंकारणम् ? **सः** हि पूषा **अदन्तकः** दन्तशून्य इत्ययं

१. अत्र शतघ्न्यामायुधविशेषेऽयं वर्तत इति देवराजयज्वानः ॥

२. अत्रेकारोऽननुनासिक इत्यनुस्तः स्थितः ॥

३. "द्युत दीप्तौ" ( भ्वा० आ० ) "द्युतिगमिजुहोत्यादीनां द्वे च" ( पा० ३–२–१७८ वा० ) इति क्विपि द्वित्वे "द्युतिस्वाप्योः संप्रसारणम्" ( पा० ७–४–६७ ) इत्यभ्यासस्य संप्रसारणम् । द्योतते उज्ज्वलत्वात् । द्यतेर्वा क्विपि पृषोदरादित्वाद्रूपसिद्धिः । द्यति शत्रून् । वज्रनाम ( निघं० २–२०–१ )

१. सायणस्तु–हे आदुरे ! शत्रूणां दारयितः इन्द्र ! ते तव वामं वामं यद्वननीयं संभजनीयं धनमस्ति लोके तद्वामं वसु अर्यमा अरीणां नियमयितैतन्नामको देवो ददातु प्रयच्छतु । तथा करूळती कृत्तदन्तः पूषा पोषको देवो वामं धनं ददातु । भगोऽपि धनं ददातु इत्यर्थमाह ॥ अत्राङ्पूर्वाद्दृङ्धातोरादरार्थादिन्प्रत्ययः ( उ० ४–११६ ) उपधाया उत्वं च बाहुलकात् ॥

२. "वन संभक्तौ" ( भ्वा० प० ) अनीयर् । संभजनीयम् । प्रशस्यनामसु पठितोऽयं वामशब्दः ( निघं० ३–९–९ ) वनतेर्यंकि नकारस्याकारः ॥

कृत्तदन्तः सन् करूळती भवितुमर्हति । कुत एतत् ? इत्युच्यते—अद०००ह्मणम् प्राशित्रभागब्राह्मणे हि श्रूयते—"तत्पूष्णे पर्याजहुः । तत्पूषा प्राश्नात् । तस्य दतो निर्जघान । तस्मादाहुरदन्तकः पूषा" इति । यत्पुनरेतदुक्तं सांनिध्यसामर्थ्याद्भगः करूळती स्यादिति । अकारणमेतत् ।

"यस्य येनार्थसंबन्धो दूरस्थमपि तस्य तत् ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" ॥

इति न्यायविदः पठन्ति । तस्मात् पूर्वैव "करूळती" इत्युच्यते । शब्दसारूप्यादर्थोपपत्तेश्चेति ॥

अथ दनः ( १२४ ) इत्यनवगतम् दानमनसः इत्यवगमः । तथाच दानमनस इत्यस्य दनस्भावः ।

अत्रार्थे निगममुपन्यस्य व्याचष्टे—

"दनो विश इन्द्र मृध्रवाचः"
( ऋ० सं० २–४–१६–२ )

**दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु ॥**

दन इति । अस्य "सप्त यत्पुरः शर्म शारदीर्दर्त् । ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः" इति शेषः । आगस्त्यमैन्द्रं त्रैष्टुभम् । हे इन्द्र ! दनः दानमनस एव एतान् विशः मनुष्यान् । विश इति मनुष्यनाम (निघं० २–३–५) नः अस्मभ्यम् मृध्रवाचः मृदुवाचः ( मधुरवाचः ) कुरु । यत् यस्मात् त्वं सप्त सप्ताः शारदीः शरत्कालोत्थाः प्रत्यग्राः, संवत्सरोत्था वा (संवत्सरपर्यन्तं दृढीकृताः) "स जीव शरदः शतम्" इति लिङ्गात् । पुरः मेघपुरः शर्म सुखमिच्छन् जनानाम् दर्त् दारयसि । दृणातेर्लङि छान्दसो विकरणस्य लुक् "रात्सस्य" ( पा० ८–२–२४ ) इति नियमात् तलोपाभावः । लडर्थे लङ् आर्षः ( पा० ३–४–६ ) ( अतस्त्वं पुरन्दर इत्याभाष्यसे ) किंच अनवद्यार्णाः अनवद्योदकाः ताः पुरः प्राप्य ऋणोः अपगमितवानसि इमं लोकं प्रति अपः । "ऋणु गतौ" ( अ० प० ) लङः सिप् । अडभाव आर्षः ( पा० ६–४–७५ ) यद्वा । हे अनवद्य अकातर ! अनिन्द्य ! वा । अर्णा अरणनशीलाः ( तूर्णीं तत्रस्थाः ) अपः ऋणोः अगमयः प्रावर्तयः । किंच यूने । यौतिरत्र स्तुत्यर्थः । "स्तौति यौति" इत्यार्चतिकर्मसु पठितम् ( निघं० ३–१४ ) स्तोत्रे यजमानाय पुरुकुत्साय बहुस्तुतिकर्त्रे तन्नाम्ने वा । वृत्रं धनम् ( निघं० १–१०–२७ ) रन्धीः संपादितवानित्यर्थः । "रध हिंसासंराध्योः" ( दि० प० ) लुङः सिप् । च्लेः सिच इटि "रधिजभोरचि" ( पा० ७–१–६१ ) इति नुम् उभाव आर्षः ( पा० ६–४–७५ ) संराद्धिर्निष्पत्तिः संपत्तिरित्यनर्थान्तरम् । यत एवमुपकारे प्रवृत्तो भवान्स्तोतृणामन्येषां च जनानां तस्माद्भूमोऽस्माकमपि एतान्मृदुवाचः कुरु मनुष्यानिति ॥ २ ॥

एवमत्र "दनः" इत्यस्मिन्पदे दकारे "दानमनसः" इत्येतान्यक्षराणि अध्याहृतानि भाष्यकारेण, "नः" कारश्चास्ययोगाय विभज्योदाहृतस्तथोपपत्तिदर्शनात् "कुरु" इति चार्थपरिसमाप्त्यर्थमध्याहृतम् । उत्तरास्त्रयः पादा हेतुभावेन "सप्त यत्पुरः" इत्येतस्मात्सर्वनामसंबन्धात् ॥

अथ शरारुः ( १२५ ) इत्यनवगतम् । संशिशरिषुः इत्यवगमः । अत्र समुपसर्गार्थविशिष्टाच्छृणातेः "शॄवन्द्योरारुः" ( पा० ३–२–१७३ ) इति ताच्छील्यादिषु विहित आरुः व्यत्ययेनेच्छायां भवति । अत्रार्थे निगममुपन्यस्य व्याचष्टे—

"अवीरामिव मामयं शरारुरभिमन्यते"
( ऋ० सं० ८–४–२–४ )

**अबलामिव मामयं संशिशरिषुः ॥**

अवीरामिति । अस्य "उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः" । इति शेषः । इन्द्रपत्न्या आर्षमैन्द्री पञ्चपदा पङ्क्तिः । षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थशस्त्रे विनियुक्ता । इन्द्रपत्नी एवं ब्रवीति–अयं बालः मूर्खो नहुषोऽन्यो वा वृषाकपिः । शरारुः संशिशरिषुः संशर्तुमिच्छन् शरीरं तित्सक्षिपुरित्यर्थः । माम् अभि अभिभविष्याम्येनामिति मन्यते क्षुद्रया बुद्ध्या । उताहमस्मि वीरिणी अथ च तावदहमस्मि वीरवत्येव । केन पुनर्वीरेण वीरिणी वीरवती ? इन्द्रपत्नी इन्द्रस्याहं पत्नी । यो हि मरुत्सखा मरुतो देवाः सखायोऽनुगा यस्यैवंभूतः इन्द्रः विश्वस्मात् सर्वस्माज्जगतः उत्तरः उद्गततरः प्रभावेण । स मे वीरस्तेनाहं वीरिणी ( वीरवती ) तदयं बालो न मन्यते येन मामभिभवितुमिच्छतीति भावः ॥ ४ ॥

एवमत्र "शरारुः–संशिशरिषुः" शब्दसामर्थ्यादर्थोपपत्तेश्च ॥

**इदंयुरिदं कामयमानोऽथापि तद्वदर्थे भाष्यते ॥ वस्यूयुरिन्द्रो वसुमानित्यत्रार्थः ॥**

अथ इदंयुः ( १२६ ) इत्यनवगतमनेकार्थं च । इदं कामयमानः इदमिति यत्किंचिदभिप्रेतं निर्दिश्यते । तद्यः कामयते स इदंयुरित्युच्यते । युरित्येष शब्दोऽप्रसिद्धः कामयतेरर्थे । तेनानवगतमेतत्स्यात् क्यचि मान्ताव्ययप्रतिषेधादत्र "क्याच्छन्दसि" ( पा० ३–२–१७० ) इति उप्रत्ययं प्रत्याशा न कार्या, इदमिति चात्र मान्तमव्ययं तेन हि कर्मसामान्यं प्रदर्शितं भवति । तथाहि लक्षितं धनादि तद्य इच्छति स इदंयुः । शंयुः

१. नहुषेण हीन्द्राण्यभिभवितुमुपक्रान्तासीदित्याख्यानं श्रूयते भारतादौ । यद्वेन्द्रो ब्रह्महत्ययाऽभिभूतो मानसे सरसि कमलकोरके कीटरूपेण स्थित आसीद् । तदा स इन्द्राणीमभिलष्यन् पियानेन सङ्गमाय समाहूतस्तथा कुर्वन् सर्पसर्पेति तान्प्राह । तदाऽगस्त्येन त्वमेव सर्पो भवेति प्रोक्तस्तथाभूतो भुवं पपातेति ॥

२. अथैतत्सूक्तमुपक्रम्य सायणः–वृषाकपिनामेन्द्रपुत्रः स चेन्द्राणीन्द्रश्चेते त्रयः संहताः संवादं कृतवन्त इत्यादि । तथा चानुक्रान्तम्–"विहिस्यधिकैन्द्रो वृषाकपिरिन्द्राणीन्द्रश्च समूदिरे पाङ्क्त"मिति ॥

किंयुः विप्रयुरित्याद्यवगतानवगतक्यजन्तमात्रोपसंग्रहार्थं निगमेषु पठितं न विशेषार्थमिति हि भाष्यकाराभिप्रायः। अत एव सामान्यविशेषयोरुदाहरणमिदम्। अत्र "नानाधियो वसूयवो वसुकामाः" इत्यनेनावगतार्थं मन्यमानो भाष्यकारोऽत्र निगमं न ब्रवीति ॥ **अथापि युरित्येष तद्वदर्थे भाष्यते।** आह किमुदाहरणम्? **वसूयुरिन्द्र** इति। **वसुमानित्यर्थः।** अत्रार्थे—

**"अ॒श्व॒युर्ग॒व्यू र॑थ॒युर्व॑सू॒युः" ॥३॥ (३१)**

(ऋ० सं० १-४-११-४)

अस्य "इन्द्रो॑ अश्रायि सु॒ध्यो॑ निरे॒के प॒ज्रेषु॒ स्तोमो॑ दु॒र्यो॑ न यूपः॑। अश्व ० ० युरिन्द्र इ॒द्रायः क्ष॑यति प्रय॒न्ता" इति स्वरूपम् ॥ सव्यज्ञमापन्नस्येन्द्रस्येयमार्षम्। ऐन्द्री त्रिष्टुप्। दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। **इन्द्रः** देवः **दुर्यः** द्वारि निखातः **यूपः न** स्थूणा इव प्रधानं तान् **सुध्यः** शोभनकर्मणो यजमानान् शोभनप्रज्ञान्वा। धीरिति कर्मनामसु पठितम् (निघं० २-१-२१) प्रज्ञानामसु च (निघं० ३-९-७) शसि "छन्दस्युभयथा" (पा० ६-४-८६) इति यणादेशः। **निरेके** नितरां रेचनं निरेकः "रिचिर् विरेचने" (रु० उ०) भावे घञ्। "चजोः०" (पा० ७-३-५२) इति कुत्वम्। नैर्धन्ये प्राप्ते निमित्तभूते वा सति तान्रक्षितुम् **अश्रायि** असेविष्ट। "श्रिञ् सेवायाम्" (भ्वा० उ०) कर्तरि लुङि व्यत्ययेन च्लेश्चिणादेशः। यो हि **पज्रेषु** प्रार्जितायुधेष्वपि पदेषु संग्रामेषु **स्तोमो न** स्तोम इव प्रधानं निश्चलं तिष्ठतीत्यर्थः। सोमे हि त्रिवृत्स्तोमः प्रधानं भवति। तथा च नेति उभयत्र (स्तोमे यूपे च) अन्वेति। किंचासौ **इन्द्रइत्** इन्द्र एव **रायः** धनस्य सर्वविधस्यापि। **प्रयन्ता** प्रकर्षेण दाता। "यम उपरमे" (भ्वा० प०) तृनि "एकाच०" (पा० ७-२-१०) इतीण्निषेधः। अतः **क्षयति** ईष्टे (निघं० २-२१-३) सर्वस्यापि प्रभुरित्यर्थः। यतोऽसौ **अश्वयुः** अश्वैस्तद्वान् **गव्युः** गोभिस्तद्वान् **वसूयुः** नानाविधैर्वसुभिः (धनैः) तद्वान् ॥ ३ ॥

१. अत्रेतिहासमाचक्षते—अङ्गिरा इन्द्रसदृशं पुत्रमात्मनः कामयमानो देवता उपासांचक्रे। तस्य सव्याख्येन पुत्ररूपेणेन्द्र एव स्वयं जज्ञे। जगति मनुष्यः कश्चिदन्यो मामूदिति। स सव्य आङ्गिरसोऽस्य ऋषिः सूक्तस्य ॥

२. दुरः गृहद्वाराणि अर्हतीति यत् (पा० ५-१-६६) इत्युवटः ॥

३. दुर्गस्तु—अश्रायि शुद्ध इति पठित्वा शुद्धविक्रमोऽजिह्मयोधी, अथवा शोधयिता योधानां प्रहारैः। सुधीर्वा स्यात् इति वदन् सोर्जसभावं व्यत्ययेनाचष्ट (पा० ३-१-८५)

४. दुर्गस्तु—अश्रायि—श्रृणाति हिनस्तीत्यर्थमुक्त्वा, क पुनः शृणाति? निरेके संग्रामे, यत्रैकोऽप्यन्यः सहायो नास्ति तत्रैक एव शत्रून्हन्ति इति व्याचष्ट ॥

एवमत्र "वसूयुः" इत्ययं शब्दस्तद्वदर्थे। किंकारणम्? नहीन्द्रो वसु कामयते, सुपूर्णत्वात्। परिशेषादयं "तद्वदर्थे भाष्यत" इत्युपपद्यते भाष्यम् ॥

अथ **कीकटेषु** (१२७) इत्यनवगतम्। तदेतन्मन्त्रे सप्तम्यन्तमिति तथैव निगमे (निघण्टौ) पठ्यते। किंकृताः किंक्रिया वा सन्तः कीकटाः। किमर्थमुत्पादिता असदाचाराः। अथवा यागदानहोमलक्षणाभिः क्रियाभिः कृताभिः किंफलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबत खादतायमेव लोको न पर इति वदन्तो नास्तिकाः तेषां निवासो जनपदः कीकटाः अनार्यनिवासदेशाः। यद्वा कृपणाः कीकटाः। पृषोदरादित्वात् ॥

अत्रार्थे निगममुपन्यस्यति—

**"किं ते॑ कृण्वन्ति॒ कीक॑टेषु॒ गावो॒ नाशिरं॑ दु॒ह्रे न त॑पन्ति घ॒र्मम्। आ नो॑ भर॒ प्रम॑गन्दस्य॒ वेदो॑ नैचाशा॒खं म॑घवन्रन्धया नः" ॥ ४ ॥**

(ऋ० सं० ३-३-२१)

किं त इति। विश्वामित्रस्यार्षं ऐन्द्री त्रिष्टुप्। **हे इन्द्र!** याः **कीकटेषु** अनार्यदेशनिवासिषु मनुष्येषु। **गावः** धेनवस्ताः **ते** तव **किं** कमुपकारम् **कृण्वन्ति** कुर्वन्ति? "कृवि हिंसाकरणयोश्च" (भ्वा० प०) न किञ्चिदपीत्यर्थः। अनुपयोगमेव दर्शयति—**आशिरं** सोमैर्मिश्रणयोग्यं पयः **न दुह्रे** न दुहन्ति। दुहेर्लिटि "इरयोरे" (पा० ६-४-७६) इति रे आदेशः। द्विर्वचनस्य "छन्दसि वा" (पा० ६-१-१ वा०) इति विकल्पितत्वाद्द्विर्वचनाभावः। **घर्मं** प्रवर्ग्याख्यकर्मोपयुक्तं महावीरपात्रं स्वपयःप्रदानद्वारेण **न तपन्ति** न दीपयन्ति। घर्मे तप्यमानेऽङ्गभावं न गच्छन्ति, नाप्यग्निहोत्रादिषु कर्मसु अन्यास्वपि क्रियासु इति भावः। यत एवमतो ब्रूमः—ता गाः **नः** अस्मभ्यम् **आभर** आहर। "हृग्रहोर्भश्छन्दसि" (पा० ३-१-८४ वा०) इति हस्य भः। वयं तव ताभिराशिरादिविनियोगेनोपकारं करिष्याम इति भावः। न केवलं ता एव, किं तर्हि? **प्रमगन्दस्य** द्वैगुण्यादिलक्षणपरिमाणं गतोऽर्थो मामेव गमिष्यतीति बुद्ध्या परेषां ददातीति प्रमगन्दो वार्धुषिकस्तस्यापत्यं पुत्रादिः प्रमगन्दः प्रस्कण्वादिवदपत्यार्थः प्रशब्देन द्योत्यते। तस्यात्यन्तकुसीदिकुलस्य यद् **वेदः** धनम् (निघं० २-१०-४) तदपि आहर। तदपि न क्रियासु—तत्स्थं—विनियुज्यते, वयं तद्विनियोक्ष्याम इति भावः। किं च **हे मघवन्!** धनवन्निन्द्र! **नैचाशाखं** नीचासु शूद्रयोनिषु उत्पादिताः

१. "जनपदे लुप्" (पा० ४-२-८१) इति निवासार्थस्याणो लुपि युक्तवद्भावात् (पा० १-२-५१) बहुवचनान्तता ॥

२. आङ्पूर्वाच्छ्रीणातेः पाकार्थात्क्विपि "अपस्पृधेथाम्" (पा० ६-१-३६) इत्यादिना शिरआदेशः ॥

३. अत्र मगन्तात्प्रभवति प्रसृतो वेत्यर्थबोधनस्य प्रशब्दाभिसंबन्ध इति प्रतिभाति ॥

शाखाः पुत्रपौत्रादिपरम्परा येन स नीचाशाखः। "शूद्रापत्यैश्च केवलैः" इति। "शूद्रावेदी पतत्यधः" इति च पातकहेतुत्वेन स्मरणात् तत्संबन्धि धनं नैचाशाखम्। "तस्येदम्" (पा० ४-३-१२०) इत्यण्। तद्धनं तोऽस्मभ्यम् **रन्धय** साधय। अस्मद्वशं कुर्वित्यर्थः। रधेर्ण्यन्तस्य "रधिजभोरचि" (पा० ७-१-६१) इति नुमागमः। संहितायां दीर्घः (पा० ६-३-१३७)॥

अथास्य भाष्यम्—

**किं ते कुर्वन्ति कीकटेषु गावः॥ कीकटा नाम देशोऽनार्यनिवासः॥ कीकटाः किंकृताः॥ किं क्रियाभिरिति प्रेप्सा वा॥ नैव चाशिरं दुह्रे॥ न तपन्ति घर्मं घरण-माहर नः प्रमगन्दस्य धनानि॥ मगन्दः कुसीदी, माङ्गदो—मामाग-मिष्यतीति च ददाति॥ तदपत्यं प्रमगन्दोऽत्यन्त-कुसीदिकुलीनः॥ प्रमदको वा योऽयमेवास्ति न पर इति प्रेप्सुः॥ पण्डको वा॥ पण्डकः पण्डगः॥ प्रार्दको वा॥ प्रार्दयत्याण्डावाण्डावाणी इव व्रीड-यति तत्स्तम्भे॥ "नैचाशाखं०" नीचाशाखो नीचैःशाखः॥ शाखाः शक्नोतेः॥ आणिररणात् तन्नो मघवन्रन्धयेति-रध्यतिर्वशगमने॥**

इति। एवमत्र **किंकृताः** किं ते कृताः? इत्येवमभिव्याहारं येऽर्हन्ति ते **कीकटाः**। न तैः कश्चिदर्थोऽस्ति, न ते देवपि-तृमनुष्याणामुपकारं कुर्वन्तीत्यर्थः। अथ **वा किंक्रियाभिः**? इति एवं **प्रेप्सा** प्रकृष्टाभिलाषालापिन एवंभूतास्ते। नास्तिका इत्यर्थः। एतस्माच्छब्दसारूप्यादर्थोपपत्तेश्च "कीकटा=अनार्य-देशनिवासिनः" इत्युपपद्यते॥

अत्र मगन्दशब्दं निराचष्टे—**माङ्गद** इति। अस्यापि विवरणं **मामि**त्यादिना। स हि मामियादयतनोऽर्थः। अयं **त्र आगमिष्यति** इत्येवमनुचिन्त्य परेभ्यो धनानि **ददाति**। म-ग-दाः क्रमेण पदत्रयस्यैकदेशा अत्र समुद्धृत्य निहिता इत्यर्थः। **प्रमदको वा** नित्यप्रमुदितो विषयपरः प्रमादशीलः प्रमगन्दः स्यात्। अयमेव एको लोकोऽस्ति **न पर इति** एवं **प्रेप्सुः**। प्रेप्सावान् नास्तिकः। अथ **वा पण्डको** नपुंसकः। "क्लीवः पण्डो नपुंसके" इत्यमरः। पण्ड एव पण्डकः। प्रम-गन्दः स्यात्। स हि **पण्डगः** अनास्थितवंश एव नाशं गमि-ष्यति। "पडि नाशने" (चु० प०) गमेर्डः। दुर्गस्तु—पण्डक-स्तृतीयाप्रकृतिः। स हि पण्डगः पण्ड(मव्यक्त-)ङ्गच्छति स्त्रीरूपत्वा-दित्याह। तयोर्वा धनानि क्रियासु न विनियुज्यन्ते शब्दसारूप्यं च प्रमगन्दशब्दे उभयोरप्यस्ति तस्मात्तावुभावप्युपपद्येते। अथ **वा प्रार्दकः** सन् प्रमगन्दः स्यात्। स हि **आण्डौ** प्रजननकोशौ **प्रार्दयति** प्रकर्षेणार्दयति अभिभवति प्रजननकार्यनिर्वाहाय। विवृद्धाण्डकोशः पुमान् प्रजाः प्रजन-यितुमप्रभवन्नण्डकोशमपि भेदयति जलादिदुर्वृत्सु निर्गमनाय। यद्वा प्रकर्षेण ह्यसावाण्डौ अर्दयति। यतोऽसौ स्त्रीभावेनाज्ञातैः सह गच्छति। अथाण्डौ निर्ब्रवीति—**आणी इव व्रीडयति तत् स्तम्भ** इति। तयोरण्डयोः स्तम्भो नियमनं यस्मिंस्तस्मिन्मै-थुनेकर्मणि असौ पण्डक आणी इव तौ व्रीडयति संस्तम्भात्यतो हेतो**रिमावाण्डौ**। तथा चाणी व्रीडयत्योराकारणकारड-कारा अत्रोपलभ्यन्ते तेन तथाविधं नाम लभेते तौ। आणी रथाक्षधूलिकीलकौ। तौ हि रथचक्रस्य बहिर्गतिं निवर्त-यतः। **आणिररणात्** अरणं गमनम् "ऋ गतौ" (भ्वा० जु० प०) ल्युट्। तथाचात्र न अणत्यनेनेत्याणिः। अणतेर्ग-त्यर्थानैरुक्तधातोरिण् (पा० ३-३-१८) करणे। नञर्थेचाकार एवाव्ययानां नानार्थत्वात्॥ वस्तुतस्तु अणनादिति वा अणतेः शब्दार्थादिणि आणिरिति देवराजयज्वान आहुः। शब्दायते ह्यसौ हिङ्गुयोगेन॥ **वशगमने** "रध हिंसासंराद्ध्योः।" (दि० प०) संराद्धिर्निष्पत्तिरिति तेन वशगमनमभिनिष्पद्यत इति॥

**बुन्द इषुर्भवति बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा॥ ४॥ (३२)**

अथ **बुन्दः** (१२८) इत्यनवगतम् **इषुर्भवती**त्यभिधेय-वचनम्। इषुर्बाणः। **बुन्दो** वज्रम् इति देवराजः। **भिन्दो** वेत्यादयः शब्दसमाधयः। अत्र "वृङ् संभक्तौ (स्वा० आ०) इत्यस्मादिन्प्रत्यये धातोर्बुन्भावो निपातनात् (पा० ६-३-१०९) व-बयोरभेदाद्बुन्दोपि॥ ४॥ (३२)

उक्तार्थे निगममुपन्यस्यति—

**"तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः। उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा" ॥ ४॥** (ऋ० सं० ६-५-३०)

**तुविक्ष**मिति। इयमुत्तरा च कुरुस्तुतेरार्षम्। ऐन्द्री सतो-बृहती। हे इन्द्र! **ते** तव **धनुः तुविक्षं** बहुविक्षेपम् तुवीति बहुनामसु पठितम् (निघं० ३-१-२) बहूनिपून्विक्षिपती-त्यर्थेऽण् (पा० ३-२-१) अथवा महाविक्षेपम्। महान् हि तस्य विक्षेपः सुदूरं क्षिपतीति कृत्वा किंच। **सुकृतं** शोभनानि हि कर्माणि क्रियन्ते तत्। **सूमयं** सुखमयम्। सुखं हि

१. दुर्गस्तु—प्रार्दक इति वा स्यात्। प्रकर्षेण ह्यसावर्दयति। अज्ञानैः सह स्त्रीत्वेन गच्छति। आण्डी कस्मात् तौ आण्डी? आणी इव व्रीडयति तौ ह्यसौ मुखे पुनर्मैथुने कर्मणि वर्तमान आणी इव व्रीडयति संभ्रम( संस्तभ्रा )तीत्यर्थं इत्याह॥

२. "अणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयो"रिति मेदिनी॥

३. अत्रानेकवाक्यार्थपदवचनं-विदारण—भयदान—भासमान-द्रवणलक्षणानामर्थेषु संभवात्पदलक्षणवर्णसामान्याच्चेदमुक्तमिति बोध्यम्॥

प्राचुर्येण प्रस्तुतं यत्र तत्। सुखशब्दात् "तत्प्रकृतवचने मयट्" (पा०५-४-२१) इति मयट्। खस्य लोपो दीर्घश्च निपातनात् (पा० ६-३-१०९) सुखकरं सुहृदामिति दुर्गः। किंच **हिरण्ययः** हिरण्यमयः सुवर्णविकृतः। "ऋत्व्यवास्त्व्य-" (पा० ६-४-१७५) इत्यादिना निपातः। **बुन्दः** इषुर्बाणस्ते। स हि **साधुः** साधयिता स्तोमानां, शत्रुसंघातानां वा, "कृवापा०" (उ० १-१) इत्यादिना उण् प्रत्ययः। किंच **उभा** उभौ। औङो डादेशः (पा० ७-१-३९) (एवमग्रेऽपि) अपि **ते** तव बाहू भुजौ **रण्या** रण्यौ रमणीयौ स्वायतौ पीनौ च। निपातः पूर्ववत्। यद्वा रणार्हौ सांग्राम्यौ। तदर्हतीत्यर्थे यत् (पा० ५-१-६६) **सुसंस्कृता** सुसंस्कृतौ समलंकृतौ "ऋत्यकः" (पा० ६-१-१२८) इति ह्रस्वः। **ऋदूपे** अर्दनेन हि गमने शत्रूणां पातयितारौ। निरुक्तमेतत्पुरस्तात् (नि० ६-४) **चिद्** इति पूजायाम् (नि० १-२-२) **ऋदूवृधा** ऋदूवृधौ। औङ आकारः (पा० ७-१-३९) मर्मवेधिनौ। ऋदु इति मर्मोच्यते तत्र यौ विध्यतस्तौ। "व्यध ताडने" (दि० प०) क्विप्। वर्णव्यत्ययो दीर्घश्च निपातनात्। अत्र भाष्यं न सम्यगिव लक्ष्यते तस्य सम्यक्पाठोऽन्वेष्यः। ततो योज्यम् इति दुर्गः॥१॥

एवमत्र धनुःसंबन्धात् "बुन्दः इषुः" इत्युपपद्यते॥

अथास्य भाष्यम्—

**तुविक्षं बहुविक्षेपं महाविक्षेपं वा॥ ते सुकृतं सुमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्यय उभौ ते बाहू रण्यौ रमणीयौ सांग्राम्यौ वर्दूपे अर्दनपातिनौ गमनपातिनौ (शब्दपातिनौ दूरपातिनौ वा) मर्मण्यर्दनवेधिनौ गमनवेधिनौ (शब्दवेधिनौ दूरवेधिनौ) वा॥५॥(३३)**

अथ "बुन्दो वे" त्युक्तेऽर्थे निगमान्तरमुपन्यस्यति (ववयोर्भेदेनार्थभेदः)

**"निरा॑विध्यद्गि॒रिभ्य॒ आ धा॒रय॑त्प॒क्वमो॑द॒नम्। इन्द्रो॑ बु॒न्दं स्वा॑ततम्"॥१॥**

(ऋ० सं० ६-५-३०)

**निराविध्यदिति**। आर्षादिकमुक्तपूर्वं गायत्रीयम्। अयम् **इन्द्रः गिरिभ्यः** मेघेभ्यः (निघं० १-१०-१०) तानुद्दिश्य। "ल्यब्लोपे०" (पा० १-४-३१ वा०) पञ्चमी। **स्वाततं** स्वाकृष्टम्, सर्वतो विस्तृतप्रकाशं वा **बुन्दं** वज्रं **निराविध्यत्** संप्राहरत्। ततश्च **पक्वं** परिपक्वम् **ओदनं** तत्साधनमन्नं मनुष्याणामर्थे **आधारयत्** आधारभूतमभिनिरपादयत्। भाष्ये तु ओदनमुदकदानं मेघमित्युक्तम्॥१॥

एवमत्रार्थवशाद् "बुन्दः वज्रम्" इत्युपपद्यते॥

अथास्य भाष्यम्—

**निरविध्यत गिरिभ्य आ धारयत्पक्वमोदनमुदकदानं मेघम्॥ इन्द्रो बुन्दं स्वाततम्॥**

अत्र भाष्यमते अटोऽकारस्य दीर्घ आर्षः। आधारयदित्यस्य यावन्निरुदकः संवृत्त इति दुर्गोक्त्यासमन्तादधारयदित्यर्थः प्रतिभाति।

**वृन्दं वुन्देन व्याख्यातं, वृन्दारकश्च॥६॥(३४)**

**वृन्दम्** (१२९) इत्येतत्पदम् **बुन्देन** एव **व्याख्यातम्**। अस्यापि ता एव व्युत्पत्तयो या बुन्दशब्दे। **वृन्दारकश्च** बुन्देनैव व्याख्यातः। हस्ती वृन्दारकः प्रकरणवशाद्वाऽन्यः कश्चित्॥ ६॥ (३४)

अथ **किः** (१३०) इत्यनवगतम्। कर्ता इत्यवगमः। करोतेः कर्तरीन्प्रत्ययः। सच "वेञो डिच्च" (उ० ४-७१) इति बाहुलकाद् डिदिति टिलोपे किः। अत्रार्थे निगममुपन्यस्यति—

**"अ॒यं होता॒ किरु॒ स य॒मस्य॒ कम॒प्यूहे॒ यत्स॒मञ्जन्ति॑ दे॒वाः। अह॑रहर्जायते॒ मा॒सि मा॒स्यथा॑ दे॒वा द॑धिरे हव्य॒वाह॑म्"॥ ३॥**

(ऋ० सं० ८-१-१२)

**अयमिति**। ऋचीकसौचीकोऽग्निर्विश्वेदेवा देवानां संवादसूक्तम्।

---

१. शरव्रातानां "स्तोमौघनिकरव्रातवारसंघातसंचयाः" इत्यमरः। एक एव इषुरनेकोऽभिनिष्पद्यते। एष च दुर्गव्याख्यानुरोधेन व्याख्याक्रमः॥

२. अर्दनवर्धनौ वा। अर्दनं पीडा॥

३. मुद्रितसायणपुस्तके पाठान्तरमुद्धृतमधो दृश्यते (टिप्पने) हे इन्द्र! ते तव धनुस्तुविक्षं महाक्षेपं सुकृतं सुमयं सुसुखं च। ते बुन्द इषुः साधुर्हिरण्ययः हिरण्मयः। ते उभा उभौ बाहू रण्या रमणीयौ सुसंस्कृता सुष्ठ्वलंकृतौ ऋदूपे चित् संग्रामे अर्दनपातिनौ ऋदूवृधा अर्दनवर्धनौ इति॥

४. कुण्डलितः पाठः सायणेन स्वमन्त्रभाष्यान्ते उद्धृतः॥

१. अत्र दुर्गः—पक्वं बहूनां मेघानां मध्ये यः पक्वो मेघ उदकदाने समर्थस्तमिन्द्रोऽभिरविध्यत्। विद्धा च तावत् आधारयद् यावन्निरुदकः संवृत्त इति। कथं निरविध्यत्? इति। बुन्दं स्वाततं स्वाकृष्टमाकर्णीकृत्वा। एवमत्राकर्षणसंबन्धात् "इषुः बुन्दः" इत्युपपद्यते इत्याह। परं "बुन्द इषुर्भवति बुन्दो वे"ति प्रक्रमविरोधोऽस्य दुरुद्धरः। पौनरुक्त्यापत्तेः। एकार्थे उदाहरण(निगम)-द्वयोपादानेऽप्यपरितोषादेः कारणस्याभावाच्च॥

२. एतच्च देवराजव्याख्यानात्पौनरुक्त्याभावाय व्याख्यातम्॥

३. अत्र सौचीकस्याग्नेरिति सायणभाष्ये, तत्र "विश्वेदेवाः शास्तन-" (ऋ० सं० ८-१-१२-१) इति षड्चमग्नेर्वाक्यम्। ततश्च "यस्य वाक्यं स ऋषिर्यो तेनोच्यते सा देवते"ति न्यायेनाग्निरेवास्यर्षिर्विश्वेदेवाश्च देवतेति व्यक्तमनुक्रमणिकायाम्-वषट्कारेण वृक्णेषु भ्रातृषु सौचीकोऽग्निरपः प्रविवेश देवैः समवदुत्तरैस्त्रिभिः (सूक्तैस्तत्र) महत्तं नव, अत्र युजोऽग्निवाक्यं विश्व इत्युत्तरं च षट्कं। अयुजो देवानां यमैच्छामेत्युत्तरं चैकादशकं, तद्वेति ह्वचोऽग्निरिति। तथाच ऋचीकस्येत्यादि दुर्गोक्तं चिन्त्यम्॥

तत्रेयं विश्वेदेवानामार्षम् । अनादेशपरिभाषया त्रिष्टुप् आग्नेयी । **अयम्** पृथिवीस्थानः ( भौमः ) अग्निः । **देवानाम् होता** आह्वाता । दूतत्वात् । तथाच निगमः "अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ आसादया इह" इति । **सः उ स हि यमस्य** भगवत आदित्यस्य । "यस्मिन्वृक्षे सुपलाशे" ( ऋ० सं० ८-७-२३-१ ) इत्यस्यामृचि यमत्वमादित्यस्य वक्ष्यति । ( १२-२९-१ ) **किः** कर्ता, अग्नेर्हि प्रकाशात्प्रातरादित्यः प्रसूयते । तदुक्तम्–"एष प्रातः प्रसुवति तस्मात्प्रातर्वोपतिष्ठन्त" इति । किंच **कम्** अन्नम् **अपि** । अपिच यमेव **ऊहे** अभिवहति । कतमत् ? **यत्** एतत् हविर्लक्षणं **देवाः** सर्वेपि **समञ्जन्ति** समश्नुवन्ति । अञ्जिरत्र प्रकरणवशाद्भोजनार्थः । किंच अयमेव **अहरहः** अहन्यहनि ( अग्निहोत्रिणां गृहेषु उद्बोध्यमानो महान् ) **जायते मासिमासि** अर्धमासेऽर्धमासे दर्शपूर्णमासेषु देवपितृयज्ञेषु च । **जायते** यस्मादेवं गुणविशिष्टोऽयमग्निः **अथ** एतस्मादेव कारणात् एनं **हव्यवाहम्** अग्निं **देवाः आदधिरे** निदधिरे ॥ ३ ॥

एवमत्र शब्दसारूप्यात् यमस्येति षष्ठीयोगाच्च "किः" इत्यस्य "कर्ता" इत्येष विपरिणाम उपपद्यते ॥

अथास्य भाष्यम्—

**अयं यो होता कर्ता स यमस्य, कमप्यन्नमभिवहति ॥ यत्समश्नुवन्ति देवाः ॥ अहरहर्जायते ॥ मासे मासे–अर्धमासेऽर्धमासे वा, अथ देवा निदधिरे हव्यवाहम् ॥**

अत्र **मासे** इति "पद्न्नोमास्–" ( पा० ६-१-६३ ) इत्यादिसूत्रेण मासादेशाभावपक्षे रूपम् । "वैकल्पिकेषु भावानुष्ठानं धर्माधिक्यफलकमि"ति महाभाष्यवचनात् ऋचि मासीति पठितम् । एतत्तत्त्वं महाभाष्यकारणोक्तम् "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः शास्त्रान्वितः स्वर्गे लोके च कामधुग्भवती"ति । तत्र यत्र यावत्सूत्रमधिकमधिकमन्वेति तत्र तावान्फलविशेषः कल्पनीय इत्युपरितनवचनबीजम्–तथा चोदाहृतं तेनैव ( म० भा० )

"नाकपृष्ठं सुखं यान्ति येऽचीकमतभाषिणः ।
ते च पत्काषिणो यान्ति ये चाकमतभाषिणः ॥ १ ॥" इति ॥

## उल्बम् ऊर्णोतेर्वृणोतेर्वा ॥

अथ **उल्बम्** ( १३१ ) इत्यनवगतम् । **जरायुः** इत्यवगमः । **ऊर्णोतेरि**ति धातुनिर्देशः । करणे घञि ऊर्णमिति प्राप्नोति । अथ **वा वृणोतेरेव** । तेन हि गर्भं आवृतो भवति । तत्र "अलिशलोरत उच्च" (  ) इति विधीयमानो वप्रत्ययो बाहुलकादाभ्यामपि यथाविवक्षं भवति । प्रकृतेरुल्भावश्च । "गर्भाशयो जरायुः स्यादुल्वं चे" त्यमरः ॥

अत्रार्थे—

**"महत्तदुल्वं स्थविरं तदासीत्"**

( ऋ० सं० ८-१-१० )

**इत्यपि निगमो भवति ॥**

अस्य "येनाविष्टितः प्रविवेशिथापः । विश्वा अपश्यन्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः" इति शेषः । हे **अग्ने** ! **तत्** तदा **तत्** वक्ष्यमाणं प्रसिद्धं ते **उल्बम्** प्रावरणं जरायुः **महत्** परिमाणतः **स्थविरम्** अवस्थातश्चिरन्तनम्, अत्यन्तं स्थूलं वा **आसीत्** । **येन** उल्वेन **आविष्टितः** आवेष्टितः । इयत्वमार्षम् । आवृतस्त्वम् पुरा ( आदिसर्गे ) **अपः** उद्दिश्य ( तासु ) **प्रविवेशिथ** प्रविष्टवानसि । किंच हे **जातवेदः** ! जातप्रज्ञाग्ने ! **ते** तव **विश्वाः** सर्वाः **तन्वः** तनूः । सुब्व्यत्यय आर्षः ( पा० ३-१-८५ ) सर्वाण्यङ्गानि **बहुधा** बहुप्रकारम् । अनेकेषु अभिधानेषु वर्तमाना इति दुर्गः । **एकः देवः** प्रजापतिरन्यो वा **अपश्यत्** दृष्टवान् । कोऽन्यस्ततस्तव तनूनामन्तं वेत्तुमर्हतीत्यर्थः ॥ १ ॥

एवमत्र "जरायुः उल्व"शब्देनोच्यते आवेष्टनसंबन्धात् ॥

## ऋबीसमपगतभास-मपहृतभास-मन्तर्हितभासं-गतभासं वा ॥ ७ ॥ ( ३५ )

अथ **ऋबीसम्** ( १३२ ) इत्यनवगतम् । **अपगतभा**समित्येवमाद्याः शब्दसमाधयः । पृथिवी अभिधेया । सा हि कृष्णच्छाया तस्मादपगतभासमित्याद्याः शब्दसमाधय उपपद्यन्ते । धात्वन्यत्वकृतो विशेषः । अपगतापहृतान्तर्हितगतशब्दानामन्यतमत्पूर्वपदं भासशब्द उत्तरपदम् पूर्वस्य ऋभावः । भकारस्य बकार आकारस्य ईकारश्च ॥ ७ ॥ ( ३५ )

उक्तार्थे निगममुपन्यस्यति—

**"हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् । ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति" ॥ ३ ॥**

( ऋ० सं० १-८-९ )

**हिमेनेति** । कक्षीवत आर्षम् । त्रिष्टुबाश्विनी । प्रातरनुवा-

१. एवं ब्रह्माख्यायते–"वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीको नामाग्निर्वषट्कारहविर्वहनाभ्यां भीतो देवेभ्यो निर्गत्यापः प्राविशत् । स च मत्स्यैः प्रदर्शितः सन्नन्वेष्टुमागतैर्देवैः सह संवादं कृतवान्" इति । तथा च तैत्तिरीयब्राह्मणम्–"अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त । सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति । स निलायत । सोऽपः प्राविशत् । तं देवाः प्रैषमैच्छन्नि"त्यादि ॥ ( तै० सं० २-६-६ )

काश्विनयोः शस्यते । हे अश्विना ! अश्विनौ ! औङोऽत्र डादेशः ( पा० ७-१-३८ ) हिमेन उदकेन । ग्रीष्मान्तेऽतिप्रवृद्धम् अग्निम् घ्रंसम् अहर्लक्षणं ( नि० १-८-६ ) तदुपलक्षितानिमॉल्लोकान्दिधक्षन्तमिव तं युवाम् अवारयेथाम् तस्याहस्तैक्ष्ण्यं वृष्ट्या शमितवन्तावित्यर्थः । वारयित्वा च पितुमतीम् अन्नवतीम् पुरोडाशायन्नसहिताम् । पितु इत्यन्नम् ( निघं० २-७-६ ) ऊर्जम् आज्यलक्षणाम् । एतदप्यन्ननामस्वेव पठितम् । निरुक्तमपि "ऊर्गित्यन्ननामोर्जयतीति सत" इति ( ३-८ ) अग्निरनेन बलवान्प्राणवांश्च भवति । "ऊर्ज बलप्राणनयोः" ( चु० प० ) क्विप् । युवाम् । अस्मै हविर्भोजेऽग्नये । वर्षानुग्रहपूर्विकयौषधिनिष्पत्त्या । अधत्तम् पुष्ट्यर्थं प्रायच्छतम् । किंच योऽयम् ऋबीसे अपगततेजस्के पृथिवीद्रव्येऽग्निरनुप्रविष्टोन्तः, येनेमानि पृथिवीगर्भेषूपहितानि तिन्दुकादीनि पच्यन्ते, यामवेक्ष्योक्तम् "ऋबीसपक्वं नाश्नीयादि"ति । तम् अपि अवनीतम् ओषधीनामुत्पादनायावस्तात्नीतं ( पार्थिवाग्निना परिपक्वा उदकेन क्लिन्ना ह्योषधिवनस्पतयोऽपि विरोहन्तीति । अग्निम् । अदेस्त्रिप् ( उ० ४-६७ ) हविषाम् ओषधिवनस्पत्यादीनां वा अत्तारमेवं सर्वगणम् सर्वनामानमग्निम् ( अग्निरेवहि अयमनेनौषध्यादिरूपेणावस्थितः सर्वैर्नामभिरभिधीयते । अग्नेः सर्वोत्पत्तिदर्शनात् ) युवामेव स्वस्ति स्वस्त्ययनाय ( अविनाशाय ) जगतः उन्निन्यथुः व्रीह्याद्योषधिवनस्पत्यादिरूपेण भूमेरुपरिष्टान्नीतवन्तौ । अश्विनोरेव कृपया वृष्टिर्भवतीति तावनेन स्तूयेते स्म ॥ ३ ॥

एवमत्र "ऋबीस" शब्देन "पृथिवी" इत्युच्यतेऽर्थवशात् ॥

अथास्य भाष्यम्—

**हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथा,-मन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरोषधिवनस्पतिष्वप्सु, तमुन्निन्यथुः सर्वगणं सर्वनामानम् ॥** इति ॥

१. सायणस्त्वितिहासमुखेनामूं व्याख्यातवान् । तथा च सः-अत्रेदमाख्यानम्-अत्रिमृषिमसुराः शतद्वारे पीडायन्त्रगृहे प्रवेश्य तुषाग्निनाऽबाधिषत । तदानीं तेन ऋषिणा स्तुतावश्विनावग्निमुदकेनोपशमय्य तस्मात्पीडागृहादविकलेन्द्रियवर्गं सन्तं तं निरगमयतामिति । तदेतत्प्रतिपाद्यते । अश्विना ! हे अश्विनौ ! हिमेन हिमवच्छीतोदकेन घ्रंसं दीप्यमानमत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निमवारयेथां निवारितवन्तौ । शीतीकृतवन्तावित्यर्थः । अपि चास्मै असुरपीडया कार्श्यं प्राप्तायात्रये पितुमतीम् । पितुरित्यन्ननाम । अन्नयुक्ताम् ऊर्जं बलप्रदं रसात्मकं क्षीरादिकमधत्तं पुष्ट्यर्थं प्रायच्छतम् । ऋबीसेऽपगतप्रकाशे पीडायन्त्रगृहेऽवनीतम् अवाङ्मुखतया असुरैः प्रापितमत्रिं सर्वगणं गणः समूहः सर्वेषामिन्द्रियाणां पुत्रादीनां वा गणेनोपेतं स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः तस्माद्गृहादुद्गमय्य युवां स्वगृहं प्रापितवन्तौ इति ॥

अथ निगमप्रसक्तं गणशब्दं निर्ब्रवीति—

**गणो गणनात् ॥ गुणश्च ॥**

स हि गण्यते बहुसंयोगात् । गुणश्च । गुणोऽपि गणनादेव । असावपि हि गण्यत एव द्विगुणस्त्रिगुणं इति ।

अधुनास्य मन्त्रस्य भाष्यकारः समस्तार्थमाह—

**यद्वृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्याम् तदश्विनो रूपम् ॥ तेनैतौ स्तौति स्तौति ॥८॥(३६)**

**इति श्रीमद्यास्कमुनि० प्र० नि० शास्त्रे नैग० का० षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥ ६ ॥**

यदिति । यत् एतद् वृष्टे मेघे । सतिसप्तमी ( पा० २-३-३७ ) ओषधयः अन्नाद्या उद्यन्ति उदयमापद्यन्ते ( सर्वत उत्पद्यन्ते ) फलन्ति च, एवं पृथिव्यां प्राणिनश्च । तत् स एष उभयलक्षणोऽपि अश्विनो रूपम् अश्विनोरेवाधिकार-स्तदश्विनोरेव महाभाग्यम् तेन महाभाग्यलक्षणेन रूपेण एतौ अश्विनौ मन्त्रदृक् स्तौति । स्तौतीतिपदावृत्तिरध्यायसमाप्त्यर्था ॥ ७ ॥

इति श्रीमद्यास्क० निरुक्तविवृतौ नैगमकाण्डे षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥ ६ ॥

---

शा० के खाऽङ्घिवसुक्ष्मा (१८४०) परिमिते मासे तपस्यारैके पक्षेऽनक्ष उर्व्रकमेऽवसितिमैद्वृत्तिर्निरुक्तार्धके ।
सम्राट्सत्कृतिभाजनस्य मिथिलाधीशेन सम्मानितस्वान्तेवासिजनानुकम्पिहृदयस्य श्रीमुकुन्दस्य मे ॥ १ ॥

१. "उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाक्" इति नियमेऽपि विधेयप्राधान्यात्पुंलिङ्गनिर्देशोऽत्र बोध्यः ॥

२. "पदाभ्यासो निगमः" इत्येतन्निगमलक्षणलक्षणायेत्यर्थः ॥

३. आरः कुजः स एवारकस्तस्मिन् । अत्र समाप्तिः प्रशस्तेति पुरस्तादुपादानम् ॥

४. विष्णौ तत्स्वामिके द्वादशीतिथौ ॥

५. पूर्वषट्के । द्वादशाध्याय्या एव मुख्यनिरुक्तपदाभिधेयत्वस्य प्राक्प्रतिज्ञातत्वात् ॥

मुजफ्फरपुरे वरे प्रभवतोऽनुकम्पावशात्
प्रतिष्ठितिमिते नवे महति वेदविद्यालये ।
अनेकविदधिष्ठिते य इह कर्मकाण्डादिकं
सुशास्त्रनिचयं बुधो विविदिषूनसमध्यापयत् ॥ १ ॥
तदीयकृतिमञ्जसा समधिगत्य सन्तो मुदा
निरुक्तविवृतिं लघुं लघुभवन्तु नैरुक्तकाः ।
इमामतिपरिस्फुटार्थनिचयाञ्चितां वञ्चितां
दुरुक्ति-पुनरुक्ति-तो जगति पूर्वषट्काश्रिताम् ॥ २ ॥
इति निगदति टिप्पनकृत्—

**॥ समाप्तं चेदं पूर्वार्धम् ॥**

# निरुक्तोत्तरषट्कम् ।



## अथ सप्तमोऽध्यायः

### अथातो दैवतम्[1] ॥

अथ ऐकपदिकानन्तरमवसरप्राप्तं तृतीयं प्रकरणं दैवतं "व्याख्यास्याम" इति वाक्यशेषः । अतः शब्दः क्रमे हेतौ वा । यतः प्रकरणद्वयानन्तरमिदमवश्यं समाम्नायक्रमप्राप्तं व्याख्यातव्यमित्येवं क्रमे, दैवतमन्तरेण न शक्यो देवतापदार्थः सम्यगवबोद्धुम् । देवतापरिज्ञानानुबद्धस्त्वखिलः पुरुषार्थं इत्यत इति ।

अथैतल्लक्षणमुच्यते—

### तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते ॥

प्राधान्यस्तुतीनाम् अग्न्यादिदेवपत्न्यन्तानाम् । दैवतं नामप्रकरणमिति एवमाचार्या आचक्षते कथयन्ति । निरूढा हीयमेतस्मिन्प्रकरणे संज्ञेति भावः ।

### सैषा देवतोपपरीक्षा ॥

सा या पुरस्तात्[2]प्रतिज्ञाता सा इदानीं प्रकरणद्वये परिसमाप्ते यथाप्रकरणोपन्यासेनैवावसरप्राप्ता, सामान्यविशेषतः स्वलक्षणसतत्त्वोपपत्तिभिरेकैकस्या देवतायाः उपगम्योपगम्य परीक्षा "वर्तिष्यत" इति वाक्यशेषः । इदमिहोक्तम्—यानि प्राधान्यस्तुतिभाञ्जि देवताभिधानानि तत्समुदायो दैवतं प्रकरणं तद्व्याख्यास्याम इति । तस्य पुनरियमेव समासतो[3] व्याख्या यद्देवतोपपरीक्षणं तदभिधानव्युत्पत्ति=तत्स्तुत्युदाहरण=तन्निर्वचनानि ।

१. अत्र दुर्गः—समाप्तं चैकपदिकं प्रकरणमस्यानुदैवतं तद्भवति यस्यायमादिः—"अथातो दैवतम्" इति । यावन्तो मन्त्राः सर्वशाखासु, तेषु यानि गुणपदानि लक्षणोद्देशतस्तानि सर्वाण्येव व्याख्यातानि द्वयोः प्रकरणयोर्नैघण्टुकैकपदिकयोः । संविज्ञातपदानि तु प्राधान्यस्तुतिभाग्देवताविषयाणि अग्न्यादीनि सर्वमन्त्रेष्ववशिष्यन्ते । तानि च पुनरमूनि समाम्नातान्यस्मिञ्छास्त्रेऽग्न्यादीनि देवपत्न्यन्तानि । अतस्तद्व्याचिख्यासयेदमारभ्यते अथातो दैवतमिति । अथशब्दोऽधिकारार्थं इति ॥

२. प्रकरणत्रयोपन्यासकाले नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति—"तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते तदुपरिष्टाद्व्याख्यास्याम इति ॥

३. संक्षेपतः ॥

तत्पुनरेतत्सर्वमपि मन्त्राधिदैवतलक्षणमनुक्त्वा न शक्यं व्याख्यातुं, मन्त्राधीनत्वात्सर्वस्यास्य । अतो मन्त्रदेवतालक्षणविदिधारयिषया[1] ब्रवीति—

### यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते । तद्दैवतः स मन्त्रो भवति ॥

यत् अर्थवस्तु कामयमान ऋषिर्यस्यां देवतायामभिष्टुतायामार्थपत्यम् अर्थपतिभावमात्मने[2] इच्छन् अमुष्या देवतायाः प्रसादेनाहममुष्यार्थस्य पतिर्भविष्यामीत्येतां बुद्धिं पुरोधाय स्तुतिं प्रयुङ्क्ते तद्दैवत एव स मन्त्रो भवति । एतदेव मन्त्रे देवतालक्षणम् । एतेन लक्षणेन सर्वमन्त्रेषु देवतोपलक्ष्या । अथवा—देवताविषयेऽस्यार्थस्येयं देवता दातुं समर्थेति जानानः स्तुतिं प्रयुङ्क्ते येन मन्त्रेण, सा प्राधान्यस्तुतिभाग्देवता, सा पुनरियं स्तुतिश्चतुर्विधा=नाम्ना—बन्धुभिः—कर्मणा—रूपेणेति । तथा चोक्तम्—"स्तुति—र्नाम—रूप—कर्म—बन्धुभि"रिति ।

ऋच एव हि प्रायेणातितरामपिहितार्थाः । न तथा यजूंषि तासु ( ऋक्षु ) हि विज्ञातासु यजूंष्यपि विज्ञातान्येव भवन्ति । तस्मादृच एव पुरस्कृत्य ब्रवीति—

### तास्त्रिविधा ऋचः ॥

इति । याः काश्चन सर्वेषु वेदेषु ऋचः सन्ति, ताः सर्वा अपि त्रिविधा एव भवन्ति । तद्यथा—

### परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्च ॥

इति । एवं तत्त्रैविध्यं सामान्यत उपदिश्याधुना प्रत्येकं लक्षणतो ब्रवीति, उदाहरणैश्च दर्शयति—

### तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य ॥ १ ॥

१. विधारयितुमिच्छया । संप्रधारणा—विधारणा—समर्थनमित्यनर्थान्तरम् ॥

२. अन्ये तु व्याचक्षते—आर्थपत्यं प्रभुत्वं, तद्यस्यां देवतायां योगबलेनोपलभ्याभिमतकामांस्तत इच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स स्तुतिलक्षणो भवतीति । ततश्चाभिमतफलदातृत्वमेव देवत्वमित्युक्तं भवति ॥

तत्र तस्मिन्नैविध्ये परोक्षकृतानामृचामेतल्लक्षणं भवति— **परोक्ष००तस्येति** । **सर्वाभिः** प्रथमादिभिर्विभक्तिभिः **नामभिः** सर्वैरपि सुबन्तपदैरित्यर्थः । **आख्यातस्य** तिङन्तस्य ॥ १ ॥

तद्यथैतान्युदाहरणानि सप्तस्वपि विभक्तिष्वानुपूर्व्येणैव ( क्रमेण ) दर्शयति । तत्र तावत्प्रथमायाम्—

**"इन्द्रो॑ दि॒व इन्द्र॑ ईशे पृथि॒व्याः"**

( ऋ० सं० ८-४-१५-५ )

**इन्द्र** इति । अस्य "इन्द्रो॑ अ॒पामिन्द्र॒ इत्पर्व॑तानाम् । इन्द्रो॑ वृ॒धामिन्द्र॒ इन्मेधि॑राणा॒मिन्द्रः॒ क्षेमे॒ योगे॒ हव्य॒ इन्द्रः॑" इति शेषः । रेणोर्वैश्वामित्रस्येयमार्षम् । ऐन्द्री त्रिष्टुप् । सूर्यस्तुत्येकाहनिष्कैवल्ये विनियुक्ता । **इन्द्रः** देवराजः **दिवः** द्युलोकस्य **ईशे** ईष्टे प्रभुः । **इन्द्रः** एव **पृथिव्याः** भूमेरपि ईश्वरो भवति । **इन्द्र एव अपाम्** उदकानामपि ईश्वरः । वर्षकर्मादिना । **इन्द्र इत्** इन्द्र एव **पर्वतानाम्** मेघानामपि ( निघं० १-१०-९ ) ईश्वरो भवति । **इन्द्र** एव **वृधाम्** अतिप्रवृद्धानामपि भूतानामाकाशादीनाम् ईश्वरः । **इन्द्र इत्** इन्द्र एव **मेधिराणाम्** प्रज्ञावतां धनवतां वा । यज्ञैस्तद्वतामिति दुर्गः । मेधा प्रज्ञा धनं वा (निघं० २-१०-२२) ततो मत्वर्थं इरच् पृषोदरादित्वात् ( पा० ६-३-१०९ ) **इन्द्र** एव हि **क्षेमे** लब्धस्य धनस्य परिपालने । **योगे** अर्थसंयोगे । प्राप्तव्ये इति दुर्गः । **हव्यः** आह्वातव्यो नान्यः कश्चित्समर्थं एतत्सर्वं कर्तुमिति भावः । अत्रेन्द्र इत्येतस्मादुपपदादीश इति प्रथमपुरुषैकवचनं नोत्तमपुरुषैकवचनमिति प्रतीयते । तदत्र तलोप आर्षः । व्यत्ययो वा पुरुषस्य ( पा० ३-१-८५ ) तथाचोक्तम्—"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति । अत्र नरः पुरुषः ॥ ५ ॥

अथ द्वितीयायाम्—

**"इन्द्र॒मिद्गा॒थिनो॑ बृ॒हत्"**

( ऋ० सं १-१-१३-१)

**इन्द्रमिति** । अस्य "इन्द्र॑म॒र्केभि॑र॒र्किणः॑ । इन्द्रं॒ वाणी॑रनूषत" इति शेषः ॥ मधुच्छन्दस आर्षम् । ऐन्द्री गायत्री । महाव्रते महदुक्थे शिरसि शस्यते । हे **गाथिनः!** ( सामगाः ) गीयमानसामयुक्ता उद्गातारः । **इन्द्रमित्** इन्द्रमेव यूयं **बृहत्** बृहता । आङो लुक् ( पा० ७-१-३९ ) ("त्वामिद्धि हवं महे" इत्यस्यामृचि ( ऋ० सं० ४-७-२७ ) उत्पन्नेन बृहन्नामकेन ) साम्ना । **अनूषत** अभिष्टुत । हे **अर्किणः!** अर्चनहेतुमन्त्रोपेता होतारः! ( ऋग्विदः! ) यूयमपि **अर्कैभिः** अर्कैः ऋग्रूपैर्मन्त्रैः (नि० ५-४) "बहुलं छन्दसि" (पा० ७-१-१०) इत्यैसभाव एत्वम् (पा० ७-३-१०३) **इन्द्रम्** एवानूषताभिष्टुतेति पूर्वेणैवान्वयः । यूयमपि च हे **अध्वर्यवः!** ( यजुर्विदः ) **इन्द्रम्** एव **वाणीः** वाग्भिर्यजुर्मयीभिरनूषत । "णु स्तुतौ" ( अ० प० ) "णो नः" ( पा० ६-१-६५ ) इति नत्वं लुङि व्यत्ययेनात्मनेपदम् ( पा० ३-१-८५ ) झस्यादादेशः । सिच इडभाव उकारस्य दीर्घत्वं च छान्दसम् । धातोः कुटादित्वेन सिचो ङित्त्वाद्गुणाभावः ॥ १ ॥

अथ तृतीयायाम्—

**"इन्द्रे॑णै॒ते तृत्स॑वो वेवि॑षा॒णाः"**

( ऋ० सं० ५-२-२६-५ )

**इन्द्रेणेति** । व्याख्यातमेतत्पुरस्तात् ( नि० ६-६-३ ) ।

अथ चतुर्थ्याम्—

**"इन्द्रा॑य॒ साम॑ गायत"**

( ऋ० सं ६-७-१-१ )

**इन्द्रायेति** । अस्य "विप्रा॑य बृह॒ते बृ॒हत् । धर्म॒कृते॑ विप॒श्चिते॑ पन॒स्यवे॑" इति शेषः । नृमेधस आर्षम् । उष्णिगैन्द्री । सावित्रेष्वहःसु स्तोत्रियानुरूपवर्गे तृतीयसवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । हे उद्गातारः! **विप्राय** मेधाविने ( निघं० ३-१५-२ ) **बृहते** महते **धर्मकृते** कृतधर्मणे । ( कर्मणः कर्त्रे ) **विपश्चिते** विदुषे **पनस्यवे** आत्मनः स्तुतिमिच्छते । पनस्यतिरर्चतिकर्मा स्तुत्यर्थोऽपीति स्कन्दस्वामिनः । "पन स्तुतौ" ( भ्वा० प० ). तथा च पननं पनस्तदिच्छतीति क्यजन्तात् "क्याच्छन्दसि" ( पा० ३-२-१७० ) इत्युप्रत्ययः । सुगागमश्च ( पा० ७-१-५१ वा० ) **इन्द्राय** इन्द्रार्थं ( तत्प्रीत्यै ) **बृहत्** बृहन्नामकं **साम गायत** पठत ॥ १ ॥

अथ पञ्चम्याम्—

**"नेन्द्रा॑दृ॒ते प॑वते॒ धाम॒ किं च॒न"**

( ऋ० सं० ७-२-२२-१ )

**नेन्द्रायेति** । अस्य "सूर्य॑स्येव र॒श्मयो॑ द्रावयि॒त्नवो॑ मत्स॒रासः॑ प्र॒सुपः॑ सा॒कमी॑रते । तन्तुं॑ त॒तं परि॒ सर्गा॑स आ॒शवो॑"

---

१. गायतेः "उषिकुषिगार्तिभ्यस्थन्" ( उ० २-३ ) इति थन्प्रत्ययः । गाथा येषां सन्तीति गाथिनः "व्रीह्यादिभ्यश्च" ( पा० ५-२-११६ ) इतीनिप्रत्ययः ॥

१. "अर्च पूजायाम्" ( भ्वा० प० ) करणे घः ( पा० ३-३-११८ ) "चजोः—" ( पा० ७-३-५२ ) इति कुत्वम् । अच्यन्त एभिरित्यर्का मन्त्रास्ते सन्त्येषामिति मत्वर्थीय इनिप्रत्ययः ( पा० ५-२-११५ ) ॥

२. व्यत्ययेन तृतीयास्थाने प्रथमा ( पा० ३-१-८५ ) जसि "प्रथमयोः—" ( पा० ६-१-१०२ ) इति पूर्वसवर्णदीर्घः । "दीर्घाज्जसि च" ( पा० ६-१-१०५ ) इति तु "वा छन्दसि" ( पा० ६-१-१०६ ) इति विकल्पितो न प्रवर्तते ॥

३. आङ्गिरसस्य नृमेधस्यार्षमिति सायणः ॥

इत्यादिः । रेणोर्वैश्वामित्रस्येयमार्षम् । पावमानी सौमी जगती । **सूर्यस्य** सुवीर्यस्य सर्वस्य प्रेरकस्य वादित्यस्य **रश्मयः** रर्वतो व्यापकाः किरणा **इव द्रावयित्नवः** द्रावणशीलाः । ते यथा तमसां तथैते पापानाम् । सर्वत्र द्रवणशीला वा । **मत्सरासः** मत्सराः । मदकराः सोमाः **प्रसुपः** प्रसूता एतैः ऋत्विग्भिः **साकम्** सहैव इन्द्रं प्रति **ईरते** गच्छन्ति "ईर गतौ" ( अ० आ० ) लट् । गत्वा च **ततं** विस्तृतं **तन्तुं** सूत्रं तदुपलक्षितं वस्त्रं **परिसर्गासः** परिसर्गाः परिसृतास्तन्त्ववयवा यथा **आशवः** व्याप्नुवन्ति "अशू व्याप्तौ" ( स्वा० प० ) उण् । एवमेतं यातारं स्वामिनमिन्द्रं प्रति अश्नुवन्ति व्याप्नुवन्तीत्यर्थः । कस्मात्पुनरेवं क्रमः ? यस्मादसौ सोमः **इन्द्रादृते** इन्द्रं विहाय प्रातःसवनादीनां सोमसवनस्थानानां **किञ्चन** किंचिदपि **धाम** स्थानं ( देवशरीरं ) न पवते न गच्छति, पवतिर्नैरुक्तो धातुर्गत्यर्थः ( निघं० २-१४-१०८ ) तस्मादेवं ब्रूमहे इन्द्रमेवैते व्याप्नुवन्तीति ॥ १ ॥

अथ षष्ठ्याम्—

## "इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्र वो॑चम्"

( ऋ० सं० १-२-३६-१ )

**इन्द्रस्येति** । अस्य "यानि॑ च॒कार॑ प्रथ॒मानि॑ व॒ज्री । अह॒न्नहि॒मन्व॒पस्त॑तर्द॒ प्र व॒क्षणा॑ अभिन॒त्पर्व॑तानाम्" इति शेषः । आङ्गिरसस्य हिरण्यस्तूपस्येयमार्षम् । त्रिष्टुप् ऐन्द्री । अग्निष्टोमे माध्यन्दिनसवने निष्केवल्ये शस्यते । **वज्री** वज्रयुक्त इन्द्रः **प्रथमानि** पूर्वसिद्धानि मुख्यानि, अकृतपूर्वाणि वान्यैः **वीर्याणि** वीरकर्माणि यानि **चकार** कृतवांस्तानि तस्य **इन्द्रस्य नु** क्षिप्रं **प्रवोचम्** प्रकर्षेण ब्रवीमि । वर्तमाने लुङ् ( पा० ३-४-६ ) "अस्यतिवक्ति-" ( पा० ३-१-५२ ) इत्यङि "वच उम्" ( पा० ७-४-२० ) इत्युमागमः "बहुलं छन्दस्यमाङ्योगेपि" ( पा० ६-४-७५ ) इत्यडभावः । कानि वीर्याणि ? **अहिं** मेघम् ( निघं० १-१०-२१ ) **अहन्** हतवान्वज्रेणेत्येकं वीर्यम् **अनु** पश्चात् **अपः** जलानि **ततर्द** हिंसितवान् "तर्द हिंसायाम्" ( भ्वा० प० ) लिट् । भूमौ निपातितवानित्यर्थः । इदं द्वितीयं वीर्यमपरं च **पर्वतानां** मेघानाम् ( निघं० १-१०-९ ) संबन्धिनी **वक्षणाः** उदकवहनशिराः । यद्वा पर्वतानां गिरीणां वक्षणाः नदीः ( निघं० १-१३-९ ) **प्राभिनत्** प्रकर्षेण भिन्नवान् । कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः । एवमादीनि वीर्याणि ( पराक्रमप्रयुक्तानि कर्माणि ) अहमिन्द्रस्य प्रवोचमिति ॥ १ ॥

अथ सप्तम्याम्—

## "इन्द्रे॒ कामा॑ अयंसते"ति ॥

**इन्द्रे** इति । अस्य "दिव्यासः पार्थिवा उत । त्यमूषु गृणता नरः" इति शेषः । हे स्तोतारः ! ये **दिव्यासः** दिव्याः **कामाः** ये च **पार्थिवा उत** पार्थिवा अपि ते उभये अपि **इन्द्रे** एव **अयंसत** उपनिबद्धा अतस्तं प्रार्थयत । स हि कामानामीष्टे । हे **नरः** ! यूयं **त्यमूषु** तमेव सुष्ठु कामप्राप्त्यर्थं **गृणत** स्तुत ॥

एवं परोक्षकृतमन्त्रलक्षणमुक्त्वा संप्रति यथाप्रतिज्ञं प्रत्यक्षकृतमन्त्रलक्षणमाह—

### अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना ॥

तदधिकारार्थोऽयमथशब्दः । **मध्यमपुरुषयोगा** मध्यमेन पुरुषेण संयुक्ता ये मन्त्रास्ते **त्वमित्येतेन सर्वनाम्ना** युक्ताश्च **प्रत्यक्षकृताः** । यत्र "त्वमि"त्येवं श्रूयते तत्राविद्यमानोऽपि मध्यमः पुरुषोऽध्याहार्यः । यत्र तु मध्यमः पुरुषः श्रूयते तत्राविद्यमानमपि "त्वमि"त्येतत्सर्वनाम अध्याहार्यम् । संबन्धिशब्दत्वादेतयोः । व्याकरणानुशासनमपि "युष्मद्युपपदे-" ( पा० १-४-१०५ ) मध्यमं पुरुषमनुशास्ति, तथाच—

"त्वमि॑न्द्र॒ बला॒दधि॑ ॥"

( ऋ० सं० ८-८-११-२ )

"वि न॑ इन्द्र॒ मृधो॑ जहि ॥"

( ऋ० सं० ८-८-१०-४ )

इति चैते उदाहरणे, अत्राद्यस्य "सह॑सो जा॒त ओज॑सः । त्वं वृ॑षन्वृ॒षेद॑सि" इति शेषः । देवजामयः सूक्तं ददृशुः गायत्रमैन्द्रम् तत्रेयं महारात्रिके ( द्वितीये ) पर्याये प्रशास्तुः स्तोत्रे ( शस्त्रे ) विनियुक्ता । हे **इन्द्र** ! **त्वं सहसः** परेषामभिभवनसमर्थात् **बलात् अधिजातः** । बलाज्जातोऽसि । अधिः पञ्चम्यर्थानुवादकः । वृत्रादिवधहेतुभूताद्बलाद्धेतोस्त्वं प्रख्यातो भवसीत्यर्थः । अपि च **ओजसः** ओजोनाम बलहेतुर्हृदयगतं धैर्यं तस्मादपि त्वं जातोऽसि । हे **वृषन्** वर्षितः ! त्वं **वृषेत् असि** कामानां वर्षितैव भवसि इच्छब्दोऽत्रैवार्थे ॥ २ ॥

द्वितीयस्य "नी॒चा यं॒च्छ पृ॑तन्य॒तः । यो अ॒स्माँ अ॑भि॒दासत्यध॑रं गमया॒ तमः॑" इति शेषः । शासस्य भारद्वाजस्येयमार्षम् । वैमृधस्य हविषो याज्या । अनुष्टुबैन्द्री । हे **इन्द्र** ! **नः** अस्माकम् **मृधः** संग्रामकारिणः शत्रून् ( निघं० २-१७-२० ) **विजहि** विनाशय । तथा पृतन्यतः पृतनाः सेना आत्मन इच्छतः । युयुत्समानानपि तान् **नीचा** नीचैः ( नीचीनमवा-

---

१. सायणस्तु—प्रसुपः शत्रूणां प्रस्वापका हन्तारः । आसवो ग्रहेषु चमसेषु च व्याप्ताः सर्गासः सृज्यमानाः सोमास्ततं विस्तृतं तन्तुं तन्तुभिः कृतं वस्त्रं साकं सह युगपत् परीईरते परितो गच्छन्ति । ते सोमा इन्द्रादृते इन्द्रं वर्जयित्वाऽन्यत्किंचन धाम देवशरीरं लक्षीकृत्य न पवते न गच्छन्ति । एकवचनं छान्दसम् । किंतु इन्द्रस्यैव धाम प्रति गच्छन्ति । इन्द्रस्य धाम्नो यष्टव्यत्वं च—"आयालिन्द्रस्य प्रिया धामानि" ( तै० ब्रा० ३-५-७ ) मन्त्रवर्णादवगम्यत इत्याह ॥

१. देवानां स्वसृभूता इन्द्रमातरो नाम ऋषिकाः । तथाचानुक्रान्तम्—"ईङ्खयन्तीर्देवजामय इन्द्रमातरो गायत्र" मिति ॥

स्सुखं यथा स्यात्तथा ) यच्छ गमय "दाणू दाने" ( भ्वा० प० ) लोट् । "पाघ्राध्मा–" ( पा० ७–३–७८ ) इति दाणो यच्छादेशोऽन्तर्भावितण्यर्थोऽत्र दाण् । एवमग्रे दस्यतेरिति । यः शत्रुः **अस्मान् अभिदासति** अभ्युपक्षपयितुमिच्छति । "दसु उपक्षये" ( दि० प० ) तम् **अधरं** निकृष्टं **तमः** अन्धकारं मरणलक्षणं **गमया** गमय प्रापय । छान्दसो दीर्घः ( पा० ६–३–१३७ ) ॥ ४ ॥

## अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि ॥

युष्मत्प्रयोगैर्हि क्वचित्स्तोतारः संबध्यन्ते । तद्यथा–

**"मा चिदुन्यद्वि शंसत ॥"**

( ऋ० सं० ५–७–१०–१ )

**"कण्वा अभि प्र गायत ॥"**

( ऋ० सं० १–३–१२–१ )

**"उप प्रेत कुशिकाश्चेतयध्वम् ॥"**

( ऋ० सं० ३–३–२१–१ ).

**इति** चैतान्युदाहरणानि । अत्राद्यस्य "सखायो मा रिषण्यत । इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत" इति शेषः । प्रगाथस्येयमार्षे बृहती ऐन्द्री । त्रिचाशीतिषु विनियुक्ता । हे **सखायः**! समानख्यानाः स्तोतारः! **मा अन्यत् किंचित्** अपि इन्द्रस्तोत्रादन्यत्स्तोत्रं **विशंसत** विविधाभिः स्तुतिभिरुच्चारयत । **मा च रिषण्यत** रिष्टीयत । अस्मदीयस्तोत्रोच्चारणेनात्मनोहिंसांमाऽभिलष्यत । अत्र "दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति" ( पा० ७–४–३६ ) इत्यनेनेच्छार्थक्यजन्तोऽयं निपातितः । रिष्टिर्हिंसा "रिष हिंसायाम्" ( दि० प० ) क्तिन् । अत्र माचेतसापीच्छतान्यदेवतान्तरमि"ति दुर्गव्याख्यानं मन्दम् । एवं सायणस्यापि । "माहिंसितारो भवत । अन्यदीयस्तोत्रोच्चारणेन वृथोपक्षीणा मा भवते"ति हि तेन व्याख्यातम् । किं तर्हि ? **सुते** अभिषुते सोमे **वृषणं** वर्षितारम् **इन्द्रमित्** इन्द्रमेव । **स्तोता** स्तोत स्तुत । संहितायां दीर्घः ( पा० ६–३–१३७ ) गुणश्छान्दसः । **सचा** सह संघीभूय सर्वे स्तोत्रादयः । हे प्रशास्त्रादयः! ( होतारः ) यूयम् **उक्था** उक्थानि शस्त्राणि च । शेर्लो ( पा० ७–१–३९ ) इन्द्रविषयाणि **मुहुः** पुनः पुनः **शंसत** गदत । उक्थैरिन्द्रं स्तुतेत्यर्थः ॥ १ ॥

द्वितीयस्य–"क्रीळं वः शर्धो मारुतमनुर्वाणं रथे शुभम्" इत्यादिः । घोरपुत्रस्य कण्वस्येयमार्षम् । गायत्रं मारुतम् । कैळीनस्य हविषो याज्या । हे **कण्वाः**! कण्वगोत्रोत्पन्ना महर्षयः! यद्वा मेधाविन ऋत्विजः! ( निघं० ३–१५–७ ) यूयमिमम् **मारुतं** मरुद्देवताकं **शर्धो** बलम् ( निघं० २–९–७ ) **अभि** अभितः **प्र** प्रकर्षेण **गायत** स्तुध्वम् । कीदृशं शर्धम् ? **क्रीळं** विहरणशीलम् ( यच्छत्रूनपि दृष्ट्वाऽनारतं क्रीळत्येव ) । पुनश्च **अनर्वाणम्** अनाश्रितमन्यत्र, स्वप्रभावप्रयुक्तमेवेत्यभिप्रायः । यद्वा भ्रातृव्य-( शत्रु- )रहितम् । अत एव श्रुत्यन्तरे ब्राह्मणेन मन्त्रान्तरमेवं व्याख्यातम् "अनर्वा प्रहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्या" इति ( तै० सं० ६–३–८ ) **रथे शुभं** स्वकीयरथेऽवस्थाय शोभमानम् । रथे स्थितं शोभिष्ठमिति दुर्गः । एवं भूतं मरुतां बलमभिप्रगायतेति **वः** युष्मभ्यं "ब्रवीमी"ति शेषः ॥ १ ॥

तृतीयस्य "अश्वं राये प्र मुञ्चता सुदासः । राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः" इति शेषः । विश्वामित्रस्येयमार्षे त्रिष्टुबैन्द्री । हे **कुशिकाः**! कुशिकगोत्रोत्पन्नाः हे पुत्राः! यूयम् **उपप्रेत** अश्वस्यास्य समीपं प्रकर्षेण गच्छत । तत्र गत्वा च **चेतयध्वम्** विजानीध्वमेतत् । यद्वा अश्वरक्षिणः सावधानान्कुरुत । **सुदासः** पैजवनस्य राज्ञ आश्वमेधिकम् **अश्वम् राये** तस्य दिग्विजयेन धनलाभाय **प्रमुञ्चत** उत्सृजत । **राजा** देवानां स्वामीन्द्रः **वृत्रं** कर्मविघ्नकारिणमसुरं **प्रागपागुदक्** पूर्वपश्चिमोत्तरेषु देशेषु **जङ्घनत्** भृशं जघान । "हन हिंसागत्योः" ( अ० प० ) इत्यस्य यङ्लुकि "नुगतोऽनुनासिकान्तस्य" ( पा० ७–४–८५ ) इत्यभ्यासस्य नुगागमः । तदन्ताल्लेट्यडागमः ( पा० ३–४–९४ ) तस्मादश्वमयं विमुञ्चतेति भावः । **अथ** अनन्तरम् **पृथिव्याः वरे** उत्तमे देवयजनदेशे **आयजाते** समन्तात्स राजा यजेत । यजतेर्लेट्याडागमः ( पा० ३–४–९४ ) ॥ १ ॥

एवमेतेषु युष्मद्गुणपदप्रयोगेषु संबद्धाः स्तोतारः । स्तोतव्यानि तु यानि देवतान्तराणि तानि परोक्षकृताभिसंबन्धीनि । एवं लक्षणमन्त्रजातमुपेक्षितव्यम् ।

## अथाध्यात्मिक्य उत्तमपुरुषयोगाः ॥

**उत्तमेन पुरुषेण** या ऋचो **युक्तास्ताश्च आध्यात्मिक्यः** आत्मविषयकस्तुतिपरा वेदितव्याः ।

## अहमिति चैतेन सर्वनाम्ना ॥ २ ॥

अथ च **अहमिति चैतेन सर्वनाम्ना** या उक्तास्ताश्च आध्यात्मिक्यः । अत्रापि यत्राहमिति सर्वनामपदं श्रूयते तत्रा-

१. अत्रात्मन इत्यध्याहृत्य कथंचिदेतद्योजं भवति ॥

१. नैरुक्तपक्षेण चात्र दुर्गव्याख्यानमेवम्–कुशिकाः स्तुतिक्रोष्टार ऋत्विजः! उप प्र इत गच्छत । चेतयध्वं विजानीध्वमेतत् यस्यैष राजा वृत्रं शत्रुं जङ्घनत् हतवान् प्राग० क्व सर्वासु दिक्षु । अथ एवं सर्वहन्ता अमित्रो भूत्वा वरे श्रेष्ठे प्रदेशे पृथिव्या यजाते यजते । ते यूयमेतद्विज्ञाय उपप्रगच्छत । उप प्रगत्य चैतमाश्वमेधिकं अश्वम् प्रमुञ्चत उत्सृजत । विधानतः प्रोक्ष्याश्वमेधयागाय । योऽयमेतस्मिन्सुदासे–कल्याणदाने वर्तते इति ॥

२. उपगम्यालोचितव्यमित्येवमर्थोऽस्यात्र सर्वत्र नैरुक्ते व्याख्याने बोध्यः ॥

विद्यमानमपि द्युत्तमपुरुषसंबद्धमाख्यातपदमध्याहार्यम् । यत्र चोत्तमपुरुषसंबद्धमाख्यातपदं श्रूयते तत्राविद्यमानमपि "अह" मित्येतत्सर्वनामपदमध्याहार्यं संबन्धिशब्दत्वादनयोरिति बोध्यम्।

अत्राप्युदाहरणमाह—

**यथैतदिन्द्रो वैकुण्ठी लवसूक्तं वागाम्भृणीयमिति ॥**

**यथा एतत्** उदाहरणत्रयमाध्यात्मिकम् । **इन्द्रो०० मिति ।** इतिशब्द आद्यर्थः । "ज्वलितिकसन्तेभ्यः" ( पा० ३-१-१४० ) इत्यत्र यथा । तथाचैवमादि । एवमन्येऽपि आध्यात्मिका मन्त्रा उपेक्षितव्याः । **इन्द्रः** "वक्तेति" शेषः । **वैकुण्ठी** मन्त्रः । वैकुण्ठ इन्द्रोऽस्य वक्ता अस्तीति इनिर्मत्वर्थीयः । **लवसूक्तं** द्वितीयं तस्यापि वक्ता इन्द्र एवेति व्यक्तमुपरिष्टाद्भविष्यति । तृतीयञ्चवागाम्भृणीयम् । एवमाख्याप्यते—विकुण्ठा नाम आसुरी बभूव । तस्याः किल तपसः प्रभावेणापत्यत्वमिन्द्र आजगाम । स वैकुण्ठो नाम बभूव । तस्यात्मस्तुतिसंयुक्तमेवमादि ब्रह्म प्रादुरभूत् । "अ॒हं भु॑वं॒ वसु॑नः पू॒र्व्यस्पति॑र॒हं धना॑नि॒ सं ज॑यामि॒ शश्व॑तः । मां ह॑वन्ते पि॒तरं॒ न ज॒न्तवो॒ऽहं दा॒शुषे॒ वि भ॑जामि॒ भोज॑नम्" ( ऋ० सं० ८-१-५-१ ) इति पूर्वसूक्तेन ( सप्तगुना ) स्तुत इन्द्रो हृष्टः सन्निदमादिसूक्तत्रयेण स्वयमात्मानमस्तौत् । तस्माद्वैकुण्ठाख्यस्येन्द्रस्य वाक्यत्वात् "यस्य वाक्यं स ऋषि" परिभाषयेन्द्र ऋषिः । वैकुण्ठस्यैव स्तूयमानत्वात् "या तेनोच्यते सा देवते"ति परिभाषयेन्द्र एव देवता । जगती । अतिरात्रे द्वितीयपर्याये होतुः शस्त्रे विनियुक्ता । इन्द्रो ब्रवीति—**अहम्** इन्द्रो **वसुनः** धनस्य **पूर्व्यः** मुख्यः असाधारणः **पतिः** स्वामी छान्दसं सत्वम् । **भुवम्** अभवम् । भवतेर्लङि "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुक् । "अचि श्नु-" (पा० ६-४-७७) इत्युवङादेशः । अडभावश्छान्दसः । तथा **अहं शश्वतः** । बहुनामैतत् ( निघं० ३-१-५ ) बहोः शत्रोः संबन्धीनि **धनानि संजयामि** समित्येकीभावेऽव्ययम् । सहैव जयामि । किंच **माम्** एव **जन्तवः** प्राणिनो यजमानाः । **हवन्ते** आह्वयन्ति **पितरं न** पितरमिव पुत्राः । **अहं दाशुषे** हविषो दात्रे यजमानाय । "दाश्वान्साह्वान्मीढ्वांश्च" ( पा० ६-१-१८ ) इति क्वस्वन्तो निपातः । "वसोः संप्रसारणम्" ( पा० ६-४-१३१ ) इति वस्योत्वम् । यथार्हं **भोजनम्** अन्नं धनं वा **विभजामि** विभज्य ददामीत्यर्थः ॥ १ ॥

अथ द्वितीयमुदाहरणम्—

**"इति॒ वा इति॑ मे॒ मनो॒ गामश्वं॑ सनुया॒मिति॑ । कु॒वित्सोम॒स्यापा॒मिति॑" ॥**

( ऋ० सं० ८-६-२६-१ )

इन्द्रो लवरूपमास्थाय सोमपानं कुर्वन् तदानीमृषिभिर्दृष्टः सन् स्वात्मानमनेन सूक्तेनास्तावीत् । अतोऽस्य लवरूपमापन्न इन्द्र ऋषिः स एव देवतोक्त्यायात् । गायत्री । लवो ब्रवीति **इति वा इति** । एवञ्चैवञ्च । ( एवमेवंप्रकारेण ) **मे मनः** वर्तते । तत्प्रकारं दर्शयति—**गामश्वम्** गां चाश्वं च **सनुयाम्** स्तोतृभ्यः प्रयच्छेयम् ( तथाम् ) **इति** । "षणु दाने" ( त० उ० ) आशंसायां लिङ् ( पा० ३-३-१३४ ) द्वितीय इतिशब्दो हेतौ । यतः **कुवित्** बहुवारमहम् **सोमस्य** सोमं व्यत्ययेन षष्ठी ( पा० ३-१-८५ ) **अपाम्** पीतवानस्मि "पा पाने" ( भ्वा० प० ) लुङि "गातिस्था-" ( पा० २-४-७७ ) इति सिचो लुक् । अतोऽस्मै गामश्वं च दत्वा । प्रत्युपकरिष्यामीति भावः ॥ १ ॥

अथ तृतीयमुदाहरणं वागाम्भृणीयम्—

**"अ॒हं रु॒द्रेभि॒र्वसु॑भिश्चराम्य॒हमा॑दि॒त्यैरु॒त वि॒श्वदे॑वैः । अ॒हं मि॒त्रावरु॑णो॒भा बि॑भर्म्य॒हमि॑न्द्रा॒ग्नी अ॒हम॒श्विनो॒भा" ॥** ( ऋ० सं० ८-७-११-१ )

अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत् । अतः सा ऋषिः । सच्चित्सुखात्मकः सर्वजगतः परमात्मा देवता । तेन हि एषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामीति स्वात्मानं स्तौति । अनादेशपरिभाषया त्रिष्टुप् । वाग्ब्रवीति—**अहं** सूक्तस्य द्रष्ट्री वाक् आम्भृणी यद्ब्रह्म जगत्कारणं तद्रूपा भवन्ती **रुद्रेभिः** रुद्रैरेकादशभिः । इत्थंभावे तृतीया ( पा० २-३-२१ ) । "बहुलं छन्दसि" ( पा० ७-१-९ ) त्वैसभावे एत्वम् ( पा० ७-३-१०३ ) तदात्मना **चरामि** लोके । एवं **वसुभिः** अष्टभिरपि **अहम्** एव **आदित्यैः** द्वादशात्मभिरपि । **उत** अपिच **विश्वदेवैः** विश्वैर्देवैस्तदाख्यैर्वा दशभिः । **अहम्** एव ब्रह्मीभूता **मित्रावरुणा** मित्रावरुणौ मित्रश्च वरुणश्चेति **उभा** उभौ अपि । "सुपां सुलुग्-" ( पा० ७-१-३९ ) इति औङ आकारादेशः । एवमग्रेऽपि । **बिभर्मि** धारयामि । **इन्द्राग्नी** अपि **अहम्** एव धारयामि । **उभा** उभौ **अश्विना** अश्विनौ अपि **अहम्** एव धारयामि । मयि हि सर्वं जगत् शुक्तौ रजतमिवाध्यस्तं सदृश्यते । माया च जगदाकारेण विवर्तते तादृश्या

१. तथा चानुक्रम्यते—"सप्तगुःस्तुतिसंहृष्ट आत्मानमुत्तरैस्त्रिभिस्तुष्टावाहंभुवमेकादशान्त्ये त्रिष्टुभौ सप्तमी चे"ति ॥

१. तथा चानुक्रम्यते—"इति वै सप्तोनेन्द्रो लव आत्मानं तुष्टावे"ति ॥

२. तथा चानुक्रम्यते "अहमष्टौ वागाम्भृणी तुष्टावात्मान"मिति ॥

३. तथा चोक्तम्—"आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः । वसवश्चाष्टसंख्याताः षट्त्रिंशत्तुषिता मताः" इति ॥

४. दुर्गस्तु—एभिः सहभूता चरामि स्तुतिरूपेण । अहमेव मित्रावरुणौ०००बिभर्मि हविषा । मत्पूर्वकं हविःसंप्रदानं सर्वदेवताभ्य इत्यभिप्रायमाह ॥

मायया आधारत्वेनासङ्गस्यापि ब्रह्मणः ( सकाशात् ) उक्तस्य सर्वस्योत्पत्तिः ॥ १ ॥

**परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः ॥ अल्पश आध्यात्मिकाः ॥**

**भूयिष्ठाः** शाखान्तरेषु बहवः । **अल्पशः** क्वचिच्च **आध्यात्मिका** लक्ष्यन्ते । आत्मानमेव स्तोतव्यमधिकृत्य येऽभिव्यक्तास्त इह शास्त्रे आध्यात्मिका उच्यन्ते ।

**अथापि स्तुतिरेव भवति ॥ नाशीर्वादः ॥**

**अथापि** क्वचित् **स्तुति००र्वादः** । तत्र पुनराशीर्योज्या । किंकारणम् ? आशिषो ह्यर्थे स्तुतिः प्रयुज्यते । अत्रोदाहरणमाह—

**"इन्द्रस्य नु वीर्याणि प्रवोचमि"ति यथैतस्मिन्सूक्ते ॥** ( ऋ० सं० १-२-३६-१ )

**प्रावोचम्** । प्रब्रवीमि । लडर्थे लुङ् ( पा० ३-४-६ ) **नु**-इत्यनुनये । अत्र हि स्तुतिरेव श्रूयते नाशीः । सा पुनर्योज्येति प्रतिपादितमनेन । तथा च सोऽस्माकमिदमभिमतं करोत्विति योज्या तत्राशीः ।

**अथापि आशीरेव न स्तुतिः ॥**

**अथापि** क्वचित् **आशीरेव न स्तुतिः** । तद्यथा—

**"सुचक्षा अहमक्षीभ्यां भूयासं, सुवर्चा मुखेन, सुश्रुत्कर्णाभ्यां भूयासम्" इति ॥ तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु ॥**

**तदेतत्** एवंलक्षणम् मन्त्रजातम् **आध्वर्यवे** यजुर्वेदे **बहुलम्** प्रायेण दृश्यते । **याज्ञेषु च मन्त्रेषु** कर्मकरणेषु । एतयोरपि वेदयोरिष्टाशीरेव भवति, न स्तुतिरेव केवला, यत्राप्याशीरेव केवला तत्रापि तस्यार्थस्य या देवतेष्टा तस्याः स्तुतिर्योज्या । किंकारणम् ? नह्यनभिष्टुता देवता आशिषं समर्धयति ।

**अथापि शपथाभिशापौ ॥**

भवतः । तद्यथा—

**"अ॒द्या मु॑रीय॒ यदि॑ यातु॒धानो॒ अस्मि॒००अधा॒ स वी॒रैर्द॒शभि॒र्वि यू॑याः००" ॥**

( ऋ० सं० ५-७-७-५ ) इति ।

इत्येकमुदाहरणं द्वयोरपि । वसिष्ठः किल राक्षसस्त्वमिति सौदासैः[1] अभियुक्तः । सोऽनयर्चा शपथं प्रतिपेदे । परं चाभिशाप । तत्रार्थेन शपथोऽर्धेनाभिशाप उच्यते । इत्युभयोः प्रतीकमात्रमत्रोपन्यस्तं भाष्यकारेण । मन्त्रस्त्वयमित्थमृक्षु पठ्यते—

अ॒द्या मु॑रीय॒ यदि॑ यातु॒धानो॒ अस्मि॒ यदि॒ वायु॑स्त॒तप॒ पूरु॑षस्य । अधा॒ स वी॒रैर्द॒शभि॒र्वि यू॑या॒ यो मा॒ मोघं॒ यातु॑धा॒नेत्याह॑ ॥ इति

इयं वसिष्ठस्यार्षं त्रिष्टुप् । रक्षोहणाविन्द्रासोमौ देवता । तथा चानुक्रान्तम् "इन्द्रासोमा पञ्चाधिकैन्द्रासोमं रक्षोघ्नं शापाभिशापप्रायं षट् सप्त वा जगत्य" इत्यादि । वसिष्ठो ब्रवीति—**अस्मि** इत्यहमर्थमव्ययम् । अहं **यदि यातुधानः** राक्षसः स्याम् तर्हि **अद्या** अद्यैव **मुरीय** म्रियै । यदि वा कस्यचिदपि **पूरुषस्य** मनुष्यस्य **आयुः** जीवितं राक्षसो भूत्वाहं **ततप** प्रमादेनापि तप्तवान् हिंसितवानस्मि तर्ह्यप्यहमद्य म्रिय इत्यन्वयः । **अधा** अथ पुनरयातुधानमेव सन्तं **मा** मां **यः** त्वं स्वयं राक्षसो भूत्वा **मोघम्** अनृतं **यातुधान इति** एवं संबोध्य **आह** उक्तवानसि । स त्वं **दशभिः** अनेकैः **वीरैः** पुत्रैः । उपलक्षणमेतत्सर्वैर्बन्धुभिः **वियूयाः** वियुक्तो भवेः ॥ ५ ॥

**अथापि कस्यचिद्भावस्याचिख्यासा ॥**

**भावस्य** अर्थस्य **आचिख्यासा** आख्यातुमिच्छा मन्त्रेषु भवति । तद्यथा—

**"न मृ॒त्युरा॑सीद॒मृतं॒ न तर्हि॑" ॥**

( ऋ० सं० ८-७-१७-२ )

**"तम॑ आसी॒त्तम॑सा गू॒ढमग्रे॑" ॥**

( ऋ० सं० ८-७-१७-३ )

इति । अस्य "न रा॒त्र्या अह्न॑ आसीत्प्रके॒तः । आनी॑दवा॒तं स्व॒धया॒ तदेकं॒ तस्मा॑द्धा॒न्यन्न प॒रः किं च॒नास॑" इति शेषः । प्रजापतेः परमेष्ठिन आर्षम् ॥ **तम आसीदिति** च त्रिष्टुप् भाववृत्तम्[3] । ननूक्तस्य ( पूर्वमन्त्रे ) प्रतिसंहारस्य संहर्त्रपेक्षत्वात्स एव संहर्ता मृत्युर्विद्यत इत्यत आह—**न मृत्युरासीदिति** । **तर्हि** तदानीम् प्रागुत्पत्तेरस्य जगतः **मृत्युः** । इत्ययं व्यपदेशः ( व्यवहारः ) **न आसीत्** मर्त्यस्यैवाभावात् । ननु यदि स नासीत्तर्हि तदभावकृतम् अमृतम् ( अमरणम् ) प्राणिनामवस्थानं तदानीमपि स्यात्तत्राह **अमृतं न तर्हि** तर्हि तस्मिन्प्रतिसंहारकाले नाप्यमृतमिति व्यपदेश आसीत्, मृत्योरभावादेव । इतरे-

१. सौदासः पैजवनो नाम राजा बभूव । स मृगयां चरन् किञ्चिद्रक्षो जघान । तद्भ्राता तं प्रति प्रहर्तुमक्षमेण आत्मानं सूदयित्वा राज्ञो महानसे श्राद्धदिने मांसान्तरेण सह मानुषमांसं पक्त्वा मोक्तुकामाय वसिष्ठाय प्रदत्तं । तेन च विज्ञानदृशा अभक्ष्यमेतद्रक्षोभक्ष्यं नृमांसमिति राजा शप्तो रक्षो भवेति । राज्ञापि शप्त्वोक्तस्त्वमेव रक्षो भव इति । तथोक्तः स प्रति प्राह अद्यामुरीयेति कथा पुराणेषु प्रसिद्धा ॥

१. अत्र बृहद्देवतायामनुक्रम्यते—"संवत्सरं तु मण्डूकानैन्द्रासोमं परं तु यत् । ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः । हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदे"ति । अतो रक्षोनिबर्हणार्थमेतत्सूक्तं जाप्यं यत्रैयमृक् ॥

२. तेनात्र पारोक्ष्यं स्वक्रियायामपि सूपपादं भवति ॥

३. परमात्मास्य देवतेत्यर्थः । स ह्यत्र( सूक्ते ) प्रतिपादितानां विपदादिभावानां सृष्टिस्थितिप्रलयादीनां कर्तेति । भावो भवनं सृष्टिस्तत्र वृत्तः प्रवृत्तो भाववृत्तः ॥

४. अयं भावः—सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत्तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति

तरापेक्षया हि मृत्युश्चामृतं च व्यपदिश्येते। नन्वेतस्य सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह—**न एव राज्याः अह्नः च प्रकेतः** प्रज्ञानम् **आसीत्**। एते अपि ह्यहोरात्रे यतो भगवतो विवस्वत उदयास्तमयाभ्यामुपलक्ष्येते, तदभावे ह्येते अपि नास्तामित्युपपद्यते। एतेनाहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। आह—अथ किमासीत्? इति उच्यते। **तत्** सकलवेदान्तप्रसिद्धं ( अविशिष्टमप्रज्ञातं ) ब्रह्मतत्त्वम् **एकम्** एव सर्वशक्तिमत् **आनीत्** प्राणितवत् "अन प्राणने" ( अ० प० ) लुङ्। तत्कार्यकारणाभावात्। नन्वेवं प्राणनकर्तृजीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः, "अप्राणो ह्यमनाः शुद्ध" इति तस्य प्राणसंबन्धाभावात्। तत्राह—**अवातम्** इति। **अयमाशयः**—आनीदित्यत्र धात्वर्थः क्रिया, तत्कर्ता, तस्य च भूतकालसंबन्ध इति त्रयोऽर्थाः प्रतीयन्ते, तत्र समुदायो न विधीयते—यथा—"अग्नयेऽष्टाकपाल" इति। येन ब्रह्मणः सत्त्वं न स्यात्किं तर्हि? अनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते। यथा—"दध्ना जुहोती"ति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानं, तत्राप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते। तन्निषेधानुपपत्तिप्रसङ्गात्। अतोऽनेन कर्तृत्वेनेदानीन्तनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयते इति न कश्चिद्दोष इति। नन्वीदृशस्य ब्रह्मणो मायया सह संबन्धाभावात्सांख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति किं नो सदिति निषेधः, तत्राह—**स्वधयेति**। स्वस्मिन्धीयते ध्रियते आश्रित्य वर्तत इति स्वधा माया तया तद्ब्रह्म एकमविभागापन्नमासीत् "सहयुक्तेऽप्रधाने" ( पा० २-३-१९ ) इति तृतीया सहशब्दयोगाभावेऽपि सहार्थयोगे भवति "वृद्धो यूना—" ( पा० १-२-६५ ) इति निर्देशात्। अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते। यद्यप्यसङ्गस्य ब्रह्मणस्तया सह संबन्धो न संभवति। तथापि तस्मिन्नविद्यया तत्स्वरूपमिव संबन्धोऽप्यध्यस्यते, यथा शुक्तिकायां रजतस्य। एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम्। ननु यदि माया ब्रह्मणा सहाविभागमापन्ना तर्हि तस्या अनिर्वाच्यत्वाद्ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं तस्य सत्त्वमुक्तमानीदवातमिति, ब्रह्मणो वा सत्त्वात्तस्या अपि सत्त्वप्रसङ्ग इति कथं नोसदासीदिति ( पूर्वमन्त्रे ) सत्त्वप्रतिषेधः? । मैवम्, अनुभवदृष्ट्या ऐक्यावभासेऽपि युक्त्या विविच्य मायांशस्याऽनिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम्। ननु दृग्दृश्याविति द्वावेव पदार्थौ आनीदवातं स्वधयेति। तौ चेदङ्गीक्रियेते तत्किमवशिष्यते यन्नासीद्रज इत्यादिना ( पूर्वमन्त्रेण ) प्रतिषिध्येत, तत्राह—**तस्मादिति**। **तस्माद्ध** तस्मात्खलु पूर्वोक्तान्मायासहिताद्ब्रह्मणः **अन्यत् किंचन** किमपि वस्तु भूतभौतिकात्मकं जगत् **नास** न बभूव। "छन्दस्युभयथा" ( पा० ३-४-११७ ) इति लटः सार्वधातुकत्वादस्तेर्भूभावः। ननु तदानीमन्यस्य सत्त्वनिषेधो न शङ्क्यः। असत्त्वे चाप्रसक्तत्वान्न निषेधोपयोग इत्यत आह **परः** इति। **परः** परस्तात् सृष्टेरूर्ध्वं वर्तमानमिदं जगत् तदानीं न बभूवेत्यर्थः। अन्यथोक्तरीत्या क्वचिदपि निषेधो न स्यादिति भावः॥ २॥

अथ द्वितीयमुदाहरणमाचिख्यासयाग्रवाह—

"तम" इति। अस्य "अप्रकेतं सलिलं सर्वमा इदम्। तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्" इति शेषः। ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत्कथं तर्हि तस्य जन्म? जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात्। कारकं च

---

परमेश्वरस्य मनसि संजिहीर्षा जायते, तथैव स मृत्युः सर्वं जगत्संहरत इति किमनेन मृत्युना संहर्त्रा, तदभावकृतं वा कथममरणं स्यादिति। एतदेवाभिप्रेत्य कठैराम्नायते—"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति॥

१. कथं तर्हि नोसदासीत्तदानीमिति ( पूर्वमन्त्रे ) कालवाची प्रत्ययः? उपचारादिति ब्रूमः। यथेदानीन्तननिषेधस्य कालोऽवच्छेदकस्तथा मायापि तदवच्छेदहेतुरिति अवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्ययः॥

२. एतच्च सायणोक्तमनूदितम्। दुर्गस्तु—अवातमानीत् अनितिप्राणितीत्यर्थः। स हि कार्यकारणभावे परमात्मनि या प्राणनशक्तिः सा पञ्चधा भिद्यमाना प्राणापानादिभावमापद्यते। तदभावे न वातोऽस्तीति अवातमनितीत्युपपद्यते। स्वधया अन्नेन अस्मिन्नेव परमात्मनि या अन्नशक्तिस्तया निमित्तभूतया प्राणितीत्यवशिष्यते। तत् ब्रह्म। आह—किमन्यदपि ततः परस्तात् किंचिदासीत्? नेत्युच्यते, तस्मात् ह अन्यत् न परः परस्तात् किं च न आस किंचिदप्यासीत्। इदमेव तावदतिक्रान्तसर्वविशेषं ब्रह्म व्यपदेष्टुमशक्यमतोऽपि परस्तात्किमन्यद्भविष्यतीत्यभिप्राय इत्याह॥

१. एषा च पदावृत्तिरर्थसंबन्धाभिनिवेशात्॥

२. दुर्गस्तु—अग्रे प्राक्सृष्टेरन्येनैव तमसा गूळ्हं निगूढमविशिष्टम् अप्रकेतम् अप्रज्ञातम् तम आसीत् तदाहि न द्रष्टा, न दर्शनम्, नापि द्रष्टव्योऽर्थ आसीदित्यभिप्रायः। सांख्यास्तु—तमःशब्देन प्रधानसाम्यापन्नं गुणत्रयमुच्यमानमिच्छन्ति। ते हि परमार्षं सूत्रमधीयते—"तम एव खल्विदमग्रे आसीत्" "तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत" इति। सलिलं—सद्भावे लीनं सर्वमिदं जगत् सन्मात्रस्यैव भावस्योपरि लीनमासीत्। तुच्छ्येन तुच्छेन सूक्ष्मीभूतेन पटमण्डपस्थानीयेन कर्मणा यत्—अपिहितं इदमेव जगत् आसीत् सर्गकालापेक्षितमनादिमत्त्वात्संसारस्य। तपसः—तस्यैव कर्मणः महिना महिम्ना महाभाग्येन कारणावस्थायां एकमपि तत्—अनेकधा उपस्थिते सर्गकाले प्रतिनियतकर्मोपभोगार्थमजायत इति॥

कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्यावश्यंभावात्। अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्वियत इत्युच्यते, कथं तस्य जन्मात आह-**तमसा गूहळमग्र** इति। अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् **तमसा गूढं** यथा नैशं तमः सर्वं पदार्थजातमावृणोति तद्वत् आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञानमात्रं तम इत्युच्यते। तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवत्याच्छादकात्तस्मात्। तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते। एतेन कारणावस्थायामसदेव कार्यमुत्पद्यत इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः। ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते तत्कथं नासीद्रज इत्यादिनिषेधस्तत्राह-**तम आसीदिति**। **तमः** अभावरूपाज्ञानं मूलकारणं तद्रूपता तदात्मनां यतः सर्वं जगत्प्राक् तम आसीत् अतो निषिध्यत इत्यर्थः। नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वाज्जगत् कर्म, कथं तयोः कर्मकर्त्रोस्तादात्म्यं तत्राह-**अप्रकेतमिति**। **अप्रकेतम**प्रज्ञायमानम्। **अयमर्थः**-यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते, तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम्। अत एव मनुना स्मर्यते-"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वत" इति। कुतो वा न प्रज्ञायते? तत्राह-**सलिलम्** "सलं गतौ" ( भ्वा० प० ) औणादिक इलच्। **इदं** दृश्यमानं सर्वं जगत् **सलिलं** कारणेन सङ्गतमविभागापन्नम् **आः** आसीत्। अस्तेर्लङि तिपि "बहुलं छन्दसि" ( पा० ७-३-९७ ) इतीडभावे "हल्ङ्याब्भ्य०" ( पा० ६-१-६८ ) इति तिलोपे "तिप्यनस्तेः" ( पा० ८-२-७३ ) इति पर्युदासात् दकाराभावः। यद्वा सलिलमिति लुप्तोपमम्। सलिलमिव, यथा क्षीरेणाऽविभागापन्नं नीरं दुर्विज्ञानं, तथा तमसाऽविभागापन्नं जगत् न शक्यविज्ञानमित्यर्थः। ननु विविधविचित्ररूपभूयसः प्रपञ्चस्य कथमति तुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः। तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते, तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसंभव इत्यत आह-**तुच्छ्येनेति**। **आभु** आसमन्ताद्भवतीत्याभु **तुच्छ्येन** छान्दसो यकारोपजनः। **तुच्छेन** तुच्छकल्पनेन सदसद्विलक्षणेन **आभु**रूपाज्ञानेन **अपिहितं** छादितं **यत्** कार्यजातम् **आसीत्**। **एकम्** एकीभूतम् कारणेन तमसाऽविभागतां प्राप्तमपि **तत्** कार्यजातं **तपसः** स्रष्टव्यपर्यालोचनरूपस्य "तप आलोचने" ( भ्वा० प० ) **महिना** माहात्म्येन **अजायत** उत्पन्नम्। तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते "यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तप" इति॥ ३॥

**अथापि परिदेवना, कस्माच्चिद्भावात्॥**

१. ताल्व्यादिरपि॥

२. चादेराकृतिगणत्वादत्रानुपदोक्तं निगमपदमेव गमकम्॥

तद्यथा—

**"सुदेवो अद्य प्रपतेदनावृत्"**

( ऋ० सं० ८-५-३-४ )

**"न वि जानामि यदि वेदमस्मि"**॥

( ऋ० सं० २-३-२१-२ ) इति।

**इति**। एते उदाहरणे। तत्राद्यस्य "परावतं परमां गन्तवा उ। अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः" इति शेषः। पुरूरवस आर्षं त्रिष्टुप्। परिदेवना। पुरूरवस उर्वश्या सहोक्तिप्रत्युक्तिसूक्ते इयं पुरूरवस उक्तिः। परिदूनः स उर्वशीमाह-हे उर्वशि! स **सुदेवः** शोभनो देवैः स्यात् यस्त्वया वियुक्तो भृगुप्रपातात् **अनावृत्** अनावर्तमानः **अद्य** एव **प्रपतेत्** अथवा **परमां परावतं** दूरादपि दूरतरं देशं **गन्तवै** गन्तुं "तुमर्थे-" ( पा० ३-४-९ ) इति तवै प्रत्ययः। अनावर्तमानः प्रपतेत् महाप्रस्थानं कुर्यादित्यर्थः। अथ गत्वा मृतः सन् **निर्ऋतेः** भूमेः ( निघं० १-१-११ ) **उपस्थे** उपरि **शयीत**। **अधा** अथ **एनं** तामवस्थामापन्नं **वृकाः** विकर्तितारः श्वशृगालादयः **रभसासः** रभस्वन्तो वेगवन्तः। **अद्युः** भक्षयेयुः। अहं तु न सुदेवः किंतु स सुदेवो यस्त्वया वियुक्त एतामवस्थामाप्नुयादित्येवमेषा परिदेवना॥ ४॥

अथ द्वितीयस्य-"निण्यः सन्नद्धो मनसा चरामि। यदा मागन् प्रथमजा ऋतस्यादिद् वाचो अश्नुवे भागमस्याः" इति शेषः। दीर्घतमस आर्षं त्रिष्टुप्। अस्यवामीये सूक्ते। विश्वेदेवा देवता। अहमेतत् **न विस्पष्टं जानामि यदि वा इदमस्मि** कारणं परं ब्रह्माख्यम्? अथवा इदं तत्कार्यं द्वैतमस्मीति। अनयोः कार्यकारणयोर्द्वैताद्वैतयोरन्तरावर्तमानः **निण्यः** अन्तर्हितः ( निघं० ३-२६-१ ) अविद्यया। **सन्नद्धश्च**। अनेकैः संदेहग्रन्थिभिः। **मनसा** उभे अपि द्वैताद्वैते **चरामि** गच्छामीत्यर्थः। एवं सति **यदा मा आ अगन्** मामागच्छेत्

१. संशयोत्थापनापरिदेवनेति दुर्गः॥

२. सुक्रीडः पतिरिति सायणः॥

३. स हि गिरिमूर्ध्नि समारुह्य पतनमुच्यते। देहत्यागाय॥

४. यद्वा निर्ऋतिः पापदेवता तस्या उपस्थे उत्सङ्गे सन्निधौ म्रियतामित्यर्थं इति सायणः॥

५. रभसिति वेगोऽभिधीयते ततश्च "अर्श आदिभ्योऽच्" ( पा० ५-२-१२७ ) इति मत्वर्थीयेऽच्प्रत्यये रभसास्त एव रभसासः "आज्जसेरसुक्" ( पा० ७-१-५० ) इति जसोऽसुगागमः॥

६. अस्य वामस्येति द्विपञ्चाशदृचमष्टमं सूक्तं दैर्घतमसम्। अत्रेयमनुक्रमणिका "अस्य द्विपञ्चाशदल्पस्तवं त्वेतत्संशयोत्थापनप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा चे"ति। अस्य कृत्स्नसूक्तस्य विनियोगं शौनक आह-"स्तेयं कृत्वा द्विजो मोहात्त्रिरात्रोपोषितः शुचिः। सूक्तं जप्त्वास्यवामीयं क्षिप्रं मुच्येत किल्बिषात्" इति॥

प्रथमजा बुद्धिः। सा हि सर्वेन्द्रियेभ्यः प्रथमं जायते। ऋतस्य भगवत आदित्यस्य स्वभूता, तस्य हि प्रकृष्टा बुद्धिः प्रहीणसर्वसंशया, तया सर्वमिदमसंशयं परिज्ञाय किमहं कारणसतत्त्व उत द्वैतसतत्त्व इति। ततः **आदित्** अनन्तरमेव। **अस्याः** कृत्स्नप्रज्ञातायाः **वाचः भागम्** अहम् **अश्नुवे** अश्नुयाम्। यदियं कृत्स्ना वागभिवदति तत्सर्वमहमाप्नुयामित्यर्थः॥ २॥

**अथापि निन्दाप्रशंसे भवतः॥**

मन्त्रेषु। तद्यथा—

**"केवलाघो भवति केवलादी"॥**

(ऋ० सं० ८-६-२३-१)

"**भोजस्येदं पुष्करिणीव वेश्म**"॥

(ऋ० सं० ८-६-४-५)

**इति**—एते उदाहरणे। तत्राद्यस्य—

"मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायम्॥"

इत्यादिः। भिक्षुर्नामाङ्गिरसस्त्वेदमार्षं त्रिष्टुप्। अददतो निन्दा। **अप्रचेताः** अप्रकृष्टज्ञानः (दाने प्रकृष्टं चेतो मनो यस्य न भवति सः) **मोघं** वितथम्। **अन्नम् विन्दते** प्राप्नोति। "विद्लृ लाभे" (तु० उ०) "शे मुचादीनाम्" (पा० ७-१-५९) इति नुमागमः। इदं **सत्यं** यथार्थमेवेति **ब्रवीमि** ऋषिरहं वदामि। न केवलं व्यर्थ एवान्नलाभस्तस्य (अदातुः) किं तर्हि? **सः** अन्नलाभः **तस्य** अदातुः पुरुषस्य **वध इत्** वध एव। वरमलब्धं तेनान्नमित्यभिप्रायः। अत्र परामृश्यतस्तच्छब्दस्य वधसामानाधिकरण्यात्पुल्लिङ्गता। यथा "णेरणौ—" (पा० १-३-६७) इत्यत्र यत्कर्म स कर्तेति। किं पुनः कारणं मोघमसावन्नं विन्दते? इति। **न असौ अर्यमणम्** आदित्यम्। उपलक्षणमिदं सर्वान्देवानर्यमादीन् **पुष्यति** हविःप्रदानेन न पोषयति **नो** नापि **सखायं** समानख्यानं मनुष्यमभ्यागतमतिथिं मित्रवर्गं च पोषयति। "पुष पुष्टौ" दैवादिकः। यच्छब्दाध्याहारादनिघातः (पा० ८-१-६६) यत एवमतो यः **केवलादी** आत्मनैव केवलमन्नमत्ति न देवपितृमनुष्येभ्यो ददाति। अदेः "सुप्यजातौ—" (पा० ३-२-७८) इति णिनिः। "अत उपधायाः" (पा० ७-२-११६) इत्युपधालक्षणा वृद्धिः। केवलमसाक्षिकमन्नं भुञ्जानः **केवलाघो भवति** केवलपापभाग्भवति। अघमेव केवलं तस्य शिष्यते नैहिकं नामुष्मिकमिति। तथाचोक्तम्—"भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणादि"ति। तस्मात्सत्यन्ने यथाकथंचिद्दातव्यमेवेति भावः॥ १॥

अथ द्वितीयस्य—

"भोजायाश्वं संमृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना। भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम्॥"

इति स्वरूपम्। दक्षिणा नाम प्रजापतेर्दुहिता, तया सूक्तमात्मनः स्तुतिसंबद्धं दृष्टम्। तत्रैषा त्रिष्टुप्। दातृप्रशंसा। **भोजाय राज्ञे** (दात्रे) **आशुं** शीघ्रगामिनम् **अश्वं संमृजन्ति** संमार्जयन्ति (सम्यगलंकुर्वन्ति) परिचारकाः। "मृजू शौचालङ्कारयोः" (चु० उ०) आधृषीयत्वाण्णिजभावे रूपम्। किंचास्मै भोजाय **कन्या** कन्यात्वेनात्र सन्निकर्षादभिमतं यौवनं लक्ष्यते, अभिनवयौवना **शुम्भमाना** शरीरावयवविशेषशोभया वस्त्रालङ्कारशोभया च, शोभमाना स्त्री "शुम्भ शोभार्थे"

१. सायणस्त्वेतामित्थं व्याचख्यौ—अहं यदि वेदं—यदपीदं विश्वम् असि—कृत्स्नप्रपञ्चोऽप्यहमेवास्मि। नामरूपांशमपरमार्थं त्यक्त्वा सर्वत्रानुगतोऽस्मि। योऽयं सच्चिदानन्दाकारोऽस्ति सोऽहमस्मीति न विजानामि विविच्य नाज्ञासिषम्। परं शास्त्रजनितमिदमहमस्मीति विज्ञानं न जातं अविवेक्यहमित्यर्थः। कार्यकारणयोरभेदात्कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव भवति। "इदं सर्वं यदयमात्मा, ब्रह्मैवेदं सर्वं, आत्मैवेदं सर्वं, स ईक्षत बहुस्यां प्रजायेये"त्यादिश्रुतिभिः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम्। यदा इवशब्द उपमार्थः यदि च यत् परोक्षज्ञानं सर्वंकात्म्यरूपमानुभविकमस्ति तदिव तद्वदेवाहमस्मि इदं सर्वमहमस्मीति ज्ञानं मे जातम् अपि त्वेतदात्यन्तिकभूतमानुभविकं सार्वात्म्यं यदस्ति तन्न विजानामि न प्राप्तोऽस्मि, शास्त्रजनितं सार्वात्म्यं जातं न त्वानुभविकमित्यर्थः। तत्र कारणमाह—यतोऽहं निण्यः। अन्तर्हितनामैतत्। अन्तर्हितः मूढचित्तः। चित्तप्रत्यक्प्रवणाभावेन परिच्छिन्न इत्यर्थः। अत्रोपपत्तिमाह—सन्नद्धः अविद्याकामकर्मभिः सम्यग् बद्धो वेष्टितः। अत एव मनसा युक्तः भावनासहिष्णुना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः संचरामि संसारे। अथवा मनसा सन्नद्धश्चरामि इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि न सार्वात्म्यं जानामीति परिदेवते, ××× बहिर्मुखचेतसः विरूपापरिज्ञानजनितं दुःखमन्यत्र श्रूयते—"पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्" इति। तर्हि कदैतद्भवतीत्याह—यदामा आगन्—आगमिष्यति तदा किंतदित्युच्यते—ऋतस्य—परमार्थस्य परस्य ब्रह्मणः प्रथमजाः प्रथमोत्पन्नः चित्तप्रत्यक्प्रवणजनितोऽनुभावः स यदा मां प्राप्नोति आदित्—अनन्तरमेवाव्यवधानेन अस्या वाच ऐकात्म्यप्रतिपादिकाया उपनिषद्वाचः यदि वेदमस्मीत्युक्ताया वा भागं भजनीयं शब्दब्रह्मणा व्याप्तव्यं परं ब्रह्म पदम् अश्नुवे प्राप्नोमि, चित्तस्य बहिर्मुखतां परित्यज्यान्तर्मुखतैव दुःसंपादा। सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति। पश्चाद्विलम्बाभावात्। यथा गिरिशिखरात् पतने पाषाणोऽविलम्बेन पतति तद्वच्चित्तप्रत्यङ्मुखत्वस्य दुःशकत्वमिति तत्रैव श्रूयते—"कश्चिद्धीरः प्रत्यगात्मानमैच्छदावृत्तचक्षुरमृतत्वमिच्छन्" इति॥

१. न ह्यसत्यन्ने प्रत्यवेयाददन्निति भावः॥

२. तादर्थ्ये चतुर्थी। दुर्गस्तु—भोजाय उद्वहनार्थमन्यान्वरानपास्य शुम्भमाना—स्वलंकृता शोभमाना कन्या आस्ते स हि तामर्हतीत्यर्थं इत्याह॥

(तु० प०) लटः शानच् । पदव्यत्यय आर्षः (पा० ३-१-८५) **आस्ते** । तथा **भोजस्य** दातुरेव **इदं** हृदयाह्लादकं **वेश्म** गृहं भवति । कीदृशम्? **पुष्करिणीव** पुष्कराणि पद्मानि यस्यां सन्तीति पुष्करिणी "अत इनिठनौ" (पा० ५-२-११५) इति मत्वर्थीय इनिः । ङीप् । "पुष्करं खेऽम्बुपद्मयोः" इति मेदिनी । सरसी । सा यथा पद्महंसादिभिरलङ्कृता भवति तद्वत् । **परिष्कृतम्** वितानादिभिरलङ्कृतम् । परिपूर्वस्य करोतेर्भूषणार्थे संहितायां सुडागमः (पा० ६-१-१३७) "परिनिविभ्य-" (पा० ८-३-७०) इति सुटः सस्य षत्वम् । तथा **देवमानेव** देवमार्नं विमानमिव "सुपां सुलुग्-" (पा० ७-१-३९) इति घोराकारः । **चित्रम्** चायनीयं मनोहरम् । तदेतत्सर्वमप्यस्य जन्मान्तरप्रतिविशिष्ट-दक्षिणासहितात्कर्मणोऽन्येभ्यः कर्मभ्यः सकाशात् फलातिरैक्य-मित्येवमेषा दक्षिणाप्रशंसा ॥ ५ ॥

## एवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च ॥

यथोक्तमन्त्रद्वये निन्दा प्रशंसा च । **एवम्** अमुना प्रकारेण **अक्षसूक्ते** अनुपदं निर्देक्ष्यमाणे **द्यूत०००सा च** भवतीति विषयोपप्रदर्शनार्थमाह । तथा च निगमः—

"अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहुमन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥"
(ऋ० सं० ७-८-५-३)

मूजवान्नामाक्षपुत्रस्तस्येयमार्षम् त्रिष्टुप् । **हे कितव** ! अक्षदेविन् ! "धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः" इत्यमरः । **अक्षैः** पाशैः । "अक्षास्तु देवनाः पाशकाश्च ते" इत्यमरः । **मा दीव्यः** द्यूतं मा कुरुष्व । इत्यक्षदेवनप्रतिषेधः । तत्र हि बहवोऽनर्थाः सन्ति । **कृषिमित्** कृषिमेव **कृषस्व** कुरु । इति कृषिविधानम् । तस्यां हि बहवो गुणाः सन्ति । **वित्ते** कृष्या सम्पादिते धने स्वल्प एवोपार्जिते **बहु** एतदेवेति **मन्यमानः रमस्व** रतिं कुरु । मा वित्तलोभेन दीव्यः । निजमपि वित्तं हारयिष्यसि । कृषिं पुनरेतस्मात्कारणात्कृषस्व । **तत्र** तस्यां कृषौ **गावः** सन्ति । **तत्र** तस्यां च **जाया** स्त्री भवति । **तत्** एतद्धर्मरहस्यं **मे** मह्यं **सविता** सर्वस्य प्रेरकोऽयं दृष्टिगोचरः **देवः** । **अर्यः** ईश्वरः स्वामी । "अर्यः स्वामिवैश्ययोः" (पा० ३-१-१०३) इति निपातः । सूर्यः **वि** श्रुतिस्मृत्यनुशासनद्वारेण विविधमनेकप्रकारमा **चष्टे** आख्यातवान् । उभे अपि हि इमे श्रुतिस्मृती मन्वादिद्वारेणादित्यान्तरपुरुषप्रभवे एव, अत इदमुक्तं सवितैवैतन्मे विचष्ट इति ॥ ३ ॥

## एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति ॥ ३ ॥

**एवम्** अनेन प्रकारेण । **उच्चावचैः** अनेकभेदैः । "उच्चावचं नैकभेदम्" इत्यमरः । बहुभिरथवा प्रकृष्टाप्रकृष्टमध्यमैर्मन्त्राभिव्यक्तिनिदानभूतैः । **मन्त्रदृष्टयः** मन्त्रदर्शनानि । विद्यमानानामेव हि मन्त्राणामृषयो येन केनचिन्निमित्तेन निदानभूतेन निन्दाहर्षशोकप्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति न तु कर्तार इति भावः ॥

तदप्यार्षानुक्रमण्यां निदानमार्षं चोभयमुपेक्षितव्यम् । परिज्ञातार्ष-निदानो हि सुखमनेकविषयं मन्त्रार्थमवबोद्धुं शक्नोतीति । तदेतदिह लक्षणोद्देशतो भाष्यकारेण प्रदर्शितम् ॥ ३ ॥

## तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा ॥

इहैतदुक्तम् "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छं-स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति" इति । तदेतत्प्रकटदेवतालक्षणेषु मन्त्रेषु मन्त्रदेवतालक्षणमुपपद्यते । ये त्वनादिष्टदेवतालिङ्गा मन्त्रास्तेषु देवताः कथमन्वेष्याः? इत्येतद्विचार्यत इत्युपयुक्तस्तच्छब्दः । **ये अनादिष्टदेवता** अनादिष्टा अनुक्ता देवता लिङ्गभूता यत्र तथाभूता **मन्त्रास्तेषु** । **देवतोपपरीक्षा** देवतायाः उपपत्तितः परीक्षा । "अतः परं वर्तिष्यत" इति वाक्यशेषः ॥

## यद्देवतः स यज्ञो वा यज्ञाङ्गं वा, तद्देवता भवति ॥

**स यज्ञः** अग्निष्टोमादिः । **यद्देवतः** या देवता अस्मिंस्तथाविधः । तत्र विनियुक्ता अनादिष्टदेवतालिङ्गा मन्त्रा अपि **तद्देवताः** नायज्ञिया देवता येष्वित्येवंविधा भवन्ति । अयमर्थः—"आग्नेयोऽग्निष्टोमः" इति श्रूयते । तत्र (अग्निष्टोमे) योऽनाविष्कृतदेवतालिङ्गो मन्त्रो विनियुक्तः स्यात्स आग्नेय एव वेदितव्यः स्यात् इति । "प्रकरणाद्धि सन्दिग्धदेवतेषु देवतानियम" इति न्यायः । **यज्ञाङ्गं वा** । प्रातःसवने यो विनियुज्यते स आग्नेयः । यो माध्यन्दिने सवने स ऐन्द्रः । यस्तृतीयसवने[1] स आदित्यः ॥

## अथान्यत्र यज्ञात् ?—॥

**अथ यज्ञात् अन्यत्र** मन्त्रेषु देवतापरिज्ञानं कथम्? इति पूर्वपक्षसूत्रम् । अयमर्थः—अथ पुनरन्यत्र यज्ञाद्ये वर्तन्ते मन्त्राः । येषां ह्युच्छन्नः प्रयोगः । "उच्छन्नयज्ञो वा एषः" इत्युच्छन्नतामपि तस्य दर्शयत्येव ब्राह्मणम् । तेषूच्छन्नप्रकरणप्रयोगेषु वाचस्तोमप्रयोगविनियोगकल्पेषु "किं ब्राह्मणस्य पितरं पृच्छसि किं नु मातरं, श्रुतविदस्मिन्वेद्यं स पितामहः" इत्येवमादिषु कथमन्वेष्या देवता? इति । शृणु—

## प्राजापत्या इति याज्ञिकाः ॥

**प्राजापत्यास्ते मन्त्रा इति याज्ञिका** मन्यन्ते । किंकारणम्? अनिरुक्तो हि प्रजापतिः । अनिरुक्तदेवतालिङ्गाश्च मन्त्रा इत्येतत्सामान्यम् ॥

१. सायणस्तु—हे कितव! बहु मन्यमानो विश्वासं कुर्वंस्त्वमक्षैर्मा दीव्य इत्येवं व्याख्यत् ॥

१. सायंसवने ॥

## नाराशंसा इति नैरुक्ताः ॥

**नाराशंसाः** नराशंसोऽग्निर्यज्ञो वा । वक्ष्यति हि—"यज्ञ इति कात्थः, अग्निरिति शाकपूणि"रिति । यज्ञशब्देन च विष्णु-रुच्यते । "विष्णुर्वै यज्ञः" इति ह विज्ञायते । "अग्निर्हि भूयिष्ठभाग्देवतानाम्" इति च । स एव च नराशंसः । निघण्टावपि ( ५–२ ) तनूनपात् ३ नराशंस ४ इति सह पठ्यते । तनूनपाच्चाग्निरेव । "अग्निर्वैश्वानरो वह्निः००र्जातवेदास्तनूनपात्" इत्यमरोऽपि । अतोऽनाविष्कृतदेवतालिङ्गो मन्त्र आग्नेय इति नाराशंसः । "साऽस्य देवता" ( पा० ४–२–२४ ) इत्यण् देवतार्थे ( नराशंसो देवताऽस्येति ) सर्वदेवाश्रयत्वाच्चाग्नेः । "अग्निर्वै सर्वा देवताः" । "अत्र वै सर्वा वसति देवते"ति ह विज्ञायते । तथाच अनादिष्टदेवताका मन्त्रा नाराशंसा इति नैरुक्ता निरुक्तविदो मन्यन्ते ॥

## अपि वा सा कामदेवता स्यात् ॥

**अपि वा** अथ वा **सा** ऋक् ( स मन्त्रः योऽनाविष्कृत-लिङ्गः ) **कामदेवता** कामकल्प्या देवता यस्यां सा ( कामतो हीच्छातस्तस्मिन्मन्त्रे देवता कल्पयितव्या ) **स्यात्** इत्यर्थः । अत्र कारणमाह दुर्गः—गुणपदमयो हि सः । न हि तत्र देवता सं-विज्ञानपदमन्यतमदेवताविशेषख्यापकमस्ति, यतो विशेषात्कस्यांचिदेकस्यां देवतायामन्याभ्यो व्यावृत्त्याऽवतिष्ठेत, गुणपदानां च सर्वेषां सर्वदेवताश्रयत्वादैश्वर्ययोगात्सर्वासां देवतानामिति ॥

## प्रायो देवता वा ॥

अत्र सा स्यादित्यनुषज्यते । प्राय इति ह्यधिकार उच्यते । अथ **वा प्रायः** कल्प्या **देवता** यस्यां सा तथाभूता सा ऋक् ( स मन्त्रः ) स्यात् । अयमर्थः—यद्देवताधिकारेऽध्ययनपाठानुक्रमे यो मन्त्रोऽनाविष्कृतदेवतालिङ्गो भवति स तद्देवत एव । तद्यथा—अग्न्यधिकारे वर्तमाने आग्नेय एव मन्त्रो भवति । इन्द्राधिकारे चैन्द्र एवेति ।

अथवा प्राय इति बाहुल्यमुच्यते । तद्यथा—अनृतप्रायो देवदत्त इत्युक्ते अनृतबहुल एवेति गम्यते । एवमिहापि प्रायोदेवतेत्युक्ते बहुलदेवतेति स्यात् । किंकारणम् ?

## अस्ति ह्याचारो बहुलं लोके । देवदेवत्य-मतिथिदेवत्यं-पितृदेवत्यम् ॥

**अस्ति** हीयं **लोके बहुलस्य** भूयस्त्वेन प्रसिद्धिः । निर्दिष्टेभ्यो द्रव्येभ्यो यदन्यदवशिष्यते तत्साधारणं भवति । तद्यथा कश्चिन्निर्दिशति—इदं मे **देवदेवत्यं** द्रव्यम् । देवदेवतायै इद-मित्यर्थे यत्प्रत्ययः ( पा० ५–४–२४ ) एवमग्रेऽपि बोध्यम् । तत्रैवं निर्दिष्टे ततो राशेर्यदन्यदवशिष्यते, तद्देवपितृमनुष्याणां साधारणं भवति । तथा चरुनिर्वपणकर्मणि इदं देवतानामिति निरुप्तमभिमृश्येदं नः सहेति शेषमभिमृशति, सर्वसाधारणत्व-ख्यापनार्थम् । एवमिहाप्यादिष्टदेवतालिङ्गान्मन्त्रराशेर्योऽन्योऽनादिष्टदेवतालिङ्गो मन्त्रराशिः स्यात् । सर्वसाधारणत्वाद्बहुदेवतो वैश्वदेवः स्यादिति ॥

## याज्ञदैवतो मन्त्र इति ॥

अथ कः पुनरेतस्मिन्विचारे निश्चयः ? उच्यते—

योऽनाविष्कृतदेवतालिङ्गो **मन्त्रः** स **याज्ञो वा** स्यात् **दैवतो वा इति** । तथाहि "विष्णुर्वै यज्ञः" इति ह विज्ञायते । विष्णुः पुनरादित्य एव नैरुक्तानाम् द्युस्थाने समाम्नातः । "यच्च किंचित्प्रवह्लितमादित्यकर्मैव तत्" इति हि वक्ष्यति ( ७–३–४ ) तस्मादादित्यदैवतः स मन्त्र इति स्यात् । अथवा "दैवतः" स मन्त्रः । देवता अस्य देवतेति ताद्धितोऽण् प्रत्ययः ( पा० ४–२–२४ ) अविशिष्टं हि देवतात्वमग्नावेव । सर्वदेवताभिवादात् "अग्निर्वै सर्वा देवता" इति ह विज्ञायते । "अग्निर्वै देवतानां भूयिष्ठभाक्" इति च । "अपरिग्रहं च प्रधानगामी"ति न्यायस्तस्मादाग्नेयः स मन्त्रः स्यादिति । तदुपोद्घात उक्तं "नाराशंसा इति नैरुक्ताः" इति तदेव कात्थक्य-शाकपूणिमतेनावधृतं यज्ञोऽग्निर्वेति, तौ हि नैरुक्ताविति ॥

## अपि ह्यदेवता देवतावत्स्तूयन्ते, यथाऽश्वप्रभृतीन्यौषधिपर्यन्तानि ॥ ४ ॥ अथाप्यष्टौ द्वन्द्वानि । स न मन्येतागन्तूनिवार्थान्देवतानां, प्रत्यक्षदृश्यमेतद् भवति ?—

**अपि** प्रश्ने हीत्याक्षेपे । यत्र तु स्फुटमदे००यन्ते तत्रैतदुक्तलक्षणं[1] व्याहन्यते यथाऽश्वप्र००० पर्यन्तानि ॥ ४ ॥ **अथाप्यष्टौ द्वन्द्वानि**[2] ( नि० ९–३५ ) । एतस्मिन्वर्गे कानिचित्सत्त्वानि ( प्राणिनः ) कानिचिद्द्रव्याणि ( अप्राणिनः ) अश्वादीनि सत्त्वानि, अक्षादीनि द्रव्याणि । तानि च पुनरासन्नमर्थं चेतयन्ते, नातीतं नानागतमिति । आत्मनोऽपि च हिताहितं तानि न प्रतिपद्यन्ते, तानि पुनरभिष्टुतानि कथं स्तोतुरभिमतस्यार्थस्य पतिलं करिष्यन्ति ? नहि तानि स्तुतिनिन्दे विशेषतो विदुः । अपिचाश्वादिषु चितिरपि काचिदस्ति, नलक्षादिष्वसावस्ति । तस्मात् **सः** शिष्यः मेधावी **न मन्येत** न जानीयात्—सम्यगविरुद्धमेतल्लक्षण्येन लक्षणमुच्यत इति । अपिच सुतरां न मन्येत—**आगन्तूनिवार्थान् देवतानां** मन्यमानः । लोके

---

१. शाकपार्थिवादि–( पा० २–१–६० वा० )–त्वादुत्तर-पदलोपः ॥

२. तथा चामरः "प्रायो भूरुषद्वते शनै"रिति । भूमा बाहुल्यमित्यनर्थान्तरम् ॥

३. अयमाचारशब्दार्थः ॥

---

१. यत्काम इत्याद्युक्तलक्षणम् ॥

२. उलूखलमुसले २९ हविर्धाने ३० द्यावापृथिवी ३१ विपाट्-छुतुद्र्यौ ३२ आर्त्नी ३३ शुनासीरौ ३४ देवीजोष्ट्री ३५ देवी-ऊर्जाहुती ३६ ( निघं० ५–३ ) ॥

३. एतेनार्थपत्वं देवतात्वप्रयोजकमित्युक्तलक्षणव्याकोप उक्तः ॥

४. चैतन्यम् ॥

तावदेते मनुष्याणामनित्यानामश्वादयोऽर्था आगन्तवोऽपायिनश्चानित्याः । तद्यदि देवतानामपि एवमेव, ततस्तासां तेषां चानित्यत्वात्स्तुतिरनर्थिका । अपिच–**प्रत्यक्षदृश्यमेतद्भवति** । प्रत्यक्ष एवैतद्दृश्यते, यथा–उपकरणमश्वादयः, उपकर्तव्याश्च मनुष्याः । देवतानामपि चेन्द्राग्निसूर्यप्रभृतीनामुपकरणं हरि–रोहित–हरितप्रभृतयोऽश्वाः तस्मादुभयेषामुपकरणोपकर्तव्यतासामान्यान्मनुष्याश्ववदनित्यत्वमिति युक्तमिति पूर्वः पक्षः–

अथ यस्य शिष्यो न मन्यते नैतत्सम्यग्विधीयत इति । तस्मात्प्रतिसमाधातव्यमित्युपोद्धात्योत्तरमुच्यते—

**माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते ॥**

भज्यते सेव्यत इति भाग ऐश्वर्यम् । महान्भागो यस्याः सा महाभागा तस्या भावो माहाभाग्यम् । ष्यञ्भावे ( पा० ५–१–१२४ ) तस्मात् **माहाभाग्यात्** महैश्वर्यवत्त्वाद्धेतोः **एको**ऽपि सन् **देवतात्मा बहुधा स्तूयते** । प्रकृतिभेदेन वा अप्रकृतिभेदेन वा वर्धमानः । निगमोऽपि हि भवत्यैश्वर्यख्यापको देवतायाः । यथा—

रूपं रूपं मघवा बोभवीति
मायाः कृण्वानस्तन्वं१ परि स्वाम् ।
त्रिर्यद्दिवः परि मुहूर्तमागा-
त्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥ ३ ॥
( ऋ० सं० ३–३–२० )

विश्वामित्रस्यार्षं त्रिष्टुबैन्द्री । **मघवा** धनवानिन्द्रः **रूपं रूपं** यद्यद्रूपं कामयते तत्तद्रूपं **बोभवीति** तत्तद्रूपात्मको भृशमधिकं भवति । तत्र कारणमुच्यते–**मायाः** अनेकरूपग्रहणसामर्थ्योपेताः **कृण्वानः** कुर्वाणः **स्वां तन्वं** तनुम् "अमि पूर्वः" ( "वा छन्दसि" ) ( पा० ६–१–१०७ ) इति वा पूर्वसवर्णः । **परि** पञ्चम्यर्थे । स्वस्माच्छरीरान्नानाविधानि शरीराणि निर्मिमीते । यद्वा स्वां तनुं नानाविधरूपोपेतां करोति । तथाच मन्त्रवर्णः–"इन्द्रो मायाभिः पुरुरूप ईयते" इति । **यत्** यस्मात् **स्वैर्मन्त्रैः** स्वकीयैः स्तुतिलक्षणैर्वाक्यैराहूतः **अनृतुपाः** न केवलमृतुष्वेव पिबति किंतु अनृतुष्वपि बहुशः सोमं पिबतीत्यर्थः । **ऋतावा** सत्यवान् तादृश इन्द्रः । अत्र दीर्घनलोपावार्षौ । **दिवः** स्वर्गलोकात् **परिमुहूर्तम्** एकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु, तत्रापि **त्रिः** त्रिष्वपि ( प्रातर्मध्याह्नसायं ) सवनेषु **आगात्** आगच्छति । इणो गत्यर्थस्य ( अ० प० ) वर्तमाने ( पा० ३।४।६ ) लुङि आङादेशः ( पा० २–४–४५ ) ॥ ३ ॥

अत्र दुर्गः–यथा यथा लक्ष्यं तथा तथा लक्षणं प्रवर्तयितुमर्हति इष्टानुविधानाच्छन्दसः । छन्दसि हि लक्ष्ये यावदभिधानं देवतानामात्मविधिव्यवस्था । संवादसूक्तानि च कयाशुभादीनि ( ऋ० सं० २–३–२० ) इन्द्रमरुदादिसंवादव्यपदेशहेतुना गमयन्ति तदशक्यमपासितुम् । तथा त्रिस्थानानां देवतानां यान्यसंकरवर्तीनि हविर्वहनरसानुप्रदानरसादानलक्षणान्यग्नीन्द्रसूर्याणां कर्माणि लिङ्गान्यर्थदर्शनहेतुप्रवृत्तानि त्रित्वं गमयन्ति, तदपि चाशक्यमपासितुम्२ । तथाचैकात्म्यमिन्द्रं मित्रं वरुणमग्निमित्यादयो गमयन्ति निगमाः—

इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमा॑हु॒रथो॑ दि॒व्यः स सु॑प॒र्णो ग॒रुत्मा॑न् ।
एकं॒ सद्विप्रा॑ बहु॒धा व॑दन्त्य॒ग्निं य॒मं मा॑त॒रिश्वा॑नमाहुः ॥ ६ ॥
( ऋ० सं० २–३–२२ )

तदप्यशक्यमपासितुम् । त्रिष्वपि चैतेषु पक्षेषु ऐश्वर्यमपरिहीणं देवतायाः । तत्रैवं सति ऐकात्म्यं तावदाश्रित्य प्रतिसमाधानमाह—

**एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ।**

माहाभाग्यादेकस्य **देवतात्मनः** प्रकृतिभेदेन चाप्रकृतिभेदेन चेति चेतनाचेतनविकरणधर्मित्वादात्मानं विकुर्वतोऽस्य **अन्ये देवाः प्रत्यङ्गानि भवन्ति** । अग्नीन्द्रसूर्याणां परस्परापेक्षमन्यत्वम् । अनन्यत्वं त्वेकेन देवतात्मना महता सह । यथा घटादीनां मृदा । नह्यङ्गिनमङ्गान्यतिरिच्यन्ते, भेदेनाग्रहणात् । न चाङ्गान्यनपेक्ष्य प्रत्यङ्गानि भवन्ति । न ह्यधिष्ठानमनपेक्ष्य प्रत्यधिष्ठानं नाम भवति । तस्मादग्नीन्द्रसूर्यात्मकस्य देवतात्मनोऽङ्गानि–जातवेद–वायु–भग–प्रभृतीनि, शकुन्यश्वप्रभृतयश्च प्रत्यङ्गानि । स एष महानात्मा अग्नीन्द्रसूर्याद्यङ्गप्रत्यङ्गभावेन व्यूहमनुभवन्नेकोऽपि सन् बहुधा स्तूयते—

**अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः ॥**

**अपिच** एवं कृत्वा **सत्त्वानाम्** अश्वादीनां **प्रकृतिभूमभिः** प्रक्रियन्तेऽस्यां सर्वे विकारा इति प्रकृतिः, स सत्तालक्षणो महानात्मा हिरण्यगर्भ इति । वक्ष्यति हि–"स एष महानात्मा सत्तालक्षणः, तत् परं, तद्ब्रह्म०–० स भूतात्मा सैषा भूतप्रकृति" रिति । तस्या भूमा बहुत्वम् अनेकधा विपरिणामः स्थावरजङ्गमभावेन, प्रकृतेर्भूमानो बहुत्वानि ( यानि सत्त्वानां )

१. तत्पुनरेतदैश्वर्यं महत् "अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धय" इति । दौर्गे त्वन्यथाऽस्य पाठः—"अणिमामहिमालघिमाप्राप्तिप्राकाम्यमेव च । ईशित्वं च वशित्वं च यत्र कामावसायिता" इति ॥

२. यद्यप्यत्र क्रियाभ्यावृत्तिगणने "द्वित्रिचतुर्भ्यः सुच्" ( पा० ५–४–१८ ) इति सुज्विहित इति त्रिवारमागच्छतीलेशार्थस्तथापि अर्थतस्तौल्यादिलं व्याख्यातम् ॥

१. अत्रेन्द्रागस्त्यमरुतां संवादः प्रतिपाद्यते ॥

२. भूरन्तरिक्षं द्यौश्चेति त्रिस्थानानि । तदेतदुत्तरपादादौ व्यक्तम् ॥

३. भावे ष्यञ् ( पा० ५–१–१२४ ) "ये चाभावकर्मणोः" ( पा० ६–४–१६८ ) इति प्रकृतिभावाभावादल्लोपः ( पा० ६–४–१३४ ) "नस्तद्धिते" ( पा० ६–४–१४४ ) इति टिलोपस्तु "संज्ञापूर्वको विधिरनित्य" इति नेह भवति ॥

तैरनन्यविषयत्वं पश्यन्तः ( कार्यकारणयोरन्यत्वात् ) कारणमहिमभिस्त्वान्यश्वादीन्यभिष्टुवन्त्यृषय इति आहुरात्मविदः । तद्यथा—

"द्यौस्ते पृष्ठं पृथिवी शरीरमात्मान्तरिक्षम्"

इत्येवमादीनि । आत्मैव सर्वं स्थावरजङ्गममित्यवेत्य अश्वमेधे—"मूलेभ्यः स्वाहा, शाखाभ्यः स्वाहा" इत्येवमादिभिस्तेन तेन वैशेषिकेण स्थावरजङ्गमात्मना प्रकृतेरभिन्नेनावस्थानेनावस्थितो महानेवात्मा इज्यते, न ह्यदेवता यागमर्हति । यावच्चान्यदपि किंचिदेवंप्रकारमदेवताभिमतमिज्यते । गृह्ये च बलिप्रभृतिकर्मादौ सर्वत्र स एवेत्युपेक्षितम् ॥

## प्रकृतिसार्वनाम्न्याच्च ॥

एतदुपपन्नम् । नैता अदेवता देवतावत्स्तूयन्ते, किंतु महानेवायमात्मा विश्वरूपः स्तूयत इति—प्रकृतिसार्वनाम्न्यादिति । नामनं नाम ( नतिमात्रम् ) न संज्ञा, सर्वत्वेन नाम सर्वनाम तस्य भावः सार्वनाम्न्यम्, प्रकृतेः सार्वनाम्न्यं प्रकृतिसार्वनाम्न्यं तस्मात् । हेतौ पञ्चमी । यस्मान्महाभाग्या देवताप्रकृतिः सर्वत्वेन नता, तस्माद्धेतोर्नैता अदेवता देवतावत्स्तूयन्ते ॥

अपि चैतदभिहितम्—आगन्तूनिवार्थानमन्यमानो हरिरोहिद्—हरिदादीनां मनुष्याश्ववदनित्यत्वमवेत्य न सम्यगभिधीयत इति "स न मन्यत" इति । अत्र ब्रूमः—मनुष्यधर्मविपरीतो हि देवताधर्मः, अनैश्वर्यान्मनुष्याणामैश्वर्याच्च देवतानाम् ॥

तत्कथम् ? इत्यतो भेदमाश्रित्य प्रतिसमाधीयते—

## इतरेतरजन्मानो भवन्ति । इतरेतरप्रकृतयः ॥

देवाः ऐश्वर्यात् । न मनुष्याणामियं शक्तिरस्ति । अनैश्वर्यात् । मनुष्याणां हि पिता पुत्रं जनयति, इति पिता प्रकृतिः । न पुनरिच्छन्नपि पुत्रः पितरं जनयति ॥ देवानां "त्वमेः सूर्योऽजायत" "एष प्रातः प्रसुवति" इति ह विज्ञायते, तस्मात्सूर्यस्याग्निः प्रकृतिः । सूर्याच्चाग्निः सौर्यं जायते, तस्मादग्नेः सूर्यः प्रकृतिः । अदितेर्दक्षो दक्षाच्चादितिरिति । अथाध्यात्मेऽपि—कोष्ठ्यादग्नेर्नाद इन्द्रः, बलादिन्द्रान्मथ्यमानोऽग्निरित्येवमादि । स एष सर्वथाप्यचिन्त्यो देवताधर्मः । तासामानन्त्यान्महाभाग्यस्य । तत्रैवं सत्यशक्यमध्यवसातुं—यथा मनुष्याणामागन्तवोऽश्वादयस्तथैव देवतानामपि । तस्मात् दोषानुपपत्तिरनागन्तुकत्वाद्देवाश्वादीनामिति ॥

१. एष अग्निः प्रसुवति सर्वमिति शेषः ॥

२. तथा च श्रूयते—"सौरं तेजः सायमग्निं संक्रमते । आदित्यो वाऽस्तं यन्नग्निमनुप्रविशति । अग्निं वा आदित्यः सायं प्रविशती"त्यादि । अत्र "पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः" इत्यत्रेव प्रविशतीत्यादिप्रयोगो बोध्यः ॥

अथ किमर्थमीश्वराः सन्तो देवा जायन्ते ? इत्याह—

## कर्मजन्मानः ॥

कर्मणे जन्म येषां ते । कर्मफलसिद्धये लोकस्य अग्निवायुसूर्या जायन्ते । न ह्येतेभ्य ऋते लोकस्य कर्मफलसिद्धिः स्यात् । विद्यमानमप्यैश्वर्यमैश्वर्यवति न प्रख्यातिमियादीशितव्यमर्थमप्रतीत्य । तस्मादैश्वर्यप्रख्यापनाय जायन्ते ।

कर्मफलसिद्ध्यर्थं लोकमनुजिघृक्षन्तः कुतः ( सकाशात् ) पुनर्जायन्ते ? इत्याह—

## आत्मजन्मानः ॥

योऽसावेक आत्मा बहुधा स्तूयत इत्युपात्तसर्वमूर्तिः स्थितौ, उपरतसर्वमूर्तिः प्रलये, भावाख्यः सन्मात्रः सर्गकाले, षोढाऽऽत्मानं विभज्य जगद्भावं बिभर्ति, तस्माज्जायन्त इत्यात्मजन्मानः । क एव तस्माच्च जायन्ते ? इति चेत्सत्यम् । सर्वं तस्माज्जायते न पुनः कामकारेण । देवास्तु तमात्मानं पश्यन्तो योगेन ततः कामकारतो जायन्ते । किमेषां जन्म ? यदेषामिच्छतां संकल्पानुविधायि कर्मानुरूपं यथाकालमात्मनः कार्यकारणमुपपद्यते, तदेतेषां जन्म । तदनीश्वराणां नास्ति ।

यतश्चेश्वरास्ते तस्मादात्मनस्तत्संकल्पानुविधायित्वात्—

## आत्मैवैषां रथो भवति, आत्मा अश्वः, आत्माऽऽयुध,—मात्मेषव आत्मा सर्वं देवस्य देवस्य ॥ ५ ॥ (४)

### इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे दै० का० सप्तमाध्यायस्य प्रथमः पादः ॥ ७ ॥ १ ॥

तत्र यदुक्तम्—"अश्वादीनि सत्त्वानि, अक्षरथप्रभृतीनि च द्रव्याणि अदेवताः" इति । एतदयुक्तम् । देवता एवैमाः, रथादिरूपेण हि देवतैवात्मानं विकृत्य प्रकृतिभेदेन रथादिसाध्यमर्थं साधयति । सा तद्रूपा सती रथादिस्तुत्या स्तूयते । सा च स्तुतिसमवेतमर्थमाशासितं स्तोतुस्तेनैव रूपेण साधयितुमलमिति ॥

तस्मात् "महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि" तासामेव तिसृणामग्न्यादीनां महाभाग्यादैश्वर्ययोगादात्मानमनेकधा विकुर्वतीनामेकैकस्याः प्रतिविकारं नामधेयप्रतिलम्भात् तेनैव रूपेण धारयन्त्यात्मानमिति "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छंस्तुतिं प्रयुङ्क्ते" इत्यस्य लक्षणस्याव्याघातः । तस्मात्सम्यगेवोक्तमिति ॥ अथवा स्तुतिसंक्रमन्यायेन नवमेऽध्याये ( ११ ) "यज्ञसंयोगाद्राजा स्तुतिं लभेत" इत्यत्र पुनः परिसमाधास्यते ॥ ५ ॥ ( ४ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० का० सप्तमाध्यायस्य प्रथमः पादः ॥ ७ ॥ १ ॥

## सप्तमाध्याये द्वितीयः पादः ॥

पूर्वमात्मवित्पक्षेणैकात्म्यं देवतानामभिहितम्। यावदभिधानं तु नानात्वं याज्ञिकाभिमतम्। तावेतौ पक्षौ प्रतिक्षेप्तुं सिद्धान्तमाह—

### तिस्र एव देवता इति नैरुक्ताः ॥

**तिस्र** इति संख्यानियमः। **एवे**त्यवधारणमितरौ पक्षौ प्रतिक्षेप्तुम्। अन्ययोगव्यवच्छेदोऽत्रैवकारार्थः। कतमास्ता इत्याह—

### अग्निः पृथिवीस्थानो, वायुर्वेन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थानः ॥

तथा च स्थानभेदमेव त्रित्वे हेतुः। स एष निगमेभ्योऽवसीयते—

"पृथिव्यसि ( च ) जन्मना वशा साग्निं गर्भमधत्थाः,
अन्तरिक्षमसि जन्मना वशा सा वायुं गर्भमधत्थाः,
द्यौरसि जन्मना वशा साऽऽदित्यं गर्भमधत्थाः"

इत्येवमादिभ्यः। **वायुर्वेन्द्रो** वेत्येकस्यैव नैरुक्तनये पर्यायवचनता बोध्या। इतरथा द्युरन्तरिक्षस्थानाविन्द्रवक्ष्यत्। "अस्येन्द्रस्य वायोर्यथा मन्त्रो न विद्स्येत्तथा अन्नमेवमभिवहेयुः" इति वायुशब्दस्येन्द्रविशेषणत्वश्रवणात्पर्यायवचनावेताविति स्थितिः। सत्यपि पर्यायवचनत्वे मुख्यतरः संबन्धो मध्यमस्य ज्योतिष इन्द्रशब्देनैव, तथेतरयोरपि पार्थिवोत्तमयोरग्निसूर्यशब्दाभ्यां, न तथेतरैर्वायुवरुणादिभिर्जातवेदादिभिः सवितृभगप्रभृतिभिश्च। ननु कथं मध्यमस्य शब्दद्वयेनोपदेशः क्रियते, पार्थिवोत्तमयोरेकैकेन? अत्रोच्यते—मध्यमस्य हि द्वौ कर्मात्मानौ विद्युद्वाय्वाख्यौ, तयोरनित्यदर्शन एको विद्युदाख्यः। नित्यदर्शनस्तु वाय्वाख्यस्त्वगिन्द्रियप्रत्यक्ष इति स मध्यमस्थानोऽमुख्योऽपि मुख्येनेन्द्रेण सह विकल्प्योपदिष्टः। न तथेतरे। एवं चोभयकृतं भविष्यति—अनुपरतक्रियाव्यापारता च मध्यमस्य वाय्वाख्येन कर्मात्मना इतरज्योतिर्विद्दर्शिता भविष्यति। मुख्येन चन्द्रशब्देन मुख्यः संबन्धोऽपरिहापितो भविष्यतीत्युभयमुक्तं "वायुर्वेन्द्रो वान्तरिक्षस्थानः" इति। न तु पार्थिवोत्तमयोर्द्वौ द्वौ कर्मात्मानौ स्तो यथा मध्यमस्थानस्य, तस्माददोषो मध्यमस्याभिधानद्वयोक्ताविति ॥

ननु—यदिदमभिधानबहुत्वं जातवेदोवैश्वानर इत्येवमादि सति त्रित्वे तत्कथमुपपद्यतां तत्राह—

### तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति ॥

**तासामेव** तिसृणामग्न्यादीनां **महाभाग्या**दैश्वर्ययोगादेकात्मानमेकधा विकुर्वन्तीना**मेकैकस्याः** प्रतिविकारं जातवेदः, वैश्वानरः, वरुणः, रुद्रः, अश्विनौ, उषा, इत्येवमादीनि **बहूनि नामधेयानि भवन्ति**, प्रतिस्थानं स्वप्रकृत्यभेदादैकात्म्यवदेवैकत्वं न जहाति सा सा देवतेति।

### अपि वा कर्मपृथक्त्वात् ॥

उक्तदिशा विकरणधर्मित्वादभिन्नप्रकृतीनां बहुनामता। **अपि वा** अथवा स्वस्वमात्मानमविकुर्वतीनामेव **कर्मपृथक्त्वात्** अनेककर्मयोगात्पृथक्कर्महेतुको नामधेयभेदप्रतिलम्भः स्यात् ॥

अत्र दृष्टान्तः—

### यथा होता-ऽध्वर्यु-र्ब्रह्मो-द्गाता-इत्यपि एकस्य सतः ॥

**एकस्य सतः** कर्तुः कर्मणां भेदात् होत्रादिनामभेदप्रतिलम्भः **यथा** एवं ते ( अग्न्यादयः ) तत्तत्कर्म कुर्वाणास्तत्तदाख्या भवन्ति। यथा च लोके कारक–पाचक–लावकादयः। तदित्थं कर्मपृथक्त्वादैश्वर्याद्वा एकस्या अपि बहुनामतोपपद्यते।

अथ याज्ञिकमतेनोच्यते—

### अपि वा पृथगेव स्युः। पृथग्घि स्तुतयो भवन्ति ॥

अथवा **पृथक् पृथक्** अत्यन्तभिन्ना एवौत्पत्तिकेन भेदेन **स्यु**रिति याज्ञिकाः प्राहुः। कुतः? **हि** यतः **पृथक् पृथक्** अग्न्यादीनां **स्तुतयो भवन्ति**। अधियज्ञे हि स्तुतिनियमो भवत्यभिधाननियमश्च। सा च पृथगग्नेः—"अग्निमीळे" ( ऋ० सं० १–१–१–१ ) इत्येवमाद्याः। पृथक्च जातवेदसः "प्र नूनं जातवेदसम्" ( ऋ० सं० ८–८–४६–१ ) इति।

---

१. एवकारो हि त्रिविधोऽन्ययोगव्यवच्छेदार्थोऽयोगव्यवच्छेदार्थोऽत्यन्तायोगव्यवच्छेदार्थश्च। तत्र विशेष्यसङ्गत आद्यो यथा—पार्थ एव धनुर्धर इति। पार्थान्यो न धनुर्धर इति धनुर्धरस्यान्यत्र योगो व्यवच्छिद्यते। विशेषणसङ्गतो द्वितीयो यथा—शङ्खः पाण्डुर एवेति। क्रियासङ्गतश्च तृतीयो यथा—नीलं सरोजं भवत्येवेति व्यक्तमन्यत्र ॥

२. तथाच निगमः "तथा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहा" इति। स प्रथमा संस्कृतिरित्येतच्छुक्रामन्थिनोर्हवनमन्त्रे यो मध्यमो वरुणोऽपि मित्रोऽग्निस्तस्मै इन्द्राय सुतमाजुहोतेति वरुणादीन्यनुक्रम्य विशेषतश्चतुर्थ्यन्तेनेन्द्रशब्देन संप्रदानेन सामानाधिकरण्यान्मन्त्रान्ते मध्यमशब्देन्द्रशब्दयोर्मुख्यतरः संबन्ध इति गम्यते ॥

३. पार्थिवस्य ज्योतिषोऽग्न्यभिधानेन प्रसिद्धतरसंबन्धेन उत्तमस्य द्युस्थानस्य ज्योतिषश्चेन्द्राभिधानेनेति तथैवोपदेश इत्यर्थः ॥

४. प्रत्यक्षविषयाः क्रियात्मानश्च वरुणादयः।

१. संभावनायामत्र लिङ्। सा चापिशब्देन द्योत्यते। वस्तुतोऽयमवयुत्यानुवाद एव। ऐश्वर्ययोगादेव भेद इति हि पुष्कलमित्यनुपदं व्यक्तीभविष्यति ॥

२. अग्न्यादिसंज्ञा हि अग्रनयनादिगुणयोगेऽसत्यप्यग्न्यादीन्न जहाति। कारकादयस्तु करणादिक्रियावियोगसमनन्तरमेवेति विशेषः। तस्माद्द्वितीय एव पक्षः साधीयान्प्रतिभाति ॥

पृथगिन्द्रस्य "हरिभ्यां" पृथग्वायोः "नियुद्भिः" पृथक्सूर्यस्य "हरिद्भिः" पूष्णो "ऽजाभिः"। अरुणीभिर्गोभिरुषसामित्येवम्। स्तुतिव्यवहारे च प्रायश्चित्तम् तच्च पर्यायवचनत्वे तेषामनुपपन्नम्। तस्माद्वयं पश्यामः स्तुतिनियमात्पृथक्पृथगग्निवैश्वानरप्रभृतय इति याज्ञिकमतम्॥

## तथाभिधानानि॥

यथैव हि स्तुतिभेदात्स्तुत्यानां भेदः। **तथा** एवमेवा-**भिधान**भेदादभिधेयानां भेदोऽपि भवितुमर्हति। प्रसिद्धतरं च लोके प्रत्यभिधानमर्थभेद इति। तस्मात् पृथक्पृथगग्नि-जातवेदो-वैश्वानरादिशब्दानामभिधेया इति स्थितिः। ननु स्तुतिष्वेवाभिधानभेदो न विधाविति चेन्न। "आग्नेयमष्टाकपालं निर्वपेत्" इत्येवंविधावप्यभिधाननियमदर्शनात्। तथा च येनैवाभिधानेन चोद्यते तेनैव निर्वापणादारभ्य समाप्यतेऽपि॥

## (अथ समानार्थत्वसाधनम्)

## यथो एतत्—कर्मपृथक्त्वादिति ?। बहवोऽपि विभज्य कर्माणि कुर्युः॥

**यथो एतत्** यत्पुनरेतदुक्तं **कर्मपृथक्त्वादिति**। अनैकान्तिक एष दृष्टान्तः। दृष्टो हि अनेकेषामेकस्मिन्कर्मणि योग इति पुरुषाणामिव कर्मणोऽपि नानात्वप्रसङ्गः। तत्किमात्मविदुक्तमेकत्वं नास्त्येव ? अस्ति तद्गुणत इत्याह—

## तत्र सस्थानैकत्वं, संभोगैकत्वं, चोपेक्षितव्यम्॥

**तत्र** तस्मिन्पृथक्त्वे सति सहस्थानतया एकत्वं **सस्थानैकत्वं** संभोगहेतुकमेकत्वं **संभोगैकत्वं** संभोगो नाम परस्परोपकारित्वम्। समानकार्यतेति यावत्। तदेतद्द्वयं **चोप**पत्तित **ईक्षितव्य**मालोचितव्यम्। तत्र दृष्टान्तः—

## यथा—पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वं च संभोगैकत्वं च दृश्यते॥

अथ **पृथिवी**त्युक्ते यावतां सहभावेन समानं स्थानं ते सर्वे तद्ग्रहणेन गृह्यन्ते। एवमुत्तरयोरपि स्थानयोः। तथाचैवं प्रकारमेकत्वं **स्थानैकत्वं, संभोगैकत्वं च** पुनर्भिन्नस्थानानामपि भवति किंपुनः समानख्यानानामिति—

## यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च संभोगः॥

कथं ?—पृथिव्योषध्युत्पत्तौ स्वकार्यारम्भे—पर्जन्यवाय्वादित्यकृतमुपकारमपेक्षते। तदुक्तम्—"त्रयस्तपन्ति पृथिवीमनूपाः" (ऋ० सं० ७-७-१९-३) इति॥

## अग्निना चेतरस्य लोकस्य॥

**इतरस्य** अन्तरिक्षस्य दिवश्च। तदुक्तम्—"अग्निर्वा इतो वृष्टिं समीरयति" इति "दिवं जिन्वन्त्यग्नयः" (ऋ० सं० २-३-२३-५) इति च। तदेवंप्रकारमेकत्वं कार्यैकत्वात्स्थानैकत्वाद्वा भोक्तं न प्रतिषिध्यते। लोकेऽपि समानकर्मता भवति येषां तेषामैक्यमुच्यते॥

तदेवं भेदाभेदवादिन उभयेऽपि प्रमाणं भवन्ति आत्मविन्नैरुक्तयाज्ञिकाः। ते हि न स्वमनीषया भेदाभेदौ कल्पयन्ति, किं तर्हि ? मन्त्रार्थमुद्दिश्य। तस्मादत्र समञ्जसं दृष्टान्तमाचष्टे—

## तत्रैतन्नरराष्ट्रमिव॥

यथा—राष्ट्रमित्यभेदः, नरा इति भेदः, एवं पृथिव्यग्निरित्यभेदः, जातवेदा वैश्वानर इति भेदः। एवमुत्तरयोरपि स्थानयोः। तथा—आत्मेत्यभेदः, लोकाश्च लोकिनश्चेति भेदः। सर्वत्रैव सामान्यविशेषधर्मौ द्रष्टव्यौ॥ १॥

## अथाकारचिन्तनं देवतानाम्॥

**अथ**—याज्ञिकपक्षोपक्रमे महाभाग्यानामपि **देवतानामाकारचिन्तन**मुपक्रम्यते। तत्र तावत् प्रकृतिश्चिन्त्यते देवतायाः। न हि प्रकृतिसत्तामनपेक्ष्य विकरणं नाम देवताधर्मोऽस्ति। अपि च यत एवेश्वरा देवास्तत एवोभयभावित्वात्किमाकारवत्त्वं स्वभावो देवतायाः, अथवा निराकारवत्त्वमिति चिन्ताविषयः। तत्र यावदभिधानं देवतापक्षवादिनां याज्ञिकानामग्निवायुसूर्याभिधानानि प्रत्यक्षार्थाभिधानसंबन्धीनि, जातवेदोरुद्रेन्द्रपर्जन्याश्विप्रभृतीन्यप्रत्यक्षार्थाभिसंबन्धीनि तानि किं मनुष्यादिशब्दवदाकारवताऽर्थेनार्थवन्ति, उत वाय्वाकाशशब्दवदनाकारेणेति। आद्य-

१. विषमोऽवहारोऽत्र व्यवहारो व्यभिचार इत्यपि पाठः। अन्यनाम्नाऽन्यस्तुतौ॥

२. अग्निशब्दादिना। चोद्यते—उक्तविधविधिवाक्येन विधीयते॥

१. औपचारिकम्॥

२. अत्र दुर्गः—पुरुषबुद्ध्यपेक्षातश्च गुणप्रधानतोऽपेक्षा पुरुषानुरागविशेषतः। तत्रैवं सति आत्मविद आत्मनि त्रित्वनानात्वे गुणीकृत्य तदङ्गप्रत्यङ्गभावेन कल्पयित्वैकमात्मानं पश्यन्ति। तथा नानैकत्वे नैरुक्ता इति त्रित्वे, तथा त्रित्वैकत्वे याज्ञिका नानात्वे, एवमेषामविरोधः। अस्ति हि शब्दार्थयोर्वक्तृप्रतिपत्तृवशेन तद्बुध्यपेक्षया अन्वयव्यतिरेकाभ्यां वर्तितुं शक्तिः। न तु स्वाभाविकमभिधानाभिधेयसंबन्धमकृतकमप्रच्यवमानावभिधानाभिधेयौ जहीताम्। नह्यग्निरवभास्यं प्रत्यवभासनशक्तिः, अवभास्यस्य चावभास्यमानताशक्तिर्व्यवधानमन्तरेण विहन्यते। नह्यकृतकं स्वयमप्यकृतको विकल्पते। वैदिकानां पदवाक्यप्रमाणानामात्मभावानुशयवशेनात्मविन्नैरुक्तयाज्ञिका वेदस्याविपर्यासिनीमप्यध्यात्माधिदैवाधियज्ञविषयनियतामर्थाभिधानशक्तिं विपर्यासिनीमिव मन्यमानाः परस्परतो विपर्ययन्ते। तदेतत्सर्वथापि भेदाभेदवर्तिदेवतासतत्त्वं यथाग्रहं वक्तृप्रतिपत्तृवशेन प्रख्यातिमुपनयत् स्तुतिरूपकेणात्मनोऽर्थसतत्त्वं तथाभूतं मन्त्रैराविष्क्रियते। तदुक्तम्—"तत्रोपमार्थेन युद्धवर्णा भवन्ति" (नि० २-५-२) इति। दर्शितं चैतन्मन्त्रेण "नत्वं युयुत्से" इति। निष्ठितरूपत्वेन स्वे स्वे विषयेऽध्यात्मादौ परमार्थतया ऐकात्म्ये निष्ठा। तदन्तत्वाद्वाचः। तदुक्तम्—"यतो वाचो निवर्तन्ते" इति॥

पक्षे—द्विविधा आकारिणोऽर्थाश्चेतनाश्चाचेतनाश्च, तत्र किममी मनुष्यादिवच्चेतना, उत पाषाणादिवदचेतना इति ? तत्सुदासाय पक्षः परिगृह्यते—

**पुरुषविधाः स्युरित्येकम् ॥**

"मन्त्रेषु दर्शनम्" इति वाक्यशेषः । **पुरुषविधाः** पुरुषप्रकाराः पुरुषविग्रहा इत्यर्थः ॥

अत्र हेतुमाह—

**चेतनावद्धि स्तुतयो भवन्ति ॥**

**हि**-शब्दो हेत्वर्थे । यस्माच्चेतनावतामिव **स्तुतयः** मन्त्रा अभिधायका **भवन्ति** । तस्मात्पुरुषाकारविग्रहा इत्यर्थः ॥

**तथाभिधानानि ॥**

यथैव पौरुषविध्ये स्तुतिः कारणं भवति **तथैव** संवादसूक्तेषु कथासुमीयादिषु "कुतस्त्वमिन्द्रे"त्येवमादीनि **अभिधानानि** भवन्तीति पूर्वतोऽनुषज्यते । अयमर्थः—यथैव चेतनावत्सदृशस्तुतिभिः पौरुषविध्यमुपपद्यते तथैव संवादसूक्तेषु परस्परमभिधानैरपि ( उक्तिप्रत्युक्तिमन्त्रेषु परस्परतः संबद्धार्थैरपि ) । तस्मात् "पुरुषविधाः स्युः" इत्युपपन्नम् ॥

हेत्वन्तरमाह—

**अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते ॥**

**अथा**ऽयमपरोऽपि हेतुः पौरुषविध्ये देवतानाम्-यत् **पौरुषविधिकैरङ्गैः** पौरुषविध्ये प्रयुक्तैरङ्गैः **संविभज्य-स्तूयन्ते** । यथा—

**"ऋष्वात इन्द्र स्थविरस्य बाहू ॥"**

( ऋ० सं० ४–७–३१–३ )

**"यत्संगृभ्णा मघवन्काशिरित्ते ॥"**

( ऋ० सं० ३–२–१–५ )

अत्रायस्य—

"उरुं नो लोकमनुनेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।
ऋष्वा त इन्द्र स्थविरस्य बाहू उपस्थेयाम शरणा बृहन्ता ॥"

इति स्वरूपम् । शंयोरार्षं त्रिष्टुबैन्द्री । एकादशिन्यामैन्द्रस्य पशोर्वपा या याज्या ॥ **हे इन्द्र ! विद्वान्** जानंस्त्वम् **उरुं** विस्तीर्णं **स्वर्वज्ज्योतिः** स्वरित्यादित्यनाम । तेन तुल्यमितिवदव्ययम् । प्रकाशेनादित्यसमानम्, अथ च **अभयं** भयरहितम् । **लोकं** स्थानं स्वर्गाख्यम् **नः** अस्मान् **स्वस्ति** स्वस्त्ययनाय, क्षेमेण वा । **अनुनेषि** अनुगमय । लोडर्थे लेट् । वयं **स्थविरस्य** स्थूलस्य महतो वृद्धस्य वा । **ते** तव संबन्धिनौ **ऋष्वा** ऋष्वौ दर्शनीयौ, "ऋषिर्दर्शनात्" ( नि० २–११ ) "ऋषी गतौ" वन्गुणाभावश्च ( उ० १–१५१ ) औङ आकारः ( पा० ७–१–३९ ) **बृहन्ता** बृहन्तौ महान्तौ **शरणा** शरणौ नित्यमाश्रयणीयौ रक्षकौ नः "शरणं गृहरक्षित्रोः" इत्यमरः । लिङ्गव्यत्यय आर्षः ।[illegible]तौ **बाहू** हस्तौ **उपस्थेयाम** उपतिष्ठेम ( रक्षकतया ) [illegible]महि । आशंसायां लिङ् । "छन्दस्युभयथा" ( पा० ३–४–११७ ) इति सार्वधातुकत्वात्सलोपः । आर्धधातुकत्वात्तिष्ठादेशाभावश्च ॥ ३ ॥ द्वितीयस्य शेषो व्याख्यातः ( नि० ६–१–१ ) ॥

एवमस्मिन्मन्त्रद्वये बाहुमुष्टिसंबन्धदर्शनात्तुल्यस्येन्द्रस्य पौरुषविध्यमन्यथा हि वितथाभिधानत्वं मन्त्रयोः, तथा च सति आनर्थक्यं मन्त्राणां सर्वेषां शास्त्रस्य च तदर्थलक्षणभूतस्य प्रसज्येत, तन्माभूदित्यवश्यमेष्टव्यं पौरुषविध्यं देवानामिति ॥

**अथापि पौरुषेयविधिकैर्द्रव्यसंयोगैः ॥**

**अथा**यमप्यपरो हेतुः पौरुषविध्ये देवतानां यत् **पौरु**[illegible] **योगैः** संस्तूयन्ते "देवा" इति वाक्यशेषोऽनुषज्यते । एवमग्रेऽपि । तद्यथा—

**"आ द्वाभ्यां हरिभ्यामिन्द्र याहि" ॥**

( ऋ० सं० २–६–२१–४ )

**"कल्याणीर्जाया सुरणं गृहे ते" ॥**

( ऋ० सं० ३–३–२०–१ )

---

१. मन्त्रप्रत्ययमेवास्तित्वमभ्युपगतं देवानां यत्काम—इत्युपक्रम्य—तद्देवतः स मन्त्रो भवतीति । सति हि देवतास्तित्वे तद्देवतात्वं मन्त्रस्य । यदि चैवमाकारोऽपि तत्प्रत्यय एव भवितुमर्हति, अस्ति चेदं पौरुषविध्यं मन्त्रेषु देवतासंविज्ञातपदसंबन्धीति ॥

२. पूर्वो वतिमत्वर्थे—उत्तरस्तुल्यार्थे । यद्यपि चैतन्यमपुरुषाकारविग्रहाणां गवादीनामप्यस्ति तथापि हिताहितविवेकलक्षणं विशिष्टं संविज्ञानं पुरुषार्थसंबद्धमिह चैतन्यं जिघृक्षितं, पौरुषविधस्यैव सिषाधयिषितत्वात् । नहि तद्गवादीनामस्तीति तेऽचेतना एव । लोकेऽपि हि यस्य तथाविधं चैतन्यं न भवति तमधिकृत्य ब्रुवते—"अचेतनोऽय"मिति । गवादयो हि न विदुः श्वस्तनम् । नापि लोकालोकावित्यचेतना इत्युपेक्ष्यन्ते । पुरुषस्तु वेद, मर्त्येनामृतत्वमपीप्सतीत्यनपेक्ष्य सामान्यं विशिष्टचैतन्यः पुरुषो नियम्यते । यथैव चेतयमाना अर्थान् पुरुषाः श्रूयन्ते तथैव देवता इति "पुरुषविधाः स्युः" इत्युपपन्नम् ॥

३. एतान्यपि पौरुषविध्ये कारणानि भवन्तीत्यर्थः ॥

४. तत् प्रति ताः कारणं भवन्ति ॥

५. पौरुषविध्यमुपपद्यत इत्यर्थः ॥

१. सायणस्तु—स्वर्वत्सुखवत् अभयं भयरहितं ज्योतिश्च स्वस्ति क्षेमेणानुनेषीत्याह । अत्र पक्षे—"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमि"ति स्वःपदार्थः ॥

२. दुर्गस्तु—अनुनयसि, स्वेन सुकृतेन कर्मणा गच्छतां गमनानुग्रहे वर्तसे इति व्याचख्यौ ॥

३. अत्र चेनानुक्तः पदसंस्कारश्छान्दस ऊह्यः ॥

आहूयमानः मयाऽऽहूतस्त्वं द्वाभ्याम् । तत्रास्य—

'आ चतुर्भिरा षड्भिर्हूयमानः ।

अष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥"

इति शेषः । गृत्समदस्येन्द्रस्यार्षं त्रिष्टुबैन्द्री । हे भगवन् इन्द्र ! यदि तव तावद्द्वौ हरी सन्निहितौ ततस्तावेव रथे युक्त्वा ताभ्यामेव हरिभ्याम्, अथ चत्वारस्तदा तैः चतुर्भिः एवं षड्भिः अष्टाभिः दशभिः वा इदं सोमपेयं सोमपानकर्म प्रति आयाहि । छन्दसि "व्यवहिताश्च" (पा० १-४-८२) इति व्यवहितस्याङः प्रयोगः । किमित्येवं ब्रूमहे—अयम् पुरस्तान्निहितः सोमः सुतः अभिषुतस्त्वदर्थमेवेति मा विलम्बस्व । विलम्बहेतुं प्रतिषिध्यन्प्रार्थयते—हे सुमख ! सुयज्ञ ! सुधन ! वा । मा केनचित् मृधः संग्रामान् ( निघं० २-१७-२० ) कः कार्षीः । अविलम्बितमागच्छेत्यभिप्रायः ॥ यद्वा यतोऽयं सोमस्त्वदर्थमभिषुतोऽतो यज्ञस्यास्य मृधो हिंसाः मा कः माकार्षीरित्यर्थः । अत्र करोतेर्लुङि "मन्त्रे घस—" ( पा० २-४-८० ) इत्यादिना च्लेर्लुक् । गुणे कृते "हल्ङ्याप्—"( पा० ६-१-६८ ) इति सिलोपः । माङ्योगे ( पा० ६-४-७४ ) धातोरडभावः । यद्यपीन्द्रस्य द्वावेव हरी स्तस्तथापि तयोर्विभूतिभेदान्नानात्वमतो बहुत्वमपि सिद्धम् ॥ ३ ॥

अथ द्वितीयस्य—

अपाः सोममस्तमिन्द्र प्र याहि कल्याणी ० ० हेते ।

यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥"

इति स्वरूपम् । विश्वामित्रस्यार्षं त्रिष्टुबैन्द्री । हारियोजनस्यानुवाक्या । हे भगवन् ! इन्द्र ! सोमम् अपाः अत्रैव स्थित्वा पिब । लोडर्थे लुङि ( पा० ३-४-६ ) "गातिस्था—" ( पा० २-४-७७ ) इति सिचो लुक् । एतस्मिन्कर्मणि पीत्वा च अस्तं गृहं ( निघं० ३-४-५ ) प्रयाहि प्रकर्षेण गच्छ । यस्मात् ते तव गृहे कल्याणीः कल्याणगुणयुक्ता । "छन्दसीवनिपौ च" ( पा० ५-२-१२२ वा० ) इति मत्वर्थे ईप्रत्ययः । जाया शची विद्यते । यत्र यस्मिन्गृहे बृहतः महतः रथस्य निधानं रथशाला । विमोचनं च वाजिनः[3] । जित्वा संग्राममागतस्य दक्षिणावत् अन्यदपि सुरणं सुन्दरं रमणीयं च यद्यद्भवति तत्सर्वं च विद्यते । तस्मात्पुनरस्तं प्रयाहीत्यर्थः ॥ १ ॥

१. ह्वयतेर्लटः शानचि यकि संप्रसारणम् ( पा० ६-१-३४ ) "हलः" ( पा० ६-४-२ ) इति दीर्घः । "आने मुक्" ( पा० ७-२-८२ ) इति मुगागमः ॥

२. "पा पाने" ( भ्वा० प० ) कर्मणि "अचो यत्" ( पा० ३-१-९७ ) इति यति "ईद्यति" ( पा० ६-४-६५ ) इत्याकारस्येत्वे गुणः । पातव्यं सोमं प्रतीत्यर्थः ॥

३. सायणस्तु—शोभनगीतादिध्वनिरस्ति । यद्वा सुरणं सुरमणीयं यथा भवति तथा गृहे जाया तिष्ठतीत्याह ।

४. अत्र स्थितौ सत्यां रथे योजितानां वाजिनां विमोचनं, खादनपानादिना दक्षिणावत् प्रयोजनं वर्तते । विमुक्तेभ्यो वाजिभ्यः खादनं पानं चोपहरन्ति इति सायण आह ।



एवमेतयोर्मन्त्रयोर्हरिगृहजायारथाभिसंबन्धात्पौरुषविध्यमिन्द्रस्य । नह्यपौरुषविध्ये जायादिभिः संबन्धो भवितुमर्हति ॥

## अथापि पौरुषविधिकैः कर्मभिः ॥

अथायमप्यपरो हेतुः पौरुषविध्ये देवतानाम् यत्—पौरु०० मैभिः संस्तूयन्ते देवाः । तद्यथा—

"अद्धीन्द्र पिब च प्रस्थितस्य ॥"

( ऋ० सं० ८-६-२१-२ )

"आश्रुत्कर्ण श्रुधी हवम् ॥"

( ऋ० सं० १-१-२०-३ )

अत्रास्य—

इदं हविर्मघवन् ! तुभ्यं रातं प्रति सम्राळहृणानो गृभाय । तुभ्यं सुतो मघवन् ! तुभ्यं पक्वो ३—" इत्यादिः ।

अग्नियुतो नाम स्थूरपुत्रः तस्यार्षं त्रिष्टुबैन्द्री । हे मघवन् धनवन् ! इन्द्र ! इदं हविः आज्यादिकम् । तुभ्यम् त्वदर्थमस्माभिः रातम् मनसा निरुप्तम् पूर्वं निर्वपणादौ संस्कारकाले । इदानीं हे सम्राट् ! सम्यग् राजमान ! सर्वेषामीश्वरेति वा अहृणानः अक्रुध्यन् "हृणीङ् रोषणे" ( कण्ड्वादिरात्मनेपदी ) बाहुलकाद्यगभावे लटः शानच् । प्रतिगृभाय प्रतिगृहाण । ग्रहेर्लोटि श्नः "छन्दसि शायजपि" ( पा० ३-१-८४ ) इति शायच् । "हृग्रहोर्भश्छन्दसि" ( वा० ) इति हस्य भः । सन्निपातपरिभाषाया अनित्यत्वाद्वेर्लुक् (पा० ६-४-१०५) हे मघवन् ! तुभ्यं त्वदर्थमेवायं सुतः अभिषुतः सोमः । अपि च तुभ्यं त्वदर्थमेवैष पुरोडाशः पक्वः तमेतं हे इन्द्र ! त्वम् अद्धि भक्षय । किंच प्रस्थितस्य हविर्धानादुत्तरवेदिं प्रति प्रस्थापितं सोमं पिब ॥ २ ॥

अथ द्वितीयस्य—

"नूचिद्दधिष्व मे गिरः ।

इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥"

इति शेषः । इदं मधुच्छन्दस आर्षमनुष्टुबैन्द्री । हे आश्रुत्कर्ण ! आश्रुतौ सर्वतः श्रोतारौ ( अप्रतिहतश्रवणौ ) शृणोतेः क्विपि तुक् ( पा० ६-१-७१ ) । कर्णौ यस्य स इन्द्र ! हवम् अस्मदीयमाह्वानं "ह्वेञ् स्पर्धायां शब्दे च" ( भ्वा० उ० ) "बहुलं छन्दसि" ( पा० ६-१-३४ ) इत्यनैमित्तिके संप्रसारणे कृते "ऋदोरप्" ( पा० ३-३-५७ ) इत्यप्प्रत्ययः । नु क्षिप्रम् श्रुधि शृणु । "श्रु श्रवणे" ( भ्वा० प० ) लोटो हिः । "श्रुवः शृच" ( पा० ३-१-७४ ) इति विहितस्य श्नोः "बहुलं छन्दसि" ( पा० ) इति लुकि हेर्धिः ( पा० ६-४-१०२ ) अत्र सांहितिको दीर्घः । एवमग्रेऽपि । मे मम स्तोतुः गिरश्चित् स्तुतीरपि दधिष्व चित्ते धारय । दधातेर्लोटि

१. द्वितीयास्थाने षष्ठी व्यत्ययेन ( पा० ३-१-८५ ) यद्वाऽवयवषष्ठ्येव "स्वमंशमि"ति शेषः ॥

"छन्दस्युभयथा" ( पा० ३-४-११७ ) इति आर्धधातुकत्वा- दिडागम आतो लोपः ( पा० ६-४-६४ ) किंच-हे इन्द्र ! **मम** मदीयम् **इमं** स्तोमं स्तोत्ररूपं वाक्समूहं **युजश्चित्** सख्युरिव **अन्तरम्** अन्तरङ्गं ( हृदयंगमम् ) **कृष्व** कुरु । "डुकृञ् करणे" ( त० उ० ) लोट् । "व्यत्ययो बहुलम्" ( पा० ३-१-८५ ) इति विकरणव्यत्यये शपो "बहुलं छन्दसि" ( पा० २-४-७३ ) इति लुक् ॥ ३ ॥

एवमनयोर्मन्त्रयोः अद्धि-श्रुधि-इत्येवमामन्त्रणपूर्वकादन- श्रवणपूर्वको विनियोगोऽपौरुषविध्ये देवानां न संभवति । नहि गवादयोऽद्धि-श्रुधीत्युक्ताः किंचित्प्रतिपद्यन्ते । तस्मात्कार्यका- रणसन्निवेशो मनुष्यवद्देवतानां, कार्यकारणापेक्षं च विज्ञानम् । तदेवमेतेभ्यो मन्त्रदर्शनेभ्यः स्थितं पौरुषविध्यं मन्त्रदेवतानाम् ॥ २ ॥ ( ६ )

## अपुरुषविधाः स्युरित्यपरम् ॥

"दर्शनसि"ति वाक्यशेषः । तदुक्तम्-"अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" इति विज्ञायते ( नि० २-१६-२ ) तदाहुः-"नैतदस्ति यद्देवासुरम्" इति "न त्वं युयुत्से" इत्यपि चैतदुक्तमेव ॥

## अपि तु यद्दृश्यते अपुरुषविधं तत् । तद्यथा- अग्नि-र्वायु-रादित्यः-पृथिवी-चन्द्रमा इति ॥

**दृश्यते** अवलोक्यते देवानाम् **यत्** किंचित् **तत् अपुरु- षविधम्** अपुरुषाकारम् । प्रत्यक्षत एतान्यपुरुषप्रकाराणि **अग्न्यादीनाम्** । अतोऽन्यथाऽभ्युपगमे दृष्टहानिः स्यात् । न चैतदिष्टम् । तस्मादपुरुषविधा अग्न्यादयः । तत्सामान्याददृष्टा अपीन्द्रादयोऽपुरुषविधा एव । नहि मनुष्यत्वे तुल्ये केचिदा- कारिणः केचिदनाकारिण इति युक्तम्, तथैव देवतानामपि हि न्यायः । तस्मात् अपुरुषविधा इति स्थितम् ॥

## यथो एतत्-"चेतनावद्वद्धि स्तुतयो भव- न्ती"ति—अचेतनान्यप्येवं स्तूयन्ते, यथाक्षप्रभृ- तीन्योषधिपर्यन्तानि ॥

**यथा** इति वाक्योपादाने । उ इत्यवधारणे, येनैव प्रकारे- णासमर्था हेतव उपन्यस्ता याज्ञिकैस्तेनैव प्रकारेण क्रमशः प्रतिसमाधास्यत इति प्रश्नोपक्रमोऽयम् । यत्पुनरेतत् उक्तं- **चेत००न्तीति** असमर्थोयं हेतुः । यतः **अचे००यन्ते** । तस्माच्चेतनावत्स्तुतिमत्त्वमहेतुः पौरुषविध्ये देवानाम् । अचेत- नेष्वप्यक्षादिषु **चेतनावत् स्तुतेर्दृष्टत्वात्** । इति ॥

१. "सोमयागेषु छन्दोगैः क्रियमाणा पञ्चादिसंज्ञिका स्तुतिः स्तोमः" इति दीक्षितचरणाः प्राहुः ॥

२. अन्तरं क्षणमित्यर्थं इति दुर्गः । आसन्नमिति सायणः ॥

३. दृष्टं परित्यज्याऽदृष्टकल्पने मानाभावात् ॥

४. एष एव व्याख्याक्रमोऽग्रेपि द्रष्टव्यः । अनुमितिप्रकारश्च स्वयमूह्यः ॥

## यथो-एतत्-"पौरुषविधिकैरङ्गैः संस्तूयन्त" इति अचेतनेष्वप्येतद्भवति ॥

"अ॒भिक्र॑न्दन्ति॒ हरि॑तेभिरा॒सभिः॑ ॥"

( ऋ० सं० ८-४-२९-२ )

## इति ग्रावस्तुतिः ॥

इति । **यथो एतत्** यत्पुनरेतदुक्तम्— **पौर००न्त इति** । अयमप्यसमर्थो हेतुर्व्यभिचरितत्वात् । यतः **अचे००वति** । तद्यथा—**अभि००** इति **ग्राव- स्तुतिः** । अस्य—

"ए॒ते व॑दन्ति श॒तव॑त्स॒हस्र॑वद॒भिक्र॑००सभिः ।
वि॒ष्ट्वी ग्रावा॑णः सु॒कृतः॑ सुकृ॒त्यया॒ होतु॑श्चि॒त्पूर्वे॑ ह॒विर॒द्यमा॑शत"

इति स्वरूपम् । अर्बुदस्यार्षं जगती । ग्रावस्तुतौ विनियुक्ता । **एते** ग्रावाणः ( प्रस्तराः ) अभिषवकर्म कुर्वाणाः **शतवत्सह- स्रवत्** यथा शतं मनुष्याः सह वदन्ति सहस्रं चापरिमिता मनुष्यास्तद्वत् **वदन्ति** शब्दं कुर्वन्ति तदेतच्छब्दबाहुल्याभि- प्रायम् । किंच **हरितेभिः** हरितैः सोमसंसर्गाद्धरितवर्णैः । "बहुलं छन्दसि" ( पा० ७-१-१० ) इति ऐसभावः । **आसभिः** आस्यैः "पद्दन्-" ( पा० ६-१-६३ ) इत्यादि- नास्यशब्दस्यासन्नादेशः । मुखैः । **अभि** अभिलक्ष्य सोमं **क्र- न्दन्ति** आह्वयन्ति सोमपातॄन्देवान् । आगच्छतास्माभिरभिषुतं सोममिमं पातुमिति । "क्रदि आह्वाने रोदने च" ( भ्वा० प० ) लट् । किंच-**सुकृतः** शोभनस्याभिषवाख्यस्य कर्मणः कर्तार एते **ग्रावाणः विष्ट्वी** व्याप्तिस्तया तृतीयायाः पूर्वसवर्णः "सुपां सुलुक्-" ( पा० ७-१-३९ ) इति । **सुकृत्यया** शोभनया क्रियया **होतुः** देवानामाह्वातुरग्नेर्मनुष्यहोतुर्वा **पूर्वे- चित्** पूर्वमेव **अद्यम्** अदनीयम् । "गदमदचरयमश्चानुपसर्गे" ( पा० ३-१-१०० ) इत्यत्र चादद्देरप्यर्हे कृत्यप्रत्ययो यत् । यद्वा "ऋहलोर्ण्यत्" (पा० ३-१-१२४) इति ण्यत्युपधावृद्धिः । "संज्ञापूर्वको विधिरनित्य" ( पा० ९४ ) इति न भवति । **हविः** एतत्सोमाख्यम् **आशत** अश्नन्ति । "अश् भोजने" ( क्र्या० प० ) विकरणव्यत्ययेन शपो लुक् ( पा० २-४-७३ ) लडर्थे लुङ् ( पा० ३-४-६ ) अभिषवे सोमसंयोगमात्रमशन- मुपचर्यते ग्राव्णाम् ॥ २ ॥

तस्मादपौरुषविध्यमिति । नहि ग्राव्णां यथाभूतान्यास्यानि सन्ति यत्संयोगेन च स्तूयन्ते । तद्वदिन्द्रादीनामप्ययथाभूतैरेव बाहुमुष्ट्यादिभिः स्तुतिः स्यात् । तस्मादहेतुरयं यत् "पौरुषवि- धिकैरङ्गैः संस्तूयन्त इति पुरुषविधा" इति ॥

## यथो एतत् "पौरुषविधिकैर्द्रव्यसंयोगैरि"ति- एतदपि तादृशमेव—

"सु॒खं रथं॑ युयुजे॒ सिन्धु॑र॒श्विन॑म्"

( ऋ० सं० ८-३-७-४ )

## इति नदीस्तुतिः ॥

**तादृशमेव** तथाभूतमौपचारिकमेव । रूपकमात्रमित्यर्थः । यथैव हि आस्यादिकल्पनादृष्ट्यव्यभिचारित्वाद्भावप्रभृतिषु न संभवति, रूपकमात्रं स्तुत्यर्थं संकल्पतो वाह्यादिकार्यसिद्धिः । एवं हरिरथजायास्तुतयो रूपकमात्रमिन्द्रादिषु । अपि च–**सुखं ०० स्तुतिः** । नद्यस्यां स्तुतौ यथाभूतार्थलोपपत्तिरस्ति । असंभवात् । न क्षुदकात्मिकाया नद्या वहन्त्या रथेऽवस्थानं संभवति–यथा—

"सुखं००श्विनं तेन वाजं सनिषदस्मिन्नाजौ ।
महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः"

इति। सिन्धुक्षिन्नाम प्रियमेधसः पुत्रस्तस्येयमार्षं जगती । नदीस्तुतौ विनियुक्ता । **सिन्धुः** नदी **सुखं** सुखकरं लोकस्य, शोभनद्वारं वा । अश्विनं अशनेन व्यापनेन तद्वन्तम् ( उदकरथम् ) अश्ववन्तं वा **रथं** रंहणमुदकम्, स्यन्दनं वा ( प्रसिद्धम् ) **युयुजे** युक्तवती । **तेन** रथेन **वाजम्** अन्नम् **सनिषत्** संभजितवती, उत्पादितवती । "वन षण संभक्तौ" ( भ्वा० प० ) लोटो रूपम् । व्यत्ययेनार्थभेदः । सायणस्तु–प्रयच्छत्वित्यर्थमाह । युयुजे इत्यस्य च युनक्तीति । **अस्मिन्** आजौ संग्रामे यज्ञे वा हि यस्माच्चायमुदकरथोऽन्नमभिनिष्पादयति तस्माद् **अस्य** सिन्धुरथस्य **महान्** सुविपुलो **महिमा** माहात्म्यं ( महत्त्वं ) **पनस्यते** स्तूयते । नैरुक्तधातुः (निघं० ३–१४–१५) स्तोतृभिः । कीदृशस्यास्य ? **अदब्धस्य** अनुपहिंसितस्यान्यैः **स्वयशसः** स्वायत्तकीर्तेः । **विरप्शिनः** विरपणशीलस्य शब्दकारिणो महत इत्यर्थः । महन्नामैतत् ( निघं० ३–३–२२ ) ॥ ४ ॥

तदेवमादिषु मुख्यार्थकल्पनाया असंभवात्सर्वत्र रूपकप्रवादाः स्तुतय इत्युपेक्ष्यम् ।

## यथो एतत् "पौरुषविधिकैः कर्मभिरि"ति ॥

## एतदपि तादृशमेव—

"होतुश्चित्पूर्वे हविरद्यमाशत ॥"

( ऋ० सं० ८–४–२९–२ )

## इति ग्रावस्तुतिरेव ॥

अत्र हि अशनक्रियया ग्रावाणः स्तूयन्ते न च पुनर्ग्राव्णां यथाभूतमशनमस्तीत्युक्तमधस्तात् । तस्मादिदमपि रूपकमेव । व्याख्यातमेतद्देते वदन्तीत्यत्रानुपदमेव ( नि० ) ॥

## अपि वा उभयविधाः स्युः ॥

उभयहेतुप्रामाण्यात् ।

## अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः ॥

१. अत्र रथमिवाश्विनमिति केचिद्वर्णयन्ति ॥

२. सर्वतो गमने । यतो यतो हि गच्छति ततस्ततो व्रीह्याद्यन्नमभिनिष्पादयतीत्यर्थः ॥

**सतां** पृथिव्यादीनाम् । **एते** अपुरुषविधाः क्षितिजलादयः । परे तु अधिष्ठातारः पुरुषविग्रहाः । एवमुभयोः प्रत्यक्षागमयोरप्यनुग्रहः कृतो भवति ।

## यथा यज्ञो यजमानस्य ॥

**यजमानस्य यज्ञः** कर्मात्मा । इदमेतेनाङ्गं संस्क्रियते । इदमेतेनाङ्गमुपचीयते इति संस्कृतमस्मिंल्लोके परैति इति च विज्ञायते ब्राह्मणेषु ।

## एष चाख्यानसमयः ॥ ३ ॥ (७)

## इति श्रीमद्यास्कमु० प्र० नि० शास्त्रे दै० का० सप्तमाध्यायस्य द्वितीयः पादः ॥ ७ ॥ २ ॥

भारते **चाख्यानसमय एष** एव सिद्धान्त इत्यर्थः । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः ।–तथाच–पृथिवी स्त्री गोरूपेण भारावतरणाय ब्रह्माणं ययाचे । अग्निश्च ब्राह्मणरूपेण वासुदेवार्जुनावुभौ खाण्डवं ययाचे । पुरुषरूपेण चाग्निरूपेण च खाण्डवं ददाह इत्येवमादि चाख्यानम् ।

तदेतच्चतुर्विधमभिधत्ते मन्त्रार्थदर्शनादेव ।

( १ ) पौरुषविध्यम् ( २ ) अपौरुषविध्यम् ( ३ ) कर्मात्मत्वोभयविध्यम् ( ४ ) नित्यमौभयविध्यमेवेति । सर्वं चैतदुपपद्यते महाभाग्ये सत्यैश्वर्यात् । कथमिव देवता न स्यात्–अमूर्ता, मूर्ता । एकधा–द्विधा बहुधा चेति । यथा तु वर्तमानाम-पश्यन्मन्त्रदृशस्तथा तथा अस्तुवन् सर्वथैवादोषः । फलदर्शनात् । नानावस्थादर्शनवदाख्यातॄणां परिदेवनानिन्दादिष्वपि चेन्द्रादीनां कामकारतस्तत्तद्रूपमवस्थितानां सा सा स्तुतिरेव न निन्दा । उक्तंच—

"हीना न निन्दा स्तुतिरेव सा स्याद्
देवान्मर्त्यः सम्यगभिष्टुयात्कः ।
शक्तिक्षयेऽप्यध्यवस्यन्ति शिष्टाः
स्तोतुं न पश्यन्ति गतिं यतोऽन्याम् ॥"

इति ॥ ३ ॥ ( ७ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० का० सप्तमाध्यायस्य द्वितीयः पादः ॥ ७ ॥ २ ॥

---

## सप्तमाध्यायस्य तृतीयः पादः ।

अथ देवतात्रयाधिकारे प्रस्तुते आकारचिन्तयाऽन्तरिते तद्विशेषविवक्षया तदनुस्मृतये चाह—

## तिस्र एव देवता इत्युक्तं पुरस्तात् ॥

यस्तत्र विशेषो विवक्षितः स उच्यते—

## तासां भक्तिसाहचर्यं व्याख्यास्यामः ॥

**तासामेव** तिसृणां **भक्तिसाहचर्यम्** । भक्तिश्च साहचर्यं च, भक्तिकृतं वा साहचर्यमिति । लोकादीनामेवाऽग्न्यादिभिर्भजनं भक्तिः । सहचरभावः साहचर्यम् । असंविज्ञातपदे मन्त्रे

भक्त्या साहचर्येण वा यथा देवता गम्येतेत्येवमर्थं भक्तिसाहचर्यमुच्यते ।

अथ कानि किंभक्तीनीत्युच्यते—

**अथैतान्यग्निभक्तीनि ॥**

अथेति विशेषाधिकारे । अग्निं भजन्ते अग्निना वा भज्यन्त इत्यग्निभक्तीनि नामानि । कतमानि?

**अयं लोकः, प्रातःसवनं, वसन्तो, गायत्री, त्रिवृत्स्तोमो, रथन्तरं साम ॥**

इमान्यग्निभक्तीन्यवगन्तव्यानि । अथ—

**ये च देवगणाः समाम्नाताः प्रथमे स्थाने ॥**

भुवि । तद्यथा–आप्री–अक्षाः–ग्रावाणः–अभीशव इत्येवमादयः । तान्यपि—

**अग्नायी–पृथिवी–इला–इति स्त्रियः[2] ॥**

अग्नेः ।

**अथास्य कर्म–वहनं च हविषाम्, आवाहनं च देवतानाम्, यच्च किंचिद्दार्ष्टिविषयिकमग्निकर्मैव तत् ॥**

अस्य–अग्नेः कर्म सहभावि, अनन्यदेवतागामि । यत्संयोगादसत्यप्यग्निशब्दे आग्नेय एव मन्त्रो भवति । दार्ष्टिविषयिकम् । दृष्ट्यनुग्रहो यस्य विषयस्तत् । प्रकाशादिकर्मेत्यर्थः । अग्निकर्मैव तत् इति पुनर्वचनमादरार्थम् ।

**अथास्य संस्तविका देवाः ॥**

यैः सह अयमग्निः स्तूयते[3] । तद्यथा—

**इन्द्रः सोमो वरुणः पर्जन्य ऋतवः ॥**

इत्येवमादयः । मन्त्रस्वभावोपदर्शनाय संस्तवोदाहरणम् । अग्नेः पूर्वनिपाताद्देवताद्वन्द्वमुख्यता । तत्रेन्द्रेण सह संस्तवोदाहरणम्—

"अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोपयातम् ।
अमर्धन्ता सोमपेयाय देवा" ॥ ४ ॥
( ऋ० सं० ३–१–२५ ) इति ।

विश्वामित्रस्येयमार्षं विराडनुष्टुप् । आग्रयणे विनियोगः । हे भगवन्! अग्ने! त्वम् इन्द्रश्च उभौ देवा देवौ । आङ्

१. नामानीति विशेष्यवशात् ।

२. अग्नाय्यपाच्तरत्वेन द्वन्द्वनिर्देश इलापृथिव्यग्नायीति वक्तव्ये क्रमभेदस्तत्समानाख्यानात्सन्निकृष्टतरेत्येवमादिबहु दुर्गव्याख्यानं विस्तरभियेहोपेक्षितं, विशेषविवित्सायां तत्रैव द्रष्टव्यम् ॥

३. तथाच–समिति सहार्थेऽव्ययं सहस्तवः संस्तवस्ततो मत्वर्थीयम् स विद्यते येषामिति । ततः स्वार्थे कन् । एतेन संस्तवोऽपि व्याख्यातः । संस्तवः परिचयः ॥

आकारः (पा० ७–१–३९) अस्य दाशुषः हवींषि दत्तवतः । "दाश्वान्साह्वान्मीढ्वांश्च" ( पा० ६–१–१२ ) इति क्वसन्तो निपातः । अथ च दुरोणे यज्ञगृहे ( निघं० ३–४–७ ) यज्ञं सोमं, करणे यजतेर्नङ् ( पा० ३–३–८० ) सुतावतः अभिषुतवतः यजमानस्यार्थे अमर्धन्ता अमर्धन्तौ मृधं संग्राममकुर्वन्तौ ( अन्तरा केनचित् सह झटिति ) सोमपेयाय सोमपानार्थम् इह अस्मिन्यज्ञे उपयातम् आगच्छतं युवाम् । इत्येतदाशास्महे वयम् । आशंसायां लोट् ॥ ४ ॥

अथ सोमेन सह संस्तवोदाहरणम् ।

"अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् ।
प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः" ॥ १ ॥
( ऋ० सं० १–६–२८ ) इति ।

गोतमस्यार्षमनुष्टुप् । पौर्णमासे अग्नीषोमस्यानुवाक्या । हे अग्नीषोमौ ! युवाम् वृषणा वृषणौ वर्षितावभिमतकामानामिति मे मम हवम् आह्वानं सु सुष्ठु शृणुतम् आकर्णयतम् । श्रुत्वा चागच्छतम् । आगत्य च प्रतिहर्यतम् प्रतिप्रेप्सतं, मया पूर्वं प्रेप्सितौ प्रतिकामयेथाम् । "हर्य गतिकान्त्योः" ( भ्वा० प० ) लोट् द्विवचनम् । इमानि सूक्तानि श्रोतुम् । श्रुत्वा च दाशुषे हविर्दत्तवते । "दाश्वान्" (पा० ६–१–१२) इति क्वसन्तो निपातः । अस्मै यजमानाय ( एतदर्थम् ) मयः सुखकारकौ ( निघं ३–६–७ ) भवतम् युवाम् । इत्येतदाशास्महे वयम् । आशंसायां लोट् ॥ १ ॥

अथ वरुणेन सह संस्तवोदाहरणम्

"त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽवयासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्"
( ऋ० सं० ३–४–१२–४ ) इति ।

वामदेवस्यार्षं त्रिष्टुप् । अवभृथे विनियोगः । हे भगवन् अग्ने ! त्वं नः अस्मान् । यथावत् विद्वान् जानन् ( भक्ता मम एतं इति ) वरुणस्य देवस्य यः अस्मान्प्रति हेळः क्रोधः । "अस्ति तम् ।" इति शेषः । यद्वा अमः सुः ( पा० ७–१–३९ ) अवयासिसीष्ठाः अपगमय । किंच–यस्त्वं यजिष्ठः अतिशयेन यष्टा ( देवानां होतृत्वेन वर्तमानः ) वह्नितमः वोढृतमश्च हविषाम् । सः त्वं शोशुचानः देदीप्यमानस्तेषु तेषु कर्मसु । विश्वा विश्वानि सर्वाणि "शेश्छन्दसि बहुलम्" ( पा० ६–१–७० ) इति शेर्लोपः । द्वेषांसि द्वेष्याणि अस्मत् असत्तः प्रमुमुग्धि प्रकर्षेण मुञ्च । दूरमपनयेत्यर्थः ॥ ४ ॥

अथ पर्जन्येन सह संस्तवोदाहरणमाह—

"अग्नीपर्जन्याववतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः ।
इळामन्यो जनयद् गर्भमन्यः प्रजावतीरिष आधत्तमस्मे ॥"
( ऋ० सं० ४–८–१६–६ ) इति ।

१. वह्निर्वोढेत्यनर्थान्तरं समानार्थप्रत्ययश्रवणात् । "वहिश्रिश्रु–" ( उ० ४–५१ ) इति हि कर्तरि निः ॥

भारद्वाजस्यार्षं त्रिष्टुप् । हे **अग्नीपर्जन्यौ !** युवाम् **मे** मदीयम् **धियं** कर्म (निघं० २-१-२१) यज्ञलक्षणम् **अवतम्** आगच्छतम्, रक्षतं वा । हे **सुहवा !** सुहवौ । औङ आकारः ( पा० ७-१-३९ ) सुखेन ह्वातुं शक्यौ । "ह्वेञ् स्पर्धायां शब्दे च" ( भ्वा० उ० ) खलु "बहुलं छन्दसि" (पा० ६-१-३४) इत्यनैमित्तिकं संप्रसारणम् । **अस्मिन् हवे** यज्ञे । हूयतेऽस्मिन्नित्यप् ( पा० ३-३-५७ ) **नः** अस्माकम् **सुष्टुतिं** शोभनां स्तुतिं च **अवतं** शृणुतम् । अनुवृत्तोऽवतिरर्थान्तरे[1] । श्रुत्वा च युवयोर्मध्ये **अन्यः** अन्यतरः एको वा पर्जन्यः **इलाम्** अन्नम् **जनयत्** जनयतु । वृष्ट्या ह्योषधिवनस्पतयो जायन्ते तेभ्यश्चान्नं जायते । **अन्यः** अपरः अग्निः **गर्भं** जनयतु । पुरुषेण भुक्तमन्नं जाठरेणाग्निना पक्वं रसरेतोरूपेण परिणमति तदेव योषित्सु गर्भो भवति । तौ युवामेवं प्रतिवत्सरं **प्रजावतीः** प्रजासंयुक्ताः **इषः** अन्नानि ( निघं० २-७-१४ ) **अस्मे** अस्मासु, अस्मभ्यं वा "सुपां सुलुक्-"( पा० ७-१-३९ ) इति शेभावः । **आधत्तम्** आभिमुख्येन स्थित्वा अवस्थापयतं दत्तं वा ॥ ६ ॥

अथर्तुभिः सह संस्तवोदाहरणम्—

"अग्ने॑ दे॒वाँ इ॒हा व॑ह सा॒दया॒ योनि॑षु त्रि॒षु ।
परि॑ भूष॒ पिब॑ ऋ॒तुना॑" ॥ ४ ॥
( ऋ० सं० १-१-२८ ) इति ।

मेधातिथेरार्षं गायत्री । ऋतुयाजेषु विनियोगः । हे भगवन् ! **अग्ने ! देवान्** इन्द्रादीन् **इह** अस्माकमस्मिन्कर्मणि यज्ञे **आवह** आह्वय । आहूय च देवान् **योनिषु** स्थानेषु **त्रिषु** सवनेषु **सादय** उपवेशय, यज वा यथाकालम् । अमुना प्रकारेण **परिभूष** सर्वतोदेवयागेनालंकुरुष्वैतं यज्ञम् । आत्मना च **पिब** एतं सोमम् **ऋतुना**[3] सह ॥ ४ ॥

## आग्नावैष्णवं च हविः ॥

हविर्ग्रहणाद्धविष एव संप्रदानार्थत्वम् । या ऋचस्ताः संस्तवेनाग्नाविष्णोः सन्ति । **आग्नावैष्णवम्** अग्निश्च विष्णुश्चेत्यग्नाविष्णू । "देवताद्वन्द्वे च" ( पा० ६-३-२६ ) इत्यानङ् पूर्वपदस्य । अग्नाविष्णू देवते अस्येत्यण् देवतार्थे ( पा० ४-२-२४ ) तत उभयपदवृद्धौ ( पा० ७-३-२१ ) ओर्गुणः । ( पा० ६-४-१४६ ) "आदिवृद्धिरन्त्योपधावृद्धी बाधते" इति नियमः ।

यथा—

"अग्ना॑विष्णू स॒जोष॑से॒मा व॑र्धन्तु वां॒ गिरः॑ ।
द्यु॒म्नैर्वाजे॑भि॒रा ग॑तम् ॥" ( इत्येवमाद्याः )

वामदेवस्येयमार्षं गायत्री आग्नावैष्णवे हविषि विनियोगः । हे **अग्नाविष्णू ! सजोषसा** सजोषसौ नित्यं सह जोषणौ (समानप्रीतौ) **वां** युवाम् कर्मभूतौ **इमाः** एताः **गिरः** अस्मत्स्तुतयः **वर्धन्तु** वर्धयन्तु । ततश्च ( वृद्धौ सत्याम् ) अस्मत्संप्रदेयैः **द्युम्नैः** द्योतनवद्भिः **वाजेभिः** अन्नैः ( निघं० २-७-२ ) अभ्युद्यतैः । **आगतम्** अस्मान्प्रत्यागच्छतम् । "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुकि मलोपः ( पा० ६-४-३७ ) एवमन्येपि ।

## नत्वृक्संस्तविकी दाशतयीषु विद्यते ॥

**दाशतयीषु** दशमण्डलावयवप्रविभागेन तायते विस्तीर्यते इति दशतय ऋग्वेदः । तस्य शाखा दाशतय्यस्तासु-एकापि हविष्यविनियुक्ता शस्त्रमध्यपातिनी **ऋक्** अग्नाविष्ण्वोः संस्तविकी **नतु विद्यते** नैवास्ति । अत्र दाशतयीष्वित्युक्तेः स्यादप्यन्यत्र संस्तविकी न तु दाशतयीषु । असंस्तवेन वा दाशतयीष्वपि इत्युत्सर्गं दर्शयति । एवमेतन्मया निपुणमन्विष्यत इति भावः ॥

अथाप्यपर उत्सर्गः—

## अथाप्याग्नापौष्णं हविर्न तु संस्तवः ।
## तत्रैतां विभक्तस्तुतिमृचमुदाहरन्ति ॥१॥ (८)

**हविः** हविरेव **न तु संस्तवः** सहभावः तस्मिंस्तु हविषि । किं तु पृथक् पृथक् एव अग्निः स्तूयते पूषा च । **तत्र** तस्मिन्नग्निपूष्णोः संस्तवे **विभक्तस्तुतिं** विभक्ता पृथक् पृथक् स्तुतिर्यस्यां **तामृचं** नैरुक्ता **उदाहरन्ति** ॥ १ ॥ ( ८ )

**पूषा त्वे॒तश्च्या॑वयतु॒ प्र वि॒द्वानन॑ष्टपशु॒र्भुव॑नस्य गो॒पाः । स त्वै॒तेभ्यः॒ परि॑ ददत्पि॒तृभ्यो॒ऽग्निर्दे॒वेभ्यः॑ सुविद॒त्रिये॑भ्यः ॥" ॥ २ ॥**
( ऋ० सं० ७-६-२३ )

देवश्रवसो यामायनस्यार्षं त्रिष्टुप् । पुनः शवस्य कर्णे प्रमीतानुमन्त्रणे विनियोगः । स प्रमीतः ( मृतः ) उच्यते । **पूषा** पोषयिता एतन्नामको देवः ( भगवानादित्यः ) पथामधिपतिः **त्वा** त्वाम् **इतः** अस्मान्मनुष्यलोकात् । विशिष्टेन पथा **प्रच्यावयतु** प्रकर्षेणोत्तमलोकं गमयतु । कीदृशः ? **विद्वान्** अव्यवहितज्ञानः ( प्रत्यक्षदर्शी अस्मद्भक्ततां विजानानः ) अत

---

१. तथाच पाणिनीयाः स्मरन्ति "अव=रक्षण-गति-कान्ति-प्रीति-तृप्त्य-ऽवगम-प्रवेश-श्रवण-स्वाम्य-र्थयाचन-क्रिये-च्छा-दीप्त्य-ऽवाप्त्या-ऽऽलिङ्गन-हिंसा-दान-भाग-वृद्धिषु" इति ॥

२. "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते" इत्येकान्ययोः पर्यायता ॥

३. ऋत्वभिमानिदेवतया ॥

१. "तायृ संतानपालनयोः" ( भ्वा० आ० ) इत्यस्योपधाह्रस्वत्वमास्थाय दुर्गेणेत्थं व्याख्यातम् । वस्तुतस्तु "संख्यया अवयवे तयप्" ( पा० ५-२-४२ ) दशसंख्या परिमाणमस्येति विग्रहे तयबन्तात् "टिड्ढा-" ( पा० ४-१-१५ ) इति ङीपि दशतयी ऋक्संहिता भवति । बहुत्वमन्त्रभेदाभिप्रायकमपि संभवति । दाशतयीष्विति पाठ एव सुगमः ॥ दशतयीष्विति मुद्रितपुस्तकेष्वपपाठः ॥

२. "एकविंशतिधा बाह्वृच्यम्" इति महाभाष्यम् । एकविंशतिः शाखा ऋग्वेदस्येति तदर्थः ॥

**एवंच अनष्टपशुः** अविनश्वरपशुयुक्तः । तस्मिन्हि (सति) सर्वे पशवस्तिष्ठन्ति न नश्यन्तीत्यर्थः । **भुवनस्य** भूतजातस्य **गोपाः** रक्षिता उपर्यवस्थितः । **स** एवमुक्तलक्षणः पूषा देवः **त्वा** त्वां प्रगमय्य **एतेभ्यः** चन्द्रमण्डलोपान्तवासिभ्यः **पितृभ्यः परिददत्** परिददातु । लेट् । तदुक्तम्—"दक्षिणायनात्पितृलोकम्" इति । तथा **अग्निः** अपि तेभ्य उत्कृष्य **सुविदत्रियेभ्यः** सुविदत्रं सुज्ञानं धनं वा तदर्हाः सुविदत्रियाः । छान्दसो घप्रत्ययः (पा० ४-४-११७) घस्येयादेशः (पा० ७-१-२) सुज्ञानेभ्यः सुधनेभ्यो वा **देवेभ्यः** ये विद्युतो मध्ये निवसन्ति तेभ्यस्त्वां परिददातु । तेषां लोके स्थापयत्वित्यर्थः । तदुक्तम्—"चन्द्रमसो वैद्युतम्" इति । स त्वमेवमुभावपि देवलोकपितृलोकौ अभ्यश्नुहीत्याशीः प्रमीतस्य । उक्तं च—"ये देवयानाः पितृयानाश्च लोकाः सर्वांस्ताननृणाः संचयेम" इति ॥ ३ ॥

अथास्य भाष्यम्—

**पूषा त्वेतः प्रच्यावयतु विद्वाननष्टपशुर्भुवनस्य गोपा इत्येष हि सर्वेषां भूतानां गोपायिताऽऽदित्यः ॥** इति ।

अथ—

**सत्वैतेभ्यः परिददत्पितृभ्य इति सांशयिकस्तृतीयः पादः ॥**

संशयोऽस्मिन्नस्तीति **सांशयिकः** ( संशयविषयीभूतोऽर्थः ) "संशयमापन्नः" (पा० ५-१-७३) इति ठक् । ठस्येकः (पा० ७-३-५०) आदिवृद्धिः (पा० ७-२-११७) ॥

**पादोऽस्या ऋचः** । कथम् ?—यथा—

**पूषा पुरस्तात् ॥**

"पूषा त्वेतश्च्यावयतु" इति वाक्ये ।

**तस्यान्वादेश इत्येकम् ॥**

सामर्थ्याद्दर्शनम् । तथा व्याख्यातमेव । त्रयः पौष्णाः पादा एक एवाग्नेयः । इति । एवमियं विभक्तस्तुतिः । अथवा द्वावुत्तरावाग्नेयौ । तत्रार्थयोजना—

पूष्णा प्रच्यावितं सन्तं सोऽग्निर्वक्ष्यमाणस्त्वामेतेभ्यः पितृभ्यो देवेभ्यः सुविदत्रियेभ्यः परिददातु । मापितृभ्यः प्रेतेभ्य इत्यभिप्रायः । तं प्रेतं दिष्टमितोऽग्नय एव हरन्तीत्यपेक्ष्य सर्वेनाम्नोत्तरेणाप्यग्निशब्देन संबन्धमविरुध्यमानं व्यपेक्ष्याकल्पयत्—

**अग्निरुपरिष्टात्तस्य प्रकीर्तना—इत्यपरम् ॥**

**"अ॒ग्निर्दे॒वेभ्यः॑ सुवि॒द॒त्रिये॑भ्यः ॥"**

अथ निगमप्रसक्तं व्याचष्टे—

**सुविदत्रं धनं भवति । विन्दतेर्वैकोपसर्गात् । दधातेर्वा स्याद् द्व्युपसर्गात् ॥ २ ॥ (९)**

१. सर्वत्र ज्ञानाव्यवधानादेव ॥

**एकोपसर्गात्**—सु-इत्येतेन एकेनोपसर्गेणोपसृष्टात् । **विन्दतेर्वा** । "विद्लृ लाभे" ( तु० उ० ) इत्यस्मात् "अमियजिवधिपतिकलिनक्षिभ्योऽत्रन्" ( उ० ३-१०५ ) इति बाहुलकादत्रन्प्रत्ययो गुणाभावश्च । सुखेन विन्दत्येतदिति । वाशब्दोऽनास्थायाम् । अथ **वा दधातेः स्यात् । द्व्युपसर्गात्** । सुविभ्यां द्वाभ्यामुपसर्गाभ्यां युक्तात् । अत्राप्यत्रन्नेव बाहुलकः । तदेषामस्ति ते सुविदत्रियाः ॥ २ ॥ ( ९ )

## अथ-एतानीन्द्रभक्तीनि ॥

पूर्ववत्सर्वम्—

**अन्तरिक्षलोको, माध्यन्दिनं सवनं, ग्रीष्म,-स्त्रिष्टुप्, पञ्चदशस्तोमो, बृहत्साम । ये च देवगणाः समाम्नाता मध्यमे स्थाने ॥**

अन्तरिक्षे मरुदादयः ।

**याश्च स्त्रियः ॥**

अदित्याद्याः ।

**अथास्य कर्म—रसानुप्रदानं, वृत्रवधः या च का च बलकृतिरिन्द्रकर्मैव तत् ॥**

**रसानुप्रदानम्** अवश्यायनं वर्षादि । **वृत्रवधः** मेघवधोऽसुरवधो वा । **या च का च** अनुक्तलक्षणाऽन्यापि **बलकृतिः** बलप्रधानं कर्म । **इन्द्रकर्मैव तत्** इति आदरार्थं पुनर्वचनम् । अपि कीटपिपीलिकादिषु—यद्बलेन क्रियते सर्वं तदिन्द्रकर्मैव भवति ।

**अथास्य संस्तविका देवाः ॥**

यैः सहायं स्तूयते । ते यथा—

**अग्निः—सोमो—वरुणः—पूषा—बृहस्पति—र्ब्रह्मणस्पतिः—पर्वतः—कुत्सो—विष्णु—र्वायुः ॥**

इत्येवमादयः । तत्राग्निना संस्तवो यथा—

**"इन्द्रा॑ग्नी रोच॒ना दि॒वः परि॒ वाजे॑षु भूषथः ।**

**तद्वां॑ चेति॒ प्र वी॒र्य॑म्"** । ( ऋ० सं० ३-१-१२-४ ) इति

विश्वामित्रस्यार्षं गायत्री । ऐन्द्राग्ने हविषि विनियोगः । **हे इन्द्राग्नी ! युवाम्** । **दिवः** स्वर्गस्य । **रोचना** रोचनौ । युच् ( पा० ३-२-१४९ ) रोचकौ ( दीपनौ प्रकाशकौ ) हविषा चोदकेन च **वाजेषु** संग्रामेषु ( निघं० २-१७-४२ ) **परिभूषथः** सर्वतोऽलंकृतौ भवथः । "भूष अलंकारे" ( भ्वा० प० ) शत्रून्पराजित्य सर्वतो विजयमानौ वर्तेथे । यद्वा शत्रून्परिभवथः । अथवा वाजेषु अन्नेषु ( नि० २-७-२ ) परिभूषथः । येन स्वामित्वेन भवेमहि तथा कुरुतम् । **वां** युवयोः

१. "सिब्बहुलं–लेटि" ( पा० ३-१-३४ ) इति बाहुलकात्सिप् गुणाभावश्च ॥

वीर्यं सामर्थ्यमेव **तत्** तादृशं संग्रामविजयादि **प्र-चेति** प्रकर्षेण ज्ञापयति । यद्वा-प्रकृष्टमहं जाने, येन परिभावयथो यागेषु स्तोतॄन्पुरः । अत एवमाशास्महे ॥ ४ ॥

अथ सोमेन संस्तवः "इन्द्रासोमा समधशंसम्"
( ऋ० सं० ५-७-५-२ )

इत्यत्र व्याख्यातः पुरस्तात् ( नि० ६-११-१ ) ॥

अथ वरुणेन संस्तवो यथा—

"इन्द्रावरुणा युवमध्वरायनः" (        ) इति व्याख्यातः शेषः (        ) ।

अथ पूष्णा संस्तवो यथा—

"इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये" । ( ऋ० सं० ४-८-२३-१ ) इति ॥

भारद्वाजस्येयमार्षं गायत्री । इन्द्रापौष्णो हविषि विनियोगः । हे **इन्द्रापूषणा** इन्द्रापूषणौ देवौ ! **नु** अद्य **वयं सख्याय** समानख्यानाय ( सखित्वाय ) **स्वस्तये** स्वस्त्ययनाय ( कल्याणाय ) च । सायणस्तु शोभनाय सखित्वायेत्याह । **वाजसातये** वाजस्यान्नस्य बलस्य वा सातये संभजनाय च । "षण् संभक्तौ" ( भ्वा० प० ) भावे क्तिन् "जनसनखनां सन्झलोः" ( पा० ६-४-४२ ) इत्यात्वम् । **हुवेम** आह्वयाम स्तवाम च । अत्र दुर्गः-युवां वयं नित्यं यज्ञेषु इदमाशास्महे इत्याह ॥ १ ॥

अथ बृहस्पतिना संस्तवो यथा—

"इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते" ( ऋ० सं० ३-७-२५-१ ) इति ॥

वामदेवस्यार्षं गायत्री । ऐन्द्राबार्हस्पत्ये हविषि विनियोगः । हे **इन्द्राबृहस्पती ! इदं हविः** हवनीयमन्नं यद्वयमद्य-त्तत् **प्रियम्** इष्टं सत् **वां** युवयोः **आस्ये** मुखे । "अस्तु" इतिशेषः । यच्चेदम् **उक्थं शस्यते मदश्च** प्रतिगरेण सह, तच्च वां **प्रियमस्तु**-इत्येतदाशास्महे ॥ १ ॥

अथ ब्रह्मणस्पतिना संस्तवो यथा—

विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम् । अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम्॥२॥
( ऋ० सं० २-७-३ ) इति ॥

गृत्समदस्येयमार्षं त्रिष्टुप् । हे **मघवाना** मघवानौ ! मघमिति धननाम तद्वन्तौ ( "छन्दसीवनिपौ च" ( पा० ५-२-१२२ ) इति वनिप्प्रत्ययो मत्वर्थे । **इन्द्राब्रह्मणस्पती ! युवोरित्** युवयोरेव **विश्वं** सर्वं स्तोत्रम् **सत्यम्** यथार्थम् ।

१. "चिती संज्ञाने" ( भ्वा० प० ) अयमत्रान्तर्भावितण्यर्थः । "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुक् । तलोपश्छान्दसः ॥

२. दुर्गेण त्वयं नुरहितः पाठः । तत्किं द्वन्द्वमध्ये निवेशभयात् ? ॥

३. सायणस्तु-हे इन्द्राबृहस्पती ! वाम् युवयोः आस्ये इदं प्रियं हविः सोमरूपं प्रक्षिपामीति शेषः । उक्थं शस्त्रं च मदो मदजनकं शस्यत इत्याह ॥

स्तुत्या यद्यद्गुणजातं प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव न त्वारोपितमित्यर्थः । चेत्यप्यर्थे । यतो युवां सर्वस्येशानौ स्थोऽतः **आपश्च** आपोऽपि । उपलक्षणमेतत् । एतदुपलक्षितानि सर्वाण्येव भूतानि **वां** युवयोः **व्रतं** कर्म ( नि०२-१-७ ) **न प्रमिनन्ति** न हिंसन्ति । "मीञ् हिंसायाम्" ( क्र्या० उ० ) "मीनातेर्निगमे" ( पा० ७-३-८१ ) इति ह्रस्वत्वम् । यथासंकल्पं प्रवर्तेते । यौ युवामेवमतिमहानुभावौ तौ **नः** अस्माकम् **अच्छ** आभिमुख्येन इदं **हविः** भोक्तुम् **जिगातम्** आगच्छतम् । जिगातिर्गतिकर्मा ( निघं० ३-१४-११३ ) । अत्र दृष्टान्तः—**युजेव वाजिना अन्नम्** युजा युजौ रथे नियुक्तौ ( सहचारिणौ ) वाजिना वाजिनौ वेजनवन्ताश्वौ ( रथाद्विमुक्तौ बुभुक्षू ) स्वम् अन्नमदनीयं घासं प्रति यथा स्वयमेव शीघ्रं गच्छतस्तद्वच्छीघ्रमागच्छतम् । अत्र "सुपां सुलुक्-" ( पा० ७-१-३९ ) इति विभक्तेराकारः । इत्येतदाशास्महे ॥ २ ॥

अथ पर्वतेन संस्तवो यथा—

"इन्द्रापर्वता बृहता रथेन वामीरिष आवहतं सुवीराः । वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता" ॥ १ ॥
( ऋ० सं० ३-३-१९ ) इति ।

विश्वामित्रस्येयमार्षं त्रिष्टुप् । हे **इन्द्रापर्वता !** इन्द्रापर्वतौ ! **देवा !** देवौ द्योतमानौ । औङ आकारः ( पा० ७-१-३९ ) **बृहता** महता **रथेन** ( महतोदकरंहणेनोदकदानेन ) **वामीः** वननीयाः संभजनीयाः "वन संभक्तौ" ( भ्वा० प० ) अनीयर् । निपातोऽयम् ( पा० ६-३-१९ ) **सुवीराः** शोभनपुत्रोपेताः । **इषः** अन्नानि ( निघं० २-७-१४ ) **आवहतम्** असदर्थं धारयतम् । प्रयच्छतमित्यर्थः । किंच हे **देवा** देवौ ! युवाम् **अध्वरेषु** असत्संबन्धिषु यज्ञेषु **हव्यानि** हवनयोग्यानि पुरोडाशादीनि हवींषि **वीतम्** भक्षयतम् । "वीगतिव्याप्तिप्रजनकान्त्यशनखादनेषु" ( अ० प० ) लोट् प्रार्थनायाम् । तथा **इळया** अन्नेन ( निघं० २-७-१३ ) अस्मद्दत्तेन हविषा **मदन्ता** मदन्तौ हृष्यन्तौ । औङ आकारः (पा० ७-१-३९) एवं पूर्वत्रापि । युवाम् **गीर्भिः** स्तुतिलक्षणाभिरस्मदीयाभिर्वाग्भिः **वर्धेथाम्** समृद्धौ भवतम् ॥ १ ॥

अथ कुत्सेन संस्तवो यथा—

इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु । निःषमिद्भ्यो धमथो निःषधस्थान्मघोनो हृदो वरथस्तमांसि ॥
( ऋ० सं० ४-१-३०-४ ) इति ।

अवस्योरार्षम् । त्रिष्टुप् । हे **इन्द्राकुत्सा** हे इन्द्रकुत्सौ । **रथेन वहमाना** वहमानौ उह्यमानौ **वां** युवां कर्मभूतौ

१. "अप एव ससर्जादौ तासु बीजमवासृजत्" इति सृष्टिप्रकरणे मनुना ( अ० १ ) अभिधानात् । आप एव सर्वबीजं तत एव सर्वस्य समुद्भव इति सर्वोपलक्षणताऽपामुपपद्यते । बलवत्त्वश्च ताः सर्वतः ॥

२. नैरुक्तदिशा व्याख्यानमिदं दुर्गस्य ॥

**अत्याः** अश्वाः ( निघं० १-१४-१ ) **अपि कर्णे** नित्यं कर्मणे । मलोप आर्षः । सायणस्तु—कर्णेऽपि स्तोत्राणि कृणोति करोतीति कर्णः स्तोता यजमानो वा तत्समीपेऽपीत्येवं व्याचख्यौ । **आवहन्तु** आसमन्ताद्वाहका भवन्तु । युवामपि **अद्भ्यः** अप्सु । विभक्तिव्यत्ययश्छान्दसः ( पा० ३-१-८५ ) प्रविष्टम् ( सप्तमीबलादध्याहृतमेतत् ) **सीम्** एनं शुष्मासुरम् **निर्धमथः** अबाधेथाम् । सीमिति शुष्मासुरो बुद्धिस्थः परामृश्यते । **सधस्थात्** स्वकीयात्स्थानात् निरबाधेथाम् । **मघोनः** मघवतः हविष्मतो यजमानस्य **हृदः** हृदयात् **तमांसि** अज्ञानरूपाणि पापानि **वरथः** निवारयथः ॥ ४ ॥

अथ विष्णुना संस्तवो यथा—

"इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥"
( ऋ० सं० ५-६-२४-५ ) इति ।

वसिष्ठस्यार्षं त्रिष्टुप् । त्रैधातव्यां विनियोगः । हे **इन्द्राविष्णू !** युवाम् **शम्बरस्य** मेघस्य ( निघं० १-१०-१४ ) असुरस्य वा स्वभूताः **दृंहिताः** दृढीकृताः ( स्थिरीकृताः ) **नवनवतिं च** नवोत्तरनवसंख्याकाः **पुरः** पुराणि **श्नथिष्टम्** हतवन्तौ स्थः । श्नथो हिंसार्थः ( निघं० २-१९-२ ) अपि च **असुरस्य** तस्य मेघस्य ( निघं० १-१०-२९ ) शम्बरनाम्नो वा **शतं सहस्रं च** असंख्यातान् **वर्चिनः** दीप्तिमतः अन्नवतो वा । वर्चं इत्यन्ननामापि ( निघं० २-७-२६ ) मत्वर्थ इनिः ( पा० ५-२-११५ ) **वीरान् अप्रति** अप्रतीकारान् । यद्वा—प्रतिद्वन्द्विनो यथा न भवन्ति तथा **साकं** सह संघश एव **हथः** हतवन्तौ स्थः । यौ युवाम् एतदतिदुष्करमन्यैरकार्षम् । तावस्माकमपि शत्रून्हथ इत्याशास्महे ॥ ५ ॥

अथ वायुना संस्तवो यथा—

"इन्द्रवायू इमे सुता उप प्रयोभिरागतम् ।
इन्दवो वामुशन्ति हि" इति ( ऋ० सं० १-१-३-४ )

मधुच्छन्दस आर्षं गायत्री । ऐन्द्रवायवस्य ग्रहस्य पुरोऽनुवाक्येयम् । हे **इन्द्रवायू !** ( युवामुच्येते ) भवदर्थम् **इमे** सोमाः **सुताः** अभिषुताः सन्ति । तस्माद् युवां **प्रयोभिः** अन्नैः ( निघं० २-७-४ ) अस्मत्संप्रदेयैरभ्युद्यतैः सह **उपागतम्** अस्मत्समीपं प्रत्यागच्छतम् पातुमेतान् । **हि** यतः **इन्दवः** सोमाः **वां** युवाम् आत्मपानाय **उशन्ति** कामयन्ते । "वश कान्तौ" ( तु० प० ) लट् । तस्मात्प्रत्यागच्छतमित्याशास्महे । अत्र "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपोलुकि मलोपे ( पा० ६-४-३७ ) आगतमित्याङ्पूर्वस्य गमेः प्रयोगो बोध्यः ॥ ४ ॥

## अथापि मित्रो वरुणेन संस्तूयते ॥

**अथ**शब्दः प्रकृतादिन्द्राद्विशेषतो मित्रादीन्प्रकरोति । **अपी**ति संभावने । प्रकृताभ्यस्तिसृभ्यो देवताभ्यः पराण्यपरेणाभिधानेन संस्तवयुक्तानीति । **मित्रो वरुणेन**—इत्येवमादिषु या प्रथमया निर्दिश्यते सा मुख्या स्तुतिः । या तृतीयया निर्दिश्यते सा अमुख्या ।

अत्रोदाहरणम्—

"आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
मध्वा रजांसि सुक्रतू" इति ( ऋ० सं० ३-४-११-६ )

विश्वामित्रस्यार्षं गायत्री । मैत्रावरुण्याः पयस्यायाः पुरोनुवाक्या । हे **मित्रावरुणा !** मित्रावरुणौ । औङ आकारः ( पा० ७-१-३९ ) **सुक्रतू** शोभनकर्माणौ ! युवाम् **नः** अस्माकम् **गव्यूतिम्** गवां यूतिं यवन-( गमन )-स्थानम् । "ऊतियूति-" ( पा० ३-३-९७ ) इत्यादिनाऽधिकरणे क्तिन्नन्तोऽत्र निपातः । यवसोदकाद्युत्पत्तये **रजांसि** च गोयूतेर्यान्यन्यानि स्थानानि व्रीह्यादिधान्योत्पत्तिक्षेत्राणि तानि च व्रीह्याद्युत्पत्तये **मध्वा** मधुरेण सर्वसंपत्करेण **घृतैः** घृतेन-उदकेन **आउक्षतं** समन्तात् सिञ्चतम् इत्येतदाशास्महे ॥ ६ ॥

## पूष्णा रुद्रेण च सोमः ॥

अथात्र पूष्णा सोमस्य संस्तवो यथा—

"सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥"
इति ( ऋ० सं० २-८-६-१ )

गृत्समदस्यार्षं त्रिष्टुप् । सोमापौष्णस्य चरोः पुरोनुवाक्या । हे **सोमापूषणा !** सोमापूषणौ चन्द्रसूर्यौ ! युवाम् **रयीणां** धनानाम् **जनना** जननौ जनयितारौ । **दिवः** द्युलोकस्यापि

१. तथा च दुर्गेण नैरुक्तदिशाऽयं व्याख्यातो यथा—ततश्च कर्मणा परितोषितोऽस्माभिः निःपीमश्वः निर्धमथः सर्वतोऽरीन् सधस्थात् समानस्थानादन्तरिक्षलोकादब्धः । अपः । तत ओपध्यायुत्पत्त्या कालं कुर्वाणौ मघोनः महान्त्येतानि तमांसि हृदो हृदयस्य छादकानि अनाकालमयकृतानि वरथः वारयथ इत्येतदाशास्महे इत्याह ॥

२. हवीरूपधनवतः । मघमिति धननाम ( निघं० २-१०-१ )

३. अत्र देवताद्वन्द्वेऽपि पूर्वपदस्यानङ् न भवति । "वायुशब्दप्रयोगे प्रतिषेधः" ( पा० ६-३-२६ वा ) इति वचनात् । अत्र च—उपान्तद्विकर्मात्मनोऽपि हि मध्यमस्य एकस्यापि वाय्विन्द्रभावेन विकरणधर्मित्वाद्द्वित्वं बिभ्रतो नैरुक्तपक्षेऽपि द्विवचनसंस्तुतिरविरुद्धा । यथा एकस्योदकस्य द्विपात्रस्थस्य द्विवचनोक्तिरिति दुर्ग आह ॥

१. भेदपक्षेऽत्राविरोध एव नैरुक्तपक्षे यद्विरुद्धमासमिव किंचिदत्र, तदिन्द्रवायुसंस्तवे प्रतिसमाहितमिति दुर्गः ॥

२. अत्र सायणः—हे सुक्रतू शोभमानकर्माणौ मित्रावरुणौ नोऽस्माकं गव्यूतिं गवां मार्गं गोविवासस्थानं घृतैः क्षरणसाधनैरा उक्षतं समन्तात्सिञ्चतमस्मभ्यं दोग्ध्रीर्गाः प्रयच्छतमिति भावः । रजांसि अस्मदावासस्थानानि मध्वा मधुरेण रसेन सिञ्चतम् इति ॥

३. "सर्वे विधयश्छन्दसि विकल्प्यन्ते" ( ३६ प० ) इति नुमोऽत्राभावः ॥

**जनना** जनयितारौ **पृथिव्याः** ( जगतः ) च **जनना** जनयितारौ । **जातौ** जातमात्रावेव युवाम् विश्वस्य सर्वस्य भुवनस्य जगतः **गोपौ** गोप्तारौ बभूवथुः । **देवाः** च युवामेव **अमृतस्य** अमरणस्य उदकस्य वा **नाभिं** हेतुम् । यद्वा नहनं बन्धनम् ( आधारं सर्वलोकस्य ) **अकृण्वन्** अकार्षुः । दुर्गस्तु—सदा कुर्वन्ति युवामिदं नामास्माकं कुरुतमित्याशिषा निराकाङ्क्षमिति व्याचख्यौ ॥ १ ॥

अथ रुद्रेण सोमस्य संस्तवो यथा—

"सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥"
२ इति ( ऋ० सं० ५-१-१८-३ )

भरद्वाजस्येयमार्षं त्रिष्टुप् । सोमारौद्रस्य चरोः पुरोऽनुवाक्या । हे **सोमारुद्रा !** सोमारुद्रौ **युवं** युवाम् **अस्मे** अस्माकम् । आमः शे ( पा० ७-१-३९ ) **तनूषु** अङ्गेषु **एतानि** प्रसिद्धानि **विश्वा** विश्वानि सर्वाणि **भेषजानि धत्तं** धारयतम् । किंच **नः** अस्माकम् **तनूषु** अङ्गेषु अस्माभिर्मनोवाक्कायैः **कृतं बद्धं** ( चिरसंबद्धम् ) च यत् **एनः** पापम् **अस्ति** विद्यते । तत् **अवस्यतं** क्षपयतम् । अवपूर्वस्य नाशनार्थस्य स्यतेः ( दि० प० ) रूपम् । दुर्गस्तु—अवस्यतं नित्यमस्मानवितुं रक्षितुमिच्छतमित्याचख्यौ, तन्मतेरिच्छार्थक्यजन्तस्यावशब्दस्य क्रियापदम् । **अस्मत्** अस्मत्तः **मुञ्चतं** च ॥ २ ॥

## अग्निना च पूषा ॥

"मध्यमस्थानेन च द्युस्थानेन च संस्तवः" इति पार्थिवेन प्रतिषेधादृचं नोदाहरन्ति ।

## वातेन च पर्जन्यः ॥ ३ ॥ ( १० )

यथा—

"धर्तारो दिव ऋभवः सुहस्ता
वातापर्जन्या महिषस्य तन्यतोः ।
आप ओषधीः प्रतिरन्तु नो गिरो
भगो रातिर्वाजिनो यन्तु मे हवम्" ॥ ५ ॥ इति
( ऋ० सं० ८-२-१३ )

वसुकर्णस्यार्षं त्रिष्टुप् । **दिवः** द्युलोकस्य **धर्तारः** धारयितारः **ऋभवः** सत्येन भासमानाः **सुहस्ताः** शोभनवज्रायायुधयुक्तहस्ता देवाः । तथा—**महिषस्य** महतः **तन्यतोः** शब्दस्य । "तनु विस्तारे" ( त० उ० ) "ऋतन्यञ्जि–" ( उ० ४-२ ) इति यतुच् प्रत्ययः । शब्दस्य कर्तारौ । **वातापर्जन्या** वातापर्जन्यौ पर्जन्यवायू च तत्कार्या **आपः ओषधीः** ओषधयश्च **नः** अस्माकम् **गिरः** स्तुतीः **प्रतिरन्तु** प्रवर्धयन्तु । प्रपूर्वस्तिरतिर्वृद्ध्यर्थः । तथा **रातिः** दाता **भगः** भजनीयोऽर्यमा च **वाजिनः** अग्नि–र्वायुः–सूर्यश्च । ते वै वाजिन इति तैत्तिरीयब्राह्मणम् ( १-६-३ ) एते देवाश्च **मे** मदीयम् **हवं** हवनं आह्वानम् **यन्तु** अधिगच्छन्तु ( जानन्तु ) । गत्यर्थानां ज्ञानार्थत्वात् ॥ ५ ॥ ३ ॥ ( १० )

## अथैतान्यादित्यभक्तीनि ॥

पूर्ववत्—

**असौ लोकस्तृतीयसवनं वर्षा जगती सप्तदशः स्तोमो वैरूपं साम ॥ ये च देवगणाः समाम्नाता उत्तमे स्थाने ॥**

दिवि—आदित्यादयः ।

**याश्च स्त्रियः ॥**

उषाः सूर्या, वृषाकपायी, सरण्यू–देवपत्न्य इति ।

**अथास्य कर्म-रसादानं रश्मिभिश्च रसधारणम्, यच्च किंचित्प्रवह्लितमादित्यकर्मैव तत् ॥**

**प्रवह्लितं** गूढाभिसन्धि अप्रकटितं **तत् सर्वमादित्यकर्मैव** कर्ममात्रप्रवर्तकत्वात् । तथा च अनुक्तकर्तृकर्मजातमादित्यस्यैवेति स्थितम् ।

## चन्द्रमसा वायुना संवत्सरेण-इति संस्तवः ॥४॥

अल्पत्वात्स्वशब्दैरेव ब्रवीति, नाधिकारवचनं करोति–अथास्येत्येवम् ।

तत्र चन्द्रमसा सूर्यस्य संस्तवो यथा—

"पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥"
इति ( ऋ० सं० ८-३-२३-३ )

सूर्याया आर्षं जगती राजयक्ष्मेष्ट्यां वैश्वदेवस्य चरोः पुरोऽनुवाक्यैषा । **एतौ** सूर्याचन्द्रमसौ **पूर्वापरं** पौर्वापर्येण **चरतः** गच्छतः । अनयोरन्यतरः सूर्यः पूर्वं गच्छति । अपरश्चन्द्रमास्तमनुचरति । एवं चरतो गच्छतः । तौ पुनः **मायया** योगैश्वर्यकृतया कयापि प्रज्ञयेति कस्तत्त्वं वेद । नह्ययोगिनावेवं शक्तौ चरितुमिति । अपि चैतदपि चित्रं–यदपरिविश्रमानौ आभूतसंप्लवात् **शिशू** इव **क्रीळन्तौ** अन्तरिक्षे विहरन्तौ **अध्वरं** यज्ञं **परियातः** प्रतिगच्छतः । तयोः **अन्यः** अन्यतरः आदित्यः **विश्वानि** सर्वाणि **भुवना** भुवनानि । "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः । जगन्ति **अभिचष्टे** अभिपश्यति । **अन्यः** अपरश्चन्द्रमाः **ऋतून्** वसन्तादीन् **विदधत्** कुर्वन् ( मासानर्धमासांश्च कुर्वन् ) अभि-

१. श्लथयतं शिथिलबन्धं कुरुतमिति सायणः ॥

२. व्याख्यातारः । मृग्यमुदाहरणं येन संस्तवः ॥

१. तथा च प्रवह्लिकेत्युपक्रम्यामरविवेके महेश्वरः प्राह–यया परैः संदिह्यते तादृशगूढाभिधानस्येति ॥

२. पूर्वपक्षे पूर्वः सूर्यः अपरश्चन्द्रमाः । अपरपक्षे पुनरपरः सूर्यः पूर्वश्चन्द्रमाः । एवमेतौ चरणमनुपरतौ चरन्तौ चरतः सर्वदेति दुर्गः ॥

निष्पादयन्स्वगत्या पुनः पुनःपुनः प्रतिमासं जायते । जायमानश्चोदेति अस्तं चोपैति ( अत्रासंस्तवेनोत्तरार्धर्चः ) यावेतदेवमल्पद्धतं किमपि चरणं चरतस्तावेतावगदमसच्चजमानं कुरुतम् इत्याशिषा निराकाङ्क्षः ॥ ३ ॥

अथ वायुना सूर्यस्य संस्तवः—

"सुप्त ऋषयः प्रतिहिताः" ॥

( य० वा० सं० ३४–५५ )

इत्यत्र "वाय्वादित्यौ" ( नि० १२–४–३ ) इति वक्ष्यति संवत्सरेण च संस्तवः—

"पञ्चपादं पितरम्" ( ऋ० सं० २–३–१६–२ ) इति व्याख्यातः ॥ ४ ॥

**एतेष्वेव स्थानव्यूहेषु-ऋतुच्छन्दस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत ॥**

ऋतवश्च छन्दांसि च स्तोमाश्च पृष्ठानि च एषां समाहारद्वन्द्वः ऋतुच्छन्दस्तोमपृष्ठम् । तस्य । द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसंबन्धनीयनियमात् ऋतुभक्तिशेषम्–छन्दोभक्तिशेषम्–स्तोमभक्तिशेषम्–पृष्ठभक्तिशेषं च । तद्यथा—

**शरद्-अनुष्टुब्-एकविंशस्तोमो-वैराजं साम, इति पृथिव्यायतनानि ॥**

पृथिवीलोकायतनानि । अनभिलिङ्गेऽपि मन्त्रे चेदेतेषामन्यतमं स्यात्स आग्नेय इति प्रतिपत्तव्यम् । एवमेवोत्तरयोरपि स्थानव्यूहयोः । व्यूहो नाम विस्तारः ।

**हेमन्तः, पङ्क्तिः, त्रिणवस्तोमः, शाक्करं साम, इति अन्तरिक्षायतनानि ॥**

अन्तरिक्षलोकायतनानि ।

**शिशिरः–अतिच्छन्दस्–त्रयस्त्रिंशस्तोमः–रैवतं साम, इति द्युभक्तीनि ॥ ५ ॥ ( ११ )**

यां भजन्त इति द्युभक्तीनि । अपि वा दिवमादित्यं भजन्त इति द्युभक्तीनि । भक्तिग्रहणं प्रणालिकोपप्रदर्शनार्थम् । एतेषां या स्तुतिः सा स्तुतिसंक्रमणन्यायेन स्थानाधिपतेः सूर्यस्य स्तुतिरिति । सर्वत्रैवमेव बोध्यम् ।

सर्वमेतन्मन्त्राश्रयमित्युक्तम् । त एव तन्मन्त्राः कस्मात् इत्यत आह—

**मन्त्रा मननात् ॥**

तेभ्यो ह्यध्यात्माधिदेवाधियज्ञादिमन्तारो मन्यन्ते तदेषां मन्त्राणां मन्त्रत्वम् । ते पुनश्छन्दोमयाः, नाच्छन्दसि वागुच्चरतीति । अथ च्छन्दांसि कस्मादित्याह—

**छन्दांसि छादनात् ॥ ( स्तोमः स्तवनात् ॥ )**

"यदेभिरात्मानमाच्छादयन् देवाः मृत्योर्बिभ्यतः, तच्छन्दसां छन्दस्त्वम्" इति ( ब्रा० ) विज्ञायते ।

**यजुर्यजतेः ॥**

धातोः । तेन हि विशेषत इज्यत इति यजुः । यजेरुसिः । सर्वत्र याज्यान्ते वषट्कारविधानात् ।

अथ साम कस्मात् ?

**साम संमितमृचा ॥**

तद्धि यावती ऋक् तावदेव परिमाणत इति ऋचा संमितत्वात् साम संमानशब्दस्य निपातः ।

**अस्यतेर्वा ॥**

क्षेपणार्थस्य ( दि० प० ) प्रक्षिप्तमिव हि तदृचि भवति । विज्ञायते च–"तस्मादृच्यध्यूढं साम गीयते" ( ब्रा० ) इति । यद्वा–स्यतेर्वेति–"षोऽन्तकर्मणि" ( दि० प० ) इत्यस्य । "अन्त्यं तत्कर्म भवति संहिता-पदं-साम" इति ।

**ऋचा समं मेन इति नैदानाः ॥**

ऋचा–एतत् समम् इत्येवं प्रजापतिर्मेने ज्ञातवान् । अथ वा–आत्मानमेव ऋचा समं मेने ज्ञातवान् तत्साम्नः सामत्वमिति एवं नैदानाः निदानविदो मन्त्राणामृषयो मन्यन्ते । निदानमिति ग्रन्थविशेषस्तद्विदो वा नैदानाः ।

अथ "छन्दांसि छादनादि"ति यदुक्तं तानि पुनरमूनि गायत्रीप्रमुखानि । अतो गायत्रीमन्त्रं तावन्निराह—

**गायत्री गायतेः स्तुतिकर्मणः ॥**

तया हि गीयन्ते स्तूयन्ते देवाः । तथा च गैधातोरत्रिन्प्रत्यय आयादेशः "कृदिकारात्–" (पा० ४–१–४५ ग० वा०) इति ङीष् ।

**त्रिगमना वा विपरीता ॥**

अथ वा त्रिषु ऋग्यजुःसामसु गमनं पादशो यस्याः सा विपरीता वर्णव्यत्ययमापन्ना ( त्रि–गायत्=गायत्–त्रि ) सती गायत्री । तथाच मनुः—

"त्रिभ्य एव तु देवेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥" इति ।

१. यद्यप्युभयोरपि पुनर्जनिरस्ति, तथापि सूर्यस्य सर्वदा प्रवृद्धेरुभयोर्नाभिप्रेतो भवः । चन्द्रस्य ह्रासवृद्धिसद्भावात्पुनःपुनर्जायत इत्युक्तिर्युक्ता । "चन्द्रमा वै जायते पुनः" इत्यादि श्रुतेश्च ( तै० सं० ७–४–१९ ) ॥

१. अयं पाठो दुर्गेण न धृतः परमनेकेषु सन्निहितोऽङ्कितः । परमयमसामान्यविवेचनया शाखादिभिः सह निर्वचनार्ह इत्युपेक्षितो भवेदिति तर्कः ॥

२. तथा चामरः–"गायत्री प्रमुखं छन्दः" इति । पिङ्गलोऽपि–"छन्दः" इत्यधिकृत्य–"गायत्री" इत्यादि सन्नक्रमेण लक्षितवान् ॥

तथा च—

**गायतो मुखादुदपतत्-इति च ब्राह्मणम् ॥६॥**

**गायतो** ब्रह्मणः **मुखात्** त्रिभ्यो वेदेभ्यः सकाशात् **उदपतत्** निरगात् पादश इति मन्वर्थोपपत्तिः ॥ ६ ॥

अतः परमुष्णिगादीनि छन्दांसि चतुरुत्तराणि, तानि तत्प्रसङ्गेनैव निराह—

तत्र तावत्—

**उष्णिग्-उत्स्नाता भवति ॥**

उत्स्नाता—गायत्रीतश्चतुर्भिरक्षरैरधिकैरुद्वेष्टिता इव । उदो दलोपः षत्वं च ( पा० ८-३-१०६ ) एवमग्रेऽपि बोध्यम् ॥

**स्निह्यतेर्वा स्यात्कान्तिकर्मणः ॥**

उदधिकं स्निग्धमिष्टं देवानाम् । कान्तमेतच्छन्दः ।

**उष्णीषिणी-वा-इत्यौपमिकम् ॥**

अथ **वा उष्णीषिणी** उष्णीषवतीव इति **औपमिकम्** उपमानिबन्धनं नाम—चत्वार्यक्षराण्यस्या गायत्रीतोऽधिकान्युष्णीषमिव लक्ष्यन्ते तेनेयमुष्णिक् ।

अथोष्णीषमेव कस्मात्? इत्युच्यते—

**उष्णीषं स्नायतेः ॥**

शौचार्थस्य स्नाधातोः यका निर्देशः कर्मणि इषक् प्रत्यय इति ज्ञापनार्थं एव । स्नातेरिति हि युज्यते "ष्णा शौचे" ( अ० प० ) उदधिकं स्नायत इत्युष्णीषम् । शुद्धं हि तद्भवति शुक्लम् ॥

**ककुप्-ककुभिनी-भवति ॥**

सैवोष्णिक्—जागतेन पादेनोपहतेन मध्यतः ककुबित्युच्यते । स तस्या मध्यतः ककुबिव भवति तेन ककुभिनीव ककुप् । अत्र व्रीह्यादित्वात् ( पा० ५-२-११ ) मत्वर्थे इनिस्ततो ङीप् । तथा च ककुब्वत्त्वाच्छन्दोऽपि ककुप् । ककुबिति पृष्ठे समुन्नतः प्रदेशः, यश्च कुब्जस्येव भवति—गजादीनामपि पृष्ठदेशः । तथा च मेदिनी "ककुप् स्त्रियां प्रवेणी दिक् शोभासु चम्पकस्रजि" इति । "प्रवेण्यास्तरणम्" इति चामरः ।

अथ ककुबेव कस्मात्? इत्युच्यते—

**ककुप्-कुब्जश्च-कुजतेर्वा-उब्जतेर्वा ॥**

**कुजतेः** कौटिल्यार्थस्य । यद्यप्ययं स्तेयकरणे (भ्वा० प०) पठितस्तथापि धात्वर्थनिर्देशस्योपलक्षणत्वादिह कौटिल्ये । क्विपि द्वित्वादि । अथ **वा उब्जतेः** आर्जवार्थस्य ( तु० प० ) आर्जवं न्यग्भावः । **कुब्जश्च** कुब्जोऽप्यनयोरेवान्यतरस्मात् । क्षीरस्वामिनस्तु "ककुभाति विस्तारयतीति ककुप्" इति वदन्तः "ककुभ विस्तारवचने" इत्यभिप्रयन्ति । ककुप्—कुमेरुच्छ्रयार्थात्

१. षडक्षरा गायत्री पादशः । सप्ताक्षरा चोष्णिगिति ॥

२. अत्र "ककुप् च कुजतेर्वोब्जतेर्वा । कुब्जश्च ।" इति पाठो बहुषु पुस्तकेषु दृश्यतेऽभिप्रेतश्चापि दुर्गस्य किन्तु मूलपाठोऽयमेवेति धृतोऽस्माभिः ॥

उब्जिता इव हि दिशो वृक्षाग्रेषूपलभ्यमाना इति दिङ्नामनिर्वचने माधवः । अत्र सर्वत्र "क्विब्वचिप्रच्छ्यायतस्तु" ( पा० ३-२-१७८ वा० ) इत्यत्र "प्राक्प्रत्ययनिर्देशादिष्टसिद्धिः" ( म० भा० ) इत्युक्तेः क्विपि पृषोदरादित्वाच्च रूपसिद्धिर्बोध्या । कुब्जे तु कुडागमः । अच्प्रत्ययश्च पचादित्वात् ( पा० ३-१-१३४ ) ॥

**अनुष्टुबनुष्टोभनात् ॥**

किमिदमनुष्टोभनमिति ? तदाह—

**"गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभती"ति च ब्राह्मणम् ॥ ७ ॥**

अत्र स्वमतं च शब्देन समुच्चिनोति । गायत्री–त्रिभिरष्टाक्षरैः पादैः समाप्यते । तस्याश्च पुनरपरश्चतुर्थः पादो भवति, येन तामेव ( गायत्रीम् ) अनुष्टुप्–अनुष्टोभति तस्मादनुष्टुप् ७

**बृहती-परिबर्हणात् ॥**

परिवृद्धाऽसौ भवति–अनुष्टुभश्चतुर्भिरक्षरैः । उक्तंच "बृहती जागतस्त्रयश्च गायत्राः" इति ॥

**पङ्क्तिः पञ्चपदा ॥**

पञ्चभिः पादैः पङ्क्तिरित्युच्यते । अत एव पञ्च पदानि परिमाणमस्येति पङ्क्तिश्छन्द इति काशिका । पदशब्दोऽत्र पादपर्यायश्चेत्-इति हरदत्तः । तथाच तदस्य परिमाणमित्यर्थे पञ्चन्-शब्दात्तिप्रत्ययः । पञ्चनशब्दस्य टिलोपः "चोः कुः" ( पा० ८-२-३० ) इति कुत्वम् ।

अथ—

**त्रिष्टुप्—**

कस्मात्? इत्यतो विग्रहोत्तरं पदं निराह—

**स्तोभत्युत्तरपदा ॥**

स्तोभतिर्धातुरुत्तरं पदं यस्याः सेयं **स्तोभत्युत्तरपदा** त्रिष्टुप् ।

१. अन्वचेति ( निघं० ३-१४-४ ) यद्यप्ययमात्मनेपदिषु पठितस्तथाप्यार्षविज्ञानबलेनानुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वबलेन चात्र परस्मैपदप्रयोगः । चक्षिङोऽनुदात्तेत्तो ङित्करणाचोक्तार्थज्ञापकमिति व्यक्तमन्यत्र ॥

२. पत्वाद्यर्थनिर्वचनं, समासस्त्वत्र बहुव्रीहिः । "संख्यासुपूर्वस्य" ( पा० ५-४-१४० ) इति पादस्यान्तलोपात् "टाबृचि" ( पा० ४-१-८ ) इति टापि पादस्य पद्भावः ( पा० ६-४-१३० ) ॥

३. धातुनिर्देशेऽत्र श्तिप्प्रत्यय इति समासः । अत्र यद्यपि त्रिष्टुभः पुरस्ताद् विराजो निरुक्तिरन्विता, तत्क्रमेणैव छन्दःप्रवृत्तेस्तथापि बाहुल्यादधियज्ञे च प्रयोगभूयस्त्वाद्विराजः पुरस्तात्त्रिष्टुबेव निरुक्ता । आदरातिशयात् । "विराजो दिशः" ( पिं० ३-१-५ ) "त्रिष्टुभो रुद्राः" ( पिं० ३-१-६ ) ॥

अथ पूर्वपदार्थे सन्दिहानः पृच्छति—

**का तु त्रिता स्यात् ?**

त्रिता त्रित्वमस्यां का स्यात् ? तुशब्दो भेदार्थः पूर्वस्मात्। (पूर्ववाक्येन हि उत्तरपदार्थो निर्णीतः एतेन च पूर्वपदार्थो निर्णीयत इत्येष भेदः)।

अथ पूर्वपदे येयं त्रिता त्रित्वं श्रूयते "त्रि" इति एतत्किमर्थकमिति ? । उत्तरमाह—

**तीर्णतमं छन्दः ॥**

तीर्णतमं स्तुततममिदं छन्दः गायत्र्यादिभ्यः । बहुत्वात्। सेयं तीर्णतमा च स्तोभति चेति त्रिष्टुप्।

निर्वचनान्तरमाह—

**त्रिवृद्वज्रस्तस्य स्तोभतीति वा ॥**

अथ वा वज्रमायुधं, तच्च पुनः प्रायस्त्रिसन्धि-शरो वेणुः शृङ्गं शल्यमिति विज्ञायते। तस्य स्तोभति स्तुतिं करोति ऋषिरनयेति त्रिष्टुप्। स्तोभतिरर्चतिकर्मा (निघं० ३–१४–४)। अथवा ऐन्द्रमेतच्छन्दः वज्रं चेन्द्रभक्ति तस्मादुपपद्यते—

**यत्त्रिरस्तोभत्-तत्त्रिष्टुभस्त्रिष्टुप्त्वम्-इति विज्ञायते ॥ ८ ॥ (१२) ॥**

यत् अनया त्रिः वारत्रयमस्तोभत् स्तुतवानृषिः ॥८॥

**जगती गततमं छन्दः ॥**

गततमम् अन्त्यम्। अतःपरमतिच्छन्दांसि।

**जलचरगतिर्वा ॥**

अथ वा जलवत् चरगतिरिति जगती। जलोर्मिप्रकारो हि तस्याः प्रस्तारः। तथा च चरगतिरिति बहुव्रीहिर्लेचरशब्दस्य पृषोदरादित्वाल्लोपे ङीष् (पा० ४–१–४५)

**जल्गल्यमानोऽसृजदिति च ब्राह्मणम् ॥**

"ग्लै हर्षक्षये" (भ्वा० प०) क्षीणहर्ष इव क्लिैतां प्रजापतिः असृजत् अपश्यत्। नहि छन्दांसि क्रियन्ते । नित्यत्वादेव छन्दसाम्।

अथ पुनर्विराजं निराह—

**विराड्-विराजनाद् वा-विराधनाद् वा-विप्राणनाद् वा ॥**

तत्र—

**विराजनात्संपूर्णाक्षरा ॥**

साकल्याद्विराजत इवेति विराजनात् विराड्। क्विप् षत्वम् (पा० ८–२–३६)

**विराधनादूनाक्षरा ॥**

विराधनात् वैकल्यात्। विराध्यन्तीव सा भवति। वर्णव्यत्यय आर्षः। क्विप्षत्वे पूर्ववत्।

**विप्राणनादधिकाक्षरा ।**

विप्रुतेव हि सा स्वरूपात् । तथाच विराजस्त्रिधागतिः– क्वचिदियं संपूर्णाक्षरा, क्वचिन्न्यूनाक्षरा, क्वचिदधिकाक्षरेति।

**पिपीलिकमध्या इत्यौपमिकम् ॥**

उपमाकृतं नामनिर्वचनम् । पिपीलिका इव कृशमल्पाक्षरो मध्यपादो यस्याः सा। तथा च दुर्गः–मध्याल्पाक्षरपादा यासां पिपीलिकमध्यैव भवति, पिपीलिकस्वरूपा।

**पिपीलिका पेलयतेर्गतिकर्मणः ॥ ९ ॥**

गत्यर्थस्य (भ्वा० प०) पुनः पुनः पेलति गच्छतीति किः। लिङ्गद्वावाद्विल्वादिरुपधाया ईकारः। ततः स्वार्थे कष्टाप् ॥ ९ ॥

**इतीमा देवता अनुक्रान्ताः ॥**

इतिकारः प्रकरणसमाप्त्यर्थः । अथवा–इतिकरणेनाभिनयेन दर्शयन्निव ब्रवीति। इति–एवमनेन प्रकारेण यथा परिभाषितेन "यत्काम ऋषिः" इत्येवमादिना। इमा देवता अग्निजातवेदा वैश्वनर इत्येवमाद्या अनुक्रान्ता समासतो निर्णीता इत्यर्थः।

ताः पुनः—

**सूक्तभाजो हविर्भाजः ॥**

काश्चिद्धविर्भजन्ते न सूक्तम्। काश्चित्सूक्तं भजन्ते न हविः। काश्चिदुभयं भजन्ते। वक्ष्यति हि–"इतीमानि सप्तविंशतिर्देवतानामधेयानि अनुक्रान्तानि सूक्तभाञ्जि, तेषामेतान्यहविर्भाञ्जि" इति।

**ऋग्भाजश्च भूयिष्ठाः ॥**

प्रायेणेत्यर्थः। तद्यथा–आप्रीसूक्ते एकैकामृचं भजन्ते लक्षणभेदादिभिः । अर्धर्चभाजोऽपि क्वचिदुपेक्षितव्याः। तद्यथा–"ऋचः सूर्याय गीयन्ते उद्वेतीत्यर्धपञ्चमाः" इति। "यत्रा चक्रुः–" (ऋ० सं० ५–५–५–५) इति। अस्याः पूर्वोऽर्धर्चः शौनकस्य। उत्तरो मैत्रावरुणः।

एवं पादभाजोऽपि क्वचिदुपेक्षितव्याः। तद्यथा–"नवो नवो भवति जायमानः" (ऋ० सं० ८–३–२३–४) इत्यस्या आदित्यदैवतो द्वितीयः पादो भवति। भूयिष्ठ-ग्रहणाच्चैतद्दर्शयति–अनाम्नाता अपि सन्ति अप्युपेक्षितव्या इति । ताश्च

---

१. शत्रन्तमेतत्प्रकृतिभूतं राध्यतिरकर्मको दैवादिकस्ततः श्यन्। वर्णं पर्यालोचयन्तीव हि इतस्ततः वैकल्यादेव। अत्र वर्णस्य कर्मणः धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् ॥

२. "प्रुङ् गतौ" (भ्वा० आ०) क्तः। प्रापणमपि गतिरेव। "या प्रापणे" (अ० प०) इति यथा ॥

३. उपेत्यागत्य निगमजातमीक्षितव्यमालोचितव्यमिति नैरुक्तानां वचनभङ्गी भवति ॥

यथालक्षणं त्रिषु ( स्थानेषु ) कल्प्याः । तद्यथा–परमेष्ठि-ग्रह–नक्षत्र–सर्प–लाङ्गल–कुसुम्भक–प्रभृतीनि नामधेयानि ।

**काश्चिन्निपातभाजः ॥**

निपातो नाम अप्राधान्यम् । स हि द्विविधः–देवतान्तरैः सह साधारण्येनोपस्तुतो, नैघण्टुकत्वेन च । तत्र साधारणं नाम, तद्यथा–"विधाता धात्रा व्याख्यातः" । तस्यैष निपातो भवति बहुदेवतानामृचि "सोमस्य राज्ञः" ( ऋ० सं० ८–८–२५–३ ) इति । अस्यां सोमप्रभृतिभिः सह विधानात् श्रूयते साधारण्येन । नैघण्टुकत्वेन पुनः–तद्यथा–"पृथिवी व्याख्याता" तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि । "यदिन्द्राग्नी परमस्यां पृथिव्याम्" ( ऋ० सं० १–७–२७–५ ) इति । ताभ्यामिन्द्राग्निभ्यां सह साधारण्येन पृथिवी न स्तूयते किंतर्हि ? लक्षणत्वेनैन्द्राग्न्योरेवोपादीयते । एवं तावदिहाधिकारे काश्चिन्निपातभाज इति द्विप्रकारो निपात उक्तः । प्रकारान्तरं च दुर्गवृत्तौ द्रष्टव्यम् ।

**अथोताभिधानैः संयुज्य हविश्चोदयति ॥**

अथ इति विशेषाधिकारे । उत इत्यप्यर्थे । अपरमपरमप्यभिधानमपेक्ष्यापेक्ष्य । तद्यथा-अभिधानैर्विशेषणशब्दैः संयुज्य संयोज्य ( अन्तर्भावितण्यर्थः ) तत्रैतदभिधानमिन्द्रादिसंविज्ञानादवश्यमिन्द्रादौ देवतार्थे ( आम्नायविधौ प्रयोगे च ) हविश्चोदयति ।

तद्यथा—

**इन्द्राय वृत्रघ्ने । इन्द्राय वृत्रतुरे । इन्द्रायांहोमुचे । इति ॥**

अत्र प्रत्येकम् "एकादशकपालं निर्वपेदि"ति वाक्यशेषो विधेरवगन्तव्यः ।

ततः किम् ?–इत्याशङ्क्याह–

**तान्यप्येके समामनन्ति ॥**

एके नैरुक्ताः । तान्यपि वृत्रहांहोमुक्प्रभृतीनि, गुणपदानि, अग्न्यादौ देवतापदसमाम्नाये पृथक्पृथक् समामनन्ति । अहं तु न समामने इति भाष्यकाराभिप्रायः ।

कस्मात् ?

**भूयांसि तु समाम्नानात् ॥**

यानि तु तेषु तेषु गुणपदानि वृत्रहांहोमुक्प्रभृतीनि समामनन्ति । ततोऽन्यान्यपि भूयांसि बहुतराणि सन्त्येव । महाभाग्याद्देवताया गुणानामियत्ता नास्त्येव तस्याः । तेषां तु सर्वेषां समाम्नाने समाम्नायस्योपरिनिष्ठैव स्यात् । तथा च स हि तेषामिवास्माकमपि शास्त्रेऽसमाप्तिर्माभूदिति ।

**यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति, तत्समामने ॥**

यत्तु–यदेतत् संविज्ञानभूतं रूढमगौणं केवलमपि निर्विशेषणम् प्राधान्यस्तुति–लब्धप्रधानस्तुतिदेवतापदमग्न्यादि, तत्समामने न गौणं व्रतभृत् व्रतपत्यादि । तु–शब्दो भेदार्थः ।

**अथोत कर्मभिर्देवताः स्तौति । वृत्रहा पुरन्दर इति ॥**

उपलक्षणमेतत्–शतक्रतुः–गोत्रभृत् वज्रबाहुरित्येवमादिभिः कर्मभिः तत्तत्कर्मख्यापकनामभिः ।

**तान्यप्येके समामनन्ति ॥**

तानि कर्मनामधेयानि । को विशेषः पूर्वेभ्यः समाम्नातृभ्यः ? "विधिदर्शनात्पूर्वेण हविश्चोदयती" ति वचनात् । स्तुतिदर्शनादिकर्मभिश्चर्षिर्देवताः स्तौतीति वचनात् ।

**भूयांसि तु समाम्नानात् ॥**

इति स एवोक्तपूर्वो दोषोऽत्रापि ।

**व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति ॥**

तदेतद्वृत्रहा पुरन्दर इत्येवमादिपदं तत्. तस्यैवेन्द्रादेः संविज्ञातपदस्य व्यञ्जनमात्रं विशेषणमात्रं भवति न पृथक्प्रधानं, केवलस्य स्तुत्या संबन्धात् । लोके–

**यथा–ब्राह्मणाय बुभुक्षितायौदनं देहि, स्नातायानुलेपनम्, पिपासिते पानीयमिति॥१०॥ (१३)**

**इति श्रीमद्यास्कमुनिप्रणीते निरु० दै० कां० सप्तमाध्यायस्य तृतीयः पादः ॥ ७ ॥ ३ ॥**

यो बुभुक्षितस्तस्मै इति यथाहि बुभुक्षितशब्दो विशेषणम् । केवलस्य तु बुभुक्षितशब्दस्य विशेषतः क्वचिदनवस्थानात् । एवं वृत्रहा पुरन्दर इत्येवमादीनां विशेष्यमप्राप्यानवस्थानाद्व्यञ्जनमात्रता । न स्वप्रधानता । तस्मान्नैतान्यहं समामने ॥ १० ॥ ( १३ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० सप्तमाध्यायस्य तृतीयः पादः ॥ ७ ॥ ३ ॥

---

१. भुवि अन्तरिक्षे दिवि च ॥

२. एतद्दुर्गोक्तव्याख्यानेन वृत्रतुर इति पूर्ववाक्यार्थनिर्वचनमिव प्रतिभाति । हन्तेस्तुर्वतेश्च समानार्थत्वख्यापनाय ॥

३. ततस्तदीयात्समाम्नानात् ॥

२. असमाप्तिरेव । अथाऽपरोऽप्यस्य वाक्यार्थः–संभवति दुर्गोक्तः–भूयांस्येव तेषां समाम्नानाद्गुणानि समाम्नातानि स्युर्न किञ्चिदतिरिक्तं प्रयोजनं वचनात्केवलं गुरु शास्त्रं संपद्यते, तन्माभूदित्यर्थः ॥

## सप्तमाध्याये चतुर्थः पादः ।

अथ "अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यत" इति तृतीयं काण्डं यथाप्रतिज्ञं व्याख्यातुमुपक्रमते–

**अथातोऽनुक्रमिष्यामः ॥**

योऽयं सामान्यतः परिसंख्यातोऽग्न्यादिदेवपत्न्यन्तो देवतापदसमाम्नायः स एवेदानीं विशेषतः प्रतिपदमनुक्रम्य व्याख्यास्यते तदर्थमधिकारवचनम् **अथेति** । **अत** इत्यानन्तर्ये–अस्मात्सामान्यात्समाम्नानादनन्तरम**नु**–आनुपूर्व्येण यथा समाम्नातं **क्रमिष्यामः** कथयिष्यामः (वर्णयिष्यामः) "व्याख्यये"ति वाक्यशेषः । सा च पुनर्व्याख्या–अभिधाना–ऽभिधेया–ऽभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरण–तन्निर्वर्तन–विचारो-पपत्त्यवधारणक्रमलक्षणा । तद्यथा–**अग्निरित्यभिधानम्** ( १ ) अयं पार्थिव इत्यभिधेयम् ( २ ) **अग्रणीभवती**त्यभिधानव्युत्पत्तिः ( ३ ) **अग्निमीळे**–इति प्राधान्यस्तुत्युदाहरणम् ( ४ ) **अग्निमीळे=अग्निं याचामि** इति तन्निर्वचनम् ( ५ ) **स न मन्येतायमेवाऽग्निरिति** विचारः ( ६ ) **यस्तु सूक्तं भजते–यस्मै हविर्निरूप्यते** इत्युपपत्तिः ( ७ ) **अयमेव सोऽग्निरित्यवधारणम्** ( ८ ) एवंप्रकारया व्याख्यया प्रतिपदमनुक्रमिष्यामः । तत्रैतद्भवति कोऽयमग्निः ? इति ।

आत्मा–**इत्यात्मविदः** "एकं सद्विप्रा बहुधा वदन्ति" ( ऋ० सं० २-३-२२-६ ) इति मन्त्रदर्शनात् । अविवक्षितस्थानविशेषो–निर्ज्ञातैतदभिधानो–देवताविशेषो लोकवेदप्रसिद्धः कर्माङ्गमिति **याज्ञिकाः** । विवक्षितस्थानविशिष्टकर्मा मध्यमोत्तमाभ्यां ज्योतिर्भ्यामन्यः पार्थिवोऽयमग्निरिति **नैरुक्तसमयः** । त्रित्वाभ्युपगमात्तत्संपिपादयिषयेदमारभ्यते–

**अग्निः पृथिवीस्थानः । तं प्रथमं व्याख्यास्यामः ॥**

**पृथिवीस्थानः** पृथिव्येवास्य विशेषतः स्थानं, नान्तरिक्षं न द्यौरिति । तत्र तस्य कर्माधिकारात् । तस्मात्सन्निकर्षाल्लोकानुक्रमाच्च । नह्यसति कारणविशेषे प्रथमातिक्रमो न्याय्य इति तमेव प्रथमं व्याख्यास्यामः ।

अथाग्निमनेकधा निर्वक्ष्यन्पृच्छति–

**अग्निः कस्मात् ?**

विगृह्योत्तरयति–

**अग्रणीर्भवति–अग्रं यज्ञेषु प्रणीयते ॥**

सर्वेष्वर्थेष्वयमात्मानमग्रं नयति, कर्मफलं वाऽग्रे नयति कर्माधिपत्ये व्यवस्थितः इत्यसौ **अग्रणीर्भवति** मुख्यः । यथा सेनाधिपत्येऽवस्थितः सेनां नयन्सेनानीरित्युच्यते । यद्वा **यज्ञे**ष्वसावग्रं प्रथमं यथा स्यात्तथा **यज्ञेषु** कर्तव्येषु तादर्थ्येन **प्रणीयते** । न तावत् किंचिदन्यं क्रियते यावदयं न प्रणीयत इति । ततोऽस्मिन्सति व्रतमुपेत्यान्यानि कर्माणि क्रियन्त इत्ययमग्रणीर्भवति । तथाचाग्रोपपदान्नयतेः क्विप् ( पा० ३-२-६१ ) अग्रशब्दे रेफाकारयोर्लोपश्चे पृषोदरादित्वादेवमग्रेप्यूह्यम् ।

यद्वा–

**अङ्गं नयति सन्नममानः ॥**

---

१. तत्र च–अग्न्यादिर्देवीऊर्जाहुत्यन्तः क्षितिगतो गणः । वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः । सूर्यादिदेवपत्न्यन्ता द्युस्थानदेवता इति ॥

२. अस्य सूत्रस्य व्याख्यानं सायणोक्तं यथा–सामान्येन सर्वदेवानां लक्षणस्याभिहितत्वात् अनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितमतोऽनुक्रमेण वक्ष्यामः । अत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते–कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयते ? इति प्रश्नस्याग्रणीरित्यादिकमुत्तरम् । देवसेनामग्रे स्वयं नयतीत्यग्रणीः । एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तम्–तथाच ब्राह्मणम्–"अग्निर्देवानां सेनानीः" इति । एतदेवाभिप्रेत्य बहृचब्राह्मणे आमनन्ति–"अग्निर्मुखं प्रथमो देवतानामि"ति मन्त्रः ( ऐ० ब्रा० १-४ ), "अग्निर्वै देवानामवमः" इति ब्राह्मणम् ( ऐ० ब्रा० १-१ ) तथाच तैत्तिरीया आमनन्ति–"अग्निरग्रे प्रथमो देवतानाम्" इति ( तै० ब्रा० २-४-३ ) "अग्निरवमो देवतानाम्" इति च ( तै० सं० ५-५-१ ) वाजसनेयिनस्त्वेवमामनन्ति–"स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नामे"ति । यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेषु अग्रं पूर्वं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यं प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम् । स्थूलाष्ठीविनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्वक्ति । तत्र न क्नोपयतीत्युक्ते न स्नेहयति किंतु काष्ठादिकं रूक्षयतीत्युक्तं भवति । शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते–इत इण् गताविति धातुः । अक्तः "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" इति धातुः । दग्धः "दह भस्मीकरणे" इति धातुः । नीतो "णीञ् प्रापण" इति धातुः । अग्निशब्दो ह्यकार–गकार–निशब्दान् अपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते, अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते–यद्वा–दहतिधातुजन्याद्दग्धशब्दाद्गकारमादत्ते, नीति नयतिधातुः स च ह्रस्वो भूत्वा परो भवति । ततो धातुत्रयं मिलित्वाऽग्निशब्दो भवति । यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविःपाके च प्रेरयतीति समुदायार्थः । तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनायैषाऽग्निमीळ इति ऋग्भवतीति ॥

१. याचे इति प्राप्ते पदव्यत्ययो भाष्यकारीयव्याख्यानात् ॥

२. वाक्यीकृत्याग्निशब्दं–कृतवाक्य–पद–वर्णनिष्कर्षणसमुदायोपजनितस्य तस्याग्रशब्दाद्गकारमुपलभ्य–अग्रशब्दं–कर्माभिधायिनं पूर्वपदत्वेन व्यवस्थाप्याग्निशब्दं निराहेत्यर्थः । एवमग्रेऽप्यूह्यम् ॥

३. मुख्यत्वं चास्य "अग्निर्हि देवानां सेनानीः" इति श्रुतेरिति देवराजयज्वानः ॥

४. चादीकारस्य ह्रस्वः ॥

यत्रायं लौकिके वैदिके वार्थे साधनत्वेन सन्नमयत्यात्मानं तत्र **सन्नममान** एवात्मानं प्रधानीकृत्य सर्वमन्यदङ्गमात्मनोऽङ्गतां **नयती**त्यङ्गनयनादङ्गनीः सन्नमिरुच्यते । यद्वा—यत्र तृणे काष्ठे वा सन्नमत्याश्रयति तत्र **सन्नममान** एवात्मनोऽङ्गमङ्गतां **नय**त्यात्मसात्सर्वं करोति भस्मीकरोतीत्यर्थः ।

**अक्नोपनो भवतीति स्थौलाष्ठीविः ॥**

स्थूलाष्ठीवतः पुत्रः । बाह्वादित्वादिञ् ( पा० ४–१–९६ ) टिलोपश्च पृषोदरादित्वात् ।

अथ किमिदमक्नोपन इत्याह—

**न क्नोपयति न स्नेहयति ॥**

विरुक्षीकरोतीत्यर्थः । स हि तस्य स्वभावो यदेषोऽन्नमपि भस्मीकरोति । **क्नोपयतीति** "क्नूयी शब्दे उन्दे च" ( भ्वा० आ० ) "अर्तिह्रीव्लीरीक्नूयी–" ( पा० ७–३–३६ ) इति पुक् णौ यलोपगुणौ । तथा चाक्नूः सैन्नमिः पृषोदरादिः ।

**त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः ॥**

त्रयाणामाख्यातानामभिधेयाः क्रियाः ( बोधकधातुवर्णाः ) अत्र लक्ष्यन्ते, ताश्च हेतुत्वेनोपादायाग्निशब्द आत्मानं लभत इति शाकपूणिराचार्य आह ।

तद्यथा—

**इतात्—अक्ताद्दग्धाद्वा—नीतात् ॥**

**इतात्** "इण् गतौ" ( अ० प० ) इत्यस्मादितेरित्यर्थः ( १ ) **अक्ताद्दग्धाद्वा** अनक्तेर्वा दहतेर्वा, विकल्प एतयोः ( २ ) ततो **नीतात्** इति । "णीञ् प्रापणे" ( भ्वा० उ० ) इत्यस्मात् ( ३ ) । अत्र धातव एव केवलं निर्दिष्टाः किं कुत आदत्त इत्याह—

**स खल्वेते–रकारमादत्ते, गकारमनक्तेर्वा दहतेर्वा, नीः परस्तस्यैषा भवति ॥ १ ॥ ( १४ )**

**स** शाकपूणिः । **एते**र्धातोर्विकृतात् । पचादित्वात् ( पा० ३–१–१३४ ) अचि गुणायादेशयोरय इति रूपमापन्नात् **अकारमादत्ते** । एवमनक्तेरञ्जूधातोः ( रु० प० ) क्विपि कृतनलोपकुत्वजश्त्वादग् इति रूपमापन्नात् गकारम् । अथ वा **दहतेः** कृतघत्व–( पा० ८–२–३२ ) जश्त्वात्क्विबन्तादेव धगिति रूपमापन्नात् **गकारम् आदत्ते** । **नीः परः** । एष च कृतह्रस्वः । ततश्च–एति च व्यनक्ति च रूपाणि दहति वा हवि-

१. यदा अङ्गोपपदात्समर्थविशिष्टान्नयतेः क्विप् । सन्नममानः स्वयमेव प्रह्वीभवन् हविषां पाककरणत्वेन यज्ञस्य साधनभावं प्रतिपद्यमानोऽङ्गमात्मनो नयति प्रापयतीत्यग्निः । पूर्ववत्प्रक्रियोह्या ॥

२. नञ्पूर्वात्क्नोपयतेः स्नेहनार्थात्क्विन्प्रत्यये ककारनकारव्यतिरिक्तं सर्वं लुप्यते । ककारस्य गकारापत्तिश्च नञ्विशिष्टेन स्नेहनेन तद्विपरीतं विरूक्षणं लक्ष्यते । विरूक्षयतीत्यर्थः । दग्धव्यस्यैधादेः शोषणाद्विरूक्षणः ॥

र्नयति च देवेभ्यस्तत्प्रयच्छति वा कर्मफलं तत्तद्देवतासात्कृतहविषे यजमानायेति त्रिधातुजोऽग्निः । उक्तं च पुरस्तात् "एतैः कारितं च यकारादिं चान्तकरणम्" ( नि० १–४–२ ) इत्येवम् । **तस्य** एतल्लक्षितलक्ष्यप्रधानस्तुतिसंबद्धमभिधानमुपलक्ष्य देवतापदसमाम्नाये समाम्नातस्याग्नेः **एषा** "अग्निमीळे" इत्याद्या ऋक् उदाहरणं भवति ॥ १ ॥ ( १४ )

**"अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम्" ॥ १ ॥**

( ऋ० सं० १–१–१ )

**अग्निमिति** । मधुच्छन्दस आर्षं गायत्री । आश्विने विनियोगः । अहं होता, मन्त्रस्य होत्रा प्रयोज्यत्वात् । **अग्निं** तन्नामकं देवम् । **ईळे** याचामीति भाष्यम्, ततश्च "रत्नानी"ति शेष ऊह्यः । सायणस्तु–स्तौमि, "ईड स्तुतौ" ( अ० प० ) डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः । तथा चाहुः—

"अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः ।
अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्" इति ।

कीदृशमग्निम् ? **यज्ञस्य पुरोहितम्** यथा राज्ञः पुरोहितस्तदभीष्टं संपादयति, तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । यद्वा–यज्ञस्य संबन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम् । पुनः कथंभूतम् ? **देवं** दानादिगुणयुक्तम् । पुनः कथंभूतम् ? **होतारम्** आह्वातारं देवानाम् । यद्वा होतारमृत्विजं च देवानां यज्ञेषु होतृनामकऋत्विग्भिरेव । तथाच श्रूयते "अग्निर्वै देवानां होते" ( तै० सं० २–५–९ ) ति पुनः कीदृशम् ? **रत्नधातमम्** रत्नानि दधाति धारयतीति रत्नधाः क्विप् । अतिशयेन रत्नधा इति रत्नधातमः । यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा इति सायणः । रमणीयानां धनानां दातृतममिति भाष्यम् ॥ १ ॥

अथास्य भाष्यम्—

**अग्निमीळेऽग्निं याचामि, ईळिरध्येषणाकर्मा, पूजाकर्मा वा । पुरोहितो व्याख्यातः । यज्ञश्च । देवो दानाद्वा–दीपनाद्वा–द्योतनाद्वा–द्युस्थानो भवतीति वा । यो देवः सा देवता । होतारं ह्वातारं, जुहोतेर्होतेत्यौर्णवाभः, रत्नधातमं रमणीयानां धनानां दातृतमं तस्यैषाऽपरा भवति ॥ २ ॥ ( १५ )**

१. अग्निकर्म–लिङ्ग–लिङ्गिताः सर्वा आग्नेय्य ऋच उदाहरणं प्रथमातिक्रमे मानाभावादृग्वेदस्य च सर्वतः प्राथम्यात्तत्राप्यस्या एव ऋचः प्राथम्यमग्न्यादिदेवतोपक्रमे निदानं भवितुमर्हतीति तत्त्वम् ॥

२. दुर्गस्तु–योऽग्निर्देवपुरोहितः पाकयज्ञे, अस्माकं यज्ञे यश्च ऋत्विक् होता यज्ञस्य रत्नधातमश्चेत्येवमाह ॥

३. तथा चाम्नायते–"अ॒ग्निं दू॒तं पु॒रो द॑धे हव्य॒वाह॒मुप॑ ब्रुवे । दे॒वाँ आ सा॑दयादि॒ह" इति ( ऋ० सं० ६–३–३६–३ )

**ईळिः** धातुः । धातुनिर्देशेऽत्रेकप्रत्ययः । **अध्येषणा-कर्मा** याचनार्थः । "सनिस्त्वध्येषणा याच्ञा" इत्यमरः । **व्याख्यातः** । "पुर एनं दधाती"ति ( नि० २-१२ ) **यज्ञश्च** व्याख्यातः "प्रख्यातं यजतिकर्मे"ति ( नि० ३-१९ ) **दानाद्वा** ददाति ह्यसावैश्वर्याणि । **दीपनाद्वा** दीपयति ह्यसौ तेजोमयत्वात् । **द्योतनाद्वेति** । धात्वन्यत्वमर्थैकत्वम् । **द्युस्थानो भवतीति वा** । पक्षेऽर्थवत्त्वं निर्वचनस्य । अथ-वाग्नीन्द्रावपि द्युस्थानौ । सामान्यं हि द्यौः स्थानं देवानाम् । तयोस्तु कर्माधिकारस्थाने विशिष्टे पृथिव्यन्तरिक्षे । **दातारं** देवानाम् । **और्णवाभस्तु जुहोतेः** "हु दानादनयोः" ( जु० प० ) इत्यस्य तृचि **होतेति** । **तस्य** एवाग्नेः **एषा अपरा ऋक् भवति** समानसंहितात्वाद्वितीयेत्यर्थः ॥ २ ॥ ( १५ )

"अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त । स दे॒वाँ एह व॑क्षति ॥" ( ऋ० सं० १-१-१-२ )

**अग्निरिति** । पूर्वैव समानार्षविनियोगच्छन्दस्का । यः **अग्निः पूर्वेभिः** पूर्वैः "बहुलं छन्दसि" ( पा० ७-१-१० ) इति भिस ऐसभावः । चिरन्तनैः **ऋषिभिः** भृग्वङ्गिरःप्रभृतिभिः । **ईड्यः** ईडितव्यः स्तुत्य इत्यर्थः । दुर्गस्तु ईडनं पूजन-मर्हतीत्याह । **नूतनैरुत** नवतरैरस्माभिरपि स्तुत्यः । **सः** अग्निः स्तुतः सन् **इह** अस्माकम् यज्ञे **देवान्** हविर्भुजः । **आवक्षति** आवहतु । "वह प्रापणे" ( भ्वा० प० ) आङ्-पूर्वस्ततो लोडर्थे छान्दसो लट् ( पा० ३-४-६ ) तस्य प्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः । यद्वा लेटि "सिब्बहुलं-" ( पा० ३-१-३४ ) इति सिप्प्रत्ययः । "लेटो-डाटौ" ( पा० ३-४-९४ ) इत्यडागमश्च ॥ २ ॥

अथास्य भाष्यम्—

**अग्निर्यः पूर्वैर्ऋषिभिरीडितव्यो वन्दितव्योऽस्माभिश्च नवतरैः स देवानिहावहत्विति ।**

अत्र—तद्वृत्तमुत्तरत्रापेक्ष्य यद्वृत्तमध्याजहार भाष्यकारो यत्तदोर्नित्यसंबन्ध इति दर्शयन् । आवहत्विति लोटा निराह भाष्यकारोऽपेक्षितामाशिषमपेक्ष्येति द्रष्टव्यम् ।

एवमाभ्यां पूर्वोक्ताभ्यामृग्भ्यां पार्थिवं ज्योतिरग्निशब्देना-भिधाय मध्यमोत्तमे अपि ज्योतिषी अग्निशब्देनाभिधास्यन् अग्निः पृथिवीस्थान इति पक्षमाक्षिपति—

**स न मन्येतायमेवाग्निरिति । अप्येते उत्तरे ज्योतिषी अग्नी उच्येते ततो नु मध्यमः ॥३॥(१६)**

१. त्रिस्थानवत्त्वस्याभिधानात्सर्वेषां द्युस्थानत्वाभिधानं कस्मि-श्चिदेकस्मिन्नेव पक्षे याज्ञिकोक्ते आत्मविदुक्ते वा । नैरुक्तमतेऽप्याह—अथवेति ॥

२. एतस्यां उपन्यासप्रयोजनं तु—अमुना प्रकारेण सर्वा एत-स्यामुदाहरणमेतत्कर्मयुक्ता ऋच उपेक्ष्याः ( उपगम्य निगमजात-मालोच्याः ) इत्युपप्रदर्शनार्थम् ॥

**स नेति** । **स** शिष्यः **अयमेव** पृथिवीस्थानः ( पार्थिवं ज्योतिः ) **अग्निः**अभिपदप्रतिपाद्यः । **इति** सुष्ठु **न मन्येत** न जानीयात् । कुतः ? यत **एते उत्तरे अपि** मध्यमोत्तमे **ज्योतिषी** वैद्युतः सूर्यश्च । **अग्नी उच्येते** । ततश्च शब्दार्थ-संबन्धनित्यताहानिः । यथाहि पार्थिवं ज्योतिः आवाहनक्रियायो-गात् **ततोनु** तथैव **मध्यमः** अन्तरिक्षस्थानोऽपि । अग्निशब्दे-नोच्यते । तत्कर्मयोगाच्च स एवाग्निरिति प्रतिभाति यथोत्तरयर्चा । एवमस्याग्न्यभिधानस्य संकीर्णत्वं प्रतिभाति ॥ ३ ॥ ( १६ )

"अ॒भि प्र॑वन्त॒ सम॑नेव॒ योषा॑ः कल्या॒ण्य॑ः स्मय॑मानासो अ॒ग्निम् । घृ॒तस्य॒ धारा॑ः स॒मिधो॑ नसन्त॒ ता जु॑षा॒णो ह॑र्यति जा॒तवे॑दाः" ॥ ३ ॥

( ऋ० सं० ३-८-११ )

**अभीति** । वामदेवस्यार्षं त्रिष्टुप् । सप्तमेऽहनि दशरात्रस्य आज्यशस्त्रे विनियोगः । **घृतस्य** उदकस्य ( निघं० १-१२-१० ) **धाराः** । **अग्निं** मध्यमं वैद्युताख्यम् **अभिप्रवन्त** अभि ( आभिमुख्येन ) प्रवन्त प्रवन्ते । वर्तमाने लङ् ( पा० ३-४-६ ) अडभावश्च ( पा० ६-४-७५ ) छान्दसः । नमन्ति प्रह्वीभवन्ति । यद्यप्ययं प्रवतिर्गतिकर्मसु पठितः ( निघं० २-१४-२४ ) तथापीहोपसर्गवलान्नमनार्थः संप-द्यते । कथम् ? **समनेव योषाः** । यथा समनाः समनसः समानमनस्काः ( एकस्मिन्भर्तरि यासां मनांसि वर्तन्ते ताः ) योषाः योषितः स्त्रियः । ता यथा **कल्याण्यः** रूपयौवनादि-गुणसंपन्ना भद्ररूपाः **स्मयमानासः** स्मयमाना ईषद्धसन्त्यो हर्षमुपजनयन्त्यो भर्तुस्तं प्रति परिष्वजनाय अभिनमेयुः, तथा तं ( मध्यमस्थानमग्निं ) **ताः** ( घृतस्योदकस्य धाराः ) **समिधः** समिन्धयन्त्यः सम्यग्दीपयन्त्यः सत्यः **नसन्त** व्याप्नुवन्ती-त्यर्थः । अत्रापि वर्तमाने लङ् (पा० ३-४-६) अडभावश्चार्षः ( पा० ६-४-७५ ) नसतिरिहाप्तेरर्थे वर्तते । नमतेर्वा । स च **जातवेदाः** मध्यमस्थानो वैद्युतोऽग्निः **जुषाणः** प्रीयमाणः **हर्यति** अभिकामयते । "हर्य गतिकान्त्योः" ( भ्वा० प० ) पुनः पुनः प्रेप्सतीत्यर्थः ॥ ३ ॥

१. अर्थान्तरवृत्तितायामभ्युपगतायामित्यर्थः । वस्तुतस्तु नात्र संबन्धानित्यता संभवति । नैव जहत्स्वार्थमभिधानमदोऽभिधेया-न्तरे वर्तते, किंतर्हि ? द्वे अभिधानशक्ती गौणी मुख्या च । तत्र गौणी गुणसाम्यादन्यत्रापि वर्तते यथा गौर्वाहीक इति । जाड्या-दिगुणसाम्याद्गौरित्येषात्र वाहीके ( ग्रामीणेऽप्राप्तप्रज्ञे ) वर्तते । एवमयमग्निशब्दो मध्यमयोर्ज्योतिषोर्गौण्या शक्त्या भक्त्या ( लक्ष-णया ) निपातसमाख्यया वा वर्तत इति वक्ष्यति उत्तरसूत्रान्ते ॥

२. अत्र दुर्गः—तदेवमसंकरेऽपि मुख्यगौणार्थवर्तिनां संकर इवामेधसां प्रतिभातीति ॥

३. प्रह्वो विनम्र उच्यते ॥

४. अत्रापिना प्रवन्त इत्यस्य संग्रहः ॥

अथास्य भाष्यम्—

**अभिनमन्त समनस इव योषाः । समननाद्वा संमाननाद्वा । कल्याण्यः स्मयमानासो अग्निमित्यौपमिकम् । घृतस्य धाराः । उदकस्य धाराः । समिधो नसन्त । नसतिराप्नोतिकर्मा वा नमतिकर्मा वा । ता जुषाणोहर्यति जातवेदाः । हर्यतिः प्रेप्साकर्मा, विहर्यतीति ॥**

**समनं समननाद्वा संमाननाद्वा** । पूर्वमनितेः प्राणनार्थस्य ( अ० प० ) उत्तरं मनोतेः ( त० आ० ) सुगममन्यत् । एवमेतस्मिन्मन्त्रे अग्निजातवेदसोर्युगपदभिधानात् । पार्थिवं घृताहुतिहवनस्योपमानोपमेयवैधर्म्याच्च युगपत्संभवाच्च उदकस्य धारणा वैद्युते । तत्रोपमानोपमेयसामञ्जस्याच्च सामर्थ्यात्प्रसिद्धिमुपरुन्ध्य घृतधाराशब्द उदकधारावचनः संपद्यते । पठितं चैतदेव सामर्थ्यमपेक्ष्योदकनामसु · "घृतं मधु" ( निघं १–१२ ) इति । एवं च यतोऽयमग्निशब्दोऽत्र सामर्थ्यान्मध्यमं ज्योतिराह तस्मात्स "सुष्ठु न मन्येतायमेवाग्निः पृथिवीस्थानोऽग्निपदप्रतिपाद्यो भवती"ति पूर्वेणाक्षेपवचनेनाभिसंबन्धोऽस्य ।

अथ यथोत्तममपि ज्योतिर्भवत्यग्निस्तथोदाहरति—

**"समुद्रादूर्मिर्मधुमाँउदारत् ॥"**

( ऋ० सं० ३–८–१०–१ )

**इत्यादित्यमुक्तं मन्यन्ते, "समुद्राद्ध्येषोऽद्भ्य उदेती"ति च ब्राह्मणम् ॥**

**समुद्रादिति** । अस्य–"उपांशुना सम्मृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥" इति शेषः । इयं पूर्वैयैव समानार्षविनियोगा सौरी । **समुद्रात्** समुद्रवणधर्मेण उदकसंघातात् ( सागरात् ) **ऊर्मिः** छादकः सर्वस्य प्रकाशेन, "ऊर्णुञ् आच्छादने" ( अ० उ० ) "ऊर्णोतेर्नुलोपश्च" ( उ० १–३० ) बाहुलकान्मिरित्यपि भवति । **मधुमान्** उदकवान्सूर्यः । मधु इत्युदकनाम ( निघं० १–१२–११ ) "आदित्याज्जायते वृष्टि" रिति स्मृतेः । **उदारत्** उदेति ( उद्गच्छति ) अहन्यहनि ॥ अथ प्रथमजन्माभिप्रेत्याह—स पुनर्जातः सन् **अंशुना** चन्द्रमसा **अमृतत्वम्** अमतभावम् **उप सम् आनट्** उपसंव्याप्नोति । "अश् अदर्शने" ( दि० प० ) वर्तमाने लुङ् ( पा० ६–४–६ ) "मन्त्रे घस–" ( पा० २–४–८० ) इति च्लेर्लुक् । संयोगान्तलोपे ( पा० ८–२–२३ ) व्रश्चादिषत्वे ( पा० ८–२–३६ ) जश्त्वम् । "छन्दस्यपि दृश्यते" ( पा० ६–४–७३ ) इत्याडागमः । स चेह व्याप्तिकर्मसु पठितः ( निघं० २–१८–४ ) "सोऽस्यान्नं तेन न म्रियते यमक्षिति मक्षितयः पिबन्ति" (    ) इत्युक्तम् । कथममृतत्वं तेन समानट् ? इति–**घृतस्य** उदकस्य हविषो वा **यत् नाम** नमनं **गुह्यं** रहस्यमविज्ञातं केनचिदपि अत्र **अस्ति** विद्यते चन्द्रमसि तत्र **देवानां** रश्मीनां **जिह्वा** तदमृतं नित्यमास्वादयन्ति देवास्तेन न म्रियन्ते । तेषाम् **अमृतस्य** अमरणत्वस्य **नाभिः** नहनं स हेतुरित्यर्थः । अत्र "दीर्घादटि समानपादे" ( पा० ८–३–९ ) इति नस्य रुत्वे यत्वयलोपौ । "आतोऽटि नित्यम्" ( पा० ८–३–३ ) इत्यनुनासिके मधुमाँ इति भवति ॥ १ ॥

नन्वेवं तदुदाहरणमसमर्थं नह्यस्मिन्मन्त्रेऽग्निशब्दोऽस्ति । योऽग्निमादित्यस्य ख्यापयेत् । तत्राह—**इत्यादित्यमुक्तं मन्यन्ते नैरुक्ताः** । इति अनेन मन्त्रेण । **उक्तम्** अग्निरूपतया । तदेतन्नास्यादित्यदैवतत्वेन शौनकोक्तेनापि तु–आदित्योऽनेन मन्त्रेणोच्यत इति स्फुटमस्यैव मन्त्रस्य–

**"समुद्राद्ध्येषोऽद्भ्य उदेति" इति च ब्राह्मणम् ॥**

न हि पार्थिवः समुद्रादुदेति । तस्योदकेन विरोधात् । तस्मादादित्योऽत्राग्निरभिप्रेत इति नासमर्थमुदाहरणम् ।

**अथापि ब्राह्मणं भवति "अग्निः सर्वा देवता" इति । तस्योत्तरा भूयसे निर्वचनाय ॥ ४ ॥ (१७)**

अथ खलु अयमपामपि सङ्करोऽग्निशब्दस्य, यदेतद्ब्राह्मणं भवति "अग्निः०० ता इति । तस्य च ब्राह्मणस्य **उत्तरा** ऋक् **भूयसे** बहुतराय **निर्वचनाय** भवति ॥ ४ ॥ (१७)

**"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" ॥ ६ ॥**

( ऋ० सं० २–३–२२ )

अस्यवामीयैषा सौरी त्रिष्टुप् । दैर्घतमसी । 'इन्द्रं मित्रं वरुणम्' इत्येतैरभिधानैः । **अग्निमाहुः** वदन्ति तत्त्वविदः । **अथो** अपिच योऽयं **दिव्यः** दिविजः (दिवि जायते) **सुपर्णः** सुपतनः **गरुत्मान्** गरणवान् ( स्तुतिभिस्तद्वान् ) रसानां वा

१. सायणेन त्वयं पार्थिवपरतयापि व्याख्यातो दुर्गेण तु भाष्यमनुसृत्य यथा व्याख्यातं तथोपन्यस्तमेतत् ॥

२. यद्यपि शौनकेन देवतानुक्रमण्यां नानादेवताभिवादोऽस्यामुक्तस्तथापि भाष्यकारेण सौरीति कृत्वोदाहृतेति सूक्तमेवेदं सौरीति बोध्यम् ॥

१. तथा चात्र दुर्गः—नासमर्थमिदमुदाहरणम् । कस्मात् ? सूक्तेऽग्निलिङ्गमेकेषां शाखिनामस्ति "इमं स्तनम्" इत्यत्र । "अपां प्रपीनमग्ने" इति । निविच्चास्मिन्सूक्ते धीयते साचाग्निलिङ्गा इति ॥

२. दीर्घतमसा दृष्टा ॥

३. अत्र सायणः–अत्र ये केचित् "अग्निः सर्वा देवता" इत्यादि श्रुतितः अयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वा अग्नेरेव सार्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति तत्पक्षे ( प्रथमो )ऽग्निशब्द उद्देश्यस्तमुद्दिश्येन्द्रायात्मकत्वं कथयन्ति इत्याह ॥

गरिता आदित्यः। अयमपि सः एवाग्निरित्याहुः। किं बहुना— इममेवाग्निम् **एकम्** एव वस्तुतः **सत्** सन्तम्। लिङ्गव्यत्यय आर्षः। एकं महान्तमात्मानमनन्यत्वेन पश्यन्तः **विप्राः** मेधाविन आत्मविदः ( देवतातत्त्वविदश्च ) **बहुधा** तत्तत्कारणेनेन्द्राद्यात्मानं **वदन्ति**। किंच तमेव वृष्ट्यादिकारणमादित्यात्मानम् **अग्निं यमं** नियन्तारं **मातरिश्वानम्** अन्तरिक्षे श्वसन्तं वायुम् **आहुः** वदन्ति ॥ ६ ॥

अथास्य भाष्यम्—

**इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तं दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा ॥**

**एकमिति**। "एकैव वा महानात्मा देवता स सूर्य इत्याचक्षत" इत्याम्नानात्। सूर्यस्य च ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति। अग्निरेवासाविति युक्तं यतस न मन्येतायमेवाग्निरिति पूर्वः पक्षः—

अथ प्रतिसमाधानम्—सत्यमेतत् सर्वं एतेऽग्निशब्देन स्तूयन्ते न तु प्रधानतः, किं तर्हि ? गुणतः स्तूयन्ते इत्याह—

**यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः ॥**

**तु**—शब्दः पूर्वपक्षव्यावर्तकः ( परमतव्युदासार्थकः ) **यः सूक्तं भजते** प्रधानतः स्तुत्यत्वेनेत्यर्थः। **यस्मै** च **हविर्निरुप्यते** चोदनासामर्थ्यात्। "आग्नेयमष्टाकपालं निर्वपेदि"ति। **अयमेव सोऽग्निः** पार्थिवः। अग्निशब्दस्य विशेषतोऽत्र लोके वेदे च प्रसिद्धेः। अग्निमानय अग्निं प्रणय इत्युक्ते एतमेव हि लोकः प्रतिपद्यते, न मध्यमं नाप्युत्तमं, न च प्रसिद्धिबाधो न्याय्यः। शास्त्रचोदिता अपि खदिरपलाशादयो लोकप्रसिद्धित एव प्रतीयन्ते। तस्मादग्निशब्देन पार्थिवस्य ज्योतिषो मुख्यः संबन्धः, गौण इतरयोर्मध्यमोत्तमयोः। यथा चाग्निशब्देन मध्यमोत्तमयोः, न तथा मध्यमोत्तमाभ्यां विद्युत्सूर्यशब्दाभ्यां लोकप्रसिद्ध्या मुख्यः संबन्धः। तस्मादेवमुच्यते।

एतदेव चात्र विचारे प्रयोजनम्—यदाग्नेयेषु सूक्तेषु हविःसंप्रदानेषु स्तुत्यत्वेन भोक्तृत्वेन चैतमेवोपासीतेति।

अथ पुनर्योऽयं मध्यमोत्तमयोर्ज्योतिषोरग्निप्रवादः स कथम् ? इत्यत आह—

**निपातमेवैते उत्तरे ज्योतिषी अनेन नामधेयेन भजेते ॥ ५ ॥ (१८)**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० सप्तमाध्यायस्य चतुर्थः पादः ॥ ७ ॥ ४ ॥**

१. एतेन मातरिश्वापदं निरुक्तं भवति। माताऽन्तरिक्षं तत्प्रभवत्वाद्वायोः। श्वसतेः सलोपश्च निपातनात्। अन्नन्तः॥

निपातो नाम अप्राधान्यं भक्तिर्लक्षणेत्यर्थः। लक्षणया ( लक्षितगुणयोगेन ) **एते उत्तरे** मध्यमोत्तमे **ज्योतिषी**। **अनेन नामधेयेन** अग्निरित्यनेन **भजेते** संबध्येते। तमेवं **निपातं** स्त्रीयाग्निसंबन्धादभिधेयरूपार्थाच्छब्दस्य प्रच्यावनं भक्तिशब्देन शास्त्रीयैर्व्यवह्रियमाणं "विद्यादि"ति शेषः। यद्वा **निपातमप्राधान्यमेव भजेते उत्तरे एते ज्योतिषी अनेन नामधेयेना**ग्निनेति संपुटितो वाक्यार्थः ॥ ५ ॥ (१८)

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० सप्तमाध्यायस्य चतुर्थः पादः ॥ ७ ॥ ४ ॥

## सप्तमाध्यायस्य पञ्चमः पादः।

अथ प्रथमोपक्रमे अग्निर्जातवेदा वैश्वानर इति त्रयः शब्दाः समाम्नाताः ( नि० ५-१ ) तत्र प्राथमिकमग्निशब्दं निरुच्य तदीयं देवतातत्त्वं च विविच्याग्रेतनं द्वितीयं निर्ब्रवीति—

### जातवेदाः कस्मात् ? जातानि वेद ॥

**जातवेदा** इति वक्तव्यं स पुनरेष महाभाग्यात्कर्मपृथक्त्वादग्निरेव। अथवा—पृथगभिधानस्तुल्यन्तरसंबन्धाद्देवतान्तरमस्तु—परमेष **कस्मात्** जातवेदा इत्युच्यते ?। अत्रोत्तरं **जातानि वेद** इति। स हि जातानि सर्वाणि भूतानि वेद जानाति लोकपालत्वात्। नहि तदस्ति जातमस्मिँल्लोके यदसौ न वेद। सर्वज्ञ इत्यर्थः। जातशब्दोपपदाद्वेत्तेर्विन्तेर्वा असुन् ( उ० ४-१८८ )

### जातानि वैनं विदुः ॥

अथ **वा जातानि** सर्वाणि भुवनानि **एनं विदुः** जानन्ति। स एव धातुः कारकान्तरं केवलम्। पूर्वं कर्तरि इह च कर्मण्यसुन्। जातैः प्राणिसंघैरसौ विद्यते ज्ञायत इति।

### जाते जाते विद्यत इति वा ॥

अथ **वा जाते जाते** सर्वस्मिन्भूतजाते **विद्यत इति** जातवेदाः। सत्तार्थोऽत्र विदिति विशेषः। न तदस्ति जातं यत्रासौ नास्ति।

### जातवित्तो वा जातधनः ॥

जातशब्दः पूर्वपदं **वित्त**शब्द उत्तरपदं जातमस्य वित्तमिति जातवेदा इति दुर्गः। जातं वेदो हविर्लक्षणं धनम् ( निघं० २-१०-४ ) ऐश्वर्यादि इतरद्वा यस्य स इति वयम्। "अत्वसन्तस्य" ( पा० ६-४-१४ ) इति दीर्घ उपधायाः।

### जातविद्यो वा जातप्रज्ञानः ॥

जातमात्र एव विद्योतते प्रज्ञानस्वभावत्वादिति **जातविद्यः** सन् जातवेदाः। पृषोदरादिः ( पा० ६-३-१०९ ) अथ **वा जातं** वेदः **प्रज्ञानं** यस्य सः। यद्वा जातं वेदो विचारणं यस्य सः। वैश्वानरविषयाऽपि च कृतविचार इत्यर्थः।

१. मूलं त्वर्थनिर्वचनपरम् ॥

विन्दतेरप्येष निर्वक्तुं शक्य इत्यत्रार्थे—

**"यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वम्" इति ब्राह्मणम् ॥**

**यत्** असौ **तत्** तदा **जातः** जातमात्र एव निसर्गतः **पशून्–अविन्दत** अलभत ।

यतश्चैतदेवम्—

**तस्मात्सर्वानृतून्पशवोऽग्निमभिसर्पन्ति इति च । तस्यैषा भवति ॥ १ ॥ ( १९ )**

**तस्मात्** अयत्नेऽपि स्वाम्ययमस्माकमिति मन्यमानाः **पशवः** । **सर्वान् ऋतून्** प्रत्यपि ग्रीष्मे **अग्निम्**ऊष्माणम् **अभि** सम्पद्य **सर्पन्ति** अभिवर्धन्तेऽन्नप्रत्ययैः पुष्टिं लभन्त इत्यर्थः । वसन्तत एव शिशिरेऽभिभूतानां पशूनां सर्वाङ्गीणं सुखमुत्पद्यत इत्यर्थः । **तस्य** जातवेदसः स्तुत्युदाहरणम् **एषा ऋक् भवति** ॥ १ ॥

**"जा॒तवे॑दसे सुनवाम॒ सोम॑मरातीय॒तो नि द॑हाति॒ वेदः॑ । स नः॑ पर्ष॒दति॑ दु॒र्गाणि॒ विश्वा॑ ना॒वेव॒ सिन्धुं॑ दुरि॒ताऽत्य॒ग्निः" ॥ १ ॥**

( ऋ० सं० १-७-७ )

मरीचिपुत्रस्यात्रेरार्षं त्रिष्टुप् आग्नेयी । **जातवेदसे** जातानामुत्पत्तिमतां सर्वेषां वेदित्रे अग्नये लतारूपं **सोमं सुनवाम** अभिषुणवाम । जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः । **सः अग्निः अरातीयतः** अरातिं शत्रुमिवाचरतः शत्रोर्**वेदो** धनं **निदहाति** नितरां अत्यन्तं निश्चयेन वा दहतु भस्मीकरोतु । "दह भस्मीकरणे" ( भ्वा० प० )ऽस्तो लेटि आडागमः ( पा० ३-४-९४ ) अपि च सोऽग्निः **नः** अस्मान् **विश्वा** विश्वानि सर्वाणि । शेर्लोपः (पा० ६-१-७०) **दुर्गाणि** दुर्गमनानि भोक्तुमशक्यानि दुःखानि **अतिपर्षत्** अतिपारयतु "पॄ पालनपूरणयोः" ( जु० प० ) अस्मादन्तर्भावितण्यर्थाल्लेट्याडागमः । "सिब्बहुलं लेटि" ( पा० ३-१-३४ ) इति सिम्मध्ये । अतिक्रमय्य दुःखरहितं सुखं प्रापयतु । अत्र दृष्टान्तः—**नावेव सिन्धुम्** यथा कश्चित्कर्णधारः ग्राहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् । तथा **दुरिता**नि । "शेश्छन्दसि बहुलं" ( पा० ६-१-७० ) इति लुक् । दुःखहेतुभूतानि पापानि । अस्मानभिरतितारयतु । दुःखनिमित्तात्पापादप्यस्मानुत्तारयत्वित्यर्थः । अत्रोपसर्गबलेन योग्यक्रियाऽध्याहारः ॥ १ ॥

अथास्य भाष्यम्—

**( जातवेदस इति जातवेदसां चैवं जातवेदसेऽर्चाय सुनवाम सोममिति प्रसवायाभिषवाम सोमं राजानममृतमरातीयतो यज्ञार्थमनिसोनिदहाति निश्चयेन दहति भस्मीकरोति । सोमो ददिल्यर्थः । सनः पर्षदतिदुर्गाणि विश्वानि दुर्गमाणि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति । तस्यैषाऽपरा भवति ॥ २ ॥ ) ( प्रक्षिप्तम् )**

सुगमम् ॥ २ ॥

**"प्र नू॒नं जा॒तवे॑दस॒मश्वं॑ हिनोत वा॒जिन॑म् । इ॒दं नो॑ ब॒र्हिरा॒सदे॑ ॥"** ( ऋ० सं० ८-८-४६-१ )

श्येनस्याग्निपुत्रस्यार्षं गायत्री । आग्नेयी प्रातरनुवाकाश्विनयोर्विनियुक्ता । हे स्तोतारः! यूयमेतं **जातवेदसं** जातानां वेदितारं जातधनादिकं वा **अश्वं** कर्मभिः सर्वमेतज्जगदश्नुवानं व्याप्नुवन्तं **वाजिनं** वेजनवन्तं चञ्चलमर्चिर्भिः । अन्नवन्तं वा । अथवा अश्वमिवेति लुप्तोपममेतत् । योगारूढैर्बलीयस्त्वात् । वाजिनं वेजनवन्तं ज्वलनस्वभावं शीघ्रम् । **प्रहिनोत** प्रहिणुत प्रवर्धयत, प्रेरयत वा स्तुतिभिः । "हि गतौ वृद्धौ च" ( स्वा० प० ) अस्माल्लोटि तशब्दस्य "तप्तनप्तनथनाश्च" ( पा० ७-१-४५ ) इति तनादेशे गुणः । किमर्थम् ? **नः** अस्माकम् **इदं बर्हिः** बर्हिषोपलक्षितं कर्म । बर्हिरेव वाऽऽस्तीर्णम् **आसदे** आसत्तुम् प्राप्तुम् बर्हिरासीदत्वित्यर्थः । कृत्यार्थे केन्प्रत्ययः (पा०३-४-१४) कथं नामास्मदभिमतार्थसिद्ध्यर्थमाभिमुख्येन सीदेदित्येवमर्थं प्रहिणुतेति ॥ १ ॥

अथास्य भाष्यम्—

**प्रहिणुत जातवेदसं कर्मभिः समश्नुवानमपि वोपमार्थे स्यात् अश्वमिव जातवेदसमितीदं नो बर्हिरासीदत्विति ॥**

इदानीमुत्सर्गं दर्शयति प्रयोजनार्थम्—

**तदेतदेकमेव जातवेदसं गायत्रं तृचं द(दा)शतयीषु विद्यते ॥**

---

१. तत्र यवसोदकसंप्राप्त्या ते बाढं पुष्टाङ्गा भवन्त्यत्र ग्रीष्मागम एव हेतुः ॥

२. एतत्सूत्रमेव दुर्गेण न धृतम्, अध्यायान्त उपसंहारसूत्रेऽपि न प्रतीकयति, भाष्यपाठोऽप्यस्य बहुत्रासमञ्जस इव प्रतिभाति । जातवेदस्यं गायत्रं छन्दोऽपि नास्त्येति उपेक्षितो भवेत्परं प्राचीनपुस्तकस्थत्वादिहोट्टङ्कितमस्माभिरपि ॥

३. न विद्यते रातिर्दानमस्मिन्नित्यरातिः शत्रुस्तमिवाऽऽत्मानमाचरतीत्यर्थे "उपमानादाचारे" ( पा० ३-१-१० ) इति क्यच् । क्यजन्ताल्लटः शतरि रूपम् ॥

१. बाहुलकबलेनात्र कृत्यार्थे विहितस्य तुमर्थेऽपि विधानं बोध्यम् ॥

**तदिति** दशतयीष्वस्यानुस्मृतये परोक्षनिर्देशः । **एतदिति** प्रत्यक्षेण–प्र नूनमित्येतया सन्निधीकृत्योपदिशति । **गायत्रमिति** छन्दोनिर्देशो विवक्षितप्रयोजनार्थः । **तृचमित्येतत्सूक्तस्य** संख्यानियमः । तिस्र ऋचोऽस्मिन्निति । "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि" (पा० ६-१-३४ वा०) इति त्रेः संप्रसारणं पूर्वरूपत्वं च । द(दा)शतयीषु सर्वास्वपीति निर्धारणे सप्तमी । **विद्यते** अस्ति ।

ततः किमित्यपेक्षायामाह—

**यत्तु किंचिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते ॥**

**आग्नेयं** मन्त्रजातं गायत्रे एव छन्दसि अजातवेदोलिङ्गमपि **तत् जातवेदसानाम्** मन्त्राणां **स्थाने** विनि**युज्यते** शास्त्रेण । अयमर्थः–बहुभिरेतैर्गायत्रच्छन्दोयुक्तैर्जातवेदस्यैर्मन्त्रैरधियज्ञे प्रयोजनमस्ति । न चैते बहवः सन्ति सर्वास्वपि दशतयीषु एतदेकं तृचं सूक्तमुक्त्वेति । इत्थं च कर्मपृथक्त्वान्महाभाग्याद्वाऽग्निरेव जातवेदा इति स्थितं भवति । इतरथा हि प्रयोगवैकल्यं स्यात् । न चान्यं देवमन्यस्य स्थाने प्रयुज्यते । यथा चायमनर्थान्तरमग्निर्जातवेदा एतस्माद्विधिलिङ्गात्तथा वैश्वानरप्रभृतयोऽपीत्युपेक्ष्यम् ।

**स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते ततो नु मध्यमः ॥**

**"अभिप्रवन्त समनेव योषाः" ॥**

**तत्पुरस्ताद्व्याख्यातम् ॥**

अत्र **न स मन्येत** इत्यादिविचारः पूर्ववत् । केवलं "अभिप्रवन्त" इत्यत्राग्निपदविचारेऽग्निशब्दो विशेष्य आसीत्, जातवेदःशब्दोऽस्य गुणपदमिति । इह तु जातवेदः पदविचारे-पुनः "अभिप्रवन्त" इत्यस्मिन्नेवापात्ते मन्त्रे गुणपदमग्निशब्दो जातवेदःशब्दस्येत्येतावदुपेक्ष्यम् ॥

**अथासावादित्यः ॥**

**"उदु त्यं जातवेदसम् ॥"**

(ऋ० सं० १-४-६-१) इति ।

**तदुपरिष्टाद्व्याख्यास्यामः ॥**

यथा तु पूर्वस्मिन् "समुद्रादूर्मिः" इति, आदित्यस्याग्नित्वोपपत्तावुदाहरणं, तथेह **"अथासावा००इति"** जातवेदस्त्वोपपत्तौ **तत्** एतत्प्रतिपदमुदाहरणम् **उपरिष्टाद्व्याख्यास्यामः** । "जातवेदसं सूर्यमुद्वहन्तीति तु विशेषणविशेष्यसामानाधिकरण्यैकवाक्यप्रसिद्ध्या खलिङ्ग मसिद्धमस्मिन्मन्त्रे जातवेदाः सूर्यः" इति । तस्मात्सुष्ठूक्तं यत् **स न मन्येतायमेवाग्निर्जातवेदा** इति । इति पूर्वपक्षः ।

**यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदाः । निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ ३ ॥ (२०)**

**इति श्रीमद्यास्कमुनि० प्र० नि० शास्त्रे दै० का० सप्तमाध्यायस्य पञ्चमः पादः ॥ ७ ॥ ५ ॥**

अथ प्रतिसमाधानम् **यस्तु००वेदाः** इति पूर्ववत् । प्रसिद्धिरेव विशेषहेतुः । यद्यपि मन्त्रदर्शनमविशिष्टं त्रयाणामपि ज्योतिषां जातवेदस्त्वे, तथापि पार्थिवोऽग्निरितरयोः प्रसिद्ध्या विशेष्यते । जातवेदस्त्वं हि यथाप्रसिद्धमस्मिन्नग्नौ, न तथा वैद्युते, नापि सूर्ये इति । **एतेन** जातवेदा इत्यनेन **नामधेयेन** नाम्ना **भजेते** इति व्याख्यातम् ॥ ३ ॥ (२०)

इति श्रीमद्यास्क० निरुक्तविवृतौ दै० कां० सप्तमाध्यायस्य पञ्चमः पादः ॥ ७ ॥ ५ ॥

---

## सप्तमाध्यायस्य षष्ठः पादः ।

अथ यथोपक्रमं वैश्वानरपदे देवतातत्त्वं विवेक्ष्यन् तन्निर्ब्रवीति—

**वैश्वानरः कस्मात् ? विश्वान्नरान्नयति ॥**

इतो लोकादमुं लोकं हेतुकर्तृत्वेन । सर्वासु प्रवृत्तिषु अयमेव नरान्नयति । यथा पञ्चाग्निविद्यायामुच्यते–"अपि वा सति तस्मिन्सर्वाः प्रवृत्तयः फलवत्यो नराणां भवन्तीति हेतुकर्तृत्वेन, सर्वासु प्रवृत्तिष्वयमेव नरान्नयति प्रवर्तयतीति वैश्वानर" इति । नयतीत्यर्थवचनम् । धातुस्तु "नॄ नये" (भ्वा० प०) इति । ततश्च नरति नयतीति नरः । पचाद्यच् (पा० ३-१-१३४) विश्वेषां नरः विश्वानरः । "नरे संज्ञायाम्" (पा० ६-३-१३०) इति पूर्वपदस्य दीर्घः । यद्वा कर्मण्युपपदेऽप्यज् बाहुलकात् (पा० ३-३-११३) इति ॥

**स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते ततो नु मध्यमः ॥**

**"अभि प्रवन्त समनेव योषाः" ॥** इति ।

**तत्पुरस्ताद्व्याख्यातम् । यस्तु सूक्तं भजते तस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदाः । निपात-**

---

१. ऋक्शब्दे परे त्रेः संप्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यमिति वार्तिकार्थः ॥

२. तथा चानुक्रमण्यां शौनकः–"प्रनूनं तृचमाग्नेयं श्येनो जातवेदस्यम्" इति ॥

३. यत्तु इत्याद्युक्तौ च । ततश्चास्मात् तृचात्पूर्वतनं "प्राग्नय" इति सूक्तमेवमन्यदपि "मण्डलादिष्वाग्नेयमैन्द्रादि"ति यच्छौनकेनानुक्रान्तं तत्सर्वमप्याग्नेयं जातवेदस्यमिति मन्तव्यम् ॥

१. अत्र देवराजः–इदमर्थेन विश्वानराणां नेतृत्वेन संपन्नत्वे वा कर्मार्थप्रणेतृत्वेन सम्पादिनोऽस्य वैश्वानरः ॥

मेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ ३ ॥ ( २० )

अथासावादित्यः ॥

"उदु॒त्यं जा॒तवे॑दसम्" ॥

( ऋ० सं० १-४-६-१ ) इति ।

तदुपरिष्टाद्व्याख्यास्यामः ॥

इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० सप्तमाध्यायस्य पञ्चमः पादः ॥ ७ ॥ ५ ॥

अत्र न स मन्येत इत्यादि विचारः पूर्ववत् । केवलं "अ॒ग्निर्प्र॑वन्तु-" इत्यत्राऽग्निपदविचारेऽग्निशब्दो विशेष्य आसीत् जातवेदःशब्दोऽस्य गुणपदमिति । इह तु जातवेदःप्रदविचारे पुनः "अ॒ग्निर्प्र॑वन्तु" इत्यस्मिन्नेवोपात्ते मन्त्रे गुणपदमग्निशब्दो जातवेदःशब्दस्येत्येतावदुपेक्ष्यम् ।

यथा तु-पूर्वस्मिन्—

विश्वे एनं नरा नयन्तीति वा ॥

अथ वा एनं कर्मकारकम् । स तासु तासु क्रियासु नरैरङ्गभावं नीयमानः कर्म संपद्यते । तथाच नरतेः कर्मणि "ऋदोरप्" ( पा० ३-३-५७ ) षष्ठीसमासः ।

अपि वा विश्वानर एव स्यात् । प्रत्यृतः सर्वाणि भूतानि, तस्य वैश्वानरः । तस्यैषा भवति ॥ १ ॥ ( २१ )

अथ वा विश्वानर एव कश्चित्स्यात् । स पुनः कस्मात् ? प्रत्यृ००तानि । विश्वानि ह्यसौ भूतानि प्रतिऋतः प्रतिगतः प्रविष्ट इत्यर्थः । तथाच-विश्वान् जन्तून् अरः । "ऋ गतौ" ( जु० प० ) इत्यस्य छान्दसत्वात्पचाद्यजुपपदविभक्त्यश्चालुक् । स प्राण उच्यते तेन जन्यमानत्वात् तस्य अपत्यं वैश्वानरः । "प्राणाद्धि बलान्मथ्यमानो हि जायते" इति ब्राह्मणम् । तस्य वैश्वानरस्य एषा प्राधान्यस्तुतिर्ऋक् उदाहरणं भवति ॥ १ ॥ ( २१ )

"वै॒श्वा॒न॒रस्य॑ सुम॒तौ स्या॑म॒ राजा॒ हि कं॒ भुव॑नानामभि॒श्रीः । इ॒तो जा॒तो विश्व॑मि॒दं वि च॑ष्टे वैश्वान॒रो य॑तते॒ सूर्ये॑ण" ॥ १ ॥

( ऋ० सं० १-७-६ )

कुत्सस्यार्षं त्रैष्टुभमाग्नेयम् । षष्ठेयाभिप्लवयोश्चतुर्थपञ्चमयोरह्नोराग्निमारुतस्य प्रतिपत् ( १ ) वैश्वानरस्य विश्वेषां नराणां लोकान्तरनेतृत्वेन स्वामित्वेन वा संबन्धिनोऽग्नेः सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ स्याम अनुग्राह्यत्वेन वर्तमाना भवेम । कमिति पादपूरणम् । स हि वैश्वानरः अभिश्रीः अभिश्रयणीय आभिमुख्येन सेवितव्यः सन् भुवनानां सर्वेषां भूतजातानां राजा स्वामी भवति । यः वैश्वानरः अग्निः । इतोऽस्मादरणिद्वयाज्जातः जातमात्र एव विश्वमिदं सर्वं जगत् विचष्टे अभिपश्यति विशेषेण वा पश्यति । यश्च प्रातरुद्यता सूर्येण यतते संयतते सङ्गच्छते । "उद्यन्तं वा आदित्यमग्निरनुसमारोहति" ( ब्रा० २-१-९ ) इति तैत्तिरीयकम् । यद्वा पार्थिवस्याग्नेस्तेजांसि उद्गच्छन्ति, सूर्यकिरणाश्चाधोमुखं प्रसरन्ति । तयोः सङ्गमनं दृष्ट्वा-"वैश्वानरो यतते सूर्येण" इति ऋषिर्ब्रूते । तथाच वक्ष्यति-"अमुतोऽमुष्य रश्मयः । प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यदि"ति ( ७-६-७ ) एवंभूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति संबन्धः ॥ १ ॥

अथास्य भाष्यम्—

इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्येण । राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति ॥

कल्याण्याम् उपकारप्रवृत्तायामात्मनो यथाभिमतार्थसाधिकायाम् । स्यामेत्येतदाशास्महे । लोकोऽपि हि स्तूयत एव पूर्वं पश्चात्प्रार्थ्यते इत्याचार्यः पश्यन् मन्त्रेष्वप्ययमेव न्याय इत्युपदर्शनार्थं पदानां क्रमं विभेद । कल्याण्यां मतौ स्यामेत्याशिषा समापयाञ्चकार । अनेकतिङि चैतस्मिन्मन्त्रे प्रतितिङ्वाक्यभेदे प्राप्ते राजाय इत्येवमेकवाक्यतया सामर्थ्यमुन्नावयाञ्चकार । एकोऽत्रार्थपति-वैश्वानरो यतः कल्याणी आशास्यते मतिः । तमेभिः शब्दैरभिष्टौति संतिष्ठते स्तुतिरिति । अयमेकवाक्यतान्यायः प्रायशो मन्त्रेषु ।

तत्को वैश्वानरः ? मध्यम इत्याचार्याः । वर्षकर्मणा ह्येनं स्तौति ॥ २ ॥ ( २२ )

अतः परं विचारो देवतातत्त्वे । तदिति वाक्योपादाने । कः अयं वैश्वानरः ? इति कुतः संशयः ? आगमविप्रतिपत्तेः । विश्वानरविद्याया "आत्मा" इत्यात्मविदः । इन्द्रादित्यवाय्वाकाशोदकपृथिव्यादयश्च पृथक्पृथगेव वैश्वानरत्वेन विज्ञायन्ते । अपिच मध्यमः मध्यमस्थानस्थो वैद्युतोऽग्निर्वायुरिन्द्रो वा वैश्वानर इति नैरुक्ताः केचिद् आचार्याः मन्यन्ते । कस्मात् ?

१. सायणस्तु-व्यूढूलस्य चतुर्थेऽहन्याग्निमारुते इदं सूक्तं वैश्वानरीयनिविद्धानमित्याह । प्रतिपत्प्रारम्भः ॥

१. इह पृथिवीलोकादोषधिवनस्पतिभ्य इति दुर्गः ॥

२. यश्चाभिद्रष्टव्य उपकारकत्वेन, दर्शयति वा प्रकाशकत्वेनेति दुर्गः ॥

३. क्वचित्पुनः प्रत्याख्यातमर्थमपेक्ष्येति प्रायः पदम् । एकस्मिन्नपि मन्त्रे वाक्यभेदो दृश्यते । तथथा-"कृ॒चा॑ स्वः॒ पोष॑म्" ( ऋ० सं० ८-२-२४-६ ) इत्यत्र प्रतिपादितं ( नि० १-३-८ ) वाक्यसमाप्तिः । अन्येषामपि च मन्त्राणामाकाङ्क्षितार्थिनां परस्परमेकवाक्यता भवतीत्येतदपि चोपप्रदर्शयिष्यति "येना॑ पाव॒क॒ चक्ष॑सा" ( ऋ० सं० १-४-८-१ ) इत्यत्र ( १२-२२ )

**वर्षकर्मणा ह्येनं स्तौति** मन्त्रदृक् । हिशब्दो हेत्वर्थः । वर्षकर्मणैवैनं वैश्वानरं यस्मान्मन्त्रदृक्स्तौति । तस्यैव हि मध्यमस्य वर्षकर्मणा संस्तव उपपद्यते न तूभेः । पृथिवीस्थानत्वात् इत्यर्थः ॥ २ ॥

कथमित्यत आह—

**"प्र नू म॑हि॒त्वं वृ॑ष॒भस्य॑ वोचं॒ यं पू॒रवो॑ वृत्र॒हणं॒ सच॑न्ते । वै॒श्वा॒न॒रो दस्यु॑म॒ग्निर्ज॑घ॒न्वाँ अधू॑नो॒त्काष्ठा॒ अव॒ शम्ब॑रं भेत्" ॥ ६ ॥**

( ऋ० सं० १-४-२५ )

नोधस आर्षं त्रिष्टुप् । वैश्वानरोऽग्निर्देवता । अन्येऽपि **पूरवः** मनुष्याः ( निघं० २-३-३० ) वर्षकामाः **वृत्रहणं** मेघहनम् ( निघं० १-१०-२८ ) ( आवरकस्य मेघस्य हन्तारं ) **यं** वैश्वानरं स्तुतिभिः **सचन्ते** सेवन्ते । तस्य **वृषभस्य** अपां वर्षितुर्वैश्वानरस्य **महित्वं** महाभाग्यं **नु** क्षिप्रं **प्रवोचं** प्रब्रवीमि । वर्तमाने लुङि ( पा० ३-४-६ ) "अस्यतिवक्ति" (पा० ३-१-५२) इति च्लेरङादेशः । "वच उम्" (पा० ७-४-२०) इत्युमागमो गुणः । "बहुलं छन्दस्यमाङ्योगेऽपि" (पा० ६-४-७५) इत्यडभावः । किं तदित्यत आह—अयं **वैश्वानरोऽग्निः दस्युं** दासयितारमुपक्षयितारं रसानाम् । "दसु उपक्षये" ( दि० प० ) शुष्यन्ति हि तदनुद्गमे सस्यानि । कर्मणां वोपदासयितारमनावृष्टिद्वारेण ( राक्षसादिकं ) **जघन्वान्** हतवान् । हन्तेर्लिटः क्वसुः "अभ्यासाच्च" ( पा० ७-३-५५ ) इत्यभ्यासादुत्तरस्य हकारस्य कुत्वं घकारः । "विभाषा गमहन" ( पा० ७-२-६८ ) इति विकल्पनादिडभावः । **काष्ठाः** अपः वृष्ट्युदकानि **अधूनोत्** अधोमुखान्यपातयत् । **शम्बरं** ( तन्निरोधकारिणमुदकवन्तमुदकपूर्णं ) मेघं ( निघं० १-१०-१४ ) **अवभेत्** अवाभिनत् "भिदिर् विदारणे" ( रु० प० ) लङि "बहुलं छन्दसि" ( पा० २-४-७३ ) विकरणस्य लुक् । "हल्ङ्याब्-" ( पा० ६-१-६८ ) इति तकारलोपः । पूर्ववदडभावः ॥ ६ ॥

एवमेतस्मिन्मन्त्रे वैश्वानरस्य वर्षकर्मणा एकवाक्यतासंबन्धान्यो मध्यमाद्वैश्वानर इत्याचार्या मन्यन्ते । स्थितं तावदेवम् ।

अथास्य भाष्यम्—

१. अत्र वैश्वानरशब्देन मध्यमस्थानो वैद्युतोऽग्निरभिधीयते इति सायणः ॥

२. काशन्ते दीप्यन्त इति काष्ठाः "काशृ दीप्तौ" ( भ्वा० आ० ) "हनिकुषि-" ( उ० २-२ ) इति क्थन्प्रत्ययः । इडभावः ( पा० ७-२-९ )

३. "संवर संवरणे" कण्ड्वादिः । पचाद्यच् ( पा० ३-१-१३४ ) दुर्गस्तु-दस्युं शम्बरं जघन्वानवभेत् अवाभिनत् व्यदारयत् । विदार्यचाधुनोत् वर्षभावेनाकम्पयदक्षारयेत्काष्ठा अपः । यस्तस्याहं वर्षप्राप्त्यर्थं प्रावोचं महाभाग्यं, स वर्षत्वस्माकमित्यभिप्राय इत्याह ॥

**ब्रवीमि तन्महित्वं महाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्याः वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामाः । दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्रसा, उपदासयति कर्माणि, तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघम् ॥**

मतान्तरमुपक्रामति—

**अथासावादित्य इति पूर्वे याज्ञिकाः ॥ ३ ॥**

**अथ** वाऽसौ वैश्वानर **आदित्य** एव **इति** ये विधिमन्त्रार्थवादेभ्यो यज्ञसतत्त्वमुन्नीयैनं यज्ञं प्रयोगतः प्रथमं चक्रुस्ते **पूर्वे याज्ञिकाः** साक्षात्कृतधर्माणः "प्राहुः" इति शेषः ।

१. असाविति कर्मात्मना एनमुपदिशन् प्रत्यक्ष एव भगवान्विभावसुरेवादित्यो वैश्वानरः । माभूत्कश्चिद्गौणः प्रत्यय इति । इतिना निपातेन कर्मण उक्तत्वान्न द्वितीया, तथा चोक्तं "क्वचिन्निपातेनाभिधान" मिति ॥

२. अस्य तत्त्वं सायणेनेत्थमभ्यधायि—अन्ये त्वेवं मन्यन्ते द्युस्थानः सूर्यो वैश्वानर इति—युक्तिं चाहुः—प्रातःसवनादीनि त्रीणि सवनानि लोकत्रयात्मकानि । तत्र तृतीयसवनं प्राप्तो यजमानः स्वर्गं प्राप्त इति पृथिव्याः प्रच्युतो भवेत् । तत्प्रच्युतिपरिहाराया-ग्निमारुतेऽन्तिमे शस्त्रे होता स्वर्गाद्भूमिं प्रति अवरोहति, कथमिति ? तदुच्यते इतरशस्त्रवत्स्तोत्रियतृचेन प्रारम्भं मुक्त्वा द्युस्थानसंबन्धिना वैश्वानरीयेण सूक्तेन शस्त्रं प्रारभते । ततो मध्यमस्थानसंबन्धिनं रुद्रं मरुतश्च प्रति तद्दैवत्यसूक्तपाठेनावरोहति तत्र पृथिवीस्थानमग्निं, यद्यत्र वैश्वानरः सूर्यो न स्यात्तदानीमवरोहो नोपपद्यते । तदेतन्मतद्वयमप्यनुपपन्नम् ( मध्यमस्थानस्थो वायुरिन्द्रो वा द्युस्थानस्थः सूर्यो वेति ) अयमेव ( भौमः ) अग्निर्वैश्वानरः । कुतः ? वैश्वानरशब्दनिर्वचनानुरोधात् । विश्वेषां नराणां लोकान्तरं प्रति नेतृतया (विश्वनर-) सम्बन्धी वैश्वानरः । तथाचाम्नातम्—"वैश्वानरं पुत्रः पित्रे लोककृज्जातवेदो वहेमं सुकृतां यत्र लोकाः" (तै० ब्रा० १-२-१) इति । यद्वा विश्वे सर्वे नरा एनमग्निं यज्ञादौ प्रीणयन्तीति तत्संबन्धाद्वैश्वानरः । यद्वा विश्वान् सर्वान्प्राणिनः प्रति इयृतो गच्छत इति विश्वानरौ मध्यमोत्तमौ । "ऋ गता" विलसात् (जु० प०) पचाद्यच् । (पा०३-१-३४) शसो लुगभावश्छान्दसः । ताभ्यामुत्पन्नत्वादयमग्निर्वैश्वानरः । वैद्युतोऽग्निर्हि मध्यमसकाशाज्जायते । अशनिपतनानन्तरमयमेव पार्थिवोऽग्निः संपद्यते । आदित्यसकाशादपि घर्मकाले सूर्यकान्तादिमणिषु अग्नेरुत्पत्तिः प्रसिद्धा । तस्मान्नामनिर्वचनानुरोधेनायमेवाग्निर्वैश्वानर इत्युपपन्नम् । अस्यापि वर्षकर्मणा स्तुतिः संभवति । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।" इति स्मरणात् । प्रत्यवरोहोऽपि न कर्तव्यः । तृतीयसवनस्य भाक्त(काल्पनिक)स्वर्गत्वात् । इति । भक्तिर्नाम गुणकल्पनेति वक्ष्यते ॥

कया पुनरुपपत्त्या त एवमाहुः ? इत्यतो विध्यनुकरणप्रसिद्धिसिद्धं तन्मतमाह—

**एषां लोकानां रोहेण सवनानां रोह आम्नातः ॥**

य एव हि लोकानामारोहणानुक्रमः, पृथिवी-अन्तरिक्षं-द्यौरिति स एव सवनानामपि प्रातःसवनं माध्यन्दिनं-तृतीयं(सायं) सवनम् इति ।

कस्मिंश्चित्कर्मणि रोहप्रातिलोम्येन—

**रोहात्प्रत्यवरोहश्चिकीर्षितस्तामनुकृतिं होताऽऽग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥**

**चिकीर्षितः** कर्तुमीप्सितो भवति । अयमर्थः-स एष होता प्रातःसवनं पृथिवीलोकभक्ति शंसति शंसतृत्वात् । ततो माध्यन्दिनमन्तरिक्षलोकभक्ति शंसति, शंसतृत्वात् । ततस्तृतीयसवनं द्युलोकभक्ति शंसति, शंसतृत्वात् । प्रतिभक्ति शंसतिवच्च शंसन् स पृथिवीलोकादन्तरिक्षलोकमारूढो भवति, अन्तरिक्षलोकाद् द्युलोकं, स च द्युलोकमारोहन् द्युलोकभक्ति तृतीयसवनं शंसति, तदपि शंसन् द्युलोकमारूढो भवति । सोऽग्निष्टोमसाम्नि यज्ञायज्ञिये यत् शस्त्रमाग्निमारुतं तत्र **आग्निमारुते शस्त्रे होता** तां तत्सवनलोकप्रत्यवरोहानुकृतिं चिकीर्षञ्छस्त्रं **वैश्वानरीयेण सूक्तेन प्रतिपद्यते** । प्रारभते । तद्यथा—"वैश्वानराय पृथुपाजसे" ( ऋ० सं० ३-२-६ सू० ) इति प्रतिपत् ।

**सोऽपि न स्तोत्रियमाद्रियेताग्नेयो हि भवति ॥**

प्रत्यवरोहे कर्तव्ये । स च पुनराग्नेयोऽयं स्तोत्रियः, अग्निश्च पृथिवीस्थानः । तद्यदि तमाद्रियेत, न प्रत्यवरोहानुकृतिप्रारम्भः कृतः स्यात् । अन्येषु शस्त्रेषु च युक्तं यदूर्ध्वमारुरुक्षमाणः स्तोत्रियेण प्रतिपद्यते । इह पुनरवरुरुक्षमाणो द्युस्थानाधिदेवताः शंसमानः क्रमेण वैश्वानरीयेण सूक्तेन प्रतिपद्यत इति, तेन ज्ञायते आदित्यो वैश्वानर इति ॥

अपिच सुतरां प्रत्यवरोहानुकरणमेतदिति गम्यते । येन—

**तत आगच्छति मध्यमस्थाना देवता रुद्रं च मरुतश्च ॥**

**ततः** वैश्वानरीयसूक्तात्प्रत्यवरोहानुक्रमणाभिप्रायेण शस्तात्प्रत्यवरुह्य **मध्यस्थाना देवता आगच्छति** मध्यस्थानेऽभिशंसितुम् । कतमाः ? **रुद्रं च मरुतश्च** । तद्यथा-"आ ते पितर्मरुतां सुम्नमेतु" ( ऋ० सं० २-४-११-३० ) इत्यादि ।

**ततोऽग्निमिहस्थानमत्रैव स्तोत्रियं शंसति ॥४॥**

**ततः** अपि मध्यमस्थानात् **इहस्थानं** पृथिवीस्थानं **अग्निं** प्रत्यवरुह्य **अत्रैव च स्तोत्रियं** शंसति । "यज्ञायज्ञा वो अग्नये" ( ऋ० सं० ६-४-५ सू० ) तदेवमेतस्माद्विध्यनुकरणात्पश्याम आदित्यो वैश्वानर इति ॥ ४ ॥

**अथापि वैश्वानरीयो द्वादशकपालो भवति ।**

**एतस्य हि द्वादशविधं कर्म । अथापि ब्राह्मणं भवति-"असौ वा आदित्योऽग्निर्वैश्वानरः" इति ॥**

देवतागुणसाम्येन हि अधियज्ञेषु गुणविधयः कल्पन्ते । **वैश्वानरीयश्च** सर्वत्र **द्वादशकपालः । द्वादशविधं** द्वादशमासप्रविभागलक्षणं **कर्म** । तेनैतस्मादपि देवतागुणे कपालविध्यनुकरणात्पश्याम आदित्यो वैश्वानर इति ।

**अथापि निवित् सौर्यवैश्वानरी भवति ॥**

**सौर्यवैश्वानरी** एतन्नामकः **निवित् भवति** । निविदित्याकृतिविशिष्टो मन्त्रः । शस्त्रमध्यपाती । स तथाभिधया सूर्यो वैश्वानरो न पार्थिवो न मध्यम इति बोधयति । "तस्येदम्" ( पा० ४-३-१२० ) इत्यण् । भवति हि तत्रैतत्पदम्—

**आ यो द्यां भात्या पृथिवीमिति ॥**

**यः द्यां** दिवं **आ-भाति** भासयति **पृथिवीमा** भासयतीति । न पुनरादित्यादन्योऽन्नभासयते द्यावापृथिव्यौ यत उच्यते—

**एष हि द्यावापृथिव्यावाभासयति ॥**

एतच्चोक्तवाक्यार्थनिर्वचनपरं वाक्यम् ।

**अथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति ॥**

**"दिवि पृष्ठो अरोचत" ॥**

(य० वा० सं० ३३-९२) (ऋ० सं० १-७-६-२०)-(५-२-७-२) (२)

**छान्दोमिकं** तन्नामकं **सूक्तं** यद्धि **सौर्यवैश्वानरं** तदाख्यया प्रसिद्धं **भवति** । तद्यथा **दिवीत्यादि**—

"दिवि पृष्ठो अरोचताग्निर्वैश्वानरो बृहन् ।
क्ष्मया वृधान ओजसा चनो हितो ज्योतिषा बाधते तमः ॥"
इति ।

न च पुनरादित्यादन्यो दिवि पृष्ठो रोचते । यत उच्यते—

**एष हि "दिवि पृष्ठो अरोचत" इति ॥**

**दिवि** द्युलोके **पृष्ठः** स्पृष्टः अवस्थित इत्यर्थः । **अरोचत** रोचते । वर्तमाने लङ् ( पा० ३-४-६ ) दीप्यत इत्यर्थः । कोऽसौ ? **अग्निर्वैश्वानरः** । **बृहन्** महान् । स हि रोचमानः **ज्योतिषा** स्वप्रकाशेन **तमः** नैशं **बाधते** लोकानुग्रहायान्धकारं निवर्तयति । किं कुर्वन् ? **क्ष्मया** पृथिव्या कार-

१. छन्दोमयज्ञेषु दाशरात्रिकेषु विहितम् इति वक्ष्यतेऽनुपदम् ॥

२. ऋच्ययमर्थंत एव दृष्टो न स्वरूपतः । तत्र हि "पृष्ठो दिवी" त्यादिः पठ्यते ॥

३. "पृथिव्या रसमादाय सूर्योऽतिप्रखरो भवेत् । वर्षते च पुनर्वर्षन्हसते तेजसा जलम् ॥ १ ॥ भौमानां परमाणूनामाहृतानां खरैः करैः । समन्ततो विसृष्टानां दन्दग्धानां क्वचित्क्वचित् । योगाद्विवर्धते भानुरिति केचिद्वदन्ति हि ॥ २ ॥"

णभूतया **वृधानः** वर्धमानः **ओजसा** बलेनासादनोपजनितेन तेजसा वा, पुनश्च वर्षणेन **चनोहितः** चन इत्यन्ननाम ( निघं० ३-४-६४ ) चनसेऽन्नाय हितः सन्। आदित्यत एव हि सर्वेषामोषधिवनस्पतीनामभिवृद्धिः। चन्द्रोऽप्येतत्प्रकाशमुपाश्रयैवौषधीनामधिपतिरुच्यत इत्यर्थः ॥ ९२ ॥

**अथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति ॥ ५ ॥**

**हविष्पान्तीयं** हविष्पान्तपदवत् "हविष्पान्तमजरम्" इत्यादिकं (ऋ० ८-४-१०-१) "मतौ छः सूक्तसाम्नोः" (पा० ५-२-५९ ) इति मत्वर्थे छः । तदेतत् **सौर्यवैश्वानरं भवति**। कथम्? इति। भवति हि तत्र मन्त्रः सूर्यो वैश्वानर इति समर्थः। तद्यथा—

"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्"
( ऋ० सं० ८-४-१२-२ )

इति। **देवा** इन्द्रादयः **विश्वस्मै** सर्वस्मै **भुवनाय वैश्वानरं** विश्वानरहितम् **अग्निं** तन्नामकं देवम् **अह्नां** दिवसानां **केतुं** प्रज्ञापकं कर्तारम् **अकृण्वन्** अकुर्वन्नित्यर्थः। नैव तावदादित्यादन्यस्याह्नां कर्तृत्वमुपपद्यते। पार्थिवे मध्यमे वा। आदित्य एव ह्युदयास्तमयाभ्यामहानि करोति । तेन वयमेतैर्हेतुभिः पश्यामः सूर्यो वैश्वानर इति।

सिद्धान्तपक्षमृष्यन्तरमतोपष्टब्धमुपन्यस्यति—

**अयमेवाग्निर्वैश्वानर इति शाकपूणिः ॥**

**अयमेव** पार्थिवः **अग्निः** न मध्यमो न सूर्यः। कुतः? तद्धितोत्पत्तिसामर्थ्यादित्याह—

**विश्वानरावेते उत्तरे ज्योतिषी। वैश्वानरोऽयं यत्ताभ्यां जायते ॥**

**उत्तरे** मध्यमोत्तमे । **जायते** तस्मात्तद्धितेन व्यपदेशेन पार्थिवोऽग्निर्वैश्वानर इति। तथा चोक्तम् "अपि वा विश्वानर एव कश्चित्स्यात्तस्यापत्यं वैश्वानरः" इति।

अत्रोपपत्तिं शङ्कासमाधानाभ्यां द्रढयति—

**कथं त्वयमेताभ्यां जायते? इति। यत्र वैद्युतः शरणमभिहन्ति। यावदनुपात्तो भवति मध्यमधर्मैव तावद्भवति, उदकेन्धनः शरीरोपशमनः। उपादीयमान एवायं संपद्यत उदकोपशमनः शरीरदीप्तिः ॥ ६ ॥**

**वैद्युतः** अग्निः **शरणं** गृहम्। "शरणं गृहरक्षित्रोः" इत्यमरः। उपलक्षणमेतत् आश्रयमात्मनो दारु=उदकमन्यद्वा द्रव्यम्। **अभिहन्ति** निहन्ति अभिगच्छति प्राप्नोतीत्यर्थः। **यावत्** असौ **अनुपात्तः** मनुष्यैरस्पृष्टोऽपरिगृहीतो वा **तावत् मध्यमधर्मा** मध्यमस्येव धर्मोऽस्येति अनिच्प्रत्ययः समासान्तः। ( पा० ५-४-१२४ ) यदसौ **उदकेन्धनः** उदकेनेन्धते दीप्यते रसस्वभावकेन। **शरीरोपशमनः** शरीरेण काष्ठेनान्येन वा प्रतिहतमूर्तिस्वभावकेन पार्थिवधातुबहुलेन उपशाम्यतीत्युपशमनः। ल्युः ( पा० ३-१-१३४ ) स एष मध्यमस्य (वैद्युतोऽग्नेः) धर्मः। तदेतत्स्थानजात्यादिकृतं स्वाभाव्यमहेतुकं प्रथमस्य ( दिव्यस्य ) ज्योतिषो धर्मो न भवति। स एव पुनः **उपादीयमानः** परिगृह्यमाणः **एव अयम्** पार्थिवोऽग्निः **सम्पद्यते**। कथम्? उपात्तो हि मनुष्यैः स्वजातिधर्मं हित्वा पार्थिवधर्मं प्रतिपद्यते। यदसौ **उदकोपशमनः** उदकेनोपशाम्यति **शरीरदीप्तिश्च** भवतीति विपर्यस्तधर्मा मध्यमेन सम्पद्यते। एवं तावत् मध्यमादयं विश्वानरात्संजायते, तेनायं तदपत्यमिति भवति हि तद्धितार्थोपपत्त्या वैश्वानरः ॥ ६ ॥

अथ कथमयमादित्याज्जायत इत्याह—

**अथादित्यात् ॥**

"उत्पत्तिरुच्यत" इति शेषः। अत्र **अथ**शब्द आनन्तर्ये, प्रकृतादर्थादर्थान्तरमधिकरोति। कथम्?

**उदीचि प्रथमसमावृत्त आदित्ये, कंसं वा मणिं वा परिमृज्य प्रतिस्वरे, यत्र शुष्कगोमयमसंस्पर्शयन्धारयति तत्प्रदीप्यते। सोऽयमेव सम्पद्यते ॥**

**उदीचि** उत्तरदिशि, तां दिशं प्रतीति यावत्। **आदित्ये** सूर्ये **प्रथमसमावृत्ते** प्रथममागते गौलिकोदग्गमनादावित्यर्थः। सा च सौम्यायने दिनकृतो मेषादौ भवतीति व्यक्तमुपरिष्टात् ( ७-७-१ ) तत्रास्य प्रखरकरसंपर्कात् **कंसं** रङ्गताम्रसंयोगजनितं धातुविशेषं **मणिं** सूर्यकान्तं **वा परिमृज्य** परिशोध्य। "मृजू शुद्धौ" ( अ० प० ) **प्रतिस्वरे** प्रत्युपतापे सति "स्वृ शब्दोपतापयोः" ( भ्वा० प० ) **यत्र** यस्मिन्कास्मिंश्चिद्विशुद्धप्रदेशे **शुष्कगोमयं** करीषादिकं **धारयति** तदपि **संस्पर्शयन्** एव, तावतापि **तत्** शुष्कगोमयं **प्रदीप्यते** दह्यते। **सः** शुष्कगोमयजन्मा **अयं** पार्थिव **एव संपद्यते**। एवमादित्यादपि कंसाद्वा मणेर्वा यो जायतेऽसावपि च वैश्वानर इत्युच्यते। इति तदपत्यापेक्षयाऽस्य वैश्वानरत्वं तद्धितोत्पत्तिसामर्थ्यादुपपन्नम्।

**अथाप्याह "वैश्वानरो यतते सूर्येण" ॥**
( ऋ० सं० १-७-६-१ ) इति।

१. तदन्तेन च तृतीयातत्पुरुषः पूर्वत्र इहच बोद्धव्यः। एवमग्रेपि ॥

२. इदमः सन्निकृष्टार्थवृत्तित्वात्। तथा चोक्तम्—"इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्" इति ॥

इति इत्थं मन्त्रदृक् आह ब्रवीति । प्रथमं तस्य वैश्वानरशब्दस्य तृतीयान्तेन सूर्यशब्देन विभक्तिभेदाद्विशेषणविशेष्यभावेन सामानाधिकरण्यं नास्ति एतदेवासामानाधिकरण्यमपेक्ष्यानेकत्वं वैश्वानरसूर्यशब्दयोर्ब्रवीतीत्यर्थः ॥

तदाह—

**न च पुनरात्मनाऽऽत्मा संयतते ॥**

संयतते सङ्गच्छते । किं तर्हि ?

**अन्येनैवान्यः संयतते ॥**

सङ्गच्छते । यथा देवदत्तो यज्ञदत्तेन । तत्कथमयं संयतते सूर्येण इत्याह—

**इत इममादधाति ॥**

इतः लोकादोषधीभ्यः शरादिभ्यो वनस्पतिभ्यो वा मथित्वा इमं पार्थिवाग्निं प्रत्यक्षत एव आदधाति अभ्यादधातीन्धनैः ।

**अमुतोऽमुष्य रश्मयः प्रादुर्भवन्ति । इतोऽस्यार्चिषः तयोर्भासोः सङ्गमं दृष्ट्वैवमवक्ष्यत् ॥ ७ ॥**

अमुतः मण्डलात्कर्मात्मनः अमुष्य तदधिष्ठातुः पुरुषस्य स्वभूताः । इतः भौमात्तेजःपिण्डात् अस्य तदधिष्ठातुः अर्चिषः प्रादुर्भवन्तीत्यभिसंबध्यते । अवक्ष्यत् मन्त्रमुक्तवान् भवेत् "भूते च" (पा० ३-३-१४०) इति भूते लङ् । "वैश्वानरो यतते सूर्येण" इति ॥ ७ ॥

अथापरं सूर्यस्य दूषणमुद्भावयति—

**अथ यान्येतान्यौत्तमिकानि सूक्तानि भागानि वा सावित्राणि वा सौर्याणि वा पौष्णानि वा वैष्णवानि वा वैश्वदेवानि वा तेषु वैश्वानरीयाः प्रवादा अभविष्यन् ॥**

अथ इत्यधिकारान्तरे । यदि सूर्यो वैश्वानरोऽभविष्यत् तदा यान्ये०००क्तानि । उत्तमस्थानदेवताविशेषस्तुत्यर्थानि, तद्यथा—भागा००नि वा । भगादिदेवतासंबन्धीनि तेषु सूक्तेषु वैश्वानरीयाः प्रवादाः भगादीनां विशेषणत्वेन अभविष्यन् हे भग ! वैश्वानर ! हे सवितः ! हे वैश्वानर ! इत्येवमादयः ।

**आदित्यकर्मणा च, एनमस्तोष्यन् इति ॥**

इति एवं वैश्वानरीयेषु सूक्तेषु आदित्यकर्मणा एनं वैश्वानरम् अस्तोष्यंश्च मन्त्रदृशः । कथमिति ।

**उदेषीत्यस्तमेषीति विपर्येषीति ॥**

इतिकरण एवंशब्दार्थ । एवमुदेषि त्वं वैश्वानर !—एवमस्तमेषि—एवं विपर्येषि इति । नच पुनरेतदुभयमप्यस्ति तस्मान्नैष सूर्यो वैश्वानर इति ॥

किंचायमपरो विशेषहेतुरग्निर्वैश्वानर इति—

**आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा भवन्ति ॥**

अग्निविशेषणत्वेन । "वैश्वानरमृत आजातमग्निम्" (ऋ० सं० ४-५-९-१) इत्येवमादयः ।

**अग्निकर्मणा चैनं स्तौतीति ॥**

एनं वैश्वानरं प्रायेण । इति एवम् । कथम् ? इति ।

**वहसीति पचसीति दहसीति ॥**

इति एवं । वैश्वानर ! वहसि हवींषि पचसि पक्तव्यानि दहसि दग्धव्यानि । तस्मादग्निरेव वैश्वानर इति स्थितम् ।

तदेते षड् हेतवः—तद्धितेन विग्रहव्यपदेशात् (१) एकवाक्ये विभक्त्यन्तरव्यपदेशात् (२) औत्तमिकेषु सूक्तेषु अप्रवादात् (३) आदित्यकर्मणा असंस्तवात् (४) आग्नेयेषु सूक्तेषु प्रवादात् (५) अग्निकर्मणा च संस्तवात् (६) इति ॥

अथैतेषु सत्स्वपि परपक्षहेतुष्वनिराकृतेषु तत्पुनरेतदग्नेर्वैश्वानरत्वं स्थितमप्यस्थितमिव भवतीति तन्निराकरणाय प्रस्तौति—

**यथो एतद्वर्षकर्मणा ह्येनं स्तौतीति—अस्मिन्नप्येतदुपपद्यते ॥ ८ ॥**

यत् पुनः एतदुक्तं—हि—यस्मात् एनं वैश्वानरं वर्षकर्मणा स्तौति तस्मान्मध्यम इति । अस्मिन्नपि पार्थिवेऽग्नौ एतद् वर्षकर्म उपपद्यते ॥ ८ ॥

कथमित्यत आह—

**"समानमेतदुदकमुच्चैत्यव चाहभिः ।**
**भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ५**

(ऋ० सं २-३-२३) इति ।

**सा निगदव्याख्याता ॥ ९ ॥ (२३)**

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे दै० कां० सप्तमाध्यायस्य षष्ठः पादः ॥ ७ ॥ ६ ॥**

समानमिति । अस्यवामीयं दैर्घतमस आर्षमनुष्टुप् । एतत् प्रसिद्धम् उदकम् समानम् उदकत्वेनाविशिष्टम् । एकरूपमित्यर्थः । अहोभिः दिवसैः कैश्चिद्ग्रीष्मकालिकैः उत्

---

१. यदिदं परिवर्त्ततेऽहरहोऽभ्युदयते च तस्मात् ॥

२. हिरण्यगर्भस्य महाविष्णोः । यमधिकृत्याम्नायते—"योऽसावादित्ये पुरुषः सोऽसावहम्" (य० वा० सं० ४०। १७) इति ॥

३. गुणपदत्वमभ्युपेत्य वैश्वानरपदस्य ब्रवीति ॥

४. अनेनादित्यकर्मप्रकारमुपदर्शयति ॥

१. न हि वैश्वानरीयाः प्रवादा औत्तमिकेषु सूक्तेषु सन्ति । नाप्यादित्यकर्मणा वैश्वानरं स्तुवन्ति मन्त्रदृशः ॥

२. अत्र दुर्गः—अहोभिर्निमित्तभूतैः पुनश्चाहोभिरेवार्वाङेति । दक्षिणोत्तरायणयोर्य्यावृत्तिभिः प्रतिसंवत्सरमह्नान्यभिप्रेतानि । तदेकमेवोदकं पर्यायेणोत्तरायण—दक्षिणायनयोर्जगद्यात्रासिद्धये तदुदेति चापैति च वर्षकर्मभावेनेत्येवं व्याचख्यौ ॥

ऊर्ध्वं **च** **एति** गच्छति रश्मिनाड्या दिवम्। तथा **अव** अवाङ्घः। **च** एति वर्षकालिकैरहोभिः रश्मिनाड्यैव भूमिं प्राप्नोति। कथमित्यत आह—**पर्जन्याः** प्रार्जयितारो रसानां, प्रीणयितारश्च माध्यमिका देवगणाः ( मेघाः ) वर्षमसुतो मुञ्चतः **भूमिं** **जिन्वन्ति** प्रीणयन्ति। "जिविः प्रीणनार्थः।" ( भ्वा० प० ) उदकर्सस्यायेन सस्याद्युत्पादनद्वारा भूमिष्ठां-स्तर्पयन्ति। तथा **अग्नयः** आहवनीयाद्याः। आहुतिप्रभवेण वर्षणेन **दिवम्** आदित्यादिद्युलोकस्थान्देवान् **जिन्वन्ति** प्रीणयन्ति। आहुतयो ह्यग्नौ प्रक्षिप्तास्तेन दग्धास्ताः स्वार्चिर्भिः कृत्स्नोदकभावमापाद्य परमं सूक्ष्मं देवोपभोगयोग्यं द्यां प्रतिवर्षंभावेनानीयन्ते तल्लोकवासिनां तृप्तये। ततस्त इह पुनर्वर्षं प्रकल्पयन्ति। तदुक्तम्—"अमुष्य लोकस्य का गतिरिति ? अयं लोक इति होवाच" इति एवंच सुतरामयमपि च वर्षवान्। आहुतिमूलत्वात् सर्वस्य वर्षस्य। स्मर्यते च—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" इति। तत्र यदभूद्वर्षकर्मवान्मध्यम इति, तदेतदवैशेषिकं मध्यमस्य वैश्वानरत्वेन लक्षणम्। सा—इयमृक् **निगदव्याख्याता** निगदेन शब्दमात्रेणैव व्याख्याता, नास्य व्याख्याप्यपेक्ष्यते सुगमेत्यर्थः ॥ ९ ॥ ( २३ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे दै० कां० सप्तमाध्यायस्य षष्ठः पादः ॥ ७ ॥ ६ ॥

---

## सप्तमाध्यायस्य सप्तमः पादः ॥

अपि चायमपरो मन्त्रः, यस्मिन्नग्निरादित्यो वर्षकर्मणा स्तूयते। तत्स्मात्सुतरामनैकान्तो वर्षकर्माभिष्टवो मध्यमस्येत्यत आह—

**"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति। त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते" ॥ १ ॥**

( ऋ० सं० २-३-२३ )

दीर्घतमस आर्षं त्रिष्टुप्। वृष्टिकामस्य कारीर्याममये धामच्छदेऽष्टाकपालं, तस्य पुरोनुवाक्या। तस्यां मैत्रायणीयकेऽग्निरयमादित्यीकृत्य स्तूयते। एते **हरयः** रसहरणाः **सुपर्णाः** शोभनपतना रश्मयः आदित्यस्य **कृष्णं** कृष्णवर्णं **नियानं** निरयणं वर्त्म ( पन्थाः ) दक्षिणायनं ( यदेतद्रात्रिरादित्यस्य ) तस्मिन् **अपः** उदकानि सर्वस्माल्लोकात् **वसानाः** आत्मन्याच्छादयन्तः वासयन्तो वा, आददाना इति यावत्। **दिवं** द्योतनवन्तमेतमादित्यं (द्युलोकं वा) **उत्पतन्ति** उद्दिश्य पतन्ति ( ऊर्ध्वं गच्छन्ति ) तान्युदकानि निधित्समानस्तस्मिन्नर्भत्वेन। स एष आदित्य आहितोदकगर्भः षड्भिर्मासैस्तत्-रायणं संप्रतिपद्यते, अथ **ते** रश्मयः यदा **ऋतस्य** उदकस्य ( निघं० १-१२-६८ ) **सदनात्** सह स्थानादमुत आदित्यमण्डलात् **आववृत्रन्** अर्वाञ्चः पर्यावर्तन्ते ( नीचैरागच्छन्ति ) **आदित्** अथ ( अनन्तरम् ) तदावृत्तिसमनन्तरमेव **घृतेन** उदकेन ( निघं० १-१२-१० ) **पृथिवी** **व्युद्यते** विविधं क्लियते। "उन्दी क्लेदने" ( रु० प० ) कर्मणि लट् ॥ १ ॥

एवमेतस्मिन्मन्त्रे मन्त्ररूपादादित्यः, प्रकरणादग्निः, उभयथाप्यन्यो मध्यमात् ( वैद्युतोऽग्नेः ) वर्षकर्मणः कर्तेति प्रतिभातीत्याह भाष्यकृत्—

**कृष्णं निरयणं रात्रिरादित्यस्य, हरयः सुपर्णा हरणा आदित्यरश्मयः ते यदाऽमुतोऽर्वाञ्चः पर्यावर्तन्ते सहस्थानादुदकस्यादित्यात्। अथ घृतेनोदकेन पृथिवी व्युद्यते ॥**

इति। गतार्थमेतन्मन्त्रव्याख्याने। अत्र **आदित्यस्य** इत्युक्त्या याम्यायनमभिमतम्, तच्च तुलादितो भवति। तथा-चोक्तम्—"गोलौ स्तः सौम्ययाम्यौ क्रिय-घटे-रसमे खेचरेऽयने द्वे" इति। ( ग्रहलाघवे त्रिप्रश्नाधिकारे श्लो० १०२ )

अथ निगमप्रसक्तं घृतं निर्वक्ति—

## घृतमित्युदकनाम, जिघर्तेः सिञ्चतिकर्मणः ॥

---

१. उभयतः क्रियाविशेषणमेतत् ॥

२. वर्षाभिप्रायेण। एतेन वर्षणं साधुभवत्विति कामनयेत्यर्थः ॥

३. कारीरी नाम वर्षकामेष्टिस्तस्यां तिस्रः पिण्ड्या होतव्यास्तत्रेयं तृतीयस्या अनुवाक्या। "कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः" इत्याह सायणः।

४. शोभनगमनाः ॥

५. एतद्भाष्यव्याख्यानम्। एतेन नि-इत्येष निरित्यस्यार्थे। यानमिति यातेर्गत्यर्थाल्ल्युटि रूपं तेनैतेर्गत्यर्थोत्तस्य विवरणमयनमिति। तथाच दुर्गः—निर्गतिः निर्गच्छन्त्येतदिति ॥

१. एतत्तत्त्वं भाष्यव्याख्यायां द्रष्टव्यम् ॥

२. एतत्सायणानुसारि विवरणं, स हि अन्तर्भावितण्यर्थाद्द्विकर्मकत्वमित्याह। तदेतच्चिनोतेरर्थसाम्यमादाय कथंचिदुपपादनीयं चयनमपादानमेव समन्ततो विसृतस्य वस्तुनः। तथाच कृष्णं नियानमपोवसाना रश्मयो दिवमुत्पतन्तीति ऋजुर्वाक्यार्थः ॥

३. सौम्यायनमप्येतन्मेषादितो भवति भगवत आदित्यस्य तत्संप्रतिपद्यते प्राप्नोति ततो वर्षं शनैर्भवति ॥

४. सहस्थानमेकत्र निवासभूमिः। सदनमित्युदकनामापि, तदेतत्सीदते "युँज्वहुलम्" ( उ० २। ७४ ) इति युच् ॥

५. क्रियो मेषः। घटस्तुला। ताभ्यां षड्राशिं यावत्स्थे सति क्रमेण सौम्ययाम्यौ गोलौ स्तः। त एव द्वे अयने गौलिके सौम्यायने याम्यायने च भवतः। देवानामयनं तु—यदा दक्षिणे चरमगतिं गत उदक् प्रत्यावर्तते भानुस्तत एव मकरादितः सौम्यं कर्कादितो याम्यं प्रवर्तते। द्युमणिस्तु यदा निरक्षदेशाद्विषुववृत्ता-( न्मध्यमप्रदेशा- ) दुदक् गच्छति तदा तस्य सौम्यायनं भवतीति भास्कराचार्या आहुः। "नाड्याह्वयादुत्तरयाम्यभागौ गोलस्य ताडुत्तरयाम्यगोलौ" इति ( गोलाध्याये प्रश्नाधिकारे ) ॥

एतच्च पृथिवी व्युथत इति मन्त्रवर्णादुन्नीतम्। तत्पुनर् जिघर्तेः "घृ क्षरणदीप्त्योः" ( जु० प० ) इत्यस्माद् "गत्यर्थाकर्मक–" ( पा० ३–४–७२ ) इत्यादिना कर्तरि क्तः ॥

अथोक्तेऽर्थे ब्राह्मणं प्रमाणयति—

**अथापि ब्राह्मणं भवति ॥**

एतस्मिन्प्रकरणे, यस्मिन्नयं मन्त्रो विनियुज्यते। किं तत् ?

**"अग्निर्वा इतो वृष्टिं समीरयति, धामच्छद्दिवि (खलु) भूत्वा वर्षति। मरुतः सृष्टां वृष्टिं नयन्ति ॥"**

इति **अग्निः इतः** अस्माल्लोकात् **वृष्टिं–समन्तत ईरयति** प्रेरयति **वै** निश्चयेन धूमभूता आप ओषधिवनस्पतिभ्यो विनिर्वर्त्यमाना आहुतिभूताश्चामुं लोकमाविशन्ति। "अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरि"ति ह विज्ञायते। ताः पुनरग्निस्थानाभिसंपत्तिप्रणाडिकया दिवि **धामच्छद्**[1]आदित्यो **भूत्वा दिवि** अन्तरिक्षे **वर्षति** तद्रूपेण मध्यमस्थानमापादयति। एवं तेन **सृष्टां वृष्टिं** मध्यमस्थानान्**मरुतो** वायवो मेघोदराणि विदार्य तेभ्यो विक्षिपन्तो वृष्टिमिमं लोकं **नयन्ति** प्रापयन्तीत्यर्थः ॥

अथाऽपरमपि ब्राह्मणं भवति—

**"यदासावादित्यो न्यग्रश्मिः पर्यावर्ततेऽथ वर्षति" इति ॥**

**असौ** धामच्छद् **न्यङ्** नीचैरञ्चन्। तदेवमेतद्वर्षकर्म, समानं सर्वेषामित्यहेतुर्मध्यमस्य वैश्वानरत्वे भवति ॥

**यथो एतद्रोहात्प्रत्यवरोहश्चिकीर्षित इति, आम्नायवचनादेतद्भवति ॥**

**यथो एतद्** यत्पुनरेतदुक्तं याज्ञिकपक्षे–**रोहा००इति** अकारणमेतत्सूर्यस्य वैश्वानरत्वे। कस्मात् ? **आम्नायवचनात्। एतत् एवं भवति।** रोहात्प्रत्यवरोह इति–अर्थवादमात्रमित्यर्थः ॥

**यथो एतद्–॥ १ ॥**

यदपि चोक्तम्–॥ १ ॥

**वैश्वानरीयो द्वादशकपालो भवतीति, अनिर्वचनं कपालानि भवन्ति ॥**

इति एतदपि **अनिर्वचनम्** अकारणं सूर्यस्य वैश्वानरत्वे। कुतः ? व्यभिचारात्। तदाह–**कपालानि** बहुविधानि **भवन्ति**। हेतुपक्ष एतद्व्याख्येयमित्याह–

**अस्ति हि सौर्य एककपालः पञ्चकपालश्च ॥**

यदि हि देवतागुणाभिप्रायमेतदभविष्यत्–द्वादशविधमस्य कर्म, तस्माद् द्वादशकपाल इति। एवं सति सौर्योऽपि द्वादशकपाल एवाभविष्यत्। तस्मादभिधानमात्रं भिद्यते न कर्मेति। न च भवति सौर्यो द्वादशकपाल इति। तस्मादहेतुः कपालानि।

**यथो एतद्ब्राह्मणं भवतीति, बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति। "पृथिवी–वैश्वानरः, सव्वँत्सरो वैश्वानरो, ब्राह्मणो वैश्वानर इति ॥**

**यथो एतद्**–यदप्येतदुक्तम् **ब्राह्मणं** सौर्ये वैश्वानरप्रवादः **भवतीति**। एतदप्यकारणं, कस्मात् ? **बहु००वन्ति। हि**–हेतौ। **भक्ति**र्नाम गुणकल्पना, येन केनचिद्गुणेन ब्राह्मणं सर्वं सर्वथा ब्रवीति। तत्र तत्त्वमन्वेष्यमेव भवति। तद्यथा–**पृथिवी००वैश्वानर इति**। एवमादि किमपि ब्राह्मणेन बहु वैश्वानरशब्देनोच्यते–भक्त्या।

**यथो एतत्—निवित्सौर्यवैश्वानरी भवतीति, तस्यैव सा भवति–यो विड्भ्यो मानुषीभ्यो दीदेदिति। एष हि विड्भ्यो मानुषीभ्यो दीप्यते॥**

**तस्यैव** पार्थिवाग्नेः **सा** निवित् स्तुतिः **भवति**। कथम् ? इति। तस्याङ्के पदं भवति–**योवि००दिति। विड्भ्यः** प्रजाभ्यः। "विद् स्मृतो वैश्यमनुजप्रजासु च मनीषिभिरि"ति विश्वः। तदर्थम्। तादर्थ्ये चतुर्थी ( पा० १–४–४४ वा० ) **दीदेत्** देदीप्यते। **एष** ( पार्थिवोऽग्निरेव ) **हि** यतः। **दीप्यते** नान्यस्तस्मादयमेव ( पार्थिवोऽग्निः ) वैश्वानरो भवति।

तथाच निवित्–

"अग्निर्वैश्वानरः सोमस्य मत्सत्। विश्वेषां देवानां समित्। अजस्रं दैव्यं ज्योतिः। यो विड्भ्यो मानुषीभ्यो दीदेत्। द्युषु पूर्वासु दिद्युतानः। अजर उपसामनीके। आ यो द्यां भात्यापृथिवीम्। ओर्वन्तरिक्षम्। ज्योतिषा यज्ञाय शर्म संयत्। अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत्। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रं प्रेदं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः+श्रवद्ब्रह्माण्यवसागमत्" इति।

आग्निमारुते शस्यते। सर्वा विश्वामित्रस्यार्षम्। तथा चोक्तम्—"निवित्पुरोरुचः प्रैषा विश्वामित्रस्य सर्वश" इति। 'मत्सत्'–तृप्यतु। सोमस्येति करणे षष्ठी। सोमेनेत्यर्थः। यः 'विश्वेषां'–सर्वेषां 'समित्'–समिन्धनः। यश्च 'अजस्रं'–नित्यं 'द्युषु पूर्वासु'–पूर्वेष्वहःसु 'दिद्युतानः'–देदीप्यमान एवासीत्।

१. मन्त्ररूपादादित्यः प्रकरणादग्निरित्यनुपदं व्याख्यातं ॥

२. तादर्थ्ये चतुर्थ्येषा। पूर्वमाहुतिभूताः कारणविधया पश्चाद्भूमभूताः स्वरूपं प्राप्ता आप एवादित्यमण्डलोदकमाविशन्ति क्रमेणेत्याह अग्नेरित्यादि ॥

३. इदं वैश्वानरविद्यायां व्यक्तमिह दुर्गेणोद्धृतम् ॥

४. धाम्नां छादयिता रश्मिभिर्मेघरूपैः ॥

५. उत्तरार्धचैव्याख्याने प्रमाणभूतमित्यर्थः ॥

१. अत्र प्रवेशेन्नित्यपि पाठः। तथा पाठे इदमेव भाष्यं मानम्॥

यश्चासौ 'अजरः'–जरावियुक्तो नित्यनूतनः । 'उषसामनीके'–अग्निहोत्रादिषु "द्योतते" इति शेषः । 'यः' च 'आ भाति' भासयति 'द्यां' सूर्यात्मना । 'आ' भासयति च 'पृथिवीम्' अग्न्यात्मना । 'आ' भासयति 'उरु' विपुलम् 'अन्तरिक्षम्' च मध्यमात्मना । एवं त्रिभिर्ज्योतिर्भिः । यश्च 'ज्योतिषा' प्रकाशमयेन रूपेण 'यज्ञाय' यज्ञार्थं 'शर्म' सुखम् 'संयत्' यच्छति–ददाति । सः 'अग्निर्वैश्वानर' ( इति प्रक्रान्तानुवादेन विधीयते ) 'इह' अस्मिन् यज्ञे 'श्रवत्' शृणोतु "अस्माकं स्तुतीरि"ति शेषः । 'इह' च कर्मणि 'सोमस्य मत्सत्' इत्युपक्रान्तानुवादेन पुनर्विधीयते आदरार्थम् । किं च 'देवः' असौ विश्वानरोऽग्निः 'देव्या' देवहितया 'धिया' प्रज्ञया 'इमाम्' 'देवहूतिं' देवानां हविषां दातृणामस्माकं हूतिमाह्वानम् 'प्र अवतु' प्रकर्षेण रक्षतु । श्रुत्वाऽऽगच्छत्वित्यर्थः । 'इदं ब्रह्म प्रावतु' इत्येवमन्वयः । 'सुन्वन्तम्' अभिषुण्वन्तं सोमम् । 'चित्रः' चायनीयः पूज्यो वैश्वानरः 'चित्राभिः' शोभनाभिः 'ऊतिभिः' गतिभिः प्रीतिभिर्वा । इमानि 'ब्रह्माणि' ब्राह्मणानि स्तोत्राणि अस्माकं 'श्रवत्' शृणोतु । 'अवसा' मनसा पालनाभिप्रायेण । कर्मसु ( अस्माकम् ) 'आगमत्' प्रत्यागच्छतु । लोडर्थे लुङ् ( पा० ३–४–६ ) इत्येतदाशास्महे ॥

**यथो एतत्–छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीति अस्यैव, तद्भवति "यमदग्निभिराहुत" इति ॥**

यथो एतत्–यत्पुनरेतदुक्तं **छान्दोमिकं** छन्दोमयज्ञेषु दाशरात्रिकेषु यत् **सूक्तं** तत् **सौर्यवैश्वानरम् इति** तदपि **अस्यैव** पार्थिवस्याग्नेर्भवति । कथम् ? इति–तत्र हि ( सूक्ते ) **एतत्** विशिष्टं पार्थिवाग्नेर्वाचकं लिङ्गं भवति **"यमदग्निभिराहुत" इति** यमदग्नयो ह्येनमाहुतिभिर्जुह्वति नादित्यमभि-

१. तस्मै हितमित्यर्थे यत् ( पा० ५–१–२ ) प्रत्ययः । दुर्गस्तु–देवानां या दात्री धीः प्रज्ञा तयेत्यर्थमाह ॥

२. दीव्यतिरिह दानार्थः । पचाद्यच् ( पा० ३–१–१३४ ) यद्वा देवत्वेनाभिमतफलदातृत्वेन हूतिम् ॥

३. "चायृ पूजानिशामनयोः" ( भ्वा० उ० ) बाहुलकाच्चिभावस्ततश्च "अमि–चि–मि–मिदि–शंसिभ्यः क्तः" ( उ० ४–१५८ ) इति क्तप्रत्ययः ॥

४. "अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ( भ्वा० प० ) तस्य "ऊतियूति–" ( पा० ३–३–९८ ) इत्यादिना निपातः ॥

५. ब्रह्म वेदस्तेन स्तोत्रमुपलक्ष्यते । "बृहि वृद्धौ" ( भ्वा० प० ) "बृंहेर्नलोपश्च" ( उ. १–४१ ) इति मनिन् उपधादीर्घाभाव आर्षः । "संज्ञापूर्वको विधिरनित्य" इति वा ॥

६. "अव रक्षणादौ" ( भ्वा० प० ) असुन् ( उ० ४–१८८ ) अवत्यवगच्छत्यनेनेत्यवो मनः । अन्नेन वा ( निघं० २–७–९ )

धानादसंभवाच्च । तस्मादत्रापि यद्वैश्वानरलिङ्गं तदप्येतस्य पार्थिवस्याग्नेर्व्यञ्जकं भवति ॥

अथ यमदग्नयः कस्माद् ? इत्याह—

**यमदग्नयः प्रयमिताग्नयो वा प्रज्वलिताग्नयो वा तैरभिहुतो भवति ॥**

**प्रयमिताग्नयः** नित्यं प्रभूताग्नयः ॥

**यथो एतत्–हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवतीति, अस्यैव तद्भवति ॥ २ ॥ २४ ॥**

**तदपि अस्यैव** पार्थिवाग्नेः **भवति** । कथम् ? इति–यतस्तस्य सूक्तस्य या प्रथमा ऋक् सा यथाग्नेयी भवति, न सौरी । तथा निराह—

**"ह॒वि॒ष्पान्त॑म॒जरं॑ स्व॒र्विदि॑ दिवि॒स्पृश्याहु॑तं॒ जुष्ट॑म॒ग्नौ । तस्य॒ भर्म॑णे॒ भुव॑नाय दे॒वा धर्म॑णे॒ कं स्व॒धया॑ पप्रथन्त" ॥ १ ॥**

( ऋ० सं० ८–४–१९ )

**हविष्पान्त**मिति । मूर्धन्वत आङ्गिरसस्यार्षं वामदेवस्य वा त्रैष्टुभम् । सूर्यो वैश्वानरगुणकोऽग्निश्च समुदितौ देवता । व्यूढस्य दशरात्रस्य पञ्चमेऽहन्याग्निमारुतस्य प्रतिपत् । यदेतत् **पान्तं** पानीयं (पानार्हं) देवानां तत् सोमात्मकं **हविः अजरं** जरा विपरिणामस्तद्रहितम् **जुष्टं** प्रियं देवानाम् । "जुषी प्रीतिसेवनयोः" (तु० आ०) कर्मणि क्तः । **स्वर्विदं** स्वरादित्यो भवति (निघं० १–४–२) तस्य विदि वेदितरि । क्विप् । **दिविस्पृशि** दिविस्पर्शिनि अग्नौ **आहुतम्** अभिहुतं विसृष्टं **तस्य** हविषः **भर्मणे** भरणाय बहुलीकरणाय **भुवनाय** भावनाय च **धर्मणे** धारणाय अविच्छेदनाय च ( एतेभ्यः सर्वेभ्यः कर्मभ्यः ) **कं** सर्वस्य सुखकरमिममेवाग्निं ( पृथिवीस्थानं ) **स्वधया** अन्नेन ( निघं० २–७–१७ ) हविषा ( आज्येन

१. इदमाग्नेयं सूक्तं न सौर्यमित्युपप्रदर्शनार्थम् ॥

२. यतः परं विपरिणामो नास्ति कश्चित्प्रविवेकमापादितमग्निनेति दुर्गः ॥

३. दुर्गस्तु–स्वरादित्यस्तं वेत्ति–यथासौ वेदितव्य इति, तदर्थं वा वेत्ति हविः, स स्वर्विदयमग्निर्न सूर्यः । भाष्यकारोऽपि व्यपदेशेन निराह–सूर्यविदीति इत्याह । अत्रार्थे "कर्मण्यणः" ( पा० ३–२–१ ) प्रसक्तिर्दुर्वारेति स्ववेदे इति स्यात् ॥

४. द्यामसौ स्पृशत्यहनि हविरुपयन्नादित्यम् ॥

५. संभरणाय । संभरणं च बहुलीकरणमित्याह–अपिनाम अयमग्निरित्येतद्द्धु कुर्यादित्येवमर्थम् ॥

६. अत्र दुर्गः–विभूवियुक्त्युपजायेतेत्येवमर्थमपि । एतत्कथं नाम देवतातृप्तिसमर्थं कुर्यादितीत्याह ॥

७. प्रयोजनेभ्यः । एतच्च भाष्यकारेणोपप्रेक्षितम् ॥

पुरोडाशेन च )। यदुक्तं निगमे—"घृतं चापां पुरुपं चौषधीनाम्" इति । **देवाः** दानादिगुणयुक्ता एते ऋत्विजः। **अपप्रथन्त** प्रथयन्ति वर्धयन्तीत्यर्थः । "प्रथ प्रख्याने" ( भ्वा० आ० ) लङ् वर्तमाने ( पा० ३–४–६ ) द्विर्भावश्च धातोरार्षः ।

एवमेतस्मिन्सूक्ते प्रथमे मन्त्रे यदेतदग्निलिङ्गमस्पृष्टं वैश्वानरशब्देन, तदसंशयमग्निवाचि । तथा चोत्तरत्र श्रुतो वैश्वानरशब्दोऽपि तस्यैवाग्नेः पृथिवीस्थानस्य व्यञ्जको भवति । इत्थं चायमेवाग्निर्वैश्वानरो न मध्यम इति स्थितम् ॥

अथास्य भाष्यम्—

**हविर्यत्पानीयमजरं सूर्यविदि दिवि स्पृश्यभिहुतं जुष्टमग्नौ, तस्य भरणाय च भवनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्य इममग्निमन्नेनापप्रथन्तेति ॥**

इति । अथेममपरं मन्त्रं स्वपक्षोद्भिभावयिषया अन्यस्मात्सूक्ताद्भिन्नज्योतिर्लक्षणमानीय मध्यमोत्तमयोर्ज्योतिषोरन्यत्वव्यपदेशवतो वैश्वानरस्य निर्णिनीषन्प्रकरोति—

**अथाप्याह—॥ ३ ॥ (२५)**

इति ॥ ३ ॥ ( २५ )

**"अपामुपस्थे महिषा अगृभ्णत विशो राजानमुपतस्थुर्ऋग्मियम् । आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः ॥ ४ ॥**

( ऋ० सं० ४–५–१० )

**अपामुपस्थ** इति । भारद्वाजस्यार्षं जगती । वैश्वानराग्निदैवतम् । प्रातरनुवाकाश्विनयोः शस्यते । **अपाम् उपस्थे** उपस्थाने । यत्रोपगम्य तिष्ठन्त्यापस्तस्मिन् महत्यन्तरिक्षलोके आसीनः । **महिषाः** महान्तः ( निघं० ३–३–८ ) माध्यमिका देवगणाः ( मरुतः ) **अगृभ्णत** अगृह्णन् । गृहीत्वा च **विशः** विश इव मनुष्या इव **राजानं** परिवार्य **उपतस्थुः** अस्तुवन् । कम् ? **ऋग्मियं** ऋग्मन्तम् ( ऋग्भिः स्तुतिभिस्तद्वन्तम् ) अर्चनीयं ( पूजनीयं ) वा । कतमम् ? यम् **अग्निं वैश्वानरं दूतः** देवानाम् **मातरिश्वा** वायुः **परावतः** प्रेरितवतः (प्रकर्षेणेरितवतः प्रेरिततरात् ) परागताद्वा दूरतरात्

( निघं० ३–२६–५ ) **विवस्वतः** तमसां विवासनक्रियया तद्वत आदित्यात् **आभरत्** आहरत् । "हृग्रहोर्भश्छन्दसि" ( पा० ३–१–८४ वा० ) इति हस्य भः ( पूर्वत्राऽपि ) इमं लोकं प्रत्याजहारेत्यर्थः ॥ ४ ॥

एवमेतस्मिन्मन्त्रे-यत आह्रियते येन चाह्रियते यश्चाह्रियते सर्वे ते पृथग्व्यपदिष्टाः । अत्र विवस्वत आह्रियते मातरिश्वना वैश्वानर इति । तस्मादेतयोर्विवस्वन्मातरिश्वनोः सन्निधानव्यपदेशे सति साक्षाद्वैश्वानरशब्देन पार्थिव उक्त इति व्यवतिष्ठते पार्थिवो वैश्वानर इति ॥

अथास्य भाष्यम्—

**अपामुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना महान्त इति वा, अगृह्णत माध्यमिका देवगणा विश इव राजानमुपतस्थुर्ऋग्मियमृग्मन्तमिति वा, ऽर्चनीयमिति वा, पूजनीयमिति वाहरद्यं दूतो देवानां विवस्वत आदित्यात् । विवस्वान् विवासनात् । प्रेरितवतः परागताद्वास्याग्नेर्वैश्वानरस्य मातरिश्वानमाहर्तारमाह । मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति, मातर्याश्वनितीति वा ॥**

**श्वसिति**–अप्रतिबध्यमानशक्तिर्गच्छति । **आश्वनिति** आशु शीघ्रं अनिति गच्छति । अनीतीति गतिकर्मसु पठितम् ( निघं० २–१४–१०७ ) "रुदादिभ्यः सार्वधातुके" ( पा० ७–२–७६ ) इतीट् ॥

अथ यदसौ पूर्वपक्षान्ते ( हविष्पान्तीयसूक्तस्य सौर्यवैश्वानरत्वे ) मन्त्र उपन्यस्तः—"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इति । नान्यः सूर्यात् अह्नां कर्तेति सूर्योऽत्र वैश्वानर इति । अत्र ब्रूमः–पार्थिव एवाग्निः सूक्ते प्रथमायामृचि ( हविष्पान्तमित्यस्मिन् ) प्रकृत्योत्तरास्वृक्षु तस्मिन्सूक्ते ( हविष्पान्तीये ) प्रकृतिभूम्ना स्तूयते महत आत्मनो महाभाग्यात् । अपि तानि सत्त्वान्यश्वप्रभृतीनि प्रकृतिभूमभिः स्तूयन्ते किमङ्ग पुनर्देवताः । तासामपि च विशेषतोऽग्निः । यस्य सर्वदेवतात्माभिवादः साक्षात्पठ्यते "अग्निः सर्वा देवताः" ( ऐ० ब्रा० २–१–२ ) इति । "इन्द्रं मित्रं वरुणमग्निम्" ( ऋ० सं० २–३–२२ ) इति च । ( अथ शाकपूणिमतम् ) तदेतदस्मिन्नेव सूक्ते स्फुटतरमुपदिश्यते यथा–पार्थिव एवायमग्निस्तेन तेन देवताविशेषेण ( देवतात्मा ) तत्तत्स्थानमापन्नः स्तूयत इति तदर्थमाह—

**अथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति ॥**

---

१. दुर्गस्तु—अवर्धयन्तेत्यर्थं इत्याह ॥

२. वैश्वानरस्य भिन्नज्योतिर्लक्षणं निर्णिनीषन्नित्यन्वयः ॥

३. सप्तमीलिङ्गादेतदध्याहृतं भाष्यकारेणेति ध्रुतम् ॥

४. "मतौ च" ( पा० ४–४–१३६ ) इति मत्वर्थे घो बाहुलकाद्घचो मुगागमश्च । घस्येयादेशः ( पा० ७–१–२ )

५. "उपसर्गाच्छन्दसि धात्वर्थे" ( पा० ५–१–११८ ) इति धात्वर्थविशिष्टे साधने वर्तमानात्पराशब्दात्स्वार्थे वतिः ॥

---

१. अन्तर्भावितण्यर्थादसतेः "अन्येभ्योऽपि दृश्यन्ते" ( पा० ३–२–७५ ) इति विच् । दृशिग्रहणान्नावे । ततो मतुप् ॥

**अथ** तदुपक्रम्यते यत् **एताभ्यां** वक्ष्यमाणाभ्यामनुपदम् (सूक्ताभ्याम्) **एनं** पार्थिवाग्निं **सर्वाणि स्थानानि** पृथिव्यन्तरिक्षद्युलक्षणानि **अभ्यापादम्** अभ्यापाद्याभ्यापाद्य "आभीक्ष्ण्ये णमुल्च" (पा० ३-४-२२) इति णमुल्। स्तौति मन्त्रदृक् अस्मिन्नेव सूक्ते ॥ ४ ॥ ( २६ )

**"मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्। मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन्" ॥ १ ॥**

(ऋ० सं० ८-४-११)

**मूर्धेति** । उक्तमार्षादि । **अग्निः** वैश्वानरगुणकः पार्थिवोऽग्निः । **नक्तं** रात्रौ **भुवः** भूलोकस्य भूतजातस्य वा **मूर्धा** शिरोवत्प्रधानभूतः **भवति** रात्रौ सर्वप्राणिनामालोकस्याचपकेष्व तदधीनत्वात्। ततो रात्रेरनन्तरं **प्रातः उद्यन्** उदितः सन् स एवायमग्निः **सूर्यो** भूत्वा **जायते**ऽहनि। स एव वैश्वानरोऽग्निः सूर्यो भवतीत्यर्थः । **यज्ञियानां** यज्ञसंपादिनां (यज्ञार्हाणाम्) देवानाम् **एतां मायां** प्रज्ञां (निघं० ३-९-९) **तु** सतत्त्वविदः कवयो मन्यन्त इति शेषः। उ वितर्के। संहितायां दीर्घः (पा० ६-३-१३७)। सायणमते एवार्थे। **यत्** एषोऽग्निः **अपः** कर्म (निघं० २-१-१) आत्माधिकारप्रयुक्तमादित्यात्मना अभ्यात्मना वा कर्तव्यम्। **प्रजानन्** प्रकर्षेण जानन् **तूर्णिः** त्वरमाणः । कर्मकालमपरिहापयन् **चरति** सर्वाणि स्थानान्यनुसंचरेत इत्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**मूर्धा मूर्तमस्मिन्धीयते, मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निः। ततः सूर्यो जायते प्रातरुद्यन् स एव प्रज्ञां त्वेतां मन्यन्ते यज्ञियानां देवानां यज्ञसम्पादिनाम्। अपो यत् कर्म चरति प्रजानन् सर्वाणि स्थानानि—अनुसंचरते। त्वरमाणः ॥**

**मूर्तमस्मिन्** सर्वं सत्त्वजातमुपनिबद्धं धीयते इति **मूर्धा** तलोप आर्षः। यथा हि शिरसो वियोगे तद्वतोऽवश्यंभावि मरणमेवमग्निवियोगेऽप्यवश्यं म्रियन्ते भूतानीत्यतः प्रधानम्।

अथ—

**तस्योत्तरा भूयसे निर्वचनाय ॥**

**तस्य** स्थानत्रयाभिसंपत्तिरूपसमर्थस्य **उत्तरा** अपरा ऋक् **भूयसे** बहुतराय **निर्वचनाय** निरुच्य वचनाय भूयस्तरमेनमर्थं वक्ष्यीयमनुपदीया ऋगित्यर्थः। पूर्वया तु स्थानद्वयमेवाभिसंपन्नः स्तुत इति ॥ ५ ॥ ( २७ )

**"स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम्। तमू अकृण्वन् त्रेधाभुवे कं स ओषधीः पचति विश्वरूपः ॥ ५ ॥"**

(ऋ० सं० ८-४-११)

**स्तोमेनेति**। **देवासः** देवाः। "आज्जसेरसुक्" (पा० ७-१-५०) **शक्तिभिः** कर्मभिः (नि० २-१-२५) अग्निहोत्रादिभिः **रोदसिप्राम्** द्यावापृथिव्योरापूरयितारमेतम् **अग्निम् दिवि** द्युलोके आदित्यात्मना **स्तोमेन हि** स्तुत्या खलु **अजीजनन्** उत्पादितवन्तः। अपि च **तमु** तमेव **कं** सुखकरमग्निं यज्ञे **त्रेधाभुवे** त्रैधाभावाय । पृथिव्यामन्तरिक्षे दिवि च **अकृण्वन्** कृतवन्तः। कुर्वन्तीति सायणस्तन्मते वर्तमाने लङ् (पा० ३-४-६) **स** एवमवस्थितो जगद्यात्रासिद्धये सर्वावस्थः **विश्वरूपाः** सर्वरूपाः (सर्वविधाः) **ओषधीः** व्रीह्याद्याः। तेनतेनोपकारेण पचति ॥ ५ ॥

अथास्य भाष्यम्—

**स्तोमेन हि यं दिवि देवा अग्निमजनयञ्छक्तिभिः कर्मभिः। द्यावापृथिव्योः पूरणं तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः ॥**

प्रकृतस्यैव **शाकपूणेः** पुनर्ग्रहणं स्वपक्षानुस्मृतये। संकरो ह्यस्मिन्सूक्ते आत्मविन्नैरुक्तयाज्ञिकानामिति ॥

ब्राह्मणमपि चैतमेवार्थं ब्रवीत्ययमेवाग्नेरादित्यो भवतीति—

**"यदस्य दिवि तृतीयं तदसावादित्य" इति ब्राह्मणम् ॥**

**अस्य**—इति इदमा व्यपदेशात्पार्थिवस्याग्नेः प्राधान्यं दर्शयति। उभाभ्यां पक्षाभ्यां व्याख्याय स्वपक्षसाधनमुक्त्वा देवतासतत्त्वमालम्ब्य निरुच्यते—"एकमेवेदं ज्योतिः, ज्योतिष्ट्वाविशे-

१. अभीक्ष्णमभिसंपन्नं कृत्वा, तत्तत्स्थानीयतयेत्यर्थः ॥
२. सौक्तमेव सर्वं यथोक्तम् ( ) एवमग्रेऽप्यूह्यम् ॥
३. "यज्ञर्त्विग्भ्यां घखञौ" (पा० ५-१-७१) इति अर्हार्थे घस्येयादेशः ॥
४. भाष्यकारीयस्त्वेनात्मनेपदं चरतेस्तृतीयायुक्तादपि दर्शितः ॥

१. यजमानाः। ते हि हविषां दातारः श्रद्धयच्छ्रद्धया। "एष नोदियाच्चेतामग्नावाहुतिं न जुहुयादिति आहुतिभिरेवैनं जनयन्ति" इति दुर्ग आह ॥
२. "प्रा पूरणे" (आ० प०) क्विप्। ह्रस्वोऽलुक् चौङ आर्षः ॥
३. एधः प्रकारवचने "एधाच्च" (पा० ५-३-४६) इत्येधाच्प्रत्ययो "यस्येतिच" (पा० ६-४-१४८) इतीकारलोपः। भवनं भूः। भावे क्विप् "भुवः प्रभवः" (पा० १-४-३१) इतिवत् ॥
४. त्रेताग्निनैव हि हुतेन वृष्टिरित्यसकृदवोचाम "अग्नौ प्रास्ताहुति" रित्यादि ॥

पात् । तत्पुनरेतज्जगद्यात्रासिद्धये त्रिधा विभक्तं पृथिव्यामन्तरिक्षे–दिवि च विभक्ताभिधानं संपद्यते अग्निर्–विद्युत्–आदित्य" इति ।

तदेवं सति ज्योतिषोऽस्य **यत् दिवि** दृश्यते **तत्तृतीयमसावादित्य** इत्यर्थः ॥

**तदग्नीकृत्य स्तौति ॥**

**तत्** ज्योतिस्तृतीयमादित्याख्यमस्मिन्हविष्पान्तेसूक्ते **अग्नीकृत्य** अग्निरूपेण मन्त्रदृक् **स्तौति** ।

**अथैनमेतया पुनरादित्यीकृत्य स्तौति ॥ ६ ॥ ( २८ )**

**"यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् । यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन् भुवनानि विश्वा" ॥ १ ॥**

( ऋ० सं० ८–४–१२ )

**यदेदिति** । **यदा इत्** यदैव **यज्ञियासः** यज्ञियाः यज्ञार्हाः सर्वे **देवाः दिवि** द्युलोके प्रातः । **आदितेयम्** अदितेः पुत्रं सूर्यम् **एनम्** अग्निं च **अदधुः** धृतवन्तः ( स्थापितवन्तः ) । **यदा** चेमौ **चरिष्णू** सर्वदा सहचरणशीलौ सूर्यवैश्वानरौ **मिथुनौ** प्रादुः **अभूताम् आदित्** अनन्तरमेव **विश्वा** विश्वानि ( सर्वाणि ) शेर्डा ( पा० ७–१–३९ ) **भुवनानि** भूतजातानि तौ **प्रापश्यन्** प्रकर्षेण पश्यन्ति स्म ॥ १ ॥

अथास्य भाष्यम्—

**यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमादितेयमदितेः पुत्रं यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च । मिथुनौ कस्मात् ? मिनोतिः श्रयतिकर्मा, थु इति नामकरणस्थकारो वा नयतिः परो वनिर्वा, समाश्रितावन्योन्यं नयतो, वनुतो वा, मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योन्यं वनुत इति वा ॥**

**मिनोतिस्तावदत्र श्रयतिकर्मा** श्रयत्यर्थः । मिथुनशब्दे पूर्वपदं "मि" इति, **थु इति नामकरणः** प्रत्ययः । **थकारो वा** नामकरणो विकल्पेन । **नयतिः परः** उत्तरपदे **वनिर्वा** विकल्पेन । यदा तावत् "थु" इति नामकरणो नयतिश्च परः । तदा धातोः पूर्वत्वात्प्रत्ययस्य परत्वात् "मि–न–थु" इति प्राप्ते रूढेर्बलीयस्त्वान्मध्यान्तविपर्ययेण मिथुनावित्युक्तम् । अथ पुनर्यदा थकारो नामकरणस्तदा वनिरुत्तरः तदा वकारस्य संप्रसारणं, संप्रसारणपरपूर्वत्वं मध्यान्तविपर्ययः । थकारे च यः स्वरस्तस्य लोपः, थकारश्चोकारमुपसंक्रमेत । एवं मिथुनाविति सिध्यति । अथ कोऽर्थः ? **समाश्रितौ–अन्योन्यं** प्रत्यात्मानं **नयतः** कालं वा समाश्रितौ भवतः परस्परं संभक्तौ । **मनु००एव** । अथ वा मेथतेर्वनोतेश्च मनुष्यमिथुनौ स्याताम् । तौ हि कर्मार्थं **मेथन्तौ** सङ्गच्छन्तौ **अन्योन्यं वनुतः** कामयत **इति** मिथुनावुच्येते । वनोतिः कान्तिकर्मा (निघं० २–६–८) तथाच "मिथृ मेधाहिंसनयोः" ( भ्वा० प० ) इत्यस्यार्थोशो वनोतेश्च कृतसंप्रसारणपूर्वरूपत्वस्यान्त्योंश इति धातुद्वयजो मिथुनशब्दोऽत्रार्थे ऊरीकृतः । दुर्गस्तु–"मेथतेर्मनुष्यमिथुनौ स्यातां तौ हि कर्मार्थं मेथन्ताविव परस्परेण कालं नयत इत्येवं व्याचख्यौ ॥

**अथैनमेतयाग्नीकृत्य स्तौति ॥ ७ ॥ (२९)**

**अथ** पुनः **एनम्** आदित्यम् **एतया** उत्तरयर्चा–एतस्मिन्नेव सूक्ते **अग्नीकृत्य** अग्निरूपेण होतृत्वेन **स्तौति** । होतृत्वं ह्यग्नेः कर्म, न सूर्यस्य । "अग्निमद्य होतारमवृणीतायं यजमान" इत्यादि परःशतनिगमवाक्यात् । तस्मादिदमग्निवैश्वानरीयं सूक्तम् ॥ ७ ॥ ( २९ )

**"यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद । आशेकुरित्सधमादं सखायो नक्षन्त यज्ञं क इदं विवोचत्" ॥ २ ॥**

( ऋ० सं० ८–४–१३ )

**यत्रेति** । **यत्र** यस्मिन्कर्मणि **अवरः** अयमग्निः पार्थिवः **परश्च** असौ च मध्यमो वायुः । उभौ दैव्यौ होतारौ परस्परं **वि वदेते** विवादं कुर्वाते । किम् ? **यज्ञन्योः** यज्ञस्य नेत्रोः **नौ** आवयोर्मध्ये **कतरः** यज्ञे भूयः ( बहु ) **वेद** वेत्तीति । तत्र य एते **सखायः** समानख्याना ऋत्विजो यज्ञे विनियुक्ताः **सधमादम्** सहमादं सहमदनं ( यत्र समेत्य सर्वे देवाः सार्त्विग्यजमाना माद्यन्ति तमिमं ) **यज्ञम् आशेकुः** आशक्नुवन्ति ( सर्वतोभावेन कर्तुं पारयन्ति ) वर्तमाने लिट् ( पा० ३–४–६ ) तथा **नक्षन्त** अनक्षन्त समश्नुवते यज्ञम् । अनुतिष्ठन्ति चेत्यर्थः । "नक्षति" शब्दो व्याप्तिकर्मसु पठितः ( निघं० २–१८–२ ) ततो वर्तमाने लङ् ( पा० ३–४–६ ) अडभावः

---

१. पूर्वोक्तसूक्त– "हविष्पान्तम्" इत्येवमाधाय ॥

२. यज्ञसंपादिनो यजमानाः । यात्रेन कर्मणा सर्वस्यास्यापूर्वकृतत्वाज्जगद्विरचनाप्रपञ्चाय रश्मयो वा देवाः सौर्यास्तदैनमुन्नीतवन्तः इति दुर्ग आह ॥

१. मेधा संगमः "मेधृ संगमे" ( भ्वा० उ० ) इत्यनुशासनात् । मेथतेस्थान्तत्वं क्षीरस्वामिनां मतेन ॥

२. अत्र दुर्गः—नेरुपसर्गस्यापकृष्य यत्र क्रियापदेन सामर्थ्यं तत्रानयनमित्याह । यत्र विवदेते इत्यादिभाष्यस्वरसादर्थसङ्गतेश्च । सायणस्तु–शास्त्रे वदते इतिवद्भासनार्थे आत्मनेपदमभिप्रयन् वदेते विवादं कुर्वाते इत्याह । तथाच सूत्रम् "भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" ( पा०१–३–४७ ) इति ॥

पदव्यत्ययश्चार्षः । ते सोत्प्रासं वदन्ति–कः विद्वानत्रुष्ठाता वा **इदम्** अस्य विवादस्य निर्णयरूपं वाक्यं **विवोचत्** विवक्ष्यति ? भविष्यति लुङ् ( पा० ३–४–६ ) अडभावश्चार्षः ( पा० ६–४–७५ ) अर्थात् को न इदं विवक्ष्यतीति ? कतर एतयोर्यज्ञे भूयो वेदयति । उभावप्येतौ यज्ञे भूयोविदाविति भावः । इदिति पादपूरणः ॥ २ ॥

अथास्य भाष्यम्—

**यत्र विवदेते दैव्यौ होतारौ–अयं चाग्निरसौ च मध्यमः कतरो नो यज्ञे भूयो वेदेति आशक्नुवन्ति सत्सहमदनं समानख्याना ऋत्विजस्तेषां यः समश्नुवानानां को न इदं विवक्ष्यतीति ॥**

अत्र सदिति सहमदनं यज्ञं विशिनष्टि । दुर्गस्तु–सहमदनं सहर्षमुपश्रुत्यानयोराशेकुराशक्नुवन्ति । अशक्नुवन्तश्च किं ब्रूयुः ? क इदं विवोचत् को न इदं विवक्ष्यतीत्येवं व्याचख्यौ ।

एवं पूर्वस्यामुभावप्येतौ यज्ञे भूयोविदाविति तेषामुक्तिभङ्ग्या उभावपि स्तुतौ ।

अथ विभज्य तयोः केवलोऽग्निरेव यया स्तूयते तां वक्तुमुपक्रमते—

**तस्योत्तरा भूयसे निर्वचनाय ॥८॥ ( ३० )**

**तस्य** प्रतिज्ञातस्यार्थस्य ( अग्निप्रधानमेतत्सूक्तं होतृकर्मणोऽग्निसंबद्धत्वाद्विशेषलिङ्गेन, न सूर्यप्रधानमित्यस्य ) **उत्तरा** ऋक् **भूयसे** बहुतराय **निर्वचनाय** निरुच्यवचनाय ॥८॥ (३०)

**"यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः । तावद्दधात्युप यज्ञमायन् ब्राह्मणो होतुरवरो निषीदन्" ॥ ३ ॥**

( ऋ० सं० ८–४–१२ )

मातरिश्वना कश्चित्पृष्टः "दैव्यस्य होतुरग्नेर्यद्विज्ञानं तत्किमयं ब्राह्मणो मनुष्यहोता यज्ञमागच्छन् बिभर्ति ?" इति । स तं प्रत्याह–**यावदिति** । **हे मातरिश्वः** ! हे मातरिश्वन् ! (मातर्यन्तरिक्षे श्वसन् माध्यमिकवायो ! ) **यावन्मात्रं** यावदेवैताः **सुपर्ण्यः** सुपतना रात्रयः आत्मन्यनुप्रविष्टं **उषसो न** उषसः संप्रति । नेत्ययंयं संप्रत्यर्थे वक्ष्यते, उपमानासंभवात् । लोकेपि "इहेव विधेही"त्युक्ते इहसंप्रतीति गम्यते । **प्रतीकं** प्रत्यक्तं ( व्यक्ततरम् ) अङ्गं मुखं, प्रकाशाख्यं दर्शनं वा **वसते** आच्छादयन्ति "वस आच्छादने" ( अ० आ० ) लट् । अभिभूय तमो वर्तन्ते स्वयमेव । अथवा वसतिर्दर्शनार्थः । यावन्मात्रमुषसो रात्रिषु दृश्यन्ते **तावत्** एवायं **ब्राह्मणः** होता **अवरः** निकृष्टः स्वल्पविज्ञानः होतृत्वेन वृतः होतृषदने **निषीदन्** हौत्रं कर्म कुर्वन्नुपविशन् **यज्ञं** च **आयन्** आगच्छन् । ( परस्य भूयोविदः ) **होतुः** अस्याग्नेर्वैश्वानरस्य दैव्यस्य होतुर्ज्ञानं होतृकर्म स्वबुद्धौ **उप दधाति** धारयतीति भाष्यानुसृतं सायण आह ॥

अत्र दुर्गः–"दैव्यस्याग्नेः परस्य भूयोविदोऽवरोऽन्योऽल्पविदिति अनुकरोत्यल्पमिति । मानुषो हि अभ्यनुग्रहादेव अयमल्पविज्ञानोऽपि होता हौत्रं करोति इति पार्थिवोऽग्निर्विशेषतोऽभिष्टूयते" इत्याहोपसंहरन्वाख्याम् ॥ ३ ॥

अथास्य भाष्यम्—

**यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वाऽस्त्युपमानस्य संप्रत्यर्थे प्रयोगः । इहेव निधेहीति यथा । सुपर्ण्यः सुपतना एता रात्रयो वसते । मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति । यज्ञमागच्छन् । ब्राह्मणो होतास्याग्नेर्होतुरपरो निषीदन् ॥**

अत्र **ज्योतिर्वर्णस्येति**–अस्याग्नेरित्यस्य विशेषणं प्रति-

---

१. "सोत्प्रासः समनाकुसितम्" इति । "सोल्लुण्ठनं तु सोत्प्रासम्" इति चामरः ॥

२. भाष्यसाक्षिकोऽयमर्थः । क इति मध्यस्थानदेवता ( निघं० ५–४–१४ ) क्रमेः क्रमेर्वा "अन्येष्वपि दृश्यते" ( पा० ३–२–१०१ ) इति डः । इति व्याख्याने तु को माध्यमिको देवो वायुरिदं विविक्त्यावोचत्–"कत्यग्नयः" इत्यादिमतोऽग्रेतनं मन्त्रं पितॄन्प्रति । अस्योत्तराणि वालखिल्यसंहितायां दर्शितानि–"एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः । एकैवोषाः सर्वमिदं विभात्येकं वा इदं विबभूव सर्वं" इति सायणभाष्यम् ( ऋक्संहितायां षष्ठाष्टकस्य चतुर्थाध्याये त्रयोदशवर्गानन्तरमष्टादशवर्गात्मकं वालखिल्यं पठ्यते तत्र षोडशे वर्गे द्वितीयोऽयं मन्त्रः ) ॥

३. तथा च निरुक्तम्–"पदपूरणास्ते ० ० कमीमिदिति" ( १–३–५ ) ॥

१. तथा च श्वसतेः क्विन्तस्य कृतरूपस्य संबोधनं मातरिश्व इति । अर्थतौल्यान्मातरिश्वन्निति प्रसिद्धेन नान्तेन पर्यायवचनम् ॥

२. सायणस्तु–नेति पूरण इत्याह ॥

३. तथा च दुर्गः–प्रत्यञ्चितं प्रतिगतं प्रकाशस्येति । तथाच प्रकाशस्य प्रति आभिमुख्येन गतमङ्गं मुखमेव कोशेऽपि "अङ्गं प्रतीकोऽवयवोऽपघन" इत्युक्तम् । पाणिनिरपि "अपघनोऽङ्गम्" ( ३–३–८५ ) इत्याह । यद्यप्यत्र वृत्तिकृता मुखमिति नोक्तं तथापीह दुर्गव्याख्यया प्रकरणेन च तदेवाभिहितम् ॥

४. अस्योपदधातीत्यनेनान्वयो बोध्यो यथाभाष्यम् । अत्र दुर्गः–तावत् इत्येवमपि स्वल्पमेव, एतावन्मात्रमयं स्वल्पविज्ञान उपायं धारयतीत्याह ॥

५. एतच्च षष्ठीबलेन प्रकरणेन चावगतम् तस्य सकाशादेवास्य ज्ञानं तदनुग्रहादेवेति तस्यानुकुर्वन्नयं ततोऽल्पविज्ञानो भवत्येवेति दुर्गस्वरसः ॥

भाति। ज्योतिर्लिङ्गस्येति हि तदर्थः। ज्योतिर्ज्ञानमित्यनर्थान्तरमेव। उभयस्य प्रकाशमयत्वात्। ज्ञानप्रधानो ह्ययं दैव्यो होताऽत एवायं परोऽयमवरोऽल्पविज्ञान एतदस्मादिति भावः।

तदेतदेवं कृत्वाऽग्निप्रधानकर्मत्वात्सूक्तं वैश्वानरीयम्। येऽत्र वैश्वानरशब्दास्ते पार्थिवाग्निं विशेषणत्वेन।

**होतृजपस्त्वनग्निर्वैश्वानरीयो भवति ॥**

एवमपि तु सति अयमनग्निः प्रकृतादग्निभिन्नविषयः वैश्वानरीयो होतृजपः भवति विप्रतिपन्नपक्षे "प्रमाणमि"ति शेषः। स हि सवितारं सूर्यमेवाग्निमाह तत्र का गतिः? इति पूर्वः पक्षः तुशब्देन सूचितः। यथा—

**"देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण" इति ॥**

एवमेतं जपं वर्णयन्ति—स्वपक्षे निःक्षिपन्तो भाष्यकृत उत्तरपक्षतया—

**इममेवाग्निं सवितारमाह—सर्वस्य प्रसवितारम् ॥**

इमं—पार्थिवमेव। कथम्? प्रसवितारं पितरं पालकं सर्वस्य भूतजातस्य यद्द्वारेण—अग्नौ प्रास्ताहुत्यैव जगतो जीवनमित्यसकृदवोचाम। आह मन्त्रदृक्।

**मध्यमं वोत्तमं वा पितरम् ॥**

अस्य "वैश्वानरमाहे"ति शेषः। तथाच सह तेन वैश्वानरेण पित्रा। एवं द्वौ पितापुत्राविति व्यपदेशात्पार्थिवादन्यो वैश्वानरः। स च पुनर्मध्यमो वोत्तमो वेत्येवमेवमनग्निर्वैश्वानरीयत्वेऽपि सति होतृजप इति स्वरूपव्याक्रियैव पराकरोति।

अत्रापि—

**यस्तु सूक्तं भजते तस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्वैश्वानरः ॥**

किं कारणम्? अनग्निवैश्वानरत्वेऽपि सति होतृजपस्यायमेव पार्थिवोऽग्निर्वैश्वानर इत्यवध्रियते याज्ञिकपक्षे। आचार्यपक्षे त्वयमेवैको मन्त्रो व्यपदेशहेतुरग्नेर्वैश्वानरत्वं ब्रवीति। संप्रति मन्त्रेणाग्नेर्व्यपदेशवता अग्नेर्वैश्वानरत्ववाचिना "आदूतो अग्निमंभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः" इत्यनेन (७-२६) शाकपूणिपक्षेण स्वेनाव्यभिचारिणा समीभवति। तद्धितव्यपदेशादयस्तु पार्थिवस्य वैश्वानरत्वसाधका विशेषहेतवः षड् व्यभिचारिणोऽतिरिच्यन्ते।

एतस्माद्विशेषहेतुबाहुल्यादयमेव पार्थिवोऽग्निर्वैश्वानरः सूक्तभाक् हविर्भाक् चेति सूपपन्नम्।

**निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते भजेते ॥ ९ ॥ (३१)**

**इति श्रीमद्यास्कमु० प्र० नि० शास्त्रे दै० कां० सप्तमाध्यायस्य सप्तमः पादः अध्यायश्च समाप्तः ॥ ७ ॥ ७ ॥**



एतेन वैश्वानर इत्यनेन निपातमेव भजेते इति उक्तवदर्थकं, पदद्वित्वमध्यायसमाप्तिसूचकम्। अत्र दुर्गाचार्य आह (अध्यायव्याख्यामुपसंहरन्)।

तदेवमेतस्मिन् "वैश्वानर" पदविचारप्रसङ्गे हविष्पान्तीयं सूक्तमुपक्षिप्य सूर्यो वैश्वानरः, अग्निर्वैश्वानर इति—एकमेवेदं ज्योतिस्त्रिधा वर्तते इति मन्त्रस्य भावोपप्रदर्शनार्थमुपवर्णितम्। ईदृशेषु शब्दार्थन्यायसंकटेषु मन्त्रार्थघटनेषु दुरवबोधेषु मतिमतां मतयो न प्रतिहन्यन्ते, वयं त्वेतावदत्रावबुध्यामह इति ॥ ९ ॥ (३१)

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० सप्तमाध्यायस्य सप्तमः पादः। सप्तमाध्यायः समाप्तः ॥ ७ ॥ ७ ॥

---

## अष्टमाध्यायस्य प्रथमः पादः ॥

**द्रविणोदाः कस्मात्? धनं द्रविणमुच्यते—यदेनदभिद्रवन्ति। बलं वा द्रविणं—यदेनेनाभिद्रवन्ति। तस्य दाता द्रविणोदाः। तस्यैषा भवति ॥ १ ॥**

अथ द्रविणोदा इत्येतद्दैवतपदं प्रश्नोत्तराभ्यां निर्ब्रवीति। तत्र पूर्वपदं तावद्विगृह्य निर्ब्रवीति—धनमिति। अत्र हेतुमाह—यदिति। एनत् कर्मभूतं धनमभिलक्ष्यार्थिनो द्रवन्ति तस्मादेतद्द्रविणमुच्यते। तथाच द्रवतेर्गत्यर्थात् (भ्वा० प०) कर्मणि "द्रुदक्षिभ्यामिनन्" (उ०२-५२) इति इनन्प्रत्यये गुणणत्वे रूपम्। अथ वा बलं द्रविणम्। अत्रार्थे करणे-इनन्पूर्वेणैव। तदाह-यदेनेनेति। यस्मादेनेन अनेन। अत्रान्वादेशे इदम एनादेशः (पा० २-४-३४) बलेन संयुक्ताः सन्तः परान् अभिद्रवन्ति अभिभवन्ति तस्मात्। अथोत्तरपदं निराचष्टे-तस्य दातेति। तथाच ददातेरसुनि (उ० ४-१८८) पूर्वपदस्य सकारोपजने च द्रविणोदाः भूस्थानदेवता तस्य प्राधान्यस्तुतियुक्ता एषा अनुपदीया ऋक् भवति। यां दृष्ट्वा देवतापदसमाम्नाये एव समाम्नात इत्येवमग्नेऽप्यूह्यम् ॥ १ ॥ (१)

**"द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे। यज्ञेषु देवमीळते ॥ १ ॥"** (ऋ० सं० १-१-२८)

द्रविणोदा इति। मेधातिथेरार्षं गायत्री। द्रविणसः धनार्थिन ऋत्विजः ग्रावहस्तासः ग्रावहस्ताः। असुगागमः (पा० ७-१-५०) अभिषवसाधनपाषाणधारिणः। अध्वरे अग्निष्टोमादौ प्रकृतिस्वरूपे यज्ञेषु विकृतिरूपेषु उक्थादिषु च। दुर्गस्तु—यजतिषु हविःसंप्रदानेषु सवनेषु वा यागस्थानेष्वित्येवमाह। द्रविणोदाः द्रविणोदसम् "सुपां सुलुक्—" (पा० ७-१-३९) इत्यादिना अमः सुः। धनप्रदं यं देवम् ईळते

याचन्ति–स्तुवन्ति–वर्धयन्ति–पूजयन्तीति वा । सोऽस्मभ्यं द्रविणानि ददात्वित्येतदाशास्महे ॥ १ ॥

अथास्य भाष्यम्—

**द्रविणोदा यस्तम् । द्रविणस इति–द्रविणसादिन इति वा, द्रविणसानिन इति वा, द्रविणसस्तस्मात्पिबत्विति वा । यज्ञेषु देवमीळते । याचन्ति–स्तुवन्ति–वर्धयन्ति–पूजयन्तीति वा ॥**

इति । अत्र—**द्रविणोदा** इति प्रथमैकवचनान्तं कर्तृपदं बहुवचनान्तक्रियापदेनाभिसंबन्धुमशक्नुवन्स्तुत्ये द्रविणोदसि तत् कर्मत्वेन नमयांचकार **यस्तमि**त्यध्याहृत्य । तथाच द्रविणोदा यो देवस्तं द्रविणोदसमिति वाक्यार्थः । **द्रविणसः** द्रविणाय तदर्थं (द्रविणं लप्स्यामहे) इति कर्मसु सीदन्ति गच्छन्ति (ऋत्विगादिरूपेण) तच्छीला इत्यर्थे क्विप् । तस्य डित्वमाश्रित्य टिलोपश्च बाहुलकात् (पा० ३–३–१) । तदाह–**द्रविणसादिन इति** । **वा**शब्दः प्रकारान्तरवचनः स इह शब्दप्रकारभेदमेव तावदर्थंस्त्वेक एवेत्यवगमयति । अथ **वा द्रविणसानिन इति** । द्रविणस्य धनस्य–गवादे–र्हविषो वा देवतार्थस्य सानिनः संभक्तारः । "षण संभक्तौ" (भ्वा० प०) ततोऽपि पूर्ववत्प्रक्रिया । अर्थे विशेषः । अथ **वा** यद्वृत्तमकृत्वापि वाक्यं प्रथमान्ततयैव स्तुत्यस्य निराकाङ्क्षतया परिसमाप्यते पञ्चम्यैकवचनान्ततामस्याश्रित्येत्याह—**द्रवि००त्विति** । यं देवं द्रविणोदसमध्वरे यज्ञेषु च ग्रावहस्ता ऋत्विज ईळते स

१. द्रविणोदा देवः ॥

२. आशिषमध्याहृत्य समाप्यते, यमीळते स–इति यत्तदोः परस्परापेक्षित्वात् । एषोऽर्थः यामित्यध्याहृत्यामः सुभावमापाद्य यथोक्तरीत्या कथंचित्कृतोऽन्यथा द्रविणोदा इति कर्तृपदं चेत्क्रियायामसमानवचनार्थं नाभिसंबध्नीयात् । अस्य प्रथमान्तपक्षेऽपि द्रविणस इति पञ्चमीमाश्रित्य पिबत्वित्यध्याहारेण समर्थनमपि भाष्यकारेण कृतमनुपदं व्यक्तीभविष्यति ॥

३. द्रविणोदःपदम् ॥

४. "षद्लृ विशरणगत्यवसादनेषु" (भ्वा० प०) ततस्ताच्छील्यविशिष्टे कर्तरि क्विपा सादिन इत्यनेन समानार्थतोत्तरपदस्य भवति ॥

५. यस्तमित्यनध्याहृत्यापि । द्रविणोदसो देवतात्वात्स्तुत्यत्वेन सामर्थ्यमुन्नीतमिति न स क्रियापदेन याञ्चाद्यर्थकेनाभिसंबध्नीयात्तस्मात्पिबत्वित्येवाध्याहृत्य द्रविणोदस इति पदं पञ्चम्यन्ततया व्याचष्टे–तथा च वाक्यद्वयम् । अध्वरे यज्ञेषु च ग्रावहस्तासो देवमीळते । द्रविणोदा द्रविणसः (सकाशात्–तदंशं) पिबत्विति । एतयोश्च परस्परमभिसंबन्धाय–यं–स–इत्यध्याहृतमेव वृत्तिकृता । परं द्रविणोदा इत्येतत्कर्तृपदमेव स्तुत्यत्वेपि प्रथमान्ततया योजितं यथाचानुपदं निर्देक्ष्यते–यमित्यादिना । आशिषा संप्रयोगो हि वाक्यान्ते निगमव्याख्याधर्मो नैरुक्तानाम् ।

देवो द्रविणोदाः द्रविणसः–द्रविणसंभक्तुस्तस्मात्सोमात् (स्वमंशमादाय) पिबतु इति एतदाशास्महे ।

अथ द्रविणोदःपदे देवतातत्त्वं विचारयति—

**तत्को द्रविणोदाः ॥**

तत्र तावत्—

**इन्द्र इति क्रौष्टुकिः । स बलधनयोर्दातृतमस्तस्य च सर्वा बलकृतिः ॥**

**क्रौष्टुकिरिति** । आचार्यो "मन्यत" इति शेषः । अत्र हेतुमाह–**स** इत्यादिना । **दातृतमः** अतिशयेन दाता । अत्र **च** इति हेत्वर्थकोऽभिधानविग्रहे हि बलं द्रविणमित्युक्तम् । बलकृतिश्चेन्द्रस्य सर्वा तस्मादिन्द्रो द्रविणोदा इति तन्मतम् । अत्रार्थे—

**"ओजसो जातमुत मन्य एनमि"ति चाह ॥**
(ऋ० सं० ८–३–४–५)

मन्त्रदृक् । अधिपतित्वकृत एवास्य बलेनाभिसंबन्धः । तस्माद्युक्तं यत्तस्य दाता स्यात् । तथाहि—

"अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम् ।
मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद ॥"

**अश्वादिति** । शक्तिपुत्रस्य गौरिवीतेरार्षं मारुतं त्रैष्टुभम् । इन्द्रसामर्थ्यं दृष्ट्वा केचित् **एनम्** इन्द्रम् **अश्वात्** अशन–(व्यापन–)वतो मेघात् । आदित्याद्वाऽयम् **इयाय** आगत उदितवान्वा **इति** वदन्ति । **यत्** यद्यपि । **उत** तथापि अहमेनम् **ओजसः** बलात् (बलराशेः कुतश्चिदतिमहतः) **जातं मन्ये** जानामि । यथायमतिबलवाँल्लक्ष्यते । यतोऽसौ वृत्रादीन्प्रभूतबलपराक्रमान् हतवानित्यर्थः । अथवा **मन्योः** क्रोधात् दीप्तेर्वाऽयम् **इयाय** उक्तोऽर्थः । तत एव **हर्म्येषु** शत्रुसंबन्धिषु युद्धेषु सुसमृद्धगृहेष्वेव वा उदकाहरणाधिकारयुक्तेषु मेघवधकर्मसु वा **तस्थौ** तिष्ठति । वर्तमाने लिट् (पा० ३–४–६) । अथ वा किं जानीमः कुतोऽप्ययमैश्वर्याज्जात इत्यतो ब्रूमः । **यतः** यस्मादयमिन्द्रः–**प्रजज्ञे** प्रजातः **तद्** अस्य जन्मनस्तत्त्वम् **इन्द्रः** एव **वेद** जानाति । न ह्यन्यो ज्ञातुमीष्ट इति भावः ॥ ५ ॥

**अथाप्यग्निं द्रविणोदसमाह ॥**

**अथ** अयमपरोऽपि हेतुरिन्द्रस्य द्रविणोदस्त्वे यदिममग्निं–**द्रविणोदसम्–आह** ब्रवीति मन्त्रदृक् । स मन्त्रो मृग्यः ।

१. ततः "अशुप्रुषि–" (उ० १–१४९) इत्यादिनात्र कन् । "अशू व्याप्तौ" (स्वा० आ०) ॥

२. सर्वधाऽत्र हरतेः "अह्यादित्वाद्" (उ० ४–११२) यन्मुट्च । हरति मन इति हर्म्यम् ॥

३. तथा चामरः "हर्म्यादिधनिनां वासः" इति ॥

केचित्तु "द्रविणोदाः पिबतु द्राविणोदसः" ( ऋ० सं० २-८-१ ) इत्येव मन्यन्ते । तेन किमित्यपेक्षायामाह—

**एष पुनरेतस्माज्जायते ॥**

**एष** इन्द्रः **एतस्मात्** इन्द्रात् **जायते** । तथा च यस्यापत्यं द्राविणोदसोऽग्निः स एव द्रविणोदा इन्द्र इति सिद्धम् । कुत एतत् ?

**"यो अश्मनोरन्तरग्निं जजान" ॥**

( ऋ० सं० २-६-७-३ )

**इत्यपि निगमो भवति ॥**

ऐन्द्रे हि निगमे श्रूयते—

"यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा बलस्य ।
यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ॥"

**यो हत्वेति** । गार्त्समदैन्द्रं त्रैष्टुभम् । तृतीयेऽहनि दशरात्रस्य निष्कैवल्ये विनियोगः । गृत्समदो ब्रवीति—**यः अहिं** मेघं ( निघं० १-१०-२१ ) **हत्वा** ( मेघहननं कृत्वा ) **सप्त** संख्यया **सिन्धून्** स्यन्दनशीला आकाशनदीरेला-इला इत्येवमादिकाः । **अरिणात्** अगमयत् "रि गतौ" ( क्र्या० प० ) लङ् । **यः** च **बलस्य** मेघस्य ( निघं० १-१०-३ ) शिराणां छिद्राणाम् **अपधा** अपधानेन उद्घाटनेन **गाः** अपः **उदाजत्** उदगमयत् । **यः** च **अश्मनोः** अशनवतोर्व्याप्त्योर्द्यावापृथिव्योः **अन्तः** मध्ये **अग्निं जजान** जनयति । "जन जनने" ( जु० प० ) अस्मादन्तर्भावितण्यर्थाद्वर्तमाने लिट् ( पा० ३-४-६ ) **यः** च **समत्सु** सङ्ग्रामेषु ( निघं० २-१७-२२ ) शत्रूणां **संवृक्** संछेत्ता । "वृजी वर्जने" ( रु० प० ) क्विप् । अयं हिंसार्थे नैघण्टुकः वृणक्तीति ( २-१९-५ ) । हे **जनासः !** असुरजनाः । "आज्जसेरसुक्" ( पा० ७-१-५० ) इत्यसुगागमः । **सः** । **इन्द्रः नाहमिति**० ॥ ३ ॥

**अथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति । तेषां पुनः पात्रस्येन्द्रपानमिति भवति ॥**

**अथ**-अयमपरोऽपि हेतुरिन्द्रस्य द्रविणोदस्त्वे-यद् **ऋतुयाजेषु** ऋतवो यैर्मन्त्रैरिज्यन्ते त ऋतुयाजास्तेषु **द्राविणोदसाः** द्रविणोदःशब्दप्रयुक्ताः **प्रवादा भवन्ति** ततश्च तेषामृतुयाजानां पुनर्यत्पात्रं ( येन ते हूयन्ते ) तस्य **इन्द्रपानमिति** मन्त्रे समाख्या **भवति** । ( पीयतेऽनेनेति पानमिन्द्रस्य पानमिति कर्तृषष्ठ्या समास इन्द्रकर्तृकपानसाधनमिति तदर्थः ) । तद्यथा—

"अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् ।
तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥"

( ऋ० सं० २-८-१-४ ).

एतदग्रे व्याख्यास्यते यथोपयोगम् ॥

तथा—

"होतायक्षद्देवं द्रविणोदसमपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदा द्रविणसः स्वयमश्यात् स्वयमभिगूर्यात् स्वयमभिगूर्तया होत्रयर्तुभिः सोमस्य पिबत्वच्छावाक यज" इति । होतायक्षद्देवं द्रविणोदामित्यच्छावाकस्य संप्रैषो मैत्रावरुणो ब्रवीति-अध्वर्युणा ऋतुभिः प्रेष्येऽतिप्रेषितः **होता यक्षत्** यजतु **देवं द्रविणोदसम्** । स हि होत्रादिभ्यः सोमम**पात्** पीतवान् । अथ पुनरिदं **तुरीयं** चतुर्थं संप्रदान**ममृक्तम्** अशुद्धम् अपूर्णमित्यर्थः । **अमर्त्यं** यत्पीत्वा न म्रियते । अथवाऽमनुष्ययोग्यम् । **इन्द्रपानम्** इन्द्रस्य पातुं योग्यम् । तदेतद्**द्रविणोदा-देव** इन्द्रः प्रत्नमस्माभिरादरेण **द्रविणसः** धनादिसंभक्तुरस्मात्सोमात्स्वमंशं **स्वयमश्यात्** स्वयमश्नीयात् । **स्वयमभिगूर्यात्** स्वयमभ्युद्यच्छेत् । ततः **ऋतुभिः** कालेन सह **स्वयं पिबतु** । किम् ? **अभिगूर्तया** अभिमतया **होत्रया** स्तुत्या प्रदीयमानं **सोमस्य** स्वमंशम् **हे अच्छावाक !** लभ्यमेतदेवं ज्ञात्वा **यज** इत्यर्थः । तस्यैवाच्छा-

---

१. अत्र हि द्रविणोदःपदेनर्त्विज उच्यन्ते । ते यं जनयन्ति सोऽग्निर्द्रविणोदस इत्यर्थं इत्यरुचिवीजमत्रोदाहरणे ॥

२. स हि ऐन्द्रं रूपमास्थितोऽसुरैर्हन्यमानः किं मां हथ ? नाहमिन्द्रः कस्तर्हीत्यनेनावोचत । अत्रेतिहासो बृहद्देवतायामुक्तः— "संयुज्य तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः । अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ॥ १ ॥ तमिन्द्र इति मत्वा तु दैत्यौ भीमपराक्रमौ । धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः ॥ २ ॥ विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः । यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् ॥ ३ ॥" इति । यो जात इति सूक्ते स्वयं मन्त्रः पठ्यते । अत्रेतिहासान्तरं सायणभाष्ये द्रष्टव्यम् ॥

३. सायणस्तु-ऐतिहासिकपक्षेण व्याख्यदिमं मन्त्रं तत्र विशेषो यथा-सप्तसर्पणशीलाः सिन्धून्स्यन्दनशीला अपः अरिणात्प्रैरयत् । यद्वा सप्त गङ्गायमुनाद्या मुख्या नदीररिणात् । "रिङ् श्रवणे" क्र्यादिः । यश्च बलस्य बलनामकस्यासुरस्यापधा तत्कर्तृकात्तिरोधानात् निरुद्धा गा उदाजन्निरगमयत् । ( अपधा इति अपपूर्वाद्दधातेः "आतश्चोपसर्गे" इत्यङ्प्रत्ययः "सुपां सुलुक्" इति पञ्चम्या आकारः ) । यश्च अश्मनोः अश्नोति व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः । अत्यन्तमृदुरूपयोर्मेघयोरन्तर्मध्ये वैद्युतमग्निं जजान उत्पादयामास । यश्च समत्सु समदन्ति संभक्षयन्ति योद्धृणामायूंषीति समदः संग्रामास्तेषु संवृक् हिनस्ति । वृणतेर्हिंसार्थस्य क्विपि रूपम् । स इन्द्रो नाहमिति ॥

४. तथा च केशवः-"गौर्नादित्ये बलीवर्दे" इत्युपक्रम्य "पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु" इत्याह ॥

१. "मृजू शुद्धौ" ( अ० प० ) यद्वाऽमृक्तमनुपमृदितमनया देवतया अपरिभुक्तमित्यर्थः ॥

२. "गूरी उद्यमने" ( तु० आ० ) ततः क्तः ॥

३. अत एव क्वतन्यमिदमुपरितनघटितं सूक्तं शौनक आह ॥

वाकप्रैषस्यैषा याज्या—अपाद्धोत्रादिति गार्त्समदं जागतम् । यः **द्रविणोदाः होत्रात्** होतुर्यागात् सोमम् **अपात्** पीतवान् **उत** अपि च **पोत्रात्** पोतुर्यागात् **अमत्त** हृष्टवान् ( सोमं पीत्वाऽमाद्यत् ) **उत** अपि च **नेष्ट्रात्** नेष्टुर्यागात् आत्मने हितं पथ्यं, प्रत्तं वा **प्रयः** देवानामन्नरूपं सोमम् ( निघं० २-७ ) **अजुषत** असेविष्ट अप्रीयत च । "जुषी प्रीतिसेवनयोः" ( तु० आ० ) स तादृशः द्रविणोदाः इन्द्रः **अमृक्तं** दशापवित्रेणागृह्यम् **अमर्त्यम्** अमरणसाधनं **तुरीयं पात्रं** चतुर्थपात्रस्थं सोमं **पिबतु** यस्यापत्यं **द्राविणोदसः** अग्निरस्तीति शेषः ॥ ४ ॥

एवमेवास्मिन्निन्द्रस्य द्रविणोदःप्रवादवति प्रैषे पात्रस्य **इन्द्रपानम्** इति समाख्यास्ति । तस्मादिन्द्रस्तेन पिबतीति गम्यते । एवं चेत्प्राप्तमिन्द्रो द्रविणोदा इति ।

## अथाप्येनं सोमपानेन स्तौति ॥

**अथ**—अयमपरोऽपि हेतुरिन्द्रस्य द्रविणोदस्त्वे यदेनमिन्द्रं **सोमपानेन स्तौति** मन्त्रदृगृतुयाजेष्वेव । यथा—

"होत्रात्सोमं द्रविणोदः पिब ऋतुभिः"

( ऋ० सं० २-८-१-१ ) इति ।

नह्यन्य इन्द्रात्सोमपानेन स्तूयते, तदर्थत्वात्सोमसंस्कारस्य । भवति हि सोमाप्यायने च तत्संस्कारप्रधानो मन्त्रः । तद्यथा—

"अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे"

( य० वा० सं० ५-७ )

इति । तस्माद्यत्र यत्र सोमपानस्तुतिस्तत्र तत्रेन्द्रो देवतेति स्पष्टो न्यायः । प्रसिद्धतरं ह्येतद्—यदर्थ—मेव हविः संस्क्रियते तस्मा एव प्रदीयत" इति ।

## अथाप्याह—

"द्रविणोदाः पिबतु द्राविणोदसः" ॥

( ऋ० सं० २-८-१-४ )

इति । यस्य **द्राविणोदसः** अग्निरपत्यं स **द्रविणोदा इन्द्रः पिबतु** सोमांशमित्यर्थः ॥ ४ ॥ २ ॥

समाप्ताः कौष्टुक्यभिमताः पूर्वपक्षहेतवः ॥

अथ किमस्तु-एतैर्हेतुभिरिन्द्रो द्रविणोदा इति ? नेत्याह—

## अयमेवाग्निर्द्रविणोदा इति शाकपूणिः ॥

मन्यते । **अयमेव** यस्य पृथिवीस्थाने समाम्नानम् । अपि च-यदि मध्यमोऽभविष्यत् ततो यान्येतानि माध्यमिकानि ऐन्द्राणि वा पार्जन्यानि वा बार्हस्पत्यानि वा, तेषु द्राविणोदसाः प्रवादा अभविष्यन् मध्यमस्य कर्मणा चैनं रसानुप्रदानादिनाऽस्तोष्यन्, न चैतदुभयमस्ति किंतर्हि ?

## आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति ॥

**हि**शब्दो हेत्वर्थः । यस्मादाग्नेयेष्वेव **सूक्तेषु द्राविणोदसाः प्रवादा** विशेषणत्वेनाग्नेरेव **भवन्ति** अग्निकर्मणा चैनं सूक्तेषु स्तौति, नेन्द्रकर्मणा, तस्मादयमेवाग्निर्द्रविणोदाः ।

कथमित्यत उपदर्शयति—

"देवा अग्निं धारयन्द्रविणोदाम्" ॥

( ऋ० सं० १-७-३-१ )

## इत्यपि निगमो भवति ॥

अपिनाऽन्येऽपि बहवः सन्ति । तत्रायं यथा—

"स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।
आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदाम्" ॥ इति ।

कुत्सस्येयमार्षं त्रैष्टुभम् । आग्नेयम् । पितृयज्ञे स्विष्टकृत्पुरोऽनुवाक्या । **सहसा** बलेन । सह इति बलनाम ( निघं० २-९-१७ ) । **जायमानः** निर्मन्थनेनोत्पद्यमानः **सः** अग्निः **सद्यः** तदानीमुत्पत्त्यनन्तरमेव **प्रत्नथा** प्रत्न इव ( चिरन्तन इव ) "प्रत्नपूर्वविश्वेमात्थाल्छन्दसि" ( पा० ५-३-१११ ) इतीवार्थे थाल्प्रत्ययः । **विश्वा** विश्वानि सर्वाणि काव्यानि कवेः क्रान्तदर्शिनः प्रगल्भस्य कर्माणि पितृदैवतानि हवींषि **वै बट्** सत्यम् ( अव्ययम् ) **अधत्त** अधारयत् । पूर्वं विद्यमान इवायमग्निरुत्पत्तेरनन्तरमेव यथाऽवितथेन न्यायेन धारयितव्यानि दापयितव्यानि वा पितृभ्यो हवींषि, तथैव सद्योजातोऽपि धारयति वा ददाति वा । स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः । यमिममग्निं वैद्युतरूपेण वर्तमानं मेघेष्ववस्थिता **आपश्च धिषणा च** या माध्यमिका वाक् सा च ( निघं० १-११-४४ ) **मित्रं** सखिभूतम् **साधन्**

१. दशरात्रे षष्ठेऽहनि ऋतुयाजेषु प्रैषान्कुशिरस्कान्कृत्वा तैः प्रैषैः प्रेषितव्यं यष्टव्यं चेत्यनुक्रान्तं तत्र तुभ्यमित्याद्याः षट् प्रैषाः पूर्वसूक्ते निर्दिष्टा होत्रादिभिः क्रमेण प्रक्षिप्ताः सप्तमादयः षट् प्रैषा अनेन सूक्तेनोच्यन्ते य एतेऽपि होत्रादिभिः प्रक्षेपणीयाः । तत्रायं चतुर्थः प्रैषोऽपादिति । तत्र "तुभ्यं षड्तत्व्यं तु जागतं तु" इत्युपक्रमवचने तुशब्दः पुनरर्थे इति कृत्वेदमपि षड्कं सूक्तं तदेव । तथाचानुक्रान्तं "दूत्यं ऋतुयाजानां ० ० तुभ्यं हिन्वानो वसिष्ठगा अप इति द्वादश" इति । अत्रेतिशब्द आद्यर्थः ॥

१. उपलक्षणमेतदुत्तमस्यापि तस्याप्यनेनोपक्रमेण निराकरणाभिधानात् ॥

२. तथा चामरः—"पुराणप्रतनप्रत्नपुरातनचिरन्तनाः" इति ।

३. प्रथमार्थे "गुणवचनब्राह्मणादिभ्यः कर्मणि च" ( पा० ५-१-१२४ ) इति कर्मणि ष्यञ् । द्वितीयार्थे स्वार्थे "प्रज्ञादिभ्यश्च" ( पा० ५-४-३८ ) इत्यण् । कव्यं पितृभ्यो देयम् "हव्यकव्ये दैवपित्र्ये" इत्यमरः ॥

४. तदुत्पत्तियोगात्सहावस्थानाद्वा । तथा च श्रूयते "स तस्मादेतस्मादात्मन आकाशः संभूतः आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी" ति ॥

साधयन्ति । "षिधू संराद्धौ" ( दि० प० ) णिचि "सिध्यतेरपारलौकिके" ( पा० ६-१-४९ ) इत्यात्वम् । लोप्याडागमः ( पा० ३-४-९४ ) "इतश्च लोपः-" ( पा० ३-४-९७ ) इतीकारलोपः । "छन्दस्युभयथा" ( पा० ३-४-११७ ) इति शप आर्धधातुकत्वात् "णेरनिटि" ( पा० ६-४-५१ ) इति णिलोपः । कुर्वन्ति । तमिमं **द्रविणोदां** द्रविणस्य धनस्य दातारम् । "अन्येभ्योऽपि दृश्यते" ( पा० ३-२-७५ ) इति ददातेर्विच् । **अग्निं देवाः** दानादिगुणयुक्ता ऋत्विजः **धारयन्** गार्हपत्यादिरूपेण धारयन्ति । यद्वा **देवा** एव पूर्वे इन्द्रादयः द्रविणोदां द्रविणानां हविषां देवेभ्यो दातारं वोढारं कृत्वा दूत्ये, धारयन्धारयन्ति ॥ १ ॥

एवमेतस्मिन्नधिकारे यं धृतवन्तो देवाः सोऽस्माकमिदं नाम करोत्विति-आशिषैकवाक्यता । एवमेवाग्निः द्रविणोदा इति स्थितः पक्षः ।

अथोक्तं परपक्षं प्रतिक्षिपति—

**यथो एतत्—सबलधनयोर्दातृतम इति सर्वासु देवतास्वैश्वर्यं वर्तते ॥**

**यथो एतत्** यत्पुनरेतदुक्तम् **सब००तम इति** । अकारणमेतदिन्द्रस्य द्रविणोदस्त्वे । यतः **सर्वा००र्तते** । अत ऐश्वर्यात्सर्वा एव धनबलयोर्दात्र्यो भवन्ति । तस्मादवैशेषिकमेतदिन्द्रस्य कारणं द्रविणोदस्त्वे ।

**यथो एतत्—"ओजसो जातमुत मन्य एनम्" इति चाहेति, अयमप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेनमाह—सहसस्पुत्रं सहसः सूनुं सहसो यहुम् ॥**

**यथो एतत्** यदप्युक्तम् बलकृतिमधिकृत्य—**ओज००एनमिति** । तदप्यवैशेषिकमिन्द्रस्य । यतो**ऽयम००यते** । **तस्मात्** एव कारणात् **एनमग्निं सहसः पुत्रमित्येवमादिकमाह** मन्त्रदृक् । अत्र "षष्ठ्याः पतिपुत्र" ( पा० ८-३-५३ ) इत्यादिना विसर्गस्य सत्वम् । यहुरपत्यं ( निघं० २-२-११ ) तदत्र निगमाः क्रमेण पठ्यन्ते ।

"दूतः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः" ॥ ६ ॥ ( ऋ० सं० २-५-२८ )

गृत्समदस्यार्षं गायत्री आग्नेयी । अग्नौ समिदाधाने विनियोगः । **दूतः** दूतमानः **सर्पिरासुतिः** सर्पिरासूयते आसिच्यतेऽस्मिन्निति तादृशः **प्रत्नः** पुरातनः **होता** होमनिष्पादकः **वरेण्यः** वरणीयः **सहसस्पुत्रः** सहसो बलस्य पुत्रस्थानीयः । "छन्दसि वा प्राम्रेडितयोः" ( पा० ८-३-४९ ) इति विसर्गस्य सः । बलेनोत्पन्नत्वात् । **अद्भुतः** आश्चर्यभूतः महान्रमणीयो वा । स इदं नामास्माकं करोत्वनुजानातु वेत्याशीर्गतमाख्यातमध्याहृत्य समाप्यते वाक्यार्थः ॥ ६ ॥

"त्वं ह्य॒ यद्य॑विष्ठ्य॒ सह॑सः सूनवाहुत ।
ऋ॒ताव॑ य॒ज्ञियो॒ भुवः॑ ॥ ३ ॥"
( ऋ० सं० ६-५-२४ )

आङ्गिरसस्य विरूपस्यार्षं गायत्री आग्नेयी । सामिधेनीष्वाग्नेयेऽन्नाद्यकामकर्मणि याज्या । हे अग्ने ! **यविष्ठ्य** युवतम ! **सहसः सूनो** बलस्य पुत्र ! **यत्** यस्मात् **आहुत** आहुतः अभिहुतः विसर्गलोप आर्षः । क्वचित्सविसर्ग एव पाठः । **ऋतावा** सत्यवान् । "छन्दसीवनिपौ च" ( पा० ५-२-१२२ वा० ) इति मत्वर्थे वनिप् । "अन्येषामपि-" ( पा० ६-३-१३७ ) इति दीर्घः । **यज्ञियः** यज्ञार्हः । "यज्ञर्त्विग्भ्यां घखञौ" ( पा० ५-१-७१ ) इति घः । यज्ञसम्पादी **भुवः** भवसि । विकरणव्यत्ययेन ( पा० ३-१-८५ ) शः सिप इलोपश्च । शस्य ङित्वाद्गुणाभाव उवङादेशः । तस्मात्त्वां वयमपि जुहुमः । त्वमस्माकमेवं भवेत्येतदाशास्महे ॥ ३ ॥

"अग्ने॒ वाज॑स्य॒ गोम॑त॒ ईशा॑नः सहसो यहो ।
अ॒स्मे धे॑हि जातवेदो॒ महि॒ श्रवः॑ ॥ ४ ॥"
( ऋ० सं० १-५-२७ )

गोतमस्यार्षमुष्णिगाग्नेयी । इष्टकोपधानेऽग्नौ विनियोगः । हे भगवन् ! **अग्ने** ! **सहसो यहो** बलस्य पुत्र ! **जातवेदः** ! यत् त्वं **गोमतः** गोभिर्युक्तस्य **वाजस्य** अन्नस्य **ईशानः** ईश्वरोऽसि । अतः **अस्मे** अस्मासु । 'सुपां सुलुक्-' ( पा० ७-१-३९ ) इत्यादिना सुपः शेभावः । **महि** महदेतत् **श्रवः** अन्नं ( निघं० २-७-४ ) गवादिधनं वा ( निघं० २-१०-२६ ) **धेहि** स्थापय अस्मदधीनं कुरु । इत्येतदाशास्महे ॥ ४ ॥

**यथो एतत्—अग्निं द्राविणोदसमाहेति, ऋत्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते चैनं जनयन्ति ॥**

**यथो एतत्** यत्पुनरेतदुक्तम् **अग्निमिति** । नेन्द्रादग्नं द्रविणोदसो जायते । किं तर्हि ? **ऋत्विजः** । त एव **अत्र** एतस्मिन्नुक्तनिगमवाक्ये **द्रवि००च्यन्ते** । यतस्ते **हविषः** हवीरूपस्य द्रविणस्य **दातारः** । **ते च एनमग्निं जनयन्ति** । अत्रार्थे—

१. तदधिदेवतायोगात् ॥

२. दूतकर्मणि "दूतस्य भावकर्मणी" ( पा० ४-४-१२० ) इति यत् । "स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी" इत्यमरः ॥

३. अत्र उ इति वितर्केऽवधारणे वा, यथेति वितर्के । तथा च येनैव प्रकारेणासमर्था हेतवः क्रौष्टुकीयैरुक्तास्तेनैव प्रकारेण एतत्पक्षानुभाष्य प्रवक्तृधर्मेण प्रतिसमाधास्य इति तात्पर्यार्थोऽन्यत्रापि संगमितः । संगमनीयश्च यथोपयोगमन्यत्रापि ॥

४. विशेषस्य-( तस्मिन्नेवावस्थापनस्य ) आधानहेतुर्गमकं न भवतीत्यर्थः ॥

१. देवानां हि हविर्द्रविणं ( धनम् ) तदेते ददत इति द्रविणोदसः । साधनमुक्तं पूर्वमुपक्रम एवास्य ॥

"ऋषीणां पुत्रो अधिराज एषः" ॥
( य० वा० सं० ५-४ )

इत्यपि निगमो भवति ॥

अग्निना अन्योऽपि । अस्य—"अग्नावग्निश्चरति प्रविष्टः" इत्यादिः । "तस्मै विधेम हविषा घृतेन मा देवानां यूयुजाम भागधेयम्" इत्युत्तरार्धम् । अनेन निर्मथ्योऽग्निराहूयते । य एषः अधिराजः अधिकदीप्तिः असौ आहवनीये अग्निः निर्मथ्यः प्रविष्टः सन् चरति ज्वलति । स एष ऋषीणाम् ऋत्विजां पुत्रः तैर्निर्मथ्याभिनिष्पादितः तस्मै विधेम तं परिचरामहे वयम् अनेन हविषा हवनीयेन घृतेन आज्येन । कुतः ? देवानां भागधेयं भागं । स्वार्थे धेयप्रत्ययः ( पा० ५-४-२५ वा० ) मा यूयुजाम मा लोलुपाम इत्यतो विधेम ( निघं० ३-५-२ ) ।

यथो एतत्—(ऋतुयाजेषु द्राविणोदसाःप्रवादा भवन्ति)तेषां पुनः पात्रस्येन्द्रपानमिति (समाख्या) भवतीति—भक्तिमात्रं तद्भवति—यथा वायव्यानीति सर्वेषां सोमपात्राणाम् ॥

यथो एतत् यत्पुनरेतदुक्तम् ऋतुयाजेष्वित्यादि—एतदप्यकारणम् यतो भक्तिमात्रं गुणतः संवादं भवति तत् । दुर्बला हि समाख्या । यतः असामर्थ्यात्कुतश्चिद्गुणानुवादः । यथा००त्राणाम् । नानादेवतानामपि सताम् ।

यथो एतत्—सोमपानेन (एनं) स्तौतीति ॥

एतदप्यकारणं, यतः—

अस्मिन्नप्येतदुपपद्यते ॥

एतत्-सोमपानम् । अत्रार्थे—

"सोमं पिब मन्दसानो गणश्रिभिः" ॥ ८ ॥
( ऋ० सं० ४-३-२५ )

इत्यपि निगमो भवति ॥

सोममिति । श्यावाश्वस्यार्षं जागतम् । अग्निमरुद्देवताकम् । आग्निमारुतस्य याज्या ।

मन्त्रो यथा—"अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः
सोमं पिब मन्दसानो गणश्रिभिः ।
पावकेभिर्विश्वमिन्वेभिरायुभि-
र्वैश्वानर प्रदिवा केतुना सजूः ॥"

हे भगवन् ! अग्ने ! वैश्वानर ! त्वमेभिः मरुद्भिः मितरोचिर्भिरर्चिभिः शुभयद्भिः भवन्तं शोभयद्भिरन्यांश्च, स्वयं वा शोभमानैः । "शुभशुम्भ शोभार्थे" ( तु० प० ) "संज्ञापूरको विधिरनित्यः" ( ९४ प० ) इति लघूपधगुणाभावः । पक्षे णिजर्थोऽविवक्षितः । ऋक्वभिः ऋग्वद्भिः स्तुत्यैरित्यर्थः । मत्वर्थेऽत्र वनिप् ( पा० ५-२-१२२ वा० ) ऋक् वाक् ( स्तुतिः ) ( निघं० १-११-३४ ) रसहर्तृभिरिति दुर्गः । गणश्रिभिः गणभावमाश्रयद्भिः ( गणशो भवन्तमाश्रयद्भिः ) पावकेभिः पावयितृभिः ( शोधकैः ) "बहुलं छन्दसि" ( पा० ७-१-१० ) इति ऐसभावः । विश्वम् इन्वेभिः विश्वं ( भुवनं ) वृष्ट्या प्रीणयद्भिः । "इवि प्रीणने" (भ्वा० प०) सर्वमिदमागच्छद्भिर्येर्दुग्धमिति दुर्गः । आयुभिः अयनशीलैः । एतेर्गत्यर्थादुण् ( उ० १-१ ) बाहुलकात् । तच्छीले कर्तरि आयुष्मद्भिरिति वा प्रदिवा पुराणेन ( चिरन्तनेन ) ( निघं० ३-२७-२ ) केतुना प्रज्ञया कर्मणा वा (निघं० ३-९-२) ज्वालापुञ्जेनेति सायणः । सजूः संयुक्तः । मन्दसानः मोदमानः सन् सोमं पिब इत्येतदाशास्महे ॥ ८ ॥

अर्चिषोऽत्र मरुतः ( निघं० ३-७-१३ ) ऋत्विजो वा ( निघं० ३-१८-६ ) अन्यथा ह्यनुदाहरणमेवैष मन्त्रोऽग्नेः सोमपाने स्यात् । इतरैर्मरुद्भिः संबन्धात् ।

"यथो एतत्—द्रविणोदाः पिबतु द्रविणोदसः" इति अस्यैव तद्भवति ॥ ३ ॥ ( २ )

यथो एतत्—यत्पुनरेतदुक्तम् ऋतुयाजेषु—द्रवि००दस इति । अस्यैव अग्नेस्तद्भवति । अग्नेरपि ऋतुयाजेषु सोमभागित्वात् । तदेतत्ततः प्राक्तनेन निगमेनोच्यते ॥ ३ ॥ (२)

यथा—

"मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते । आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ ३ ॥"
( ऋ० सं० २-१-८ )

मेद्यन्त्विति । गृत्समदस्यार्षं जगती ऋतव्या । हे भगवन् ! वनस्पते वनानां पते ! द्रविणोदः एतन्नामकाग्ने ! ते तव वह्नयः वोढारः रथस्य, अश्वाः येभिः यैः । "अतो भिस

१. विधतिर्दानकर्माऽपीति दुर्गः ॥
२. विश्वनरहित । सर्वोपकारिन्नित्यर्थः ॥

१. एतत्तत्त्वं "निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः" इति दीक्षितेन दर्शितम् ॥ ( सि० कौ० )
२. अत्र मतुपो लोपो गुणवचनतामायुषोमिमल "गुणवचनेभ्यो मतुपो लुगिष्टः" ( पा०१-४-१९ वा० ) इति ॥
३. केतुशब्दः प्रज्ञापकवचन इति ॥
४. अर्चिर्नामसु पठितोऽपि रूपनामसु "केचिदत्र मरुच्छब्दं पठन्ति" इत्युक्तत्वादस्यार्चिरर्थकताभ्युपगता ॥
५. मध्यस्थानदेवतावाचिभिः सहाभिधानेऽग्नेरसाधारणं सोमपानोदाहरणं नोपपद्यत इति भावः ॥
६. द्रविणोदाः पिबत्वित्यर्थः ॥
७. "पारस्करादि" ( पा० ६-१-१५७ ) गणपाठात्सुट् ।

ऐस्" "बहुलं छन्दसि" ( पा० ७-१-१० ) इत्यैसभावे एत्वम् (पा० ७-१-१०३) वाहैस्त्वं नित्यम् **ईयसे** गच्छसि। "इङ् गतौ" ( दि० आ० ) ते एते **मेद्यन्तु** स्निह्यन्तु ( तृप्यन्तु ) "ञिमिदा स्नेहने" ( दि० प० ) लोट्। त्वं च **अरिषण्यन्** अजिघांसन्। अहिंस्यमानः केनचिदिति दुर्गः। एभिरागत्यास्मद्यज्ञं सोमसस्मत्प्रत्तं पातुं **वीळयस्व** दृढीभव ( आत्मानं दृढं कुरु )। ततश्च हे **धृष्णो !** शत्रूणां धर्षयितः ! **सोमम् आयूय** आमिश्र्य ( मिश्रीकृत्याङ्गुल्या। स हि पानपातॄणां स्वभावो यदङ्गुल्या मन्थनम् ) **अभिगूर्य** अभ्युद्यम्य च ततो **नेष्ट्रात्** नेष्ट्रीयाद्धिष्ण्यात्प्रदेशा( स्थाना-)न्नेष्टुर्योगादिति सायणः। नेष्ट्रा वषट्कृतं तम् **ऋतुभिः** सहःसंज्ञकैः कालैः सह **पिब** इत्येतद्ब्रूमहे। अत्र संहितिकौ दीर्घौ ( पा० ६-३-१३७ ) ॥ ३ ॥

अत्र हि "वनस्पते ! द्रविणोदः ! पिब ऋतुभिः" इत्येवं वनस्पतिशब्दसामानाधिकरण्यात्सोमपानार्थे संबोधने द्रविणोदसो विशेषणविशेष्यभावसामर्थ्यान्नान्यो वनस्पतेर्द्रविणोदा इत्यायातं, वनस्पतिश्च पुनरसंशयमग्निः। "वह देवत्रा दिधिषो हवींषि-" इति वनस्पतेः हविर्वहनकर्मसंयोगात् स्विष्टकृद्विकारश्रुतेश्च। तस्मादग्निर्द्रविणोदाः, नेन्द्रः॥

अथ यत्पुनरेतदुक्तं—अथाप्येनं सोमपानेन स्तौतीत्यादि। तदर्थश्च-इन्द्रार्थं सोमः संस्क्रियते तस्मादिन्द्र एवास्य केवलः पाता नान्य इति। नैतदेवम्। सोमो ह्यन्यस्यै देवतायै मीयते, अन्यस्यै संस्क्रियते, अन्याभ्यश्च गृह्यते हूयते च। तद्यथा— "अभि त्यं देवम्" ( य० वा० स० ४-५ ) इति सावित्र्याऽस्यर्च्या मीयते। "अ९शुर९शुष्टे देव" ( य० वा० स० ५-७) इति इन्द्राय संस्क्रियते, पुनरपि च मीयते "इन्द्रायाभिघातिन्ने" इत्येवमादिभिः। नानादेवताभ्यो गृह्यते च. मित्रावरुणाद्याभ्यः। तथाच हूयते। तदेवं विधिवशाद्विचित्रा सोमतन्त्रगतिः। तत्रैवं त्यशक्यं वक्तुं यत्र यत्र सोमस्तत्र तत्रेन्द्रः पाता इति। संभुङ्क्ते चाग्निरिन्द्रेण सह प्रत्यक्षमैन्द्राग्ने ग्रहे "इन्द्राग्नी आगतं सुतं" ( ऋ० सं० ३-१-११-१ ) इत्यत्र। भवति चाग्न्यर्थमपि पृथग्ग्रहणं यजुषा सोमस्य "अग्नये त्वा रायस्पोषाय त्वा" ( य० वा० सं० ६-६ ) इति। तस्मादग्निरपि सोमस्य पाता स्यादित्यनैकान्तिक उक्तहेतुरिति सिद्धम्।

अथास्य भाष्यम्—

**मेद्यन्तु ते वह्नयो वोढारो यैर्यास्यरिष्यन् दृढीभवायूयधृष्णो। अभिगूर्य त्वं नेष्ट्रीयाद्धिष्ण्यात्। धिष्ण्यो धिषण्यो धिषणाभावः। धिषणा वाग्धिषेर्दधात्यर्थे। धीसादिनीति वा। धीसानिनीति वा। वनस्पत इत्येनमाहैष हि वनानां पाता वा पालयिता वा। वनं वनोतेः। पिबर्तुभिः कालैः ॥ ४ ॥ (३)**

इति श्रीमद्यास्कमुनिप्र० नि० दै० का० अष्टमाध्यायस्य प्रथमः पादः ॥ ८ ॥ १ ॥

**धिषणा वाक्** तदर्थमसौ साद्यते उपविश्यते इति धीसदः सन् धिष्ण्यः। तस्य पश्चादुपविष्टो होता शंसति। धिषणा कस्मात्? **धिषेर्धातोर्दधात्यर्थे** वर्तमानात् क्युष्टाप्। पिबति दधाति धारयत्यर्थमिति धिषणा। अथ **वा धीसादिनी०** धीः प्रज्ञा ( नि० ३-९-७ ) कर्म वा ( निघं० २-१-२१ ) सा एतस्यां सीदति सनोति वा, संभजते तामियं वा, तयोः सीदति सनोति वा तन्निमित्तत्वात्। एवं धीशब्दात्पूर्वपदं-सदेः सनोतेर्वा उत्तरपदं धिषणाशब्दस्य विकल्पेन भवति। **एनं** द्रविणोदसम्। हे **वनस्पते इति। आह** आह ब्रवीति संबोधनम्। तस्मादग्निर्द्रविणोदा इति सिद्धम्। कुतोऽयं वनस्पतिरित्याह-**एष** हीति। हिशब्दो हेत्वर्थः। यस्मादेष **वनानां** वृक्षादीनामन्तर्गतोऽपि समर्थोऽपि दग्धुं न तानि दहति, तस्मादयं तेषां **पाता** रक्षिता **पालयिता वा**। धातुमात्रे भेदे उभयोरप्ययं पतिशब्दोऽतिप्रत्यये टिलोपे साधुर्भवतीति। अथ **वनं** कस्मात्? **वनोतेः** संभजनार्थस्य ( भ्वा० प० ) तद्धि दार्वादिप्रयोजनार्थं वन्यते संभज्यत इति तद्वनमुच्यते। कर्मणि घञ् ( पा० ३-३-१९ ) संज्ञापूर्वकत्वाद्वृद्ध्यभावः। "वनं प्रस्रवणे गेहे प्रवासे(हे)ऽमासि कानने" इति हैमः। **कालैः** ऋत्वभिमानिभिर्देवैः सह। एवमयमग्निर्द्रविणोदाः सूक्तभाग्घविर्भाक् च। निपातमेवैतन्मध्यमं ज्योतिरुत्तमं च ज्योतिरेतेन नामधेयेन भजेते इति दुर्ग आह—एष देवतापदविचारन्यायः सर्वत्र देवतापदविचारार्थो यथासंभवमुपादेयः प्रज्ञाविवृद्धये शिष्यस्येति ॥ ४ ॥ (३)

इति श्रीमद्यास्कमुनिप्र० निरुक्तविवृतौ दै० का० अष्टमाध्यायस्य प्रथमः पादः ॥ ८ ॥ १ ॥

---

१. "रिष हिंसायाम्" ( दि० प० ) तत इच्छाक्यजन्तान्निपातोऽयं शत्रन्तः ( पा० ७-४-३६ ) भाष्ये त्विच्छार्थ उपेक्षितः क्यचः। तदन्तस्यैव वा धातुत्वमुत्प्रेक्षितं, पाणिनिर्यथाह तथात्र व्याख्यातम्॥

२. यद्यप्ययं स्तुत्यर्थस्तथापि भाष्यानुसार्ययमर्थो धातूनामनेकार्थत्वाभ्युपगमेन॥

३. तथा चामरः "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इति॥

४. इंद्राग्निदेवताके पात्रविशेषे। ग्रहः पात्रमुच्यते॥

१. धारयति कर्तारं फलप्रदानेनेति वा धीः कर्मबुद्धिः कर्म वा। प्रज्ञा वा यथोपदर्शितम्॥

२. पचाद्यचि पक्षे दस्य नः सस्य षत्वं धियो ह्रस्वत्वं च पृषोदरादित्वात्। ताच्छील्यं कर्त्रुपाधिभूतं छान्दसमेव कर्तृसामान्येऽचो ( पा० ३-१-१३४ ) विधानात्॥

३. "अग्निः सर्वगतः स्मृतः" इति ह्याम्नानात्। पञ्चभूतात्मके विश्वेऽग्नेः सर्वत्र सत्त्वात्समुद्भवति च काष्ठादेव प्रमथ्यमानात्॥

४. नत्वर्थे॥

५. द्रविणोद इत्येतेन॥

## अष्टमाध्याये द्वितीयः पादः ।

### अथात आप्रियः ॥

अथ इति विशेषाधिकारे । अत इत्यानन्तर्ये । आप्रियः आप्रीसूक्ते समाम्नाता आप्रीपदाभिधाना इध्मादयो "वक्ष्यन्त" इति शेषः । तथा चात्र दुर्गः—आप्रिय इध्मादीनि आप्रीषु निर्वक्तव्यानि, तानि पुनरमूनि प्रैषिके आप्रीसूक्ते पाठक्रमनियमाद्विवक्षितक्रमाणीति देवतापदसमाम्नायेऽपि गृह्यमाणत्वात्पाठक्रमप्रयोजनस्य विवक्षितक्रमाण्येवेत्यादि । तदुक्तं वार्तिककारेण—

"क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम् ।
प्रकल्पयेदन्यदपि न प्रह्लामवसादयेत् ॥" इति ।

इह कारणादभिधेयेऽभिधानान्नियमो नैरुक्तानां, तदर्थमुपोद्धृत्य निराह—

### आप्रियः कस्मात् ? आप्नोतेः प्रीणातेर्वा ॥

इति तत्र आप्नोतेः कर्तरि रीङौणादिकः । प्रीणातेस्तु किवेव । देवतार्थे तु कर्मण्येवेमौ बोध्यौ । आप्रियः ऋचस्तत्संबन्धाद्देवता अपि । तथाहि दर्शयति—

### "आप्रीभिराप्रीणाती"ति च ब्राह्मणम् ॥

इति चकारात् "इतीमा आप्रीदेवता" इति च । ऋचस्तावदाप्नुवन्ति आप्रीणन्ति वा देवता इत्याप्रियः । अथ पुनर्देवता आप्यन्ते आप्रीयन्ते वा इत्याप्रिय उच्यन्ते इति तदभिधानान्याप्रिय उच्यन्ते इध्मादयः । ते हि साक्षात्परम्परया वा देवता अभिदधतीति स्पष्टं तत्तदभिधाने भविष्यति ।

### तासामिध्मः प्रथमगामी भवति । इध्मः समिन्धनात् । तस्यैषा भवति ॥ १ ॥ (४)

तासाम्—आप्रीपदनिर्ग्राह्याणां मध्ये इध्म इति प्रथमगामी प्रथममागन्तुं ( देवतापदसमाम्नाये ) शीलमस्येति णिनिः ( पा० ३-२-७८ ) कस्मात् ? तत्पूर्वकत्वादिज्यायाः, अनित्यत्वाच्च तनूनपान्नराशंसयोरन्यतरस्य । तथाच—"ञि इन्धी दीप्तौ" (भ्वा० उ०) इध्यतेऽनेनाग्निरिति इध्मः । यद्वेध्मः । समिध्यत इत्यस्त्यग्नेः समिन्धनत्वम् । ज्वलन्नाम वा इध्मः । तस्य समित्कलापरूपस्येध्मस्य एषा अनन्तरेण निर्दिश्यमाना प्राधान्यस्तुतिर्भवति ॥ १ ॥ (४)

"समि॑द्धो अ॒द्य मनु॑षो दुरो॒णे दे॒वो दे॒वान्य॑जसि जातवेदः । आ च॒ वह॒ मि॒त्रमहश्चिकि॒त्वान्त्वं दू॒तः क॒विर॑सि॒ प्रचे॑ताः ॥ १ ॥"

( ऋ० सं० ८-६-८ )

जमदग्नेरार्षं त्रैष्टुभम् । सूक्तमेवाह्नामेयं यास्कः । हे इध्म ! जातवेदः ! यस्त्वं समिद्धः संदीप्तः अद्य एतस्मिन्विशिष्टे जननीयेऽहनि मनुषः मनुष्यस्य मनुष्यस्येति वीप्सामभिप्रेतिं भाष्यकृत् । तेन मनुष्शब्दोऽपि मनुष्यवचन इत्यसकृदभिहितो वेदे । दर्शितश्च प्राक् सर्वेषां समानेऽहनि प्रवृत्तयागानां त्रैवर्णिकानां दुरोणे दुरवने ( आयासेन रक्षितव्ये ) यज्ञगृहे ( निघं० ३-४-७ ) देवः दाता हविषां ( हेतुकर्तृत्वेन यज्ञेऽङ्गभावमुपगच्छन् ) यजसि अभिपूजयसि हविर्भिः । अतोऽस्माकमप्येतस्मिन्नहनि हे मित्रमहः ! स्तुत्य ! ( स्तोतृ-लक्षणेन मित्रभूतानां स्तोतॄणां पूजयितस्तैः पूज्यमान वा—अग्ने ! ) दुर्गस्तु—मित्रमहः मित्राणां पूजयितः ! नित्यमभ्युपेक्ष्यमाण उपकारप्रवृत्तो यजमानानामित्याह । चिकित्वान् चेतनावान् । तैः कृताः स्तुतीः प्रजानंस्त्वम् आवह च आह्वय च, आ प्रापय वा । आह्वय चैतान्यजेति चकारवलल्लभ्योऽर्थः । तथाऽस्मिन्कर्मणि ज्वलन्नङ्गभावमुपेहि—यथैतस्मिन्कर्मणि हविः प्रतिजिघृक्षन्तोऽङ्गभावमीयुर्देवाः । अपि च नैतदस्ति चित्रय्यँ देवमस्माकं कर्मणि वर्तेथाः । यतः त्वं एव दूतः सर्वयजमानानां, त्वत्पूर्वकत्वाद्देवतायागस्य । देवानां हविःप्रापणेन हितकारीति सायणः । कविः क्रान्तदर्शनः ( क्रान्तप्रज्ञः ) क्रान्तप्रकाशो वा सर्वत्र । प्रचेताः प्रवृद्धचेताः ( प्रकृष्टज्ञानश्च ) असि भवसि । यस्मात्त्वमृत्विग्यजमानानां सायुज्ये हेतुस्तस्य तव युक्तमस्माकमाहूय देवान् यष्टुमित्यतो ब्रूमहे—आह्वय चास्माकं देवान्यज चेति संपुटितो वाक्यार्थः ॥ १ ॥

अथास्य भाष्यम्—

### समिद्धो अद्य मनुष्यस्य गृहे देवो देवान्यजसि जातवेद आ च वह मित्रमहश्चिकित्वाँश्चेतनावाँस्त्वं दूतः कविरसि प्रचेताः प्रवृद्धचेताः ॥

१. इध्मादीनां गुणाभिधानसामान्यं किंचिदस्तीत्यधिकारवचनम् ॥

२. उपसर्गोऽत्र धातुनैव निगीर्णस्तेषां द्योतकत्वात् ॥

१. अत्र दुर्गः—जातवेदस आधार इति तदभिधानेन संबोध्यते । दृष्टा हि मन्त्रेषु क्रोशस्तु तदभिधानप्राप्तिः मञ्चाः क्रोशन्तीति । अथ वा जातवेदा अपि त्वद्वृतेऽनभिव्यक्तस्वशक्तिस्त्वदाधारत्वादशक्त एवायं यष्टुं तस्माज्जातवेदास्तदाधारो यजति यत्तत्त्वमेव यजसीत्युच्यते इति ॥

२. साकल्येन हि क्रियासंबन्धो वीप्सोच्यते । "नित्यवीप्सयोः" ( पा० ८-१-४ ) इति हि तत्र द्विर्भावो भवति ॥

३. मित्रैर्मह्यते पूज्यत इति असुन् ( उ० ४-१८८ ) तत्संबोधने । फलितमाह—स्तुत्य इति ॥

४. एष चार्थः शाकपूणिमतेनेति वक्ष्यते ॥

५. आङ्पूर्वको वहतिराह्वाने प्रसिद्धः । आवाहनमिति यथा—"अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्" ( य० अ० १७-८९ क० ) "वह प्रापणे" ( भ्वा० प० ) लोट् ॥

६. अभ्यावेशादग्निर्यदपेक्ष्योच्यसे ॥

अत्र मन्त्रे साक्षाल्लिङ्गतोऽनुक्तोऽपि प्रैषबलेनेध्म एवेज्यत इत्याह—

**यज्ञेध्म इति कात्थक्यः ॥**

**कात्थक्यः** कत्थकस्य पुत्र आचार्यो मन्यते **यज्ञेध्म इति** । योऽयमिध्म आधीयते यज्ञे प्रतिप्रणवं, स एवायमत्र संबोध्येज्यत **इति** । "समिद्भ्यः प्रेष्या" इति हि श्रूयते । युक्तं च यदर्थमेव प्रेष्यते स एवेज्यते । तस्मात्समिधामेवेध्मभावमुपगतानामग्निना सन्दीप्तानां समुदायापेक्षमिदं व्यवहितमभिधानमाप्रीगतं "समिद्धो अद्ये"ति । समिध एव चेमा इज्यन्त इति स्फुटमैष्टिके होत्रे "समिधो यजे"ति प्रेषितो होता "समिधः समिधो अग्न आज्यस्य व्यन्तु" इति वषट्करोति । तस्माद्युक्तं यत्कात्थक्यो मन्यते यज्ञेध्म इति ॥

अथ मतान्तरमाह—

**अग्निरिति शाकपूणिः ॥**

"आचार्यो मन्यत" इति शेषः । कथमिति चेत् ? अभ्यर्थिताया आराडुपकारित्वात्[३] । प्रैषस्य तु सन्निपत्योपकारकैमिति[४] दुर्बलत्वात् । यास्कस्य चाप्येतदेवाभिमतम् । तथाचाधिकरणान्ते वक्ष्यति "आग्नेया इति तु स्थितिरि"ति । शाकपूणिमते मन्त्रार्थयोजना सुगमैव । हे भगवन्नग्ने ! समिद्धः सन्दीप्तस्त्वमद्य मनुष्यस्य दुरोणे यज्ञगृहे देवो दीपन इत्यादिः ॥

**तनूनपादाज्यं भवति ॥**[५]

अथ **तनूनपात्** ( २ ) इति निर्वक्तव्यम् । तत्पुनरेतत् **आज्यं भवतीति** कात्थक्य आह । मतान्तरं वक्ष्यते । यथा तावदाज्यं तथा निरुच्यते—

**नपादित्यननन्तरायाः प्रजाया नामधेयम् ॥**

१. प्रैषोऽनुपदं द्रष्टव्यः ॥

२. अनन्तरेऽपि गोत्रत्वारोपाद्यत् ( पा० १-४-१०५ ) रामो जामदग्न्य इति यथा ॥

३. द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आराडुपकारकमुच्यते । अयमर्थः—यजता वाग्नियां यदाप्रीरूपं तद्बलवत् । तच्चाभ्यर्थना । कथमिति चेच्छृणु । अत्र मन्त्रे सर्वाण्येतान्यभिधानानि कर्माणि च अगौणान्यग्निपक्षे, गौणानीध्मपक्षे । "गौणमुख्ययोश्च मुख्ये कार्यसंप्रत्ययः" इति न्यायः । तस्मादप्रच्युतस्वरूपाया आग्नियो यजताद्युपकारबाहुल्यादाग्नेयत्वाच्च प्रजानामग्निरेवायमनया आग्निया ( सूक्तया ) इज्यत इति शाकपूणिर्मन्यते । आराडुपकारकं हि परमापूर्वोत्पत्तावेवोपयुज्यते इति सबलम् ॥

४. कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम् । यथाऽवघातप्रोक्षणादि । अयमर्थः—यानि चाङ्गानि साक्षात् परम्परया वा विहितफलसाधनयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि भवन्ति तानि सन्निपत्योपकारकाण्युच्यन्त इति ॥

५. अत्र "तनूनपादाज्यमिति कात्थक्यः" इति मुम्बईमुद्रितपुस्तके पाठः ॥

या पितुरनन्तरा पुत्राख्या सा प्रजा भवति **अननन्तरा** तु पौत्राख्या तस्या **नामधेयं** नाम । स्वार्थे धेयप्रत्ययः ( पा० ५-४-२५ वा० ) **नपादिति** । न पातयति, न पतत्यनेनेति वा । नञ्पूर्वात्पतेर्ण्यन्तात् "बहुलमन्यत्रापि संज्ञाच्छन्दसोः" ( पा० ६-४-५१ वा० ) इति णिलोपः । "नभ्राण्नपात्–" ( पा० ६-३-७५ ) इत्यादिना नञः प्रकृतिभावः । कुतः ? सा हि—

**निर्णततमा भवति ॥**

कथम् ? पुत्रस्तावत्पितुर्नतो भवति । ततोऽपि नीचैर्नततमः पौत्रः ।

**तनूरत्र गौरुच्यते । तता अस्यां भोगाः ॥**

अत्र अस्मिंस्तनूनपाच्छब्दे **तनूरि**तिपदेन **गौः उच्यते** । कुतः ? यतो**ऽस्यां** गवि भुज्यन्त इति **भोगाः** क्षीरदध्यादयस्तता विस्तृताः प्रभूता भवन्ति । तथा च "तनु विस्तारे" ( त० उ० ) अधिकरणे ऊः ॥

**तस्याः पयो जायते ॥**

तेन गोः पुत्रः पयः ।

**पयस आज्यं जायते ॥**

तस्मात् तस्याः पौत्रः । एवं गोस्तन्वाख्याया नपात् आज्यम् तस्मात्तनूनपादुच्यते ।

**अग्निरिति शाकपूणिः ॥**

**आपोऽत्र तन्व उच्यन्ते, तता अन्तरिक्षे ॥**

**अत्र** अस्मिन् अग्नेस्तनूनपात्त्वेन **आप एव तन्व उच्यन्ते** । कुतः ? यतस्ता **अन्तरिक्षे** व्योम्नि **ताः** । ततश्च—

**ताभ्य ओषधिवनस्पतयो जायन्ते, ओषधिवनस्पतिभ्य एष जायते ॥**

**एषः** अग्निः । तस्मादयमपां पौत्रः ।

**तस्यैषा भवति ॥ २ ॥ (५)**

**तस्य** तनूनपातः आज्यस्य अग्नेर्वा **एषा** प्राधान्यस्तुतिः ॥ २ ॥ (५)

**"तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व । मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः" ॥ २ ॥**

( ऋ० सं० ८-६-८ )

हे **तनूनपात्** ! आज्य ! अग्ने ! वा **ऋतस्य** यज्ञस्य[१] **यानान्** फलप्राप्तिहेतूनेतान् **पथः** मार्गान् हविराख्यान्

१. यद्यपि ऋतमिति सत्यनामसु पठितम् ( नि० ३-१०-६ ) तथापीयर्ति गच्छन्त्यनेन सुगतिमित्युक्तं यज्ञः । तथा च भाष्यकृद्वक्ष्यति—ऋतस्य यानान्—यज्ञस्य यानानिति । यानानिति यातेः प्रापणार्थस्य ( अ० प० ) ल्युडन्तस्य रूपं, पुंस्त्वमार्षम् ॥

**मध्वा** मधुरेण पाककृतेन ( रसेन स्वादेन ) **समञ्जन्** संप्रक्षयन् ( सम्पुपस्नेहयन् सङ्गमयन्निति यावत् ) **स्वदय** मृष्टीकुरु ( स्वादुतामापादय ) संहितायां दीर्घः ( पा० ६-३-१३७ )। हे **सुजिह्व** शोभना स्निग्धा जिह्वा येन स तत्संबोधने। पक्षे शोभनज्वाल[१]! **मन्मानि** मननीयान्यैस्सदभिप्रेतानि ( अर्थ्यवस्तूनि ) मन्यतेरर्चतिकर्मण इति सायणः। निघण्टौ तु "मन्महे" इति याच्ञाकर्मसु पठितम् (३-१९-३) ततो मनिन्[२]। स्तोत्राणीति सायणः। **धीभिः** स्वैः कर्मभिः अभिघारणालङ्करणोपस्तरणादिभिः ( नि० २-१-२१ ) प्रज्ञाभिर्वा ( नि० ३-९-७ ) **ऋन्धन्** समृद्धानि कुर्वन्। **उत** अपिच **यज्ञं** च ऋन्धन् संसाधयन् ( स्वगुणैरुपकुर्वन् ) स्वसामर्थ्यात्समर्धयन् वा **नः** अस्माकं एतम् **अध्वरम्** ध्वरो हिंसा तदभावो यत्र तं, **च** यद्वा अविद्यमानो ध्वरो ( वधो ) यस्य तं रक्षोभिरहिंसितम्[३]। **देवत्रा** देवान्प्रति देवेषु ( प्रविष्टं ) वा **कृणुहि** कुरु। अत्र "देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्" ( पा० ५-४-५६ ) इति तदधीनवचनेऽर्थे त्राप्रत्ययः। "तद्धितश्चासर्वविभक्तिः" ( पा० १-१-३८ ) इत्यव्ययत्वम्। बाहुलकाद्विरलुक्। अत्र कृणुहीत्यस्य गमयेत्यर्थं भाष्यकृदाह ॥ २ ॥

यथास्य भाष्यम्—

**तनूनपात् पथ ऋतस्य यानान् यज्ञस्य यानान् मधुना समञ्जन् स्वदय कल्याणजिह्व! मननानि च नो धीभिर्यज्ञं च समर्धय देवान् नो यज्ञं गमय ॥**

निगदव्याख्यमेतत्।

## नराशंसो यज्ञ इति कात्थक्यः ॥

अथ **नराशंसः** ( ३ ) इति निर्वक्तव्यः। स पुनरेष **यज्ञ इति कात्थक्यो** मुनिराह। कस्मात्?—

## नरा अस्मिन्नासीनाः शंसन्ति ॥

**नराः** मनुष्याः **अस्मिन्** यज्ञे **आसीनाः** उपविष्टाः सन्तः **शंसन्ति** स्तुवन्ति "शंसु स्तुतौ" ( भ्वा० प० ) लट् इति नराशंसः। अत्र नरशब्दः पूर्वपदम् आसेर्निष्ठान्तस्य मध्यमं तत्र सीनस्य लोपः पृषोदरादित्वात् ( पा० ६-३-१०९ ) शंसतेरुत्तरपदम्। अधिकरणे घञ् ( पा०३-३-१२१ )

१. अग्नेर्हि सप्तजिह्वाः कालीकराल्याद्यास्ता ज्वाला एवमर्चिषश्चोच्यन्ते। तेनासौ सप्तजिह्वः सप्तार्चिश्च।

२. अत्र सायणमते करणे मनिन्। दुर्गमते कर्मणि ॥

३. ध्वरतिर्हिंसाकर्मसु पठितः ( नि० २-१९-३ ) तस्मात् "पुंसि संज्ञायां घः" ( पा० ३-४-११८ ) नञ्पूर्वः। नह्यत्र हिंसा भवति। द्वेषपूर्वको हि प्राणिवधो हिंसा। नह्यत्र द्वेषः। तथाच शिष्टाः स्मरन्ति—"ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा। यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्" इति। श्रुतिरपि "नवाउ म्रियसे" इति ॥

**अग्निरिति शाकपूणिः। नरैः प्रशस्यो भवति। तस्यैषा भवति ॥ ३ ॥ (६)**

**प्रशस्यः** स्तुत्यः। **तस्य** यज्ञस्याग्नेर्वा **एषा** अनन्तरोदाहियमाणा श्रुतिः। **भवति** प्राधान्यस्तुतिः ॥ ३ ॥ (६)

**"न॒रा॒शंस॑स्य महि॒मान॑मेषा॒मुप॑ स्तोषाम यज॒तस्य॑ य॒ज्ञैः। ये सु॒क्रत॑वः॒ शुच॑यो धि॒यन्धाः॒ स्वद॑न्ति दे॒वा उ॒भया॑नि ह॒व्या" ॥ २ ॥**

( ऋ० सं० ५-२-१ )

**नराशंसस्येति**। वसिष्ठस्यार्षं त्रैष्टुभम्। पत्नीसंयाजे त्वाष्ट्रयागस्य याज्या। **ये** देवाः **सुक्रतवः** सुकर्माणः। क्रतुरिति कर्मनाम। ( निघं० २-१-१० ) सुप्रज्ञा वा ( निघं० २-९-५ ) **शुचयः** दीप्तिमन्तः। निर्णिक्ततरपापा इति दुर्गः[१]। **धियंधाः** धीरिति कर्मनाम ( निघं० २-१-२१ ) स्वाधिकारयुक्तानां कर्मणां धारयितारः ( अनुविधारयितारः ) **उभयानि** सौमिकानि हविःसंस्थादीनि च **हव्या** हव्यानि ( हवींषि ) "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः। **स्वदन्ति** स्वदयन्ति ( भाष्ये त्वन्यथा व्याख्यास्यते ) **एषाम्** तेषां मध्ये **यज्ञैः** हविर्भिः स्तोत्रैर्वा **यजतस्य** यजनीयस्य ( प्रयोक्तुरभिमतफलसंपादयितुः ) **नराशंसस्य** यस्मिन्नरा आसीनाः शंसन्ति ( स्तुवन्ति ) तथाभूतस्य यज्ञस्य। नरैः प्रशंसनीयस्याग्निविशेषस्य वा **महिमानं** महत्त्वम् ( महाभाग्यं विभूतिम् ) **उपस्तोषाम** ( वयमुपगम्य चेतसा ) स्तुमः ( अभिकीर्तयामः ) ॥ २ ॥

अथास्य भाष्यम्—

**नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि चेति वा, तान्त्राणि चावापिकानि चेति वा ॥**

**यज्ञियस्य** इति यजतस्येत्यस्यार्थः। यजनसंपादयितुरितिं तदर्थः। अर्हार्थेऽत्रातच्प्रत्ययैः[२]। **यज्ञैः** कर्मभिर्युक्ता उपस्तुमः। यदेवमेतस्मिन्नुपस्तुतमहिम्नि नराशंसे यज्ञे किमप्यस्तु इत्याशास्महे। **सुकर्माणः** इति सुक्रतव इत्यस्यार्थः। जगदनुग्रहप्रवृत्ताः। **धारयितारः** प्रज्ञानां यज्ञानां वा। एवमादिगुणयुक्ता **देवास्ते** **स्वदयन्तु** आस्वादयन्तु। "स्वद आस्वादने ( चु० पं० ) णिच्। मन्त्रे तु "अनित्यण्यन्ताश्चुरादयः" इति णिजभावे स्वदन्तीत्युक्तम्। लोडर्थे च लट् छान्दसो व्यत्ययेन ( पा० ३-१-८५ ) एतानि **हवींषि** इति हव्या इत्यस्यार्थः। तत्र शेर्डा ( पा० ७-१-३९ ) हव्यानीति प्राप्ते।

१. प्रज्ञानां यज्ञानां वेति दुर्गः ॥

२. "तद्धिताः" ( पा० ४-१-७६ ) इत्यधिकारसूत्रे बहुवचननिर्देशेन केचिदविहिता अपीन् टिकन्नादयो बोध्या इत्युक्तत्वात् ॥

उभयानि यदि सौमिकः पशुः, ततः सोमं च। इतराणि-पशुपुरोडाशधानाप्रभृतीनि। अथ पृथक्सोमात्, ततः तान्त्राणि तन्त्रोक्तानि प्रयाजाज्यभागस्विष्टकृत्प्रभृतीनि। आवापिकानि च प्रधानहवींषि इत्याशास्महे।

**ईळ ईट्टेः स्तुतिकर्मण इन्धतेर्वा। तस्यैषा भवति ॥ ४ ॥ (७)**

अथ ईळः (४) इति निर्वक्तव्यः। स पुनरयम् ईट्टेः स्तुतिकर्मणः। स्तुत्यर्थस्य "ईड स्तुतौ" (अ० आ०) इति धातोः कर्मणि घञ् (पा० ३-३-१९) स्तूयते ह्यसौ। इन्धतेर्वा। दीपनार्थस्य (रु० आ०) दीप्यते ह्यसौ। निपातैः (पा० ६-३-१०९) तत्क्रियायुक्तो ह्यसौ अग्निः। तस्य अग्नेः एषा अनन्तरोदाहियमाणा भवति प्राधान्यस्तुतिः ॥ ४ ॥ (७)

**"आजुह्वान ईड्यो वन्द्यश्चायाह्यग्ने वसुभिः सजोषाः। त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान्" ॥ ३ ॥**

(ऋ० सं० ८-६-८)

**आजुह्वान** इति। भार्गवस्य जमदग्नेस्तत्पुत्रस्य परशुरामस्य वार्षं त्रैष्टुभम्। आप्रीसूक्ते अग्निचयनाङ्गभूते प्राजापत्ये पशौ याज्या। हे भगवन् **अग्ने**! त्वमस्मिन्कर्मणि **आयाहि** आगच्छ। यस्त्वम् **ईड्यः** अध्येष्यः। ईडिरिहाध्येषणकर्मा। कर्मणि ण्यत् (पा० ३-१-१२४) प्रार्थ्यमानः। यद्वा ईड्यः दीपनार्हः हविर्भिराज्यादिभिः। **वन्द्यश्च** सर्वलोकस्य स्तोतव्यः। स त्वम् **आजुह्वानः** आहूयमान एतस्मिन्कर्मण्यस्माभिः **वसुभिः** देवैः **सजोषाः** सह प्रीयमाणः (समानप्रीतिर्भूत्वा) **आयाहि** आगच्छ। कुतः? यतः हे **यह्व**! महन् (निघं० ३-३)। "शेवयह्व-" (उ० १-१५२) इत्यादिना वन्नन्तो निपातो जकारस्य हकारादेशश्च। यजते इज्यते वा। भाष्यमते त्वन्यथा व्याख्यास्यते। **त्वं देवानां होता** आह्वाता (दूतः) **असि**। **सः** त्वम् अस्माभिः **इषितः** प्रेषितः अधीष्टो वा (अध्येषितः) होतृत्वे स्थित्वास्माकम् **एनान्** देवान् **यक्षि** यज हविषा पूजय। लोडर्थे लेट् (पा० ३-४-७) "सिब्बहुलं लेटि" (पा० ३-१-३४) बाहुलकात्सर्वेष्टसिद्धिः। इत्येवं ब्रूमहे। यस्त्वम् **यजीयान्** यष्टृतरः अतिशयेन यष्टा मनुष्यहोतुरिति। यष्टृशब्दादीयसुनि "तुरिष्ठेमेयःसु" (पा० ६-४-१५४) इति तृचो लोपः ॥ ३ ॥

अथास्य भाष्यम्—

**आहूयमान ईळितव्यो वन्दितव्यश्चायाह्यग्ने वसुभिः सह जोषणस्त्वं देवानामसि यह्व होता ॥**

**यह्व इति महतो नामधेयं यातश्च हूतश्च भवति ॥**

**हूतः** आहूतः शरणार्थिभिः। **यातः** प्राप्तश्चासावर्थिभिरिति द्विधातुजत्वं दर्शितम् इति स्कन्दस्वामिनः। ततोऽत्र यातेर्ह्वयतेश्च "गेहे कः" (पा० ३-१-१४४) इति बाहुलकाद्धूते कप्रत्ययो ह्वयतेः संप्रसारणाभावश्च।

**स एनान् यक्षीषितो यजीयान्। इषितः प्रेषित इति वा अधीष्ट इति वा यजीयान् यष्टृतरः ॥**

व्याख्यातमेतत्।

**बर्हिः परिबर्हणात्। तस्यैषा भवति ॥५॥ (८)**

अथ **बर्हिः** (५) इति निर्वक्तव्यम्। तत्पुनरेतत्प्रसिद्धमेव कुशमयं यज्ञाङ्गम्। तत्कुतः? **परिबर्हणात्** परिच्छेदनात्। लूनं हि तद्भवति परिवृद्धं च। तथाच—"बृंहेर्नलोपश्च" (उ० २-१०२) इति इसिप्रत्यये गुणः। यद्यप्ययं वृद्धावेव पठ्यते (भ्वा० प०) तथापि छेदनेऽपि। तथाचामरः "प्रमापणं निबर्हणं निकारणं विशारणम्" इत्यादि हिंसार्थे पठति। उपसर्गास्त्वर्थविशेषद्योतका एवेत्यसकृदुक्तमधस्तात्। भाष्ये तु वृज्यतेरप्येतद्वक्ष्यते। **तस्य** बर्हिषः **एषा** अनन्तरोदाहियमाणा भवति प्राधान्यस्तुतिः ॥ ५ ॥ (८)

**"प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम्। व्युप्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम्" ॥ ४ ॥**

(ऋ० सं० ८-६-८)

**प्राचीनमिति**। उक्तार्षादिः। यदिदं **प्राचीनं** प्रागञ्चितं (प्राङ्मुखं) **बर्हिः** कुशाख्यम् अस्ति। कुतो न्विदं बर्हिः? यतः **प्रवृज्यते** प्रच्छिद्यते (लूयते) अथ वा प्रस्तीर्यते। तथाच वृज्यतेरेव छिजन्ति वर्णव्यत्यय आर्षः (पा० ३-१-८५) किं पुनरेवमेव स्वमनीषिकया? नेत्युच्यते-**प्रदिशा** प्रकर्षेण दिश्यमानेन मन्त्रेण (विधिवाक्येन। विधिः प्रदेश इत्यनर्थान्तरम्)। "प्रागुदग्वा बर्हिश्छिनत्ती"ति श्रूयते तत्सामर्थ्यात्। अथवा प्रस्तरणमन्त्रेण "देवस्य त्वा" इत्यनेन।

१. इन्धेर्नकारलोपः धकारस्य डकारो गुणाभावो दीर्घश्चेकारस्य। डकारस्य ळकारो व्याख्यातः।

२. प्रार्थितः। अध्येषणा हि "सनिस्त्वध्येषणा याञ्चाऽभिशस्तिर्याचनाऽर्थना" इत्यमरेणोक्ता। अधीष्ट इत्यन्तर्भावितण्यर्थः। सत्कृत्य व्यापारित इति तदर्थः ॥

१. "चतुःषष्टिः कुशा बर्हिः" इति याज्ञिकप्रसिद्धिः ॥

२. प्राच्यां दिशि यदञ्चितं गतं जातं प्रागग्रं वा यत् स्तीर्यते तद्भवति प्राचीनम्। अञ्चत्यन्तात्स्वार्थे खः (पा० ५-४-८)

३. अत्र प्र इत्यस्याभिसंबन्धो भाष्यकृता (यास्केनैव) कृतः। सायणस्तु-अस्याः प्राच्या दिशः वृज्यते स्तृयते अह्नियते। तथाच निगमः-"त आवहन्ति कवयः पुरस्तादि"-त्यादि। तच्चाह्नतं वरीय उरुतरं बर्हिरित्येवं व्याचख्यौ ॥

स्तरणपक्षेऽपि "प्राचीनं बर्हिस्तृणाति" इति श्रूयते । किमर्थं पुनस्तत्प्रवृज्यते ? **अस्याः** वेदिलक्षणायाः **पृथिव्याः** भुवः **वस्तोः** वसनाय आच्छादनाय । "वस आच्छादने" (अ० आ०) तुन्प्रत्ययो भावे । "चतुर्थ्यर्थे बहुलं छन्दसि" (पा० २-३-६२) इति षष्ठी । यद्वा भावलक्षणे तोसुन् (पा० ३-४-१६) द्रष्टव्यः । **अह्नाम् अग्रे** पूर्वाह्णे । (तदा हि प्रशस्यते दर्भस्तरणं-लवनं वा) तत् प्रवृक्तं प्रस्तीर्यमाणं वा **वरीयः** वरतरं श्रेष्ठतरम् अन्येभ्योऽपि यज्ञाङ्गेभ्यः । तदाधारत्वाद्धविषाम् । उरुतरं (बहुतरं) अतिशायने ईयसुनि उरोर्वरादेशः (पा० ६-४-१५७) टिलोपः (पा० ६-४-१५५) वा । बर्हिः **वितरं** विकीर्णतरं (विस्तीर्णादपि) विस्तीर्णतरं वा यथा भवति तथा **विप्रथते** विविधमेव वेद्यां प्रस्तृतं भवति । तथा-**देवेभ्यः अदितये** वेदिलक्षणायै पृथिव्यै च (निघं० १-१-१४) **स्योनं** सुखकरं भवति । स्योनमिति सुखनाम (निघं० ३-६-१५) अत्र उ इति अनर्थकः पदपूरणः (निरु० १-३-५) ॥ ४ ॥

अथास्य भाष्यम्—

**प्राचीनं बर्हिः प्रदिशा पृथिव्याः + वसनायास्याः प्रवृज्यते । अग्रे अह्नां बर्हिः पूर्वाह्णे तद्विप्रथते । वितरं—विकीर्णतरमिति वा विस्तीर्णतरमिति वा । वरीयो—वरतर-मुरुतरं वा । देवेभ्यश्चादितये च स्योनम् ॥**

अत्र यज्ञाङ्गबर्हिःस्तवेन तद्द्वारेणैवाग्निः स्तूयते । पृथिव्यायतनत्वात्तस्येति व्याख्यातृमतम् । अपरे पुनरग्निरेव बर्हिरित्यभिधीयते । बर्हिरित्यन्तरिक्षनामसु पठितम् (निघं० १-३-४) अग्निश्च तत्स्थानस्तेनाभिधानेनाभिधीयते । प्रागच्यते प्रणीयते इति प्राचीनं बर्हिः प्रवृद्धआहवनीयाख्यं ज्योतिः । प्रवृज्यते प्रणीयते तत्पुनः प्रदिशा-वचनेन (विधिवाक्येन) "प्राञ्चमुद्धरन्ती"ति । पृथिव्याः वस्तोः वसनाय । अग्निनैव हि वेदिरत्नमिका भवति । अग्रे अह्नाम्-पूर्वाह्णे तद् वि-(विधं) प्रथते । सामिधेनीप्रक्षेपात् । आज्यभागाद्याघारादिषु वि-(स्तीर्णतरं-विक्षिप्तारं) प्रथते । वरीयः-वरतरमन्येभ्यो ज्योतिर्भ्यः । उरुतरं महत्तरं वा । देवेभ्यः-यजमानेभ्य इतरेभ्यो वा । अदितये पृथिव्यै च कथं नाम स्योनं-सुखं स्यादिति वदन्ति ।

**स्योनमिति सुखनाम । स्यतेरवस्यन्त्येतत् । सेवितव्यं भवतीति वा ॥**

१. विस्तीर्णे हि बर्हिषि देवाः सुखं निषीदन्ति । दुर्गस्तु—बर्हिषा हि सद्गुणीकृतात्कर्मणो देवानां हविर्दातॄणां यजमानानामभीप्सितेन फलेन योगो भवति तत्सुखम् ॥

२. बर्हिषा हि सद्गुणीकृतात्कर्मणः आहुतिद्वारेण वृष्टिर्भवति । तत ओषधिप्ररोहः । तत्सुखं नामेति दुर्ग आह ॥

**स्यतेः** "षोऽन्तकर्मणि" (दि० प०) इति धातोर्बाहुलकान्नप्रत्यये टेर्य्यादेशे गुणः । **सेवितव्यम्** इति "स्यतेः सेवतेश्च स्योनम्" इति स्कन्दस्वामिभाष्येऽपि । अत्रापि पूर्ववत्प्रक्रिया ॥

**द्वारो—जवतेर्वा द्रवतेर्वा वारयतेर्वा तासामेषा भवति ॥ ६ ॥ (९)**

अथ-**द्वारः** (६) इति निर्वक्तव्यम् । तत्र "यज्ञे गृहद्वार इति कात्थक्यः" । ताः पुनरेताः । **जवतेर्वा** । गत्यर्थस्य सौत्रस्य जुधातोः **द्रवतेरपि** गत्यर्थस्यैव **वारयतेर्वा** प्रवृत्तिविघातार्थस्य निपातः । जवन्ति द्रवन्ति (गच्छन्ति) वा ताभिः । निवार्यन्ते हि वारणीया द्वारादेव । **तासां** द्वाराम् । "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः । **एषा** अनन्तरोदाहियमाणा ऋक् **भवति** प्राधान्यस्तुतिः ॥ ६ ॥ (९)

**"व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः" ॥ ५ ॥**

(ऋ० सं० ८-६-८)

**व्यचस्वतीरिति** । उत्कर्षादिः । **व्यचस्वतीः** व्यचो व्यापनं तद्वत्यः । व्यञ्चनवत्य इति भाष्यम् । "वा छन्दसि" (पा० ६-१-१०६) इति पूर्वसवर्णदीर्घः । अत एव **बृहतीः** महत्यः ता द्वारदेवताः **उर्विया** । भावप्रधानो निर्देशः । उरुशब्दात्तृतीयैकवचने "इयाडियाजीकारणामुपसंख्यानम्" (पा० ७-१-३९ वा) इतीयाडादेशः । उरुत्वेन **विश्रयन्ताम्** विशेषेणाश्रिता भवन्तु । अत्र दृष्टान्तः-**पतिभ्यो न जनयः** इति । पतिभ्य इव जायाः । यथा जायाः पतिभ्यो पतीनामर्थाय **शुम्भमानाः** शुशोभिषमाणाः (शोभयितुमिच्छन्त्यः) प्रहर्षात् ऊरू वरतमैमङ्गम् । मैथुने धर्मे (कर्मणि) विश्रयन्ति (विवृण्वन्ति) तद्वत् । **हे द्वारः** ! द्वाराभिमानिन्यः **देवीः** ! देव्यः (दानक्रियाहेतुभूताः) पूर्ववद्दीर्घः । यूयं **विश्वमिन्वाः** । हविः प्रीणनार्थाः । तस्मात्कर्मण्युपपदे अण् (पा० ३-२-१) इदित्वान्नुम् । "तत्पुरुषे कृति बहुलम्" (पा० ६-३-१४) इत्यत्र बहुलग्रहणाद्द्वितीयाया अप्यलुक् ।

१. यज्ञाधिकरणिका गृहद्वारः । एतच्च भाष्यव्याख्यातमिहोपन्यस्तं दुर्गाचार्येण ॥

२. जवतेरारक् जस्य दः । द्रवते रेफलोपः । वारयतेर्डागमश्चेति ॥

३. विविधेनाञ्चनेन युक्ताः । विपूर्वादञ्चतेरसुन् (उ० ४-१८८) ततो मतुप् । "तदस्यास्त्यस्मिन्निति०" (पा० ५-२-९४)

४. एतचोर इत्यस्यार्थनिर्वचनं भाष्यकारेण कृतम् । अनेनोरुशब्दो दीर्घादिरभिहितो ह्रस्वादिश्चैश्चतसेनानयोः शब्दभेदे इवार्थभेद सत्त्वेऽपि दृष्टान्तोऽपपत्तिः कथंकृतेति चिन्त्यम् ।

सर्वस्य प्रीणयित्र्यः । भाष्ये तु–विश्वं सर्वं यज्ञोपकरणम् आभिरेतीति विश्वमिन्वाः । यतोऽतः **देवेभ्यः** एतेभ्यो हविर्दातृभ्यः ऋत्विग्भ्यः यजमानेभ्य इतरेभ्यो वा ( तेषामर्थाय ) **सुप्रायणाः** सुगमनाः सुविवृता भवत इत्येतदाशास्महे ॥ ५ ॥

अथास्य भाष्यम्—

**व्यञ्चनवत्य उरुत्वेन विश्रयन्तां पतिभ्य इव जाया ऊरू मैथुने धर्मे शुशोभिषमाणा वरतममङ्गमूरू देव्यो द्वारो बृहत्यो महत्यो विश्वमिन्वाः विश्वमाभिरेति । यज्ञे— गृहद्वार इति कात्थक्यः ॥**

प्रतीत्यर्थनिर्देशः । साधनं तु "इवि व्याप्तौ" ( भ्वा० प० ) इत्यस्यैव । धातूनामनेकार्थत्वात् । अत्रार्थे करणेऽण् बाहुलकात्सर्वेष्टसिद्धिः ॥

**अग्निरिति शाकपूणिः ॥**

तत्पक्षे योजना–अग्न्यर्चिषो द्वारः । जवनाद्वरणाद्वा । हविर्वा ताभिर्जवति द्रवति वा । वारयति वा रक्षःप्रभृतीनीति द्वारः । व्यचस्वतीरप्यग्न्यर्चिष एव । ता अपि विविधेनाञ्चनेन तद्वत्यः । सर्वं हविस्ताभिरिन्वति व्याप्नोति–आत्मसात्करोतीति विश्वमिन्वा अपि । ता यूयमस्य हविषः सुप्रायणाः सुगमनाः ( सुखेन प्रापयित्र्यो ) देवेभ्यो भवतेति ॥

**उषासानक्ता– उषाश्च नक्ता च । उषा व्याख्याता । नक्तेति रात्रिनाम । अनक्ति भूतान्यवश्यायेन । अपि वा–ऽनक्ताऽव्यक्तवर्णा । तयोरेषा भवति ॥ ७ ॥ ( १० )**

अथ **उषासानक्ता (७)** इत्येकपदम् । अस्य विग्रहः **उषाश्च नक्ता च** । अत्र **उषा व्याख्याता** । "उच्छतीति सत्याः" ( नि० २–१८ ) इति । उच्छति कान्ता वा उषा । **अनक्ति** क्लेदयति **भूतानि** प्राणिनः इति नक्ता । तथा च "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" ( रु० प० ) इत्यस्मादौणादिकः क्तन् कर्तरि । धातोर्नुडागमश्चाप् । दुर्गस्तु–अनक्तेरकारलोपे नक्तेत्याह । तदेतच्चिन्त्यम् । लोके तु नक्तमित्येव । "अथ दोषा च नक्तं च रजनी" इत्यमरः । **अवश्यायेन** तुषारेण । "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इत्यमरः । अव्यक्तवर्णा । तथा च नकारः प्रतिषेधे । न अक्ता न व्यक्ता अनक्ता । यथा अह्नः सर्वमभिव्यक्तरूपं भवति, न तथा रात्रिः । इत्थं च उषाश्च नक्तं चेति द्वन्द्वे द्विवचनस्य आकारः ( पा० ७–१–३९ ) उषस्शब्दस्य उषासाऽऽदेशः ( पा० ६–३–३१ ) । अहोरात्रदेव्यौ अभिधेये । अग्निपक्षे उषाग्नेर्दीप्तिः । तमसो विवासनात् । नक्ता आहुतिस्तद्युक्ताऽनक्त्यग्निमिति । **तयोः** उषासानक्ताभिधेययोर्देव्योः । **एषा** अनन्तरोदाहियमाणा ऋक् **भवति** प्राधान्यस्तुतिः ॥ ७ ॥ ( १० )

**"आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ । दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने" ॥ ६ ॥**

( ऋ० सं० ८–६–८ )

**आस्विति** । उक्तार्षादिः । **सुष्वयन्ती** । अयतेर्व्यत्ययेन परस्मैपदे लटः शतरि उपसर्गस्य सोर्द्विर्वचनं छान्दसम् । सुष्ठु अयन्त्यौ गच्छन्त्यौ इति सायणः । "वा छन्दसि" ( पा० ६–१–१०६ ) इति दीर्घः । एवमग्रेऽपि । भाष्ये तु सेष्मीयमाणे–परस्परं स्मयमाने ( अन्योन्यवैभवं दृष्ट्वा ) । अथवा सुष्वापयन्त्यौ–सुष्ठु जनान्स्वापयन्त्यौ । स्वपेर्ण्यन्तस्य वर्णलोपः । **यजते** यष्टव्ये इति सायणः । यज्ञिये इति भाष्यम् । हेतुकर्तृत्वेन यज्ञसंपादयित्र्यौ । **उपाके** उपक्रान्ते ( उपगम्य इतरेतरं क्रान्ते–प्रशस्ये ) **दिव्ये** दिविजे द्योतने । **योषणे** संमिश्रे परस्परत इति दुर्गः । योषिताविव प्रीणयित्र्यौ । यद्वा–योषणे समिते परस्परतो विविक्ते इति सायणः । **बृहती** बृहत्यौ गुणैर्महत्यौ । **सुरुक्मे** सुरोचने ( शोभनदीप्ते ) । रुक्ममिति रोचतेर्मक्प्रत्यये कुत्वे च कृते रूपम् । ये एते एवमादिगुणयुक्ते **उषासानक्ते** अहोरात्रभिमानिन्यौ देवते । ते **शुक्रपिशं** शुक्रपेशसम् शुक्लरूपां **श्रियं** शोभाम् **अधि** उपरि **दधाने** स्थापयन्त्यौ । अधिकं धारयन्त्याविति सायणः । **योनौ** अस्मिन्यज्ञस्थाने **नि** नियमेन नितरामधिकं वा **आसदतां** आसीदताम् । सदेर्गत्यर्थाल्लोडर्थे ( आशंसायाम् ) लुङि ( पा० ३–४–६ ) लृदित्त्वाच्च्लेरङ् । इत्येतदाशास्महे ॥ ६ ॥

अथास्य भाष्यम्—

**सेष्मीयमाणे इति वा सुष्वापयन्त्याविति वाऽऽसीदतामिति वा न्यासीदतामिति वा ।**

---

१. देवराजस्तु–आगम्यते आभिः शीतादिनिवारणमित्याह ॥

२. एतेन "उच्छी विवासे" ( भ्वा० प० ) "वश कान्तौ" ( अ० प० ) इत्यस्य वा ऽस्तुनि । बाहुलकात्कित्वेन "ग्रहिज्या" ( पा० ६–१–१६ ) इति संप्रसारणम् । छकारस्य शकारस्य वा षकार इति शब्दसाधनं सूचितम् ॥

३. अवश्यमेतदायन्तीत्यवश्यायाः प्रुष्वा इति दुर्गः ॥

१. दुर्गस्तु–"आहुतिरनक्त्याग्नेयेन । ते एते दीप्त्याहुती सुष्ठु स्मयमाने इव यजते । यज्ञिये यज्ञसंपादयित्र्यौ, उपाके–उपक्रान्ते परस्परतः । दिव्ये–द्योतने परस्पराश्रयणात् । योषणे मिश्रीभूते । बृहती बृहत्यौ महत्यौ । सुरुक्मे सुरोचने । अधिदधाने शुक्रपिशं शुक्रपेशसम् । एतस्मिन्यजमाने श्रियम् आसदताम् आसीदताम् । एतस्मिन्नग्नौ न्यसीदताम् नियमेनाधिकं वा । इत्येतदाशास्महे । इति व्याचख्यौ । ( अत्राग्नेरभिसम्बन्धो यज्ञस्य च पूर्वत्रार्थे, पूर्वोपक्रमवशाद्बुत्प्रेक्षितो दुर्गेण । यज्ञोऽप्यहोरात्रेणाभिसंबध्यत एवेति ) ॥

**यज्ञिये, उपक्रान्ते, दिव्ये, योषणे, बृहत्यौ-महत्यौ, सुरुक्मे-सुरोचने । अधि-दधाने, शुक्रपेशसं श्रियम् ॥**

**आसीदताम्** । अत्रार्थे आदिम आकारं उत्कृष्यते । उपसर्गस्य हि क्रियापदेन सामर्थ्यम् । "व्यवहिताश्च" ( पा० १-४-८२ ) इति उपसर्गस्य दूरे प्रयोगः । **न्यासीदतामिति वेति** । अत्रार्थे ( नियमेनासीदतामिति ) निरुत्तरपदस्थोऽपि, अपकृष्यते तेनैव क्रियापदेन । निशब्दश्चोत्तरपदो वा पादपूरणः । इति दुर्गव्याख्यानम् ॥

अथ निगमप्रसक्तस्य निर्वचनम्—

**शुक्रं शोचतेर्ज्वलतिकर्मणः ॥**

"शुच दीप्तौ" ( निघं० १-१७-६ ) अस्मात् "ऋज्रेन्द्राग्रवज्रविप्र०" ( उ० २-२७ ) इत्यादिना ककारान्तादेशे रप्रत्ययो गुणाभावश्च निपात्यते । यद्वा संपदादित्वात् ( पा० ३-३-९५ ) क्विपि शुक् तदस्य । रो मत्वर्थीयः ॥

**पेश इति रूपनाम, पिंशतेर्विपिशितं भवति ॥**

**पिंशतेः** । अयं दीपनायामपीति भट्टोजिदीक्षिताः । तथा चोदाहृतं "त्वष्टा रूपाणि पिंशतु" इति । अयं हि ( पिश् धातुः ) अवयवार्थे ( तु० प० ) पठितः । "शे मुचादीनाम्" ( पा० ७-१-५९ ) इति नुमि पिंशतेरिति । अस्मादसुनि ( उ० ४-१८८ ) गुणे पेश इति रूपम् । **विपिशितं** विकसितं, यावदाश्रयभावित्वात् । विनिहितमिति केचिदन्याश्रितत्वात् ॥

**दैव्याहोतारा । दैव्यौ होतारौ । अयं चाग्निरसौ च मध्यमः । तयोरेषा भवति ॥८॥ ( ११ )**

अथ दैव्या-होतारा (९) इति वक्तव्यम् । दैव्यौ होतारौ इति शब्दसमाधिः । तथाचोभयत्राकारो द्विवचनस्य स्थाने ( पा० ४-१-३९ ) पार्थिवमध्यमाग्नी उच्येते ( अग्न्यादित्यौ ) तदाह—अयं००म इति । एतदभिधेयवचनम् । एषा प्राधान्यस्तुतिर्भवति ॥ ८ ॥ ( ११ )

**"दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता"॥१॥**

( ऋ० सं० ८-६-९ )

**दैव्येति** । उत्कर्ष्यादिः । **दैव्या** दैव्यौ देवेषु भवौ देवावेव वा "देवाद्यञञौ" ( पा० ४-१-८५ वा० ) इति यञ्प्रत्ययः । देवसंबन्धिनौ **होतारा** होतारौ होमनिष्पादकौ होतृनामकौ अग्न्यादित्यौ । दुर्गस्तु—आह्वातारौ देवानां वाय्वग्नी इत्याह । अस्मिन्यज्ञे आसीदताम् । इति पूर्वमन्त्राभिसंबन्धितं द्रष्टव्यम् । कीदृशौ ? **प्रथमा** प्रथमौ-मुख्यौ—मनुष्यहोतुरपेक्षया पूर्वभाविनाविति वा । **सुवाचा** सुवाचौ प्रशस्तवाचौ सुस्तुतौ ( शोभनस्तोत्रौ ) वा । **मनुषः** मनुष्यस्य स्वर्गस्य यष्टुः **यजध्यै** यजनाय । यष्टुमित्यर्थः । "तुमर्थे०" ( पा० ३-४-९ ) शध्यैन्प्रत्ययः । **प्रचोदयन्ता** प्रचोदयमानौ ( प्रेरयन्तौ ) अत एव **यज्ञं मिमानौ** निर्मिमानौ ( उत्पादयन्तौ ) **विदथेषु** विदन्त्यत्र ऋत्विजः स्वस्वकर्माणीति विदथा यज्ञास्तेषु । वेत्तेः "रुदिविदिभ्यां ङित्" ( उ० ३-१११ ) इति अथच्प्रत्ययः । **कारू** कर्तारौ स्तुतीनां । प्राचीनं पूर्वस्यां दिशि यष्टव्यत्वेन स्थितम् । अत्र "विभाषाञ्चेः—" ( पा० ५-४-८ ) इति भवार्थः खः । तस्येनादेशः । आहवनीयाख्यं **ज्योतिः प्रदिशा** प्रकृष्टेनोपदिष्टमार्गेण । प्रदिश्यमानेन मन्त्रेण ( विधिवाक्यप्रदेशेन ) वा । "प्राचीमनु प्रदिशं प्रेही" त्यनेन । यद्वा "प्राञ्चमुद्धरन्ती"त्यनेन । एतत्प्रणीय नित्यं पूर्वस्यां दिशि यष्टव्यमित्येवमर्थं **दिशन्ता** प्रदिशन्तौ उपदिशन्तौ । विधिना ह्युपदेशः प्रदेशनमुच्यतेऽतो भाष्यकृता प्रदिशन्ताविति व्याख्यातम् । आज्ञापयन्ताविव यौ नित्यमवियोगेन स्वभावतो यज्ञोपकारे वर्तमानौ इति दुर्गव्याख्यानम् ॥ १ ॥

अथास्य भाष्यम्—

**दैव्यौ होतारौ प्रथमौ सुवाचौ निर्मिमानौ यज्ञं मनुष्यस्य मनुष्यस्य यजनाय प्रचोदयमानौ, यज्ञेषु कर्तारौ । पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ ॥**

सुगमं मन्त्रव्याख्ययैतत् ॥

**तिस्रो देवीः । त्रिस्रो देव्यः । तासामेषा भवति ॥ ९ ॥ ( १२ )**

---

१. एतद्व्युत्पत्तिर्मन्त्रार्थे द्रष्टव्या ॥

२. वाय्वग्नी इति दुर्गः । मनुष्यहोतारावपेक्ष्य दैव्यौ होतारौ होतृमैत्रावरुणौ इति विशेषणम् इति च । अत्रार्थे होतृपदेनाग्निरितरेण वायुरुच्यते ॥

१. एतच्च सायणव्याख्यानम् । दुर्गस्तु—तौ ममाप्येवं वर्तेतामिति । एवमाख्यातमध्याहृत्य समाप्यते । निराख्यातत्वान्मन्त्रस्येत्युक्तवान् ॥

२. एतच्च वीप्सया व्याख्यानं भाष्यकृतैवार्थवशात्कृतमिति द्विरुक्तिः कृता ॥

३. अत्र सायणस्तु—यज्ञेषु ऋत्विजो यजमानांश्च प्रेरयन्तौ । कारू च स्तुतीनामिति व्याख्यातं यथाभाष्यं चैतत् ॥

४. मनुष्यस्य होतुरनुग्रहस्येति दुर्गः । "कृवापा०" ( उ० १-१ ) इत्युणि वृद्धिः । ऋत्विजौ तावेतौ अग्निवायू । नानग्निको यज्ञोऽस्तीत्यग्निर्निर्मिमीते । नचासावनुपध्मातो वायुना ज्वलतीति वायुर्निर्मिमीते । विज्ञायते हि—"तस्मादेष नानुपध्मातो ज्वलति" इति । स एष मैत्रावरुणो वायुरग्नेर्होतुः । ( होतृवदधियज्ञे वर्तमानस्य ) नित्यं चोदयिता, तन्मूलत्वाच्च यज्ञकर्मणः तावेव देवानामाह्वातारावुच्येते इति च ॥

अथ **तिस्रोदेवीः** ( ९ ) इति पदम् । ताः पुनरेतास्तिस्र एव देव्यः भारती–इला–सरस्वत्यः । अग्नायी–पृथिवी–इलेति स्त्रियः । इति प्रत्यक्षेण पठिताया अपि तिस्रो देव्य इति सामान्येन पाठात् पृथिवीस्थानं भाष्यकारेण ज्ञापितम् । सरस्वती मध्यमस्थाना । ताः प्रथमया निराह । तिस्र इति देवीशब्दस्य विशेषणम् । प्रतिज्ञावाक्ये प्रथमार्थे द्वितीया । **एषा** प्राधान्यस्तुतिर्भवति ॥ ९ ॥ ( १२ )

**"आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विळा॑ मनु॒ष्वदि॒ह चे॒तय॑न्ती । ति॒स्रो दे॒वीर्ब॒र्हिरे॒दं स्यो॒नं सर॑स्व॒ती स्व॒पसः॑ सदन्तु" ॥ २ ॥**

( ऋ० सं० ९–६–९ )

**आ न** इति । उत्कार्षादिः । **भारती** भरत आदित्यः । तस्य स्वभूता दीप्तिर्द्युस्थाना । तस्येदमित्यर्थे "उत्सादिभ्योऽञ्" ( पा० ४–१–८६ ) इति अञ् प्रत्ययः । आदिवृद्धिः ( पा० ७–२–११७ ) ङीप् ( पा० ४–१–१५ ) **नः** अस्मदीयं **यज्ञं, तूयं** तूर्णम् ( नि० २–१५ ) ( क्षिप्रं ) तुदतेः अघ्न्यादित्वात् ( उ० ४–१०८ ) यत्प्रत्यये दलोपः । उकारस्य दीर्घः ( पा० ६–३–१३३ ) **एतु** आगच्छतु । तथा **मनुष्वत्** मनुष्यवत् ( मनुष्यो यथा इदं मया कर्तव्यमिति जानाति तद्वत् ) **चेतयन्ती** चेतयमाना ( जानाना ) **इळा** देवी च पृथिवीस्थाना **इह** अस्मिन्कर्मणि आगच्छतु । तथा **सरस्वती** च मध्यमस्थाना ( एवमेव चेतयन्त्येतु ) ता एताः **तिस्रः** त्रिसंख्याका अपि **देवीः** देव्यः । "वा छन्दसि" ( पा० ६–१–१०६ ) इति पूर्वसवर्णदीर्घः । **स्वपसः** सुकर्माणः । अप इति कर्मनाम ( निघं० २–१–१ ) आप्नोतेरसुनि ह्रस्वः ( उ० ४–२०२ ) बहुव्रीहिः । **स्योनं** सुखकरम् **इदं बर्हिः** यज्ञम् कुशं वा "बृंहेर्नलोपश्च" ( उ० २–२०२ ) इतीसिप्रत्ययः । **आसदन्तु** आसीदन्तु प्राप्नुवन्तु इत्येतदाशास्महे । सदेर्लोटि सीदादेशाभावश्छान्दसः ॥ २ ॥

अथास्य भाष्यम्—

**एतु नो यज्ञं भारती, क्षिप्रं भरत आदित्यस्तस्य भा इळा च मनुष्यवदिह चेतयमाना तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्माण आसीदन्तु ॥**

सुगमं मन्त्रार्थेनैतत् ।

**त्वष्टा तूर्णमश्नुत इति नैरुक्ताः । त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा स्यात्करोति कर्मणस्तस्यैषा भवति ॥ १० ॥ ( १३ )**

अथ **त्वष्टा** ( १० ) इति वक्तव्यम् । अत्र क्षिप्रवचनतूर्णशब्दोपपदादश्नोतेस्तृनि र्णलोपो निपात्यते ( पा० ६–३–१०९ ) तूर्णमश्नुते व्याप्नोतीति त्वष्टा वायुः मध्यमस्थानः । आप्रीष्वादिह समाम्नातः । अथ **वा त्विषेर्धातोर्दीप्तिकर्मणः** दीप्त्यर्थस्य त्वष्टेति **स्यात्** । दीप्तो ह्यसौ वैद्युतत्वात् । "त्विषेर्देवतायामकारश्चोपधाया" इति तृनि रूपम् । अग्निपक्षेऽप्युपपद्यन्ते निर्वचनानि । अत्र वृद्धिकर्मण इति दुर्गसंमतः पाठः । वृद्ध एव नित्यमसौ देवतात्वादिति तद्व्याख्यानम् । अथ **वा त्वक्षतेर्धातोः करोतिकर्मणः** क्रियासामान्यमात्रवाचिनः उत्पूर्वत नूकरणस्वार्थस्य त्वष्टेति **स्यात्** । **एषा** प्राधान्यस्तुतिर्भवति ॥ १० ॥ ( १३ )

**"य इ॒मे द्यावा॑पृथि॒वी जनि॑त्री रू॒पैरपिं॑शद्भुव॑नानि॒ विश्वा॑ । तम॒द्य हो॑तरिषि॒तो यजी॑यान्दे॒वं त्वष्टा॑रमि॒ह य॑क्षि वि॒द्वान्" ॥ ३ ॥**

( ऋ० सं० ८–६–९ )

**य इम** इति । उत्कार्षादिः । **यः** त्वष्टा देवः । **जनित्री** जनयित्र्यौ सर्वेषां भूतानाम् । अन्तर्भावितण्यर्थात्प्रादुर्भावार्थाज्जन्धातोस्तृनि "ऋन्नेभ्यो ङीप्" ( पा० ४–१–५ ) इति ङीपि "वा छन्दसि" ( पा० ६–१–१०६ ) इति पूर्वसवर्णदीर्घे एवमग्रेऽपि । **इमे द्यावापृथिवी** द्यावापृथिव्यौ । द्यौश्च पृथिवी चेति द्वन्द्वे "दिवोद्या वा" ( पा० ६–३–२९ ) इति द्यावादेशः । **विश्वा** विश्वानि सर्वाणि । "शेश्छन्दसि बहुलम्" ( पा० ६–१–७० ) इति शेर्लोपः । **भुवनानि** भूतानि च । **रूपैः** देवतिर्यङ्मनुष्याद्याकारैर्नानाविधैः । **अपिंशत्** रूपवन्त्यकरोत् । "पिश अवयवे" ( तु० प० ) "शे मुचादीनाम्" ( पा० ७–१–५९ ) इति नुमागमः । हे **होतः** ! **यजीयान्** यष्टृतमः । "तुरिष्ठेमेयस्सु" ( पा० ६–४–१५४ ) इति तृचो लोप ईयसुनतिशयार्थे । **विद्वान्** सर्वं जानानस्त्वम् **इषितः** अस्माभिरध्येषितः ( प्रार्थितः ) सन् **इह** अस्मिन्कर्मणि । **अद्य** अस्मिन्दिने **तं त्वष्टारं देवं यक्षि** स्तुतिभिर्हविर्भिर्वा यज पूजय । "सिब्बहुलं लेटि" ( पा० ३–१–३४ ) इति सिपि बाहुलकं रूपम् ॥ ३ ॥

अथास्य भाष्यम्—

**य इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैरकरो-**

---

१. विधिवाक्यमेव प्रदेश उच्यतेऽन्यत्र ॥

२. दुर्गस्तु–यथा मनुष्येण मनुष्य आहूतो भोक्तुमविलम्बमान आगच्छेत् क्षिप्रमेवागच्छतु सा ममेह कर्मणि हविर्भोक्तव्यमित्येवमर्थं जानानेति व्याचख्यौ ॥

१. तत्तद्रूपमास्थाय ॥

२. अत्र "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" ( पा० १–२–६९ ) इति नपुंसकस्य शेषः । रूपवत्यौ च रूपवन्ति चेति । तत्र द्यावापृथिव्यौ रूपवत्यावकरोद्भुवनानि च सर्वाणि रूपवन्ति रूपयुक्तानि रूपैरवयववन्तीत्युक्तेऽयमेवार्थः फलति ॥

३. ममेदं कर्तव्यमिति स्वकर्तव्याभिज्ञः ॥

भुवनानि च सर्वाणि तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यज विद्वान् ॥

इति । अथ माध्यमिकस्त्वष्टेति विचारः । तत्र तावत्—

**माध्यमिकस्त्वष्टेत्याहुर्मध्यमे च स्थाने समाम्नातः ॥**

आहुः आचार्याः केचिन्नैरुक्ताः । **माध्यमिक** इति संज्ञाप्रसिद्धिः । को हेतुः ? **मध्य००म्नात** इति । च हेतौ । यतोऽसौ मध्यमे स्थाने समाम्नातः । किंच—एतस्मिन्नेव मन्त्रे व्यपदेशात् । कथम् ? "य इमे द्यावापृथिव्यौ भूतानि च सर्वाण्यकरोत्तं देवं त्वष्टारं यज" इति व्याख्याने त्वष्टुरन्यो यष्टा । स एव पुनः संबोध्यते मनुष्यहोत्रा हे होतरिति । नचान्यः पार्थिवादग्नेर्होतास्ति । तस्माद्यो यष्टा स पार्थिवः । य इज्यते स मध्यमस्त्वष्टेति । स एष सर्वशिल्पिनामाचार्यो देववर्धकिर्दाक्षायणीपुत्रो द्वादशानामादित्यानामन्यतम इति ऐतिहासिकाः । मतान्तरमाह—

**अग्निरिति शाकपूणिस्तस्यैषाऽपरा भवति ॥ ११ ॥ ( १४ )**

शाकपूणिराचार्य एवं मन्यते अयमेव पार्थिवः **अग्निस्त्वष्टेति** । तथा च यत्तावन्मध्यमे स्थाने समाम्नातत्वं माध्यमिके हेतुरुक्तस्तदकारणम् । अयमप्यग्निर्मध्यमे स्थाने समाम्नात इति । यत्पुनर्व्यपदेशादित्युक्तम् । अनन्यत्वेऽपि हि व्यपदेशो भवति । तद्यथा "अग्निमग्न आवह" इति । हे भगवन् अग्ने ! अग्निम् आवह इति व्यपदेशे सत्यनन्यत्वम् । न हि पार्थिवादन्यः सूक्तभागधर्मिर्गत्वाऽग्निरस्ति योऽनेन प्रसिद्धहोतृत्वाभिधानेनाहूयेत, इज्येत च । "स्वं महिमानमावहे" ति । स्विष्टकृति विशेषलिङ्गात् स्वयमेवात्मनाऽत्मानं विधिवशादाह्वानेन संस्कृत्य द्वैधं त्रैधमनेकधा वा यजति । अन्यद्वाग्निर्निर्वर्तयति । तद्वदिहापि कर्मात्मनः परो योऽस्य तल्लक्षणगुणयोगान्मां, यदधिष्ठितः कर्मात्मा सर्वरूपाणि पाकेन करोति, तदयमुच्यते मनुष्यहोत्रा यज त्वमिति । यथा चाग्निरेव नान्यस्त्वष्टेति तथा **तस्य** अग्नेः पार्थिवस्य **एषा** विशिष्टतरलिङ्गा **अपरा** ऋग् **भवति** ॥ ११ ॥ ( १४ )

**"आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते" ॥ ५ ॥**

**आविष्ट्य** इति । आङ्गिरसेन कुत्सेन दृष्टा त्रिष्टुबाग्नेयी । प्रातरनुवाकस्याग्नेये क्रतौ शस्यते । **आविष्ट्यः** आविर्भूतः ( प्रकाशमानः ) ( एष त्वष्टाग्निः ) **आसु** क्रियासु **चारुः** चरणशीलः ( अनवस्थितः ) अथ च **स्वयशाः** आत्मयशाः ( परमनाश्रित्य यशस्वी ) सन् **उपस्थे** उपस्थाने ( यत्रासावुपनतस्तिष्ठति ) **जिह्मानां** कुटिलचेतसामपि मनुष्याणामवैषम्येण **ऊर्ध्वः** ऊर्ध्वमेव **वर्धते** ज्वलति । कुटिलानामपीन्धनानामकुटिल ऊर्ध्वमेवेति केचित् । योऽयमेवमादिगुणयुक्तस्त्वष्टा तस्मात् **त्वष्टुः** दीप्तात्तन्नामकात् अग्नेः **जायमानात्** उत्पद्यमानात् एव **उभे** द्वे अपि द्यावापृथिव्यौ अहोरात्रे अरणी वा **बिभ्यतुः** भयं प्रापतुः । अत एव **सिंहं** सहनं (सहनशील-मभिभवनशीलं) तमग्निं **प्रतीची** प्रत्यञ्चन्त्यौ (प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवन्त्यौ ) **प्रतिजोषयेते** सेवेते । स्वार्थे णिच् । दुर्गस्तु–एवं बिभ्यत्यौ किं कुरुतः ? नान्या गतिरस्तीति–प्रतीची–नाम तमेनं प्रत्यञ्चिते अभिमुखे सिंहं सहन–मभिभवनं–प्रतिजोषयेते प्रत्यासेवेते, उपकारकत्वेन । कथंनामायमावां न भस्मसात्कुर्यादिति । एवमयमेवाग्निरिह त्वष्टेत्याह ॥ ५ ॥

अथास्य भाष्यम्—

**आविरावेदनात् तच्यो वर्धते चारुरासु । चारु चरतेः ॥**

**आविः** प्रकाशः । स कस्मात् ? **आवेदनात्** सर्वस्य प्रकाशनात् । तथा चाङ्पूर्वाद्वेत्तेः क्विपि दस्य रः । अव्ययमेतदिति **तच्यः** ततस्त्यप्रत्यये ( पा० ४–२–१०४ ) षत्वेच ( पा० ८–३–१०१ ) आविष्ट्य इति । तस्य तनितेति दुर्गः । तन्मते तनोतेर्ड्य औणादिकः । आविस्तनोतीत्याविष्ट्यः । षत्वमपि निपातनादेव । **चरतेः** ताच्छील्यविशिष्टे कर्तर्युण्प्रत्यये उपधावृद्धिः ( पा० ७–२–११६ ) ॥

**जिह्मं जिहीतेः । ऊर्ध्व उच्छ्रितो भवति । स्वयशा आत्मयशाः । उपस्थ उपस्थाने । "उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते" ॥**

अत्र उभे इत्यस्यार्थमनेकधा व्याचष्टे । तत्र—

**द्यावापृथिव्याविति वा ॥**

यथायमतिमहान्वर्धते, अवश्यमयमावां धक्ष्यतीति बिभ्यतुः । अत्र वाशब्दोऽनास्थायाम् ।

**अहोरात्रे इति वा ॥**

अथ वा **अहोरात्रे** उभे, सकृदुपज्वलिते महत्यग्नावनुपशाम्यति अहोरात्रयोरर्थवत्त्वाभावस्तस्मात्ते अपि बिभ्यतुः अपिनामायमेवमतिप्रवृद्ध आवामन्यतरमनुच्छिन्द्यादिति ॥

१. असिन्नर्थे "षह मर्षणे" ( भ्वा० आ० ) इत्यस्य ताच्छील्यविशिष्टे कर्तरि अजन्तस्य निपातोयम् पृषोदरादिः । अर्थान्तरे तु भावे प्रत्ययः । उपधाया इत्वं नुमागमश्च छान्दसः ॥

२. प्रतिपूर्वादञ्चतेः क्विनि "अनिदिताम्०" ( पा० ६–४–२४ ) इति नलोपे ङीपि "अचः" ( पा० ६–४–१३८ ) इत्यकारलोपे "चौ" ( पा० ६–३–१३८ ) इति दीर्घत्वम् । "वा छन्दसि" ( पा० ६–१–१०६ ) इति पूर्वसवर्णदीर्घः ॥

**अरणी इति वा, प्रत्यक्ते । सिंहं सहनं प्रत्यासेवेते ॥ १२ ॥ ( १५ )**

**इति श्रीमद्यास्कमुनिप्रणीते निरु० दै० कां० अष्टमाध्यायस्य द्वितीयः पादः ॥ ८ ॥ २ ॥**

अथ वा अरणी उभे, अवश्यमयभावां जातो यतो यदा तदा धक्ष्यतीत्यहो अरणी अपि बिभ्यतुः । सहनम् । तथा च "षह मर्षणे" इत्यस्य निपातोऽयं पृषोदरादिः । प्रत्यासेवेते इति प्रतिजोषयेते इत्यस्यार्थः । "जुषी प्रीतिसेवनयोः" ( तु० आ० ) स्वार्थे णिजन्ताल्लटि द्विवचने रूपम् ॥ १२ ॥ ( १५ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० अष्टमाध्यायस्य द्वितीयः पादः ॥ ८ ॥ २ ॥

---

## अष्टमाध्यायस्य तृतीयः पादः ।

**वनस्पतिर्व्याख्यातस्तस्यैषा भवति ॥ १ ॥ ( १६ )**

अथ वनस्पतिः ( ११ ) अवसरप्राप्तः । स पुनरयमभिधेयतोऽभिधानतश्च व्याख्यातः "एष हि वनानां पाता वा पालयिता वा" ( नि० ८-३ ) इति । तस्य वनस्पतेरेषा प्राधान्यस्तुतिः भवति ॥ १ ॥ ( १६ )

**"उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन" ॥ १० ॥**

( ऋ० सं० ८-६-९ )

उपेति । हे वनस्पते[1] यूप ! त्मन्या आत्मना आत्मानम्[2] । आत्मन् शब्दस्य तृतीयैकवचने यादेशः ( पा० ७-१-३९ ) "मन्त्रेष्वाङ्यादेरात्मनः" ( पा० ६-४-१४१ ) इत्याकारलोपः । अस्य पशोः । पाथः अन्नं चैतत्पशुलक्षणम् । यद्यप्ययमुदकार्थोऽन्तरिक्षनामसु पठितः ( निघं० ४-३-३० ) तथाप्यन्नार्थोऽपि भाष्यकारेण दृष्टः । अत्र "पिबतेस्थुक्च" ( उ० २-११४ ) इत्यसुन् । अत्रान्ने पिबतिरभ्यवहारार्थं इति देवराजः । हवींषि चैतान्यन्यान्यप्याज्यप्रभृतीनि । ऋतुथा ऋतावृतौ ( काले काले ) षण्मासादौ प्रकारवचने ( पा० ५-३-२३ ) थाल्प्रत्ययः । समञ्जन् समभिव्यञ्जयन् ( सम्यग्व्यक्तीकुर्वन् ) देवानाम् अर्थाय । उपावसृज उपागम्य[3] प्रयच्छ देवेभ्यो देहीत्यर्थः । किंच-वनस्पतिः योऽयं यूपः । शमिता एतन्नामकः । देवः । यद्वा-शामित्रेऽग्निर्देवो दीप्यमान आहवनीयाख्योऽग्निश्च इत्येते त्रयः । मधुना मधुरेण । घृतेन । यद्वा-मधुना उदकेन ( निघं० १-१२-११ ) प्रोक्षणोपनयनादिगतेन घृतेन चैतदस्माभिः संस्कृतं हव्यं हवनयोग्यं पाथ उक्तलक्षणं स्वदन्तु स्वदयन्तु ( स्वादुतामापादयन्तु ) इत्येतदाशास्महे । आशंसायां लोट् ॥ १० ॥

अथास्य भाष्यम्—

**उपावसृजात्मनात्मानं समञ्जन्देवानामृतावृतौ हवींषि काले काले । वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदन्तु हव्यं मधुना च घृतेन च ॥**

अत्र काले काले इति ऋतावृतावित्यस्यार्थः । स च "ऋतुथे" ति मन्त्रपदस्य । तथा च तत्रर्तुपदं कालसामान्योपलक्षकं वीप्सार्थे च सप्तम्यन्तादस्मात्थाल्छान्दसः । आत्मनात्मानमिति आर्थिकं निर्वचनम् । आवर्तयति वा भाष्यकृत् । विभक्त्यादेश आलोपश्चोभयत्र बोध्यः । इत्येते त्रयः । अत्र त्रिग्रहणाद्देवशब्दोऽग्निविशेषणमिति दर्शयति । यथा च व्याख्यातमुपरिष्टात् । वनस्पतिश्च सविता चाप्रत्यक्षदेवते एव । असन्दिग्धश्च देवोऽग्निरिति ॥

**तत्को वनस्पतिः ? यूप इति कात्थक्यः । ( अग्निरिति शाकपूणिः[1] ) तस्यैषाऽपरा भवति ॥ २ ॥ ( १७ )**

तत् अत्र ( मन्त्रे ) वनस्पतिः कः ? इति विचार्यते । तत्र तावत् यूपः वनस्पतिरिति कात्थक्यः कत्थकस्य पुत्र आचार्य आह । यतस्तस्य यूपस्य एषा अपरा यूपाञ्जनीया ऋक् या सन्निपत्य यूपाञ्जने यूपमभिधानेन संस्करोति ॥ २ ॥ ( १७ ) तद्यथा—

**"अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन । यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥ १ ॥"**

( ऋ० सं० ३-१-३ )

अञ्जन्तीति । विश्वामित्रस्यार्षं पुरोरुक् त्रिष्टुप्[2] । देवेभ्यो वनस्पत इति च । हे वनस्पते ! खदिरपलाशादिलक्षण यूप !

---

१. अत्र दुर्गः—अनाश्रितविशेषः किमयमग्निर्वा यूपो वा इत्युच्यते? उत वा अन्य एव कश्चित् ? इति । उत्तरेऽर्धर्चे वनस्पतिशब्दः प्रथमासंबन्धात्परोक्षः । इह पुनरुपसृजेति मध्यमपुरुषयोगात्प्रत्यक्षः कोऽप्यभिधीयते, इति सुतरामेवाश्रितविशेष इति विचारास्पदमित्यतः परं विचारयिष्यति ( भाष्ये ) "तत्कोऽयं वनस्पतिः" इति ॥

२. एतद्यथाभाष्यं व्याख्यातम् । अस्य पशोरित्यत्राभिसंबध्यमेतत् ॥

३. दुर्गस्तु—उपाश्लिष्यावसृजेत्यर्थमाह ॥

१. एव पाठ उपक्षिप्तः प्रतिभाति । उत्तरत्रापि दर्शनादर्थासङ्गतेश्च ॥

२. अत्रानुक्रमणिका—"अञ्जन्ति यूपस्तुतिः०० कृत्स्नस्य सूक्तस्य यूपो देवते"त्यादि ॥

**अध्वरे** यज्ञे एतस्मिन् **देवयन्तः** देवान् यष्टुं कामयमानाः अध्वर्य्वादयः। **दैव्येन** देवसंबन्धिना। "देवाद्यञञौ" (पा० ४–१–८५ वा०) इति यञ्। णित्वादादिवृद्धिः (पा० ७–२–११७) "यस्येति च" (पा० ६–४–१४८) इत्यलोपः। **मधुना** घृतेन। "एतद्वै मधु दैव्यं यदाज्यम्" (ऐ० ब्रा० २–२) इत्याम्नानात्। तेन घृतेन **त्वाम् अञ्जन्ति** म्रक्षयन्ति। त्वयि घृतं सिञ्चन्तीत्यर्थः। **यत्** यस्मात्कारणात्त्वम् **ऊर्ध्वः** उन्नतः **तिष्ठाः** स्थास्यसि। अञ्जनादनन्तरमुच्छ्रयिष्यन्ति त्वाम्। अत्र "ष्ठा गतिनिवृत्तौ" (भ्वा० प०) लडर्थे लेटि सिपि "इतश्च लोपः" (पा० ३–४–९७) इति इकारलोपः। शपः पित्त्वात् "पाघ्राध्मा०" (पा० ७–३–७८) इति तिष्ठादेशः। "लेटोऽडाटौ" (पा० ३–४–९४) इत्यडागमः। यद्वा यस्माद् वा **मातुः** मातृभूतायाः **अस्याः** पृथिव्याः **उपस्थे** उपस्थाने उत्सङ्गे (उपरि) ते **क्षयः** निवासः "क्षि निवासगत्योः" (तु० प०) क्षियन्ति निवसन्त्यस्मिन्नित्यधिकरणे घः (पा० ३–३–११८) स्थैर्यार्थमवटस्तस्मादवश्यमूर्ध्वः स्थास्यसि। तथा स्थित्वा पशुधारणसमर्थः प्रधानक्रियापूर्वाङ्गं भावयित्वा तद्द्वारेण तत्फलानि **द्रविणा** द्रविणानि धनानि। "द्रविणं तु बलं धनम्" इत्यमरः। "शेश्छन्दसि बहुलम्" (पा० ६–१–७०) इति शेर्लोपः। **इह** अस्मभ्यमवश्यं **धत्तात्** दास्यसि इत्यतः समञ्जन्ति। ब्राह्मणेन त्वियमृगेवं व्याख्याता–"अञ्जन्ति त्वामध्वरे देवयन्त इत्यन्वाहाध्वरे ह्येनं देवयन्तोऽञ्जन्ति वनस्पते मधुना दैव्येनेत्येतद्वै मधु दैव्यं यदाज्यं, यदूर्ध्वस्तिष्ठा द्रविणे ह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थ इति। यदि च तिष्ठासि, यदि च शयासै द्रविणमेवास्मासु धत्तादित्येव तदाहे–"ति ॥ १ ॥

एवमस्मिन्समञ्जने यूपे वनस्पतिशब्दः प्रयुक्तस्तस्माद्यूपो वनस्पतिरिति ॥

अथास्य भाष्यम्—

**अञ्जन्ति त्वामध्वरे देवान्कामयमाना वनस्पते मधुना दैव्येन च घृतेन च यदूर्ध्वः स्थास्यसि, द्रविणानि च नो दास्यसि, यद्वा ते कृतः क्षयो मातुरस्या उपस्थे–उपस्थाने ॥**

"ष्ठा गतिनिवृत्तौ" (भ्वा० प०) अधिकरणे "आतश्चोपसर्गे" (पा० ३–३–१०६) इत्यङ्। उपतिष्ठन्त्यस्मिन्नित्युपस्थमुपस्थानमुत्सङ्ग इत्यनर्थान्तरम् ॥

**अग्निरिति शाकपूणिः। तस्यैषाऽपरा भवति ॥ ३ ॥ (१८)**

१. देवानात्मन इच्छन्तः। "सुप आत्मनः क्यच्" (पा० ३–१–८) इति क्यचि "क्यचि च" (पा० ७–४–३३) इति दीर्घत्वम्। "अकृत्सार्वधातुकयोर्दीर्घः" (पा० ७–४–२५) इति दीर्घत्वं च "न छन्दस्यपुत्रस्य" (पा० ७–४–३५) इति प्रतिषिध्यते। तदन्ताच्छतृप्रत्ययः ॥

२. ब्राह्मणेन त्वन्यथा व्याख्यातं तत्तत्रैव द्रष्टव्यम् ॥

अग्निर्वनस्पतिरिति शाकपूणिराचार्यो मन्यते। तस्य अग्नेर्यजतो निपत्य वनस्पतिशब्देनाभिधायिका **एषा अपरा ऋक् भवति** ॥ ३ ॥ (१८) तद्यथा—

**"दे॒वेभ्यो॑ वनस्पते ह॒वींषि॒ हिर॑ण्यवर्ण प्र॒दिव॑स्ते॒ अर्थ॑म्। प्र॒द॒क्षि॒णिद्र॑श॒नया॑ नि॒यूय॑ ऋ॒तस्य॑ वक्षि प॒थिभी॒ रजि॑ष्ठैः" ॥**

**देवेभ्य** इति। वसिष्ठस्यार्षं त्रिष्टुप्। हे **वनस्पते**! अग्ने! **हिरण्यवर्ण**! ज्वलित! **हवींषि** एतानि चरुपुरोडाशादीनि **रशनया** रसनया। श–सयोर्व्यत्ययः (पा० ३–१–८५)। जिह्वया, अर्चिषा, सात्मने रसना, सप्तजिह्वः सप्तार्चिरिति तन्त्रामसु पाठात्। **नियूय** अप्रध्वंसनाय निर्बध्य **प्रदक्षिणित्** प्रदक्षिणेनैव (प्रदक्षिणं यो देवानां हविर्वहनधर्मस्तेन–पितृधर्मविपरीतेन क्रमेण **रजिष्ठैः** ऋजुतमैर्यैः कालो नातिहीयेत तैः। "विभाषर्जोश्छन्दसि" (पा० ६–४–१६२) इति ऋजोः ऋकारस्य रेफादेशः टिलोपश्च (पा० ६–४–१५५) रजस्वलतमैर्वेति भाष्यम्। अत्यर्थमुदकवद्भिरिति तदर्थं दुर्ग आह। तन्मते रज उदकं ततो मत्वर्थे वलच्। अत एव "उदक्या तु रजस्वले"–त्यमराभिधानं संगच्छते। ते हि पथिकानां सुखकराः। एवंभूतैः **ऋतस्य** यज्ञस्य संबन्धिभिः। **पथिभिः** मार्गैः **देवेभ्यः** देवार्थम्। **वक्षि** वह। "सिब्बहुलं लेटि" (पा० ३–१–३४) इति बाहुलकाल्लोडर्थे लेटि साधुः। **प्रदिवः** पुरातनमेव **अर्थम्** हविर्वहनलक्षणं स्वाधिकारप्राप्तम् **ते** तुभ्यम् प्रभूम इति शेषः। न च पुनरविदिते कर्मणि वां विनियुङ्महे इति भावः ॥

एवमस्मिन्मन्त्रे हविर्वहनसंयोगाद्वनस्पतिशब्दस्याग्निरभिधेय इति स्थितम् ॥

१. पूर्वर्चोरनाविष्कृतवनस्पतिशब्दार्थत्वाद्भवतु परोक्षो यूपः। परम्परयास्याग्नेर्वनस्पतेर्हविर्वहनलिङ्गलिङ्गितेयं पुरोरुक् भवतीत्यर्थः ॥

२. एतद्व्याख्यानमग्रे (भाष्यव्याख्यायां) द्रष्टव्यम् ॥

३. सुनिपुणं यथा न किंचिदपि त–(अ–)त्र हविरनवेक्षितं धूम्रभूतेन भ्रश्र–(ध्व)–सेत्तथेति दुर्गः ॥

४. य एव प्रसिद्धाः पन्थानो यज्ञस्य हविर्वहनाय देवान्प्रति तैरित्यर्थः ॥

५. प्रभूतोदके पथि पथिकाः सुखं विहरन्ति। अनुदके तु भृशं क्लिश्यन्तीति व्यक्तमेव ॥

६. सान्तमव्ययम्। प्रगतानि दिनान्यस्येत्यर्थकमिति द्वितीयैकवचनान्तमत्र बोध्यम्। निरुक्तमेतदधस्तात् ॥

७. तथाच निगमः–अ॒यं यो होता॒ किरु॒ स य॒मस्य॒ कम॒प्यू॑हे॒ यत्स॑म॒ञ्जन्ति॑ दे॒वाः। अह॑रहर्जायते मा॒सि मा॒स्यथा॑ दे॒वा द॑धिरे हव्य॒वाह॑म् ॥ (ऋ० सं० ८–१–१२–३) इत्येवमादिः ॥

८. एष च शेषाध्याहारो भाष्यकारेणैव कृतोऽर्थसंगमनाय ॥

अथास्य भाष्यम्—

**"देवेभ्यो वनस्पते हवींषि, हिरण्यपर्ण" ऋतपर्ण, अपिवोपमार्थे स्याद्धिरण्यवर्णपर्णेति ॥**

अत्र हिरण्यपर्ण इत्यनेन हिरण्यार्चिरभिधीयते । प्रतप्तज्वालाया हिरण्यवर्णत्वाभिधानात् ऋतपर्णेति यूपपक्षे, स हि गतपर्णः सन्यूपो भवति । गताश्च पर्णा हिरण्यवर्णा एव यतोऽसौ परिणतावस्थ एव यूपार्थं छेद्यो न तरुण इति तदेतत्स्फुटयति–अपिवेति । हिरण्यवर्णपर्णेति रूपसमासाभिधानम् ॥

**"प्रदिवस्ते अर्थम्"–पुराणस्ते सोऽर्थोयं ते प्रब्रूमो, यज्ञस्य वह "पथिभी रजिष्ठै" ऋजुतमै रजस्वलतमैः प्रपिष्टतमैरिति वा, तस्यैषाऽपरा भवति ॥ ४ ॥ ( १९ )**

अत्र यज्ञस्य इति ऋतस्येत्यस्यार्थः । ऋतं च सत्यमुच्यते ( निघं० ३–१०–६ ) सत्यं च वैदिकाम्नाये यज्ञो योऽत्र ऋतशब्देनाभिहितः । वहेति वक्षीत्यस्य । प्रपिष्टतमैः । अतिसंक्षुण्णैर्जनैरभीक्ष्णं पदाघातेनाभिसंचूर्णितैरित्यर्थः । "पिष्लृ संचूर्णने" ( रु० प० ) क्तस्ततस्तमबतिशायने । तथा च व्याख्यातं दुर्गेण—सुरूपतमैः प्रहततमस्कैरसंमोहः स्याद्गच्छतस्तैरिति । अथ तस्य वनस्पतेरग्नेरेषाऽपरा ऋक् भवति ॥ अत्र दुर्गः–"सा पुनः किमर्था ? इति । प्रायोवृत्त्युपदर्शनार्थं बहुषु मन्त्रेष्वग्निर्वनस्पतिरिति" ॥ ४ ॥ (१९)

**"वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् । वहा देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः" ॥**

( ऋ० सं० ८–२–२२ )

**वनस्पत** इति । वनस्पतेरेव याज्या त्रिष्टुप् । हे **वनस्पते** ! **पिष्टतमया** सुरूपतमया अत्यर्थं दृढया **रशनया** रसनया अर्चिषा **नियूय** अप्रध्वंसनाय निबध्य **वयुनानि** स्वाधिकारप्रयुक्तानि प्रज्ञानानि ( निघं० ३–९–१० ) **विद्वान्** अस्मदुपकाराय जानानः एतान्यस्मत्प्रत्तानि **हवींषि अस्य दिधिषोः** यज्ञे दातुर्यजमानस्य ( अभिमतफलप्राप्तये ) **देवत्रा** देवान्प्रति । "देवमनुष्य" ( पा० ५–४–५६ ) इत्यादिना द्वितीयान्तात्त्राप्रत्ययः । **वह** प्रापय । **दातारं च अमुं** यजमानं नामतो निर्दिशन् । **अमृतेषु** देवेषु ( अमरणधर्माणो हि ते भवन्ति ) **प्र-वोचः** प्रब्रूहि । अमुना यजमानेनैतानि हवींषि तुभ्यं प्रत्तानीति । एवमग्निर्वनस्पतिरिहोक्तः ॥

अथास्य भाष्यम्—

**"वनस्पते रशनया नियूय" सुरूपतमया "वयुनानि विद्वान्" प्रज्ञानानि प्रजानन् । वह देवान् यज्ञे दातुर्हवींषि । प्रब्रूहि च दातारममृतेषु–देवेषु ॥**

अत्र **सुरूपतमया** इति पिष्टतमया इत्यस्यार्थः । पिष्टमिहाभ्यस्तं कार्यकरणे ।

तद्धि सुरूपं भवतीति ।

अथ—

**स्वाहाकृतयः ( १२ )**

इति निर्वक्तव्याः । ताः पुनः काः ? या यागार्थमाहूय उत्तमे प्रयाजे स्वाहाकारेण संस्क्रियन्ते ताः स्वाहाकृतयः । कस्मात् ? स्वाहा स्वाहेत्यनुकीर्तनेनासामुत्तमस्य प्रयाजस्य प्रैषसंस्कारः क्रियते इति स्वाहाकृतयः ॥

**स्वाहेत्येतत्सु आहेति वा, स्वा वागाहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोतीति वा । तासामेषा भवति ॥ ५ ॥ ( २० )**

अथ स्वाहा–इत्येतत् कस्मात् ? **सु सुष्ठु आह इति वा** यदेव संप्रदानदेवतायै किंचिदाज्यस्येत्यनेन मन्त्रेणाह "तुभ्यमिदम्" इति तदेव "सु–आह" शोभनमाह । एवमस्य "सुः" पूर्वपदम् "आह" इत्युत्तरपदम् । अथ **वा** इदमन्यद्ब्राह्मणानुगतं निर्वचनम् **स्वा वागाहेति** । विज्ञायते हि "तं स्वा वागभ्यवदज्जुहुधीति तत्स्वाहाकारस्य जन्म" इति । अत्र च "स्व–" शब्दः पूर्वपदमुत्तरपदं तथैव ॥ अथ **वा स्वं प्राह इति** । पूर्वत्र स्वेति कर्तरि । इह स्वमिति कर्मणीति, प्रशब्दस्तु प्रकर्षद्योतनायेति, च पूर्वस्माद्विशेषः । स्वमात्मानम् इति नपुंसकत्वम् । "स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने" इत्यमरः ॥ अथ **वा स्वाहु००ति** । यदनेनैव हविर्जुहोतीति, तदेव सुष्ठ्वापाद्य यथाभिधानमग्नौ जुहोतीति हविःप्रधानोऽत्र निर्देशः । **तासाम्** स्वाहाकृतीनाम् ॥५॥(२०)

---

१. तथा चोक्तं माघेन–"स तप्तकार्तस्वरभास्वराम्बरः प्रसन्नताराधिपलाञ्छनच्छविः । विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः" इति । अर्चिषश्च पर्णतयाभिधानम् । यद्वा प्रतप्तहिरण्यस्य लोहितत्वाभिधानमविरुद्धमग्नेश्च सुलोहिताख्यार्चिस्तुरीया सप्तार्चिःषु परिगणितेति हिरण्यपर्णत्वमस्य । तथा च–काली–कराली–मनोजवा–सुलोहिता सुधूम्रवर्णा–स्फुलिङ्गिनी–विश्वदासाख्याः सप्त जिह्वा आख्यायन्ते ॥

१. अत्र दीर्घः संहितायाम् "अन्येषामपि दृश्यते" (पा० ६–३–१३७) इति ॥

२. यापि हि यूपे वनस्पतिशब्दख्यापिका ऋग्द्वयी पूर्वमुपवर्णिता सापि हि यूपान्तर्वर्तिनमग्निमेवाभिधत्ते इति । एवं कात्थक्यमतेऽपि देवेभ्य इत्यादि ऋग्द्वय्या यूपे वनस्पतिशब्दार्थयोजनेति च सुव्यक्तमुपपादितं दुर्गाचार्येणेति तत्र एव द्रष्टव्यम् । विस्तरभिया च नेहोपन्यस्तम् ॥

"स॒द्यो जा॒तो व्य॑मिमीत य॒ज्ञम॒ग्निर्दे॒वाना॑मभवत्पुरो॒गाः । अ॒स्य होतुः॑ प्र॒दिश्यृ॒तस्य॑ वा॒चि स्वाहा॑कृतं ह॒विर॑दन्तु दे॒वाः" ॥ ५ ॥

( ऋ० सं० ८-६-९ )

**सद्यो जात** इति । भार्गवस्य जमदग्नेस्तत्पुत्रस्य परशुरामस्य वार्षं त्रिष्टुप् । आप्रीसूक्ते । अयम् **अग्निः सद्यः** तदानीमेव **जातः** जायमान एव **यज्ञं व्यमिमीत** विशेषेण निर्मिमीते ( निर्वर्तयति उत्पादयति ) "माङ् माने शब्दे च" ( जु० आ० ) वर्तमाने लङ् ( पा० ३-४-६ ) अत एवायमग्निः **देवानां पुरोगाः** पुरोगामी मुख्योऽभवत् । गमेर्विट्प्रत्यये "विड्वनोः-" ( पा० ६-४-४१ ) इत्यात्वम् । ततः **प्रदिशि** प्रकृष्टायां दिशि प्राच्याम् **ऋतस्य** आहवनीयात्मनाऽऽगतस्य **अस्य होतुः** होमनिष्पादकस्य ( देवानामाह्वातुर्वा ) अग्नेः **वाचि** वागाश्रय आस्ये स्वाहाकृतं स्वाहाकारवलान्मन्त्रेण प्रक्षिप्तं **हविः** एतदाज्यं **देवाः** स्वाहाकृतयः **अदन्तु** पिबन्तु । इत्येतदाशास्महे ॥ ५ ॥

अथास्य भाष्यम्—

**सद्यो जायमानो निरमिमीत यज्ञमग्निर्देवानामभवत्पुरोगामी ॥**

**"अ॒स्य होतुः॑ प्र॒दिश्यृ॒तस्य॑" वाचास्ये "स्वाहा॑कृतं ह॒विर॑दन्तु दे॒वाः" ॥**

अवगतार्थमेतन्मन्त्रार्थस्य निगदैर्व्याख्यानत्वादिति दर्शयत्रनुवदन् ॥

**इतीमा आप्रीदेवता अनुक्रान्ताः ॥**

इति-करणोऽधिकारसमाप्त्यर्थः । प्रदर्शनार्थो वा । **इमा** एता एव एकादश **अनुक्रान्ताः** अनुक्रम्य विचारविषयतया **क्रान्ताः** कीर्तिताः । इध्माद्या वनस्पत्यन्ताः । स्वाहाकृतिषु तु नैव विचारोस्ति । स एष दुर्गव्याख्याने विशदीकृतोऽर्थस्तत एवावधार्यः ॥

**अथ किंदेवताः प्रयाजानुयाजाः ? ॥**

**अथ** इति विचाराधिकारवाचिना अथशब्देन विचारमधिकृत्योपोद्घन्ति-**किंदेवता ?** इति । का प्रयाजेषु देवता ? इत्यर्थः । प्रयाज इति आश्रुतादिर्यजमानोपस्थानान्तः क्रियाकलाप उच्यते । प्रयाजेषु हूयमानेष्विति प्रसिद्धत्वात् । नानादेवताख्यप्रयाजप्रवादाः । तत्र तावत्—

१. गतस्य प्रणीतस्योत्तरत्वेयादिकत्वेनेति दुर्गः ॥

२. निगदेन पाठमात्रेणैव व्याख्यानं सुगमतया यस्य तथाभूतत्वादित्यर्थः । अनुवदन्-मन्त्रशेषम् ॥

३. अत्र दुर्गः-आप्रीणां वषट्कारेण संबन्धात्सर्वस्य चान्यस्य समञ्जसो विशेषभावः । एवं सति विप्रतिपत्तिराचार्ययोः कात्थक्यशाकपूण्योः । तस्माद्व्यवस्थाप्यत इति ॥

**आग्नेया इत्येके ॥ ६ ॥ ( २१ )**

कुतः ? "आग्नेया वै प्रयाजा" इत्येवं हि भाष्यकारो ब्राह्मणं वक्ष्यति । दृष्टे ऋचौ । स हि किल सौचीकोऽग्निर्विश्वैर्देवैः सह संवदते । तमूचुः—"एहि नो हवींषि वह" इति । स तानुवाच-"यज्ञे भागोस्तु" इति । ते तं प्रत्यूचुः-"वृणीष्व" इति । सोऽनयर्चा वव्रे ॥ ६ ॥ ( २१ )

"प्र॒या॒जान्मे॑ अनुया॒जांश्च॒ केव॑ला॒नूर्जस्वन्तं ह॒विषो॑ दत्त भा॒गम् । घृ॒तं चा॒पां पुरु॑षं चौष॑धीनाम॒ग्नेश्च॑ दी॒र्घमायु॑रस्तु दे॒वाः" ॥ ३ ॥

( ऋ० सं० ८-१-११ )

**प्रयाजा**निति । आग्नेयी त्रिष्टुब् देवदैवत्या । अनेनाग्निर्हविर्वहने दातव्यानुत्कोचान्प्रतिजानाति—हे विश्वे **देवाः** ! यज्ञे **मे** मह्यं **केवलान्** अनन्यदेवतासंपृक्तान् । अथ वा निरवशेषान् । असाधारणानिति सायणः । **प्रयाजान्** प्रधानस्य मुखे यष्टव्यानेतन्नामकान् हविर्भागान्, तथा **अनुयाजान्** अनुप्रधानान् पश्चाद्यष्टव्यानेतन्नामकान् **दत्त** प्रयच्छत । तथा **ऊर्जस्वन्तं** प्रत्यभिघारणात्सारवन्तं रसवन्तं बलवन्तं वा **हविषः** सर्वस्यापि चरुपुरोडाशादेः **भागं** भजनीयं स्विष्टकृदाख्यमंशं च दत्त । अथ वा ऊर्जस्वन्तं हविषोभागं प्रयाजानुयाजाख्यमेवेति दुर्गः । किं च **अपां** सारभूतं ताभ्य उत्पन्नं वा **घृतं च** आज्यभागादिसाधनं **दत्त** ( यत्पिबेयमहं प्रथममाज्यभागे ) । अथ **ओषधीनाम्** ओषधिमयानां मध्ये पुरुषं च पुरोडाशं च भागं दत्त । किं च **अग्नेः** मम **दीर्घमायुरस्तु** वषट्कारकृतवधभयं माभूदित्यर्थः । तथा चाम्नायते-"त्रयः पूर्वेऽग्नयः प्रागधव्यं वहन्ते देवेभ्यस्तान्वषट्कारः प्रावृश्चते"ति । अमुमितिहासं प्रस्तुत्य कौषीतकिब्राह्मणं च "तस्मादाग्नेयाः प्रयाजा आग्नेया अनुयाजा आग्नेयमाज्यमाग्नेयः पुरोडाश" इति । शरी-

२. अनन्तरं परिदर्शयिष्यमाणे "प्रयाजान्मे" "तव प्रयाजा" इति च ॥

३. ऊर्जयतीत्यूर्जो रसो बलं वा "ऊर्ज बलप्राणनयोः" ( चु० प० ) इति धातोरसुन्प्रत्ययस्ततोऽस्त्यर्थे मतुप् ॥

४. ओषधिभ्य उत्पन्नमिति सायणः ॥

५. यथा मत्पूर्वे भ्रातरो हविर्वहन्तो वषट्कारप्रवृक्णाः । नाहं तथा मृषीष्टेत्यभिप्रायः । अत्रार्थे-तैत्तिरीयं ब्राह्मणम्-"अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त । सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति । स निलायत । सोऽपः प्राविशत् । तं देवाः प्रैषमिच्छन्" ( तै० सं० २-६-६ ) इत्यादि । व्याख्यातं चेदं सायणेन सूक्तानुक्रमे-वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीको नामाग्निर्वषट्काराद्धविर्वहनाभ्यां भीतो देवेभ्यो निर्गत्यापः प्राविशत् । स च मत्स्यैः प्रदर्शितः सन्नन्वेष्टुमागतैर्देवैः सहेदमादिसूक्तत्रयेण संवादं कृतवानित्यादिना ॥

रदायाह वा अग्नयो भवन्ती" ति च ब्राह्मणम् । "पुरुषाहुतिर्यस्य प्रयते प्रती" ति च ॥ ३ ॥

एवमुक्तास्ते अनयोत्तरर्चाऽनुजज्ञिरे तस्य तं भागम्—

**"तव प्रयाजा अनुयाजाश्च केवला ऊर्जस्वन्तो हविषः सन्तु भागाः । तवाग्ने यज्ञो ३ यमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥ ४ ॥**

( ऋ० सं० ८-१-११ )

**तवेति** । दैवी त्रिष्टुबग्निर्देवता । पूर्वमन्त्रेणाग्निना याच्यमाना देवाः प्रतिब्रुवते । हे अग्ने ! **तव प्रयाजा अनुयाजाश्च केवला** असाधारणा **ऊर्जस्वतः** बलवन्तः **हविषः भागाः सन्तु** । हे अग्ने ! **अयं सर्वो यज्ञश्च तव अस्तु** तथा **चतस्रः प्रदिशः** प्रकृष्टा मुख्या दिशः **तुभ्यं नमन्ताम्** दिङ्निवासीनि भूतानि भोग्यत्वेन ते कल्पन्तामित्यर्थः । अत एव हि हविर्वहेति शेषः । एवमाग्नेयाः ॥ ४ ॥

तथा च ब्राह्मणं प्रमाणयति भाष्यकृत्—

**"आग्नेया वै प्रयाजा आग्नेया अनुयाजा" इति च ब्राह्मणम् ॥**

इति । अथ नानादेवताः प्रवादा इति यदुक्तं तदत्र प्रदर्श्यते—

**छन्दोदेवता इत्यपरम् । "छन्दांसि प्रयाजाश्छन्दांस्यनुयाजा" इति च ब्राह्मणम् । ऋतुदेवता इत्यपरम् । "ऋतवो वै प्रयाजाः पशवोऽनुयाजा" इति च ब्राह्मणम् । प्राणदेवता इत्यपरम् । "प्राणा वै प्रयाजा अपाना अनुयाजा" इति च ब्राह्मणम् । आत्मदेवता इत्यपरम् । "आत्मा वै प्रयाजा आत्मा वा अनुयाजा" इति च ब्राह्मणम् ॥**

अपरं मतमित्यर्थः । एवमग्रेऽपि । तत्कोऽत्र निश्चयः ?

**आग्नेया इति तु स्थितिः ॥**

तुशब्दोऽन्यप्रवादनिवृत्त्यर्थः । ब्राह्मणं मन्त्रश्चोभयमाग्नेयत्वे प्रमाणम् । ब्राह्मणमात्रं चान्यदेवत्वे । अतो विशेषहेतोरवधारयाम आग्नेया इति ।

अथ किमन्यदन्यतमम् ? इति—

**भक्तिमात्रमितरत् ॥**

"छन्दोदेवता इति" एवमादि । तदुक्तम्—"बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति" इति ॥

**किमर्थं पुनरिदमुच्यते ?**

किं विचारणे प्रयोजनम् ? इति ।—

**"यस्यै देवतायै हविर्गृहीतं स्यात् । तां मनसा ध्यायेद्वषट्करिष्यन्" इति ह विज्ञायते ॥**

**मनसेति** । नामभिः सहितं हविर्देवतायै देवतामुपेयादेवमर्थं च सर्वत्र विचारः । तथाहि दर्शितम्—"यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते" ( नि० ७-३१ ) इति ।

**तान्येतान्येकादशाप्रीसूक्तानि ॥**

अनुक्रान्तानि । दशधा दाशतयीषु । तेषामेकादशं प्रैषिकमिति । इतीमानीत्युपप्रदर्शनार्थमितिकरणः । एष एव तेष्वपि निर्वचनविचारावधारणकल्पः ॥

यस्तु तद्गतः कश्चिद्विशेषः स उच्यते—

**तेषां वासिष्ठमात्रेयं वाध्र्यश्वं गार्त्समदमिति नाराशंसवन्ति । मैधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्ति । अतोऽन्यानि तनूनपात्वन्ति तनूनपात्वन्ति ॥ ७ ॥ ( २२ )**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० अष्टमाध्यायस्य तृतीयः पादः ॥ ८ ॥ ३ ॥**

**वासिष्ठम्** वसिष्ठेन दृष्टम् । **आत्रेयम्** अत्रिणा दृष्टम् । **वाध्र्यश्वम्** वाध्र्यश्वेन दृष्टम् । **गार्त्समदम्** गृत्समदेन दृष्टम् । **इति** एतानि **नाराशंसवन्ति** ॥ अथ पुनः **मैधातिथम्** मेधातिथिना दृष्टम् । **दैर्घतमसम्** दीर्घतमसा दृष्टम् । प्रैष इति ग्रन्थः, तेषु यत्तत् **प्रैषिकम्** । **इति** तदिहोपवर्णितम् । एतानि **उभयवन्ति** । **अतोऽन्यानि** यानि चत्वारि अवशिष्यन्ते तानि **तनूनपात्वन्ति** । अध्यायान्तेऽभ्यासो नैगमः समयः ॥

अत्र नाराशंसयाजिनो वसिष्ठादयः, तेभ्योऽन्ये तनूनपाद्याजिनः । तान्येतान्यमुना विभागेनावस्थितानि एकादशैकवचनावधारणानि । अत्र विशेषो दुर्गव्याख्यायां द्रष्टव्यः ॥ ७ ॥ ( २२ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० अष्टमाध्यायस्य तृतीयः पादः ॥ ८ ॥ ३ ॥

इत्यष्टमाध्यायः समाप्तः ॥

---

## नवमाध्यायस्य प्रथमः पादः ।

**अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः ॥**

**अथेति** विशेषाधिकारे प्रकृतार्थादनन्तरमधिकरोति । **पृथिव्यायतनानि** पृथिव्याश्रयाणि **सत्त्वानि** द्रव्याणि वा । तेषामप्यत्र विवक्षितत्वात् **स्तुतिं लभन्ते** इति समाम्नातानि **तानि अतः परम् अनुक्रमिष्यामः** "व्याख्यास्ये" ति शेषः । पूर्वस्मादाप्रीगणाद्विलक्षणोऽयमश्वादिगण इति पृथगधिकारवचनम् । उपलक्षणं चेदम् । तेन सर्पलाङ्गल-कुसुम्भकप्रभृतीनामप्यत्रैवान्तर्भावः । तान्यपि स्तुतिं लभन्ते पृथिव्यायतनत्वाविशेषात् । ता एता भूस्थानदेवता अश्वादयः ॥

तेषां युगपदभिधानासंभवात्क्रमेऽर्थाङ्गीकर्तव्ये मुख्यातिक्रमस्यान्याय्यत्वादाह—

**तेषामश्वः प्रथमागामी भवति ॥**

**तेषाम्**–पृथिव्यायतनानां षट्त्रिंशत्पदानां मध्ये **अश्वः** (१) **प्रथमागामी** मुख्यः। कथम्? पुरुषानन्तरं जन्मास्येति हि विज्ञायते–"तस्या आहुत्याः पुरुषोऽजायत, द्वितीयां यजुहोति ततोऽश्वोऽजायत, विशिष्टे चाश्वमेधलक्षणे कर्मणि विशिष्टोऽस्याङ्गभाव" इति ॥

स एषः—

**अश्वो व्याख्यातस्तस्यैषा भवति ॥ १ ॥**

अश्वश्च पुनरयं **व्याख्यात** एव प्राक् "अश्नुतेऽध्वानं महाशनो भवतीति वा" (नि० २–२७) इत्यत्र। **तस्य** अश्वस्य **एषा** प्राधान्यस्तुतिरश्वस्तोमीय एव–॥ १ ॥ (१)

**"अश्वो॒ वोळ्हा॑ सु॒खं रथं॑ हस॒नामु॑पम॒न्त्रिणः॑ ।**
**शेपो॒ रोम॑ण्वन्तौ भे॒दौ वारिन्म॒ण्डूक॑ इच्छ॒तीन्द्रा॑येन्दो॒ परि॑स्रव" ॥ ४ ॥**

(ऋ० सं० ७–५–२५)

**अश्व** इति। आङ्गिरसस्य शिशुनाम्न आर्षम्। पञ्चपदा पङ्क्तिश्छन्दः। पवमानः सोमो देवता। महाव्रते निष्केवल्ये शस्यते। (सोमस्तुतिरियम्) हे **इन्दो**! सोम! यथा–**वोळ्हा** वहनसमर्थः। **अश्वः** लक्ष्यं देशं प्रापयन् **सुखं** सुखकरं कल्याणं **रथं इच्छति**। **उपमन्त्रिणः** उपमन्त्रवन्तो नर्मसचिवाः। **हसनाम्** उपहसनाम् (उपहासप्रधानां) वाचमिच्छन्ति। तथा **शेपः** पुंस्प्रजननं (लिङ्गं) **रोमण्वन्तौ** रोमवन्तौ (लोमवन्तौ) नलोपाभाव आर्षः। "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" (पा० ८–२–९) इति मतोर्मस्य वः। **भेदौ** विदलीभूतप्रदेशौ (तरुण्या उपस्थाभिधानौ) इच्छति। **मण्डूकः** मेकः **वारित्** वार्येव। इदित्यवधारणे। उदकमेवेच्छति। "आपः स्त्री भूम्नि वार्वारी"–त्यमरः। तथा–अहं त्वत्परिस्रवणमिच्छाम्यतः **इन्द्राय** इन्द्रदेवतार्थं (सुविशिष्टाय फलाय) **परिस्रव** दशापवित्रात्क्षर। एवमन्येषणाऽत्र सोमस्य ॥ ४ ॥

अथास्य भाष्यम्—

**"अश्वो वोळ्हा" सुखं वोळ्हा रथं वोळ्हा। सुखमिति कल्याणनाम। कल्याणं पुण्यं सुहितं भवति (सुहितं गम्यतीति वा। हसैता वा पाता वा पालयिता वा शेपमृच्छतीति वारि वारयति, मानो व्याख्यातस्तस्यैषा भवति) ॥ २ ॥ (२)**

अत्र च **अश्वो वोळ्हा**–इति प्रतीकधारणम्। तत्र कस्य वोढेति पर्यनुयुक्त इव व्याचष्टे–**सुखं वोळ्हा रथं वोळ्हा** इति। सुखप्रापको रथप्रापको वा। वोढेति वहतेस्तृचि रूपम्। तदेतद्व्याख्यानमिच्छतीति क्रियापदमनन्वयत्प्रक्षिप्तमित्युपेक्षितं दुर्गाचार्येण स्वव्याख्यायामेतद्भाष्यम्। **कल्याणं पुण्य**मित्यपि अप्रकृतम्। कोशेऽपि पुण्यं सुकृतम् कल्याणं च मङ्गलमिति पठ्यते। अस्तु वा कथंचिद्धेतुहेतुमद्भावेनैव। तथा चोक्तम्–"सुखं तु जगतामेव काम्यं धर्मेण जन्यत" इति। **सुहितं भवतीति** सुखशब्दनिर्वचनम्। अत्र खेभ्य इति शेषोऽवगन्तव्यः। तथाचोक्तम् "सुखं कस्मात्? सुहितं खेभ्यः" (नि० ३–१३) इति। अग्रेतनं तु **सुहितं गम्यती**त्यादि व्याख्यानमसंबद्धप्रायमित्युपेक्षितमस्माभिरपि ॥ २ ॥ (२)

**"मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ख्यन् । यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि" ॥ १ ॥**

(ऋ० सं० २–३–७)

**मा न** इति। दीर्घतमस आर्षं त्रिष्टुप्। अश्वस्य स्तूयमानत्वात्। "या तेनोच्यते सा देवते"ति न्यायादश्वदैवत्यम्। **न** अस्मान् अश्वं स्तोतुं प्रवृत्तान् **मित्रः** अहरभिमानी देवः। **वरुणः** रात्र्यभिमानी देवः। **अर्यमा** तयोरन्तरालाभिमानी आदित्यः। **आयुः** अयनः सततगन्ता वायुः एतेरुणप्रत्ययो बाहुलकात्। यद्वा वकारस्य लोप एवार्षः। **इन्द्रः** प्रसिद्ध एव। **ऋभुक्षाः** उरुक्षयणः (उरावन्तरिक्षे क्षियति निव-

१. तथाच (नि० ३–२१) "शेपो वैतस इति पुंस्प्रजननस्ये"ति यास्कः ॥

२. सत्कारपूर्विका व्यापारणा ॥

१. तथा चामरे–"स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" (इति पञ्चकं सुकृतस्य) "मुत्प्रीतिः प्रमदो हर्षः प्रमदामोदसंमदाः ॥ २४ ॥ स्यादानन्दथुरानन्दः शर्मशातसुखानि च" (इति द्वादश हर्षस्य)। "श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥ भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्। शस्तं चाऽथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च" ॥ २६ ॥ इति पठितम्। तत्र शस्तान्तानि द्वादश कल्याणमात्रस्येति व्याख्यातम्। तथा–पाप–पुण्यसुखादिशब्दाः शस्तान्ता द्रव्ये विशेष्ये वर्तमानास्त्रिषु विशेष्यलिङ्गा इति च। तथा च स्पष्टमेतद्व्याख्यानं कस्यचिद्भ्रान्तिनिबन्धनमिति प्रक्षिप्तमेवेति प्रतिभाति ॥

२. तद्धेतोस्तत्त्वं "तादर्थ्यात्ताच्छब्द्यम्" इति न्यायात् ॥

३. अत्रोरुशब्द उपपदे क्षयतेरैश्वर्यकर्मणः, क्षियतेर्वा निवासकर्मणः। "वृतेश्छन्दसि" (उ० ४–१३६) इति बाहुलकादिनिप्रत्ययष्टिलोपश्च। उपपदस्य मुडागमः। संप्रसारणपूर्वरूपत्वे वर्णव्यत्ययश्च उरुमहदैश्वर्यवानुरौ महति स्थाने क्षियति निवसतीति वा। सायणस्तु–ऋभूणां देवानां निवासभूतः प्रजापतिः। यद्वैतन्महन्नामेन्द्रविशेषणम् "ऋभुक्षा उक्षा" (निघं० ३–३–१०–११) इति तन्नामसु पाठात्। इत्याह ॥

सति सः ) । अथ वा क्षियतिरैश्वर्यार्थः । ऋभूणां ( देवानां ) राजेति भाष्यव्याख्यानात् । तथा च–ऋभून्क्षियतीष्टे इति ऋभुक्षाः । बाहुलकादिनिष्ठिलोपश्च । "पथिमथ्यृभुक्षामात्" ( पा० ७–१–८५ ) इति नस्यात्वम् । "इतोऽत्सर्वनामस्थाने" ( पा० ७–१–८६ ) इतीकारस्याकारः । एवमृभुशब्दात्पूर्वपदं क्षियतेरैश्वर्यकर्मण उत्तरपदमिति स्थितिः । मरुतः एकोनपञ्चाशत्संख्याका इन्द्रभ्रातरश्चैते मित्रादयो देवाः **मा परिख्यन्** परिख्यानं मा कुर्वन्तु । परिख्यानं नाम निन्दा । महानुभावं देवजातमश्वं तुच्छाः नराः स्तुवन्तीति मावमतिं कुर्वन्तु । ख्यातेः "माङि लुङ्" ( पा० ३–३–१७५ ) "अस्यति वक्ति०" ( पा० ३–१–५२ ) इत्यादिना च्लेरङ् । अथ निन्दायाः प्रसक्तिं दर्शयति–**यदिति** । **यत्** यस्मात् **वाजिनः** वेजनवतो बह्वन्नवतो वा **देवजातस्य** देवैर्वसुभिः जातस्य जनितस्य आदित्यात् "सूरादश्वं वसवो निरतष्ट" ( ऋ० सं० २–३–११–२ ) इति श्रुतेः अग्नेर्वा "प्रजापतिना द्वितीयामजुहोत्ततोऽश्वोऽजायत" इति निगमात् । सायणस्तु–बहुदेवतास्वरूपेणोत्पन्नस्य उषादीनामस्य शिरआद्यवयवत्वादिति भावः । "उषा वा अश्वस्य मेध्यस्य शिरः" इत्यादिश्रुतेः । यद्वा देवेभ्यो जातस्य गन्धर्वकुले उत्पन्नत्वात् । **सप्तेः** सरणस्य ( सर्पणशीलस्य ) अश्वनामैतत् । एवंविधस्याश्वस्य महानुभावस्य **वीर्याणि** वीरकर्माणि ( सामर्थ्यानि ) गुणान् **विदथे** वेदनसाधने एतस्मिन्यज्ञे **प्रवक्ष्यामः** । वर्तमाने लट् ( पा० ३–४–६ ) प्रकर्षेण ब्रूमः । अतो मापरिख्यन्प्रत्युतानुगृह्णन्त्वित्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्याणि मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यन् ॥**

अथ–शकुनिशब्दमनेकधा निर्ब्रवीति—

**शकुनिः शक्नोत्युन्नेतुमात्मानं, शक्नोति नदितुमिति वा । शक्नोति तकितुमिति वा । सर्वतः शङ्करोऽस्त्विति वा । शक्नोतेर्वा, तस्यैषा भवति ॥ ३ ॥ ( ३ )**

**शकुनिः** ( २ ) कस्मात् ? स हि **शक्नो०००त्मानम्** । **उन्नेतुम्** ऊर्ध्वं नेतुं लघुत्वात् । इत्थं च शकेः पूर्वपदं नयतेरुत्पूर्वस्योत्तरपदम् । तथा च शकेः क्विपि शक् । उन्नयतेः "वेञो डिच्च" ( उ० ४–७–१ ) बाहुलकादिन्प्रत्यये उतस्तलोपः ककारस्य जश्त्वाभावश्च । **नदितुमिति वा** । अथवा नदतेस्तवतेर्वा । शब्दार्थगत्यर्थयोरुत्पूर्वोत्तरपदं विकल्पेन । तथा चात्र नदतेः पूर्ववत्प्रक्रिया । तकतेस्तस्य नो विशेषः । उदोऽप्रयोगो भाष्ये उक्तपूर्वत्वात् । अथ **वा सर्वतः शङ्करः** कल्याणकरोऽयमस्माकम**स्त्विति** शकुनिः । सर्वेण नित्यमाशासितव्यो भवतीति दुर्गः । एवं सति शम्–इति सुखनाम पूर्वपदम् करोतेरुत्तरपदम् । शङ्करोतीति शकुनिः पृषोदरादिः ( पा० ६–३–१०९ ) अथ **वा शक्नोतेरेव** शकुनिः । शङ्कितुं शक्यः शकुनिः । "शकेरुनिः" ( उ० २–४९ ) **तस्य** शकुनेरेषाऽनन्तरीया प्राधान्यस्तुतिर्**भवति** ॥ ३ ॥ ( ३ )

**"कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत्" ॥ १ ॥**

( ऋ० सं० २–८–११ )

**कनिक्रददिति** । गार्त्समदं त्रैष्टुभम् । कपिञ्जलरूपीन्द्रो देवता । शकुनिरुतश्रवणे जपे विनियोगः[1] । कपिञ्जलो नाम शकुनिः **कनिक्रदत्** पुनःपुनः शब्दायमानः । "दाधर्तिदर्धर्ति–" ( पा० ७–४–६५ ) इत्यादिना निपातः । **जनुषं** जन्म आत्मनोऽभिजातिं **प्रब्रुवाणः** कथयन्निव । यद्वा–जनुषं जनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् **अरितेव** ईरयिता ( कर्णधारः ) **नावम्** नौकामिव **वाचम् इयर्ति** प्रेरयति । अथ प्रत्यक्षकृतः–हे **शकुने** ! कपिञ्जल ! त्वं **सुमङ्गलः** प्रकृष्टकल्याणः ( च ) **भवासि** भव । लेटो रूपम् । आडागमः (पा० ) । किंच **काचिदभिभा** कोऽप्यभिभवः अभिभूतिः परोपद्रव इति यावत् । **त्वा** त्वाम् **विश्व्या** विश्वतः सर्वतः ( सर्वासु दिक्षु ) "सुपां सुलुग्–" ( पा० ७–१–३९ ) इति सप्तम्या य्यादेशः । **मा विदत्** माप्रापत् । "विदॢ लाभे" ( तु० उ० ) लोडर्थे माङि लुङ् ( पा० ३–३–१७५ ) इति लुङ् ॥ १ ॥

अथास्य भाष्यम्—

**न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा नामेरयति वाच,–मीरयितेव नावम् । सुमङ्गलश्च शकुने भव कल्याणमङ्गलः ॥**

१. तथाच सूत्रितम् "वयसाममनोज्ञा वाचः श्रुत्वा–कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्तं जपेदि"ति ॥

२. दुर्गस्तु पुनः पुनर्भृशं वा क्रन्दसीति मध्यमपुरुषेण नुतिरुत्तरमर्धर्चमपेक्ष्येति व्याचक्षाण इयर्तीत्यस्यापीयर्षि वाचम् । कथम् ? अरिता इव=ईरयिता इव=नाविक इव पुनः पुनः । "नावं" पारगमनाय । यस्त्वमेवमीरयसि स त्वं सुमङ्गलश्च । हे शकुने ! प्रशस्तमङ्गलश्चास्माकं भव । वयमपि च तुभ्यमित्याशास्महे—मा त्वा काचित् अभिमा अभिभूतिः परोपद्रवः विश्व्या–सर्वप्रकारा सर्वतो विदत् विदत्विति यथास्य शब्दस्तथा नामेरयति" तदिदं शकुनिषु बहुलमित्यनेनोक्तम् । इति व्याख्यत् सर्वं प्रत्यक्षकृतमेव । सायणेन तु यथाव्याख्यातं तथोद्धृतमुपरिष्टात् ॥ भाष्यमते तु चक्रन्दीदित्यर्थः । पुनःपुनर्भृशं वा क्रन्दतीति तदर्थः । वर्तमाने लुङ् ( पा० ३–४–६ ) । तन्मते किंकुर्वन् ? जनुषं प्रब्रुवाणः । अथ च अरितेव नावं वाचमियर्तीत्येवं व्याख्येयम् ॥

सुरत्र कल्याणवचनः। अथ मङ्गलशब्दं निर्वक्ति—

**मङ्गलं गिरतेर्गृणात्यर्थे, गिरत्यनर्थानिति वा ॥**

**मङ्गलं** कस्मात्? **गिरतेर्धातोर्गृणात्यर्थे** वर्तमानस्य। "गॄ शब्दे" (क्र्या० प०) इत्यस्य, तथा च गिरतेरिति धातुनिर्देशे श्तिप्। शब्दोऽत्र स्तुतिरूपः। स्तुत्यं हि तद्भवति। अथ **वा** अस्यैव (गॄधातोः) निगरणार्थस्य (तु० प०) (गिलनार्थस्य) उत्पद्यमानानेवेदमनर्थान् गिलति भक्षयतीति मङ्गलम्। तथाच गॄधातोः पचाद्यचि (पा० ३-१-१३४) रस्य लत्वं धातोर्मुमडागमश्च निपात्यते। अनुस्वारपरसवर्णौ। "मङ्गेरलच्" (उ० ५-७०) इति शाकटायनीयाः पाणिनीयाश्च बाहुलकात्प्राहुः। मङ्गयति गमयति सुखमिति तदर्थः ॥

अथवा—

**अङ्गलमङ्गवत् ॥**

**अङ्गलमेतन्मकारोपजनेन मङ्गलम्।** कोऽर्थः **अङ्गवत्** अङ्गैरवयवैर्देधिमध्वक्षतादिभिस्तद्वत्। रो मत्वर्थे व्यत्ययश्च रलोः। अथवा मज्जयतेर्मङ्गलम् किं?

**मज्जयति, [१] पापकम्। इति नैरुक्ताः ॥**

उत्पद्यमानमेवैतन्मङ्गलिनः पुरुषस्य **मज्जयति** नाशयति। यदस्य किंचित् **पापकं** पातकं भवति। एवं मज्जयतेर्मङ्गलमिति **नैरुक्ता** निरुक्तविदो मन्यन्ते। एतन्मते "मस्ज" धातोर्ण्यन्तादलच् णिलोपः (पा० ६-४-५१) अन्त्योपान्त्ययोर्मकारादेशोऽनुस्वारपरसवर्णौ पूर्ववत् ॥

**मां गच्छत्विति वा ॥**

**गमेर्वा।** स (मङ्गली) एतन्मन्यते, **मामेतद् गच्छतु** प्राप्नोतु **इति** ॥ इत्थं च आशंसायां गमेर्डलच्। मामित्यस्योपधाह्रस्वः।

अथावशिष्टं तुरीयपादमर्थतो व्याचष्टे—

**मा च त्वा काचिदभिभूतिः सर्वतो विदत् ॥**

**इति।** अथात्र शकुनिः कपिञ्जल एवेत्यर्थे च श्रुतिमवतारयति—

**गृत्समदमभ्युत्थितं कपिञ्जलोऽभिववाशे तदभिवादिन्येषर्ग्भवति ॥ ४ ॥ (४)**

**गृत्समदो** नाम ऋषिः। स किल स्तुतिलाभकारणं कञ्चिदर्थं सिसाधयिषुरभ्युत्तस्थौ (अभ्युद्यतोऽभूत्) **तमभ्युत्थितं कपिञ्जलो** नाम शकुनिर**भिववाशे** अभितः शब्दं कृतवान् "वाशृ शब्दे" (दि० आ०) लिट्। तत्सिद्धिमावेदयन्। यथा चैतदेवं **तदभिवादिनी** तदर्थबोधिका एषाऽनन्तरीया ऋग्भवति ॥ ४ ॥ (४)

**"भद्रं वद दक्षिणतो भद्रमुत्तरतो वद। भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल" ॥ इति सा निगदव्याख्याता ॥**

**भद्रमिति।** इह शकुनिः किल कस्याञ्चिद्दिशि साधुर्भवति कस्याञ्चिदसाधुः। स एष ब्रवीति। **दक्षिणतः उत्तरतः पश्चात् पुरस्तात्** च सर्वत एव त्वं **नः** अस्माकं हे **कपिञ्जल! भद्रं वद** इति। **इति** इयं **सा** (सेयम्) ऋक् **निगदेन** पाठमात्रेण **व्याख्याता** भवति। सरलत्वादिति भावः ॥

**गृत्समदो गृत्समदनः। गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः ॥**

गृत्सश्चासौ मदनश्च **गृत्समदनः।** **गृत्सः** मेधावी **मदनः** हर्षाढ्यः ॥

**मण्डूकाः मज्जूकाः। मज्जनान्मदतेर्वा मोदतिकर्मणो मन्दतेर्वा तृप्तिकर्मणः ॥**

अथ **मण्डूकाः** (३) इति एतद्वक्तव्यम्। ते पर्यायेणैव निरुच्यन्ते। य एते **मण्डूकास्त** इमे **मज्जूकाः**। कस्मात्? **मज्जनात्**। नित्यं मग्ना श्वेत उदके। **मदतेर्वा** स्यात् **मोदतिकर्मणः** मोदते इत्यर्थस्य। नित्यप्रमुदिता हि ते। **मन्दतेर्वा** स्यात् **तृप्तिकर्मणः**। तृप्त्यर्थस्य मदधातोः (भ्वा० आ०) नित्यतृप्ता हि ते। प्रचुरोदकत्वात्। तथाच मन्दूकाः सन्तो मण्डूकाः। सर्वत्र धातोरूकः प्रत्ययः (उ० ४-४२) प्रकृतेश्च मण्डादेशो निपातनात् ॥

**मण्डयतेरिति वैयाकरणाः ॥**

ते हि भक्तिभिर्नानाचित्राभिर्विधात्रा मण्डिता भवन्ति। तथा च "मडि भूषायाम्" (चु० प०) इति धातोरेवोकन् (उ० ४-४२) इति **वैयाकरणाः** प्राहुः ॥

**मण्ड एषामोक इति वा ॥**

अथ **वा मण्डे** उदके **ओकः** निवास **एषाम् इति** विग्रहे

१. तथाच मामित्येतद् विभक्त्यन्तप्रतिरूपकमव्ययम्।
२. तदाचक्ष्म शुभाशुभसूचकत्वं चार्थः।

१. यद्यप्ययं "शलिमण्डिभ्यामे"व विहितस्तथापि बाहुलकादन्यतोऽपि।

२. जश्त्वचुत्वाभ्यां मज्जूका इति प्राप्ते छान्दसत्वाज्जकारस्य डकारापत्याऽन्त्यात्पूर्वस्य नुमि ष्टुत्वम्। निमज्जन्ति हि ते जले। एवमन्यत्रार्थेऽप्यूह्यं यथायथं वर्णव्यत्ययादि।

३. तथाचामरः—"ओकः सद्माश्रयश्चौकाः" इति। अत्र मण्डो मदयतेः "गेहे कः" (पा० ३-१-१४४) इति बाहुलकात्कप्रत्यये रूपसिद्धिरूह्या। मण्ड उदकम्। हृष्यन्ति हि तत्र स्नानपानावगाहार्थिनः।

मण्डशब्दादोकःशब्दाच्च मण्डूकाः । पूर्वोत्तरपदयोरन्त्यादिवर्णविपर्ययेण रूपसिद्धिर्ज्ञेया ॥

**मण्डो मदेर्वा मुदेर्वा । तेषामेषा भवति ॥५॥**

**मदेः** मदिधातोः (भ्वा० आ०) "गेहे कः" (पा० ३-१-१४४) इति बाहुलकात्कप्रत्यये नुमि (पा० ७-१-५८) नस्य डः । अकारौकारयोरूकारः । "ये सान्तास्तेऽदन्ताः" इति न्यायेनाकारान्तत्वेन बहुवचने रूपम् । **तेषाम्** मण्डूकानाम् प्राधान्यस्तुतिरेषा अनन्तरीया ऋक् भवति ॥ ५ ॥

**"सुव्वँत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्रमण्डूका अवादिषुः"॥१॥**

(ऋ० सं० ५-७-३)

**सव्वँत्सरमिति** । वसिष्ठस्यार्षमनुष्टुप् मण्डूकदैवत्या । एतेन वसिष्ठः पर्जन्यस्तुतिसंहृष्टान्मण्डूकांस्तुष्टाव । वृष्टिकामेनैतत्सूक्तं जप्यम् । **सव्वँत्सरं** आवर्षर्तोरेकं वर्षं **शशयानाः** शियानाः निर्वाचः संवत्सं सुप्ता इव स्थिताः । यद्वा—वर्षणार्थं तपश्चरन्त इव बिल एव सन्तः । **ब्राह्मणाः** ब्रुवाणाः सर्वथा वक्तुं समर्था अपि सन्तो **व्रतचारिणः** कृतवाक्संयमा एते **मण्डूकाः** प्रावृट्कालं प्राप्य **पर्जन्यजिन्वताम्** पर्जन्येन प्रीताम् । "जिविः प्रीणनार्थः" (भ्वा० प०) यया वाचा पर्जन्यः प्रीतो भवति तादृशीं वाचम् । **प्र अवादिषुः** प्रवदन्ति । लडर्थे लुङ् (पा० ३-४-६) एवमत्रार्थे ब्राह्मणशब्दो भाक्त उपन्यस्तो भवति । अर्थान्तरं तु भाष्यव्याख्यायामपिवेत्यादिना दर्शयिष्यते ॥ १ ॥

तथा च भाष्यम्—

**सव्वँत्सरं शिश्याना ब्राह्मणा व्रतचारिणो ब्रुवाणाः । अपिवोपमार्थे स्यात् । ब्राह्मणा इव व्रतचारिण इति । वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूकाः ॥**

इति । अत्र दुर्गः—अथवा न युक्तो रूढिपरिवादो ब्राह्मणशब्दस्येति लुप्तोपमः प्रकल्प्यते—"ब्राह्मणा इव व्रतचारिण" इति । यथा ब्राह्मणा उपाकृत्य प्रावृषि पवित्रपाणयो मेखलिनो नियतकालां तां वैदिकीं वाचं वदन्ति । एवं प्रावादिषुरिति ॥

अथ मन्त्रावतरणिका—

**वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव, तं मण्डूका अन्वमोदन्त । स मण्डूकाननुमोदमानान्दृष्ट्वा तुष्टाव, तदभिवादिन्येषर्ग्भवति ॥ ६ ॥**

**वसिष्ठः** किल स्तुतिलाभनिमित्तं वर्षन्तं **पर्जन्यं तुष्टाव** । **अन्वमोदन्त** स्तुहि स्तुहि इति । **स** तान् **मण्डूकान् अनुमोदमानान्** वाशयमानान् (शब्दायमानान्) **दृष्ट्वा** लब्धं वर्षनिमित्तमिति परितुष्टस्तानेव **तुष्टाव** । यथा चैतदेवं **तदभिवादिनी एषा** अनन्तरीया **ऋग्भवति** ॥ ६ ॥

**"उप प्रवद मण्डूकि वर्षं मा वद तादुरि । मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः" ॥**

**इति सा निगदव्याख्याता ॥**

**उप प्रवदेति** । हे **मण्डूकि** ! मण्डूकानां मातः ! अथ वा मण्डूकपते ! **मा** माम् **उप** उपगम्य **प्र** प्रकर्षेण **वद** । हे **तादुरि** ! तरणशीले ! अथ वा तावत्—उदरि (यावच्छरीरं तावदेवोदरं यस्याः) वदयोर्लोप आर्षः । ङीपि (पा० ४-१-५५) ह्रस्वः (पा० ७-३-१०७) ततो वृष्टे देवे आप्लुते उदकेनैतस्मिन्नेकजलीभूते **ह्रदस्य** बहुनः उदकस्य **मध्ये चतुरः पदः** पादान् "पादः पत्" (पा० ६-१-६३) इत्यादिना पादशब्दस्य पदादेशः । **विगृह्य** प्रसार्य उपरि **प्लवस्व** प्रतर । **इति इयं सा** (सेयमृक्) **निगदेन** पाठमात्रेण **व्याख्याता** भवति सरलत्वादिति भावः ॥

अथाक्षा एत्येवमादीनि लब्धस्तुतित्वात्पृथिव्यायतनत्वसामान्यादिह वर्गे समाम्नातानि । तेषां च यथासमाम्नानमेव निर्वक्तव्यत्वादाह—

**अक्षा अश्नुवत एनानिति वाऽभ्यश्नुवत एभिरिति वा । तेषामेषा भवति ॥ ७ ॥**

तत्र तावत् **अक्षाः** (४) प्रथमं निर्वक्तव्याः । कस्मादित्याह—**अश्नु००निति** वेति । दीव्यन्तः कितवा **एनान्** अक्षान् **अश्नुवते** व्यापयन्ति पाणिभिः । त एतेऽश्नुवतेर्व्याप्त्यर्थात्कर्मणि कारके "अशेर्देवने" (उ० ३-६२) इति सप्रत्ययः । शस्य षः (पा० ८-२-३६) "षढोः कः सि" (पा० ८-२-४१) अथ **वा अभ्यश्नुवते** अभिव्याप्नुवन्ति **एभिरक्षैरित्यक्षाः** । करणे सः । तैर्हि कितवाः प्रतिकितवं धनमभ्यश्नुवते । **तेषाम्** अक्षाणाम् **एषा स्तुतिर्भवति** ॥ ७ ॥

**"प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः । सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्" ॥ १ ॥**

(ऋ० सं० ७-८-३)

**प्रावेपा इति** । अक्षपुत्रस्य मौजवत आर्षम् । **प्रावेपाः** प्रवेपिणः (प्रकर्षेण वेपनशीलस्य वृक्षस्य) जाताः । **बृहतः**

१. तथा च "पिण्डं दद्यादृयाशिरे" इति स्मर्यते ॥

२. एतदादिसूक्तेन ॥

३. रूढ्यर्थस्य परिवादोऽवहेला त्याग इति यावत् ॥

१. अत्र भाष्यकृता प्रवेपिण इत्यभिधानात्कर्मधारयान्मत्वर्थीयो दर्शितः । प्रकृष्टो वेपः प्रवेपः सोऽस्यास्तीति । स चानुपपन्नः "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति नियमादत एव कृष्णसर्पवान्वल्मीक इति नभवत्यपि तु कृष्णसर्पं इत्येव । एवमिहापि प्रवेपाज्जाताः प्रावेपा इत्येवार्थः । भाष्यानुसारेण च प्रवेपिणो जाता इत्युक्तम् ॥

महतः विभीद (त–) कस्य अक्षवृक्षस्य फलभूताः **अक्षाः** **प्रवातेजाः** प्रचुरवातस्थाने काले वा ( प्रावृषि ) जाताः । ( पक्वफलानां पतनाभिप्रायं जन्मात्र विवक्षितम् ) **इरिणे** निर्ऋणे ( निर्गतर्णे ) **वर्वृतानाः** पुनः पुनर्वर्तमानाः । **मा** माम् **मादयन्ति** हर्षयन्ति । कथम् ? अत्र दृष्टान्तः— **सोमस्येवेति** । यथा **मौजवतस्य** मूजवति पर्वते जातस्य **सोमस्य भक्षः** भक्षणं ( पानं ) यजमानं मादयति तद्वत् । **विभीद–(त–)कः** विभेत्ता कोष्ठस्य **जागृविः** जागरणकर्ता ( अन्तर्भावितण्यर्थः ) योजयति स हर्षेण जागर्ति, योजीयते स दुःखेन । स एष विभीदक एवंप्रकारः **मह्यम्** मम "षष्ठ्यर्थे चतुर्थीति वाच्यम्" ( पा॰ २–३–६२ वा॰ ) इति चतुर्थी "मन" इति शेषः । **अच्छान्** अचच्छदत् छादयति । लडर्थे लुङ् ( पा॰ ३–४–६ ) खेन फलशब्देन सर्वार्थेषु पुनः पुनर्भृशं वा मनः छादयित्वा देवन एव एकस्मिन्मम मन उत्साहयति । ऋषेरक्षपरिद्यूनस्यैतदार्षमिति स्तुतिपरिदेवने ऋगर्थौ भाष्ये स्फुटः ॥ १ ॥

अथास्य भाष्यम्—

**प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति प्रवातेजाः प्रवणेजाः ॥**

अत्र **प्रवणेजाः** इत्यसुन्नन्तः स चायं डित् बाहुलकात् । विभीतक एक एव वा विशेष्यते । यः प्रवणे उदकर्बहुले देशे जातस्तस्य **विभीतकस्य फलानि** अक्षा इति दुर्गव्याख्यानम् । वयं तु प्रतीमः—प्रवणेजा इत्यक्षा एव । पक्वफलानां च जन्मात्र पतनाभिप्रायमित्युक्तमधस्तात् । तथाच प्रवातेजा इत्यस्यैवोपलक्षणतया भाष्यव्याख्यानं प्रसङ्गसङ्गतमिति ॥

**इरिणे वर्तमाना इरिणं निर्ऋण–( मृण- ) मृणाते–रपार्णं भवति । अपरता अस्मादोषधय इति वा । "सोमस्येव मौजवतस्य भक्षः" मौजवतो मूजवति जातः । मूजवान्पर्वतः मुञ्जवान् ॥**

सोमोऽत्र **मौजवतः** स हि **मूजवति जातः** । अथ **मूजवान्** कः ? **पर्वतः** । स कस्मान्मूजवान् ? **मुञ्जवान्** मुञ्जैस्तद्वान् । "पृषोदरादिः" ( पा॰ ६–३–१०९ ) ॥

अथ—

**मुञ्जः विमुच्यत इषीकया । इषीका—इषतेर्गतिकर्मणः । इयमपीतरेषीकैतस्मादेव ॥**

**मुञ्जः** कस्मात् ? स हि **विमु००कया** । तथा च मुञ्चतेः कर्मणि के चस्य जो धातोर्नुमागमश्च बाहुलकात् । अथ **इषीका** कस्मात् ? **इषतेः गतिकर्मणः** । गत्यर्थस्य इषधातोरीकक् । कित्वाद्गुणाभावः । सा हि निर्गता भवति मुञ्जात् । **इयमपि** या हलेषा अन्या वा सापि हि निर्गता भवति वहिरित्येत**स्माद्** इषधातोरेव भवति ॥

**विभीदको विभेदनात् । जागृविर्जागरणात् । मह्यमचच्छदत् । प्रशंसत्येनान्प्रथमया । निन्दत्युत्तराभिः । ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते ॥**

**विभेदनात्** इत्यर्थनिर्देशः । कर्मणि ह्यत्र ण्वुल् बाहुलकादुपधाया ईत्वं च । एवं **जागर्तिरत्रान्तर्भावितण्यर्थो** यो जागरयति स **जागृविः** क्विन् । इकारोऽननुनासिकोऽत्रेतीत्संज्ञाभावः । अच्छानित्यस्य **अचच्छददित्यर्थः** । "छद् अपवारणे" ( चु॰ प॰ ) लुङ् लडर्थे ( पा॰ ३–४–६ ) छान्दसं रूपम् । **प्रथमया** पूर्वार्धभूतयर्चा । **एनान्** अक्षान् **प्रशंसति** । प्रचुरं जले स्थले च लब्धा हि ते स्वाष्ठिमध्यस्थेन भागेन प्रचुरतृप्तिप्रदा भवन्तीति मां मादयन्ति । तद्भक्षणेनैव कथंचित्कालं यापयामीति हर्षहेतवस्ते । यदा हि तत्फलनाम स्मर्यते अक्षा इति तदा ते मोहमादधन्तो बलाद्देवन एव मन्मन उत्साहयन्ति । तदेव च मे सर्वानर्थमूलं समजनीति **उत्तराभिः** कथाभिरुत्तरार्धर्चप्रतिपादिताभिः ऋग्भिर्वा एतदुत्तरार्धादिकाभिः । **निन्दति** एतानिति पूर्वेणाभिसंबन्धः । यथा मौजवतस्य सोमस्यातिमादकस्य भक्षणं यजमानस्य सर्वानर्थप्रवृत्तिमूलं तथा विभीद–(त–)कोपि स्वफलनामस्मरणेन मामनर्थहेतवे तत्कर्मणि पुनः प्रसजयतीति निन्दार्थस्तमाह **ऋषेरित्यादि** ॥

**परिद्यूनस्य** परिदेवनकर्तुः । परिदेवनं विलापः । "गत्यर्थाकर्मक—" ( पा॰ ३–४–७२ ) इति कर्तरि क्तः । "यस्य

---

१. तथाचामरः—"त्रिलिङ्गस्तु विभीतकः । नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः" इति । वेदेऽत्र वर्णव्यत्यय आर्षः ॥

२. विभीतकस्य फलानीति भाष्यव्याख्यानादत्र "हरीतक्यादिभ्यश्च" ( पा॰ ४–३–१६७ ) इति फलप्रत्ययस्य लुपि प्रकृतिवल्लिङ्गता च ( पा॰ १–२–५२ वा॰ ) बाहुलकबलेन भाष्यकृता दर्शिता ॥

३. आस्फुरकस्थाने, न हि तत्र पुत्रपौत्रानुगमृणं भवति । अपार्णं वा । उपसर्गस्यान्यत्वमेव केवलम् । अथवा अपार्णमपगतोदकम् । इति दुर्गो व्याख्यद्यथाभाष्यम् ॥

४. तत्र भवो हि सोमोऽभीक्ष्णं मादको भवति । स्थानस्वाभाव्यात् । मादयति–हर्षयति–तर्पयति इत्यनर्थान्तरम् ॥

५. कोष्ठभवस्य मलादेः स हि भृशं भेदको वैद्यके समाम्नातः यथा "विभीतकं स्वादुपाकं कषायं कफपित्तनुत् । उष्णवीर्यं हिमस्पर्शं भेदनं कासनाशनम्" ॥ इति ॥

६. विभीतको ह्यक्षवृक्षस्तत्फलान्यक्षा इति व्याख्यातमुपरिष्टात् । तथा चाक्षशब्दश्रवणेन देवनाक्षस्मृतिर्भवति । देवनप्रसक्तो हि तच्छब्दश्रुतिसमनन्तरं देवन एव प्रसजति येन सर्वनाशोऽस्य भवति । इत्यक्षपरिद्यूनस्य वचनम् ॥

७. असुन्प्रत्ययो जनेः कृतः । डित्वाच्च टिलोपः । असन्तलक्षणो दीर्घः ( पा॰ ६–४–१४ ) उपधायाः ॥

८. "पयः कीलालममृतं जीवनं भुवनं वनम्" इति जलपर्यायेऽमरः । अत्र "प्रनिरन्तरि॰" ( पा॰ ८–४–५ )–त्यादिना णत्वम् ॥

विभाषा" ( पा० ७–२–१५ ) इतीडभावे "दिवो विजिगीषायाम्" ( पा० ८–३–४९ ) इति निष्ठातस्य नः । वस्योट् ( पा० ६–४–१९ ) वेदयन्ते कथयन्ति ।

**ग्रावाणो हन्तेर्वा, गृणातेर्वा, गृह्णातेर्वा । तेषामेषा भवति ॥ ८ ॥**

अथ **ग्रावाणः** ( ५ ) निर्वक्त्यास्ते हन्तेर्वा तदर्थोपपत्तेः । व्याप्त्त्युपजनाभ्याम् । "अन्येभ्योऽपि दृश्यन्ते" ( पा० ३–२–७५ ) इति क्वनिपि पृषोदरादित्वात् ( पा० ६–३–१०९ ) धातोर्ग्रादेश इति यावत् । हन्यन्ते हि ते सोमाभिषवणे । **गृणातेर्वा** स्तुत्यर्थस्य । स्तूयन्ते हि ते । **गृह्णातेर्वा** गृह्यन्ते हि ते स्तुत्वभिः । **तेषां** ग्राव्णाम् । **एषा** स्तुतिर्भवति—

**"प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः । यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः" ॥ १ ॥**

( ऋ० सं० ८–४–२९ )

**प्रैत** इति । कद्रूः पुत्रस्य सर्पस्यार्बुदस्यार्षं जागतम् । सोमाभिषवार्थग्रावदैवत्यम् । ग्रावस्तुतौ विनियोगः । **एते** ग्रावाणः उपलाः **प्रवदन्तु** अभिषवशब्दं कुर्वन्तु । **वयं** यजमानाः **वदद्भ्योऽ**भिषवशब्दं कुर्वद्भ्यः **ग्रावभ्यः** ग्राव्णामर्थाय **वाचं** स्तुतिलक्षणां **प्रवदाम** किंच हे ऋत्विजः ! यूयमपि स्तुतिलक्षणां वाचं **वदत** पठत । संहितायां दीर्घः ( पा० ६–३–१३७ ) । **यद्** यदा **अद्रयः** अदरणीयाः ( अदरणार्हां दृढाः ) **पर्वताः** पर्ववन्तः **आशवः** क्षिप्रकारिणः ( निघं० २–१५–१६ ) ग्रावाणो यूयं च **साकं** सहभूताः सोममश्नीथ अभिषुणुथः । तं चाभिषुण्वन्तः **इन्द्राय** इन्द्रार्थं श्लोकं श्रोतव्यम् **घोषम्** अभिषवशब्दम् **भरथ** पोषयथ ( धारयथ निर्वर्तयथेति यावत् ) तदानीं सर्वेऽपि यूयं **सोमिनः** सोमवन्तः ( सोमेन तृप्ताः ) "स्थ" ( भवथ ) इति शेषः । यद्वा सोमिनस्तद्वतो यजमानस्य गृहेषु यदेवं कुरुध्वे तस्माद्युष्मानधिकृत्य ब्रूमः—प्रवदन्तु एते उद्गातारः युष्मदर्थं स्तुतीः । प्रवदाम च वयं होतारो वाचं स्तुतिलक्षणाम् । अध्वर्यूनपि ब्रूमहे–एभ्यः ग्रावभ्यो वदद्भ्योऽभिषवशब्दं कुर्वद्भ्यो वाचं ( स्तुतिलक्षणां ) वदत । यावद्वक्तव्यमेतान्प्रति ॥ १ ॥

अथास्य भाष्यम्—

**प्रवदन्त्येते प्रवदाम वयं ग्रावभ्यो वाचं वदत वदद्भ्यो यदद्रयः पर्वता अदरणीयाः सह सोममाशवः क्षिप्रकारिणः । श्लोकः शृणोतेः, घोषो घुष्यतेः, सोमिनो यूयं स्थेति वा, सोमिनो गृहेष्विति वा ॥**

१. सोममभिषुण्वन्त इन्द्राय श्लोकं घोषं भरथ इत्येवं शब्दार्थः ॥

शृणोतेः "श्रु श्रवणे" ( भ्वा० प० ) इत्यस्य "इण्सीक–" ( उ० ३–४१ ) इत्यादिना "बाहुलकात्कनि" गुणः "कपिलादित्वाल्ललम्" । भूयते हि सः । **घुष्यतेः** "हलश्च" ( पा० ३–३–१२१ ) इति घञ्कर्मणि । घुष्यते शब्द्यते घोषः ॥

**येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः । तस्यैषा भवति ॥ ९ ॥**

अथ **नाराशंसः** ( ६ ) इति समाम्नातः कः पुनरसौ नराशंसः कथं? चेत्याह—**येनेत्यादि** । **नरा** इति राजविशेषाभिधायि । तेन भावयव्यं लक्षणीकृत्य **नाराशंसो मन्त्र** उदाहियते । तत्र नरान् शंसतीति कर्मोपपदेऽण् ( पा० ३–२–१ ) "अन्येषामपि–" ( पा० ६–३–१३७ ) इति पूर्वपदस्य दीर्घः । ततः प्रज्ञादित्वात् ( पा० ५–४–३८ ) अण् स्वार्थिकः । नराशंस एव नाराशंसः । **तस्य** नाराशंसस्य मन्त्रस्योदाहरणम् तस्य वा भावयव्यस्य प्राधान्यस्तुतिरेषा ऋक् **भवति** ॥ ९ ॥

**"अमन्दान् स्तोमान् प्र भरे मनीषया सिन्धावधि क्षियतो भाव्यस्य । यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः" ॥ १ ॥**

( ऋ० सं० २–१–१० )

**अमन्दानिति** । कक्षीवत आर्षं त्रिष्टुप् भावयव्यदैवत्यौ । दानतुष्टः कक्षीवान्ब्रवीति–अहम् **सिन्धौ** सिन्धुदेशे, यद्वा लवणसिन्धुतीरे **अधिक्षियतः** अधिवसतः । "क्षि निवासगत्योः" ( तु० प० ) शतरि रूपम् । **भाव्यस्य** भावयव्यस्य भावनेनैव ( अर्जनेनैव ) असौ सर्वार्थान्यवयति अनुतिष्ठयती(?)ति भावयव्यः । **अमन्दान्** अनल्पान् अबालिशान् ( अबालिशयोग्यान् ) वा **स्तोमान्** स्तोत्राणि ( तन्निष्ठबहुविधदानादीनां कीर्तनानि ) **मनीषया** प्रियातिशयबुद्ध्या, स्तुत्या वा **प्रभरे** प्रहरे उच्चारयामि । "हृग्रहोर्भश्छन्दसि" ( पा० ३–१–८४ वा० ) इति हस्य भः । विशेषेण संपादयामीति सायणः । कस्तस्य विशेष इति ? तत्राह–**अतूर्तः** अतूर्णः

१. अत्र "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति कसेत्वाभावः । यथा शङ्ख इत्यत्र खस्येनादेशाभावः । अत एव गुणः । अव्युत्पन्नानीत्यस्य उद्देश्यत्वेन विधेयत्वेन वा पाणिनितात्पर्याविषयाणीत्यर्थः । अत्र प्रकारविशेषोपादानानिमित्तत्वेन पाणिनितात्पर्यविषयत्वमस्त्येवेत्युक्तमधस्तात् ॥

२. अत्र सायणः–यद्यपि "स्वनयेन दत्ताः" ( ऋ० सं० २–१–२१ ) इति श्रूयमाणत्वात्तस्यैव स्तुत्या भाव्यम्, तथापि पितृपुत्रभेदात् "आरद्रास" ( ऋ० सं० ४–३–२१ ) इतिवत् पितृनाम्ना व्यवहर्तुं शक्यत्वात्प्रथमायामृचि भा (वय) व्यस्येत्युक्तत्वाच्च भावयव्यदैवत्येयमित्युक्तम् इत्याह ॥

३. तत्पुत्रस्य स्वनयस्येत्यर्थः । स्वनयेन दत्ता इति वक्ष्यमाणत्वादिति सायणः ॥

( अचपलः अत्वरमाणः ) केनाप्यहिंसितो वा "तुर्वी हिंसायाम्" ( भ्वा० प० ) क्तः । "राल्लोपः" ( पा० ६–४–२१ ) "हलि च" ( पा० ८–२–७७ ) इति दीर्घः । "श्वीदित–" ( पा० ७–२–१४ ) इतीडभावः । **यो** राजा **मे** मदर्थं **सहस्रं** तत्संख्याकान् **सवान्** सूयन्ते सोमा एष्विति सवाः सोमयागास्तान् **असिमीत** संपूर्णधनप्रदानेन निर्मितवान् । किं कुर्वन् ? **श्रवः** सर्वैः श्रूयमाणां कीर्तिम् प्रशंसां वा **इच्छमानः** कामयमानः पदव्यत्यय आर्षः ( पा० ३–१–८५ ) यतोऽयमार्त्विज्याद्युपाधिना विना कीर्त्यर्थमेव बहुधनं मह्यं प्रादात् अतस्तं स्तौमीत्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**अभिन्दान्त्स्तोमानबालिशाननल्पान्वा । बालो बलवर्ती भर्तव्यो भवति । अम्बास्मा अलंभवतीति वा । अम्बास्मै बलं भवतीति वा । बलो वा प्रतिषेधव्यवहितः । "प्रभरे मनीषया" मनस ईषया स्तुत्या प्रज्ञया वा । सिन्धावधि निवसतो भावयव्यस्य राज्ञो यो मे सहस्रं निरमिमीत सवानतूर्तो राजाऽतूर्ण इति चाऽत्वरमाण इति वा प्रशंसामिच्छमानः ॥ १० ॥**

**इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रे दै० कां० नवमाध्यायस्य प्रथमः पादः ॥ ९ ॥ १ ॥**

मन्दशब्दो मूर्खशब्दपर्यायस्तत्पर्यायश्चाल्पशब्दो बालिशशब्दश्चेति व्याचष्टे–**अबालिशाननल्पान्वेति** । अथात्र बालिशब्दप्रकृतिभूतं बालशब्दं निर्वक्ति—**बालो बलवर्तीति** । "बल प्राणने" ( भ्वा० प० ) इत्यस्माज्ज्वलादित्वात् ( पा० ३–१–१४० ) णः । कृच्छ्रजीवन इति तदर्थस्तदाह **भर्तव्यो भवतीति** । अत्रार्थेऽपरितुष्यन्नाह—**अम्बेति** । **अस्मै** बालाय **अम्बा अलं** पर्याप्ता भवति पोषणायेति आद्यान्त्यलोपे बालः । अम्बास्मै बलं भवतीत्यर्थेऽकारबशब्दयोर्विपर्ययोम्बाशब्दलोपश्च पृषोदरादित्वात् । **बलो वेति** । न बलं यस्येति बालः । नलोपे ( पा० ६–३–७३ ) अकारो विपर्ययेण बकारात्परस्तात्प्रयुज्यते ॥ १० ॥

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० नवमस्य प्रथमः पादः ॥ ९ ॥ १ ॥

---

## नवमाध्यायस्य द्वितीयः पादः ।

अथ रथादीन्युद्धाङ्गानिर्विवक्षन्पूर्वोत्तरपादयोरर्थसन्दर्भं व्याचष्टे–स्तुतिसंक्रमन्यायेन—

**यज्ञसंयोगाद्राजा स्तुतिं लभेत । राजसंयोगाद्युद्धोपकरणानि । तेषां रथः प्रथमागामी भवति ॥**

**यज्ञसंयोगादिति** । भावयव्यो हि **राजा यज्ञसंयोगात्** यस्मात्सहस्रं सवान्निरमिमीत तस्मात्प्रभर इति पूर्वप्रकृतमन्त्रार्थात् । लब्धस्तुति–**राजसंयोगात्** च **युद्धोपकरणानि** रथादीनि । तानि हि युद्धायोपक्रियन्त इति, युद्धे चोपकुर्वन्तीति कर्मणि कर्तरि वा ल्युड्बाहुलकात् । एष हि व्यापी स्तुतिसंक्रमन्याय आचार्येणोपदर्शितः । **तेषां** युद्धोपकरणानां मध्ये **रथः** ( ७ ) इत्येष **प्रथमागामी** मुख्यः । तदाधारत्वादितरेषां युद्धोपकरणानाम् ॥

अथ रथं निर्वक्ति—

**रथो रंहतेर्गतिकर्मणः ॥**

**गतिकर्मणः** गत्यर्थस्य "रहि" ( भ्वा० प० ) धातोः "हनिकुषि–" ( उ० २–२ ) इत्यादिना क्थन् बाहुलकान्नकाररहकारलोपश्च । रंहति गच्छत्यनेनेति **रथः** ॥

**स्थिरतेर्वा स्याद्विपरीतस्य । रममाणोऽस्मिंस्तिष्ठतीति वा । रपतेर्वा, रसतेर्वा, तस्यैषा भवति ॥ १ ॥ ( ११ )**

**स्थिरतिर्**नैरुक्तधातुः । विपरीताक्षरः । "पुंसि संज्ञायां घः" ( पा० ३–३–११८ ) इति घः । सकारेकारयोर्लोपः । दृढगठितत्वात्स्थिरो हि सः । अथ **वा रमतेस्तिष्ठतेश्च** द्विधातुजं रूपम् । रममाणो विस्रब्धोऽस्मिंस्तिष्ठति रथी । न तथाश्वादिषु । अथ **वा रपतेः** व्यक्तवागर्थस्य ( भ्वा० प० ) रपधातोरेव यथाप्राप्तः क्थन् पकारलोपो बाहुलकात् । **रसतेर्वा** शब्दार्थस्य ( भ्वा० प० ) शब्दायते ह्यसौ दूरत एव । पूर्ववत्क्थन् । एषा स्तुतिर्भवति ॥ १ ॥ ( ११ )

**"वन॑स्पते वी॒ड्व॑ङ्गो॒ हि भू॒या अ॒स्मत्स॑खा प्र॒तर॑णः सु॒वीरः॑ । गोभिः॒ सन्न॑द्धो असि वी॒ळय॑स्वास्था॒ता ते॑ जयतु॒ जेत्वा॑नि" ॥ १ ॥**

( ऋ० सं० ४–७–३५ )

**वनस्पत** इति । भरद्वाजपुत्रस्य गर्गस्यार्षं त्रैष्टुभं रथदैवत्यम् । रथारोहणे विनियोगः । **हे वनस्पते** ! वनस्पतिवि-

---

१. तथा चामरः–"मूढाल्पापटुनिर्भाग्या मन्दाः स्यु"रिति । "अज्ञे मूढयथाजातमूर्खवैधेयबालिशा" इति च ॥

२. आद्ययोरमोरन्त्यस्य मकारस्य च लोप इत्यर्थः ॥

१. तद्यथा–युद्धोपकरणानि राजसंयोगात्स्तुतिं लभन्ते । ( तस्य तानि अङ्गानीति तत्संबन्धात्स्तूयन्ते ) राजापि यज्ञसंयोगात् । यज्ञोऽपि देवसंयोगात् । देवता अप्यात्मसंबन्धात् । सोऽयमेवात्मैवाङ्गप्रत्यङ्गभावेनावस्थितः सर्वावस्थातः स्तूयत इत्यात्मस्तुतिः । सर्वस्थानाधिपतिभागिनी आत्मप्रतिष्ठा बोद्धव्या । तथोपकरणस्तुतिरिति । एष स्तुतिसंक्रमन्यायः सर्वत्रोपसंधेयः ॥

२. विश्वस्तः । "समौ विस्रम्भविश्वासौ". इत्यमरः ॥

कार रथ! त्वं **वीड्वङ्गः** दृढाङ्गः ( दृढावयवः ) वीडुशब्दो बलपर्यायेषु पठितः ( निघं० २-९-१५ ) वीळयतिः संस्तम्भकर्मा तत उर्वादिलक्षात् ( उ० १-७ ) **भूयाः** भव **हि** निश्चयेन। ततश्च **अस्मत्सखा** अस्मन्मित्रः भव। **प्रतरणः** प्रतारणः संग्रामाणां पारं नेता। प्रवर्द्धयिता वा। **सुवीरः** कल्याणवीरः ( अविक्लवानवखण्डिताधिष्ठाता ) यद्वा शोभनैर्वीरैः शूरभटैः पुत्रादिभिर्वा युक्तश्च भव। अपि च त्वं **गोभिः** गोविकारैश्चर्मभिः **सन्नद्धः** समन्ततो नद्धो बद्धो गव्येन चर्मणा श्लेष्मणा च। स त्वं कृतप्रतीकारमात्मानं मत्वा तेन हेतुना सुतरामात्मानं **वीळयस्व** संस्तभ्नुहि। संस्तब्धे च त्वयि अवस्थितः **ते** तव **आस्थाता** अधिष्ठाता योद्धा **जेत्वानि** जेतव्यानि आत्मनोऽभीप्सितानि शत्रुसैन्यानि। अत्र तव्यार्थे त्वन् ( पा० ३-४-१४ ) **जयतु** अभिभवतु "जि जि अभिभवे" ( भ्वां० प० ) लोट् ॥ १ ॥

अथास्य भाष्यम्—

**वनस्पते दृढाङ्गो हि भवा "सत्सखा प्रतरणः सुवीरः" कल्याणवीरः। "गोभिः सन्नद्धो असि वीळयस्वे"—ति संस्तम्भस्व। आस्थाता ते जयतु जेतव्यानि ॥**

निगदव्याख्यातमेतत्[2]।

अथ क्रमप्राप्तं दुन्दुभिं निराचष्टे—

**दुन्दुभिरिति शब्दानुकरणं, द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणस्तस्यैषा भवति ॥ २ ॥ ( १२ )**

**दुन्दुभिरिति** ( ८ ) अस्य योऽभिधेयस्तस्य **शब्दानुकरणम्** आत्मनो नामधेयप्रतिलम्भनिमित्तम्। यथैवासावभिहन्यमानः शब्दं करोति—दुन्दुभि-रिति तदेव तस्य नाम। अथ वा **द्रुमो भिन्न इति** दुन्दुभिः। द्रुमशब्दात्पूर्वपदं भिदेरुत्तरपदम्। तत्संभवो ह्यसौ द्रुमैकदेशनिष्कुषितश्चर्मणा पिनद्धः ॥ २ ॥ ( १२ )

**"उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्। स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अपसेध शत्रून्" ॥ ३ ॥**

( ऋ० सं० ४-७-३५ )

उपेति। उक्तार्षच्छन्दस्का दुन्दुभिदैवत्या दुन्दुभिमर्शने विनियुक्ता। हे **दुन्दुभे! पृथिवीम्** उत अपि च **द्यां** दिवम् **उपश्वासय** आत्मीयेन जयघोषेणाश्वासय। यथा लोकद्वयं त्वदीयेन शब्देनापूरितं भवति तादृशं शब्दं कुर्वित्यर्थः। अपि च—**विष्ठितम्** विशेषेण स्थितं स्थावरं **जगत्** जङ्गमं च उभयविधं प्राणिजातं ते त्वदीयं घोषं ( शब्दं ) **पुरुत्रा** बहुधा "देवमनुष्यपुरुषपुरु—" ( पा० ५-४-५६ ) इत्यादिना प्रकारार्थे त्राप्रत्ययः। **मनुतां** मन्यतां जानातु। **स** त्वं **दुन्दुभे! इन्द्रेण** अन्यैर्देवैश्च **सजूः** सहजोषणः ( सह जुषमाणः ) **दूराद्दवीयः** दूरादपि दूरतरम् **शत्रून्** असदीयान् **अपसेध** अपगमय। अपकाल्याऽपुनरागमनाय इत्येतदाशास्महे ॥ ४ ॥

**उपश्वासय पृथिवीमुप दिवं च बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत्स दुन्दुभे! सहजोषण इन्द्रेण च देवैश्च दूराद्दूरतरमपसेध शत्रून् ॥**

अथ—

**इषुधिरिषूणां निधानं, तस्यैषा भवति ॥ ३ ॥ ( १३ )**

**इषुधिः** ( ९ ) तूणः। तस्मिन्निषवो धीयन्त इति **इषूणां निधानं** तद्भवति ॥ ३ ॥ ( १३ )

**"बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य। इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः" ॥ ५ ॥**

( ऋ० सं० ५-१-१९ )

बह्वीनामिति। भारद्वाजस्य पायोरार्षं त्रिष्टुबिषुधिदैवत्यम्। योऽयं **इषुधिः बह्वीनां** बहूनाम्। "इषुधिर्द्वयोः" इत्यभिधानात्। इषूणां **पिता** रक्षको भवति। **अस्य** इषुधेः **बहुः** बहुसंख्याक इषुकलापः **पुत्रः** पुरुणो बहुनस्त्राता। तदर्थं ह्यसौ रक्ष्यते इत्येवं व्युत्पाद्यम्। यश्चायं **चिश्चाकृणोति** प्रस्मयत इवापव्रियमाणः। ( प्रकर्षेण स्मयत इवोद्घाट्यमानः ) चित्रपुंखत्वात्। अथवा हसतीव शोभया पुंखवीरुधा। अस्मिन्पक्षे चिश्चातिरपठितोऽपि धातुः कल्प्यत इति। विकरणपक्षे तु तदर्थान्यधातूपादानम् इत्याचार्यपरिभाषा। अथवा चिश्चेति शब्दानुकृतिः ( चिश्चिदित्येवं शब्दं करोति ) कदा? **समना** समनानि युद्धानि ( निघं० २-१७-१६ )। शेर्डा ( पा० ७-१-३९ )। **अवगत्य** प्राप्य। स एष **इषुधिः**। **पृष्ठे** राज्ञः पृष्ठभागे **निनद्धः** बद्धः **प्रसूतः** प्रसुवन्। "आदिकर्मणि क्तः कर्तरि च" ( पा० ३-४-७१ ) इति कर्तरि क्तः। इषून्प्रेर-

१. वयं सखायो यस्य स तादृशः ॥
२. निगदेन पाठमात्रेण व्याख्यातम् ॥

१. सङ्कः "आधुनिकसङ्केतः परिभाषे"ति तल्लक्षणात् ॥
२. रथस्य मनुष्यस्य वेति दुर्गः ॥

यन् । सङ्काः समं सह कायन्तीति सङ्काः संभूय शब्दकारिण्यः पृतनाः सेनाः च सर्वाः जयन्ति ॥ ५ ॥

अथास्य भाष्यम्—

**बहूनां पिता बहुरस्य पुत्र इषूनभिप्रेत्य । प्रस्मयत इवापाव्रियमाणः । शब्दानुकरणं वा । सङ्काः सचतेः । संपूर्वाद्वा किरतेः ॥**

**"पृष्ठे निनद्धो जयति प्रसूतः"**

**इति व्याख्यातम् ॥**

प्रस्मयत इवेत्यादि । चिश्चा करोतीत्यस्यार्थः । व्याख्यातम् निगदेनैव ॥

अथ क्रमप्राप्तं हस्तघ्नं निर्वक्ति—

**हस्तघ्नो हस्ते हन्यते तस्यैषा भवति ॥ ४ ॥ (१४)**

हस्तघ्नः ( १० ) कलापोपपट्टकः । गोधा–तलं–ज्याघातवारणमिति च यं प्राहुः । स कस्मात् ? हस्ते ह्यसाववस्थितो ज्यया हन्यते । "घञर्थे कविधानम्" (पा० ३–३–५८ वा०) इति कः ॥ ४ ॥ ( १४ )

**"अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परिपातु विश्वतः" ॥ ४ ॥**

( ऋ० सं० ५–१–२१ )

अहिरिति । उत्कर्षच्छन्दस्का हस्तघ्नदैवत्या । योऽयम् ज्याया हेतिं ज्याहेतुकां हिंसां परिबाधमानः निवारयन् भोगैः शरीरेण । वचनव्यत्यय आर्षः । अहिरिव सर्प इव बाहुं धनुष्मतः पुरुषस्य प्रकोष्ठं पर्येति परिवेष्टयति । ज्याघातात्सर्वतस्त्रायमाणः । तदर्थत्वात्तस्य । सोऽयमेवंधर्मा हस्तघ्नः विश्वा विश्वानि । शेर्डा ( पा० ७–१–३९ ) । वयुनानि प्रज्ञानानि (निघं० ३–९–१०) (प्रज्ञातव्यानि) विद्वान् जानन्

पुमान् पुरुमना इव कश्चिदाप्तः प्रज्ञानबहुलः ( पौरुषोपेतः ) स्वयं पुमांसम् एतं धनुष्मन्तम् विश्वतः सर्वतः सर्वप्रकारं परिपातु रक्षतु इत्याशास्महे ॥ ४ ॥

अथास्य भाष्यम्—

**अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात् परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् ॥**

इति । अथ पुमांसं निर्वक्ति—

**पुमान्पुरुमना भवति पुंसतेर्वा ॥**

पुमान् कस्मात् ? पुरुमनाः पुरु बहु मनो यस्य सः । अल्पमनस्कं स्त्रियमपेक्ष्य पुरुषे बहुतरं मनः । पुंसतेर्वा पुरुषार्थस्य । पौंस्यमिति बलनाम ( निघं २–९–२४ ) यस्य भवति । "पुंस अभिवर्धने" ( चु० प० ) इति धातोर्निपात एवायं पृषोदरादिः । "अनित्यण्यन्ताश्चुरादय" इति णिजभावे रूपम् ॥

अथ—

**अभीशवो व्याख्यातास्तेषामेषा भवति ॥५॥ (१५)**

अभीशवः(११)इति वक्तव्यम् । ते पुनरमी व्याख्याताः । अभिधानतोऽभिधेयतश्च "अभीशवोऽभ्यश्नुवते" इति ( नि० ३–९ ) अभिपूर्वात् "अशू व्याप्तौ" ( स्व० आ० ) इति धातोरुप्रत्ययो ( उ० १–७ ) बाहुलकाद्धालवयवस्याकारस्येकारश्च । जस् । अभिव्याप्नुवन्ति अश्वग्रीवामित्यभीशवः ॥ ५ ॥ (१५)

**"रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः" ॥ १ ॥**

( ऋ० सं० ५–१–२० )

रथ इति । उत्कार्षा जगती । अस्याः पूर्वार्धेन सारथिः स्तूयत इति सोऽर्धर्चस्तद्देवताकः । उत्तरार्धेन रश्मयः स्तूयन्त इति तद्दैवताका । यदेतत् रथे तिष्ठन् वर्तमानः सुषारथिः कल्याणसारथिः । "पूर्वपदात्" ( पा० ८–३–१०६ ) इति षः । पुरः पुरस्तात् ( अग्रतः ) सतः ( वर्तमानान् ) वाजिनः अश्वान् यत्रयत्र कामयते यत्रयत्रेच्छति तत्रतत्र नयति तदेतत्किं सारथेर्महाभाग्यम् ? नेत्युच्यते । अनभीशुको हि सारथिः किं कुर्यात्सुशिक्षितोऽपि सन् ? एवम् अभीशूनाम् रश्मीनाम् महिमानम् महाभाग्यम् पनायत हे जनाः ! स्तुत । "पण व्यवहारे स्तुतौ च पन च" ( भ्वा० प० ) ततः स्वार्थे आयप्रत्ययः ( पा० ३–१–२८ ) "सनाद्यन्ता" (पा० ३–१–३२) इति धातुत्वे लोट् ॥ पूजयामीति भाष्यम् । ये रश्मयः अश्वग्रीवां व्याप्य वर्तमानाः पाशाः । पश्चात्

१. शब्दायन्ते । "कै शब्दे" ( भ्वा० प० ) "सुपि" ( पा० ३–२–४ ) इति योगविभागात्कः । भाष्यमते तु सचतेर्गतिकर्मणो बाहुलकादङ्कप्रत्ययश्चिलोपश्च । यद्वा संपूर्वात्किरतेः "अन्येष्वपि दृश्यते" ( पा० ३–२–१०१ ) इति डः । तथा च दुर्गः–सङ्कटान्संप्रकान्वा संग्रामान् पृतनाश्च सर्वा याः स्पर्धमानैरिषव एव केवलमभिलक्ष्य क्षिप्यन्ते पताकार्थं तानेवंविधान्संग्रामानिति ( निघं० २–१७–१४ )॥

२. सामीप्यलक्षणयाऽयमर्थः । तथाचोक्तं सायनेन–"लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते" इति । यथा "वटे गावः सुशेरते" इति । वटसमीप इत्यर्थः ॥

३. शरपुङ्खेन वा ॥

४. अत्र हि धन्विनः प्रकोष्ठे बन्धनीयस्य हस्तघ्नस्य स्तुतिः ॥

रथस्य पृष्ठभागे सन्तोऽपि पुरस्ताद्वर्तमानानश्वान् मनः सारथेर्मनोऽनुकूलं यथास्यात्तथा अनुयच्छन्ति नियच्छन्ति । यद्वा पश्चात्सन्तः अतिप्रवृद्धजवानामप्यश्वानां मनः अनुयच्छन्ति उपरमयन्ति । सारथेर्वशे नयन्ति । येष्वश्वेषूपनिबद्धाः प्रगृहीताश्च सारथिना तेषामित्यर्थः ॥ १ ॥

**रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः । कल्याणसारथिः । अभीशूनां महिमानं पूजयामि । मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयः ॥**

अत्र (मन्त्रे) संबोध्याभावात्पनायतेत्यस्य पूजयामीति पुरुषवचनव्यत्ययः ॥

अथ—

**धनुर्धन्वतेर्गतिकर्मणो वधकर्मणो वा । धन्वन्त्यस्मादिषवः । तस्यैषा भवति ॥ ६ ॥ (१६)**

धनुः (१२) इत्येष गत्यर्थात् वधार्थाद्वा धन्वतेर् धविधातोः (भ्वा० प०) बाहुलकादुसि (उ० २-१०७) प्रत्ययो वलोपश्च । धन्वन्त्यपनयन्त्यस्मादिषवः घ्नन्ति वाऽनेनेति ॥ ६ ॥ (१६)

**"धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम" ॥ १ ॥**

(ऋ० सं० ५-१-१९)

धन्वनेति । उक्तार्षेत्रिष्टुब्धनुर्देवत्या । वयं धन्वना चापेन । "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकाः" इत्यमरः । गाः शत्रूणां जयेम तेभ्य आत्मसात्कुर्मः । धन्वना धनुषैव आजिं संग्रामं च जयेम । "समित्याजिसमिद्युधः" इत्यमरः । "इणजादिभ्यः" (पा० ३-३-१०८ वा०) इति साधुः ॥ धन्वना च तीव्राः उद्धता दारुणा वा समदः अत्यन्तमदवतीः शत्रुसेनाश्च जयेम ॥

अपि च किंबहुना समासत एव ब्रूमः—धनुः शत्रोरपकामं कृणोति । यत्र यत्र शत्रुरस्मान् जेतुकामः स्यात्तस्ततोऽपगतकाममस्त्तो धनुः करोतु । ततश्च शत्रोरपकामं कामस्यापायं कृणोति करोतु । लोडर्थे लट् (पा० ३-१-८५) अपगतकामे च तस्मिञ्छत्रौ वयं धन्वना धनुषैवैताः सर्वाः दिशः प्रदिशः उपदिशश्च जयेम । सर्वासु दिक्षु वर्तमानाञ्छत्रून् जयेम इत्येतदाशास्महे । प्रदिक्शब्दोऽत्र लक्षणया तत्स्थेषु पुरुषेषु वर्तते । मञ्चाः क्रोशन्तीति वत् । धन्वञ्छब्दस्य जयतेश्चावृत्तिरादरार्था ॥ १ ॥

अथास्य भाष्यम्—

**इति सा निगदव्याख्याता । समदः—समदो वात्तेः, संमदो वा मदतेः ॥**

इति सा सेयं निगदेन पाठमात्रेण व्याख्याता । अत्र—समदः-समदो वा संमदो वा, अत्तेर्मदतेर्वेति योजना । संपूर्वस्य भक्षणार्थस्य । भक्षित इव हि तत्र परस्परतः । मदतेर्वा हर्षणार्थस्य । द्वितीयं संमदो वेति । संहृष्टास्तत्र हि परस्परतो युध्यन्ते ॥

अथ—

**ज्या—जयतेर्वा, जिनातेर्वा, प्रजावयतीषूनिति वा । तस्या एषा भवति ॥ ७ ॥ (१७)**

ज्या (१३) इति वक्तव्यम् । सा पुनरियं जयतेर्वा जिनातेर्वा । धात्वन्यत्वमर्थैकत्वम् । तद्बलेन हि जीयते । स पुनरेष धनुर्गुणः ॥ ७ ॥ (१७)

**"वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती" ॥ ३ ॥**

(ऋ० सं० ५-१-१९)

वक्ष्यन्तीति । उक्तार्षेच्छन्दस्का ज्यादैवत्या । येयं योषिदिव काचित्कस्मैचिदिष्टाय पुरुषाय किंचिद्रहस्यं वक्ष्यन्ती इव कथयिष्यन्तीव ज्या, धनुष्मता पुरुषेण इषुं निक्षिप्सता सव्येन दक्षिणेन वा पाणिनाऽऽकृष्यमाणा सव्यं दक्षिणं वा कर्णं प्रत्याकृष्यते । धनुष्मता तथा मध्यमात्मनो निनीय इषुम् आगनीगन्ति आगच्छति । "दाधर्तिदर्धर्ति०" (पा० ७-४-६५) इत्यादिनाङ्पूर्वस्य गमेर्लटि निपातोऽयम् । इदिति पादपूरणः । कथम् ? इति तत्राह—प्रियं सखायं परिषस्वजाना प्रियमिष्टं काचित्सखायं समानख्यानम् उपजातप्रीतिं स्त्री पुरुषमिव इषुं परिष्वजमाना संप्रीत्यर्थं एव, सस्वजानेत्यभ्यासोऽनर्थकोऽर्थविशेषाभावात् । यथा हि कर्णं प्रत्याकृष्यते धनुष्मता मध्यमात्मनो निनीयेषुं परिष्वजत इव । किमेतावदेव ? नेत्युच्यते—या च इयं योषेव शिङ्क्ते योषिदिव (यथा

---

१. यद्यप्ययं गतावेव पठ्यते तथापि "धविर्मारणार्थे" इति क्षीरस्वामिभाष्यममुमर्थं संवदति ॥

२. इतरेतरस्पर्धया यत्र लक्ष्यवेधायैव केवलमिषवः क्षिप्यन्ते वैतर्क्येण प्रतापार्थं वा तमाजिमाजवनमिति दुर्गः ॥

३. अनेकशस्त्रसंपातसङ्कटाननेकवीरपुरुषाकीर्णान्संग्रामानिति दुर्गः (निघं० २-१७-२२) ॥

१. सायणस्त्विममित्थं समासतो व्याचष्टे—इयं ज्या समने संग्रामे धन्वन् धन्वनि अधीति सप्तम्यर्थानुवादः । वितता विस्तृता पारयन्ती पारं नयन्ती प्रियं प्रियकरं वाक्यं वक्ष्यन्ती इव कर्णं धन्विनो राज्ञः कर्णप्रदेशमागनीगन्ति आगच्छति । इदिति पूरणः । योषा नारी सखायं पतिमिव परिषस्वजाना इषुं परिष्वजमाना शिङ्क्ते शब्दायते चेति ॥

विदग्धा काचित्कामिना पुरुषेणात्मानं प्रत्याकृष्यमाणोपजायमानपरितोषा कामिनः पुरुषस्य हर्षमुत्पादयन्ती शिङ्क्ते सुकुमारमव्यक्तशब्दं करोति तद्वदव्यक्तशब्दं करोति । "शिजि अव्यक्ते शब्दे" ( अ० आ० ) लट् । धन्वन् धन्वनि अधीति सप्तम्यर्थानुवादः । ङ्र्लुक् ( पा० ७-१-३९ ) वितता अध्यारोपिता विस्तृता सा इयम् एवमादिगुणयुक्ताऽस्माकं ज्या धनुर्गुणः समने संग्रामे ( निघं० २-१७-१६ ) पारयन्ती पारमन्तं नयन्ती अस्तु शत्रूणामित्येतदाशास्महे ॥ ३ ॥

अथास्य भाष्यम्—

**वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधिधनुषि ज्या इयं समने पारयन्ती पारं नयन्ती ॥**

अथ—

**इषुरीषतेर्गतिकर्मणो वधकर्मणो वा । तस्यैषा भवति ॥ ८ ॥ ( १८ )**

इषुः ( १४ ) इत्येतत् ईषतेः "ईष गतिहिंसादर्शनेषु" ( भ्वा० प० ) इत्यस्मादुप्रत्ययः । "ईषेः किच्च" ( उ० १-१३ ) इति । चादुपधाह्रस्वः । गच्छति शत्रून् हन्ति वा तान् ॥ ८ ॥ ( १८ )

**"सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता । यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्" ॥ १ ॥**

( ऋ० सं० ५-१-२१ )

सुपर्णमिति । अस्यामृचीषवः स्तूयन्त इति तद्दैवत्या उत्कार्षच्छन्दस्का । इयमिषुः "इषुर्द्वयोः" इत्यभिधानात् सुपर्णं शोभनं पर्णं पत्रं ( पक्षं ) वाजं वस्ते तेनाङ्गार्धमाच्छादयति । "वस आच्छादने" ( अ० आ० ) लट् । यद्वा धारयति । यद्वा सर्वत्र वचनव्यत्ययः । "वस्त इति वाजानभिप्रेत्य" इति भाष्यात् । तथा च या इमा इषवः सुपर्णानि वसते इत्येवं सर्वत्र व्याख्येयम् । अस्याः आसाम् मृगः मृगमयाः दन्तः दन्ताः । यदि मार्गाणि फलानि । यद्वा मृगावयवाः शृङ्गाणि दन्ता भवन्ति इषवः काश्चिद्दन्तमुखा भवन्ति हीति सायणः । अथ वा मृगः मृगयमाणा भवन्ति शत्रून् । किं च गोभिः गोविकारैः स्नाय्वा श्लेष्मणा च सन्नद्धा समन्ततो नद्धाः ( सम्यग् बद्धाः ) अथ वा गौरिति ज्यानाम । ताभिः सन्नद्धाः । तथा च निगमः "वृक्षे वृक्षे नियतामीमयद्गौः" ( ऋ० सं० ७-७-२१ ) इति । प्रसूता धनुष्मताक्षिप्ताऽधः पतति गच्छन्ति । यत्र संग्रामेषु नरः मनुष्याः सं द्रवन्ति संभूय पलायन्ते विद्रवन्ति च पृथक्पृथक् च पलायन्ते । तत्र अस्मभ्यम् इषवः शराः शर्म शरणं सुखं जयनिमित्तम् यंसन् प्रयच्छन्तु ( ददतु ) इत्याशास्महे ॥ १ ॥

अथास्य भाष्यम्—

**सुपर्णं वस्त इति वाजानभिप्रेत्य । मृगमयोऽस्यादन्तो, मृगयतेर्वा ॥**

**"गोभिः सन्नद्धा पतति प्रसूता"**

**इति व्याख्यातं । यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेषु ॥**

व्याख्यातम् निगदेन ( पाठमात्रेण ) एव । पदशश्च व्याख्यातप्रायमिति वार्थः ॥

अथ—प्रतोदो युद्धाङ्गं तमश्वाजनीति नाम्ना संस्तोष्यंस्तत्पर्यायं निराचष्टे—

**अश्वाजनीं कशेत्याहुः । कशा—प्रकाशयति भयमश्वाय । कृष्यतेर्वा अणूभावात् ॥**

अश्वाजनी ( १५ ) इत्येतत्पदम् । तां पुनरेतां कशेत्याहुः कशां वदन्ति । निपातेनेतिना कर्मण उक्तत्वान्न द्वितीया । तत्राश्वाजनीति पदं न निर्वक्तव्यं प्रत्यक्षवृत्तित्वादस्य । अथ कशा कस्मात्? सा हि प्रकाशयति प्रख्यापयति भयमश्वाय । तथा च "काशृ दीप्तौ" ( भ्वा० आ० ) इत्यस्मादन्तर्भावितण्यर्थात्पचाद्यच् ( पा० ३-१-१२४ ) आकारस्य ह्रस्वत्वं छान्दसम् । अथ वा कृष्यतेः । अणूभवति । अपकृष्टा हि सा भवति चर्मणोऽण्वी । अत्रार्थे निपात एव शरणं पृषोदरादौ ॥

अनयैव व्युत्पत्त्या—

**वाक्—पुनः प्रकाशयत्यर्थान् ।**

वागपि कशेत्युच्यते सा पुनरर्थान्प्रकाशयतीति पूर्ववत्प्रक्रिया ॥

---

१. तथा च मेदिनी "पत्रं पर्णे किंशुके च" इति, "पत्रं वाहनपक्षयोः", "पक्षो वाजस्त्रिषूत्तरे" इति चामरः ॥

२. सुखाग्रभागाः फलानीत्युच्यते ॥

३. किंतु तद्देवत्यं स्वाद्यदहं विज्ञेयमिति ॥

१. अस्यायमर्थः—वृक्षे वृक्षे धनुषि धनुषि गौर्ज्या नियता बद्धा मीमयत् शब्दं करोति इति ॥

२. "यम उपरमे" ( भ्वा० प० ) प्रोपसृष्टार्थे वर्तमानस्यास्य दानार्थत्वमिहाश्रितम् मस्य च छः ( पा० ७-३-७७ ) तथा च लेटि सिब्विकरणस्य रूपम् ॥

३. अश्वा अस्यन्ते क्षिप्यन्ते प्रेर्यन्तेऽनयेत्यर्थे "अज गतिक्षेपणयोः" ( भ्वा० प० ) इत्यस्मात् ल्युट् । "वा यौ" ( पा०—२ ४-५७ ) इति वीभावविकल्पः । टित्वान्ङीप् । अश्वानामजनीति षष्ठीतत्पुरुषः । कशोच्यते ॥

अथवा—

## खशया । कोशतेर्वा ॥

वारिघ खे मुखाकाशे शेत इति खशया सती वर्णव्यत्ययादिना कशेत्युच्यते । क्रोशतेर्वा शब्दार्थस्यैव निपातः ॥

## अश्वकशाया एषा भवति ॥ ९ ॥ (१९)

या तु अश्वकशा तस्याः ॥ ९ ॥ (१९)

**"आजङ्घन्ति सान्वेषां जघनाँ उपजिघ्नते ।**
**अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय" ॥३॥**

( ऋ० सं० ५–१–२१ )

आजङ्घन्तीति । उक्तार्षानुष्टुप् प्रतोददैवत्या । हे अश्वाजनि ! अश्वानां क्षेप्त्रि कशे ! यया त्वया प्रचेतसः प्रकृष्टचेतसः ( प्रकृष्टज्ञानाः ) सादिनः अश्वारोहाः सारथयो वा एषाम् अश्वानाम् सानु सानूनि"शेश्छन्दसि बहुलम्" (पा० ६–१–७०) इति शेर्लोपः । सरणानि इति भाष्यम् । समुच्छ्रितानि सक्थीनीति[1] तदर्थः । करणे सर्तेर्ल्युट् । आजङ्घन्ति आघ्नन्ति पुनःपुनः । यङ्लुक् । वचनव्यत्यय आर्षः । जघनान् जघनानि । लिङ्गव्यत्यय आर्षः । स्फिग्देशान्[2] । अत्र "दीर्घादटि समानपादे" ( पा० ५–३–९ ) इति नस्य रुत्वे यत्वमलोपौ । "आतोऽटि नित्यम्" ( पा० ८–३–३ ) इत्यनुनासिकः । उपजिघ्नते उपजिघ्नन्ति । पदव्यत्यय आर्षः[3] । आहन्तीत्यर्थः । सा त्वं समत्सु संग्रामेषु ( निघं० २–१७–२२ ) अश्वान् प्रचोदय प्रेरय ॥ ३ ॥

अथास्य भाष्यम्—

**आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थिः सचतेः । आसक्तोऽस्मिन्कायो,–जघनानि चोपघ्नति । जघनं जङ्घन्यते । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान्त्समत्सु समरेषु संग्रामेषु चोदय ॥**

सक्थिः सक्थिशब्दः । अत एव ( शब्दाभिप्रायेणैव ) पुंस्त्वम् । "सक्थि क्लीबे" इत्यमरः । स चायं कस्मात् ? सचतेः । "षच सेचने सेवने च" ( भ्वा० आ० ) इत्यस्मात् क्थिन्प्रत्ययः ( उ० ३–१५४ ) चस्य कुत्वम् । यद्यप्ययं सञ्जसिभ्यामेव विहितस्तेन सजयति सज्यते वा सक्थीति प्राप्नोति तथापि भाष्यकारवचनाद्बाहुलकादन्यतोऽपि । किमस्मिन्सक्तम् ? आसक्तोऽस्मिन्कायः । कृत्स्नं शरीरम् । जङ्घन्यते । गत्यर्थाद्धन्तेर्यङन्तात्कर्मणि अच् ( पा० ३–१–१३४ ) बाहुलकात् । "आगमशास्त्रमनित्यम्" ( पा० ९२ ) इति नुमभावोऽभ्यासस्य । कुटिलं हन्यते इति विग्रहः । हिंसार्थस्य तु यङि घ्नीभावप्रसङ्गः ( पा० ७–४–४५ वा० ) ॥

अथ—

## उलूखल–मुरुकरं वोर्करं वोर्ध्वखं वा ॥

**"उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत्" "उरुकरं चैतदुलूखलमित्याचक्षतेऽपरोक्षेणे"ति[1] च ब्राह्मणम् । तस्यैषा भवति ॥ १० ॥ ( २० )**

उलूखलम्(१६)इत्येतद्वक्तव्यम् । तत्कस्मात् ? तद्धि उरुकरत्वादुरुकरं सद्वर्णव्यत्ययादिनोलूखलं भवति । वह्वन्नं करोति । तदित्थमुरुशब्दात्पूर्वपदं करोतेरुत्तरपदम् । अथ वा ऊर्करम् ऊर्क् अन्नम् ( निघं० २–७–१५ ) तत्करोतीति सत् । ऊर्जः ( अन्नस्य ) एव हि करणार्थं तदुत्पद्यते "झरो झरि सवर्णे" ( पा० ७–४–६५ ) इति कलोपः । अथ वा ऊर्ध्वखम् ऊर्ध्वमेव हि तस्य खं ( खातं ) भवति । अथ "वा उरु०० वत्" । तत्किल क्रियमाणम् ऊरु मे खं कुरु इत्यब्रवीदिव । तथागुणयुक्तत्वात्तस्य । ततश्चोरुखं सदुलूखलम् । अत्रार्थे ब्राह्मणं प्रमाणयति–"उरुक००क्षेण–"इति । उरु करोतीत्युरुकरमेतत्प्रत्यक्षमव्यवहितगुणविधानात्[3] । तत्पुनरेतत् रकोर्व्यत्ययेन व्यवहितगुणमुच्यते उलूखलमिति । तस्य–एषा श्रुतिर्भवति ॥ १० ॥ ( २० )

**"यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।**
**इह द्युमत्तमं वद जयतामिव दुन्दुभिः" ॥ ५ ॥**

( ऋ० सं० १–२–२५ )

१. सक्थि जानूपरिभागः । तद्बलेन हि सरन्ति सर्तार इति तानि सरणानि भवन्ति । रथ्यानां हि कटिप्रदेशमश्वाजन्यभिहन्ति । पत्यानां ( पृष्ठवाह्यानां ) हि स्फिग्देशानित्युभयमुक्तम् ॥

२. "स्त्रियां स्फिचौ कटिप्रोथौ" इत्यमरः । प्रोथो मांसपिण्डम् ॥

३. दुर्गस्तु–आजङ्घन्ति ! उपजिघ्नति ! इति च शत्रन्तस्य संबोधने रूपं मन्यते । हे अश्वाजनि ! ( आजङ्घन्ति जघनान् उपजिघ्नति ) या त्वमेवमभिहन्ति सा त्वमेतानश्वान्प्रचेतसः प्रकृष्टचेतसः गमनं प्रति समुत्सुकान् समत्सु समरणेषु संग्रामेषु तथा चोदय यथा जयेयमित्याशास्महे इत्याह । व्याख्यानमेतद्भाष्यानुसार्येव । मूले तु सायणव्याख्यानमुद्धृतम् । अत्र सायण उपजिघ्नते इति पदव्यत्ययं जीतिवर्णोपजनं च कृत्वा पठति । दुर्गस्तु–उपजिघ्नत इति । तन्मते उपपूर्वकस्य घ्रातेर्हिंसायां व्यत्ययेन पदवर्णयोः प्रयोगो बोध्यः । "पाघ्राध्मा–" ( प० ७–३–७८ ) इति जिघ्रादेशो लटः शतरि शपि इति च ॥

१. अत्र वैतत्तदु चैतत्तदु इति च क्वचित्पुस्तकेऽपपाठः ॥

२. उरु–विस्तीर्णं मे मम खं–मुखं कुरु इत्यर्थः ॥

३. बहुकारित्वमस्य प्रत्यक्षेणैवानुभूयते । ततो रुस्थाने लकार–स्था खलेति प्रत्यक्षेणेवानायासेन गृह्यते । तदेतदुच्यते अव्यवहितेति । ज्ञानकृतमव्यवधानमत्र विवक्षितम् । गुण उपकारः । एवमग्रेऽपि । तत्र व्यवधानं ज्ञानविलम्बकृतं बोद्धव्यम् ॥

**इति सा निगदव्याख्याता ॥ ११ ॥ (२१)**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० नवमस्य द्वितीयः पादः ॥ ९ ॥ २ ॥**

यच्चिद्धीति । शुनःशेपस्यार्षमनुष्टुबुलूखलदैवत्या । सोमाभिषेके विनियोगः । अभिमन्त्र्य चोपधीयते अग्निचयने । हे उलूखल ! यच्चिद्धि यद्यपि **त्वम्** अन्नसंस्कारायापघातार्थं **गृहेगृहे** प्रतिगृहं **युज्यसे** तथापि इह वैदिके कर्मणि अस्मद्गृहे एव वा तीव्रमुसलप्रहारेण **द्युमत्तमं** दीप्तिमत्तमम् ( अतिशयेन दीप्तम् ) प्रभूतध्वनियुक्तं गम्भीरं ( अन्नैर्बहुभिः संस्क्रियमाणैः ) शब्दं **वद** । तत्र दृष्टान्तः—**जयतामिव दुन्दुभिः** यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिर्महान्तं शब्दं गम्भीरतमं करोति तद्वत् ॥ ५ ॥ **इति सा** सेयं **निगदेन** पाठमात्रेण व्याख्याता ॥ ११ ॥ ( २१ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० नवमस्य द्वितीयः पादः ॥ ९ ॥ २ ॥

## नवमाध्यायस्य तृतीयः पादः ।

अथ क्रमप्राप्तं वृषभं निर्विवक्षुस्तृतीयं पादमुपक्रमते—

**वृषभः प्रजां वर्षतीति वा । अति बृहति रेत इति वा । तद् वृषकर्मणा । वर्षणाद्वृषभस्तस्यैषा भवति ॥ १ ॥ ( २२ )**

**वृषभः** (१७) कस्मात् ? स हि **प्रजां वर्षति** प्रजोत्पत्तिकारणं रेतो योनौ सिञ्चति । "वृषु सेचने" ( भ्वा० प० ) "ऋषिवृषिभ्यां कित्" ( उ० ३-११९ ) इत्यभच्प्रत्ययः । अथ **वा** योनौ **रेतः** सेक्तुमतिशयेनासौ **बृहति** आत्मानमुद्यच्छति । "बृहू उद्यमने" (तु० प०) अस्माद्बाहुलकादभचि हकारस्य षकारः । **तदि**त्यादि । **तत्** तेनास्य **वृषकर्मणा** रेतोवर्षणलक्षणेन गौर्यत्यतिशयेन यो युक्तोऽसावपि **वर्षणात्** रेतोवर्षणाद्धेतोर्मकारमुपजनीकृत्य **वृषभ** इत्युच्यते । **तस्य** गोवृषभस्य **एषा** श्रुतिर्भवति ॥ १ ॥ ( २२ )

**"न्यक्रन्दयन्नुपयन्त एनममेहयन्वृषभं मध्य आजेः । तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय" ॥ ५ ॥** ( ऋ० सं० ८-५-२० )

न्यक्रन्दयन्निति । भार्म्यश्वपुत्रस्य मुद्गलस्यार्षं त्रिष्टुप् । द्रुघणो नाम मुद्गरः तद्दैवत्यमिन्द्रदैवत्यं वा । तथा चानुक्रान्तम्—"प्र ते-मुद्गलो भार्म्यश्वो द्रुघणेन वृषभेण चाजिं जिगायेति द्रौघणं वे"-त्यादि । मुद्गल आह-तेनेति तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । **उपयन्तः** समीपे गच्छन्तो नराः यम् **एनं वृषभं** वर्षकं सेक्तारं रेतसो गोवृषं फूत्कारवन्तं कारयतेति परिवृण्वन्तः **न्यक्रन्दयन्** नितरां क्रन्दनमकुर्वन् यथा प्रचण्डेन क्रन्दनेन शत्रवो भीताः पलायन्ते तथाऽकुर्वन् । अयं च **आजेः** आजयनस्य आजवनस्य वा शरपथस्य संग्रामस्य **मध्ये अमेहयन्** मूत्रपुरीषोत्सर्गं विश्रामार्थं कारितवन्तः । "मिह सेचने" ( भ्वा० प० ) लङ् । **तेन** अमुना वृषभेण **सूभर्वं** सुभगं शोभनभोगं राजानम्, यद्वा ( शत्रुहतं ) सूभर्वम् । भर्वतिरत्तिकर्मा (निघं० २-८-२) शोभनचणकादिभक्षकम् **शतवत्** शतसंख्योपेतं ( दशशतानि ) गवां सहस्रम् । यद्वा असंख्यं ( बहु ) **मुद्गलः** अहं **प्रधने** संग्रामे ( प्रकीर्णान्यस्मिन्धनानि भवन्तीति ) **जिगाय** अजैषम् । लुङर्थे लिट् ( पा० ३-४-६ ) अतो न स्वक्रियायां परोक्षत्वशङ्कापि ॥ ५ ॥

अथास्य भाष्यम्—

**"न्यक्रन्दन्नुपयन्त एन"—॥**

**मिति व्याख्यातम् ॥**

**"अमेहयन्वृषभं मध्य आजे"—॥**

**राजयनस्याजवनस्येति वा ॥**

**तेन तं सूभर्वं राजानं, भर्वतिरत्तिकर्मा, तद्वा सूभर्वम् । सहस्रं**

**"गवां मुद्गलः प्रधने जिगाय" ॥**

**प्रधन इति संग्रामनाम ॥**

**प्रकीर्णान्यस्मिन्धनानि भवन्ति ॥**

अथ—

**द्रुघणः द्रुममयो घनः ॥**

**द्रुघणः** (१८) इत्येतत्पदम् । स पुनरेषः **द्रुममयो घनः** द्रुप्रकृतिः । "तत्प्रकृति-(त-) वचने मयट्" ( पा० ५-४-

---

१. पतेन पूर्वोक्तव्युत्पत्तिद्वयसिद्धो वृषभशब्दोऽश्ववृषादावपि वर्तते इति सूचितम् ॥

२. तथाच वर्षतीति वृषः "इगुपधलक्षणः" ( पा० ३-१-१३५ ) कः । स एव वृषभ इति व्याख्यातम्भवति ॥

१. अत्राहुः—"मुद्गलस्य हृता गावश्चौरैस्त्यक्त्वा जरद्गवम् । स शिष्टं शकटे कृत्वा गत्वैक ऋजुराहवम् ॥१॥ द्रुघणं युयुजेऽन्यत्र चौरमर्गानुसारकः । द्रुघणं चाग्रतः क्षिप्त्वा चौरेभ्यो जगृहे स्वगाः ॥२॥" इति । तथाच भाष्यकृदपि वक्ष्यत्यनुपदमेव तत्रेतिहासमाहात इत्यादिना । विशेषस्त्वियानेव यदसौ राजानं शोधितवानिति ॥

२. मुहूर्तं स्थीयतां यावदसौ सकृन्मूत्रं करोतीति वदन्तो विश्राम्यन्तीत्येष हि गोमिनामाजिसृजां स्वभावः ॥

३. एतेन दुर्गमते "तत्प्रकृतिवचने" इति सूत्रपाठः । लोके दु द्रुर्हन्यतेऽनेनेति द्रुघणः कुठारोऽपि । द्रुशब्दो द्रुमपर्यायः । "करणेऽयो विद्रुषु" ( पा० ३-३-८२ ) इति करणे हन्तेरप्घनादेशश्च । "पूर्वपदात्संज्ञायामगः" ( पा० ८-४-३ ) इति णत्वम् । अत्र देवराजः—"द्रुमविकारः काष्ठखण्डोऽत्र द्रुशब्देनोच्यत" इत्याह । तावतापि "द्रुममयो घन" इति भाष्यं नोपपद्यते । वस्तुतस्तु विकारार्थेऽत्र मयट् ( पा० ४-३-१४३ ) ॥

२१ ) द्रुशब्दो द्रुमपर्यायः । "पलाशीद्रुद्रुमागमाः" इत्यमरः । तथा च द्रुम-(म-)यो घनो द्रुघणः मयटो लोपः । घन इति ( हन्तेरप् घनादेशश्च ) "मूर्तौ घनः" (पा० ३-३-७७) इति निपातितः । मूर्तिः काठिन्यम् । तस्मिन्नभिधेये । तदित्थं मुद्गरोऽभिधेयः । तथाचामरः "द्रुघणो मुद्गरघनौ" इति । तथा च द्रुममयश्चासौ घनश्चेति कर्मधारयः ॥

**तत्रेतिहासमाचक्षते ॥**

तत्र तयो-र्वृषभ-द्रुघणयोर्विषये ( उभयोरप्येकमेव ) सुतिलाभनिमित्तमितिहासम् आचक्षते कथयन्ति वेदार्थविदः—

**मुद्गलो भार्म्यश्वऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय । तदभिवादिन्येषर्ग्भवति ॥ २ ॥ ( २३ )**

स ( मुद्गलः ) किल द्वितीयगोरभावाद्राज्ञा सह प्रतिस्पर्धमान ऐश्वर्यादन्वादिश्य द्रुघण-(मुद्गर)मेव वृषमेण सह युक्त्वा शकटेऽपरपार्श्वे संयोज्य राज्ञा सह आजिं संग्रामम् जगाम । ततश्च संग्रामे व्यवहृत्य यथावलं युध्वा तं जिगाय जितवान् । यथाचैतदेवं, तस्यार्थस्याभिवादिनी संवादिनी एषा ऋग्भवति ॥ २ ॥ ( २३ )

**"इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् । येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु" ॥ ४ ॥**

( ऋ० सं० ८-५-२१ )

इममिति । उत्कार्षादि । सेनादिसहायाभावेन भवान्राजानं कथं जितवानिति सोत्प्रासं पृच्छन्तं सखायं कंचन मुद्गल आह इमं पुरोभुवि वर्तमानं तं मे सहायभूतं वृषभस्य गोवृषस्य युञ्जं युज्यत इति युक् सखिभूतस्तम् । "युजेरसमासे" (पा० ७-१-७१) इति नुम् । काष्ठायाः आज्यन्तस्य (नि० २-१५) मध्ये संग्रामे शयानम् हन्तव्यान्सर्वान्हत्वा सुखेन स्वपन्तम् ( निर्व्यापारत्वेन वर्तमानम् ) मया शत्रुमुद्दिश्यापविद्धम् द्रुघणम् द्रुममयं घनं मुद्गरं पश्य । येन द्रुघणेन शतवत् शतोपेतम् ( दशशतसंख्याकम् ) गवां सहस्रम् पृतनाज्येषु संग्रामे ( बहुत्वमविवक्षितम् ) (निघं० २-१७-९) पृतनानां सेनानामजनं गमनं यत्रेत्यर्थे "अघ्न्यादित्वात्" (उ० ४-१०८) यत् । मुद्गलः अहम् जिगाय अजैषम् । छन्दसि लिट् (पा० ३-४-६) "सँल्लिटोर्जेः" (पा० ७-३-५७)

१. दुर्गस्त्वेवमवातारयत्-जितायामाजौ अवसिताजि-मरणमाज्यन्त एवापविद्धमुद्गरो मुद्गलः केनचित् पृष्टः—केन सह युक्तः वृषमेणेमं राजानमजैषीरिति ? स तमुपदिशन्नेव द्रुघणमाज्यन्ते तस्मिन्नपविद्धमसावज्ञमिव कुत्सयन्राजानमनयर्चा तस्मै प्रत्याचक्षे—इमं तं पश्य येनाजैषमिति ॥

इत्यभ्यासात्परस्य कुत्वम् । तमिमं पश्येति समन्वितो वाक्यार्थः ॥ ४ ॥

अथास्य भाष्यम्—

**इमं तं पश्य वृषभस्य सहयुजं ॥**

**"काष्ठाया मध्ये द्रुघणं शयानम् । येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु" ॥**

इति । सुगमतया मन्त्रांश एव भाष्येऽनूदितः । अत्र सन्दिग्धपदं निर्ब्रवीति—

**पृतनाज्यमिति संग्रामनाम । पृतनानामजनाद्वा । जयनाद्वा ॥**

पृतना मनुष्याः ( निघं० २-३-२५ ) ते यस्मिन्नजन्ति गच्छन्ति तत् पृतनाज्यम् । "अज गतौ" ( भ्वा० प० ) जयनाद्वा । अत्रोत्तरपदे विकल्पयन्ति । ते हि तत्र जयन्ति ।

अथ मुद्गलं निराचष्टे—

**मुद्गलो-मुद्गवान् । मुद्गगिलो वा । मदनं गिलतीति वा । मदङ्गिलो वा । मुदङ्गिलो वा ॥**

मुद्गवान् । तथाच लो मत्वर्थे । अथ वा मुद्गगिलः मुद्गप्रायभोजनः । मदनः कामस्तमसौ गिलति वशीकरोति । जितेन्द्रिय इत्यर्थः । इत्थं च मदनशब्दात्पूर्वपदं, गिलतिशब्दादुत्तरपदम् । अथ वा मदङ्गिलः मुद्गलः । मद उद्रेकस्तमसौ गिलति । उपशान्त इत्यर्थः । अथ वा मुदङ्गिलो मुद्गलः । हर्षमसौ गिलति । निवृत्तसर्वेन्द्रियार्थ इत्यर्थः ।

अथ भार्म्यश्वमृषिं पूर्वोपक्रान्तं सिंहावलोकितकेन निर्वक्ति—

**भार्म्यश्वः=भृम्यश्वस्य पुत्रः । भृम्यश्वः-भृमयोऽस्याश्वाः । अश्वभरणाद्वा ॥**

भृमयः अनवस्थायिनः । अश्वभरणाद्वा बिभर्ति वाऽसावश्वान् इति भृम्यश्वः । तथाच भृधातोः कर्मणि मिङ्प्रत्यये भृमिशब्दो भर्तव्यवचनस्तथाभूता अश्वा यस्येति सः ॥

अथ—

**पितुरित्यन्ननाम । पातेर्वा पिबतेर्वा प्यायतेर्वा । तस्यैषा भवति ॥ ३ ॥ ( २४ )**

पितुः ( १९ ) इत्येतत्पदम् । तत्पुनरेतत् अन्ननाम । तत्कस्मात् ? पातेर्वा रक्षणार्थस्य ( अ० प० ) "कमिमनिजनिगाभायाहिभ्यश्च" ( उ० १-७० ) इति कर्मणि कर्तरि-वातुप्रत्ययोबाहुलकादिकारश्चान्तादेशोधातोः । रक्षितव्यं हि तद्भवति रक्षति वा प्राणान् । पिबतेर्वा पानार्थस्य । पूर्ववत्प्रक्रिया । प्यायतेर्वास्तु वृद्ध्यर्थाद्बाहुलकात्तुप्रत्ययो धातोः पिभावश्च ॥ ३ ॥ ( २४ )

"पितुं नु स्तोषं महो धर्माणं तविषीम् ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत्" ॥१॥
( ऋ० सं० २-५-६ )

पितुमिति । आगस्त्यानुष्टुबुष्णिक् अन्नदैवत्या । अगस्त्य आह—अहं नु क्षिप्रम् तं पितुम् पालकमन्नम् स्तोषम् स्तौमि । वर्तमाने लुङ् ( पा० ३-४-६ ) अडभाव आर्षः ( पा० ६-४-४५ ) । कथंभूतम् ? महः महतः तविषीम् षष्ठ्यर्थे द्वितीया ( पा० ३-१-८५ ) तत्संज्ञकस्य बलस्य ( निघं० २-९-१० ) धर्माणम् धारयितारम् । यद्वा महः महतो लोकस्य धर्माणं धारकं तविषीं बलात्मकम् । यस्य पितोरन्नस्य ओजसा बलेन त्रितः त्रिस्थानः त्रिषु स्थानेष्वप्रतिहतप्रभावः । सायणस्तु—त्रितो विस्तीर्णतमः प्रख्यातकीर्तिः । त्रिषु क्षित्यादिस्थानेषु तायमानोऽपि इन्द्रः वृत्रं मेघमसुरविशेषं वा विपर्वम् विपर्वाणम् ( विगतपर्वाणं—विगतसन्धिबन्धनम् ) कृत्वा वि-अर्दयत् विविधमर्दयति अपुनरावृत्तये अर्दतिर्गत्यर्थे उक्तोऽपि ( भ्वा० प० ) इह पीडनार्थे "इतश्च लोपः परस्मै पदेषु" ( पा० ३-४-९७ ) इतीकारलोपो बाहुलकात् । को हि नाम तत्स्तुत्यायसादते त्रिलोकाधिपति-( बलाधिपति-) रपीन्द्रः किंचिदप्यशक्तः कर्तुमित्यभिप्रायः ॥ १ ॥

अथास्य भाष्यम्—

**तं पितुं स्तौमि महतो धारयितारं बलस्य, तविषीति बलनाम । तवतेर्वा वृद्धिकर्मणः । यस्य त्रित ओजसा बलेन त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति ॥**

बलनाम । "तु वृद्धौ" इत्यस्य टिषच्[2] । तद्धितसर्वेभ्यो न्यायः ॥

अथावसरप्राप्ताः—

**नद्यो व्याख्यातास्तासामेषा भवति ॥४॥(२५)**

नद्यः (२०) ताः पुनरेता व्याख्याताः "नदना भवन्ति शब्दवत्य" इति ( नि० २-७-२ ) तासां नदीनामेषा स्तुतिर्भवति ॥ ४ ॥ (२५)

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया" ॥ ५ ॥
( ऋ० सं० ८-३-६ )

इममिति । प्रियमेधपुत्रस्य सिन्धुक्षित आर्षं जागतं नदीदेवताकम् । अत्र प्रधानभूताः सप्त नद्यः स्तूयन्ते, तदवयवभूताश्च तिस्रः इति सायणः । वस्तुतस्तु नव नद्य इति भाष्यम् । हे गङ्गे ! १ हे यमुने ! २ हे सरस्वति ! ३ हे शुतुद्रि ! ४ यूयं इमं मे मम स्तोमम् स्तोत्रम् आसचत आसेवध्वम् । "षच सेचने सेवने च" (भ्वा० आ०) लङ् । "छन्दसि परेऽपि" ( पा० १-४-८१ ) इत्याङः परप्रयोगः । एवमग्रेऽपि । हे परुष्ण्या ५ सह मरुद्वृधे ! ६ हे आर्जीकीये ! ७ त्वमपि असिक्न्या ८ वितस्तया ९ सुषोमया १० च सह आशृणुहि आभिमुख्येन स्थित्वा शृणु । अत्र बाहुलकाद्धेरलुक् । यद्वा हि निश्चयेन ॥ ५ ॥

अथास्य भाष्यम्—

**इमं मे गङ्गे ! यमुने ! सरस्वति ! शुतुद्रि ! परुष्णि ! स्तोममासेध्वम् असिक्न्या च सह मरुद्वृधे ! वितस्तया चार्जीकीये ! आशृणुहि सुषोमया चेति समस्तार्थः ॥**

**अथैकपदनिरुक्तम्—गङ्गा गमनात् ॥**

सा हि विशिष्टं स्थानं गच्छति गमयति वा प्राणिनो विशिष्टं स्थानमिति "गन्गम्यद्योः" ( उ० १-१२० ) इति गन्प्रत्ययः । पक्षेऽन्तर्भावितण्यर्थोऽत्र गमिः ॥ १ ॥

**यमुना—प्रयुवती गच्छतीति वा प्रवियुतं गच्छतीति वा ॥**

प्रयुवती प्रकर्षेण मिश्रयन्त्यन्याभिर्नदीभिः स्वान्युदकानि गच्छति । प्रवियुतं स्तिमितमिव तरङ्गैः । "यु मिश्रणामिश्रणयोः" ( अ० प० ) गच्छति ॥ २ ॥

**सरस्वती—सर इत्युदकनाम सर्तेः । तद्वती ॥**

सर्तेरसुनि ( उ० ४-१८८ ) सरः । उदकम् । तद्यभीक्ष्णं सरति—गच्छतीति । तेन विशिष्टेन सरसा तद्वती । विज्ञायते हि राजसूये सरस्वतीनामपामभिषेकार्थवादः । "वरुणस्य वाऽभिषिच्यमानस्येन्द्रियं वीर्यमपाक्रमत् । तत्रेधाऽभवत् । भृगुस्तृतीयमभवच्छ्रायन्तीयं सरस्वती तृतीयं प्राविशदिति" ॥३॥

**शुतुद्री=शुद्राविणी—क्षिप्रद्राविण्या—शु तुन्नेव द्रवतीति वा ॥**

शु—इति क्षिप्रनामसु पठितम् ( निघं० २-१५-१५ ) शु—क्षिप्रं द्रवति तच्छीला शुद्राविणी—तदेवाह—क्षिप्रद्राविणीति । द्राविणुशब्दस्थाने तुद्रादेशः पृषोदरादित्वात् । अत्रापरितुष्यन्नाह—आशु००वेति । अथवा आशु क्षिप्रमसौ

---

१. अस्या विनियोगं शौनक आह—"पितुं न्वित्युपतिष्ठेत नित्यमन्नमुपस्थितम् । पूजयेदशनं नित्यं भुञ्जीयादविकुत्सयन् ॥ १ ॥ नास्य स्यादन्नजो व्याधिर्विषमप्यमृतं भवेत् । विषं च पीत्वैतत्सूक्तं जपेद्विषविनाशनम् ॥ २ ॥ नावाग्यतस्तु भुञ्जीत नाशुचिर्न जुगुप्सितम् । दद्याच्च पूजयेच्चैव जुहुयाच्च हविः सदा ॥ ३ ॥ क्षुद्रयं नास्य किंचित्स्यादान्नजं व्याधिमाप्नुयात्" इति ॥

२. तविः सौत्रो धातुर्वृद्ध्यर्थः "तवेर्णिपच्" ( उ० १-४८ ) टित्वान्ङीप् ॥

तुन्नेव विद्धेव केनचित् द्रवतीति । अत्रार्थे आकारलोपः पूर्वपदे तुदेर्दस्य लोपो द्रवतेर्डद् । टिलान्डीप् "यस्येति च" ( पा० ६-४-१४८ ) इत्यकारलोपः ॥ (४)

**इरावती परुष्णीत्याहुः ॥**

येयमिरावती लोके प्रसिद्धा तामिमामेतस्मिन्मन्त्रे परुष्णीमाहुर्मन्त्रार्थदृशः निपातेनेतिना कर्मण उक्तत्वान्न द्वितीया । ( ५ ) सा कस्मात् ?

**पर्ववती-भास्वती । कुटिलगामिनी ॥**

**भास्वती** देदीप्यमानापि **पर्ववती** ग्रन्थिमती । "ग्रन्थिर्ना पर्वपरुषी" इत्यमरः । तथाच परुष् पर्व कौटिल्यं तद्वती **परुष्णी** । मत्वर्थे नः गौरादित्वात् ( पा० ४-१-४१ ) ङीष् । तदाह-**कुटिलगामिनी**-इति । तदस्याः पर्वत्वं यानि कुटिलानि तानि पर्वाणीव तस्याः, तैस्तद्वतीति दुर्गः ।

अथ-

**असिक्नी=अशुक्ला-असिता । सितमिति वर्णनाम । तत्प्रतिषेधोऽसितम् ॥**

**असिक्नी** कस्मात् ? सा हि **अशुक्ला असिता** । कथम् ? **सितमिति वर्णनाम** । स च पुनः शुक्ल इति प्रसिद्धो लोके । "सितासिते यत्र तरङ्गचामरे" इति तीर्थराजं प्रयागमधिकृत्य सितासिते गङ्गायमुने । अभिधानेऽपि ( अम० ) "अवदातः सितो गौरः" इत्युक्तम् **तत्प्रतिषेधः** । तस्य शुक्लस्य प्रतिषेधो विपरीतम् **असितम्** कृष्णम् तस्मात्कृष्णोदका असिक्नी नदी (६)

**मरुद्वृधाः सर्वा नद्यो, मरुत एना वर्धयन्ति ।**

**मरुतः** वर्षवायवः । **वर्धयन्ति** वर्षेण । तस्मात्प्रत्येकं नद्यभिधानमनुषज्यते विशेषणत्वेन । हे मरुद्वृधे ! गङ्गे ! यमुने ! -इत्यादि सर्वत्र योज्यम् । "वृधु वृद्धौ" ( भ्वा० आ० ) इगुपधलक्षणः कः ( पा० ३-१-१३५ ) ॥

**वितस्ता-ऽविदग्धा । विवृद्धा-महाकूला ।**

**अविदग्धा** विशेषेण न दग्धा । वैदेहको नामाग्निः स किल नदीरन्या निर्ददाह । न तामिति सामिधेनीब्राह्मणे विज्ञायते । अथवा **विवृद्धा** विस्तीर्णाऽत एव **महाकूला** महद्विस्तीर्णं कूलं तीरं यस्याः सा । नञो लोपे दग्धा इत्यस्यतस्ताशब्देन विपर्ययः । यद्वा वृद्धा इत्यस्य ( ७ ) ॥

**आर्जीकीयां विपाळित्याहुः ॥**

लोके "विपाशा तु विपाट् स्त्रियाम्" इत्यमरः ॥

**ऋजीकप्रभवा वा ॥**

अथ **वा** ऋजीको नाम पर्वतस्तस्मात्प्रभवतीत्यर्थेऽण् ( पा० ४-३-८३ ) तद्धितः । आर्जीका सैव आर्जीकीया । स्वार्थे छः ( पा० ४-२-१३८ ) अथवा—

**ऋजुगामिनी वा ॥**

अथ **वा ऋजुगामिनी** सती आर्जीकीया । अथ कथम् ?-

**विपाट् ? विपाटनाद्वा । विपाशनाद्वा । विप्रापणाद्वा ॥**

विपाटयत्यसौ भूमिमतिवेगाद्गच्छन्तीति **विपाट्** । "पट भेदने" ( चु० प० ) ण्यन्तात्क्विप् । अथ **वा विपाशनात्** पाशस्य विमोचनात् । तथा च व्यपाश्यन्तास्यामिति विपाट् । "सत्याप-पाश-" ( पा० ३-१-२५ ) इत्यादिना णिजन्ताद्विपाशशब्दादधिकरणे क्विप् । षत्वादि । अथ **वा विप्रापणात्** उदकानां, विपाट् । विपूर्वात् "पट गतौ" ( भा० प० ) इत्यस्माद्धेतुमण्ण्यन्तात्क्विप् । उपधावृद्धिः (८)

अथ विपाशनादित्यर्थे किमस्यां व्यपाश्यन्त ?

**पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतस्तस्माद्विपाडुच्यते ॥**

वसिष्ठः किल विश्वामित्रशापेन पुत्रेषु नष्टेषु पुत्रमरणशोकार्तो मुमूर्षुः पाशैरात्मानं बध्वास्यां ममज्ज । तस्य किल ते **पाशा अस्यां व्यपाश्यन्त** व्यमुच्यन्तोदकेन । ततः प्रभृति विपाडभवत् । ततः—

**पूर्वमासीदुरुञ्जिरा ॥**

नाम सा । उरुजलेत्यर्थः । वर्णविपर्ययात्साधुः ॥

**सुषोमा=सिन्धुः । यदेनामभिप्रसुवन्ति नद्यः । सिन्धुः स्यन्दनात् ॥**

सिन्धुः कस्मात् **सुषोमा** ? **यत्-एनाम् अभि** गत्य **प्रसुवन्ति** प्रवृद्धा भवन्ति बहुजला अन्याः प्रभूता **नद्यः** । "षु प्रसवैश्वर्ययोः" ( तु० प० ) मनिन्सन्वद्भावश्च बाहुलकात्तेन द्वित्वं गुणश्च । अथ **सिन्धुः** कस्मात् ? **स्यन्दनात्** । सा ह्यविच्छेदेन विशेषतः स्यन्दत इति । "स्यन्दू प्रस्रवणे" ( भ्वा० आ० ) "स्यन्देः संप्रसारणं धश्च" ( उ० १-११ ) इत्युप्रत्ययः ( ९ )

अथ—

**आप आप्नोतेः । तासामेषा भवति ॥ ५ ॥ (२६)**

**आपः** (२१) इत्येतत्पदम् । ताः पुनरेता **आप्नोतेः** । सर्वमाभिराप्यमिति । "आप्लृ व्याप्तौ" (स्वा० उ० ) "आप्नोतेर्ह्रस्वश्च" ( उ० २-४९ ) इति क्विप् । "अप्तृन्-" ( पा० ६-४-११ ) इति दीर्घः ॥ ५ ॥ (२६)

**"आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे" ॥ १ ॥**

( ऋ० सं० ७-६-५ )

आप इति । अम्बरीषस्य राज्ञः पुत्रः सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवताः । अपामुपस्पर्शने विनियोगः । हे

**आपः !** आपयित्र्योऽभिमतफलानाम् । यूयं **हि** यस्मात् कारणात् **मयोभुवः** मयोभावयित्र्यः । सुखभुव इति भाष्यम् । तथाच मय इति सुखनाम ( निघं० ३-६-७ ) तस्य भावयित्र्यः ( प्रापिकाः ) **स्थ** भवथ । अतः **ताः** तादृश्यो यूयम् **नः** अस्मान् **ऊर्जे** अन्नाय । ऊर्गित्यन्ननाम ( निघं० २-७-१५ ) यथा वयमन्नं लप्स्याम भोजनाय ( अन्नप्राप्तियोग्या भवाम ) । तथा **दधातन** धारयत धत्त वा । "तप्तनप्तनथनाश्च" ( पा० ७-१-२५ ) इति तस्य तनप् । अनुगृह्णीध्वमित्यर्थः । अन्नमस्मभ्यं दत्तेति समस्तार्थः । तथा **महे** महते च नः **रणाय** रमणीयाय **चक्षसे** दर्शनाय सम्यग्ज्ञानाय ( यथा वयं श्रुतिस्मृत्युदितसम्यग्दर्शना भूत्वा अन्नप्रयोगे वर्तेमहि तथा ) धत्त । अस्मान्सम्यग्ज्ञानं प्रति योग्यान्कुरुतेत्याशास्महे ॥ १ ॥

अथास्य भाष्यम्—

**आपो हि स्था सुखभुवस्ता नोऽन्नाय धत्त । महते च नो रणाय रमणीयाय च दर्शनाय ॥**

अथ—

**ओषधय ओषद्धयन्तीति वौषत्येना धयन्तीति वा । दोषं धयन्तीति वा । तासामेषा भवति ॥ ६ ॥ (२७)**

**ओषधयः (२२)** इत्येतत्पदम् । ताः पुनरेताः **ओषद् धयन्ति** यत्किंचिदोषत् शरीरे दहत् रोगजातं भवति क्षयादि तदेतदत्ताः सत्यो धयन्ति पिबन्ति नाशयन्ति । "उष दाहे" ( भ्वा० प० ) शता । "धेट् पाने" ( भ्वा० प० ) ततः किः । आत्वम् ( पा० ६-१-४५ ) लोपश्च तस्य ( पा० ६-४-६४ ) दलोपश्च निपातनात् । तदेवं ओषतेः शत्रन्तस्य पूर्वपदं धयतेरुत्तरपदम् । कर्तरि कारके । अथ **वा ओषति एना धयन्तीति** ओषधयः । ओषति क्लिश्यमाने कस्मिंश्चिदु-दरादावङ्गे एना धयन्ति पिबन्ति प्राणिनो दाहोपशमनाय । तावेव धातू । कर्मणि कारके किः । अथ **वा दोषं धयन्तीति** ओषधयः । यः कश्चिदुपजायते दोषो वातादिकृतः शरीरे तामेता धयन्तीति । अत्र दोषशब्दात्पूर्वपदं धयतेरेवोत्तरपदम् । दलोपोऽत्रापि परमादौ । कर्तर्येव कारके किः । **तासाम्** ओषधीनाम् **एषा** ऋक् स्ताविका **भवति** ॥ ६ ॥ (२७)

**"या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च" ॥ १ ॥** ( ऋ० सं० ८-५-८ )

**या** इति । ओषधिसूक्ते प्रथमैव । अग्निचयने क्षेत्रमनेन मन्त्रेण ग्राम्यारण्याभिरूप्यते इति दुर्गः । अथर्वणपुत्रस्य भिषङ्नाम्न आर्षमानुष्टुभमोषधिदेवताकम् । दीक्षितानां ज्वराद्युपतापे संजातेऽनेन सूक्तेन मार्जयेत् । सूत्रितं च "ओषधिसूक्तेन चाज्ञाव्यानुमृजेदि" ति सायणः । मन्त्रार्थस्तु—**याः** एताः **ओषधीः** ओषधयः । विभक्तिव्यत्यय आर्षः (पा० ३-१-८५ ) **पूर्वाः** प्रथमाः **जाताः** उत्पन्नाः । कुतः ? **देवेभ्यः** । न तावद्देवा उत्पद्यन्ते अथैता एव पूर्वमुत्पद्यन्ते । कियति काले ? **त्रियुगं पुरा** कलिद्वापारत्रेताभ्यः पूर्वम् आदिकाले ( आद्ये कृतयोगे ) **अहं बभ्रूणां** बभ्रुवर्णानां ( कपिलानाम् ) **शतं सप्त च** सप्ताधिकशतसंख्याकानि **धामानि** स्थानानि । प्रभावानङ्गजन्मानिवा "धामरश्मौ गृहे देहे स्थानेजन्मप्रभावयोः" इति मेदिनी । अनुलेपसंमार्जनाभिषेकादिरूपेणाश्रयभूतानि **नु** क्षिप्रम् **मनै** मन्ये (जाने) । "म्ना अभ्यासे" ( भ्वा० प० ) लडर्थे लोट् । पदव्यत्यय आर्षः ( पा० ३-१-८५ ) अभ्यासो हि ज्ञान एव पर्यवस्यति ॥ १ ॥

अथास्य भाष्यम्—

**या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा । मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा ॥**

**"शतं धामानि सप्त च"**

**धामानि त्रयाणि भवन्ति—स्थानानि—नामानि-जान्मानीति, जन्मान्यत्राभिप्रेतानि । सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधातीति वा ॥**

अत्र **बभ्रूणाम्** इति वर्णव्यापत्त्या **हरणानाम्** इति । ता हि क्षुदादि हरन्ति । **भरणानामिति वा** । अथ वा भर्त्र्यस्ताः सर्वस्य भूतग्रामस्य । **जन्मान्यत्राभिप्रेतानि** । अत्र एतस्मिन्मन्त्रे सप्तशतमोषधिजातयोऽभिप्रेताः । स्थानानीत्यर्थमभिप्रेत्याह—**सप्तेत्यादि** ॥

अथ—

**रात्रिर्व्याख्याता । तस्या एषा भवति ॥**

**रात्रिः (२३)** इत्येतत्पदम् । सा पुनरभिधानतोऽभिधेयतश्च **व्याख्याता** । "रातेर्वा स्याद्दानकर्मणः" ( नि० २-६-१ ) इति । **तस्या** रात्रेः । **एषा** स्तुतिर्भवति ॥ ७ ॥ (२८)

**"आ रात्रि ! पार्थिवं रजः पितुरप्रायि धामभिः । दिवः सदांसि बृहती वितिष्ठस आ त्वेषं वर्तते तमः" ॥**

---

१. देवानामपि ह्यन्नमनपेक्ष्य जीवनहेतुस्थितिर्नास्तीति पूर्वमन्नमुत्पद्यते पश्चाद्देवा इति ॥

२. ओषधयः स्वभावतः सर्वा एव पच्यमाना बभ्रुवर्णाः कपिलाः संपद्यन्ते सोमादयः ॥ "विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु" इत्यमरः ॥

३. भाष्यमते तु अन्यान्येवेत्यनुपदं व्यक्तीभविष्यति ॥

**आरात्रि** इति। कुशिकस्यार्षं रात्र्या वा। हे **रात्रि !** ङीषन्तमेतत्। (पा० ४-१-२५ वा०) नदी ह्रस्वत्वम् (पा० ७-३-१०७) या त्वम् **पितुः** मध्यमस्य मेघादेः (नि० ४-२१-१) **धामभिः** स्थानैः अन्तरिक्षेण सह (तदपि द्यापूर्यसे तमसा) **पार्थिवं रजः** पृथिवीलोकम् **अप्रायि** आपूपुरः। आपूरयसि, वर्तमाने लुङ् (पा० ३-४-६) एतावदेव न किं तु ? **दिवः** द्युलोकस्यापि यानि **सदांसि** सदनानि। येषु हि सदनेषु (स्थानेषु) द्युलोकवासिनो देवाः सीदन्ति (निवसन्ति) तान्यपि। **बृहती** महती सती (दूरेऽपि वर्तमाना) **वितिष्ठसे** विष्टभ्य तिष्ठसि। न केवलं विष्टभ्यैव तिष्ठसि–किं तर्हि ? **आ** आपूर्य द्युलोकमपि तत्पूरणातिशिष्टं **त्वेषम्** महत् **तमः** पुनरिममेवं लोकं प्रति आवर्तते, यस्यास्तव, सा त्वमस्माकं सर्वदा शिवा भवेत्याशास्महे॥

अथास्य भाष्यम्—

**आपूपुरस्त्वं रात्रि ! पार्थिवं रजः स्थानैर्मध्यमस्य दिवः सदांसि बृहती महती वितिष्ठस आवर्तते त्वेषं तमो रजः ॥**

व्याख्यातं मन्त्रार्थे। अथ—

**अरण्यान्यरण्यस्य पत्नी। अरण्यमपार्णं ग्रामात्। अरमणं भवतीति वा। तस्या एषा भवति ॥ ८ ॥ (२९)**

**अरण्यानी** (२४) इत्येतत्पदम्। सा पुनः **अरण्यस्य** वनस्य **पत्नी** पालयित्री देवता। अत्र "इन्द्रवरुण–" (पा० ४-१-४९) इत्यादिना स्त्रियामानुक् ङीष् च स पुंयोगे इति भाष्यकृदभिप्रैति। "हिमारण्ययोर्महत्त्वे" इति तु कात्यायनः। तन्मते महदरण्यमरण्यानी। **अरण्यं** कस्मात् ? **अपार्णं ग्रामात्**। तद्धि ग्रामादपार्णमपगतं भवति। "ऋ गतौ" (भ्वा० जु० प०) इत्यस्य निपात ऋणमिति (पा० ८-२-६०) यद्यप्येतदाधमर्ण्य एव निपातितं तथापीह धात्वर्थमात्रं विवक्षितं सह प्रयोगात्। तथा च अपार्णं सदरण्यं पृषोदरादिः (पा० ६-३-१०९) अथ वा **अरमणं भवतीति** अरण्यम्। रमेः प्रतिषेधपूर्वस्य रूपम्। नह्यरण्ये रतिर्भवति। **तस्याः** अरण्यान्या **एषा** स्तुतिर्भवति ॥ ८ ॥ (२९)

**"अरण्यान्यरण्यान्यसौ या प्रेव नश्यति। कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दतीँ३" ॥ १ ॥** (ऋ० सं० ८-८-४)

**अरण्यानीति**। ऐरम्मदस्य देवमुनेरार्षम्। उत्पन्नदिङ्मोहोऽयमध्वगरण्ये भीतोऽरण्याधिदेवतामरण्यानीं प्रतिब्रवीति। हे **अरण्यानि !** अरण्याधिदेवते ! **या असौ** त्वम्। अरण्यानि कान्ताराणि प्रति **प्रेव** पराचीव (पराङ्मुखीव) अनावर्तमाना **नश्यसि** अदृष्टा भवसि। "णश अदर्शने" (दि० प०) मया दृश्यमानानि व्रजस्येव पुरतो न बिभेषि। (निर्जने देशे वर्तमाना त्वामनष्टेव प्रतीयसे) सा त्वं **कथा** कथम् **ग्रामं न पृच्छसि** ग्रामं पृष्ट्वा तत्र न कथंगच्छसि ? निर्जनेऽरण्ये कथं रमसे ? अत्र हेत्वर्थे थाप्रत्ययः (पा० ५-३-२६)। नूनं **त्वा** त्वाम् **भीः** भयम् **न विन्दति इव** संप्रति न लभते किम् ?। वितर्के प्लुतः। इव संप्रत्यर्थे परिभैवार्थे वा ॥ १ ॥

**अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि। कथं ग्रामं न पृच्छसि। न त्वा भीविन्दतीव। इतीवः परिभयार्थे वा ॥**

अथ—

**श्रद्धा श्रद्धानात्। तस्या एषा भवति ॥९॥ (३०)**

**श्रद्धा** (२५) इत्येतत्पदम्। अत्र–श्रत्–इति सत्यनाम पूर्वपदम्। तदस्यां धीयत इति श्रद्धा **श्रद्धानं** तस्मात्। धर्मार्थककाममोक्षेषु अविपर्ययेणैवमेतदिति या बुद्धिरुत्पद्यते, तदधिदेवताभावाख्या श्रद्धेत्युच्यते। सा पुनराग्नेयं सर्वं प्रकाशमित्यग्निरेव। **तस्याः** श्रद्धाया **एषा** स्तुतिर्भवति ॥९॥ (३०)

**"श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः। श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि" ॥ १ ॥** (ऋ० सं० ८-८-९)

**श्रद्धयेति**। श्रद्धानाम कामायनी (कामगोत्रजा) ऋषिका तस्या आर्षमनुष्टुप् श्रद्धादैवत्यम्, लैङ्गिको विनियोगः। **श्रद्धया** उक्तपूर्वयाऽऽस्तिक्यबुद्ध्या **अग्निः** गार्हपत्याग्निः **समिध्यते** सन्दीप्यते। यदा हि पुरुषे श्रद्धा (अग्निगोचर आदरातिशय आस्तिक्यबुद्धिर्वा) जायते, तदैव पुरुषोऽग्नीन्प्रज्वालयति नान्यथा। **श्रद्धया एव हविः** पुरोडाशादि **हूयते** आहवनीये प्रक्षिप्यते। भाष्यकारस्तु–य एवाग्निः श्रद्धया समिध्यते कर्मणि, स एव साधु (शोभनं) समिध्यते। इतरो हि समिद्धोऽप्यसमिद्ध एव। अश्रद्धया समिद्धाग्निकर्मणः फलाभावादिति तदर्थः। एवमेव यदेव हविः श्रद्धया हूयते तदेव साधु हूयते। अन्यस्याफलत्वात्। उक्तं च–"नाश्रद्दधानाय हविर्जुषन्ति देवाः" इति।

१. रजः–लोक इत्युक्तमधस्तात् (नि० ४-१९)

२. तथाच निगमान्तरं संवदति–"त्वेषमित्था समरणं शिमीवतोरित्यादि" (ऋ० सं० २-२-२५-२) (नि० ११-८)

१. अहं तावदेतस्मिन्नरण्ये निरमणे भीतः कथं त्वं न बिभेषि ? इति भीषयमाण इवेति दुर्गः ॥

२. असाविति दृश्यमाने वेत्यर्थमभिव्यनक्ति ॥

३. न त्वमीषदपि बिभेषीति परिरीत्यर्थे ॥

४. पुरुषगतोऽभिलाषविशेषः श्रद्धेति सामान्येन सायण आह ॥

५. अत्र "षष्ठ्यर्थे चतुर्थीति वाच्यम्" (पा० २-३-६२ वा०) इति चतुर्थी ॥

एवं चेत्-भगस्य भागधेयस्य (धर्मस्य) मूर्धनि प्रधानाङ्गशिरसि । प्रधानमिदमङ्गं धर्मस्य या श्रद्धानाम । तदभावे धर्माभावात् । अपि च-वचसा वचनेनैव मन्त्रगतेन-"अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः" इत्यनेन एव (तदुद्घाव्य शिरः प्रकाशं) वेदयामसि आवेदयामः । आघोषयामो नाश्रद्धानस्य धर्म इति । अत्रो "इदन्तो मसि" (पा० ७-१-४६) इति मस इमागमः ॥ १ ॥

तथाच भाष्यम्—

**श्रद्धयाग्निः साधु समिध्यते, श्रद्धया हविः साधु हूयते । श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेनावेदयामः ॥**

अथ—

**पृथिवी व्याख्याता, तस्या एषा भवति ॥ १० ॥ (३१)**

पृथिवी (२६) व्याख्याता "अथ वै दर्शनेन पृथुः" इत्यादिना (नि० १-४-३) ॥ १० ॥ (३१)

**"स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः" ॥ ५ ॥**

(ऋ० सं० १-२-६)

स्योनेति । मेधातिथेरार्षम् । हिरण्यनाशप्रायश्चित्तेष्ट्यां भौमस्यैककपालस्य पुरोनुवाक्या । हे पृथिवि! त्वमस्माकं स्योना सुखा भव! कथम्? कथम्? अनृक्षरा निष्कण्टका निवेशनी निवासयोग्या, अथ निविष्टो यो नः अस्मभ्यं सप्रथः सर्वतः पृथु शर्म सुखं शरणं यच्छ देहि । "दाण् दाने" (भ्वा० प०) लिङ् "पाघ्राध्मा-" (पा० ७-३-७८) इत्यादिनाऽस्य यच्छादेशः । संहितायां दीर्घः । "अन्येषामपि दृश्यते" (पा० ६-३-१३७) इति ॥ ५ ॥

अथास्य भाष्यम्—

**सुखा नः पृथिवि! भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः । कण्टकः कन्तपो वा, कृन्ततेर्वा, कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति । यच्छ नः शर्म यच्छन्तु शरणं सर्वतः पृथु ॥**

अत्र ऋक्षरः=कण्टक उक्तस्तत्र ऋच्छतेः हिंसार्थस्य (तु० प०) करन्चि छस क्षे ऋक्षरः । कण्टकः=कण्टतिर्गतिकर्मसु (निघं० २-१४-२०) पठितः (भ्वा० प०) ततो ण्वुल् (पा० ३-१-१३३) इह हिंसार्थः । धातूनामर्थनिर्देशस्याधुनिकत्वात् अनेकार्थत्वाच्च । कन्तपो वा । कं-सुखं तपति-दहतीति पचादित्वात् "तप दाहे" (चु० प०) इत्यस्मादच् (पा० ३-१-१३४) तपयोर्वर्णविपर्ययः । अथ वा कृन्ततेः छेदनार्थस्य कृतीधातोः (रु० प०) ण्वुलि ऋकारस्याकारस्तकारस्य च ककारः । अथ वा गतिकर्मणः गत्यर्थस्य कण्टतेः कण्टकः स्यात् । यथोक्तमुपरिष्टात् । उद्गततमो भवति । वृक्षादतिशयेनोद्गतो यतस्ततो बिल्वादेः । कमहं तपयामीत्येवमर्थमुद्गतः कण्टकः ।

अथ—

**अप्वा व्याख्याता । तस्या एषा भवति ॥ ११ ॥ (३२)**

अप्वा (२७) इति पदम् । सा चैषा व्याख्याता "यदेनया विद्धोऽपवीयते व्याधिर्वा भयं वा" (नि० ६-३-३) इत्येवम् । तस्या अप्वायाः एषा स्तुतिर्भवति ॥ ११ ॥ (३२)

**"अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्" ॥**

(ऋ० सं० ८-५-२३ य० वा० सं० १७-४४ सा० सं० उ० आ० ९-३-५१ अ० सं० ३-२-५)

अमीषामिति । इन्द्रपुत्रस्य अप्रतिरथस्यार्षं त्रिष्टुप् । अप्वाख्या देवी देवता । हे अप्वे! पापाभिमानिदेवते! अमीषाम् अस्मच्छत्रूणां योद्धॄणाम् चित्तम् चित्तानि-मनांसि प्रतिलोभयन्ती प्रतिलोभयमाना विमोहयन्ती सती "लुभ विमोहने" (तु० प०) ण्यन्ताच्छतरि ङीप् अङ्गानि तेषामवयवान् शिरआदिकान् गृहाण स्वीकुरु सर्वगात्राण्याविश्य त्वयैत आविष्टसर्वगात्राः साध्वसिन उत्पन्नवेपथवः संमूढाः अप्रतिपक्षाः सन्तु । ततः परेहि परागच्छ पुनरन्यांश्छत्रून्ग्रहीतुम् । अतो भूयोभूयः करणेनैतानेव शत्रून् अभिप्रेहि अभि-प्रगच्छ । अभिप्रगत्य चैषां हृत्सु हृदयानि । द्वितीयार्थे सप्तमी (पा० ३-१-८५) शोकैः निर्दह । त्वया एते दग्धहृदयाः अमित्राः अस्मच्छत्रवः अन्धेन तमसा गाढान्धकारेण बुद्धिसंमोहलक्षणेन सचन्ताम् संसेव्यन्ताम् संश्लिष्यन्तामित्येतदाशास्महे "षच सेचने सेवने च" (भ्वा० आ०) कर्मणि लोडाशंसायाम् ॥ ६ ॥

अथास्य भाष्यम्—

**अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेहि अभिप्रेहि । निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्ताम् ॥**

---

१. सायणस्तु-उपक्रमोक्तरूपेण मन्त्रार्थं व्याख्याय-यद्वा-अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्यया अग्निः समिध्यते (?) श्रद्धाम् उक्तलक्षणायाः श्रद्धाया अभिमानिदेवतां भगस्य भजनीयस्य धर्मस्य मूर्धनि प्रधानभूते स्थानेऽवस्थितां वचसा वचनेन स्तोत्रेण आवेदयामसि अभितः प्रख्यापयाम इति व्याचख्यौ ॥

१. जातिरत्राभिधेया । तथा चोक्तं दुर्गेण-"रोगजातिर्वाभिधेया भयजातिर्वा" इति ॥

अथ—

**अग्नाय्यग्नेः पत्नी । तस्या एषा भवति ॥ १२ ॥ ( ३३ )**

**अग्नायी ( २८ )** इत्येतत्पदम् । सा पुनरग्नेः पत्नी स्वाहाख्या अन्या वा । "वृषाकप्यग्नि०" ( पा० ४-१-३७ ) इत्यादिना ऐकारादेशो ङीष् च । **तस्या** अग्नाय्याः ॥ १२ ॥ (३३)

**"इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये" ॥ २ ॥** (ऋ० सं० १-२-६)

इहेति । इह कर्मणि **अग्नायीम्** अग्निपत्नीम् **सोमपीतये** सोमपानाय **उपह्वये** आह्वयामि । आत्मनश्च **स्वस्तये** कल्याणाय **इन्द्राणीम्** इन्द्रस्य पत्नीम् । अपि च **वरुणानीम्** वरुणस्य पत्नीम् "इन्द्रवरुण०" ( पा० ४-१-४९ ) इत्यादिना आनुगागमो ङीष् च पुंयोगे ॥ २ ॥

**इति सा निगदव्याख्याता ॥ १३ ॥ ( ३४ )**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० नवमाध्यायस्य तृतीयः पादः ॥ ९ ॥ ३ ॥**

**इति सा** सेयमृक् **निगदेन** पाठमात्रेणैव **व्याख्याता** भवति ॥ १३ ॥ (३४)

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० नवमाध्यायस्य तृतीयः पादः ॥ ९ ॥ ३ ॥

---

## नवमाध्यायस्य चतुर्थः पादः ।

**अथातोऽष्टौ द्वन्द्वानि । उलूखलमुसले ॥**

उपक्रान्तादश्वादिवर्गाद्वैलक्षण्येनास्य पृथगधिकारवचनम् । **अथातः** शब्दावुक्तार्थौ । **अष्टा**विति परिसंख्या "पञ्च पञ्चनखा भक्ष्या" इतिवत् । उषासानक्ता, दैव्याहोताराविलनयोराशीलसामान्येन तन्मध्ये पूर्वं परिगणनेन पुनरुक्तिभियेहानुपन्यासः । मित्रावरुणादीनां तु पृथगपि स्तुत्युपपत्तेरिहानुपन्यसनम् । दिवमुसलयोश्च पृथक्स्तुत्यभावात्तत्सहभूतयोरुलूखलमुसलयोर्द्यावापृथिव्योरिहोपन्यासो न विरुध्यते । तदत्रोलूखलमुसलयोर्द्वव्यत्वात्प्रथमं समाम्नानम् । तयोः पृथिव्यायतनत्वस्य निरुपचारप्रसिद्धेः प्रचुरत्वाच्च द्वन्द्वयोः । **उलूखलमुसले ( २९ )** इत्येतत्पदम् । उलूखलं च मुसलं चेति द्वन्द्वे द्विवचनम् ॥

तयोः—

**उलूखलं व्याख्यातम् ॥**

उरुकरमित्यादिना ( ९-२० )

**मुसलं—मुहुसरम् । तयोरेषा भवति ॥ १ ॥ ( ३५ )**

तद्धि मुहुर्मुहुः सरति ( गच्छत्यभिहन्तुं ) व्रीह्यादिषु । तथा च मुहुःशब्दोपपदात्सर्तेः "पुरलोरलमुसलकुवल०" ( भो० सू० ) इत्यादिनाऽलच् प्रत्ययष्टिलोपो मुहुःशब्दस्य मुसभावश्च निपात्यते । उत्क्षिप्योत्क्षिप्य निपातनान्मुहुःसरलं मुसलम् । **तयोः** उलूखलमुसलयोः **एषा** अनन्तरीया स्तुतिर्भवति ॥ १ ॥ (३५)

**"आयजी वाजसातमा ता ह्यु१च्चा विजर्भृतः । हरी इवान्धांसि बप्सता" ॥ २ ॥**

( ऋ० सं० १-२-२६ )

**आयजीति** । शुनःशेपस्यार्षमुलूखलमुसलदैवत्यम् । ये एते उलूखलमुसले **आयजी** आभिमुख्येन मर्यादया वा यष्टव्ये पूज्ये **वाजसातमे** वाजानामन्नानां सातमे संभक्ततमे इति भाष्यम् । सायणस्तु—वाजं सनोतीति वाजसाः "षणु दाने" ( त० उ० ) "जनसन०" ( पा० ३-२-६७ ) इत्यादिना विट् प्रत्ययः । "विड्वनोरनुनासिकः स्यात्" (पा० ६-४-४१) इत्यात्वम् । तत आतिशायनिकस्तमप् । "सुपां सुलुग्०" ( पा० ७-१-३९ ) इति पूर्वसवर्णदीर्घः । **ता हि** ते खलु **उच्चा** उच्चैः प्रौढध्वनिर्यथा भवति तथा **विजर्भृतः** विह्रियेते । विपूर्वाद्धरतेः यङ्लुकि कर्मणि लट् । सायणमते कर्तरि । "हृग्रहोर्भश्छन्दसि" ( पा० ३-१-८४ वा० ) "रुग्रिकौ च लुकि" ( पा० ७-४-९१ ) इत्यभ्यासस्य रुगागमः । उलूखलमुच्छ्रायते च अवहननाय मुसलमुद्यम्यते । एतदुच्चैर्विहरणम् । न एते नित्यमस्माकं गृहे **हरी** अश्वौ **इव अन्धांसि** अन्नानि **बप्सता** भुञ्जाने संस्कारकलेन स्यातामित्याशास्महे । अत्र ( भाष्य- ) व्याख्याने क्रियापदमध्याहृतं भवति । सायणस्तु—बप्सता बप्सन्तौ हरी इव विजर्भृत इति व्याचष्ट ॥ २ ॥

---

१. नन्वत्रासाधारण्येनेन्द्राण्याद्या अप्युपादानादाग्नेय्या एवेति कथमुपपद्यताम् ? । मध्यमाभिसंबन्धात् । माध्यमिकोऽत्र देवगणः स्तूयते । अग्निरपि हि सोमपानसंबन्धे उक्तः—"सोमं पिब मन्दसानो गणश्रिभिः" (ऋ० सं० ४-३-२५-८) इति । हे अग्ने ! गणश्रिभिर्गणभावमाश्रयद्भिर्मरुद्भिः सह मन्दसानः सन् सोमं पिबेत्येवमर्थः सायणे द्रष्टव्यः ॥

२. अष्टावित्यनुक्तावपि पृथङ्निर्देशबलेन गणनयाष्टत्वसिद्धेः । यद्यप्यत्र हविर्धाने इत्यादि ३ पदानां द्वन्द्वत्वं नास्ति तथापि एकशेषस्यापि द्वन्द्वापवादभूतस्य द्वन्द्वत्वेनाभिधानम् द्वन्द्वार्थस्य साहित्यस्योभयत्र तुल्यत्वात् । दृष्टं ह्येतत्"मशकाय धूम" इति वाक्ये । मशकनिवृत्त्यर्थं इति हि तदर्थः । साहित्यं नामानेकस्यैकस्मिन्नेकरूपेणान्वय इति । परिसंख्यालक्षणमुक्तम्—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते" इति । "पञ्च पञ्चनखा भक्ष्याः पञ्च पञ्चनखेतराः । शशकः शल्लकी गोधा कूर्मः खड्गी तु पञ्चमः" इत्यत्र यथा ॥

१. उच्चैर्मुहुर्विहारं कुरुत इति तदर्थः ॥

अथास्य भाष्यम्—

**आयष्टव्ये अन्नानां संभक्ततमे ते द्युचैर्विहियेते हरी इवान्नानि भुञ्जाने ॥**

गतार्थमेतत् ।

**हविर्धाने हविषां निधाने । तयोरेषा भवति ॥ २ ॥ ( ३६ )**

**हविर्धाने** (३०) इत्येतत्यद्विवचनान्तं द्वन्द्वापवादैकशेष-निर्दिष्टमिति द्वन्द्वमध्येऽस्य परिगणनं भाक्तम् । ते पुनः सोमलतालक्षणानि हवींषि निधीयन्ते ययोरित्यधिकरणे ल्युट् ( पा० ३-३-११७ ) पात्रविशेषौ । **तयोर्हविर्धानयोः एषा स्तुतिर्भवति** ॥ २ ॥ (३६)

**"आ॒वामु॒पस्थ॑मद्रुहा दे॒वाः सी॑दन्तु य॒ज्ञिया॑ः । इ॒हाद्य सोम॑पीतये" ॥** ( ऋ० सं० २-८-१० )

**आवामिति** । गृत्समदस्यार्षं गायत्रम् । हविर्धानदैवत्यम् । द्यावापृथिवीदैवत्यम् वा । एवमनेनापि ऋक् । हविर्धानप्रवर्तने विनियोगः । हे **हविर्धाने** ! हविषां निधाने । तद्रूपे द्यावापृथिव्यौ ! । **अद्रुहा** अद्रोग्धव्ये द्रोहवर्जिते ! वा । **वाम्** युवयोः **उपस्थम्** उपस्थे उपस्थाने ( यत्र युवामुपगम्य स्थिते तत्र ) सप्तम्यर्थे द्वितीया ( पा० ७-१-३९ ) **यज्ञियाः** यज्ञसंपादिनः ( यज्ञार्हाः ) **देवाः इह** एतस्मिन्यज्ञकर्मणि **अद्य** अस्मिन्नहनि **सोमपीतये** सोमपानाय **आसीदन्तु** निषीदन्तु सन्निहिता भवन्तु । इत्येतदाशास्महे ॥ ६ ॥

अथास्य भाष्यम्—

**आसीदन्तु वामुपस्थ उपस्थाने यज्ञिया देवा यज्ञसंपादिनः इहाद्य सोमपानाय ॥**

गतार्थमेतत् ॥

**द्यावापृथिव्यौ व्याख्याते । तयोरेषा भवति ॥ ३ ॥ ( ३७ )**

**द्यावापृथिवी** (३१) इत्येवमुपक्रान्ते "वा छन्दसि" ( पा० ६-१-१०९ ) इति पूर्वसवर्णेन । **द्यावापृथिव्यौ** द्यौश्च पृथिवी चेत्येते पदे द्वन्द्वनिर्दिष्टे **व्याख्याते** । तत्र दिवो द्युरर्थात् "दिवेर्डिविः" ( भो० सू० ) दीव्यति द्योतत इति द्यौः पृथिवी च व्याख्याता भूमिनामसु । "प्रथेः षिवन् संप्रसारणं च" ( उ० १-४८ ) इति साधुः । इयं च पञ्चाशत्कोटियोजनविस्तीर्णेति पौराणिका आमनन्ति । द्यौश्च पृथिवी चेति द्वन्द्वे "दिवो द्यावा" ( पा० ६-३-२९ ) इति द्यावादेशः । **तयोर्द्यावापृथिव्योरेषा स्तुतिर्भवति** ॥ ३ ॥ ( ३७ )

१.-२. निघण्टुपाठे ॥

**"द्यावा॑ नः पृथि॒वी इ॒मं सि॒ध्रम॒द्य दि॑वि॒स्पृश॑म् । य॒ज्ञं दे॒वेषु॑ यच्छताम्" ॥ ५ ॥**

( ऋ० सं० २-८-१० )

**द्यावेति** । उक्तार्षादिः । **द्यावापृथिवी** द्यावापृथिव्यौ **नः** अस्माकम् **सिध्रम्** स्वर्गादेः साधकम् **दिविस्पृशम्** द्यां यः स्पृशति तमेवंगुणं ( देवान्गच्छन्तम् ) **इमं यज्ञं देवेषु यच्छताम्** नियच्छताम् । देवेभ्यो दत्तम् । इत्येतदाशास्महे ॥ ५ ॥

अथास्य भाष्यम्—

**द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् ॥**

गतार्थमेतत् ।

**विपाट्छुतुद्र्यौ व्याख्याते । तयोरेषा भवति ॥ ४ ॥ ( ३८ )**

"विपाट्छुतुद्री" ( ३२ ) इत्येवमुपक्रान्ते **विपाट्छुतुद्र्यौ** विपाट् च शुतुद्रिश्चेत्येते व्याख्याते । तत्र "विपाट् च विपाटनाद्वा" ( ९-२६ ) इत्यत्र । "शुतुद्री शुद्राविणी" ( ९-२६ ) इति "तद्यदिव उपरिष्टात्तद्व्याख्यास्यामः" इत्येतत् प्रतिज्ञापूर्वम् । **तयोर्विपाट्छुतुद्र्योरेषा स्तुतिर्भवति** ॥ ४ ॥ ( ३८ )

**"प्र पर्व॑तानामुश॒ती उ॒पस्था॒दश्वे॑ इव॒ विषि॑ते॒ हास॑माने । गावे॑व शु॒भ्रे मा॒तरा॑ रिहा॒णे विपा॑ट्छुतु॒द्री पय॑सा जवेते" ॥ १ ॥**

( ऋ० सं० ३-२-१२ )

**प्रेति** । विश्वामित्रस्यार्षं त्रिष्टुप् ऐन्द्री । विश्वामित्रो ब्रवीति—ये एते **विपाट्छुतुद्री** विपाट्छुतुद्र्यौ "वा छन्दसि" ( पा० ६-१-१०६ ) इति वा दीर्घः । **पर्वतानाम्** शैलानां ( मेघानां वा ) **उपस्थात्** उत्सङ्गात् निर्झरात् ( मध्यप्रदेशाद्वा ) निर्गत्य **उशती** उशत्यौ कामयमाने । "वश कान्तौ" ( अ० प० ) शत्रन्तान्ङीप् । "वा छन्दसि" ( पा० ६-१-१०६ ) इति वा पूर्वसवर्णः । संप्रसारणम् ( पा० ६-१-१६ ) समुद्रगमनं परस्परसमागमं वा **पयसा** उदकेन "पूर्णे" इति शेषः । उपलक्षणे वा तृतीया ( पा० २-३-२१ ) **प्रजवेते** प्रकृष्टेन जवेन ( वेगेन ) गच्छतः । "व्यवहिताश्च"

१. अत्र सायणः—"यद्यपि सूक्ते षष्ठ्यां सप्तम्यां च विश्वामित्रेण नद्यः स्तूयन्ते तथापि इन्द्र एव देवता सूक्तविनियोगे लैङ्गिकः । पुरा किल विश्वामित्रः पैजवनस्य सुदासो राज्ञः पुरोहितो बभूव । स च पौरोहित्येन लब्धधनः सर्वं धनमादाय विपाट्छुतुद्र्योः संभेदमाययावनुययुरितरे । अथोत्तितीर्षुर्विश्वामित्रोऽगाधजले ते नद्यौ दृष्ट्वोत्तरणार्थमाद्याभिस्तिसृभिस्तुष्टावेति ॥

२. दुर्गोक्तोऽयमर्थः ॥

( पा० १-४-८२ ) इति प्रस्य व्यवहितप्रयोगः । ते अस्माकं गाधे भवतम् । इत्येतदाशास्महे । अत्र गमने दृष्टान्ताः- विषिते मन्दुरातो विमुक्ते हासमाने अन्योन्यं जवेन स्पर्धमाने । यद्वा हर्षमाणे ( हृष्यन्त्यौ ) त्वरया गच्छन्त्यौ ( परस्परं हृष्यन्त्यौ वा ) अश्वे वडवे इव । तथा-शुभ्रे शोभने कल्याण्यौ मातरा मातरौ । निपातः ( पा० ६-३-१३ ) नवप्रसूते गावा इव गावौ यथा । सन्धिरार्षः । वत्समेकं ( सं ) रिहाणे प्रलेढुमिच्छन्त्यौ । अन्तर्णीतसनर्थोऽत्र लिहिः ( अ० उ० ) छान्दसो रः । ते यथा शीघ्रं गच्छतस्तद्वदित्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**पर्वतानामुपस्थादुपस्थानादुशन्त्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायाम् । हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते ॥**

विषण्णे-विभागेनैकस्मिन् मुक्ते, कास्मिंश्चिद्युक्ते युगादौ वेति दुर्गः । प्रजवेते । यद्यपि जुइति सौत्रो धातुर्गतौ वेगे चेति पठ्यते ( सि० कौ० ) स च परस्मैपद्येव अविशेषात्, तथापि व्यत्ययेनात्रात्मनेपदं बोध्यम् ( पा० ३-१-८५ ) "जु गतौ" इति क्षीरस्वामिनः । तन्मत उभयपदी । गतार्थमन्यत् ।

**आर्त्नी-अर्तन्यौ वा-ऽरण्यौ वा-ऽरिषुण्यौ वा । तयोरेषा भवति ॥ ५ ॥ ( ३९ )**

आर्त्नी ( ३३ ) धनुःप्रान्ते । ते हि-अर्तन्यौ वा ऋतेर्धातोर्गत्यर्थस्य, गमयतस्त इषून् । "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" ( उ० ४-५१ ) इति बाहुलकान्निप्रत्ययो धातोरार्तभावश्च "कृदिकारात्-" ( पा० ४-१-४५ वा० ) इति ङीष् । "गते ज्यया ऋच्छमाणे संगच्छेते हिंसासाधने वा भवतः" इति देवराजः ॥ ५ ॥ ( ३९ )

**"ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान्" ॥ ४ ॥**

( ऋ० सं० ५-१-१९ ) ( य० वा० सं० २९-४ )

त इति । भरद्वाजपुत्रस्य पायोरार्षं जागतमार्त्नीदैवत्यम् । आर्त्न्योरेवानुमन्त्रणमश्वमेधेऽनेन क्रियते । ये आर्त्नी आर्त्न्यौ धनुष्कोट्यौ । समना समनसौ एककर्तृके योषे योषितौ ( स्त्रियौ ) "स्त्री योषिदबला योषा" इत्यमरः । इव आचरन्ती आचरन्त्यौ ते यथा एकं भर्तारं प्रत्याचरन्त्यौ भवतः परिष्वक्तुम् । एवमाकृष्टारं प्रति नित्यमाचरन्त्यौ भवत आनमन्त्यौ । ते उपस्थे गुह्याङ्गे ( भगे ) माता पुत्रमिव बिभृताम् धारयेताम् रक्षणायाकृष्टारं राजानम् ( इत्यध्वर्योः स्तुतिः ) । किं च इमे धनुष्कोट्यौ संविदाने संजानाने संवादमिव कुर्वाणे । परस्परत आकर्षणाभिप्रायमेतत् । आकृष्यमाणयोस्तयोः संवाद इव परस्परतो भवति । विस्फुरन्ती विस्फुरन्त्यौ । सर्वत्र "वा छन्दसि" ( पा० ६-१-१०६ ) इति वा पूर्वसवर्णः । विहिंसन्त्यौ नित्यम् अमित्रान् अस्य राज्ञः शत्रून् अपविध्यताम् विनाशयताम् इत्येतदाशास्महे ॥ ४ ॥

अथास्य भाष्यम्—

**ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नन्त्यावमित्रान् ॥**

गतार्थमेतत्—

**शुनासीरौ—शुनो वायुः शु इत्यन्तरिक्षे, सीर आदित्यः सरणात्, तयोरेषा भवति ॥ ६ ॥ ( ४० )**

शुनासीरौ ( ३४ ) इत्येतदवयवशो निर्वक्ति । अत्र शुनः वायुः । कथम् ? शु-इत्यन्तरिक्षे तत्र नयति गच्छतीति । तथा च शु-शब्दोपपदान्नयतेर्गत्यर्थात् "अन्येष्वपि दृश्यते" ( पा० ३-२-१०१ ) इति डः । डित्वाट्टिलोपः । सीर आदित्यः सरणात् । स हि नित्यं सरति गच्छतीति सीरः । सर्तेर्गत्यर्थात् ( भ्वा० प० ) डिण्डीर-वानीर-गभीर-गम्भीर-कुम्भीर-सीर-काश्मीर-जम्बीर-कीर-तीरादयः" इतीरन्प्रत्ययष्टिलोपश्च निपात्यते । शुनश्च सीरश्चेति द्वन्द्वे "देवताद्वन्द्वे च" ( पा० ६-३-२६ ) इति पूर्वपदस्यानङ् । तयोर्वायुसूर्ययोरेषा स्तुतिर्भवति ॥ ६ ॥ ( ४० )

**"शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः । तेनेमामुपसिञ्चतम्" ॥**

( ऋ० सं० ३-८-९-५ ॥ य० वा० सं० १२-६९ ॥ अ० सं० ३-१७-७ )

---

१. पतं च प्रकरणवशलभ्यमर्थं दुर्ग आह ॥

२. "वाजिशाला तु मन्दुरा" इत्यमरः । "षिञ् बन्धने" (क्र्या० उ०) क्तः विपूर्वः । संहितायां "परिनिविभ्य०" (पा० ८-३-७०) इति षत्वम् ॥

३. योऽयं गतिवृद्धिहिंसासु सौत्रः पठ्यते ( सि० कौ० ) ॥

१. अध्याहृतमेतदर्थवशाद्दुर्गेण ॥

२. यद्वा शुशब्द आशु इत्येतदर्थक उक्तः ( निघं० २-१५ -१५ ) तदर्थविशिष्टात् "शुन गतौ" (तु० प०) इत्यस्मादिगुपधलक्षणः । कः ( पा० ३-१-१३५ ) क्षिप्रं गच्छत्यन्तरिक्षमिति शुनो वायुः ॥

३. उणादौ तु "कृशॄपृकटिपटिशौटिभ्य ईरन्" ( उ० ४-२९ ) इति पठ्यते । बाहुलकान्नीरोऽपि । डिण्डीरेत्यादि तु भोजसूत्रम् ॥

**शुनेति** । वामदेवस्यार्षं गायत्री । शुनासीर्ये विनियोगः । **हे शुनासीरौ !** वायुसूर्यौ ! युवाम् **इमाम्** अस्माकं स्तुतिलक्षणाम् **वाचम् जुषेथाम्** सेवेथाम् । "जुषी प्रीतिसेवनयोः" ( तु० आ० ) लोट् प्रार्थनायाम् ॥ **यत् पयः** उदकम् युवां **दिवि** द्युलोके **चक्रथुः** संभरथः । **तेन** पयसा **इमाम् पृथिवीम् उपसिञ्चतम्** अभिवर्षतम् । एवमसद्वागासेविता युवाभ्यां भविष्यतीति ॥ ७ ॥

## इति सा निगदव्याख्याता ॥

**इति सा** सेयमृक् **निगदेन** पाठमात्रेण **व्याख्याता** भवति ।

## देवी जोष्ट्री –देव्यौ जोषयित्र्यौ ॥

**देवीजोष्ट्री** ( ३५ ) इत्येतद्द्वन्द्वनिर्दिष्टमेकं पदं देवी च जोष्ट्री चेति । "वा छन्दसि" ( पा० ६-१-१०६ ) इति वा पूर्वसवर्णः । ते पुनरेते **देव्यौ** प्रकाशमाने । दीव्यतेः पचाद्यजन्तान्ङीप् ( पा० ४-१-१५ ) देवडिति पचादौ पाठात् ( पा० ३-१-१३४ ) **जोषयित्र्यौ** सर्वस्य तर्पयित्र्यौ । जुषतेस्तृन्प्रत्ययः ( उ० ४-१५४ ) षित्वान्ङीष् ( पा० ४-१-४१ ) जोष्ट्री । के पुनस्ते ?—

**द्यावापृथिव्याविति वा,-ऽहोरात्रे इति वा, शस्यं च समा चेति कात्थक्यः । तयोरेषः संप्रैषो भवति ॥ ७ ॥ ( ४१ )**

**अहोरात्रे** इति पूर्ववल्लिङ्गता छान्दसी । "हेमन्तशिशिरावहोरात्रे च छन्दसि" ( पा० २-४-२८ ) इति । **शस्यं** व्रीह्यादि । **समेति** संवत्सरः । "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः ॥ इति **कात्थक्यो** मुनिराह । अत्राहोरात्राद्यर्थेषु एकशेषगर्भो द्वन्द्वोऽभिमतः । जसि वा पूर्वसवर्णः ( पा० ६-१-१०६ ) इति बोध्यम् । एवमग्रेऽपि ॥ ७ ॥ ( ४१ )

"दे॒वी जोष्ट्री॑ व॒सुधि॑ती॒ ययो॒र॒न्याघा द्वेषां॑ᳫसि यू॒यव॑द॒न्याव॑क्ष॒द्वसु॒ वार्या॑णि॒ यज॑मानाय वसु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑"

( य० वा० सं० २८-१५ )

**देवीति** । मैत्रावरुणस्यार्षम् । एकाधिकाऽतिजगती । स ब्रवीति । ये **देवीजोष्ट्री !** देव्यौ जोषयित्र्यौ ! **वसुधीती !** वसुधान्यौ वसूनां ( धनानाम् ) निधानभूते ! धारयित्र्यौ ! वा । महीधरस्तु—वसुनो धीतिर्धारणं याभ्याम् ते इति व्याख्यत् । **ययोः** देव्योर्मध्ये **अन्या** एका **अघा** अघानि । शेर्लोपः ( पा० ६-१-७० ) एवमग्रेऽपि । पापानि **द्वेषांसि** दौर्मनस्यानि यान्यप्रियाण्यस्माकं तानि **युयवत्** अवयावयति । "यु पृथग्भावे" ( अ० प० ) पृथक्करोति । लकारव्यत्यय आर्षः । **अन्या** पुनः **वसुवने** वसुनः वननाय संभजनाय । "वन संभक्तौ" ( भ्वा० प० ) वसुधानाय ( वसुविशिष्टस्य निधानाय च **यजमानाय वार्याणि** वननीयानि वरणीयानि भोगयोग्यानि **वसु** वसूनि । शेर्लोपः पूर्ववदेव । **आवक्षत्** आवहति । ददातीत्यर्थः । ते **वसुधेयस्य** वसुविशिष्टस्य ( प्रतिविशिष्टेन धनेन साधितस्य ) अस्य पृषदाज्यस्य स्वमंशम् **वीताम्** पिबेतां कामयेतां वा । **हे होतः !** त्वमेतैर्यज इति संप्रैषः वीधातुः खादने उक्त ( अ० प० ) पानेऽपीह निरुक्तः । पदव्यत्यय आर्षः ॥ १५ ॥

अथास्य भाष्यम्—

**देवीजोष्ट्री—देव्यौ जोषयित्र्यौ वसुधीती—वसुधान्यौ । ययोरन्याऽघानि द्वेषांस्यवयायात्यावहत्यन्या वसूनि वननीयानि यजमानाय वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति संप्रैषः ॥**

गतार्थमेतत् ।

**देवी ऊर्जाहुती—देव्या ऊर्जाह्वान्यौ । द्यावापृथिव्याविति वा—ऽहोरात्रे इति वा शस्यं च समा चेति कात्थक्यस्तयोरेषः संप्रैषो भवति ॥ ९ ॥ ( ४२ )**

**देवी ऊर्जाहुती** ( ३६ ) इत्येतदपि द्वन्द्वनिर्दिष्टमेकमेव नैघण्टुकं पदमिति "षट्त्रिंशत्पदानि" इत्यस्योपपत्तिः । अत्रापि पूर्ववत्सर्वं बोध्यम् ॥ ९ ॥ ( ४२ )

"दे॒वी ऊ॒र्जाहु॑ती॒ इष॒मूर्ज॑म॒न्याऽव॑क्ष॒त्सग्धिं॒ सपी॑तिं॒ म॒न्या, नवे॑न॒ पूर्वं॒ दय॑माना॒: स्याम॑ पु॒राणे॑न॒ नवं॑ ता॒मूर्ज॑मू॒र्जाहु॑ती॒ ऊ॒र्जय॑माने अधातां वसु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑"

( य० वा० सं० २८-१६ )

---

१. अत्र मुद्रितपुस्तकेषु पाठभेदो बहुधा दृश्यते । तथापि दुर्गधृत एव भाष्यसंमत उपन्यस्तः ॥

२. "एकोऽन्यार्थे प्रधाने च"ति पर्यायताऽनयोः । एवमग्रेतनेऽपि प्रैषे द्रष्टव्यम् ॥

१. समजनं संविभज्य दानं बन्धुभ्यो भोगो वा । अत्र वननं वनः । भावेऽप्प्रत्ययो व्यत्ययेन सप्तमी (पा० ३-१-८५) ॥

२. दुर्गोक्तोऽयमर्थः । भाष्येऽपि संदिग्धमेवोक्तम् । ततश्च वसुपदं तद्विशिष्टपरम् । वनतिरिह निधाने भवति । दुर्गव्याख्याने अस्य पृषदाज्यस्य स्वमंशमिति व्याख्यादर्शनात् वसुधेयस्यास्येति पाठोऽवगम्यते चेत्तदा वसुधेयस्येत्यस्यैव वसुधानायेत्यर्थः ॥

३. अत्रापि पाठभेदो मुद्रितपुस्तकेषु सुमहान्दृश्यत इति पूर्वतनैव रीतिरिहाप्यादृता ॥

**देवीति**। विकृतिरियं मैत्रावरुणीया। अधस्तनप्रैषोक्त एव देवताविकल्पः। **देवी** देव्यौ पूर्वप्रैषोक्ते **ऊर्जाहुती** ऊर्जाह्वान्यौ ऊर्जस्यान्नस्य निष्पादयित्र्यौ। ऊर्गित्यन्ननाम इति भाष्यम् (नि० ३-८) तदेव पचाद्यजन्तम् (पा० ३-१-१३४) इह दुर्गेणोपन्यस्तम्। एवमेवोवटोऽपि। महीधरस्त्वावन्तमाहोर्जेति। देवराजस्तु हेतौ तृतीयान्तमुक्त्वा ऊर्जा हेतुभूतयाऽऽह्वातव्ये इत्येवं व्याचष्ट। सर्वथापि द्यावापृथिव्यौ ऊर्जाह्वान्यावुच्येते। तत्र **अन्या** एका **इषम्** अन्नादि (निघं० २-७-१४) ऊर्जं व्रीह्याद्यन्नोपसेचनं रसं च क्षीरादिकं च **आवक्षत्** आवहति। **अन्या** अपरा **सग्धिम्** सह जग्धिं (भोजनं) पुत्रपौत्रादिभिः। उपनामितस्यान्नस्य, **सपीतिं** च सह बन्धुभिः पानं च दुग्धादेरावहति। आभिमुख्येन प्रयच्छति तथा, यथा बन्धुभिः सह पिबेम भुञ्जीमहि चेति वर्तुलार्थः। तथा च तद्वद्वन्नमस्तु यथा **नवेन पूर्वं** पुराणं **दयमानाः** रक्षन्तः। "दय दानगतिरक्षणहिंसादानेषु" (भ्वा० आ०) चानश् ताच्छील्ये[1]। **स्याम** भवेम। **पुराणेन** च नवं धान्यं दयमानाः स्याम, उभयथापि गृहकृत्ये व्यवहराम इत्यर्थः। **ताम्** एवं पूर्वोक्तलक्षणाम् **ऊर्जम्** अन्नम् **ऊर्जाहुती** ऊर्जा बलं तद्युक्ता आहुतिर्होमो ययोस्ते देव्यौ **ऊर्जयमाने** बलवत्तां प्राणवत्तां च नित्यं कुर्वाणे। "ऊर्ज बलप्राणनयोः" (चु० प०) ण्यन्ताल्लटश्चानश्। **वसुवने** वसुनः धनस्य वननाय संभजनाय। वसुधानाय (वसुविशिष्टस्य निधानाय) च **अधाताम्** दत्तां यजमानायेति पूर्वस्मादभिसंबन्धः। अथ च **वसुधेयस्य** प्रतिविशिष्टेन वसुना साधितस्यास्य पृषदाज्यस्य स्वमंशं **वीताम्** पिबेताम् कामयेतां वा, मैत्रावरुणो ब्रवीति-हे होतः! त्वमेते **यज** इति संप्रैषः॥१६॥

अथास्य भाष्यम्—

**देवी ऊर्जाहुती–देव्या ऊर्जाह्वान्यावन्नं च रसं चावहत्यावहत्यन्या सह जग्धिं च सह पीतिं चान्या, नवेन पूर्वं दयमानाः स्याम पुराणेन नवं, तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा, यजेति संप्रैषो यजेति संप्रैषः॥ १० ॥ ( ४३ )**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां०**
**नवमाध्यायस्य चतुर्थः पादः॥ ९ ॥ ४ ॥**

इहाध्यायसमाप्त्यर्थोऽन्तेऽभ्यासः[2]। अन्यत्सर्वं गतार्थम्॥ १० ॥ ( ४३ )

इति श्रीमद्यास्कमुनिप्र० निरुक्तविवृतौ दै० कां०
नवमाध्यायस्य चतुर्थः पादः॥ ९ ॥ ४ ॥
नवमाध्यायः समाप्तः।

---

१. "ताच्छील्यवयोवचनशक्तिषु चानश्" (पा० ३-२-१२९) सततकरणं च ताच्छील्यम्। तथा चोक्तम्-"ऊर्जयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः" इति (सि० कौ०)॥

२. प्रतिज्ञाभ्यासो निगम इति निगमलक्षणलक्षणायेत्यर्थः॥

## दशमाध्यायस्य प्रथमः पादः।

एवं व्याख्यातानि पृथिवीस्थानदेवतापदानि समाम्नायानुक्रमेणाधुना मध्यमस्थानदेवतापदानि निर्वक्तव्यानि, तदर्थमिदमारभ्यते—

### अथातो मध्यस्थाना देवताः॥

**अथ**शब्दोऽत्र विशेषाधिकारार्थः। **अतः**शब्द आनन्तर्यार्थः। मध्यं स्थानमेतासामिति **मध्यस्थानाः**। **देवताः** वाय्वाद्याः "वक्ष्यन्त" इति वाक्यशेषः। देवता इति बहुवचनं भेदपक्षे। एकैव नैरुक्तानां देवता, त्रित्वाभ्युपगमात्[1]। एतस्यैव मध्यमस्य पर्यायवचनान्येतानि वाय्वादीनि रोदस्यन्तानि ६९ गुणविशेषतो भवन्ति। तथैवोत्तमस्य ज्योतिषो दृश्यन्ते भगप्रभृतीनि॥

### तासां वायुः प्रथमगामी भवति॥

यद्यपीन्द्रो मध्यमस्थानस्य मुख्यमभिधानमिति प्रथमं समाम्नातव्य आसीत् तथापि मध्यमस्य वर्षकर्मोपलक्षणत्वात्तत्र च वायोरेवाधिकारः[2] प्रथम इति स एव प्रथममुपन्यस्तः।

अथ वायुं निर्वक्ति—

### वायु–र्वातेर्वेतेर्वा स्याद्गतिकर्मणः। एतेरिति स्थौलाष्ठीविरनर्थको वकारः। तस्यैषा भवति॥१॥

**वायुः** (१) इत्ययं **वातेः**। "वा गतिगन्धनयोः" (अ० प०) इत्यस्मात् "कृवापा०" (उ० १-१) इत्युण् प्रत्ययः। "आतोयुक्-" (पा० ७-३-३२) इति युगागमः। **वेतेः**। "वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु" (अ० प०)

---

१. स्थानत्रये तिस्रो देवतास्तैरभ्युपेताः। अग्निवाय्वादित्या हि भूर्भुवःस्वर्देवताः समाम्नाताः॥

२. वाय्वात्मनैव हि मध्यम ऊर्जन्मासात्परतः (तदारभ्य) सार्वदिकमुदकमुपसंहरन्नोषधिवनस्पतिजलाशयेभ्यः। अन्तरिक्षलोकस्य गर्भभूतमुदकमुपचिनोति, स मासाष्टकेन संभृतोदकगर्भो विपक्वः प्रावृषं प्राप्य प्रसवाय कल्पते। तदुक्तम्–

" वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे।
ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति॥" इति।

तदेवं वर्षकर्मारम्भे वाय्वात्मनैव मध्यमो व्याप्रिय इति युक्तं वाय्वभिधानस्य प्रथमसमाम्नानम्। किं च स एव संभृतोदकगर्भो वायुमेघजालेन नभो विवृण्वन् मध्यमो वरुणः संपद्यते, ततो रुदन्रुद्रः। तत इरा-(मुदक-)न्ददिन्द्रः। ततो रसान्प्राजयन् पर्जन्यः। एवमादिर्मध्यमस्य जगदनुग्रहाय वर्षप्रदानसिद्धये गुणोपजनक्रमः। अनयैव गुणोपजनक्रमानुपूर्व्या वायुः १ वरुणः २ रुद्रः ३ इन्द्रः ४ पर्जन्यः ५ इत्येवमाद्या समाम्नाये देवतानामानुपूर्वी। तदेतत्स्फुटं द्युस्थाने गुणान्तरजननानुपूर्व्यं ज्योतिर्मण्डलस्य सवितृप्रभृतिषु द्रष्टव्यम्॥

इत्यस्य बाहुलकादुणि वृद्धिरायादेशः । एतेः । "इण् गतौ" ( अ० प० ) इत्यस्मात् "छन्दसीणः" ( उ० १-२ ) इत्युणि वकारोपजन इत्याह—**अनर्थको वकार** इति । एतच्च स्थौलाष्ठीविराचार्यो[२] मन्यते । सदागतिरसौ भवति ॥ १ ॥

**"वायवायाहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम्" ॥ १ ॥**

( ऋ० सं० १-१-३ )

**वाय** इति । मधुच्छन्दस आर्षम् । आध्वर्यवे वायव्योपस्थाने विनियुक्ता । बाह्वृच्ये प्रउगे शस्त्रे शस्यते । हे **दर्शत !** दर्शनीय ! ( दर्शनार्ह ) "भृमृदृशि—" ( उ० ४-११० ) इत्यादिसूत्रेण अतच्प्रत्ययः । **वायो !** त्वदर्थम् **इमे सोमा अरंकृताः** अलंकृताः पर्याप्ताः पातुं संस्कृताः[३] । स त्वमस्माकं इदम् **हवम्** आह्वानम् "बहुलं छन्दसि" ( पा० ६-१-३४ ) इति संप्रसारणे "ऋदोरप्" ( पा० ३-३-५७ ) इत्यप् । **श्रुधि** शृणु । "श्रुशृणुपृकृवृभ्यश्छन्दसि" ( पा० ६-४-१०२ ) इति हेर्धिः । संहितायां च दीर्घः ( पा० ६-३-१३७ ) श्रुत्वा च तत् **आयाहि** आगच्छ । एत्य च **तेषाम्** एतेषां सोमानाम् संबन्धी यः स्वोंऽशस्तव तं **पाहि** पिब । अत्र "बहुलं छन्दसि" (पा० २-४-७३) इति शपो लुकि पिबादेशाभावः । इत्येतदाशास्महे ॥ १ ॥

अथास्य भाष्यम्—

**वायवायाहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब, शृणु मे ह्वानम् इति । कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषाऽपरा भवति ॥ २ ॥**

**मध्यमात्** इन्द्राभिधानाद्वायोरन्यं **कम् एवमवक्ष्यत्** मन्त्रदृक् । प्रसिद्धं हि इन्द्रस्य मध्यमस्य सोमपानम् तदर्थत्वात्सोमसंस्कारस्य, अप्रसाध्यमन्यस्य । तस्मादिन्द्र एव वायुः । **तस्य** इन्द्रस्य वायोः । ऐन्द्रे एव सूक्ते यस्यामिन्द्रस्य विशेषणत्वेन वायुशब्दः । तथा **एषा अपरा** ऋक् **भवति** ॥ २ ॥

**"आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः । अभिश्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं विदस्येत्" ॥ १ ॥**

( ऋ० सं० ४-७-९ )

**आसेति** । भरद्वाजस्यार्षं त्रैष्टुभं महाव्रते महदुक्थे शस्यते उत्तरे पक्षे । **आसस्राणासः** आसस्रवांसः ( नित्यमासर्पन्ति ये ते ) **रथ्यासो** रथ्याः । "आज्जसेरसुक्" ( पा० ७-१-५० ) इत्यसुगागमो विभक्तेः । रथे युक्ता अश्वाः ( रथस्य वोढारः ) यत् (पा० ४-४-७६) **सुचक्रे** कल्याणचक्रे (शोभनचक्रे) रथे योगाय (योगार्थम्) **ऋज्यन्तः** ऋजुगामिनः सन्तः **शवसानम्**[१] अधिकबलमात्मानं मन्यमानम् **इन्द्रं अच्छ** आभिमुख्येन **श्रवः** अन्नं ( निघं० २-७-४ ) सोमाख्यमेतदस्मद्यज्ञे यदुपक्लृप्तं नवं च पुराणं च सर्वविधम्, तथा—**अभिवहेयुः** आवहेयुः । यथा अस्य **वायोः** इन्द्रस्य इदम् **अमृतम्** एष सोमः **नु** क्षिप्रम् **नूचित्** नैव **विदस्येत्** विशेषेणोपक्षयं न प्राप्नुयात् । "दसु उपक्षये" ( दि० प० ) लिङ् अविदस्ते ( अनुपक्षीणे ) एतस्मिन्सोमभक्षेऽभिवहेयुरित्येतदाशास्महे ॥ १ ॥

अथास्य भाष्यम्—

**आसस्रवांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढारः ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च । श्रव इत्यन्ननाम श्रूयत इति सतो, वायोश्चास्य भक्षो यथा न विदस्येदितीन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्म । उभयप्रधानेत्यपरम् ॥**

**श्रूयत इति** । तथाच कर्मण्यसुन् । श्रूयते ह्यन्नं वर्ण्यमानं श्रवो यशः । ताद्धर्म्यात्ताच्छब्द्यं वा । "सत्यस्मिन्नश्रवस्तमाः" इति पठ्यते । **इति** एवमेतस्मिन्मन्त्रे ऐन्द्रसूक्तमध्यपातित्वादिन्द्रप्रधानेयमृक् । अस्यां यद्वाय्वभिधानं तदेतद्वायुकर्म **नैघण्टुकम्** । नाम, इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम् **इति एके** मन्यन्ते । अपरे पुनः **उभयप्रधाना** इयमृक् इति मन्यन्ते, भेदपक्षवादिनः । तत्पुनरयुक्तं निष्कैवल्ये विनियोगात् । तदाह **अपरमिति** । "मतमि"ति शेषः । तदेतन्न परं न श्रेष्ठमिति तु हृदयम् ।

**वरुणः—वृणोतीति सतस्तस्यैषा भवति ॥ ३ ॥**

**वरुणः** ( ३ ) इति कस्मात् ? **वृणोतीति सतः** । सत इति कर्तृकारकाभिधानम् । आवृणोति ह्ययं मेघजालेन वियत् । "वृञ् वरणे" ( स्वा० उ० ) "कृवृदारिभ्य उनन्" ( उ० ३-५० ) इत्युनन्प्रत्ययो गुणो णत्वम् ॥ ३ ॥

**"नीचीनवारं वरुणः कबन्धं प्रससर्ज रोदसी**

---

१. एति ह्यसावन्तरिक्षमित्यायुः सन् वर्णोपजनाद्वायुः । एवं सततमसौ वाति ( वेति वा ) गच्छतीति वायुः ॥

२. स्थूलाष्ठीवस्यापत्यमत इञ् अपत्ये । आदिवृद्धिः ॥

३. अभिषवादिसंस्कारोऽलङ्कारस्तेषाम् ॥

१. "शव" इत्युदकनाम, तद्बलार्थमपि । तत आचारक्विबन्ताल्लटः शानच् । अत एव बलमिवाचरन्तमिति सायणव्याख्यानं संगच्छते ( निघं० १-१२-४१ ) ॥

२. ततश्च भाष्यकृतैवोत्प्रेक्षितम् । दुर्गस्तु—नूचिदित्येतयोरर्थमाह । तथासति नेत्यध्याहार्यम् । सायणेन तु नूचिदित्यस्य नैव इत्येवं व्याख्यानमुक्तम् । तदत्र नवो यः सोमो गृहीत्वा तत्कालमेव हूयते । पुराणः पुनर्यः प्रातःसवने गृहीत्वा माध्यन्दिने सवने हूयते । तृतीयसवने ( सायंसवने ) वा । तद्यथा अतिग्राह्या ध्रुवश्च ॥

अन्तरिक्षम् । तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम" ॥ ३ ॥

( ऋ० सं० ४-४-३० )

नीचीनेति । आत्रेयं त्रैष्टुभं वारुणम्। विश्वस्य सर्वस्य भुवनस्य भूतजातस्य उदकस्य वा राजा ईश्वरः वरुणः मध्यमः। नीचीनवारम् नीचीनद्वारम् । न्यगच्यत इति नीचीनम् । "विभाषाञ्चेरदिक् स्त्रियाम्" ( पा० ५-४-८ ) इति खः खस्येनः ( पा० ७-१-२ ) वर्णनाशो नैरुक्त आर्षः । पृषोदरादित्वात् ( पा० ६-३-१०९ ) एवमग्रेऽपि । तादृशं द्वारं यस्य तमधोमुखं बिलं कृत्वा कवन्धम् उदकम् । "कबन्धमुदकं पाथः" इत्यमरः। प्रससर्ज प्रसृजति ॥ मेघं विदार्योदकमधोमुखं चकारेत्यर्थः । यद्वा कवते गच्छतीति ( भ्वा० आ० ) ल्युः योरनादेशः नप्त्वमार्षम् । कवमुदकं तद्धीयतेऽस्मिन्निति कवन्धो मेघस्तं, प्रससर्ज प्रसृजति । किमर्थम् ? रोदसी अन्तरिक्षम् द्यावापृथिव्यौ चान्तरिक्षं च। महत्त्वेन सर्वेमापूरयिष्यन्निव । ततस्तेनातिप्रभूतोदकेन विसृष्टेन। वृष्टिः सेक्ता ( सत्कर्षकः ) पुमान् यवं न यवमिव भूम भूमिम् ( भाष्यकृद्वचनबलादयमर्थः )। व्युनत्ति विविधप्रकारेण क्लेदयति । स यथा यवान्प्ररोहाय सर्वत्र प्रसारयति तद्वत्। "उन्दी क्लेदने" ( रु० प० ) लट्।

अथ चैवमन्यथा योज्यम्—यतोऽयं प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन, वरुणो मध्यमः। ततः स एव विश्वस्य ( सर्वस्य ) भुवनस्य भूतजातस्य राजा, तेन हेतुना ( तदनुग्रहाय ) नीचीनद्वारमधोबिलं मेघं कृत्वा यवमिव वृष्टिर्व्युनत्ति भूमिमिति समानं पूर्वेण।

अथास्य भाष्यम्—

**नीचीनद्वारं वरुणः कबन्धं मेघं, कवनमुदकं भवति। तदस्मिन्धीयत, उदकमपि कबन्धमुच्यते। बन्धिरनिभृतत्वे कमनिभृतं च। प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन, तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिं, तस्यैषाऽपरा भवति ॥ ४ ॥**

१. तथाचामरः—"आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्। पयः कीलालममृतं जीवनं भुवनं वन"मिति ॥

२. निरुक्तनियमसिद्धः । तथा चोक्तम्—"वर्णागमो वर्णविपर्ययश्च" इत्यादि ॥

३. एतच्च भाष्यानुसारि व्याख्यानम् ॥

४. "वृषु सेचने" ( भ्वा० प०) क्तिच् ( पा० ३-३-१७४ ) बाहुलकादनाशिषि कर्त्रमात्रेऽपि ॥

५. जगदनुग्रहाय ॥

अत्रोत्तरपदं प्रथमं निराह-बन्धिरनिभृतत्वे इति । बन्धिर्बन्धधातुः। "इकृश्तिपौ धातुनिर्देशे" ( पा० ३-३-१०८ वा० ) अनिभृतत्वे। निभृतस्तावदचलस्तद्विपरीतार्थवाची बन्धिः। कं च तच्चपलं चेति कबन्धम्। सुखं चानवस्थायि चेत्यर्थः । तस्य वरुणस्य मध्यमस्य एषा अपरा ऋक् भवति । यतस्तत्र शब्दत एव मध्यमो वरुण इति श्रूयते। वर्षकर्म । वरुणाभिधानं तु सूर्येपि दृष्टमस्तीति न तत्पुष्कलं तस्य मध्यमस्य इति भावः ॥ ४ ॥

"तमूषु समना गिरा पितॄणां च मन्मभिः । नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे" ॥ २ ॥

( ऋ० सं० ६-३-२६ )

तमिति । नाभाकस्यार्षं महापाङ्क्तं वारुणम् । अत्र सु इत्युपसर्गबलादभिष्टौमीति योग्यक्रियापदमध्याहृतं भाष्यकारेण । नाभाक आचष्टे-अहं समना समानया गिरा गीत्या ( स्तुत्या ) पितॄणां मन्मभिः मननीयैर्मननार्हैः-( बहुमानैः-) स्तोमैः च नाभाकस्य मम प्रशस्तिभिः स्तुतिभिश्च तमु तमेव वरुणं सु सुष्ठुभिष्टौमि । यः वरुणः सिन्धूनां स्यन्दमानानामासामपाम् उपोदये उपोद्गमे अन्तरिक्षलोके वर्षस्य सप्तस्वसा सप्त स्वसारो यस्य सः । "ऋदुशन०" ( पा० ७-१-९४ ) इत्यनङ्। संपद्यते वाग्भिः मध्यमाभिरस्यायाभिः सप्तभिः स मध्यमः इति वरुणः निरु-

१. उदकार्थे कवन्धपदे ॥

२. "अस्मा उ षु प्रभूतये वरुणाय" इत्यादिकेऽस्मिन्सूक्ते द्वितीयेयमृक्। अत्रेयमनुक्रमणिका "अस्मा ऊषु दशवारुणं त्विति ॥"

३. अयं प्राग्भवीयो नाभाकऋषिरस्मिन्भवेऽपि नाभाकनाम्नैव प्रथितो बभूवेत्येषोऽर्थो भाष्यस्वरससिद्धः ॥

४. पूर्वमन्त्रेऽस्यैवोपक्रमात्सूक्तस्यैव वारुणत्वाच्च ॥

५. एषोऽर्थो दुर्गेणोत्प्रेक्षितस्तन्मतेऽस्याथा वाच एवास्य स्वसारो याभिरयमसकृदभिष्टूयते ता अस्य सहभूताः। आदिना नाड्यः (रश्मयः) सप्तरश्मिः सप्ताश्व इत्येवमभिष्टवोऽस्येति । सायणस्तु-यस्तु सप्तस्वसा मध्यम इति वाग्भिर्निरुच्यते इति, सिन्धूनां स्यन्दमानानां नदीनामुपसमीपे उदये ( उदयते ) उद्गच्छति इति च व्याचष्टे। एतन्मते पुरुषव्यत्यय आर्षः ( पा० ३-१-८५ ) वयं तु प्रतीमः सिन्धूनां नदीनां गङ्गादीनामपामुपोदयेऽधिकोद्गमे जलाधिक्ये वर्षणेन जाते सति तदभिवर्धनादमुं वरुणं सप्तस्वसारमाहेति भाष्यस्वरसः। प्रसिद्धं चासां स्वसृत्वेन वर्णनमृक्षु "सप्तस्वसारो अभिमातरः शिशुं (नवं) जज्ञानं जेन्यं विपश्चितम्। अपां गन्धर्वं दिव्यं नृचक्षसं सोमं विश्वस्य भुवनस्य राजसे ॥" ( ऋ० सं० ७-३-१९ ) अथास्य सायणभाष्यम्-सप्तसर्पणस्वभावाः सप्तसंख्याका वा स्वसारः। मातरो मातृस्थानीया गङ्गायमुनाद्या शिशुं शिशुस्थानीयं सोममभिगच्छन्तीति वाक्यशेष इति ॥

च्यते शब्दत एव एतस्मिन्मन्त्रे । तदनुग्रहादेव नभन्तामन्यके समे माभूवन्नन्यके सर्वे । ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पा इति भाष्यम् ॥ २ ॥

तथा हि—

**तं स्वमिष्टौमि समानया गिरा गील्या स्तुत्या, पितॄणां च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः । ऋषिर्नाभाको बभूव । यः स्यन्दमानानामासामपामुपोदये, सप्तस्वसारमेनमाह+वाग्भिः स मध्यम इति निरुच्यते, अथैष एव भवति माभूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापसङ्कल्पाः ॥**

अवगतमेतन्मन्त्रार्थेन ।

अथ क्रमप्राप्तं रुद्रं निर्वक्ति—

**रुद्रो रौतीति सतो, रोरूयमाणो द्रवतीति वा । रोदयतेर्वा । "यदरुदत्तद्रुद्रस्य रुद्रत्व"—मिति काठकम् । "यदरोदीत्तद्रुद्रस्य रुद्रत्व"—मिति हारिद्रविकम् । तस्यैषाऽपरा भवति ॥ ५ ॥**

रुद्रः ( ३ ) कस्मात् ? **रौतीति सतः** । **सत** इति कर्तृकारकाभिधानम् । "रु शब्दे" ( अ० प० ) इत्यस्मात्क्विपि तुकि ( पा० ६–१–७१ ) रुच्छब्दः । स हि स्तनयित्नुशब्दं करोति । अनन्तरं च राति ददाति अभिवर्षणेनोदकम् "रा दाने" ( अ० प० ) ततश्च रुत्सन्नातीति रुद्रः । "सुपि" ( पा० ३–२–४ ) इति योगविभागात्कः । **रोरूयमाणः** अत्यर्थं शब्दं कुर्वाणो मेघोदरस्थः सन् **द्रवतीति**वा । रोरूयमाणशब्दोपपदाद्द्रवतेर्डः । डित्वाट्टिलोपः उपपदस्य रुभावश्च । छान्दसः । अथ **वा रोदयतेः** "रोदेर्णिलुक्च" ( उ० २–२० ) इति रक् । स हि शत्रुकलत्राणि रोदयतीति । रुदेरेव वा बाहुलकाद्रक् । तथा च "इन्द्रः किल पितरं प्रजापतिमिषुणा चिच्छेद तमनुशोचन्नरुदद् यदरुदत्तद्रुद्रस्य रुद्रत्वम्" ( वृ० आ० ३–९–४ ) इति **काठकं** काठकानां प्रवचनं ब्राह्मणम् । एवमेव **यद०० हारिद्रविकम्** हरिद्रवो नाम मैत्रायणीनां शाखाभेदस्तत्रोक्तम् । तदेतदेवं शाखान्तरेभ्योऽपि देवताभिधाननिर्वचनान्तराणि उपेक्ष्याणीत्युपप्रदर्शनार्थम् ॥५॥

**"इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने । अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः" ॥ १ ॥**

( ऋ० सं० ७–४–१३ )

**इमा** इति । इयमुत्तरा च वसिष्ठस्यार्षं रौद्रं जागतम् । शूलगवादिषु रौद्रयज्ञेषु विनियोगः । हे अस्मदीयाः स्तोतारः । यूयम् **इमाः गिरः** स्तुतीः **स्थिरधन्वने** दृढधन्वने ( दृढधनुषे ) "धनुषश्च" ( पा० ५–४–१३२ ) इत्यनङ् । **क्षिप्रेषवे** शीघ्रगामिबाणाय । **देवाय** दानादिगुणयुक्ताय **स्वधाव्ने** स्वधावते ( अन्नवते ) स्वधा इत्यन्ननाम ( नि० २–७–१७ ) "छन्दसीवनिपौ च वक्तव्यौ" ( पा० ५–२–१२२ वा० ) इति मत्वर्थे वनिप् । **अषाळ्हाय** अनभिभूताय केनचिदपि । **सहमानाय** नित्यमभिभवते शत्रून् । "षह मर्षणे" ( भ्वा० आ० ) मर्षणं क्षमा अभिभवश्च । लटः शानच् मुगागमः । **वेधसे** विधात्रे । **तिग्मायुधाय** तीक्ष्णायुधाय **रुद्राय** एतन्नामकाय देवाय । "तिग्मं तीक्ष्णं खरम्" इत्यमरः । **भरत** धारयत "डुभृञ् धारणपोषणयोः" ( जु० उ० ) लोट् विकरणव्यत्यय आर्षः । संहितायां दीर्घः (पा० ६–३–१३७) स च रुद्रः **नः** अस्माकं स्तुतीः **शृणोतु** आकर्णयत्विति तदाशास्महे ॥ १ ॥

**इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्यैः सहमानाय विधात्रे तिग्मायुधाय भरत शृणोतु नः ॥**

गतार्थमेतत् । अथ निगमप्रसक्तं निर्ब्रवीति—

**तिग्मं तेजतेरुत्साहकर्मणः ॥**

उत्साहार्थस्य **तेजतेः** "तिज निशाने" ( चु० प० ) "युजिरुजितिजां कुक् च" ( उ० १–१४३ ) इति मक्प्रत्ययः कुत्वं च । "तीक्ष्ण इहायुधं योद्धारमुत्साहयति तिग्मशातनः" इति माधवः ॥

**आयुधमायोधनात् ॥**

"युध संप्रहारे" ( दि० आ० ) "घनर्थे कविधानम्" ( पा० ३–३–५८ वा० ) इति करणे कः । आयुध्यतेऽनेनेत्यायुधम् । यद्वा कर्तर्येव इगुपधलक्षणः कः (पा० ३–१–१३५) आयुध्यते संप्रहरति रक्षांसि प्रतीति ॥

**तस्यैषाऽपरा भवति ॥ ६ ॥**

**तस्य** रुद्रस्य **एषा अपरा** द्वितीया ऋक् स्तुति**र्भवति** । ननु पूर्वस्यामृचि सहमानायेति बलकृतेर्मध्यम उक्त एवेत्यपरा किमर्थम् ? इति । अत्रोच्यते । विधात्रे इत्युक्तं पूर्वस्यामृचि

---

१. कुत्सायैऽत्राकच् । कुत्सार्थमेव ये नो द्विषन्तीत्यादिना भाष्यकृदाह । "नभ हिंसायाम्" ( भ्वा० आ० ) अयमभावेऽपीति पठ्यते ( सि० कौ० ) समशब्दोऽत्र सर्वपर्याय इति सर्वनामत्वाज्जसः शीभावः ॥

२. उक्तार्थकमेव केवलं शाखान्तरमिति भेदः ॥

३. उपगम्य तत्तच्छाखाभेदमीक्ष्याणीक्षणीयान्यालोचनीयानीत्यर्थः ॥

१. अनेन सूक्तेनोदीची दिगुपस्थेया भवति ॥

भाष्यकारेण । तत्रैतद्भवति किमसौ विधत्त? इति । अतोऽपरया निर्ब्रवीति—

**"या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः । सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः" ॥ ३ ॥**

( ऋ० सं० ५-४-१३ )

**या त** इति । हे भगवन् रुद्र! वैद्युतात्मनः **ते** तव संबन्धिनी **या दिद्युत्** आयुधं ज्वरातीसारादिरोगाख्यम् ( येन त्वं प्राणिनो हंसि ) **दिवस्परि** द्युलोकादधि त्वया **अवसृष्टा** विमुक्ता सती **क्ष्मया** पृथिव्या व्रीह्यादिभावमुपगतया, सह क्ष्मायां वा अनुप्रविश्य अन्नपानादिभावमुपगत्य, तत्प्रभवत्वात्सर्वरोगाणाम् । तदुक्तम्–"नमोऽस्तु रुद्रेभ्यो ये केच पृथिव्यां येषामन्नं वातो वर्षमिषवः" ( य० वा० सं० १६-६६ ) इति । **चरति** सर्वतो विचरति ( वर्तते ) सा प्राणिनो घ्नती **नः** अस्मान् **परिवृणक्तु** परिवर्जयतु ( परित्यजतु ) "वृजी वर्जने" ( रु० प० ) आशंसायां लोट् । अथ चैतदस्तु–हे **स्वपिवात!** स्वाप्तवचन! ( कस्यचिदप्यनतिक्रमणीयाज्ञ! ) यानि **ते** तव **सहस्रम्** असंख्यातानि **भेषजा** भैषज्यानि ( औषधानि ) यैर्बहुभिर्बहुप्रकारं भेषजं करोषि ( कारयसि ) भक्तानां तान्यस्मान्प्रति सन्तु । अस्मभ्यं प्रयच्छेति वा शेषः । इत्येवं कारकपदात् क्रियापदमध्याहृतं वेदितव्यम् । किंच त्वं **नः** अस्माकम् **तोकेषु** अपत्येषु (पुत्रेषु पुत्रीषु च) । "अपत्यं तोकं तयोः समे" इत्यमरः । तनयेषु पौत्रेषु च **मारीरिषः** हिंसां मा प्रयुङ्क्ष्व । "रिष हिंसायाम्" ( भ्वा०-दिं० प० ) "माङि लुङ्" ( पा० ३-३-१७५ ) सर्वलकारापवादः । "न माङ्योगे" ( पा० ६-४-७४ ) इत्यडभावः ॥ ३ ॥

अथास्य भाष्यम्—

**या ते दिद्युदवसृष्टा दिवस्परि–दिवोधि, दिद्युद्–द्यतेर्वा द्युतेर्वा द्योततेर्वा ॥**

अत्र निगमप्रसक्तं निर्ब्रवीति–**द्यतेर्वेति** । **वे**ति वाक्यालङ्कारे । "दोऽवखण्डने" ( दि० प० ) इत्यस्मात्क्विपि पृषोदरादित्वात्साधुः । द्यति शत्रून् । अथ **वा द्युतेः** । धातुनिर्देशे श्तिप् ( पा० ३-३-१०८ वा० ) "द्यु अभिगमने" ( अ० प० ) इत्यस्मात् क्विप् द्वित्वमभ्यासस्य संप्रसारणं च बाहुलकात् । तुक् ( पा० ६-१-७१ ) द्यौति अभिगच्छति प्राणिनः । अथ **वा द्योततेः** । "द्युत दीप्तौ" ( भ्वा० आ० ) "द्युतिगमिजुहोतीनां द्वे च" (पा० ३-२-१७८) इति क्विपि द्वित्वे "द्युतिस्वाप्योः संप्रसारणम्" ( पा० ७-४-६७ ) इत्यभ्यासस्य संप्रसारणम् । द्योतते हि तत् प्रकाशत इत्यर्थः ॥

**क्ष्मया चरति–क्ष्मा पृथिवी तस्यां चरति । विक्ष्मापयन्ती चरतीति वा, परिवृणक्तु नः सा । सहस्रं ते स्वाप्तवचनभैषज्यानि । मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषः । तोकं तुद्यतेः । तनयं तनोतेः ॥**

क्ष्मयेति सहार्थे तृतीया । सप्तम्यर्थे वेत्याह **तस्यां चरतीति** । उक्तोर्थः । **विक्ष्मेति** । अत्रोपसर्गयोगोऽतिशायनेधात्वर्थयोगाय । "क्ष्मायी विधूनने" ( भ्वा० आ० ) इत्यस्माण्णिजन्तात्क्विपि यलोपे ( पा० ६-१-६६ ) रूपसिद्धिः । "आगमशास्त्रमनित्यम्" (९५प०) इति "अर्तिह्री" (पा० ७-३-३६) इत्यनेन पुकोऽभावः । **तोकम्** अपत्यमिति नपुंसकम् । तच्च **तुद्यतेः** "तुद व्यथने" ( दि० प० ) "पुंसि संज्ञायां घः–" ( पा० ३-३-११८ ) गुणः । पृषोदरादित्वाद्दकारस्य ककारः । स हि नित्यं पित्रा विनयता तुद्यते इदं कुर्विदं मा कार्षीरिति । **तनयम्** इति द्वितीयान्तम् अर्थाभिनिवेशवशात् । **तनोतेः** । "तनु विस्तारे" ( त० उ० ) "बलि–मलि–तनिभ्यः कयन्" ( उ० ४-९७ ) इति कयनप्रत्ययः । स हि कुलं तनोतीति । सत्यप्यपत्यनामत्वाविशेषे इहाजामितैव विशेषः । एवमन्यत्रापि समानार्थानामेकवाक्ये विशेष उपेक्ष्य इति दर्शयति ॥

१. अत्र दुर्गव्याख्यायां–रक्षःपिशाचानितीति प्रतीकदर्शनादयं पाठः क्षिप्तः प्रतिभात्यत एव मुम्बईमुद्रितपुस्तके "सा पुनः किमर्थम् ?" इत्यादिकः पाठः कुण्डलितो दृश्यते ।

२. दिद्युदिति वज्रनाम (निघं० नि० २-२०-१) तदभिप्रेत्य सायणस्त्वेवं व्याख्यत्—हे रुद्र! वैद्युतात्मनस्तव संबन्धिनी दिवस्परि अन्तरिक्षसकाशादवसृष्टा विमुक्ता या दिद्युत् अशनिरूपा हेतिः क्ष्मया क्षित्या क्षितौ वा चरति वर्तते, सा दिद्युत् नोऽस्मान्परिवृणक्तु परित्यजतु । अपि च हे स्वपिवात! ते तव सहस्रं बहूनि भेषजा भेषजानि यान्यौषधानि सन्ति तान्यस्मभ्यं प्रयच्छेति शेषः । नोऽस्माकं तोकेषु पुत्रेषु तनयेषु च मारीरिषः हिंसां मा कृथाः" इति ॥

३. अधि उपरि । सर्वैव हि देवता द्युस्थानेति गम्यते । दिवस्परीति लिङ्गात् । कर्माधिकारस्थानानि तु विशिष्टानीति तिसृणां त्रीणि कर्माधिकारस्थानानि नियतानि भवन्ति । अत एवोक्तमभ्यधिकारे द्युस्थानो भवतीति ॥

४. व्रीह्यादिभावमुपगतायां पृथिव्याम् ॥

५. एष कृष्णयजुषि निर्दिष्टः प्रतिभाति । शुक्ले त्वन्यथा पठ्यते ॥

६. एतच्च भाष्यव्याख्यानादेवावगम्यते ॥

१. हिंसार्थस्य रिषतेः कर्मत्वात् । "आत्मजस्तनयः सूनुः" इत्यमरे पुंस्त्वाभिधानात् ॥

२. "यथाकथा च विशेषोऽजामि भवती"त्यजामिलक्षणं वक्ष्यते ( नि० १०-१६ ) समानशब्देष्वसमानशब्देषु च पुनरुक्तेषु यः कश्चिद्विशेषो वक्तव्य इत्येतदेवाजामित्वमिति तदर्थः । स चेहास्ति विशेषो यदेतत्तोकमिति नाम तत्स्त्रीपुंससाधारणम् "अपत्यं तोकं तयोः समे" इत्यमराभिधानात् । तयोः स्त्रीपुंसयोः । अथच तोकं यस्तुदति तुद्यते वा, अप्राप्तयुवत्वं तत् । "लालयेत्पञ्चवर्षाणि दशवर्षाणि ताडयेत् । प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत्" इति नीतिवचनात् । यश्च प्राप्तयुवत्वः कुलं तनोति, येन वा कुलं तन्यते स तनय इति ॥

**अग्निरपि रुद्र उच्यते तस्यैषा भवति ॥ ७ ॥**

**उच्यते**। विचारानुस्मृतये संकरोपप्रदर्शनार्थम् । **तस्य** अग्नेः रुद्रस्य ॥ ७ ॥

**"जरा बोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम्" ॥**

( ऋ० सं० छ० आ० १–१–२–५ )

**जरेति**। शुनःशेपस्यार्षं गायत्रम् । वारवन्तीये सूक्ते प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन्नग्ने रुद्र! येयं मया ते **जरा** स्तुतिरुच्यते तां **बोध** बुध्यस्व । अमर्थे सुर्व्यत्ययेन ( पा० ३–१–८५ ) । अथवा हे जराबोध! जरया ( स्तुत्या ) बोध्यमान! बोधयितर्वा । **तत्** स्वकर्तव्यं **यज्ञियाय** "यज्ञर्त्विग्भ्यां घखञौ" (पा० ५–१–७१) इत्यर्हार्थे घस्येयादेशः ( पा० ७–१–२ ) यज्ञसंपादिने **विशेविशे** मनुष्याय मनुष्याय तत्तद्यजमानरूपप्रजानुग्रहार्थम् । विश इति मनुष्यनाम ( निघं० २–३–५ ) **विविड्ढि** कुरु । "विष्लृ व्याप्तौ" ( जु० प० ) लोट् । देवानां स्तोत्रे ( निघं० ३–१–६७ ) स मनुष्यः **दृशीकम्** दर्शनीयं श्रवणीयं स्तोत्रमुच्चारयिष्यति ॥

"यो अ॒ग्नौ रु॒द्रो यो अ॒प्स्व१॒॑न्तर्य ओष॑धीर्वी॒रुध॑ आवि॒वेश॑ । य इ॒मा विश्वा॒ भुव॑नानि चाक्लृ॒पे तस्मै॑ रु॒द्राय॒ नमो॑ अस्त्व॒ग्नये॑ ॥" ( अ० सं० ७–८७–१ ) इति ॥

अथास्या भाष्यम्—

**जरा स्तुतिर्जरतेः स्तुतिकर्मणः । तां बोध ॥ तया बोधयितरिति वा । तद्विविड्ढि—तत्कुरु । मनुष्यस्य मनुष्यस्य यजमानाय स्तोमं रुद्राय दर्शनीयम् ॥**

**जरतेः** "जॄष् वयोहानौ" ( दि० प० ) इत्यस्येह स्तुत्यर्थत्वमाम्नायते ( निघं० ४–१–५२ ) ततः "षिद्भिदादिभ्योऽङ्" ( पा० ३–३–१०४ ) इत्यङि गुणे टाप् । **मनुष्यस्य** २ इति चतुर्थ्यर्थे षष्ठी ( पा० २–३–६२ ) ॥

अथ क्रमप्राप्तमिन्द्रमनेकधा निर्वक्ति—

**इन्द्र इरां दृणातीति वा, इरां ददातीति वा, इरां दधातीति वा, इरां दारयत इति वा, इरां धारयत इति वा ॥**

१. स हि जरया स्तुत्या होतृत्वे वर्तमानोऽभिमतमर्थं यजमानानां संपादयन्देवान्बोधयति ॥

२. सायणस्तु—यज्ञियाय यज्ञसंबन्ध्यनुष्ठानसिध्यर्थं तदेव यजनं विविड्ढि प्रविशेति व्याचष्ट ॥

३. सायणस्तु—रुद्राय क्रूरायाग्नय इत्याह ॥

४. श्रवणार्हं व्यपगतदोषम् । अत्र दृशिर्ज्ञानसामान्ये वर्तते । ततश्च "अनिदृशिभ्यां कीकन्" इति कीकन्प्रत्यय इति सायणः । उणादौ तु "कमिदृशिभ्यामीकन्नि" ति पठित्वा "अनिदृशिभ्यां किच्च" ( उ० ४–५५–५६ ) इति पठ्यते । तथा च बाहुलकमत्र गतिः ॥

**इन्द्रः** (४) कस्मात्? अत्रोत्तराणि **इरामि**त्यादि । इरामन्नं ( निघं० २–७–१२ ) व्रीह्यादि **दृणाति** विदारयति । इराशब्दोपपदाद्विदारणार्थात् दृणातेः–दानार्थाद्ददातेः–धारणार्थाद्धातेः–दारयतेर्वा विदारणार्थादेव ण्यन्तात् । एवं धारणार्थाद्धारयतेर्वा "ऋज्रेन्द्राग्र०" ( उ० २–२७ ) इत्यादिना रक्प्रत्ययान्तो निपातः । तथाच निपातनादेव सर्वत्रार्थे रूपसिद्धिर्बोध्या । वर्षक्लेदितमङ्कुरं बीजं भिनत्ति तमिन्द्रकारितमाचष्टे । सोऽयं "सिराद इराधो वा सन्निन्द्र" इति परोक्षेणोच्यते । यथा "अग्रणीः सन्नग्निः" इति । विज्ञायते हि "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः" इति । अत्र दुर्गः सर्वत्रैवं देवताभिधेयेष्वभिधानत एव हि देवता आत्मनस्तत्त्वमन्तर्णीय व्यवधाय चात्मानमविदुषां परोक्षीकृत्य नित्यं वर्तते । तां तु विद्वांसस्तदभिधानव्युत्पत्तिद्वारेण विवृत्य दैवेन चक्षुषा मनसोपजातदिव्यदृष्टयो दृष्ट्वा ताद्भाव्यं प्रतिपद्यन्त इति तदभिधानव्युत्पत्तौ कृत्स्नः पुरुषार्थ आहितः । इन्द्रश्च भूयिष्ठभाक्प्राणदेवतानामुभयोरध्यात्माधिदैवतयोरिति तदभिधानमाचार्योऽतितरां निरवोचदिति । तथाच इराशब्दात्पूर्वपदं दृणात्यादेरुत्तरपदमिति वेदितव्यम् ॥

**इन्दवे द्रवतीति वा, इन्दौ रमत इति वा ॥**

अत्रेन्दुशब्दात्पूर्वपदं द्रवते रमतेर्वोत्तरपदम् । **इन्दुः** सोमस्तमुद्दिश्य ( तं पातुम् ) असौ द्रवति गच्छतीति इन्दुद्रवः=सन्निन्द्रः । अथ **वा**ऽतिप्रियत्वा**दिन्दौ** सोमेऽसौ **रमत इति** इन्दुरमः सन्निन्द्र इत्युच्यते ॥

**इन्धे भूतानीति वा । "तद्यदेनं प्राणैः समैन्धं स्तदिन्द्रस्येन्द्रत्वमि"ति विज्ञायते ॥**

"ञिइन्धी दीप्तौ" (रु० आ०) इत्यस्मादेव वा रकि रूपम् । **भूतानि** ह्यसावन्नोत्पत्त्याऽधिदैवस्थोऽध्यात्मस्थो वाऽभ्यवहारैरन्विभजमानश्च दीपयति ( द्युतिमन्ति करोति ) सोऽयमिन्ध्रः=सन्निन्द्र इत्युच्यते । **तत्** इदमपरमिन्द्रस्येन्द्रत्वं ब्राह्मण उच्यते **यदेनं** मध्यतोऽवस्थितं शरीरस्य **प्राणैः** प्राणभावेन विष्वग्व्येतरान्प्राणान्वागादीनितरप्राणवृत्तिमाहाभाग्यसंप्रदानेन यदहं वि-

१. अनेन संबन्धाद्वा तद्धेतुकं बलं लक्ष्यते । तेन बललक्षितलक्षणया तदाधारभूतो मेघः । इरां मेघं धारात्मना दृणाति विदारयति ॥

२. तथासौ वृष्टिप्रदानेन विदारयति यथा तदङ्कुराय प्रभवति । अङ्कुरोद्भेदेन विकासश्च विदारणमिति देवराजः ॥

३. तथाचेन्द्र इत्यतिपरोक्षवृत्तिः । इराद इत्यादिः परोक्षवृत्तिः । इरादारयिता–इरादाता इराधारयितेत्येवमादिः प्रत्यक्षवृत्तिरित्येष नैरुक्तः प्रकारः सर्वत्रोह्यः ॥

४. ब्राह्मणेष्वेतत् ॥

५. अत्र "क्रियया यमभिप्रैति स संप्रदानम्" ( पा० २–३–१३ वा० ) इति चतुर्थी ॥

शिष्टोऽसि, त्वं तद्विशिष्टोऽसीत्येवमादिना प्राणाधिदेवताः **समैन्धन्** समदीपयन्सन्तानार्थ–**तदिन्द्रस्येन्द्रत्वमिति** विविच्यमाने **ज्ञायते**। इन्धे भूतानीति कर्तरि। प्राणैरेनं समैन्धतेति कर्मणि रगत्र द्रष्टव्यः॥

**इदंकरणादित्याग्रायणः॥**

एतन्मते इदंशब्दात्पूर्वपदं करोतेरुत्तरपदम्। इदं सर्वमसावकरोदितीदंकरः=सन्निन्द्रः। एवम्—

**इदंदर्शनादित्यौपमन्यवः॥**

इदमसावद्राक्षीत्सर्वमिति–इदंदर्शी=सन्निन्द्रः।

**इन्दतेर्वा ऐश्वर्यकर्मणः। इन्दञ्छत्रूणां दारयिता वा, द्रावयिता वा, ऽऽदरयिता च यज्वनाम्। तस्यैषा भवति॥८॥**

"इदि परमैश्वर्ये" ( भ्वा० प० ) इत्यस्माच्छतरि **इन्दन्** ईश्वरः स चासौ **शत्रूणां दारयिता द्रावयिता वा,ऽऽदरयिता च यज्वनाम्**परि। इतीन्द्र इन्ददादरो वेन्द्र इति। **तस्य** इन्द्रस्य **एषा** अनन्तरीया–रसानुप्रदानवृत्रवधस्तुतिर्भवति॥८॥

**"अर्दर्दरुत्समसृजो विखानि त्वमर्णवान्बद्धधानाँ अरम्णाः। महान्तमिन्द्र पर्वतं वियद्वः सृजो विधारा अव दानवं हन्"॥१॥**

( ऋ० सं० ४–१–३२। सा० सं० अ० आ० ४–१–३–३ )

**अदर्दरिति**। गातोरात्रेयस्यार्षं त्रिष्टुबैन्द्री। हे **इन्द्र**! **त्वम् उत्सम्** उत्स्यन्दमानं मेघम् **अदर्दः** अदृणाः भृशं विदारितवानसि। "दॄ विदारणे" ( क्र्या० प० ) भृशार्थयङ्लुगन्तमेतत्। भृशं दारयित्वा जर्जरीकृत्य च तस्योत्सस्य **खानि** बिलानि ( मेघस्थोदकानां निर्गमनद्वाराणि ) **व्यसृजः** विशेषेण सृष्टवानसि। स त्वममुना प्रकारेण **अर्णवान्** अर्णस्वतः ( अर्णसा उदकेन तद्वतः ) "अर्णसो लोपश्च" ( पा० ५–२–१०७ वा० ) इति सलोपः। एतान्माध्यमिकान् संस्त्यायान् मेघसंघातान् उदकभारेणातिगुरुणा **बद्धधानान्** बाबध्यमानान् यथाकालम् **अरम्णाः** विसृष्टवान्क्षारितवानसि। किंच–**यत्** यतः यो त्वा त्वम् **महान्तम्** प्रभूतम् **पर्वतं** मेघं ( निघं० १–१०–९ ) **विवः** व्यवृणोः ( विवृतवानसि ) विवृत्य चापां **धाराः** प्रवाहान् **व्यसृजः** विसृष्टवानसि। अपि चैनं **दानवं** दनोः पुत्रं वृत्रमसुरम् उदकस्य दातारं मेघं वा **अवहन्** अभिहतवानसि। अडभाव आर्षः। अतस्त्वमिदं नामास्माकं कुरुष्वेति प्रार्थनाशेषो नैगमः॥१॥

अथास्य भाष्यम्—

**अदृणा उत्समुत्स उत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा, व्यसृजोऽस्य खानि, त्वमर्णवानर्णस्वत एतान्माध्यमिकान्संस्त्यायान् बाबध्यमानानरम्णाः। रम्णातिः संयमनकर्मा। विसर्जनकर्मा वा। महान्तमिन्द्रपर्वतं मेघं यद्व्यवृणोर्व्यसृजोऽस्य धाराः। अवहन्नेनं दानवं दानकर्माणं, तस्यैषाऽपरा भवति॥९॥**

**अदृणाः**। अत्र भृशार्थोऽन्तर्णीतः। **उत्सम्** इति प्रतीकम्। **उत्सः** मेघः। स कथम्? तत्राह–**उत्सरणादि**त्यादि। उत्पूर्वात्सर्तेः सदेः स्यन्देर्वा डप्रत्ययः स्यन्देर्यलोपश्च बाहुलकात्। उत्सरत्यस्मादुदकम्। ऊर्ध्वं वासौ सन्नः ( अवसन्नः ) उत्स्यन्दते वाऽऽसावुपर्यवस्थित इत्युत्सः। अथ **वा उनत्तेः**। "उन्दी क्लेदने" ( रु० प० ) इत्यस्य। क्लेदयत्यसौ। अत्र "उन्दतेर्नलोपश्च" ( उ० ३–७७ ) इति बाहुलकात्सप्रत्ययः। **रम्णातिः** रमधातुः ( भ्वा० आ० ) स च क्रीडायां लोके, नैरुक्तस्तु **संयमनकर्मा** नियन्त्रणार्थः। यद्यप्ययं वधार्थे ( निघं० २–२०–३४ ) पठितस्तथापि तौल्यमर्थतः। व्यत्ययेन श्ना। स चायमन्यत्र यथा–"सविता यन्त्रैः पृथिवीमरम्णात्" ( ऋ० सं० ८–८–७–१ ) इति। इह तु पुनर्मेघविदारणसंबन्धात् **विसर्जनकर्मा**। **तस्य** इन्द्रस्य **एषा अपरा** स्तुतिर्भवति। बलकृत्युपप्रदर्शनार्था। उक्तं हि "अथास्य कर्म–रसानुप्रदानं, वृत्रवधः, या च का च बलकृतिः" रिति॥९॥

**"यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना सजनास इन्द्रः"॥१॥**

( ऋ० सं० २–६–७ )

१. आदरकर्ता॥

२. भाष्ये त्विदं न दृश्यते, रूपसिद्धिस्तु पृषोदरादित्वाद्बोध्या॥

३. एतच्च भाष्यकृतैव व्याख्यातमित्युपन्यस्तम्॥

४. अत्रार्थे लिङ्गव्यत्यय आर्षः॥

५. योऽप्यतिमहान्पर्वतो मेघः केनचिदप्यन्येनाशक्यो विवृतद्वारं कर्तुं तमपि इति दुर्गः॥

६. अपावृतोदकनिर्गमद्वारमकरोः॥

१. एष नैरुक्तोऽर्थः॥

२. दुर्गस्तु—अवहन्नित्यस्य उदकधाराः पुनः पुनरवघ्नन्दानवं मेघं व्यसृज इति शत्रन्ततया व्याख्यत्॥

३. मन्त्रेण देवताप्रार्थना क्रियत इति तेषां नैसर्गिकी रीतिरित्येव व्याख्याक्रमः॥

४. मेघस्थितिरूर्ध्वं परिच्छिन्ना "आमेखलं हिमाद्रेर्मेघः संचरति नोर्ध्वमस्मात्तु" इति। अत एव कुमारसंभवे कालिदासः—"आमेखलं संचरतां घनानां छायामधः सानुगतां निषेव्य। उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः" इति॥

५. वधो हि नियन्त्रणपूर्वक एव भवतीति॥

**य** इति । गृत्समदस्यार्षं त्रैष्टुभमैन्द्रम् । महाव्रते निष्केवल्ये शस्यते । अत्रेतिहासमाचक्षते गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वा असुराः परिवव्रुः । स इन्द्रो गृत्समदरूपेण यज्ञवाटान्निर्गत्य स्वर्गं जगाम । अतोऽसुरा इन्द्रो विलम्बित इत्यन्तः प्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः अयं त्विन्द्रोऽस्मद्भयाद् गृत्समदरूपेणास्ते इति तं जगृहुः । स तानाहमिन्द्रः । अयम् । इत्यनेन सूक्तेन प्रत्युवाचेत्ययमर्थो महाभारते प्रपञ्चितः । तथाच हे **जनासः** ! जनाः ! हे असुराः ! **यः** जातो जायमान **एव** । "गत्यर्थाकर्मक०" ( पा० ३–४–७२ ) इति कर्तरि क्तः । सन् **प्रथमः** देवानां प्रधानभूतः **मनस्वान्** मनस्वी मेधावी च । अन्ये हि कालेन मुख्याः संपद्यन्ते, मेधाविनश्च । **देवः** द्योतमानः सन् **क्रतुना** वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा ( निघं० २–१–१० ) **देवान्** सर्वानितरान् यागदेवान् **पर्यभूषत्** पर्यगृह्णात् ( परिगृहीतवान्स्वामित्वेन ) पर्यरक्षद्वा मुख्यत्वात् । अत्यक्रामद्वा प्रभावेण । अत्र परिपूर्वाद्भवतेर्लङि शप्सिपौ प्राहुलेंकात्[3] । पर्यभवदिति तदर्थः । **यस्य** च **शुष्मात्** शारीराद्बलात् ( निघं० २–९–११ ) **रोदसी** द्यावापृथिव्यावपि । "द्यावाभूमी च रोदसी" इत्यमरः । **अभ्यसेताम्** अविभीताम् । "भ्यस भये" ( भ्वा० आ० ) "भ्यस भयवेपनयोः" इति नैरुक्ताः । तथा च अभ्यसेताम् अवेपेतां वा । तथा च मन्त्रान्तरम्—"इमे चित्तव मन्यवे वेपेते भियसा मही" ( ऋ० सं० १–५–३१ ) इति । **नृम्णस्य** सेनालक्षणस्य बलस्य ( निघं० २–९–९ ) **मह्ना** महत्त्वेन युक्तः । उपलक्षणे तृतीया ( पा० २–३–२१ ) अतिमहदसह्यमस्य बलम् अवश्यमयमावां सादयिष्यतीत्येनमतिमहत्यावप्येते द्यावापृथिव्याभविभीतां यस्य शुष्मादित्येवं वर्तुलार्थो दुर्गेण व्याख्यातः । स इन्द्रः । नाहमिन्द्रो ब्राह्मणोऽहम्[4] ॥ १ ॥

१. दुर्गस्तु–इन्द्राय मनस्वते पुरोडाशस्तस्य याज्येत्याह ॥

२. सायणस्तु–"भवतेर्व्यत्ययेन क्तः "श्र्युकः किति" ( पा० ७–२–११ ) इतीट्प्रतिषेध" इत्याह ॥

३. परिभवप्रकार एव भाष्ये त्रिधा व्याख्यात इत्युपन्यस्तः । तदेतत्स्पष्टं भाष्येऽनुपदम् ॥

४. तत्प्रसादादेवावास्तद्रूप इति एवं व्याख्याशेषं दर्शितवान् । स इत्थमितिहासमाचष्ट—"गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना जिघांसवोऽसुराः किल मरुद्गणैर्विनाकृतोऽयमिदानीमेकः शक्यो हन्तुमिति परिवव्रिरे । स किल भीतोऽनेन सूक्तेनेन्द्रं तुष्टाव, आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयांचकार" इति । तथा चोक्तं बृहद्देवतायाम्—गृत्समदमुपक्रम्य—

"संयुज्य तपसाऽऽत्मानमैन्द्रं बिभ्रन्महद्वपुः ।
अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ॥ १ ॥
तमिन्द्र इति मत्वा तु दैत्यौ भीमपराक्रमौ ।
धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः ॥ २ ॥
विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः ।
यो जात इति मन्त्रेण कर्माण्यैन्द्राण्यकीर्तयत्" ॥ ३ ॥ इति ।

अथास्य भाष्यम्—

**यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षत् । अत्यक्रामदिति वा । यस्य बलाद्द्यावापृथिव्याव-प्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन । स जनास इन्द्र इति ॥**

गतार्थमेतत् ।

**ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ॥**

**दृष्टार्थस्य** अनुभूतेन्द्रमैत्रस्येन्द्रवयस्यस्य **ऋषेर्**गृत्समदस्य **प्रीतिः** स्तुतिर्भवति । **आख्यानसंयुक्ता** आख्यानसंबन्धात् । अतश्च दर्शयति–मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि[1] तेषां विषय इति । अथवा–दृष्टार्थस्य इति देवतार्थं स तत्त्वतो[2] दृष्टवतो भावितान्तःकरणस्य प्रीतेः अतिहर्षात् आख्यानसंयुक्ता अन्येभ्यः कथनसंयुक्तेत्यर्थ इति दुर्गः ॥

अथ क्रमप्राप्तं पर्जन्यं निर्वक्ति—

**पर्जन्यस्तृपेराद्यन्तविपरीतस्य । तर्पयिता–जन्यः ॥**

**पर्जन्यः** ( ५ ) कस्मात् ? **तृपेः** "तृप तृप्तौ" ( दि० प० ) इत्यस्य धातोरन्तर्भावितण्यर्थस्य । कथम् ? **आद्यन्तविपरीतस्य** आद्यन्तविपर्ययेण । अतस्तमाद्यन्तविपर्ययं स्वयमेव दर्शयति–**तर्पयितेति** । तथा च तर्पयतीति तृप् क्विप् । स एव **जन्यः** जनेभ्यो हितः । हितार्थे यत् । तृप् चासौ जन्यश्चेति । तृप्शब्दस्य पर्भावः । सर्वजनपदतर्पयिता भवति पर्जन्यः ॥

**परो जेता वा, जनयिता वा, प्रार्जयिता वा रसानाम् । तस्यैषा भवति ॥ १० ॥**

अथ **वा** एवमन्यथा स्यात्–**परः** प्रकृष्टो **जेता जनयिता वा** पर्जन्यः । परशब्दोपपदाज्जयतेर्जनयतेर्वा "अघ्न्यादित्वात्" ( उ० ४–११० ) यत्प्रत्ययः । क्रमेणानङ्णिलोपौ परशब्दान्त्यलोपश्च निपात्यते । अथ **वा रसानां** जलानां **प्रार्जयिता** प्रकर्षेण अर्जयिता ( संचेता )[3] पर्जन्यः । अघ्न्यादित्वात्साधुः । अत्र प्रशब्दस्यैव परभावः । तथा च परशब्दात् प्रशब्दाद्वा पूर्वपदं जयतेर्जनयतेर्वोत्तरपदम् ॥ १० ॥

१. उपेत्यानुप्रविश्य निगमजातमीक्षितव्य आलोचयितव्य इत्यर्थः ॥

२. सातत्येन ( नैरन्तर्येण ) समाधिना ज्ञातवतः ॥

३. सङ्ग्रहीता । अत्रोपार्जयतेति देवराजव्याख्यानमनुपपन्नमर्जनोपार्जनयोर्भेदस्य "ऋज गतिस्थानार्जनोपार्जनेषु" ( भ्वा० आ० ) इत्यत्र पाणिनीयैर्दर्शितत्वात् । अर्जनं नाम पूर्वैः ( पित्रादिभिः ) अनासादितस्यासादनम् । उपार्जनं तु तद्विपरीतम् ॥

"वि वृक्षान्हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् । उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः॥२॥

( ऋ० सं० ४-४-२७ )

विवृक्षानिति । अत्रेरार्षं जागतम् । कारीर्या[1] दिग्उपस्थाने विनियोगः । **पर्जन्यः** मेघः ( तदधिष्ठाता वायुर्मध्यमो देवः ) अशनिपातैः **वृक्षान् विहन्ति** विनाशयति । **उत** अपि च **रक्षसः** रक्षांसि **विहन्ति** विनाशयति । अतः **महावधात्** महान्ह्यस्य वध इति अस्मात्पर्जन्यात् **विश्वं** सर्वाणि **भुवनम्** भूतजातानि ( प्राणिनः ) । वचनव्यत्यय आर्षः । **बिभाय** बिभ्यति । "छन्दसि लुङ्लङ्लिटः" ( पा० ३-४-६ ) इति वर्तमाने लिट् । **अनागा उत** अनपराधोऽपि **वृष्ण्यावतः** वर्षकर्मवतोऽस्मान्महावधात्पर्जन्याद्भीतः सन् **ईषते** पलायते । "ईष गतिहिंसादर्शनेषु" ( भ्वा० प० ) पदव्यत्यय आर्षः । **यत्** यतोऽयं मां **स्तनयन्** स्तनयित्नुशब्दैरशनिं मुञ्चन् **हन्ति** इति मन्यमानः । सोऽयमेवमतिमहानुभावो यो **दुष्कृतः** पापकृतः ( पापकर्मणः ) हन्तीति[2] क्रियाभ्यासः । स एष भगवान्पर्जन्यो वर्षत्वस्माकमिति प्रार्थना ॥ २ ॥

अथास्या भाष्यम्—

**विहन्ति वृक्षान् विहन्ति च रक्षांसि, सर्वाणि चास्माद्भूतजातानि बिभ्यति महावधात् । महान्ह्यस्य वधः । भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः पापकृतः ॥**

गतार्थमेतन्मन्त्रार्थेन ॥

अथ क्रमप्राप्तं बृहस्पतिं निर्वक्ति—

**बृहस्पति-र्बृहतः पाता वा पालयिता वा, तस्यैषा भवति ॥ ११ ॥**

**बृहस्पतिः** ( ६ ) **बृहतः** महतोऽस्य जगतः, उदकस्य वा । **पाता** रक्षिता । **पालयिता**पि रक्षितैव । धात्वन्यलमर्थैकत्वम् । यद्वा पाता—पानकर्ता गृहीत्वा महोदधेरन्यस्माच्च बृहतो जलाशयात्ततो ह्येष जलमादायाभिवर्षतीति प्रसिद्धिः "पारस्करादित्वात्" ( पा० ६-१-१५७ ) साधुः । तथा च वार्तिकम् "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चे"ति । पति-रिति पातेः पालयतेर्वा डतिः । डित्वाट्टिलोपः । एवमग्रेऽपि ॥ ११ ॥

"अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् । निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणा विकृत्य" ॥ २ ॥

( ऋ० सं० ८-२-१८ )

अश्नेति । आङ्गिरसस्यार्षं त्रैष्टुभं बार्हस्पत्यम् । **बृहस्पतिः अश्ना** अशनवता ( व्यापनवता ) मेघेन **अपिनद्धम्** अन्तर्णीतमदृश्यमन्यैः **मधु** उदकम् **पर्यपश्यत्** सर्वतोऽपश्यत् । कथम् ? **दीने** उपक्षीयमाणप्राये **उदनि** उदके । "पद्न०" ( पा० ६-१-६३ ) इत्यादिनोदकस्योदनादेशः । **क्षियन्तं** निवसन्तम् । "क्षि निवासगत्योः" ( तु० प० ) लटः शतरि शः । **मत्स्यं न** मत्स्यमिव । यथा मत्स्यबन्धोऽल्प उदके मत्स्यं जिघृक्षुरन्तः परिपश्येच्छक्यो ग्रहीतुमयमिति एवमयं ( बृहस्पतिः ) पर्यपश्यत् । ततश्च **विरवेण** भीषणेनातिमहता रवेण ( शब्देन ) ( संक्षोभ्यमेनं, स्रस्तसर्वाङ्गसन्धिबन्धनं कृत्वा-विक्लवम् । तत एवं विह्वलीभूतम् ) **विकृत्य** समन्ततो विशकलीकृत्य **तत् मधु** ( उदकं ) **निर्जभार** निर्जहार ( निर्हृतवान् ) । "हृग्रहोर्भश्छन्दसि" ( पा० ३-१-८४ वा० ) इति हस्य भः । कथम् ? **चमसं न वृक्षात्** । यथा कश्चित्कुशलः शिल्पी वृक्षमध्याच्चमसं यज्ञपात्रं निर्हरेत् ( निष्पादयेत् ) एवम् । अत एवोदकनिर्हरणान्मध्यमः । य एवं निर्जहार बृहस्पतिः सोऽस्माकमपीदं करोत्वित्याशीः ॥ २ ॥

अथास्य भाष्यम्—

**अशनवता मेघेनापिनद्धम् मधु पर्यपश्यन्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तत् । चमसमिव वृक्षात् । ( चमसः कस्मात् ? चमन्त्यस्मिन्निति ) बृहस्पतिर्विरवेण शब्देन विकृत्य ॥**

गतार्थमेतत् । अत्र निगमप्रसक्तं चमसं निर्वक्ति—**चमन्त्यस्मिन्निति** । "चमु अदने" ( भ्वा० प० ) "अत्यविचमि०"

१. कारीरी नाम वर्षकर्मेष्टिः । तस्यां प्रत्यृचमनेन सूक्तेन दिश उपस्थेया इत्याम्नायः । सूत्रितं च "संस्थितायां ( समाप्तायामिष्टौ ) सर्वा दिश उपतिष्ठेत "अच्छा वद तवसं गीर्भिराभिरिति चतसृभिः" इति तत्रेयं द्वितीया ॥

२. विविधं हन्ति क्रूरकर्मणः ॥

३. अत्र दुर्गः—हन्ति उपशमयति सुभिक्षं कुर्वन् । कथम् ? स्तनयन् वर्षेणौषधीर्निष्पादयन् । दुष्कृतोऽकालप्रभवांस्तस्करादीन् । इति । अयमर्थः—अकाले ( दुर्भिक्षे ) तस्करादयो दुष्कृतः प्रादुर्भवन्ति तानयन्नभिवृष्ट्या सुभिक्षं कुर्वन्नुपशमयतीति ॥

१. यथाचोक्तं माघेन—"सादोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी । तान्येकदेशान्निभृतं पयोधेः सोऽम्भांसि मेघान्पिबतो ददर्श ॥" ( स० ३ श्लो० ७४ )

२. अत्र देवराजः—मेघोदरवर्ति सलिलं मध्विदुच्यते । तत्र पुनर्वैद्युतात्मा दह्यमानं सरः स्वर्णेन तद्गतेनैव वायुना ध्मायमानं धमति । धमतिर्गतिकर्मा ( निघं० २-१४ ) वा अन्तर्णीतण्यर्थो निष्कालने द्रष्टव्यः । निर्धाम्यते निष्काश्यते हि तन्मेघादिति ॥

३. एतद्दुर्गवृत्तेरुद्धृतम् । छान्दसोऽत्र दीर्घः ॥

:(उ० ४–११४) इत्यादिना असच्प्रत्ययोऽधिकरणे। तत्र हि सोमश्चम्यते॥

अथैवं क्रमप्राप्तं ब्रह्मणस्पतिं निर्वक्ति—

**ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा। तस्यैषा भवति॥ १२॥**

**ब्रह्मणस्पतिः** (७) ब्रह्म अन्नम् (निघं० २–७–२५) धनं वा (निघं० २–१०–२४) ऋगादि। तस्योभयस्याप्यसौ वर्षेण ओषधीरभिनिष्पादयन्पाता संपद्यते। वर्षाभावे ह्येतदुभयमुत्सीदति। नह्यनश्नन्ब्राह्मणो वेदमधिगन्तुं शक्नुयादिति वर्षमेव तस्यापि हेतुः। "षष्ठ्याः पतिपुत्र०" (पा० ८–३–५३)–इत्यादिना विसर्जनीयस्य सः॥ १२॥

**"अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत्। तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम्"॥ ४॥**

(ऋ० सं० २–७–१)

**अश्मास्यमिति।** गृत्समदस्यार्षं जागतं ब्राह्मणस्पत्यम्। **ब्रह्मणस्पतिः** माध्यमिको देवः। **अश्मास्यम्** अश्मवद्दृढतरास्यम्। भाष्यकारस्तु–अश्मशब्दात्–अशनैवन्तमिति, आस्यशब्दात् आस्यन्दनवन्तमित्याह तथासामर्थ्यमपेक्ष्य। **मधुधारम्** मधु–उदकं धारयितारम् **अवतम्** अवाऽततितम् अवाङ् अवस्तावा (भूमिम्) अततितं गतमुदकभावेन, यं मेघम् **ओजसा** बलेन **अभ्यतृणत्** अभ्यहनत्। "उतृदिर् हिंसानादरयोः" (रु० उ०) लुङ् क्षम्। वर्षणार्थमवधीदित्यर्थः। **तमेव** मेघं **विश्वे** सर्वे **स्वर्दृशः** सूर्यदृशः (स्वँर् आदित्यस्तत्संबन्धिनो द्रष्टारो) रश्मयः **पपिरे** पिबन्ति। वर्तमाने लिट् (पा० ३–४–६) एवमग्रेऽपि। घर्मकाले मेघेन वृष्टस्योदकस्य पानात्तमेव पिबन्तीत्युच्यते। अथ च वर्षाकाले त एव रश्मयः **उत्सम्** उत्सेचनवन्तम् **उद्रिणम्** उदकवन्तम् "कुर्वन्त" इति शेषः। **साकं** सहभूतादवाच्च आवृत्यान्तरिक्ष एनं मेघम् **बहु** प्रभूतं तदुदकम् **सिसिचुः** सिञ्चन्ति। घर्मकाले यत्पीतं ततोऽपि बहुतरं सहस्रगुणितं सिञ्चन्तीत्यर्थः। अत्र षत्वाभाव आर्षः॥ ४॥

अथास्य भाष्यम्—

**अशनवन्त–मास्यन्दनवन्त–मवातितं, ब्रह्मणस्पतिर्मधुधारमभियमोजसा–बलेनाभ्यतृणत्। तमेवसर्वे पिबन्ति रश्मयः। सूर्यदृशो बह्वेनं सह सिञ्चन्ति। उत्समुद्रिणमुदकवन्तम्॥ १३॥**

**इति श्रीमद्यास्कमुनिप्रणीते निरु० दै० कां० दशमाध्यायस्य प्रथमः पादः॥ १०॥ १॥**

अवगतार्थमेतत्। अत्राभियमभ्यतृणदित्येवमभेर्द्विःप्रयोगोभाष्यकृतोयमभिलक्ष्याभिहतवानित्येवमावृत्त्या कथंचिद्योजनीयः॥ १३॥

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० दशमाध्यायस्य प्रथमः पादः॥ १०॥ १॥

## दशमाध्यायस्य द्वितीयः पादः।

अधुना क्रमप्राप्तं क्षेत्रस्यपतिं निर्वक्ति—

**"क्षेत्रस्य पतिः। क्षेत्रं क्षियतेर्निवासकर्मणः। तस्य पाता वा पालयिता वा। तस्यैषा भवति"॥ १॥ (१४)**

**क्षेत्रस्यपतिः** (८) अत्र पूर्वपदं तावन्निर्वक्ति–**क्षेत्रं क्षियतेः निवासार्थात्** क्षिधातोः (तु० प०) त्रन्प्रत्ययः (उ० ४–१६२) बाहुलकात्। तदाश्रयेण हि ग्रामे क्षियन्ति निवसन्ति कुटुम्बिनः। **तस्य०० ता वा।** मध्यमः। तत्कर्मोपपत्तौ हि क्षेत्रस्य क्षेत्रत्वम्। यदा हि मध्यमेन वृष्टं भवति अथ क्षेत्रं सफलं भवति। विगृहीतमेव समाम्नातं निगमे तथैव दर्शनात्॥ १॥ (१४)

**"क्षेत्रस्य पतिना वयं हितेनेव जयामसि। गामश्वं पोषयित्न्वा स नो मृळातीदृशे"॥ १॥**

(ऋ० सं० ३–८–९)

**क्षेत्रस्येति।** मावदेवस्यार्षमनुष्टुप् क्षेत्रस्य पतिर्दैवत्या। क्षेत्रस्य पतये चरोः पुरोनुवाक्या। **वयम्** यजमानाः **हितेनेव** सुहितेनेव। सुष्ठु हितेन केनचिदाप्तेन मित्रेणेव **क्षेत्रस्य पतिना** माध्यमिकेन देवेन संयुक्ताः सन्तः तत्साहाय्यमासाद्य। अत्र

१. एवं बृहस्पतिवत्॥

२. तदेव हि ब्राह्मणानां धनम्। वेदधना ब्राह्मणा उच्यन्ते॥

३. ४. व्यापनवन्तमासेचनवन्तमिति तस्यार्थः। दुर्गस्तु–उदकव्यापनक्रियया तद्वन्तम्, अस्यन्दनक्रियया चोदकप्रक्षरणक्रियया तद्वन्तमित्येवं व्याचष्ट॥

५. सायणस्तु–मधुर्मादयित्री उदकधारा यस्य तादृशम्–इत्याह॥

६. सायणस्तु–अवतमवस्तात्ततं विस्तृतमिति व्याख्यत्॥

७. दुर्गस्तु—स्वरिव ये दृश्यन्ते ते सूर्यसमानदर्शनाः, स्वर्भावेन वा सूर्यभावेन ये मण्डलीभूता दृश्यन्ते, ते पिबन्ति। पुनश्च भाष्य तदुत्सर्गकालं साकं बहु उदकमेनं सिञ्चन्तीत्येवं व्याख्यत्॥

८. उत्सं मेघमित्येवं विशेष्यतयैव दुर्गो व्याख्यत्॥

९. भाष्यकृदध्याहृतमेतत्॥

१. अत्राहुः–"रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे। स्वतन्त्र एव वा कश्चित्क्षेत्रस्य पतिरुच्यते" (सा० भा०) इति॥

२. अत्रोपसर्गयोगो भाष्यकृतैव कृतः। अत्रोपसृष्टार्थं एव धातोर्वृत्तिरिति तदाशयः॥

३. यथा सखा सख्युः साहाय्येन स्वकार्यं साधयति। वयं कर्षकाः स च कर्षक इति॥

"षष्ठी युक्तश्छन्दसिवा"(पा० १-४-९) इति घिसंज्ञायां नाभावः (पा० ७-३-१२०) जयामसि जयामः। "इदन्तो मसि" (पा० ७-१-४६) इति मस इगागमः। अन्नादिसमृद्ध्या सुखिनो भवामः। ततश्चोपजातशक्तयः **पोषयित्नु** पुष्टम् पोषणाय समर्थं च **गामश्वं** गवाश्वलक्षणं धनम्। **आ** आहर्त इत्येवं परिचारकानाज्ञापयामः। **सः** क्षेत्रस्य पतिर्देवः **नः** अस्मान् **मृळाति** पूजयति बलेन वा धनेन वा सत्करोति। तत्प्रसादादेव वयम् **ईदृशे** धनलाभाय भोगाय च "प्रभवाम" इति शेषः। यद्वा-स देवोऽस्मान् धनलाभाय भोगाय च (मृळाति) ददातु दधातु नित्यं स्थिरान्करोतु-इत्येतदाशास्महे। अत्रार्थे मृडातीति दानार्थे लेडन्तम् लेट आट् (पा० ३-४-९४) ॥ १ ॥

अथास्या भाष्यम्—

**क्षेत्रस्य पतिना वयं सुहितेनेव जयामो गामश्वं पुष्टिं पोषयितृ चाहरेति। स नो मृळातीदृशे। बलेन वा धनेन वा। मृळतिर्दानकर्मा, पूजाकर्मा वा। तस्यैषाऽपरा भवति ॥ २ ॥ (१५)**

**अपरा** किमर्थम्। यस्य चरोरेषा पुरोनुवाक्या, तत्र ब्राह्मणं भवति—"इयं वै क्षेत्रं पृथिव्यस्यामदीनायां प्रतितिष्ठति" इति अतः परया वर्षलिङ्गयोपपादयति। भक्तिमात्रं ब्राह्मणमिति ॥ २ ॥ (१५)

**"क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ २ ॥"**

(ऋ० सं० ३-८-९.)

**क्षेत्रस्येति।** आर्षादि पूर्ववत्। विनियोगो महाव्रते। आदित्ये चरुः-(तृ-) रूपश्चतुस्तनग्रहः। तस्य तृतीयमनयर्चा गृह्यते। हे **क्षेत्रस्य पते!** त्वं **मधुमन्तम्** माधुर्योपेतम् (मधुरम्-स्वादु) **ऊर्मिम्** उदकसंघातम् **धेनुः पय इव**। सा यथा पयो दुग्धे तथा **अस्मासु**। निमित्ते सप्तमी। अस्मदर्थं **धुक्ष्व** प्रक्षर। किं च **मधुश्चुतम्** मधु इव यन्मुहुर्मुहुः श्चोतति स्रवति। "श्चुतिर् क्षरणे" (भ्वा० प०) यकाररहितोऽप्ययमतो "गत्यर्थाकर्मक-" (पा० ३-४-७२) इत्यादिना कर्तरि क्तप्रत्ययः। **सुपूतम्** अकलुषम् **घृतमिव** तादृशमुदकमित्यर्थः। **ऋतस्य** उदकस्य (निघं० १-१२-६८) **पतयः** पातारः पालयितारो वा क्षेत्रस्य प्रतिप्रमुखा माध्यमिका देवगणाः **नः** अस्मभ्यम् **मृळयन्तु** प्रयच्छन्तु। मृळतिरिह दानकर्मा त्वक्तोणिजर्थः। भाष्यरीत्या तु तादृशोदकदानेनास्मान्नश्नन्तु-पूजयन्तु वेत्येवमर्थः कथंचिदुपपाद्यः। अत्र पूर्वार्धेन प्रत्यक्षस्तुतिः। उत्तरार्धेन च परोक्षस्तुतिः। अन्येषां प्रत्यक्षत्वात् ॥ २ ॥

अथास्या भाष्यम्—

**क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति। मधुश्चुतं घृतमेवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृळयन्तु। मृळयतिरुपदयाकर्मा पूजाकर्मा वा ॥**

**उपदयाकर्मा** रक्षणार्थः। अवगतमन्यत् ॥

अथातो मन्त्रादेव प्रसक्तं पदानां जाम्यजामित्वमतः परं सर्वमन्त्रेषु चिन्त्यते। जामीति पुनरुक्तस्य संज्ञा। सा पुनरियं निगमत एव लभ्यते। विज्ञायते हि—"जामि वा एतद्यज्ञे क्रियते, यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्त्वतीयं शंसते" इति। तदेतत्पुनरुक्तं द्विविधं-समानशब्दार्थं असमानशब्दार्थं च। तत्रायं-नाम -यदेकमेव पदमेकार्थमेकस्मिन्नेव वाक्याधिकारे पुनरुच्यते। तद्यथा—"मन्मरेजति रक्षोहा मन्मरेजति" (ऋ० सं० २-१-१७) इति। तदधिकृत्यान्यथा प्रतिसमाधानाशक्तौ वक्ष्यति—"अभ्यासे भूयांसमर्थं मन्यन्ते" (नि० १०-४२) इति। यत्पुनरसमानार्थं पदमभ्यस्यते तदपुनरुक्तमेव। यदसमानशब्दं समानार्थं च तदसुखप्रतिसमाधानमिति तदर्थमिहोपोद्धन्ति—

**तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवतीत्येकं, "मधुमन्तं मधुश्चुतमि"ति यथा ॥**

---

१. पुष्टं पोषयितृ चेति भाष्यात्तत्रावृत्तिरत्र पदे द्रष्टव्या। पुषेर्ण्यन्तादिष्णुच् प्रत्ययः। तत्राद्यार्थे णिजर्थप्रेषणस्य त्यागः। "रामो राज्यमचीकरत्" इत्यत्र यथा ॥

२. एतदभिप्रेत्यैव पोषयित्नु इति नपुंसकाभिधानम्। धनमिति तदर्थः। तथा चेदं धर्मिपदं भवितुमर्हति। आर्षो वा लिङ्गव्यत्ययः।

३. अत्रोपसर्गबलाद्योग्यां क्रियामध्याजहार भाष्यकृदर्थाभिनिवेशवशात्। अत्र प्रायशोऽध्याहृतिरेवार्थानामिति व्यक्तं दुर्गव्याख्याने। दुरूहश्चायमतिमहान्वेदार्थं इति ॥

४. धारणार्थे ददातेर्विपर्ययेऽपि दानमेव फलति वाक्यार्थे इति दानकर्मण उदाहरणं भवति ॥

५. लोके तु "मृड सुखने" (तु० प०) इति पठ्यते। दुर्गेण तदर्थपरतयाऽपि कथंचिद्व्याख्यातमिति तत एवावगन्तव्यं विस्तरभयान्नेहोद्धृतमिति ॥

६. भक्तिर्लक्षणेत्यनर्थान्तरम् ॥

१. अत्र प्रदानेनेत्यध्याहृत्य ऋतस्येत्यनेन संयोज्यम्। पतयः कस्य? ऋतस्यैवेत्यर्थात्। तथासति घृतच्युतमित्यापि व्यतीत-(व्यतिगत-) विभक्त्यन्तं षष्ठ्यन्तमेवास्त्विति सुयोजम् ॥

२. प्रत्यक्षत्व-परोक्षत्वे मानसे एव। शब्दसन्निवेशवशात् ॥

३. मन्म-मननीयं स्तोत्रं कर्म वोद्दिश्य रेजति गच्छति (निघं० २-१४-६०)

४. असुखं क्लेशेन यत्प्रतिसमाधातुं शक्यते तत् ॥

तदिति वाक्योपादाने **यत्** । **समान्याम्** एकस्याम् **ऋचि** । **समानाभिव्याहारं** समानशब्दं पदं **भवति** । तत् **यथा-मधु००मिति** । यो हि मधुश्चुदवश्यमसौ मधुमान् । इति-एकमाचार्यमतम् ।

**यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम्—**

**"हिरण्यरूपः स हिरण्यसंदृगि"ति यथा ।**

( ऋ० सं० २-७-२३-५ )

नानार्थचंगतयोः समानार्थयोरपि पदयोरसमानपदान्तरव्यवधानात् प्रकृतार्थानुस्मृतये पुनरनुकीर्तनमजाम्येव, किं तु **यदेव समाने पादे** एकस्मिन् पदान्तरेण व्यवहितं पदं समानार्थं पुनरुच्यते, अविच्छिन्नपदानुस्मृति **तदेव जामीत्यपरम्** । तद् **यथा हिर००दृगिति** । यो हिरण्यरूपः स अवश्यं हिरण्यसंदृक् भवति ॥

तत्किं पौनरुक्त्येन तद्योज्यं पदं, तत्संयोगाद्वा तदसाधु मन्त्रवाक्यं ? नेत्युच्यते—

**यथाकथा च विशेषोऽजामि भवतीत्यपरम् ॥**

**"मण्डूका इवोदकान्मण्डूका उदकादिव"**

**इति यथा** ( ऋ० सं० ८-८-२४-५ )

**यथाकथा च** यथाकथंचित् ( यः कश्चित्स्वल्पोऽपि हि ) तत्र **विशेषो** वक्तव्यः । दृष्टानुविधानाच्छन्दसः, तदर्थानुविधान एवं यतेत येनकेनचित्स्वल्पेनापि विशेषेण **तदजामि** अपुनरुक्तार्थं **भवति** । **इत्यपरं** मतमिदमेवाचार्यस्याभिरुचितम् । तद् **यथा-मण्डू००दिव इति** । यथा मण्डूका उदकाभावे नियमेनास्वाधीनवृत्तयो निर्वचनाः संपद्यन्ते, एवं मद्दते यूयं माभूत । एवमत्रैकत्र विद्विषां निर्वाक्त्वे मण्डूका उपमानम् । अन्यत्र-उदकाभावे मण्डूका यथा न भवन्ति एवं मदभावे यूयमित्युदकमुपमानम् । एष विशेषः पूर्वयोरपि मन्त्रयोर्भवति-कश्चिन्मधुमान्भवति, न तु मधु अविरतं मुहुर्मुहुश्चोततीति । एवं भवति कश्चिद्धिरण्यरूपो न तु हिरण्यमिव दृश्यमानः प्रियः । यथा ग्रीष्मेऽयोगोलकः । इति विशेषः ॥

अथ क्रमप्राप्तं वास्तोष्पतिं निर्वक्ति—

**वास्तोष्पतिः—वास्तुर्वसतेर्निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्यैषा भवति ॥३॥ (१६)**

**वास्तोष्पतिः** (९) इति वक्तव्यः । स च पुनरेष रुद्रात्मना मध्यमः । तस्य पूर्वं पदं विगृह्य निराह—**वास्तुर्वसतेः** । "वस निवासे" ( भ्वा० प० ) अस्मात् "वसेस्तुन् णिच्च" इति तुन् । णित्वादादिवृद्धिः । वास्त्वन्तरिक्षं तस्य पाता विभुत्वेन । गृहं वा ॥ ३ ॥ ( १६ )

**"अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः" ॥ १ ॥**

( ऋ० सं० ५-४-२२ )

**अमीवहा** इति । वसिष्ठस्यार्षं गायत्री वास्तोष्पतिर्दैवत्या । गृहकारिकास्थालीपाके, यायावर्यप्रतिपत्तौ च वास्तोष्पतीयहोमे विनियोगः । हे भगवन् **वास्तोष्पते !** गृहस्य पालक एतत्संज्ञक देव ! **अमीवहा** अमीवा रोगः ( नि० ६-१२ ) व्याख्यातस्तस्य हन्ता त्वं **विश्वा** विश्वानि सर्वाणि ( बहूनि ) शेर्लो ( पा० ७-१-६९ ) रूपाणि **आविशन्** प्रविशन् तत्तद्रूपेणास्मदुपद्रवान्घ्नन् **नः** अस्माकम् **सखा** मित्रभूतः **सुशेवः** सु-( ष्ठु-) सुखः **एधि** भव । "अस भुवि" ( अ० प० ) "घ्वसोरेद्धावभ्यासलोपश्च" ( पा० ६-४-११९ ) इत्यस्यैत्वम् । "श्नसो-" ( पा० ६-४-१११ ) इत्यालोपः । एत्वस्यासिद्धत्वाद्धेर्धिः ॥ १ ॥

अथास्य भाष्यम्—

**अभ्यमनहा वास्तोष्पते । सर्वाणि रूपाण्याविशन् सखा नः सुसुखो भव ॥**

**अभ्यमनं** रोगव्यापारस्तस्य हन्ता । गतार्थमन्यत् ।

अथ निगमप्रसक्तं शेवशब्दं निर्वक्ति—

**शेव इति सुखनाम । शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः । शेवमित्यप्यस्य भवति ॥**

**शिष्यतेः** "शिष् असर्वोपयोगे" ( चु० प० ) दिवादिषु भ्वादिवदाकृतिगण इति श्यनाऽत्र निर्देशः । अस्मायं **वकारो नामकरणः** नामप्रयोजकः ( संज्ञाबोधकः ) प्रत्ययः । स **च-अन्त००लिङ्गी** । अन्ते तिष्ठति यो वर्णः षकारस्तस्यान्तरमवकाशस्थानमुपलिङ्गयति गच्छति । षकारस्य लोप इति

---

१. समानमर्थमभिव्याहरति पदान्तरेण, यः कश्चित्पूर्वेऽर्थेऽभिहितोऽर्थस्तमेवोत्तरेऽर्थेऽभिदधदित्यर्थः ॥

२. मा भूयास्त, लिङर्थे लुङ् । "माङि लुङ्" ( पा० ३-३-१७५ ) सर्वलकारापवादः ॥

१. अमीवहा इति बलकृतिलिङ्गात् ॥

२. विज्ञायते हि वास्तोष्पतीये—यायावर्यप्रतिपत्तौ गृहगमनमधिकृत्य—"न हीनमन्वाहरेयू रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयुः रुद्रं भूतमन्वाहरेयुः" इति । स एष गृहाधिदेवता रुद्रो वास्तोष्पतिः । तदधिदेवताभावेन रुद्रात्मना च तत्कृतेनोपकारेण रक्षिता मध्यमः । ततस्था ब्रुसीदेयुर्गृहाः ॥

३. यस्यासह्दुःखहेतोर्यः प्रतिपक्षः—सर्पादेर्नकुलादिस्तस्य रूपमाविशंस्त्वं तमस्माकमपीवानं घ्नन्नित्यर्थः ।

४. तथा चायं यौगिको न तु यरत्वेषु रूढः ॥

५. तत एव चास्य प्रत्ययत्वोपपत्तिः ॥

यावत् । सोऽयं वकारो विभाषितगुणः । सप्तम्यर्थे बहुव्रीहिः । तेन शिवमित्यपि, अस्य शिष् धातोर्वप्रत्यये सति भवति ॥

अथ सर्वाणि रूपाण्याविशन्निति यदुक्तं, अत्रास्य सामर्थ्यमुपदर्शयति—

**यद्यद्रूपं कामयते तत्तद्देवता भवति ॥**
**"रूपं रूपं मघवा बोभवीति"**
**इत्यपि निगमो भवति ॥**

( ऋ० सं० ३–३–२०३ )

अस्त्येतदैश्वर्यं देवतायाः यद्यदिच्छति रूपं तत्तत्करोतीति शक्नोति वास्तोष्पतिः सर्वाणि रूपाण्यावेष्टुम् । निगमोऽपि हि भवत्यैश्वर्यख्यापको देवतायाः–रूपं००वीति । अस्य "मायाः कृण्वानस्तन्वं १ परि स्वाम् । त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा" इति शेषः । विश्वामित्रस्यार्षं त्रिष्टुबैन्द्री । मघवा धनवान् इन्द्रः रूपं रूपं यद्यद्रूपं कामयते तत्तद्रूपं बोभवीति तत्तद्रूपात्मकः पुनः पुनरतिशयेन वा भवति । यङ्लुगन्तमेतत् । कथमिति कारणमुच्यते–मायाः अनेकरूपग्रहणसामर्थ्योपेताः कृण्वानः इदंभवामीदंभवामीत्येवं स्वां स्वकीयां तन्वं तनुम् । "वा छन्दसि" ( पा० ६–१–१०६) इ"त्यमि पूर्व" (पा० ६–१–१०७) इत्यत्राप्यनुषज्यत इति पूर्वरूपाभावे यण् । परिः पञ्चम्यर्थद्योतकः । "ततोऽन्यत्रापि दृश्यते" ( पा० १–४–४८ वा० ) इति तद्योगे द्वितीया । स्वस्माच्छरीरान्नानाविधानि शरीराणि निर्मिमीते । यद्वा स्वां तनुं नानाविधरूपोपेतां करोति । तथा च मन्त्रवर्णः "इन्द्रो मायाभिः पुरुरूप ईयते" इति । अथवा स्वां तनुं परि ( प्रति ) मायाः कृण्वानः तत्तदाकृत्यानेकविधां विकुर्वाणः । यत् यस्मात् स्वैर्मन्त्रैः स्वकीयैः स्तुतिलक्षणैर्वाक्यैराहूयमानः स्तूयमानो वा युगपद्यजमानानां यज्ञेषु अनृतुपाः । न केवलमृतुष्वेव पिबति किंत्वनृतुष्वपि बहुशः सोमं पिबन्सर्वदा यागोत्पत्तेरनियतसोमपानकालः । ऋतावा ऋतवान् यज्ञवान्सत्यवान्वा तादृश इन्द्रः । "छन्दसीवनिपौ च वक्तव्यौ" ( पा० ५–२–१२२ वा० ) इति वनिप् छान्दसो दीर्घः ( पा० ६–३–१३७ ) सांहितिकः । दिवः द्युलोकात् परिमुहूर्तम् एकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु । तत्रापि त्रिः त्रिवारं त्रिष्वपि सवनेषु आ अगात् आगच्छति । इणो लुङि गादेशः । ततश्च येनासावेवमात्मानं विकरोत्येवं च दिवो मुहूर्तं त्रिरागच्छति तेनासावचिन्त्यप्रभावत्वाच्छक्नोति तत्तद्रूपमावेष्टुमित्युपपद्यते ॥ ३ ॥

अथ क्रमप्राप्तं वाचस्पतिं निर्वक्ति—

**वाचस्पति—र्वाचः पाता वा पालयिता वा । तस्यैषा भवति ॥ ४ ॥ ( १७ )**

१. तत्तदेव भवतीति क्वचित्पाठः ॥

वाचस्पतिः ( १० ) वक्तव्यः । स पुनरेषः–वाचः०० तावा । प्राणात्मनेन्द्रः ॥ ४ ॥ ( १७ )

**"पुनरेहि वाचस्पते देवेन मनसा सह । वास्तोष्पते निरामय मय्येव तन्वं १ मम" ॥२॥**

( अ० सं० १–१–२ ) ( ऋ० सं० १०–६–१३–७ )

**इति सा निगदव्याख्याता ॥**

पुनरिति । अपगतप्राणमिवात्मानं मन्यमानः पापकृत् पापसंबन्धात्कृतधिक्कृताऽनिर्णेजनः सन् प्राणात्मानं वाचस्पतिं ब्रवीति–हे वाचस्पते ! प्राण ! देवेन सर्वेन्द्रियवृत्तिदीपकेन मनसा सह पुनरेहि त्वं मां प्रतीति । एत्य च हे वास्तोष्पते ! धनस्य अन्नस्य च पते ! मय्येव मयि एव एतां मम तन्वं तनुम् निरामय नियमेन रमय । संहितायां दीर्घ आर्षः । मायासीमेत्त इति । प्राणात्पृथग्भवन्तमात्मानं पश्यन्स्तोता ब्रवीति ॥ २ ॥ इति सा सेयमृक् निगदेन पाठमात्रेण व्याख्याता सरलेत्यर्थः ॥

**अपान्नपात् तनूनप्त्रा व्याख्यातः । तस्यैषा भवति ॥ ५ ॥ ( १८ )**

अथ क्रमप्राप्तः अपान्नपात् ( ११ ) इत्ययं तनूनप्त्रा तनूनपृशब्देन व्याख्यातः शब्दनिर्वचनतः । अभिधेयतस्तु मध्यमः । अग्न्य आदित्यस्ततो मध्यम इत्येवमपांपौत्रः ॥ ५ ॥ ( १८ )

**"यो अनिध्मो दीदयदप्स्व १ न्तर्यं विप्रास ईळते अध्वरेषु । अपान्नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय" ॥ ४ ॥**

( ऋ० सं० ७–७–२४ )

य इति । इत्थपुत्रस्य कण्वस्यार्षं त्रैष्टुभमपान्नपाद्देवत्यम् । अत्रोत्तरार्धस्य प्रत्यक्षकृतत्वादेकवाक्यतायै युष्मच्छब्दप्रयोगमध्याहृत्य पदव्यत्ययेन व्याचष्ट भाष्यकृत् । हे अपान्नपात् ! यस्त्वम् अप्सु अन्तः अपांमध्ये मेघस्थाने अनिध्मः अनिन्धनापि ( काष्ठवर्जितोऽपि ) सन् दीदयत् दीप्यते । यं च त्वां विप्रासः विप्राः मेधाविन ऋत्विग्यजमानाः "आज्जसेरसुक्" ( पा० ७–१–५० ) इत्यसुगागमः । अध्वरेषु यज्ञेषु ईळते स्तुवन्ति । स त्वमपान्नपात् । मधुमतीः मधुररसो-

१. दिविरत्र द्युत्यर्थः (दि० प०) "दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु"त्येवं पठ्यते सः ( सि० कौ० ) ॥

२. नैरुक्तो धातुः (नि०१–१९) यद्वा "दीधीङ् दीप्तिदेवनयोः" (अ० आ०) इत्यस्य धकारस्य दकारो व्यत्ययेन । "बहुलं छन्दसि" (पा० २–४–७३) इति शपो लुगभावः । परस्मैपदित्वं छान्दसम् । व्यत्ययेन (पा० ३–१–८५) ॥

पेताः अपः वृष्टिलक्षणाः दाः अस्मभ्यं देहि । लोडर्थे लुङ् ( पा० ३-४-६ ) अडभाव आर्षः । अभिषवाय । याभिः वासतीवर्यैकधनारूपाभिः सोमेन शृताभिरद्भिस्त्वमेव इन्द्रः ईश्वरः सोमपानद्वारेण वीर्याय वीरकर्मणे ( वृत्रवधादिशूरकर्मणे ) वावृधे वर्धेथाः । इत्येतत्प्रार्थये ॥ ४ ॥

अथास्या भाष्यम्—

**योऽनिध्मो दीदयद्दीप्यसेऽभ्यन्तरमप्सु यं मेधाविनः स्तुवन्ति । यज्ञेषु सोऽपान्नपान्मधुमतीरपो देह्यभिषवाय । याभिरिन्द्रो वर्धते वीर्याय ॥**

गतार्थमेतन्मन्त्रव्याख्यया ॥

अथ क्रमप्राप्तो—

**यमो—यच्छतीति सतस्तस्यैषा भवति ॥ ६ ॥ (१९)**

**यमः** ( १२ ) निर्वक्तव्यः । स पुनरेष **यच्छति** उपरमयति जीवितात्सर्वं भूतग्राममिति यमः । "यम उपरमे" ( भ्वा० प० ) "पचाद्यच्" ( पा० ३-१-१३४ ) अत एव बलवानिति ( बलकृतेः ) मध्यमः । देवराजस्तु—यच्छति प्रयच्छति स्तोतृभ्यः कामानिति यमो मध्यमस्थानो वायुरित्याह ॥ ६ ॥ (१९)

**"परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य" ॥ १ ॥**

( ऋ० सं० ७-६-१४ )

**परेयिवांसमिति** । विवस्वतः पुत्रस्य यमस्यार्षं त्रिष्टुब् यमदेवत्यम् । याम्ये पशौ वपायां विनियोगः । हे मदीयान्तरात्मन् ! यजमान ! वा । त्वं **राजानम्** पितॄणां स्वामिनम् **यमं वैवस्वतम्** **हविषा** पुरोडाशादिना **दुवस्य** परिचर । कीदृशम् ? **प्रवतः** प्रकृष्टगतिमतो मनुष्यान् उद्वतो निवत इति भाष्यकारोऽध्याजहार । तथासामर्थ्या—(दर्थंगतेः) तथा च **उद्वत** ऊर्ध्वगान्देवान् **निवतः** नीचगान् तिर्यञ्चश्चेत्येवं **महीः** महतीः भूतजातीः **परेयिवांसम्** पर्यागतवन्तम् क्रमेण मरणादूर्ध्वं तत्तद्भोगोचितभूलोकादिप्रदेशविशेषान्प्रापितवन्तम् "उपेयिवाननाश्वाननूचानश्च" ( पा० ३-२-१०९ ) इति क्वस्वन्तो निपातस्तत्रोपेत्य विवक्षितमित्युक्तम् ( सि० कौ० ) तथा **बहुभ्यः** पुण्यकृद्भ्यः पापकृद्भ्यश्च **पन्थाम्** पन्थानम् स्वस्वकर्मोचितस्वर्गनरकादिमार्गम् **अनुपस्पशानम्** अनुपस्पाशयमानम् । अबाधमानम् अमुना मार्गेणायं प्राणी जीवनादुत्सर्पन्नेतु अमुना चायमित्येवं तत्तन्मार्गद्वारमनुप्रदिश्य प्राणिनोनिर्बाधं गमयन्तम् । **जातानां संगमनं** सममेव नक्षुःकृत्वा योऽस्माल्लोकादमुं लोकं यथा कृतकर्मफलभोगवशेन जनान्नमयति तमेतमेवंकर्माणं **वैवस्वतं** विवस्वतः सूर्यस्य पुत्रम् ॥ १ ॥

अथास्या भाष्यम्—

**परेयिवांसं पर्यागतवन्तं प्रवत उद्वतो निवत इत्यवतिर्गतिकर्मा बहुभ्यः पन्थानमनुपस्पाशयमानं, वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्येति । दुवस्यती राध्नोतिकर्मा ॥**

**अवतिः** धातुः "अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु" ( भ्वा० प० ) पठित इह **गत्यर्थः** । अत्राकारलोपश्छान्दसः । शत्रन्तमेतत् । **दुवस्यतिः** नैरुक्तो धातुः ( निघं० ३-५-५ ) **राध्नोतिकर्मा** परिचरणार्थः ॥

अथ प्रसङ्गाद्वा शब्दसारूप्याद्वा निराह—

**अग्निरपि यम उच्यते । तमेता ऋचोऽनुप्रवदन्ति ॥ ७ ॥ ( २० )**

अत्र **अग्निरपीति** विचारोपप्रदर्शनाय । **तमेता** इत्यादि प्रतिज्ञातार्थोपपादनाय । यथाग्निरपि यमशब्देनोच्यते तथा **एता ऋचोऽनुप्रवदन्ति** ॥ ७ ॥ ( २० )

**"सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका" ।**

**"यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम्" ॥**

**"तं वश्चराथावयं वसत्यास्तं न गावो नक्षन्त इद्धम्" ॥** ( ऋ० सं० १-५-१०-७-८-९ )

**सेनेवेत्याद्या** द्विपदा विराजः पराशरस्यार्षमाग्नेयं प्रातरनुवाकाश्विनयोः शस्यते । तत्र—**सृष्टा** सेनापतिना विसृष्टा प्रेरिता

---

१. एतच्च दुर्गोक्तिमनुसृत्य व्याख्यातं, भाष्ये तु प्रथमपुरुषमेवेति स्पष्टं, सायणोऽप्येवमाह । यङ्लुगन्ताल्लेटि रूपम् ॥

२. सायणस्तु—प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्महीस्तत्तद्भोगोचितभूप्रदेशविशेषान् अनुपरेयिवांसं क्रमेण मरणादूर्ध्वं प्रापितवन्तम् । तथा बहुभ्यः पुण्यकृद्भ्यस्तदर्थं पन्थां स्वर्गलोकोचितमार्गमनुपस्पशानमबाधमानं, पापिन एव पुरुषान्स्वर्गमार्गबाधेन नरकं प्रापयन्तं न तु पुण्यकृत इत्यर्थः । वैवस्वतं विवस्वतः सूर्यस्य पुत्रं जनानां पापिनां सङ्गमनं गन्तव्यस्थानरूपम् । इत्येवं व्याख्यत् ॥

१. तेन ईयिवान् समीयिवानित्यपि भवति ॥

२. "स्पश बाधनस्पर्शनयोः" (भ्वा० प०) उपपूर्वो ण्यन्तस्ततो लटः शानच् । नञ्समासे नुडागमः ॥

३. कण्ड्वादौ "दुवस् परितापपरिचरणयोः" इत्येवं पठ्यते । स एष प्रमादः प्रतिभाति ॥

**सेना इव** अयमग्निः **अमं** भयं वा बलं वा **दधाति** विदधाति करोतीत्यर्थः। तत्र भयं परेभ्यः, बलं स्वेभ्यः। अथवा अतर्किता भयं दधाति, तर्किता बलं दधाति। अत्रैव निदर्शनान्तरमुच्यते—**अस्तुर्न दिद्युत्** दिद्युत् इति वज्रमुच्यते (निघं० २-२०-१) स चेहायुधसामान्यादिषुर्लक्ष्यते। सा यथा क्षेप्तुरमं दधाति, उक्तवदर्थः। "असु क्षेपणे" (दि० प०) तृन्। एवमस्याग्नेः **त्वेषप्रतीका** त्वेषं-महत्-भयं-बलं दीप्तं वा "त्विष् दीप्तौ" (भ्वा० उ०) पचाद्यच्। प्रतीकं दर्शनं अङ्गं वा मुखं वा। ततश्च षष्ठ्यर्थबहुव्रीहिणा भाष्यकारो व्याचष्ट—महाप्रतीका—महती या दृश्यते, भयप्रतीका—दर्शनादेव भयानका—बलप्रतीका बलवदङ्गवती (सबला—भूयिष्ठबलवती) दीप्तप्रतीका—दीप्तदर्शना—दीप्तमुखा वा। "अर्चि"रिति शेषः। सापि अमं दधाति—रक्षोभ्यो भयं दधाति स्वेभ्यो यष्टृभ्यो बलम्। यस्त्वेदमेवंलक्षणमर्चिः स **यमोह** यम एव सोऽग्निरेव यम इत्यर्थः। यच्चत्वसौ स्तोतृभ्यः कामान्परेभ्योऽभयं च। अथ वा इन्द्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वम् ॥ ७ ॥

यः **जातः** उत्पन्नो भूतसङ्घः। यच्च **जनित्वम्** जर्नयितव्यमुत्पत्स्यमानं भूतजातं तदुभयमपि **यमः** अग्निरेव सर्वेषां भावानामाहुतिद्वाराऽस्यैधीनत्वात्। स एवाग्निः **कनीनाम्** कन्यकानाम् **जारः** जरयिता कन्याभावस्य, यदा ह्यग्निसन्निधावूढा भवन्ति, अथ तासां कन्याभावो जीर्णो भवति, अथ च **जनीनाम्** जन्यन्ते आस्विति जनयः स्त्रियः "सर्वधातुभ्य इन्" (उ० ४-११६) इतीन्प्रत्ययः। जायानाम् **पतिः** पालयिता। कथम्? ऊढास्तास्तत्प्रधानाः संपद्यन्ते, अग्नौ व्रतोपगमनात्। आव्रतविमोकादग्निपारतन्त्र्यात् ॥ ८ ॥ **व** इति व्यत्ययेन बहुवचनं त्वामिति तदर्थः। हे अग्ने! **वयं** ऋत्विजः **इद्धं** प्रदीप्तं समिद्धं भोगैरिति भाष्यम्। सर्वभोगानामीश्वरं प्रदातारं **तं वः** तं त्वाम् अग्निम् अयम् **चराथा** चरन्त्या जङ्गमया पश्वाहुत्या **वसत्या** निवसन्त्या औषधाहुत्या च (जङ्गमेन स्थावरेण च हविषा) **नक्षन्ते** व्याप्नुयामः (निघं० २-१८-२) व्यत्यय आर्षः। अत्र दृष्टान्तः—**अस्तं न गावः**। इति। अस्तमिति गृहनाम (निघं० ३-४-५) यथा गावः गृहं स्वनिवासभूमिं नक्षन्ते व्याप्नुवन्ति, स्वेनोपकारेण सायं वासाय, तथेमं त्वामग्निमुभयलक्षणेन हविषा वयमाप्नुयाम इत्यर्थः ॥ ९ ॥

अथास्यां भाष्यम्—

**इति—द्विपदाः। सेनेव सृष्टा भयं वाऽनलं वा, दधात्यस्तुरिव। दिद्युत्त्वेषप्रतीका=भयप्रतीका बलप्रतीका, महाप्रतीका, दीप्तप्रतीका वा॥**

**द्विपदाः** विराजः। **सेनेवेति**। अनेन प्रथमा द्विपदा व्याख्याता।

अथ यदुक्तमिन्द्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वमिति, अस्मिन्नर्थे ब्राह्मणं प्रमाणयति—

**"यमो ह जात इन्द्रेण सह सङ्गतः"।**

इति। इति पुरातीताख्याने **इन्द्रेण सह यमो जातः। सङ्गतः** युगपच्चाभिधीयते मन्त्रवर्णेषु—तदेतदाह—

---

१. सा यथा बलवती तथाग्निरपि बलवानित्यर्थः। ददातीति यावत्। दा-धोर्वेदे विनिमयोऽसकृद्दृष्टः। अत्र भयं वा बलं वेति भाष्यव्याख्यानमेवामशब्दस्य तथार्थत्वे गमकम्। अमतिरयं गत्यादिषु (भ्वा० प०) पठ्यते॥

२. भयं वा बलं वा ददाति क्रमेण परेभ्यः स्वेभ्यश्चेति॥

३. प्रत्यञ्चनं प्रतीकं संमुखीभवनं दर्शनमिति पर्यवसितोऽर्थः। "अङ्गं प्रतीकोऽवयव" इति चामरः॥

४. "ज्वालाभासौ नपुंस्यर्चिः" इत्यमरः। "अथार्चिर्मयूखशिखयोर्न ना" इति च मेदिनी॥

५. "दाण् दाने" (भ्वा० प०) "पाघ्राध्मा०" (पा०७-३-७८) इति यच्छादेशः॥

६. "जनी प्रादुर्भावे" (दि० आ०) "कृत्यार्थे तवैकेन्केन्यत्वनः" (पा० ३-४-१४) इति त्वन्प्रत्ययः॥

७. तथाचासकृदाख्यातम्—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति॥

८. अत्र "बहुलं छन्दसि" (पा० ६-१-३४) इति कन्याशब्देऽपि बाहुलकात्संप्रसारणं पूर्वरूपत्वम्॥

९. सायणस्तु—पतिर्भर्ता,—तथा चाख्यायते—अनुपजातपुरुषसंभोगेच्छावस्थां स्त्रियं सोमो लभते, स च सोम ईषदुपजातभोगेच्छां तां विश्वावसवे गन्धर्वाय प्रादात्, स च गन्धर्वो विवाहसमयेऽग्नये प्रददौ, अग्निश्च मनुजाय भर्त्रे धनपुत्रैः सहितामिमां प्रायच्छदिति। इममर्थं काचिदृक् स्पष्टं ब्रूते—"सोमो ददद् गन्धर्वाय गन्धर्वो दददग्नये। रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्॥" इति। ददत्—अदात्। अदात्—ददाति॥

१. "आवसथ्याधानं दारकाले" (पा० गृ० सू०) इत्याम्नायते। तत्सन्निधावेव हि व्रतोपगमो भवति। स्वं परिचरन्तीं तामग्निरेव पालयति शौचं च ददौ, तथाचोक्तं—"अग्निः शौचं ददौ तासाम्" इत्यादि॥

२. सायणस्तु—चरतीति चरथः पशुस्तत्प्रभवैर्हृदयादिभिः साध्या आहुतिरपि चरथेत्युच्यते। उपचारात्कार्ये कारणशब्दः। चरथा चरथया पशुप्रभवहृदयादिसाधनया आहुत्या। वसत्या—वसति—निवसतीति स्थावरो व्रीह्यादिर्वसतिः। पूर्ववत्तत्साध्याहुतिर्लक्ष्यते। वसत्या पुरोडाशाद्याहुत्या चेत्येवं व्याख्यत्। अत्र चराथेति चरेरौणादिकोऽथप्रत्ययः। दीर्घश्छान्दसः। "सुपां सुलुक्" (पा० ७-१-३९) इति विभक्तेराकारः॥

३. "वहिवस्यर्तिभ्यश्चित्" (उ० ४-८९) इत्यतिप्रत्ययः। "वस निवासे" (भ्वा० प०)॥

४. दुर्गस्त्वेवमवतारयति—"कथमेतद्गम्यते पार्थिवोऽग्निर्यमशब्देनोच्यते, न मध्यमो नोत्तमो वा? इति। तावपि हि यमावुच्येते, यतो निगमान्तरेण विभज्य दर्शयति" इति॥

"युमाविहेह मातरा"

( ऋ० सं० ४-८-२५-१ )

इत्यपि निगमो भवति ॥

अस्य "बळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ । समानो वां जनिता भ्रातरौ युवम्" इत्यादिः । भरद्वाजस्यार्षं बृहती । बट् इति सत्यनाम ( निघं० ३-१०-१ ) हे इन्द्राग्नी ! वां युवयोः महिमा महत्त्वं-महाभाग्यम् इत्था इत्थम् अमुना प्रकारेण ( यः सूक्ते महाभाग्यप्रकारोऽधिकृत-स्तमित्थेत्यभिनयेनोपदिशन् ब्रवीति ) बट् सत्यम् आ-पनिष्ठः सर्वतोऽतिशयेन स्तुत्यः "पन स्तुतौ" ( भ्वा० प० ) कर्मणि कृत्यार्थेच् । पनितुं योग्यः पनः । ततोऽतिशायने इष्ठन् ( पा० ५-३-५५ ) यौ युवामेवमतिमहानुभावौ तयोर्युवयोः समानः एक एव जनिता जनयिता सूर्यः । तौ युवम् युवामेवं कृत्वा एकपितृकौ एकजन्मानौ यमौ भ्रातरौ इहेह मातरा इह पृथिवीलोके, इह च अन्तरिक्षलोके अवस्थितौ मातरौ सर्वस्य लोकस्य निर्मातारौ मातरेति निपातितः ( पा० ६-३-३३ ) ॥ १ ॥

एवमिह मन्त्रे पितृत्वेन सूर्यो व्यपदिष्टः, इन्द्राग्नी यमौ इति यमशब्दोमध्यमस्थानपृथिवीस्थानयोरत्रापि द्वयोर्यमयोरिह चेह च निर्मातारावविति प्रथमेन-इह-शब्देन अग्निर्यम इति लक्ष्यते । यस्मादिहापि "यमो ह जातो यमो जनित्वम्" इति युक्तं यदग्निरेवोच्यत इति ॥

अथ द्वितीयां द्विपदां व्याचष्टे—

**यम एव जातो यमो जनिष्यमाणो, जारः कनीनां-जरयिता कन्यानाम् पतिर्जनीनाम्-पालयिता जायानां, तत्प्रधाना हि यज्ञसंयोगेन भवन्ति ॥**

तत्प्रधानाः । अग्निप्रधानाः ( अग्निपरतन्त्राः ) सोऽग्निः प्रधानं प्रभुर्यासां ता इत्यर्थः ॥

एतदर्थसंवादिनं निगमान्तरं दर्शयति—

"तृतीयो अग्निष्टे पतिरि"—

( ऋ० सं० ८-३-२७-५ )

त्यपि निगमो भवति ॥

स यथा—"सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः" इति ॥

सूर्याया आर्षमनुष्टुप् । विवाहे विनियोगः-हे कन्ये ! जातां त्वां सोमः चन्द्रः प्रथमः प्रथमभावी सन् विविदे लब्धवान् । "विद्लृ लाभे" ( तु० उ० ) लिट् । ( सौम्ये प्रथमकौमारके ) तत उपजायमानचारुतराङ्गविभागस्वरसौष्ठवा-मीषदनङ्गाङ्गसमाहृतहृदयां त्वां गन्धर्वः विश्वावसुः विविदे लब्धवान् । अथ पुनरिदानीं वैवाहिके कर्मण्युपगतायाः ते तवायम् अग्निः पतिः तृतीयः । अत उद्वाहनात्परं तुरीयः चतुर्थः । "चतुरश्छयतावाद्यक्षरलोपश्च" ( पा० ५-२-५१ वा० ) इति साधुः । ते तवायं मनुष्यजाः मनुष्यजन्मा मानव इत्यर्थः । "जनसनखनक्रमगमो विट्" ( पा० ३-२-६७ ) इति सुप्युपपदे जनेर्विट् प्रत्ययः । "विड्वनोरनुनासिकः स्यात्" (पा० ६-४-४१ ) इत्यात्वम् । इत्यनेनापि मन्त्रेण समवैति जारत्वं ( जरयितृत्वं कन्यकाभावस्य ) पतित्वं ( पालकत्वं ) चाग्नेः । एवं चेद् "यमो ह जात" इति यदधिकृतं सोऽग्निरेवेति सिद्धम् ॥ ५ ॥

अथ तृतीयम्—

**तं वश्वराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौषधाहुत्याऽस्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं भोगैः ॥**

गतार्थमेतत् ।

अथ क्रमप्राप्तं मित्रमनेकधा निर्वक्ति—

**मित्रः-प्रमीतेस्त्रायते । संमिन्वानो द्रवतीति वा । मेदयतेर्वा । तस्यैषा भवति ॥ ९ ॥ (२१)**

मित्रः ( १३ ) कस्मात् ? स हि प्रमीतेः मरणात् । "मृतप्रमीतौ त्रिष्वेते" इत्यमरः । अत्र च भावे क्तिन् । त्रायते सर्वलोकं वर्षद्वारेण । तथा च प्रमीतेस्त्रायत इत्यर्थे "सुपि स्थः" ( पा० ३-२-४ ) इत्यत्र सुपीति योगविभागात्कः । प्रमीतशब्दस्य मिद्भावः । आतो लोपः ( पा० ६-४-६४ ) । अथ वा सं-समन्ततः ( सर्वतः ) सम्यग्वा मिन्वानः वृष्टिं सततं प्रक्षिपन् सिञ्चन्वा द्रवत्यन्तरिक्षलोक इति मित्रः "डुमिञ् प्रक्षेपणे" ( स्वा० उ० ) "मिवि सेचने" ( भ्वा० प० ) वा ततो लटश्शानश् । द्रवतेर्डप्रत्ययान्तस्य त्रभावः । मिन्वानशब्दस्य च मिद्भावः पृषोदरादित्वात् । अथ वा मेदयतेः । स्नेहनार्थस्य । सर्वं ह्यसावुदकेन स्नेहयति । तथाच "ञिमिदा स्नेहने" ( भ्वा० आ० ) अन्तर्भावितण्यर्थः । ततः "अमिचिमिमिदिशसिभ्यः क्त्" ( उ० ४-१५९ ) इति त्रन्प्रत्ययः । णिजन्ताद्वा बाहुलकाद्रूपसिद्धिः ॥ ८ ॥ ( २१ )

**"मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत" ॥ १ ॥**

( ऋ० सं० ३-४-५ )

मित्र इति । विश्वामित्रस्यार्षं त्रैष्टुभं मैत्रम् । अवकृष्टहोमे प्रायश्चित्तम् । अग्निहोत्रे पूर्वस्यामाहुतौ विनियोगः । मित्रः

१. "कृत्यल्युटो बहुलम्" (पा० ३-३-११३) इत्यत्र बहुलग्रहणं योगविभागेन क्तन्मात्रस्यार्थव्यभिचारार्थमित्युक्तम् ॥

माध्यमिको देवः **ब्रुवाणः** प्रब्रुवाणः प्रकर्षेण स्तनयित्नुशब्दं कुर्वाणः। अत्रातिशययोगाय धातुरुपसृष्टो भाष्ये। **जनान्** कर्षकादीन् **यातयति** कृष्यादिषु प्रवर्तयति। तत्कर्मपूर्वकत्वात्कृष्यादिकर्मणः। नह्यवृष्टे मित्रे कृष्यादीन्यायस्यन्ते आरभ्यन्ते। आयतनमारम्भः। तद्यथा-"भोजनमायाततितमनेन" इति। एवं प्रवर्तयन्कर्मसु ओषधीरुत्पादयन्यज्ञद्वारेण स एव **मित्रः पृथिवीम्** पृथिवीलोकनिवासिनः सर्वान्प्राणिनः। **उत द्याम्** द्युलोकवासिनोऽपि **दाधार** धारयति। "तुजादीनां दीर्घोऽभ्यासस्य" (पा० ६-१-७) इत्यभ्यासस्य दीर्घः। अमुना प्रकारेण अनुगृह्णन्। स **मित्रः कृष्टीः** मनुष्यान् (निघं० २-३-७) लिङ्गव्यत्ययेन नत्वाभावः। **अनिमिषाभिचष्टे** अनिमिषन्नभिविपश्यति। उपकारद्वारेण। यो ह्यस्मा उपकरोति स तेन सम्यक् (शुभदृष्ट्या) अवलोक्यते। योऽयमेवमुपकारप्रवृत्तः कृत्स्नस्य लोकस्य तस्मै **मित्राय घृतवत्** घृतमिश्रं **हव्यं** हविः **जुहोत** जुहुत दत्त हे मनुष्याः। दानार्थाज्जुहोतेर्लोटि तस्य तबादेशः (पा० ७-१-४५) गुणः॥ १॥

अथास्या भाष्यम्—

**मित्रो जनान्यातयति, प्रब्रुवाणः शब्दं कुर्वन् मित्र एव धारयति पृथिवीं च दिवं च, मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति॥**

गतार्थमेतन्मन्त्रार्थेन॥

अथात्र निगमप्रसक्तं निर्वक्ति—

**कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति, विकृष्टदेहा वा॥**

कर्षेण कर्मविशेषेण चात्र सामान्यतः कर्ममात्रं लक्ष्यते, "कृष् विलेखने" (भ्वा० प०) भावे क्तः। कृष्टं कर्म, तदस्यास्तीति "लुगकारेकाररेफाश्च वक्तव्याः" (पा० ४-४-१२८ वा०) इति मत्वर्थेऽकारप्रत्ययस्तदाह-**कर्मवन्तो भवन्तीति**। आरम्भशीलत्वात्। तथा चोक्तम्-"न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदि"ति। अथ **वा** शुद्धोऽपि कृषिः विपूर्वस्यार्थे वर्तते कर्मणि क्तः। विविधं कृष्टः विक्षिप्तपरिकण्ड्यनाद्यभिलषितक्रियानुष्ठानसमर्थो देहः स एषामस्तीति पूर्ववन्मत्वर्थीय इत्यदाह-**विकृष्टदेहा** इति। दुर्गस्त्वाह-संसृष्टदेहा अन्ये पशवो गवादयः, ते हि न कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति स तेषां सङ्कर्षः। मनुष्यास्तु-कामतः प्रसारयन्त्यङ्गानि, स तेषां विकर्षो देहस्य॥

अथ तुरीयं पादं निर्गदेनैव व्याचष्टे—

**"मित्राय हव्यं घृतवज्जुहोते"ति व्याख्यातम्। जुहोतिर्दानकर्मा।**

दानं चेह प्रक्षेपः। स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यत इति। "हु दानादनयोः" (जु० प०) इत्यत्र व्याख्यत् (सि० कौ०)॥

**कः कमनो वा क्रमणो वा। सुखो वा। तस्यैषा भवति॥ ९॥ (२२)**

अथ क्रमप्राप्तः **कः** (१४) इत्येष वक्तव्यः। स पुनरेष महानात्मा सर्वात्मा प्राणबुद्धिसतत्वः। उदाहरिष्यति च-"अथैनं महान्तमात्मानम्" इत्यधिकृत्य "क ईषते तुज्यते" (ऋ० सं० १-६-८-२) इति। स कथं मध्यमो भवति? उच्यते-भवति हि तस्मिन्सूक्ते-"आपो ह यद्बृहतीर्विश्वमायन् गर्भं दधानाः" (ऋ० सं० ८-७-४-२) इति। विज्ञायते च "प्रजापतिर्वै कः" इति। प्रजापतिश्च मध्यमः। तथा च मन्त्रवर्णो भवति-राज्ञोऽभिषेकमधिकृत्याश्वमेधे-"प्रजापतिश्चरति गर्भे अन्तः" इति सप्तानां प्रथमा, तयोपरिष्टादभिषेकस्य जुहुयादिति। तस्माद्भवति मध्यमः॥

स कस्मात्कः-**कमनः वा** कामिनां काम्येष्वर्थेषु साधनम् **क्रमणो वा** क्रमेणसाधनम्, स्वयमेव वा क्रामति। तथा च कमेः क्रमेर्वा "अन्येष्वपि दृश्यते" (पा० ३-२-१०१) इति डप्रत्यये क्रमते रेफलोपो बाहुलकात्। "प्रजापतिरकामयत" इति बहुकामत्वात्कः प्रजापतिः। कोशोऽप्यत्र-"कः प्रजापतिरुद्दिष्टः" इति। **सुखो वा**। कमिति सुखनाम। तथा च मेदिनी-"को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे। मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम्" इति। तद्रूपत्वात्क-इति सायणः। सुखयतीति सुखः सुखकरः। "सुखदुःखतत्क्रियायाम्" (चु० उ०) पचाद्यच्। वृष्टिप्रदानादिना स एव। यद्वा-क इत्यकारो मत्वर्थे (पा० ४-४-१२८ वा०) अर्श आदित्वात् (पा० ५-२-१२७) वा अच् मत्वर्थीय एव॥ ९॥ (२२)

**"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम"॥ १॥**

(ऋ० सं० ८-७-३)

**हिरण्येति**। हिरण्यगर्भस्यैवार्षं त्रैष्टुभं कार्यम्। **हिरण्य-**

---

१. "यती प्रयत्ने" इत्यस्य ण्यन्ततयाऽयमर्थः। ते यतन्ते तानयं प्रेरयतीति॥

२. पानमात्रेणैव॥

१. अत्र दुर्गः-"सर्वात्मकत्वात्तदार्षत्वेऽपि मन्त्रस्य, प्रथमपुरुषयोगोऽपि प्रतिषिद्धः। अथवा परस्य ब्रह्मणो या हिरण्यगर्भावस्था प्रतिकल्पमाविर्भावतिरोभावधर्मिणी बुद्धिपूर्विका नित्या, तस्यां च नित्यो मन्त्रो विवक्षिताभिधानाभिधातृक आश्रयमात्रेणाभिधातारमुपादाय प्रवर्तमानोऽनुवक्तीत्यविवक्षितः पुरुषयोगः। कृतकत्वे हि नियमत एवोत्तमपुरुषयोगो मन्त्रस्याभविष्यत्॥ इति। सायणस्तु-प्रजापतिपुत्रस्य हिरण्यगर्भस्यार्षम् इत्याह॥

२. कशब्दाभिधेयः प्रजापतिर्देवतास्य। "सास्य देवता" (पा० ४-२-२४) इत्यण्। "कस्येत्" (पा० ४-२-२५)

**गर्भः** हिरण्मयः ( हिरण्मयः ) प्रचण्डः गर्भो ( गर्भवदुदरे ) यस्य सोऽसौ सूत्रात्मा । **अग्रे** प्रपञ्चोत्पत्तेः प्राक् **समवर्तत** मायाध्यक्षात्सिसृक्षोः परमात्मनः समजायत । स च **जातः** जातमात्र एव **एकः** अद्वितीयः ( असपत्नः ) सन् भूतस्य उत्पन्नस्यास्य स्थावरजङ्गमात्मकस्य जगतः **पतिः** ईश्वरः । "ईश्वरः पतिरीशिता" इत्यमरः । स्वतन्त्रो रक्षिता **आसीत्** अभवत् । न केवलं पतिरेवासीत् किं तर्हि ? **स** खलु **पृथिवीम्** अन्तरिक्षम् ( निघं० १–३–९ ) **द्याम्** दिवम् **उत** अपि च **इमाम्** अस्माभिरध्युषिताम् भूमिं च **दाधार** धारयैत्यधारयत्वेऽपि । वर्तमाने लिट् ( पा० ३–४–६ ) तुजादीनाम् ( पा० ६–१–७ ) इत्यभ्यासस्य दीर्घः । योऽयमेवमतिमहानुभावः कः तस्मात् **कस्मै देवाय** कं प्रजापतिं देवं ( दानादिगुणयुक्तं ) "क्रियाग्रहणमपि कर्तव्यम्" ( पा० १–४–३२ वा० ) इति कर्मणः संप्रदानत्वाच्चतुर्थी । **हविषा** प्राजापत्यस्य पशोर्वपारूपेण, एककपालात्मकेन पुरोडाशेन वा **विधेम** वयमृत्विजः परिचरेम । विदधतिः परिचरणकर्मा ( निघं० ३–५–२ ) दानकर्मेतिपक्षे "कर्मणः करणसंज्ञा" ( पा० १–४–३२ वा० ) "संप्रदानस्य च कर्मसंज्ञे"त्यंशो बाहुलकादुपेक्षितः । हविर्दद्म इत्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

## हिरण्यगर्भो हिरण्यमयो गर्भो हिरण्यमयो गर्भोऽस्येति वा ॥

**हिरण्यमयः** विज्ञानमयः । **गर्भः** सर्वभूतानां तत्कृतत्वादन्तःप्रकाशस्य । हिरण्यमयश्चासौ गर्भश्चेति समानाधिकरणः । अथ वा **हिरण्यमयः गर्भोऽस्येति हिरण्यगर्भः** । शरीरेन्द्रियमनोबुद्धिभावेनैतमपेक्ष्य परमात्मानं च विज्ञानप्रकाशमासत्त्वं सर्वविशेषहारित्वाद्धिरण्यगर्भमपेक्ष्य तत्प्रकृतित्वं च सर्वज्ञस्यापेक्ष्य सोऽस्य हिरण्मयो ( हिरण्मयो ) हिरण्यप्रकृतिगर्भ इति हिरण्यगर्भ इति दुर्गः ॥

अथ निगमप्रसक्तं गर्भशब्दं निर्वक्ति—

## गर्भो—गृभेर्गृणात्यर्थे, गिरत्यनर्थानिति वा ॥

**गृणात्यर्थे** स्तुत्यर्थेऽर्चत्यर्थे ( निघं० ३–१४–६ ) वा वर्तमानस्य **गृभे**र्धातोः "पुंसि संज्ञायां घः प्रायेण" (पा० ३–३–११८ ) इति कर्मणि घः गुणः । सर्वस्य स्तुत्यो हि गर्भः । अथ **वा** सर्वान् **अनर्थानसौ गिरति** गिलति नाशयतीति गर्भः । कर्तरि गिरतेर्भे गुणः । मध्यभागो गर्भशब्देनानेन निर्वचनेन विषयीकृतः ॥

अथ पुनरयं स्त्रीगर्भः कस्मात् ? इत्यत आह—

## यदा हि स्त्री गुणान्गृह्णाति, गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति ॥

अत्र हि **स्त्री**शब्देन तद्गतं ( तदुरस्थं ) रक्तं लक्ष्यते, तद् **यदा** असौ पुरुषात् शुक्रावस्थान् **गुणान्** अस्थिस्नायुमज्जानः **गृह्णाति** तैरात्मानं संपृणक्ति, **गुणाश्चास्या** रक्तावस्थास्त्वङ्मांसशोणितानि पौरुषेण शुक्रेण **गृह्यन्ते अथै**वमितरेतरकोशग्रहणव्यतिषङ्गे रक्तशुक्रयोः स्त्री **गर्भो भवति** । अथवा यदा हि स्त्री गुणान्गृह्णाति पुरुषस्य प्रेम्णा, गुणाश्चास्याः प्रेम्णा पुरुषेण गृह्यन्ते तदेतरेतरानुरागात्प्रमोदः । प्रमुदितयोः संपर्काद्गर्भग्रहणं च । तदेवं गर्भग्रहणहेतुकोऽयमिति ग्रहेर्गर्भः पृषोदरादिः ॥

## समभवदग्रे भूतस्य जातः पतिरेको बभूव । स धारयति पृथिवीं च दिवं च, कस्मै देवाय हविषा विधेमेति व्याख्यातम् । विदधतिर्दानकर्मा ॥

**पृथिवीं** चेति चेनान्तरिक्षम् । **व्याख्यातं** निगदेनैव । **विधतिः** विधू धातुः विधानार्थे ( तु० प० ) पाणिनीयैः पठितः स इह **दानकर्मा** दानार्थः । ततो लिङुत्तमपुरुषबहुवचने रूपम् ॥

अथ—

## सरस्वान्—व्याख्यातः । तस्यैषा भवति ॥ १० ॥ ( २३ )

**सरस्वान्** ( १५ ) इत्येष **व्याख्यातः** सरस्वत्या ( नि० २–२३ ) केवलं लिङ्गतो विशेषः । सर्तेरसुन्नन्तात्सरःशब्दात् "अस्मायामेधास्रजो विनिः" ( पा० ५–२–१२१ ) "बहुलं छन्दसि" (पा० ५–२–१२२) इति मतुप् । सर्तीति सर उदकं तेन तद्वान् माध्यमिको देवः ॥ १० ॥ ( २३ )

---

इति इकारादेशे वृद्धिः । तथा चानुक्रान्तम् "हिरण्यगर्भः प्राजापत्यः कायमि"–ति ॥

१. एतच्चार्थनिर्देशाभिनिवेशेन । "दाण्डिनायन–" ( पा० ६–४–१७४ ) इति सूत्रे हिरण्मय एव निपातितः साधुः । अर्थे विशेषोऽग्रे भाष्यव्याख्याने दुर्गोक्तो दर्शयिष्यते ॥

२. यद्यपि–परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तदुपहितोप्युत्पन्न इत्युच्यते ॥

३. अन्तरमनुप्रविष्टो बहिश्च वर्षाद्युपकारेण ॥

४. यदाऽसौ किंशब्दस्तदा सर्वनामत्वात्स्मैभावः सिद्धः । यदा तु यौगिकस्तदा व्यत्ययेनेति द्रष्टव्यम् । एवं ह्याख्यायते–इन्द्रेण पृष्टः प्रजापतिः "यदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान् । स इन्द्रः प्रत्यूचे–यदीदं ब्रवीषि अहं कः स्यामिति तदेव त्वं भवे"ति । अतः कारणात् क इति प्रजापतिराख्यायते । "इन्द्रो वै वृत्रं हत्वा सर्वा विजितोर्विजित्याब्रवीदि"–त्यादिकं ब्राह्मणमत्रानुसन्धेयम् ॥

५. चरुलक्षणेनाज्यलक्षणेन वेति दुर्गः ॥

१. एतेन हिरण्यशब्दस्य निर्वचनमुक्तं भवति ॥

"ये ते॑ सरस्वन्नू॒र्मयो॒ मधु॑मन्तो घृत॒श्चुत॑: । तेभि॑र्नोऽवि॒ता भ॑व ॥ ५ ॥ (ऋ० सं० ५-६-२०)

य इति । वसिष्ठस्यार्षं गायत्रं, सारस्वते हविषि विनियोगः । हे भगवन् **सरस्वन्** ! **ये ते** तव **ऊर्मयः** यैरूर्णोति नभः छादयति । "ऊर्णुञ् आच्छादने" (अ० उ०) "ऊर्णोतेर्नलोपश्च" (उ० १-२९) इति मिप्रत्ययः । "ऊर्मिर्वा स्त्रियां वीचिः" इत्यमरः । कथंभूताः ? **मधुमन्तः** उदकवन्तः । मध्वित्युदकनामेत्युक्तम् (निघं० २-१२-११) **घृतश्चुतः** घृतवन्तः उदकप्रक्षराः । घृतमित्युदकनाम (निघं० २-१२-१०) **तेभिः** तैस्त्वम् । "बहुलं छन्दसि" (पा० ७-१-१०) इत्यैकभावः । **नः** अस्माकम् **अविता** तर्पयिता **भव** इत्येतदाशास्महे ॥ ५ ॥

**इति सा निगदव्याख्याता ॥ ११ ॥ (२४)**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० दशमाध्यायस्य द्वितीयः पादः ॥ १० ॥ २ ॥**

**इति सा** सेयमृक् **निगदेन** पाठमात्रेण **व्याख्याता** भवति स्पष्टेत्यर्थः ॥ ११ ॥ (२४)

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० दशमाध्यायस्य द्वितीयः पादः ॥ १० ॥ २ ॥

---

## दशमाध्यायस्य तृतीयः पादः ।

तत्र क्रमप्राप्तः—

**विश्वकर्मा—सर्वस्य कर्ता । तस्यैषा भवति ॥ १२ ॥ (२५)**

**विश्वकर्मा** (१६) वक्तव्यः । स एष यावदिदं किंचिद्भूतं करिष्यमाणं क्रियमाणं च तस्य **सर्वस्य कर्ता** वाय्वात्मकत्वात्सर्वचेष्टानाम् । करोतेः कर्तरि मनिन् । मध्यमस्थानो वायुः । स हि वृष्टिद्वारेणापि सर्वस्य कर्ता, सर्वचेष्टानां तदधीनत्वात् ॥ १२ ॥ (२५)

"वि॒श्वक॑र्मा॒ विम॑ना॒ आद्विहा॑या धा॒ता वि॑धा॒ता प॑र॒मोत सं॒दृक् । तेषा॑मि॒ष्टानि॒ समि॒षा म॑दन्ति॒ यत्रा॑ सप्तऋ॒षीन्प॒र एक॑मा॒हुः" ॥ २ ॥ (ऋ० सं० ८-३-१७)

विश्वकर्मेति । भौवनस्य विश्वकर्मणः प्रजापतेरार्षं त्रैष्टुभम् । वैश्वकर्मणः पशोर्हविष एवानुवाक्या । दुर्गस्तु—अग्नौ वैश्वकर्मणाभ्यां सूक्ताभ्यां षोडशगृहीतं हूयते तत्र विनियोग इत्याह । अयं मन्त्रोऽधिदैवताध्यात्मयोर्भेदेन द्विधा व्याख्यातो भाष्यकृता, तत्र प्रथमं दैवतमधिकृत्योच्यते—**विश्वकर्मा** बहुविधप्रकाश-वृष्टिप्रदानादिकर्मणां कर्ता आदित्यः । स च **विमनाः** विभूतमनाः । सर्वत्राप्रतिहतमस्य प्रज्ञानम् । केवलं प्रज्ञानमेव, अपि त्वसौ **आद्विहायाः** आत्मनापि विहायाः व्याप्ता (विविधं सर्वप्रकारमाप्ता) महानित्यर्थः । अत एव **धाता** उत्पादयिता सर्वभूतानाम्, "वृष्टेरन्नं ततः प्रजाः" इति स्मरणात् । उत्पाद्य च **विधाता** जीवनस्य (आजीविकाया अन्नादेः) जीवतां च साध्वसाधुषु कर्मसु प्रवर्तमानानां **परमा** परमः प्रकृष्टः (साक्षात्) **संदृक्** संद्रष्टा (सम्यक्प्रविभागेन द्रष्टा) **उत** इति पादपूरणः । **यत्र** विश्वकर्मण्यादित्ये "अन्येषामपि—" (पा० ६-३-३१) इति दीर्घः । **तेषां** भूतानाम् । **इष्टानि** प्रियाणि, तैस्तु विश्वकर्मणो दैवीं सम्पदमभिसंपन्नानि कान्तानि (अभीप्सितानि) वा तस्य विश्वकर्मणः । क्रान्तानि वा अन्तरिक्षलोकं गतानि वा, मतानि (अभिमतानि) वा तस्य (विश्वकर्मणः) नतानि (प्रह्वीभूतानि) वा तं विश्वकर्माणं प्रति, एवंभूतानि **सप्त** सर्पणस्वभावानि **ऋषीन्** ऋषीणानि रसानामाकर्षणानि द्रष्टॄणि वा ज्योतींषि (रश्मयः) **इषा** अन्नेन (निघं० २-७-१४) अद्यमानेन उदकेन "इष गतौ" (दि० प०) क्विप् । सर्वतोमुखं हि तद्गच्छति यथा निम्नप्रदेशम् । अद्भिरिति भाष्यम् । परियुताभिः सुसूक्ष्माभिः अद्भिः

१. पार्थिवाप्यौ हि धातू तेजसा परिपच्यमानौ वायुव्यूहेन विचरन् सर्वभावानुप्रवेशी । सर्वमिदमत्यद्भुतमचिन्त्यमकृतात्मभिर्जगत्करोतीति स मध्यमः । विश्वकरणाद्विश्वकर्मा, विश्रायते हि वैश्वकर्माणं हविरधिकृत्य साकमेधेषु—"अथैष वैश्वकर्मणो विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा सोऽभवदि"ति । इत्यादि दुर्गव्याख्यानमत्र द्रष्टव्यम् ॥

१. "वहिहाधाञ्भ्यश्छन्दसि" (उ० ४-२१५) इति जहातेर्जिहीतेर्वाऽसुनि, णित्वाद्युगागमः । "हय गता"वित्यस्य वा । अत्रादित्यात्मनेत्यर्थेऽव्ययमनर्थकोऽयमिति सायणः । वि—इत्यस्य सर्वप्रकारमित्यर्थः ॥

२. लिङ्गव्यत्यय आर्षः ॥

३. रश्मय एव हि सप्तर्षीणां प्राणिनो हितमावहन्ति ॥

४. इषिरिच्छायामेव, परं तत्संबन्धितया विश्वकर्माणमाचष्टेऽत्र व्याख्यायाम् । स्वतो वा व्याचष्टे क्रान्तानि वा गतानि वेति कर्तर्यत्र क्तः । मतानीति "मतिबुद्धि" (पा० ३-२-१८८) इति क्तान्तेन विवरणं विश्वकर्मसंबन्धाभिधित्सया तस्य मतानि इष्टानि । मतिरिहेच्छा, बुद्धेः पृथगुपादानात् ॥

५. तत्परिज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि, तेन सह एकीभूतानि विश्वकर्मणा आधिदैविकमात्मानमभिसंपन्नानि ॥

६. अत्र द्वितीया पञ्चम्यर्थे, परस्तादर्थकपरःशब्दयोगे हि तत्प्राप्तिः । अर्थवशाच्चेष्टानीत्यस्य विशेष्यतया भाष्यकारेण प्रथमान्ततया व्याख्यातं तदपि तत्संबन्धिपरतयेति ऋषीणानीति स्वप्रत्ययान्तं प्रतिभाति । वस्तुतोऽत्र "ऋषी गतौ" (तु० प०) इति धातोः कर्तरि कीनन्प्रत्ययः । गतिरिहाकर्षणं ज्ञानं वा, तच्च दर्शनम् ॥

७. संगताभिः । रश्मयो ह्यप आदायादित्यमभिप्रतिष्ठन्ते ॥

सह **संमदन्ति** संमोदन्ते सुखं निवसन्ति । **तेभ्यः परः** परस्तात् **एकम्** एवादित्यम् । **आहुः** वदन्ति मन्त्रविदः ॥२॥

तथा चास्या भाष्यम्—

**विश्वकर्मा—विभूतमनाः व्याप्ता धाता च विधाता च परमश्च संद्रष्टा भूतानाम् । तेषामिष्टानि वा, कान्तानि वा, क्रान्तानि वा, गतानि वा, मतानि वा, नतानि वाऽद्भिः सह संमोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि, तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम् ॥**

**विभूतमनाः** । अत्र मनःशब्देन प्रज्ञानं लक्ष्यते विभूतं सर्वत्राप्रतिहतं मनः प्रज्ञानं यस्य सः । "अलसन्तस्य—" ( पा० ६-४-१४ ) इति दीर्घः । **तेभ्यः** सप्तर्षिभ्यः । **तानि** एतानि सप्तर्षीणानि ( सप्तर्षिसंबन्धीनि ) ज्योतींषि **एतस्मिन्** विश्वकर्मण्यादित्ये **एकं भवन्ति** अविभागमुपगच्छन्ति । मण्डले तेषामविभागः । **इत्यधिदैवतम्** । इति एतत् देवतामधिकृत्य मन्त्रस्य व्याख्यानम् ॥

**अथाध्यात्मम्—विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संदर्शयितेन्द्रियाणामेषामिष्टानि वा, कान्तानि वा, क्रान्तानि वा, गतानि वा, मतानि वा, नतानि वाऽन्नेन सह संमोदन्ते, यत्रेमानि सप्त ऋषीणानीन्द्रियाणि, तेभ्यः पर आत्मा, तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ॥**

**अथाध्यात्मम्**—आत्मानमधिकृत्य विश्वकर्मणो व्याख्यानम् । **विश्वकर्मा** सर्वस्य कर्ता परमात्मा, प्रतिशरीरं क्षेत्रज्ञत्वेन वर्तमानः, तत्कृतत्वाद्वायोः परिसन्दस्य । सोऽयं प्राणप्रकाशाभ्यामभ्युपेतः सन्बहुकर्मा भवति । न केवलं सर्वक्रियावान्, किंतर्हि ? विमनाः **विभूतमनाः** सर्वप्रज्ञानश्च । **आत्** अपि च **विहायाः** महान् ( निघं० ३-३-१२ ) सर्वतोमुखाभिर्विशेषविज्ञानशक्तिभिः । विज्ञायते हि "स वा एष महानात्मा अन्नादो वसुदानः" इति । तदाह **व्याप्तेति** । विशेषेण सुकृतदुष्कृतफलस्याप्ता ( आपयिता ) **धाता च** स्रष्टा च स्वशक्तिविशेषस्य **विधाता च** तद्योग्यानां विषयाणाम् । विक्षिप्तविहितानां च तेषां **परश्च** उत्कृष्टश्च संद्रष्टा **संदर्शयिता इन्द्रियाणाम्** तत्कृतत्वाद्विषयविषयिसंबन्धस्य, इन्द्रियाणां च तदधिष्ठितानां तस्य विश्वकर्मणः परमात्मनः ( सकाशात् ) प्रति विषयमालोकसामर्थ्योपजननात् । **एषां** तेषां स्वशक्तिविक्षेपात् क्षेत्रज्ञविभूतीनां यानि **इष्टानि** पूर्ववदर्थः । परमात्मज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तानि **इमानि सप्त** सर्पणस्वभावानि **ऋषीणानि** द्रष्टॄणि **इन्द्रियाणि यत्र** यस्मिन्परमात्मनि ( अधिष्ठातरि ) एषा **अन्नेन सह** संमदन्ति **संमोदन्ते** तृप्यन्ति **तेभ्य** इन्द्रियेभ्यः **परः** परस्ताद्वर्तमान इन्द्रियाद्यतीत **आत्मा** । **तानि** इन्द्रियाणि **एतस्मिन्** विश्वकर्मणि परमात्मनि **एकं भवन्ति** अविभागमुपगच्छन्ति । समवलीयन्ते बुद्धिवृत्तिसहितानि । तमेकं परमात्मानमाहुरात्मतत्त्वविदः ॥ २ ॥

**इति** अमुना प्रकारेण वर्ण्यमान एष मन्त्र **आत्मगतिम्** अध्यात्मम् **आचष्टे** प्रख्यापयति ॥

यथा चेयमृगात्मगतिवाचिका—

**तत्रेतिहासमाचक्षते ॥**

**तत्र** एतस्मिन्नर्थे **इतिहासम्** पुरावृत्तम्—**आचक्षते** कथयन्त्यात्मविदः ॥

**विश्वकर्मा ह भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार ॥**

**ह** इति पुरातीताख्याने । **भौवनः** भुवनस्य पुत्रः **विश्वकर्मा** एतन्नामकर्षिः । **सर्वमेधे** तन्नामके कर्मणि । मेधो नाम यज्ञः ( निघं० ३-४-१७ ) अग्निहोत्रादौ । यमधिकृत्य

१. सप्तर्षिभ्यः । एतच्च परस्तादर्थकपरःशब्दयोगेऽवधिबोधकमध्याहृतं भाष्यकृता ॥

२. देवतातत्त्वविदः ॥

३. क्रियाविशेषणमेतत् । "क्रियाविशेषणानां च कर्मत्वं नपुंसकत्वं च" इति नियमः । एकमेव यथासोऽवशिष्यते तथा भवन्ति । एकीभावमुपगच्छन्तीत्यर्थः ॥

४. अत्र दुर्गः—किं तत्रैव ? नेत्युच्यते "यत्र पर एकमाहुः" क्व च पुनः पर एकमाहुः ? मण्डलाधिष्ठातरि । योऽसौ यज्ञदानतपसां भोक्ता, हिरण्यश्मश्रुः, हिरण्यकेशः, आप्रणखात्सर्वं सुवर्ण इति विज्ञायते एकमेव यमाहुर्देवतातत्त्वविदः । इत्येवं व्याचष्टे ॥

१. साधनमुक्तमनुपदमधस्तात् ॥

२. सतिसप्तमी । "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः ॥

३. इतिवृत्तं—परकृत्यर्थवादरूपेण । यः कश्चिदाध्यात्मिक आधिदैविक आधिभौतिको वार्थ आख्यायते दिदृक्षुदितार्थावभासनार्थं, स इतिहास उच्यते । स पुनरयमितिहासः सर्वप्रकारो हि नित्यमविवक्षितस्वार्थः । तदर्थप्रतिपत्तॄणामुपदेशपरत्वादिति दुर्गः ॥

४. "मिधृमेधृ संगमे च" (भ्वा० उ०) चाद्धिंसामेधयोः । धन् सङ्गच्छतेऽनेन सर्वं तद्वतेत्यर्थः । गच्छन्त्यत्र देवता हविर्ग्रहीतुं—दक्षिणार्थं वा सदस्या हिनस्त्यनेन पापमिति वार्थः ॥

५. तथा च विदुषो दर्शनकृतः सर्वमेधसंपत्सर्वकर्मसु । विज्ञायते ह्यग्निहोत्रमधिकृत्य—"स यत्सायं जुहोत्यग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेदं सर्वमनुरूपं. तद्यथाऽनेन सकृत्सर्वं तेनेष्ट्वा लोकं जयते, तावदुह प्रातराहुत्वा लोकं जयते, तस्यैते आहुती नवद्धं यावज्जीवमाप्नोति स हि बहूनि च नवद्धानि, एतयोर्देवतयोरन्यतरामनु" इति । नवद्धमित्यनन्तमुच्यते । तदेवं यस्मिन्कस्मिंश्चिन्मेधे कर्मणि अग्निहोत्रादौ इत्येवं दुर्ग आह ॥

त्योच्यते-"सर्वैः सर्वेण सर्वस्मिन् सर्वस्मै सर्वार्थं हुत्वाऽऽत्मानं सर्वमेव भवति" इति । "स एष सर्वस्य विदुषः सर्वैः सर्वहुत् यज्ञः सर्वभावाय संपद्यते दर्शनात्" इति च । अन्योऽपि सर्वमेधो निरूढसंज्ञोऽहीनो-ऽ(हर्गणसाध्यो-)स्ति । तद्यथा-"त्रीण्याश्वमेधिकानि, पञ्च पौरुषमेधिकानि वाजपेयाश्वमेधौ च" ति । तत्र स आत्मानमप्यन्ततो जुहवाञ्चकार । सं एतदात्महोमस्य विधानान्नोपपद्यते । दर्शनैतत्तु-सर्वमुपपद्यते-सर्वं-भूतानि-विशेषान्सामान्यात्मनि जुहाव पश्यन्, सामान्यं चात्मानं विशेषे जुहाव पश्यन् । सर्वकर्मसु स्वयमेवायमात्मयाजीत्युच्यते । यमधिकृत्य प्रश्नोत्तरे श्रूयेते-"तदाहुरात्मयाजी श्रेयान् (उत) देवयाजीति ? तथा चैतदेवमधिदैवविद आत्मविच्छ्रेयानि"ति ॥

अथ यामात्मगतिमभिप्रेत्य-"विश्वकर्मैं" तीयमृग्निरुक्ता-

**तदभिवादिन्येवर्ग् भवति-"य इमा विश्वा भुवनानि जुहदि"ति ॥** (ऋ० सं० ८-३-१६-१)

अस्य-"ऋषिर्होता न्यसीदत्पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश" इति शेषः । अस्यार्थोऽधियज्ञा-(ऽधिदैवता-) ध्यात्मपरतया सायणेन यथाव्याख्यातमुद्ध्रियते-"यो विश्वकर्मा एतन्नामक ऋषिः । भुवनपुत्रो-

१. "अह्नः खः क्रतौ" (पा० ४-२-४३ वा०) इति अहर्गणसाध्ये क्रतावहीनशब्दो वर्तते ॥

२. आत्मगत्या तु । यथा च वाजसनेयके-(श०ब्रा०) "ब्रह्मावै स्वयंभूस्तपोऽतप्यत तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवामि भूतानि चात्मनीति । तत्सर्वेषु भूतेष्वात्मानं हुत्वा" इत्याद्याम्नायते ॥

३. दुर्गोक्तं तु न सुखबोधमिति-तथा हि-"यथोदितमिदं वैदिकं कर्मसंबन्धदर्शनेन यः सर्वं करोति, सर्वात्मकत्वात्सर्वस्य वैश्वकर्मणीमवस्थामात्मन्यनुनीय स यजमानो विश्वकर्मा, भुवनानां भूतानामात्मनि होता भूतेषु चात्मानम् । तथाहि विज्ञायते "हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि" इति । मन्त्रार्थस्तु-अनेकेषां समानप्रयोगदर्शनाधिकारवतां 'यः' नाम कश्चित्किमित्येवं न्यसीदर्देवं कर्मण्यङ्गभावमुपजगाम । कथम् ? 'ऋषित्वेन होता' द्रव्यगुणकर्मदेवतायाथार्थ्यद्रष्टृत्वेन 'विश्वाभुवनानि जुह्वत्' सर्वभूतान्यमुना सर्वमेधसम्पद्दर्शनप्रक्रमेण जुह्वत् अह्रावयत् । तस्य किम् ? इति । 'स आशिषा' आशीःप्रार्थनाकामः, प्रयोगदर्शनहेतुः सर्वमिदमहं स्वामिति, येन प्रेर्यमाणः सर्वकर्मसु सर्वमेधं सर्वप्राप्तये प्रायुङ्क्त । 'द्रविणमिच्छमानः' प्रयोगजनितापूर्वफलं सर्वभावमिच्छन् । तत्किंनाम ? न-इति, उच्यते-आप । कथम् ? इति । 'प्रथमच्छत्' प्रथमोऽग्रजत्वात् प्रजापतिभावेन मुख्यस्य छादयिता । यतः संपदे तथा सन् 'अवरान्' पश्चादुत्पन्नानसदादीन् विशेषान् 'आविवेश' व्याप्तवान् व्याप । यस्यैवं प्रयोगफलयोर्वृत्तिः 'स नः पिता' सोऽस्माकं पिता पाता जनयिता रक्षिता चेत्येवं जानीमः । अतस्तद्वाच्यमस्तुवीमहीति ॥

होता होमनिष्पादकः सन् इमा इमानि विश्वा सर्वाणि भुवनानि जुह्वत् होमं कुर्वन्प्रथमं सर्वं जगद्धुत्वेत्यर्थः । पश्चादसौ न्यसीदत् पिता जनकः आनः आत्मनः वर्णलोप आर्षः । आत्मकृतेन कर्मणा देहोत्पत्तेः । नचैकस्य जन्यजनकभावो विरुध्यते, तपोबलेन शरीरद्वयस्वीकारात् । "स एकधा भवति स बहुधे"-त्यादिश्रुतेः (तै० उ०) स ऋषिः आशिषा आशीःप्रतिपादकेन सूक्तवाकादिना द्रविणं धनं स्वर्गाख्यम् इच्छमानः कामयमानः प्रथमच्छत् प्रथममिमेभुवनैराच्छादयिता अवरान् विप्रकृष्टान्भूतान्स्वात्मना हुतान् आविवेश आविष्टवानमिमित्युक्तार्थ एव पुनर्विशेषेणोक्तः ॥ अथाध्यात्मप्रसिध्योच्यते-यो विश्वकर्मा परमेश्वरः इमा विश्वा भुवनानि जुह्वत् प्रलयकाले पृथिव्यादीनिमान्सप्तलोकान्स्वात्मन्याहुतिप्रक्षेपवत्संहरन् ऋषिः अतीन्द्रियद्रष्टा सर्वज्ञः होता संहाररूपस्य होमस्य कर्ता नः अस्माकं पिता जनकः न्यसीदत् निषसाद स्वयं स्थितवान् । अयमर्थः-प्रलयकाले प्राप्ते सति सर्वाँल्लोकान् संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः स्वयमेक एवासीत् । तथा ब्रुवते हि श्रुतयः-"आत्मा वा इदमग्र एक आसीत् । सदेव सौम्येदमग्र आसीत्" इत्यादिकाः (तै० उ०) स तादृशः परमेश्वरः आशिषा बहुस्यां प्रजायेयेत्येवंरूपया पुनः पुनः सिसृक्षया द्रविणमिच्छमानः धनोपलक्षितं जगद्भोगमाकाङ्क्षमाणः । प्रथमच्छत् प्रथमं मुख्यं निष्प्रपञ्चं पारमार्थिकं रूपमावृण्वन् अवरान् स्वसृष्टान् प्राणिहृदयप्रदेशान् आविवेश आविष्टवान् जीवरूपेण । तथा च श्रूयते-"सोऽकामयत बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदꣳ सर्वमसृजत् यदिदं किंच, तत्सृष्ट्वा तदेवानुप्राविशत्" (तै० उ०) इति । एवमन्या अप्युपनिषद उदाहार्याः ॥ १ ॥ इति ॥

**तस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥ (२६)**

यथा चैतदेवं नान्यथेति तथेयम् उत्तरा ऋक् भूयसे बहुतराय निर्वचनाय भवति ॥ २ ॥ (२६)

**"विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु" ॥ ६ ॥**

(ऋ० सं० ८-३-१६) (य० वा० सं० १७-२२)

विश्वकर्मन्निति । प्रयोगावस्थां फलावस्थां च विश्वकर्मणः प्रतीत्योच्यते-हे विश्वकर्मन् ! प्रयोगावस्थित ! अनेन

१. आर्षादिकमस्यापि पूर्ववत् । केवलं 'साकमेधेषु वैश्वकर्मणस्यानुवाक्येय' मिति सायणः ॥

२. विश्वविषयककर्मवन्नेतन्नामक परमेश्वर ! हविषा हविर्भूतेन मया विश्वकर्मणा मया दत्तेन वा हविषा वावृधानो वर्धमानः । विश्वकर्मा सर्वाणि भूतानि जुहवाञ्चकार । स आत्मानमप्यन्ततो

**हविषा** सर्वमेधदर्शनसम्पदादियुक्तेन त्वं **वावृधानः** वर्धमानः विश्वकर्मत्वमापद्यमानः । तत्फलविपरिणामकाले **स्वयं यजस्व** स्वयं संगच्छस्व व्याप्नुहि । **पृथिवीम् उत द्याम्** पृथिवीं च दिवं च । सर्वव्यापी भव । अपि च तत्रैतस्मिन्दर्शनकृते महिम्नि **मुह्यन्त्वन्ये अभितो जनासः** मोहमुपगच्छन्तु अभितः सर्वतस्ते जना ये त्वदुपासनायां पराङ्मुखाः सन्तः तव **सपत्नाः** समानं पतित्वमिच्छन्ति । अथ पुनः **इह** त्वद्दर्शनोपासनाकर्मणि वर्तमानानाम् **अस्माकं मघवा** सर्वधनेशानः **सूरिः** मेधावी—सर्वत्राप्रतिहतप्रज्ञानः **प्रज्ञाता** विशेषतोऽस्माकमस्तु इत्येतदाशास्महे ॥ ६ ॥

अथात्र ( सर्वत्र ) यद्यपि त्वष्टा प्रजापतिर्विश्वकर्मेति अधिभूतप्रधानाः पुराविद आमनन्ति, तथापि—कलाकौशलादिसर्वज्ञानहेतुको नामधेयप्रतिलम्भ इत्यविप्रतिषिद्धम् । एवं सार्वाङ्गु देवतासूत्रम् ॥

अथास्य भाष्यम्—

**विश्वकर्मन् ! हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च, मुह्यन्त्वन्ये अभितो जनाः सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ॥**

**वर्धयमानः** । आत्मानं वर्धयन् वर्धमान इति फलितम् । तेनात्र णिजर्थोऽविवक्षित एवेति तथैव व्याख्यातमधस्तात् । अवगतार्थमन्यत् ॥

अथ क्रमप्राप्तं तार्क्ष्यं निर्वक्ति—

**तार्क्ष्य–स्त्वष्ट्रा व्याख्यातः । तीर्णं अन्तरिक्षे क्षियति । तूर्णमर्थं रक्षति । अश्नोतेर्वा । तस्यैषा भवति ॥ ३ ॥ ( २७ )**

**तार्क्ष्यः** ( १७ ) इति वक्तव्यः । स पुनरेष **त्वष्ट्रा** त्वष्टृपदेन **व्याख्यातः** । विभज्य आख्यातो निरुक्त इत्यर्थः । तद्यथा **तीर्णं** सर्वतोगते **अन्तरिक्षे, क्षियति** निवसतीति तार्क्ष्यः । अथवा—**तूर्णम्** उदकाख्यम् ( निघं० ४–२–६० ) **अर्थम्** **रक्षति** इति तार्क्ष्यः । अथ **वा अश्नोतेः** उत्तरपदम् । तथा च—तीर्णशब्दे—तूर्णशब्दे चोपपदे क्षियति–रक्षत्य–श्नोतिभ्योऽघ्न्यादित्वात् ( उ० ४–१८ ) यत्प्रत्ययादि निपात्यते । अश्नुते ह्यसौ तमः ॥ ३ ॥ ( २७ )

जुहवाञ्चकारेति हि निरुक्तं पूर्वमुदाहृतम् ( १०–२६ ) स्वयमेव पृथिवीमुतापि च द्यां दिवं च स्वसृष्टे द्यावापृथिव्यौ स्वयं प्रवृद्धः सन्यजस्व पूजय । अन्ये मत्तोऽन्ये जनासो जनाः अयष्टारोऽस्मद्यागविरोधिनो वा मुह्यन्तु मुग्धा भवन्त्वभितः सर्वतः । अथ परोक्षकृतः । इहास्मिन्यागेऽस्माकं मघवाऽस्मत्प्रत्तेन हविर्लक्षणेन धनेन धनवान् स सूरिः स्वर्गादिफलस्य प्रेरकोऽस्तु–भवतु । इति सायणव्याख्यानम् ॥

१. यद्यपि तूर्णाशमित्युदकनामसु पठ्यते तथापि तूर्णं च तदशं चेति व्याख्यानान्निगमाच्च तूर्णमुदकम् । तरत्यस्मिन्निति ॥

**“त्यमू॒ षु वा॒जिनं॑ दे॒वजू॑तं स॒हावा॑नं तरु॒तारं॒ रथा॑नाम् । अरि॑ष्टनेमिं पृत॒नाज॑मा॒शुं स्व॒स्तये॒ तार्क्ष्य॑मि॒हा हु॑वेम” ॥ १ ॥**

( ऋ० सं० ८–८–३६ )

**त्यमिति** । तार्क्ष्यपुत्रस्यारिष्टनेमेरार्षं त्रैष्टुभं तार्क्ष्यदेवताकम् । विषुवति महाव्रते च निष्केवल्ये शस्यते । अग्रेतनं च । वयम् **त्यमु** तमेव प्रसिद्धम् । **तार्क्ष्यम्** मध्यमं देवं **सुष्ठु** **इह** अस्मिन्कर्मणि **स्वस्तये** आत्मनः स्वस्त्ययनाय क्षेमाय **आहुवेम** आह्वयाम भृशमाह्वयामहे । “बहुलं छन्दसि” ( पा० ६–१–३४ ) इति ह्वयतेः संप्रसारणं लिङ्याशिष्यङ् ( पा० ३–१–८६ ) यद्वा प्रार्थनायां लिङि व्यत्ययेन शः । संहितायां दीर्घः । “पूर्वपदात्” ( पा० ८–३–१०६ ) इति सोः सस्य षः । कथंभूतम् ? **वाजिनम्** वेजनवन्तम् भयदातारं परेभ्यः । बलवन्तं वा । वाजोऽन्नं तद्वन्तं वा, वृष्ट्या तत्प्रदायकत्वात् । **देवजूतम्** देवैर्गतं पैरत्वेन ज्ञातम् दैवप्रीतं ( देवैः समानप्रीतं ) वा **सहावानम्** सहो बलं तद्वन्तम् । “छन्दसीवनिपौ च” ( पा० ५–२–१२२ वा० ) मत्वर्थे वनिपि सस्याकारः । एतदेव मध्यमलिङ्गम् । **रथानां** रंहितॄणां भूतानाम् **तरुतारं** तरीतारं तारयितारम् । तरतेस्तृचि “प्रसितस्कभित०” ( पा० ७–२–३४ ) इत्यादिसूत्रे रुडागमो निपातितः । गतिमतां गमयितारमित्यर्थः । बलहेतुकत्वाद्गमनस्य । **अरिष्टनेमिम्** केनचिदप्यप्रतिहतवज्रप्रहरणं, नेमिरिति वज्रनाम ( निघं० २–२०–२ ) **पृतनाजम्** पृतनानां सेनानां मनुष्याणां वा ( निघं० २–३–२५ ) जेतारम् । **आशुम्** शीघ्रगम् ॥ १ ॥

१. सद्यश्चिदिति ॥

२. न गरुत्मन्तं यथा च ऐतिहासिकपक्षेऽयं सायणेन व्याख्यातः । तृक्षपुत्रस्तार्क्ष्यो गरुत्मान् विष्णुवाहनः । गर्गादित्वाद्यञ् । देवजूतं देवैः सोमाहरणाय प्रेरितम्, देवैः प्रीयमाणं तर्प्यमाणं वा । रथानामन्यदीयानां तरुतारं संग्रामे जेतारम् । यद्वा रंहणशीला इमे लोका रथास्तान् सोमाहरणसमये शीघ्रं तरितारम् । श्रूयते हि—“एष हि सर्वाँल्लोकान्सद्यस्तरति” (ऐ० ब्रा० ४–२०) इति । अरिष्टनेमिमहिंसितरथं, यद्वा नेमिर्नमनशीलमायुधं, अहिंसितायुधम् । अथवा उपचाराज्जनके जन्यशब्दः । अरिष्टनेमेरिम जनकम् । पृतनाजं पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारं वा । “अज गतिक्षेपणयोः” ( भ्वा० प० ) अस्मात्क्विप् “वलादावार्धधातुके वेष्यते” इति वचनाद्वीभावाभावः । जयतेर्वा डप्रत्ययः । ( अन्यत्सर्वं समानम् ) इति ॥

३. भृशं ह्वयेतेति भाष्यदर्शनात्सायणेनापि तथा व्याख्यानाच्चाङो भृशार्थत्वं ह्वयतेश्चाह्वानार्थत्वं बोध्यम् ॥

४. परोऽयमस्माकमिति । परः श्रेष्ठः । जवतिर्गतिकर्मा सौत्रो नैरुक्तश्च ( निघं० २–१४–१०५ ) गत्यर्थानां ज्ञानार्थत्वात् । दीर्घ आर्षः ॥

अथास्या भाष्यम्—

**तं भृशमन्तवन्तं, जूतिर्गतिः प्रीतिर्वा–देवजूतं देवगतं देवप्रीतं वा । सहस्वन्तं, तारयितारं रथानाम् अरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति । कमन्यं मध्यमादेवमवक्ष्यत् ॥**

त्यच्छब्दस्तच्छब्दसमानार्थ इत्याह–**तमिति** । भृशमित्याद्योऽर्थः **ह्वयेम** इत्यत्रान्वेति । नन्वर्थतस्तार्क्ष्यो गरुत्मानेव कुतोऽनेन नोच्यत इत्यत आह–**कमन्यमिति** । मध्यमाद्वायोरन्यं कं गरुत्मदादिक**मेवमवक्ष्यन्**मन्त्रदृक् ? न कमपि । नन्वेतत्कुतः ? यतः—

**तस्यैषाऽपरा भवति ॥ ४ ॥ ( २८ )**

**तस्य** मध्यमस्यैव तार्क्ष्यस्यात्र स्तुतिर्न गरुत्मत इत्यर्थे **एषा अपरा** वर्षकर्मोपप्रदर्शनार्था ऋक् **भवति** । पूर्वमन्त्रेण तु बलकृतिरुपप्रदर्शिता मध्यमलिङ्गतया । सत्यमपि हि बलकृतौ पक्षिराजे गरुत्मति संदेहोऽसावपि बलवांश्च तार्क्ष्यनामा च, वर्षकर्मत्वं समानं तेनास्य । अतश्चोक्तमेतदेव विचारास्पदमपेक्ष्य कमन्यमित्यादि ॥ ४ ॥ ( २८ )

**"स॒द्यश्चि॒द्यः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इ॒व ज्योति॑षा॒पस्त॒तान॑ । स॒ह॒स्र॒साः श॑त॒सा अ॑स्य॒ रंहि॒र्न स्मा॑ वरन्ते युव॒तिं न शर्या॑म्" ॥ ३ ॥**

( ऋ० सं० ८–८–३६ )

**सद्यश्चिदिति** । अत्र चिदित्यप्यर्थे, सद्य इति समानेऽहनीत्यर्थकमिह कालसामान्योपलक्षणमद्य श्वः परश्वः परुत्परारि चेति । तथा च यः तार्क्ष्यः **सद्यश्चित्** सद्योऽपि सर्वस्मिन्नप्युपयुक्ते काले **शवसा** बलेन ( निघं० २–९–३ ) वृद्ध्यर्थस्य श्वयतेः "श्वेः संप्रसारणं च" ( उ० ४–१८८ ) इत्यसुन् । गुणावादेशौ । **पञ्चकृष्टीः** पञ्चविधान् कृष्टीर्मनुष्यान्प्रति निषादपञ्चमांश्चतुरो वर्णान्प्रति ( तदर्थम् ) **अपः** उदकानि **ततान** विस्तारयति विस्तारितवांश्च । "छन्दसि लुङ्लङ्लिटः" ( पा० ३–४–६ ) इति सार्वकालिको लिट् । कथम् ? **सूर्य इव ज्योतिषा** सूर्यः सर्वस्य प्रेरक आदित्यो यथा वर्षर्तौ ज्योतिषा आत्मीयेन तेजसाऽपो विस्तारयति तद्वत् । कुतः ? यतः **अस्य** तार्क्ष्यस्य **रंहिः** गतिः **सहस्रसा** सहस्रसानिनी **शतसा** शतसानिनी नैकविधा ( बहूँश्च बहुतरांश्च प्रकारान्संभजतीति ) सनतेः सनोतेर्वा "जनसनखनक्रमगमो विट्" ( पा० ३–२–६७ ) इति विट् प्रत्ययस्ताच्छीलिकः । "विड्वनोरनुनासिकस्यात्" ( पा० ६–४–४१ ) इत्यात्वम् । **न स्म** न खलु एतां तस्य गतिं **वरन्ते** केचन वारयन्ति । वारयितुं शक्नुवन्ति । संहितायां दीर्घः ( पा० ६–३–१३७ ) अत्र दृष्टान्तः–**शर्याम्** शरकाण्डमयीमिषुं धनुषो मुक्तां **युवतिं न** लक्ष्येण मिश्रीभवन्तीमिव । सा यथा दुर्निवारा तथैषा कैश्चिदपि वारयितुमशक्येत्यर्थः । एवमादिगुणविशिष्टस्तार्क्ष्यः स इदं नामास्माकं करोत्विति ॥ ३ ॥

अथास्या भाष्यम्—

**सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि, सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम् ॥**

**मनुष्यजातानि** मनुष्यजातीः । जात्या विभक्तान्मनुष्यानित्यर्थः "जातिर्जातं च सामान्य" मित्यमरः । **सहस्रसानिनी**त्येव णिनिप्रत्ययान्तेन व्याख्यानं ताच्छीलिकविडन्तज्ञापनाय । तृन्नर्थोऽत्र विट् । सततकरणं हि ताच्छील्यम् । "सुप्यजातौ णिनिस्ताच्छील्ये" ( पा० ३–२–७८ ) ॥

अथ क्रमप्राप्तः—

**मन्युर्मन्यतेर्दीप्तिकर्मणः, क्रोधकर्मणो, वधकर्मणो वा, मन्यन्त्यस्मादिषवः । तस्यैषा भवति ॥ ५ ॥ ( २९ )**

**मन्युः** ( १८ ) इत्येष **दीप्तिकर्मणः** नैरुक्तस्य । "यजिमनि०" ( उ० ३–१८ ) इत्यादिना युच्चि बाहुलकात् अनादेशाभावे रूपम् । दीप्तः क्रुद्धो वा । हन्ता वा । **अस्मा**न्मन्योर्मध्यमाद्वेवादि**षवः** बाणाः **मन्यन्ति** क्रुद्धादवदीप्यन्तः परान्हिंसन्ति । दिवादिः परस्मैपदी ॥ ५ ॥ ( २९ )

**"त्वया॑ मन्यो स॒रथ॑मारु॒जन्तो॒ हर्ष॑माणासोऽधृ॒षता म॑रुत्वः । ति॒ग्मेष॑व॒ आयु॑धा॒ संशिशा॑ना अ॒भि प्रय॑न्तु॒ नरो॑ अ॒ग्निरू॑पाः" ॥**

( अ० सं० ४–३१–१ ) ( ऋ० सं० ८–३–१९–१ )

**त्वयेति** । तपसः पुत्रस्य मन्योरार्षं त्रिष्टुप् । श्येनाजिरादिषु निष्केवल्ये विनियोगः । हे भगवन् ! **मन्यो** ! **मरुत्वः** !

१. अन्तर्भावितण्यर्थोऽत्र तरतिः ॥

२. तदनुग्रहपूर्वकत्वात्सर्वलोकानुग्रहस्य । वृष्टिग्रहणेन तद्विवक्षा ॥

३. अत्र दुर्गः–यथा सूर्यो ज्योतिःप्रकाशं लोकानुग्रहाय तनोति, तथा तार्क्ष्योऽपस्तनोति इत्यादि ॥

१. शृणातेर्हिंसार्थादघ्न्यादित्वाद् ( उ० ४–१०८ ) यदन्तो निपातः ॥

२. तद्वद्योदविन्दव इति नैरुक्तनयेऽर्थः ॥

३. अर्थभेदेन पदभेदः । परस्मैपदिषु वा आकृतिगणत्वाद्दिवादेरयमपि पाठ्यः ॥

४. मरुत्वच्छब्द इन्द्रवाची । स चेह वायुरेव । "मतुवसो रु संबुद्धौ छन्दसि" (पा० ८–३–१) इति नस रुः । "नरो नेतार इन्द्रादयो देवास्तदनुचरा एवे"ति सायणव्याख्यानादिह मरुत्वान्वायुरभिहितः ॥

वायो! मध्यमदेव! **त्वया सरथम्** समानमेकमेव रथम्। "आरुह्ये"ति शेषः। **आरुजन्तः** अभिभवन्तः परान् **हर्षमाणासः** हर्षमाणाः हृष्यन्तः। तवाश्रयादधिकबलाः। "आज्जसेरसुक्" ( पा० ७–१–५० ) इति जसोऽसुगागमः। **अधृषिताः** परैरनाधर्षिताः ( अनभिभूताः ) **तिग्मेषवः** तीक्ष्णबाणा एते असह्योधाः **आयुधा** आयुधानि। शेर्डो ( पा० ७–१–३९ ) **संशिशानाः** संशिश्यमानाः ( तीक्ष्णानामायुधानामिषूणां च योऽर्थस्तमनुतिष्ठन्तः भिदन्त इषुभिः छिन्दन्त आयुधैः अमुना प्रकारेण ) एते **नरः** युद्धस्य नेतारो योधाः **अग्निरूपाः** अग्निवत्तीक्ष्णदाहादिकर्माणः। सन्नद्धाः कवचिनो वाग्नय इवैते सेनाम् **अभि**–भवन्तो **यन्तु** प्रयन्तु युद्धे सहायार्थं प्रयान्तु इत्याशास्महे ॥ १ ॥

अथास्या भाष्यम्—

**त्वया मन्यो! स रथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वः! तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरोऽग्निरूपा अग्निकर्माणः। सन्नद्धाः कवचिन इति वा ॥**

गतार्थमेतत् ॥

अथ क्रमप्राप्तः—

**दधिक्रा व्याख्यातस्तस्यैषा भवति ॥६॥ (३०)**

**दधिक्राः** (१९) इत्ययं निर्वक्तव्यः। स एष **व्याख्यातः** अश्वनामसु "दधत्क्रामती" त्येवमादिना ( नि० २–२७ ) सर्वं मध्यमे योज्यमयमपि हि दधदुदकमन्तरिक्षे क्रामति समन्ततो-गच्छतीति ॥ ६ ॥ ( ३० )

**"आ द॒धि॒क्राः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इव॒ ज्योति॑षा॒पस्त॑तान। स॒ह॒स्र॒साः श॑त॒सा वा॒ज्यर्वा॑ पृ॒णक्तु॒ मध्वा॒ समि॒मा वचां॑सि" ॥ ५ ॥**

( ऋ० सं ३–७–१२ )

**आदधिक्रा** इति। वामदेवस्यार्षं त्रिष्टुप् दधिक्रादैवत्यम्। यः **दधिक्राः** देवः **शवसा** बलेन ( निघं० २–९–३ ) **पञ्चकृष्टीः** पञ्चजनान्देवमनुष्यासुररक्षःपितृसंज्ञकान् निषादपञ्चमांश्चतुरो वर्णान्वा प्रति **सूर्यः इव ज्योतिषा** सूर्यो यथा तेजसा जगदावृणोति तद्वत् **अपः** उदकानि **आततान** आतनोति सर्वतो विस्तारयति। वर्तमाने लिट् ( पा० ३–४–६ ) **सहस्रसाः शतसाः** शतानां सहस्राणां ( बहूनां बहुतराणां ) चोदकानां दाता संभक्ता वा। "षणु दाने" ( त० उ० ) "षण संभक्तौ" ( भा० प० ) वाऽतो लिट् ( पा० ३–२–६७ ) आत्वमनुनासिकस्य ( पा० ६–४–४१ )।

**वाजी** वेजनवान् **अर्वा** ईरणवान् अरणकुशल इति सायणः। स देवोऽस्माकम् **इमा** इमानि सद्य उक्तानि स्तुतिलक्षणानि **वचांसि मध्वा** मधुना–उदकेन ( निघं० ७–१२–११ ) मधुरेण फलेन वा **संपृणक्तु** संयोजयतु उदकमसभ्यं सुखनन्तरमेव ददात्वित्यर्थः ॥ ५ ॥

अथास्या भाष्यम्—

**आतनोति दधिक्राः शवसा–बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसाः शतसा वाजी वेजनवानर्वेरणवान् संपृणक्तु नो मधुनोदकेन वचनानीमानीति ॥**

**मनुष्यजातानि** मनुष्यजातीः प्रति। "जातिर्जातं च सामान्यम्" इत्यमरः। अन्यदवगतार्थम् ॥

अथ निगमप्रसक्तं निर्वक्ति—

**मधु धमतेर्विपरीतस्य ॥**

**धमतेर्**गत्यर्थस्य ( निघं० २–१४ ) अन्तर्भावितण्यर्थः। निर्धाम्यते निष्काल्यते हि तन्मेघात्। **विपरीतस्य** आद्यन्तवर्णयोः। उप्रत्यय औणादिकः ॥

अथ क्रमप्राप्तः—

**सविता सर्वस्य प्रसविता। तस्यैषा भवति ॥ ७ ॥ ( ३१ )**

**सविता** ( २० ) इत्ययं निर्वक्तव्यः। स पुनरेष "इममेवाग्निं सवितारमाह" इत्यत्र व्याख्यातोऽपि वर्षकर्मयोगान्मध्यमतया पुनरिहाम्नातः **सर्वस्य** कर्मणः वृष्टिप्रदानादिना **प्रसविता** अभ्यनुज्ञाता। "षु प्रसवैश्वर्ययोः" ( भ्वा० प० ) तृन्। प्रसवोऽभ्यनुज्ञानम् ( सि० कौ० ) ॥ ७ ॥ ( ३१ )

**"स॒वि॒ता य॒न्त्रैः पृ॑थि॒वीम॑रम्णादस्कम्भ॒ने स॑वि॒ता द्याम॑दृंहत्। अश्व॑मिवाधुक्ष॒द्धुनि॑म॒न्तरि॑क्षम॒तूर्ते॑ ब॒द्धं स॑वि॒ता स॑मु॒द्रम्" ॥ १ ॥**

( ऋ० सं० ८–८–७ )

**सवितेति**। हिरण्यस्तूपपुत्रस्यार्चंतस्यार्षं त्रैष्टुभं सवितृदैवत्यम्। उत्तरं च। **सविता** सर्वस्य प्रसविता प्रेरको मध्यमस्थानो देवः। सर्वबलेशानः। सोऽयं **यन्त्रैः** यमनैसाधनैर्वृष्टिप्रदानादिभिरुपायैः वायवीयैः पाशैर्वा **पृथिवीं** प्रथितां भूमिम्

१. बलप्रकृतिः, वर्षकर्म चोभयमप्यस्ति तस्मादयं मध्यम इति भावः ॥

१. "ओविजी भयचलनयोः" (तु० आ०) ततो भावे स्तुदि गतिमानित्यर्थः ॥

२. उदकेरणक्रियायोगी ॥

३. अत्र दुर्गः—"यावत्किञ्चिद्यच्यते तत्सर्वं बलेनैव, यन्निता चेयं पृथिवी निश्चला, नचान्य इन्द्रात् बलवान्यन्त्रयितास्ति, तस्मादिन्द्र एवेमां संयच्छन् स्थिरामकरोत्" इति। अत्र सर्वबलेशान इति पूर्वोक्त्याऽस्य बलकृतिरुक्ताऽतोऽसौ मध्यम इति ॥

**अरुणात्** संयच्छन् स्थिरामकरोत् । रम्णातिः संयमनकर्मे-त्युक्तमधस्तात् ( पृ० पं० ) भाष्ये त्वरमयदित्येवार्थः । सुखेनावास्थापयदित्यर्थः । अथवा वर्षेणोपकारेण पृथिवीलोक-वासिनोऽस्यै धारयति तदस्याः संयमनम् । स एवैष **सविता** अस्कम्भने अनारम्भणे । अत्र मूर्तेऽन्तरिक्षे । **द्यां** दिवम् **अदृंहत्** दृढीकृतवान् ( स्थिरामकरोत् ) आभूतसंप्लवात् । अपि चायं **सविता अश्वम् इव धुनिम्** कम्पयितव्यं कम्पयितारं वा **अन्तरिक्षम्** अन्तराक्षान्तं मध्यमस्थानगतम्, किंच **अतूर्ते** केनाप्यहिंसिते अत्वरमाणे वा सर्वगतत्वात् गम-नायोग्ये वा नभसि ( आकाशे ) **बद्धम्** वायवीयैः पाशैर्नि-बद्धम् **समुद्रम्** । समुद्रवन्त्यापोऽस्मादिति डः ( पा० ३-२-१०१ ) डित्वाट्टिलोपः । मेघम् **अधुक्षत्** अधूनोत् ( अकम्पयत् ) उदकप्रक्षरणाय । यद्वाऽन्तरिक्षमिति सप्तम्यर्थे प्रथमा । तत्र बद्धम् समुद्रं समुन्दितारं मेघमधुक्षत् । यथा ह्यश्वबन्धो-ऽश्वसेवक उर्वावृत्तं ( भूमौ लुठितम् ) अश्वं धुनुयादनायासेन रजस्तस्मादपनेष्यन् एवम् । यद्वा द्विकर्मको दुहिः । य उदका-न्यन्तरिक्षे मेघं दोग्धि । यद्वा क्लेशयति । "धुक्षधिक्ष संदीपन-क्लेशनजीवनेषु" ( भ्वा० आ० ) पदव्यत्यय आर्षः । यथाऽ-श्वसेवकोऽश्वं कशयाऽऽहत्य क्लेशयति एवं वर्षणाय यो मेघं क्लेशयति । वर्तमाने लङ् ( पा० ३-४-६ ) सोऽस्माकमिदं नाम करोतु ॥ १ ॥

अथास्या भाष्यम्—

**सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्त-रिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे**

१. पतनप्रतिबन्धकमालम्बनं स्कम्भनं तद्रहितस्थले, अमूर्तेऽ-न्तरिक्षे । यत्र पर्णमपि नालमवस्थानाय तत्रैवमप्यतिगुर्वीं सौपर्णीं द्यामिति दुर्गः ॥

२. यथाऽधो न पतति तथाऽऽत्मीयैरेवोपायैरवस्थापितवानि-त्यर्थः ॥

३. भूतसंप्लवः प्रलयस्तत्पर्यन्तम् ॥

४. "धूञ् कम्पने" ( स्वा० उ० ) अतोऽन्तर्भावितण्यर्थान्नि-प्रत्ययः । स च किदिति गुणाभावः । उदकबन्धितारमिति दुर्गः ॥

५. त्वरतेर्निष्ठायां "ज्वरत्वर–" (पा० ६-४-२०) इत्यूठ् । स च संभ्रमे पठितोऽपीह हिंसाकर्मा गतिकर्मा च । तथा च भाष्यम्–"बद्धमतूर्ते, बद्धमतूर्णं इति वे"ति । यद्वा संभ्रम एवास्तु–तथा चायमर्थः–अत्वरमाण इति ॥

६. वाय्वात्मनैव विष्टभ्य निश्चेष्टं बद्धमिवेति दुर्गः ॥

७. धुक्षतिर्हि "सन्दीपनक्लेशनजीवनेषु" पठितो न तु कम्पने, तथापि क्लेशनमेवात्र कम्पनम् । अन्तर्भावितण्यर्थः ॥

८. "त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि" इत्यमरः । "उ-पावृत्तः लुठितः द्वे श्रमशान्त्यर्थं मुहुर्भुवि पार्श्वाभ्यां परावृत्तस्य लुठितस्याश्वस्येति तट्टीकायां महेश्वरः ॥

**मेघं बद्धममूर्ते बद्धमतूर्णं इति वा त्वरमाण इति वा, सविता समुन्दितारमिति ॥**

**समुन्दितारमिति** समुद्रमित्यस्यार्थः । तथा च संपूर्वाद् "उन्दी क्लेदने" ( रु० प० ) इत्यस्मात् "स्फायितञ्चि०" ( उ० २-१२ ) इत्यादिना कर्तरि रक्प्रत्यये कित्त्वान्नलोपे च समुद्रः । समुनत्ति वर्षेण भुवनमिति समुद्रः ॥

**कमन्यं मध्यमादेवमवक्ष्यत् ? ॥**

मेघमधुक्षदधूनोदिति । कुतः संशयः ? अन्योऽपि यस्मा-न्मध्यमात्सवितोच्यते–इत्याह—

**आदित्योऽपि सविता उच्यते ॥ इति ॥**

**तथा च हैरण्यस्तूपे स्तुतोऽर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच । तदभिवादिन्येषर्ग् भवति ॥ ८ ॥ ( ३२ )**

यथाचैतदेवं **तथा** एतस्मिन्नेव **हैरण्यस्तूपे** सूक्ते **स्तुतः** पठितः हैरण्यस्तूपमिदं सूक्तमिति । कुत एतत् ? अत आह— **अर्च००वाच इति** । अर्चन्नामा हिरण्यस्तूपस्तद्रूपस्तद्व्रतो वा । स यथा एतत्सूक्तं प्रोवाच **तदभिवादिनी एषा ऋक् भवति ॥**

अस्मिन्नेव सूक्ते यथा—

**"हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन् । एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम्" ॥ ५ ॥**

( ऋ० सं० ८-८-७ )

**हिरण्यस्तूप** इति । हे **सवितः** ! प्रेरक ! **यथा त्वा** त्वाम् **आङ्गिरसः** अङ्गिरःपुत्रो हिरण्यस्तूपो मत्पिता **अस्मिन्वाजे** अन्ने निमित्तभूते सति **आजुह्वे** कर्मणि आहू-तवान् **एवा** एवम् "निपातस्य च" ( पा० ६-३-१३६ ) इति दीर्घः । **अर्चन्** एतत्संज्ञोऽहम् **त्वा** त्वाम् **अवसे** अवनाय रक्षणार्थं **वन्दमानः** स्तुवन् "आह्वयामी"ति शेषः । आहूय च **सोमस्य अंशुमिव** यथा–सोमलता ( रसं ) प्रति यजमाना जाग्रति ( यागपर्यन्तं रक्षणे प्रबुद्धा भवन्ति ) तथा **अहम्** त्वत्परिचर्यां **प्रति जागर** जागर्मि । जागर्तेर्लिङि उत्त-मैकवचने रूपम् । अनन्यमनास्त्वामायागादुपास इत्यर्थः ॥ ५ ॥

१. "आत्मा वै जायते पुत्रः" इति श्रुतेः । तद्वत इति भाक्त-त्वबोधनाय । सह वेत्यर्थः ॥

२. यद्यप्यंशुशब्द एव सोमवचनः श्रूयते–"अंशुं दुहन्ति स्तनयन्तमक्षितम्" ( ऋ० सं० ७-२-२८-१ ) इति । अंशुं सोमं दुहन्ति अभिषुण्वन्तीति सायणः, तथापीह तदन्तर्गतरसवचनः "अंशुं दुहन्तो अध्यासते गवि" इत्यत्र यथा । सोमस्य हि ( चन्द्रस्य ) अंशवो भवन्ति तदन्तर्गताः किरणाः ॥

अथास्या भाष्यम्—

**हिरण्यस्तूपो हिरण्मयस्तूपोऽस्येति वा। स्तूपः स्त्यायतेः संघातः। सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अन्ने अस्मिन्, एवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम् ॥**

**स्त्यायतेः** "स्त्यै शब्दसंघातयोः" ( भ्वा० आ० ) इति धातोः। **स्तूपः संघात** इत्यर्थः। तथा चौणादिके ( उ० ३-२३ ) पप्रत्यये धातोस्तूभावः। कित्त्वाद्गुणाभावः ॥

अथ क्रमप्राप्तः—

**त्वष्टा—व्याख्यातस्तस्यैषा भवति ॥ ९ ॥ (३३)**

त्वष्टा (२१) इत्येष व्याख्यातः। "त्वष्टा तूर्णमश्नुत" इत्यादिना ( नि० ८-१३ ) ॥ ९ ॥ ( ३३ )

**"देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान। इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम्" ॥ ४ ॥**

( ऋ० सं० ३-३-३१ )

**देव** इति। वैश्वामित्रस्य प्रजापतेरार्षं त्रिष्टुप् त्वाष्ट्रम्। वैश्वदेवे विनियोगः। **सविता** अन्तर्यामितया सर्वस्य प्रेरकः। प्रसविता वा सर्वस्य भूतग्रामस्य। **विश्वरूपः** नानाविधरूपः **त्वष्टा** त्वष्टृनामको मध्यमो **देवः प्रजाः पुरुधा** बहुधा नानारूपाः **जजान** जनयति। वर्तमाने लिट् (पा० ३-४-६) एवमग्रेऽपि। ताश्च **पुपोष** पोषयति रसानुप्रदानैः। कुतः? **इमा च विश्वा भुवनान्यस्य**। चो हेतौ। यतः इमानि सर्वाणि उदकानि अस्य त्वष्टुः स्वानि भवन्ति, तस्मादयं भूतानि जनयति पुष्णाति वर्धयति चेत्यर्थः। तदिदं **देवानाम् एकं मुख्यम् महत्** प्रभूतम् **असुरत्वम्** प्राबल्यम् ऐश्वर्यमिति यावत् ॥ ४ ॥

अथास्या भाष्यम्—

**देवस्त्वष्टा सविता सर्वरूपः पोषयति प्रजा रसानुप्रदानेन बहुधा चेमा जनयति, इमानि च सर्वाणि भूतानि, उदकान्यस्य, महच्चास्मै देवानामसुरत्वमेकम् प्रज्ञावत्त्वं वाऽनवत्त्वं वा,ऽपि वाऽसुरिति प्रज्ञानामास्यत्यनर्थानस्ताश्चास्यामर्था असुरत्वमादिलुप्तम् ॥**

**भूतानि** इति भुवनानीत्यस्यार्थस्तानि चेह **उदकानि**। भूतं-भुवनमित्युदकनामसु पठितम् ( निघं० १-१२-४९-५० ) **अस्य** इति षष्ठ्यर्थः स्वस्वामिभावः। यतोऽस्य स्वतायां वर्तन्तेऽतोऽसौ जनयति पुष्णाति वर्धयति चेमानीत्यर्थः। **अस्मै** इति चतुर्थी षष्ठ्यर्थे ( पा० २-३-६२ वा० ) यत् **देवानाम् एकं मुख्यम् असुरत्वं** तद् अस्य **महद्वर्तत** इत्यर्थः। असुरत्वमित्यस्यार्थमाह-**प्रज्ञावत्त्वं** वेत्यादिना। कुतः? **असुरिति प्रज्ञानाम**। ( निघं० ३-९-६ ) कुतः? यत इयम् **अनर्थान्** क्लेशान् **अस्यति** क्षिपति प्रज्ञावतो दूरतः "असु क्षेपणे" ( दि० प० ) उरौणादिकः कर्तरि ( उ० १-१० ) ततो मत्वर्थे रस्तद्वानसुरस्तस्य भावोऽसुरत्वम्। यद्वा **अस्ताः** क्षिप्ताः ( निहताः ) **च अस्यां** प्रज्ञायाम् **अर्थाः** प्रयोजनानि, प्रज्ञया हि सर्वमभिसंपद्यते। तथा च तया महत्या प्रज्ञया, उदकेन च साधनेन सर्वमिदं जनयति पुष्णाति वर्धयति च। अप्रज्ञो हि साधनसंपत्तावपि किं कुर्यात्? अथ **वा अनवत्त्वं** प्राणवत्त्वम्। असुः प्राणः। "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः। रो मत्वर्थे। एवमपि सति प्राणेनैव शक्यते एतत्सर्वं कर्तुम्। अप्राणो हि किं कुर्यात्? अन्नवत्त्वमिति केचित्पठन्ति, तेषामन्नहेतुनोदकेन तद्वत्त्वमिति योज्यम्। **अपि वा** अथवा **असुरत्वमादिलुप्तम्**। यदेतदसुरत्वं तद्वसुरत्वं सदादिवर्णलोपेनाभिसंपन्नं जानीयात् वसुनो दकेन तद्वानसौ त्वष्टेति दुर्गः ॥

अथ क्रमप्राप्तः—

**वातः—वातीति सतः। तस्यैषा भवति ॥ १० ॥ ( ३४ )**

**वातः**( २२ ) **वातीति** "वा गतिगन्धनयोः" ( अ० प० ) इत्यस्य धातोः। **सत** इति धातुकारकावधारणम्। वायुशब्दो हि त्रयाणां धातूनां ( नि० १०-१ ) विकल्पेन, अयं तु वातेरेव तन्प्रत्यये ( उ० ३-८३ ) इति विशेषः ॥ १० ॥ ( ३४ )

**"वात आवातु भेषजं शंभुर्मयोभुर्नो हृदे। प्र ण आयूंषि तारिषत्" ॥ १ ॥**

(ऋ० सं० ८-८-४४) (सा० सं० छ० आ० २-२-४-१०)

**वात** इति। उत्वस्य वातायनस्यार्षं गायत्रं वायुदेवताकम्। **वातः** तन्नामको मध्यमो देवः वायुः **नः** अस्मान्प्रति

---

१. "च्युवः किच्च" "स्तुवो दीर्घश्च" ( उ० ३-२४+२५ ) इति हि श्वा० सूत्रम्। तन्मते स्तौतेरेव स्तूपः। समुच्छ्राय इति तदर्थः ॥

२. उत्पादयितोदकसंप्रदानद्वारेण ॥

३. तथा चोदकं सर्वजीवजीवनयोनिं दददयं भुवनस्याधिपतिर्भवति। भुवनमित्युदकनामेत्यपि वक्ष्यति ॥

४. अस्यति क्षिप्यति सर्वान् इत्यसुरः प्रबलस्तस्य भावस्तत्त्वम् ॥

१. यद्यपि वसु इति-धनरश्म्योरेवाभिहितं तथापि रश्म्यभिधानस्योदके प्रयोगो वैदिकाम्नाये भवति। तत एव तत्प्रादुर्भूतेस्तत्राभिधानात् कार्ये कारणोपचारो द्रष्टव्यः ॥

२. तथा चानुक्रान्तम्-"वातो वातायनऽरुलो वायव्यम्" इति ॥

**भेषजम्** यद्यदौषधं पथ्यं वा तत्तत्। **आ** आदाय (गृहीत्वा) **वातु** आगच्छतु । तच्चास्माकं **शंभु** रोगशमनस्य भावयितृ "अस्तु" इति शेषः । आयतौ चास्माकं **हृदे** हृदयाय **मयोभु** मय इति सुखनाम ( निघं० ३-६-७ ) तद्भावयितृ अस्तु । अथ चास्माकम् **आयूंषि** जीवितकालान् **प्र-तारिषत्** प्रवर्धयतु । तरतेर्लेट् प्रार्थनायाम् । प्रपूर्वस्यार्थे विशेषः । अत्र "सिपः" ( पा० ३-१-३४ ) "इतो लोपे" ( पा० ३-४-९४ ) "लेट आट्" ( पा० ३-४-९४ ) "सिब्बहुलं णिदि"ति ( वा० ) वृद्धिः ॥ १ ॥

अथास्या भाष्यम्—

**वात आवातु भैषज्यानि शम्भु मयोभु च नो हृदयाय । प्रवर्धयतु च न आयुः ॥**

अत्र भैष्यज्यानि आयुरिति च वचनभेदोऽर्थसौष्ठवाय । "भेषजौषधभैषज्यान्यगदो जायुरित्यपि" इत्यमरः । भेषजमेव भैषज्यम् । नानाविधानि च तान्याहृत्य प्रयच्छत्विति भवत्याशीः ॥

अथ क्रमप्राप्तः—

**अग्निर्व्याख्यात–स्तस्यैषा भवति॥११॥(३५)**

अग्निः ( २३ ) इत्येष व्याख्यातः । अग्रणीर्भवतीत्यादिना, भूस्थानत्वेन ( नि० ७-१४ ) इह तु मध्यस्थानोऽभिधेयः ॥ ११ ॥ ( ३५ )

**"प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे । मरुद्भिरग्न आगहि" ॥**

(ऋ० सं० १-१-३६-१) (सा० सं० छ० आ० १-१-२-६)

**प्रतीति** । मेधातिथेरार्षं गायत्री । कारीरीष्टौ धाय्यैषा । त्यच्छब्दस्तच्छब्दपर्यायः । हे **अग्ने!** **त्यं** तम् **चारुम्** अङ्गवैकल्यरहितम् **अध्वरम्** यज्ञम् **प्रति**लभ्य उपसर्गबलेन योग्यक्रियाऽध्याहारः । **गोपीथाय** सोमपानायास्माभिः । **प्रहूयसे** प्रकर्षेण हूयसे । स त्वमेतज्ज्ञात्वाऽस्मिन्यज्ञे **मरुद्भिः** देवविशेषैः सह **आगहि** आगच्छ । लोटः सेर्हिः । "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुक् । "अनुदात्तोपदेश०" ( पा० ६-४-३७ ) इत्यादिना मलोपः । आभीयत्वेन तस्यासिद्धत्वाद्धेर्लुक् । गोपीथायेति निपातः ( उ० २-९ ) ॥ १ ॥

१. दुर्गस्तु—एवं स्तूयमानः प्रत्यक्षीभूत इव मनसि, यतः प्रत्यक्षमुच्यते "प्रण० यत्" हे भगवन् वायो! प्रवर्धय त्वमस्माकमायूंषि सपुत्रपौत्रादिवर्गाणाम्। भैषज्यं च त्वमस्माकं नित्यमावह। इत्येतदाशास्महे" इति व्याचष्ट ॥

२. धाय्या—धीयतेऽनया समिदिति निपातिता (पा० ३-१-१२९)

अथास्या भाष्यम्—

**तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषाऽपरा भवति ॥ १२ ॥ ( ३६ )**

मध्यमादिति । "गोपीथाय" "मरुद्भिः" सहेति मध्यमं लिङ्गम् ॥

अपरा किमर्थम् ? गोपीथायेत्यव्यक्तं सोमपानं, व्यक्तसोमपानलिङ्गा उत्तरा ॥ १२ ॥ ( ३६ )

तद्यथा—

**"अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आगहि" ॥ ४ ॥**

(ऋ० सं० १-१-३७-४)(सा० सं० छं० आ०३-२-२-४)

**अभीति** । पूर्ववदार्षादि । हे **अग्ने! पूर्वपीतये** पूर्वकाले प्रवृत्ताय यागाय **त्वा** त्वां प्रति **सोम्यं** सोममयं सोमसंबन्धिनं **मधु** मधुररसम् **अभि** अभितः सर्वतः **सृजामि** संपादयामि । अतस्त्वं **मरुद्भिः** देवविशेषैः सहात्र **आगहि** आगच्छ एतत्पातुम् इत्येतदाशास्महे ॥ ४ ॥

अथास्या भाष्यम्—

**अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने! मरुद्भिः सहागच्छेति ॥ १३ ॥ ( ३७ )**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० दशमाध्यायस्य तृतीयः पादः ॥ १० ॥ ३ ॥**

गतार्थमेतत् ॥ १३ ॥ ( ३७ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० दशमाध्यायस्य तृतीयः पादः ॥ १० ॥ ३ ॥

---

## दशमाध्यायस्य चतुर्थः पादः ।

अथ क्रमप्राप्तः—

**वेनो–वेनतेः कान्तिकर्मणः । तस्यैषा भवति ॥ १ ॥ ( ३८ )**

वेनः ( २४ ) इति वक्तव्यम् । स एष **वेनतेः** वेनधातोः **कान्तिकर्मणः** कान्त्यर्थस्य ( निघं० २-६-४ ) सर्वलोककान्तो हि मध्यमः । सर्वस्योपकारित्वात् ॥ १ ॥ ( ३८ )

**"अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति" ॥**

( ऋ० सं० ८-७-७-९ य० वा० सं० ७-१६ )

**अयमिति**। भार्गवस्य वेनस्यार्षम्। शुक्रोऽनया गृह्यते। अन्तर्भावितप्रज्ञानस्तस्मिन्मनसि प्रत्यक्षीभूतमभिनयेन दर्शयन्निव कस्मैचिद्ब्रवीति–**अयं वेनः** कान्तः एतत्संज्ञो मध्यमस्थानो देवः **ज्योतिर्जरायुः** ज्योतिर्द्योतमानो मेघः ( स हि विद्युदात्मना वियोतते ) जरायुरुदरे गर्भो येन वेष्टितोऽवतिष्ठते तद्वद्वेष्टको यस्य स तथोक्तः। मेघमध्ये गर्भवदवस्थित इत्यर्थः। **रजसः** उदकस्य **विमाने** निर्मातर्यन्तरिक्षे स्थितः सन् **पृश्निगर्भाः** पृश्निरादित्यः प्राष्टवर्णः ( प्रकृष्टो ह्यनेन वर्ण आष्टः प्राप्तः ) इति भाष्यम्। तस्य गर्भा गर्भभूताः ( गर्भत्वमुपगता रश्म्यन्तर्गताः परिपक्वाः मासाष्टकेन संभृताः ) अपः। यद्वा पृश्नयः सप्तोज्ज्वलवर्णाः सूर्यरश्मयस्तेषां गर्भभूता अन्तरिक्षस्था अपः **चोदयत्** चोदयति प्रावृषि वर्षभावेन भुवं प्रति प्रेरयति तम्। "इतश्च लोपः परस्मैपदेषु" (पा० ३–४–९७) इतीकारलोपः। **इमम्** वेनम् **अपाम्** उदकानाम् आन्तरिक्षाणाम् **सूर्यस्य च सङ्गमे** सङ्गमने ( समागमस्थाने ) अन्तरिक्षे मध्यमस्थाने वर्तमानम् **विप्राः** मेधाविनः स्तोतारः **मतिभिः** स्तुतिभिः प्रज्ञापूर्विकाभिः **शिशुं न** शिशुमिव **रिहन्ति** रिहतिरर्चतिकर्मा ( निघं० ३–१४–११ ) अर्चन्ति पूजयन्ति स्तुवन्तीत्यर्थः। यथा बालं पुत्रं माता पित्राद्या बान्धवाः स्तुतिपदैरुपलालयन्ति तद्वत्॥ १॥

अथास्य भाष्यम्—

**अयं वेनश्चोदयत् पृश्निगर्भाः प्राष्टवर्ण–गर्भा अप इति वा ज्योतिर्जरायुः–ज्योतिरस्य जरायुस्थानीयं भवति। जरायुर्जरया गर्भस्य, जरया जूयत इति वा। इममपां च सङ्गमने सूर्यस्य च, शिशुमिव विप्रा मतिभी रिहन्ति–लिहन्ति–स्तुवन्ति–वर्धयन्ति–पूजयन्तीति वा॥**

**जरायुः** कस्मात्? तद्धि **जरया गर्भस्य** भवति। यथा यथा गर्भो विपरिणमते तथा तथा तदुत्पद्यते। **अथ वा जरया जूयत इति** जरायुः। यच्चैतज्जरेति प्रसिद्धम् तया स यूयते मिश्र्यत इति। यदेतद् **रिहन्ति** इति तदेतत् **लिहन्ति**। लिहेर्धातोः ( आ० उ० ) **वर्धयन्ति स्तुवन्ति** वेति तदर्थः। **पूजयन्तीति** रिहधातोरर्चार्थस्य नैघण्टुकस्य॥

अथ निगमप्रसक्तं निर्वक्ति—

**शिशुः शंसनीयो भवति। शिशीतेर्वा स्याद्दानकर्मणः चिरलब्धो गर्भ इति॥**

१. यत्र सूर्यस्य रश्मिभिरापः सङ्गच्छन्ते॥

२. प्रसूताया गोः स्त्रिया वा पश्चात्पतति सा जरेत्युच्यते लोके॥

**शिशुः** कस्मात्? स हि शंसनीयोऽभिशंसनीय आशंसनीयः पित्रादेः। अर्चनीयो वा वस्त्राकल्पादिभिः। **अथवा शिशीतेः** शिशुः **स्यात्। दानकर्मणः** दानार्थस्य नैरुक्तस्य। "शो तनूकरणे" ( दि० प० ) इत्यस्यैव व्यत्ययेन श्यपः श्लौ ओकारस्येत्वमात्मनेपदं चेत्युक्तमधस्तात्। दीयते हि स पुरुषेण स्त्रियै गर्भतया धारणाय। भवति च वादः स्त्रीणामभिनवगृहीतगर्भाणाम् **चिरलब्धो मे गर्भ इति**॥

अथ क्रमप्राप्तः—

**असुनीति–रसून्नयति। तस्यैषा भवति॥ २॥ ( ३९ )**

**असुनीतिः** ( २५ ) इत्येतद्दैवतापदम्। स पुनरयमिन्द्रः मध्यमः प्राणः। स पुनर्यदेतस्माच्छरीरादुत्क्रामति अथेतरान् **असून्** प्राणानन्यत्र **नयति** प्रापयति। विज्ञायते हि "प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति॥ २॥( ३९ )

**"असुनीते मनो अस्मासु धारय जीवातवे सुप्रतिरा न आयुः। रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व"॥ ५॥**

( ऋ० सं० ८–२–२२ )

**असुनीत** इति। श्रुतबन्धोरार्षं त्रिष्टुप्। असुनीति–( प्राण– ) दैवत्या। हे **असुनीते!** प्राण! त्वम् **मनः**। उपलक्षणमेतत्। मनःप्रभृतीनेतान्प्राणान् आत्मनोऽवस्थानेन **अस्मासु** अस्मच्छरीर एव **धारय** अवस्थापय। "धृङ् अवस्थाने" ( दि० आ० ) मा त्वमुत्क्रामीः। त्वदनुत्क्रमेणान्येऽप्यवस्थास्यन्ते इति। **जीवातवे** चिरमस्माकं जीवनाय ( मनो धारयास्मासु ) अमुना प्रकारेण च **नः** अस्माकं **आयुः** जीवितकालम् **सुप्रतिरा** सुष्ठु प्रतिर प्रकर्षेण वर्धय। छान्दसो दीर्घः ( पा० ६–३–१३७ ) किं च **रारन्धि** रन्धय संसाधय **नः** अस्मान्। **सूर्यस्य संदृशि** संदर्शनाय निमित्ते सप्तमी। तथानुगृहाण यथा सूर्यस्य सम्यग्दर्शनाय अलं स्याम ( दिव्यं नश्चक्षुरुत्पादय येन सूर्यं संपश्येम ) सर्वं चैतदन्नप्राचुर्ये सति भवति अतो ब्रूमः **घृतेन** उदकेन **त्वं तन्वम्** आत्मनस्तनुम् "वा छन्दसि" ( पा० ६–१–१०६ ) इति वा पूर्वसवर्णः। यथाकारणं **वर्धयस्व** लब्ध्युदकं ददति सर्वमिदं संपत्स्यत इति। अत्रासुनीतेरङ्गविभोक्त्वाद्घृतमित्युदकनामैवोपपद्यते॥ ५॥

अथास्या भाष्यम्—

**असुनीते! मनः अस्मासु धारय, चिरंजीवनाय प्रवर्धय च न आयू रन्धय च नः सूर्यस्य सन्दर्शनाय॥**

१. वशे गमय। तथा च वक्ष्यति भाष्यकृत्॥

**रन्धय** निष्पादय। "रध हिंसासंराद्ध्योः" (दि० प०) ततो णिचि लोटो रूपम्। रारन्धीति यङ्लुगन्तम्। ततश्च सुसमिति योज्यम्। "रधिजभोरचि" (पा० ७-१-६१) इति नुमचंविनापि भवति यङ् लुग्वद्बहुलमिति बोध्यम्। संदृशीति भावक्विबन्तमित्याह-**संदर्शनाय** इति॥

रध्यतेरर्थान्तरमपि भवतीत्याह—

**रध्यतिर्वशगमनेऽपि दृश्यते॥**

तद्यथा—

**"मा रधाम द्विषते सोमराजन्"**

(ऋ० सं० ८-७-१५-५) (अथ० सं० ५-३-६-७)

**इत्यपि निगमो भवति॥**

अस्य "देवीं षळुर्वीं रुरुनः कृणोतु विश्वेदेवास इह वीरयध्वम्। मा हास्महि प्रजया मा तनूभिः" इत्यादिः। विहव्यस्यार्ष वैश्वदेवी त्रिष्टुप्। तत्रैषा दर्शपूर्णमासादिषु हविषामभिमर्शने विनियुज्यते। हे **षट्** संख्याकाः **उर्वीः** उर्व्यः सर्वमिदमूर्णुवत्यः **देवीः**! देव्यः! जसि "वा छन्दसि" (पा० ६-१-१०६) इति वा पूर्वसवर्णदीर्घः। एताश्चान्यत्राम्नायन्ते—"षण्मोर्वीरंहसः पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्चे"ति। यूयम् (यथत् वयं युष्माभिर्बहु क्रियमाणमिच्छामो धनादि तत्तत्) **नः** अस्माकम् **उरु** बहु विस्तीर्णं वा **कृणोत** कुरुत। "कृवि हिंसाकरणयोश्च" (भ्वा० प०) "धिन्विकृण्व्योर च" (पा० ३-१-८०) इत्युप्रत्ययः। "तप्तनप्तनथनाश्च" (पा० ७-१-४५) इति तस्य तबादेशो गुणः। हे **विश्वेदेवासः**! विश्वेदेवाः! "आज्जसेरसुक्" (पा० ७-१-५०) इति जसोऽसुगागमः। यूयमपि **इह** अस्मिन्प्राप्तव्ये धनादौ कर्मणि वाऽस्माकमङ्गभावमुपगताः सन्तः **वीरयध्वम्** विक्रामयत। "वीर विक्रान्तौ" (चु० आ०) प्रार्थनायां लोट् (यथा वयं तद्धनादि लभेमहि तथा वीर्यवन्तो यूयं प्रयच्छध्वम्)। यद्वा वीरान्पुत्रानिच्छत दातुम्। (नामधातुः) अपिच (जातपुत्राः सन्तः) वयं **प्रजया** पुत्रादिरूपया **मा हास्महि** मा परित्यजेमहि। **मा** च **तनूभिः** स्वाभिः (स्वैः शरीरैः) परित्यजेमहि। अस्मान्कदाचिदपि पुत्रादयः शरीराणि च मापरित्याक्षुरित्यर्थः। "ओहाक् त्यागे" (जु० प०) अस्मात्कर्तरि लुङि चिण्वद्भावाभावे रूपम्। तथा हे **राजन्**! राजमान! यद्वाऽस्माकं स्वामिन्! **सोम**! (विशेषतस्त्वमुच्यसे, सर्वस्या अस्या आशिषस्त्वदनुध्यानात्) **द्विषते** अप्रीतिं कुर्वतः शत्रोः। "षष्ठ्यर्थे चतुर्थी वक्तव्या" (पा० २-३-६२ वा०) इति चतुर्थी। द्विषतेर्लटः शतरि आदादिकत्वाच्छपो लुक्। **मारधाम** मावशंगच्छेम। द्विषन्त एव अस्माकमर्थसंप्रदानादिना वश्यतामुपयान्तु। यतोऽनिष्टं हि द्विषतो विधेयत्वमिति। सामर्थ्यादिह रध्यतिर्वशगमने इत्युपपन्नम्॥ ५॥

अधुना तुरीयं मन्त्रपादं व्याचष्टे—

**घृतेन त्वमात्मानं तन्वं वर्धयस्व॥**

इति। अत्र तन्वमिति व्याख्यातमात्मानमित्यनेन॥ "स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः। मूर्तिरात्मा॥

अथ क्रमप्रसक्तम्—

**ऋतो व्याख्यातस्तस्यैषा भवति॥ ३॥ (४०)**

**ऋतः** (२६) इत्येतत्पदम्। स एष मध्यमोऽत्राभिधेयः। **व्याख्यातं** च निर्वचनतः "ऋतमित्युदकनाम-प्रत्यृतं भवती"त्येवम् (नि० २-२५)॥ ३॥ (४०)

**"ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति। ऋतस्य श्लोको बधिराततर्द कर्णा बुधानः शुचमान आयोः॥ ३॥"**

(ऋ० सं० ३-६-१०)

**ऋतस्येति**। वामदेवस्यार्षं त्रैष्टुभमृतदैवत्यम्। सम्पातसूक्ते निष्केवल्ये पृष्ठ्याभिप्लवयोः शस्यते। **ऋतस्य** ऋतदेवस्य मध्यमस्य **पूर्वीः** पूर्व्यः बह्वयः अनेककालसंभृता वा **शुरुधः** शुचं दीप्तिं तापं वा रुधत्य आपः। "अन्येभ्योऽपि दृश्यन्ते" (पा० ३-२-७५) इति क्विप्। **सन्ति हि** भवन्ति खलु। **ऋतस्य** ऋतदेवस्य संबन्धिनी **धीतिः** प्रज्ञा तद्विषया स्तुतिर्वा (उदकसंप्रदानद्वारेणाकालं नाशयन्ती) **वृजिनानि** वर्जनीयानि अयशांसि पापानि वा सर्वलोकस्य **हन्ति** विनाशयति। अकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्मादिषु प्रवृत्तिर्भवति। ददतश्चोदकं सर्वलोकवृजिनापघाताय। तस्य **ऋतस्य** एवमतिमहान् **श्लोकः** स्तुतिरूपा वाक् स्तनयित्नुलक्षणः शब्दो वा **बुधानः** बोधयन्। ण्यन्तात्लटः कानच्। **शुचमानः** दीप्यमानश्च सन् **बधिरा** बधिरस्य। "सुपां सुलुग्—" (पा० ७-१-३९) इति ङसो डादेशः। अपि **आयोः** अयनस्य गन्तुर्मनुष्यस्य (निघं० २-३-१७) संबन्धिनौ **कर्णा** कर्णौ। औङ आकारः (पा० ७-१-३९) (अतिदुर्भेदौ) **आततर्द** आतृणत्ति आभिनत्ति। वर्तमाने लिट् (पा० ३-४-६) एवं सतत्त्वो ह्यसावृत इति॥ ३॥

अथास्य भाष्यम्—

**ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य प्रज्ञा**

१. संराद्धिर्निष्पत्तिः॥

१. दिवादिरयम् माङ्लुङि पुषादित्वाच्लेरङादेशः। गणे तु "रध हिंसासंराध्योः" (प०) इति पठ्यते। संराद्धिः पाक इति तद्वृत्तिः। निष्पत्तिरिति दीक्षितचरणाः। तथाच—द्विषते तदर्थम् मा रधाम परिपक्वा हननार्हा मा भूम इत्यर्थः। यास्कस्तु वशगमने व्याख्यत्॥

२. एवं स्वभावः॥

**वर्जनीयानि हन्ति । ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति । बधिरो बद्धश्रोत्रः । कर्णौ बोधयन् दीप्यमानश्चायोरयनस्य मनुष्यस्य, ज्योतिषो वोदकस्य वा ॥**

अत्र ज्योतिषो वोदकस्य वेति श्लोक इत्यनेनाभिसंबद्धं वेदितव्यम् । श्लोकः शब्दसंघातः । "श्लोकृ संघाते" ( भ्वा० आ० ) ऋतमुदकं ज्योतिश्च इयर्तीति सतः । "गत्यर्थाकर्मक०" ( पा० ३–४–७२ ) इत्यादिना कर्तरि क्तः । अतो गन्ताऽन्तरिक्षेऽसौ ऋतो मध्यमस्तदीयमुदकं ज्योतिश्च तस्यैष श्लोकोऽयनस्य कर्णावातृणत्तीति वाक्यार्थः ॥

अथ क्रमप्राप्तम्—

**इन्दुरिन्धेरुनत्तेर्वा । तस्यैषा भवति ॥४॥ (४१)**

इन्दुः ( २७ ) इत्येतत्पदं तदेतदिन्धेर्दीप्त्यर्थस्य ( अ० आ० ) उनत्तेर्वा क्लेदनार्थस्य (रु० प०) उभयमपीन्दौ चन्द्रमस्युपपद्यते दीप्तिः क्लेदनं च । दीप्यते उनत्ति वा वर्षेण । अत्र "भृमृशी०" ( उ० १–७ ) इत्यादिना बाहुलकादिन्धेरुप्रत्ययो धकारस्य दकारश्च । उनत्तेश्च "उन्देरिच्चादेः" ( उ० १–१२ ) इत्युप्रत्ययः ॥ ४ ॥ ( ४१ )

**"प्र तद्वोचेयं भव्यायेन्दवे हव्यो नय इषवान्मम रेजति रक्षोहा मन्म रेजति । स्वयं सो असदा निदो वधैरजेत दुर्मतिम् । अवस्रवेदघशंसोवतरमव क्षुद्रमिव स्रवेत्"॥**

( ऋ० सं० २–१–१७–१ )

**प्रतदिति** । पारुच्छेपी[2] अतिच्छन्दा[3] । षष्ठेऽहनि मरुत्वतीये शस्यते । अहम् **भव्याय** भावनार्हाय ( यो हविषा भावनमर्हति, न च भाव्यते, अहविर्भाक्त्वात्तस्मै ) । सायणस्तु–भवनशीलाय प्रतिदिनं कालाभिवृद्ध्या वर्धनशीलायेति व्याचख्यौ । **इन्दवे** अमृतेन सर्वस्य क्लेदयित्रे तत्प्रीत्यर्थम् । "तादर्थ्ये चतुर्थी" ( पा० १–४–४४ वा० ) **तद्** वक्ष्यमाणं कर्म स्तोत्रं वा यद्यदिष्टतमं तस्येन्दोस्तत्तदिति दुर्गः । **प्रावोचेयम्** प्रकर्षेण वक्तुं शक्तो भूयासं, स्तुतेरतिमहत्त्वादिति भावः । वचेर्लिङ्याशिष्यङ् ( पा० ३–१–८६ ) "वच उम्" ( पा० ७–४–२० ) भविष्ये तु प्रब्रवीमि इति व्याख्यातम् । यः इन्दुः **हव्यो न** हवनार्ह इव यो यज्ञे, न चाहूयते अहविर्भाक्त्वादेव । अथ च **इषवान्** अन्नवान् ( निघं० २–७–१४ ) कामवान्वा । "इष इच्छायाम्" ( तु० प० ) कर्मणि भावे वा अङ् । कामिनां होतॄणां नित्यमभिमतफलसंप्रदानोन्मुखः । तत्संप्रदानोन्मुखतया च नित्यमस्माकम् **मन्म** मननानि प्रज्ञानानि "मनु अवबोधने" ( त० आ० ) भावे मनिन् । "लोपश्चास्यान्यतरस्यां म्वोः" ( पा० ६–४–१०७ ) इत्युकारलोपः । **रेजति** रेजयति आकम्पयति । उपकारितया नित्यमस्मानाकम्पितहृदयान्करोति । कथं नामैतं नित्यं स्तुयामेति । रेजतिर्नैरुक्तो धातुर्गत्यर्थः ( निघं० २–१४–६ ) इहाकम्पने प्रयुक्तः । भ्यसते रेजते इति यथाक्रमं भयवेपनयोः ( निघं० ३–२१ ) निरुच्यते तत्रैव पदव्यत्ययो वा । अपि च **रक्षोहा** रक्षांसि बलेन घ्नन् सुतरामस्माकं **मन्म रेजति** । उक्तवदर्थः । यद्वा-मन्म कर्म तेषां हननादिरूपं रेजति बलेन रेजयति गमयति नाशयतीत्यर्थः । रेजतिरिहान्तर्भावितण्यर्थः । किंच **स्वः** इन्दुः **स्वयम्**[1] आदरवान्भूत्वा **अस्मदानिदः** अस्मदभिनिन्दितारम्[2] । **दुर्मतिम्** अस्मान्प्रति पापमतिं वधैः वज्रप्रहारादिभिर्हननोपायैः । "हनश्च वधः" ( पा० ३–३–७६ ) इति भावे अप् । तत्सन्नियोगेन वधादेशश्च । **अजेत** अजेत् क्षिपेत् । "अज गतिक्षेपणयोः" ( भ्वा० प० ) पदव्यत्यय आर्षः । जयेदिति दुर्गः । तेन चातिबलवतेन्दुनाऽभिहन्यमानोऽस्माकम् **अघशंसः** अघानां ( पापानां ) शंसिता ( कथयिता स्वल्पानामपि स्फीतिकर्ता जनपदेऽसौ ) स्तेनो वा ( निघं० ३–२४–१३ ) **अवस्रवेत्** अधोगतिः स्यात् । अव इत्यध इत्यस्यार्थे । अवस्रवणमेव पुनः प्रार्थ्यते–**अवतर**मित्यादिना । ततश्च **अवतरम्**[3] अत्यन्तनिकृष्टम् **क्षुद्रम्** क्षेप्तुं शक्यमुदकादिकम् **इव अव** स्वस्थानादवाङ्मुखो भूत्वाऽसौ **स्रवेत्** स्रवतु–गच्छतु अधः पतत्विति तदाशास्महे ॥ १ ॥

अत्र बलकृतेर्दर्शनादसाविन्दुर्मध्यमः । अथास्या भाष्यम्—

**प्रब्रवीमि तद्भव्यायेन्दवे हवनार्ह इव यद्इषवानन्नवान्कामवान्वा मननानि च नो रेजयति । रक्षोहा च बलेन रेजयति । स्वयं सो अस्मदभिनिन्दितारम् । वधैरजेत दुर्मतिम् । अवस्रवेदघशंसः । सतश्चावतरं क्षुद्रमिवावस्रवेत् ॥**

१. यद्यपि–संघातो ग्रन्थः स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा–इत्येवं व्याख्यातम् ( सि० कौ० ) तथापि "श्लोकृ संघाते" "द्रेकृ–ध्रेकृ शब्दोत्साहयोः" इति धातुपाठात् पूर्वोक्तरार्थसन्दर्भवशादुक्तोऽर्थः । अर्थनिर्देशस्याधुनिकत्वाद्वा, उपलक्षणत्वाद्वा धातूनामनेकार्थत्वम् ॥

२. परुच्छेपोऽस्या ऋषिः ॥

३. अत्यष्टिश्छन्दोऽस्याः ॥

१. स्वयमित्यात्मनेत्यर्थेऽव्ययम् । तेन चादरार्थोऽभिव्यज्यते । महान्हि यत्स्वयं करोति तदत्यादृतोऽर्थ एव नान्यः ॥

२. अत्र अस्मदिति पञ्चम्यन्तमस्मत्तोऽजेताक्षिपेदवनयेदिति सायणः । आनिद इत्यत्राङ् अभीत्यस्यार्थे । निद इति "णिदि कुत्सायाम्" ( भ्वा० प० ) इत्यस्य कर्तरि कसुनि अमो लुक् ( पा० ७–१–३९ ) ॥

३. अवेति निकृष्टार्थे(ऽवमार्थे–)ऽव्ययम् । "निकृष्टप्रतिकृष्टार्वरेफयाप्याववमाधमाः" इत्यमरः ॥

गतार्थमेतन्मन्त्रव्याख्यया ॥ इह रेजति २ स्रवेत् २ इत्यभ्यासबाहुल्यं दृष्ट्वा प्रतिसमाधत्ते—

**अभ्यासे भूयांसमर्थं मन्यन्ते ॥**

इति । शब्दाभ्यासे यत्रान्यो विशेषो नास्ति तत्रैवं विशेषमाचार्या मन्त्रार्थसतत्त्वविदो मन्यन्ते यदुतार्थभूयस्त्वमिति । नह्यकस्मात्स एव शब्दः पुनरभ्यस्यते । लोकेऽपि चैतद्दृष्टम्—

**यथा—ऽहो दर्शनीया+अहो दर्शनीयेति ॥**

गुणातिशये हि स्त्रियाः शब्दाभ्यासः । तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम् ॥

**तत्परुच्छेपस्य शीलम् ॥**

**तत्** च पुनरेतत् **परुच्छेपस्य** तन्नाम्नो मन्त्रदृशः **शीलम्** स्वभावः । स हि नित्यमैभ्यस्तैः शब्दैः स्तौति । मन्त्रदृशोऽपि स्वभाव उपेक्ष्य इत्युपप्रदर्शनायेदमुक्तम् ॥

अथ पुनः—

**परुच्छेप ऋषिः । पर्ववच्छेपः । परुषि परुषि शेपोऽस्येति वा ॥**

**पर्ववत्** वंशादिग्रन्थिमध्यवत् । "ग्रन्थिर्ना पर्वपरुषी" इत्यमरः । अत्र ग्रन्थिपदं तन्मध्यमाचष्टे । **शेपः** प्रजननं (लिङ्गम्) । "शिश्नो मेढ्रो मेहनशेपसी" इत्यमरः । यस्य स **परुच्छेप ऋषिः** । पर्वशब्दस्य परुदादेशः पृषोदरादित्वात् । अथ **वा परुषि परुषि** सर्वाङ्गसन्धिषु **शेपः** शेपकृतो योगोऽस्य कामेन, सर्वाङ्गीणकामत्वाद**स्येति** । शेपोऽकारान्त एव तथैव निरुक्तः (३–२१)

**इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि ॥**

**इति**—करणः प्रकारवचनः । एवमेतानि यथा समाम्नातानि **सप्तविंशतिः** सप्ताधिकविंशतिसंख्याकानि **देवतानामधेयानि** वायुरित्यत आरभ्य यावदिन्दुरिति । **अनुक्रान्तानि** अनुक्रम्य क्रान्तानि कीर्तितानि, विशेषविवक्षया ॥

कः पुनरसौ विशेष इत्याह—

**सूक्तभाञ्जि–हविर्भाञ्जि ॥**

तेषां मध्ये कानिचित् **सूक्त**०० **भाञ्जि** च । सूक्तं च हविश्चोभयं भजन्ते । कानिचित्सूक्तमेव न हविरित्याह—

**तेषामेतान्यहविर्भाञ्जि ॥**

तद्यथा—

**वेनो–सुनीति–ऋत–इन्दुः ॥**

इति । एभ्यो यान्यन्यानि त्रयोविंशतिः । तान्युभयं भजन्ते सूक्तं च हविश्च । देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । घृतेन उदकेन त्वमात्मानं वर्धयस्वेत्येवमाद्यभिधानार्थं विशेषप्रविभागप्रज्ञप्तये । अहविर्भाक्त्वादुदकमेवात्र घृतमित्येवमादि यथाव्याख्यातं तद्वत्तेषु मन्त्रेषु विशेष उपेक्ष्य इति ॥

अथ क्रमप्राप्तः—

**प्रजापतिः प्रजानां पाता वा पालयिता वा । तस्यैषा भवति ॥ ५ ॥ (४२)**

**प्रजापतिः** (२८) **पाता–पालयितेति** धातुतो विशेषो निर्वचनप्रकारोऽर्थतस्तु तौल्यमेवेत्यसकृदभिहितं प्राक् (नि० १०–११) ॥ ५ ॥ (४२)

**"प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव । यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यं स्या॑म॒ पत॑यो र॒यीणा॑म् ॥"** (ऋ० सं० ८–७–४–५ य० वा० सं० १०–२०=२३–६५)

**प्रजापत** इति । प्रजापतिपुत्रस्य हिरण्यगर्भस्यार्षं त्रिष्टुप् । प्रजापतिदैवत्या । पितृयज्ञ उपस्थाने विनियुक्ता । राजसूये च विनियोगो होमे । हे **प्रजापते ! त्वत्** त्वत्तः **अन्यः** कश्चित् **एतानि** इदानीं वर्तमानानि **विश्वा** विश्वानि सर्वाणि । "शेश्छन्दसि बहुलम्" (पा० ६–१–७०) इति शेर्लोपः । **जातानि** प्रथमविकारभाञ्जि भूतजातानि । **न परिबभूव** न परिभवति न परिगृह्णाति न व्याप्नोति । परिपूर्वो भवतिरिह परिग्रहे । किंतु त्वमेव **ता** तानि सर्वाणि भूतजातानि सर्वदेवतारूपाणि वा परिगृह्य भवसि (त्वमेवैतानि सर्वाणि सर्वतः परिगृह्य सर्वतो भवसि । यत एवं त्वां सर्वतो विभूतं पश्यामः सर्वस्येशानम्) अतो ब्रूमः **यत्कामाः** यत्फलं कामयमाना वयं **ते** तुभ्यं **जुहुमः** हवींषि प्रयच्छामः **तत्** फलं **नः** अस्माकम् **अस्तु** भवतु । स कामोऽस्माकं त्वदनुध्यानात्समृध्यतां नित्यमेवेति प्रथमाशीः प्रार्थ्यते । अथ द्वितीया । **वयं** च **रयीणां** धनानाम् (निघं० २–१०–८) **पतयः** ईश्वराः (प्रभवः) **स्याम** भवेम इति ॥ ५ ॥

अथास्या भाष्यम्—

**प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परिबभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु–वयं स्याम पतयो रयीणां इत्याशीः ॥**

---

१. एतत्–शब्दाभ्यासेऽर्थभूयस्त्वम् ॥
२. अत्र संधिरार्षः ॥
३. नियमतः अभ्यस्तैः–असकृदभिहितैः ॥
४. उक्तं च "ये सान्तास्तेऽदन्ताः" इति । "यस्यामुशन्तः प्रहराम शेपम्" (ऋ० सं० ८–३–२७) इत्यत्र यथा ॥

१. जायतेऽस्तिविपरिणमते वर्धतेऽपक्षीयते नश्यतीत्येवं षड्भावविकारक्रममनुसृत्येत्थं व्याख्यातम् ॥
२. त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः ॥
३. अयं व्याख्यामार्गो दौर्गः ॥

इति-इयमपरा आशीर्द्वितीया । यत्कामा इति प्रथमा । अथवा-आशीरित्याचार्यो दर्शयति । इयं मन्त्रगतैव । यत्रापि न स्यात्तत्राप्यध्याहार्येति । प्रकारार्थकेन इतिना बोध्यते । स्तुत्याशिषोर्नित्यसंबन्धादिति ॥

अथ क्रमप्राप्तः—

**अहिर्व्याख्यातः । तस्यैषा भवति ॥६॥ (४३)**

**अहिः (२९)** इत्येष **व्याख्यातः** निर्वचनतः "अहिरयनात्" (नि० २-१७) इति । इह त्वभिधेयो मध्यमः ॥ ६ ॥ (४३)

**"अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु सीदन् ॥ ६ ॥"** (ऋ० सं० ५-३-२६)

**अब्जामिति** । वसिष्ठस्यार्षमर्धर्चम् । एकोनविंशत्यक्षरा विराड्द्विपदा अहिदैवत्या । दशरात्रस्य चतुर्थेऽहनि वैश्वदेवे विनियुक्ता । हे स्तोतः ! त्वम् **रजःसु** उदकेषु । लब्धव्येषु निमित्तभूतेषु **सीदन्** एतस्मिन्कर्मण्यङ्गभावमुपगच्छन् इमम् **अब्जाम्** अप्सुजम् । "सप्तम्यां जनेर्डः" (पा० ३-२-९७) इति डः । लिङ्गव्यत्ययेनाप् । उदकजन्मानम् । **नदीनाम्** नदनानाम् अपाम् **बुध्ने** बन्धने एतस्मिन्नन्तरिक्षे वर्तमानम् **अहिं** मेघानां हन्तारमिमं मध्यमं देवम् (इन्द्रम्) **उक्थैः**[3] स्तोत्रैः **गृणीषे** स्तौषि । "गॄ शब्दे" (क्र्या० प०) लट् । पदव्यत्यय आर्षः ॥

अथास्या भाष्यम्—

**अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु उदकेषु सीदन् । बुध्नमन्तरिक्षं, बद्धा अस्मिन्धृता आप इति वा । इदमपीतरद्बुध्नमेतस्मादेव, बद्धा अस्मिन्धृताः प्राणा इति ॥**

वा-शब्दोऽग्रिमव्याख्यान्तरमपेक्ष्याभिहितः । **इतरत्** शरीरम् । पृषोदरादि ॥

अथ क्रमप्राप्तः—

**योऽहिः स बुध्न्यः । बुध्नमन्तरिक्षं तन्निवासात् । तस्यैषा भवति ॥ ७ ॥ (४४)**

**अहिर्बुध्न्यः (३०)** स एष अहिरेव, नामभेद एव, नार्थभेदः । **य एव अहिः स एव बुध्न्यः** । एतावांस्तु विशेषः । **बुध्न०००वासात्** । अहिः बुध्न्यः । बुध्नमर्हतीत्यर्थे "छन्दसि च" (पा० ५-१-६७) इति यत्प्रत्ययः ॥ ७ ॥ (४४)

**"मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः" ॥ ७ ॥** (ऋ० सं० ५-३-२६)

**मा न** इति । पूर्वया समानार्षादिका "अहिर्बुध्न्यः" बुध्नेऽन्तरिक्षे भवो बुध्न्यः । अहिश्चासौ बुध्न्यश्चेति कर्मधारयः । अन्तर्वर्तिन्याः सोःसुरादेशः (पा० ७-१-३९) इति न लुक् । विधानसामर्थ्यात् । अग्निरेष **नः** अस्मान् **रिषे** रेषणाय हिंसकाय । रिषेर्हिंसार्थात् (भ्वा०-दि० प०) भावे क्विप् । कस्मैचित् **माधात्** मा प्रयच्छतु । दधातिरिह दानार्थः । **ऋतायोः** यज्ञकामस्य । क्यच् "क्याच्छन्दसि" (पा० ३-२-१७०) इत्युप्रत्ययः । **अस्य** यजमानस्य **यज्ञः** **मास्त्रिधत्** मासुस्रुवत् नित्यमविनाशेन वर्तताम् । लोडर्थे "मङि लुङ्" (पा० ३-३-१७५) यद्वा अस्याहिर्बुध्न्यस्य इममहिर्बुध्न्यमुद्दिश्य ऋतायोर्यज्ञकामस्य यो यज्ञः स न क्षीयेतेत्यर्थः । स्रिधतिरिह स्रवणे (विनाशे) वर्तते । नैगमो धातुः ॥ ७ ॥

अथास्या भाष्यम्—

**मा च नोऽहिर्बुध्न्यो रेषणाय धान्मास्य यज्ञोखा च स्रिधद्यज्ञकामस्य ॥**

**यज्ञोखा** यज्ञः । तस्योखा-पात्रविशेषश्च । यत्र संस्कृतमुख्यं हविर्भवति ॥ **चकारेण** द्वयमपि यज्ञशब्देनैव भाष्यकृता व्याख्यातम् । "तादर्थ्यात्ताच्छब्द्यम्" इति न्यायात् । सन्धिरार्षः ॥

अथ क्रमप्राप्तः—

**सुपर्णो व्याख्यातः । तस्यैषा भवति ॥ ८ ॥ (४५)**

**सुपर्णः (३१)** स एष **व्याख्यातः** निर्वचनतः "सुपर्णाः सुपतनाः" इत्येवं रश्मिनामसु (नि० ३-१२) सूपस्थात्पणातेर्नै गुण इह त्वभिधेयो मध्यमः ॥ ८ ॥ (४५)

**"एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम्" ॥४॥**

(ऋ० सं० ८-६-१६)

**एक** इति । सध्रिर्नाम वैरूप ऋषिः तपसः पुत्रो घर्मो वा तस्येयमार्षं जगती । **एकः** अद्वितीयः । (यस्य प्रतिमानमन्यद्वितीयं नास्ति) **सः सुपर्णः** सुपतनो वायुर्मध्यमस्थानो देवः । **समुद्रम्** अन्तरिक्षम् (निघं० १-३-१५) नित्यम् **आविवेश** आविशति । वर्तमाने लिट् (पा० ३-४-६) स त्व पुनः सर्वभूतानुप्रवेशी तदाविश्य **इदं विश्वं** सर्वं

---

१. पतेरिन्प्रत्यये (उ० ४-११४) गुणायादेशौ यकारस्य हकारो व्यत्ययेन इत्येवं व्याख्यातपूर्वम् ॥

२. सायणस्तु-अमो लुकाऽहिमेव विशिनष्टि-सीदन्तमिति ॥

३. "वच परिभाषणे" (अ० प०) इत्यस्मात्थक्प्रत्ययः (उ० २-६) संप्रसारणं चेत्युक्थशब्दः स्तुतिपर्यायः । अत एवोक्थानि उक्थैर्वा शंसतीत्युक्थशा यजमान इति दीक्षितचरणाः प्राहुः (सि० कौ०) ॥

**भुवनम्** भूतजातम् **विचष्टे** अनुग्राह्यतयाऽभिविपश्यति । **तम्** एवंरूपं देवमहं **पाकेन मनसा** विपक्वप्रज्ञानेन । सर्वगतमपि सन्तम् **अन्तितः** अन्तिकमिवं **अपश्यम्** दृष्टवानस्मि ऋषिर्दृष्टदेवतासतत्त्वः कस्मैचिदाचक्षाणो ब्रवीति—**तं माता०००तरम्** इति । माता उदकानां निर्मात्री माध्यमिकी वाक् **तं** मध्यमं देवमहिर्बुध्न्यम् **रेळिह** आस्वादयति । उपजीवनमात्रमत्र लक्ष्यते । स उ खलु मातरं वाचं रेळिह लेढि, तामेवोपजीवति । "लिह आस्वादने" (अ० उ०) परस्पराश्रयत्वात्तयोर्वृत्तेरध्यात्मवेदिति ॥ ४ ॥

अथास्या भाष्यम्—

**एकः सुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति, तं पाकेन मनसाऽपश्यमन्तितः । इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता । तं माता रेह्रि वागेषा माध्यमिका स उ मातरं रेह्रि ॥**

इत्यृषेरित्यादि व्याख्यातमधस्तात् (नि० १०-१०)॥

अथ क्रमप्राप्तः—

**पुरूरवाः—बहुधा रोरूयते । तस्यैषा भवति ॥ ९ ॥ (४६)**

**पुरूरवः** (३२) मध्यमः । विज्ञायते हि—"प्राण एव हि पुरूरवाः" इति । सः **बहुधा रोरूयते**—स्तनयति तेनासौ पुरूरवाः । तथा च पुरुशब्दोपपदाद् भृशार्थविशिष्टाद्रौतेरसुनि "अन्येषामपि" (६-३-१३७) इति पूर्वपदस्य दीर्घः । पुर्वनेकविधं स्तनयित्नुशब्दं भृशं करोति यः स पुरूरवाः ॥९॥ (४६)

**"समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः स्वगूर्ताः । महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥ २ ॥"**

(ऋ० सं० ८-५-२)

**समस्मिन्निति** । उर्वश्या आर्षं त्रिष्टुप् । **अस्मिन्** एतस्मिन्पुरूरवसि **जायमाने** वर्षकर्मणि प्रतिजायमाने प्रावृट्काले "कर्मजन्मानः" इति ह्युक्तम् । **ग्नाः** आपः **सम्** समागत्य (तं परिवार्य-तद्विधेयतामुपगम्य) **आसत** आसते तिष्ठन्ति । वर्तमाने लङ् (पा० ३-४-६) **उत** अपिच (यथायथैव-मृतुवशाद्वर्षासु नद आरोहति तथा तथैनं ताः) **नद्यः** नदना आपः **स्वगूर्ताः** स्वयंगामिन्यः भूत्वा । "नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि" (पा० ८-२-६१) इति उद्यमनार्थस्य गुरीधातोः (दि० आ०) गूर्तेति निष्ठान्तो निपातः । तदधिकारोद्भवेन **ईम्** एनम् **अवर्धन्** वर्धयन्ति । लडर्थे लङ् (पा० ३-४-६) अतः परं स्तूयमानः प्रत्यक्षीभूत इति प्रत्यक्षकृतोऽर्धर्चः—हे **पुरूरवः** ! **यत्** यस्मात् **त्वा** त्वाम् **महे** महते **रणाय** मेघेन सह रमणीयाय संग्रामाय **दस्युहत्याय** मेघवधाय च **अवर्धन्** वर्धयन्ति **देवाः** माध्यमिकाः । तस्मात्त्वामवश्यं ग्नाः समागम्यासते । वर्धयन्ति च नद्यः । सर्वथापि महानुभावस्त्वं सर्वमपि त्वय्युपपद्यत इति भावः ॥ २ ॥

अथास्या भाष्यम्—

**समासतास्मिञ्जायमाने ग्ना गमनादापो—देवपत्न्यो वा । अपि चैनमवर्धयन्नद्यः स्वगूर्ताः स्वयंगामिन्यो महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन् । दस्युहत्याय च देवा-देवाः ॥ १० ॥ (४७)**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० दशमाध्यायस्य चतुर्थः पादः ॥ १० ॥ ४ ॥**

**ग्ना-गमनात्** । गमेर्नो (उ० ३-६) बाहुलकाट्टिलोपश्च । **देवपत्न्यो वेति** पृथक्त्वेन दर्शयति । तथापि योज्यते—समागम्यैतस्मिन्नैले पुरूरवसि राज्ञि आसत ग्नाः सर्वा देव-

१. समीपे वर्तमानमिव । "अन्तिकस्य तसि कादिलोपो भवत्याद्युदात्तत्वं च" इति कादिलोपः । सार्वविभक्तिकोऽत्र तसिः ॥

२. यद्वा सुपर्णः पक्षवान्निराधारसञ्चारी एकः प्राणवायुः परमात्मा वा । समुद्रं समुद्रवन्त्यापोऽस्मादिति समुद्रमन्तरिक्षं, यद्वा समुद्द्रवं—सर्वतोगमनं तच्छीलं प्रपञ्चजातमाविष्टवान् । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः । वायुपक्षे—वाय्वादिरूपेणाविवेश । स इदं विश्वं सर्वं लोकं विचष्टे विशेषेण ख्यापयति । सति हि प्राणे परमात्मनि वा जीवन्तः पुरुषा लोके प्रख्यातं कुर्वन्ति तं देवमुपासकोऽहं पाकेन परिपक्वज्ञानेन मनसा अन्तितः—अन्तिके समीपे स्वहृदयेऽपश्यम् तं प्राणं माता वायू रेळिह—वाक् प्राणेऽन्तर्भवतीत्यर्थः । स्वापे हि वाग्व्यापारो न दृश्यते प्राणव्यापारस्तु दृश्यत इति सायणव्याख्यानम् ॥

१. देवा इत्यभिप्रेत्य ॥

२. सुतरां तद्विधेयतामुपगच्छन्त्यः ॥

३. इलापत्ये । तथाच—

ऐलोर्वशीतिहासोऽत्र वैशद्यार्थं प्रवर्ण्यते ।<br>
मित्रश्च वरुणश्चोभौ दीक्षितौ प्रेक्ष्य चोर्वशीम् ॥ १ ॥<br>
रेतः सिषिचतुः सद्यस्तत्कुम्भे न्यदधुस्तदा ।<br>
तां शप्तवन्तौ मनुजभोग्या भूमौ भवेति तौ ॥ २ ॥<br>
अत्रान्तर इलो राजा मनोः पुत्रश्च संयुतः ।<br>
मृगयां संचरन्साध्वो देवीक्रीडं विवेश ह ॥ ३ ॥<br>
यत्र देवं गिरिसुता सर्वैर्भावैरतोषयत् ।<br>
अत्राविशन्पुमान्स्त्री स्यादित्युक्त्वा, तत्र चाविशत् ॥ ४ ॥<br>
स्त्रीभूत्वा व्रीडितः सोऽगाच्छरणं शिवमञ्जसा ।<br>
इयं प्रसाद्यतां राजन्नित्युक्तः शम्भुना नृपः ॥ ५ ॥<br>
जगाम शरणं देवीमात्मनः पुंस्त्वसिद्धये ।

पत्न्यः । स हि स्त्रीणां स्वभावो यत्प्रजायमानां स्त्रियं परिचार्यो-सते । उतापि चेमेनमवर्धन्नवर्धयन् नद्यो नदनाः स्तुतिपरा ग्नाः । तस्य स्वगूर्ताः स्वयंगामिन्य अपरप्रणेया ईश्वराः । अपि-चैतत्सर्वमप्युपपद्यते पुरूरवः ! त्वयि-यद्यस्मान्महे महते रणाय रमणीयाय संग्रामायासुरैः सह दस्युहत्याय शत्रुवधाय च त्वा त्वामवर्धयन् स्वैर्महिमभिस्त्वं नः असुराञ्जेष्यसीति पुरश्चक्रुः । देवा देवा इति द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थं यस्माल्लक्ष्यते समाप्तमिदमिति ॥ १० ॥ ( ४७ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० दशमाध्यायस्य चतुर्थः पादः ॥ १० ॥ ४ ॥

॥ दशमाध्यायः समाप्तः ॥ १० ॥

---

अकरोत्सा नृपं देवी षण्मासात्प्राप्तपुंस्त्वकम् ॥ ६ ॥
ततः कदाचित्स्त्रीकाले बुधः सौन्दर्यमोहितः ।
अप्सरोभ्यो विशिष्टां तामिलां सङ्गतवान्मुदा ॥ ७ ॥
तदेलायां सोमपुत्राज्जातो राजा पुरूरवाः ।
तमुर्वशी च चकमे प्रतिष्ठानपुरे स्थितम् ॥ ८ ॥
तल्पादन्यत्र नग्नं त्वां दृष्ट्वा यामि यथागतम् ।
सुतावुरणकौ त्वं च समीपं कुरु मे द्रुतम् ॥ ९ ॥
इति सा समयं कृत्वा रमयामास तं नृपम् ।
चतुरब्दे गते रात्रौ देवैरुरणकद्वयम् ॥ १० ॥
हृतं तस्य ध्वनिं श्रुत्वा नग्न एव स भूपतिः ।
उत्थाय जित्वा तावागच्छेत्येवं जल्पको नृपः ॥ ११ ॥
विद्युता दर्शितोऽस्यै स नग्न एव पुरूरवाः ।
अथ सा दिष्टसमया ह्युर्वशी तु दिवं ययौ ॥ १२ ॥
तत उन्मत्तवद्राजा दिदृक्षुस्तामितस्ततः ।
कुर्वन्नन्वेषणं तीरे सरसो मानसस्य ताम् ॥ १३ ॥
विहरन्तीमप्सरोभिः सहापश्यत्पुरूरवाः ।
पुनः स चकमे भोक्तुमुर्वशीं च पुरूरवाः ॥ १४ ॥
सास्रं साऽपश्यदुक्त्वा च प्रत्याचष्ट व्रजेति तम् ।
इत्युर्वश्यैलसंवादमिममेषोऽप्यसूचयत् ॥ १५ ॥

इति ॥ अत्र वाजसनेयकम्—"उर्वशी हाप्सराः पुरूरवसमैलं चकमे तꣳह विन्दमानोवाच" इत्यादि ॥

१. एष कथाप्रसङ्ग उर्वश्याः प्रजननसामयिकः । सा हि प्रति-वर्षं तेनाहितगर्भा सुषुवे तदन्वितः ॥

२. सायणस्त्वित्थमिमं व्याचख्यौ—"अनया (ऋचा) एताभिः संसर्गस्त्वयानुभूत इति (तं प्रत्याचक्षाणा) उर्वशी वदति—अस्मि-न्पुरूरवसि जायमाने ग्ना अप्सरसो देववेश्या अपि समासत सङ्गता अभवन् । अथवा—जायमाने—यज्ञार्थं प्रवर्धमाने सति ग्नाः देवपत्न्योऽपि समासत—समभवन् । उतापि च ईमेनं पुरूरवसं स्वगूर्ताः स्वयंगामिन्यो नद्यस्तासामाश्रयभूता अवर्धयन् । किंच हे पुरूरवः ! यद्यस्मात् त्वा त्वां महे महते रणाय रमणीयाय सङ्ग्रा-माय दस्युहत्याय दस्युहननाय देवास्त्वामवर्धयन्" इति ॥

## एकादशोऽध्यायः । प्रथमः पादः ।

अथ श्येन इत्यादीनि षट्त्रिंशत्पदानि मध्यमाभिधानानि, तत्र—

**श्येनो व्याख्यातः । तस्यैषा भवति ॥ १ ॥**

**श्येनः** ( १ ) इत्येष **व्याख्यातः** अश्वनामसु "श्येनः शंसनीयं गच्छती"ति ( नि० ४–२४ ) इह त्वभिधेयो मध्यमः । **तस्य** तदभिधेयस्येन्द्रस्य **एषा** स्तुतिरनन्तरीया ऋग् **भवति** इत्येवं सर्वत्र योज्यम् ॥ १ ॥

**"आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम् । अत्रा पुरन्धिरजहादरातीर्मदे सोमस्य मूरा अमूराः" ॥ ७ ॥**

( ऋ० सं० ३–६–१५ )

**आदायेति** । वामदेवस्यार्षं श्येननाम्न्येकाहे माध्यन्दिनस-वने मरुत्वतीयशस्त्रे शस्यते । अजिरे च । तथाच सूक्तविनियोगे सूत्रितम्—"श्येनाजिराभ्यामभिचरन्यजेताहं मनुरि"ति । **श्येनः** शंसनीयगमन इन्द्रः प्रत्तं **सोमम् आदाय अभ-रत्** अहरत् । हस्य भः ( पा० ३–१–८४ वा ) अपिबदि-त्यर्थः । क ? यत्र—**सहस्रम् अयुतं च सवान्** सुत्याः **साकम्** संभूयर्त्विजः कुर्वन्ति । अत्र—सहस्रायुतशब्दावपरि-मिताभिधायकौ । बहुबोधकाविति यावत् । अस्ति हि विशेष-शब्दः सामान्येऽपि भवतीति । तद्यथा—हिमेनोदकेनेति । तदेतत्सत्रपक्षे व्याख्येयमदक्षिणत्वात्सत्राणाम् । वस्तुतस्तु—सहस्रसाव्यं सत्रं याज्ञिकाः पठन्ति । तद्यथा—अतिरात्रयोर्मध्ये सहस्रमहानि, शतकृत्वो दशरात्रस्यावृत्तिरग्नेः सहस्रसाव्यमिति । तदह्नां सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसंख्ययोपलक्ष्यमाण-मयुतं सोमभक्षाणां संपद्यते । सोमभक्षनिष्क्रयणश्रुतिश्च दक्षि-णानामस्ति—"यां सदस्येभ्यो ददाति सोमपीथं तया निष्क्री-णीत" इति । तथा च सहस्रं सवान्साकं यत्र कुर्वन्ति । अयुतं च दक्षिणा ददति इति व्याख्येयं तदेतद्भाष्ये स्फुटम् । **अत्र** अत्र । संहितायां दीर्घः ( पा० ६–३–१३७ ) अस्मिन्स-हस्रसाव्ये सत्रे **पुरन्धिः** पुरुणो बहुनो धनस्य धाता

---

१. एतदादिकमिदं सप्तर्चं सूक्तम् ॥

२. हरणमिह स्वीकारः पानरूपः । "हरणं प्रापणं स्वीकारः स्तेयं नाशनं चे"ति ( सि० कौ० ) ॥

३. सोमपानं, तत्फलमित्यर्थः । तया—दक्षिणया, सोमपीथसम-संख्याकदक्षिणारूपनिष्क्रयदानेन तत्कालं लभेतेत्यर्थः ॥ सत्रमद-क्षिणमपि तत्र सोमपीथं सदक्षिणमिति तात्पर्यम् । दुर्गस्तु—इमां श्रुतिमुपन्यस्य—नचासतिप्रश्लेषे रूढिबाधो न्याय्य इति । असत्यपि ऋत्विग्दक्षिणादानसंबन्धे सहस्रसाव्यमेव सत्राणां, प्रासर्पकाभि-प्रायं वा अयुतम् । अथवा सहस्रमिति बहुनाम, सहस्रं सवान् अभिषवा बहवः । प्रतिसवमभिषवमभिप्रेत्य यस्मिन्कस्मिंश्चिद्दक्षि-णावति सोमे अयुतं च दक्षिणा बह्व्य इत्यर्थमाह ॥

दाता । पृषोदरादिः । स श्येनः ( इन्द्रः ) **सोमस्य मदे** तृप्तौ तृप्तायां स्वयम् **अमूरः** अमूढः निःसाध्वसः सन् **अरातीः** अमित्रानसुरान् **मूराः** मूढाः मूढान् अप्रतिपत्तिकान्कृत्वा **अजहात्** प्राणैरभ्यजयत् । तदेतत्पृथक्पक्षे देवानाम् । त्रित्वपक्षे तु अरातीः अदानान् । रातिर्दानार्थस्तत्प्रतिषेधेनारातीः । न रातिर्दानं येषां तान् दास्यामीत्येवंधियो मूराः मूढान् मन्दमतीन् कार्पण्यसंयुक्तान् प्रति सोमस्य मदे प्राप्ते सति अमूरः अमूढः अकृपणो भूत्वा **अजहात्** धनमस्यजद्दातासंपेदे इत्यर्थः । अत्रारातिशब्दः शत्रुवचनः पुंल्लिङ्गोऽपि स्त्रीलिङ्गतया व्यत्ययेन निर्दिष्टः ॥ ७ ॥

अथास्या भाष्यम्—

**आदाय श्येनोऽहरत्सोमं सहस्रं सवानयुतं च सह। सहस्रं–सहस्रसाव्यमभिप्रेत्य, तत्रायुतं सोमभक्षा–स्तत्संबन्धेनायुतं दक्षिणा इति वा । तत्र पुरन्धिरजहादमित्रान् । अदानानिति वा । मदे सोमस्य मूरा अमूरः । ऐन्द्रे च सूक्ते सोमपानेन स्तुतस्तस्मादिन्द्रं मन्यन्ते ॥**

**सह** संभूय यत्र कुर्वन्ति "तत्रे"ति शेषः । अर्थान्तरमाह–**सह॰॰प्रेत्य** इति । तत्र सहस्रसाव्ये सत्रे–**अयुतम्** चमसपरिसंख्ययेत्युक्तमधस्तात् । तत्र **पुरन्धिरिति** भेदपक्षे देवानामसुराश्चापि "पूर्वदेवाः सुरद्विष" इत्यभिधानम् । त्रित्वपक्षे व्याचष्टे—**अदानानिति वेति** । एतत्तत्वं व्याख्यातमधस्तात् । ननु **मदे** इत्यादितुर्यपादेनेन्द्राभिधानमिति कथं श्येनोऽत्रेन्द्र इत्यत आह–**ऐन्द्रे** चेत्यादि ॥

अथ क्रमप्राप्तः—

**ओषधिः सोमः । सुनोतेर्यदेनमभिषुण्वन्ति ॥**

**सोमः** ( २ ) निर्वक्तव्यः स पुनरेष **ओषधिः** हैमवतो मौजवतो वा वनस्पतिः । स कस्मात् ? **सुनोतेः** । "षुञ् अभिषवे" ( स्वा० उ० ) इत्यस्य । सूयते "अर्तिस्तु–सु–हु०" ( उ० १–१३७ ) इत्यादिना कर्मणि मन्प्रत्यये गुणः । सूयते

अभिषूयते ह्यसौ यज्ञे । तदाह–**यदेनमिति** । कर्मकारकमनेन दर्शयति । स कथं मध्यस्थानः ? भवति हि तमधिकृत्य–"यत्ते सोम ! दिवि ज्योतिः" ( य० वा० सं० ६–३३ ) इति । "सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयमिति स तनूकरणे तं सर्वं स्वतनूभूतमाप्याययति" ( श० ब्रा० ३–९–४–१२ ) इति तस्मादस्यैव स्वा तनूर्यच्चन्द्रमाः, रसात्मकत्वात् । वायुर्वा सोऽयमेवमात्मानमापाद्याभिषूयत इति भवति स मध्यमः ॥

**बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन । तस्य पावमानीषु निदर्शनायोदाहरिष्यामः ॥ २ ॥**

**अस्य** सोमस्य **नैघण्टुकम्** अभिधानकृतं **वृत्तं बहुलम्** आभीक्ष्ण्येन "वर्तते" इति शेषः । अस्यार्था स्तुतिः ( परार्था ) तद्यथा प्रायः पावमानं मण्डलम् । क्वचित् **प्राधान्येन** स्वप्रधाना स्तुतिः । एवमाश्चर्यमिव चित्रतः स्तुतिः स्यात् । **तस्य** एतस्य **पावमानीषु** ऋक्षु **निदर्शनाय** उभयम् **उदाहरिष्यामः** परार्थत्वं स्तुतेः स्वार्थत्वं च । परार्थं तावदुदाह्रियते । तद्यथा– ॥ २ ॥

**"स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः" ॥**

(ऋ० सं० ६–७–१६–१ सा० सं० छं० आ० ५–२–४–२)

**स्वादिष्ठयेति** मधुच्छन्दस आर्षं गायत्री । ग्रावस्तोत्रे विनियुक्ता । हे **सोम** ! त्वम् **स्वादिष्ठया** स्वादुतमया **मदिष्ठया** मादयितृतमया च **धारया** अभिरक्षणेन **पवस्व** प्रक्षर । प्रकृत्यादित्वादभेदे तृतीया ( पा० २–३–१८ वा० ) यतस्त्वम् **इन्द्राय** इन्द्रार्थम् **सुतः** अभिषुतोऽसि । किं कर्तुम् ? **पातवे** पातुम् "तुमर्थे–" ( पा० ३–४–९ ) तवेन्प्रत्ययः । अत्रेन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते ॥ १ ॥

**इति सा निगदव्याख्याता । अथैषाऽपरा भवति चन्द्रमसो वैतस्य वा ॥ ३ ॥**

अत्र **अथ**–शब्देन विशेषाधिकारवाचिना स्वप्रधानता स्तुतेरधिकरोति । **चन्द्रमसो वेति** । चन्द्रत्वमापन्नस्याप्यौषधिसोमस्य वा । यथोक्तमनुपदम्–"स तनूकरणे" । इतरथा ह्यप्राकृतप्रक्रिया स्यादनधिकारादस्मिन्प्रक्रमे चन्द्रमसः । चन्द्रमसो वाधिदैवमापन्नस्य । **एतस्य** ओषधिसोमस्य वाऽधियज्ञमापन्नस्य । तदेतदुभयथा प्रदर्शयति–॥ ३ ॥

**"सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् । सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन" ॥ २ ॥** ( ऋ० सं० ८–३–२० )

---

१. पुरुधिः सन्पुरन्धिः । दधातिर्ददात्यर्थेऽसकृदभिहितः ॥

२. निर्भयः । अत्र रस्य ढभावो नैगमसंमतः । लोकेऽपि रलयोर्डलयोश्च सावर्ण्यं पठ्यते ॥

३. नैरुक्तानामयं पक्षः । अग्निवाय्वादित्याख्यो भूर्भुवःस्वर्देवतास्तैरभ्युपेता इत्युक्तमधस्तात् ॥

४. यद्वा अदातॄनपि दातॄन्संपादयत् । ये हि दक्षिणया सोमपीथफलं यजमानाय दातुं न प्राभवँस्तान्प्रोत्साह्य सोमपानप्रमत्तान्संपाद्य तैरदापयदित्यर्थः ॥

५. "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः । अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः" इत्यमरः ॥

६. मन्त्रव्याख्याकाले ॥

**सोममिति**। सवितृसुतायाः सूर्याया आर्षमनुष्टुप् विवाहे विनियुक्ता। तं **सोमं मन्यते** जानाति। कः? **पपिवान्** अवैद्येन (कामार्थं चिकित्सार्थं वा) पीतसोमः। **यत्** यं सोमम् **ओषधिम्** वल्लीरूपम् **संपिंषन्ति** संचूर्णयन्ति (अभिषुत्य पिबन्ति) केचिद्रासायनिकाः। नचासौ सोमो न च ते सोमं पपिवांसः सोमपा उच्यन्ते। यतोऽसौ वृथा सुतः सोम इति। कस्तर्हि सोमः? उच्यते–**सोमं** हि तं मन्यते यं **ब्रह्माणः** ब्राह्मणाः। अस्ति हि ब्रह्मन्शब्दो ब्राह्मणवचनः। "तस्मै मा ब्रूया निधिपाय ब्रह्मन्" इति यथा। ऋत्विजो यजमानाश्च यागसाधनभूतं **विदुः** जानन्ति संस्कर्तुम्। **तस्य** अंशम्। यद्वा कर्मणि षष्ठी। तं सोमम् **कश्चन** अयज्वा (अनधिकृतो यजमानत्वेन) **नाश्नाति** न पिबति ॥ ३ ॥

तथा चास्या भाष्यम्—

**"सोमं मन्यते पपिवान् यत्संपिंषन्त्योषधिम्"। इति वृथा सुतमसोममाह। "सोमं यं ब्रह्माणो विदु" रिति "न तस्याश्नाति कश्चना" ऽयज्वेत्यधियज्ञम् ॥**

**इति**–अनेन तावदर्धर्चेनायं मन्त्र एव **वृथा सुतं** सोम**मसोममाह**। पातृंश्चासोमपान्। अत्र हेतुमाह–**सोमं००रिति**। **इति** करणे हेत्वर्थः। यतस्तं सोमं मन्यते यं ब्रह्माणो विदुः "संस्कर्तु"मिति शेषः। **तस्य** तं यज्वभिः संस्कृतम् **कश्चन अयज्वा** अनधिकृतो **नाश्नाति**। **इत्यधियज्ञम्** इति विषयमुपप्रदर्शयति ॥

**अथाधिदैवतम्। "सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम्" इति यजुः सुतसोममाह। "सोमं यं ब्रह्माणो विदु"श्चन्द्रमसं, "न तस्याश्नाति कश्चना" देव इति ॥**

अत्र **अथ**–इति विषयान्तरमधिकरोति। उक्तं हि "चन्द्रमसोवे–" (नि० २१–३)–ति, तदुपप्रदर्शनार्थमाह–**सोमं००षधिम्**। इति। **इति एष यजुर्मन्त्रः सुतम्** सोममधियज्ञं चन्द्रमसमपेक्ष्य **असोममाह**। यथा पूर्वस्मिन्रासायनिकसोमस्यासोमत्वमधियज्ञमपेक्ष्य, एवमिहापि–अधियज्ञसोमस्यासोमत्वमधियज्ञसोमं चन्द्रमसमपेक्ष्य, एवं कृत्वा–**सोमं यं००** **इति**। देवानां हि भक्ष्यत्वेन विपरिणतश्चन्द्रमाः "सोमो नूनमेष तद्देवानामन्नम्" इति ह विज्ञायते। एवमस्य स्वप्रधाना सोमस्य स्तुतिः ॥

**अथैषाऽपरा भवति। चन्द्रमसो वैतस्य वा ॥ ४ ॥**

सा पुनरियं किमर्थम्? "आश्चर्यमिव प्राधान्येन" (नि० ११–२) इत्युक्तम्। तथा चेयम् **अपरा** अन्या स्वार्थप्राधान्या स्तुतिरप्यस्ति सोमस्येत्युपप्रदर्शनार्थमाह–॥ ४ ॥

**"यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः। वायुः सोमस्य रक्षिता समानां मास आकृतिः" ॥ ५ ॥** (ऋ० सं० ८–३–२०)

**यत्त्वेति**। आर्षादि पूर्ववत्। हे **देव**! सोम! **यत्** यदा **त्वा** त्वाम् ओषधिरूपम् **प्रपिबन्ति** पातुं प्रारभन्ते ऋत्विग्यजमानास्त्रिषु सवनेषु। आद्यकृतावत्र प्रशब्दः। **ततः** अनन्तरमेव **पुनः** विशेषेण **आप्यायसे** वर्धसे। तदुक्तमधियज्ञे–"आप्यायन–माप्यायस्व–संतेपयांसि–इति भक्ष्यशेषान्" इति। **वायुः सोमस्य** तव **रक्षिता** भवति। यथा न शुष्यसि तथाऽसौ करोति। यो हि शोषकत्वेन लोके प्रसिद्धः। अयमर्थः—सोमाधारवनस्पतिविकार–ग्रह–(पात्र) द्वारेण वायुः सोमस्य रक्षिता भवति। "वायुगोपा वनस्पतयः" इति श्रुतेः। किंच **मासः** मस्यते परिमीयते पात्रेण (चमसेन) इति मासः सोम एव। "मसी परिमाणे" (दि० प०) कर्मणि घञ् (पा० ३–३–१९) उपधावृद्धिः। स त्वम् **समानाम्** संवत्सराणाम्। "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः। **आकृतिः** आकर्ता व्यवच्छेदको भवसि। संवत्सरे संवत्सरे वसन्तादिकालेष्वनुष्ठीयमानत्वात्। "वसन्ते वसन्ते ज्योतिषा यजेत" इति श्रुतेः। ज्योतिः सोमः। एवं वल्लीरूपसोमपक्षे योजना ॥ ५ ॥

---

१. यजत्वेनेति करणे यजतेरुसिः। तथाचोक्तम्–"सर्वे वेदा यजुः प्रोक्तास्तद्वेदाश्च ऋगादय" इति। अत एव च "यजुः सर्वत्र गीयते" इत्येष प्रवादो याज्ञिकानाम्। जैमिनिनापि "तेषामृग्यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुःशब्दः" इति घनितम् (अ० २ पा० १ सू० ३३–३४–३५) तेषाम्–यजुषां मध्ये सा ऋक् यत्रेत्यर्थः ॥

१. "पुनरप्रथमे विशेषे च" इत्यभिधानम् ॥

२. केचित्तु व्याचक्षते–पातॄन्पातुमभिवर्धयसि समुद्योजयसीति यावत्। न ते पाने तृप्तिं तेऽधिगच्छन्तीति भावः। ततश्चाभिद्रासे (प्राप्तपुंस्त्वा महावीर्याः) प्रभाषन्ते–"हन्ताहं पृथिवीमिमां निदधानीहवेहवा। कुवित्सोमस्यापामिति" (ऋ० सं० ८–६–२७) व्याख्यातमेतदधस्तात् (नि० १–२–३) ॥

३. "आप्यायस्व समेतु ते" (ऋ० सं० १–६–२२) इति प्रातःसवने। "सं ते पयांसि समु यन्तु वाजाः" (ऋ० सं० १–६–२२) इति उत्तरयोः (मध्याह्न–सायं–) सवनयोर्विनियुज्यते यैस्त्वमाप्यायसे। अभिमन्त्रितो वर्धसेऽभिवर्धयसि च पातॄनित्येवमुक्तोऽर्थः ॥

४. तस्मिन्हि काष्ठमये पात्रे सोमो न शुष्यतीति प्रसिद्धं याज्ञिकानाम् ॥

इत्यधियज्ञपक्षे—अधिदैवतपक्षेऽपि योजना यथा भाष्यम्—

**"यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः" । इति नाराशंसानभिप्रेत्य । पूर्वपक्षापरपक्षाविति वा ॥**

**नाराशंसान्** सोमस्य पातृविशेषान् । इत्यधियज्ञपक्षे । अथाधिदैवपक्षे । **पूर्वेति** कृष्णपक्षशुक्लपक्षौ अभिप्रेत्य । कृष्णे त्वां सोमं चन्द्रमसं पिबन्ति देवाः पुनः शुक्ले आप्यायसे ( कलोपचयाद्वर्धसे ) इति वा अनेनोच्यते ॥

**"वायुः सोमस्य रक्षिता" । वायुमस्य रक्षितारमाह । साहचर्याद्रसहरणाद्वा ॥**

**रक्षितेति** । वायव्येष्वसौ पात्रेषु गृहीतो रक्ष्यत इति—**वायु००माह** मन्त्रदृक् । हेत्वन्तरमाह—**साह००णाद्वा** वायुसहचरितो ह्यसौ, तेन नित्यं सहचरणादविनाभावात्कर्मणः, रसहरणाद्वा । सर्वरसापहारी वायुः समर्थः सन्यन्न शोषयति सोमं तदस्य सख्यं, तेन सोमो रक्षितो भवति ॥

**समानां—संवत्सराणां मास आकृतिः सोमो रूपविशेषैरोषधिश्चन्द्रमा वा ॥**

**मासः** माता ( परिमाता ) निर्माता **सोम ओषधिः** । **संवत्सराणाम् आकृतिराकर्ता** व्यवच्छेदको भवति । कैः ? **रूपविशेषैः** । पर्णानामुपचयापचयरूपैः । अयमर्थः—सोमस्य चन्द्रमसः कलोपचयमनु प्रत्यहमेकैकश्येन-कला इव चन्द्रमसः, पर्णान्युपचीयन्ते स पौर्णमास्यां पञ्चदशपर्णः संपद्यते । पौर्णमास्याः पुनः प्रातः कलाहानौ चन्द्रमस इव, एकैकं पर्णमपचीयते इति ओषधेः सोमस्य, सोमस्य चन्द्रमसः साम्यं संपद्यते, तदायुर्वेदविदः सोमलक्षणं रसायनतन्त्रे स्मरन्ति ।

अमुना प्रकारेणोपचयापचयाभ्यां पर्णानां सा सोमलक्षणद्वारेण **समानां** संवत्सराणां **मासः** मासस्य **आकृतिराकर्ता** ( व्यवच्छेदको ) भवति **सोमो रूपविशेषैः** । तदेवं पर्णानामुपचयापचयाभ्यामन्यदन्यद्रूपं प्रतिपद्यते, एवमधियज्ञेऽपि स एव **ओषधिः** सोमः ॥

अथाधिदैवते—**चन्द्रमा वेति** । अयमर्थः—"यत्त्वा देव प्रपिबन्ति—" इति । अपरपक्षे पीयसे रश्मिभिः । तदुक्तम्—"यमक्षितमक्षितयः पिबन्ति" इति "तत आप्यायसे पुनः"—त्वां पूर्वपक्षमाप्याययन्तीति । तदप्युक्तम्—"यथा देवा अंशुमाप्याययन्ति" इति । "वायुमस्य ( सोमस्य चन्द्रमसो ) रक्षितारमाह" एष ह्येनं सूक्ष्मया रश्मिनाड्या सुषुम्णाख्यया पुनर्यथाकालमापूरयति । "समानां संवत्सराणां मासाः" "चन्द्रमाः"="सोमः" लक्षणत्वात् मासः द्वादशकृत्वो मासभूतमात्मानमावर्तयन् संवत्सराणां ( आ—) कर्ता भवति "रूपविशेषैः" इति । कलानामुपचयापचयविशेषाभ्यां रूपविशेषाश्चन्द्रमसः प्रतितिथि भवन्ति ॥

**अत्र केचित्—"स्वादिष्ठया मदिष्ठया"** इत्यस्यामपि अधिदेवतमर्थं व्याचक्षते तन्मतेनोच्यते—हे भगवन् ! **सोम** ! चन्द्र ! त्वं **स्वादिष्ठया** अतिशयेन स्वादुतमया **मदिष्ठया** अतिशयेन मदयितृतमया च लोकानाम् । स्वया **धारया** प्रत्यहमेकैकया कलया **पवस्व** प्रक्षर । यतस्त्वम् **इन्द्राय** सूर्याय **पातवे** ( पातुम् ) **सुतः** आपूरितोऽसि सुषुम्णेन रश्मिना । इति ॥

१. सायणस्तु—चन्द्रपक्षे—हे देव ! सोम ! यद्यदा त्वां प्रपिबन्ति रश्मयोऽपरपक्षे ततः अनन्तरमेव पूर्वपक्षे पुनराप्यायसे वायुश्च सोमस्य तव रक्षिता । वाय्वधीनत्वाच्चन्द्रगतेः । किं च समानां संवत्सराणां मासः षष्ठ्येकवचनमेतत् । मासस्य च आकृतिः कर्ता त्वं चासैककलाह्रासवृद्धिभ्यां हि मासः पूर्यते तैः संवत्सर इति ॥

२. ओषधिरूपस्य वनस्पतेः । अस्य पर्णानीत्यत्रान्वयः । कथम् ? प्रत्यहं चन्द्रमसः कलोपचयमनु । "लक्षणेऽनुः" ( पा० २—३—८ ) इति द्वितीया । कलोपचयमनुलक्ष्य । क इव ? चन्द्रमसः श्येनकला इव । श्येनः शुक्लः पाण्डुरः इत्यनर्थान्तरम् । "श्येनः पक्षिणि पाण्डुरे" इति मेदिनी । एतेन सोमस्य पर्णान्यपि शुक्लान्येव पाण्डुरप्रायाणि भवन्तीति ज्ञायते । तदेतद्दुर्गव्याख्यानमेवोद्धृतमिति तदपि व्याख्यासापेक्षमभूत् ॥

३. एष पाठो दुर्गव्याख्यायां मुद्रितपुस्तकेषु नोपलभ्यते । कलिकातामुद्रिते सोमस्येत्यपि सकृदेवास्ति । सामञ्जस्याय च मुम्बईमुद्रितपाठस्य क्षिप्तमेतन्मयेत्यवगन्तव्यम् ॥

१. "पद्दन्नोमास्—" ( पा० ६—१—६३ ) इत्यादिना मासस्य मासादेशः ॥

२. कृष्णपक्षे । शुक्लादिमासक्रमोऽत्राभिधित्सितोऽस्य । भाष्यकृत्तु पूर्वपक्षापरपक्षौ वेति वदन् पानवृद्ध्योः क्रममभिदधौ । तन्मतेन कृष्णादिरेव मासः । युज्यते च सः मासं परिच्छिन्दंश्चन्द्रमा मासोऽप्यभिहितोऽनेनोपलक्षणविधयेति स्पष्टमनुपदमत्रैवाधिदैवतपक्षे मन्त्रव्याख्यायां द्रष्टव्यम् ॥

३. शुक्लपक्षं, शुक्लादिमासक्रमेण । अत्यन्तसंयोगे द्वितीया ( पा० २—३—५ ) तथा च व्याप्येत्यध्याहार्यम् ॥

४. उपलक्षणविधयेत्यर्थः । "मसी परिमाणे" ( दि० प० ) इति धातोः करणे घञा निष्पन्नस्य मासशब्दस्य परिच्छेदकार्थत्वमुक्तमधस्तात् । तथाच मासपरिच्छेदकत्वान्मासश्चन्द्रमाः । स हि कलाभिवृद्ध्या पूर्णो मासमपि स्वमानेन परिच्छिनत्ति । पूर्णो मासोऽस्यां वर्तत इति पौर्णमासी तिथिरुच्यते "पूर्णमासादण् वक्तव्यः" ( पा० ७—३—२३ वा० ) इति वचनादण् आदिवृद्धिङीपौ ॥

५. एष आकृतिरित्यस्यार्थतो निर्देशः । तत्र कर्ता इत्येव पाठो मुद्रितपुस्तकेषु ॥

६. एष हि मध्यस्थानदेवतात्वेन तथा व्याख्यातोऽधस्तात् ( निघं० १०—८ ) तदर्थं सुतः । किं कर्तुम् ? पातुम् । तुमर्थे तवेन् । तथाच सूर्योऽमुं पूरयति पिबति चेत्याम्नायते ॥

७. सुषुम्णाख्यया रश्मिनाड्या । सूर्येण वायुना वा ॥

अथ क्रमप्राप्तं चन्द्रमसं त्रिधा निर्वक्ति—

**चन्द्रमाश्चायन्द्रमति । चन्द्रो माता । चान्द्रं मानमस्येति वा ॥**

चन्द्रमाः ( ३ ) कस्मात् ? स हि चायन् पश्यन्सर्वं भूतान्युपर्यवस्थितः सन् द्रमति गच्छतीति चायनाद्द्रमतेरसुन् चायन् शब्दस्य चन्भावः । "चायृ पूजानिशामनयोः" ( भ्वा० उ० ) ततः शतरि रूपम् "द्रमति" ( भ्वा० प० )गत्यर्थः । अथ वा चन्द्रश्चासौ माता निर्माता च सर्वस्येति चन्द्रमाः । तथा च चन्द्रशब्दे उपपदे "चन्द्रे मो डित्" ( उ० ४-२२२ ) इत्यसुन् डित्वाट्टिलोपः । अथ वा चान्द्रं मानमस्येति चन्द्रमाः । अत्राद्यो द्विधातुजो द्वितीये चन्द्रशब्दः पूर्वपदं मातोत्तरपदम् । तृतीये तु न समानाधिकरणमपि तु बहुव्रीहिः । चान्द्रं चन्द्रसंबन्धि । ह्रस्वत्वमार्षम् । चन्द्रोऽत्र सोमः । स ह्याह्लादकः पातॄणां तस्य मानं प्रत्यहं पर्णवृद्धिः शुक्लपक्षे । तदेवास्येन्दोरपि कलावृद्धिः । सोमपक्षे च चन्द्र इन्दुरेव तस्य मानं प्रत्यहं कलावृद्धिः शुक्लपक्षे । तदेवास्य सोमस्यापि पर्णवृद्धिरित्यर्थः ॥

अथ निर्वचनप्रसक्तः चन्द्रः कस्मात् ?

**चन्द्रश्चन्दतेः कान्तिकर्मणः। चन्दनमित्यप्यस्य भवति ॥**

नित्यकान्तो ह्यसौ । तथा च "स्फायितञ्चि-" ( उ० २-१२ ) इत्यादिना चदेरकि चन्द्रः । चद्यते काम्यतेऽसौ । अस्य चदेरेव कान्त्यर्थस्य चन्दनमित्यपि भवति ल्युटि । तदपि हि कान्तम् । अथवा—

**चारु द्रमति चिरं द्रमति । चमेर्वा पूर्वम् ॥**

चारु-इति द्रमतिक्रियाविशेषणम् । चारु मनोज्ञं यथा स्यात्तथा द्रमति गच्छतीति चन्द्रः । द्रमतिर्गत्यर्थः ( भ्वा० प० ) । तथा च चारुशब्दात् चिरंशब्दाच्चमेर्वा पूर्वं पदं द्रमतेरुत्तरपदम् । कोऽर्थः ? चम्यमानो भक्ष्यमाणो देवैरसौ द्रमति गच्छतीति चन्द्रः । चन्द्रमा वा । पृषोदरादिः ॥

अथ निर्वचनप्रसक्तम्—

**चारु—रुचेर्विपरीतस्य । तस्यैषा भवति ॥५॥**

चारु-कस्मात् ? रुचेर्दीप्तिकर्मण आद्यन्तविपरीतस्य । इदमपि पृषोदरादि ॥ ५ ॥

**"नवो॑नवो भवति॒ जाय॑मा॒नोऽह्नां॑ के॒तुरु॒षसा॑मे॒त्यग्र॑म् । भा॒गं दे॒वेभ्यो॒ वि द॑धात्या॒यन्प्र च॒न्द्रमा॑स्तिरते दी॒र्घमायुः॑" ॥ ४ ॥**

( ऋ० सं० ८-३-२३ )

नव इति । सवितृसुतायाः सूर्याया आर्षं त्रिष्टुप् । द्रूणासे चान्द्रमसे चरौ विनियोगो, राजयक्ष्मगृहीतेष्टौ च । चन्द्रमाः प्रतीच्यां दिशि पूर्वपक्षेऽनुपक्रम्योपक्रान्तवृद्धिः । अस्तं गते आदित्ये पश्चादादित्यस्य प्रतिमासं जायमानो नवोनवः अभीक्ष्णं नवः । "नित्यवीप्सयोः" ( पा० ८-१-४ ) इति द्विर्भावः । भवति । अथापरपक्षान्ते प्राच्यां दिशि प्रक्षीणः कलामात्रावशेषः अह्नां दिवसानाम् केतुः लक्षणम् । तत्कालोपचयापचयाभ्यां हि प्रतिपत्प्रभृतीन्यहानि लक्ष्यन्ते । अथवा अह्नां केतुः कर्ता खगतिविशेषैः । तादृशश्चन्द्रमाः उषसाम् प्रभातानाम् अग्रम् एति । केचनैनं पादमादित्यदैवतमाहुस्तस्मिन्पक्षे अह्नां केतुत्वमुषसामग्रगतिश्च प्रसिद्धैव । किं च अयम् प्रतिदिनं ह्रासवृद्ध्या पक्षान्तमभिगच्छन् देवेभ्यः प्रसिद्धेभ्यो हविषः भागं विदधाति करोति । य एवं करोति चन्द्रमाः स ईजानानाम् दीर्घमायुः प्रतिरते प्रवर्धयते । वयमपि यजामहे तमनेन हविषेति सोऽस्माकमप्येतत्करोत्विल्याशास्महे ॥ ४ ॥

अथास्य भाष्यम्—

**"नवो॑नवो भवति॒ जाय॑मा॒नः" इति पूर्वपक्षादिमभिप्रेत्य । "अह्नां॑ के॒तुरु॒षसा॑मे॒त्यग्र॑मि" त्यपरपक्षान्तमभिप्रेत्य ॥**

इति । अथ—

**आदित्यदैवतो द्वितीयः पाद इत्येके ॥**

"पू॒र्वा॒प॒रं च॑रतो मा॒ययै॒तौ" ( ऋ० सं० ८-३-२३-३ ) इत्यतोऽनन्तरमेवेयम् । मैत्रावरुणीये समाने हविषि विनियोग इत्यपेक्ष्य-इयमपि सौर्याचन्द्रमसीति अह्नां केतुरित्यतो विशेषलिङ्गादेके आदि०० पाद इति ब्रुवन्ति । तदर्थयोजना यथा—यः चन्द्रमाः "नवो॑ नवो भवति॒ जाय॑मा॒नः" यश्च "भा॒गं दे॒वेभ्यो॒ वि द॑धात्या॒यन्" यश्च "प्रति॑रते दी॒र्घमायुः॑" सोऽस्माकमप्येतत्करोतु ।

अयं यश्च सूर्यः अह्नां-केतुः कर्ता, उदयास्तमयाभ्याम् उषसां च अग्रमेति मुख्यत्वमार्गच्छति, तत्कृतत्वादुषसो जायमानः । अतः सोऽस्माकमेवं करोतु-इत्येतदाशास्महे-इति । चन्द्रमसो मध्यमस्थानत्वव्यवस्था दुर्गवृत्तौ द्रष्टव्या यत्र पूर्वोत्तरपदाभ्यां सा दृढीकृतास्ति ॥

१. सायणस्तु—अतिमूर्तिनाम्न्येकाहे शुक्लपक्षे चान्द्रमसीष्टिस्तत्र नवोनव इत्येषा याज्येत्याह ॥

१. तथाच श्रुतिः—"चन्द्रमा वै जायते पुनः" ( तै० सं० ७-४-१९ ) इत्यादि । तेनात्र स एव कर्ता जनेः ॥

२. शुक्लप्रतिपदमारभ्यैकैककलाधिक्येनोत्पद्यमानः सन् प्रतिमासं नवो नवो भवतीत्यर्थः । सायणस्तु—प्रतिदिनं नवनव एव भवतीत्याह । अनेन च शुक्लादिमासक्रमोऽभिहितः ॥

३. कृष्णपक्षान्ते ॥

४. प्रज्ञापकः । प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात् ॥

५. तद्रश्मिप्रान्तप्रोत्सार्यमाणे हि तमस्युषसो जायन्तेऽतः स तासां जनयितेति मुख्यः ॥

अथ क्रमप्राप्तः—

**मृत्युर्मारयतीति सतः ॥**

**मृत्युः** (४) इति वक्तव्यः । स कस्मात्? **मारयतीति सतः** । मध्यमो हि प्राणो मृत्युः । स उत्क्रामञ्छरीरादितरैः प्राणैः प्राणिनो वियोजयति । एवं मारयति । विज्ञायते हि—"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति—" इति । तथाच म्रियतेरन्तर्भावितण्यर्थात् "युजिमृड्भ्यां युत्त्युकौ" (उ० ३–१९) इति त्युक्प्रत्ययः ॥

**मृतं च्यावयतीति वा शतबलाक्षो मौद्गल्यः । तस्यैषा भवति ॥ ६ ॥**

अथ वा **मृतं च्यावयति** य एवोपक्षीणायुर्भवति उपक्षीणकर्मा, तमेवासावपगमनेन प्रच्यावयति इति **शतबलाक्षः मौद्गल्यः** आचार्यो मन्यते । तस्य मृत्योः ॥ ६ ॥

**"परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान्" ॥ १ ॥**

(ऋ० सं० ३–५–७ आ० गृ० ४–६)

**परमिति** । यमपुत्रस्य संकसुकस्यार्षं जगती मृत्युदैवत्या । आज्यहोमे पुत्रकामके कर्मणि स्थालीपाकविधाने षडाहुतिः । **हे मृत्यो!** सर्वेषां मारक! एतन्नामकदेव! त्वं **परम्** अन्यम् **पन्थाम्** पन्थानम् **अनु** च आनुपूर्व्येण **परेहि** पराङ्मुखो गच्छ । **यस्ते स्वः** स्वभूतः । कतमः? **देवयानात्** देवा अनेन यान्तीति देवयानो देवमार्गस्तस्मात् **इतरः** अन्यः पितृयानः । यस्माद्वयं देवयाने पथि स्थिता अनाघृष्यास्ते भवामः । न केवलमसत्तः परेहि अपि तु **चक्षुष्मते** दर्शनवते **शृण्वते** सर्वम् अप्रतिहतसर्वेन्द्रियविज्ञानायेत्यर्थः । **ते** तुभ्यम् **ब्रवीमि** कथयामि, त्वं **नः** अस्माकम् **प्रजाम्** दुहितृदौहित्रात्मिकाम् **मा रीरिषः** मा हिंसीः । उत अपि च **वीरान्** पुत्रपौत्रादीन् मा हिंसीः । असत्तः परागगमनेन रक्षेत्यर्थः ॥ १ ॥

अत्र—

**(परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो कथितं तेन मृत्यो मृतं च्यावयते भवति मृत्यो मदेर्वा मुदेर्वा तेषामेषा भवति ॥ ७ ॥**

**"त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित् कृशानोरस्तु रसनामुरुष्यथः" ॥ २ ॥**

**इति सा निगदव्याख्याता ॥)**

(ऋ० सं० २–२–२५)

इति प्रक्षिप्तः पाठः । अप्रकृतत्वेत्युपेक्षितोऽयं वृत्तिकृता (दुर्गाचार्येण)

अथ क्रमप्राप्तः—

**विश्वानरो व्याख्यातस्तस्यैषा भवति ॥ ८ ॥**

**विश्वानरः** (५) व्याख्यातः । अपि वा विश्वानर एव स्यात् इत्यादिना (नि० ७–२१) अभिधानतोऽभिधेयतश्च ॥ ७ ॥ ८ ॥

**"प्रवो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे । इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥ १ ॥**

(ऋ० सं० ८–१–९ य० वा० सं० ३३–३५)

**प्रव** इति । वैकुण्ठस्यार्षं जगती । महाव्रते विनियोगः । हे

---

१. मृतमिति वर्तमानसमीपे भूते क्तः । आसन्नमृत्युं चरमोच्छ्वासकाले शरीराच्च्यावयतीति । अथवा मृतः क्षीणायुः संस्कार उच्यते । तं मृतं मध्यमः प्राणः शरीराच्च्यावयतीति मृत्युः । तथाच मृतशब्दोपपदाच्च्यावयतेः "अन्यादयश्च" (उ० ४–१०८) इत्युप्रत्ययः । मतान्तरालोपः च्यावयतेस्तुमावश्च निपात्यते ॥

२. शतशब्दो बह्वर्थः । शतबलानि अक्षाणीन्द्रियाणि यस्य स शतबलाक्षः । मौद्गल्यो मुद्गलापत्यं मुनिः । अक्षशब्दो हीन्द्रियवचनः । प्रत्यक्षमिति यथा । तच्चक्षमक्षम्प्रतीन्द्रियं भवति ॥

३. दुर्गस्तु—प्रजां—पुत्रान्पौत्रांश्च मा रीरिषः मा हिंसीः । मा उत वीरान्—अन्यानपि येऽस्मदाश्रिताः पुरुषास्तानपि मा हिंसीरित्येवमाह ॥

१. प्रकृतार्थासंपृक्तत्वेत्यर्थः । तथाहि—दैवंतमसे सूक्ते जागतमिदमैन्द्रं सोमातिरेके तृतीयसवने एषा वैकल्पिकी याज्या । हे इन्द्राविष्णू! शिमीवतोः इष्टप्रदानादिकर्मवतोः । शिमीति कर्मनाम (निघं० २–१–२४) वां—युवयोः इत्था—इत्थं त्वेषं—प्रदीप्तं "त्विष दीप्तौ" (भ्वा० उ०) कर्मणि घः (पा० ३–३–१०८) समरणं सम्यग्यागदेशगमनं सुतपाः हुतशिष्टसोमपीती यजमानः उरुष्यति रक्षति (यागेन पूजयति) यद्वा शिमीवतोः प्रहरणादिकर्मवतोः वां युवयोः त्वेषं दीप्तं शौर्योपेतम् समरणं सम्यक्परस्परगमनोपेतम् वृष्टिप्रदानाय मेघविदारणरूपं कर्म यजमान उरुष्यति रक्षति स्तौतीत्यर्थः । कस्तयोरतिशय इत्युच्यते—या याविन्द्राविष्णू युवां मर्त्याय मनुष्याय हविर्दात्रे यजमानाय प्रतिधीयमानमित् प्रतिधातव्यं फलरूपम् असनाम् असनम् चक्षनशीलं प्रदानशीलमन्नादिकम् अस्तुः अभिमतक्षेप्तुः "असु क्षेपणे" (दि० प०) तृच् । निरसितुर्वा शत्रूणां, कृशानोः अग्नेः सकाशात् उरुष्यथः अविच्छेदेन प्रवर्तयथः । वह्नौ हुतं हविः स्वीकृत्य तन्मुखादेव फलमपि दास्यथ इत्यर्थः ॥

स्तोतारः ! यूयम्[1] महे महते अन्धसः अन्नस्य[2] "दात्रे" इति शेषः । **मन्दमानाय** मोदमानाय ( हृष्यमाणाय ) अथवा स्तूयमानाय ( शब्दायमानाय ) स्तोतृभिः । "मदि स्तुतिमोदमदस्वप्रकान्तिगतिषु" ( भ्वा० आ० ) ततः कर्मणि लटः कानच् ( पा० ३-२-१०६ ) **विश्वाभुवे** सर्वस्य भावयित्रे । संहितायां दीर्घः ( पा० ६-३-३७ ) यद्वा सर्वं विभूताय ( सर्वप्रकारकविभूतियुक्ताय ) **विश्वानराय** सर्वस्य नेत्रे "नरे संज्ञायाम्" ( पा० ६-३-१२९ ) इति सांहितिको दीर्घः । मध्यमाय[3] देवाय वायवे **प्रार्चा** प्रार्चयत । अर्चतिः स्तुतिकर्मा । वचनव्यत्यय आर्षः । प्रोच्चारयत स्तुतिम् । उच्चार्यमाणां चान्यैः प्रपूजयत । संहितायां दीर्घः । **इन्द्रस्य** ईश्वरस्य **यस्य** विश्वानरस्य "प्रीतौ" इति शेषः । प्रसत्त्यां ( प्रसन्नतायां ) सत्यां **सुमखम्** सुष्ठु मंहनीयं ( सुमहत् ) **सहः** बलम् ( निघं० २-९-१७ ) **महि** महच्च **श्रवः** श्रवणीयं यशः[5] **नृम्णं च** नॄन्मनुष्यान्प्रति यद्विशेषतो नतं प्रह्वीभूतम् "णम् प्रह्वत्वे" ( भ्वा० प० ) ( उपनतं प्राप्तं ) बलं[6] तच्च भवति तमेनमभिशंसतः ( स्तुवतः ) वः[7] युष्मान् **रोदसी** द्यावापृथिव्यौ **सपर्यतः** परिचरतः अभिनन्दतः । पूजयत इत्यर्थः । "सपर पूजायाम्" कण्ड्वादिरिति यक् ( पा० ३-१-२७ ) सर्वभूतानामियमभिमता स्तुतिरस्त्विति भावः ॥ १ ॥

अथास्य भाष्यम्—

**प्रार्चत यूयं स्तुतिं महते अन्धसोऽन्नस्य दात्रे मन्दमानाय मोदमानाय स्तूयमानाय शब्दायमानायेति वा । विश्वानराय सर्वं विभूतायेन्द्रस्य यस्य प्रीतौ सुमहद्बलं महच्च श्रवणीयं यशो नृम्णं च बलं नृनतं, द्यावापृथिव्यौ वः परिचरत इति । कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषाऽपरा भवति ॥ ९ ॥**

एवं बलंकृतेः । **तस्य** विश्वानरस्य । **अपरा** द्वितीया स्तुतिः । किमर्थम् ? द्युस्थानोऽपि हि विश्वानरः समाम्नातः । अस्यां त्वपरस्यां व्यपदेशादुत्तमेन ज्योतिषा विश्वानरस्यासंशयं मध्यमत्वमित्येवमुदाह्रियते ॥ ९ ॥

**"उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत्" ॥ १ ॥**

( ऋ० सं० ५-५-२३ )

उदिति । वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानरीयमर्धर्चम् । प्रातरनुवाके विनियोगः । **अमृतम्** अमृतत्वसाधकम् । अविनाशि वा । **विश्वजन्यं** विश्वस्मै जनाय हितम् । "तस्मै हितम्" ( पा० ५-१-५ ) इति यत् । **ज्योतिः** सूर्याख्यं **सविता** प्रेरयिता[2] । ताच्छील्ये तृन्निति, तद्योगे "न लोका-" ( पा० २-३-६९ ) इति षष्ठीनिषेधः । **विश्वानरः देवः** मध्यमो वायुः **उद् अश्रेत्** उदशिश्रियत्[3] उच्छ्रयति ( ऊर्ध्वमुपनयति ) वर्तमाने लुङ् ( पा० ३-४-६ ) ॥ १ ॥

अथास्या भाष्यम्—

**उदशिश्रयज्ज्योतिरमृतं सर्वजन्यं विश्वानरः सविता देव इति ॥**

एवमत्र विश्वानरो ज्योतिरुच्छ्रयतीति व्यपदेशान्मध्यमो वायुर्विश्वानरः । एवं चाभिप्रेत्योक्तं "कमन्यं मध्यमा देवमवक्ष्यत्" ( निघं० ११-९ ) ॥

अथ क्रमप्राप्तः—

**धाता सर्वस्य विधाता । तस्यैषा भवति ॥ १० ॥**

**धाता** ( ६ ) स हि **सर्वस्य-विधाता** स्रष्टा । तन्नामको मध्यमो देवः । यतोऽसौ वर्षकर्मणा सर्वं दधाति । धाञस्तृच् ॥ १० ॥

**"धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं सत्यधर्मणः" ॥ २ ॥**

( अ० सं० ७-१७ )

धातेति । वामदेवस्यार्षम् । देविकासु धात्रे हविषि विनि-

---

१. सायणस्तु—व इत्यस्य त्वमित्यर्थं व्यत्ययेनाह । तथाच क्रियापदमप्येकवचनान्तमेव । तदेतद्यास्कभाष्यविरुद्धं यथाच वक्ष्यते ॥

२. सायणस्तु—अन्धसः अन्धसेत्यर्थः । सोमेन मन्दमानाय मोदमानायेत्येवं व्याख्यत् ॥

३. अत्र सायणो मह्यमिन्द्रायेति शेषयति । एवमग्रेऽपि यस्य ममेति । तदेतद्भाष्यव्याख्यासंमतम् ॥

४. तथा च तादर्थ्ये चतुर्थी बोध्या ॥

५. सायणस्तु—श्रवः अन्नं ( निघं० २-७-४ ) इत्याह ॥

६. सायणस्तु—नृम्णं धनं चेत्याह तदेतद्युक्तं प्रतिभाति सहो बलमिति प्राग्व्याख्यातत्वात् ॥

७. एतच्चार्थवशादध्याहृतं व इत्यस्यार्थसंगत्या इति बोध्यम् ॥

८. न ह्यबलवान्प्रीतो बलं दातुं प्रभवति । विशेषतस्त्वेषाऽग्निप्रकरणे दर्शितेत्यनुपदं द्रष्टव्यम् ॥

१. अत्रौषस्यमिदमिति सायणव्याख्यानमुत्तरार्धर्चविषयं द्रष्टव्यम् । अत एवोक्तं दुर्गेण—"औषस्योऽर्धर्च उत्तर" इति । "क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः" इति । भाष्यकारो नाधिजगे । प्रसङ्गतस्तु निर्भ्रमः ।—यदा तज्ज्योतिर्द्युस्थानमुपनीयते विश्वानरेण, अथ—तदा क्रत्वा तत्कर्मणा देवानां ( द्योतमानानां ) रश्मीनां चक्षुः ख्यानं प्रकाशः अजनिष्ट जायते । उषाः सा च पुनर्जाता आविरकः भुवनं विश्वं सर्वमाविष्करोति भूतजातमित्यर्थः ॥

२. "षू प्रेरणे" तुदादिः परस्मैपदी । दुर्गस्तु—सविता । किमेतत् ? ज्योतिरमृतं सूर्याख्यं सर्वगन्तॄणां वायुपूर्वकत्वाद् गमनस्योपपद्यत इत्याह ॥

३. तथा चाश्रेदिति लुङो रूपं छान्दसम् ॥

योगः । **धाता** मध्यमो देवः **दाशुषे** दत्तवते हविः । **प्राचीं** प्रवृद्धां महतीम् **अक्षिताम्** अनुपक्षीणाम् **जीवातुम्** जीविकाम् **ददातु** ददाति । यत एवमतो ब्रूमः-**वयम् सत्यधर्मणः** नित्यमवितथार्थकारिणः । **देवस्य** धातुः तत्संबन्धिनीम् **सुमतिम्** कल्याणीं मतिं नित्यं हविर्दानयुक्तां **धीमहि** धारयामहे ॥ २ ॥

अथास्या भाष्यम्—

**धाता ददातु दाशुषे दत्तवते प्रवृद्धां जीविकामनुपक्षीणां वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणः ॥**

गतार्थमेतन्मन्त्रव्याख्यया ॥

अथ क्रमप्राप्तः—

**विधाता—धात्रा व्याख्यातः । तस्यैष निपातो भवति । बहुदेवतायामृचि ॥ ११ ॥**

**विधाता** ( ७ ) स हि **धात्रा**–धातृपदेनैव व्याख्यातः धातैव विधाता । व्युपसर्गार्थविशिष्टात्तदुपसृष्टाच्च धात्रस्तृजत्र **भवति** । स्तुतिसाधारण्येन । बह्विति वरुणविधात्रनुमतिसोम बृहस्पतिदेवतायाम् ॥

**"सोम॑स्य॒ राज्ञो॒ वरु॑णस्य॒ धर्म॑णि॒ बृह॒स्पते॒रनु॑मत्या उ॒ शर्म॑णि । तवा॒हम॒द्य म॑घव॒न्नुप॑स्तुतौ॒ धात॒र्विधा॑तः क॒लशाँ॑ अभक्षयम्" ॥ ३ ॥**

( ऋ० सं० ८-८-२५ )

**सोमस्येति** । विश्वामित्रस्यार्षं जागतम् । बहुदेवताकेऽपि लिङ्गोक्तदेवताकम् । **अहम् राज्ञः** राजमानस्य **सोमस्य** वरुणस्य च **धर्मणि** कर्मणि । वर्णव्यत्यय आर्षः । यद्वा धारके यज्ञे वर्तमानः । तथा-**बृहस्पतेः** अनुमत्याश्च संबन्धिनि **शर्मणि** शरणे आश्रये यज्ञगृहे वर्तमानः । एताभिर्देवताभिरभिप्रसूतोऽभ्यनुज्ञातः सन् हे **मघवन्** ! इन्द्र ! तव **उपस्तुतौ** स्तोत्रे "प्रवृत्तोऽसि" इति शेषः । हे **धातः** ! एतत्संज्ञक देव ! एवं हे **विधातः** ! एतत्संज्ञक देव ! सर्वैर्भवद्भिरनुज्ञातः एतान् सोम-**कलशान् अभक्षयम्** भक्षितवानस्मि ॥ ३ ॥

अथास्या भाष्यम्—

**इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति ॥**

**अभिप्रसूतः** अभ्यनुज्ञातः । प्रसवोऽभ्यनुज्ञानम् । क्वचिदभ्यनुज्ञानमिति पाठः । **सोमकलशान्** कलशस्थान् हुतशिष्टान्सोमान् । "सविशेषणे हि विधिनिषेधौ सति विशेष्येऽन्वयबाधे विशेषणमुपसंक्रामत" इति नियमात् । निध्वनत्पाश्चदन्यः श्रुत इतिवत् ॥

**कलशः कस्मात् ? कला अस्मिञ्छेरते मात्राः ॥**

**कला-मात्राः** अवयवाः । सोमसमुदायात्केचित्पृथक्कृतास्ते **शेरते** आसते **अस्मिन्** । इति कलाशब्दात्पूर्वपदं शीङ ( अ० आ० ) उत्तरपदम् । तथा च कलाशः सन् कलशः ॥

अथ कालाः कस्मात् ? अत आह–कलानिर्वचनानिर्वचनप्रसङ्गेन—

**कलिश्च कलाश्च किरते-र्विकीर्णमात्राः ॥१२॥**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० एकादशाध्यायस्य प्रथमः पादः ॥ ११ ॥ १ ॥**

**किरतेः** "कॄ विक्षेपे" ( तु० प० ) इत्यस्य कलौ वचांसि परस्परं विक्षिप्यन्ते । कला अपि विक्षिप्ता भवन्ति कुतश्चित्समुदायादित्याह-**विकीर्णमात्रा** इति ॥ १२ ॥

इति श्रीमद्यास्कमुनिप्र० निरुक्तविवृतौ दै० कां० एकादशस्य प्रथमः पादः ॥ ११ ॥ १ ॥

---

## एकादशाध्यायस्य द्वितीयः पादः ।

एवमेकवचनान्तान्मध्यमस्थानान्देवताशब्दान्निरुच्य गणशस्तानष्टौ निर्वक्तुमुपक्रमते—

**अथातो मध्यमस्थाना देवगणाः ॥**

अथातःशब्दावुक्तार्थौ । तयोः पुनरुपन्यासो बहुवचनविशिष्टोऽयमपरोऽधिकार इति मध्यमस्थाना देवगणा इतीदमपि प्रसिद्धमेव ॥

**तेषां मरुतः प्रथमागामिनो भवन्ति ॥**

कस्मादेतत् ? वायुरेव हि भेदेनापेक्ष्यमाणो मरुदभिधानो बहुवचनभाग्भवति । तेषां प्राथम्यं वायुना व्याख्यातम् । एतावांस्तु विशेषः—बहुसाध्ये कर्मणि बहुधा मध्यमो भवति । पृथक्त्वेन तु विज्ञाता मरुतः शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादयः सप्तसप्तका ४९ देवगणा मारुतेषु गणेषु सप्तकपालेषु अग्नौ पुराणे चैत एव प्रसिद्धाः । सप्तधा पुत्रत्वविचारिणः । मारीचात्कश्यपाददित्यां ये जज्ञिरे । नैरुक्तसमयस्तु सर्व एव गणा मरुतः । उक्तञ्च वार्तिके—

मध्यमा वाक् स्त्रियः सर्वाः पुमान्सर्वश्च मध्यमः ।
गणाश्च सर्वे मरुतो गणभेदाः पृथक्कृतेः ॥ १ ॥ इति ।

---

१. तथा चानुक्रान्तम्—"तुभ्येदं चतुष्कं विश्वामित्रजमदग्नी आगतं तृतीया ( सोमस्येति ) लिङ्गोक्तदेवता वे"ति । पक्षे इन्द्र एव देवता । अन्ये तु निपातमात्र इति वाशब्दस्यार्थे इति सायणः ॥

२. एतत्सार्थोऽनुपदं भाष्यव्याख्यायां स्फुटः ॥

१. सप्तविषवायुविचारिणः इति क्वचित्पाठः । अत्रोपाख्यायते ॥

अथ—

**मरुतो मितराविणो मितरोचिनो वा, महद्द्रवन्तीति वा। तेषामेषा भवति ॥ १ ॥ (१३)**

मरुतः (८) कस्मात्? **मितराविणो वा**। वेलनास्थायाम्। मितं नाम सुश्लिष्टं, यथा तेषां योग्यं रवितुं तथा रुवन्ति स्तनयन्ति। अथ **वा मितरोचिनः** तथैव सुश्लिष्टं रोचन्ते। अत्र अमितराविणमिति केचित्संहितया, तेषां च बहुप्रकारकं च ते रुवन्तीत्यर्थः। अमितरोचिन इत्यत्राप्येवमेव। अथ **वा महद् द्रवन्तीति** मरुतः। इह शब्दमहत्ताऽभिप्रेता। पूर्वत्र बाहुल्यं बहुप्रकारता च ॥ १ ॥ (१३)

**"आ विद्युन्मद्भिर्मरुतः स्वर्कैं रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः। आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः" ॥ १ ॥** ( ऋ० सं० १-६-१४ )

**आविद्युदिति**। गोतमस्यार्षमास्तारपङ्क्तिः। हे **मरुतः**! यूयम् **विद्युन्मद्भिः** विशिष्टदीप्तियुक्तैः **स्वर्कैः** स्वश्वैः सुगमनैः। यद्वा स्वर्चनैः ( शोभनमर्चनं येषां तैः ) सुपूजितैः स्वर्चिभिर्वा—अनुपरतविद्युत्संपातैः। **ऋष्टिमद्भिः** रेषणवद्भिः अकालस्य नाशकैः **अश्वपर्णैः** अशनपतनैः ( अश्नुवन्तो ये अन्तरिक्षे पतन्ति तैः ) **रथेभिः** रंहणैर्मेघैः। अत्रैस् "बहुलं छन्दसि" ( ७-१-१० ) इति न भवति। **आयात** आगच्छत। पृथक्त्वे विद्युद्भिरिव ऋष्टिमद्भिरायुधोपेतैरश्वपर्णैरश्ववाहनैः। रथं समं समेता यूयमायात। अपि च किमेवमेव यथाकथंचिदागमनमात्रे वयमर्थिनः? न इत्युच्यते **आवांर्षिष्ठयेत्यादि**। हे **सुमायाः** सुकर्माणः सुप्रज्ञा वा मरुतः! **वर्षिष्ठया** अतिमहत्या। "प्रियस्थिर०" ( पा० ६-४-१५७ ) इत्यादिनातिशायने इष्टनि बहुलस्य वर्षादेशष्टिलोपश्च। **नः** अस्माकं प्रदेयेन **इषा** अन्नेन ( निघं० २-७-१४ ) उपलक्षिताः। उपलक्षणे तृतीया ( पा० २-३-२१ ) **वयोन** वय इव पक्षिण इव शीघ्रम्। **आपप्तत** आपतत। आगच्छतेत्यर्थः। "पत्लृ गतौ" ( भ्वा० प० ) लुङि च्लेरङि "पतः पुम्" ( पा० ७-४-१९ ) इति पुमागमः। पदव्यत्ययो दीर्घश्चार्षः। इत्येतदाशास्महे ॥ १ ॥

अथास्या भाष्यम्—

**विद्युन्मद्भिर्मरुतः स्वर्कैः स्वश्वैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा। रथैरायात ऋषिमद्भिरश्वपर्णैरश्वपतनैः। वर्षिष्ठेन च नोऽन्नेन वय इवापतत। सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा ॥**

१. मायाकल्पनाकर्मेत्यनर्थान्तरम्। मीयन्ते परिच्छिद्यन्तेऽनया पदार्था इति माया "माछाससिस्यो यः" ( उ० ४।१०६ ) इति यप्रत्ययः। प्रज्ञा वा ( निघं० ३-९-९ ) ॥

अवगतार्थमेतन्मन्त्रार्थेन ॥

अथ क्रमप्राप्ताः—

**रुद्रा—व्याख्याताः। तेषामेषा भवति ॥ २ ॥ ( १४ )**

**रुद्राः** ( ९ ) व्याख्याताः ( नि० १०-५ ) "रुद्रो रौतीति सत" इत्यादिना ॥ २ ॥ ( १४ )

**"आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन। इयं वो अस्मत्प्रतिहर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे" ॥ १ ॥**

( ऋ० सं० ४-३-२१ )

**आ रुद्रास** इति। श्यावाश्वस्यार्षं मारुतं जगती आग्निमारुते शस्यते। हे **रुद्रासः** रुद्राः! यूयम् **इन्द्रवन्तः** "इदि परमैश्वर्ये" ( भ्वा० प० ) इन्द्रेण तद्वन्तः। **सजोषसः** समानप्रीतयः। परमैश्वर्येण नित्यमासेविताः। पृथक्त्वपक्षे तूपपद्यत एव। इन्द्रेण सह प्रीयमाणा इति दुर्गः। **हिरण्यरथाः** उदकहरणार्थे-रंहणाः। पृथक्त्वपक्षे तु—हिरण्यविकृतरथाः। **सुविताय** सुष्ठु वितताय ( यथाशास्त्रं क्रियमाणाय ) अस्मै कर्मणे ( यज्ञाय ) तदर्थम् **आगन्तन** आगच्छत। आङ्पूर्वाद्गमेर्लोटि तस्य तनादेशः ( पा० ७-१-४५ ) "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुक्। किमिति आगच्छत? तदुच्यते—**इयम् अस्मत्** अस्मदीया। **मतिः** स्तुतिः प्रज्ञा वा। षष्ठ्यर्थे पञ्चमी। **वः** युष्मान् **प्रति**। **हर्यते** कामयते। "हर्य गतिकान्त्योः" (भ्वा० प०) पदव्यत्यय आर्षः। युष्मद्विनाकृतमिदं कर्म गुणवदप्येतैरङ्गैर्माभूद्विगुणमित्येतदर्थम्। अतो यूयम्—**तृष्णजेन** तृष्णा तृषा तृडित्यनर्थान्तरम्। सा उपजायते विशेषतो यस्मिन्काले स तृड्उपजस्तृष्णाजः कालो घर्मान्तस्तस्मिन् प्रावृषि यथा **दिवः** द्युलोकात् **उत्साः** उत्सप्रभवाः

१. एतच्च दुर्गोक्तिमनुसृत्य व्याख्यातम्। भाष्ये तु—तृष्णक्शब्द एवाभिलाषुकार्थे उपन्यस्तः साधितश्च। तथाचाभिलाषुकाय विशेषत उदन्यवे चातकाय दिवः सकाशादुत्सा उत्स्यन्द्य अप इवागच्छतेत्यर्थः। उक्तं च दुर्गेणापि—उदन्युश्चातक इति केचित्। तस्य प्रेप्सतो यथा दिव उत्सा मेघा आगच्छन्ति तथास्माकमागच्छतेति ॥

२. उत्सा मेघास्तैश्च तत्प्रभवा आपो लक्ष्यन्ते इति दुर्गोऽभिप्रैति। "उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः" इत्यभिधानादुत्सा वारिप्रवाहाः। ते गिरिप्रभवा अपीह दिवोऽपि प्रभूता गृह्यन्ते। ते यथा उदन्यवे पिपासाकुलाय भवन्ति तद्वदित्यर्थं इत्यपि संभवति। उत्साः कूपा अप्युच्यन्ते ( निघं० ३-२३-१० ) तत्प्रभवा वा सुशीता मधुराश्चापस्त एव दिवः कान्ताः। दीव्यतिः कान्त्यर्थेऽपि ॥

मेध्या आपः उदन्यवे उदकमिच्छते लोकाय आगच्छन्ति। तथा असन्मत्या प्रतिहर्यमाणा आगच्छतेत्याशास्महे ॥ १ ॥

अथास्या भाष्यम्—

**आगच्छत रुद्रा इन्द्रेण सह जोषणाः। सुविताय कर्मण इयं वो असदपि प्रतिकामयते मतिः। तृष्णज इव उत्सा उदन्यव इति ॥**

अवगतार्थमेतत् ॥

अथ निगमप्रसक्ते निर्ब्रवीति—

**तृष्णक्—तृष्यतेरुदन्युरुदन्यतेः ॥**

**तृष्यतेः** "ञितृष पिपासायाम्" ( दि० प० ) इत्यस्मात् "स्वपितृषोर्नजिङ्" ( पा० ३-२-१७२ ) इति नजिङ् प्रत्ययो ङित्वाद्गुणाभावः। "लुब्धोऽभिलाषुकस्तृष्णक्" इत्यमरः। **उदन्यतेः** क्यजन्तस्य "अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु" ( पा० ७-४-३४ ) इति निपातितस्य। "उदकेच्छुरुदन्युः स्यात्"। "क्याच्छन्दसि" ( पा० ३-२-७० ) इत्युप्रत्ययः ॥

अथ—

**ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा। तेषामेषा भवति ॥ ३ ॥ (१५)**

**ऋभवः** ( १० ) कस्मात्? **उरु भान्तीति वा**। ते हि बहु भान्ति दीप्यन्ते। तथाच उरुशब्दोपपदाद्भातेः "मृगय्वादयश्च" ( उ० १-३६ ) इति कुप्रत्ययः। पूर्वपदस्यादिलोपो रस्य संप्रसारणं च निपात्यते। पूर्वरूपे भातेरन्त्यलोपे च रूपम्। एवमुरुशब्दात्पूर्वपदं भातेरुत्तरपदम्। अथ वा **ऋतेन** यज्ञेन सत्येन वा। तदेवोत्तरपदं पूर्वपदे विकल्पः। अत्र तलोपो निपात्यते पूर्ववैव। एवमग्रेऽपि। **ऋतेन भवन्तीति वा**। भवतेर्वोत्तरपदं, ते हि ऋतेन सत्येन यज्ञेन वा भवन्ति, भूत्वा च देवत्वेन सर्वे युज्यन्ते ॥ ३ ॥ ( १५ )

**वि॒ष्ट्वी शमी॑ तर॒णि॒त्वेन॑ वा॒घतो॒ मर्ता॑सः॒ सन्तो॑ अमृत॒त्वमा॑नशुः। सौ॒धन्व॒ना ऋ॒भवः॒ सूर॑चक्षसः संवत्स॒रे सम॑पृच्यन्त धी॒तिभिः॑ ॥४॥**

( ऋ० सं० १-७-३० )

**विष्ट्वीति**। कुत्सस्यार्षं जगती, ऋभुदेवत्या। **शमी**। कर्मनामैतत्। शाम्यन्त्यनयानिष्ठानीति शाम्यतेरिनि ङीन् ( पा० ४-१-४ ) शसो लुक्। कर्माणि ( निघं० २-१-२३ ) **तरणित्वेन**। तरणिरिति क्षिप्रनाम ( निघं० २-१५-२५ ) क्षिप्रत्वेन क्षिप्रकारित्वेन ( सर्वयज्ञसंपदर्शनेन ) **विष्ट्वी** व्याप्य कृत्वा। **वाघतः** वोढारः यज्ञस्यानुष्ठातारः मेधाविनो वा ( निघं० ३-१५-२४ ) **मर्तासः** मर्ता मनुष्याः। "मृङ् प्राणत्यागे" ( दि० आ० ) अस्मात्तन् ( उ० ३-८६ ) "आज्जसेरसुक्" ( पा० ७-१-५० ) **सन्तः अमृतत्वम्** देवत्वम् **आनशुः** आनशिरे प्राप्तवन्तः। प्राप्य च देवत्वम् **सौधन्वनाः** सुधन्वनः पुत्राः **सूरचक्षसः** सूरख्यानाः सूर्यसमानदर्शनाः सूर्यसदृशज्ञाना वा **ऋभवः संवत्सरे** संवत्सरावयवे वसन्तादिकाले **धीतिभिः** कर्मभिः ( अनुष्ठेयैरग्निष्टोमादिभिः ) **समपृच्यन्त** संयुक्ता अभवन्। हविर्भागार्हा बभूवुरित्यर्थः ॥ ४ ॥

अथास्य भाष्यम्—

**कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे। सौधन्वना ऋभवः सूरख्यानाः सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ॥**

इति। तदेतन्मन्त्रार्थेन व्याख्यातम् ॥

अथ निगमोक्तस्य सौधन्वना इत्यस्यार्थतत्त्वमाचष्टे—

**ऋभु—विभ्वा—वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः ॥**

इति। आर्भवाणां मन्त्राणां स्वभावोपप्रदर्शनार्थमाह—

**तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन ॥**

**तेषाम्** ऋभ्वादीनां मध्ये **प्रथमोत्तमाभ्याम्** ऋभुणा वाजेन च **न**। **मध्यमेन** विभ्वा, स हि आर्भवाणां मन्त्राणां स्वभावः ॥

---

१. सायणस्तु—उदन्यवे उदकेच्छवे तृष्णजे गोतमाय दिवः द्युलोकसकाशात् उत्साः उदकनिष्पन्दा यथा युष्माभिः प्रेरितास्तद्वदस्मदर्थमप्यागत्याभिमतं ददतेत्यर्थं इत्याह। तदेतद्द्वयंपक्षे ( ऐतिहासिकमतेन च ) योज्यम् ॥

१. अत्र दुर्गेण "विष्ट्वी—शमी इति द्वे अपि कर्मनामनी युतोऽजामितायै ( अपुनरुक्ततायै ) भाष्यकारः पूर्वं तावन्निराह कृत्वेति। किं कृत्वा? शमी कर्माणि। कथम्? तरणित्वेन" त्यं व्याचख्यौ। तेन विष्ट्वीति क्रियापरं वेदितव्यम्। तथा च सायणः—विष्ट्वी—यद्यप्येतत्कर्मनाम, तथाप्यत्र क्रियापरं व्याप्य कृत्वेत्यर्थं इत्याह। "विष्लृ व्याप्तौ" ( जु० उ० ) इत्यस्मात्क्विन् ( उ० ४-५४ ) तुडागमश्च बाहुलकात्ततो ङीष् ( पा० ४-१-४ ) ॥

२. वहेरतिः ( उ० २-८९ ) बाहुलकादुपधावृद्धिर्हस्य घत्वं च। वहन्ति हवींषि, ग्रन्थार्थान्वेति वाघतः ॥

३. सायणस्तु—"वाघतः ऋत्विङ्नामैतत् ( निघं० ३-१८-३ ) अत्र च सामर्थ्यात्तद्वन्तो लक्ष्यन्ते। ऋत्विग्भिरुपेता ऋभवः। शमी कर्मनामैतत्। यागदानादीनि कर्माणि अन्यान्यपि "एकं चमसं चतुरः कृणोतन" ( ऋ० सं० २-३-४ ) इत्यादिना "देवैरुक्तानि" इत्येवं व्याचख्यौ। तदेतद्भाष्यकारस्य ( यास्कस्य ) नाभिमतम्। अर्थस्तु तौल्यमेव ॥

**तदेतद् ऋभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति ॥**

तदेतद् "उच्यते" इति शेषः। ऋभो००वन्ति इति। तद्यथा-"इदं तृतीयं सवनं कपीनामृतेन ये चमसमैरयन्त" इति ॥

**आदित्यरश्मयोऽप्यृभव उच्यन्ते ॥**

**"आगोह्यस्य यदसस्तना गृहे तदुद्येदमृभवो नानुगच्छथ" ॥** ( ऋ० सं० २-३-६ )

**अगोह्य आदित्योऽगूहनीयस्तस्य यदस्वपथ गृहे यावत्तत्र भवथ न तावदिह भवथेति ॥**

उच्यन्त इति। अभिधेयव्यभिचारमुपदर्शयति। क्व पुनस्ते उच्यन्ते? तत्राह-**अगोह्यस्य०** इत्यादि। अस्य-"उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः" इत्यादिः। दीर्घतमस आर्षं जगती। अत्र ( पूर्वमन्त्रेण ) पुराणप्रसिद्धान्सुधन्वनः पुत्रान् कर्मणा देवत्वं प्राप्तवत ऋभून्स्तुत्वा वेदप्रसिद्ध्या सूर्यरश्मिरूपानृभूनिदानीं स्तौति-हे **ऋभवः** उरु प्रभूतं भासमाना, ऋतेनादित्येन भासमाना वा, ऋतेनोदकेन, उदकार्थमुत्पन्ना वा, **नरः** प्रकाशवृष्ट्युदकादेर्नेतारः यूयम् **स्वपस्यया** लोकानुग्रहप्रवृत्तया वर्षक्रियया। **उद्वत्सु** उन्नतेषु प्रदेशेषु[३] मेर्वादिषु। "उपसर्गाच्छन्दसि धात्वर्थे" इति वतिः। **तृणम्** व्रीहियवादिरूपम् **अस्मै** लोकाय ( तदुपकारार्थम् ) **अकृणोतन** अकुर्वत। "कृवि हिंसाकरणयोश्च" ( भ्वा० प० ) व्यत्ययेन तस्य तनबादेशः ( पा० ७-१-४५ ) पित्त्वाद्गुणः। प्रतिसंवत्सरं कुरुध्वे। तथाच वर्तमानेऽत्र लङ् ( पा० ३-४-६ ) संहितायां दीर्घः ( पा० ६-३-१३७ ) एवमग्रेऽपि। तथा **निवत्सु** पुनर्निम्नेषु भुवः प्रदेशेषु **अपः** उदकानि अपि अस्मा एव अकृणोतन। किंच यूयम्। **अगोह्यस्य** अगूहनीयस्यादित्यस्य **गृहे** मण्डले **यत्** यावत्कालम् **असस्तन** अस्वपथ ( सुप्तवन्तः स्थ ) रात्रौ निर्व्यापारास्तिष्ठथ। "षस् स्वप्ने" ( अ० प० ) अस्माल्लङि पूर्ववत्तस्य तनबादेशः। अदादित्वाच्छपोलुक्। **तत्** तावन्तं कालम् **अद्य** अस्मिन्नहनि **इदम्** इदानीम् **नानुगच्छथ** अनुसृत्य न गच्छथ। यावन्तं कालं सूर्ये निगूढा वर्तध्वे तावन्तमेव कालमह्न्यपि नानुगच्छथेत्यर्थः। यद्वा-अगोपनीयस्य गृहे अन्तरिक्षे यत्-यावन्तं कालमसस्तन वृष्टिमदत्त्वा स्वापमकुरुत तत्तावन्तं कालम् अद्येदानीं वर्षसमये इदं सस्याभिवर्धन-वृष्टिप्रवाहरूपं कर्म नानुगच्छथ अनुसृत्य न प्राप्नुथ। यावन्तं कालं विवर्षथ, तावन्तमेवकालं प्रवर्षथेत्यर्थः सायणोक्तः ॥ १ ॥

भाष्यकारो यास्कस्तु-**यावत्तत्र** निगूढा **भवथ** रात्रौ **न तावदिह भवथ**। ततश्च युष्मद्दिनाभावे निरालोकोऽयं लोकः संपद्यते। एतद्वो महाभाग्यमहमनुकीर्तयामि। ते यूयमिदं नामास्माकं कुरुत। **इति**-एतावदेव व्याख्यात्। इति दुर्ग आह ॥

अथ—

**अङ्गिरसो व्याख्यातास्तेषामेषा भवति ॥ ४ ॥ ( १६ )**

**अङ्गिरसः** ( ११ ) एते **व्याख्याताः** एकवचनेन "अङ्गनरेष्वङ्गिराः" ( नि० ३-१७ ) इत्यत्र ॥ ४ ॥ ( १६ )

**"विरूपास इदृषयस्त इद्गम्भीरवेपसः। ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे" ॥ ५ ॥** ( ऋ० सं० ८-२-२१ )

**विरूपास** इति। मानवस्य नाभानेदिष्ठस्यार्षमनुष्टुप्। पार्ष्टिके षष्ठेऽहनि विनियोगः। परोक्षतया ऋषिराह-**ऋषयः** अवितथस्य ब्रह्मणो ( वेदस्य ) कर्मणो वा द्रष्टारः। **विरूपास इत्** अन्योन्यं वर्णतो रूपतश्च नानारूपा भवन्ति। "आज्जसेरसुक्" ( पा० ७-१-५० ) इदिति पादपूरणः। त इत् त एवामी अङ्गिरसः। न केवलममी पश्यन्ति तदपि तु **गम्भीरवेपसः** अपि वेप इति कर्मनाम ( निघं० २-१-५ ) गम्भीरकर्माणो भवन्ति। ऋष्यनेकत्वे-कतमास्ते? **ते अङ्गिरसः सूनवः** पुत्राः खलु। तथा च गोत्रार्थस्य ऋष्यणः "अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च" ( पा० २-४-६५ ) इति बहुत्वे लुक्। तदेवाह-**ते अग्नेः परि जज्ञिरे** इति। अग्नित्वमापन्नस्याङ्गिरसोऽधि ( सकाशात् ) ये प्रादुर्भूतास्त एते विरूपा गम्भीरवेपसश्च ममेदं नाम कुर्वन्तु ॥ ५ ॥

अथास्या भाष्यम्—

**विरूपा ऋषयस्ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा। ते अङ्गिरसः पुत्रास्ते अग्नेरधि जज्ञिरे इत्यग्निजन्म ॥**

**अग्नेरधि**-अग्नेः सकाशात्। **जज्ञिरे** समभवन्। तथा च "येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्नि"ति समाम्नायते ( ऐ०

१. रश्मीनामुरुभासमानत्वं प्रसिद्धम्। तथा-आदित्यादुत्पत्तिरपि उदकार्थं वनमपि रश्मीनां धर्मकाले भूमिगतं रसमादाय पुनर्वर्षकाले प्रवर्षन्तीत्यपि प्रसिद्धमेव। "आदित्याज्जायते वृष्टिः" इति शास्त्रात् ॥

२. अप इति कर्मनाम "आपः कर्माख्यायाम्" ( उ० ४-२०६ ) इत्यसुनि ह्रस्वे चापः। ततः स्वार्थे यक् कण्ड्वादेराकृतिगणत्वात्। "अप्रत्ययात्" ( पा० ३-३-१०२ ) इत्याकारप्रत्यये टाप् इति दुर्गोऽभिप्रैति। सायणस्तु-"स्वपस्यया-शोभनकर्मेच्छया शोभनं कर्मभिः कृतमिति यजमानाः स्तुवन्ति तदिच्छयेत्यर्थं इत्येवं व्याख्यन्निच्छाक्यजन्तादप्रत्यये टापमाह ॥

३. य उन्नताः प्रदेशा मुनोऽङ्गिरनाक्रान्तास्तेषु ॥

१. अप्रमेयकर्माणोऽप्रमेयप्रज्ञा वा। अत्र वेप इति प्रज्ञानामापीति भाष्यकृदयमभिप्रैति ॥

२. अधिः-सकाशादित्यर्थेऽपि नैरुक्तसमये यथा च भाष्यमनुपदीनमेतदिति बोधनायेत्थं व्याख्यातम् ॥

ग्रा० ३-३४) इत्यग्निजन्म। अत्र जसो लुग्दृष्टव्य आर्षः। अभिजन्मान एत इत्यर्थः॥

अथ—

**पितरो व्याख्याता-स्तेषामेषा भवति॥५॥ (१७)**

**पितरः** (१२) ते पुनः व्याख्याताः एकवचनेनैव "द्यौर्मे पिता" (नि० ४-२१) इत्यत्र॥५॥(१७)

**"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु"॥१॥**

(ऋ० सं० ७-६-१७-य० वा० सं० १९-४९)

**उदीरतामिति।** यमपुत्रस्य शङ्खस्यार्षं त्रिष्टुप् पितृदैवत्या। पितृमेधे विनियोगः। ये तावत् **अवरे** निकृष्टाः **पितरः** पृथिवीमाश्रितास्ते तावत् **उदीरताम्** ऊर्ध्वं गच्छन्तु उत्तमं हविः प्राप्नुवन्तु। अथ पुनर्ये **परासः** परे द्युलोकमाश्रिता उत्तमाः। तेऽपि **उदीरताम्** तेषामप्यप्रच्युतिरस्तु। मुच्यन्तां वा तदधिकारप्रक्षये। येऽपि **मध्यमाः** मध्यस्थानाश्रयास्तेऽप्युदीरताम् उत्तमं लोकमाश्रयन्ताम्। ते हि **सोम्यासः** सोम्याः सोमार्हाः सोमसंपादिनः। तदर्हतीत्यर्थे "छन्दसि च" (पा० ५-१-६७) इति यत्प्रत्ययः। (कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं संपादयन्ति)। किंप्रकाराः? **असुं य ईयुः** प्राणमात्रमूर्तयः अस्थूलविग्रहाः। **अवृकाः** अनमित्राः परं साम्यमुपगताः **ऋतज्ञाः** यथावत्सत्यस्य वेदितारो यज्ञस्य वा। य एवमादिगुणयुक्ताः **पितरः ते नः** अस्माकम् **हवेषु** आह्वानेषु नित्यम् **अवन्तु** आगच्छन्तु। अवतिरिह गतौ (भ्वा० प०) इत्येतदाशास्महे। उदित्यनेन योग्यक्रियाया ईरतामित्यस्या उत्कपूर्वाया एवाभिसंबन्ध उभयत्र बोध्यः॥१॥

अथास्य भाष्यम्—

**उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्यासः सोमसंपादिनस्तेऽसुं ये प्राण-मन्वीयुरवृका अनमित्राः सत्यज्ञा यज्ञज्ञा वा ते न आगच्छन्तु पितरोह्वानेषु॥**

गतार्थमेतन्मन्त्रव्याख्यया॥

**माध्यमिको यम इत्याहुः॥**

नैरुक्ताः॥—

**तस्मान्माध्यमिकान्पितॄन्मन्यन्ते॥**

स हि तेषां राजेति। अत उत्तरे **"अथर्वाणः"** (१३) **"भृगवः"** (१४) इत्येते पदे समाम्नाते। नन्वेतयोः समस्तयोः प्रत्येकं वा स्तुतिरस्ति। अस्ति तु पित्रङ्गिरोभृगुभिः साधारणस्तुतिः। यतस्तद्वद्निर्वचनाय प्रसङ्क्ष्यमाणानभिप्रेत्याथर्वशब्दनिर्वचनप्रसङ्गाद्ब्रवीति॥

**अङ्गिरसो व्याख्याताः॥**

इति। येऽस्यामृचि वक्ष्यमाणायाम् ते (नि० ३-१७) व्याख्याताः।

अथ—

**पितरो व्याख्याताः (नि० ४-२१)**

**भृगवो व्याख्याताः॥**

एकवचनेनैव "भृगुर्भज्यमानो न देह" (नि० ३-१७) इत्यत्र॥

अथ—

**अथर्वाणोऽथर्व(ण)वन्तस्थर्वतिश्चरतिकर्मा। तत्प्रतिषेध-स्तेषामेषा साधारणा भवति॥६॥ (१८)**

**अथर्वाणः** कस्मात्? ते ह्येते **अथर्व(ण)वन्तः।** अथ किमिदमथर्वेति येन ते तद्वन्तः? अत आह—**थर्वतिश्चरतिकर्मा।** गच्छत्यर्थो नैरुक्तः। ततः किं? **तत्प्रतिषेधः।** पुरस्तादकारेण। तथा च—थर्वणं थर्वो गमनं तदस्त्येषामिति थर्ववन्तो न थर्ववन्त इत्यथर्ववन्तस्त एवाथर्वाणः। थर्वतेः कनिना निष्पद्यते। तथा च सति न थर्वन्तीत्यथर्वाणः। स्थिरप्रकृतयो हि ते भवन्ति। **साधारणा** अङ्गिरसःप्रभृतीनाम्॥६॥(१८)

**"अङ्गिरसो नः पितरो नवग्वा अथर्वाणो**

---

१. त्रिविधाः पितरः—उत्तमा-मध्यमा-अधमाश्चेति। तदत्र यथाविधं श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः। स्मार्तकर्ममात्रपरा मध्यमाः। अत्रापि कैश्चित्संस्कारैर्विकला अधमाः। एतदेवाभिप्रेत्य "ये अग्निदग्धा ये अनग्निदग्धा" (ऋ० सं० ७-६-१९) इत्यादिमन्त्रे समाम्नाताः तेषु अवरे इत्यर्थः॥

२. वृक इति धातुको जन्तुर्लोके। वेदेऽपि वज्रः (निघं० ३-२०-७) स्तेनश्च (निघं० ३-२४-५४) सर्वोऽप्यमित्रभूत एव प्राणिनां, तेन लक्षणयात्र तथार्थकत्वम्। न अमित्रः कश्चिदस्त्येषामिति। अमित्रशब्दश्च नञ्कर्मधारयेऽपि पुंस्यभिधीयत एव। "स्यातामित्रौ मित्रे च सहजप्राकृतावपि" इति यथा॥

१. अत्राथनवन्त इति पाठः। एवमग्रेऽपि किमिदमथनमिति प्रमादपतितः प्रतिभाति। यदि तु वर्णलोपेन तथा व्याख्यायते तदापि प्रमाद एव आम्नायवचन एव वर्णलोपादिनैरुक्तनयसिद्धो न व्याख्यायाम्। अथ चाथर्वशब्दं नञा कर्मधारयेण संसाध्य ततो मतुपा व्याख्यानमपि प्रमाद एव। "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर" इति भाष्यसिद्धान्तात्। तस्मान्नथर्वन्तीत्यथर्वाण इति व्याख्यानमेव दुर्गोक्तमन्ततो रमणीयम्॥

**भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम" ॥ १ ॥**

( ऋ० सं० ७-६-१५ य० वा० सं० १९-५० )

**अङ्गिरस** इति । विवस्वतः पुत्रस्य यमस्यार्षं त्रिष्टुप् लिङ्गोक्तदैवत्या । **अङ्गिरसः** अङ्गिरोनामकाः **अथर्वाणः** अथर्वनामकाः **भृगवः** भृगुनामकाश्च **नः** अस्माकम् **पितरः** त एते **नवग्वाः** नवगतयः ( अभिनवगमनेयुक्ताः ) सदा नूतनवत्प्रीतिजनका इत्यर्थः । नवनीतगतयो वा ( नवनीतं प्रति येषां मनसो गतिरिदमस्माकमिति ते ) नवग्वाः । विज्ञायते हि "स्वयं विलीनं पितॄणाम्" इति । सर्वं एव **सोम्यासः** सोम्याः सोमार्हाः । तदर्हतीत्यर्थे यत् ( पा० ५-१-६७ ) सोमसंपादिनः । "आज्जसेरसुक्" ( पा० ७-१-५० ) इति जसोऽसुगागमः । अस्माकं **सुमतौ** कल्याण्यां ( तत्पूजाप्रवणायां ) मतौ वर्तन्ते । **वयम्** च **तेषां यज्ञियानाम्** यज्ञसंपादिनाम् । सुमतौ कल्याण्यां मतौ उपकारप्रवृत्तायाम् **स्याम** भवेम । **अपि** च **भद्रे** भन्दनीये-स्तुत्ये **सौमनसे** कल्याणे मनसि । भाजनवति वेति भाष्यम् । येन मनसा भाजयन्ति अभिमतैरर्थैस्तोतॄंस्तस्मिन् शोभने सङ्कल्पे शोभने वा अध्यवसाये स्याम भवेम-इत्यर्थः ॥ १ ॥

अथास्या भाष्यम्—

**अङ्गिरसो नः पितरो नवगतयो नवगीतयो वाऽथर्वाणो भृगवः सोम्याः सोमसंपादिनस्तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानाम् अपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति ॥**

अवगतार्थमेतन्मन्त्रार्थेन ॥

## माध्यमिको देवगण इति नैरुक्ताः ॥

ऋभवः अङ्गिरसः भृगवः अथर्वाणः इति, स्तुत्युपपत्तेः । देवतापदमध्ये समाम्नानादेकैकश एषां **देवगण इति नैरुक्ता** निरुक्तविदो मन्यन्ते ॥

## पितर इत्याख्यानम् ॥

**आख्यानम्** इतिहासपुराणादिकम् । को विशेषः ? अन्याऽदिदेवतापदविपर्ययः । तद्धर्मदेवताप्रकार एवायम् । य एते पितरो नामत एव ऋभुसनत्कुमारादय इत्याख्यानविदः स्मरन्ति । असावपि मन्त्राणां विषय इत्युपेक्ष्यं ॥

अपि च देवगणा एते उत पितरः ? इति । कुतो विचारः ? ऋभवः अङ्गिरसः भृगव इत्येवमादीनामभिधानानामृषिषु प्रसिद्धेः ॥

## अथाप्यृषयः स्तूयन्ते ॥ ७ ॥ (१९)

**अथापि** इदमपरं कारणमृषय एवैत इति ।—यतोऽन्येऽपि ऋषयः स्तूयन्ते । तद्यथा—वासिष्ठा इति ॥ ७ ॥ ( १९ )

**"सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः । वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः" ॥ ३ ॥**

( ऋ० सं० ५-३-२३ )

**सूर्यस्येवे**ति । इन्द्रस्यार्षं त्रिष्टुप् वसिष्ठदैवत्या । **एषाम्** वसिष्ठानाम् ( वसिष्ठपुत्राणाम् ) **वक्षथः** वचनस्य **ज्योतिः** दीप्तिः **सूर्यस्येव** यथा सूर्यस्य दीप्तिरवभासिकार्थानामेवम् । अधिदेवादिगतानामर्थानामसन्देहेनावभासिका वाच्येऽर्थे । अपिच न केवलमेषामसन्दिग्धार्थानि वचांसि-गभीराणि च महार्थवन्ति । गम्भीरार्थतया दुरवगाहानि । यत आह—**समुद्रस्येव महिमा गभीर** इति । यथा उदकमपरिमेयं समुद्रे एवमपरिमेयार्थानि । सत्यपि च महार्थवत्त्वे नैते विलम्बितस्तुतयः । किं तर्हि ? **वातस्येव प्रजवः** प्रकृष्टो जव आशुप्रतिपत्तिः । तुष्टूषतां वर्णपदवाक्येषु निर्मलमनो-वाग्वृत्ती शब्दार्थावसङ्गेन प्रतिपद्येते । अपिचैवमतिमहानुभावा एते, नैतेषामन्यः स्तोता वचनपदवीमनुगन्तुं शक्तः । यतो ब्रवीमि—**नान्येन** केनचित्स्तोत्रा । हे **वसिष्ठाः** ! ( प्रत्यक्षीकृत्योत्तरेण पादेन ब्रवीति-एषः **वः** युष्माकम् **स्तोमः** इयं स्तुतिर्भावत्की असन्दिग्धार्था गभीरा अविलम्बिता च **न अन्येन अन्वेतवे** नानुगन्तुमन्येन शक्या क एनामनुकरिष्यतीति स्तुतिपरिष्टुत इन्द्रो वसिष्ठानस्तौत् ॥ ३ ॥

एवमृषयोऽपि स्तूयन्ते ( देवैः ) इति प्रदर्शनमप्यस्तीति मन्त्राणां विषय इति । अपरे पुनः **सूर्यस्येव वक्षथः** सूर्य-

---

१. अङ्गिरः पित्रथर्वभृगुलक्षणा लिङ्गोक्ता देवता अस्या इत्यर्थः ॥

२. पितृयज्ञानागन्तुं येषां प्रतिमासं नवा गतिर्भवति इति दुर्गः ॥

३. सायणस्तु—यज्ञियानां यज्ञार्हाणां तेषां सुमतौ-अनुग्रहयुक्तायां बुद्धौ वयं स्याम सर्वदा तिष्ठेम । अपिच सौमनसे भद्रे सौमनस्यकारणे कल्याणे फले स्याम सर्वदा तिष्ठेमेत्याह ॥

४. समाजयति सत्करोतीत्यर्थः ॥

१. उपेत्यनिगन्तजातमीक्ष्य आलोच्येत्यर्थः ॥

२. सायणस्तु—वसिष्ठपुत्राणामत्र स्तूयमानत्वाद्वसिष्ठ ऋषिः । त एव देवताः । या तेनोच्यत इति न्यायात् । तथाचानुक्रम्यते—"खिलस्त्वः षड्भिः संस्तवो वसिष्ठस्य सपुत्रस्येन्द्रेण वा संवाद" इति । परं यस्य वचनं स ऋषिर्यां स्तूयते सा देवतेति नियमोऽत्र व्याख्यानेऽनुसृतो द्रष्टव्यः । इन्द्रो हि वसिष्ठानस्तौति ॥

३. अत्र—"अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च" ( पा०२-४-६५ ) इत्यणो लुग्द्रष्टव्यः ॥

४. वक्षथ इति वर्णव्यत्ययेन वक्षःशब्दस्य भवति । स च उरोऽर्थे प्रसिद्ध इति "इवेन सह समासो विभक्त्यलोपश्च" ( पा० २-४-७१-वा० ) इति समस्तस्य वक्षसा बहुव्रीहिः । सस्य थो नैरुक्तः । सायणस्तु—वक्षथः प्रकाश इति व्याचख्यौ ॥

तेजःसमानदीप्तोरस एते वसिष्ठाः तेजस्विनः समुद्रोपमगम्भीरस्वभावाश्च शीघ्रगतयश्च—सर्वत्राप्रतिहतजवाः । नैतेषामन्येन गतिरनुगन्तुं शक्येति समासेन वर्णयन्ति ॥

अथ क्रमप्राप्ताः—

**आप्त्या—आप्नोतेस्तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ ८ ॥ (२०)**

**आप्त्याः** (१५) अपीन्द्रसहचारिण ऋषयः—एकत-द्वित-त्रिताः । ते इन्द्रेण सह चेरुरिति विज्ञायते । ऋभ्वादयोऽप्येतस्मादेव दर्शनादृषिपक्षे मध्यस्थानाः । ते कस्मात् ? **आप्नोतेः** । आप्नुवन्ति हि ते स्तुतिभिः स्तुत्यान् । तथाच आप्नोतेः "अघ्न्यादयश्च" (उ० ४-१०८) इति यत्प्रत्ययस्तुगागमश्च निपात्यते । इन्द्रसहचारिणो मध्यमस्थाना देवगणाः । **ऐन्द्र्याम्** इन्द्रो यस्यामृचि स्तूयते तस्याम् ॥ ८ ॥ (२०)

**"स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् । आदर्षते शवसा सप्तदानून् प्रसाक्षते प्रतिमानानि भूरि" ॥ १ ॥**

(ऋ० सं० ८-७-२)

**स्तुषेय्यमिति** । अथर्वणपुत्रस्य बृहद्दिवस्यार्षं त्रैष्टुभमैन्द्रम् । चातुर्विंशतिकेऽहनि महाव्रते निष्केवल्ये शस्यते । **स्तुषेय्यम्** स्तोतव्यम् "स्तुवः केय्यश्छन्दसि" इत्यौणादिकः स्केय्यं-प्रत्यय इति सायणः । **पुरुवर्पसम्** बहुरूपम् । "वर्प" इति रूपनाम (निघं० ३-७-३) **ऋभ्वम्** उरुभूतं बहुभासमानं वा । **इनतमम्** ईश्वरतमम् (अतिशयेनेश्वरम्) **आप्त्यानाम्** आप्तव्यानामृषीणां स्तुतिभिः, अतिशयेन **आप्त्यम्** आप्तव्यम् । एवंभूतमिन्द्रं "स्तौमीति" शेषः । य इन्द्रः **शवसा** बलेन (निघं० २-९-३) **सप्त** सप्तसंख्याकान् सर्पणशीलान्वा **दानून्** दातॄन् मेघान् दानवान्वा नमुचिप्रभृतीन् पृथक्कल्पपक्षे चैतत् । **आदर्षते** आदृणाति हिनस्ति । "दॄ विदारणे" (क्र्या० प०) अस्माल्लेटि व्यत्ययेनात्मनेपदम् । "लेटोऽडाटौ" (पा० ३-४-९४) इत्यडागमः । मध्ये "छन्दसि बहुलम्" (पा० ३-१-३४) इति सिप् । तथा **प्रतिमानानि** असुराणां प्रतिरूपाणि **भूरि** भूरीणि बहून्यपि असुरबलानि यः **प्रसाक्षते** प्रसहते । यद्वा—भूरि—बहूनि प्रतिमानानि असुराणां स्थानानि प्रसाक्षते आप्नोति अभिभवति च । "षह मर्षणे" (भ्वा० आ०) मर्षणं क्षमा अभिभवश्च । लेट्याडागमः (पा० ३-४-९४) "सिब्बहुलं" (पा० ३-१-३४) इति सिप् । ढल-कल-षलानि । छान्दसो दीर्घः । तदुक्तम्—"यैरेनं प्रतिमिमते, नैनं तानि दभ्नुवन्ती"ति । "न त्वा केता आदभ्नुवन्ति भूर्णयः" (ऋ० सं० १-४-२०-२) इति च ॥ १ ॥

अथास्या भाष्यम्—

**स्तोतव्यं बहुरूपं मरुभूत—मीश्वरतम—माप्त्य—माप्त्यानामादृणाति यः शवसा बलेन सप्त दातॄनिति वा सप्त दानवानिति वा । प्रसाक्षते प्रतिमानानि बहूनि । साक्षतिराप्नोतिकर्मा ॥ ९ ॥ (२१)**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० का०**
**एकादशाध्यायस्य द्वितीयः**
**पादः ॥ ११ ॥ २ ॥**

गतार्थमेतन्मन्त्रार्थे । **साक्षति**र्धातुरेव नैरुक्तः । स च **आप्नोतिकर्मा** आप्नोतिसमानार्थः । अभिभवतीति लब्धवशात् । अवाप्य रिपूंस्तदीयान्वा किं करोति ? तदेवेति तत्पूर्वकंकर्माभिधानमपि तेन भवतीति ॥

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० का०
एकादशाध्यायस्य द्वितीयः पादः ॥ ११ ॥ २ ॥

---

## एकादशाध्यायस्य तृतीयः पादः ।

## अथातो मध्यस्थानाः स्त्रियः ॥

बहुवचनविशिष्टस्य मध्यमस्य गणशोऽवस्थितस्य विभवो व्याख्याताः । लिङ्गविशिष्टस्येदानीं यथासमाम्नायमेव व्याख्यातव्यः । तदर्थं पुनर्विशेषतोऽधिकारवचनम् । **अथात** इति । मध्यमम् आसां स्थानमिति **मध्यमस्थाना** इति । काः पुनस्ताः ? **स्त्रिय** इति । वक्ष्यन्त इति शेषः ॥

**तासामदितिः प्रथमागामिनी भवति ॥**

**अदितिः** (१६) **प्रथ००मिनी** प्रथमा । कस्मात्पुनः सा अदितिः ? उक्तं हि—"अदीना देवमाता" (नि० ४-२२) इति । निरुक्तं चैतत्तत्रैव व्याख्यायाम् ॥ १ ॥ (२२)

**"दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवासिस । अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु" ॥ ५ ॥**

(ऋ० सं० ८-२-६)

**दक्षस्येति** । ज्ञातस्य गयस्यार्षं जगती वैश्वदेवी वैश्वदेवे शस्यते । अहोरात्रे मित्रावरुणौ तयोर्या सन्धिवेला तस्यां प्रथममवश्यायरसानुप्रदानसंबन्धात्तां मध्यमामदितिमभिप्रेत्योच्यते—**दक्षस्य वादिते** । इति । अत्र वाशब्दः किमर्थः ? यदा दक्षः

---

१. अत्र केय्यप्रत्ययः सकारश्चोपजन इति बोध्यम् । यद्यप्ययमुणादौ (शाकटायनीये) न दृश्यते तथापि बाहुलकत्वाद्गुणादेरयमुपसंगृहीतः सायणेन भवेदिति प्रतीयते ॥

१. पूर्वं तु सहधातोरेव पाणिनीयैः साधित उपन्यस्तो व्याख्यायाम् ॥

२. नैरुक्तपक्षे व्याख्याने । अदितिः पृथिवीति पक्षे तूपमार्थतया व्याख्यास्यत इति भावः । तथाच सायणः—हे अदिते पृथिवि ! दक्षस्य सूर्यस्य जन्मनि तस्मिञ्जाते व्रते तस्य यज्ञकर्मणि राजाना—राजानौ मित्रावरुणौ विवाससि । वाशब्द उपमार्थः । यथा त्वं वेदिभूता सती तौ पर्यचरः । एवमिदानीमपि अस्मद्यज्ञे कुर्विति पृथिवीमाशास्ते इति ॥

ऽऽदित्यस्त्वत्तो जातः । त्वं वा आदित्यात् । सन्धिवेलानन्तरं ह्यादित्यस्योदयोऽजनि, तदेवास्य व्रतं कर्म ( निघं० २-१-७ ) । तदुक्तं—"कर्मजन्मानः" इति । अथ तदेवं—हे **अदिते** ! प्रातस्तनि सन्ध्ये ! ( तदभिमानिदेवते ! ) त्वं **दक्षस्य** सूर्यस्य **जन्मनि** उदये सति उदिते चार्धवर्तिन्यादित्ये[2] यतो वा लब्धात्मिका त्वम् । अपि **मित्रावरुणा** मित्रावरुणौ अहोरात्रे[3] **विवाससि** परिचरसि । सर्वतो व्याप्नोषि । अर्धेनाह्व्याप्नोषि । मित्रम् । अर्धेन च रात्रिं वरुणम् । **राजानौ** सर्वलोकेश्वरौ स्वाधिकारयुक्तावितिकर्तव्यतासु, तदधीनत्वात्प्रवृत्तेरिति । अथ कोऽसौ दक्षः ? इत्युच्यते—**अतूर्तपन्थाः** योऽयमत्वरमाणपन्था आदित्यः । असौ हि प्रत्यहं प्रतिमुहूर्तं च नियतगतिरि[4]त्यत्वरमाणः पथि वर्तते **पुरुरथः** वहुरंहणः[5] । **अर्यमा**[6] अरीणां तमसां नियन्ता **सप्तहोता** "सप्तास्मै रश्मयः रसानभिसन्नमयन्ति" तदस्य सप्तहोतृत्वम् । "सप्तैनमृषय आह्वयन्ति" नमन्ति—स्तुर्वन्ति—वसिष्ठाद्यास्तद्वास्य सप्तहोतृत्वम् । **विषुरूपेषु** विषमरूपेषु ( नानारूपेषु ) **जन्मसु** कर्मसूदयेषु अन्वहमुद्यन्भवति ॥ दुर्गस्तु—अन्यस्मिंश्चान्यस्मिंश्च नभसः प्रदेशे अयमुदेति मण्डलान्तरं मण्डलान्तरं हित्वा दक्षिणोत्तरायणयोस्तदस्य विषमरूपत्वं विषमजन्मता । ततो लब्धात्मिका, तं वा जयन्ति । या त्वमेतौ मित्रावरुणौ परिचरसि, सा त्वमिदं नामास्माकं कुरुष्वेत्येतदाशास्महे इति समस्तार्थं इत्याह ॥ ५ ॥

**अथवा हे अदिते** ! देवमातः ! कश्यपवल्लभे ! **दक्षस्य** वा आदित्यस्य **जन्मनि** उत्पत्तौ यदा दक्षस्त्वत्तो जातः **व्रते** कर्मणि च प्रवृत्तः साधिकारयुक्तोऽयम् **अतूर्तपन्था०००** **जन्मसु** उदयेषु एष वर्तते भगवानादित्यः । अथ तदा—**राजानौ** मित्रावरुणौ विवासस्याशास्से ।—ममैतावपि पुत्रत्वे लोकोपकारित्वेन सम्यग्वर्तेयातां, यथैष दक्ष ( आदित्यः ) इति । विवासतिराशास्त्यर्थेऽपि पठितः । "हुविष्मा॑ आविवा॑सति" इति यथा । इत्यैतिहासिकपक्षे योजना ॥ ५ ॥

अथास्य भाष्यम्—

**दक्षस्य वाऽदिते ! जन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि । विवासतिः परिचर्यायाम्—"हुविष्मा॑ आविवा॑सती"ति । आशास्तेर्वा । अतूर्तपन्था अत्वरमाणपन्थाः । बहुरथोऽर्यमाऽऽदित्योऽरीन्नियच्छति । सप्तहोता—सप्तास्मै रश्मयो रसानभिसन्नामयन्ति । सप्तैनमृषयः स्तुवन्तीति वा । विषमरूपेषु जन्मसु कर्मसूदयेषु ॥**

**विवा००र्यायाम्** । अत्रार्थे निगमं पठति—**हवि००तीति** । ( ऋ० सं० १-१-२३-३ ) "यो अ॒ग्निं दे॒ववी॑तये हु॒विष्मा॑ँ आ॒विवा॑सति । तस्मै पावक मृळय" इतीदं मेधातिथेरार्षं गायत्रम् । गार्हपत्यानुगमने पूर्णाहुतिरनया हूयते । हे **पावक** ! अग्ने ! **देववीतये** देवभोजनाय **हविष्मान्** हविःसंप्रयुक्तो यः **अग्निं** त्वाम् **आविवासति** परिचरति **तस्मै मृळय** उपदयां कुरु रक्ष सुखय वा तम् इत्येतदाशास्महे । **आशास्तेर्वा** अर्थे विवासतिः । यस्त्वामाशास्ते परिचरितुं तस्मै इत्यस्मिन्पक्षेऽर्थः । अन्यद्गतार्थं मन्त्रव्याख्यायामेव ॥

**आदित्यो दक्ष इत्याहुरादित्यमध्ये च स्तुतः ॥**

**आहुर्दैवतासतत्त्वविदः** । केन दर्शनेन ? **आदित्यमध्ये च स्तुतः** । चो हेतौ । यस्मादसावादित्यमध्ये स्तुतोऽतः ! स्तुतिप्रामाणिका हि ते देवतासतत्त्वचिन्तां प्रति । कथमादित्यमध्ये स्तुतः ? इति चेत् "इ॒मा गिर॑" इत्युपक्रम्य—ब्रवीति—"तु॒विजा॒तो वरु॑णो॒ दक्षो॒ अंशः॑" ( ऋ० सं० २-७-६-१ ) इत्यादित्यमध्ये स्तुतेरादित्य एवासौ इति ज्ञायते ॥

अत्राक्षिपति—

**अदितिर्दाक्षायणी ॥**

**"अदि॑ते॒र्दक्षो॑ अजायत॒ दक्षा॒द्वदि॑ति॒ः परि॑"**

**इति च** ( ऋ० सं० ८-३-१-४ )

**तत्कथमुपपद्येत ?**

नन्विदं विरुध्यते—ऐतिहासिका आहुः—**अदि००यणी** इति । उभयमपि चैतस्मिन्निगमे श्रूयते आदित्यो दक्षो—दाक्षायण्यदितिरिति । तद्यथा—अदि००परि इति च । अस्य "भूजैन्न

१. "दक्षतिरुत्साहार्थे" इति स्कन्दस्वामिभाष्यम् । "दक्ष वृद्धौ शीघ्रार्थे च" ( भ्वा० प० ) "दक्ष गतिहिंसनयोः" ( चु० प० ) इति च पाणिनीयाः स्मरन्ति । ततः "पुंसि संज्ञायां घः" ( पा० ३-३-११८ ) एष चार्थोऽग्रेऽनुपदं स्फुटीभविष्यति ॥

२. ततो लब्धजन्मा ॥

३. तथाच श्रूयते—"अहर्वै मित्रो—रात्रिर्वरुणः" ( ऐ०ब्रा० ) इति । परिचरणं च तदनुप्रवेशेन । अर्धं हि सन्ध्याया रात्रिमनुप्रविशति अर्धमहरिति ॥

४. तथाचोक्तं भविष्योत्तरे आदित्यहृदये—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते ॥" इति । तथाच अतूर्तस्त्वरारहितः पन्था मार्गो यस्य स इति बहुव्रीहौ "समासान्तविधिरनित्यः" ( प० ८५ ) इति "ऋक्पूरब्धूःपथामानक्षे" ( पा० ५-४-७४ ) इत्यप्रत्ययो न भवति त्वरमाणो ह्यनियतगतिर्भवति ॥

५. तदुक्तं—"रथो रंहतेर्गतिकर्मणः" ( नि० ९-११ ) इति । प्रत्यहं मुक्तिभेदाद्बहुरंहणोऽसौ भवति ॥

६. तथाचाभिधानम्—"सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः" ( अ० को० १ कां० ) इति ॥

७. षष्ठ्यर्थे चतुर्थी ( पा० २-३-६२ वा० ) यद्वा क्रियापेक्षा चतुर्थी । भूस्थान् रसानस्मै प्रयच्छन्तीत्यर्थः । षष्ठ्यर्थे तु प्राणिभ्यः ॥

८. अत्रार्थे ह्वयतिरर्चतिकर्मा ( निघं० ३-१४-८ ) अथवा मलिम्लुचांहस्पतिसहिताः सप्तर्तवो यस्य होतारो भवन्ति तादृश इति सायणः ॥

उत्तानपदो भुव आशा अजायन्त" इति पूर्वार्धर्चम्। अदितेर्दाक्षायण्या आर्षम्। देवदैवत्यमानुष्टुभम्। उत्तानपाद् राजा कश्चिद्यः पुराणेऽपि स्मर्यते, ततस्तावद्भूर्नाम कश्चित् जज्ञे भुवः सकाशात् आशा दिशः अजायन्त। दिक्प्रजननभावमसौ कथंचिद्विभर्ति। देवताजन्मप्रतिक्रियया वा। अदितेर्दक्षः अजायत प्रादुर्बभूव। दक्षाद् उ दक्षाच्च परि- अधि सकाशादित्यर्थः। अदितिः प्रादुर्बभूव॥

तत्—इतरेतरविरुद्धम् कथमुपपद्येत? इति। अत्रोत्तरम्—

**समानजन्मानौ स्याताम् इति॥**

समानजन्मानौ समनन्तरजन्मानौ। यथोपवर्णितं मन्त्रे "दक्षस्य वादिते" ( नि० ११-२३ ) इत्यत्र॥

उत्तरान्तरमाह—

**अपि वा—देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती॥**

अथवा देवधर्मेण महदात्मना अदितिमपेक्ष्य, तस्याः कारणत्वं च कार्यत्वं च दक्षस्य। अथवा महदात्मना दक्षमपेक्ष्यादितेः कार्यत्वम् एवं कृत्वोक्तम् इतरेतरजन्मानौ इतरेतरप्रकृती इति। जन्म कार्यं प्रकृतिः कारणम्॥

अधुना व्यभिचारं दर्शयति—

**अग्निरप्यदितिरुच्यते॥**

इति॥—

**तस्यैषा भवति॥ २॥ ( २३ )**

तस्य अग्नेरदितिशब्दवाच्यत्वे एषा ऋक् भवति॥ २॥ ( २३ )

**"यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता। यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम"॥ ५॥**

( ऋ० सं० १-६-३२ )

यस्मा—इति। आङ्गिरसस्य कुत्सस्यार्षं जगती आग्नेयी। हे सुद्रविणः! शोभनधन! अदिते अखण्डनीय! अग्ने! त्वम् यस्मै यजमानाय सर्वताता सर्वासु कर्मततिषु इष्टि-पशु-सोमलक्षणासु अनागास्त्वम् अनपराधत्वम् ( अपापत्वं×पापराहित्येन कर्मार्हताम् ) ददाशः प्रयच्छसि अवैगुण्यं करोषि। "दाश् दाने" ( भ्वा० उ० ) लेट्यडागमः "बहुलं छन्दसि" ( पा० २-४-७६ ) इति शपः श्लुः। यं च यजमानं भद्रेण भजनीयेन कल्याणेन शवसा बलेन च ( निघं० २-९-३ ) स्वजात्यविरोधिना प्रजावता राधसा प्रजासंयुक्तेन धनेन च ( निघं० २-१०-१७ ) चोदयासि चोदयसि। लेट्याडागमः। संयोजयसि अनुगृह्णासि वा। ते उभयेऽपि वयमेवेह अनुग्राह्यास्ते स्याम भवेम इत्याशास्महे॥ ५॥

अथास्या भाष्यम्—

**यस्मै त्वं सुद्रविणो ददास्यनागस्त्व—मनपराधत्वमदिते! सर्वासु कर्मततिषु। आग आङ्पूर्वाद्गमे—रेन एतेः। किल्बिषं—किल्भिदं सुकृतकर्मणोभयं, कीर्तिमस्य भिनत्तीति वा। यं भद्रेण शवसा बलेन चोदयसि प्रजावता च राधसा धनेन। ते वयमिह स्यामेति॥**

आङ्पूर्वाद्गमेरसुनो बाहुलकबलेन डित्त्वाट्टिलोपे आगः अवश्यमेवैतत्फलरूपेणागच्छति कर्तारमित्याग उच्यते। "पापापराधयोरागः" इत्यमरः। सान्तं क्लीवम्। यत्पर्याय एनः तदेतद् एतेः "इण् गतौ" ( अ० प० ) इत्यस्य नसि प्रत्यये गुणः। एतदपि एवमेवावश्यमेति सान्तं क्लीबम्। "एनः पापापराधयोः" इति मेदिनी। यदेतत् किल्बिषं तत् किल्भिदं सत् भयं भवति। किमिदं किल्भिदम्? अतः प्रत्यक्षवृत्त्याह निर्ब्रवीति कीर्तिमस्य सुकृतकर्मणः पुंसः भिनत्तीति। वा शब्दोऽनास्थायाम्। तथाच किल्भिदमिति परोक्षवृत्तिः। किल्बिषमिति त्वपरोक्षवृत्तिः स परोक्षवृत्तिना, स चापि प्रत्यक्षवृत्तिनात्र निरुक्तः॥

अथ क्रमप्राप्ता—

**सरमा—सरणात्तस्या एषा भवति॥३॥ (२४)**

सरमा ( १७ ) देवशुनीत्यैतिहासिकपक्षेण, माध्यमिका वाक् नैरुक्तपक्षेण। सा हि—सरणात् गमनात्। तथा च "सृ गतौ" ( भ्वा० प० ) इत्यस्माद्बाहुलकादमप्रत्ययः ( उ० ४-८२ ) गुणे टाप्॥ ३॥ ( २४ )

**"किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः। कास्मेहितिः का परितक्म्यासीत् कथं रसाया अतरः पयांसि"॥ १॥**

( ऋ० सं० ८-६-५ )

किमिच्छन्तीति। इदं पणीनां वाक्यमिति त एवर्षि-

---

१. "द्रु गतौ" विलस्य "सुदक्षिस्यामिनन्" इतीनन्प्रत्ययेऽन्ते सकारोपजनश्छान्दसः॥

२. सर्वास्ततयो येषु यागादिषु इति बहुव्रीहौ वर्णव्यापत्त्याऽऽत्वमुभयत्रापि, "सुपां सुलुक्—" ( पा० ७-१-३९ ) इति सप्तम्या डादेशः। फलितार्थमाह—सर्वास्विति॥

१. इदमपि पर्यायप्रसक्तमेव। "पापं किल्बिषकल्मषम्" इत्यमरः॥

२. पणयो नामासुराः बलनाम्नोऽसुरस्य भटास्तैः खलु-इन्द्रपुरोहितस्य बृहस्पतेर्गोषु अपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं रसानाम्नीं नदीमुत्तीर्य बलपुरं प्राप्य गुप्तस्थाने निहितास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणयः इमं वृत्तान्तमवगच्छन्त एनां मित्रीकर्तुं संवादमकुर्वन्। यथाचैतद्भाष्यकारोऽनुपदं वक्ष्यति॥

योऽस्याः सरमा च देवता त्रिष्टुप्। पणयो नामासुरास्त आगच्छन्तीं सरमां देवशुनीं दृष्ट्वा पुरः परस्परं प्रोचुः पप्रच्छुश्चैनामनयर्चा-पूर्वार्धोत्तरार्धाभ्यां क्रमेण । इयं सरमा **किमिच्छन्ती** किमसत्तः प्रार्थयन्ती **इदम्** अस्मन्निवासस्थानम् **प्रानट्** प्राप्नोत् प्राप्तवती । आङ्पूर्वो नशिर्व्याप्तिकर्मा तस्मात् लुङि "मन्त्रे घस–" (पा० २–४–८०) इत्यादिना च्लेर्लुक् "छन्दस्यपि दृश्यते" (पा० ६–४–७३) इत्यडागमः । कदाचिदप्यनागतपूर्वेति । अपि च–अयम् **अध्वा** मार्गः **दूरे हि** देवसदनाद्विप्रकृष्टे खलु वर्तते, यतोऽसौ **पराचैः** पराञ्चनैः पराङ्मुखैरञ्चनैः (गमनैः) **"अचितः"** गत इति शेषः । अतोऽयं **जगुरिः** उद्गूर्णः महता प्रयत्नेनापि गन्तुमशक्य इत्यर्थः । "गॄ निगरणे" (तु० प०) "आदृगमहन–" (पा० ३–२–१७१) इत्यादिना किन्प्रत्ययो लिड्वद्भावाद्द्वित्वम् "बहुलं छन्दसि" (पा० ७–१–१०३) इत्युत्वं रपरत्वं च । यद्वा–पराचैः पराञ्चनैर्गतिविशेषैर्जगुरिः भृशं गन्त्रीयम् पार्ष्णिभागमनालोकमाना सतीदं स्थानं प्राप्नोति । दूरे खल्वयमध्वा यदृच्छयाऽऽगन्तुं न शक्यतेऽतो वयमेतां पृच्छामः ।–हे सरमे ! **का** कीदृशी **अस्मे** अस्मासु "सुपां सुलुक्" (पा० ७–१–३९) इति शेआदेशः सुपः । **हितिः** अर्थानां (प्रयोजनानां) ते निहितिः (निधानम्) **आसीत्** । कोऽस्मासु त्वदपेक्षितार्थोऽभिहितः । यद्वाऽस्मासु कोऽर्थो गतः । दधातेः क्तिनि हिः (पा० ७–४–४२) हिनोतेर्वा गत्यर्थस्य क्तिनि हितिः । येनायमतिमहानध्वा व्यवसित आगन्तुम् । अपिचागच्छन्त्यास्तव **का** कीदृशी **परितक्म्या** रात्रिरासीत् । अपि नाम सुखा रात्रिरनन्तरा त आसीत् ? यद्वा–तकतिर्गत्यर्थः (निघं० २–१४–६८) परितकनं परितक्म्या परितो गमनं भ्रमणं वा कीदृशमासीत् ? **कथं** वा **रसायाः** शब्दायमानायास्तन्नाम्नद्या अर्ध्यर्धयोजनविस्तारायाः **पयांसि** उदकान्यतिदुस्तराणि **अतरः** ? तीर्णवत्यसि ? इति वद ॥ १ ॥

अथास्या भाष्यम्—

**किमिच्छन्ती सरमेदं प्रानट् दूरे ह्यध्वा जगुरिर्जङ्गम्यतेः । पराञ्चनैरचितः । का ते अस्मास्वर्थहितिरासीत् । किं परितकनम् । परितक्म्या रात्रिः परित एनां तक्म्य । तक्मेत्युष्णनाम तकत इति सतः । "कथं रसाया अतरः पयांसी" ति । रसा–नदी । रसतेः शब्दकर्मणः । कथंरसानि तान्युदकानीति वा ॥**

**परितक्म्येति** । परिपूर्वात्तकतेर्गतिकर्मणो मनिन् । परितक्मा सती परिक्म्या रात्रिः । परितः सर्वतो गच्छति । सर्वस्मिन्देशे रात्रिरस्ति । अत्र यकारोपजनश्छान्दसः । यद्वा **परित एनां तक्म** । अत्र–"अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" (पा० १–४–४८ वा०) इति द्वितीया । अथ किमिदं तक्मेति ? तत्राह–**तक्मेत्युष्णनाम**, कथम् ? **तकत इति सतः** । सत इति कर्तृकारकाभिधानं तकतेर्गत्यर्थस्य मनिनि तक्म । तकत इति पदव्यत्यय आर्षः । तकतीत्येवं नैघण्टुकपाठदर्शनात् । तथा च परित उभयतस्तक्मोष्णं यस्याः सा परितक्मा, यकारोपजने च परितक्म्येति । यद्वा तकत इति तक्मनी उष्णभूते दिने पूर्वोत्तरे त एनां परिगृह्य वर्तेते इत्यसौ रात्रिः परितक्मा सैव परितक्म्या । यकारश्चोपजनः । **शब्दकर्मणः** "रस शब्दे" (भ्वा० प०) इत्यस्मात्पचाद्यचि टाप् । रसतीति **रसा नदी** । अथ वा **कथंरसानि तान्युदकानि** । अत्र दुर्गः–अपि नाम स्वादूनि ? अपि श्रान्तायास्त्वान्तरावासाः केष्वासन्नित्येवं व्याचष्ट । तथा च कथमिति पृच्छाविषया रसा येषां तानि कथंरसानि तानि तन्नदीप्रभवाणि उदकानि भवन्तीति व्याख्याभङ्ग्या कथंरसा नाम नदी भवति ॥

अथ मन्त्रार्थाभिव्यक्तये निदानं प्रख्यापयति—

**देवशुनीन्द्रेण प्रहिता । पणिभिरसुरैः समूद इत्याख्यानम् ॥**

**समूदे** संवादं कृतवती । अत्र "भासनोपसंभाषा०" (पा० १–३–४७) इत्यादिना वदेरात्मनेपदम् । **इत्याख्यानं** तद्विदो मन्यन्ते ॥

वाक्पक्षे तु—चिरकालिकवृष्ट्युपरमे कदाचिदभिनवमेघसंप्लवे सहसैव स्तनयित्नुमुपश्रुत्य कुत इयं माध्यमिका वाक् चिरेणागतेति विस्मितस्तामसूयन्निव ब्रवीति—"किमिच्छन्ती सरमा" इति । इदमसच्छ्रोत्रं चिरमनागम्य **सरमा** मध्यमावाक् **किमिच्छन्ती प्रानट्** प्राप्तवती ? अपि च **दूरे हि अध्वा** चिरकालश्रुतेयमस्माभिः । **जगुरिः** भृशं यो गन्ता स्यात्स चिरविच्छिन्नमेतद्वर्षवर्त्म पुनरागच्छेत्सन्तनुयात् । **पराचैः** पराङ्मुखैः—एतदचिन्त्यं चिरनष्टमित्यर्थः । अपि च **कास्मे हितिः** किमस्माकमर्थाभिधानमासीत् पूर्वं तव हे सरमे ! येनागमः, किं वा न जातं येनापुनरागमः । अपि च चिरयोषितायास्तव किं परितकनमासीत् ? अन्तरिक्षनद्या अपि महत्याः **रसायाः कथमतरः पयांसि** कथमतिबह्वून्युदकानि संक्षोभ्यमाणानि प्रतिलब्धवत्यसि ? इति वा "वाग्वै सरमा" इति हि विज्ञायते ॥

१. यो ह्यतिदूरो भवति पन्थास्तत्र गन्ता गच्छन्नुद्विजमानः पराङ्मुखो भवति प्रतिनिवर्तितुमीहते । स्ववशश्चेन्निवर्तते परवशस्तु गच्छत्येव तमभिप्रेत्येत्थं भाष्यकारेण व्याख्यातम् ॥

२. एतत्पक्षे जगुरिर्जङ्गम्यतेर्निपातः पृषोदरादित्वाद्बोध्यः । सरमाविशेषणमेतत् ॥

३. एतन्निर्वचनं भाष्यकारेणैव कृतमिति स्फुटमनुपदम् ॥

४. सार्धयोजनविस्तारायाः । एतच्च दुर्गव्याख्यानम् । सायणस्तु–योजनशतविस्तीर्णाया अन्तरिक्षनद्या इत्याह । भाष्यकारस्तु–कथं रसेत्येवमपि नद्या नाम निर्दिदेशेत्युपरिष्टाद्व्यक्तीभविष्यति ॥

अथ क्रमप्राप्ता—

**सरस्वती व्याख्याता। तस्या एषा भवति ॥ ४ ॥ ( २५ )**

**सरस्वती** ( १८ ) सा च व्याख्याता "नदीवत्" ( नि० २–२३ ) इति। "तद्देवतावत्" ( नि० २–२३ ) इत्युक्तमिदं तत् ॥ ४ ॥ ( २५ )

**"पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः" ॥ ४ ॥**

( ऋ० सं० १-१-६-य० वा० सं० २०-८४ )

**पावकेति**। मधुच्छन्दस आर्षं गायत्रम्। प्रउगे विनियोगः सारस्वते च हविषि। **पावका** पवनं पावः शुद्धिस्तं कायतीति "आतोऽनुपसर्गे कः" ( पा० ३-२-३ ) इति कः। "कै गै शब्दे" ( भ्वा० प० ) प्रक्षारयन्त्युदकेनेति दुर्गः। **वाजिनीवती** अन्नवत्क्रियावती। अन्नेन हविषोदकेन वा तद्वतीति दुर्गः। **धियावसुः** कर्मधना ( कर्मप्राप्यधननिमित्तभूता ) एवंभूता **सरस्वती** माध्यमिका वाक्। **नः** अस्माकमेतम् **यज्ञम् वाजेभिः** हविर्लक्षणैरन्नैर्निमित्तभूतैः। यद्वा—यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैर्युक्तं **वष्टु** कामयताम् "वश कान्तौ" ( अ० प० ) लोट्। कामयित्वा च निर्वहतु इत्यर्थः। अथवा ऋगादिभावमापन्ना देवान्प्रति तानि वहतु। वक्ष्यति हि—"तां विश्वरूपाः पशवो वदन्ति" इति ( ११-१९-१ ) आरण्यकेऽपि ( अरण्यकाण्डे ) श्रुत्यैवैतद्व्याख्यातम् "यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाह" इति ॥ ४ ॥

अथास्या भाष्यम्—

**पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धिया वसुः। कर्मवसुः। तस्या एषाऽपरा भवति ॥ ५ ॥ ( २६ )**

अपरा स्फुटतरोदकलिङ्गा ॥ ५ ॥ ( २६ )

**"महो अर्णः सरस्वती प्र चेतयति केतुना। धियो विश्वा वि राजति" ॥ ६ ॥**

( ऋ० सं० १-१-६ )

**मह** इति। पूर्ववदार्षादि। **सरस्वती** माध्यमिका वाक्। **महः** महत्। तकारस्य सकारो व्यत्ययेन। तस्य रुत्वोत्वगुणाः। "प्रकृत्यान्तःपादमव्यपरे" ( पा० ६-१-११५ ) इति पूर्वरूपाभावः। **अर्णः** उदकम्। "उदके नुट् च" ( उ० ४-१८६ ) इत्यसुन्प्रत्ययान्तो नुडागमश्च। **प्रचेतयति** प्रज्ञापयति। आविष्करोति वर्षभावेन। केन? इत्याह—**केतुना** स्वेन कर्मणा प्रज्ञया वा ( निघं० ३-९-२ ) नद्यप्रज्ञानवत्त्वबलिष्ठा चैतच्छक्ता कर्तुम्। एवं चोदकमाविष्कुर्वती स्वकीयेन देवतारूपेण **विश्वा धियः** इमानि सर्वाण्यनुष्ठातृप्रज्ञानानि **अभि विराजति** विशेषेण दीपयति। अनुष्ठानविषया बुद्धीः सर्वदोत्पादयतीत्यर्थः। कथम्? उदकाद्यन्नमन्नात्प्रज्ञानमित्येवं सर्वप्रज्ञानानामसावीष्ट इति ॥ ६ ॥

अथास्या भाष्यम्—

**महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभि विराजति ॥**

गतार्थमेतत्। अथ—

**वागर्थेषु विधीयते ॥**

इत्युत्पत्तिवचनम्। के पुनर्वाचोऽर्थाः "चतस्र ऊर्जं दुदुहे पयांसि" ( ऋ० सं० ६-७-५ ) इत्येवमाद्याः उदकाधिकारलक्षणाः। तेष्वियमपि सरस्वती विधीयते "महो अर्णः" इत्येवमादिषु ॥

**तस्मान्माध्यमिकां वाचं मन्यन्ते ॥**

नैरुक्ताः ॥

अथ क्रमप्राप्ता—

**वाग् व्याख्याता। तस्या एषा भवति ॥ ६ ॥ ( २७ )**

**वाक्** ( १९ ) वक्तव्या। सा पुनः व्याख्याता "वचेः" इति ( नि० २-२३ ) ॥ ६ ॥ ( २७ )

**"यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा। चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम" ॥ ४ ॥**

( ऋ० सं० ६-७-५ )

**यद्वागिति**। भृगुगोत्रस्य नेमस्यार्षं त्रैष्टुभं वाग्दैवत्यम्। सारस्वते पशौ विनियोगः। **यद्** यदा **वाग्** माध्यमिका **अविचेतनानि** अविज्ञातार्थानि शब्दरूपाणि स्तनयित्नुलक्षणानि **वदन्ती** निर्वचयन्ती **राष्ट्री** ईश्वरा, माध्यमिकानां देवतानाम् **मन्द्रा** मन्दना हर्षकरी, तर्पयित्री वा लोकस्य **निषसाद** निषीदति। वर्तमाने लिट् ( पा० ३-४-६ ) व्याप्नोत्यात्मानं वर्षकर्मणि। अथ तदा **चतस्रः** दिशः ( उपदिशश्च )

---

१. वाजोऽन्नमास्विति वाजिन्यः क्रियाः। मत्वर्थे इनिः ( पा० ५-२-११५ ) ता विद्यन्तेऽस्यामिति मतुप्। भाष्यकारस्त्वन्नैरन्नवतीत्यभेदे तृतीयामाह। धान्येन धनवानितिवत्। परं सति सामान्यविशेषभावेऽभेदः। नहि नीलो घट इतिवद् घटोघट इति भवति। अत एव दुर्गः—अन्नेन हविषोदकेन वा तद्वतीत्याह ॥

२. तथा चारण्यकाण्डे श्रुत्या व्याख्यातम्—"यज्ञं वष्टु धिया वस्विति वाग्वै धिया वस्वि"ति ॥

१. प्रज्ञापयन्तीति सायणः ॥

२. उपलक्षणविधयैतद्दुर्ग आह। भाष्ये तु न दृश्यते ॥

**ऊर्जम्** अन्नं तत्कारणभूतानि **पयांसि** उदकानि च **दुदुहे** दुग्धे प्रक्षरति । वर्तमाने लिट् (पा० ३-४-६) एवमग्रेऽपि । **अस्याः** माध्यमिकाया वाचः स्वभूतं यत् **परमम्** श्रेष्ठं तत् **क्वस्वित्** क्व पुनः **जगाम** गच्छतीति न दृश्यत इत्यर्थः । दुर्गस्तु-क्वैतानि निष्पाद्यौषधीर्गच्छन्ति? कुतो वा प्रतिसंवत्सरं पुनरागच्छन्तीति? कस्तत्त्वं **जगाम** जजान । गत्यर्थानां ज्ञानार्थत्वाद्धन्तिर्ज्ञाने । उद्ध इति यथा । उद्धन्यते उत्कृष्टो-ज्ञायत इति तदर्थः । यानि पृथिव्यामवतिष्ठन्ते यानि चादित्यरश्मयो हरन्तीति । एवमनुपक्षीणपयस्कैयमिति श्रूयत इत्याह ॥ ४ ॥

तथा चास्या भाष्यम्—

**यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना । चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि । "क्वस्विदस्याः परमं जगामे" ति । यत्पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा ॥**

इति । "स्वित् प्रश्ने च वितर्के च (पूजार्थे) पठ्यतेऽव्ययम्" । **जगामेति** गच्छतिर्ज्ञानार्थेऽपि बाहुल्येन प्रयुज्यते । अवगतिरिति यथा ॥

**तस्या एषाऽपरा भवति ॥ ७ ॥ ( २८ )**

अपरा पुनः किमर्थम्? इयमेव वाक्सर्वप्राण्यन्तर्गता माध्यमिकी सर्वार्थाभिवादिनी भवतीति विभूत्युपप्रदर्शनार्थम् ॥ ७ ॥ ( २८ )

**"देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु" ॥ ६ ॥**

( ऋ० सं० ६-७-५ )

**देवीमिति** । तदेवार्षादि । एषा माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माभिवादिनी भवतीति विभूतिमुपदर्शयति-**यां देवीं** द्योतमानां, दात्रीं वोदकानाम् **वाचम्** माध्यमिकाम् **देवाः** माध्यमिका **अजनयन्त** जनयन्ति । वर्तमाने लङ् ( पा० ३-४-६ ) **ताम्** एवैतां यथाभिमतार्थाभिधायिकाम् **विश्वरूपाः** सर्वरूपाः **पशवः** तिर्यञ्चोऽपि **वदन्ति** । तत्पूर्वकत्वाद्वाक्प्रवृत्तेः । यैवं सर्वैः पशुपक्षिभिरप्युच्यते **सा** उक्तरूपा **मन्द्रा** मदना स्तुत्या हर्षकरी वा वृष्टिप्रदानेन **नः** अस्मभ्यम् **इषम्** अन्नम् **ऊर्जम्** पयोघृतादिरूपं रसं च **दुहाना** प्रक्षरन्ती **धेनुः** धेनुभूता तर्पयित्री वा **वाक् सुष्टुता** सुष्ठु स्तुता अस्माभिः **अस्मानुपैतु** उपगच्छतु । वर्षणायोद्युक्ता भवत्वित्यर्थः ॥ ५ ॥

अथास्या भाष्यम्—

**देवीं वाचमजनयन्त देवास्तां सर्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च । सा नो मदनाऽन्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता ॥**

**व्यक्तवाचः** मनुष्याद्याः । **अव्यक्तवाचो** गवादयः । गतार्थमेतत् ॥

अथ-युगपच्चारिण्यावर्थतो निर्विवक्ष्यंस्तद्विषये वैमत्यं तावदुपन्यस्यति—

**अनुमतीकरोति देवपत्न्याविति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः । "या पूर्वा पौर्णमासी साऽनुमति,-र्योत्तरा सा राके" ति विज्ञायते ॥**

**अनुमतिः ( २० ) राका ( २१ )** इति । एते **देवपत्न्यौ** । तन्नामनी **इति निरुक्ता** निरुक्तविदो मन्यन्ते । सहपदयोरुपन्यासतस्त्वल्योऽनयोरभिधेयविचार इति । मध्यस्थाने देवपत्न्यौ इति निर्ज्ञाते तदभिधाने इति नैरुक्ताः प्राहुरित्यर्थः । **पौर्ण००ज्ञिकाः** । यज्ञविदः प्राहुः । ते च ब्राह्मणमुदाहरन्ति "यापू००राका" इति । कालाधिदैवते चन्द्रसहचारिण्यौ इति मध्यमस्थाने । पौर्णमास्यमावास्ययोर्नक्षत्रेष्टकामध्य उपाधानान्नक्षत्रमतश्च प्रदर्शनात्सर्वं एवायं ज्योतिर्गणो ग्रहनक्षत्रतारकारूपो रसप्रायो मूर्तिमाप्नुवन्मध्यमस्थान एवेति लक्ष्यते ॥ तत्र-

**अनुमतिरनुमननात् । तस्या एषा भवति ॥ ८ ॥ ( २९ )**

**अनुमतिः** ( २० ) कस्मात्? **अनुमननात्** । अनुमता किलेयमृषिभिर्देवैश्च चतुर्दशीके पक्षे अस्त्वियं पौर्णमासीति । तथा चानुपूर्वान्मन्यतेर्बाहुलकात्कर्तरि क्तिनि नलोपः ( पा० ६-४-१५ ) अनुमन्यते यदनुमन्तव्यमित्यनुमतिरुच्यते ॥ ८ ॥ ( २९ )

**"अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः" ॥ ८ ॥**

( य० वा० सं० ३४-८ )

**अन्विदमिति** । वामदेवस्यार्षं देविकासु विनियोगः । **हे अनुमते** ! कलाहीनचन्द्रे पौर्णमासि ! **त्वम् अनुमन्यासै** । "लेटोऽडाटौ" ( पा० ३-४-९४ ) इत्यादि । "वैतोऽन्यत्र" ( पा० ३-४-९६ ) इति ऐकारः । अस्माकं यदनुमन्तव्यं

१. तथा च निरुक्तमेतदधस्तात् ( नि० ३-८ )

२. तथा चोक्तं हरिणा-"दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिः" इत्यादि ॥

३. "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" ( भ्वा० आ० ) पठ्यते । ततो रक्प्रत्ययः ॥

१. तथा चामरः-"पौर्णमासी तु पूर्णिमा । कलाहीने सानुमतिः पूर्णे राका निशाकरे" इति ॥

त्वया । अस्मदुक्तं बुध्यस्वेति महीधरः । **शं च** सुखं च **नः** अस्माकम् **कृधि** कुरु । "श्रुशृणुपृकृविभ्यश्छन्दसि" ( पा० ६-४-१०२ ) इति हेर्धिः । "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुक् । "कः करत्करतिकृधिकृतेष्वनदितेः" ( पा० ८-३-५० ) इति विसर्गस्य सः । **क्रत्वे** क्रतवे संकल्पाय **दक्षाय** तत्समृद्धये संकल्पसिद्धये च **नः** अस्मान् **हिनु** गमय । **नः** अस्माकम् **आयूंषि** च **प्रतारिषः** प्रकीर्णानि कुरु प्रवर्धय । इत्येतदाशास्महे ॥ ८ ॥

अथ—

**राका—रातेर्दानकर्मणः । तस्या एषा भवति ॥ ९ ॥ ( ३० )**

**राका** ( २१ ) सा हि **रातेः दानकर्मणः** दानार्थस्य । हविर्दाननिमित्तं हि सा भवति । सैव पौर्णमासी पञ्चदशके पक्षे राका इत्युच्यते । राति ददात्यस्मिन्हविरमात्विलिक् । "कृदाधारार्चिकलिभ्यः कः" ( उ० ३-१०० ) इति कः । बाहुलकान्न कस्येत्संज्ञा ॥ ९ ॥ ( ३० )

**"राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम्" ॥ ४ ॥** ( ऋ० सं० २-३-१० )

**राकामिति** । गृत्समदस्यार्षं जगती राकादैवत्या । देविकासु विनियोगः । **अहम्** होता **सुहवाम्** सुह्वानाम् ( शोभनमाह्वानं यस्यास्ता—माह्वानप्रयोजनकारिणीम् ) **राकाम्** संपूर्णचन्द्रां पौर्णमासीम् ( तदभिमानिदेवताम् ) **सुष्टुती** शोभनया स्तुत्या । "सुपां सुलुक्पूर्वसवर्णाः—" ( पा० ७-१-३९ ) इत्यादिना पूर्वसवर्णदीर्घः । **हुवे** ह्वये आह्वयामि । "बहुलं छन्दसि" ( पा० ६-१-३४ ) इति ह्वेञः संप्रसारणं पूर्वरूपत्वं शपो लुक्च ( पा० २-४-७३ ) बाहुलकादेव । सा च पुनः **सुभगा** सुधना अस्माभिराहूयमाना **शृणोतु** । श्रुत्वा च **त्मना** आत्मना । "मन्त्रेष्वाङ्यादेरात्मनः" ( पा० ६-४-१४१ ) इत्याकारलोपः । स्वयमेव **बोधतु** बुध्यताम् अस्मदभिप्रायम् । बुध्वा च **अपः** प्रजननः कर्म ( निघं० २-१-१ ) ( पुत्रोत्पादनलक्षणम् ) अस्माकम् । **सूच्या** सूचीस्थानीयया **अच्छिद्यमानया** अविच्छिन्नया अनुग्रहबुद्ध्या । अविच्छिन्नेन प्रजासंतानेनेति यावत् । **सीव्यतु** संतनोतु । यथा वस्त्रादिकं सूच्या स्यूतं चिरं तिष्ठति एवमिदं करोतु । न च पुनः प्रजामात्रमर्थयामहे किं तर्हि **शतदायम्** बहुप्रदं बहुधनं वा **उक्थ्यम्** उक्थार्हम् । "छन्दसि च" ( पा० ५-१-६७ ) इति तदर्हतीत्यर्थे यत् । उक्थशब्दः स्तुतिपर्यायः । वचेस्थकि ( उ० २-६ ) संप्रसारणे च साधितः । वक्तव्यप्रशंसम् अपरिसमाप्तस्तुतिमिति यावत् । तादृशं **वीरम्** विक्रान्तं पुत्रम् **ददातु** प्रयच्छतु ॥ ४ ॥

अथास्या भाष्यम्—

**राकामहं सुह्वानां सुष्टुत्याह्वये, शृणोतु नः सुभगा बोधत्वात्मना, सीव्यत्वपः—प्रजननकर्म, सूच्याच्छिद्यमानया, सूची सीव्यतेः । ददातु वीरं शतदायमुक्थ्यम् । वक्तव्यप्रशंसम् ॥**

**सीव्यतेः** "षिवु तन्तुसन्ताने" ( दि० प० ) अस्माच्चटि "सिवेष्टेरू च" ( उ० ४-९२ ) इति टेरूभावे टित्त्वान्ङीप् । ( पा० ४-१-१५ ) अवगतार्थमन्यन्मन्त्रार्थे ॥

अथैवम्—

**सिनीवाली—कुहूरिति—देवपत्न्याविति नैरुक्ताः । अमावास्ये इति याज्ञिकाः । "या पूर्वामावास्या सा सिनीवाली । योत्तरा सा कुहू"रिति विज्ञायते ॥**

अनयोरपि पूर्ववदुपन्यासः । अत्र **याज्ञिका** ब्राह्मणमपि चोदाहरन्ति । **या पूर्वे**त्यादि । **पूर्वा**—दृष्टेन्दुः । **उत्तरा** नष्टेन्दुकला ॥

तत्र—

**सिनीवाली—सिनमन्नं भवति, सिनाति भूतानि । वालं—पर्व,—वृणोतेस्तस्मिन्नन्नवती । वालिनी वा । वालेनेवास्यामणुत्वाच्चन्द्रमसः से (वि)तव्यो भवतीति वा । तस्या एषा भवति ॥ १० ॥ ( ३१ )**

**सिनीवाली** (२२) कस्मात् ? इति पदश एनां निर्वक्ति—**सिनमन्नं भवति** । तत्कस्मात् ? **सिनाति** बध्नाति । "षिञ्

---

१. "जसादिषु छन्दसि वा वचनम्" ( पा० ७-३-९७ वा० ) इति गुणाभावे यण् । अत्र भाष्यकृता ( यास्केन ) यथा तृतीयपादोऽनूदितस्तथा तेषां मतेऽन्यः पाठः प्रतिभाति । यथा च वक्ष्यते ॥

२. अस्य "उपसर्गाद्बहुलम्" ( पा० ८-४-२८ ) इति णत्वम् ॥

३. लिङर्थे लेटि ( पा० ३-४-७ ) सिपि "लेटोऽडाटौ" ( पा० ३-४-९४) इत्याडागमः । "सिब्बहुलं णिद्वक्तव्यः" इति णित्वाद्वृद्धिः । सिप इट् । लेटस्तिङ इतो लोपः ( पा० ३-४-९७ )॥

१. अनुमतिः— राकावत् । यथोक्तमधस्तात् ॥ ( १ )

२. तथा चामरः—"सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः" इति । सा—अमावास्या । अयमर्थः—चतुर्दश्या अन्तिमः प्रहरः अमावास्याया अष्टौ प्रहराश्चेति नवप्रहरात्मकश्चन्द्रक्षयकालः शास्त्रसिद्धः । तत्राद्यप्रहरद्वये चन्द्रस्य सूक्ष्मता । अन्तिमप्रहरद्वये कृत्स्नक्षयः । अतोऽमावास्याया आद्यप्रहरः सिनीवालीसंज्ञः । अन्तिमं प्रहरद्वयं कुहूसंज्ञम् । मध्यमं प्रहरपञ्चकं दर्शसंज्ञमिति ॥

बन्धने" (क्र्या० प० ) ततो नक्प्रत्ययः ( उ० ३-२ ) ( निघं० २-७-८ ) **भूतानि** प्राणिनः । सदादिभिः धातुभिः ततो मत्वर्थे "छन्दसीवनिपौ च" ( पा० ५-२-१२२ वा० ) इति ईप्रत्ययेऽल्लोपे ( पा० ६-४-१४८ ) सिनीशब्दः । चन्द्रसद्भावे हि तद्रश्मिसंबन्धादन्नानां गर्भसंभव उक्तः कृषिविद्यायां, स च विशेषतोऽस्यामित्यनेन ( व्याख्यानेन ) प्रतीयते । अथवा-लीशब्दे प्रकृतिभूतं निर्वक्ति-**वालं-पर्व** उत्सवतिथिः सन्धिसमयो वा, तथा च हैमः-"पर्व-प्रस्तारोत्सवयोर्ग्रन्थौ विषुवदादिषु । दर्शप्रतिपत्सन्धौ च तिथिग्रन्थविशेषयोः" इति । "तिथिभेदे क्षणे पर्व" इत्यमरोऽपि । तत्कस्मात्? **वृणोतेः** वृण्वन्ति ( स्वीकुर्वन्ति ) देवास्तत्र हवींषि । "वृञ् वरणे" ( स्वा० उ० ) अस्माद्वनिपि ( उ० ४-९१ ) बाहुलकाद्धस्य पः गुणः । **तस्मिन्** वाले पर्वणि असौ सिनी ( सिनिनी ) **अन्नवती** भवतीति सिनीवाली । तथाच वाले सिनीति समासे ( पा० २-१-४ ) राजदन्तादित्वात् ( पा० २-२-३१ ) सिनीशब्दस्य पूर्वप्रयोगे गौरादेः ( पा० ४-१-४१ ) आकृतिगणत्वान्ङीष् । अथ **वा, बालिनी** बाली, पूर्ववदीमत्वर्थे वालैस्तद्वती । वाला ह्यस्यां समन्वेष्यन्तश्चन्द्रमसं सर्वत उपलभ्यन्ते प्रायेणेति तत्संबन्धोऽस्याम् । सिनी चासौ वाली चेति सिनीवाली । अनुक्तपुंस्कत्वात्सिनीशब्दस्य कर्मधारयेऽपि पुंवद्भावा-( पा० ६-३-४२ ) भावः । अथ **वा** औपमिकं नाम, कथम्? इत्याह—**बालेनेत्यादि** । केशेनेवातिसूक्ष्मेण शङ्कुना **सेवितव्यो व्येद्धव्यो भवति** । एवमणुरसौ चन्द्रमा भवत्यस्यां, येन ज्ञायते वालेनेवातिसूक्ष्मेण शङ्कुनाप्ययं सीव्येत ( विध्येत ) इति । तथा च वालेनेव सीव्यत इति सिनीवाली पृषोदरादिः ॥ १ ॥ ( ३१ )

"सि॒नी॑वालि॒ पृथु॑ष्टुके॒ या दे॒वाना॒मसि॒ स्वसा॑ । जु॒षस्व॑ ह॒व्यमाहु॑तं प्र॒जां दे॑वि दिदिड्ढि नः" ॥ ६ ॥

( ऋ० सं० २-७-१५-य० वा० सं० ३४-१०-अथ० सं० ७-१०-२ )

**सिनीवालीति** । गृत्समदस्यार्षमनुष्टुप् सिनीवालीदेवत्या । देविकासु विनियोगः । दृष्टचन्द्राऽमावास्या सिनीवाली । हे **सिनीवालि** ! तदभिमानिदेवते ! **पृथुष्टुके** विस्तीर्णजघने । पृथुकेशस्तुके । विस्तीर्णकेशकलापे वा **या** त्वम् **देवानाम्** माध्यमिकानाम् **स्वसा** स्वयंसंचारिणी भगिनी वा **असि** भवसि । सा त्वम् **आहुतम्** आभिमुख्येनाग्नौ प्रक्षिप्तं, मर्यादया ( विधानतो ) हुतं वास्माभिः—**हव्यम्** अस्मदीयं हविः **जुषस्व** आसेवस्व । आसेव्य च हे **देवि** ! सिनीवालि ! **नः** अस्माकम् **प्रजाम्** पुत्रादिकाम् **दिदिड्ढि** दिश अतिसृज ( देहि ) उपचिनु वा इत्याशास्महे । "दिह उपचये" ( अ० उ० ) लोटि छान्दसः शपः श्लुः । "दिश अतिसर्जने" ( तु० उ० ) इत्यस्माद्वा ॥ ६ ॥

अथास्या भाष्यम्—

**सिनीवालि ! पृथुजघने ! स्तुकः स्त्यायतेः संघातः । पृथुकेशस्तुके पृथुष्टुके वा । या त्वं दे॒वाना॒मसि॒ स्वसा॑ । स्वसा सु—असा स्वेषु सीदतीति वा । जुषस्व हव्यमदनं प्रजां च देवि दिश नः ॥**

**पृथुजघने** इति पृथुष्टुके इत्यस्यार्थः । तत्र **स्तुकः** । **स्त्यायतेः** । "स्त्यै ष्ट्यै शब्दसंघातयोः" ( भ्वा० प० ) इति धातोर्डुकप्रत्यये टिलोपः । तथा च **संघात** इत्यर्थः । **पृथु-०के वा** । अत्र शाकपार्थिवादित्वात् ( पा० २-१-६० वा० ) केशपदलोपः । "पूर्वपदात्-" ( पा० ८-३-१०६ ) इति षत्वम् । **सु-असा** सुखे न्यस्यते क्षिप्यते परेभ्योऽवरेभ्योऽर्प्यते वा । अथ **वा स्वेषु** पित्रादिस्वजनवर्गेषु तदधीना या **सीदतीति स्वसा** । सीदतेर्ड्रन् डित्त्वाट्टिलोपः ॥

अथ—

**कुहूः गूहतेः । क्वाभूदिति वा । क्व सती हूयत इति वा । क्वाहुतं हविर्जुहोतीति वा । तस्या एषा भवति ॥ ११ ॥ ( ३२ )**

**कुहूः** ( २३ ) सा हि **गूहतेः** । "गुहू संवरणे" ( भ्वा० उ० ) इति धातोः क्वशब्दोपपदाद् भवतेर्हूयतेर्वा बाहुलकात्कूप्रत्यये ( उ० १-८८ ) गकारस्य ककारादिः । गुह्यः अदृश्यश्चन्द्रमा अत्र भवति । क्व पुनरसाविति वितर्क्यश्चेति सर्वोऽयं पृषोदरादिः । गुहूः कभूः कहूर्वा सती कुहूः ॥ ११ ॥ ( ३२ )

"कु॒हूम॒हं सु॒वृत॑ं वि॒द्मना॒पस॑म॒स्मिन्य॒ज्ञे सु॒हवा॑ं

---

१. अन्नं हि रसात्मना परिणममाणं त्वगसृङ्मांसमेदोस्थिमज्जाशुक्ररूपसप्तधातुभावेन क्रमेण निष्पद्यते ॥

२. तत्-पर्व । वालशब्दस्तु-"बल संवरणे" ( भ्वा० अ० ) इत्यस्मात्करणे घञि ( पा० ३-३-१९ ) संनियत पतस्मिन्प्रदानजिघृक्षुभिर्दत्तेति वालं पर्व ॥

३. तनीयस्त्वाद्दुर्वेधस्यान्वेषणं वालचापलायितम् ॥

४. अत्रार्थे उत्तरपद एव विकल्पः । बवयोरभेदश्चाभ्यूहितः । यद्वा-बलवतीवाली । बालोऽत्र तनीयांश्चन्द्र एव ॥

५. उक्तार्थे बवयोरभेदकल्पनलभ्येऽपरितुष्यन्निममर्थमाह ॥

६. अत्र दुर्गवृत्तौ-"बालेनाप्ययं सीयेत बोध्येतेति" पाठोऽशुद्धः प्रतिभाति । उत्प्रेक्षायां तु सम्यक्सामञ्जस्यमर्थस्य प्रतिभातमप्यपेक्षितं दुर्गव्याख्यानुरोधात्तदनुगामित्वादस्या लघुविवृतेरिति बोध्यम् ॥

७. अत्र शक्तौ लिङ् ( पा० ३-३-१७२ ) द्रष्टव्यः । सेवनक्रियया संपादयितुं शक्येतेत्यर्थः । सेवनं सीवनं स्यूतिरित्यनर्थान्तरम् । तथाचामरः-"सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा" इति ॥

**जोहवीमि । सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम" ॥**

( तै० ब्रा० ३ अ० ३ प्र० ११ अनु-अथ० सं० ७-१०-५ आ० गृ० १-१० )

**कुहूमहमिति** । देविकासु विनियोगः । **अहं कुहूं** नष्टेन्दु-कलामावास्यां, तदभिमानिदेवताम् **सुवृतम्** सुकृतं शोभनानां कर्मणां कर्त्रीम् । क्लीवन्तमेतद्वर्णव्यत्ययश्चार्षः । विज्ञानापसम् सर्वत्र प्रत्यक्षकर्माणम् **अस्मिन्यज्ञे सुहवाम्** स्वाह्वानां ( शोभनमाह्वानं यस्यास्ताम् ) **जोहवीमि** आह्वयामि । **सा** अस्माभिराहूतास्मिन्यज्ञे एत्य हविर्भुक्त्वा **नः** अस्माकम् **पितॄणां श्रवणं** श्रवो धनम् ( निघं० २-१०-२६ ) यशो वा ( नि० ११-१० ) कुलोचितमित्यर्थः । **ददातु** । अथ प्रत्यक्षीकृत्योत्तरेण पादेनास्तौत्-या त्वमस्माकमेवं करोषि **तस्यै ते** तुभ्यम् हे **देवि** ! कुहु ! **हविषा विधेम** हविर्दद्म इत्यर्थः । अथ वा तां त्वां हविषा वयं परिचरेम अत्र "श्रुतिः स्त्री श्रवणं श्रवः" इति पर्यायाभिधाने श्रव इत्यर्थे श्रवणमिति श्रुतमत्र । व्याख्यातं च तथैव भाष्येऽपि । निघण्टौ तु श्रवः शब्द एव श्रुतः ॥

अथास्या भाष्यम्—

**कुहूमहं सुकृतं विदितकर्माणमस्मिन् यज्ञे सुह्वानामाह्वये । सा नो ददातु श्रवणं पितॄणां, पित्र्यं धनमिति वा-पित्र्यं यश इति वा । तस्यै ते देवि हविषा विधेमेति व्याख्यातम् ॥**

**व्याख्यातम्** निगदेनैव व्याख्यातप्रायम् ॥

अथ क्रमप्राप्ता—

**यमी व्याख्याता । तस्या एषा भवति ॥ १२ ॥ ( ३३ )**

**यमी** ( २४ ) सा हि व्याख्याता यमेनैव ( नि० १०-१९ ) । लिङ्गमात्रे विशेषः । "इन्सर्वधातुभ्यः" ( उ० ४-११४ ) इतीन्प्रत्ययः । "कृदिकारात्-" ( पा० ४-१-४५ ) इति ङीप् ॥ १२ ॥ ( ३३ )

**"अन्यमूषु त्वं यम्यन्य उ त्वां परिष्वजाते लिबुजेव वृक्षम् । तस्य वा त्वं मन इच्छा स वा तवाधाकृणुष्व संविदं सुभद्राम्" ॥ ४ ॥**

( ऋ० सं० ७-६-८ )

**अन्यमिति** । अत्र "यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवते"ति न्यायाद्यमो वैवस्वत ऋषिर्यमी देवता । अनादेशपरिभाषया त्रिष्टुप् छन्दः । यमी किल यमं चकमे भ्रातरम् । तां किल यमोऽनयर्चा प्रत्याचचक्षे-हे **यमि** ! **त्वम् अन्यमु** अन्यं पुरुषमेव हि **सु** सुष्ठु परिष्वजस्व मैथुनाभिप्रायेणालिङ्ग । उपसर्गबलेन योग्यक्रियाध्याहारः । अत्र दृष्टान्तः-**लिबुजेव वृक्षं** यथा लिबुजा नाम काचिद्वल्ली समीपजं वृक्षं गाढं परिष्वजते तद्वत् । **अन्य उ** अन्य एव कश्चन पुरुषः **त्वां परिष्वजाते** परिष्वङ्क्ष्यते । यस्य योग्यत्वमनेनाभिप्रायेण परिष्वक्तुम् । अत्र वर्तमानसमीपे भविष्यति लट् ( पा० ३-३-१३१ ) "ष्वज परिष्वङ्गे" ( भ्वा० आ० ) "दंशसञ्जस्वञ्जां शपि" ( पा० ६-४-२५ ) इति नलोपः । दीर्घ आर्षः । **त्वं तस्य वा** तस्यैव **मनः** प्रवेष्टुम् **इच्छ** कामयस्व । तस्यैव त्वं वशवर्तिनी भवेत्यर्थः । **स वा** स च पुरुषः **तव** मनः प्रवेष्टुमिच्छतु । **अध** अथैवमैकचित्त्यमुपगम्यमानेन समानेनानेन सह **सुभद्रां** कल्याणभद्रां ( सुकल्याणीं ) **संविदम्** संजल्पादिमैथुनकार्यम् परस्परसंभोगसुखसंवित्तिं वा **कृणुष्व** कुरुष्व ॥ ४ ॥

अथास्य भाष्यम्—

**अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते लिबुजेव वृक्षम् । तस्य वा त्वं मन इच्छ स वा तवाधानेन कुरुष्व संविदं सुभद्रां कल्याणभद्राम् ॥**

इति ॥

अथास्यां निदानमाख्ययाचष्टे—

**यमी यमं चकमे, तां प्रत्याचचक्ष इत्याख्यानम् ॥ १३ ॥ ( ३४ )**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० एकादशाध्यायस्य तृतीयः पादः ॥ ११ ॥ ३ ॥**

**प्रत्याचचक्षे** प्रत्याख्यातवान्यमः । एतच्च देवताबहुत्वपक्षे । त्रित्वपक्षे तु-दुर्ग आह-माध्यमिको यमो माध्यमिकां वाचमुषःसमात्मनः प्रविभक्तामिव कृत्वोभयस्थानां तां ब्रवीति-हे यमि ! अतीतस्तेऽसत्परिष्वङ्गसमयः, प्रभातमिदानीम् । लिबुजेव वृक्षं द्युस्थानं परिष्वक्तुमिच्छ । तस्य च त्वं मनः प्रकाशमनु-प्रवेष्टुमिच्छ । स च तव प्रकाशमनुप्रविशतु । अथैवमितरेतरसम्पर्कीत्तेन सहैकीभूता लोकोपकाराय कुरुत परस्परं संविदं संवित्साधनं प्रकाशमिति ॥ १३ ॥ ( ३४ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० एकादशाध्यायस्य तृतीयः पादः ॥ ११ ॥ ३ ॥

---

१. विदितकर्माणमिति भाष्यव्याख्यानात् ॥

१. अत्र संहितायामुञः ऊ ( पा० १-१-१८ ) इत्यादेशः ॥ "सुञः" ( पा० ८-३-१०७ ) इति षत्वम् ॥

२. दुर्गस्तु-अन्य एव त्वां परिष्वजतामित्येवं व्याख्यन् लेटो रूपमाह । तत्र "लेटोऽडाटौ" ( पा० ३-४-९४ ) इत्यडागमोऽत्र द्रष्टव्यः ॥

३. थकार-धकारयोर्विपर्ययो वैदिकाम्नाये निगमसिद्धोऽसकृद् दृष्टः । दीर्घस्त्वार्ष एव ॥

## एकादशाध्यायस्य चतुर्थः पादः।

### उर्वशी व्याख्याता । तस्या एषा भवति ॥ १ ॥ (३५)

अथ उर्वशी ( २५ ) वक्तव्या क्रमप्राप्तत्वात् । सा पुनः व्याख्याता "उर्व्यभ्यश्नुते" उरु महद्यशोऽभिव्याप्नोतीत्येवम-प्सरोऽभिप्रायेण ( नि० ५-१३ ) तदिहापि देवतायां ( माध्यमिकायां ) योज्यम् । उर्वश्यश्नुते बहूदकं व्याप्नोति "उरुर्वा वशोऽस्याः" महानस्याः काम उदके इत्येवम् । साधन-मुक्तमधस्तात् ( ) ॥ १ ॥ ( ३५ )

**"विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः" ॥ ५ ॥**

( ऋ० सं० ८-५-२ )

**विद्युदिति** । पुरूरवस आर्षं त्रिष्टुप् उर्वशीदैवत्यम् । त्रिल-पक्षे-मध्यमः पुरूरवा ब्रवीति-आत्मनो ज्योतिषः शब्दस्य च विभागमिव कृत्वा **या** उर्वशी माध्यमिका देवता **विद्युन्न** विद्यु-दिवान्तरिक्षे **पतन्ती** गच्छन्ती मेघोदरेषु **दविद्योत्** पुनःपु-नर्द्योतते । "दाधर्ति-" ( ७-४-६५ ) इत्यादिना द्युतेर्यङ्लु-गन्तस्य निपातः । आत्मानं प्रतिलभते वा । किंकुर्वती ? आत्मनः स्वभूतानि **अप्या** अप्यानि । अप् इत्यन्तरिक्षनाम ( निघं० १-३-८ ) तत्संबन्धीनि । "दिगादित्वात्" ( पा० ३-४-५४ ) भवार्थे यत् । "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः । **काम्यानि** अस्मदभिमतानि उदकानि ( यान्यक्षरमाणान्यस्माभिरभिलष्यन्तेऽन्तरिक्षलो-कस्य ) । **मे** मह्यम् **भरन्ती** हरन्ती । "हृग्रहोर्भश्छन्दसि" ( पा० ३-१-२४ वा० ) इति हस्य भकारः । ( सम्पाद-यन्ती ) । यदागतायास्तस्याः सकाशात् **अपः** व्याप्तः कर्मसु उदकोर्मिरिति तदर्थः । अप इत्युदकनामसु पठितम् । ( निघं० १-१२-८१ ) अध्यप इति च भाष्यम् । अधिक उदकोर्मिर्यः सर्वमिदमाच्छादयतीति तद्व्याख्यानं च दौर्गम् । **नर्यः** नृभ्यो हितः । बाहुलकाद्यत् ( पा० ५-१-५ ) सस्यसम्पत्करः **सुजातः** सुजननः पुत्र इव । सुजाततर इति भाष्यम् । शोभनादपि शोभनतर उदकोर्मिरिति तद्व्याख्यानं दौर्गम् । **जनिष्टो** अजनिष्ट । उः पादपूरणः अडभावश्च । "आगमशास्त्र-मनित्यम्" ( प० ९५ ) इति । जायत इति तदर्थः । वर्तमाने ह्यत्र लुङ् ( पा० ३-४-६ ) अथ तदानीं सा **उर्वशी** तेन महतोदकोर्मिणा सस्यमभिनिष्पाद्यान्नसंपादनद्वारेण **दीर्घमायुः प्रतिरते** प्रवर्धयते । प्रपूर्वकस्तिरतिर्वर्धनार्थेऽसकृदभिहितो निगमवाक्येषु ॥

अथास्या भाष्यम्—

**विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य । यदा नूनमयं जायेताद्भ्योऽध्यप इति नर्यो मनुष्यो नृभ्यो हितो नरापत्यमिति वा । सुजातः सुजात-तरोऽथोर्वशी प्रवर्धयते दीर्घमायुः ॥**

इति । **अद्योतत** इति अजनिष्ट इति उत्तरार्धचंपदानुरोधात् । तत्र च वर्तमाने लुङ्भ्युपपत्तौ द्योतत इत्येवास्यार्थः । तत्र पौनःपुन्यरूपः क्रियासमभिहारो यङ्लुगर्थोऽभ्यूह्यः । "दाधर्ति" ( पा० ७-४-६५ ) इत्यादिसूत्रे प्रायो यङ्लुगन्तानामेव निपा-तनात् । तत्रागमाभावोऽनित्यत्वात्साधनीयः । सायणस्तु-द्योतत इत्येव व्याख्यत् । **जायेत** इत्याशंसायां लिङ् व्याख्यानं भाष्यकृतः प्रतिभाति । तदेतज्जनिष्ट-पदव्याख्यानमसमञ्जसमिव प्रतिभाति । जायत इति हि दुर्ग आह । उत्पद्यत इति च सायणः । **मनुष्य** इति जायत इत्यनेनान्वितं भवेदिति प्रतीमः । तथाचोदकमुपक्रम्य निगमः-"प्रजामनु प्रजायसे तदु ते मर्त्या-मृतमि"ति ( तै० ब्रा० १-५-५ ) **नरापत्यमिति वा** । इत्यैतिहासिकपक्षं द्योतयति । तत्पक्षे त्वैलः पुरूरवा उर्वश्या अप्स-रसा वियुक्तो ब्रवीति—विद्युदिव या पतन्ती अद्योतत भृशं वपुष्मत्तया, भरन्ती धारयन्ती अनेकानि स्वर्गतानि हावभावा-दीनि काम्यानि वस्तूनि मे मम अप्या नित्यमाप्तव्या प्रिया । सा च पुनराहितगर्भा यतः, अतो ब्रवीमि-जनिष्टो अपः निश्च-येन जनिष्यते । अध्यपः अधिककर्मा । नर्यः नृभ्यो हितः सम्यक्परिपालयिता नराणाम् । अथ वा मम नरस्यापत्यमायु-र्नाम राजा यं पुराणविदः कथयन्ति । सुजातो मच्छुक्राद्वीर्यतो जातः । विशेषत उर्वश्या क्षेत्रगुणात्सुजाततरः । तस्य चावश्य-मुर्वशी अस्मदसान्निध्येऽपि प्रवर्धयते तद्योग्यैः कर्मभिर्दीर्घमा-युरिति दुर्गव्याख्यानम् ॥

अथ—

### पृथिवी व्याख्याता । तस्या एषा भवति ॥ २ ॥ (३६)

---

१. एषोऽर्थो दुर्गाभ्यूहितः स हि विद्युन्नेत्यत्र संप्रत्यर्थे वा नकार इति व्याख्यत् ॥

२. दुर्गस्तु-"अन्तरिक्षलोकस्याधिपत्नी योर्वशी सा यदैवमुद-कानि हरन्ती मेघेभ्यः पतन्ती भृशं स्वयं विद्योतते नूनं निश्चयेन तदा जनिष्टः अपः अध्यप अधिकउदकोर्मिर्जायते यः सर्वमिदमा-च्छादयती"त्येवं भाष्येण सह व्याख्यत् । अत्र तदर्हतीत्यर्थे यत् ( पा० ५-१-६७ )

३. "आप्लृ व्याप्तौ" ( स्वा० उ० ) इत्यस्मात् "आपः कर्मा-ख्यायां ह्रस्वो नुट् च वा" ( उ० ४-२०२ ) इत्यसुन्प्रत्ययो बाहुलकाज्जलेऽपि भवतीत्युक्तमधस्तात् ( ) उदकोर्मिरधिक उदकोर्मिरित्येवं व्याख्यानं तु भाष्यकृता कृतमर्थवशात् ॥

१. आगमयोरडडोरभावः । "आगमशास्त्रमनित्यम्" इति परिभाषया बोध्यः । अन्यश्च साधनप्रकारो निपातलभ्यः । स चेह द्युतेरभ्यासस्य संप्रसारणाभावोत्वं विगागमश्चेति ॥

**पृथिवी** ( २६ ) वक्तव्या । सा पुनः व्याख्याता "अथ वैदर्शनेन पृथु" रित्यादिना ( नि० १-४-३ ) इह तु माध्यमिका देवताऽभिधेया ॥ २ ॥ ( ३६ )

**"बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि । प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि"॥ १ ॥**

( ऋ० सं० ४-४-२९ )

**बळिति** । "द्विरूपा पृथिवी चैषा प्रत्यक्षा देवताऽपि च । मध्यस्थाना देवतोक्ता साऽत्र संबोध्य वर्ण्यते ॥ १ ॥"

भौमस्यात्रेरार्षं पृथिवीदेवताकमानुष्टुभम् । देवानां हविःषु पृथिव्या अनुवाक्या । बळिति सत्यनाम ( निघं० ३-१०-१ ) इत्था इति इत्थमित्यर्थकम् । अत्र अमुत्रेति तदर्थः । हे **पृथिवि !** विप्रथनवति ! माध्यमिके देवते ! **इत्था** अत्र भुवि अमुत्रान्तरिक्षे वा स्थिता त्वं **बळ्** सत्यं यथाभूतं **पर्वतानाम्** मेघानां ( निघं० १-१०-९ ) **खिद्रं** खेदनं छेदनं ( भेदनं ) येन पर्वता मेघाश्छेत्तुं शक्यन्ते तद्बलं **बिभर्षि** धारयसि । हे **महिनि !** महति ! अथवा उदकवति । मह इत्युदकनाम ( निघं० १-१२-५६ ) ततो मत्वर्थे इनिः । हे **प्रवत्वति** प्रवणवति ( गमनवति ) । "प्रुङ् गतौ" ( भ्वा० आ० ) ततो भावे लटः शतरि प्रवच्छब्दान्मतुपो मस्य वः ( पा० ८-२-९ ) **या त्वं भूमिं** प्रत्यक्षां पृथिवीम् । **मह्ना** महत्त्वेन महनोदकेन वा **प्रजिनोषि** प्रजिन्वसि प्रकर्षेण प्रीणयसि वर्षमुत्सृजन्ती । जिविः प्रीणात्यर्थः ( भ्वा० प० ) इदित्त्वान्नुम् ( पा० ७-१-५८ ) "धिन्विकृण्व्योर च" ( पा० ३-१-८० ) इत्युप्रत्ययोऽकारादेशश्च विहितोऽत्र जिन्वतेरपि बाहुलकाद्विधीयते प्रीणनार्थेषु समं पाठात् । या त्वमेवं भूमिं प्रजिन्वसि सा कथं न पर्वतानां मेघानां छेदनसमर्थं बलं धारयिष्यसि ? अवश्यं धारयिष्यसीति भावः ॥ १ ॥

अथास्या भाष्यम्—

**सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलमत्र धारयसि पृथिवि ! प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन, महतीत्युदकवतीति वा ॥**

गतार्थमेतत् ॥

अथ—

**इन्द्राणी—न्द्रस्य पत्नी । तस्या एषा भवति ॥ ३ ॥ ( ३७ )**

**इन्द्राणी** ( २७ ) इन्द्रस्य विभूतिः । पृथक्त्वेन निर्ज्ञाता पौराणिकैरितीन्द्रस्य **पत्नी** । मध्यस्थाना देवता । "इन्द्रवरुण–" ( पा० ४-१-४९ ) इत्यादिना ङीषानुक् च ॥ ३ ॥ ( ३७ )

**"इन्द्राणीमासु नारिषु सुभगामहमश्रवम् । नह्यस्या अपरं च न जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः" ॥ १ ॥**

( ऋ० सं० ८-४-३ )

**इन्द्राणीति** । वृषाकपिर्नामेन्द्रस्य पुत्रस्तस्येयमार्षमिन्द्राणीदेवताकं पाङ्क्तपदं पाङ्क्तम् । पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते । निर्धार्य ब्रवीति-**अहम् आसु** सौभाग्यवत्तया प्रसिद्धासु सर्वासु **नारिषु** । ह्रस्व आर्षः । **इन्द्राणीम्** एव **सुभगाम्** अतिसौभाग्यवतीलक्षणोपेताम् **अश्रवम्** अशृणवम् । विकरणव्यत्यय आर्षः । कुतः ? **नह्यस्या अपरं च न** । हिशब्दो हेत्वर्थः । "हि हेतावधारणे" इत्यमरः । चनेत्यप्यर्थेऽव्ययम् । तथा च "नह्यस्या अपरमपि समाम्" इति भाष्यम् । अस्याशृणवमित्यनेन संबन्धमभिप्रैति । सायणस्तु-चनेत्युपमार्थं मत्वा व्याचष्ट । **अस्या** इन्द्राण्याः **पतिः** पालको भर्ता **इन्द्रः विश्वस्मात्** सर्वस्मात् जगतः **उत्तरः** उत्कृष्टतरः उद्गततरो वा यः ( अपरमिव भूतजातं ) **जरसा** वयोहान्या **नहि मरते** न खलु म्रियते । "व्यत्ययो बहुलम्" ( पा० ३-१-८५ ) इति विकरणव्यत्ययः । तमेतमिन्द्रमधिकृत्य ( एतद् ) ब्रूम इत्याचार्यो ( यास्कः ) ब्रवीति ॥ १ ॥

तथा च भाष्यम्—

**इन्द्राणीमासु नारिषु सुभगामशृणवं न ह्यस्या अपरामपि समाम् । जरया म्रियते पतिः । सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमः ॥**

अवगतार्थमेतत् ॥

**तस्या एषाऽपरा भवति ॥ ४ ॥ ( ३८ )**

अपरा पुनः किमर्थम् ? ऋषिरेव वृषाकपिः प्रसिद्धः । स पुनरादित्योऽभिप्रेतो नैरुक्तानाम् । तदुपप्रदर्शनायापरामाह ॥ ४ ॥ ( ३८ )

**"नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।**

---

१. "प्रथ प्रख्याने" ( भ्वा० आ० ) इत्यस्मात् "प्रथेः षिवन्संप्रसारणं च" ( उ० १-१४८ ) इति षिवन्प्रत्यये "षिद्गौरादिभ्यश्च" ( पा० ४-१-४१ ) इति ङीषि साधुः । प्रथते इति पृथिवीति ॥

२. दुर्गस्तु—हे पृथिवि ! त्वं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना । हिरण्यनाशेध्यां भौमस्यैककपालस्येयं याज्या । तत्र विज्ञायते—"अथ यद्भौमोऽस्यां हि स तदविन्दत्" इति । तेन तत्रेयं भूमिरिज्यते । न च भूमिरस्यामृच्चि प्रधानत्वेन वर्तते, यथा चायमाचार्यो निराह । तदयमस्योदाहरणाभिप्रायः, स च विनियोगः—इत्यविरोधोऽनयोर्मेधाविना समनुगंतव्य इत्याह ॥

१. दुर्गस्तु—यस्मादस्या अपरामपि समां-संवत्सरं प्रति न कदाचिदपि पतिः म्रियते नापि जीर्यते यथा अन्यासां प्राकृतानां नारीणामित्येवं व्याख्यत् । भाष्योक्तार्थेऽपरमपि ह्रस्व आर्षः ॥

तस्येदमप्व्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः" ॥ २ ॥ (ऋ० सं० ८-४-३)

नाहमिति। समानो विनियोगः पूर्वया, आर्षं च। इन्द्रो ब्रवीति-(विभक्तामिवात्मन इन्द्राणीं (स्वशक्तिं) कृत्वा हे **इन्द्राणि !** अहं **सख्युर्वृषाकपेर्ऋते** य एष मम सखा वृषाकपिस्तं विना **न रारण** न ररार्णे न रमे इत्यर्थः। किं सोऽयमृषिर्मनुष्येषु प्रसिद्धः ? नेत्युच्यते-**यस्य** स्वभूतम् यमुद्दिश्य संभृतं वा **इदम्** उपस्थितम् **प्रियम्** प्रीतिकरम् **अप्व्यम्** अप्सु भवं शृतम्। 'दिगादित्वात्' (पा० ४-३-५४) भवार्थे यत्। अद्भिः संस्कृतमिति वेति भाष्यम्। **हविः** चरुपुरोडाशादि **देवेषु** सर्वेष्वपि **गच्छति** सर्वा अपि देवताः सादरं गृह्णन्ति। विष्णुर्हि देवानां प्रमुखस्तन्मूर्तिरुपेन्द्रश्च तमुद्दिश्य संस्कृतममत्सरेण देवा गृह्णन्ति। स एवात्र वृषाकपिः। "हरविष्णू वृषाकपी" इत्यमरः। अग्निश्च वृषाकपिरित्यमरविवेके महेश्वरः। इति **विश्वस्मात्** सर्वस्मात् अपि जगतो योऽहम् **इन्द्रः उत्तरः** उद्गततर उत्कृष्टतरो वा सोऽप्यहमेवं ब्रवीमीति भावः ॥ २ ॥

अथास्या भाष्यम्—

**नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्व्यं हविरप्सु शृतमद्भिः संस्कृतमिति वा। प्रियं देवेषु निगच्छति। सर्वस्माद् इन्द्र उत्तरस्तमेतद्ब्रूमः ॥**

**सख्युः** समानख्यानात् **वृषाकपे**र्महेन्द्रादृते विना वृषाकपिं सहायं विना। कं **देवेषु** सर्वास्वपि देवतासु (इति निर्धार्योच्यते) मे **प्रियं**, **यस्य** महेन्द्रस्य संबन्धि **इदम्** पुरस्कृतम् **अप्व्यं हविः** नितरां **गच्छ**त्यमुष्माद्देवयजनात्। **इन्द्रः** महेन्द्रः। **उत्तर** उत्कृष्टतरस्तमेतं महेन्द्रमधिकृत्यैतद्ब्रूमः इत्याचार्यो ब्रवीति ॥

१. वाच्छन्दः। एतच्च दुर्गवृत्तेरुद्धृतम्। परं त्वेतदसमञ्जसमिव प्रतिभाति। इन्द्रो ब्रवीतीत्युक्त्या हि "यस्य वाक्यं स ऋषि"रिति न्यायादिन्द्र ऋषिरायाति। पूर्वं तु वृषाकपेर्वाक्यमुक्तवानिति स एव ऋषिर्भवति ॥

२. रणती रमणार्थो वर्णकालव्यत्ययाभ्यामिह निर्दिष्टः। स एष नैगमः ॥

३. तेनेह "संस्कृतम्" (पा० ४-४-३) इत्यर्थे यद्बाहुलकवलत्यो द्रष्टव्यः ॥

४. विशेषार्थोऽस्य भाष्यव्याख्यायां द्रष्टव्यः ॥

५. "महेन्द्राद्घाणौ च" (पा० ४-२-२९) इत्यनुशासनात्समाख्याबलाच्चैतदेव हविर्महेन्द्रियं माहेन्द्रं महेन्द्रीयमित्यप्युच्यते। स चेन्द्रादन्य इति नैरुक्ताः। अत एव च (वा० रामायणे) "इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि राघवस्य" इति सीतावचनं संगच्छते। अयमर्थः सायणानुमतः ॥

अथ—

**गौरी रोचतेर्ज्वलतिकर्मणः। अयमपीतरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति। तस्या एषा भवति ॥ ५ ॥ (३९)**

**गौरी** (२८) वक्तव्या। सा पुना **रोचतेर्ज्वलतिकर्मणो** दीप्त्यर्थस्य (भ्वा० आ०) "ऋज्रेन्द्राग्रवज्रविप्र०" (उ० २-२७) इत्यादिना रन्प्रत्ययान्तो गौरशब्दो निपातितो धातोर्गावादेशेन। "षिद्गौरादिभ्यश्च" (पा० ४-१-४१) इति ङीष्। स्वया दीप्त्या रोचते ज्वलति। वाग्देवतात्वात्। माध्यमिका वाक्। सा हि दीप्तिवती। **अयमपीतरः** यः **गौरो वर्णः** सोऽपि **एतस्मादेव** रोचतेः। स हि दीप्तिरूपत्वात् कृष्णादीनपेक्ष्य **प्रशस्यो भवति। तस्या** गौर्याः ॥ ५ ॥ (३९)

**"गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्" ॥ १ ॥**

(ऋ० सं० २-३-२२-अथ० सं० ९-२६-२१)

**गौरीरि**ति। अस्यवामीये सूक्ते दीर्घतमस आर्षम् जगती गौरीदेवत्या। **गौरीः** दीप्तिमती माध्यमिका वाक्। सुलोपाभावश्छान्दसः। सर्वमिदं **मिमाय** निर्मिमीते। किं कुर्वती ? **सलिलानि** वृष्ट्युदकानि **तक्षती** कुर्वती। उदकपूर्वकत्वात्सर्वनिर्माणस्य। कथमुदकानि कुर्वती ? **एकपदी** एकपादोपेता एकाधिष्ठाना वा। मध्यमेनैं सहैकत्वमापन्नेति भाष्यम्। मेघे वर्तमाना। गमनसाधनेन वायुना एकपदी वेति सायणः। **द्विपदी** पादद्वयोपेता मध्यमेन चादित्येन चेति भाष्यम्। मेघान्तरिक्षाख्ये द्व्यधिष्ठाना आदित्यो वा द्वितीय इति सायणः। तथा **सा चतुष्पदी** पादचतुष्टयोपेता दिग्भिः। (दिक्चतुष्टयाधिष्ठाना) अनपेक्ष्येन्द्रादित्यौ। अथ **अष्टापदी** दिग्भिश्चावान्तरदिग्भिश्च। अवान्तरदिगपेक्षयाष्टपादोपेतेत्यर्थः। **नवपदी** सह सूर्येण उपरिदिगपेक्षया वा नवपादोपेता, नवदिगाधिष्ठाना वा **बभूवुषी** एवंभूता। भवतेश्छान्दसः क्वसुस्ततो ङीपि "वसोः संप्रसारणम्" (पा० ६-४-१३१)। किमनया परिगणनया ? **सहस्राक्षरा** अपरिमितवचनोऽयं सहस्रशब्दः। अपरिमितव्याप्तियुक्ता। बहूदकेति भाष्यम्। बहुव्यापनशीलोदकवतीति तदर्थः। क्वेति ? तदुच्यते-**परमे व्योमन्**

१. मिनोतिर्गतिकर्मसु पाठभेदेन निघण्टुव्याख्यायां व्याख्यातो देवराजयज्वभिः (निघं० २-१४-५१) स चेह निरुपसर्गोऽत्र व्याख्यातोऽर्थसंगत्यै। वर्तमानेऽत्र लिट् (पा० ३-४-६)

२. तनूकरणार्थस्तक्षतिरिह करणसामान्येऽभिहितो भाष्यकृता यास्केन ॥

३. इन्द्रेण। अस्य व्याख्यान्तरं सायणेन कृतं द्रष्टव्यम्। विस्तरभयात्समकृतानुपयोगाच्च नोद्धृतम् ॥

उदकाश्रयत्वेनोत्कृष्टेऽन्तरिक्षे । व्योमन्निति "सुपां सुलुग्—" ( पा० ७-१-३९ ) इति ङेर्लुक् । "न ङिसंबुद्ध्योः" ( पा० ८-२-८ ) इति नलोपनिषेधः । भाष्यकारस्तु—व्यवने इति तदर्थमाह, व्याख्यातं च दुर्गेण—विभक्तानां भूतानां यत्परममवनमेकं, सर्वभावानामविभक्त एक आत्मा यस्तदात्मनैव भूतानां सलिलनिर्माणद्वारेण सर्वमिदं निर्मिमीते—इति ॥ १ ॥

तथा च भाष्यम्—

**गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वती । एकपदी—मध्यमेन । द्विपदी—मध्यमेन चादित्येन च । चतुष्पदी—दिग्भि—रष्टापदी—दिग्भिश्चावान्तरदिग्भिश्च । नवपदी—दिग्भिश्चावान्तरदिग्भिश्चादित्येन च । सहस्राक्षरा—बहूदका परमे व्यवने ॥**

इति । अवगतार्थमेतन्मन्त्रव्याख्यया ॥

**तस्या एषाऽपरा भवति ॥ ६ ॥ ( ४० )**

अपरा पुनः किमर्थम् ? इति—गौरीति गुणाभिधानमप्रसिद्धाभिधं यं छन्दसि देवतायाम् । अतः अपरया समर्थयति— ॥ ६ ॥ ( ४० )

**"तस्याः समुद्रा अधि विक्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः । ततः क्षरत्यक्षरं तद्विश्वमुपजीवति ॥ २ ॥"** ( ऋ० सं० २-३-२२ )

**तस्या** इति । उक्तार्षादिः प्रस्तारपङ्क्तिः । **अस्याः** गौर्याः **अधि** सकाशात् **समुद्राः** वृष्ट्युदकसमुन्दनाधिकरणभूताः मेघाः **विक्षरन्ति** विविधं क्षरन्ति प्रवर्षन्ति "प्रभूतमुदकमि"ति शेषः । **तेन** उदकेन **प्रदिशश्चतस्रः** दिक्प्रतिदिङ्निवासीनि भूतानि **जीवन्ति** तदित्थम् **ततः** गौर्या एव मेघद्वारेण **अक्षरम्** उदकम् ( निघं० १-१२-३२ ) **क्षरति** अभिनिःसरति **तद्** उदकम् **विश्वम्** भूतजातम् **उपजीवति** । एवं सैव सर्वोदकेशाना गौरीत्यभिप्रायः ॥ २ ॥

अथास्या भाष्यम्—

**"तस्याः समुद्रा अधि विक्षरन्ति"—प्रवर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि । ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति ॥**

गतार्थमेतत् ॥

अथ—

**गौर्व्याख्याता । तस्या एषा भवति ॥ ७ ॥ ( ४१ )**

**गौः** ( २९ ) इयं च व्याख्याता पृथिवीनामसु ( नि० २-५ ) इह तु माध्यमिका वागभिधेया । गमेर्डोसि ( उ० २-६३ ) साधुः ॥ ७ ॥ ( ४१ )

**"गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ । सृक्काणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥ ३ ॥"**

( ऋ० सं० २-३-१९ ) ( अथ० सं० ९-२७-६ )

**गौरीति** । दीर्घतमस आर्षं त्रिष्टुप् वैश्वदेवदेवत्या । महाव्रते विनियोगः । **गौः** माध्यमिका वाक् **मिषन्तम्** नितरां स्पर्धमानम् । "मिष स्पर्धायाम्" ( तु० प० ) ततः शता । यद्वा अनिमिषन्तमिति भाष्यम् अव्यवहितदर्शनं सर्वदेति तदर्थं दुर्ग आह । एवंभूतं **वत्सम्** आदित्यम् । स हि तस्या रसहरणाद्वत्सः । **अन्वमीमेत्** अनुशब्दयति । ( महद्भिः स्तनयित्नुशब्दैः अनुकूलयति ) मीमयतिः शब्दकर्मा नैरुक्तस्ततो वर्तमाने लङ् ( पा० ३-४-६ ) बाहुलकाच्छपो लुक् ( पा० २-४-७३ ) अपि च **मूर्धानम्** शिरोरश्मीन् अस्य ( मध्यस्थानं प्राप्तं प्राप्य ) **मातवै** मातुं मननाय सर्वलोकज्ञानाय । "तुमर्थे०"—( पा० ३-४-९ ) इत्यादिना तवैप्रत्यय उः पूरणः । **हिङ्ङकृणोत्** हिङ्कारेणोपशब्दयति । किंच **सृक्काणं** सरणं सततगामिनं ( अनवस्थायिनं ) **घर्मं** हरणं ( रसानां हर्तारम् ) आदित्यम् **अभि** लक्ष्य **वावशाना** भृशं कामयमाना पुनःपुनर्वाशयमाना वाशयन्ती प्रतिसंवत्सरमेव **मायुं** शब्दं ( निघं० १-११-२७ ) **मिमाति** निर्माति करोति । **पयोभिः** उदकैः **पयते** प्याययते च ( आप्यायनं करोति ) प्रकर्षेण वर्धते चेत्यर्थः ॥ ३ ॥

---

१. अत्र सायणः—पूर्वार्धस्य वाग्देवता, उत्तरार्धस्याप इत्याह । "प्रस्तारपङ्क्तिः पुरतः" इति हि छन्दोलक्षणम् । यत्र पुरतः पूर्वार्धे द्वादशाक्षरौ जागतौ पादौ ततो द्वावष्टाक्षरौ गायत्रौ सा प्रस्तारपङ्क्तिरिति सूत्रार्थः । अत्र चादितस्त्रिपादी निचृद् "न्यूनाधिकेनैकेन निचृद्भुरिजौ" ( पिं० सू० अ० ३ सू० ५९ ) इति तल्लक्षणात् ॥

२. अत्र दुर्गः—अलिङ्गो मन्त्र इति चेत् तस्या इत्येव लिङ्गमनादिश्यते, संबन्धाद्वचोः, तस्मात्सलिङ्ग इत्याह ॥

३. यद्यपि—समुद्र इत्यन्तरिक्षनामसु पठ्यते ( निघं० १-३-१५ ) तथापीह "तात्स्थ्यात्ताच्छब्द्यम्" इति न्यायेन ( मञ्चस्थेषु क्रोशत्सु मञ्चाः क्रोशन्तीतिवत् ) अत्र प्रयोगो द्रष्टव्य इत्यपि संभवत्येवं दिक्ष्वपि । तत्र प्रशब्दो वीत्यर्थे विदिशश्चतस्रो दिशश्च । अथ वा प्रकृष्टा दिशो मुख्याश्चतस्रस्तत्स्थेषु ताच्छब्द्यमिति सायणः ॥

४. सायणस्तु—ततः पश्चात्तदक्षरमुदकं क्षरति सस्यादिकमुत्पादयतीत्यर्थं इत्याह ॥

१. अत्र दुर्गः—पुनःपुनः प्रतिसंवत्सरं तत एव क्षरत्युदकं मेघद्वारेणेत्येवं व्याचष्ट ॥

२. अत्र भाष्यमते वर्णलोपः नैरुक्तसमयात् । एवमग्रेऽपि ॥

३. "वश कान्तौ" ( अ० प० ) यङ्लुगन्ताच्छानच् ॥

अथास्या भाष्यम्—

**गौरन्वमीमेद्वत्सं मिषन्तं निमिषन्त–मनिमिषन्त–मादित्यमिति वा । मूर्धानमस्याभिहिङ्कङ्क्रोन्मननाय । सृक्वाणं–सरणं, घर्मं–हरणम् अभिवावशाना मिमाति मायुं प्रप्यायते पयोभिः ॥**

अथ प्रकारान्तरेण व्याचष्टे—

**मायुमिवादित्यमिति वा । वागेषा माध्यमिका, घर्मधुगिति याज्ञिकाः ॥**

अथ **वा मायुमिवेति** घर्ममहः ( निघं० १-९-७ ) अभिलक्ष्य मायुं वा मायुमिव शब्दमिव सृक्वाणं सरणं सन्ततगमनमादित्यं वशाना कामयमाना मिमाति शब्दं करोति । "माङ् माने शब्दे च" ( जु० आ० ) पदव्यत्यय आर्षः । का ? **वाक् एव एषा** गोशब्दाभिधेया **माध्यमिका** मध्यस्थाना देवतेत्येवमर्थः । **घर्मधुक्** घर्मो यज्ञः ( निघं० ३-१७-१५ ) तं दोग्धीति क्विप् । धेनुरेव हि यज्ञधुक् ( यज्ञदोग्ध्री ) सर्वाङ्गसंपादनद्वारेण । **इति याज्ञिकाः** यज्ञविद आहुः । तथाच घर्मधुक्पक्षे गौरेव **गौः अन्वमीमेत्** अनुशब्दयति । वत्समेव **वत्सं मिषन्तं** तामेवोन्मुखं पश्यन्तम् । अपि च प्राप्य **मूर्धानम्** अस्योपघ्राय **हिङ्ङ्कृणोत्** हिङ्ङित्येवं शब्दं करोति । स हि गोःस्वभावः । ( किमिति ? ) **मातवै** मातुम् । कथं नामायं जानीयान्माता ममेयमिति । **सृक्वाणं** तामेव प्रत्यभिमुखं सरणं ( समागच्छन्तं ) ( अथ च ) **घर्मं** हरणं पयसाम् । **अभिवावशाना** पुनःपुनर्वाञ्छ्यमाना ( **मिमाति** ) प्रत्यहमेव शब्दं करोति **पयते** प्रप्यायते च **पयोभिः** वत्समस्यांश्च या वर्धयति सा नित्यमेवमस्त्विति दुर्गव्याख्यानम् ॥

अथ—

**धेनुर्धयतेर्वा धिनोतेर्वा । तस्या एषा भवति ॥ ८ ॥ ( ४२ )**

**धेनुः** ( ३० ) **धयतेर्वा** धय्यते पीयतेऽसौ वत्सेन । "धेट् पाने" ( भ्वा० प० ) "धेट इच्" ( उ० ३-३३ ) इति कर्मणि नुप्रत्यय इकारोऽन्तादेशो गुणः । धयति तामिति वा । अथ **वा धिनोतेः** प्रीणनार्थस्य ( भ्वा० प० ) तर्पयत्यसावुदकेन पयसा वा ॥ ८ ॥ ( ४२ )

**"उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम् । श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभीद्धो॑ घ॒र्मस्तदु॒ षु प्र वो॑चम् ॥ १ ॥"**

( ऋ० सं० २-३-१९ )

**उपह्वय** इति । पूर्वैव समानार्षविनियोगादि । अहं होता **सुदुघां** कल्याणमुदकं या दुग्धे ताम् **धेनुम्** तर्पयन्तीं सर्वलोकस्य **एताम्** माध्यमिकां वाचम् **उप** उपगम्य मनसा **ह्वये** आह्वये स्तुतिभिः । **उत** अपिच मयोपहूताम् **एतां सुहस्तः** कल्याणहस्तः दोहनकुशलः **गोधुक्** गोदोग्धा इन्द्रः **दोहत्** दोग्धु प्रक्षारयतूदकानि । अमुना प्रकारेण **श्रेष्ठम्** अतिशयेन प्रशस्यमेनम् **सवम्** सूयते अभिषूयते सोमादिरनेनेति करणेऽप् ( पा० ३-५७ ) उदकम् **सविता** प्रसविता सर्वस्याभ्यनुज्ञाता कर्मणा, वृष्टिप्रदानादिना । अत एव **अभीद्धः** अभिदीप्तः **घर्मः** मध्यस्थानो विद्युदाख्यः **नः** अस्मभ्यं **साविषत्** सुनोतु । नित्यं ददात्विति **तदु** तमेव **सुप्रवोचम्** सुप्रब्रवीमि । ब्रवीतेर्लुङि वच्यादेशे "अस्यतिवक्तिख्यातिभ्योऽङ्" ( ३-१-५२ ) इत्यादिना च्लेरङ् छान्दसोऽडभावः ॥ १ ॥

अथास्य भाष्यम्—

**उपह्वये सुदोहनां धेनुमेतां कल्याणहस्तो गोधुगपि च दोग्ध्येनां श्रेष्ठं सवं सविता सुनोतु न इति । एष हि श्रेष्ठः सर्वेषां सवानां यदुदकम् ।**

---

१. अत्रार्थे सायण इत्थं व्याख्यत्—गौर्धेनुर्मिषन्तं निमीलिताक्षं वत्समनुप्राप्य अमीमेत्–शब्दं करोति । मीयतिः शब्दकर्मा । यद्वा–उक्तं वत्समनु आत्मानं भृशं प्रक्षिपति । "डुमिञ् प्रक्षेपणे" ( स्वा० उ० ) यङ्लुगन्ताल्लङ् । किंच–तस्य वत्सस्य मूर्धानं ( मस्तकं ) मातवै मातुं–निर्मातुं लेहनेन शोधयितुम् । उशब्दोऽवधारणे । हिङ्ङ्कृणोत् हिङ्कारमकरोत्–करोति किंच–सृक्वाणं वत्सस्य सशब्दवदनप्रान्तं फेनस्य स्रष्टारं घर्मं क्षीरस्य क्षरणशीलम् ( "घृ क्षरणदीप्त्योः" ( जु० प० ) ततो मो गुणः ) वत्समभि–अभिलक्ष्य, वावशाना भृशं कामयमाना मायुं शब्दं मिमाति–निर्मांति करोति तादृशी सती पयोभिः प्रभूतैः क्षीरैः पयते–प्यायते आप्यायनं करोति वत्सम् । अत्रापि ( हिङ्कृण्वतीत्यादिवक्ष्यमाणपूर्वमन्त्रवत्–) मेघपरतया योजनीयम् । एवमाहूता मेघरूपा गौर्धेनुः मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षं लोकाख्यं ( वत्सं– ) पुत्रम् अनु–अनुसृत्य अमीमेत्–गर्जनशब्दं वर्षणचिह्नरूपं करोति । ( मूर्धानं ) मूर्धस्थानीयां भूमिं मातवाउ–निर्मातुमेव । सस्यादियुक्तां कर्तुं हिङ्ङ्कृणोत् हिङ्काररूपं शब्दमकरोत् । प्रतिपादनभेदादपुनरुक्तिः । किंच–सृक्वाणं–फलस्य स्रष्टारं घर्मं दीप्तं पुत्रम् अभिवावशाना आभिमुख्येन कामयमाना पयोभिरुदकैः पयते प्यायते आप्यायनं करोति इति । अत्र कुण्डलितो लेखो मामकः । एवमाहुतेत्युक्तिस्तु–"उपह्वये" इति अनुपदवक्ष्यमाणप्रथममन्त्रवर्णानुसारेण बोध्या ॥

१. एतच्च माध्यमिका वागभिधेयेति पक्षे ॥

२. लेटि "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुगभावः । "इतश्च लोपः परस्मैपदेषु" ( पा० ३-४-९० ) इतीकारलोपः ॥

३. अयं माध्यमिको देव उक्तपूर्वः ( नि० १०-३१ ) ॥

४. सुनोतेर्लेटि "सिब्बहुलं लेटि" ( पा० ३-४-९४ ) इति सिपो बहुलं णित्वात् ( वा० १७९४ ) वृद्धिः । "लेटोऽडाटौ" ( पा० ३-१-९४ ) इति तिपोऽडागमः ॥

**यद्वा पयो यजुष्मदः। अभीद्धो घर्मस्तं सुप्रब्रवीमि। वागेषा माध्यमिका। घर्मधुगिति याज्ञिकाः॥**

**सवानां** रसानाम्। सूयते हि तैरार्द्रीकरणाय। **यजुष्मत्** यजुषा संस्कृतं **पयो** दुग्धं **वा**। **घर्मधुगिति** पक्षे–धेनुरेव धेनुस्ताम् **धेनुमेताम्** अस्मिन्कर्मण्यङ्गभावमुपगताम्। **सुदुघां** सुदोहां (सुष्ठु दोग्ध्रीं) होताहम् **उपह्वये** उपेत्याह्वयामि। अथ मयोपहूताम् **एनाम्** उक्तलक्षणां गां **सुहस्तः** दोहनकुशलो **गोधुक्** गोदोग्धाऽध्वर्युः **उत** अपि **दोहत्** दोग्धु। **नः** अस्मदीयम् **श्रेष्ठम्** अतिशयेन प्रशस्यमेतम् **सवम्** एतद्यजुष्मत्पयः **सविता** प्रसविता सर्वस्याभ्यनुज्ञाता। **सुनोतु** अभ्यनुजानातु। यद्धि सवित्रा प्रसूतं क्रियते तदेव साधु भवति। **अभीद्धः** महाप्रभाव एष **घर्मः** रुचितो महावीरः **तद्** तमेवाधिकृत्य **सुप्रवोचम्** सुप्रब्रवीमि–"आहरैतस्मिन्पय आसेचनाय" इति॥ १॥

अथ—

**अघ्न्या–अहन्तव्या भवति। अघघ्नीति वा। तस्या एषा भवति॥ ९॥ (४३)**

**अघ्न्या** (३१) कस्मात्? सा हि सर्वस्यैव **अहन्तव्या भवति**। अथ **वा अघघ्नीति** सती अघ्न्येत्युच्यते। अघस्य पापस्य दुर्भिक्षादेर्वा हन्त्री। तथा च नञि–अघशब्दे वा उपपदे हन्तेः "अघ्न्यादयश्च" (उ० ४–१०८) इति यत्प्रत्ययान्तो निपातः। यदि वाग् यदि गौरुभयथापि **तस्या** अघ्न्यायाः॥ ९॥ (४३)

**"सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती॥ ५॥"**

(ऋ० सं० २–३–२१)

**सूयेति**। पूर्ववदार्षादिः। माध्यमिका वागुच्यते–हे **अघ्न्ये**! त्वं **सूयवसाद्** शोभनं यवसमुदकमध्यात्मीकृत्य सूयात्। तेन **भगवती** धनवती (निघं० २–१०–१०) सर्वैर्भजनीयेनोदकेनोपेता **भूयाः** भव। **हिः** पूरणे प्रसिद्धौ वा। **अथ** इदानीमेव त्वयि भगवत्यां **वयम्** अपि त्वदुत्सृष्टेन भगेन (उदकेन) **भगवन्तः** धनवन्तः (उदकवन्तः) **स्याम** भवेम। अथैकवारं पूर्वमुक्तमिदानीं सर्वदा कर्तव्यमिति प्रार्थयते–सा च पुनरेवं **विश्वदानीं** सर्वदा। "दानीं च" (पा० ५–३–१८) इतीदमोऽपि विहित इह "सर्वैकान्यकिंयत्तदः काले दा" (पा० ५–३–१५) इत्यधिकृत्य सर्वसमानार्थाद्विश्वशब्दादपि बाहुलकात्स (दानीं प्रत्ययः) काले विधीयते सप्तम्यन्तात्। यथाकालं प्रतिसंवत्सरं **तृणं** मेघं, तृणतेऽसौसाविति तृणस्तम् "उतृदिर् हिंसानादरयोः" (रु० उ०) ततः कर्मणि क्तः "आगमशास्त्रमनित्यम्" (प० ९५) इतीड्भावे नत्वे बाहुलकादेकस्य नस्य लोपे णत्वम् (पा० ८–४–१ वा०) **अद्धि** संचूर्णय। **पिब च शुद्धम्** अकलुषं सर्वतो मध्यस्थानम् **आ** समन्तात् **चरन्ती** सर्वतो निर्गच्छन्ती आसेवन्ती वा॥

अथ यदि गौरित्युपक्रान्ते घर्मधुक्पक्षे तु—यवसमेव यवसम् "यवसं तृणमर्जुनम्" इत्यमरः। तज्जग्ध्वा **सुयवसाद्** सुयवसादिनी सती **भगवती** सर्वैर्भजनीयप्रभूतक्षीरादिधनवती (पयस्विनी) **भूयाः** भव। **हि** निश्चयेन। **अथोऽ**नन्तरमिदानीमेव वा **वयम्** अपि च ततस्त्वत्प्रत्तेन पयसा **भगवन्तः** धनवन्तः **स्याम** भवेम। या त्वमस्माकमेवमुपकारिणी, सा त्वं विश्वदानीं सर्वदा (नित्यकालमेव) **अद्धि तृणमघ्न्ये पिब च शुद्धम्** अकलुषम् **उदकम् आचरन्ती** आसेवन्ती-(आ सर्वतो यथाकाममरण्ये चरन्ती)त्यर्थः॥ ५॥

अथास्या भाष्यम्—

**सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा, पिब च शुद्धमुदकमाचरन्ती॥**

इति। अवगतार्थमेतत्॥

**तस्या एषाऽपरा भवति॥ १०॥ (४४)**

**अपरा** पुनः किमर्थम्? रूपतो हि पूर्वस्मिन्मन्त्रे घर्मधुक् सुतरामुपपद्यते, न मध्यमाऽतोऽपरया वसुभिर्देवैः संबन्धान्माध्यमिकैव देवताऽघ्न्येत्युपपादयति॥ १०॥ (४४)

**"हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात्। दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय॥ २॥"**[1]

(ऋ० सं० २–३–१९)

**हिङ्कृण्वतीति**। पूर्ववदार्षादिः। **हिङ्कृण्वती** हिङ् इत्येवंप्रकारं शब्दं स्तनयित्नुं कुर्वती **वसुपत्नी** वसूनामुदकानामादित्यरश्मीनां वा पत्नी पालयित्री ईश्वरा। **वत्सं** वत्स आदित्यो मध्यस्थानो वा रसहरणाद्वत्सस्तम् **मनसा** नित्यम्

१. यौतिरिह गत्यर्थस्ततो "वहियुभ्यां णित्" (उ० ३–११९) इत्यसुन्। "संज्ञापूर्वको विधिरनित्यः" इति वृद्धिः। अधोगतिस्वभावं सुदकं तदत्तीत्यर्थे ताच्छील्यविशिष्टे कर्तरि क्विप्। "आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" (पा० ३–२–१३४) इत्यनुवृत्तेः। तथा च सुयवसादिनी सती सुयवसादुच्यते। "अन्येषामपि दृश्यते" (पा० ६–३–१३७) इत्युपसर्गस्य दीर्घः॥

१. आहरणस्वाभाव्याद्वसुशब्दो रश्म्यभिधानोऽपि (निघं० १–५–१०) उदके प्रयुज्यते। अत्रापरितुष्यन्नाह–आदित्यरश्मीनां मरुतां वेति। मरुतो देवभेदाः। तथा च मेदिनी–"वसुर्ना देवभेदाग्नि–" इत्यादि॥

इच्छन्ती अभिलषन्ती अघ्न्या माध्यमिका वाग् अभ्यागात् अभ्यागमत् सेयम् अश्विभ्यां द्यावापृथिवीभ्यां सूर्याचन्द्रमोभ्यां वा वर्षाय पयः उदकं दुहां दुग्धां प्रक्षरताम् । अमुना प्रकारेण प्रतिसंवत्सरं वर्धताम् उदकेन । अस्माकं महते सौभगाय यथा महत्सौभाग्यं धनवत्त्वं स्यात्तथा वर्धतामित्यर्थः ॥ २ ॥

अस्याः सुगमत्वादाह—

**इति सा निगदव्याख्याता ॥**

**इति सा** सैषा **निगदव्याख्याता** निगदेन पाठमात्रेणैव व्याख्याता । नास्या व्याख्यापेक्षेत्यर्थः ॥

अथ—

**पथ्या स्वस्तिः । पन्था अन्तरिक्षं तन्निवासात् । तस्या एषा भवति ॥ ११ ॥ ( ४५ )**

**पथ्या ( ३२ ) स्वस्तिः ( ३३ )** इत्येते पदे "पथ्यां स्वस्तिं प्रथमां प्रायणीये यजति" इति दृष्टत्वात् द्विपदमेव समाम्नातम् । तत्र "पन्था पततेः" इत्यादिना पथिन्शब्दो व्याख्यातः ( नि० २–२८ ) पद्यते तत्स्थानिभिरिति पन्था अन्तरिक्षं तत्र भवा पथ्या । "भवे छन्दसि" ( पा० ४–४–११० ) इति यत् "नस्तद्धिते" ( पा० ६–४–१४४ ) इति टिलोपः टाप् । तदाह—पन्थान्तरिक्षमित्यादि । स्वस्तिरिति सुपूर्वादस्तेः क्तिन् "छन्दस्युभयथा" ( पा० ३–४–११७ ) इति सार्वधातुकत्वाद्भूभावाभावः । आर्धधातुकत्वाच्च "श्नसो०" ( पा० ६–४–१११ ) इत्यल्लोपो न भवति । शोभना अस्ति रसवत्तया यस्याः सा । शोभनत्वं चाविनाशित्वात् ॥ ११ ॥ ( ४५ )

**"स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभिया वाममेति । सा नो अमासो अरणे निपातु स्वावेशा भवतु देवगोपा" ॥ ६ ॥**

( ऋ० सं० ८–२–५ )

**स्वस्तिरिति** । वसुकर्णस्यार्षं त्रिष्टुप् पथ्यास्वस्तिदैवत्यम् । इदित्यवधारणे । **स्वस्तिरिद्धि** स्वस्तिरेव हि **प्रपथे** प्रकृष्टे पथि अन्तरिक्षे **श्रेष्ठा** प्रशस्या सर्वदेवताभ्यः । **रेक्णस्वती** धनवती उदकेन । रेक्ण इति धननाम । ( निघं० २–१०– १० ) । **या वामं** वननीयानि वसूनि ( तदुदकानि ) वचनव्यत्यय आर्षो भाष्यकृता कृतः । नित्यम् **अभ्येति सा** स्वस्तिरेव **नः** अस्मान् **अमा** गृहे "वसत" इति शेषः । अमा इति गृहनाम ( अव्ययम् ) ( निघं० ३–४–११ ) **अरणे** अरमणे ( अरण्ये च ) मलोप आर्षः । वर्तमानान् एवं **नि** निर्गमने च । अत्रापि रलोप आर्षः । नीत्येव वा निरित्यस्यार्थे । उपसर्गबलेन च योग्यक्रियाध्याहारः । बहिर्गृहादिति तदर्थः । **पातु** रक्षतु । किंच **देवगोपा** देवी चासौ गोप्त्री चेति देवगोपा सा **स्वावेशा भवतु** सूपचरणा ( सुखेनोपचरितुं योग्या ) **भवतु** अस्माकम् । यद्वा **स्वावेशा** सूपचरणासौ **देवगोपा भवतु** देवान्गोपायत्विति, देवा एनां गोपायत्विति वा ॥ ६ ॥

अथ—

**उषा व्याख्याता । तस्या एषा भवति ॥ १२ ॥ ( ४६ )**

**उषाः ( ३४ )** सा पुनर्व्याख्याता । "उषाः कस्मादुच्छतीति सत्या" इत्यादिना ( नि० २–१८ ) ॥ १२ ॥ ( ४६ )

**"अपोषा अनसः सरत्संपिष्टादह बिभ्युषी । नयत्सीं शिश्नथद्वृषा" ॥ ५ ॥**

( ऋ० सं० ३–६–२० )

**अपेति** । वामदेवस्यार्षं गायत्रमुषोदेवत्यम् । **यत्** यदा **वृषा** वर्षिता मध्यमो वायुः **सीं** सर्वतः **नि शिश्नथत्** निर्हन्ति । इलोपादिरार्षः । श्नथतिर्हिंसाकर्मा नैरुक्तः । मेघम् । तदा तन्निवासिनी **उषाः** माध्यमिका **अनसः** वायोः सकाशात् **बिभ्युषी** मामप्ययं हनिष्यतीति बिभ्यती । बिभेतेर्वर्तमाने लिटः क्वसुः । "वसोः संप्रसारणम्" ( पा० ६–४–१३१ ) उगित्त्वान्ङीप् ( पा० ४–१–६ ) **संपिष्टात्** वायुना संपिष्यमाणात्ततो मेघात् **अपासरत्** अपसरति । वर्तमाने लङ् ( पा० ३–४–६ ) अहेति पूरणः ॥ ५ ॥

अथास्या भाष्यम्—

**अपसरदुषा अनसः संपिष्टान्मेघात् बिभ्युषी ॥**

अथास्य निगमप्रसक्तमनो निर्वक्ति—

**अनो वायुरनितेः ॥**

"अन प्राणने" ( अ० प० ) इत्यस्मादसुनि "संज्ञापूर्वको विधिरनित्यः" ( प० ९४ ) इत्युपधावृद्ध्यभावः । अनिति प्राणत्यनेन प्राणिवर्ग इत्यनो वायुः ॥

---

१. द्यावापृथिव्यावहोरात्रे सूर्याचन्द्रमसौ वाऽश्विशब्दाभिधेयाविति वक्ष्यते । तत्र द्यौर्ज्योतिषाऽश्नुते पृथिवी रसेनान्नलक्षणेन । अहर्ज्योतिषा रात्रिरवश्यायेन । सूर्यो ज्योतिषा चन्द्रमा रसेन आह्लादादिना वेत्यश्नोतेर्विनिप्रत्ययः कर्तरि ॥

२. सायणस्तु—प्लुतेः पुत्रस्य गयस्यार्षम् । तथाचानुक्रान्तम्—"परावतस्त्र्यूना गयः प्लातो द्विस्त्रिष्टुबन्तं तु स्वस्तिनस्त्रिष्टुब्वा सह चोत्तरया पथ्यास्वस्तिदेवत्ये"ति । पृष्ठ्याभिप्लवषडहयोस्तृतीयेऽहनि वैश्वदेवशस्त्रे एतत्सूक्तं वैश्वदेवनिविद्धानमित्याह ॥

१. क्रियाधारस्यैवाधिकरणसंज्ञया सप्तमीविभक्तिभाक्त्वस्याभिधानात् ॥

२. दातॄनस्मान् । किं सर्वस्मात् हविषो गोपायतु इति दुर्गः ॥

३. अथवा—देवा माध्यमिका द्युस्थाना वा रश्मय एनां गोपायन्तु इति दुर्गः ॥

४. अत्रादिना वर्तमाने लुङ् ( पा० ३–४–६ ) अडभावश्च ( पा० ६–४–७५ ) इत्येवम् ॥

**अपिवोपमार्थे स्यादनस इव शकटादिव ॥**

अथवा अनस इवानस इति उपमार्थे औपमिकेर्थेऽनःशब्दः स्यात्। संभावनायां लिङ्। यथा कश्चन शाकटिकः शकटात्केनचित्संपिष्यमाणादपसर्पेदेवं वायुना संपिष्यमाणान्मेघादपासरदुषा इत्यर्थं इत्येवं द्वितीया कल्पना ॥

अथ शकटार्थेऽनःशब्दं निर्वक्ति—

**अनः शकटमानद्धमस्मिंश्चीवरम्। अनितेर्वा स्याज्जीवनकर्मण उपजीवन्त्येनत् ॥**

आनद्ध—मनुस्यूतमस्मिन् शकटे चीवरं मुनिवासो वल्कलादि। एनत् शकटम् उपजीवन्ति। "दुर्भिक्षे नव वृत्तयः" इत्यत्र "शकटः शाकिनी गावः" इत्येवं परिगणनात्। शकटं पुंनपुंसकम्। "क्लीबेऽनः शकटोऽस्त्री स्यात्" इति ॥

यद्वा—

**मेघोऽप्यन इत्यस्मादेव ॥**

एतस्मात् अनितेरुपजीवनार्थादेव। एनमप्युपजीवन्ति प्राणिनो वृष्ट्यर्थिनः। तथाचास्मिन्पक्षे वृषेति कर्तृक्विन्तप्रकृतिकं तृतीयान्तं, वर्षित्रा (वर्षणनिदानभूतेन) वायुना संपिष्टात्संपिष्यमाणादनसः स्वाधारभूतान्मेघादपासरदुषा इत्यर्थः ॥

अथ पूर्वतनानःपक्षेण व्याचष्टे—

**यन्निरशिश्नथद्वृषा वर्षिता मध्यमः ॥**

यत् यदा निरशिश्नथत् निरवधीत् निर्हन्तीत्यर्थः। मध्यमः वायुः ॥

**तस्या एषाऽपरा भवति ॥ १३ ॥ (४७)**

अपरा पुनः किमर्थम्? उत्तमापि ह्युषा आदित्यसंश्रया भवति। इयं तु मध्यमा मेघसंश्रया, वायोरेव संस्तवादिति मध्यमास्वभावप्रायोवृत्त्युपप्रदर्शनार्थम् ॥ १३ ॥ (४७)

**"एतदस्या अनः शये सुसंपिष्टं विपाश्या। ससार सीं परावतः" ॥ १ ॥**

(ऋ० सं० ३–६–२१)

एतदिति। पूर्वया समानार्षादि। विशीर्णमुदकभावेन पृथिवीं संक्लेद्यावस्थितं मेघं दर्शयन्नृषिर्ब्रवीति—एतद् अस्याः उषसः अनः मेघाख्यमाश्रयभूतं सुसंपिष्टं सुष्ठु संचूर्णितं वायुना। इतरदिव शकटानः। विपाशि छिन्नसर्वपाशबन्धनम्। आशये आशेते। "लोपस्त आत्मनेपदेषु" (पा० ७–१–४५) इति तलोपः। "व्यवहिताश्च" (पा० १–४–८२) इत्यादौ व्यवहितप्रयोगः। (आतस्य पृथिवीं शेते–आस्ते) तदा सीम् इयमुषाः माध्यमिका संपिष्यमाणात्तस्मान्मेघात् परावतः दूरदेशात् (निघं० ३–२७–५) ससार अपजगाम। दूराद्दूरतरं ननाशेति दुर्गः ॥ १ ॥

अथास्या भाष्यम्—

**एतदस्या अन आशेते सुसंपिष्टमितरदिव विपाशि–विमुक्तपाशि। ससारोषाः प्रेरितवतः परागताद्वा ॥**

अवगतार्थमेतत् ॥

अथ—

**इळा व्याख्याता तस्या एषा भवति ॥ १४ ॥ (४८)**

इळा (३५) सा पुनर्व्याख्याता "ईट्टेः स्तुतिकर्मणः" (नि० ८–८–१) इति। ईड्यतेऽसाविति "अकर्तरि च कारके संज्ञायाम्" (पा० ३–३–१९) इति घञि पृषोदरादित्वात् (पा० ६–३–१०९) ईडेर्ह्रस्वत्वम्। बह्वृचनयेन डस ळः ॥ १४ ॥ (४८)

**"अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु। उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः" ॥ ४ ॥**

**"सिषक्तु न ऊर्जव्यस्य पुष्टेः"**

(ऋ० सं० ४–२–१६–४–५)

अभि न इति। अत्रेरार्षं शक्करी। यूथस्य मेघसमूहस्य माता निर्मात्री उर्वशी उर्वशीति (नाम्ना) योच्यते इळा इति वा मध्यमा वाक् सा नः अस्मान् नदीभिः नदनाभिरद्भिः स्मत् प्रशस्तं यथा स्यात्तथा अभिगृणातु अभिस्तनयतु। उक्तमेवार्थमेदपक्षेण वक्ति–उर्वशी वा इति। अत्र पक्षे वाशब्द

---

१. यः शकटेन चरति ठक् (पा० ४–४–८) ठस्येकः (पा० ७–३–५०)

२. चीवरेणानद्धनं शकटस्य पुरा मुनिभिः क्रियते स्म। सांप्रतमप्याच्छादनाय शोभार्थं वा वस्त्रे नद्धते तत् ॥

३. सायणस्तु—वृषा कामानां वर्षिता इन्द्रः। यद्यदा सीमेतदुषःसंबन्धि शकटं निरशिश्नथत् न्यवधीत् तदोषा उषोदेवता विम्युषीन्द्रसकाशाद्भीता सती संपिष्टादिन्द्रेण संचूर्णितादनसः शकटादपासरत् अपजगाम। अहेति पूरण इत्येवं व्याख्यत् ॥

१. सायणस्तु—सुसंपिष्टमिन्द्रेण सुष्ठु संचूर्णितमस्या उषसः संबन्धि एतदनः शकटं विपाशि विपाडाख्या नदी तस्यां तत्तीरे आशये आसमन्ताच्छेते। सीमियमुषोदेवता शकटे भग्ने सति परावतो दूरदेशात्ससार अपससारेत्येवं व्याख्यत् ॥

२. तथा चोक्तम्–"द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः" (ऋ० प्राति०) इति ॥

३. सायणस्तु–भौमस्यात्रेरार्षमभिन इति त्रिष्टुप्सिषक्त्वित्येकपदाविराडित्याह ॥

४. अन्तरिक्षस्थाना देवता ॥

इवार्थे ( उपमार्थे ) उर्वशी बहूनां वशयित्री काचित्स्वर्वेश्या सा इव **दिवा** द्योतनवता पात्रेण, विद्युत्सहिते नोदकसमूहेन उपलक्षिता **गृणाना** शब्दयन्ती **अभ्यूर्ण्वाना** सर्वमिदमभिप्रच्छादयन्ती **बृहत्** महत् ( अस्मत् प्रशस्यमाशंसनीयमर्थजातं ) **गृणातु** अर्चतु ( निघं० ३-१४-६ ) प्रयच्छत्वित्यर्थः। किंच **प्रभृथस्य** प्रभृतस्य प्रकर्षेण संभृतस्य ( वर्णव्यत्यय आर्षः ) **आयोः** अयनस्य गमनशीलस्य उदकस्य "समूहेने" तिशेषः। **ऊर्जव्यस्य** यवादेरन्नस्य **पुष्टेः** पोषणाय चतुर्थ्यर्थे षष्ठी ( पा० २-३-६२ )। **नः** अस्मान् **सिषक्तु** सेवताम् ॥ ४-५ ॥

अथास्या भाष्यम्—

**अभि गृणातु न इळा यूथस्य माता सर्वस्य माता सदभिनदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणाना—ऽभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य मनुष्यस्य ( मनुष्यस्य ) ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टेः ॥**

अत्र **मनुष्यस्येत्य**स्याभ्यासः कलिकातामुद्रितपुस्तक एव नान्यत्र मूलपुस्तकेष्वित्युपेक्ष्यः। अवगतार्थमेतन्मन्त्रार्थेन ॥

अथ—

**रोदसी—रुद्रस्य पत्नी । तस्या एषा भवति ॥ १५ ॥ ( ४९ )**

**रोदसी** ( ३६ ) इत्येतत्पदं द्यावापृथिवीनामसु व्याख्यातमाद्युदात्तम् स्त्रीलिङ्गद्विवचनान्ततया नपुंसकद्विवचनान्ततयाऽव्यत्यया वा व्यवस्थितम् निगमानां साधारण्यात्। अन्तोदात्तो रोदसीशब्दोऽयं रुद्रपत्नीवचन इति माधवः। अत्र पुंयोगलक्षणो ङीष् ( पा० ४-१-४८ ) **रुद्रस्य** मध्यमस्थानान्तस्य **पत्नी** विभूतिर्माध्यमिका वाक् । रुद्रशब्दस्य च रोदसादेशः पृषोदरादित्वात् ॥ १५ ॥ ( ४९ )

**"रथं नु मारुतं वयं श्रवस्युमाऽऽहुवामहे । आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी" ॥ ३ ॥** ( ऋ० सं० ४-३-२० )

**रथं न्विति**। श्यावाश्वस्यार्षं मारुतं बृहती। आग्निमारुते विनियोगः। स्तोता ब्रवीति-**वयम्** आत्रेयाः **रथं** रंहणस्वभावं मेघम् **नु** क्षिप्रम् **आहुवामहे** आह्वयामहे वर्षार्थम्। "बहुलं छन्दसि" ( ६-१-३४ ) इति ह्वः संप्रसारणम्। कथंभूतम्? **मारुतम्** मरुत्संयुक्तम् **श्रवस्युम्** श्रवणीयम् यशस्विनम्। अन्नेच्छुमिति सायणः। **यस्मिन्** रथे **सुरणानि** सुष्ठु रमणीयानि उदकानि **बिभ्रती** धारयन्ती **रोदसी** रुद्रस्य पत्नी मरुतां माता, यद्वा रुद्रो वायुस्तत्पत्नी माध्यमिका देवी विभूतिर्वा तस्य **मरुत्सु** मरुद्भिः। अत्र सुपो व्यत्ययः ( पा० ३-१-८५ ) **सचा** सहिता **आतस्थौ** आतिष्ठति। वर्तमाने लिट् ( पा० ३-४-६ ) ॥ ३ ॥

अथास्या भाष्यम्—

**रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामहे आ यस्मिंस्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥ १६ ॥ ( ५० )**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० एकादशाध्यायस्य चतुर्थः पादः ॥ ११ ॥ ४ ॥**

**रोदसी** इति पदाभ्यासोऽध्यायसमाप्तिसूचकः। गतार्थमन्यन्मन्त्रार्थे ॥ १६ ॥ ( ५० )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० एकादशाध्यायस्य चतुर्थः पादः ॥ ११ ॥ ४ ॥

---

## अथ द्वादशोऽध्यायः ।

### प्रथमः पादः ।

व्याख्याता मध्यस्थाना देवताः सवचनलिङ्गविशेषाः। अधुना एतेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः । तदर्थं विशेषतः पुनरधिकारवचनम्—

---

१. आदित्याख्या द्युस्थानदेवतेति सायणः। सा च बृहद्दिवाप्रभृतदीप्तिरिति च। अप्सरःपक्षे साहि शोभनया गात्रयष्ट्या राजानं पुरूरवसमैलं प्रलोभ्य बहुगृणाना स्तुवती चकमे। ततश्चिरं सेवतेस्मापि। पश्चान्निशि विद्युता तदीयं समयबन्धमतिवाह्य मेषाहरणसमये नग्नं तमालोक्यातिजगाम। अनन्तरं च ऊर्जव्यस्य पोषितव्यस्यायोर्मनुष्यस्य वर्षे २ सकृत्तत्सङ्गेन संभृतस्य पुत्रस्य पुष्टेः प्रतिज्ञया सिषक्तिसेत्यैतिहासिकी कथात्रानुसन्धेया ॥

२. असंदीयं कर्मप्रशंसन्ती अभ्यूर्ण्वाना आच्छादयन्ती कं? आयोरायुं मनुष्यं यजमानं, केन? प्रभृथस्य तेजसो वोदकस्य वा दानेनेति सायणः ॥

३. अत्र मनुष्यस्य ज्योतिषो वेति भाष्येऽधिकं पठ्यते। मनुष्यनामसु च आयुशब्दः पठ्यते ( निघं० २-३-१७ )ऽपि। योगार्थेन च ज्योतिरप्यायुरुच्यते। तथाच चतुर्थ्यर्थे षष्ठी ( पा० २-३-६२ ) बोध्या। मनुष्यार्थं ज्योतिरर्थं वा प्रभृतस्य संचितस्योदकस्य समूहेनेत्येवमर्थो बोध्यः ॥

४. नैरुक्तो धातुः ( निघं० ३-२९-३३ ) सेवनार्थः ॥

५. तथाच क्षीरस्वामिनः—"रोदस्यौ रोदसी च ते" इत्यत्र आद्य ईवन्तो दिवि भुवि च वर्तते, अन्त्यः सान्त इति। तत्र रुधेरसुन् पृषोदरादित्वाद्धकारस्य दकारः। स्त्रीलिङ्गे तु"उगितश्च" ( ४-१-६ ) इति ङीप्। "वा छन्दसि" (पा० ६-१-१०६) इति पूर्वसवर्णदीर्घः। आभ्यां हि विविधं रुद्धानि सर्वभूतानि ॥

१. श्रव इत्यन्ननामसु पठ्यते ( निघं० २-७४ ) तत इच्छार्थक्यजन्तात् "क्याच्छन्दसि" (पा० ३-२-१७०) इत्युप्रत्ययः। स ह्यन्नमिच्छन्प्रजायाः समभिवर्षति इति हि तद्भावः ॥

## अथातो द्युस्थाना देवताः ॥

द्यौरासां स्थानमिति द्युस्थानाः । देवता इति बहुवचनं देवबहुलपक्षे ह्युपपद्यते । "व्याख्यास्यन्त" इति शेषः ॥

## तासामश्विनौ प्रथमागामिनौ भवतः ॥

तासां निर्वक्ष्यमाणदेवतानां मध्ये । अश्विनावेव प्रथमागामिनौ प्रथममागन्तुमुपन्यसितुं योग्यौ । कुतः? कालतो हि द्विस्थानानां देवतानां विशेषो विवक्षितः । आश्विने स्तुतशस्त्रके कर्मणि प्रथममश्विनोः कालः सन्धौ । एकश्चाश्वी मध्यस्थान एको द्युस्थानो नैरुक्तानाम् । अतो द्युस्थानमध्यस्थानत्वात्तयोरश्विनोरुपन्यासः । नन्वेवमप्येकस्य मध्यस्थानेऽपरस्य द्युस्थान उपन्यासो युक्त इति चेन्न–तयोरेकैकस्याश्विशब्दस्य पृथग्भावेन स्तुत्यभावात् । अश्विद्वन्द्वस्य चात्यन्तमवियोगात् । नासत्याविति च पृथक्स्तुत्यभावात् । सत्यप्यवियोगे प्राथम्यात्प्रथमस्य समाम्नानं युक्तमिति चेन्न । तत्कालेन मध्यस्थानस्य हीयमानरूपत्वात् । द्युस्थानस्य च वर्धमानरूपत्वात् । अतोऽनन्तरं च द्युस्थानदेवतारूपान्तरसंस्थानादिति ॥

अथ—

## अश्विनौ–यद्व्यश्नुवाते सर्वं रसेनान्यो, ज्योतिषाऽन्यः ॥

अश्विनौ (१) कस्मात्? यत् यतो हि सर्वं भुवनं तौ व्यश्नुवाते व्याप्नुतस्तत्र अन्यः एको मध्यमस्थानः रसेन उदकेन सर्वं व्याप्नोति "अशू व्याप्तौ" (स्वा० आ०) अन्यः अपरो द्युस्थानश्च ज्योतिषा तेजसा सर्वं व्याप्नोतीत्यर्थः । तथाचाश्नोतेर्विन्यन्तौ नित्यं द्विवचनान्तौ ॥

## अश्वैरश्विनावित्यौर्णवाभः ॥

अश्वैस्तुरङ्गैस्तद्वन्तौ राजानौ पुण्यकृतावश्विनावित्यौर्णवाभ आचार्यो मन्यते । तथा च अश्नोतेः क्वुनि (उ० १-१४९) अश्नोतेर्वा, अश्वशब्दस्ततो मत्वर्थे इन्प्रत्यये (पा० ५–२-११५) अश्विन् शब्द एतन्नयेन । सोऽपि नित्यं द्विवचनान्त एव ॥

## तत्कावश्विनौ? द्यावापृथिव्यावित्येके ॥

तत्कावश्विनौ? इति विचारः । तत्र तदिति वाक्योपादाने । कावेतावश्विनाविति विचारार्थः प्रश्नः । अत्रोत्तरमेके–वदन्ति द्यावापृथिव्याविति । द्यौश्च पृथिवी चेति द्वन्द्वः । "दिवो द्यावा" (पा० ६–३–२९) इति दिव्शब्दस्य द्यावादेशः । विज्ञायते हि "तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव ते द्यावापृथिव्यौ" इति ॥ तत्र द्यौर्ज्योतिषा व्याप्नोति, पृथिव्यन्नेन ॥

## अहोरात्रावित्येके ॥

अहर् ज्योतिषा व्यश्नुते रात्रिरवश्यायैः ॥

## सूर्याचन्द्रमसावित्येके ॥

एकेऽपरे पुनः सूर्याचन्द्रमसावश्विनावित्याहुः । तत्र सूर्यो ज्योतिषा व्यश्नुते, रसेन चन्द्रमाः ॥

## राजानौ पुण्यकृतावित्यैतिहासिकाः ॥

अश्वैरश्विनावित्येतन्निर्वचनमस्मिन्पक्षे इतिहासे समवैति ॥

## तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भम् । अनुत्तमो भागो हि मध्यमः । ज्योतिर्भाग आदित्यः ॥

अर्धरात्रादूर्ध्वम् प्रकाशीभावस्य अनुविष्टम्भं विष्टम्भेनानुप्रवेशेनानुगतम् "अव्ययम्" (पा० २–१–६) इत्यव्ययीभावः समास इत्यव्ययम् । ज्योतिषा व्यतिभिद्यमानमिति यावत् । तमो यदा ज्योतिरनुविष्टश्चाति सोऽश्विनोः कालः । ततः प्रभृति सन्धिस्तोत्रं पुरोदयादाश्विनम् । उदिते सौर्याणि । तत्र यत्तमोऽनुप्रविष्टं ज्योतिषि तद्भागो हि मध्यमः । यत् ज्योतिस्तमसि अनुप्रविष्टं तद्भाग आदित्यः । तावेतौ मध्यमोत्तमाविति स्वमतमाचार्यस्य ॥

यतः समर्थनायोदाहरति—

## तयोरेषा भवति ॥ १ ॥

तयोः मध्यमोत्तमयोरश्विनोः ॥ १ ॥

"वसातिषु स्म चरथोऽसितौ पेत्वाविव । कदेदमश्विना युवमभि देवाँ अगच्छतम्" ॥

वसातिष्विति । उपजातदेवतादर्शनचक्षुरतीतेषु रात्रिपर्यायेषु सन्धौ प्राप्ते सहसैवाश्विनौ दृष्ट्वा मन्त्रदृगब्रवीत्–हे अश्विना अश्विनौ! युवं युवाम् वसातिषु रात्रिषु (तासु हि प्राणिनो निवसन्ति) चरथः कथम्? असिताविव पेत्वौ कृष्णाविव मेघौ समानरूपौ । उषसि कथमपि मया लक्षितौ यतोऽतो ब्रवीमि इदम् असत्कर्म (यज्ञाख्यम्) अभिलक्ष्य देवान् ये देवा आगतास्तान्प्रति कदा आगच्छतम् आगतवन्तौ स्थ इति ॥

## इति सा निगदव्याख्याता ॥

इति सा सेयं निगदेन पाठमात्रेण व्याख्याता सरलेत्यर्थं इति नास्य व्याख्यापेक्षास्तीत्यर्थः ॥

---

१. ऊर्ध्वमर्धरात्रात्सूर्योदयपर्यन्तं इति वक्ष्यति । तस्मिन्नान्या देवता उपास्ते अश्विभ्याम् ॥

२. "एकोऽन्यार्थे" इत्यादिकोशेऽर्थव्यत्ययेनान्योऽप्येकार्थ इति व्याख्यामार्गो नैरुक्तानाम् ॥

३. तथाचोक्तम्–"अश्वः कस्माद्? अश्नुतेऽध्वानं महाशनो भवतीति वा" इति (नि० २–२७) ॥

१. अत्र—"वसातिषु स्म चरथो वसातयो रात्रयो वसन्तेऽस्या इतरेतरा तयोर्वक्तेर्वा वहतेर्वा सितौ पेत्वाविव । अपेत्वा वृत्रहणं सुरातयोः" इति कश्चित्पुस्तकेऽपपाठः (प्रक्षिप्तः) पेत्वशब्दो मेघवचनो दुर्गेण व्याख्यातः । निघण्टौ तु नास्ति ॥

**तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति ॥**

तयोः अश्विनोः समानकालयोः । उभयोरपि हि तयोरुभयमर्धरात्रात् काल इति समानः कालः । **समानकर्मणोः** । उभयोरपि तयोरेकं कर्म । तिरो अह्न्याः सोमा अश्विनश्च द्विकालः । **संस्तुतप्राययोः** प्रायेण ( बाहुल्येन ) हि तयोः संस्तवः परिचय एव । तयोः पुनरसंस्तवेनैषोऽर्धर्चो भवति । "संस्तवः स्यात्परिचयः" इत्यमरः ॥

नन्वस्यामृचि "वसातिषु स्म चरथ" इत्युच्यते, वसतयो हि जनपदा अपि प्रसिद्धाः, तदधिपती पुण्यकृतौ राजानावश्वैस्तद्वन्ताविति शक्यते कल्पयितुम् ? तद्यथा-वासात्यौ तद्देशाधिपती कौचिद्राजानौ बह्वश्वौ पुण्यकृतौ यज्ञकर्मणि देवान् प्रति गतौ केनचिदुच्येते-यौ युवां वसातिषु जनपदेषु नित्यमसितावपेतौ समानवेषौ चरथस्तौ युवामिदं देवस्थानं प्रति ये देवा वर्तन्ते, तान्प्रति कदा हे अश्विनौ ! युवामागच्छतमागतवन्ताविति । माभूदेवं मन्त्रार्थयोजनेत्यत आह—

**वासात्योऽन्य उच्यत उषःपुत्रस्त्वान्य इति ॥**

अन्य एको मध्यमो वासात्यो वसाते रात्रेः पुत्र उच्यते, अन्योऽपरश्च सूर्य उषःपुत्र इति । त्व-इति प्रत्यवस्थाता संबोध्यते । एवमेतस्मिन्निभचस्तुतावर्धर्चे उषसः पुत्रेण सूर्येण सह समानव्याख्यानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति ।

**तयोरेषाऽपरा भवति ॥ २ ॥**

अपरा पुनः किमर्थम् ? मध्यमोत्तमावश्विनावित्यस्यैवार्थस्य दृढतायै स्फुटं यदेतस्यामेतत्परस्यामृचि ॥ २ ॥

**"इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः । जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे" ॥ ४ ॥**

( ऋ० सं० २-४-२५ )

**इहेहेति** । अगस्त्यस्यार्षं त्रैष्टुभमाश्विनं प्रातरनुवाकाश्विनयोर्विनियोगः । हे अश्विनौ ! युवाम् **इहेह** इह च-मध्यमस्थाने, इह च द्युस्थाने **जाता** जातौ । "सुपां सुलुक्" ( पा० ७-१-३९ ) इत्यादिना औङ आकारः । रात्रेरुषसश्च पुत्रौ **समवावशीताम्** संस्तूयेथे । पुरुषव्यत्ययः । कथम् ? **अरेपसा** अपापया । **तन्वा** यथा संकल्पतया **स्वैर्नामभिः** परमनाश्रित्य यानि स्वस्तुतिनिमित्तानि नामानि तैः । किंच **वां** युवयोर्मध्ये **अन्यः** एकः वसातिपुत्रो **जिष्णुः** जयशीलः ( नित्यं जेता शत्रूणाम् ) **सुमखस्य** सुमहतो बलस्य **सूरिः** प्रेरयिता शत्रुषु "षू प्रेरणे" ( तु० प० ) ततः क्रिः ( उ० ४-६४ ) स च नान्यो मध्यस्थानादिति मध्यमो मध्यस्थानः । **अन्यः** अपर उत्तमस्थानो **दिवो** द्युलोकस्य **पुत्रः** पुत्रस्थानीय ( आदित्यः ) **सुभगः** शोभनरश्मिरूपधनः । **ऊहे** ऊह्यते वायुना नित्यम् । स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति ॥ ४ ॥

अथास्या भाष्यम्—

**"इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमतो बलस्येरयिता मध्यमो, दिवो अन्यः सुभगः पुत्र ऊह्यते आदित्यः । तयोरेषाऽपरा भवति ॥३॥**

अपरा पुनः किमर्थम् ? संस्तुतप्रायावेतौ समानकालौ समानकर्माणौ-इत्युक्तं तद्रुपप्रदर्शनार्थम् ॥ ३ ॥

**"प्रातर्युजा विबोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये" ॥ १ ॥**

( ऋ० सं० १-२-४ )

**प्रातरिति** । मेधातिथेरार्षं गायत्रमाश्विनम् । प्रातरनुवाके विनियोगः । हे स्तोतः । यावेतौ **प्रातर्युजा** प्रातर्युजौ प्रातर्योगिनौ ( यौ नित्यं प्रातरेव युज्येते हविषा स्तुत्या च ) तावेतौ **अश्विनौ** विसष्टाभिः स्तुतिभिरस्मदर्थं **विबोधय** अवगता-

२ "आवामश्वासः०० अश्विना वहन्तु" ( ऋ० सं० २-४-२५-२ ) इत्युपक्रमात् ॥

२. अत्र सायणः-"सूर्याचन्द्रमसाविलेके" ( १२-१ ) इति निरुक्तमवलम्ब्य तत्परतया व्याचष्टे स । यथा—हे अश्विनौ ! युवां समवावशीतां सह सम्यग्वा स्तुयेथे कामयेथां वा यज्ञं, पुरुषव्यत्ययः । कीदृशौ युवाम् ? इहेह जाता । उभाभ्यामिहशब्दाभ्यां मध्यमोत्तमस्थाने उच्येते तयोः संभूतौ सूर्याचन्द्रमसा-( चन्द्रसूर्यौ- ) विति यावत् । अरेपसा अपापौ-आथर्वणस्य गुरोः शिरश्छेदादिना पापलेपरहिताविति भावः । "आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्" (ऋ० सं० १-८-१७-२) इत्यादिमन्त्रवर्णात् । केन हेतुनेति ? उच्यते-तन्वा शरीरेण शरीरसौन्दर्येण निमित्तेन स्वैर्नामभिः स्वीयैर्माहात्म्यविशिष्टैरश्विनौ नासत्याविलेवमादिभिरपि रमणीयशरीरवत्त्वान्महिमोपेतनामवत्त्वाच्च हेतोः संस्तूयेथे इत्यर्थः । यद्वा-अरेपसा तन्वेति योज्यम् । उक्तप्रकारेण गुरुशिरश्छेदादप्यपापेन शरीरेण तादृङ् महत्त्वख्यापनेनेति यावत् । किंच वां युवयोरन्य एको मध्यमस्यान्तरिक्षस्य पुत्रः पुत्रस्थानीयः सोमो जिष्णुर्जयशीलः सुमखस्य शोभनस्य यज्ञस्य सूरिः प्रेरयिता सन् ऊहे वहति विश्वं जगद्धारयति । चन्द्रात्मनस्तस्योदये सति ओषधिवनस्पत्यादयो वर्धन्ते । अन्य अपर उत्तमस्थानो दिवो द्युलोकस्य पुत्रः पुत्रस्थानीय आदित्यः सुभगः शोभानरश्मिरूपधन ऊहे वहति कृत्स्नमेवं पृथक् जगन्निर्वाहकौ महानुभावौ युवां सह स्तूयेथे इति ॥

१. "रिफ-कत्थनयुद्धनिन्दाहिंसादानेषु" ( तु० प० ) ततोऽसनि फस्य पः पृषोदरादित्वात् ॥

२. मखतिर्गत्यर्थ इह बलार्थः । निर्बलस्य गत्यभावादिति गतिहेतुमाचष्टेऽर्थवशाद्धातूनामनेकार्थत्वात् ॥

स्वद्विवक्षितं कारय। विबोधितौ च त्वया इह मदीये कर्मणि (यज्ञे) अस्माकम् अस्य तदर्थमभिषुतस्य सोमस्य सोमरसस्य पीतये पानाय आगच्छताम् इति ॥ १ ॥

अथास्या भाष्यम्—

**प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय। तयोरेषाऽपरा भवति ॥४॥**

अपरा पुनः किमर्थम्? नैवानयोरन्यस्मिन्काले इज्यास्ति। यद्यपि क्रियते अनिज्यैव सेति सुतरां परया संस्तवकालाद्योपप्रदर्शयति ॥ ४ ॥

**"प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम्। उतान्यो अस्मद्यजते विचावः पूर्वः पूर्वो यजमानो वनीयान्" ॥ २ ॥**

(ऋ० सं० ४-४-१८)

प्रातरिति। आत्रेयं त्रैष्टुभमाश्विनम्। प्रातरनुवाकाश्विनयोर्विनियोगः। हे स्तोतारः! यूयम् अश्विना अश्विनौ प्रातः एव यजध्वम् पूजयध्वम् स्तुध्वम्। हिनोत प्रहिणुत हवींषि। सायं काले हविः देवयाः देवगामि। यातेरसुन्। नास्ति न विद्यते। देवा न स्वीकुर्वन्तीत्यर्थः। अजुष्टम् असेव्यं तद्भवति तेषाम्। "पूर्वाह्णो वै देवानाम्" इति श्रुतिः। यद्वा देवयाः देवयोरनयोर्न सायमस्ति इज्या। यद्यपि कथंचित्स्यात् अजुष्टम् अनासेवितं तदेतदश्विभ्यां कर्म। उत अपि च युष्मासु विलम्बितक्रियेषु अस्मत् अस्मत्तः अन्यः अपरः कोऽपि यजते यजेत सोमेन विच अवः व्यावयेत्तर्पयेच्च हविषा। अवतिरिह तृप्त्यावन्तर्भावितण्यर्थः। आशङ्कायां लेट् (पा० ३-४-८) अव इत्यवेदित्यस्य स्थाने व्यत्ययेन (पा० ३-१-८५)। ततश्च अस्मास्वन्येषु च पूर्वः पूर्वो यजमानः वनीयान् वनयितृतमः संभक्तृतमः। देवानामतिशयेन संभजनीयः संभावनीयो भवतीति तस्यैव हविरासेवेतामश्विनौ नास्माकमिति भावः। अत्र "अन्यो अस्मत्" इति "प्रकृत्यान्तःपादमव्यपरे" (पा० ६-१-११५) इति प्रकृतिभावात्पूर्वरूपाभावः ॥ २ ॥

अथास्या भाष्यम्—

**प्रातर्यजध्वमश्विनौ प्रहिणुत, न सायमस्ति देवेया अजुष्टमेतत्। अप्यन्यो अस्मद्यजते विचावः पूर्वः पूर्वो यजमानो वनीयान्वनयितृतमः ॥**

इति। अवगतार्थं मन्त्रार्थेन ॥

**तयोः कालः सूर्योदयपर्यन्तः ॥**

प्रकाशीभावस्यानुविष्टम्भमित्यतः कालात् (उक्तपूर्वात्) प्रभृति सूर्योदयपर्यन्तस्तयोरश्विनोः कालः। ततः परं यागकालः ॥

१. दुर्गस्तु—प्रहिणोत—प्रकर्षेण तौ प्रति स्तुतीर्हविषि च गमयतेत्येवमाह ॥

ततः किमित्यपेक्षायामाह—

**तस्मिन्नन्या देवता ओप्यन्ते ॥**

तस्मिन् स्तुतिकाले अन्या देवता आश्विने शस्त्रे याः स्तुतिं लभन्ते ताः ओप्यन्ते तासामावापस्तत्कालस्तुतिप्रतिलम्भे इति ॥

तत्र तावदुषाः प्रथममोप्यते इति तद्देवतानि सूक्तानि शस्यन्ते—

**उषाः वष्टेः कान्तिकर्मणः। उच्छतेरितरा माध्यमिका। तस्या एषा भवति ॥ ५ ॥**

उषाः (२) कान्तिकर्मणः कान्त्यर्थस्य वष्टेः "वश कान्तौ" (अ० प०) इत्यस्मात्कसुन्प्रत्यये संप्रसारणम् (पा० ६-१-१६) शस्य षोव्यत्ययेन। यच्चोक्तम् "उच्छतीति सत्या" (नि० २-१८) इति, तद्वा इदं विकल्पेन द्युस्थानायाः। या पुनः इतरा माध्यमिका उषाः, न तस्या विकल्पः, किंतर्हि? उच्छतेरेव सा। विवासनार्थस्य (तु० प०) उदकानि विवासयति विवास्यते वा मेघान्मध्यमेनेति उषाः ॥ ५ ॥

**"उषस्तच्चित्रमाभरास्मभ्यं वाजिनीवति। येन तोकं च तनयं च धामहे" ॥ ४ ॥**

(ऋ० सं० १-६-२६-य० वा० सं० ३४-३३। सा० स० उ० आ० ८-३-८-१)

उष इति। गोतमस्यार्षं उष्णिगुषोदैवत्या। प्रातरनुवाकाश्विनयोर्विनियोगः। हे वाजिनीवति! वाजो हविर्लक्षणमन्नं तद्युक्ता क्रिया वाजिनी तया क्रियया युक्ते। उषः! उषोदेवते! अस्मभ्यं चित्रम् चायनीयम् तत् धनम् आभर आहर। "हृग्रहोर्भश्छन्दसि" (पा० ३-१-८४ वा०) प्रयच्छ। येन त्वत्प्रत्तेन धनेन तोकम् पुत्रं च तनयं तत्पुत्रं (पौत्रं) च धामहे दधीमहि धारयामः। दधातेर्लेटि "बहुलं छन्दसि" (पा० २-४-७३) इति शपो लुक् ॥ ४ ॥

अथास्या भाष्यम्—

**उषस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि। तस्या एषाऽपरा भवति ॥**

चायनीयम् पूजनीयम्। "चायृ पूजानिशामनयोः" (भ्वा० उ०) अनीयर्। मंहनीयम् दातुं योग्यम् मंहते इति (निघं० ३-२-१०) दानकर्मसु पाठात्। वर्धनीयं वा "महि वृद्धौ" (भ्वा० उ० प०) अपरा पुनः किमर्थम्? पूर्वस्यामृचि चित्रं धनमाहरेत्युक्तं, तच्च पुनरुभयोरप्युषसोरविशिष्टम्। विशिष्टं तु परस्यामुत्तमलिङ्गम् "पूर्वे अर्धे रजसो भानुमञ्जते" इति। अतः परा उदाह्रियते ॥ ६ ॥

**"एता उत्या उषसः केतुमक्रत पूर्वे अर्धे**

**रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः" ॥१॥**

( ऋ० सं० १-६-२४-सा० सं० उ० आ० ८-३-१६-१)

**एता** इति । गौतमस्यार्षं जगती उषोदेवत्या । विनियोगः पूर्वं एव । याः **रजसः** अन्तरिक्षलोकस्य पूर्वे **अर्धे** प्राचीनदिग्भागे **भानुम्** प्रकाशम् **अञ्जते** व्यक्तीकुर्वन्ति । भानुना समञ्जत इति भाष्यम् । तस्य भासा आत्मानमभिव्यञ्जयन्तीत्यर्थः । **त्याः** ता **एताः उषसः** प्रभातकालाभिमानिन्यो देवताः **केतुम्** अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रज्ञानं प्रकाशम् **अक्रत** अकृषत कुर्वन्ति । करोतेर्वर्तमाने लुङि ( पा० ३-४-६ ) "मन्त्रे घसे०" ( पा० २-४-८० ) इति च्लेर्लुक् । उ इत्येष पादपूरणः । कथं ता लोकस्य प्रज्ञानं कुर्वन्ति ? **निष्कृण्वाना आयुधानीव धृष्णवः** निरित्येष समित्येतस्य स्थाने इति वक्ष्यति । यथा धृष्णवो धर्षणशीला योद्धारः निष्कृण्वानाः संस्कुर्वाणा नित्यं निर्मृजन्त आयुधानि निर्मलानि कुर्वन्ति । एवं भानुना स्वेन भासा तमोमलमपनीय निर्मलानि प्रज्ञानानि लोकस्योषसः संस्कुर्वन्ति । ततश्च **गावः** गमनस्वभावाः **अरुषीः** आरोचमानाः **मातरः** सूर्यप्रकाशस्य निर्मात्र्यो जगज्जनन्यो वा उषसः । यत एवोदितास्तमेव सूर्यम् **प्रतियन्ति** तत्रैवान्तर्लीयन्ते । सूर्यस्यैव हि रश्मिप्रान्तप्रोत्सार्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते ता उषस इत्याचक्षते । स एष परमार्थतः सूर्य एव स्त्रीलिङ्गविशिष्टो भवति सूर्यकार्यत्वात्प्रकाशस्य । एवंविधा उषसोऽस्मात्रक्षन्त्वित्यर्थः ॥

प्रकाश एवादित्यस्योषस उच्यन्त इत्यर्थं भाष्यकारो ब्रवीति—

**एतास्ता उषसः केतुमक्रुषत प्रज्ञानम् ॥**

**एकस्या एव पूजनार्थे बहुवचनं स्यात् ॥**

तदत्र—

इति वचनभेदप्रतिसमाधानम् । **स्यात्** इति संभावनायां लिङ् । कथमन्यथा तदुपपद्येतेति भावः ॥

**पूर्वे अर्धे अन्तरिक्षलोकस्य समञ्जते भानुना ॥**

**"निष्कृण्वाना आयुधानीव धृष्णवः"—**

अत्र—

**निरित्येष समित्येतस्य स्थाने ॥**

सामर्थ्याद्व्यत्ययः । संस्क्रियमाणानि ह्यायुधानि अतिनिर्मलानि भवन्ति ।

यथा चोपपद्यते उपसर्गव्यत्ययस्तथा निगममुदाहरति—

**"एमीदेषां निष्कृतं जारिणीव"—**

( ऋ० सं० ७-८-३-५ )

**इत्यपि निगमो भवति ॥**

अस्य—"यदादीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः । न्युप्ताश्च बभ्रवो वाचमक्रतँ—"इत्यादिः । कवषस्य वा अक्षस्य वा आर्षं त्रिष्टुप् । कृता निवृत्तिर्देवनादशक्नुवन्नात्मानं धारयितुं ब्रवीति—**यद्** यदा **आदीध्ये** भृशमभिध्यायामि **एभिः** अक्षैः **न दविषाणि** न दूषये न परितापयामि ( अनेनाक्षदेवनेन ) यद्वा न देविष्यामि । अथ तदा **परायद्भ्यः** स्वयमेव परागच्छद्भ्यो देवनस्थानम् । **सखिभ्यः** समानख्यानेभ्यः ( सखिभूतेभ्यः ) कितवेभ्योऽहमेभ्यः **अवहीये** भृशं हीनोऽस्मीत्यनुतपामि । सायणस्तु—अवहीये अवहितो भवामि नाहमक्षान् प्रथमं विसृजामीत्येवमाह । यदा च पुनस्ते प्राप्याऽऽस्फारं निवपन्त्यक्षानिति तैः **न्युप्ताश्च** निक्षिप्ताश्च सन्तस्ते **बभ्रवो** बभ्रुवर्णा अक्षाः । **वाचमक्रत** शब्दं कुर्वन्ति । अथ तदा निवृत्तिमविगणय्य ( संकल्पं त्यक्त्वा ) अक्षव्यसनेनाभिभूयमानोऽहम् **एषाम्** कितवानाम् **निष्कृतम्** संस्कृतं अक्षस्थानम् **जारिणीव** यथा कामव्यसनेनाभिभूयमाना स्त्री चारित्रमात्मनोऽविगणय्य स्वैरिणी सती संकेतस्थानं सहसा याति तद्वत् **एमीद्** आगच्छाम्येव ॥ ५ ॥

**प्रतियन्ति गावो गमनात्, अरुषीरारोचनान्मातरो भासो निर्मात्र्यः ॥**

अवगतार्थमेतन्मन्त्रार्थेन ॥

अथ—

**सूर्या सूर्यस्य पत्नी एषैवाऽभिसृष्टकालतमा । तस्या एषा भवति ॥ ७ ॥**

**सूर्या** ( ३ ) इति वक्तव्यं, सा पुनः **सूर्यस्य पत्नी**, **एषैव** उषा देवता "सूर्याद्देवतायां चाप् वाच्यः" ( पा० ४-१-४८ वा० ) इति पुंयोगे चाप्प्रत्ययः । **अभिसृष्टकालतमा** । यथा यथासौ सूर्यस्योदयकालं प्रति अभिसृष्टतमा—गततमा भवति तथातथा सैषा उषाः सूर्या संपद्यते । अभिसृष्टकालतमेत्युषसो नाम भवति । अत्रासमर्थसमासो गमकत्वात् शिवभागवतवत् ॥

**"सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व" ॥ ५ ॥**

( ऋ० सं० ८-३-२३ )

---

१. आयुधिनस्सञ्जीषना इति दुर्गः ॥

१. अत्र सायणः—ऐलूषस्य कवषस्यार्षं, मूजवतः पुत्रस्याक्षस्य वा इत्युक्त्वाऽनया कितवोऽक्षाश्च निन्द्यन्त इति तद्देवत्येयमित्याह ॥

२. "दूङ् परितापे" ( दि० आ० ) एणबन्धे लेट् ( पा० ३-४-८ ) सिवाडागमौ । शेषं व्यत्ययेन । न द्वेषये । इत्यपि सायणस्तत्रात्मानमिति योज्यम् । अन्यैः कितवैः सहाक्षकैतवेनात्मविद्वेषो भवति तेन ह्यात्मानुतपति ॥

३. अक्षस्थानमसदभिमुखम् । आस्फारं सशब्दम् ॥

४. पिङ्गलवर्णस्तथा च मेदिनी—"बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्" इति ॥

**सुकिंशुक**मिति। सूर्याया आर्षं त्रिष्टुप्। आशिषो देवताः। "या तेनोच्यते सा देवते"ति न्यायादिति सायणः। विवाहे विनियोगः। त्रित्वे तावदुच्यते। प्रभामात्मनः प्रविभज्य तदधिदेवतां ब्रवीति। हे सूर्ये! त्वं **सुकिंशुकम्** सुष्ठु काशनं (दीपनं) लोकानाम्। **शल्मलिम्** सन्नमलम् व्यपगतमलम् **विश्वरूपम्** सर्वरूपम् (सर्वेषां रूपयितारमभिवर्तयितारम्) **हिरण्यवर्णम्** हिरण्योपमवर्णं हिरण्यमिव वरणीयं वा सर्वैः। **सुवृतम्** सुवर्तनम् शोभनैर्वा रश्मिभिर्वृतम्। **सुचक्रम्** सुचङ्कनं सुदीप्तं शोभनचक्रोपेतं वा। **अमृतस्य** उदकस्य **लोकम्** स्थानम् एतमेवंलक्षणं मण्डलस्थम् **आरोह** तत एनमधिरुह्य **स्योनम्** सुखम् **वहतुम्** आत्मनो वहनम् (विवाहम्) एतस्मै **पत्ये** मण्डलाधिष्ठात्रे सूर्याय (तमुद्दिश्य) **कृणुष्व** कुरुष्व॥ ५॥

पृथक्कल्पक्षे तु-रथ एव रथः, सूर्य उद्वोढा, कन्या च सूर्योच्यते एवंलक्षणं रथमारोहेति॥ ५॥

अथास्या भाष्यम्—

**सुकाशनं शन्नमलं सर्वरूपम्। अपिवोपमार्थे स्यात्सुकिंशुकमिव शल्मलिमिति॥**

किंशुकमिति पलाशपुष्पे प्रसिद्धिः। इह तु रक्तपुष्पत्वसामान्यात्सुपुष्पितमिव शल्मलिमिति सामर्थ्यात् तेनोपमानयोग आदित्यस्य पुष्टतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः। शल्मलिमिति ह्रस्वादिरार्षः। शाल्मलिः वृक्षविशेषः। तथाच मेदिनी—"शाल्मलिस्तरुभेदे स्यात्" इति। "पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः" इति चामरः। "शीमर" इति मि० भाषायां प्रसिद्धः॥

अथ निगमप्रसक्तं निर्ब्रवीति—

**किंशुकं—क्रंशतेः। प्रकाशयतिकर्मणः॥**

**क्रंशतेः** नैरुक्तधातोः **प्रकाशयतिकर्मणः** प्रकाशनार्थस्य, तद्धि दीप्तिमद्भवति। तथाच उकन्तः। धातोः किंशादेशः

१. वरपक्षे "वृत्तिर्वर्तनजीवने" इत्यमरात्सुजीविकोपेतमित्यर्थः॥

२. चकतिस्तृप्त्यर्थोऽपीह दीप्त्यर्थे प्रयुक्तः। तृप्त्यर्थेऽपि कथंचित्संगच्छते। सूर्यो वरो वा तर्पयिता लोकस्येति कर्तरि रक्प्रत्ययः। चङ्कनमिति कर्तरि ल्युः (पा० ३-१-१३४) योरनः (पा० ७-१-१)

३. क्रियाविशेषणमेतत्। सुखं यथा स्यात्तथा॥

४. सायणस्तु—शोभनकिंशुकवृक्षनिर्मितम्। तथा शल्मलिं शल्मलिवृक्षनिर्मितम्। विश्वरूपं नानारूपम्। हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालंकारयुक्तं वा इत्येवं व्याख्यत्॥

५. "पलाशे किंशुकः" इत्यमरात्तत्पुष्पमपि किंशुकम्। "पुष्पमूलेषु बहुलम्" (पा० ४-३-१६६) इति पुष्पार्थस्याणो लुप्॥

६. आदित्यो सुपुष्पितशल्मलिवृक्षवद्रक्तवर्णः प्रतिभासत इति प्रसिद्धम्॥

६३ नि०

पृषोदरादित्वादिति बोध्यम्। लोके तु किंचिच्छुक इव। शुकतुण्डाभपुष्पत्वादिति सुबोधिनीकारः॥

**शल्मलिः—सुशरो भवति। शरवान्वा॥**

**सुशरः** सुहिंस्यः। "शॄ हिंसायाम्" (क्र्या० प०) इत्यस्य धातोः कर्मणि घे (पा० ३-३-११८) गुणः। सहि मृदुत्वात्सुहिंस्यो भवति। अथ वा **शरवान्** हिंसावान् **शल्मलिः**। कण्टकैरसौ हिनस्त्यारोहिणम्॥

**"आरोह सूर्ये अमृतस्य लोकम्"**

**उदकस्य सुखं पत्ये वहतुं कुरुष्व॥**

अत्रार्थे निगममुपन्यस्यति—

**"सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वे"ति च ब्राह्मणम्॥**

अत्र **सूर्यां** ज्योत्स्नां **सोमाय** चन्द्रमसे **प्रायच्छत्** प्रयच्छति ददाति। इति नैरुक्तपक्षेऽर्थः। यदुक्तम्—"आदित्यतोऽस्य दीप्तिर्भवति"इति। **प्रजापतये** वेति उषसं वा मध्यस्थानाय प्रजापतये ददाति॥

केचित्त्वैतिहासिकपक्षे इच्छन्ति। तेषामितिहासं शृणु—कथमेतत्? इति

**वृषाकपायी—वृषाकपेः पत्न्येषैवाभिसृष्टकालतमा। तस्या एषा भवति॥ ८॥**

**वृषाकपायी** (४) एषा हि **वृषाकपे**रादित्यस्य **पत्नी** तद्विभूतिः। पुंयोगे "वृषाकप्यग्नि—" (पा० ४-१-३७) इत्यादिना ङीबैकारादेशश्च। सा पुनरेषैव सूर्या अभि०० तमा। वृषाकपायीत्युच्यते॥ ८॥

**"वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे। घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः॥ ३॥"**

(ऋ० सं० ८-४-३)

**वृषाकपायी**ति। इन्द्रस्यार्षं पाङ्क्तं पाद्मपदम्। षष्ठे पृष्ठ्याहनि वृषाकपौ विनियोगः। हे **वृषाकपायि! सूर्ये रेवति!** (रयिमति) धनवति। वर्णव्यत्यय आर्षः। **सुपुत्रे** मध्यमेनेन्द्रेण (आदित्येन), रसहरणसामान्यात्—सहस्थानसामान्यात्। **सुस्नुषे** माध्यमिकया वाचा, मिथुनसामान्यात्। **इन्द्रः**

१. उषःकाले यदवश्यायान्वर्षत्याकम्पयति च लोकांस्तद्गुणयोगाद्वृषाकपिः। सायणस्तु—वर्षकत्वादभीष्टदेशगमनाच्चेत्याह। "कपि चलने" (भ्वा० आ०) तत इन्नलोपश्च। द्विधातुजं रूपं पृषोदरादि॥

२. सायणस्तु—वृषाकपेरिन्द्रपुत्रस्येदं वाक्यमिति स एवास्य ऋषिरिति षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थशस्त्रेऽस्य सूक्तस्यैव विनियोग इति चाह॥

आदित्यः ते तव स्वभूतान् एतान् माध्यमिकान् **उक्षणः** अवश्यायसंस्त्यायान् सेचनसामान्यात् "उक्ष सेचने" ( भ्वा० प० ) "श्वन्नुक्षन्०" ( उ० १–१५७ ) इति कनिन्प्रत्ययान्तो निपातः। **आशु** शीघ्रम्। **घसत्** पिबतु। "घस्लृ अदने" ( भ्वा० प० ) लेट् "इतश्च लोपः परस्मैपदेषु" ( पा० ३–४–९७ ) इतीकारलोपः। सद्युर्यत्तान्पिबति। किंच लमेतत् **काचित्करम्** कमिति सुखनाम, कस्यचित्संघस्तस्य करम् **हविः** उदकम् ( निघं० १–१२–६५ ) अवश्यायलक्षणम् **प्रियं** इष्टम् अन्नभावं निष्पाद्याभिमतमस्माकं कुरुष्व। किमर्थम्? य एष **इन्द्रः** आदित्यः **विश्वस्मात्** सर्वस्मात् **उत्तरः** उत्कृष्टतरस्तदर्थम्। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः ॥ ३ ॥

तथाच भाष्यम्—

**वृषाकपायि रेवति! सुपुत्रे!—मध्यमेन, सुस्नुषे—माध्यमिकया वाचा, ॥**

अत्र प्रसक्तं स्नुषाशब्दमनेकधा निर्वक्ति—

**स्नुषा साधु सादिनीति वा—साधु सानिनीति वा। सु—अपत्यं तत्सनोतीति वा ॥**

**साधौ** शोभनेऽर्थे श्वशुरस्य सन्तानलक्षणे **सीदत्यङ्गभावमुपैतीति स्नुषा। अथ वा साधु सनोति** सन्ततिं संभजतीति स्नुषा। **सु** इति **अपत्यनाम,** प्रसूयते हि तदिति, तदियं श्वशुरस्य **सनोति** सम्भजतीति वा स्नुषा। पृषोदरादिः ( पा० ६–३–१०९ )

**प्राश्नातु त इन्द्र उक्षण एतान्माध्यमिकान्संस्त्यायान् ॥**

**संस्त्यायान**वश्यायसंघातान्। "संघाते सन्निवेशे च संस्त्यायः", "अवश्यायस्तु नीहारः" इति चामरः ॥

**उक्षण उच्छतेर्वृद्धिकर्मणः। उक्षन्त्युदकेनेति वा ॥**

**वृद्धिकर्मणः** वृद्ध्यर्थस्य। वर्धयन्ति हि ते ओषधीरवश्यायाः। त एव वा बहुलाद्वृद्धा भवन्ति। उक्षतेर्वा सेचनार्थस्येत्याह—**उक्षन्तीति**। **उदकेन** हि अवश्यायाः सर्वमिदं सिञ्चन्ति ॥

**प्रियं कुरुष्व सुखाचयकरं हविः सुखकरं हविः ॥**

**सुखाचयकरम्** काचित्करमित्यस्यार्थः उक्तोऽधस्तात्। फलितार्थमाह—**सुखकरं हविरिति** ॥

**सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम् ॥**

तमादित्यमभिकृत्य एतद्ब्रूम इत्याचार्यवचनम् ॥

अथ—

**सरण्यूः—सरणात्। तस्या एषा भवति ॥ ९ ॥**

**सरण्यूः** ( ५ ) इति वक्तव्यम्, सैव उषा यदा सूर्यं प्रत्यविभागेन स्रुता प्रसूता भवति तदा **सरणात्** सरण्यूरित्युच्यते इति दुर्गः। देवराजस्तु—सैवोषा प्रभातकृदुदयावस्था सूर्यं प्रत्यात्मानं सरणेन नयति तदा सरण्यूरित्युच्यते। सर्तेः "पुंसि संज्ञायां घः०" ( पा० ३–३–११८ ) इति घे सरः। सरेण सरणेन नयति "मृतिमृदिकुंषिभ्य" इति बाहुलकान्नयतेरूक्प्रत्ययः। "एरनेकाच०" ( पा० ६–४–८२ ) इति यण् इत्याह ॥ ९ ॥

**"अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदधुर्विवस्वते। उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः" ॥ २ ॥**

( ऋ० सं० ७–६–२३ )

**अपागूहन्निति**। यमपुत्रस्य देवश्रवस आर्षं त्रिष्टुप् सरण्यूदेवत्या। रश्मयः **अमृताम्** मरणधर्मरहितामेतामुषसं वृषाकपाय्यवस्थायां **मर्त्येभ्यः** मनुष्येभ्यः ( तदुत्पत्त्यर्थम् ) **अपागूहन्** अपगूहितवन्तः ( संवृतवन्तः ) उपनीतवन्त इत्यर्थः। तथा **सवर्णाम्** समानवर्णामेतां सरण्यूं **कृत्वी** कृत्वा। "स्नात्व्यादयश्च" ( पा० ७–१–४९ ) इतीकारः। **विवस्वते** आदित्याय। **अददुः** प्रायच्छन्। **उत** अपिच सोषाः **अश्विनौ अभरत्** अप्रीणयत् स्तुतिभिः। स ह्यश्विनोः स्तुतिकालः। अथवा सा सरण्यूरश्विनावभरत् हविषा। स ह्यश्विनोर्यागकालः। **यत्** यदा एवम् **आसीत्** अप्रीणयत् प्रभवति। **तत्** तदा **सरण्यूः द्वा** द्वौ **मिथुना** मिथुनौ "सुपां सुलुक्" ( पा० ७–१–३९ ) इति औङ आकारः। मध्यमं च मध्यमां च वाचम्। **अजहात्** अत्यजत्। उ वितर्के। अयमर्थः—यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन, तदोदिते आदित्ये विच्छिद्यते मध्यमस्याग्नेर्माध्यमिकायाश्च वाचः काल इत्येष तयोस्त्याग इति। एष नैरुक्तमतेनार्थः ॥ २ ॥

**अप्यगूहन्नमृतां मर्त्येभ्यः ॥**

**"कृत्वी सवर्णामदधुर्विवस्वते" ॥**

**अप्यश्विनावभरद्यत्तदासीदजहाद्वौ मिथुनौ सरण्यूर्मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः ॥**

गतार्थमेतत्।

अथैतिहासिकपक्षेण व्याचष्टे भाष्यकृत्—

१. शाकटायनेन तृणादिसूत्रपाठे नैतत्पठ्यत इत्यन्यदीयमेव स्यादिति बाहुलकत्वमस्य गतिरस्तु ॥

२. भाष्ये तु—अप्यगूहन्नित्येवं व्याख्यायते। तन्नयेऽपेत्यपीत्यस्यार्थे संभावनायां वर्तते ॥

**यमं च यमीं चेत्यैतिहासिकाः ॥**

तन्मतेन मन्त्रार्थस्य योजना—यथाह दुर्गः—त एव रश्मयः प्राणाधिदेवताभावमापन्नास्तेष्वन्यत्तद्रूपं चेत्यैतिहासिको व्यवहारः। तां त्वाष्ट्रीं सरण्यूमश्वां कृत्वा, तथा सत्यश्विनोर्जन्मभविष्यत्पश्यन्तो लोकहितायामृताममरणधर्मिणीं देवीमपागूहन्नन्तर्हितां चक्रुः। मर्तेभ्यो मनुष्येभ्य उत्तरान्कुरून्प्रति निन्युः। ततश्चान्यां तत्सवर्णां छायाप्रभवां कृत्वा तामददुर्विवस्वते। **उताश्विनावभरद्यदाश्वं** तदा रूपमासीत्तेन सा सरण्यूरश्विनावभरत् अजनयद्वा अपुष्णादुत्तरेषु कुरुषु। **अजहादु द्वा मिथुना सरण्यूः** । द्वावन्यौ मिथुनौ यमं च यमीं चेति, विवस्वतः सकाशादजहात् हित्वा ननाशेति ॥

यथाह भाष्यकृत्—

**अत्रेतिहासमाचक्षते–त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयांचकार सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव, स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य संबभूव, ततोऽश्विनौ जज्ञाते। सवर्णायां मनुः ॥**

त्वाष्ट्री त्वष्टुर्विश्वकर्मणः प्रजापतेः पुत्री **सरण्यूः** संज्ञापरनाम्नी। **यमौ** यमीं च यमं चेत्यर्थे "पुमान् स्त्रिया" ( पा० १-२-६७ ) इत्येकशेषः। तदाह–**मिथुनौ** इति। स्त्रीपुंसावित्यर्थः। **सा** संज्ञा विवस्वतोऽतितेजसो रूपं सोढुमक्षमा स्वभर्तुस्तस्य ( विवस्वतः ) सेवायै **सवर्णाम्** स्वसमानवर्णाम् **अन्याम्** स्त्रियम् **प्रतिनिधाय** पितुरन्तिकं प्रपेदे। पित्रा च पुनर्विवस्वत एवान्तिकं गन्तुं प्रतिप्रहिता **आश्वं रूपं** वडवादेहं **कृत्वा** इयम् उत्तरान्कुरून्प्रति तपश्चर्तुं **प्रदुद्राव**। **स विवस्वान् आदित्यः** श्वशुरकुले तामन्विष्य तेन पथा भूतमर्थं तदीयवडवारूपेण तत्र तपश्चरणमात्मनो ( विवस्वतः ) सुरूपताया अवगत्य **आश्वमेव रूपं कृत्वा तामनुसृत्य** अमुष्योपसृत्य तया सह **संबभूव** मैथुनधर्मेण सङ्गतः। सा चामुं तत्त्वतोऽजानन्ती नासिकयैव तद्वीर्यमादधौ, **ततो** नासत्यावाश्विनौ **जज्ञाते**। **सवर्णायां मनु**र्वैवस्वतः सावर्णिरिति य उच्यतेऽष्टमो मनूनां स इत्यर्थः ॥

यथा त्वाष्ट्री सरण्यूर्विवस्वतोढा, सा च तस्मान्ननाश—

**तदभिवादिन्येषर्ग्भवति ॥ १० ॥**

**"त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒तीती॒दं विश्वं॒ भुव॑नं॒ समे॑ति। य॒मस्य॑ मा॒ता प॑र्यु॒ह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश" ॥ १ ॥**

( ऋ० सं० ८-६-१३ )

**त्वष्टेति** । पूर्वस्यैव समानार्षविनियोगादि ॥ **त्वष्टा** देवः विश्वकर्मेति यं पुराणविदो वदन्ति सः। **दुहित्रे** दुहितुः "षष्ठ्यर्थे चतुर्थी" ( पा० २-३-६२ वा० ) **वहतुं** वहनं विवाहं **कृणोति** करोति **इति** हेतोः विवाहदर्शनप्रेप्सया **इदं विश्वं** सर्वम् **भुवनम्** भूतजातम् **समेति** समवैति। सङ्घश एकत्र समुदितो भवति । स हि विवाहानां स्वभावः। अथ **यमस्य माता** ( भविष्यतो योगेनैतदुच्यते ) **पर्युह्यमाना** पर्यूढा "यमौ जनित्वे"ति शेषः। यमं च यमीं च जनयित्वा **महः** महतः ( वर्णलोप आर्षः ) **विवस्वतः** देवस्य **जाया** भार्या ( हित्वाऽपत्ये मिथुनौ तदन्ते आश्वं रूपमात्मनः कृत्वा ) **ननाश** ततोऽदर्शनं प्रपेदे। उत्तरान्कुरून्प्रति जगामेति ॥ १ ॥

अथास्या भाष्यम्—

**त्वष्टा दुहितुर्वहनं करोतीदं विश्वं भुवनं समेतीमानि च सर्वाणि भूतान्यभि समागच्छन्ति । यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश ॥**

इति गतार्थं मन्त्रार्थे ॥

नैरुक्तपक्षे तु—**त्वष्टा** मध्यमः तमोभागस्य उषसः **दुहित्रे** दुहितुः दूरेहितायाः प्रकाशरूपायाः **वहतुं** वहनं विवस्वतः **कृणोति** करोति **इति** हेतोः **विश्वं भुवनं समेति** प्रभातमिति मत्वा सर्वाणि भूतानि स्वासु स्वाखितिकर्तव्यतासु अभिसमागच्छन्ति **यमस्य** मध्यमस्य **माता** देवधर्मेण, अथवा द्युस्थानस्य सैव जाया सा मातेति । जायतेऽस्यां पुत्रत्वेन पतिरिति **जाया** भार्या **महः** महतो **विवस्वतः** "प्रकाशेने"ति शेषः। **पर्युह्यमाना** प्रोत्सार्यमाणा **ननाश** नश्यति। वर्तमाने लिट् ( पा० ३-४-६ ) इत्यर्थसमेतं संक्षेपतो भाष्यकृन्निराह—

१. सायणस्तु–अमृतां मरणधर्मरहितामेतां सरण्यूं मर्तेभ्यो मनुष्येभ्यस्तदुत्पत्त्यर्थमपागूहन् अपगूहितवन्तः संवृतवन्तो देवा उपनीतवन्त इत्यर्थः। किंच सवर्णां सरण्यूसदृशीमन्यां स्त्रियं कृत्वी कृत्वा तस्मै विवस्वते देवा अददुः अयच्छन्। उतापि च सा अश्वरूपिणी सरण्यूस्तदश्विनावभरत्स्वोदरे गर्भभूतौ धारितवती। यद्यदा तत् जायापतभ्यामश्वरूपात्मना संभोगकाले रेतः पतितमासीत्तदाश्विनौ जनयामासेत्यर्थः। तथा सरण्यूः सरणवती पतन्नामिका द्वा मिथुना द्वौ मिथुनौ यमयम्यौ अजहात् त्यक्तवती। जनितवतीत्यर्थः। यद्वा सरण्यूरेतन्नामिका मध्यमस्थाना देवता मध्यममग्निं माध्यमिकां वाचं च उत्पादितवती। इत्येवमिमं मन्त्रं व्याचख्यौ ॥

२. सूर्यस्य हि मानुष्यपि ( कुन्ती ) पत्नीति देवीति विशेषणम् ॥

१. पतच्च जायापदस्वारस्यात्। जायतेऽस्यां पुत्रत्वेन पतिरिति तत्पदनिरुक्तेः। तथाच निगमः–"पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः" इति ॥

२. तदन्तिके। अश्वं वडवायाः संबन्धि। तत्सदृशमित्यर्थः ॥

**रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते ॥ ११ ॥**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० द्वादशाध्यायस्य प्रथमः पादः ॥ १२ ॥ १ ॥**

इति । रात्रिरुषा **आदित्यस्य** जाया सा **आदित्यस्योदये** जाते**ऽन्तर्धीयते** अन्तर्हिता भवति । नश्यतीत्यर्थः ॥ ११ ॥

इति श्रीमद्यास्कमुनिप्र० निरुक्तविवृतौ दै० कां० द्वादशाध्यायस्य प्रथमः पादः ॥ १२ ॥ १ ॥

---

## द्वादशाध्यायस्य द्वितीयः पादः ।

अथ—

**सविता—व्याख्यातः ॥**

सविता ( ७ ) इति वक्तव्यम् । स पुनरेष **व्याख्यातः**-"सविता सर्वस्य प्रसविता" इत्येवमभिधानतः ( नि० १०-३१ ) इह पुनरादित्यः ॥

**तस्य कालो यदा द्यौरपहततमस्का कीर्णरश्मिर्भवति ॥**

**यदा** यस्मिन्काले **द्यौरेव अपहततमस्का** निरस्ततमःप्रसारा **भवति** । यतोऽसौ **कीर्णरश्मिः** समन्ततो विक्षिप्तादित्यकिरणा, न पृथिवी । पृथिव्यां तमो भवत्येव ( दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति ) स सावित्रः कालः । तस्मिन्काले आदित्यः सवितोच्यते ॥

**तस्यैषा भवति ॥ १ ॥ ( १२ )**

तस्य सवितुस्तत्कालोपलक्षितस्य **एषा** ऋक् प्राधान्यस्तुतिर्भवति ॥ १ ॥ ( १२ )

**"विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । विनाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो विराजति" ॥ २ ॥**

विश्वेति । श्यावाश्वस्यार्षं जागतम् । सवितृदैवत्यम् । आभिप्लविके प्रथमेऽहनि विनियोगः । शिक्यप्राशप्रतिमोके च यजमानस्यामौ । **कविः** क्रान्तदर्शनः ( मेधावी ) सविता **विश्वा** विश्वानि सर्वाणि **रूपाणि** प्रज्ञानानि **प्रतिमुञ्चते** रूपवत्स्वर्थेषु आबध्नाति । तमोऽपघ्नन् रूपाण्याविष्कुर्वन् । यद्वा आत्मन्येव प्रतिमुञ्चते बध्नाति (धारयति) । सर्वात्मा भवतीत्यर्थः । किंच **द्विपदे** द्विपाद्भ्यो मनुष्यादिभ्यः **चतुष्पदे** चतुष्पाद्भ्यो गवादिभ्यश्च । **भद्रं** कल्याणम् गमनादिविषयं यद्यत्तत्सर्वं **प्रासावीत्** प्रसुवति अभ्यनुजानाति । वर्तमाने लुङ् ( पा० ३-४-६ ) किंच **सविता** सर्वस्य प्रेरको देवो **वरेण्यो** वरणीयः । "वृञ एण्यः" ( उ० ३-९८ ) इति कृत्यार्थे एण्यप्रत्ययः । सन् **नाकं** द्यां च **व्यख्यत्** व्यचिख्यपत् विख्यापयति विदर्शयति तदाहि तस्यां विकीर्णा रश्मयो भवन्ति स देवः **उषसः प्रयाणम्** उदयम् **अनु विराजति** प्रकाशते सवितुरुदयात्पूर्वं ह्युषोदेति, सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा ॥ २ ॥

अथास्या भाष्यम्—

**सर्वाणि प्रज्ञानानि प्रति प्रतिमुञ्चते । मेधावी कविः क्रान्तदर्शनो भवति । कवतेर्वा । प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च, व्यचिख्यापयन्नाकं सविता वरणीयः प्रयाणमनूषसो विराजति ॥**

कविशब्दो मेधाविनामसु पठितः ( निघं० ३-१५-१० ) इति व्याचष्टे **मेधावी भवतीति** । तथा च "क्रमतेः" ( भ्वा० प० ) इन्प्रत्यये ( उ० ४-११४ ) मकारस्य वत्वं रेफलोपश्च बाहुलकात् । "अतीतानागतविप्रकृष्टविषयकं युगपज्ज्ञानं स क्रान्तदर्शन" इत्युवटः । अथ **वा कवतेरेव** गत्यर्थस्य (निघं० २-१४-२७) **कविः** । गच्छत्यसौ नित्यम् । किंच कवित्वादेवेति दुर्गस्तत्र शब्दार्थकः कवतिः ( भ्वा० आ० ) इन् पूर्ववत् । **प्रसुवतीति** "षु प्रसवैश्वर्ययोः" ( तु० प० ) इत्यस्य । तत्र प्रसवोऽभ्यनुज्ञानमित्युक्तम् ॥

अथ **विनाकमख्यत्** इति सवितुः कालोपलक्षकं मन्त्रलिङ्गं तत्पशुगुणसामान्येन समर्थयन्नाह—

**"अधोरामः सवित्र" इति पशुसमाम्नाये विज्ञायते ॥**

तत्—

**कस्मात् ( गुण ) सामान्याद् इति ॥**

चेत्—

**अधस्तात्तद्वेलायां तमो भवति ॥**

उपरिष्टाश्च ज्योतिः । शुक्लं तदा दिवि भवति, कीर्णरश्मित्वात्तस्याः, अधस्तात्तु भूम्यां तदा तमो भवति ॥

**एतस्मात्सामान्यात् ॥**

**सामान्यात्** कालदेवतागुणसामान्यात् । पशुरपि तथारूप एव भवति सावित्रः । अधोराम इति । किमुक्तं भवति ? उच्यते—

---

१. रूप्यते प्रज्ञाप्यते एभिरिति रूपाणि "रूप रूपक्रियायाम्" ( चु० प० ) ततः करणेऽप् । रूपस्य दर्शनं करणं वा रूपक्रिया । तदाह-प्रज्ञानानीति ॥

१. कं सुखं तद्विपरीतमकं दुःखं नास्मिन्नकमस्तीति नाकः स्वर्गः । यजमानार्थं स्वर्गं प्रकाशयतीत्यर्थः । पौराणिकनयेन अन्यत्र च स्वर्गलक्षणमाह—"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इति व्यक्तम् ॥

**अधस्ताद्रामोऽधस्तात्कृष्णः ॥**

इति यदुक्तं स्यात्तदुक्तं भवत्यधोगम इति ॥

अथ कृष्णः—

**कस्मात् सामान्यात् ॥**

रामः

**इति ॥**

उच्यते शृणु—विज्ञायते हि—प्रथमम्—

**अग्निं चित्वा न रामामुपेयात् ॥**

इति ।

**रामा—रमणायोपेयते न धर्माय कृष्णजातीया । एतस्मात्सामान्यात् ॥**

**रामा** इति शूद्रोच्यते सा हि **रमणाय एव उपेयते** उद्यते द्विजैः । **न धर्माय,** रमणार्थमेव सा **कृष्णजातीया** स्त्री रामा । **एतस्मात्सामान्यात्** । इत्येवमेकार्थौ शब्दावधुना उत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत् पश्चादयं रामशब्दो वृत्तः कृष्णसामान्यमात्रेण ॥

**"कृकवाकुः सावित्र" इति पशुसमाम्नाये विज्ञायते ॥**

**सः—कस्मात्सामान्यात्? इति ॥**

उच्यते—

**कालानुवादं परीत्य ॥**

सवितुः **कालमसौ वक्तीति** एवं **परीत्य** विज्ञाय समाम्नाये तस्य सावित्रत्वम् ॥

अधुना कृकवाकुशब्दं भङ्ग्यन्तरेण निर्वक्ति—

**कृकवाकोः पूर्वं शब्दानुकरणम् ॥**

**कृकवाकुशब्दस्य पूर्वं पदं शब्दानुकरणम्** "कृकः" इत्येवमसौ शब्दं करोति ॥

**वचेरुत्तरपदम् ॥**

वाकुरित्येतत् । "कृक" इत्येवं वक्तीति कृकवाकुः । "कृके वचः कश्च" (उ० १-६) इत्युण् प्रत्यये उपधावृद्धिश्चस्य कः । "कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः । "कृकवाकुर्मयूरे च सरटे चरणायुधे" इति विश्वः ॥

अथ—

**भगो—व्याख्यातः ॥**

भगः (८) वक्तव्यः । स पुनरेष व्याख्यातः । "भगो भजतेः" (नि० ३-१६) इत्येवं स्त्रीभगेन शब्दव्युत्पत्तितः । इह पुनः सूर्योऽभिधेयः ॥

**तस्य कालः प्रागुत्सर्पणात् ॥ तस्यैषा भवति ॥ २ ॥ (१३)**

तस्मात्सावित्रात्कालात्परत एतदुक्तं ज्योतिर्भगाख्यं भवति ॥

**"प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह" ॥ २ ॥**

(ऋ० सं० ५-४-८)

प्रातर्जितमिति । वसिष्ठस्यार्षं त्रिष्टुप् भगदैवत्या । **वयम्** तं **प्रातर्जितम्** प्रातः प्राप्तस्तमांसि यो जयति स प्रातर्जित् तम् । **उग्रम्** उद्गूर्णम् **हुवेम** आह्वयामहे । **यः विधर्ता** विधारयिता सर्वस्य जगतः स्वेनानुग्रहेण । किंच **यं भगम्** **आध्रश्चित्** आध्र आढ्यालुः आढ्यानां स्पृहयिता दरिद्रोऽपि **मन्यमानः** आकाङ्क्षन्नहन्यहनि पूजयन्नास्ते । अपिनामोदियाद्भगस्ततोवाप्नार्थं पर्यटेयमिति । एवं **तुरश्चित्** तुरोऽपि यमोऽपि प्रेताधिपतिः । **मन्यमान आस्ते** । तदुदयाद्धि कालातिक्रमेणासावुपसंहरति प्राणिनः । **राजाचित्** राजापि चार्थिनां कार्यचिकीर्षया । **यम् देवम् भगम्** भजनीयम् धनं मह्यम् **भक्षि** विभज देहि **इत्याह** तं वयं प्रातरेव हुवेमेति सम्बन्धः ॥ २ ॥

अथास्या भाष्यम्—

**प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्याध्रश्चिद्यं मन्यमान आढ्यालुर्दरिद्र—स्तुरश्चित् । तुर इति यमनाम, तरतेर्वा, त्वरतेर्वा, त्वरया तूर्णगतिर्यमः । राजा चिद्यं भगं भक्षीत्याह ॥**

आध्रपदमर्थतो निर्वक्ति **आढ्यालु**रिति । आढ्यानां स्पृहयालुरिति वक्तव्ये आढ्यालुः । स एवाध्रः । आढ्यानाभिस्स ध्रियतेऽवतिष्ठत इति कः । पूर्वयोः पदयोराद्यवर्णं एव शिष्यतेऽन्ये लुप्यन्ते पृषोदरादित्वात् । **तरते** रुत्वं, **त्वरतेः** संप्रसारणं च "पुंसि संज्ञायां घः" (पा० ३-३-११८) इति कर्तरिक्तो बाहुलकात् । **त्वरया तुरः** । त्वरते ह्यसौ सर्वान्प्राणिन आभिमुख्येनोपसंहाराय । अत एव **तूर्णगति**स्त्वरितगतिर्यमस्तुर इत्युच्यत इति वर्तुलार्थः ॥

अथात्र—

**अन्धो भग इत्याहुः ॥**

तस्य कोऽर्थः? इत्युच्यते—स हि सूर्यभावम् ।

**अनुत्सृप्तो न दृश्यते ॥**

**अनुत्सृप्तः** अनुद्गतः **न दृश्यते** लोकैरित्यन्धः । न पुन-

---

१. प्रवृत्तः । यथा प्रकृष्टो वीणायामिति प्रवीणस्तत्र गुणसामान्यं प्रावीण्य-(नैपुण्य-)माश्रित्य प्रवीणशब्दो निपुणसामान्ये प्रयुज्यते एवं कृष्णजातीया स्त्री रामेति रामशब्दः कृष्णेऽत्र प्रयुज्यतेऽधोरामोऽधस्तात्कृष्णवर्णं इति तदर्थः । स एव पशुः सवित्रे उपक्रियते इत्याम्नायार्थः ॥

रसावेव न पश्यति । नास्मिन्द्रष्टॄणां ध्यानं दर्शनमस्तीति वाऽन्धः ॥

यत्तु—

**"प्राशित्रमस्याक्षिणी निर्जघाने"ति च ब्राह्मणम् ॥**

ऐतिहासिकपक्षाभिप्रायोऽयमर्थवादः । प्राशित्रभागस्यानन्वीक्षणमुत्यर्थः ।

अत एव च—

**"जनं भगो गच्छती" ति वा विज्ञायते ॥**

अस्य हि—

**जनं गच्छत्यादित्य उदयेन ॥**

इत्येषोऽर्थः । तथाच यो गच्छति सन्ततं जनं प्रति स कथमन्धः स्यात् ॥

अथ—

**सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा । तस्यैषा भवति ॥ ३ ॥ ( १४ )**

सूर्यः ( ९ ) इति वक्तव्यम् । स पुनरयं भगकालात्स्मृतः सूर्यो भवति । ततश्च **सर्तेर्वा** गत्यर्थस्य ( भ्वा० प० ) **सुवतेर्वा** प्रेरणार्थस्य ( तु० प० ) प्रसवार्थस्येति दुर्गः । तथा च सरत्याकाशे इति । सुवति कर्मणि लोकं प्रेरयतीति वा सूर्यः । "राजसूयसूर्य०" ( पा० ३–१–१४४ ) इत्यादिना क्यबन्तो निपातः । **स्वीर्यतेर्वा** । सुपूर्वस्य वा ईर्यतेर्गत्यर्थस्य कर्मणि प्रत्यये सूर्यः । वायुना ह्ययं सुष्ठु ईर्यते प्रेर्यत इत्यर्थः । **भवति** प्राधान्यस्तुतिः ॥ ३ ॥ ( १४ )

**"उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम्" ॥ १ ॥**

**( ऋ० सं० १–४–७ य० वा० सं० ७–४१ सा० सं० छ० आ० १–१–३०–१० )**

**उदुत्यमिति** । प्रस्कण्वस्यार्षं गायत्रं सूर्यदैवत्यम् । आश्विने विनियोगः । **केतवः** प्रज्ञापकाः रश्मयः । अश्वा वा । **विश्वाय** विश्वेषां भूतानाम् । "षष्ठ्यर्थे चतुर्थी" ( पा० २–३–६२ वा० ) वचनव्यत्यय आर्षः । **दृशे** दर्शनाय भावे क्विप् । यद्वा द्रष्टुम् "दृशे विख्ये च" ( पा० ३–४–११ ) इति निपातः । यं **सूर्यम्** । **उद्वहन्ति** उदयमुपनयन्ति । 'उ' इत्यनर्थकः । उक्तं च—"मिताक्षरेष्वनर्थकाः कमीमिद्विति" ( नि० १–९ ) **त्यं** तम् **जातवेदसम्** जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा । वेत्तेरसुन् । **देवं** वयमभिप्रेतार्थसिद्ध्येऽभिष्टुम इत्यर्थः ॥ १ ॥

अथास्या भाष्यम्—

**उद्वहन्ति तं जातवेदसं रश्मयः केतवः । सर्वेषां भूतानां दर्शनाय सूर्यमिति । कमन्यमादित्यादेवमवक्ष्यत् । तस्यैषाऽपरा भवति ॥ ४ ॥ ( १५ )**

अपरा–पुनः किमर्थम् ? जातवेदसं सूर्यमिति श्रवणात्सन्देहः–किमियं जातवेदस्युत सौरीति ? । परा त्वसंशयमेव सौरीति परां निजगाद ॥ ४ ॥ ( १५ )

**"चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च" ॥ १ ॥**

**( ऋ० सं० १–८–७ य० वा० सं० ७–४२ )**

**चित्रमिति** । कुत्सस्यार्षं त्रैष्टुभं सूर्यदेवताकम् । आश्विने विनियोगः । यदेतत् **चित्रम्** चायनीयं पूजनीयम् "चायृ पूजानिशामनयोः" ( भ्वा० उ० ) ततः कृत्यार्थे क्रप् । चायश्चिभावश्चुक् च बाहुलकात् । **देवानाम्** दीव्यन्तीति देवास्तेषां रश्मीनाम् **अनीकम्** समूहः **उदगात्** उदगमत् उदयाचलं प्राप्तमासीत् । एतस्मिन् **मित्रस्य वरुणस्याग्नेः** च **चक्षुः** ख्यानं सायुज्यम् अस्ति । यद्वा उपलक्षणमेतत् मित्राद्युपलक्षितानां जगतां प्रकाशकं चक्षुरिन्द्रियस्थानीयमेतत् । उदयं प्राप्य च **द्यावापृथिवी** द्यावापृथिव्यौ दिवं च पृथिवीं च । "दिवसश्च पृथिव्याम्" ( पा० ६–३–३० ) इति दिवो द्यावादेशः । "वा छन्दसि" ( पा० ६–१–१०६ ) इति वा पूर्वसवर्णदीर्घः । **अन्तरिक्षम्** । **आप्राः** स्वकीयेन महत्त्वेन तेजसा वाऽऽपूपुरत् आपूरयति ईदृग्भूतमण्डलान्तवर्ती । स एष **सूर्यः** अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा **जगतः** गतिमतो जंगमस्य **तस्थुषः** स्थितवतः स्थावरस्य च **आत्मा**

१. प्राशुरसर्पणाद्भगकाल इत्युक्तत्वात्ततः परतः काल उत्सर्पणक्रियावच्छिन्नोऽस्येत्युत्सर्पणात्सूर्य इत्यायातम् ॥

२. स एव हि इदं सर्वं प्रसुवति जनयतीत्यर्थं इति तद्व्याख्यानम् । अत्रास्त्विदं तु प्रसवार्थस्य सूङ आत्मनेपदिषु सूते सुयते इति वा भवति न तु सुवतीति ॥

३. केतुशब्दो हि प्रज्ञानामसु पठितः ( निघं० ३–९–२ ) "कि ज्ञाने" ( जु० प० ) इत्यस्मात्तुनि साधुः । प्रज्ञापनसामान्यादश्वा अपि केतवो रश्मिवद् ॥

१. एतेन य एतान्मित्रप्रभृतीन्सूर्यात्मना पश्यति स साधुपश्यतीत्यभिप्रायः । विज्ञायते हि रहस्यब्राह्मणे—"य एष सूर्य आत्मा जगतस्तस्थुषश्चेति एतदिदैवोपेक्ष्यम्" इति ॥ भेदपक्षे तु—मित्रप्रभृतीनामेतच्चक्षुरिति । याज्ञिकपक्षे चक्षुषा ते पश्यन्तीति । तत्रापि विज्ञायते हि–"एष हि विश्वेषां देवानां चक्षुः" इति । तदाह–यद्देत्यादि ॥

२. "प्रा पूरणे" (अ० प०) लुङि कालपुरुषव्यत्ययः । अदादित्वाच्छपो लुक् ॥

३. जगत इति गच्छतेरतिप्रत्ययान्तो निपातः ( उ० २–२३) तस्थुष इति तिष्ठतेर्लिटः क्वसुः । द्विर्वचने "शर्पूर्वाः खयः" ( पा० ७–४–६१ ) इति थस्य शेषश्चर्त्वम् । षष्ठ्येकवचने "वसोः संप्रसारणम्" ( पा० ६–४–१३१ ) संप्रसारणमालोपः शासिवसीति षत्वम् ॥

सर्वभूतानुप्रवेशी । यद्वा—आत्मा स्वरूपभूतः कारणत्वात् । कारणाच्च कार्यं नातिरिच्यते । तथा च पारमर्षं सूत्रम्—"तदनन्यत्वमारम्भणशब्दादिभ्यः" ( वेद० १ अ० २ पा० १४ सू० ) इति । यद्वा स्थावरजङ्गमात्मकस्य प्राणिजातस्य जीवात्मा । उदिते हि सूर्ये पूर्वं मृतप्रायं सर्वं जगत्पुनश्चैतन्ययुक्तं सदुपलभ्यते । तथा च श्रूयते—"योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेतीति ( तै० आ० प्रथमाध्याये ) ॥ १ ॥

अथास्या भाष्यम्—

**चायनीयान्देवानामुदगमदनीकं, ख्यानं मित्रस्य वरुणस्याग्नेश्च । अपूपुरद्द्यावापृथिव्यौ चान्तरिक्षं च, महत्त्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च ॥**

अवगतार्थमेतन्मन्त्रार्थेन ॥

**अथ यद्रश्मिपोषं पुष्यति तत्पूषा भवति । तस्यैषा भवति ॥ ५ ॥ ( १६ )**

**यत्**—यदाऽयं सूर्यः तेजसाऽऽपूर्णः सन् **रश्मिपोषं पुष्यति** रश्मीन्बिभर्ति **तद्** तदैवासौ **पूषा** ( १० ) तन्नामको देवो **भवति** संपद्यते । "पुष पुष्टौ" ( दि० प० ) "श्वन्नुक्षन्पूषन्०" ( उ० १–११५ ) इति कनिन्प्रत्ययान्तो निपातः ॥ ५ ॥ ( १६ )

**"शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु" ॥ १ ॥**

( ऋ० सं० ४–८–२४ सा० सं० छ० आ० १–२–३–३ )

**शुक्रं त** इति । भारद्वाजस्यार्षं त्रैष्टुभं पौष्णम् । चातुर्मास्येषु पौष्णे हविषि विनियोगः । हे **पूषन्** ! **ते** तव **शुक्रम्** शुक्लवर्णम् **अन्यत्** एकमहर्भवति वासरात्मकम् । यत् **यजतम्** यज्ञार्हम् । यजतेः कृत्यार्थेऽतच्प्रत्ययः । **अन्यत्** तद्विपरीतमयज्ञियं **ते** अपरमहर्भवति यल्लोहितादि, भगांशम् । मुहूर्तात्मको हि स कालोऽयज्ञिय ( आसुर ) इति "........
..........................................................
..........................................................

स्मृत्या वेद्यते । आम्नायते च—'तस्मादेतौ भगांशौ यज्ञे न यजन्ते ।" इति । एवं **विषुरूपे** नानारूपे **अहनी असि** भवसि **द्यौरिव** सा यथा प्रकाशाप्रकाशाभ्यां द्विरूपा भवति तद्वत् । यद्वा—शुक्लकृष्णे अहोरात्रे एवाहःपदाभिधेये **द्यौ**रपि तयोः शुक्लकृष्णभावं भजते । उदयेन कर्मणा शुक्लमहः करोषि । अस्तमयेन च कृष्णं रात्र्यात्मकम् **द्यौरिवासि**—यथा द्यौरात्मत्र सर्वं वर्तते एवं त्वमपि । किंच—हे **स्वधावः** ! स्वधावन् अन्नवन् ! स्वधा इत्यन्ननाम ( निघं० २–७–१७ ) ततोऽस्त्यर्थे मतुप् । तदन्तस्य "मतुवसोरुसंबुद्धौ छन्दसि" ( पा० ८–३–१ ) इति रुत्वम् । **विश्वा हि मायाः** सर्वाः प्रज्ञाः प्रज्ञावतां त्वमेव **अवसि** ददासि पालयितृत्वात्पालयसि । उपगृह्णासि । यं त्वामेवमादिगुणयुक्तमद्राक्षम तस्य **ते** तव **भद्रा** भन्दनीया ( सुखयित्री ) "भदि कल्याणे सुखे च" ( भ्वा० आ० ) **रातिः** दानम् **इह** अस्मिन्यज्ञकर्मणि सुखासान्प्रति **अस्तु** भवतु इत्येवमाशास्महे ॥ १ ॥

**तस्य एषाऽपरा भवति ॥ ६ ॥ ( १७ )**

**अपरा** पुनः किमर्थम् ? इति—पथि रक्षितृत्वे पूष्णोऽधिकार इत्येतत्परिप्रख्यानार्थम् । अथवा "इयं वै पूषा" इति विज्ञायते स्त्रीलिङ्गं तद्व्युदासार्थम् ॥ ६ ॥ ( १७ )

**"पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् । स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्रपूषा" ॥ ३ ॥**

( ऋ० सं० ४–८–९ ) ( य० वा० सं० ३४–४२ )

**पथस्पथ** इति । भरद्वाजस्य ऋजिश्वन आर्षं त्रिष्टुब्वैश्वदेवी । पौष्णे हविषि पञ्चमेऽहनि व्यूढे विनियोगः । **पथस्पथः** सर्वस्य मार्गस्य "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" ( पा० ८–३–५३ ) इति विसर्जनीयस्य सत्वम् । **परिपतिम्** अधिपतिम् **अर्कम्** अर्चनीयं पूषणम् **कामेन** काम्यमानेन फलेन च **कृतः** वशीकृतः स्तोता **वचस्या** वचनेन स्तुत्या **अभ्यानट्** अभ्यश्नुतामभिव्याप्नोतु प्राप्नोतु ।

१. रश्मिभिः पुष्टो भवति । "स्वे पुषः" ( पा० ३–४–४० ) इति करणे उपपदे पुषेर्णमुल् । स्व इत्यर्थग्रहणं तेन स्वरूपे पर्याये विशेषे चेति तत्र व्याख्यातं, रश्मयोऽप्यस्य स्वभूता एवेति । पुष्यतीत्यनुप्रयोगस्तु "कषादिषु यथाविध्यनुप्रयोगः" ( पा० ३–४–४६ ) इत्यनेन ॥

२. "भगांशरूपेण हि नायमिज्य" इत्याम्नायेन बोध्यते । सायणेन तु इत्थमयं मन्त्रो व्याख्यातः—"हे पूषन् ! ते तव शुक्लं शुक्लरूपमेकमन्यदहर्भवति । वासरात्मकम् । तथा ते तव संबन्धि यजतं । यजिरत्र सङ्गतिकरणे वर्तते । यजनीयं प्रकाशेन सङ्गमनीयं, स्वतः कृष्णवर्णमन्यदेकमहर्भवति । रात्र्याख्यम् । इत्थं विषुरूपे शुक्लकृष्णतया नानारूपे अहनी तव महिम्ना निष्पद्येते । यद्वा—हे पूषन् ! त्वदीयमन्यदेकं रूपं शुक्लं निर्मलं दिवसस्योत्पादकं, त्वदीयमन्यदेकं रूपं यजतं केवलं यजनीयम् न प्रकाशकम् । रात्रेरुत्पादकम् । अत एव विषुरूपे विषमरूपे अहनी—अहश्च रात्रिश्च भवतः । अहोरात्रयोर्निर्माणे सूर्य एव कर्ता । कथमस्य प्रसक्तिरिति ? तत्राह—द्यौरिवासि । यथा द्यौरादित्यः ( द्यौर्भानुरित्यहर्नामसु पाठात् ) ( निघं० ११९ ) प्रकाशयिता तथा त्वं प्रकाशकोऽसि । कुतः ? इत्यत आह—हे स्वधावोऽन्नवन्पूषन् ! विश्वाः सर्वा मायाः प्रज्ञा हि यस्मात् कारणात् अवसि रक्षसि अतः कारणात्त्वं सूर्य इव भवसीत्यर्थः । तादृशस्य ते तव भद्रा कल्याणी रातिर्दानमिहास्मासु अस्तु भवतु" इति ॥

**स** च पूषा तेनाभिव्याप्तोऽभिमुखीकृतः सन् **नः** अस्मभ्यम् **शुरुधः** शुग्रुधः शुचं या रुन्धन्ति संपद्वत्ताः **चन्द्राग्राः** चायनीयाग्राः अभिपूजितागमनाः ( धर्म्यमागमनं यासां ताः ) **रासत्** ददातु । "रा दाने" ( अ० प० ) अस्माल्लेटि रूपम् । "सिब्बहुलं लेटि" ( पा० ३–१–३४ ) इति सिप् । लेटोऽडा-गमश्च ( पा० ३–४–९४ ) "इतश्चलोपः" ( पा० ३–४–९७ ) किंच तैर्धर्मलब्धैर्धनैः **पूषा** देवः । अस्माकम् **धियंधियम्** कर्मकर्म । धीरिति कर्मनाम ( निघं० २–१–२१ ) इष्टि–प-शु–सोमादिलक्षणं **प्रसीषधाति** प्रसाधयतु । यागायाविघ्नेनो-पनामयत्वित्यर्थः लेटो रूपम् ॥ ३ ॥

अथास्या भाष्यम्—

**पथस्पथोऽधिपतिं वचनेन कामेन कृतोऽभ्या-नऽर्कम् । अभ्यापन्नोऽर्कमिति वा । स नो ददातु चायनीयाग्राणि धनानि कर्म कर्म चनः प्रसा-धयतु पूषेति ॥**

**अभ्यापन्नोऽर्कमिति** । अत्रार्थेऽहमिति कर्तृपदं बोध्यम् । स्तुत्या कामप्राप्त्यर्थमर्कमभ्यापन्नोऽस्मीत्यर्थः । सोऽभ्यापादितोऽ-स्माभिरासदस्मभ्यम् इत्येवं यथापूर्वमेव, अत्रार्थे "अस्मदो द्वयोश्च" ( पा० १–२–५९ ) इति बहुवचनम् ॥

**अथ यद्विषितो भवति तद्विष्णुर्भवति । विष्णुर्विशतेर्वा व्यश्नोतेर्वा । तस्यैषा भवति ॥ ७ ॥ ( १८ )**

**यद्** यदा **विषितः** व्याप्तोयऽमेव सूर्यो रश्मिभिर्भवति **तत्** तदा **विष्णुः** ( ११ ) **भवति** । "विष्लृ व्याप्तौ" ( जु० उ० ) इत्यस्मात् "विषेः किच" ( उ० ३–३७ ) इति नुप्र-त्ययः षत्वम् । **विष्णुः** कस्मात् ? **विशतेर्वा** "विश प्रवेशने" ( तु० प० ) इत्यस्यैव वा, पृषोदरादित्वात्षत्वणत्वादिः । अत्र वाकारो वेवेष्टिना विकल्पं गमयति । यदाविष्टः प्रविष्टः सर्वतो रश्मिभिर्भवति तदा विष्णुर्भवति । अथ **वा व्यश्नोतेर्**विपूर्व-स्याश्नोतेर्विष्णुः । यदा रश्मिभिरतिशयेनायं व्याप्तो भवति व्याप्नोति वा रश्मिभिरयं सर्वं, तदा विष्णुरादित्यो भवति ॥७॥ ( १८ )

**"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे" ॥ २ ॥**

( ऋ० सं० १–२–७ य० वा० सं० ५–१५ सा० सं० उ० आ० ८–२–५–२ अ० सं० ७–२६–४ )

**इदमिति** । मेधातिथेरार्षं गायत्रं वैष्णवम् । प्रायश्चित्ते आज्यासादने च विनियोगः । **विष्णुः** आदित्यः यत् **इदम्** किंचिद्विभागेनावस्थितं तद् **विचक्रमे** विविधं क्रमते । वर्त-माने लिट् ( पा० ३–४–६ ) कुतः ? इत्यत आह—**त्रेधा निदधे पदम्** त्रेधा त्रिभिः प्रकारैः । "एधाच्च" ( पा० ५–३–४६ ) इति प्रकारार्थे एधाच्प्रत्ययः । पदं निदधे नितरां धत्ते । वर्तमाने लिट् ( पा० ३–४–६ ) क्व ? तत्र तावत्–पृथिव्यां अन्तरिक्षे दिवीति शाकपूणिः । पार्थिवोऽग्नि-र्भूत्वा पृथिव्यां यत्किंचिदस्ति तद्विचक्रमे–तदधितिष्ठति । अन्त-रिक्षे विद्युदात्मना, दिवि सूर्यात्मना । यदुक्तम् "तमू अकृण्व-न्त्रेधा भुवेकम्" ( ऋ० सं० ८–४–११–५ ) इति । तत्र यदेतद् **पांसुरे** प्यायने सर्वभूतवृद्धिहेतौ एतस्मिन्नन्तरिक्षे **अस्य** विष्णोः पदं मध्यंदिनं विद्युदाख्यम् तत् **समूढम्** अन्तर्हितम् न नित्यं दृश्यते । तदुक्तम्—"स्वप्नमेतन्मध्यमं ज्योतिरनित्यदर्शनम्" इति ॥ २ ॥

१. सायणस्तु—"शुरुधः शुचो रोधयित्रीर्गाश्चन्द्रागाग्राः च-न्द्रमिति हिरण्यनाम ( निघं० १–२–२ ) हिरण्यप्रमुखाः । यद्वा स्वर्णचक्रा" इत्येवं व्याख्यत् ॥

तथाच भाष्यम्—

**यदिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय, पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौ-र्णवाभः । समूढमस्य पांसुरे प्यायनेऽन्तरिक्षे, पदं न दृश्यते, अपिवोपमार्थे स्यात् समूढमस्य पांसुल इव पदं न दृश्यत इति ॥**

**समारोहणे**–उदयगिरावुद्यन्पदमेकं निधत्ते । **विष्णुपदे** मध्यंदिनेऽन्तरिक्षे । "वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी" इत्यमरः । **गयशिरसि** अस्तगिरौ **इत्यौर्णवाभ** आचार्यो मन्यते । **अपि वा** अथवा **उपमार्थे स्यात् समूढमिव पांसुले पदमस्य न दृश्यत इति** । यथा पांसुले धूलिमये प्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वान्न दृश्यते, एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकाल-मेव व्यवधीयते नावतिष्ठत इत्यर्थः । पांसुर इति रो मत्वर्थः ॥

अथ निगमप्रसक्तं निर्वक्ति—

**पांसवः—पादैः सूयन्त इति वा, पन्नाः शेरत इति वा । पिंशनीया भवन्तीति वा ॥ ८ ॥ (१९)**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे० दै० कां० द्वादशाध्यायस्य द्वितीयः पादः ॥ १२ ॥ २ ॥**

**पांसवः** कस्मात् । ते हि **पादैः सूयन्ते** जन्यन्त इत्यर्थः । अथ **वा** पन्नाः पतिताः शेरत इति पांसवः । अथ **वा पिंशनीयाः** ध्वंसनीयाः ( ध्वंसनार्हाः ) ( "पिशि अवयवे" ( भ्वा० प० ) अवयवश्चूर्णीभाव इति ) ते **भवन्ति** तदाकी-र्णस्य दुर्दर्शीकत्वात् ॥ ८ ॥ ( १९ )

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० द्वादशा-ध्यायस्य द्वितीयः पादः ॥ १२ ॥ २ ॥

## द्वादशाध्यायस्य तृतीयः पादः ।

अथ क्रमप्राप्तः—

**विश्वानरो व्याख्यातस्तस्यैष निगमो भवत्यैन्द्यामृचि ॥ १ ॥ ( २० )**

**विश्वानरः** ( १२ ) वक्तव्यः । स पुनरेष **व्याख्यातः** अभिधानव्युत्पत्तितः "प्रत्यृतः सर्वाणि भूतानि" ( नि० ७–२१ ) इति । इह तु नियमतो द्युस्थानः । **निपातो** नाम अप्राधान्यं भक्तिरित्यर्थः । यदसावन्यदेवताके मन्त्रे निपतति । नैघण्टुकसमाख्येति यावत् । तदेतदुक्तमधस्तात् ( पृ० ५४ पं० ९ ) ॥ १ ॥ ( २० )

**"विश्वानरस्य वस्पतिमनानतस्य शवसः । एवैश्च चर्षणीनामूती हुवे रथानाम्" ॥ ४ ॥**

( ऋ० सं० ६–५–१ सा० सं० छं० आ० ४–२–३–५ )

**विश्वानरस्येति** । "आ त्वा रथम्" इत्यैन्द्रे सूक्ते प्रियमेधेनाङ्गिरसेन दृष्टेऽनुष्टुब्वैन्द्री । निष्केवल्ये विनियोगः । अहम् **अनानतस्य** अनानतज्योतिर्बलस्यान्यैर्ज्योतिर्भिरनभिभूतप्रकाशस्य **विश्वानरस्य** आदित्यस्य, **शवसः** महतो बलस्य च **पतिम्** पातारम् रक्षितारमिन्द्रमस्मिन्यज्ञे वः युष्माकमर्थसिद्धये **हुवे** आह्वयामि । अत्र "षष्ठ्याः पतिपुत्र०" ( पा० ८–३–५३ ) इति सत्वम् । कैः ? **चर्षणीनाम्** मनुष्याणाम् ( निघं० २–३–८ ) **एवैश्च** अयनैः कामैरवनैर्गमनैर्वा तं प्रति निमित्तभूतैः **रथानाम्** रंहणानां रश्मीनाम् **ऊती** ऊत्या च पथा, अवन–( गमन– )साधनेन मार्गेण, येन त इमं लोकमागच्छन्ति तेन ( पथा ) भवतामहमिन्द्रमाह्वयामि ॥ ४ ॥

अत्र "विश्वानरस्य वस्पतिम्" इति पतिशब्देनेन्द्रवाचिना व्यपदेशात्षष्ठ्यन्तस्य विश्वानरशब्दस्य द्युस्थानवाचित्वे सामर्थ्यमुपपद्यते ॥

अथास्या भाष्यम्—

**विश्वानरस्यानानतस्य शवसो महतो बलस्यैवैश्च कामैरयनैरवनैर्वा चर्षणीनां मनुष्याणामूत्या च पथा रथानाम् । इन्द्रमस्मिन्यज्ञे ह्वयामि ॥**

गतार्थमेतन्मन्त्रार्थे ॥

अथ—

**वरुणो व्याख्यातस्तस्यैषा भवति ॥२॥ (२१)**

**वरुणः** ( १३ ) स एष **व्याख्यातः** निर्वचनात् ( नि० १०–३ ) इह त्वादित्यः ॥ २ ॥ ( २१ )

**"येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि" ॥ ५ ॥**

( ऋ० सं० १–४ सा० सं० आर० आ० पद० ११ )

**येनेति** । प्रस्कण्वस्यैताः सर्वा आर्षं गायत्रं सूर्यदेवत्यम् । आश्विने विनियोगः । हे **पावक** ! पावयितः ! ( सर्वस्य शोधक ! ) **वरुण** ! अनिष्टनिवारक सूर्य ! **त्वं येन चक्षसा** ख्यानेन अनुग्राहकेण दर्शनेन ( प्रकाशेन ) "चक्षिङ् दर्शने" ( अ० आ० ) "सर्वधातुभ्योऽसुन्" ( उ० ४–१८८ ) इत्यसुन् । ख्याञादेशाभावो बाहुलकात् । **जनान्** पुण्यकृतो मनुष्यान् **अनु भुरण्यन्तम्** पूर्वेषां पुण्यकृतां मार्गेण देवयानेन क्षिप्रं गच्छन्तं जनं **पश्यसि,** "तत्ते वयं स्तुम" इति वाक्यशेषः । यद्वृत्तयोगात् । तथा च तवानुग्राहकं दर्शनं वयं तद्वृत्तिप्राप्तये स्तुम इत्यर्थः । अत्र येना इति दीर्घ आर्षः ( पा० ६–३–१३७ ) भुरण्यतिश्च गत्यर्थः ( निघं० २–१४ ) ॥

अथास्या भाष्यम्—

**भुरण्युरिति क्षिप्रनाम । भुरण्युः शकुनिर्भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोढा तत्संपाती भुरण्युः ॥**

**भुरण्युः** क्षिप्रगामी **शकुनिः** पक्षी, स एष **भूरिं** बहुम् ( निघं० ३–१–४ ) भवतेः "अदिशदिभूशुभिभ्यः क्रिन्" ( उ० ४–६५ ) इति क्रिन्प्रत्ययः । **अध्वानम्** मार्गम् **नयति** प्रापयतीति भूरिनयुः सन्भुरण्युः । यस्तु "भुरण धारणपोषणयोः" इति कण्ड्वादिस्ततो यगन्ताच्छतरि भुरण्यन्तं धारयन्तं पोषयन्तं वा इमं लोकमिति सायणीयं मन्त्रभाष्यम् । यास्कस्तु—भुरण्युरिवाचरतीति क्विबन्ताच्छतरमभिप्रैति । तत्पक्षे इष्टवद्भावाट्टिलोपेनोलोप आर्षः । स पुनरयमेव योऽधियज्ञेऽ-

---

१. शव इति सामान्यतो बलनामसु पठितोऽपि ( निघं० २–९–३ ) ओजसा सह पाठान्महत्त्वमस्यावसीयते । उब्जयन्ति न्यग्भावयन्ति बलवतोऽनेनेति ह्योज उच्यते ॥

२. अत्र हे मरुतः ! इत्यध्याजहार सायण इन्द्रसंबन्धात् । यद्यपि मरुत्संशब्दनं नास्ति तथापि च इति सामर्थ्याल्लभ्यते इति ( सा० ) ॥

३. एतेर्गत्यर्थस्य भावे वप्रत्यय अवतेर्वा कान्त्यर्थस्य च "हलश्च" ( पा० ३–३–१२१ ) इति भावे घञि आदिवर्णविपर्ययः । कान्तिरिच्छा कामनाऽभिलाष इत्यनर्थान्तरम् ॥

४. रथो रंहतेर्गतिकर्मणः ( नि० ९–११ ) इत्युक्तमधस्तात् ॥

५. अवनमूतिः "ऊतियूति०" ( पा० ३–३–९७ ) इत्यादिना निपातितः । तथाचामरः "अवने ऊतिः" इति । "सुपां सुलुक्पूर्वसवर्णाच्–" ( पा० ७–१–३९ ) इत्यादिना अङा सह पूर्वसवर्णदीर्घः ॥

१. "वृञ् वरणे" ( स्वा० उ० ) अस्मादन्तर्भावितण्यर्थात् "कृवृदारिभ्य उनन्" ( उ० ३–५३ ) इत्युनन्प्रत्ययः । अत्र वरुणशब्देनादित्य एवोच्यते । तथाचान्यत्राम्नातम्–"तस्यैव मित्रश्च वरुणश्चाजायेतामिति । मित्रश्च वरुणश्च धाता चार्यमा चे"ति ( मा० वै० मा० १–१–२–९–१ ) ॥

मिश्रीयते स सुपर्णः। विज्ञायते हि—"स्वर्गाय वै लोकायाभिश्रीयते" इति। तदाह—स्वर्गस्य लोकस्यापि वोढेति। तथाच भुरण्युशब्दस्तत्सदृशो भाक्तः। भुरण्युरिव भुरण्युरिति तत्संपाती। तेन युक्तोऽग्निश्चिदुपात्तापूर्वसंभारः। स्वर्गं लोकं प्रति भुरण्युरिव शीघ्रं यः पतति ( गन्तुमिच्छति ) भुरण्यति, तेनासौ भुरण्युः॥

अथ मन्त्रार्थस्य निराकाङ्क्षत्वाय शेषमध्याहृत्य व्याचष्टे—

**अनेन पावक! ख्यानेन। भुरण्यन्तं जनाँ अनु। त्वं वरुण! पश्यसि। "तत्ते वयं स्तुमः" इति वाक्यशेषः॥**

इति। अथ पक्षान्तरेण सङ्गमयति—

**अपि वोत्तरस्याम्॥ ३॥ ( २२ )**

अथ वा उत्तरस्याम् ऋचि अन्वयस्तेन द्यां व्येषीति। तयापि सहैकवाक्यतोपेक्ष्या। कथम्? इत्यतः पुनः पठति—

**येना पावक चक्षसा भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि॥ ५॥**

**विद्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः। पश्यञ्जन्मानि सूर्य॥ ६॥**

येनेति। हे पावक! वरुण! सूर्य! येन चक्षसा ख्यानेन जनाननु भुरण्यन्तं पश्यसि तेनैव ख्यानेन ( तयैव ख्यात्या प्रज्ञया ) युक्तस्त्वं द्यां द्युलोकम् व्येषि विविधमतिशयेन वा एषि गच्छसि, अथ पृथु महान्तं रजः लोकम् अन्तरिक्षं च अहा अहानि। "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः। अक्तुभिः रात्रिभिः ( निघं० १-७-४ ) सह मिमानः उत्पादयन्। आदित्यगत्यधीनत्वादहोरात्रविभागस्य। तथा जन्मानि जातानि ( जननवन्ति भूतजातानि ) सर्वभूतानुग्राहकत्वेन पश्यन् एषि॥ ५॥ ६॥

अथास्या भाष्यम्—

**व्येषि द्यां रजश्च पृथु महान्तं लोकं अहानि च मिमानो अक्तुभी रात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य॥**

अवगतार्थमेतन्मन्त्रार्थेन॥

एवं यद्युत्तरस्यामेकवाक्यता भवति—

**अपि वा पूर्वस्याम्॥ ४॥ ( २३ )**

अपि वा अथ तर्हि पूर्वस्याम् अप्युपेक्ष्या। कथमित्यतः पठति॥ ४॥ ( २३ )

**"येना पावक चक्षसा भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि" ॥ ५॥**

**"प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान्। प्रत्यङ् विश्वं स्वर्दृशे" ॥ ६॥**

येनेति। हे पावक! वरुण! ( सूर्य! ) येन चक्षसा ख्यानेन ( ययैवानुग्रहबुद्ध्या ) त्वं जनाननु—भुरण्यन्तं पुण्यकारिणं पश्यसि तयैव ख्यात्या प्रज्ञया युक्तः देवानां मध्ये ये विशः मरुतः। "मरुतो देवानां विशः" ( तै० सं० २-२-५ ) इति श्रुत्यन्तरात्। तान्मरुत्संज्ञकान्देवान् प्रत्यङ् प्रतिगच्छन् पुरस्तात्तेषाम् उदेषि उदयं प्राप्नोषि। तेषामभिमुखं यथा भवति तथेत्यर्थः। मानुषान् मनुष्यांश्चैवमेव प्रत्यङ् कृत्वा तेषामपि पुरस्तादेव उदेषि। किंबहुना हे स्वः! आदित्य! प्रत्यङ् इदं विश्वं सर्वमात्मनः कृत्वा पुरस्तादुद्यन् दृशे विपश्यसि॥ ४॥

अथास्य भाष्यम्—

**प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं सर्वमभि विपश्यसीति॥**

सष्टम्। अथ पक्षान्तरेण व्याचष्टे—

**अपि वैतस्यामेव॥ ५॥ ( २४ )**

नचेत्पूर्वस्यामुत्तरस्यां वा एकवाक्यता स्यात् अपि तर्हि एतस्यामेव कथम्? इत्यतः पुनः पठति—॥ ५॥ ( २४ )

**"येना पावक चक्षसा भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि"**

**तेन नो जनानभि पश्यसि॥**

येनेति। हे पावक! वरुण! येन चक्षसा ख्यानेन ययैवानुग्रहप्रज्ञया जनाननु भुरण्यन्तं पश्यसि। जनाननु भुरण्यन्तं पश्यसि त्वं पुण्यकारिणं, तेनैव ख्यानेन तयैवानुग्रहकारकबुद्ध्या नः अस्माकं जनानभि विपश्यसि। इत्ययं वाक्यशेषः॥

ननु को विशेषः प्रथमादध्याहारादिति चेच्छृणु—प्रथमे हि

---

१. भुरण्युरिवाचरति आचारक्विबन्तस्यार्षं रूपम्। ततः शतरि भुरण्यन्तमित्युक्तमुपरि भाष्यमवेन॥

२. उपेत्य मन्त्रार्थमीक्ष्याऽलोचयितव्या॥

३. तथा चोक्तम्—"लोका रजांस्युच्यन्ते" ( नि० ४-१९ ) इति पुरस्तादपि॥

१. सायणस्तु—देवा मरुतो मनुष्याश्चैवमेव मन्यन्तेऽस्मदभिमुखमेव सूर्यं उदेतीत्येवमुक्तपूर्वमुक्त्वा तथा विश्वं व्याप्तं स्वः स्वर्लोकं दृशे दृष्टं प्रत्यङ्ङुदेषि। यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन यथा पश्यन्ति तथा उदेषीत्यर्थः। एतदुक्तं भवति—लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वाभिमुख्येन पूर्वं पश्यन्तीति। तथा चाम्नायते—"तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगादिति" ( तै० सं० ६-५-४ ) अत्र दृशे इति द्रष्टुमित्यर्थे निपातितः ( पा० ३-४-११ )॥

"तत्ते वयं स्तुम" इति स्तुत्या परिसमापितम्। इह पुनराशिषा "तेन नो जनानभि विपश्यसि" इति। स्तुत्याशिषोः संबन्धनित्यत्वाद्वाक्यस्य। एष साकाङ्क्षाणां मन्त्राणामेकवाक्यताप्रकार उपदर्शितोऽन्यत्रापि यथावसरं तद्विज्ञानायेति ॥

अथ—

**केशी—केशा रश्मयस्तैस्तद्वान् भवति। काशनाद्वा प्रकाशनाद्वा। तस्यैषा भवति ॥ ६ ॥ (२५)**

**केशी** (१४) इति वक्तव्यम्। तत्र **केशाः······द्वान्** आदित्यो यो मध्यन्दिने **भवति**। तथाच प्रशंसायामिनिः। प्रकृष्टाः केशा अस्येति (पा० ५-२-११५)। अथ **वा काशनात्** काशो दीप्तिः "काशृ दीप्तौ" (भ्वा० आ०) भावे घञ्। तद्वान्काशी सन् केशी। अत्र काशनं स्वस्य, प्रकाशनं च परस्येति कथंचिदर्थभेदोऽवगन्तव्यः ॥ ६ ॥ (२५)

**"के॒श्य१॒॑ग्निं के॒शी वि॒षं के॒शी बि॑भर्ति॒ रोद॑सी। के॒शी विश्वं॒ स्व॑र्दृ॒शे के॒शीदं ज्योति॑रु॒च्यते" ॥ १ ॥** (ऋ० सं० ८-७-२४)

**केश्यग्निमिति**। वातरशनपुत्रस्य जूतेरार्षमनुष्टुप्[१]। केशाः केशस्थानीया रश्मयस्तद्युक्तः प्रकाशमानो वा सूर्यः केशी स तावन्नाम्नैवाविज्ञातार्थ उच्यते—**केशी अग्निं बिभर्ति** वर्षोदकेनौषधीरभिनिष्पादयन्नाहुतिद्वारेणेति दुर्गः। हविर्भिः पोषयति धारयति वा। कालविशेषे हि अग्नेः पोषणाय होमः स च कालविशेषः सूर्यगत्यधीन इति सूर्य एव बिभर्तीत्युच्यते इति सायणः। तथा **विषम्** उदकनामैतत् (निघं० १-१२-१५) तद्रश्मिभिः घर्मसमय आहृतमयमेव **केशी बिभर्ति**। विसृष्टुं वर्षकाले तथा—**रोदसी** द्यावाभूमी अपि (तन्निवासीनि भूतानि) **केशी बिभर्ति** धारयति अनुगृह्णाति। अपि वायं **स्वः** आदित्यः केशी **विश्वं** सर्वमिदं **दृशे** अभिविपश्यति। यथाभिद्रष्टव्यम्। कोऽयं केशीति? अतो दर्शयन्नेवादित्यमाह—**केशीदं ज्योतिरुच्यते** इदं दृश्यमानं मण्डलस्थं यज्ज्योतिरिदमेव केशीत्युच्यते नान्य इत्यर्थः ॥ १ ॥

अथास्य भाष्यम्—

**केश्यग्निं च विषं च, विषमित्युदकनाम, विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य, विपूर्वस्य वा सचतेः। द्यावापृथिव्यौ च धारयति। केशीदं सर्वमभिविपश्यति, केशीदं ज्योतिरुच्यत इत्यादित्यमाह ॥**

**विष्णातेरि**त्यस्यार्थविवरणं स्वयं कुर्वन्भाष्यलक्षणं सङ्गमयति—**विपूर्वस्य स्नातेरि**त्यनेन। तथाच तल्लक्षणम्—

"सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥" इति ॥

तथाच "ष्णा शौचे" (अ० प०) इत्यस्माद्बाहुलकाड्डुप्रत्ययः (पा० ३-२-१०१) णकारलोपश्चेति विषम्। विशेषेण स्नात्यनेनेति विग्रहः। तद्धि प्रथमं शौचसाधनम्। **सचतेरपि** पूर्ववड्डुप्रत्ययः। "षच सेचने सेवने च" (भ्वा० आ०) तद्धि स्नानपानावगाहनार्थिभिः सेव्यते। सर्वत्र ह्यतिशयेन यत्सक्तमिति दुर्गस्य निर्वचनम् ॥

अतः परं विचारः—

**अथाप्येते इतरे ज्योतिषी केशिनी उच्येते ॥**

**इतरे** प्रथममाध्यमिके। तत्र तावत्—

**धूमेनाग्निः ॥**

केशी। स हि तस्य निगूढस्यापि प्रकाशनाय भवति ॥

**रजसा च मध्यमः ॥**

असावप्यमूर्तत्वादप्रकाशः सन् रजसोद्भू(द्धू)तेन प्रकाशते—असौ वायुरागच्छतीति। उदकेन च वैद्युतः।

**तेषामेषा साधारणी भवति ॥ ७ ॥ (२६)**

**तेषां** त्रयाणामपि **केशिनाम्** (१५) **एषा** प्राधान्यस्तुतिः **साधारण्येन भवति** ॥ ७ ॥ (२६)

**"त्रयः॑ के॒शिन॑ ऋतु॒था विच॑क्षते संँवत्स॒रे व॑पत॒ एक॑ एषाम्। विश्व॒मेको॑ अ॒भिच॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेक॑स्य ददृशे॒ न रू॒पम्" ॥ ४ ॥**

(ऋ० सं० २-३-२२-अथ० सं० ९-१९-६)

**त्रय इति**। दीर्घतमस आर्षं त्रैष्टुभम्। महाव्रते वैश्वदेवे शस्यते। केशिनो(ऽग्निवाय्वादित्या) देवताः स्तूयन्त इति तद्दैवत्या। य एते **त्रयः केशिनः** अग्नि-वायु-सूर्याः **ऋतुथा** ऋतुकालेषु "था हेतौ च छन्दसि" (पा० ५-३-२६) इति छन्दसीत्युक्ते बहुलं छन्दसीतिनियमाद्धेतोरपि कालवचनादप्रकारेऽपि कालसामान्ये थाप्रत्ययः। **विचक्षते** अभिविपश्यन्ति। स्वकर्माधिकारयुक्तेनानुग्रहेण लोकमनुगृह्णन्ति। **एषाम्** मध्ये **एकः** पृथिवीस्थानोऽग्निः **संवत्सरे** अतीते सति पृथिवीं **वपते** दहति। तथापि सा कर्मण्या (कर्मार्हा) संपद्यते[१]। एकोऽपरो द्युस्थान आदित्यः **विश्वं** भुवनम् **अभिचष्टे** अभिविपश्यति। स्वाधिकारयुक्तैः प्रकाशवृष्ट्यादिभिः कर्मभिरनुगृह्णाति। **एकस्य** वायोर्मध्यमस्य **ध्राजिः** गतिः। ध्रजतीति गतिकर्मसु पठ्यते (भ्वा० प०। निघं० २-१४) "इञ् वपादिभ्यः" (पा० ३-३-१०८ वा०) इतीञ् प्रत्यय उपधा-

---

१. इयमेकाक्षरन्यूनत्वान्निचृदभिधानुष्टुबयुक्पादयोः। तथा चोक्तम्—"न्यूनाधिकेनैकेन निचृद्भुरिजौ" (पिं० सू० ५९ अ० ३)

१. बीजसंतापार्थस्यास्य दाहार्थत्वं भाष्यकृद्वचनाद्वातूनामनेकार्थत्वात्। दाहेन हि तस्यामुर्वरा-(सम्यग्बीजोद्भेदजनिका-) शक्तिरभ्युदेतीति भूमिद्वाराग्निरेव वपते ॥ स च पूर्वं भूमिं दहन्निति तात्पर्यार्थः ॥

वृद्धिः । **दृश्यते** रजसोद्भूतेन पार्थिवेनोदकेन वा ज्ञायते सर्वैः । **न रूपम्** अप्रत्यक्षत्वात्स्पर्शशब्दधृतिकम्पैर्लिङ्गैर्गम्यते इति हि न्यायविदो वदन्ति ॥ ४ ॥

१. लिङ्ग्यमानैर्गम्यतेऽनुमीयते । विशेष्यत्वं तृतीयार्थस्तस्य च निरूपकतासंबन्धेनानुमानेऽन्वयः । तथाचानुमितिप्रकारः—योऽयं विजातीयः (रूपवद्द्रव्यासमवेतः) स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत्[1]। पृथिव्यादिस्पर्शे सिद्धसाधनवारणाय–विजातीय इति । एवमसति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु विलक्षणः शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः । अविभज्यमानावयवद्रव्यसंबन्धिशब्दसंतानत्वात् । दण्डाभिहतभेरीशब्दसंतानवत् । पृथिव्याद्यभिघातजन्ये सिद्धसाधनवारणाय असतीत्यादिपक्षविशेषणम् । विभागजन्मनि शब्दे व्यभिचारवारणाय हेतौ अविभज्यमानेति । एवं नभसि तृण–तूल–स्तनयित्नु–विमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका, असदाद्यनधिष्ठितद्रव्यधृतित्वान्नौकादिधृतिवत्[5]। जलादिगततृणादौ सिद्धसाधनवारणाय नभसीति । प्रयत्नवदात्मसंयोगहेतुकधृत्यादौ व्यभिचारवारणाय–असदादीति । एवं रूपवद्द्रव्याभिघातमन्तरेण वृक्षशाखादीनां कम्पः स्पर्शवद्वेगवद्द्रव्याभिघातजन्यः । विजातीयकर्मत्वात् । नदीपूराहतकाशादिकम्पवत् इति ॥

1. इदं च स्पर्शत्वसामानाधिकरण्येन द्रव्याश्रितत्वसाधनाभिप्रायेण । अवच्छेदकावच्छेदेन साध्यसिद्धौ सामानाधिकरण्येन सिद्धेरप्रतिबन्धकत्वादेवमग्रेऽपि बोध्यम् ॥

2. शब्दपरम्परा परम्परया जायमानः शब्द इति यावत् । यद्यपि वेगवद्द्रव्यसंयोगस्यैव शब्दजनकतया साध्ये स्पर्शवत्त्वविशेषणमनर्थकं शब्दजन्ये स्पर्शानुपयोगात्तथापि उक्तानुमानेनैव वायोः स्पर्शस्यापि सिद्ध्यर्थं तदुपात्तं, साध्ये व्यर्थविशेषणत्वस्यादोषत्वादिति ध्येयम् ॥

3. धृतिर्गुणो द्रव्यस्यापतनम् ॥

4. प्रयत्नवदात्मसंयोगप्रयुक्तद्रव्यधृतित्वादित्यर्थः ॥

5. जलस्थद्रव्यधृतिवदित्यर्थः ॥

6. इदं चावच्छेदकावच्छेदेन साध्यसिद्धेर्नोद्देश्यता किंतु–सामानाधिकरण्येनेत्यभिप्रायेण । अन्यथा तादृशतृणादिधृतौ साध्यस्य सिद्धावपि वायुमात्राधिष्ठिततृणादिधृतावेव साध्यस्यासिद्धतयावच्छेदकावच्छेदेन साध्यसिध्द्यभावात्तादृशानुमितौ बाधकाभावेन सामानाधिकरण्येन साध्यसिद्धेरकिञ्चित्करत्वापातात् । सामानाधिकरण्येन साध्यसिध्यापि वायुसिद्धिसंभवेनावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे प्रयोजनाभावात् इति ॥

7. वायुभिन्नस्पर्शवदनधिष्ठिते इति तदर्थः । नभःसंयुक्तार्थकत्वे जलस्थतृणादिष्वावर्तनासंभवादिति मन्तव्यम् ॥

8. परमेश्वरधृत–पृथिव्यादिलोकधृत्यादावित्यर्थः । तेनैव हि परमेश्वरानुमानमुक्तमुदयनाचार्यैः—"कार्या योजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः" इति ॥

9. विजातीयत्वं च वेगभिन्नत्वे सति चेष्टाभिन्नत्वम् ॥

10. पूरः प्रवाहस्तदाहतत्वं तत्संयुक्तत्वम् ॥

अथास्या भाष्यम्—

**त्र्यः केशिन ऋतुथा विचक्षते । काले काले अभिविपश्यन्ति । संवत्सरे वपत एक एषाम् । इत्यग्निः पृथिवीं दहति । सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य ॥**

गतार्थं मन्त्रार्थेन ॥

**अथ यद्रश्मिभिरभिप्रकम्पयन्नेति तद्वृषाकपिर्भवति । वृषाकम्पनस्तस्यैषा भवति ॥ ८ ॥ (२७)**

अथ **वृषाकपिः** ( १६ ) स एष आदित्य एव **यत्** यदा **रश्मिभि**रुपसंहृतैरुपसंपन्नैश्च भूतानि **अभिप्रकम्पयन् एति तत्**–तदा **वृषाकपिर्वर्षिता** चावश्यायानाम् आकम्पनश्च भूतानाम् **भवति** अभिसंपद्यते । सर्वो हि भगवत्यदृश्ये तद्भयात्कम्पते ॥ ८ ॥ ( २७ )

**"पुनरेहि वृषाकपे सुविता कल्पयावहै । य एषः स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः" ॥ ६ ॥** ( ऋ० सं० ८–४–४ )

**पुनरेहीति** । वृषाकपेरिन्द्रस्य वार्षं पाञ्चपदं प्रोक्तम्[1]। पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । आगत्य प्रतिगतं वृषाकपिमृषिर्ब्रवीति–हे **वृषाकपे** ! भगवन् ! **य एष स्वप्ननंशनः** उदयेन सर्वस्य प्राणिनः स्वप्नानां नाशयिता आदित्यः स त्वमेव **पथा** क्लृप्तेन मार्गेण **अस्तम्** आत्मीयमावासम् **पुनः एषि** गच्छसि । यश्च त्वं **विश्वस्मात्** सर्वस्मात् जगतः **इन्द्रः** ईश्वरः **उत्तरः** उद्गततरः । स त्वं **पुनः एहि** आयाह्यस्मान्प्रति । उदयं प्राप्नुहीत्यर्थः । तत आवाम् **सुविता** सुवितानि सुप्रसूतानि ( सुप्रवृत्तानि )[2] वैः कर्माणि **कल्पयावहै** सगुणानि कुर्वः । त्वमुदयेनाहमनुष्ठानेनेत्यर्थः[3] ॥ ६ ॥

१. इन्द्रो ब्रवीतीति सायणः । युक्तं चैतत् "यस्य वाक्यं स ऋषिरि"तिन्यायानुसरणात् । नात्र वृषाकपेर्वाक्यत्वं संभवति तस्यैव संबोध्यत्वादिति वृषाकपेरार्षमिति दुर्गोक्तं दैवतपरतया कथंचिन्नेयम् ॥

२. शोभनकार्यं जगतोऽनुग्रहमुद्दिश्य यत्नानि प्रवृत्तानि । शेर्लोपः (पा० ६–१–७१)

३. वश्चित्तप्रीतिकरणानि कल्याणानि कर्माणीत्यर्थः ॥

४. इन्द्राण्यहं चावामुभौ पर्यालोच्य कुर्यावेति सायणव्याख्यानं संवादभूतमिदं सूक्तम् । तथा चानुक्रान्तम्—"विहि त्र्यधिकैन्द्रो वृषाकपिरिन्द्राणीन्द्रश्च समूदिरे पाङ्क्ति"ति । तन्मतेऽहमिन्द्रो विश्वस्माद्दत्तर उत्कृष्टतर इति व्याख्येयम् ॥

अथास्या भाष्यम्—

**पुनरेहि वृषाकपे! सुप्रसूतानि वः कर्माणि कल्पयावहै। य एष स्वप्ननँशनः स्वप्नान्नाशयत्यादित्य उदयेन सोऽस्तमेषि पथा पुनः सर्वस्मादिन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम्॥**

तमित्यधिकृत्यैतद्ब्रूमः स एष आदित्य एव वृषाकपिरिति आचार्य आह॥

अथ—

**यमो व्याख्यातस्तस्यैषा भवति॥ ९॥ (२८)**

यमः (१७) वक्तव्यः। स पुनर्व्याख्यातः निर्वचनतः (निं० १०-१९) इह त्वादित्योऽभिधेयः॥ ८॥ (२८)

**"यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः। अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति"॥ १॥** (ऋ० सं० ८-७-२३)

यस्मिन्निति। कुमारस्य यामायनस्यार्षं यमदैवत्यम्। ज्ञत्सोपममेतत्। **यस्मिन् सुपलाशे** शोभनानि पलाशानि पर्णानि यस्मिंस्तस्मिन्सुपलाशे शोभनपर्णोपेते। पक्षे सुष्ठु पराशीर्णमले दीप्तिमति। वृक्षवद्वृक्षे, प्रकृतपक्षे वृश्चतीति वृक्षः। सक्(उ० ३-६६) स हि स्वगत्या कालमतिक्रामयन्सर्वभूतानामायूंषि क्षपयति। वृतक्षये वा (वृते पुण्यकृद्धिः, क्षये निवासे) स्थाने मण्डले **यमः** आदित्यः (अस्तमयावस्थः) **देवैः** दीव्यन्तीति देवास्तै रश्मिभिः सह **संपिबते** सङ्गच्छते। अस्तं गच्छन्। तत्र किमिति? **अत्र** अस्मिन्मण्डले **विश्पतिः** विशां प्रजानामधिपतिः **पिता** पालकश्च सर्वस्य। **अत्रा** इति दीर्घः सांहितिकः (पा० ६-३-१३७) **नः** अस्मान्पुण्येन कर्मणा विद्यया च तत्प्रापिकया गतात्मनः **पुराणान्** इव तन्निवासिनः **अनु वेनति** वेनतु। कामयेत संप्रीणयत्वित्यर्थः। वेनतिः कान्तिकर्मा (इच्छार्थो) नैरुक्तः (निघं० २-६-४) लेट्॥ १॥

अथास्या भाष्यम्—

**यस्मिन्वृक्षे सुपलाशे, स्थाने वृतक्षये वाऽपि वोपमार्थे स्यात्। वृक्ष इव सुपलाश इति। वृक्षो व्रश्चनात्। पलाशं पलाशनात्। देवैः सङ्गच्छते यमो रश्मिभिरादित्यस्तत्र नः सर्वस्य पाता वा पालयिता वा पुराणाननु कामयेत॥**

पलाशं पर्णम्, तत्कस्मात्—पलाशनात्। पलं मांसमश्नन्ति "अश भोजने" (क्र्या० प०) "कर्मण्यण्" (पा० ३-२-१) प्रायेण पर्णाशिनो निर्मांसा भवन्तीति पर्णमेव पलाशम्, "पलाशः किंशुकेऽप्पे। हरिते पलाशं पत्रे" इति हैमः। **देवैः** रश्मिभिर्यम आदित्यस्तत्र—अत्र मण्डले इत्येवं समन्वितोऽर्थः। अत्रैतिहासिकपक्षे—**वृक्षे इव सुपलाशे इति**—स्वगृहमुपागतानस्मान्सुपलाशवृक्षप्रख्यसुखनिवासे पितृराजो **यमः पुराणान्** इव तल्लोकनिवासिनः पितॄननुकामयतु। अस्मिन्पक्षे देवैः संपिबत इति तदनुचारिणो गृह्यन्ते देवा इति दुर्गव्याख्यानम्॥

अथ—

**अज एकपादजन एकः पादः॥**

**अजएकपात्** (१८) वक्तव्यः। स पुनरेषोऽस्तभावावस्थ आदित्य उच्यते। द्विपदं चैतत्। अजतेर्गत्यर्थात् पचाद्यचि बाहुलकाद्वीभावाभावः। तदेतदाह **अजनः** अज इति ल्युप्रत्ययान्तेन समानार्थेन विवरणम्। **एकश्च** कस्य ब्रह्मणः **पादः**। कुत एतत्? विज्ञायते हि—"अग्निः पादो, वायुः पादः, आदित्यः पादो, दिशः पादः" इति। तेनाजश्चासावेकपाच्चेति "संख्यासुपूर्वस्य" (पा० ५-४-१४०) इत्यबहुव्रीहावपि पादस्याकारलोपः॥

**एकेन पादेन पातीति वा॥**

अथ वा सर्वमिदं जगत् **एकेन पादेन** अंशेन ज्योतिरात्मनानुप्रविश्य **पाति** रक्षति स्वापकाले प्राणात्मनान्नं पचन्, अजनश्चेत्यज एकपात्।

१. यमगोत्रस्य। नडादित्वात्फक् (पा० ४-१-९९) फत्वायन्॥

२. तादृशस्य वृक्षस्य मूलं यथा औष्ण्यजनितश्रमापनोदनेन सुखकरं भवति तद्वत्सुखकरे॥

३. यच्छत्युपरमतीति यमः "यम उपरमे" (भ्वा० प०) पचादित्वादच्प्रत्ययः (पा०-३-१-१३४)

४. उपसर्गवशात्पिबतिरत्र गत्यर्थः। व्यत्ययेनात्मनेपदम्॥

५. ऐतिहासिकपक्षेणार्थोऽनुपदमग्रे द्रष्टव्यः॥

१. देवैः परिजनभूतैर्यमो नियन्ता वैवस्वतः संपिबते सह भुङ्क्ते पिबतीत्यर्थः। विश्पतिर्विशां प्रजानामधिपतिः पिता नः। व्यत्ययेन बहुवचनम्। मम नचिकेतसो जनको वाजश्रवसः। अत्रास्मिन् (पूर्वोक्तलक्षणे सुपलाशे वृक्षतुल्ये) यमस्य स्थाने पुराणान्पुरातनान् अत्र चिरकालं निवसतः पितॄन् अनु तेषां पश्चात्तत्समीपे निवसन्तमिति वेनति मां कामयते। नचिकेता नाम कुमारः वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाजगाम। अयमर्थ इदमादिकैर्मन्त्रैः प्रतिपाद्यते। यद्वा—कुमारो नाम नचिकेतसोऽन्यः कश्चिदृषिः। यच्छतीति यम आदित्यस्तमनेन सूक्तेन तुष्टाव। सुपलाशे वृक्ष इव यस्मिन् शोभने स्थाने यम आदित्यो देवैः रश्मिभिः संपिबते सङ्गच्छते अत्रास्मिन्स्थाने विश्पतिर्विशां प्रजानां प्रकाशनप्रवर्षणादिना पालयिता, प्राणात्मना च सर्वेषां पिता जनकः स आदित्यः पुराणान् चिरन्तनान्स्तोतॄन्नोऽस्मानपि वेनति अनुग्राह्यत्वेन कामयते। यद्वा अत्र स्थाने स्थिताऽन्नोऽस्माकं पुराणान्पूर्वपुरुषान् अनुवेनत्यनुक्रमेण कामयते इत्येवं व्याख्यत्॥

**एकेन पादेन पिबतीति वा ॥**

अथ वा एकेन पादेनांशेनोदकं सर्वस्माज्जगतः पिबत्य जनश्चेत्यज एकपात् । अत्र पातेः क्विपि तकारोपजन आर्षः ॥

**एकोऽस्य पाद इति वा ॥**

अथ वा अजनो गमनः एकोऽस्य पाद इति अज एकपात् । जीवभूतोऽस्य कृत्स्ने जगति एकः पादोऽनुप्रविष्टः । अत्रायथाप्राप्तः पादान्त्यलोप आर्षः ॥

अत्रार्थे निगमं प्रमाणयति—

**"एकं पादं नोत्खिदती"त्यपि निगमो भवति ॥**

अस्य—"सलिलाद्धंस उच्चरन् । स चेत्तमुद्धरेदङ्ग न मृत्युर्नामृतं भवेत्" इति शेषो बोध्यः । एकम् आत्मनः पादं नोत्खिदति नोद्धरति इति आदित्यो हंसः महतस्तमसो वाध्वनो वा हन्ता । कुतः पुनर्नोत्खिदति ? सलिलात् सन्मात्रे ब्रह्मणि लीनादेतस्माज्जगतः उच्चरन् अहन्यहनि उद्यन्नित्यर्थः । स चेत्तं जीवभूतमात्मनः पादमेतस्माज्जगतः उद्धरेत् ततस्तदुद्धरणसमकालमेव अङ्ग क्षिप्रम् न मृत्युर्न मृतं भवेत् सर्वमिदमव्यपदेश्यं सदैव स्यादित्यर्थः ॥

**तस्यैष निपातो भवति वैश्वदेव्यामृचि ॥ १० ॥ ( २९ )**

निपातोऽप्राधान्येनानुवेशः भवति साधारण्येन वैश्वदेव्याम् विश्वेदेवदैवत्यायामृचि यथा ॥ १० ॥ ( २९ )

**"पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः । विश्वेदेवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरन्ध्या" ॥३॥**

(ऋ० सं० ८-२-११)

पावीरवीति । वसुकपुत्रस्य वसुकर्णस्यार्षं जागतं वैश्वदेवम् । वैश्वदेवे शस्त्रे विनियोगः । पावीरवी माध्यमिका वागैन्द्री तन्यतुः जनयित्री विस्तारयित्री वाचोऽन्यस्याः । तदुक्तं—"तां विश्वरूपाः पशवो वदन्ति" (नि० ११-२९) सा च दिव्या वाक् । अजः च एकपात् दिवो द्युलोकस्य धर्ता धारयिता । एतदत्र द्युस्थानत्वमजएकपदः । सिन्धुः च नदः आपः च समुद्रियः समुद्रियाः । जसः सुः (पा० ७-१-३९) समुद्रभवाः "समुद्राभ्राद्धः" (पा० ४-४-११८) इति भवार्थे घप्रत्ययस्तस्येयादेशः (पा० ७-१-२) विश्वे सर्वे च देवासः देवाः । "आज्जसेरसुक्" (पा० ७-१-५०) पुरन्ध्या पुरुधिया बहुपुत्र्या माध्यमिकया वाचा ( निघं० ४-३-५१ ) सहिता सरस्वती च धीभिः कर्मभिः ( निघं० २-१-२१ ) हविर्दानयुक्तैः सह सहितानि नः अस्माकम् । वचांसि इमानि स्तुतिलक्षणानि वचनानि ( वक्तव्यानि स्तोत्राणि ) शृणवन् शृण्वन्तु इत्येतदाशास्महे लोडर्थे लङ् ( पा० ३-४-६ ) अडभाव आर्षः ॥ ३ ॥

अथास्य भाष्यम्—

**पविः शल्यो भवति, यद्विपुनाति कायं, तद्वत्पवीरमायुधं, तद्वानिन्द्रः पवीरवान् ॥**

शल्यः शङ्कुर्बाणाग्रमायुधविशेषः "फल" इति ख्यातः । अन्यो वा । शलतीति शल्यः । "शल गतौ" (भ्वा० प०) अघ्न्यादित्वात् (उ० ४-११२) यः । "शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्नो" इति मेदिनी । शाश्वतोऽपि—"संख्याकीलकयोः शङ्कुः शङ्कुः प्रहरणान्तरे" इति । यत् यतः विपुनाति विदारयति । तेन शल्येन तद्वत्पवीरम् । रो मत्वर्थे । दीर्घ आर्षः । आयुधम् तेन शल्यवता आयुधेन तद्वानिन्द्रः पवीरवान् ॥ अत्रार्थे—

**"अतितस्थौ पवीरवान्"**

(ऋ० सं० ८-१-२४)

**इत्यपि निगमो भवति ॥**

अस्य—"यो जनान्महिषाँइवातितस्थौ पवीरवान् । उतापवीरावान्युधा" ॥ ३ ॥ इति स्वरूपम् । विप्रवन्धोरार्षं गायत्रमैन्द्रम् । यः इन्द्रः महिषानिव अतिमहतोऽप्यसुरजनान् युधा युद्धेन अति अतीत्य ( अतिक्रम्य ) तस्थौ तिष्ठति । वर्तमाने लिट् ( पा० ३-४-६ ) पवीरवान् उत् अपि अपवीरवान् सायुधोऽपि निरायुधोऽपि नित्यमतिमहतोऽप्यसुरजनान्योऽतितिष्ठति ( अभिभवति ) स इदं नामास्माकं करोत्वित्याशास्ते ॥ ३ ॥

**तद्देवता वाक् पावीरवी । पावीरवी च दिव्या वाक् । तन्यतुस्तनित्री वाचोऽन्यस्याः । अजश्चैकपाद्दिवो धारयिता च सिन्धुश्चापश्च समुद्रियाश्च सर्वे च देवाः सरस्वती च सह पुरन्ध्या स्तुत्या प्रयुक्तानि धीभिः कर्मभिर्युक्तानि शृण्वन्तु वचनानीमानीति ॥**

अवगतार्थमेतन्मन्त्रार्थे ॥

अथ—

**पृथिवी—व्याख्याता, तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि ॥ ११ ॥ ( ३० )**

पृथिवी ( १९ ) व्याख्याता ( नि० १-१३ ) इह यौरुच्यते तस्याः पृथिव्या दिवः निपातः अप्राधान्येन केवलं

---

१. यद्यप्ययं "पुनरर्थेऽङ्गनिन्दायाम्" इत्यमरेण, "अङ्ग संबोधने हर्षे सङ्गमासूययोरपि" इति मेदिन्या च लोके क्षिप्रार्थेनाभिहितोऽथापि हर्षपुनरर्थाभ्यां सामञ्जस्येन दुर्गेणाप्येवं व्याख्यातमित्युद्धृतं ततः ॥

२. बहुविधया प्रज्ञयोत् साहितासरस्वतीति सायणः ॥

नैघण्टुकेन रूपेण सन्निवेशः **ऐन्द्राग्न्याम्** इन्द्राग्निदेवत्यायाम् ॥ ११ ॥ ( ३० )

**"यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः । अतः परि वृषणा वाहि यातमथा सोमस्य पिबतं सुतस्य" ॥ ३ ॥**

( ऋ० सं० १-७-२७ )

**यदिति** । कुत्सस्यार्षं त्रैष्टुभमैन्द्राग्नम् । हे **इन्द्राग्नी ! वृषणौ** वर्षणौ युवाम् **यत्** यदि **परमस्याम्** उत्कृष्टायां दूरे वर्तमानायाम् **पृथिव्याम्** द्युलक्षणायाम्, यदि वा **मध्यमस्याम्** मध्यमायाम् अन्तरिक्षे **उत** अपि च **अवमस्याम्** सन्निकृष्टायामस्यामेव द्वाभ्यां वर्तमानौ **स्थः** भवथः सर्वस्मात्स्थानात् **परि** अस्मान्प्रति **आयातम्** आगच्छतम् **हि** निश्चयेन । **अथ** आगत्य च **सुतस्य** अभिषुतस्य **सोमस्य** स्वमंशं **पिबतम्** । यद्वा द्वितीयार्थे षष्ठी । अत्र पृथिवीशब्दस्त्रिषु लोकेषु वर्तते । यथा—"यो द्वितीयस्यां तृतीयस्यां पृथिव्यामस्यायुषा नाम्नेति ( तै० सं० १-२-१२ ) अत्रासर्वनाम्नोऽपि स्याडागमो व्यत्ययेन ( पा० ३-१-८५ ) ॥

**इति सा निगदव्याख्याता ॥**

**इति सा** सेयमृक् निगदेन पाठमात्रेणैव **व्याख्याता** भवति । सुगमेत्यर्थः ॥

अथ—

**समुद्रो व्याख्यातस्तस्यैष निपातो भवति पावमान्यामृचि ॥ १२ ॥ ( ३१ )**

**समुद्रः** ( २० ) **व्याख्यातः** अन्तरिक्षनामसु ( नि० २-२० ) इह तु आदित्य इति विशेषः । अत्रापि "समुद्रवन्त्यस्मादापः" इत्येवमादि तदेव निर्वचनम् । **निपात** उक्तपूर्वः ॥ १२ ॥ ( ३१ )

**"पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् । महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम्" ॥ ३ ॥**

( ऋ० सं० ७-२-२८ )

**पवित्रवन्त इति** । पवित्रस्यार्षं जागतं पवमानसोमदैवत्यम् । प्रवर्ग्ये विनियोगः । **पवित्रवन्तः** रश्मिवन्तो माध्यमिका देवगणाः **वाचं** माध्यमिकां सोमस्थिताम् **परि** वार्य **आसते** उपविशन्ति **प्रत्नः** पुराणः **पिता** पाता रक्षकः । स **वरुणः** विद्युदाख्यो मध्यमः **एषां** मरुत्प्रभृतीनां माध्यमिकान्तम् **व्रतम्** स्वाधिकारयुक्तं कर्म ( निघं० १-७ ) **अभिरक्षति** कथमिति चेदुच्यते । **महः** महान् **वरुणः** । यद्वा मह इति कर्म महान्तं **समुद्रम्** आदित्यम् यदा मेघजालेन **तिरोदधे** ( तिरोधत्ते ) तिरोदधाति आच्छादयति दुर्दिनं कृत्वा वर्षत्येष धीषु । वर्तमाने लिट् (पा० ३-४-६) अथ **धीराः** धीमन्तः **धरुणेषु** उदकेषु ( निघं० १-१२ ) सत्सु "कर्मण" इति शेषः । कृत्यादेः कर्मणः वैदिकस्य वा **आरभम्** आरम्भम् । कर्मारब्धुमित्यर्थः । **शेकुः** शक्नुवन्ति । इत्येवमभिरक्षति ॥३॥

अथास्य भाष्यम्—

**पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासन्ते माध्यमिकां वाचम् । मध्यमः पितैषां प्रत्नः पुराणोऽभिरक्षति व्रतम्—कर्म, महः समुद्रं वरुणस्तिरोऽन्तर्दधात्यथ धीराः शक्नुवन्ति धरुणेषूदकेषु कर्मण आरभमारब्धुम् ॥**

एषां व्रतं—कर्मेत्यन्वयः । गतार्थमन्यत् ॥

अथ येऽमी—

**अजएकपाद् व्याख्यातः । पृथिवी—व्याख्याता । समुद्रो—व्याख्यातः । तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि ॥ १३ ॥ ( ३२ )**

**तेषां** त्रयाणामेव युगपदेष **निपातोऽ**न्यदैवत्यामृचि अनुप्रवेशरूपो**ऽपरस्यां बहुदेवतायां** बहवोऽहिर्बुध्न्यादयो देवता यस्यास्तस्यां **भवति** नैघण्टुकत्वेनेत्यर्थः ॥१३॥ ( ३२ )

यथा—

**"उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु" ॥ ४ ॥**

( ऋ० सं० ४-८-१० )

**उत न इति** । ऋजिश्वन आर्षं बहुदेवताकं त्रैष्टुभम् । आग्निमारुते विनियोगः । **उत** अपि च **अहिर्बुध्न्यः** तन्नामको

---

१. "तात्स्थ्यात्ताच्छब्द्यम्" इति न्यायेनेति बोध्यम् ॥

२. पवित्रमित्युदकनामसु पठितं न रश्मिनामसु । तथापि पुनात्यनेनेति पवित्रमिति योगमाश्रित्य शुद्धिहेतुः सर्वमपि पवित्रमुच्यते । तत्र रश्मयः सर्वतः पवित्रम् । तथा च दुर्गः—रश्मयः पवित्रवन्तोऽमुष्मादादित्यमण्डलात्प्रसृता मध्यस्थाने मरुत्प्रभृतिभिर्देवगणैः संयुज्यन्ते तत्संयोगान्माध्यमिका देवताः पवित्रवन्तो रश्मिवन्तो भवन्ति हि । "पुञ् पवने" (क्र्या० उ०) तत इत्र प्रत्यये ( पा० ३-२-१८५ ) गुणः । आदित्यो ह्यमीभिरेव पुनाति जगदिति शुद्धिकर्तृषु मनुना समाम्नातः—"ज्ञानं तपोऽग्निराहारो मृन्मयो वार्युपाञ्जनम् । वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम्" ( अ० ५ श्लो० १०५ ) ॥

१. "पुराणप्रतनप्रत्नपुरातनचिरन्तनाः" इत्यमरः ॥

२. अत्र—वैषां माध्यमिकानां व्रतं यदि ह्यसावावृणोति मेघैस्ततस्तेषामधिकारप्रतिलम्भो भवतीति दुर्गव्याख्यानम् ॥

निरुक्तपूर्वां ( १०-४४ ) माध्यमिको देवः । नः अस्माकं स्तोत्रम् शृणोतु । अपिच अजएकपाद् पृथिवी समुद्रः विश्वेदेवाः सर्वे एते एवमादयोऽन्येपि देवाः ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारः । उदकवृधो वा हुवानाः अस्माभिर्यजुर्मयैर्मन्त्रैराहूयमानाः । स्तुताः च स्तोत्रैः सामभिः पूर्वैर्ऋषिभिः । मन्त्राः मन्त्रणीया गुप्तं भाषितव्या मन्त्रैः स्तुताः ( मन्त्रप्रतिपाद्या वा ) । कर्मणि घञ् । कविशस्ताः कविभिर्मेधाविभिर्ऋषिभिश्च शस्ताः स्तुताः । "शंसु स्तुतौ" ( भ्वा० प० ) ततः क्तः । उदित्वादिडभावः । तेऽस्मानवन्त्वित्येतदाशास्महे ॥ ४ ॥

अथास्य भाष्यम्—

**अपि च नोऽहिर्बुध्न्यः शृणोत्वजश्चैकपात्पृथिवी च समुद्रश्च, सर्वे च देवाः सत्यवृधो वा यज्ञवृधो वा हूयमाना—मन्त्रैः स्तुता मन्त्राः, कविशस्ता अवन्तु मेधाविशस्ताः ॥**

अवगतार्थमेतन्मन्त्रार्थे ॥

अथ—दध्यङ्—मनुः—अथर्वा—इति त्रित्वपक्षे आदित्य एवैते तद्गुणयोगाद्भवन्ति । द्युस्थाने समाम्नानात् । पृथक्त्वे पुनर्द्विस्थानास्तत्सहचारिण एते ऋषयः । तत्र—

**दध्यङ्–प्रत्यक्तोध्यानमिति वा । प्रत्यक्तमस्मिन्ध्यानमिति वा ॥**

दध्यङ् (२१) स एष द्विधा निरुच्यते । तत्र ध्यानं ज्ञानं लोककृत्याकृत्यविषयं लोकपालत्वात् । तत् प्रत्यक्तः प्रतिगतः । ध्यानाद्रम्भणे ह्येष उक्तः स्वमधिकारमनुतिष्ठति । कर्तरि क्विप् । अथ वा अधिकरणे क्विप् । ध्यानं प्रत्यक्तमस्मिन्निति । तथाहि ध्यानकार्यं तस्मिन्सफलं लक्ष्यते इति । ध्यानशब्दोपपदादञ्चतेः क्विनि पृषोदरादित्वाद्ध्यानशब्दस्य दधिभावः । "क्विन्प्रत्ययस्य कुः" ( पा० ८-२-६२ ) इति नस्य कुत्वेन ङः । अत्र पूजायां नलोपाभावे ( पा० ६-४-३० ) संयोगान्तलोपः ॥

**अथर्वा व्याख्यातः ॥**

अथर्वा (२२) व्याख्यातः ( नि० ११-१८ ) निर्वचनतः । नह्ययं स्वस्मादधिकारात्थर्वति च्यवते, न कदाचित्स्वमधिकारं मुञ्चतीत्यथर्वा ॥

**मनुर्मननात् ॥**

मनुः (२३) अयं मननात् । न हि तदस्ति यदयं न मनुते ॥

**तेषामेषनिपातो भवत्यैन्द्र्यामृचि ॥१४॥ (३३)**

तेषाम् त्रयाणां दध्यङ्मन्वथर्वणाम् ॥ १४ ॥ ( ३३ )

**"यामथर्वा मनुष्पिता दध्यङ् धियमत्नत । तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वाराज्यम्" ॥ ६ ॥** ( ऋ० सं० १-५-३१ )

यामथर्वेति । गौतमस्यार्षमैन्द्रं पाङ्क्तम् । पाष्ठिके पञ्चमेऽहनि विनियोग ऐन्द्रे सूक्ते । अथर्वा एतन्नामक ऋषिः पिता सर्वासां प्रजानां मानवानां पितृभूतो मनुः च दध्यङ् अथर्वणः पुत्र एतत्संज्ञक ऋषिश्च यां धियम् यत्कर्म ( निघं० २-१ ) अत्नत अतनिषत ( अकुर्वन् ) "तनु विस्तारे" ( त० उ० ) "बहुलं छन्दसि" ( पा० २-४-७३ ) इति विकरणस्य लुक् । "तनिपत्योश्छन्दसि" ( पा० ६-४-९९ ) इत्युपधालोपः । एतद्गुणविशिष्टोऽयमादित्यः, यत्तत्कर्मार्हो निर्वृत्त्यादिलक्षणं तनोति तस्मिन्कर्मणि यानि ब्रह्माणि अन्नानि ( निघं० २-८ ) हविर्लक्षणानि उक्था उक्थानि शस्त्ररूपाणि स्तोत्राणि च यानि सन्ति, तानि सर्वाणि पूर्वथा पूर्ववत् तस्मिन् इन्द्रे समग्मत सङ्गच्छन्ताम् समागच्छन्तु यज्ञेषु । य इन्द्रः अर्चन् वृत्रवधादिरूपेण कर्मणा स्वकीयमधिपतित्वं प्रकटयन् अभिपूजयते स्वराज्यम् स्वाराज्यम् अनु अनूपास्ते । यथाशास्त्रमनुतिष्ठतीत्यर्थः अत्रोपसर्गबलेन योग्यक्रियामध्याजहार ॥ ६ ॥

अथास्य भाष्यम्—

**यामथर्वा च मनुश्च पिता मानवानां दध्यङ् च धियमतनिषत । तस्मिन्ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च सङ्गच्छन्तामर्चन्योनूपास्ते स्वाराज्यम् ॥ १५ ॥ ( ३४ )**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० द्वादशाध्यायस्य तृतीयः पादः ॥ १२ ॥ ३ ॥**

पूर्वेन्द्र इति । पूर्वस्मिन्निन्द्र इवेत्यर्थः । अत्र इवो लोप आर्षो रूपकं वा ॥ १५ ॥ ( ३४ )

अत्र पृथक्त्वपक्षे यदादित्यसहचारिणं एते ऋषयः तदैवं योज्यम्—

य ऋषय एते कर्म अतनिषत याज्ञं, तस्मिन् इन्द्रे ब्रह्माणि अन्नानि पूर्ववत्समग्मत समागच्छन्तीति शेषं समानमेवेति ।

इति श्रीमद्यास्कमुनिप्रणीतनिरुक्तविवृतौ दै० कां० द्वादशाध्यायस्य तृतीयः पादः ॥ १२ ॥ ३ ॥

---

१. अत्र—अजो जन्मरहित एकोऽसहाय एव पद्यते गच्छतीत्येकपात् । एतत्पद्व्याभिधेयो देव इति व्याख्यानम् ॥

२. "उदितो वा" ( पा० ७-२-५६ ) इति क्त्वायां "वेट्त्वाद् "यस्य विभाषा" ( पा० ७-२-१५ ) इतीभाव इत्यर्थः ॥

१. पूर्वेषामन्येषां वसिष्ठादीनां यज्ञेषु यथा हवींषि स्तोत्राणि च इन्द्रेण सङ्गच्छन्ते तद्वत् । अत्र "प्रत्नपूर्वविश्वेमात्थाल्छन्दसि" ( पा० ५-३-१११ ) इतीवार्थे थाल्प्रत्ययः ॥

२. "समो गम्यृच्छिभ्याम्" ( पा० १-३-२९ ) इत्यात्मनेपदं लुङि "मन्त्रे घस०" ( पा० २-४-८० ) इति च्लेर्लुक् "गमहन०" ( पा० ६-४-९८ ) इत्युपधालोपः ॥

## द्वादशाध्यायस्य चतुर्थः पादः ।

अतःपरमेतदेवोत्तमं ज्योतिर्गणशब्दाभिधेयत्वेन निर्वाच्यम् । एतदेव हि गुणविकारोपजनापेक्षया भेदाभेदाभ्यां मन्त्रदृशः पश्यन्तः स्तुवते, तदर्थं विशेषतः पुनरधिकारवचनम्—

**अथातो द्युस्थाना देवगणाः ॥**

इति । द्यौः स्थानमेषामिति द्युस्थानाः । के पुनस्ते ? **देवगणा** इति । देवानां मित्रप्रभृतीनां गणाः । पृथक्त्वपक्षे गणा इति बहुवचनमर्थवत् ॥

**तेषामादित्याः प्रथमागामिनो भवन्ति ॥**

प्रत्यक्षत्वात् । सप्त ऋषय इत्यादयोऽन्ये परोक्षा एवेति ॥

**आदित्या व्याख्यातास्तेषामेषा भवति ॥ १ ॥ ( ३५ )**

**आदित्याः** (२४) ते पुनरभिधाननिर्वचनतो **व्याख्याताः** ( नि० २–१३ ) आप्तोरसानित्येवम् । केवलं त्वत्र बहुत्ववचनमिति विशेषः । **तेषाम्** आदित्यानाम् **एषा** प्राधान्यस्तुतिर्**भवति** । यां दृष्ट्वेह द्युस्थाने गणाभिधानेन समाम्नातः ॥१॥(३५)

**"इमा गिर॑ आदि॒त्येभ्यो॑ घृ॒तस्नू॑ः स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि । शृ॒णोतु॑ मि॒त्रो अ॑र्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ अंश॑ः" ॥ १ ॥**

( ऋ० सं० २–७–६ )

**इमा** इति । गृत्समदपुत्रस्य कूर्मस्यार्षं गृत्समदस्यैव वा त्रैष्टुभमादित्यदैवत्यम् । होता ब्रवीति–अहम् **आदित्येभ्यो**ऽदितिपुत्रेभ्यः **राजभ्यः** राजमानेभ्यः ईश्वरेभ्यो वा मित्रादिभ्यः **घृतस्नूः** घृतमाहुतिलक्षणं याः प्रस्नुवन्ति ( प्रक्षरन्ति ) ता घृतस्नूः । "वा छन्दसि" ( पा० ६–१–१०६ ) इति वा पूर्वसवर्णदीर्घः । **इमाः** स्तुतिलक्षणाः **गिरः** वाचः ( आभिर्गीर्भिर्मन्त्रैर्घृतस्राविभिः ) **सनात्** सर्वदा **जुह्वा** जुहूसंज्ञकेन पात्रेण **जुहोमि** । **नः** अस्माकमाशीर्युक्तास्ता गिरः **मित्रादयः** प्रत्येकं शृणोतु । तत्समर्थनाय । आकर्णयतु । अत्रार्थभेदेन पदावृत्तिर्विभक्तिव्यत्ययश्च यथायथमूह्यः ॥ १ ॥

अथास्या भाष्यम्—

**घृतस्नूर्घृतप्रस्राविन्यो घृतप्रस्नाविण्यो घृतसानिन्यो घृतसारिण्य इति वा, ऽऽहुतीरादित्येभ्यश्चिरं जुह्वा जुहोमि, चिरंजीवनाय राजभ्य इति वा, शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता, दक्षो वरुणोंऽशश्च ॥**

**घृतस्नूरि**ति ताच्छील्यक्विबन्तं "ष्णु प्रस्रवणे" (अ० प०) इत्यस्य । तदेतत्ताच्छील्यणिनिना व्याचष्टे **घृतप्रस्राविण्य** इत्यादि । **घृतप्रस्राविण्य** इति । धात्वन्यत्वमर्थैकत्वम् । **घृतसानिन्य** इति । घृतं देवान्प्रति सानयन्ति संभाजयन्तीति तथा । सनोतेः संभजनार्थस्य ( भ्वा० प० ) अथ **वा घृतसारिण्य इति** । "सृ गतौ" ( भ्वा० प० ) इत्यस्य । देवान्प्रति घृतं याः सारयन्ति गमयन्तीति । सनादित्यस्यार्थमाह–**चिरमिति** । सना सनत् सनात् इति समानार्थान्यव्ययानि । अथवा सनादिति यावदायुषोऽत्युत्सर्गेणेत्याह–**चिरंजीवनायेति** । क्रियाविशेषणतया व्याख्याय नामविशेषणतयैव यथाश्रुतं व्याचष्टे–**चिरं राजभ्य इति वेति** । चिरन्तनेभ्यः । सर्वलोकराजभ्यः । तुवीति बहुनाम ( निघं० ३–१ ) तदाह **बहुजातश्चेति** । यथाह दुर्गः–सर्वविधावृत्वाद्बहुजन्मा धाता यावदधिकारं जन्मेति । तथाच स एव धाता ॥

**अंशोंऽशुना व्याख्यातः ॥**

अंशुः शमष्टमात्रो भवतीत्येवम् ( नि० २–५ ) **अंशुना**शुशब्देन सहांशोऽपि व्याख्यातः । अत्र–प्रत्येकमप्येते मित्रादयो द्युस्थानत्वेनोपेक्ष्याः । शास्त्रातिगौरवभयात्तु न पृथक्पृथक् द्युस्थानत्वेन समाम्नाताः । ते त्वादित्यलिङ्गलिङ्गितेषु मन्त्रेषु पृथक्पृथक् उपेक्ष्याः । तत्स्तुतीनां पृथगपि विद्यमानत्वात् ॥

अथ—

**सप्तऋषयो व्याख्यातास्तेषामेषा भवति ॥ २ ॥ ( ३६ )**

**सप्तऋषयः** (२५) वक्तव्याः । ते पुनरमी–**व्याख्याताः** ( नि० १०–२९ ) निर्वचनतः । इह त्वभिधेया रश्मय इन्द्रियाणि वा मनःषष्ठानि विद्यासप्तमानि "सप्त सृप्ता संख्या" ( नि० ४–२६ ) "ऋषिर्दर्शनात्" ( नि० २–११ ) इति । सप्त च ते ऋषयश्च सप्तर्षयः । **एषा** प्राधान्यस्तुतिः ॥ २ ॥ ( ३६ )

---

१. एतच्च दुर्गेण व्याख्यातम् । सायणेन तु–जुह्वा–वाङ्नामैतत् वागिन्द्रियेण जुहोमि प्रयच्छामि करोमीति यावत् । यद्वा जुहूस्थानीयत्वेन घृतं क्षरन्ति । वाग्रूपाणि हवींषि जुहोमि आदित्यानुद्दिश्य त्यजामि । मन्त्राणां पयोघृतादिक्षरणे हेतुत्वं च–"यद्दृचोऽधीते पयसः कुल्या अस्य" इत्यादिना तैत्तिरीये आरण्यकेऽष्टमप्रपाठके स्पष्टमाम्नातम् । नोऽस्मदीयास्ता गिरः मित्रादयः प्रत्येकं शृणोतु । तेच तैत्तिरीये–"अष्टौ पुत्रासो अदितेः" ( तै० आ० १ प्रपाठके ) स्पष्टमनुक्रान्ताः "मित्रश्च वरुणश्च धाता चार्यमा चांशुश्च भगश्चेन्द्रश्च विवस्वांश्चेत्येते" इति । मित्रः प्रमीतेः–(मृत्योः) त्रायकः । यद्वा–सर्वेषां स्निग्धः । अरीन्यच्छति । नियच्छतीत्यर्यमा भगो भजनीयो देवः । तुविजातः–तुवीति बहुनाम, बहुषु देशेषु भक्तानुग्रहार्थं प्रादुर्भूतः । वरुणविशेषणमेतत् । पापस्य निवारणाद्वरुणः । दक्षः समर्थः । एतच्चांशस्य विशेषणं इति ॥

१. अयं दुर्गोक्तो लौकिकविग्रहः । "दिक्संख्ये संज्ञायाम्" ( पा० २–१–५० ) इति नियमेन नित्यसमासविधानात् "अविग्रहो नित्यसमासोऽस्वपदविग्रहो वे"ति नियमाद्युक्तः प्रतिभाति ॥

"सप्तऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ" ॥ ५५ ॥

( य० वा० सं० ३४ )

सप्तेति । हिरण्यगर्भस्यार्षम् । आथर्वणे आत्मस्तुतौ विनियोगः । उत्तरा च । शृणाति (हिनस्ति) सर्वमिति शरीरमादित्यः । आश्रयणाद्वा सर्वमिदमस्मिन्नाश्रितमिति । तस्मिन् **शरीरे** आदित्ये **सप्तऋषयः** रश्मयः **प्रतिहिताः** प्रत्येकं निहिताः । **सप्त** सप्तैव । अन्यूनाधिकाः सन्तः सार्वदिक्कमुदकमुपनयन्त-स्तेनेद्धास्तमादित्यम् **सदम्** सदैव संवत्सरं व्याप्य **अप्रमादम्** । क्रियाविशेषणमेतदित्यप्रमाद्यन्त इति भाष्यम् । अनुत्सर्गेण स्वस्य कर्मणः **रक्षन्ति** निरिन्धनः पार्थिवोऽपि ह्यग्निरिन्धनक्षयान्निर्वाप्यते । अत एव **सप्त** सृप्ताः **आपः** आपनाः ( सर्वस्य लोकस्य व्यापनाः ) **स्वपतः** अस्तमुपगच्छतः अस्यादित्यस्यैव तं **लोकम्** आत्मानम् ( लोक्यतेऽसाविति लोक आत्मा तम् ) **ईयुः** यन्ति । वर्तमाने लिट् ( पा० ३–४–६ ) ( गच्छन्ति ) बाह्यं मण्डलं प्रविशन्ति । तेष्वनुप्रविष्टेषु **तत्र** सुप्तेषु उपरतप्रकाशवृत्तिषु तत्रान्तर्गतौ **अस्वप्नजौ** न स्वप्नो निद्रा जायते ययोस्तौ **सत्रसदौ** यज्ञसदौ । यद्वा । सतां त्राणं सत्रं तत्र सदौ कृतावस्थानौ जीवितदातारावित्यर्थः । एवंभूतौ **देवौ** वाय्वादित्यौ **जागृतः** ॥ ५५ ॥

अथास्या भाष्यम्—

**सप्त ऋषयः प्रतिहिताः शरीरे-रश्मय आदित्ये । सप्त रक्षन्ति सदमप्रमादम् संवत्सरमप्रमाद्यन्तः । सप्तापनास्त एव स्वपतो लोकमस्तमितमादित्यं यन्त्यत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यावित्यधिदैवतम् ॥**

यन्तीतीयुरित्यस्यार्थः । अत्रेति तत्रेत्यस्य । व्याख्यातमन्यन्मन्त्रार्थे ॥

**अथाध्यात्मम्-सप्त ऋषयः प्रतिहिताः शरीरे । षडिन्द्रियाणि विद्यासप्तमानि, आत्मनि । सप्त रक्षन्ति सदमप्रमादम् । शरीरमप्रमाद्यन्ति, सप्तापनानीमान्येव स्वपतो लोकमस्तमितमात्मानं, यन्त्यत्र जागृता अस्वप्नजौ सत्रसदौ च देवौ प्राज्ञश्चात्मा तैजसश्चेत्यात्मगतिमाचष्टे ॥**

अयमर्थः । मण्डलवदस्मच्छरीरे रश्मिवदिन्द्रियाणि ( विद्यासप्तमानि ) प्रतिहितानि निहितानि, तच्छरीरं नित्यं रूपाद्यालोकनापकारेण रक्षन्ति अप्रमाद्यन्ति ( सन्ति ) सप्तापनानि व्यापनानि विषयाणां शरीरस्य वा । तान्येव स्वपतोऽस्य जीवस्य सुखदुःखभोक्तुर्लोकं शरीरमेव प्रत्यस्तमितमीयुः । बुद्धिद्वारेण भोक्तर्येव भावनानुरूपेण लीयते । तद्भावनोपपादकः स्वप्नभोक्तुः स्वप्नो भवति । तत्र जागृतः शरीरप्रतिपालनार्थं, प्राज्ञश्चात्मा चिन्मात्रेण यः शरीरं व्याप्य वर्तते, तैजसश्च प्राणोऽन्नं प्राणं पचन् व्यूहंश्च रसान्तर्भूतं तेजो वायुवृत्तिरिति दुर्गः ॥

**तेषामेषाऽपरा भवति ॥ ३ ॥ ( ३७ )**

अपरा पुनः किमर्थम् ? रश्मय एवेति स्फुटतायै ॥ ३ ॥ ३७ ॥

"तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम् । अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः" ॥ ९ ॥

( अथ० सं० १०–२६ )

तिर्यगिति । **तिर्यग्बिलः** तिर्यञ्चि तिर्यङ्मुखानि बिलानि रश्मिच्छिद्राणि अस्य मण्डलस्य मधुपूर्णस्येवासौ **चमसः** चमनं चोदकमेष सनोतीति । **ऊर्ध्वबुध्नः** ऊर्ध्वावस्थितो बोधयति प्रकाशेनेति । **यस्मिन्** चमसे मण्डले **विश्वरूपम्** अनेकप्रकारकमनेकरूपं **यशः** उदकम् ( निघं० १–१२ ) **निहितम्** नियमेन नितरामधिकं वा हितमवस्थापितम् । कैस्तन्निहितम् ? इत्युच्यते–**ये अस्य महतः** जगतः आत्मनो वा **गोपाः** गोप्तार एते रश्मयः **बभूवुः** भवन्ति । वर्तमाने लिट् ( पा० ३–४–६ ) ये च **अत्र** एतस्मिन्मण्डले **साकम्** एकीभूतास्तदधिष्ठात्रा सह **आसते** निवसन्ति तैर्हि चतसृषु दिक्षु ऊर्ध्वमधोमण्डलं चोत्पन्नानि यानि ज्योतींषि असते रश्मयः **सप्त** सर्पणाः **ऋषयश्च** ऋषणाद्दर्शनादस्य धर्मस्योच्यन्ते ॥ ९ ॥

अथास्या भाष्यम्—

**तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन्यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहादित्यरश्मयो ये अस्य गोपा महतो बभूवुः । इत्यधिदैवतम् ॥**

**अथाध्यात्मम्—तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा, यस्मिन्यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहेन्द्रियाणि यान्यस्य गोप्तॄणि महतो बभूवुरित्यात्मगतिमाचष्टे ॥**

अयमर्थः–तिर्यक्छिद्रमिदमेव शिरश्चमसश्चम्यन्तेऽनेन रसा इति । ऊर्ध्वबन्धनश्च उपरि व्यवस्थितमेतद्बन्धनमस्य शरी-

१. "सावधारणं सर्वं वाक्यमब्भक्षो वायुभक्ष" इति न्यायात् ॥

२. आदित्यस्तन्मण्डलान्तरपुरुषस्तदधिष्ठाता । योऽसौ हिरण्यमश्रुः हिरण्यकेश इति विज्ञायते वायुश्च ॥

रस्य । एतद्वियोगे हि विस्रंसते शरीरम् । यस्मिन्यशो निहितं विश्वरूपं नानाप्रकारमिन्द्रियत्वेन स्मृतं रसाख्यं ज्ञानाख्यं वा । तस्य चमसस्य ये विधातारस्तद्वारेणास्य शरीरस्य महतो गोप्तारः । तत्रैव चमसान्तरमनुप्रविष्टाः साकं सह तद्यश उपजीवन्त आसत इति दुर्गः ॥

अथ—

**देवा व्याख्यातास्तेषामेषा भवति॥४॥(३८)**

**देवाः** (२६) वक्तव्याः । ते पुनः व्याख्याताः ( नि० ७-१५ ) देवो दानाद्वा दीपनाद्वा द्योतनाद्वेत्येवं निर्वचनतः । इह तु रश्मयो बहुवचनेनोच्यन्त इति विशेषः । **एषा** प्राधान्यस्तुतिः ॥ ४ ॥ ( ३८ )

**"देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम् । देवानां सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे" ॥ २ ॥** ( ऋ० सं० १-६-१५ )

**देवानामिति** । गोतमस्यार्षं जागतं वैश्वदेवम् । देवेभ्यो वशामालभेतेति विनियोगः । अस्य पशोर्वपायाः पुरोनुवाक्या । **देवानाम्** गन्तॄणाम् रश्मीनाम् । कथंभूतानाम्? **ऋजूयताम्** ऋजुगामिनाम् ऋतुगामिनां ( ऋतावृतौ यथाकालमस्मान्मण्डलाद्गच्छताम् ) वा **भद्रा** सुखयित्री भजनीया वा **सुमतिः** शोभना ( प्रसादाभिमुखी ) मतिः ( बुद्धिः ) "अस्माकमर्थेऽस्तु" इति शेषः । किंच **देवानाम् रातिः** दानं ( धनलाभः ) **नः** अस्मान्प्रति **अभि** आभिमुख्येन **नि** नितरां नियमेन वा **वर्तताम्** तदभिमतफलप्रदानम् ( धनलाभोऽपि ) अस्माकमस्त्वित्यर्थः । ततश्च तेन धनलाभेनोपजनितसामर्थ्याः सन्तः **वयम्** तेषामेव **देवानाम् सख्यम्** समानतां यज्ञे कर्मणि समानमङ्गभावम् **उपसेदिम** उपसीदेम प्राप्नुयाम ( उपगच्छेम ) "षद्लृ विशरणगत्यवसादनेषु" (भ्वा० प०) ततः "छन्दसि लुङ्लङ्लिटः" ( पा० ३-४-६ ) इति वर्तमाने प्रार्थनायां लिट् । सांहितिको दीर्घः । ( पा० ६-३-१३७ ) ततश्च तथाभूतानां **नः** अस्माकम् **आयुः** जीवितकालम् **जीवसे** जीवितुं ( चिरंजीवनाय ) तुमर्थेऽसे प्रत्ययः ( पा० ३-४-९ ) ते **देवाः प्रतिरन्तु** प्रवर्धयन्तु इत्येतदाशास्महे ॥ २ ॥

अथास्या भाष्यम्—

**देवानां वयं सुमतौ कल्याण्यां मतावृजुगामिनामृतुगामिनामिति वा, देवानां दानमभितो निवर्तताम्, देवानां सख्यमुपसीदेम वयं, देवा न आयुः प्रवर्धयन्तु चिरंजीवनाय ॥**

अवगतार्थमेतन्मन्त्रार्थे ॥

अथ—

**विश्वेदेवाः सर्वे देवास्तेषामेषा भवति ॥ ५ ॥ ( ३९ )**

**विश्वेदेवाः** ( २७ ) वक्तव्याः **सर्वेदेवाः** । त एव रश्मय उपहितविश्वविशेषणाः सन्तो विश्वेदेवा भवन्ति **तेषां** तदभिधानविशिष्टानाम् **एषा** प्राधान्यस्तुतिर्भवति ॥५॥(३९)

**"ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वांसो दाशुषः सुतम्" ॥ १ ॥**

( ऋ० सं० १-१-६ य० वा० सं० ७-३३ )

**ओमास** इति । मधुच्छन्दस आर्षं गायत्रं वैश्वदेवत्यम् । प्रउगे ग्रहे विनियोगः । वैश्वदेवस्य ग्रहः प्रातःसवनेऽनेन गृह्यते । **हे विश्वेदेवासः!** विश्वेदेवाः! एतन्नामका देवविशेषाः! "आज्जसे०" ( पा० ७-१-५० ) इत्यसुगागमः । ये यूयम् **चर्षणीधृतः** चर्षणीनां मनुष्याणाम् ( निघं० २-३ ) धारयितारः स्थितिकर्तारः । अथ च-**ओमासः** अवितारः रक्षितारः स्वेनोपकारेण । अवनीया वा तर्पणार्हाः । "अव रक्षणे" ( भ्वा० प० ) इत्यस्मान्मभित्युत्पत्तौ "अविसिविसिशुषिभ्यः कित्" ( उ० १-१४२ ) इति कर्तरि कर्मणि वा मन्प्रत्ययः । "ज्वरत्वर०" ( पा० ६-४-२० ) इत्यूठ् । मनः किलेऽपि बाहुलकाद्गुणः । अवन्तीत्योमासः । पूर्ववदसुगागमः । ते यूयम् **दाश्वांसः** दत्तवन्तः । इदं नामास्माभिरस्मै देयमिति मनसा कृतसंकल्पा भूत्वा ततोऽस्य **दाशुषः** दत्तवतः हवींषि, यजमानस्यैतं **सुतम्** अभिषुतं सोमं पातुम् **आगत** आगच्छत इत्येतदाशास्महे । अत्रागतेति गमेर्लोङि "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुकि सति "अनुदात्तोपदेश०" ( पा० ६-४-३७ ) इत्यादिना मकारलोपः । दाश्वांस इति तु "दाशृ दाने" ( भ्वा० उ० ) इत्यस्य "दाश्वान्साह्वान्मीढ्वांश्च" ( पा० ६-१-१२ ) इति क्वसुप्रत्ययान्तो निपातः । तस्यैव "वसोः संप्रसारणम्" ( पा० ६-४-१३१ ) इति संप्रसारणे दाशुष इति षष्ठ्येकवचने रूपमूह्यम् ॥ १ ॥

अत्र विश्वशब्दः सर्वशब्दपर्याय इति यास्कस्य मतं, देवविशेषस्यैवासाधारणं लिङ्गमिति शाकपूणेः । तथाच भाष्यम्—

**अवितारो वा अवनीया वा मनुष्यधृतः सर्वे**

---

१. निलमृज्वेव मण्डलादनावरणत्वादन्तरिक्षस्य, सर्वतो(दीव्यन्ति)यन्तीति देवा रश्मय इति दुर्गः ॥

२. अनुग्रहात्मिकेति सायणः ॥

३. सख्यं सखित्वं सख्युः कर्म वेति सायणः । "सख्युर्यः" ( पा० ५-१-१२६ ) इति यप्रत्ययः ॥

४. प्रपूर्वस्तिरतिर्वर्धनार्थ इत्यसकृदवोचाम ॥

१. चर्षणयो मनुष्यास्तान्वृष्टिदानादिना धारयन्तीति चर्षणीधृतो देवा इति सायणः । अत्र धरतिरन्तर्भावितण्यर्थस्ततः क्विपि तुगागमः ॥

**च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति ॥**

अवगतार्थमेतत् । अधुना विश्वान्देवानधिकृत्य तद्गतमेवाधियज्ञे किंचिद्विचारयिष्यन्नुपोद्घन्ति—

**तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते ॥**

इत्येवम्–**तत्** इति समाम्नायस्यानुस्मृतये । **एतद्** इति वक्ष्यमाणार्थसन्निधीकरणाय । **एकं तृचं सूक्ते वैश्वदेवं गायत्रं** गायत्रेण छन्दसा युक्तम् **दशतयीषु** सर्वास्वपि बह्वीषु शाखासु **विद्यते** नान्यदस्त्येवास्मिञ्छन्दसि । प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरधियज्ञे । तत्र किं कर्तव्यमित्यत आह—

**यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिः ॥**

**बहुदैवतं** मन्त्रजातं, गायत्रेण छन्दसा युक्तम् । **युज्यते** न्याय्यमिति यास्कः । **यदेव विश्वलिङ्गं** विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा तदेव वैश्वदेवानां स्थाने विनियुज्यते–न बहुदेवतामात्रेण **इति शाकपूणिराचार्यो** मन्यते ॥

तत्किमस्यापि यास्काचार्यस्यैतदेवाभिमतमुत नेत्यत आह—

**अनत्यन्तगतस्त्वेष उद्देशो भवति । बभ्रुरेक इति दशद्विपदा अलिङ्गाः ॥**

**अनत्यन्तगतो**ऽनैकान्तिकः । **उद्देश** उद्देशनं प्रतिज्ञा **एषः** "यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां स्थाने विनियुज्यते" इति । **तु**शब्दः पूर्वपक्षव्यावृत्तौ । अयमनैकान्तिकः इति । उच्यते–वैश्वदेवं हि मन्त्रजातं समाम्नाये क्रियार्थमुत्पद्यमानं, "आम्नायस्य क्रियार्थत्वात्" (जै० सू० १–२–१) गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति, विश्वयुक्तमन्त्रजातवद्यावत्कर्मसु सर्ववैश्वदेवेषु तच्छन्दस्केष्वलमिति–नच तत्सर्वास्वपि दशतयीष्वस्ति छन्दस्यलं कर्मोत्पादे, प्रयोजनं च तच्छन्दोयुक्तैरपि विविधैर्मन्त्रैर्भवति । नच ते तथाविधाः सन्तीति बहुदेवताश्च तस्मिञ्छन्दसि सन्ति ॥

तत्किमस्तु–तस्य कर्मणः प्रहाणम् ? उत वा तत्स्थाने बहुदैवतानि सूक्तान्योप्यन्ताम् ? इति–उच्यते–युक्तं यद्बहुदेवतान्योप्येरन्निति यास्काचार्यः पश्यन्नाह–"यत्तु किंचिद्बहुदैवतं तद्बहुदेवतानां स्थाने युज्यते" इति । सेयमनुत्पत्तिर्गायत्रे छन्दसि वैश्वदेवानां मन्त्राणां यावदलं कर्मणि गमयति । बहुविश्वशब्दयोरितरेतरार्थाभिधेयप्रत्यासत्त्या बहुदेवान्यपि वैश्वदेवानां स्थाने युज्यन्त एवेति ॥

अपि चैवमनत्यन्तगत उद्देशः । येन—

**भूतांशः काश्यप आश्विनमेकलिङ्गम् ॥**

**भूतांशो** नाम ऋषिः **काश्यपः** कश्यपपुत्रः । स **एकेनाश्विलिङ्गेन** युक्तमनेकर्चं सूक्तं ददर्श । तत्र यास्वपि ऋक्षु अश्विलिङ्गं नास्ति तासामप्याश्विनीत्वं तेनैवैकेनाश्विलिङ्गेन भवति । यथैकेनापि छत्रिणा मध्यगतेन "छत्रिणो यान्ति" इति ते सर्वेऽपि छत्रिणो भवन्ति । एवमेकेन विश्वलिङ्गेन यावन्ति सूक्तानि कर्मणि युज्यन्ते बहुदेवतानि, अविश्वलिङ्गान्यपि तानि तदर्थसाधकानीति ॥ यथा "ऋध्याम स्तोम"मिति–अश्विलिङ्गं, येन "उभौ" इत्याद्येकादशर्चं सर्वमपि पर्फरीसूक्तमाश्विनम् । यथाचानुक्रम्यते—"उभौ भूतांशः काश्यप आश्विनम्" इति । यथा—

"ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोपयातम् । यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः" ॥ ६ ॥ ( ऋ० सं० ८–६–२ )

**ऋध्यामेति** । अनादेशपरिभाषया त्रिष्टुबियम् । हे अश्विनौ ! वयं **स्तोमं** त्रिवृत्पञ्चदशादिकम् **ऋध्याम** ऋध्यास्म वर्धयेम । 'ऋधु वृद्धौ' ( दि० पं० ) अस्मादाशीर्लिङि "किदाशिषि" ( पा० ३–४–१०४ ) इति यासुट् कित्वाद्गुणाभावः । किंच **वाजं** हविर्लक्षणमन्नं युवाभ्यां **सनुयाम** प्रयच्छेम । "षणु दाने" ( त० अ० ) प्रशंसायां लिङ् । तस्माद्युवाम् **सरथा** सरथौ–समानरथौ । औङ आकारः (पा० ७–१–३९) । एकमेव रथमारूढौ सन्तौ **इह** अस्मिन्कर्मणि **नः** अस्मदीयम् **मन्त्रम्** मननीयं स्तोत्रम् **उपयातम्** उपागच्छतम् **गोष्वन्तः** गोरूधस्यान्तः स्थितम् **पक्वम्** परिणतम् अत एव **मधु** मधुरम् **यशो न** यश इत्यन्ननाम । नश्चार्थे । क्षीराज्यादिलक्षणं महावीरपात्रे अवनीयमानमन्नं चावेक्ष्य, आगच्छतमिति संबन्धः । एवमुक्तप्रकारेण **भूतांशः** एतन्नामा ऋषिः **अश्विनोः कामम्** अभिलाषमात्मीयाभिः स्तुतिभिः । **अप्राः** आपूरयत् । संपूर्णमकार्षीदित्यर्थः । "प्रा पूरणे" ( अ० प० ) व्यत्ययेन लुङो मध्यमः ॥ ६ ॥

**अभितष्टीयं सूक्तमेकलिङ्गम् ॥**

**सूक्तं** चैन्द्रं, तदपि **एकलिङ्गम्** । तद्यथा—

"शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ । शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम्" ॥ ७ ॥ ( ऋ० सं० ३–२–४ )

**शुनमिति** । वैश्वामित्रं त्रैष्टुभमैन्द्रम् । आभिषविके प्रथमेऽहनि माध्यन्दिनसवने शस्यते । वयं **वाजसातौ** वाजस्यान्नस्य

१. सव्यभिचारः । व्यभिचरितहेतूपेत इत्यर्थः ॥

१. अभितष्टीयमिति समाख्यास्य सूक्तस्य तदर्थपदघटितमन्त्रादिकत्वादुत्पद्यामः । तथा च "इच्छन्ति त्वे"ति प्रथमे मन्त्रे "तितिक्षन्ते अभिशस्तिम्" इति पठ्यते इति ॥

२. दुर्गस्तु—वाजसाताविति संग्राममेव विशेषितवान् । यस्मिञ्छत्रून् जित्वान्नानि संभज्यन्ते तस्मिन् इति । तथा चायं "षण संभक्तौ" ( त० प० ) इत्यस्य सातिमभिप्रैति । वयं तु षणु दाने (स्वा० प०) इत्यस्य क्तिनि "जनसन०" ( पा० ६–४–४२ ) इत्यात्वं प्रतीमः ॥

सातिर्दानं लाभो वा यस्मिंस्तस्मिन् **अस्मिन् यज्ञे ऊतये** अवनाय रक्षणाय। "ऊतियूति०" (पा० ३-३-९७) इत्यादिना निपातः। अथवा आत्मनो विजयाय। वृध्द्यर्थोऽप्यवतिरमित्र-द्विष विजय एवेति दुर्गस्वामिसन्धिः। **इन्द्रं** निरतिशयैश्वर्यवन्तं तन्नामकं देवम्। **हुवेम** आह्वयेम। कथंभूतं? **मघवानं** धनवन्तम्। मघमिति धननाम। ( निघं० २-१० ) **भरे** बिभ्रति जयलक्ष्मीमनेन योद्धार इति भरः संग्रामस्तस्मिन् ( निघं० २-१७ ) **शुनम्** शूनम् उत्साहने प्रवृद्धम्। यद्वा-शुनमिति सुखनाम ( निघं० ३-६ ) सुखकरम्। **नृतमम्** सर्वस्य जगतोऽतिशयेन नेतारम्। **शृण्वन्तम्** "अस्माभिः क्रियमाणां स्तुतिमि"ति शेषः। **उग्रम्** शत्रूणां भयंकरम् **समत्सु** सङ्ग्रामेषु ( निघं०२-१७ ) **वृत्राणि** वारकाणि शत्रुजातानि वृत्रोपलक्षितानि सर्वाणि रक्षांसि वा विजयाय **घ्नन्तं** हिंसन्तम् **धनानाम्** शत्रुसंबन्धिनाम् **संजितं** सम्यग्जेतारम् ॥ ७ ॥

अथ—

**साध्या देवाः साधनात्। तेषामेषा भवति ॥ ६ ॥ ( ४० )**

**साध्याः** ( २८ ) ते च **देवाः** रश्मयः नैरुक्तपक्षे। ऐतिहासिकानां तु कर्मभिरात्मभिरात्मसाधनात्पूर्वे देवसमूहाः। ये च किल विश्वसृजो नाम ऋषयो द्वादश। तथाच **साधनात्** साध्याः "ऋहलोर्ण्यत्" (पा० ३-१-१२४) इति ण्यत्प्रत्ययः। स च "कृत्यल्युटो बहुलम्" ( पा० ३-४-११३ ) इति कर्तर्यत्र भवति। "रसाहरणादिकं स्वव्यापारं साधुवन्ति" इति स्कन्दस्वामी। "साध्यन्ते आराध्यन्त इति साध्याः" इति क्षीरस्वामी। अत्र यथाप्राप्तो ण्यत्। दुर्गस्तु-ते हि सर्वमिदं साधयन्ति यदन्येन सर्वकर्मभिरसाधितं तत्साधयन्तीति साध्या उच्यन्ते। ते च पुनः प्राणाः विश्वसृज ऋषयः ये सहस्रसंवत्सरसत्रेणेष्टं विश्वमसृजन्त, त एवैतेऽधिदैवं रश्मयः। विज्ञायते हि-"प्राणा वै सप्त ऋषयः साध्या विश्वसृजः" इति। **तेषामेषा** प्राधान्यस्तुतिर्भवति ॥ ६ ॥ ( ४० )

**"य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन्। ते ह॒ नाकं॑ महि॒मान॑ः सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः" ॥ ४ ॥**

(ऋ० सं० २-३-२३। ८-४-१९-६ य० वा० सं० ३१-१६)

**यज्ञेनेति।** दीर्घतमस आर्षं त्रैष्टुभं साध्यदैवत्यम्। **देवाः** देवभाविनः पूर्वे ज्ञानकर्मसमुच्चयकारिणो यजमानभावमापन्नाः साध्याः विश्वसृजः ऋषयः प्राणाः **यज्ञेन** अग्निना स्थावरजङ्गमभावमापन्नेन हविर्भूतेन **यज्ञम्** अग्निमेव सर्वदेवताभूतमादित्यादिप्रनाडिकया महान्तमात्मानम् **अयजन्त** पूजितवन्तः। तस्मात्पूजनात् **तानि धर्माणि** तानि कर्माणि तथाविधज्ञानयुक्तानि **प्रथमानि** मुख्यानि महदात्मभावापत्तये **आसन्** तैरपि क्रियन्त इत्यर्थः। **ते** च तानि कृत्वा नियमेनैवानन्यभाविलात्तत्फलस्य **महिमानः** तदानुपूर्व्येण जातमहदात्मभावाः सन्तः। तमेव **नाकं** महान्तमात्मानमेकान्तसुखं **सचन्त** तद्भावमेव ते आपेदिरे "षच सेचने सेवने च" ( भ्वा० आ० ) लङ्। अडभाव आर्षः ( पा० ६-४-७५ ) किं त एव? इति नेत्युच्यते **यत्र पूर्वे साध्याः सन्ति देवाः** शब्दार्थोपदेशनित्यत्वाद्यत्र पूर्वे च पूर्वतरे च ज्ञानकर्मसमुच्चयकारिण आसते सन्ति जग्मुरित्यर्थः। विज्ञायते हि-"विश्वसृजः प्रथमे सत्रमासत" इति ॥ ४ ॥

तथाचास्या भाष्यम्—

**"य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वाः"। अग्निनाग्निमयजन्त देवाः ॥**

इति। ब्राह्मणमपि चैतमर्थमेवानुविदधातीत्याह—

**"अग्निः पशुरासीत्तमालभन्त तेनायजन्तेति च ब्राह्मणम्। तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन्। ते ह॒ नाकं॑ महि॒मान॑ः समसेवनाः। यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः" साधनाः। द्युस्थानो देवगण इति नैरुक्ताः। पूर्वं देवयुगमित्याख्यानम्" ॥**

**साधना** इति साध्यशब्दपर्यायनिर्वचनम्। के पुनस्ते? तत्राह-**द्युस्थाना** इति। शिरो ह्यध्यात्मं द्युस्थानभक्ति, अतः सप्तऋषयः, देवाः। विश्वेदेवा, साध्या इति सर्व एते प्राणाः, रश्मयो वेत्युपपद्यते **देवयुगम्** देवानां युगम् "युगं युग्मे कृतादिषु" इत्यमरः। आसीत् तत्र विराड्पास्तिसाधका देवा एव साध्या उच्यन्ते स्म। **इति आख्यानम्** इतिहासः। तथाचैतिहासिकपक्षे-नारायणो नाम ऋषिस्त्रिष्टुप्छन्दः। अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः "पुरुषान्नापरं किंचि"दित्यादिश्रुतिषु प्रसिद्धः स देवता। मन्त्रार्थस्तु—**देवाः** प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन संकल्पेन **यज्ञं** यथोक्तस्वरूपं

---

१. तथा चोक्तम्-"आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः। वसवश्चाष्टसंख्याताः षट्त्रिंशत्तुषिता मताः। आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः। माहाराजिकनामानो द्वे शते विंशतिस्तथा। साध्या द्वादश विख्याता रुद्रा एकादश स्मृताः॥" इति। एते सङ्घचारिणो गणदेवताशब्देन कोशे परिगणिताः॥

१. उक्तं च-"तमुग्निमथुः सर्वगणं सर्वनामानम्" इति। तं अग्निं स्थावरजङ्गमभावेनेति। "तं वंश्रुरार्या व॒यं वसुत्या" (नि०१०-२१) इत्येतत्साद्दर्शनवतः प्रयोक्तुः सर्वमिदमग्निरित्यभिप्रेत्य ब्रवीति यज्ञेनेति॥

२. उपचारात्कारणे कार्यशब्दः। "तादर्थ्यात्ताच्छब्द्यम्" इति हि विज्ञायते, तेन धर्मार्थे कर्मण्यत्र धर्मशब्दः प्रयुक्तः। एवं क्वचित्कार्ये कारणशब्दः॥ यथा "तं वश्चराये-" (ऋ० सं०१-५-१०) ति निगमे॥

प्रजापतिम् **अयजन्त** पूजितवन्तः। तस्मात्पूजनात् **तानि** प्रसिद्धानि **धर्माणि** जगद्रूपविकाराणां धारकाणि **प्रथमानि** मुख्यभूतानि। **आसन्**। एतावता सृष्टिप्रतिपादितसूक्तभागार्थः संगृहीतः। अथोपासनतत्फलानुवादकभागार्थः संगृह्यते। **यत्र** यस्मिन् विराट्प्राप्तिरूपे **नाके पूर्वे साध्याः** पुरातना विराडुपास्तिसाधका **देवाः**। **सन्ति** तिष्ठन्ति। तं **नाकम्** विराट्प्राप्तिरूपं स्वर्गं **ते ह** ते च **महिमानः** तदुपासकमहात्मानः **सचन्त** समवयन्ति प्राप्नुवन्ति। इति। वर्तमाने लङ् ( पा० ३-४-६ ) अडभावो बाहुलकात् ॥ ६ ॥

अथ—

**वसवो यद्विवसते सर्वम् ॥**

**वसवः** ( २९ ) इति वक्तव्यम्। तेपुनरमी त्रिस्थानाः। ते यत्-यस्मात् **सर्वमिदं** विभागेनावस्थितं **वसते** आच्छादयन्ति तस्माद्वसव उच्यन्ते। "वस आच्छादने" ( अ० आ० ) "शृस्वृस्निहित्रप्यसिवसि०" ( उ० १-१० ) इत्यादिना उप्रत्ययः ॥

यावत्किंचित्पृथिवीस्थानमभिभक्ति तत्सर्वं वसुत्वेनाभिप्रेत्याह—

**अग्निर्वसुभिर्वासव इति समाख्या, तस्मात्पृथिवीस्थानाः ॥**

**समाख्या** यौगिकः शब्दः। एवम्—इन्द्रो वासवः। मरुतो वासवाः समाख्यातास्तस्मान्मध्यमस्थाना इत्याह—

**इन्द्रो वसुभिर्वासव इति समाख्या, तस्मान्मध्यस्थानाः ॥**

एवम्—

**वसव आदित्यरश्मयो विवासनात्तस्माद्द्युस्थानाः ॥**

**विवासनात्**-दूरीकरणात्तमसाम्। अत्रार्थे "बहुलमन्यत्रापि संज्ञाछन्दसोः" ( पा० ६-४-५१ वा० ) इति णिलुक्। वासयितारो वा लोकानां वृष्ट्यादिप्रदानेनेति वसवः ॥

**तेषामेषा भवति ॥ ७ ॥ ( ४१ )**

तेषां वसूनाम् **एषा** प्राधान्यस्तुतिर्भवति ॥ ७ ॥ ( ४१ )

**"सुगावो देवाः सुपथा अकर्म य आजग्मुः सवनमिदं जुषाणाः। जक्षिवांसश्च पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि" ॥ १८ ॥**

( य० वा० सं० ८ )

**सुगाव** इति। परमेष्ठिन आर्षम्। समिष्टयजुःषु विनियोगः। हे **वसवः**! तन्नामकाः **देवाः**!। **विश्वे** सर्वे यूयम् **इदं सवनम्** इममस्मदीयं यज्ञम् **जुषाणाः** प्रीयमाणाः सन्तः **आजग्मुः** नित्यमागच्छत। प्रार्थनायां लोटोऽर्थे वर्तमाने लिट् ( पा० ३-४-६ ) पुरुषव्यत्यय आर्षः ( पा० ३-१-८५ ) **वः** युष्माकम् **सुगाः** सुगमनानि **सुपथा** सुपथानि ( सुखेन गमनागमनयोर्यानि सवनानि ) वयम्-**अकर्म** अकार्ष्म कृतवन्तः। "मन्त्रे घस०" ( पा० २-४-८० ) इति च्लिलुक्। अतोऽस्मिन्यज्ञे **जक्षिवांसः** खादितवन्तो हवींषि **पपिवांसश्च** पीतवन्तश्च सोमम् एवं तृप्ताः सन्तः **अस्मे** अस्मासु विषये "सुपां सुलुग्०" ( पा० ७-१-३९ ) त्यादिना सुपः शेभावः। **वसूनि** धनानि **धत्त** निधत्त अर्पयतेत्येतदाशास्महे ॥ १८ ॥

अथास्या भाष्यम्—

**स्वागमनानि वो देवाः सुपथान्यकर्म य आगच्छत सवनानीमानि जुषाणाः, खादितवन्तः पीतवन्तश्च सर्वेऽस्मासु धत्त वसवो वसूनि ॥**

इति। समिष्टयजुष्षु तृतीयसवने विनियोगादत्र द्युस्थाना वसवः ॥

अथ त्रिस्थाना इत्युक्तमत इतरयोरपि स्थानयोः प्रदर्शयति—

**तेषामेषाऽपरा भवति ॥ ८ ॥ ( ४२ )**

**"ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः। अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य" ॥ ३ ॥**

( ऋ० सं० ५-४-६ )

**ज्मयेति**। वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम्। **ज्मयाः** ज्मायाः पृथिव्याः ( निघं० १-१ ) संबन्धिनस्तस्यां भवाः। छान्दसिको ह्रस्वः। **वसवो देवाः**। **अत्र** अस्मिन्कर्मणि लोके वा **रन्त** अरमन्त। "बहुलं छन्दसि" ( पा० २-४-७३ ) इति शपो लुकि अडभावः ( पा० ६-४-७५ ) ये च **उरौ** विस्तृते **अन्तरिक्षे**। **मर्जयन्त** मार्ष्टिर्गत्यर्थः ( निघं० २-१४ )। गमयन्तः यद्यत्तेषां गमयितव्यं ( प्रापयितव्यं यजमानाय तत्तत् ) अथवा वर्तमाना इति दुर्गः। अत्र विसर्गलोप आर्षः। **शुभ्राः** शोभमानाः। तेऽपि अत्रारमन्त। एवमनयोः स्थानयोर्वसून् विभज्याधुना द्युस्थानांस्तान् कृत्वा

---

१. एष निगमो माध्यन्दिनीयानामन्यथा पठ्यते। द्वयोरेवमादिकयोर्मन्त्रयोरंशतः पाठ उपलभ्यते ॥

१. "सुदुरोरधिकरणे" (पा० ३-२-४८ वा०) इति गमेर्डः। विभक्तेराकारः ॥

२. अत्र "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः। बहुव्रीहौ समासान्तोऽकारः। "न पूजनात्" ( पा० ५-४-५९) इति निषेधस्तत्पुरुषादेवेति भाष्यकृतोऽभिमतिः ॥

३. अत्र पूर्वार्धे परोक्षकृतं ततस्तोत्रेण प्रत्यक्षीकृत्योत्तरार्धर्चमाह। एष क्रमोऽन्यत्राप्युक्तपूर्वः ॥

ब्रवीति—ये यूयमेवं त्रिस्थानास्तान्वा ब्रवीमि नित्यम् **अस्य** अग्नेः **नः** अस्माकम् **दूतस्य । जग्मुषः** युष्मान्प्रति गतवतः (क्वसन्तोऽयम्) आह्वानम् **श्रोत** शृणुत । "बहुलं छन्दसि" (पा० २-४-७३) इति शपो लुक् । सांहितिको दीर्घः (पा० ६-३-१३७) अग्निर्हि यजमानानां दूतो देवानाह्वयितुं दिवं गच्छतीति प्रसिद्धं निगमेषु । श्रुत्वा चास्मान् **अर्वाक्** आभिमुख्येन **उरुज्रयः** उरुजवाः । ज्रयतिर्गत्यर्थो नैरुक्तः (निघं० २-१४) विच् । गुणाभाव आर्षः । (बहुजवाः) बहुप्रकारं शतसहस्रमागमनेनैव **पथः** मार्गान् प्रहतान् **कृणुध्वम्** कुरुध्वम् । इत्येतदाशास्महे ॥ ३ ॥

अथास्या भाष्यम्—

**ज्मया अत्र वसवोऽरमन्त देवाः । ज्मा पृथिवी तस्यां भवाः । उरौ चान्तरिक्षे मर्जयन्त गमयन्त शुभ्राः शोभमाना अर्वाच एनान् पथो बहुजवाः कुरुध्वं, शृणुत दूतस्य जग्मुषो नो अस्याग्नेः ॥**

अत्र भाष्यमतेऽर्वागिति हि द्वितीयाबहुवचने विपरिणमय्य व्याख्येयं तदाह—**अर्वाच एनान्पथ** इति । एतेन **शुभ्रा** इत्यपि पथ एव, यान् **गमयन्तोऽरमन्तात्र देवा**स्ता एनान्पथो **बहुजवाः** सन्तो यूयं प्रहतान् **कुरुध्व**मित्येवमन्वादेश एनादेशदर्शनात्प्रतीयतेऽर्थः । दुर्गेण तु यथोक्तपूर्वं व्याख्यातमिति तदेवादृतमस्माभिस्तदनुसारिव्याख्यानप्रतिश्रववद्भिर्बाहुलकत्वमाश्रित्यानन्वादेशेऽप्येनादेशमुपपादयद्भिरिति, यथाभिरुचितं धीधनैरत्र व्याख्येयम् ॥

अथ—

**वाजिनो—व्याख्यातास्तेषामेषा भवति ॥ ९ ॥ (४३)**

**वाजिनः** (३०) व्याख्याताः (नि० २-२८) "अपि स वाजी वेजनवान्" इत्यत्र । केवलमिह वचनकृतो विशेषः । रश्मयोऽभिधेयाः । पृथक्त्वपक्षे देवाश्वाः ॥ ९ ॥ (४३)

**"शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः" ॥ ७ ॥**

(ऋ० सं० ५-४-५ य० वा० सं० ९-१६)

**शं नो** इति । वसिष्ठस्यार्षं त्रैष्टुभं वाजिदैवत्यम् । वाजिनयागे विनियोगः । एतस्मिन् **देवताता** देवतातौ यज्ञे (निघं० ३-१७) सप्तम्या आकारः (पा० ७-१-३९) **हवेषु** आह्वानेषु अस्मदीयेषु स्तोत्रेषु वा **मितद्रवः** सुमितं सुखिष्टं शोभनं वा ये द्रवन्ति ते । "मितद्रवणा मितमार्गा" इति सायणः । **स्वर्काः** सञ्चनाः (सुगमनाः) स्वर्चनाः (शोभनार्चनाः) स्वर्चिष इति वेति भाष्यम् । "शोभनान्ना" इति सायणस्तन्मते । अर्क इत्यन्ननाम (निघं० २-७) **वाजिनः** एतदभिधायका देवाः । **नः** अस्माकम् **शं** सुखाः (सुखकराः सुखाय वा) **भवन्तु** । अपिच—**अहिम्** आगत्य हन्तारं शत्रुं **वृकं** स्तेनं (निघं० ३-२४) **रक्षांसि** च **जम्भयन्तः** हिंसन्तः "जभि नाशने" (चु० प०) लटः शता । **सनेमि** पुरातनान् (निघं० ३-२७) शीघ्रं वा । **अमीवाः** रोगान् अस्मत्तः **युयवन्** यावयन्तु अपमिश्रयन्तु (पृथक्कुर्वन्तु) इत्येतदाशास्महे ॥ ७ ॥

अथास्या भाष्यम्—

**सुखा नो भवन्तु वाजिनो ह्वानेषु देवतातौ यज्ञे मितद्रवः सुमितद्रवः स्वर्काः स्वञ्चना इति वा स्वर्चना इति वा स्वर्चिष इति वा, जम्भयन्तोऽहिं च वृकं च रक्षांसि च क्षिप्रमस्मद्यावयन्त्वमीवाः देवाश्वा इति वा ॥**

अथ—

**देवपत्न्यो—देवानां पत्न्यस्तासामेषा भवति ॥ १० ॥ (४४)**

**देवपत्न्यः** (३१) वक्तव्याः । ताः पुनः **देवानां पत्न्यः** पालयित्र्यः पालनीया वा । पत्नीसंयाजेष्वेता इज्यन्त इत्यतस्तृतीयसवनभक्तित्वादादित्यं भजन्ते । तदुक्तम्—"अथैतान्यादित्यभक्तीन्यसौ लोकस्तृतीयसवनम्" (नि० ७-११) इति ॥ १० ॥ (४४)

**"देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या**

१. क्रियाविशेषणमेतदिति दुर्गोऽभिप्रैति ॥

२. दीव्यन्ति स्तुवन्त्यत्र देवता इति देवो यज्ञः । अधिकरणे घञ् । देव एव देवतातिः "सर्वदेवात्तातिल्"(पा०४-४-१४२) डेर्डादेशः (पा० ७-१-३९) डित्वाट्टिलोपः (पा०६-४-१४३)

१. अत्र सर्वत्र विशेषणपदे बहुव्रीहिः । तथा च दुर्गः—येषां शोभना अर्चिषो दीप्तयस्त आगच्छन्तु । इति ॥

२. आङ्पूर्वाद्धन्तेर्हिंसार्थात् "आङि श्रिहनिभ्यां ह्रस्वश्च" (उ० ४-१३३) इतीण्प्रत्ययो डिच्च । डित्वाट्टिलोपः ॥

३. वसूनामादातारं वृकमिति कात्थक्यः ॥ "वृकवृक आदाने" (भ्वा० आ०) इगुपधलक्षणः कः (पा०३-१-१३५) ॥

४. येऽस्मान्रहसि क्षिप्यन्तीति रक्षःपदनिर्वचनं दुर्गस्य ॥

५. अव्ययमेतत्पुरातनेऽर्थे पठितमपि भाष्यकृता सामर्थ्यादिह शीघ्रार्थे प्रयुक्तम् ॥

६. सामर्थ्यादपेत्यध्याहृत्यापयावयन्तु अपमिश्रयन्त्वित्यर्थः ॥ इष्टं च रक्षसां नाशनं न मिश्रणमिति दुर्गव्याख्यानमत्र ॥

**अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत" ॥ ७ ॥** ( ऋ० सं० ४-२-२८ )

**देवानामिति** । प्रतिक्षत्रस्यार्षं जागतं देवपत्नीदेवताकम् । आग्निमारुते पत्नीसंयाजेषु च विनियोगः । याः **देवानाम्** इन्द्रादीनां **पत्नीः** पत्न्यः "वा छन्दसि" ( पा० ६-१-१६ ) इति वा पूर्वसवर्णदीर्घः । एवमेव **उशतीः** उशत्यः । असत्तो हविः स्तुतिं वा कामयमानाः । "वश कान्तौ" ( अ० प० ) लटः शतरिमध्ये शः । संप्रसारणपूर्वरूपत्वे ङीप् दीर्घः पूर्ववत् । ता असत्तो हविरुपभुज्य स्तुतिं वा लब्ध्वा **नः** अस्मान् **अवन्तु** प्रतिहर्षयन्तु धनेन । अवतिरिह तर्पणार्थे ( भ्वा० प० ) किंच **नः** अस्माकम् **तुजये** अपत्यजननाय । तुगित्यपत्यनाम (निघं० २-२) **वाजसातये** अन्नसननाय अन्नसंभजनाय च **प्रावन्तु** प्रकर्षेण अवन्तु रक्षन्तु । कतमास्ताः ? **याः पार्थिवासः** पार्थिवाः ( पृथिव्यां भवाः ) असुक्जसः ( पा० ७-१-५० ) **याः अपाम्** उदकानाम् **व्रते** कर्मणि ( निघं० २-१ ) वर्षोत्सर्गे व्यापृता आन्तरिक्षाः । ताः सर्वा अपि **देवीः** देव्यः "वा छन्दसि" (पा० ६-१-१०६) इति पूर्वसवर्णदीर्घः । **सुहवा** स्वाह्वाना अस्माकम् यूयं नः अस्मभ्यम् **शर्म** शरणं गृहं सुखं त्राणं वा **यच्छत** यच्छन्तु । पुरुषव्यत्यय आर्षः ॥ ७ ॥

अथास्या भाष्यम्—

**देवानां पत्न्य उशत्योऽवन्तु नः प्रावन्तु नोऽपत्यजननाय चान्नसंसननाय च । याः पार्थिवासो या अपामपि कर्मणि व्रते ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणम् ॥**

अवगतार्थमेतत् ॥

**तासामेषाऽपरा भवति ॥ ११ ॥ ( ४५ )**

अपरा पुनः किमर्थम् ? सामान्यतः पूर्वस्यामुक्ता विशेषतः परस्यामुच्यन्ते । पूर्वयैव समानार्षविनियोगा ॥ ११ ॥ (४५)

**"उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ग्नाय्य्श्विनी राट् । आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम्" ॥ ८ ॥**

( ऋ० सं० ४-२-२८ अथ० सं० ७-४-११-२ )

**उत ग्ना इति** । त्रिष्टुबियम् । पुरुषैः पीतमग्न्यादिभिः **ग्नाः** स्त्रियः (निघं० ३-२१) **उत** अपि **व्यन्तु** कामयन्ताम् । तथा च पिबन्तु एतदाज्यं "भक्षयन्तु हविः" इति सायणः । याः **देवपत्नीः** देवपत्न्यः । देवाः पतयो यासां तास्तादृश्यः । "वा छन्दसि" ( पा० ६-१-१०६ ) इति पूर्वसवर्णदीर्घः । कतमा ? इति विविच्योच्यन्ते—**इन्द्राणी** इन्द्रस्य पत्नी । **अग्नायी** अग्नेः पत्नी । **अश्विनी** अश्विनोः पत्नी सर्वा अपि **राट्** राजमाना ( वस्त्राकल्पादिभिः स्वतेजसा वा देदीप्यमानाः ) जसो लुक् ( पा० ७-१-३९ ) किं च **रोदसी** रुद्रस्य पत्नी **वरुणानी** वरुणस्य पत्नी **आशृणोतु** आभिमुख्येन स्थित्वा आकर्णयतु । किं च सर्वा अपि एताः **देवीः** पत्नीसंयाजदेव्यः पूर्ववद्दीर्घः । **यः ऋतुः** कालः भोजनवेला **जनीनाम्** जायानाम् तस्मिन्काले दीयमानमेतद्धविः **व्यन्तु** भक्षयन्तु । आज्यं च पिबन्तु । किं चासौ ? भुक्तवत्सु पुरुषेषु इति ॥ ८ ॥

अथास्या भाष्यम्—

**अपि ग्ना व्यन्तु देवपत्न्य इन्द्राणीन्द्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी । राट् राजते, रोदसी रुद्रस्य पत्नी वरुणानी च वरुणस्य पत्नी व्यन्तु देव्यः कामयन्तां य ऋतुः कालो जायानां, य ऋतुः कालो जायानाम् ॥ १२ ॥ (४६)**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० द्वादशाध्यायस्य चतुर्थः पादः ॥ १२ ॥ ४ ॥**

आथर्वणे रोदसीत्यप्रगृह्यं पदं तदपेक्ष्यैकवचनेन भाष्यकारो निराह—**रोदसी रुद्रस्य पत्नी** इति । क्वचिद्विशेषार्थस्यापि सामान्यवाचित्वं लक्षणयाहैं गदाधरोऽपि । **यः ऋतुः कालो जायानाम्** इति । अत्र वाक्याभ्यासो ग्रन्थसमाप्तिसूचकः ॥ १२ ॥ ४ ॥ "प्रतिज्ञाभ्यासो निगमः" इति निगमलक्षणत्वाक्रान्त्यर्थमेतदित्यसकृदभिहितम् ॥ ४६ ॥

इति श्रीमत्करममहाकुलकैरवसुधाकरस्य मिथिलेशतो लब्धप्रतिष्ठस्य सम्राट्पुरस्कृतस्य कर्मकाण्डभूषणस्य नन्दलालशर्मतनुजन्मनो मैथिलप० श्रीमुकुन्दशर्मणः कृतौ यास्कमुनिप्रणीतनिरुक्तविवृतौ दैवतकाण्डे द्वादशाध्यायस्य चतुर्थः पादः संपूर्णः ॥ १२ ॥ ४ ॥

इति द्वादशोऽध्यायः संपूर्णः ॥

---

१. तुगूजये इत्यर्थे वर्णलोप आर्षः (पा० ३-२-८५) बलवते पुत्रायेति सायणः । तन्मते अपत्यार्थकशब्दप्रकृतिभूताद्धिंसार्थात्तुजतेरिन् ( उ० ४-९६ ) तुजिरप्यपत्यं तन्मतेन ॥

१. "इन्द्रवरुण०" ( पा० ४-१-४९ ) इत्यादिना ङीषानुगागमश्च ॥

२. "वृषाकप्यग्नि०" (पा० ४-१-३७) इति ङीवैकारादेशश्चाग्नेरिकारस्य आयादेशः ॥

३. "बाह्वादिभ्यश्च नित्यं छन्दसि" ( पा० ४-१-४६ ) इति ङीष् ॥

४. तथा च शक्तिवादे सामान्यकाण्डे यत्र दुःखासंभिन्नसुखत्व—धानकर्मगोत्वादिविशिष्टकवाचकं स्वर्ग—धेन्वादिपदं केवलसुखत्वगोत्वाद्यवच्छिन्नतात्पर्येण प्रयुज्यते तत्र लक्षणैवेति । वस्तुतस्तु—ऋतुत्वमपि कालत्वव्यापकमेवेति न किंचिदेतत् । समव्यापकत्वेन तथार्थकत्वादेवमपि लक्षणास्त्येवेति सन्तोष्टव्यम् ॥

# अथ परिशिष्टम् ।

## त्रयोदशोऽध्यायः । प्रथमः पादः ।

अथ–"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते" इत्यत्र स्तुतिलक्ष्या देवतेति प्रकृतम् । ताः स्तुतयः कर्माधिकारनिरताः । स्वकर्माधिकारातिक्रमेण स्वगुणातिशयेन च या विशेष्यन्ते ता उपप्रदर्श्यास्तदर्थं विशेषतः पुनरधिकारवचनं तच्छेषानुवर्तनादाह—

**अथेमा अतिस्तुतय इत्याचक्षते ॥**

अथेति । इमाः या वक्ष्यमाणास्ताः । **आचक्षते** कथयन्ति स्वशिष्येभ्यः । प्रसिद्धा हीयमेतासु संज्ञा **अतिस्तुतय इति** ॥

**अपि वा संप्रत्यय एव स्यान्माहाभाग्याद्देवतायाः ॥**

अथवा नैतदतिस्तवनम् । किंतर्हि ? **संप्रत्यय एव स्यात्** । संगमनः समानो वा प्रत्ययो ज्ञानम् । यावदतिशयव्योच्यते तावदपि सन्नतं देवतायाम् । नह्यतिशयो नाम देवतायाः स्तुतिरस्ति । कुतः ? **माहाभाग्याद्देवतायाः** । नहि तद्विभूतेरियत्तास्ति यामतिस्तूयेत । तदुक्तं "नार्वागिन्द्रं प्रतिमानानि देभुः" इति ॥

अथ नैरुक्तसमयानुवृत्त्येऽतिस्तुतयः प्रदर्श्यन्ते—

**सोऽग्निमेव प्रथममाह ॥**

**स** इति स्तोताऽसावाचार्यः **अग्निमेव** अधिकृत्य **प्रथममाह** स्तुतिक्रमानुरोधात् । येनैव हि मुख्यक्रमेण स्तुतय उपदर्शितास्तेनैवातिस्तुतयोऽप्युपन्यसितुं न्याय्याः । नह्यसति कारणे मुख्यातिक्रमो न्याय्य इति ॥

उदाहरति—

**"त्वमग्ने ! द्युभिस्त्वमाशुशुक्षणिः"**

( ऋ० सं० २–५–१७–१ ) इति ।

अत्र–पृथिवीस्थानस्याग्नेः स्वकर्माधिकारव्यतिरेकेण, अतिशयेन वा स्तुतिरस्तीत्याह—

**यथैतस्मिन्सूक्ते ॥**

इति । **एतस्मिन्** गार्त्समदे आग्नेये सूक्ते । "त्वमग्न" इत्यादिके षोडशर्चे । व्याख्यातश्चैष मन्त्रः ( नि० ६–१ ) इत्येकदेश एवोपात्तः ॥

अथ मध्यस्थाने—

**"न हि त्वदारे निमिषश्चनेशे" इति वरुणस्य ॥**

( ऋ० सं० २–७–१० )

इति । अत्र वरुणस्य अतिस्तुतिः ॥ यथा—

**"अपो सुम्यक्ष वरुण भियसं मत्सम्राळृतावोनुमा गृभाय । दामेव वत्साद्विमुमुग्ध्यंहो न हि०० नेशे" ॥ १ ॥ इति ॥**

हे भगवन् **वरुण** ! **सम्राट्** सम्यग्राजमान ! **ऋतवः** ऋतवन् ( सत्यवन् यज्ञवन्वा ) यदेतत् **मत्** अस्मात् **भियसं** भयंकरम् **अपः** कर्म किंचित् ( निघं० २–१ ) यच्चात्मनः कायकृतम् । **अंहः** पापम् । "कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्" इत्यमरः । तद् **दामेव वत्सात्** यथा दोग्धा वत्ससकाशात् दाम बन्धनीं रज्जुं विमुञ्चति झटिति एवं त्वमस्मत्तः **विमुमुग्धि** विमुञ्च । छान्दसः शपः श्लुः । ततश्च तत्प्रमुच्य **सुम्यक्ष** सुष्ठु गमय । म्यक्षतिर्गतिकर्मा नैरुक्तः ( निघं० २–१४ ) नाशयेत्यर्थः । यतः **त्वदारे** त्वत्तो दूरेऽन्तिके वा वर्तमानस्त्वदन्यः कश्चित् **निमिषश्चन** निमेषात्मकस्यापि कालस्याक्षिपक्ष्मचलनस्यापि वा **नहीशे** नेष्टे । त्वमेव सर्वस्यापीश्वरो भवसि । अत्र "लोपस्त आत्मनेपदेषु" (पा० ७–१–४१) इति तलोपः । आरशब्दश्चात्रारादित्यर्थे प्रयुक्तः "आराद्दूरसमीपयोः", "असाकल्ये तु चिच्चन" इति चामरः । अत्रादौ सन्धिरार्षः ॥ १ ॥

**अथ–एषेन्द्रस्य–॥ १ ॥**

एषा–अतिस्तुतिः ॥ १ ॥

**"यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी" ॥ ५ ॥**

( ऋ० सं० ६–५–८–सा० सं० छ० आ० ३–२–४–६ )

यद् द्यावेति । पुरुहन्मन आर्षं बृहती ऐन्द्री । वैरूपे स्तोत्रियानुरूपे । हे भगवन् **इन्द्र** ! **यत्** यदि **ते** तव **शतं** नोत्पद्यस इत्यर्थः । यद्वा तादृशैर्दिवसैः सहितो जायसे तत्तद्यागदिवसेषु प्रसिद्धो भवसीत्यर्थः । तथा त्वमा सर्वतो दीप्यमानो भवसि । यद्वा आशु शीघ्रं शुचं शोकं सनोषि ददासि शत्रुभ्य एवमर्थः ॥

१. द्वितीये मण्डलद्रष्टा गृत्समद ऋषिर्यत्रादिममिदं सूक्तमाग्नेयम् । तथा चानुक्रमणिका–"य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत्स गृत्समदो द्वितीयं मण्डलमपश्यदि"ति । एतस्योपाख्यानकं सायणभाष्येऽन्वैव द्रष्टव्यम् ॥

२. सर्वमेवेदं सूक्तं षोडशर्चमाग्नेयमिति मन्त्रः साकल्येनोदाहृतः । अस्य जायसे इति क्रियायामन्वयः । "जायसे शुचिः" इति मन्त्रान्तो भागः । द्युभिर्यागदिवसैर्निमित्तभूतैर्जायसे यागार्थं मन्यने-

**द्यावः** दिवः (द्युलोकाः) **शतं** च **भूमीः** भूमयः **सहस्रं** च **सूर्याः**। **रोदसी** द्यावापृथिव्यौ **उत** अपि च स्युः "प्रतिमानानि" इति शेषः। उपमानानि कथंचित्स्युस्तथापि हे **वज्रिन्!** **त्वा** त्वाम् **जातम्** **अनु** अनन्तरम् जातमात्रमपि सर्वाण्यपि तानि **नाष्ट** नैवाभ्यश्नुवीरन्। किं तर्हि? त्वमेव एतानि सर्वाणि अभ्यश्नुवीथाः (अतिरिच्य वर्तेथाः) इत्यर्थः। "ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति (बृहदा०) श्रुतेः॥ ५॥

**यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्यु, न त्वा वज्रिन्! सहस्रमपि सूर्या न द्यावापृथिव्यावप्यश्नुवीतमिति॥**

अवगतार्थमेतत्॥

**अथ—एषाऽऽदित्यस्य॥ २॥**

**एषा** अतिस्तुतिः॥ २॥

**"यदुदञ्चो वृषाकपे गृहमिन्द्रा जगन्तन। क१स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः"॥ ७॥**

(ऋ० सं० ८-४-४)

**यदुदञ्च** इति। इन्द्राण्या आर्षं पाङ्क्तं पाञ्चपदमादित्यदैवत्यम्। पृष्ठ्यस्य षष्ठेऽहनि विनियोगः। हे भगवन् **वृषाकपे!** **इन्द्र!** आदित्य! **यत्** यदा त्वम् **उदञ्चः** उदङेव वर्तमानः (प्रदक्षिणं भुवनानि परिगच्छन्) सन् **गृहम्** अस्तम् **आजगन्तन** आगतः। तदा त्वयि गृहमुपागते अदृश्ये निरालोको लोकः सहसैव विस्मितो ब्रवीति–**क्व? स्य पुल्वघो मृगः** इति। क्व स बह्वादी सन्ततगमनः। बहुसावत्ति सर्वप्राणिष्ववस्थितस्त्वदुक्तम् "सूर्य आत्मा जगतस्तस्थुषश्च" (ऋ० सं० १-८-७) स देवो **जनयोपनः** जनमोहनः **कं** देशम् **अगन्** अगमत् गतवान्? वचनव्यत्यय आर्षः। येनास्माकमदृश्योऽभूत्। हे **इन्द्र** आदित्य! यस्त्वं **विश्वस्मात्** सर्वस्माज्जगतः **उत्तरः** उद्गततर उत्कृष्टतरो वा तमेतं त्वामादित्यमेवं ब्रूमः "यदुदञ्चो वृषाकपे" इति॥ ७॥

अथास्या भाष्यम्—

**यदुदञ्चो वृषाकपे गृहमिन्द्रा जगमत क्व स्य पुल्वघो मृगः। क्व स बह्वादी। मृगो मार्ष्टेर्गतिकर्मणः कमगमद्देशं जनयोपनः। सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम्॥**

**गतिकर्मणः।** गत्यर्थस्य (निघं० २-१४) घञर्थे कर्मणि कः (पा० ३-३-५८ वा०) यद्वा कर्तर्येव इगुपधलक्षणः कः (पा० ३-१-१३५) नह्यसाववतिष्ठते मार्ष्ट्येव सन्ततम्। गतार्थमन्यत्॥

**अथ—एषाऽऽदित्यरश्मीनाम्॥ ३॥**

**एषा** अतिस्तुतिः॥ ३॥

**"विहि सोतोरसृक्षत नेन्द्रं देवममंसत। यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः"॥ १॥** (ऋ० सं० ८-४-१)

**विहीति।** पूर्वयैव समानार्षविनियोगच्छन्दस्का। यदाऽऽदित्यो रश्मीनहन्यहनि **सोतोः** प्रसोतुम् सर्वभूतप्रसवाय अभ्यनुज्ञानाय। तत्प्रकाशितलोकस्य सर्वकर्मोपपत्तेः "षु प्रसवैश्वर्ययोः" (भ्वा० प०) ततः "ईश्वरे तोसुन्कसुनौ" (पा० ३-४-१३) इति तोसुन् प्रत्ययस्तुमर्थे। **व्यसृक्षत।** व्यसृजत्। "सृज विसर्गे" (तु० प०) लुङ्। वचनव्यत्यय आर्षः। **हिः** पूरणः। तदा ते रश्मयः येन विसृष्टास्तमेव **इन्द्रम्** आदित्यम् **देवम्** आत्मनो दीपयितारं **न अमंसत** न मन्यन्ते स्म। सर्वकर्मण्यनुगमनात्स्वमहिम्नैव वयं दीप्यामह इति मन्यन्ते। **यत्र** येषु रश्मिषु **पुष्टेषु** सोमेन एकीभूतेषु मध्यन्दिने **मत्सखा** मम सखा सखिभूतः। यद्वा सर्वोऽपि यं मन्यते "ममायं सखा" इति स मत्सखा **अर्यः** सर्वेषां स्थिरचरप्रजानामीश्वरः। "अर्यः स्वामिवैश्ययोः" (पा० ३-१-१०३) इति यत्प्रत्ययान्तो निपातः। **वृषाकपिः** सूर्यः। **अमदत्** हृष्टोऽभूत्सोमपानेन। पञ्चमः पादः पूर्ववद्व्याख्येयः॥ १॥

अथास्या भाष्यम्—

**व्यसृक्षत हि प्रसवाय, न चेन्द्रं देवममंसत, यत्रामदद्वृषाकपिरर्य ईश्वरः पुष्टेषु पोषेषु मत्सखा मम सखा, मदनसखा, ये नः सखायस्तैः सहेति वा, सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम्॥**

१. एकस्यापि बहुवचनं पूजार्थमिति सायणः। वस्तुतस्त्वञ्चतेः पचाद्यच् (पा० ३-१-१३४) एकवचनमेवेदम्॥

२. सर्वो हि गृहानुप्रवेशे व्यवधीयते बहिःस्थस्य। व्यवधीयते च भगवानस्तंगच्छन्नादित्य इत्येतस्मात्सामान्यादुच्यते गृहमिति॥

३. आङ्पूर्वाद्गमेरत्रात्मनेपदम्। लुङि "मन्त्रे घस०" (पा० २-४-८०) इत्यादिना च्लेर्लुक्। श्लुवद्भावाद्गमेर्द्वित्वमभ्यासकार्यम्। तस्य च "तप्तनप्तनथनाश्च" (पा० ७-१-४५) इति तनादेशः॥

४. अत्र पुरुशब्दात्पूर्वपदं घसेरुत्तरपदम्। ततस्ताच्छील्यविशिष्टे कर्तरि क्विपि धातोरडागमः। "संज्ञापूर्वको विधिरनित्यः" (प० ९४) इत्युपधादीर्घाभावः॥

५. उदयास्तमयपरिगमनादादित्यस्य जना मुह्यन्ति तत्त्वापरिज्ञानात्। युपतिर्मोहनार्थो मोदनार्थ इति सायणः॥

१. भाष्यकारवचनव्याख्यानमेतत्॥

२. शृण्येवेतिमुम्बईमुद्रितपुस्तकपाठः सर्तेः किच्चेति सायनव्याख्यानानुमतः। शृणिस्तालव्यादिरप्यस्तीति त्वन्यत् शृणातेर्हिंसार्थस्य "शृणिपृष्णि०" (उ० ४-५२) इत्यादिना निपातः। "शृणिरङ्कुशवाची च काशश्च तृणवाचकः" इति शब्दभेदः॥

मम सखा इति मन्त्रदृगाह । मदनसखेति हर्षणसखेत्यर्थः । अथ वा ये नः सखायः रश्मयः तैः सहेति ॥

**अथैषाऽश्विनोः ॥ ४ ॥**

अश्विनोरतिस्तुतिः ॥ ४ ॥

**"सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका । उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु" ॥ १ ॥** ( ऋ० सं० ८-६-२ )

**सृण्येवेति** । भूतांशस्य काश्यपस्यार्षं त्रैष्टुभमश्विदेवत्यम् । **सृण्येव** सृण्याविव अङ्कुशाविव । "अङ्कुशोऽस्त्री सृणिः स्त्रियाम्" इत्यमरः । औङ आकारादेशः ( पा० ७-१-३९ ) सृणिर्हि द्विविधा भवति मत्तगजस्यैकत्रावस्थापिका एका । बाधयित्री अपरा । "सृवृषिभ्यां कित्" ( उ० ४-४५ ) इति निप्रत्ययः । "कृदिकारादक्तिनः" ( पा० ४-१-४५ ग० ) इति ङीष् । तादृश्यौ सृण्यौ इव **जर्भरी** भर्तारौ एकत्रैवावस्थापयितारौ । भर्तेर्यङ्लुगन्तादौणादिक ईप्रत्ययोऽभ्यासस्य जकारश्छान्दसः । तथा **तुर्फरीतू** तुर्फरीतारौ शत्रूणां हन्तारौ । "तृपतृम्फ हिंसायाम्" ( तु० प० ) अस्मात्तृजन्तस्य पृषोदरादित्वाद्रूपसिद्धिरूह्या ॥ एवंभूतावश्विनौ **नैतोशे** व नितोशापत्ये इव । तोशतिर्वधकर्मा ( निघं० २-१९ ) नितरां तोशयतीति नितोशः । तस्यापत्यं नैतोशम् । कश्चिद्वधकः । तौ इव ( इवार्थेऽत्र वशब्दः एवमग्रेऽपि ) **तुर्फरी** शत्रूणां क्षिप्रगन्तारौ । "तृफ हिंसार्थः" ( तु० प० ) अस्मादौणादिके रिप्रत्यये निपातनात् ( पा० ६-३-१०९ ) साधुः । तुः क्षिप्रार्थो निपातः । तस्य दीर्घः ( पा० ६-३-१३६ ) तथा **पर्फरीका** पर्फरीकौ शत्रूणां विदारयितारौ । "ञिफला विशरणे" ( भ्वा० प० ) अस्मात् "पर्फरीकादयश्च" इतीकन्प्रत्ययान्तो निपात्यते । औङ आकारः ( पा० ७-१-३९ ) एवमग्रेऽपि ॥ यद्वा—स्तोतृजनानां धनादिदानेन पूरयितारौ । "पॄ पालनपूरणयोः" ( क्र्या० प० ) अस्मादीकनि पूर्ववत्सर्वं निपात्यते । पर्वतेः पूरणार्थाद्वा ( भ्वा० प० ) **उदन्यजेव** उदके साधुरुदन्यः समुद्रस्तज्जे सामुद्रे रत्ने इव "तत्र साधुः" ( पा० ४-४-९८ ) इति साध्वर्थे यत् । "पद्दन्०" ( पा० ६-१-६३ ) इत्यादिनोदकस्योदनादेशः । चान्द्रमसीति वेति भाष्यम् । तन्मते कान्तियुक्तावित्यर्थः । एवं **जेमना** जेमनौ जयशीलौ । जयतेः "अन्येभ्योऽपि दृश्यते" ( पा० ३-२-७५ ) इति मनिन् । दीर्घाभावश्छान्दसः । **मदेरू** बलातिशयेन मत्तौ स्तुत्यौ वा । **ता** तौ पूर्वोक्तगुणावश्विनौ युवां **मे** मदीयम् **जरायु** जरायुजम् । वर्णलोपश्छान्दसः । अत एव **मरायु** मरणशीलं शरीरम् । **अजरम्** जरारहितम् मरणधर्मरहितम् "कुरुत"—मिति शेषः ॥ १ ॥

**सृण्येवेति द्विविधा सृणिर्भवति भर्ता च हन्ता च । तथा—ऽश्विनौ चापि भर्तारौ । जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारौ । "नैतोशेव तुर्फरी पर्फरीका" । नितोशस्यापत्यं नैतोशं, नैतोशे व तुर्फरीतू क्षिप्रहन्तारौ । "उदन्यजे व जेमना मदेरू" उदन्यजे वेत्युदकजे इव रत्ने सामुद्रे चान्द्रमसे इति वा जेमने जयमाने ( जेमना मदेरू ) "ता मे जराय्वजरं मरायु" एतज्जरायुजं शरीरं शरदमजीर्णम् ॥**

भर्ता च हन्ता चेति पुंलिङ्गनिर्देश आर्षः । सृणिः स्त्रियामेवात एव द्विविधेति स्त्रीलिङ्गनिर्देशः । एतेन "आरक्षमग्नमवमत्य सृणिं शिताग्रम्" इति तु माघस्य प्रमाद एवेति महेश्वरः । **चान्द्रमसे** इति चान्द्रमस्यावित्यर्थः । **शरदम्** शरद्भिर्दीयते खण्ड्यत इति "दो अवखण्डने" ( दि० प० ) कर्मणि कः । आत्वं लोपश्च ॥

**अथ—एषा सोमस्य ॥ ५ ॥**

अतिस्तुतिः ॥ ५ ॥

**"तरत्समन्दी धावति धारा सुतस्यान्धसः । तरत्समन्दी धावति" ॥ १ ॥** ( ऋ० सं० ७-१-१५ )

**तरत्सेति** । काश्यपस्यावत्सारस्यार्षं गायत्रं पवमानसोमदेवत्यम् । यः **मन्दी** देवानां स्तोत्रेण हर्षकः । "मदि स्तुत्यादौ" ( भ्वा० आ० ) ततो घञि मन्दः स्तवः सोऽस्यास्तीति मन्दी । "अत इनिठनौ" ( पा० ५-२-११५ ) इति मत्वर्थे इनिर्भवति **स तरत्** तरति सर्वं पापम् । इकारलोपस्त्वार्षः । **धावति** गच्छति चोर्ध्वां गतिम् । कया ? **सुतस्य** अभिषुतस्य **अन्धसः** अदनीयस्य मन्त्रपूतस्य ( वाच स्तुतस्य ) सोमस्य **धारा** धारया । विभक्तेर्लुक् ( पा० ७-१-३९ ) देवेभ्यो मन्त्रेणार्पितया प्रयोजकभूतया । पुनरपि तदेवाहत्यान्तादरार्थमाह—

**तरत्स मन्दी धावति इति ॥ १ ॥**

अथास्य भाष्यम्—

**तरति स पापं सर्वं मन्दी यः स्तौति । धावति गच्छत्यूर्ध्वां गतिं "धारा सुतस्यान्धसः" धारयाऽभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य ॥**

गतार्थमेतन्मन्त्रार्थे ॥

**अथ—एषा यज्ञस्य ॥ ६ ॥**

अतिस्तुतिः ॥ ६ ॥

१. वर्णविकारेण । यद्वा अस्मादौणादिकोऽरीतुप्रत्ययः ॥

२. तथाचामरः "व वा यथातथैवैवं साम्ये हो ही च विस्मये" इति । "वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्" इति मेदिनी च ॥

३. तथाच भवार्थेऽत्र यत् ( पा० ४-४-११० ) उदके भव उदन्यश्चन्द्रस्ततो जाते कान्ती इव ।

**"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश" ॥ ३ ॥**

( ऋ० सं० ३-८-१० )

**चत्वारीति** । वामदेवस्यार्षं त्रैष्टुभमम्न्यादिदैवत्ये सूक्ते पठितम् । अग्निर्हि यज्ञात्मेति यज्ञस्तुतिरेतेन क्रियते । अस्य यज्ञात्मकस्याग्नेः । **चत्वारि शृङ्गा** शृङ्गाणि शृङ्गस्थानीयाश्चत्वारो वेदाः । यद्यप्यापस्तम्बेन "यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते" इत्युक्तं, तथाप्याथर्वणस्येतरानपेक्षयैवैकाग्निसाध्यानां कृत्स्नकर्मणामभिधायकत्वात्तदपेक्षया चत्वारिशृङ्गेत्युक्तम् । **त्रयो अस्य पादाः** सवनानि त्रीण्यस्य पादाः प्रवृत्तिसाधनत्वात्पादा इवेति पादा इत्युच्यन्ते । **द्वे शीर्षे** प्रायणीयोदयनीये ब्रह्मौदनं प्रवर्ग्यश्च, इष्टिसोमप्राधान्येनेदमुक्तमिति सायणः । **सप्त** छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः । **हस्तासः** हस्ताः । "आज्जसेरसुक्" ( पा० ७-१-५० ) हस्तादिसाधनेषु मुख्याः । छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनानीति हस्तव्यवहारः । **त्रिधाबद्धः** मन्त्रब्राह्मणकल्पैस्त्रिप्रकारं बद्धः । बन्धनमस्य तन्निष्पाद्यत्वात् । **वृषभः** फलानां वर्षिता । **रोरवीति** भृशं शब्दायते । सवनक्रमेण ऋग्यजुःसामोक्तैः शस्त्र-याग-स्तुतिरूपैः होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति भृशम् । यङ्लुगन्तमेतत् । एवं **महोदेवः** एव यज्ञात्मा महानुभावो देवः **मर्त्यानाविवेश** मनुष्यानाविशति यजनाय । मर्त्यैर्यजमानैर्निष्पाद्यत्वात्प्रवेश उपचर्यते ॥ ३ ॥

अथास्या भाष्यम्—

**चत्वारि शृङ्गेति वेदा वा एत उक्ताः । त्रयो अस्य पादा इति-सवनानि त्रीणि । द्वे शीर्षे-प्रायणीयोदयनीये । सप्त हस्तासः-सप्त छन्दांसि । त्रिधा बद्धस्त्रेधा बद्धो मन्त्र-ब्राह्मण-कल्पैः । वृषभो रोरवीति । रोरवणमस्य सवनक्रमेण । ऋग्भिर्यजुर्भिः सामभिः । यदेनमृग्भिः शंसन्ति, यजुर्भिर्यजन्ति, सामभिः स्तुवन्ति । महोदेव इति । एष हि महान्देवो यद्यज्ञो, मर्त्याँआविवेशेति-एष हि मनुष्यानाविशति यजनाय, तस्योत्तरा भूयसे निर्वचनाय ॥ ७ ॥**

**तस्य**, एतस्य यज्ञस्य **उत्तरा** ऋक् **भूयसे** बहुतराय **निर्वचनाय** निरुच्यवचनाय । स्तवाय भवतीत्यर्थः ॥ ७ ॥

**"स्वर्यन्तो नापेक्षन्त आद्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे" ॥**

**स्वः** स्वर्गं **यन्तः** गच्छन्तः । इणः शतरि यण् ( पा० ६-४-८१ ) य ईजाना भवन्ति ते **रोदसी** द्यावापृथिव्यौ "गतवन्तमि"ति शेषः । **नापेक्षन्ते** किंतु-निरपेक्ष एव सर्वस्य **द्यां दिवम् आरोहन्ति** । ते के ? इत्याह—**ये सुविद्वांसः** सुखेन विज्ञातयज्ञदेवतासतत्त्वाः । **विश्वतोधारं** सर्वतोधारं सर्वत्राप्रतिहतगतिम् **यज्ञं वितेनिरे** विस्तारितवन्तः । सम्यक् ( याथातथ्येन ) कृतवन्तो भवन्ति ॥

अथास्या भाष्यम्—

**स्वर्यन्त ईजाना वा नेक्षन्ते तेऽमुमेव लोकं गतवन्तमीक्षन्तमिति । आद्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं—सर्वतोधारम् । सुविद्वांसो वितेनिरे—इति ॥**

**अथैषा वाचः प्रवल्हितेव ॥ ८ ॥**

**अथ** अनन्तरम् **एषा** ऋक् **वाचः** वाग्देवताया अतिस्तुतिः । सेयं **प्रवल्हिता इव** भवति । अनभिव्यक्तिविशिष्टो वाक्यार्थोऽस्या भवतीत्यर्थः । यथा परैः सन्दिह्यते तथा गुप्ताभिधानं प्रवल्हनम् । "वल्ह परिभाषणहिंसाच्छादनेषु" ( भ्वा० आ० ) ततः क्तः । अस्मादेव ण्वुलि प्रवल्हिका भवति या प्रहेलिकेत्युच्यते । यामधिकृत्योक्तम्—"व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यार्थसंबन्धः कथ्यते सा प्रहेलिका" इति ॥ ८ ॥

**"चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" ॥ ५ ॥**

( ऋ० सं० २-३-२२ अथ० सं० ९-२५-२७ )

**चत्वारि वागिति** । दीर्घतमस आर्षं त्रैष्टुभं वाग्देवत्यम् । वाग्देवते पशौ विनियोगः । **वाक्** वाचः कृत्स्नायाः । षष्ठ्या लुक् ( पा० ७-१-३९ ) **पदानि चत्वारि** । **परिमिता** परिमितानि । लोके या वागस्ति सा चतुर्धा विभक्ते-

१. परा पश्यन्ती मध्यमा वैखरीति चतस्रो वाचः । तत्र मूलाधारस्था परा, नाभौ पश्यन्ती, हृदयपुण्डरीके मध्यमा, कण्ठकूपे वैखरी । तथा चोक्तम्—"परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता । हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥" इति मान्त्रिकाः । अस्य भावः सायणेनेत्थं व्याख्यातः—एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते । नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात्सैव हृदयगामिनी पश्यन्तीत्युच्यते (नाभौ) योगिभिर्द्रष्टुं शक्यत्वात् । सैव बुद्धिं गता ( विवक्षायां प्राप्ता ) मध्यमेत्युच्यते । मध्ये हृदयाख्ये उदीयमानत्वान्मध्यमा । अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते । एवं चत्वारि वाचः पदानि परिमितानि मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा वाच्यस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुर्जानन्ति । तेषु त्रीणि परादीनि गुहायां निहितानि हृदयान्तर्वर्तित्वात् । तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति इति ॥

त्यर्थः । तानि पदानि **ब्राह्मणाः** वेदविदः **मनीषिणः** मनस ईषिणो मेधाविनो **विदुः** विदन्ति जानन्ति तेषां मध्ये **त्रीणि** पदानि **गुहा** गुहायाम् । सप्तम्या लुक् ( पा० ७-१-३९ ) **निहिता** निहितानि । "शेश्छन्दसि बहुलम्" ( पा० ६-१-७० ) इति शेर्लोपः । स्थापितानि । **नेङ्गयन्ति** न चेष्टन्ते । न प्रकाशन्त इत्यर्थः । **वाचस्तुरीयं** पदम् **मनुष्याः** अज्ञास्तज्ज्ञाश्च वदन्ति व्यक्तमुच्चारयन्ति व्यवहरन्ति । कानि तानि चत्वारि ? अत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति सर्ववैदिकवाग्जालस्य सङ्ग्रहरूपा भूरादयस्तिस्रो व्याहृतयः ओंकार एक इति वेदत्रयसारत्वात्तासां व्याहृतीनामेव सारसङ्ग्रहभूतत्वादकाराद्यात्मकस्य प्रणवस्यैति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति ॥

अन्ये चार्था यथाभाष्यं व्याख्येयाः । तथा च भाष्यम्—

**चत्वारि वाचः परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मेधाविनो, गुहायां त्रीणि निहितानि नार्थं वेदयन्ते । गुहा गूहतेः । तुरीयं त्वरतेः ॥**

**मेधाविन** इति । मनीषिण इत्यस्यार्थः । **नार्थं वेदयन्ते** इति नेङ्गयन्तीत्यस्य । **गूहतेः** संवरणार्थस्य ( भ्वा० उ० ) इगुपधलक्षणे कप्रत्यये ( पा० १-३-१३५ ) टापि **गुहा** । अज्ञानम् । **त्वरतेः** संभ्रमार्थस्य (भ्वा० आ०) पृषोदरादित्वात् **तुरीयम्** इति भवति । तद्धि त्वरितमिव निर्गतं भवति त्रिभ्यश्चतुर्थमिति तदर्थः । लोके तु चतुर्णां पूरणं तुरीयम् । "चतुरश्छयतावाद्यक्षरलोपश्च" (पा० ५-२-५१ वा०) इति साधुः ॥

**कतमानि तानि चत्वारि पदानि ? ॥**

इति विचार्य प्रश्नः । तत्र तावत्—

**ओंकारो महाव्याहृतयश्चेत्यार्षम् ॥**

आर्षम् वेदवादिनामृषीणां "मतम्" इति शेषः । व्याख्यातमेतन्मन्त्रार्थे ॥

**नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः ॥**

मन्यन्ते । ते हि वाग्योगविदः ( प्रकृतिप्रत्ययविभागज्ञाः ) तानि पदानि जानन्ति । अवाग्योगविदः पामराः वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति व्यवहरन्ति ( अर्थप्रकाशनाय प्रयुञ्जते ) इत्येवमत्रान्वये मन्त्रार्थः कार्यः । दुर्गस्तु—तत्राप्रसिद्धार्थत्वादाख्यातोपसर्गनिपातपदानि अर्थं न वेदयन्ते । नामानि तु प्रसिद्धतरार्थत्वाद्वाश्वादीन् वेदयन्त्यर्थानिति व्याचख्यौ । अर्थक्रियाप्रधानमाख्यातं द्रव्यप्रधानं नाम । प्रागुपसृज्यते आख्यातपदस्येति उपसर्गः प्रादिः । उच्चावचेष्वर्थेषु निपतनात् निपाता अपि तु चेत्यादयः । एष्वेव सर्वा वाक्परिमितेति अखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वाद्

१. नार्थं वेदयन्ते इति भाष्यम् ॥

"वाग्वै पराच्यव्याकृतावदत्तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते" ( तै० सं० ६-४-७ ) इति श्रुतेः ॥

**मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः ॥**

अत्रापि व्यावहारिक्येव तु वेदयत्यर्थम् । तत्र याज्ञिकैः समाम्नातोऽनुष्ठेयार्थप्रकाशको वेदभागो ( मन्त्रविधानप्रतिपादको वेदभागो ) **मन्त्रः** । कल्पोऽत ऊर्ध्वमित्यादिनोक्तः **कल्पः** । मन्त्रतात्पर्यार्थप्रकाशको वेदभागो **ब्राह्मणम्** । भोगविषया गामानयेत्यादिरूपा **व्यावहारिकी** । एष्वेव सर्वा वाङ् नियमितेति याज्ञिकाः ॥

**ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः ॥**

अत्रापि व्यावहारिक्येवार्थं वेदयन्ते नेतराः ॥

**सर्पाणां वाक्, वयसाम्, क्षुद्रस्य सरीसृपस्य, चतुर्थी व्यावहारिकीत्येके ॥**

**एके** ऐतिहासिकाः अधिभूतविदः । अत्रापि व्यावहारिक्येवार्थं वेदयन्ते नेतराः ॥

**पशुषु-तूणवेषु-मृगेष्वा-त्मनि चेत्यात्मप्रवादाः ॥**

आत्मानं प्रवदन्ति ये आचार्यास्ते **आत्मप्रवादाः** ॥

**अथापि ब्राह्मणं भवति—**

एतस्मिन्नुक्तेऽर्थे-यथा—

**सा वै वाक्सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयं या पृथिव्याम् साग्नौ सा रथन्तरे । यान्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि सादित्ये सा बृहति सा स्तनयित्नावथ पशुषु । या वागत्यरिच्यत तां ब्राह्मणे दधुस्तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणामिति ॥**

**अदधुः** निहितवन्तः । उभयीं लौकिकीं वैदिकीं च । अभिव्यक्तार्थमन्यत् ॥

**अथैषाऽक्षरस्य ॥ ९ ॥**

अथ पुनरेषा अक्षरस्य अतिस्तुतिः प्रवल्हितेवेति बोध्यम् ॥ ९ ॥

**"ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते" ॥ ४ ॥**

( ऋ० सं० २-३-२१ अथ० सं० ९-२८-८ )

**ऋच** इति । दीर्घतमस आर्षम् । त्रैष्टुभम् । अस्या निर्वचनत्रयमधियज्ञा-ऽधिदैवा-ऽध्यात्मविकल्पेन ओंकार आदित्य

आत्मा चेति । तत्र तावच्छाकपूणिपक्षमाश्रित्याधियज्ञगतमुच्यते—**ऋचः** ऋगुपलक्षितसर्ववेदसंबन्धिनि **अक्षरे** प्रणवरूपे ॐकारे अविनाशिनि सर्ववेदेषु व्याप्ते वा । प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते—"तान्वेदानन्वतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदो३मिति" ( तै० ब्रा० पा० ३२ ) इति । मानवेऽपि—"अकारं चाप्युकारं च मकारं च प्रजापतिः । वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च" इति । **परमे** निरतिशये ( श्रेष्ठतमे ) न हि प्रणवादधिकं किंचिन्मन्त्रजातमस्ति, त्रिकालातीतस्य ब्रह्मणः प्रतिपादकत्वात् । यच्चान्यत्त्रिकालातीतं तदप्योंकार एव । "ओमिति ब्रह्मैवे"त्यादिश्रुतेः ( माण्डू० ) तथाभूते **व्योमन्** व्योमनि "सुपां सुलुगि०" ( पा० ७–१–३९ ) इति सप्तम्या लुक् । विविधमस्मिञ्छब्दजातमोतमिति व्योम तस्मिन् । तिसृषु मात्रासु—अकारौकारमकारलक्षणासूपशान्तासु यदवशिष्यते तदक्षरं परमं व्योम, शब्दसामान्यमभिव्यक्तमिति भावः । **यस्मिन्** प्रणवे **विश्वे** सर्वे **देवाः अधिनिषेदुः** अध्यासते । वर्तमाने सीदतेर्लट् ( पा० ३–४–६ ) अयमर्थः—ऋगादिषु ये देवास्ते मन्त्रद्वारेणाक्षरे निषण्णास्तस्य ( प्रणवस्य ) च शब्दकारणत्वात् । अथवा प्रथमायां मात्रायां पृथिवी, अग्निः, ऋग्वेदः, पृथिवीलोकनिवासिनः इति, एवं द्वितीयायां मात्रायां अन्तरिक्षं, वायुः, यजूंषि, अन्तरिक्षलोकनिवासिनो जना इति । तृतीयायां मात्रायां द्यौः, आदित्यः, सामानि, द्युलोकनिवासिनो जना इति । विज्ञायते हि "ॐकार एवेदं सर्वम्" इति । **यः यद्** अक्षरम् अनया विभूत्योपलक्षितं **न वेद** न जानाति । **असौ ऋचा** ऋगादिभिर्मन्त्रैः **किं करिष्यति ?** यस्तत्राक्षरात्मना पश्यति । **य इत्** य एव **तद्** **अक्षरं विदुः** जानन्ति **त इमे समासते** अपुनरावृत्त्या स्वस्वरूपेऽवस्थानं समासनम् । इति विदुष उपदिशति । ते हि तत्परिज्ञानात्ताद्भाव्यमुपगताः प्रणवविग्रहमात्मानमेवानुप्रविश्य समीकृताः शान्तार्चिषः अनला इव निर्वान्तीत्यर्थः ॥ ४ ॥

तथाच भाष्यम्—

**ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषण्णाः सर्वे । यस्तन्न वेद किं स ऋचा करिष्यति, य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति । कतमत्तदेतदक्षरमोमित्येषा वागिति** शाकपूणि—"ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेष्वेतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रति प्रती"ति च ब्राह्मणम् ॥

**धीयन्ते** निषीदन्ति देवा मन्त्रेषु, मन्त्रा वर्णेषु, ते च ऋगुपलक्षितसर्ववेदसंबन्धिनि **अक्षरे** प्रणवे । एवं **नाना००द्धवै** निश्चयेनैतदेवाक्षरं नानादेवतेषु मन्त्रेषु च धीयतेऽङ्गभावेन "क्षरत्यनोंकृतं पूर्वम्" इत्युक्तेः । तस्मात् **एतदक्षरं सर्वां त्रयीं विद्यां प्रतिप्रति** अत्र "नित्यवीप्सयोः" ( पा० ८–१–४ ) इति पदद्वित्वं वीप्सायां, साकल्येन च क्रियासंबन्धो वीप्सा भवतीति सर्वास्वप्यस्या अभिसंबन्ध इत्यर्थः ॥

**आदित्य इति पुत्रः शाकपूणेरेषर्ग्भवति । यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि । तस्य यदन्यन्मन्त्रेभ्यस्तदक्षरं भवति । रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इत्यधिदैवतम् ॥**

अत्र **आदि००वति** । एतन्मते **ऋक्** अर्चनीय आदित्यः । कुतः ? **यदे००तानि** । यद्यस्माद्धेतोरेनमादित्यं **सर्वाणि भूतानि प्रत्यृचः** ऋक्प्रातिनिध्येनार्चन्ति पूजयन्ति । अथवा **ऋक्** इत्यृगादिमयमादित्यमण्डलमभिप्रेतम् "ऋग्भिः पूर्वाह्णे दिवि देव आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋच" इत्यादिश्रुतेः ( तै० ना० उ० ) तस्य सम्बन्धिनि **अक्षरे** अविनाशिनि **परमे** निरतिशये **व्योमन्** व्यवने सर्वस्य रक्षके ब्रह्मणि । तदाह—तस्य—**यदन्यन्मन्त्रेभ्यः** मण्डलगतेभ्योऽवयवेभ्यस्तत् परमम् **अक्षरम्** व्यवनम् तत्र सर्वमोतमिति । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति ( तै० आ० १०–१३ ) श्रुत्युक्तस्वरूपे यस्मिन्सर्वे देवा द्योतमाना रश्मयोऽधिनिषेदुरध्यासते । तदेतदाह—**रश्मयो ऽ००त्र** इति । **यस्तत्** मण्डलमक्षरात्मना **न वेद स ऋचा** आदित्येन मण्डलात्मना **करिष्यति ?** नासौ यथावदादित्यं वेदेत्यर्थः । **य इत्तद्**त्यादि । व्याख्यातमधियज्ञपक्षे ॥ ४ ॥

**अथाध्यात्मम्—शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि, तस्य यदविनाशिधर्म तदक्षरं भवति । इन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नधिनिषण्णानीत्यात्मप्रवादाः ॥ ११ ॥**

**एतेन शरीरेण सर्वाणीन्द्रियाणि ऋचोऽर्चनीयाञ्जी-**

---

१. "प्राधान्येन व्यपदेशा भवन्ति मल्लग्रामवत्" इति महाभाष्यवचनसिद्धन्यायात् ॥

२. वेदानां प्रणवस्य च स्थानप्रतिनिधिभावः संबन्धः "य ऋचोऽधीते" इत्याद्युपक्रम्य यः प्रणवमधीते स सर्वमधीते ओमिति प्रतिपद्यते एतद्वै यजुस्त्रयीविद्यां प्रत्येषा वागेतत्परममक्षरमि"त्यादिश्रुतेरिति सायणः ॥

३. प्रणवस्य सर्वमन्त्रात्मकत्वात् मन्त्रेषु सर्वदेवानां निवासात् । सर्वदेवनिवासत्वब्रह्माधिष्ठानत्वाद्वा ब्रह्मणि सर्वदेवानां निवासादिति सायणः ॥

१. अत्र प्रतेः कर्मप्रवचनीयत्वम् "प्रति प्रतिनिधिप्रतिदानयोः" ( पा० १–४–९२ ) इति । तद्योगे च पञ्चमी (पा० २–३–११) तथाच यदर्चन्ति सा ऋक् । यया वार्चन्ति सा ऋक् । यं चार्चन्ति सा ऋक् । "ऋच्च् स्तुतौ" ( तु० प० ) क्विप् । अत्र विकरणव्यत्यय आर्षः ॥

वात्मनः **प्रति** उद्दिश्य तदीयं सुखमनुध्याय मनसा समभ्युच्छमानि **अर्चन्ति** पूजयन्ति विषयसुखं तेभ्यः प्रयच्छन्ति । तथाच ऋचन्ति अर्चन्त्यनेनेति **ऋक्** "ऋच् स्तुतौ" ( तु० प० ) करणे क्विप् । अर्चन्तीत्यर्थनिर्वचनं विकरणव्यत्ययो वा । **एनेनेति** "अन्वादेशे नपुंसके एनद्वक्तव्यः" ( पा० २-४-३४ वा० ) इतीदम एनादेशः । **तस्य** तत्संबन्धि ( सहयोगि ) **यदविनाशिधर्म** चेतनासत्तामात्रविज्ञानं **तत्** परमम् **अक्षरम्** अविनाशि **भवति** तस्मिन् **अक्षरे परमे** निरतिशये व्योमनि व्यवने विशेषेण रक्षके शरीरादेरात्मनश्च । **यस्मिन्** अन्तरात्मनि ( जीवे ) **देवाः** गमनवन्तो व्यवहरन्तो वा विषयेषु द्योतन्तो वा इन्द्रियसंज्ञकाः **विश्वे** सर्वेऽपि **अधिनिषेदुः** आश्रित्य वर्तन्ते । **यस्तम्** अन्तरात्मानं **न वेद** न विजानाति **किम्** असौ **ऋचा** आत्मार्चनसाधनेन शरीरेण **किंकरिष्यति**? न तस्य जीवितेनार्थ इत्यर्थः । य इत्तद्विदुरिति व्याख्यातम् ( ) ॥ ४ ॥

अथाक्षरपदं निर्वक्ति—

## अक्षरं न क्षरति न क्षीयते वा वाक् क्षयो भवति । वाचोऽक्ष इति वा ॥

**अक्षरं** कस्मात्? तद्धि **न क्षरति** नान्यथाभावमापद्यते । अथ वा **न क्षीयते** न कदाचिदप्यामूलतो विनश्यति । अथवा **वाक्क्षयो भवति** नादो हि वर्णलक्षणाया वाचोविनाशः । अथ **वा वाचोऽक्षः इति** । अक्षरो ह्यक्ष इवाउप्रविश्य व्यञ्जनानि धारयति । तथाच रइत्युपमार्थे नामकरणः । अत्राक्षरपदेन स्वरा अभिहिताः । प्राधान्यात् "अक्षरं न क्षरं विद्यात् अश्नोतेर्वासरोऽक्षरम्" इति तु महाभाष्यकारः ॥

अथाक्षशब्दं निर्वक्ति—

## अक्षो यानस्याञ्जनात् । तत्प्रकृतीतरद्वर्तनसामान्यादिति ॥

**अक्षः** कस्मात्? उच्यते—**यानस्य** रथस्य । स तावत् **अञ्जनात्** समञ्जनात् नित्यमसौ संम्रक्ष्यते तैलादिना । **तत्प्रकृतीतरत्** स्वराख्यमक्षरम् । **वर्तमानसामान्यात्** । स्वरधिरूढानि व्यञ्जनानि वर्तन्ते । **इति**—करणः परिसमाप्त्यर्थः । उपप्रदर्शनार्थो वान्तस्य । यद्वा इतीत्युत्तरवाक्यान्वयि, यथा—

## ( इति ) अयं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूह्ळोऽपि श्रुतितोऽपि तर्कतः ॥

**इतीत्थमेवं मन्त्रार्थचिन्ताऽभ्यूहः** मन्त्रार्थचिन्तानां—चिन्त्यमानमन्त्रार्थानामभ्यूहः समूहः **अभ्यूळ्हः** सर्वतोभावेन वितर्कितो मया, शक्यत एतावता मन्त्रार्थोऽभ्यूहितुमिति । कुत एतत्? **अपि श्रुतितोऽपि तर्कतः** । क्वचिच्छ्रुतिभ्यो ब्राह्मणेभ्यो निगमविशेषेभ्यश्चोन्नीतार्थाभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्यात् । तस्योपरि पर्यायास्तर्कोऽभ्यूहो लक्षणा न्याय इति तर्कतोऽपि । तथा चायं "मन्त्रार्थचिन्ताभ्यूहलक्षण आगमो" निरुक्तशास्त्रस्य ॥

यद्यप्ययमभ्यूह्ळस्तथापि—

## न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः । प्रकरणश एव तु निर्वक्तव्याः । नह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा । पारोवर्यवित्सु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात् ॥

कुतः? **पृथक्त्वेन**? प्रकरणात् । तदाह—**प्रकरणश एव त्विति** । तान्येतानि प्रकरणानि मन्त्राणां याज्ञं दैवत-मध्यात्म-मितिहासानुप्रवेश इति । किंकारणम्? **नह्येषु** मन्त्रेषु **प्रत्यक्षम्** अर्थदर्शनम् **अस्ति** किं नास्त्येव? न नास्ति । किं तर्हि? **अनृषेः अतपसो वा इति** । तस्येदानीमपि स्याच्च ऋषिस्तपस्वी च, निर्दग्धकल्मषस्य यथावदर्थं मन्त्राणां पश्यतस्तस्य प्रतिबन्धकाभावात् । येऽन्ये पुनरौपदेशिकास्तानधिकृत्योच्यते—**पारो००स्तात्** इति । य एतेषु उपदेशतः पारोवर्येण परोवरभावेन मन्त्रार्थान्प्रतिपद्यन्ते ते पारोवर्यविदः तेषु यः कश्चिद्भूयोविद्यो बहुश्रुतो भवति स एव मन्त्रार्थपरिज्ञाने प्रशस्यो भवति । मन्त्रार्थं एव स्वयं विद्यास्थानभावेन विष्वग्भूतो लोकव्यवहारभावेन च विप्रकीर्णो विजृम्भत इति । तमबहुश्रुतो नालमुत्प्रेक्षितुमिति-युक्तं यत्तत्परिज्ञानयोगे भूयोविद्यः प्रशस्य इति । पुरस्तादपि चैतदुक्तम् ( नि० १-५-२ ) इह तु प्रसङ्गादुच्यते ॥

अतः परमागमविशुद्धये प्रस्तौति—

## मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्को न ऋषिर्भविष्यतीति? तेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थचिन्ताभ्यूहमभ्यूह्ळम् तस्माद्यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति ॥ १२ ॥

**मनु००ब्रुवन्** इति । पूर्वमपि हि "साक्षात्कृतधर्माण ऋषयो बभूवुरि"( नि० १-६-५ ) त्युक्तम् इह तु मन्त्रार्थाभ्युपदर्शनार्थमिति विशिष्यते "मनुष्या वा००ष्यतीति" "एवमादिपुराकल्परूपोऽर्थविदः शास्त्रावतारस्तुतये । **तेभ्य एतं तर्कं** निरुक्तशास्त्रमेव **ऋषिं प्रायच्छन्** ते देवाः । किंलक्षणम्? **मन्त्रार्थ००भ्यूळ्हम्** मन्त्रार्थचिन्तानां चिन्त्यमानमन्त्रार्थानामभ्यूहं समूहं तदात्मकं यद्भगवता तेन यास्केनान्येन वा शाकपूण्यादिना, विज्ञातमन्त्रार्थदेवतासतत्त्वेनाभ्यूळ्हम् सर्वतोभावेन वितर्कितम् । समस्तार्थसमूहमपि भवन्तोऽनेन मन्त्रार्थान् शक्यन्तेऽभ्यूहितुमिति देवास्तान्मनुष्यानेतं प्रायच्छन्निति संपुटितो वाक्यार्थः ॥ यस्मादेतदेवं **तस्मात्** अस्मिन्सूक्ते निरुक्तशास्त्रे यः **अनूचानः** विद्वान् **यदेव किंच** किंचित् **अभ्यूहति आर्षं तद्भवति** तथैवं तदृषयोऽभ्यूहितवन्त इत्यभिप्रायः ॥ १२ ॥

नैतत्स्वमनीषिकयोच्यते, मन्त्रार्थोऽप्येतस्मिन्विषये बृहस्तिना दृष्टो ब्रह्मा वा स्वयं प्राह । तद्यथा—

१. "आत्मा मनसा युज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षमुत्पद्यते" इति हि न्यायपरिस्थितिस्तेन मनसा प्रेरितानीन्द्रियाणि विषयेषु प्रसज्य तत्सुखमात्मनि प्रयच्छन्ति तदेवार्चन्तीत्युच्यते ॥

२. तथा चोक्तम् ( भ० गी० ) "आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मन" इत्यादि ॥

१. उपदेशेनैव प्राप्तमन्त्रार्थाः साक्षात्कृतधर्मभ्यः सकाशात् ॥

"हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः । अत्राह त्वं विजहुर्वेद्याभिरोहब्रह्माणो विचरन्त्युत्वे" ॥३॥ (ऋ० सं० ८-२-२४)

**हृदेति** । आङ्गिरसस्य बृहस्पतेरार्षं त्रैष्टुभम् । अनेन[1] सूक्तेन ऋषिः परमपुरुषार्थसाधनं परब्रह्मज्ञानं स्तुतवानतस्तद्देवत्वमिदम् । **सखायः** समानख्याना ऋत्विजः । ते हि प्रयोगेऽभियुक्तत्वाददतितरां विद्वांसः । ते च **ब्राह्मणाः** अधिगतमन्त्रार्थतत्त्वाः किमत्र तत्त्वं किंवातत्त्वमिति प्रवचनेन विचारयन्तः । **हृदा** बुद्धिमता हृदयेन ( हृदयेन बुद्ध्या ) **तष्टेषु** सूक्ष्मतामापादितेषु अचिन्त्याध्यात्मादिषु विद्वद्भिः । **मनसो जवेषु** मनसां प्रजवेषु ( ये मनसामपि प्रजवाः प्रगमा दूरे वर्तमाना न साक्षाद्दृश्यन्ते तेष्वर्थेषु ) स्वर्गापूर्वदेवतादिषु **यत्** यथा **संयजन्ते**[2] परस्परेण संपूजयन्ति । **अत्र** अस्मिन्ब्राह्मणसङ्घे मन्त्रार्थव्याख्याने वा **त्वम्** एकमविद्वांसम् । **अह** इति विनिश्चये, विनिश्चित्य **वेद्याभिः** वेदितव्याभिः प्रवृत्तिभिर्विद्याभिर्वा **विजहुः** विशेषेण परित्यजन्ति । अथ ये पुनः **ओहब्रह्माणः** इदं निरुक्तशास्त्रमूहं ब्रह्म ( उच्यतेऽत्र ब्रह्म वेदार्थः ) आज्ञातमूहब्रह्म येषां न ओहब्रह्माणः । यद्वा ओहमुह्यमानं ब्रह्मविद्या श्रुतिमतिबुद्धिलक्षणं येषां ते तथोक्तास्ते त्वे एके विद्वांसः शब्दार्थसंकटेष्वप्रतिबध्यमाना अतिक्रम्याऽविद्वांसं वि विशेषतः सर्वत्रैव प्रतिपूज्यमानाश्चरन्ति । यद्वा-विचरन्ति यथाकामं वेदार्थेषु विनिश्चयार्थं प्रवर्तन्ते । उ प्रसिद्धौ ॥ ३ ॥

अथास्य भाष्यम्—

**हृदा तष्टेषु मनसां प्रजवेषु यद्ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजोऽत्राहत्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभि-रोहब्रह्माण ऊहब्रह्माण, ऊह एषां ब्रह्मेति वा ॥**

**ओहम्** **ऊहम्** इत्यनर्थान्तरतयाऽत्र भाष्यकारेण व्याख्यातम् । तत्राद्ये "उहिर् अर्दने" ( भ्वा० प० ) इत्यस्मादन्त्ये "ऊह वितर्के" ( भ्वा० आ० ) इत्यस्मात्कर्मणि घञ् ( पा० ३-३-१९ ) **ब्रह्मेतिवे**ति । अत्र ब्रह्मशब्देन वेदार्थमभिप्रयन्नूह **एषामि**ति पुंलिङ्गेन दर्शयति ॥

एवमेतस्मिन्मन्त्रे अस्या उद्धाहितार्थानेवोद्दिश्य मन्त्रार्थचिन्ताभ्यूहस्य ब्रह्मत्वं श्रूयते । तस्मादिदमपि निरुक्तशास्त्रं ब्रह्मैव वेद इत्यर्थः ॥

इदानीमुपसंहरति—

**सेयं विद्या श्रुतिमतिबुद्धिः ॥**

**सेयं** एतन्निरुक्तशास्त्रविज्ञानप्रभवा **विद्या** वेदार्थविज्ञानलक्षणा **श्रुतिमतिबुद्धि**शब्देनाख्यायते नैरुक्ते[1] ।

**तस्यास्तपसा पारमीप्सितव्यम् ॥**

"गन्तुमि" ति शेषः । पदवाक्यप्रमाणविदा ब्राह्मणेनेत्यर्थः । अयं भावः—यस्माद्वेदो विधि-निषेध-प्रतिप्रसव-नियम-परिसंख्या-पुनर्वचन-परार्थवादगहनः । अर्थवादाश्च यथाश्रुतप्रमाणग्राहिणो विदुषेऽपि परमभ्रान्तिहेतवः । तस्माद्वेदवाक्यानां परमदुर्विज्ञानवेदनीयत्वादिमां विद्यामन्तरेण सम्यगर्थावगमो न भवति । अतोऽस्या अखिलपुरुषार्थोपकारप्रवृत्तायाः अन्तरेण तपः पारगमनं नास्तीत्ययमभ्युपायस्तस्या पारगमन इति ॥

**तदिदमायुरिच्छता न निर्वक्तव्यम् ॥**

**तदिदं** निरुक्तशास्त्रं **आयुरिच्छता** अतपस्विना सर्वथापि न **निर्वक्तव्यम्** अतपस्वी ह्यागमवानपि मलिनान्तःकरणत्वान्न शक्नुयान्निर्वक्तुम् । ततो ह्यस्यायुश्छिद्यते ॥

तपस्विनापि च निर्ब्रुवता—

**तस्माच्छन्दःसु शेषा उपेक्षितव्याः ॥**

**तस्मात् छन्दःसु** शाखान्तरेषु । निगमोदाहरणानामाकाङ्क्षितत्वनिराकाङ्क्षायै **शेषाः** वाक्यशेषाः पादार्धर्चादिलक्षणा **उपेक्षितव्याः** । उपगम्य वेदांस्तदर्थाश्च ईक्षितव्या आलोचितव्या इत्यर्थः ॥

एतज्ज्ञाने फलमाह—

**अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति ॥**

**इति श्रीमद्यास्कमुनिप्र० नि० शास्त्रे दै० कां० त्रयोदशाध्यायस्य प्रथमः पादः ॥ १३ ॥ १ ॥**

**अथ** तपस्वी नैरुक्तः **आगमो** गुरुमुखादेव य आगच्छति सम्यक् श्रद्धोपासनादितः स सर्वोऽपि निगमव्यूहः प्रत्येकं **यां यां देवतां** तत्तन्मन्त्रप्रतिपाद्यां **निराह** निर्ब्रवीति **तस्यास्तस्याः ताद्भाव्यं** सतत्त्वानां सायुज्यं **अनुभवति** काव्यव्यपगम[2] इत्यर्थः । अत्र क्रियापदद्विरुक्तिर्ग्रन्थसमाप्तिसूचिका ॥ १३ ॥

---

१. एतन्मन्त्रघटितेन । तथा चैतत्सूक्तमुपक्रम्योक्तं बृहद्देवतायाम्—"यज्ज्योतिः परमं ब्रह्म यद्योगात्समुपाश्नुते । तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः ॥" इति ॥

२. यजिरत्र सङ्गतिकरणवाची तेन सङ्गच्छन्ते इत्यर्थं सायण आह ॥

३. प्रकृष्टाभिर्वृत्तिभिर्मनस इत्यर्थः । तथा चोक्तं दुर्गेण-( एतद्भाष्यमुपादाय ) न हि तासां मनोवृत्तीनामन्तोऽस्ति । यास्तु प्रतिभानवतामपि मनोवृत्तयो न प्रवर्तन्ते । अतस्ता वेदितव्या एव भवन्त्यविद्वद्भिः इति ॥

१. अत्र दुर्गः—श्रुतिमवीत्याद्यर्थमेवैका विद्या बुद्धिं वर्षति । ज्यायसी सर्वाभ्योऽपि विद्याभ्यो महानेष तर्क इत्याह ॥

२. तेन हि शास्त्रस्य निगम-( सम- ) त्वं सिध्यति ॥

इति श्रीमत्करमहान्वयविशुद्धस्य मिथिलाभिजन-नन्दलालशर्मतनुजन्मनो मिथिलेशलब्धप्रतिष्ठस्य कर्मकाण्डभूषणस्य श्रीमन्मुकुन्दशर्मणः कृतौ श्रीमद्यास्कमुनिप्रणीतनिरुक्तशास्त्रविवृतौ त्रयोदशाध्यायस्य प्रथमः पादः ॥ १३ ॥ १ ॥

( अतिस्तुतिप्रकरणं समाप्तम् ॥ )

# अथ

## निरुक्तस्थितमन्त्राणां मातृकाक्रमयोगतः ।
## नामात्र दर्श्यते येन बोध आशु भवेदिति ॥ १ ॥


| निगमाः | पृष्ठानि | निगमाः | पृष्ठानि | निगमाः | पृष्ठानि | निगमाः | पृष्ठानि |
|---|---|---|---|---|---|---|---|
| अ | | अनुष्टुया | २४४ | अवततधन्वा | १५३ | अहश्च कृष्ण | ९६ |
| अक्रोनव | ३०७ | अनूपे गो | २१७ | अवभृथ निचु | २४९ | अहस्तमि | २६९ |
| अक्षण्वन्तः | २७ | अन्यमूषु | ४८५ | अवसाय प | ४४ | अहिरिव | ४१६ |
| अगोह्यस्य | ४७४ | अन्येन म | २१६ | अवसाया | ४४ | आ | |
| अग्नये समि | ४१ | अन्विदनु | ४८२ | अविशेषेण | १११ | आखण्डल | १२५ |
| अग्निं नरो | २३३ | अपागूहन् | ५०० | अवीरामिव | ३३२ | आगध्रिता | २४३ |
| अग्निः पवित्रं | २२९ | अपामुपस्थे | ३८३ | अव्रदन्त | २४६ | आऽग्ने याहि | २९८ |
| अग्निः पूर्वे | ३७० | अपोषा अ | ४९२ | अशत्रुरिन्द्र | ३९ | आ घा ता | १९३ |
| अग्निमीळे | ३६९ | अपो सुम्यक्ष | ५२३ | अंशुं दुहन्ति | ७१ | आघृणे | २३२ |
| अग्निरिव | १४ | अप्वे परेहि | २९५ | अश्ना पिन | ४३९ | आचष्ट आ | २८५ |
| ,, ,, | ४७ | अप्सो नाम | २४० | अश्मास्य म | ४४० | आजङ्घन्ति | ४१९ |
| अग्निर्नये | १३६ | अब्जामुक्थै | ४६२ | अश्याम वाज | २४३ | आजासः पू | २७३ |
| अग्निः सुतु | १८६ | अभि क्रन्द | ३५६ | अश्वं हि | २९० | आजुह्वन्ति | २३० |
| अग्नेरुषः | ३०९ | अभि त्वा पूर्व | ४५७ | अश्वयुर्गव्यू | ३३३ | आजुह्वान ईड्यो | ३९७ |
| अग्निं होतारं | २८९ | अभिन इ | ४९३ | अश्वो वोळ्हा | ४०८ | आ तू षिञ्च | १९१ |
| अज्ञादज्ञात् | १११ | अभि प्रवन्त | ३७० | अश्वं न त्वा | ५४ | आ ते कारो | १०६ |
| अङ्गिरसो नः | ४७५ | असीकेचिदु | १४७ | असंख्याता | ३९ | आत्मा यक्ष्मस्य | १३६ |
| अजोह्वी | २५२ | अभीदमे | १२३ | असश्चन्ती | २१३ | आ त्वा रथं | २१९ |
| अञ्जन्ति त्वा | ४०३ | अभ्रआँ | २२६ | असाम्योजो | ३२१ | आ त्वा रम्भ | १५३ |
| अतिक्राम | २९४ | अभ्रातर इव | ११२ | असिन्वती | २७५ | आ त्वा विश | ३२१ |
| अतितस्थौ | ५१२ | अभ्रातेव | ११२ | असुनीते | ४५८ | आ दधिक्रा | ४५४ |
| अतिष्ठन्ती | ९० | अमन्दान् | ४१३ | असूर्ते सूर्ते | ३०० | आदाय श्येनो | ४६४ |
| अत्राह गोरं | ७४-१९८ | अमिनः स | ३०४ | अस्ति हि वः | २९७ | आदित्या दा | ८५ |
| अथानः | १९४ | अमी य ऋक्षा | १५० | अस्मभ्यम | ३०५ | आ द्वाभ्याह | ३५४ |
| अथावय | २६ | अमीवहा | ४४२ | अस्मा इदु प्रभ | ३१२ | आ नो यज्ञं | ४०१ |
| अदर्दरु | ४३७ | अमीषां चित्तं | ४२६ | अस्मे आरा | २८४ | आपान्तम | २३६ |
| अदितेर्दक्षो | ४७८ | अमेनांश्चि | १५४ | अस्मे ते बन्धु | २८३ | आपित्ते नः | १४७ |
| अदितिर्द्यौ | ४१:१९५ | अम्यक् सा | ३०१ | अस्मे द्युम्न | २२७ | आपो हि ष्ठा | ४२३ |
| अद्धीदिन्द्र | ३०३ | अयमु ते | ३० | अस्मे धन | २८४ | आमत्रेभिः | २१२ |
| अद्धीन्द्र पिब | ३५५ | अयं यो होता | ३३५ | अस्मे प्रय | २८३ | आयजी वा | ४२७ |
| अद्यान्चिन्नु | १२४ | अयं वेनः | ४५७ | अस्मे यातं | २८३ | आ रात्रि पा | ४२४ |
| अद्यासुरीय | ३४४ | अयं स शिङ्क्ते | ७८ | अस्मे समाने | २८३ | आ रुद्रासः | ४७२ |
| अधा स वीरैः | ३४४ | अया ते | १५५ | अस्य वाम | २०४ | आरोहथो | ११३ |
| अध्यापिता | ६९ | अरण्यान्य | ४२५ | अस्या ऊ षु ण | २०२ | आर्ष्टिषेणो | ८२ |
| अध्रिगव | २३५ | अरायि काणे | ३८९ | अहं च त्वं | १६ | आ व ऋञ्ज | ३१५ |
| अनर्वाणम् | ३२० | अरुणो मा | २५१ | अहं रुद्रेभिः | ३४३ | आवश्यं सा | २३८ |
| अनर्शराति | ३२० | अलातृणो | २७० | | | आवासुप | ४२८ |

| निगमाः | पृष्ठानि |
|---|---|
| आविद्युन्मद्भि | ४७२ |
| आविश्वः | २५० |
| आविष्ट्यो | ४०२ |
| आश्रुत्कर्णं | ३५५ |
| आससाणासः | ४३२ |
| आसीन ऊर्ध्वा | २८० |
| आसुष्वयन्ती | ३९९ |
| **इ** | |
| इति वा इति मे | ३४३ |
| इदमु | १७ |
| इदन्विष्णु | ५०६ |
| इदं श्रेष्ठं | ९४ |
| इन्द्र आशा | २६८ |
| इन्द्रं न त्वा | ४६ |
| इन्द्रं मित्रं | ३७१ |
| इन्द्रमिद्गा | ३४० |
| इन्द्रस्य नु | ३४१ |
| " " | ३४४ |
| इन्द्राणीमा | ४८७ |
| इन्द्राय गाव | २८७ |
| इन्द्राय साम | ३४० |
| इन्द्रासोमा | २९२ |
| इन्द्रे कामा | ३४१ |
| इन्द्रेणैते | ३४० |
| इन्द्रेण यु | २१५ |
| इन्द्रेण सं | १७२ |
| इन्द्रो अस्मा | १०३ |
| इन्द्रो दिव | ३४० |
| इन्द्रो यातूना | ३३० |
| इन्द्रो विश्वान् | ३२३ |
| इन्धान | १९८ |
| इमं तं पश्य | ४२१ |
| इमा गिर | ५१५ |
| इमामूषु | २९६ |
| इमा रुद्राय | ४३४ |
| इमे चिदि | २६८ |
| इमे सुता | १८४ |
| इयं शुष्मे | ९९ |
| इषिरेण ते | १६७ |
| इहेन्द्राणी | ४२७ |
| इहेह जा | ४९६ |
| **ई** | |
| ईर्मान्तासः | १७२ |
| ईशे हि वस्व | २८२ |

| निगमाः | पृष्ठानि |
|---|---|
| **उ** | |
| उग्रो यः शम्बा | २५९ |
| उत ग्मा व्य | ५२२ |
| उत त्वः पश्यन् | ४८ |
| उत त्वं स | २७५ |
| उत द्विबर्हा | ३०७ |
| उत नोऽहिर्बुध्न्या | ५१३ |
| उत पव्या | २२५ |
| उत स्यैनं | १९६ |
| उत स्य वा | १०५ |
| उतादः प | ७३ |
| उतासि मै | २४० |
| उतो समस्मि | २५७ |
| उदीरता | ४७५ |
| उदुज्ज्योति- | ४७० |
| उदु त्यं जात | ३७५-५०४ |
| उद्बृह रक्षः | २७० |
| उप प्रवद | ४११ |
| उप प्रागात् | ३१७ |
| उप प्रेत | ३४२ |
| उपश्वासय | ४१५ |
| उप ह्वये | ४९० |
| उपावसृज | ४०३ |
| उपो अद | १७९ |
| उपोपमे | १४८ |
| उरु प्रथ | ३८ |
| उरुव्याणो | २५८ |
| उषस्तच्चि | ४९७ |
| उषसः पितेव | ३०२ |
| उषा इव | २२३ |
| **ऊ** | |
| ऊर्ध्व इव | २८४ |
| ऊर्ध्वा यस्या | २९५ |
| **ऋ** | |
| ऋचां त्वः | २४ |
| ऋचो अक्ष | ५२७ |
| ऋच्छन्तीव | २८ |
| ऋजीषी वज्री | २३७ |
| ऋजुनीती | ३१६ |
| ऋज्रा वाजं | २४३ |
| ऋतस्य हि | ३०४ |
| ऋतस्य हि शु | ४५९ |
| ऋदूदरेण | २७४ |

| निगमाः | पृष्ठानि |
|---|---|
| ऋधगया | २०१ |
| ऋषीणां पुत्रो | ३९२ |
| ऋष्वा त इन्द्र | ३५४ |
| **ए** | |
| एक एव | ३९ |
| एकं पादं | ५१२ |
| एकया प्र | २३३ |
| एकः सुपर्णः | ४६२ |
| एतदस्या | ४९३ |
| एतद्वै | ४१ |
| एता उत्या | ४९७ |
| एता विश्वा | २६१ |
| एधमानद्विद् | ३१७ |
| एनाङ्गूषे | २३६ |
| एना पत्या | १५६ |
| एना वो अ | १५६ |
| एमीदेषां | १९८ |
| एमेनं सृज | ३० |
| एष देवो | ३२८ |
| **ओ** | |
| ओमासश्चर्षणी | ५१७ |
| ओषधे त्रा० | ३९ |
| **क** | |
| कण्वा अभि | ३४२ |
| कतरा पू | १५७ |
| कदा मर्त | २४८ |
| कनिक्रदद् | ४०९ |
| कनीनकेव | १७५ |
| कल्याणीर्जाया | ३५४ |
| कायमानो | १७४ |
| कारुरहं | २७९ |
| किं ते कृण्वन्ति | ३३३ |
| किमिच्छन्ती | ४७९ |
| किमित्ते विष्णो | २३० |
| कुत्साय म | १९९ |
| कुविन्नं स | १७८ |
| कुह स्विद्दोषा | १३४ |
| कुहूमहं | ४८४ |
| कृतं न श्वघ्नी | २५६ |
| कृत्तिं वसा | २५६ |
| कृणुष्व पाजः | २९३ |
| कृण्वन्नंहू | ३२४ |

| निगमाः | पृष्ठानि |
|---|---|
| कृष्णं नियानं | ३८० |
| केवलाघो | ३४७ |
| केश्यग्निं | ५०९ |
| को नु मर्या | १५९ |
| क्रीडन्तौ | ४१ |
| क्षिप्रा जूर्णिर्न | २७७ |
| क्षेत्रस्य पतिना | ४४० |
| क्षेत्रस्य पते | ४४१ |
| **ग** | |
| गभस्तिपूतः | २२८ |
| गभस्तिपूतो | २२८ |
| गातुं कृण्व | १९९ |
| गायन्ति त्वा | २२४ |
| गोभिः श्रीणीत | ७० |
| गोभिः सन्नद्धो | ७२ |
| गोभिः सन्नद्धा | ७२ |
| गौरमीमे | ४८९ |
| गौरीर्मिमाय | ४८८ |
| ग्नास्त्वा कृन्त | १५४ |
| **च** | |
| चतुरश्चित् | १३७ |
| चत्वारि वाक् | ५२६ |
| चत्वारि शृङ्गा | ५२६ |
| चित्रं देवा | ५०४ |
| चिदसि मनासि | २२६ |
| चोष्कूयमाण | ३१७ |
| **ज** | |
| जमदग्निभिराहुतः | ३८२ |
| जराबोध | ४३६ |
| जातवेदसे | ३७३ |
| जारआभगं | १३७ |
| जारूथं ह | ३०९ |
| जीवान्नो अ | ३२४ |
| जुष्टं गिर्वे | २९९ |
| जुष्टो दमू | १६५ |
| जुहुरे विचित | १८९ |
| ज्मया अत्र | ५२० |
| **त** | |
| तच्छंयोरा | १९५ |
| तत्त्वायामि | ५८ |
| तत्सूर्यस्य | १७१ |
| तदद्य वाचः | ११६ |
| तदुष | १७ |

| निगमाः | पृष्ठानि |
|---|---|
| तद्यदेनां | ८३ |
| तद्वार्यं वृ | २१२ |
| तनूत्यजेव | १३३ |
| तनूनपात् | ३९५ |
| तच स्तुरीय | ३१४ |
| तं प्रत्नथा | १४० |
| तम आसी | ३४४ |
| तं मरुतः | २२५ |
| तमिद्वर्द्धे | ३० |
| तमूर्दरं | १५२ |
| तमूषु समाना | ४३३ |
| तं मेदस्त | ३०३ |
| तरत्समन्दी | ५२५ |
| तव प्रयाजा | ४०७ |
| तं वश्वराथा | ४४४ |
| तस्मिन्त्साकं | २०९ |
| तस्मादेते | २७ |
| तस्याः समुद्रा | ४८९ |
| ताँअध्वर | २९५ |
| ता वां वास्तू | ७५ |
| तिरश्चिद | १४९ |
| तिरोधन्वा | २२५ |
| तिर्यग्बिल | ५१६ |
| तुञ्जे तुञ्जे | ३१० |
| तुभ्यं श्चोत | २३५ |
| तुविक्षन्ते | ३३४ |
| तूर्णाशं न | २४८ |
| तृतीयो अ | ४४६ |
| ते आचरन्ती | ४२९ |
| ते वाशीम | १८० |
| ते सोमादो | १६४ |
| तोदस्येव | २२९ |
| त्यच्चिदि | २७१ |
| त्यमू षु वा | ४५२ |
| त्रयः केशिन | ५०९ |
| त्रितः कूपे | ३२४ |
| त्रिः स्म मा | १५५ |
| त्वमग्ने द्युभिः | १२३-२६७-५२३ |
| त्वमग्ने स | २८६ |
| त्वमिन्द्र म | १९५ |
| त्वमिन्द्र बला | ३४१ |

| निगमाः | पृष्ठानि |
|---|---|
| त्वया मन्यो | ४५३ |
| त्वया वयं | १२६ |
| त्वष्टा दुहि | ५०१ |
| त्वष्टा सुद | २९७ |
| त्वामिन्द्रामति | १९१ |
| त्वेषमित्था | ४६९ |
| **द** | |
| दक्षस्य वा | ४७७ |
| दनो विश | ३३२ |
| दशावनि | ११९ |
| दासपत्नी | ९१ |
| दिवि स्पृष्टो | ४७७ |
| दिवो वराह | २२३ |
| दीर्घप्रय | २१४ |
| दीर्घायुर | २०३ |
| दुर्मदासो | १४ |
| दुर्मित्रासः | २८१ |
| दुर्वर्तुर्भीमो | १८३ |
| दूत ईयसे | ३०८ |
| दूतो देवाना | २११ |
| दूतो निर्ऋ | ४५ |
| दूरे चित्स | १२७ |
| देव सवित | ३८७ |
| देवस्त्वष्टा | ४५६ |
| देवस्य व | २८५ |
| देवा अग्निं | ३९० |
| देवानाम्प | ५२१ |
| देवानां पाथ | २८५ |
| देवानां भद्रा | ५१७ |
| देवानां माने | ९७ |
| देवानो | १८७ |
| देवीऊर्जा | ४३० |
| देवीजोष्ट्री | ४३० |
| देवीं वाचं | ४८२ |
| देवेभ्यश्च | १६ |
| देवेभ्यो वन- | ४० |
| देवोदेवाच्या | २८९ |
| दैव्या होतारा | ४०० |
| द्यावा नः पृथिवी | ४२८ |
| द्यौर्मे पिता | १९४ |
| द्रविणोदा द्र | ३८७ |
| द्रविणोदाः पिब | ३९० |
| द्वादशप्र | २०८ |

| निगमाः | पृष्ठानि |
|---|---|
| द्वादशारं | २०८ |
| द्विता च सत्ता | २२० |
| **ध** | |
| धन्वना गा | ४१७ |
| धाता ददातु | ४७० |
| धूमकेतुः | २७६ |
| धेनुं न इषं | ३२८ |
| **न** | |
| नक्षद्दाभं | २७२ |
| न जामये | ११५ |
| नदस्य मा | २१७ |
| न नूनमस्ति | १९ |
| न पापासो | ३२२ |
| नभन्तामन्यके | २५८ |
| न मृत्युरासी | ३४४ |
| नमो महद्भ्य | १४८ |
| न यस्य द्यावा | २१७ |
| नराशंसस्य | १९६ |
| न वा असुं | ८७ |
| न विजाना | ३४६ |
| नवेन पूर्वं | १८२ |
| नवोनवो भवति | ४६८ |
| न हि ग्रभा | १०९ |
| नाहमिन्द्राणि | ४०७ |
| नाभ्रात्रीमु | ११४ |
| नियद्धु | २४६ |
| निराविध्य | ३३५ |
| निष्कृण्वाना | ४९८ |
| निष्ट्वक्रासः | २९ |
| नीचीनवारं | ४३२ |
| नू च पुरा च | १८४ |
| नूनं सा ते | २० |
| नेदीय इत् | २६६ |
| नेन्द्रं देव | १४ |
| नेन्द्राहते | ३४० |
| नेमे देवा | १४९ |
| नो परस्या | ११३ |
| न्यक्रन्दयन्नुप | ४२० |
| न्याविध्यदिली | ३१२ |
| **प** | |
| पञ्चर्तवः | २०७ |
| पञ्चारे | २०७ |
| पत्नीवन्तः | २४९ |
| पथस्पथः | ५०५ |

| निगमाः | पृष्ठानि |
|---|---|
| पदं देवस्य | १८९ |
| परं मृत्यो | ४६९ |
| पराशरः | ३३० |
| परिघ्रंस | २७८ |
| परिषद्यं | १०८ |
| परेयिवांसं | ४४४ |
| परो निर्ऋत्या | ४६ |
| पर्याया इव | २९ |
| पवित्रवन्तः | ५१३ |
| पश्चादक्ष | २१२ |
| पश्यन्तो द्या | १५० |
| पश्यन् हि | २२३ |
| पाकस्थामा | २४४ |
| पात्रेव भि | १४९ |
| पारं नो अस्य | ३१३ |
| पार्श्वतः श्रो | १६१ |
| पावका नः | ४८१ |
| पावीरवी | ५१२ |
| पितुं नु स्तोषं | ४२२ |
| पीयति त्वो | १४९ |
| पुनरेहि | ४४३-५०९ |
| पुनः सम | १७२ |
| पुनानो वा | ३२६ |
| पुरुत्रा दा | २२९ |
| पुरुप्रियो | २९५ |
| पुरोळा अग्ने | ३०३ |
| पुत्रकामो | २७५ |
| पूषा त्वेत | ३५९ |
| पृथक् प्रायन् | २६० |
| पृथुज्रया | २३२ |
| प्रजापते | ४६१ |
| प्रतत्ते अद्य | २३१ |
| प्रतद्वोचेय | ४६० |
| प्रति त्यं चारु | ४५७ |
| प्रत्यग्ने ह | १८९ |
| प्रत्यङ् देवानां | ५०८ |
| प्र नूनं जात | ३७३ |
| प्र नू महित्व | ३७६ |
| प्रपर्वतानां | ४२८ |
| प्रमन्दिने | १९८ |
| प्रयाजान्मे | ४०६ |

| निगमाः | पृष्ठानि |
|---|---|
| प्रवावृजे | २६५ |
| प्रवोऽच्छा | ३०२ |
| प्रवो महे | ४६९ |
| प्र समित्र | ८५ |
| प्रसीमादि | २३ |
| प्र त्वां मति | ३०५ |
| प्राचीनं बर्हि | ३९७ |
| प्रातर्जय | ४९७ |
| प्रातर्जितं | ५०३ |
| प्रातर्युजा | ४९६ |
| प्रावेपामा | ४११ |
| प्रियमेध | १४१ |
| प्रीणीताश्वा | २६१ |
| प्रैते व | ४१६ |
| प्रोहाणि | ३८ |
| **ब** | |
| बतो बतासि | ३२५ |
| बध्नां ते ह | २३८ |
| बळित्था | ४८७ |
| बह्वीनां पिता | ४१५ |
| बृहच्छ्रवा | ३१० |
| बृहदुक्थ | २७४ |
| बृहस्पते | २० |
| ब्रह्मणस | २२२ |
| **भ** | |
| भद्रं वद | ४१० |
| भूमिं पर्जन्या | ३१९ |
| भूमिरस्तृ | ३१३ |
| भोजस्येदं | ३४७ |
| भ्राजन्तो अग्न | १३६ |
| **म** | |
| मण्डूका इव | ३४२ |
| मतीनां च सा | ३२८ |
| मरुतो य | ३०४ |
| मरुत्वाँ इन्द्र | १६८ |
| महःक्षोणस्य | २८२ |
| महत्तदुल्बं | ३३६ |
| महाँअमत्रो | ३१९ |
| महीव कृतिः | २५५ |
| महो अर्णः | ४८१ |
| मा चिदन्य | ३४२ |
| मा त्वा सोमस्य | ३२१ |
| मा नः सम | २५६ |
| मा नो मघेव | २४७ |
| मा नो मित्रो | ४०८ |
| मा नोऽहिर्बु | ४६३ |
| मा रधाम | ४५९ |
| मित्राय हव्यं | ४४७ |
| मित्रो जनान्या | ४४६ |
| मूरा अमूर | २८८ |
| मूर्द्धा भुवो | ३८४ |
| मृगं न व्रा | २२१ |
| मृगो न भीमो | ५४ |
| मेयन्तु ते | ३९२ |
| मोषथा वृक्षं | २७६ |
| मेषीभूतो | ३३९ |
| **य** | |
| य आतृण | ६९ |
| य आरितः | २४५ |
| य इन्द्राग्नी | २५४ |
| य इमा इश्वा | ४४१ |
| य इमे द्यावा | ४०१ |
| य ईं चकार | ७६ |
| य एक इ | १८२ |
| यश्चिद्धि त्वं | ४१९ |
| यज्ञेन यज्ञ | ५११ |
| यत्पाञ्चज | ११८ |
| यत्रावदेते | ३८५ |
| यत्रावो दि | ३३१ |
| यत्रा सुपर्णा | १२८ |
| यत्त्वा देव | ४६६ |
| यत्संगृभ्णा | ३५४ |
| यथा देवा | २५४ |
| यथा वातो | १३५ |
| यदत्त्युपजि | १५१ |
| यदतृणोत् | ९२ |
| यदप्स | २३९ |
| यदातम | २८७ |
| यदिन्द्रचि | १६४ |
| यदिन्द्राग्नी | ५१३ |
| यदुदञ्चो | ५२४ |
| यदेदेन | ३८५ |
| यद्गृहीत | ४८ |
| यद्देवापिः | ८३ |
| यद्याव | ५२३ |
| यदरुदत्तद्द | ४३४ |
| यदरोदीत् | ४३४ |
| यद्वाग्वद | ४८१ |
| यमक्षिति | २३४ |
| यमाविवेह | ४४६ |
| यमेरिरे | १९६ |
| यमेव विद्याः | ६९ |
| यमो ह जातो य | ४४४ |
| यमो ह जात इ | ४४५ |
| यवं वृके | ३२२ |
| यस्ते गर्भ | ३९४ |
| यस्मात्परं | ६५ |
| यस्मिन्वृक्षे | ५११ |
| यस्मै त्वं सु | ४७९ |
| यस्य शुष्मा | १५७ |
| यस्यामुशन्तः | १५५ |
| या ओषधीः | ४२४ |
| या ते दिद्युत् | ४३५ |
| यादृश्मिन्धायि | ३०१ |
| यामथर्वा | ५१४ |
| यावन्मात्र | ३८६ |
| युवं च्यवानं | १८८ |
| ये ते मदा | १७८ |
| ये ते सर | १४९ |
| येन देवाः | २२८ |
| येन स्मासि | २२६ |
| येना पावक | ५०७–८ |
| यो अक्रधो | २७३ |
| यो अनिध्मो | ४४३ |
| यो अश्मनो | ३८९ |
| यो अस्मै | ३११ |
| यो जात एव | ४३७ |
| यो वां यज्ञैः | २८८ |
| योविड्भ्यो | ३८१ |
| **र** | |
| रजतं हर | २४५ |
| रजांसि | १८८ |
| रथं नु मा | ४९४ |
| रथे तिष्ठन् | ४१६ |
| रमध्वं मे | १०२ |
| राकामहं | ४८३ |
| रास्पिनस्या | ३१४ |
| रुशद्वत्सा | ९५ |
| रूपंरूपं | ४४३ |
| रेजते अ | १५७ |
| **ल** | |
| लोधं नयन्ति | १७५ |
| **व** | |
| वक्ष्यन्ती वेदा | ४१७ |
| वनस्पते रसनया | ४०५ |
| वनस्पते वीड्वङ्गो | ४१४ |
| वनुयाम | २१४ |
| वनेन वायो | ३२७ |
| वम्रकः प | २१९ |
| वम्रीभिः | १५१ |
| वयः सुपर्णा | १६० |
| वया इव | २७१ |
| वरमाहार | २२१ |
| वराहं | २२२ |
| वसातिषु | ४९५ |
| वसुभिः स | २२६ |
| वाचस्पति | ३९८ |
| वाजे सुशिप्र | ३०६ |
| वात आवातु | ४५६ |
| वामंवामं | ३३१ |
| वायवायाहि | ४३२ |
| वायुर्वा त्वा | १७ |
| वाशीभिस्तक्षतः | १९२ |
| वाहिष्ठो वां | २१० |
| विजेषकृ | ३२९ |
| विदथानि | २८६ |
| विदद्वसु | १८२ |
| विद्याम त | १८४ |
| विद्यामेषि | ५०८ |
| विद्या ह वै | ६८ |
| विद्युन्मया | ४८६ |
| विध्यद्वराहं | २२१ |
| विन इन्द्र | ३४१ |
| विपक्वप्रज्ञ | १२८ |
| विरूपास | ४७४ |
| वि वृक्षान् | ४३९ |
| विश्वकर्मन् | ४५१ |
| विश्वकर्मा | ४४९ |
| विश्वानर | ५०० |
| विश्वा रूपा | ५०२ |
| विष्ट्वी शमी | ४७३ |
| विष्यस्व शिप्रे | ३०६ |
| विसीमतः | २३ |
| विहि सोतो | ५२४ |
| वीतं पातं | १९९ |

| निगमाः | पृष्ठानि |
|---|---|
| वीरुधः पार | २७२ |
| वीहि शूर | १९० |
| वृकश्चित् | २५३ |
| वृक्षस्य नु | १५ |
| वृक्षे वृक्षे | ७२ |
| वृषाकपायी | ४९९ |
| वृषासिन्ध | ३०८ |
| वैश्वानरस्य | ३७५ |
| वैश्वानरो | ३७८ |
| **श** | |
| शकटः शाकिनी | २७९ |
| शतपवि | २२८ |
| शतं मेषान् | २४३ |
| शतं सेना | ४० |
| शन्नो भवन्तु | ५२१ |
| शर्याभिर्न | २२४ |
| शंसावाध्व | १८१ |
| शासद्वह्नि | १०९ |
| शिशीते | १८६ |
| शीरं पाव | १७५ |
| शुक्रं तेअ | ५०५ |
| शुनासीरा | ४२९ |
| श्येनो नद्यी | २८५ |
| श्रद्धयाग्निः | ४२५ |
| श्रायन्तइव | २८६ |
| **ष** | |
| षष्टिश्चाह | २०९ |
| षडरश्वा | २०७ |
| **स** | |
| सइत्तमो | २४२ |
| सक्तुमिव | १६९ |
| सचखा नः | १५६ |
| स चित्रेण | ३०७ |
| स तुर्वणिः | २९९ |
| स तूताव | २०० |
| स तौरयाण | २४४ |
| सद्यश्चिद्यः | ४५३ |
| सद्यो जातो | ४०६ |
| स नः सिषः | १५६ |
| स नस्तिपा | ३०८ |
| सनेम वाज | २४२ |
| स पतत्री | २१८ |
| सप्त ऋषयः | ११६ |
| सप्त च वै | २०९ |
| सप्त मर्यादा | ३२५ |
| सप्त युञ्ज | २०५ |
| सप्त शता | २०९ |
| सप्त स्वसृ | २१२ |
| स भन्दना | २१६ |
| समस्मिञ्जाय | ४६३ |
| सम्मातप | १६६ |
| समानमेत | ३७९ |
| समान्या | २०१ |
| समिद्धस्य | २६९ |
| समिद्धो अञ्जन् | १५८ |
| समिद्धो अद्य | ३९४ |
| समुद्राद्ध्ये | ३७१ |
| समुद्रादूर्मि | ३७१ |
| संरुजन्त | २७७ |
| संवत्सरं | ४११ |
| सविता यन्त्रैः | ४५४ |
| ससर्द्धद | १९२ |
| सस तो बोध | १८० |
| ससं न प | २१९ |
| सस्निमविन्द | २०९ |
| सिनीवालि | ४८४ |
| सिषक्तिपू | २८१ |
| सुकिंशुकं | ४८८ |
| सुखं रथं | ३५६ |
| सुगावो दे | ५२० |
| सुगुरस | २५० |
| सुचक्षा | ३४४ |
| सुदेवो असि | २६३ |
| सुदेवो अद्य | ३४६ |
| सुवर्णं वस्ते | ४१८ |
| सुप्रायणा | १८६ |
| सुवास्त्वा | १७७ |
| सुविते मा | १८२ |
| सुषुम्णः सू | ६४ |
| सूयवसा | ४९१ |
| सूरादश्वं | १७४ |
| सूर्यमादि | ८५ |
| सूर्यस्येव | ४७६ |
| सृप्रकर | ३०६ |
| सृण्येव ज | ५२५ |
| सेनेव सृष्टा | ४४४ |
| सोमं पिब | ३८२ |
| सोमं मन्यन्ते | ४६५ |
| सोमस्य रा | ४७१ |
| सोमानं स्व | २९१ |
| सोर्देवान | ११७ |
| स्कन्धांसीव | २१० |
| स्तवेवज्रृ | ३१९ |
| स्तुषेय्यं पु | ४७७ |
| स्तृणन्ति बर्हि | २९८ |
| स्तोमेन हि | ३८४ |
| स्थाणुरयं | ४७ |
| स्थूरं राधः | ३१८ |
| स्योना पृथिवि | ४२६ |
| स्वधिते मैनं | ३९ |
| स्वर्यन्तो | ५२६ |
| स्वसुर्जारः | १३८ |
| स्वस्तिरिद्धि | ४९२ |
| स्वादिष्ठया | ४६५ |
| **ह** | |
| हन्ताहं | १६ |
| हरी इन्द्र | ३१६ |
| हविर्भिरेके | ३१ |
| हविषा जार | २५९ |
| हविष्मान्त | ३८२ |
| हिङ्कृण्वती | ४९१ |
| हिनोतानो | ३१६ |
| हिमेनाग्निं | ३३६ |
| हिरण्यगर्भः | ४४७ |
| हिरण्यरूपः | १३९ |
| हिरण्यरूपः | ४४२ |
| हिरण्यस्तूपः | ४५५ |
| हृदा तष्टेषु | ५३० |
| होतुश्चित्पू | ३५७ |


इति निगमसूची ॥ * ॥ शुभमस्तु श्रीरस्तु ॥

# अथ निरुक्तस्थद्रष्टव्यपदप्रकृतीनाम् मातृका-(अकारादि-)क्रमेणानुक्रमणी।


| | पृष्ठाङ्काः |
|---|---|
| अ | |
| अंश | ८५-५१५ |
| अंशु | ७१-२-२३४ |
| अंसत्र | २६१ |
| अंसत्रकोश | ,, |
| अंहति | २०० |
| अंहस् | ,, |
| अंहुस् | ,, |
| अंहुर | ३४ |
| अंहूरण | ,, |
| अक | ८७ |
| अकूपार | १८५ |
| अकृणोत् | २१८-२७० |
| | ४८८ |
| अकृण्वत | २६० |
| अकृण्वन् | ३००-३८४ |
| अक्तु | ३६५-५०८ |
| अक्र | ३०७ |
| अक्त | १६९-४९७ |
| अक्ष | ४११ |
| | ५२९ |
| अक्षण्वत् | २७ |
| अक्षर | ४८९ |
| | ५२९ |
| अक्षाः | २१७-४११ |
| अक्षि | २७ |
| अक्षिता | ४७० |
| अक्षि(क्ष)ति | २३४ |
| अक्षोपन | ३६९ |
| अगन् | ५२४ |
| अगृभ्णात् | ३८३ |
| अगोह्य | ४७४ |
| अग्नायी | ४२७-२५२ |
| अग्नि | ३६८ |
| अग्निरूप | ४५३ |
| अग्र | २७-१ |
| अग्रिया | ३०२ |
| अघ | २९२ |
| अघशंस | ,, |

| | पृष्ठाङ्काः |
|---|---|
| अङ्कस् | १०५-६ |
| अघ्न्या | ४९० |
| अङ्कुश | २६६ |
| अङ्ग | ३६२-२४८ |
| अङ्गल | ४१० |
| अङ्गार | १४१ |
| अङ्गुलि | ११९ |
| अङ्गूष | २३६ |
| अचेतन | १०८ |
| अच्छ | १०२-२६६ |
| अच्छान् | ४११ |
| अज | २०३-५११ |
| अजएकपात् | ५११ |
| अजगन् | १७४ |
| अजर | २०६-५२५ |
| अजाश्व | २०२-३ |
| अजामि | १९३-४४२ |
| अजीगः | २८७ |
| अजीजनत् | ३८४ |
| अजोहवीत् | २५२ |
| अज्म | १७२-४ |
| अण्ड | ११८ |
| अतसा | २३६-८ |
| अति | १२ |
| अतिक्रामत् | २९४ |
| अतिथि | १६५ |
| अतिरोचसे | २२७ |
| अतिष्ठन्ती | ९० |
| अतूर्त | ४१३-४-४५४ |
| अतूर्तपन्थस् | ४७७ |
| अत्नत | ५१४ |
| अत्य | १७२-३ |
| अत्रि | १४२ |
| अत्सा | २१७ |
| अथर्यु | २३३ |
| अथर्वन् | ४७५ |
| अददन्त | २४१ |
| अदर्दः | ४३७ |
| अदस् (सौ) | १४० |

| | पृष्ठाङ्काः |
|---|---|
| अदिति | १९५-४७७-८-९ |
| अदीधेत् | ८३-४ |
| अद्भुत | २०-२१४ |
| अद्मन् | १७९ |
| अद्मसद् | १७९-८० |
| अद्य | १९-२१२-३४४ |
| अद्याचित् | १८४ |
| अद्रि | १६४-४१३ |
| अद्रिवन् | १६४ |
| अद्रुहा | ४२८ |
| अघ | १०९-३५४-४८५ |
| अधर | ८२-३ |
| अधस् | ८३ |
| अधायि | ३१७ |
| अधि | १३-२६-७-४८९ |
| अधितस्थुः | २०५ |
| अध्रिगु | २३४-५ |
| अधिधन्वन् | ४१७ |
| अघोरामः | ५०२ |
| अध्वर | २६-३९५-४४३ |
| अध्वर्यु | २६ |
| अनप्नस् | १२६ |
| अनर्व | २०५-६-३२० |
| अनर्वन् | ३२० |
| अनर्शरातिं | ३२० |
| अनवब्रव | ३२९ |
| अनवाय | २९२ |
| अनस् | १०४ |
| | ४९२-३ |
| अनप्नस् | १२६ |
| अनागस् | ४३९ |
| अनागस्त्व | ४७९ |
| अनानत् | ५०७ |
| अनिति | ४९२-३ |
| अनिन्द्र | १२३-५ |
| अनिमिषा | ४४६ |
| अनिमेषम् | १२८ |
| अनिवेशन | ९० |
| अनु | १२-५१४ |

| | पृष्ठाङ्काः |
|---|---|
| अनुतस्थिम | २७९ |
| अनुदात्त | २०२ |
| अनुपस्पशान | ४४ |
| अनुप्रसिति | २९३ |
| अनुमति | ४८२ |
| अनुमन्यासै | ४८२ |
| अनुष्टुभ् | ३६५ |
| अनुष्टुया | २४४ |
| अनुष्वधम् | १६८-९ |
| अनूप | ९८-९-२१७ |
| अनृक्षर | ४२६ |
| अन्त | २०१ |
| अन्तरिक्ष | ८०-१९५ |
| अन्तिक | १२२ |
| अन्ध | २१२-५०३ |
| अन्धस् | २१२ |
| अन्न | १२१ |
| अन्य | २०-११५-११६ |
| अन्यके | ४३३ |
| अन्वश्च | ९५-६ |
| अन्वानट् | २८७-८ |
| अप | १२ |
| अपत्य | १०७-८ |
| अपरम् | ४८८ |
| अपस् | ३८४ |
| | ४८३-४८६ |
| अपागूहन् | ५०० |
| अपान्नपात् | ४४३ |
| अपार | २६८-९ |
| अपाहन् | १०३-४ |
| अपि | १२-१९३ |
| अपिशत् | ४०१ |
| अपीच्य | १९८-९ |
| अपुष्या | ५०-१ |
| अप्नस् | १२६ |
| अप्य | ४८८ |
| अप्रतिष्कुत | ३०५ |
| अप्रमादम् | ५१६ |

